चतुर्थोऽध्यायः

# महाभाष्यम्

## महर्षिपतञ्जलिप्रणीतम्

कैय्यटकृतव्याख्यासहित ।

पण्डितकृपारामशर्म्मणा स्वकीयतिमिरनाशकयन्त्रालये

काशिकराजकीयप्रधानपाठशालायां

व्याकरणशास्त्रे लब्धप्रतिष्ठेन

त्रिपाठिपं०भगवत्प्रसादशर्म्मणा

संशोधयित्वा

प्रकाशितम् ।



काश्याम्

सम्वत् १९४६

यह पुस्तक पण्डित कृपाराम शर्मा की दूकान पर मिलेगी ।

प्रथम वार १०००

ॐ नमः परब्रह्मणे ॥ ङ्याप्प्रातिपदिकात् ॥ १ ॥ ङ्याप्प्रातिपदिकग्रहणं किमर्थम् । ङ्याप्प्रातिपदिकात्स्वादयो यथा स्युः । धातोर्मा भूवन्निति । नैतदस्ति प्रयोजनम् । धातोस्तव्यदादयो विधीयन्ते । ते ऽपवादत्वाद्बाधका भविष्यन्ति । तिङन्तात्तर्हि मा भूवन्निति । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते । ते चात्र तिङा उक्ता एकत्वादय इति कृत्वा उक्तार्थत्वान्न भविष्यन्ति ॥ टाबादयस्तर्हि तिङन्तान्मा भूवन्निति । स्त्रियां टाबादयो विधीयन्ते । न च तिङन्तस्य स्त्री

---

ओंनमः परमात्मने ॥ ङ्याप्प्रातिपदिकात् । ङ्याप्प्रातिपदिकग्रहणं किमर्थमिति । परश्चेति वचनात्परे भवन्तो वक्ष्यमाणाः प्रत्ययाः प्रत्ययार्थसंबन्धयोग्यार्थाभिधायिनीं ङ्याप्प्रातिपदिकलक्षणामेव प्रकृतिमाक्षेप्स्यन्ति सति च पञ्चमीनिर्देशे परश्चेति प्रत्याख्यातमसति त्विह पञ्चमीनिर्देशे वक्ष्यमाणप्रत्ययपरत्वप्रतिपादनपरत्वान्नास्ति प्रत्याख्यानम् । सति वा प्रत्याख्याने प्रत्ययद्योत्यवाच्यार्थसंबन्ध्यर्थाभिधायिप्रकृत्याक्षेपः सिद्ध इति प्रश्नः । धातोर्मा भूवन्निति । असतीह प्रकृतिनिर्देशे धात्वधिकाराद्धातोरेव स्युः । वासरूपविधिश्च स्यात् । अथ वा प्रत्ययपरत्वेन प्रकृतिमात्राक्षेपे धातोरपि स्युः । तत्र यथा कर्तृकर्मणोर्लकार उत्पद्यते साधनाश्रयसंख्यायां च तिङामुत्पत्तिः कर्त्रादिषु तव्यत्व्यादीनां च तथा स्वादयोऽपि स्युरिति भावः । धातोरिति । धातुग्रहणं निवृत्तम् । तत्र प्रकृतिमात्राद्विधीयमानाः स्वादय उत्सर्गास्तव्यदादयस्तु प्रकृतिविशेषाश्रयेण विधानादपवादा इति भावः । तिङन्तादिति । कर्मादयः स्वादीनामर्थाः । तत्र यथा पुत्त्रीयशब्दादन्तर्भूतकर्मक्रियावाचिनः कर्तरि लकार उत्पद्यते तथा पचतिशब्दात्कर्तृविशिष्टक्रियावाचिनः कर्मादिषु द्वितीयादयः स्युः । यद्येकत्वादिष्वपि विभक्त्यर्थेषु यथैको द्वौ बहव इति प्रकृत्यभिहितेष्वपि भवन्त्येवं तिङाभिहितेष्वपि स्युरिति भावः । एकत्वादिष्विति । संख्या विभक्त्यर्थः । सा च तिङैवाभिहितेत्युक्तार्थत्वात् स्वादयो न भवन्त्येकादिभ्यस्तु वचनग्रहणाद्व्यक्तसंख्यावाचिभ्योऽपि प्रथमा भवति । न च पचतिशब्दात्कर्त्रभिधायिनः कर्मादिषु द्वितीयादीनामुत्पत्तिर्युक्ता । न ह्येकक्रियापेक्षोभिन्नसाधनाभिधायिनोरेकस्मिन् पदे ऽनुसहायभावो युक्तः । पुत्त्रीयशब्दस्तु जीवत्यादिधातुवद्विशिष्टक्रियावाचीति ततः कर्तरि लकारोत्पत्तिरविरुद्धा । अनभिहिताधिकाराच्च तिङभिहिते साधने स्वाद्यनुत्पत्तिः । टाबादय इति । यथा साधनाश्रयसंख्याभिधायित्वं तिङां तथा तद्गतलिङ्गाभिधायित्वमपि स्यादिति भावः । न च तिङन्तस्येति । क्रियाप्रधानत्वादाख्यातस्य क्रियायाश्चासत्त्वभूतत्वात्सत्त्वधर्मेण लिङ्गेनायोगः । न चद्रव्यधर्मलिङ्गग्रहणयोग्यत्वनियतत्वाच्छब्दशक्तीनामिति भावः । तदुक्तं हरिणा । एकत्वेपि क्रियाख्याते साधनाश्रयसंख्यया ।

त्वेन योगोस्ति । अणादयस्तर्हि तिङन्तान्मा भूवन्निति । अपत्यादि-ष्वर्थेष्वणादयो विधीयन्ते । न च तिङन्तस्यापत्यादिभिर्योगोस्ति । अथापि कथं चिद्योगः स्यात् । एवमपि न दोषः । आचार्यप्रवृत्ति-र्ज्ञापयति । न तिङन्तादणादयो भवन्तीति । यदयं क्वचित्तद्धितवि-धौ तिङ्ग्रहणं करोति । अतिशायने तमबिष्ठनौ तिङश्चेति । अत उत्तरं पठति । ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् * । ङ्या-प्प्रातिपदिकग्रहणं क्रियते । अङ्गभपसंज्ञार्थम् । अङ्गभपदसंज्ञा ङ्या-प्प्रातिपदिकस्य यथा स्युरिति । क्व पुनरिहाङ्गभपदसंज्ञार्थेन ङ्या-

---

भिद्यते न तु लिङ्गाख्यो भेदस्तत्तदाश्रयः ॥ तस्मादवस्थितेप्यर्थे कस्य चित्प्रतिबध्यते । शब्दस्य शक्तिर्नन्त्वेष शास्त्रेणाख्यायते विधिरिति ॥ शोभनं पचतीत्यादावुक्तक्रियाविशे-षणस्य नपुंसकत्वं न तु क्रियायाः । पचतिरूपमित्यादौ तु रूपबाद्यन्तार्थस्य क्रियायाः शब्दशक्तिस्वाभाव्यादेव नपुंसकत्वम् । नानारूपा हि शब्दानां शक्तयो न सामान्यतोदृष्टे नानुमानेन व्यवस्थापयितुं शक्यन्ते । अनेनैव न्यायेन धातोष्टाबाद्यनुत्पत्तिर्व्याख्येया । अणादय इति । यथैव गर्गस्यापत्यमित्यपत्यापत्यवत्संबन्धादिसंभवः । एवं पचति य-स्तस्यापत्यमिति सर्वनामप्रत्यवमृष्टतिङन्तार्थाधारसंबन्धसंभव इति भावः । ननु षष्ठ्य-न्तादपत्ये प्रत्ययो विधीयते सर्वनाम्नस्तत्र षष्ठ्यन्तत्वं न तिङन्तस्य । नैष दोषः । गर्ग-स्यापत्यमित्यत्रापि वाक्यगोचरैव षष्ठी संबन्धप्रदर्शनायोपादीयते । प्रत्ययस्तु प्रातिपदिका-देवोत् प्रद्यते । लुग्विधानद्वारेण ह्याचार्यः स्वाभाविकीं प्रत्ययस्यानुत्पत्तिमाचष्टे । तस्ये-ति तु षष्ठीनिर्देशः सति संबन्धे प्रत्ययविधानार्थो न तु षष्ठ्यन्तात्प्रत्ययोत्पत्त्यर्थः । न चेति । क्रियाप्रधानत्वादाख्यातस्य तस्याश्चासत्त्वभूतत्वादपत्यादिभिर्योगाभावः । साधन-स्यापि क्रियां प्रति गुणभावादपत्यादिभिर्योगो नास्ति शब्दान्तरपरामृष्टस्य साधनस्या-पत्यादियोग संभवेपि तिङन्तप्रतिपाद्यस्य साधनस्यापत्यादिभिर्योगाभाव । नहि यथा पाचकस्यापत्यमिति संबन्धप्रतिपत्तिरेवं पचत्यपत्यमिति । अथापीति । सर्वनामप्रत्यव मृष्टस्यार्थस्यापत्यादियोगसंभवादिति भावः । धातोरप्यणाद्युत्पत्तिर्धात्वर्थस्यापत्यादि-योगाभावादेव प्रतिक्षिप्ता वाक्यार्थस्याप्यसत्त्वभूतत्वाच्छक्तिलिङ्गापत्यादियोगाभावाद्ग-च्छमाणप्रत्ययानुत्पत्तिरभिधानीया । भाष्यकारेण तु न्यायस्योक्तत्वात् पृथगुपन्यासो न कृ-तः । अङ्गभपदसंज्ञार्थमिति । यस्मात्प्रत्ययविधिरित्यत्र विधिग्रहणाद्यस्य प्रत्ययविधौ शब्देनाश्रयणं तस्याङ्गसंज्ञा । भपदसंज्ञे अप्युत्तरत्र यस्मात्प्रत्ययविधिरित्यस्यानुवर्तनात्त-स्यैवेति भावः । भाष्यकार एतत्प्रयोजनं निराकर्तुमाह । क्व पुनरिति । ग्रहणवत्तर इति ।

ष्प्रातिपदिकग्रहणेनार्थः। टाबादिषु। नैतदस्ति प्रयोजनम्। ग्रहणवन्तष्टाबादयो विधीयन्ते उगितो ङीब्भवति। अतष्टाब्भवतीति। यत्तच्छब्दरूपं गृह्यते। तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति। अथापि कश्चिदग्रहणः। एवमपि न दोषः। स्त्रियां टाबादयो विधीयन्ते। यत्तच्छब्दरूपं स्त्रियां वर्तते। तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति। अणादिषु तर्हि। अणादयोपिग्रहणवन्तो विधीयन्ते गर्गादिभ्यो यञ् नडादिभ्यः फगिति। यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति। अथापि कश्चिदग्रहणः। एवमपि न दोषः। अपत्यादिष्वर्थेष्वणादयो विधीयन्ते। यत्तच्छब्दरूपमपत्यादिष्वर्थेषु वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति। स्वार्थिकेषु तर्हि। स्वार्थिका अपि ग्रहणवन्तो विधीयन्ते। यावादिभ्यः कन् प्रज्ञादिभ्योणिति। यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति। यस्त्वग्रहणः। शुक्लतमः शुक्लतरः कृष्णतमः कृष्णतर इति। अत्रापि न यावच्छुक्लः तावच्छुक्लतरः प्रकृष्टः शुक्लः शुक्लतरः। यत्तच्छब्दरूपं प्रकृष्टे वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति। स्वादिषु तर्हि। एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते। यत्तच्छब्दरूप-

---

ग्रहणमुपादानं तच्च क्वचित्स्वरूपात् यथाजाद्यतष्टाब्नित्यजादीनां क्वचित् संज्ञाद्वारेण यथा वैयाकरणादन्तानाम्। क्वचिदनुबन्धनिर्देशोपलक्षितसंज्ञानिर्देशेन। यथोगितश्चेति। अत्र स्वार्थाभिधायिशब्द आक्षिप्तोऽकारेणोगिता च विशेष्यते। अथापीति। सामर्थ्याक्षिप्तस्याप्युपादानमस्त्येव। अभ्युपगम्यवादेन तु दर्शयति। वयसि प्रथम इत्यादौ सामर्थ्याक्षिप्ता प्रकृतिरथत्वन्नाप्यत इत्यनुवर्तनाद्वर्णग्रहणे च सर्वत्र तदन्तविधिसंभवादकारान्तस्य ग्रहणं तदा नास्ति कश्चिदग्रहणष्टाबादिः। यत्तच्छब्दरूपमपत्यादिष्विति। परार्थाभिधानं वृत्तिरिति प्रकृतिरप्यपत्यादिषु वर्तते। शुक्लतर इति। न ह्यत्र शब्देन प्रकृतिरुपात्तेति भावः। न यावदिति। यावत्तावच्छब्दौ निपातौ पर्यायतां द्योतयतः। स्वादिषु तर्हीति। प्रकरणोत्कर्षाद्बहुषु बहुवचनमित्यादेः स्वादिविधिवाक्यस्य च भिन्नवाक्यतां मन्यते। एकत्वादिष्विति। आकाङ्क्षायोग्यतावशाद्भिन्नप्रकरणपठितानामप्येकवाक्यत्वमिति भावः। तत्र त्रिके प्रातिपदिकार्थे चतुष्केऽपि पक्षे स्वादय एकत्वादीनां वाचकाः पञ्चके तु पक्षे चतुष्के च द्योतकाः। तत्रैकत्वादिषु द्योतका वाचका वा विधीयन्त इत्यर्थः। यसुदिति। द्योतकपक्षे ऽयमर्थः। एकत्वादिषु यद्वर्तते तस्मात् स्वादय एक-

मेकत्वादिष्वर्थेषु वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति। कथं पुनरिहोच्यमानाः स्वादय एकत्वादिष्वर्थेषु शक्या विज्ञातुमेकवाक्यत्वात्। एकं वाक्यं तच्चेदं च। यद्येकं वाक्यं तच्चेदं च किमर्थं नानादेशस्थं क्रियते। कौशलमात्रमेतदाचार्यो दर्शयति। यदेकं वाक्यं सन्नानादेशस्थं करोति। अन्यदपि किं चित्संग्रहीष्यामीति। यच्छयोश्च लुगर्थम् *। यच्छयोस्तर्हि लुगर्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते। कंसीयपरशव्ययोर्यञञौ लुक् चेति ङ्याप्प्रातिपदिकात्परस्य लुग्यथा स्यात्। अक्रियमाणे हि ङ्याप्प्रातिपदिकग्रहणे प्रकृतेरपि लुक् प्रसज्येत। एतदपि नास्ति प्रयोजनम्। यथापरिभाषितं प्रत्ययस्य लुक्श्लुलुपो भवन्तीति प्रत्ययस्य भविष्यति। इवमप्युकारसकारयोः प्रसज्येत। कमेः सः कंसः। परान् शृणातीति परशुरिति। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्संप्रत्ययार्थम् *। वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे तर्हि प्रत्ययविधौ तत्संप्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते। वृद्धात्। अवृद्धात्। अवर्णान्तात्। अनुदात्तादेः। द्व्यच इति। एतानि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरिति। अथाक्रियमाणे ङ्याप्प्रातिप-

---

त्वादीनां द्योतका उत्पद्यन्ते। वाचकपक्षे त्वयमर्थः। एकत्वादयः स्वादिवाच्येष्वर्थेषु यच्छब्दरूपं तदाधारार्थवाचि तस्मात् स्वादय एकत्वादीनां वाचका उत्पद्यन्ते। अन्यदपीति। तिङ्विधिवाक्येनापि सहैकवाक्यत्वं यथा स्यादित्येवमर्थः। अङ्गानां हि प्रधानसंनिधावुपदेशार्हाणां प्रकरणोत्कर्षेणोपदेशः सर्वप्रधानसंबन्धार्थः। यच्छयोश्चेति। वार्तिककारस्य समुच्चयार्थश्चशब्दो भाष्यकारेण तु पूर्वप्रयोजनस्य दूषितत्वात्तदर्थो च शब्दो व्याख्यातः। प्रकृतेरपीति। यच्छयोर्या प्रकृतिः कंसशब्दः परशुशब्दश्च तदवयवस्यापि प्रत्ययस्येत्यर्थः। इतरश्च प्रकृतेरिति स्थानषष्ठीं मत्वाह। एतदपीति। इतरः पूर्वमेवार्थं स्पष्टीकरोति। एवमपीति। उणादय इति। अतः कककमिकंसेति कमिग्रहणेनैव कंसग्रहणे सिद्धे कंसशब्दोपादानं ज्ञापकं क्वचिदेषां व्युत्पत्तिकार्यं न भवतीति। यञञोस्तु विधानसामर्थ्याल्लुङ् भवतीति यच्छयोरेव भविष्यतीत्यर्थः। वृद्धावृद्धेति। अत्रापि वार्तिककारस्य चशब्दः समुच्चये भाष्यकारस्य तु तदर्थे। वृद्धादयो लक्षणं निमित्तं यस्य प्रत्ययविधेस्तस्मिन् वृद्धादीनि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरित्यर्थः। अर्थेति। प्रत्ययार्थसंबन्धयोग्यार्थाभिधायित्वात् ङ्याप्प्रातिपदिकस्यैव विशेषणानि भविष्यन्तीति

दिकग्रहणे कस्यैतानि विशेषणानि स्युः। समर्थविशेषणानि। तत्र को दोषः। उदीचां वृद्धादगोत्रात्। इह च प्रसज्येत। ञ्चानां ब्राह्मणानामपत्यमिति। एतद्धि समर्थं वृद्धम्। इह च न स्यात्। ञ्चयोर्ब्राह्मणयोरपत्यमिति। एतद्धि समर्थमवृद्धम्। वृद्ध। अवृद्ध। प्राचामवृद्धात्फिन्बहुलम्। इह च प्रसज्येत। ञ्चयोर्ब्राह्मणयोरपत्यमिति। एतद्धि समर्थमवृद्धम्। इह च नस्यात्। ञ्चानां ब्राह्मणानामपत्यमिति। एतद्धि समर्थं वृद्धम्। अवृद्ध। अवर्ण। अत इञ्भवति। इहैव स्यात्। दक्षस्यापत्यं दाक्षिरिति। एतद्धि समर्थमकारान्तम्। इह न स्यात्। दक्षयोरपत्यं दक्षाणामपत्यमिति। एतद्धि समर्थमनवर्णान्तम्। अवर्ण। स्वर। अनुदात्तादेरञ्भवति। इह च प्रसज्येत। वाचो विकारस्त्वचो विकार इति एतद्धि समर्थमनुदात्तादि। इह च न स्यात्। सर्वेषां विकार इति। एतद्धि समर्थमुदात्तादि। स्वर। द्व्यज्लक्षण। द्व्यचष्ठन्निति। इह च प्रसज्येत। वाचा तरति त्वचा तरतीति। एतद्धि समर्थं द्व्यच्। इह च न स्यात्। घटेन तरतीति। एतद्धि समर्थमद्व्यच्। अस्ति पुनः समर्थविशेषणे सति किंचिदिष्टं संगृहीतं भवति। आहोस्विद्दोषान्तमेव। अस्तीत्याह। किम्। साम्ना तरति वेम्ना तरतीति। एतद्धि समर्थमपि द्व्यच्। ङ्याप्प्रातिपदिक-

---

प्रश्नः। समर्थविशेषणानीति। समर्थानां प्रथमादित्यधिकाराद्विभक्तिमन्तरेण सामर्थ्यानवगमाद्विभक्त्यन्तस्यैव विशेषणानि स्युरित्यर्थः। ङ्याप्प्रातिपदिकग्रहणे तु सति तदुपादानसामर्थ्यात्तद्विशेषणानि वृद्धादीनि भवन्ति। ञ्चानामिति। ननु वृत्तावभेदैकत्वसंख्योपजननान्नास्ति द्विवचनबहुवचनान्तात्प्रत्ययः। नैष दोषः। क्वचिदादेशादिवशात्संख्याविशेषोऽपि प्रतीयते। यथा तावको मामक इति। एवमिहापि फिञ् विधीयमानो बहुवचनमन्तरेण वृद्धत्वाभावाद्बहुत्वं गमयेत्। प्रकरणादिवशाद्वा। तदुक्तम्। भेदः संख्याविशेषो वा व्याख्यातो वृत्तिवाक्ययोः। सर्वत्रैव विशेषस्तु नावश्यं तादृशो भवेदिति। वाचो विकार इति। सांवेकाच इति विभक्तेरुदात्तत्वात्पदमेतदनुदात्तादि। एतच्चोदाहरणदिक्प्रदर्शनार्थमस्य वृद्धत्वान्मयटा भाव्यम्। इदं तूदाहरणं पञ्चानां विकार इति। षड्त्रिचतुर्भ्यो हलादिरिति विभक्तेरुदात्तत्वादनुदात्तादिसमर्थमेतत्। प्रातिपदिकं तु नः संख्याया इत्याद्युदात्तम्। सर्वेषामिति। सर्वस्य सुपीत्याद्युदात्तं पदम्। प्रातिपदिकं तु स

मपि । अथङ्याब्ग्रहणं किमर्थम् । न प्रातिपदिकादित्येव सिद्धम् । न सिध्यति । अप्रत्यय इति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति। यद्येष ङ्याब्ग्रहणहेतुः । त्यूङ्ग्रहणमपि कर्तव्यम् । तावपि हि प्रत्ययौ । तिग्रहणे तावद्वार्तम् । तद्धितः प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्यति । ऊङ्ग्रहणे चापि वार्तम् । उवर्णान्तादूङ्विधीयते तत्रैकादेशः । एकादेशे कृते ऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति । यद्येष ऊङोऽग्रहणे हेतुः । आब्ग्रहणमपि न कर्तव्यम्। आबपि ह्यकारान्ताद्विधीयते । तत्रैकादेशः ।एकादेशे कृतेऽन्तादिवद्भावात्प्रातिदिकसंज्ञा भविष्यति । यस्तर्ह्यनकारान्तात् क्रुञ्चा उष्णिहा देवविशेति । अत्राप्यकारान्ताद् वृत्तिर्लच्यते । क्रुञ्चानालभेत । उष्णिहककुभौ देवविशं च मनुष्यविशं चेति । इह तावदुष्णिहककुभाविति । आप एवौत्तरपदिकं ह्रस्वत्वम् । इह खल्वपि देवविशं च मनुष्यविशं चेति । नास्ति विशेषः । अकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति। यत्तावदुच्यते। इह तावदुष्णिहककुभावित्याप एवैतदौत्तरपदिकं ह्रस्वत्वमिति। संज्ञाछन्दसोरित्येवं तत् ।नैषा संज्ञा नापीदं छन्दः।यदप्युच्यते।इह खल्वपि देवविशं च मनुष्यविशं च मनुष्यविशं चेति। नास्ति विशेषः । अकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति । स्वरे विशेषः । यद्यत्र व्यञ्जनान्तादुत्पत्तिः स्याद् देवविशमित्येवं स्वरः प्रसज्येत । देवविशमिति चेष्यते । तस्मात्क एष एवंविषयः । इदं तर्हि पादन्यतरस्यां टाबृचीति । ऋचीत्युच्यते ।

---

वैशब्दो ऽन्तोदात्तो निपातित इत्यनुदात्तादि । अथेति । लिङ्गविशिष्टपरिभाषया सिद्धिं मन्यते । इतरो ऽगृहीताभिप्राय आह । न सिध्यतीति । तिग्रहणइति वार्तं युक्तं प्रातिपदिकत्वमित्यर्थः । क्रुञ्चानिति । अजादिषु तु पाठो जातिलक्षणङीष्बाधनार्थः । अब्ग्रहणवाद्याह । इह तावदिति । आप इति । ङ्यापोरिति ह्रस्वत्वं हलन्तादेव विहितस्याप इत्यर्थः । इहेति । ततश्च देवविट्शब्दादेवाबिति भावः । आब्ग्रहणप्रत्याख्यानवाद्याह । यत्तावदिति । स्वरे विशेष इति । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वाद्विभक्तेः सुप्त्वादनुदात्तत्वं भवति । यदा तु मूलविभुजादित्वाद्देवविशशब्दः कप्रत्ययान्तस्तदा थाथादिस्वरेणान्तोदात्तत्वाद्विभक्त्या च सहैकादेश उदात्तो भवति ।

तत्र च्छान्दसत्वाद्भविष्यति। ऋचीति नेदं छन्दो विवक्षितम्। काठकं कालापकं मौदकं पैप्पलकं च। किं तर्हि प्रत्ययार्थविशेषणमेतत्। ऋक्चेत्प्रत्ययार्थो भवतीति। एतदपि नास्ति प्रयोजनम्। पदशब्दः पादशब्दसमानार्थः अकारान्तः छन्दसि दृश्यते। तस्याः सप्ताक्षरमेकं पदम्। एकः पाद इत्यर्थः। तस्मादुत्पत्तिर्भविष्यति। इदं तर्हि डाबुभाभ्यामन्यतरस्यामिति। बहुराजा बहुराजे बहुराजाइति। ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्। ङ्याब्ग्रहणमनर्थकम्। किं कारणम्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येषा परिभाषा कर्तव्या। कः पुनरत्र विशेषः। एषा वा परिभाषा क्रियेत ङ्याब्ग्रहणं वा। अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि। कानि। प्रयोजनं सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् *। सर्वनामविधिः प्रयोजनम्। सर्वनाम्नः सुट्। इहैव स्यात्। एषाम्। तेषाम्। यासाम्। तासामित्यत्र न स्यात्। नैतदस्ति प्रयोजनम्। अवर्णान्तादाड्विधीयते। तत्रैकादेशे कृतेऽन्तादिवद्भावात्सुड् भविष्यति। इदं तर्हि प्रयोजनम्। सर्वनाम्नस्तृतीया च। इहैव स्यात्। भवता हेतुना। भवतो हेतोरिति। भवत्या हेतुना भवत्या हेतोरित्यत्र न स्यात्। सर्वनाम। स्वर। कुसूलकूपकुम्भशालं बिले। इहैव स्यात्। कुसूलबिलम्। कुसूलीबिलमित्यत्र च न स्यात्। स्वर। समास। द्वितीया श्रितादिभिः सह समस्यते। इहैव स्यात्। कष्टं श्रितः कष्टश्रितः। कष्टं श्रिता कष्टश्रिता इत्यत्र न स्यात्। एतदपि नास्ति प्रयोजनम्। श्रितशब्दोऽकारान्तस्तत्रैकादेशे कृतेऽन्तादिवद्भावाद्भविष्यति। इदं तर्हि पूर्वसदृशेति। इहैव स्यात्। पित्रा सदृशः पितृसदृशः। पित्रा सदृशी पितृसदृशीत्यत्र न स्यात्। समास। तद्धितविधि। अचित्तह-

---

तत्र च्छान्दसत्वादिति। अप्रातिपदिकत्वेऽपि प्रत्ययोत्पत्तिरिति शेषः। लिङ्गविशिष्टस्येति। यथाकथञ्चित् प्रातिपदिकग्रहणे एषा परिभाषोपतिष्ठते न तु प्रातिपदिकस्य स्वरूपग्रहण एवेति भावः। कः पुनरिति। ङ्याब्ग्रहणं लघु न तु परिभाषेति भावः।

स्तिधेनोष्ठक् । इहैव स्यात् । हस्तिनां समूहो हास्तिकम् । हस्तिनीनां समूहो हास्तिकमित्यत्र न स्यात् । एतदपि नास्ति प्रयोजनम् । पुंवद्भावेनैतत्सिद्धम् । इदं तर्हि । प्रमाणे द्वयसच् । यथेह भवति । हस्तिद्वयसं हस्तिमात्रम् । एवं हस्तिनीद्वयसमित्यपि यथा स्यात् । तद्धितविधि । लुक् । नेन्सिद्धबध्नातिषु च । इहैव स्यात् । स्थण्डिलशायी । स्थण्डिलशायिनीत्यत्र न स्यात् । लुग्लुक् । शयवासवासिष्वकाला- इहैव स्यात् । ग्रामेवासी । ग्रामेवासिनीत्यत्र न स्यात् । माननि च विधिप्रतिषेधार्थम् * । मानिनि च विधिप्रतिषेधार्थं प्रयोजनम् । विध्यर्थं तावत् ख्यङ्मानिनोश्च । इहैव स्यात् । दर्शनीयमानी । दर्शनीयमानिनीत्यत्र न स्यात् । प्रतिषेधार्थमपि । वक्ष्यति स्वाङ्गाच्चेतो मानिनि । तस्मिन् क्रियमाणे इहैव स्यात् । दीर्घमुखमानी । दीर्घमुखमानिनीत्यत्र न स्यात् । प्रत्ययग्रहणोपचारेषु च * । प्रत्ययग्रहणोपचारेषु च प्रयोजनम् । टजकाभ्यां कर्तरि । इहैव स्यात् । अपांस्रष्टा । अपां स्रष्ट्रीत्यत्र न स्यात् । प्रत्यय । उपचार । अतः कृकमिकंसकुम्भ इहैव स्यात् । अयस्कुम्भः । अयस्कुम्भीत्यत्र न स्यात् । एतान्येतस्याः परिभाषायाः प्रयोजनानि । यदर्थमेषा परिभाषा कर्तव्या । एतस्यां च सत्यां नार्थो ङ्याव्ग्रहणेन । अतिप्रसङ्ग उपपदविधौ * । उपपदविधावतिप्रसङ्गो भवति । द्विषत्परयोस्तापेः । यथेह भवति द्विषन्तप इति एवं द्विषतीताप इत्यत्रापि स्यात् । यञिञोः फकि अतिप्रसङ्गो भवति । यथेह भवति गार्ग्यायणः । दाक्षायणः । एवं गार्गीयो दाक्षेय इत्यत्रापि स्यात् । नैष दोषः । ढगत्र बाधको भविष्यति । समासान्तेषु चातिप्रसङ्गो भवति । राजाहःसखिभ्यष्टच् । यथेह भवति । मद्रराजः । कश्मीरराजः । एवं मद्रराज्ञी कश्मीरराज्ञीत्यत्रापि स्यात् । न वा भवति मद्रराजीति । भवति यदा समासान्तादीकारः । लिङ्गविशिष्टग्रहणे तु इकारान्तात्समासान्तः प्र-

---

स्थण्डिलशायिनीति । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वचनादनुत्पन्न एव ङीपि समासे सति इनन्तमेवोत्तरपदमित्यप्रयोजनमेतत् । एवं ग्रामेवासिनी दर्शनीयमानिनी दीर्घमुखमानिनीत्यपि द्रष्टव्यम् । ढगत्रेति । परत्वादिति भावः । समासान्तादीकार इति । मद्रराजस्य भार्या मद्रराजीति पुंयोगादाख्यायामिति ङीष् । तत्र

सज्येत। तत्र को दोषः। पुंवद्भावष्टिलोपश्च। यच्च मद्रराजीत्येवं रूपं स्यात्। मद्रराज्ञीति चेष्यते। महदात्वे प्रियादिषु अतिप्रसङ्गो भवति। आन्महतः समानाधिकरणजातीययोरिति यथेह भवति महान् प्रियोऽस्य महाप्रियः एवं महती प्रियाऽस्य महतीप्रिय इत्यत्रापि स्यात्। किमुच्यते प्रियादिष्विति। यत्र पुंवद्भावः प्रतिषिध्यते। यत्र तु न प्रतिषिध्यते भवितव्यमेव तत्रात्वेनेति। ञ्नित्स्वरे। ञ्नित्स्वरे अतिप्रसङ्गो भवति ञ्नित्यादिर्नित्यमित्याद्युदात्तो भवतीति। यथेह भवति। दाक्षिः। आहिचुम्बकायनिः। एवं दाक्षी आहिचुम्बकायनीत्यत्रापि स्यात्। राज्ञः स्वरे ब्राह्मणकुमारयोः। कर्मधारये समासे राज्ञः स्वरे अतिप्रसङ्गो भवति। राजा च ब्राह्मणकुमारयोरिति। यथेह भवति। राजब्राह्मणः। राजकुमारः। एवं राजब्राह्मणी राजकुमारीत्यत्रापि स्यात्। समाससंघातग्रहणेषु च। समाससंघातग्रहणेषु चातिप्रसङ्गो भवति। बहोर्नञ्वदुत्तरपदभूम्नि। यथेह भवति बहुगोमान् बहुयवमान्। एवं बहुगोमती बहुयवमतीत्यत्रापि स्यात्। किमुच्यते समाससंघातग्रहणेष्विति। यदवयग्रहणं प्रयोजनमेवैतस्याः परिभाषायाः। कुसूलकूपकुम्भशालं बिले। कुसूलीबिलमिति यथा। विभक्तौ चोक्तम्। न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति। एते ऽस्याः

---

को दोष इति। टचि कृते यस्य चेतीकारे लुप्ते टित्वात् ङीपि कृते मद्रराज्ञीति सिध्यतीति प्रश्नः। यच्च पुंवद्भाव इति। तत्रापूरणीप्रियादिष्विति वचनात्। यच्च त्विति। महाजन्ब इत्यादौ। दाक्षीति। इतो मनुष्यजातेरिति ङीष् प्रत्ययस्वरेणान्तोदात्तमिष्यते। बहोर्नञ्वदिति। बहुशब्दादुत्तरपदबहुत्वे वर्तमानाद्यत्परं पदं तदन्तस्य समासस्य नञ इव स्वरो भवतीत्यतिदेशार्थः। तेन बहवो गोमन्तोऽस्य बहुगोमानित्यत्र नञ्सुभ्यामिति समासान्तोदात्तत्वं भवति। बहुगोमतीति। बहवो गोमन्तोऽस्या इति बहुव्रीहिः उगितश्चेति ङीप्। समासोऽत्र संघातरूपः कार्यीति लिङ्गविशिष्टसमासाग्रहणात्समासान्तोदात्तत्वाभावादीकारः पित्त्वादनुदात्तो भवति। ईकारात्तु पूर्वउदात्तो भवति। कुसूलीबिलमिति। पूर्वपदस्यात्र कार्यित्वं न तु संघातस्येति पूर्वपदान्तोदात्तत्वं भवत्येव। विभक्तौ चोक्तमिति। उगिदचामित्यत्रोक्तम्। यथा गोमानित्यत्र नुम्भवति एवं गोमतीत्यत्रापि प्राप्नोति। तत्र परिहार उक्तो न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति। विभक्त्याश्रयकार्ये क्रियमाणे लिङ्गविशिष्टपरिभाषा नेष्यत इत्यर्थः। प्रतिविधेयमिति। अत्प्रकरणे शक्तिलाङ्-

परिभाषाया दोषाः। एतानि च प्रयोजनानि। एते दोषाः समा भूयांसो वा। तस्मान्नार्थोऽनया परिभाषया। नहि दोषाः सन्तीति परिभाषा न कर्तव्या। लक्षणं वा न परिहेयम्। न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। न च मृगाः सन्तीति यवा नोप्यन्ते। दोषाः खल्वपि साकल्येन परिगणिताः। प्रयोजनानामुदाहरणमात्रम्। कुत एतत्। न हि दोषाणां लक्षणमस्तीति। तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या। प्रतिविधेयं च दोषेषु। तद्धितविधानार्थं तु * । तद्धितविधानार्थं तु ङ्याब्ग्रहणं कर्तव्यं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात्। कालितरा। हरिणितरा। खट्वातरा। मालातरा। किं पुनः कारणं न सिध्यति। विप्रतिषेधाद्धि तद्धितबलीयस्त्वम् * । विप्रतिषेधाद्धि तद्धितोत्पत्तिः प्राप्नोति। तत्र समासान्तेषु दोषः। तत्र समासन्तेषु दोषो भवति। बहुगोमत्का। बहुयवमत्का। समासान्ता अपि ङ्याबन्तात्स्युः। त्यूङोश्चापि ग्रहणं कर्तव्यं भवति। युवतिका। ब्रह्मबन्धुकेति। ऊङ्-

---

ङ्गत्यत्र वार्तिके घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं तेनानिष्टे विषये नोपतिष्ठते। तद्धितविधानार्थं त्विति। सति ङ्याब्ग्रहणे तद्धितविधौ प्रकृतित्रयाधिकारसामर्थ्यात् पूर्वं ङ्यापौ भवतस्तदन्तात्तद्धित इत्यर्थः। विप्रतिषेधाद्धीति। स्त्रीप्रत्ययस्यावकाशो यत्र प्रकर्षो न विवक्ष्यते कालीति। प्रकर्षप्रत्ययस्यावकाशो यत्र स्त्रीत्वाविवक्षा कालतर इति। स्त्रीत्वप्रकर्षयोस्तु युगपद्विवक्षायां परत्वात्प्रकर्षप्रत्ययः स्यादित्यर्थः। ननु स्त्रीत्वस्यान्तरङ्गत्वात्तन्निमित्तः प्रत्ययोन्तरङ्गः प्रकर्षस्तु बाह्यप्रतियोग्यपेक्षत्वाद्बहिरङ्गः। ततस्तन्निमित्तस्य प्रत्ययस्यापि बहिरङ्गत्वम्। अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रतिषेधः। तथा च वक्ष्यते। स्वार्थमभिप्रायशब्दो निरपेक्षो द्रव्यमाह। समवेतं समवेतस्य वचने लिङ्गं संख्यां विभक्तिं चाभिधाय तान्विशेषानपेक्षमाणस्य कृत्स्नमात्मानं प्रियकुत्सनादिषु ततः प्रवर्तते ऽसौ विभक्त्यन्त इति। एवं तर्ह्येतत्क्रमानाश्रयेण लौकिके प्रयोगे पदादुच्चरिताद्युगपदर्थाः प्रतीयन्ते इति लौकिकार्थव्यवस्थाङ्गीकरणेन प्रातिपदिकार्थगतस्त्रीत्वप्रकर्षविवक्षाश्रयेण विप्रतिषेध उक्तः। समासान्ता अपीति। तत्र बहवो गोमन्तोस्या इति बहुव्रीहौ कृते ङीपि च कबुत्पत्तौ बहुगोमतीकेति प्राप्नोति। ब्रह्मबन्धुकेति। अज्ञाताद्यर्थविवक्षायामूङन्तात्कप्रत्ययः दृश्यते।

ग्रहणेन तावन्नार्थः। नास्त्यत्र विशेषः। उकारान्तादुत्पत्तौ सत्यामूङन्ताद्वा। इदं तर्हि। युवतितरा। ब्रह्मबन्धुतरा। ब्रह्मबन्धूतरेति। तदन्तस्य च प्रत्ययार्थेनायोगात्तद्धितानुत्पत्तिः *। तदन्तस्य च ङ्याबन्तस्य प्रत्ययार्थेनायोगात्तद्धितोत्पत्तिर्न प्राप्नोति। कालितरा। हरिणितरा। खट्वतरा। मालातरेति। किं कारणम्। ङ्याबन्तमेतत् स्त्रीप्रधानम्। न च स्त्रीत्वस्य प्रकर्षाप्रकर्षौस्तः। नैष दोषः न हि किं चिदुच्यते। एवं जातीयकादुत्पत्तव्यमेवंजातीयकान्नेति। एतावदुच्यते। अतिशायने तमबिष्ठनौ तिङश्चेति। यस्य च प्रकर्षोऽस्ति तस्य च प्रकर्षे प्रत्ययो भविष्यति। अस्ति चाप्रधानस्य गुणस्य प्रकर्षः। इह खल्वपि शुक्लतरः कृष्णतर इति। द्रव्यं प्रधानम्। गुणस्य च प्रकर्षे प्रत्यय उत्पद्यते। उक्तं वा। किमुक्तम्। सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादय इति। यदि प्रातिपदिकविशेषणं स्त्रीग्रहणं स्वार्थिकाष्टाबादयः। नैवं विज्ञायते स्त्रियामभिधेयायामिति। नापि स्त्रीसमानाधिकरणात्प्रातिपदिकादिति। कथं तर्हि। यत्प्रातिपदिकं स्त्रियां वर्तते तस्माट्टाबादयो भवन्ति। कस्मिन्नर्थे। स्वार्थे इति। ननु चोक्तं तत्र समासान्तेषु दोष इति। समासान्ता अपि स्वार्थिकाः। उभयोः स्वार्थिकयोः परत्वात्समासान्ता भविष्यन्ति।

---

नास्त्यत्रेति। केण इति ह्रस्वविधानादिति भावः। युवतितरेति। जातेश्चेति। पुंवद्भावप्रतिषेधं मन्यते। यौवनस्य जातिरूपत्वात्। ब्रह्मबन्धुतरेति। अत्र नद्याः शेषस्यान्यतरस्यामिति विकल्पेन ह्रस्वः। न च स्त्रीत्वस्येति। तस्य सर्वत्रैकरूपत्वात् प्रकर्षाप्रकर्षाभाव इत्यर्थः। इह खल्वपीति। सर्वत्र प्रधानस्य प्रकर्षाभावः। तदुक्तं हरिणा। सर्वस्यैव प्रधानस्य न विना भेदहेतुना। प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यतामिति। ततश्च कालितरेत्यत्रापि कालगुणप्रकर्षाश्रयस्तरप्प्रत्ययः। उक्तं वेति। नात्र स्त्रीत्वं प्राधान्येन प्रत्ययाभिधेयम्। किं तर्हि, स्त्रीत्ववृति द्रव्ये वर्तमानात् प्रातिपदिकात् स्वार्थे टाबादयः। ततश्च द्रव्यमेव प्राधान्येनाभिधीयते तस्य च व्यपदेशहेतुगुणप्रकर्षाश्रयातिशयविवक्षायां प्रकर्षप्रत्यय इत्यर्थः। समासान्ता अपीति। ङ्याब्ग्रहणप्रत्याख्यानेन समासान्तेषु परिहारः। स्त्रियामन्यपदार्थे बहुव्रीहिविधानात् स्त्रीप्रत्ययस्य च समासान्तस्य च विप्रतिषेधोपपत्तिः। कालितरेत्यादौ तु पूर्वोक्तेन न्यायेनान्तरङ्गत्वात् स्त्रीप्रत्यये कृते प्रकर्षप्रत्यय

कथं कालिकेति । प्रत्ययस्थात्कात्पूर्वस्येतीत्वं भविष्यति । कथं हरिणिकेति । हरिणशब्दः प्रकृत्यन्तरमस्ति । कथं लोहिनिकेति । वक्ष्यत्येतद्धितः स्त्रीलिङ्गबाधनं वेति ॥

स्त्रियाम् ॥ ३ ॥ स्त्रियामित्युच्यते । का स्त्री नाम । लोकत एते शब्दाः प्रसिद्धाः । स्त्री पुमान्नपुंसकमिति । यल्लोके दृष्ट्वा एतदवसीयते इयं स्त्री अयं पुमानिदं न पुंसकमिति । सा स्त्री स पुमान् तन्नपुंसकमिति । किं पुनर्लोके दृष्ट्वा एतदवसीयते । इयं स्त्री अयं पुमानिदं नपुंसकमिति । लिङ्गम् । किं पुनस्तत् । स्तनकेशवती स्त्री स्या-

---

उत्पद्यते । कथं कालिकेति । वर्णे चानित्ये रक्ते इति वर्तमाने कालाच्चेति स्वार्थे कन्प्रत्ययस्तदपेक्षस्त्रीप्रत्ययस्यान्तरङ्गत्वं नास्तीति परत्वात्कन् स्यादितिप्रश्नः । कथं हरिणिकेति । स्वार्थे हरितशब्दात्परत्वात्कन् स्यादितिप्रश्नः । अज्ञातादिकनस्तु बहिरङ्गत्वात् प्रागेव स्त्रीप्रत्ययः सिध्यति । हरिणशब्द इति । हरितशब्दसमानार्थ इति भावः । तच्च हरितशब्दस्य हरितिकेति भवति । हरिणशब्दस्य हरिणिकेति भावः । लोहिनिकेति । न हि लोहिनशब्दः प्रातिपदिकमस्तीति प्रश्नः । वक्ष्यत्येतदिति । अवश्यवक्तव्यतां दर्शयति । क्रियमाणे ऽपि ङ्याब्ग्रहणे लोहितान्मणौ वर्णे चानित्ये रक्ते इति प्रतिपदविधानाद्बलीयस्त्वात्स्त्रीप्रत्ययं बाधित्वाकन्नेव स्यात् ॥

स्त्रियाम् । का स्त्री नामेति । प्रसिद्धस्यार्थस्य कार्यान्तरविधानायानुवादसंभवादिह च शास्त्रे स्त्रिया अपरिभाषितत्वाल्लोके च खट्वादिषु स्त्रीव्यवहाराभावाल्लौकिकस्त्रीग्रहणे ऽव्याप्त्यतिव्याप्तिदर्शनात् प्रश्नः । न च गोत्वादिवत्संस्थानविशेषव्यङ्ग्यत्वं स्त्रीत्वस्य यतः सामान्यविशेषरूपत्वं तस्य स्यात् । खट्वाशिंशपानगर्यादिषु भिन्नत्वात्संस्थानस्य । न च सकृदाख्यातं स्त्रीत्वं गोत्वादिवत् सर्वेषु स्त्रीलिङ्गेषु व्यक्त्यन्तरेषु ग्रहीतुं शक्यते । यत्र वस्तुस्वरूपजिज्ञासा तत्र प्रथमान्ते न प्रश्नो युक्त इति का स्त्री नामेत्युक्तम् । कस्यास्त्रियामित्युच्यमाने विशेषविषयः प्रश्नः स्यात् । लोकत इति । पञ्चम्यन्तात्सप्तम्यन्ताद्वातसिः। शब्दाः प्रसिद्धा इति । विशिष्टार्थाभिधायित्वेनेति भावः । पुंनपुंसकयोरुपादानप्रसङ्गेन तद्विषयस्याप्यज्ञानस्य निराकरणार्थम् । यल्लोक इति । यन्निमित्तमुपलभ्य निमित्तवत्यर्थे प्रत्यय उपजायते तत्स्त्र्यादिशब्दवाच्यमित्यर्थः । तद्योगाच्च निमित्तवानप्यर्थः स्त्र्यादिशब्दवाच्यो भवति । किं पुनरिति । द्रव्ये सत्तादेरनेकार्थस्य संभवात्प्रश्नः लिङ्गमिति । स्तनकेशादिकमिति भावः । स्तनकेशवतीति । भूमादौ मतुप् । तथैव लोमश इति शः । लिङ्गे पृष्टे लिङ्गिकथनं लिङ्गप्रतिपत्तिपरमिति प्रश्नप्रतिवचनयोर्नास्त्यसं-

लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च तदभावे नपुंसकम्॥ १॥ लिङ्गात्-स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप्प्रसज्यते। लिङ्गात् स्त्रीपुंसयोर्ज्ञाने सति भ्रूकुंसे टाप्प्राप्नोति। यद्धि लोके दृष्ट्वा एतदवसीयतेऽयं स्त्री। अस्ति तद् भ्रूकुंसे। नत्वं खरकुटीः पश्य॥ इहचस्या; पश्य। वध्रिकाः पश्य। खरकुटीः पश्यति। तस्माच्छसोनः पुंसीति नत्वं प्राप्नोति। यद्धि लोके दृष्ट्वा एतदवसीयते। अयं पुमानिति। अस्ति तद्वध्रिकादिषु। खट्वावृक्षौ न सिध्यतः॥ खट्वावृक्षयोश्च लिङ्गं न सिध्यति। यद्धि लोके दृष्ट्वा एतदवसीयते इयं स्त्री अयं पुमानिति। न तत्खट्वावृक्षयोरस्ति। किं तर्हि तयोर्लिङ्गं न्याय्यम्। नापुंसकं भवेत्तस्मिन्॥ नापुंसकं खट्वावृक्षयोर्लिङ्गं न्याय्यम्। किमिदं नापुंसकमिति। नपुंसके भवं नापुंसकम्। तदभावे नपुंसकम्। तदभावे स्त्रीपुंसलिङ्गाभावे नपुंसकं लिङ्गं न्याय्यम्। असत्तु मृगतृष्णा-वत्। असत्तु खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम्। कथं पुनरसन्नाम लिङ्गं श-

---

गतिः। स्तनकेशश्च प्रसिद्धत्वादन्यस्यापि स्त्रीप्रतिपत्तिनिमित्तस्य कुमार्यादिगतस्य उपलक्षणम्। तदनेन स्त्रीत्वादीनां स्तनाद्युपव्यञ्जनानां गोत्वादिवत्सामान्यविशेषत्वं दर्शितम्। यथोक्तं हरिणा। हस्तिन्यां वडवायां च स्त्रीति बुद्धेः समन्वयः। अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीमिति॥ उभयोरन्तरमिति। लिङ्गद्वयेन सदृशमित्यर्थः। तेनाव्याख्यातार्थस्य नपुंसकत्वाभावः। तदभाव इत्यनेन मयूरीकुक्कुटादीनां स्त्रीपुंससमुदायानां नपुंसकत्वं निराकृतम्। भवति हि समुदायः समुदायिनोः सदृश इति स्यान्नपुंसकत्वम्। अथ तु परवल्लिङ्गमित्यनेन समुदायस्य परवल्लिङ्गातिदेशादप्रसङ्गो नपुंसकत्वस्य। ततो वस्तुस्वरूपनिरूपणपरमेतदित्यवगन्तव्यम्। इदानीमेतद्दूषयितुमाह। लिङ्गादिति। भ्रूकुंसः स्त्रीवेषधारी नटस्तस्य स्तनकेशसंबन्धात् स्त्रीत्वे सति टाप्स्यात्। ननु नित्ययोगे स्तनकेशवतीति मतुब्विज्ञानाद् भ्रूकुंसशब्दस्य स्त्रीत्वाभावः। नैतदस्ति। प्रतिपत्तॄणां नित्यलिङ्गदर्शनात्तत्रापि स्त्रीत्वप्रसङ्गात्। केशवपने च स्त्रियाः स्त्रीत्वन्न स्यात् तदानीं केशसंबन्धाभावात्। स्तनातिशयसंबन्धस्य चोत्तरकालभावित्वादतिशयेऽपि मतुपि विज्ञायमाने प्राक्स्त्रीत्वं न स्यात्। अव्याप्तिसद्भावाद्धा हेयत्वादस्य दर्शनस्य न सुष्ठु निर्बन्धोऽत्र कर्तव्यः। नत्वमिति। खरकुटी नापितगृहमुच्यते इति केचिदाहुः। तत्र इवार्थे संज्ञायामिति कन्प्रत्ययः तस्य लुम्मनुष्य इति लुप्। तत्र मनुष्यस्य वाच्यत्वात्तस्य च लोमशत्वात् पुंस्त्वात् खरकुटीः पश्येत्यादौ नत्वप्रसङ्गः। नापुंसकमिति। नपुंसके वस्तुनि भवं लिङ्गं नापुंसकं तत्प्राप्तं स्त्रीत्वपुंस्त्वयोरभावात् स्त्रीपुंससदृशत्वाच्च लिङ्गद्वयेन। असत्त्वरूपत्वाच्च लिङ्गसंख्यारहितस्यासत्त्वभूतस्यार्थस्याभावादिति भावः। असत्त्विति। मृ-

क्यं द्रष्टुम् । मृगतृष्णावत् । तद्यथा । मृगास्तृषिता अपां धाराः पश्यन्ति । न च ताः सन्ति । गन्धर्वनगरं यथा । यथा गन्धर्वनगराणि दूरतो दृश्यन्ते उपसृत्य च नोपलभ्यन्ते तद्वत्खट्वावृक्षयोरसल्लिङ्गं द्रष्टव्यम् । आदित्यगतिवत्सन्न । अथ वा यथा आदित्यगतिः सती नोपलभ्यते । तद्वत्खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते । वस्त्रान्तर्हितवत्तत् ॥ यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते । तद्वत्खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते । विषम उपन्यासः । वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापाये उपलभ्यन्ते । खट्वावृक्षयोः पुनः येप्येते रथकारा वाशीवृक्षादनहस्ता मूलात्प्रभृति आग्राद्वृक्षांस्तक्ष्णुवन्ति ते पि तयोर्लिङ्गं नोपलभ्यन्ते । केनैतदवसीयते । खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते इति । षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति । अतिसन्निकर्षादतिविप्रकर्षान् मूर्त्यन्तरव्यवधानात् तमसावृतत्वाद्

---

गतृष्णाविषया मरुमरीचिका यथाऽसत्त्वेन जलरूपेण प्रतिभासते । तथा खट्वा वृक्षावसता स्त्रीपुंसत्वेनेत्यर्थः । अथोच्यते मरीचिदर्शनात्सादृश्याज्जलं पूर्वानुभूतं स्मर्यते न तु तत्रासज्जलं चकास्तीति तत्राह । गन्धर्वनगरं यथेति । नहि गन्धर्वनगरमन्तरिक्षे कदाचिदुपलब्धम् । न च तत्र तत्सदृशवस्त्वन्तरग्रहणं येन गन्धर्वनगरं स्मर्येत । तस्मादसतामपि भावानामचिन्त्यान्निमित्तसामर्थ्याद्यथोपलम्भः तथा खट्वादावपि स्त्रीत्वादेरित्यर्थः । तदुक्तं हरिणा । यथा सलिलनिर्भासो मृगतृष्णासु जायते । जलोपलब्ध्यनुगुणाद् बीजाद् बुद्धिर्जलेऽसति । तथैवाव्यपदेश्येभ्यो हेतुभ्यस्तारकादिषु । मुख्येभ्य इव लिङ्गेभ्यो भेदो लोके व्यवस्थित इति । इदानीमसत्त्वं निराकरोति । आदित्यगतिवत्सन्नेति । यथा आदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्यानुमीयते तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात्प्रत्यक्षेणाशक्यं ग्रहीतुं तत्कृतकार्यदर्शनादनुमीयते । किञ्चिद्धि स्थूलमुपलभ्यं व्यञ्जनं किञ्चित्सूक्ष्मत्वाद् दुरवधारणमिति भावः । विषम इति । यस्य कदाचिदुपलब्धिर्भवति यस्यानुपलब्धिकारणं व्यवधानादिकमभिधीयताम् । अत्यन्तानुपलब्धस्य तु शशविषाणादिवत् खट्वादौ लिङ्गस्यासत्त्वमेवेत्यर्थः । येप्येतइति । अनेन दृश्यानुपलब्धिमभावसंव्यवहारहेतुमुपन्यस्यति । रथकारास्तक्षाणः । वृक्षादनं शस्त्रकर्म् । इतरो विद्यमानस्यापि लिङ्गस्य सौक्ष्म्यमनुपलब्धिकारणं दर्शयितुमाह । षड्भिरिति । अतिसन्निकर्षादिति । यथा स्वचक्षुर्गतस्याञ्जनादेः । अतिविप्रकर्षादिति । यथोड्डीनस्य शकुनेः । मूर्त्यन्तरव्यवधानादिति । कुड्यादिव्यवहितस्य सुवर्णादेः । तमसावृतत्वादिति । अन्धका-

इन्द्रियदौर्बल्यादतिप्रमादादिति अतोन कश्चिद्धेतुर्द्रष्टव्यः। येन खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते केनैतदवसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते इति। तयोस्तु तत्कृतं दृष्ट्वा। स्त्रीकृतं शब्दं दृष्ट्वा स्त्रीत्यवसीयते। पुंस्कृतं शब्दं दृष्ट्वा पुमानिति। यथाकाशेन ज्योतिषः॥ तद्यथा। आकाशं दृष्ट्वा ज्योतिरत्रेति गम्यते। ज्योतिर्निमित्तं ह्याकाशम्। अन्योन्यसंश्रयं त्वेतत्। अन्योन्यसंश्रयं त्वेतद्भवति। स्त्रीकृतः शब्दः। शब्दकृतं च स्त्रीत्वम्। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते। प्रत्यक्षेण विरुध्यते॥ प्रत्यक्षेण खल्वपि स विरुध्यते। य आह खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति। तत्र खेन्द्रियविरोधः कृतो भवति। न च नाम खेन्द्रियविरोधिना भवितव्यम्। तटे च सर्वलिङ्गानि दृष्ट्वा कोऽध्यवस्यति। तटे च खल्वपि सर्वाणि लिङ्गानि दृष्ट्वा तटः तटी तटमिति कस्तदध्यवसातुमर्हति। इयं स्त्री। अयं पुमान्। इदं नपुंसकमिति। तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं च कश्चित्

---

राक्रान्तस्य खस्यादेः। इन्द्रियदौर्बल्यादिति। तिमिराद्यावृतस्य नयनादेः। अतिप्रमादादिति। विषयान्तरासक्तचित्तत्वादित्यर्थः। सौक्ष्म्यस्येन्द्रियदौर्बल्ये ऽन्तर्भावान्न पृथगुपन्यासः। दिव्यचक्षुःश्रोत्रा हि सूक्ष्ममप्यर्थमुपलभन्ते न तु दुर्बलेन्द्रियाः। अतोनेति। इन्द्रियदौर्बल्यमिति भावः। केनैतदिति। सतामसतां चानुपलम्भात् खट्वादिषु सर्वदा लिङ्गानुपलम्भात् सदसत्त्वविषयः संदेह इति प्रश्नः। इतरस्तत्सद्भावे ऽनुमानमाह। तयोस्त्विति। स्त्रीपुंसकार्यं टाबन्तत्वादिकं दृष्ट्वा कारणभूतलिङ्गानुमानं क्रियते इत्यर्थः। आकाशेनेति। आकाशत इत्याकाशं प्रकाश आलोकस्तेन यथा मेघान्तरितं ज्योतिरनुमीयते तथा लिङ्गमित्यर्थः। अन्योन्यसंश्रयमिति। ज्योतिःप्रकाशयोः प्रत्यक्षेण कार्यकारणभावावगमात्। भवतु कार्येण कारणानुमानम्। खट्वादिषु तु लिङ्गस्य कदाचिदप्यग्रहणान्न तेन कस्य चित्कार्यकारणभावग्रहणम्। तत्र हि लिङ्गावगमात् शब्दप्रयोगः शब्दप्रयोगाल्लिङ्गावगतिरितीतरेतराश्रयमेतदित्यर्थः। यदुक्तमादित्यगतिवत्सन्नेति। तद्दूषयति। प्रत्यक्षेणेति। लिङ्गस्वरूपविविक्तखट्वादिवस्तुविषयेण प्रत्यक्षेण लिङ्गाभावनिश्चयकारिणा विरुध्यत एतदित्यर्थः। इन्द्रियदौर्बल्यमनुपलब्धिकारणं प्रमाणान्तरावसितवस्तुविषयमेवाभिधातुं शक्यते। तटे चेति। लिङ्गशब्देन तत्कार्याण्यभिधीयन्ते। एकस्मिन् द्रव्ये विरोधात्सर्वलिङ्गासंभवः। स्त्रीपुंससद्भावे च नपुंसकत्वं न स्यात्। तदभावे नपुंस-

स्वकृतान्त आस्थेयः कोसौ स्वकृतान्तः ॥ संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः ॥ संस्त्यानप्रसवौलिङ्गमास्थेयौ । किमिदं संस्त्यानप्रसवाविति । संस्त्यानेस्त्यायतेड्रट् स्त्री सूतेः सप् प्रसवे पुमानिति । ननु च लोकेपि स्त्यायतेरेव स्त्री । सूतेश्च पुमानिति । अधिकरणसाधनालोके स्त्री स्त्यायत्यस्यां गर्भ इति । कर्तृसाधनश्च पुमान् । सूते पुमानिति । इह पुनरुभयं भावसाधनम् । संस्त्यानं स्त्री प्रवृत्तिश्च पुमान् । कस्य पुनः संस्त्यानं स्त्रीप्रवृत्तिर्वा पुमान् । गुणानाम् । केषाम् । शब्दस्पर्शरूपरसगन्धानाम् । सर्वाश्च पुनर्मूर्त्तय एवमात्मिकाः । संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः । यत्राल्पीयांसोगुणास्तत्रावरतस्त्रयः शब्दः स्पर्शो रूपमिति । रसगन्धौ न सर्वत्र । प्रवृत्तिः खल्वपि नित्या । नहीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते वर्द्धते वा । यावदनेन वर्द्धितव्यमपायेन वा युज्यते । तच्चोभ-

---

कमिति वचनात् । स्वकृतान्त इति । स्वसिद्धान्तः । स्त्रीपुमानिति । रूढिपरिहारेण क्रियाशब्दत्वमाश्रयणीयमित्यर्थः । संस्त्यान इति । भावसाधनत्वं दर्शयति । सूतेरिति । सू इत्येतस्य धातोः सप्प्रत्ययो भवति सकारस्य पकारो भवतीत्यर्थः । औणादिको मक्षुन् प्रत्ययः कृत्स्नस्य बाहुलकात् । स्त्यायत्यस्यामिति । संघातरूपं प्राप्नोतीत्यर्थः । कर्तृसाधन इति । सूते ऽपत्यं जनयति पुमानित्यर्थः । संस्त्यानमिति । तिरोभावः । प्रवृत्तिराविर्भावः । साम्यावस्था स्थितिः । एताश्चावस्थाः शब्दगोचरा एवेत्यवसेयम् । गुणानामिति । सत्त्वरजस्तमांसि गुणास्तत्परिणामरूपाश्च तदात्मका एव शब्दादयः पञ्च गुणाः । तत्संघातरूपं च घटादि न तु तद्व्यतिरिक्तमवयविद्रव्यमस्तीति सांख्यानां सिद्धान्तः । केषामिति । सत्त्वादीनामनारब्धकार्याणां सूक्ष्मावस्थायिनामप्रत्यक्षत्वाच्छब्दव्यवहारागोचरत्वात्प्रश्नः । तथा चोक्तम् । गुणानां परमं रूपं न दृष्टिपथमृच्छतीति । इतरस्तत्परिणामरूपान् लोकप्रसिद्धानाह । शब्दस्पर्शेति । अवरत इति । अन्तत इत्यर्थः । ननु आकाशं शब्दात्मकमेव स्पर्शात्मकश्च वायुः । नैष दोषः । संपिण्डितस्वभावाश्चक्षुर्गोचरा मूर्तिशब्देनात्र विवक्षिताः । रसगन्धाविति । वाय्वाकाशयोरभावात् । सर्वपदार्थव्यापित्वं पुंस्त्वादीनामाह । प्रवृत्तिरिति । न हीति । सत्त्वादीनामाविर्भावादिरूपः प्रवृत्तिशब्दवाच्यो नित्यः परिणाम इत्यर्थः । पुरुषो यद्यप्यपरिणामी तथापि भोक्तृत्वात्तद्धर्मापन्न इव भवति । तदुक्तं हरिणा । प्रवृत्तिरिति सामान्यं लक्षणं तस्य कथ्यते । आविर्भावस्तिरोभावः स्थितिश्चेत्यथ भिद्यते । प्रवृत्तिमन्तः सर्वे ऽर्थाः तिष्ठन्तित्रिप्रवृत्तिभिः । सततं न वियुज्यन्ते वाचस्त्वेवात्र संभवः ॥ यश्चाप्रवृत्तिधर्माय स्थितिरूपेण गृह्यते । अनुयातीव सोप्येषां प्रवृत्तीर्भेदगाश्रयः ॥ तेना-

यं सर्वत्र। यद्युभयं सर्वत्र कुतो व्यवस्था। विवक्षातः संस्त्यानविवक्षायां स्त्री। प्रसवविवक्षायां पुमान्। उभयविवक्षायां नपुंसकम्। तस्योक्तौ लोकतो नाम। तस्योक्तौ वचने लोकतो नामैतद्भवति स्त्रीपुमान्नपुंसकमिति। गुणो वा लुपि युक्तवत्। वध्रिकादिषु भूयान्परिहारः लुपि युक्तवद्व्यक्तिवचने इति। एवमत्र गुणो भवति। न चैतन्मन्तव्यं स्वमनीषिकयोच्यत इति। पठिष्यत्याचार्यः लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति पुनः पठिष्यति। एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्चेति। संस्त्यानस्त्यायतेर्ड्ट्स्त्री सूतेः सप् प्रसवे पुमान्। तस्योक्तौ लोकतो नाम गुणो वा लुपि युक्तवत्॥३॥ कथं पुनरिदं विज्ञायते स्त्रियामभि-

---

स्य चितिरूपं च चितिकालश्च भिद्यते। तस्य स्वरूपभेदस्तु न कश्चिदपि विद्यते। अचेतनेषु संक्रान्तं चैतन्यमिव दृश्यते। प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनमिति। सामान्यमपि गोत्वादिकं व्यक्तेरव्यतिरिक्तत्वात्प्रवृत्तिधर्मः। शशविषाणादावपि उत्तरपदार्थस्य सद्भावात्तद्द्वारको लिङ्गयोग इति सर्वपदार्थव्यापिनीत्वं प्रवृत्तेः। आविर्भावतिरोभावान्तरालावस्था स्थितिरुच्यते। सा च नपुंसकत्वेन व्यवस्थाप्यते। स्त्रीत्वं स्त्रीता पुंस्त्वमित्यादौ संस्त्यानादेरपि प्रवृत्तिलक्षणलिङ्गयोगः। विवक्षात इति। लोकव्यवहारानुवादिनो विवक्षाश्रीयते न तु प्रायोक्त्री। तदुक्तं हरिणा। संनिधाने निमित्तानां किंचिदेव प्रवर्तकम्। यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा। भावतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः। यद्यद्धर्मेऽङ्गतामेति लिङ्गं तत्तत्प्रचक्षत इति। तस्योक्ताविति। लोकतः शिष्टलोकात्तस्य लिङ्गस्य प्रतिपादने व्यवस्थानुगन्तव्येत्यर्थः। भूयानिति। भ्रूकुंसादिषु स्तनकेशादिमत्त्वलक्षणलिङ्गाभ्युपगमत्यागः परिहारः। वध्र्यादिषु तु तदपरित्यागेऽपि शास्त्राल्लिङ्गसिद्धिरिति भावः। लिङ्गमशिष्यमिति। लिङ्गव्यवस्थायां लोकः प्रमाणमित्यर्थः। एकार्थ इति। अनेन लिङ्गस्वरूपमपि लोकादेव ज्ञायत इत्युक्तं भवति तत्रैकस्मिन्नेवार्थे संस्त्यानादिसद्भावात्पुष्यस्तारका नक्षत्रमिति शब्दान्यत्वाल्लिङ्गान्यत्वम्। स्तनकेशादिसंबन्धे तु लिङ्गेऽभ्युपगम्यमाने एतन्न युक्तम्। अवयवान्यत्वाच्चेति। कुटी कुटीर इति रेफस्यावयवस्योपजने लिङ्गभेदो दृष्ट इत्यर्थः। यद्यपि अविचारितरमणीयं लिङ्गमाश्रित्य वक्तारः शब्दानुच्चारयन्ति श्रोतारश्च प्रतिपद्यन्ते तथापि वस्तुतत्त्वनिर्णयो भाष्यकारेण कृत इति यदन्यैरभ्यध्यायि संस्त्यानादिलक्षणमलौकिकं लिङ्गमिति। तदापन्नं भवति। कथमिति। स्त्रीशब्दः शुक्लादिशब्दवद् गुणमात्रे गुणिनि च वर्तते। तत्र यदा गुणमात्रमिह स्त्रीत्वं स्त्रीशब्देनोच्यते तदा द्रव्यवाचिनः प्रातिपदिकात् स्त्रीत्वे वाच्ये टाबादय इति स्त्री-

धेयायां टाबादयो भवन्तीति। आहो स्वित् स्त्रीसमानाधिकरणा-
त्प्रातिपदिकादिति। कश्चात्र विशेषः। स्त्रियामिति स्वार्थाभिधाने
चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः *। स्त्रियामिति
स्वार्थाभिधाने चेट्टाबादयो भवन्ति। द्विवचनबहुवचनयोरनुपपत्तिः।
कुमार्यौ कुमार्यः। किशोर्यौ। किशोर्यः। किं कारणम्। एकत्वात् स्त्री
त्वस्य। एको ऽयमर्थः स्त्रीत्वं नाम। तस्यैकत्वादेकवचनमेव प्राप्नो-
ति। अनेकप्रत्ययानुपपत्तिश्च। अनेकश्च प्रत्ययो नोपपद्यते। गार्ग्या-
यणी। करीषगन्ध्या। कालितरा। किं कारणम्। एकत्वात् स्त्री-
त्वस्य। एकोयमर्थः स्त्रीत्वं नाम। तस्यैकेनोक्तत्वाद्द्वितीयस्य प्रयोगे-
ण न भवितव्यम्। किं कारणम्। उक्तार्थानामप्रयोग इति। स्वा-
र्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्तिः *। स्वा-
र्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामितीकारो न प्राप्नोति। अ-
स्तु तर्हि स्त्रीसमानाधिकरणात्प्रातिपदिकादिति। स्त्रीसमानाधि-
करणादिति चेद् भूतादिष्वतिप्रसङ्गः *। स्त्रीसमानाधिकरणादि-
ति चेद् भूतादिष्वतिप्रसङ्गो भवति। भतमियं ब्राह्मणी। कारणमि-
यं ब्राह्मणी। आवपनमियमुष्ट्रिकेति। स्वार्थाभिधाने पुनष्टाबादिषु

---

त्वं प्रत्ययार्थ इति पक्षः संपद्यते। यदा तु स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते। तदापरं पक्षद्वयं संभवति स्त्रीत्वोपलक्षितद्रव्यवाचिनः प्रातिपदिकाट्टाबादय इति स्त्रीसमानाधिकरणपक्ष संभवः। अथ स्त्रीत्वयुक्तद्रव्यवाचिनोऽङ्गीकृतस्त्रीत्वात्प्रातिपदिकादिति प्रकृत्यर्थविशेषणप-क्षसंभवः। एकोयमर्थ इति। प्रकृत्यर्थोपसर्जनस्य स्त्रीत्वस्य प्रत्ययेनाभिधानादिति भावः। यद्यपि शब्दादीनामवस्थाविशेषो लिङ्गमवस्थाश्चावस्थातुरभिन्नास्तथापि यथाशब्दादीनां संनिवेशमात्रे घटे शब्दादीनां बहुत्वेऽपि संनिवेशस्याभेदविवक्षायां घट इत्येकवचनं भवति। एवमवस्थाविशेषस्य लिङ्गस्याप्येकत्वमेव संस्त्यानादेरिति मन्यते। अनेकश्चेति। पक्षद्वये ऽपि द्योतकः प्रत्ययो ऽनेकस्यापि च प्रदीपादेर्दृष्टं द्योतकत्वमित्यनेकप्रत्ययोत्पत्तिरविरुद्धा। वाचके तु प्रत्यये ऽर्थप्रयुक्तत्वाच्छब्दस्यैकेनैवाभिहिते ऽर्थे द्वितीयस्यानुत्पत्तिप्रसङ्गः। गार्ग्यायणीति। गर्गस्यापत्यं गोत्रं स्त्री। गर्गादिभ्यो यञ्। तदन्तात्प्राचां ष्फ तद्धित इति ष्फः। तदन्तान्ङीष्। करीषगन्धेरपत्यं स्त्रीत्यण्। तस्याणिञोरिति ष्यङ्। ततो यङश्चापिति चाप्। कालशब्दाज्जानपदादिसूत्रेण ङीष्। ततस्तरप्। ततष्टाब् प्राप्नोति। ङीषा स्त्रीत्वस्योक्तत्वात्। स्त्र्यर्थस्येति। संस्त्यानवाचिड्रट्प्रत्ययान्तेन स्त्रशब्देन स्त्रीत्वस्याभि-

सत्सु इह तावद् भूतमियं ब्राह्मणीति नात्र स्त्रीत्वं विवक्षितम्। किं तर्हि। पौतन्यम्। कारणमियं ब्राह्मणीति। नात्र स्त्रीत्वं विवक्षितम्। किं तर्हि। प्राधान्यम्। आवपनमियमुष्ट्रिकेति। नात्र स्त्रीत्वं विवक्षितम्। किं तर्हि। संभवनम्। षट्संज्ञकेभ्यश्च प्रतिषेधः*। षट्संज्ञकेभ्यश्च प्रतिषेधो वक्तव्यः। पञ्च ब्राह्मण्यः। दश ब्राह्मण्यः। स्त्र्यर्थाभिधाने पुनष्टाबादिषु सत्सु नात्र स्त्रीत्वं विवक्षितम् किं तर्हि। भेदो विवक्षितः संख्या। इह च स्त्रीति ईकारो न प्राप्नोति। न हि तेनैव तस्य सामानाधिकरण्यमस्ति। सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः *। सिद्धमेतत्। कथम्। स्त्रियाः प्रातिपदिकविशेषणत्वात्। प्रातिपदिकविशेषणं स्त्रीग्रहणम्। स्वार्थिकाष्टाबादयः। नैवं विज्ञायते स्त्रियामभिधेयायामिति। नापि स्त्रीसमानाधिकरणादिति। कथं तर्हि। स्त्रियां यत् प्रातिपदिकं वर्तते तस्माट्टाबादयो भवन्ति। कस्मिन्नर्थे। स्वार्थ इति। अथ वा पुनरस्तु स्त्रियामभिधेयायामिति। ननु चोक्तं स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्तिरिति। नैष दोषः। यत्तावदुच्यते द्विवचनबहुवचनयोरनुपपत्तिरिति। गुणवचनस्य चाश्रयतोलिङ्गवचनभावात् *। गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। तद्यथा। शुक्लं वस्त्रम्। शुक्ला शाटी। शुक्लः कम्बलः। शुक्लौ कम्बलौ शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति।

---

धानान्ङीब् प्राप्नोति। भूतमियमिति। स्त्रीत्वोपलक्षितब्राह्मणीवृत्तित्वाद्भूतशब्दस्य तत्सामानाधिकरण्यात् स्त्रीप्रत्ययप्रसङ्गः। स्त्र्यर्थाभिधान इति। प्रत्ययार्थपक्षे दोषोयं नावतरतीत्यर्थः। भूतादयः पौतन्याद्यर्थवृत्तय इति तदर्थस्य स्त्रीत्वेन संबन्धाभावात् प्रत्ययोत्पत्तिप्रसङ्गाभावः। न हि तेनैवेति। स्त्रीशब्दसामानाधिकरण्याद् ब्राह्मण्यादिषु स्त्रीप्रत्ययः सिध्यति। स्त्रीशब्दे तु पदान्तरप्रयोगाभावाद् ब्राह्मण्यादिपदापेक्षाभावाच्च प्रत्ययो न प्राप्नोतीत्यर्थः। अथ ब्राह्मण्याद्यपेक्षया स्त्रीशब्दात्प्रत्ययः क्रियते तदेतरेतराश्रयदोषापत्तिः। प्रत्ययोत्पत्तौ परस्परापेक्षणात्। इदानीं तृतीयं पक्षमाश्रित्याह। सिद्धं त्विति।

एवमिहापि यदसौ द्रव्यं श्रितं भवति स्त्रीत्वं गुणः तस्य यल्लिङ्गं वचनं च तत् स्त्रीत्वस्यापि भविष्यति। यदप्युच्यते अनेकप्रत्ययानुपपत्तिरिति। भावस्य च भावयुक्तत्वाद्भावो भावेन युज्यते। तद्यथा। इषिरिषिणा। निमन्त्रिश्च निमन्त्रिणा। विषम उपन्यासः। युक्तं तत्रान्यत्वं साधनभेदात् कालभेदाच्च। उक्तं तत्रैकस्य बाह्यं साधनं सर्वकालश्च प्रत्ययः। अपरस्याभ्यन्तरं साधनं वर्तमानकालश्च प्रत्यय इति। इह पुनरेकं स्त्रीत्वम्। अथैकमप्युपलभ्यते। किं चातः। यद्येकमुपलभ्यते द्वितीयमप्युपलभ्यताम्। अथैकमप्यनुमानगम्यं द्वितीयमप्यनुमानाद्गम्यताम्। कस्य तावद्भवानेकं गुणं न्याय्यं मन्यते स्त्रीत्वं नाम द्रव्यस्य। द्रव्ये च भवतः कः संप्रत्ययः। यदि तावद् गुणसमुदायो द्रव्यम्। का गतिर्य एते भावः कृदभिहितास्तद्धिताभिहिताश्च।

---

स्त्रीत्वयुक्तेऽर्थेऽङ्गीकृतसंस्त्याने वर्तमानात् स्वार्थे टाबादय इत्यर्थः। एवमिहापीति। यद्यपि गुणमात्रे प्रत्ययः क्रियते तथापि गुणगुणिनोरभेदविवक्षायां स्वाभाविकस्वाद्वा गुणप्रधानभावव्यवस्थायाः कुमारीशब्देन द्रव्यस्यैवाभिधानात्तद्गतसंख्यानिमित्तावचनोत्पत्तिर्द्रव्यवाचिना च नित्यं सामानाधिकरण्यमिति भावः। तदुक्तं हरिणा। सोऽयमित्यभिसंबन्धादाश्रयं प्रतिपद्यते। स्त्रीत्वं स्वभावसिद्धो वा गुणभावविपर्यय इति। भावस्येति। स्त्रीत्वस्य स्त्रीत्वेन योग इत्यर्थः। इषिरिति। एषितुमिच्छतीत्यत्रेत्यर्थः। निमन्त्रिश्चेति। निमन्त्रयेत इत्यत्र निमन्त्रणे लिङ्विधावित्यर्थः। एकस्येति। एषितुमित्यस्येषेरित्यर्थः। बाह्यमिति। भोजनादिकमित्यर्थः। सर्वकाल इति। तुमुन्नित्यर्थः। सहि समानकर्तृकेषु तुमुन्निति कालमात्रे विधीयते। अपरस्येति। इच्छतीत्यस्य। आभ्यन्तरमिति। इषेरेव कर्मेत्यर्थः। स चैषिषिषतीत्यत्र प्रकृत्यर्थत्वादाभ्यन्तरः। इह पुनरिति। भेदकस्वभावादेकमेव स्त्रीत्वम्। इच्छायास्त्वभिन्नरूपाया अपि कालसाधनभेदाद् भवतु भेदग्रहणमित्यर्थः। इतर इह पुनरेकमिति ब्रुवता स्त्रीत्वमनेन प्रतिपन्नं भेदस्तु सुसाध इति मत्वाह। अथैकमपीति। यद्येकमुपलभ्यत इति। खट्वादिष्वसदपि मृगतृष्णावदप्युपलभ्यते लिङ्गम्। अविचारितरमणीयेन च तेन प्रसिद्धो व्यवहारस्तदास्त्रीतीत्यादौ द्वितीयस्याप्युपलम्भोऽस्त्विति भावः। अथैकमिति। सुखदुःखमोहान्वयात्सर्वव्यक्तीनां तत्परिणाम एवेदं विश्वं गुणानाञ्च प्रवृत्तिर्लिङ्गम्। तत्र प्रवृत्तेरपि प्रवृत्तिसद्भावाल्लिङ्गयोगोऽस्त्वित्यर्थः। कस्य तावदिति। आश्रये निर्ज्ञाते सुवचः समाधिरिति भावः। गुणसमुदाय इति। रूपादिसंनिवेशमात्रमित्यर्थः। गीतेति। भावे तल्। अथ मतमिति। इदं

चिकीर्षा गौरिति। अथ मतमेतत् कृदभिहितो भावो द्रव्यवद्भवतीति। स्त्रीत्वमपि स्त्रीत्वेनाभिहितं द्रव्यवद्भविष्यति। क्व च तावद्दोषः स्यात्। दृष्टस्य हि दोषस्य सुसुखः परिहारः। गार्ग्यायणी। कारीषगन्ध्या। कालितरेति। इह तावद् गार्ग्यायणीति। षित्करणसामर्थ्यान्ङीष् भविष्यति। कारीषगन्ध्येति वचनाच्चाब्भविष्यति। कालितरेति न यावत्काली तावत्कालितरेति। किं तर्हि। प्रकृष्टा काली कालितरा। यत्तच्छब्दरूपं प्रकर्षे वर्तते तस्यानुक्तं स्त्रीत्वमिति कृत्वा टाब्भविष्यति। यदप्युच्यते। इह च स्त्री इति इकारेण प्राप्नोतीति। निपातनादेतत् सिद्धम्। किं निपातनम्। स्त्रियामवन्तिकुन्तिकुरुभ्यश्चेति। स्त्रीविषये ङ्याषोरप्रसिद्धिरकारान्तादर्शनात्*। स्त्रीविषये ङ्याषोरप्रसिद्धिः। खट्वा। माला। किं कारणम्। अकारान्तादर्शनात्। न ह्यकारान्तता दृश्यते। ननु चेयं दृश्यते। अतिखट्वः। अतिमाल इति। नैषा अकारान्तता। आप एवैतद् ह्रस्वत्वम्। सर्वेषां तु स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः। सर्वेषांतु स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः। सर्वेषामेव तुप्रातिपदिकानां स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः। शशः षष इति मा भूत्। पलाशः पलाष इति मा भूत्। मञ्चकः मञ्जक इति मा भूत्। तस्मात्सिद्धम्*। तस्मात्सिद्धमेतद्भवति। अथ वा इयमकारान्तता दृश्यते। पञ्चभिः खट्वाभिः क्रीतः पटः पञ्चखट्वः। दशखट्वः॥

---

तदिति सर्वनामप्रत्यवमर्शयोग्यं वस्तुद्रव्यमित्यर्थः। ततश्च स्त्रीत्वस्यापि द्रव्यरूपत्वादपरेण स्त्रीत्वेनाविरुद्धो योगः। षित्करणसामर्थ्यादिति। एकमपीति स्त्रीत्वं प्रत्ययद्वयेनाभिधीयतइत्यर्थः। वचनादिति। यङश्चाबित्यस्मात्। तथाहि। अत्र सामान्यग्रहणाय तदविघाताय च ष्यङोनुबन्धद्वयं कृतमिति भावः। यावत्कालीति। अन्योऽत्र प्रकर्षयुक्तोऽर्थोऽन्यश्चाप्रकर्षयुक्तः अवस्थाभेदाद्वाचनिकशब्दभेदाच्चैक एवार्थो भिद्यत इति भावः। स्त्रीविषय इति। ये नित्यमेव स्त्रियां वर्तन्ते खट्वामालादयस्तेषामकारान्तप्रकृतित्वमवधारयितुं न शक्यते। अकारान्तस्य प्रयोगाभावात्। अनेकलिङ्गेषु तु कुक्कुटादिषु शक्यतेऽकारान्तत्वं निश्चेतुमिति भावः। सर्वेषामिति। शाकटायनदर्शनेन सर्वशब्दानां व्युत्पाद्यत्वाच्छास्त्रद्वारेणाकारान्तता निश्चीयते इत्यर्थः। पञ्चभिरिति। तद्धितार्थे द्विगुः। आर्हादिति ठक्। तस्याध्यर्द्धेतिलुक्। लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुकि कृते प्रयोग एवाकारान्तता दृश्यत इवेत्यर्थः॥

अजाद्यतष्टाप् ॥४॥ शूद्रा चामहत्पूर्वा*। शूद्रा चामहत्पूर्वेति वक्तव्यम् । शूद्रा । अमहत्पूर्वेति किमर्थम् । महाशूद्री । जातिः * । जातिरिति वक्तव्यम् । या हि महतीशूद्रा महाशूद्रा सा हि भवति । शूद्रशब्दोऽजादिषु पठ्यते । तत्रकः प्रसङ्गोयन्महत्पूर्वात् स्यात् । नैव प्राप्नोति नार्थः प्रतिषेधेन । तदन्तविधिना प्राप्नोति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते । एवं तर्हि ज्ञापयत्याचार्यः भवतीह तदन्तविधिरिति । किमेतस्य ज्ञापने प्रयोजनम् । भवती अतिभवती । महती अतिमहती अत्र तदन्तविधिः सिद्धो भवति । जातिरिति च वक्ष्यामीति । यद्येतज्ज्ञाप्यते । पञ्चाजी । दशाजी । अत्रापि प्राप्नोति । नैष दोषः । अजादिभिरत्र स्त्रियं विशेषयिष्यामः ।

---

अजाद्यतष्टाप् । शूद्राचेति । जातिलक्षणो ङीष् अनेन टापा बाध्यते न तु पुंयोगलक्षणः गौणमुख्ययोर्मुख्ये संप्रत्यय इति न्यायात् मुख्यार्थवृत्तेरिह शूद्रशब्दस्य ग्रहणात् तेन शूद्रस्य भार्या शूद्रीत्यत्र भवति । अमहत्पूर्वेत्यत्र महच्छब्दस्यानुकरणशब्दत्वाल्लौकिकार्थाभिधायित्वाभावादात्वाभावः । अमहत्पूर्वेति किमर्थमिति । अन्तरङ्गत्वात् पूर्वं टापि कृते सुप्युत्पन्ने समासेन भाव्यम् । महती शूद्रा महाशूद्रेति । ततश्च निवृत्तत्वाट्टापः प्रतिषेधोऽनर्थक इति प्रश्नः । महाशूद्रीति । महाशूद्रशब्दः समुदाय एवाभीरजातिवचनो न त्वत्रावयवार्थोऽस्ति यथा गौरखर इति । तत्र समुदायव्युत्पादनेऽवयवार्थस्य स्त्रीत्वाभावात्तदविवक्षित्वैव समासः क्रियते । ततष्टापि प्रतिषिद्धे जातिलक्षणो ङीषेव भवति । जातिरिति । महाशूद्रशब्दः समुदायो यदा जातिवाची तदा टापः प्रतिषेधो यदा तु महत्त्वविशिष्टा शूद्रा प्रतिपिपादयिषिता तदा महाशूद्रेत्येव भवति। असति तु जातिग्रहणे अमहत्पूर्वेति । प्रतिषेधसामर्थ्यादन्तरङ्गोपि टाब्बाध्येत । ततश्चात्रापि ङीष् प्रसज्येत ॥ अतिभवतीति । भवन्तमतिक्रान्ता महान्तमतिक्रान्तेति प्रादिसमासः । तत उगितश्चेत्यनेनोगिदन्तादपि ङीप् सिद्धो भवति । गौरादिषु बृहन्महच्छब्दौ न पठितव्यौ । तथा च शतुरनुम इत्यत्र नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानमित्युक्तम् । अन्यथा ङीष एवोदात्तत्वेन सिद्धत्वात् किं ङीपउदात्तविधानेन । विभक्त्युदात्तार्थं तद्वचनमिति चेत् किं गौरादिषु पाठेन प्रयोजनम् । अनुपसर्जनाधिकाराच्चातिमहतीत्यत्र गौरादिङीषभावादुगिल्लक्षणो ङीप् कर्तव्यस्तस्य चोदात्तत्वमुपसंख्यानेन कर्तव्यम् । जातिरिति च वक्ष्यामीति । अन्यथा महत्पूर्वेत्यसति प्रतिषेधे महाशूद्रीमहाशूद्राशब्दयोर्विषयविभागेन कथं साधुत्वं प्रतीयेतेति भावः । पञ्चाजीति । पञ्चानामजानां समाहार इति द्विगुः । ततो द्वि-

अजादीनां या स्त्रीति ॥

उगितश्च ॥ ६ ॥ कथमिदं विज्ञायते। उगितः प्रातिपदिकादि-ति आहो स्विदुगिदन्तात्प्रातिपदिकादिति। किं चातः। यदि वि-ज्ञायते उगितः प्रातिपदिकादिति। सिद्धं भवती महतीति। अति-भवती अति महतीति न सिध्यति। तदन्तविधिना भविष्यति। ग्र-हणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते। अथ विज्ञायते उ-गिदन्तात्प्रातिपदिकादिति। सिद्धम् अतिभवती अतिमहतीति। भ-वती महतीति न सिध्यति। व्यपदेशिवद्भावेनेह भविष्यति। व्यपदेशि-वद्भावोऽप्रातिपदिकेन। उभयथा च निर्गोमती निर्यवमतीति न सिध्य-ति। किं कारणम्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवती-ति। यथेच्छसि तथास्तु। अस्तु तावदुगितः प्रातिपदिकादिति। क-थं अतिभवती अतिमहतीति। तदन्तविधिना भविष्यति। ननु चो-

---

गौरिति ङीष् न प्राप्नोति। टापा बाध्यमानत्वात्। अजादीनामिति। अजाद्यत इति षष्ठी। तेनाजादिप्रातिपदिकाभिधेयसमवेतं स्त्रीत्वमिह गृह्यते। पञ्चाजीत्यत्र तु समासाभिधे-यसमाहारगतं स्त्रीत्वं न त्वजादिशब्दगतमिति। टापोप्रसङ्गः। प्रत्यासत्त्या च स्त्रीत्ववि-शेषणोपक्षीणानामप्यजादीनामेव प्रकृतित्वं विज्ञायते। सामर्थ्याद्वा। एवं तु सत्यमह-त्पूर्वेति न प्रतिषेधो वक्तव्यः। न हि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वमिति टापः प्रस-ङ्गाभावः।

उगितश्च। कथमिति। प्रातिपदिकादिति वर्तते। तत्र विशेषणविशेष्यभावे कामचाराद्यदि प्रातिपदिकेनोगिद्विशेष्यते तदोगितः प्राधान्यात्तेन तदन्तविधिर्नास्ति। न च प्रातिपदिकान्तमुगि त्संभवतीति प्रातिपदिकादुगित इति पक्षसंभवः। यदात्वुगि-ता प्रातिपदिकं विशेष्यते। तदा तदन्तविधौ सत्युगिदन्तात्प्रातिपदिकादित्येषपक्षो भव-ति। पक्षद्वये प्यव्याप्तिरिति मत्वा प्रश्नः। भवतीति। सर्वादिषु भवतुशब्द उगित्पठ्यते महच्छब्दोपि शत्रुवद्भावादुगिद्व्यपदेश्यः। तदन्तविधिनेति। उगिता प्रातिपदिकस्य वि-शेषणादिति भावः। ग्रहणवतेति। ग्रहणमुपादानमात्रम्। न तु प्रातिपदिकस्य स्वरूपे-णोच्चारणम्। अथेति। असहत्पूर्वेति प्रतिषेधेनेह प्रकरणे तदन्तविधेर्ज्ञापितत्वादिति भा-वः। निर्गोमतीति। आद्ये पक्षे गोमतीत्यत्रापि न सिध्यति। उगित्त्वं मतुपो गोमानि-त्यादौ नुमर्थं स्यात्। द्वितीये तु गोमतीति सिध्यति। मतुप उगित्वात्तदन्तत्वाच्च गोम-च्छब्दस्य। गोमतो निष्क्रान्तेति समासे तु कृते निरादेः समुदायात् मतुपो विधानाभा-वात् ङीब् न स्यादित्यर्थः। तदन्तविधिनेति। ननु च प्रातिपदिकेनोगितो विशेषणाद्विशे-

क्तं ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यतइति। नैतत्प्रातिपदिकग्रहणम्। प्रातिपदिकाप्रातिपदिकयोरेतद् ग्रहणम्। अथ वा पुनरस्तु उगिदन्तात्प्रातिपदिकादिति। कथं भवती महतीति। व्यपदेशिवद्भावेन भविष्यति। ननु चोक्तं व्यपदेशिवद्भावोऽप्रातिपदिकेनेति। नैतत्प्रातिपदिकग्रहणम्। प्रातिपदिकाप्रातिपदिकयोरेतद् ग्रहणम्। यदप्युच्यते उभयथा निर्गोमती निर्यवमतीति न सिध्यतीति। किं कारणम्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति। नैतत्प्रत्ययग्रहणम्। प्रत्ययाप्रत्यययोरेतद् ग्रहणम्। कथम्। वर्णोप्युगित् प्रत्ययोप्युगित् प्रातिपदिकमप्युगित्। धातोरुगितः प्रतिषेधः *। धातोरुगितः प्रतिषेधो वक्तव्यः। उखास्रत् ब्राह्मणी। पर्णध्वत् ब्राह्मणी। अञ्चतेश्चोपसंख्यानम् *। अञ्चतेश्चोपसंख्यानं कर्तव्यम्। प्राची। प्रतीची। उगित्यञ्चतिग्रहणात्सिद्धमधातोः। उगितिअञ्चतिग्रहणात्। अधातोः सिद्धम्। अञ्चतिग्रहणं नियमार्थं भविष्यति। अञ्चतेरेवोगितो

---

ष्येण कथं तदन्तविधिः। एवं तर्हि तन्त्रेण योगद्वयमुच्चार्यते तत्रैकस्मिन्योगे प्रातिपदिकेनोगिद्विशेष्यते। द्वितीये तूगिता प्रातिपदिकमिति दोषाभावः। नैतदिति। उगिद्यस्य तदुगिदिति शब्दरूपमात्रमन्यपदार्थ आश्रीयते न तु प्रातिपदिकमेवेत्यर्थः। व्यपदेशिवद्भावेनेति। प्रयोगभेदेन भवान् भवतीति यच्छब्दरूपं प्रयुज्यते तस्यायं भवच्छब्दोऽन्त इति कल्पनयेत्यर्थः। एतेन येन विधिस्तदन्तस्येत्यत्र स्वं रूपमिति निवृत्तमिति दर्शितं भवति। तेन गोचीरमित्यादौ गोस्त्रियोरिति ह्रस्वो न भवति। वर्णोप्युगिदिति। अर्वणस्त्रसावनञ इति अर्वन्शब्दस्य तृशब्द आदेशः तत्रार्वतीति ङीब् भवति। अश्वपर्यायोऽर्वन् शब्दः। नन्वङ्गस्य तृशब्द आदेशो विधीयते तत्र ऋन्नेभ्य इति ङीपि कृते चादेशेन भवितव्यम्। एवं तर्हि संभवमात्रेणैतदुक्तमित्यदोषः। उगित्यञ्चतिग्रहणादिति। उगिदचामित्यत्रोगिद्ग्रहणादञ्चतेरपि ग्रहणे सिद्धे ऽञ्चतिग्रहणं नियमार्थम्। इह शास्त्रे यत्कार्यमुगितो विधीयते तदञ्चतेरेव धातोर्भवति नान्यस्य धातोरिति कार्यमात्रं नियम्यते न तु नुमागम एव। अधातुग्रहणं तु तत्रा धातुभूतपूर्वस्यापि नुमागमार्थम्। तेन गोमन्तमिच्छतीति क्यचि क्विपि च कृते गोमानित्यत्रापि नुम्भवति। अन्यथा धातुत्वादञ्चतिग्रहणात् नियमार्थान्न स्यात्। अन्ये त्वाहुः। उगितश्चेति यश्शब्दः सोञ्चतेर्लुप्ताकारनकारस्यानुकरणम्। विभक्तेश्च सुपां सुलुगिति लुक्। भाविनं चाकारलोपमाश्रित्य चेति निर्देशः कृतः ततश्चाञ्चतिग्रहणमिहैव नियमार्थम्। अकारनकारलोपयोस्वातन्त्र्यात्।

धातोर्नान्यस्योगितो धातो रिति ॥

वनो र च ॥७॥ इह कस्मान्न भवति । निःशुनी । अतियूनीति । अर्थवद्ग्रहणे नानर्थकस्येति । एवमपि मघोनी । अत्र प्राप्नोति । मघवन्शब्दो ऽव्युत्पन्नं प्रातिपदिकम् । वनो न हशः * । वनो र चेत्य च हशन्तान्न भवतीति वक्तव्यम् । इह माभूत् । सहयुध्वा ब्राह्मणीति । यदि न हश इत्युच्यते । शर्वरीति न सिध्यति । विहितविशेषणं हशग्रहणम् हशन्ताद्यो विहित इति । एवमपि प्रत्वरीति न सिध्यति । कथं चात्र तुगागमः । छान्दसत्वात् । ङीब्रावपि तर्हि छान्दसत्वादेव भविष्यतः । बहुलं छन्दसि * । बहुलं छन्दसि ङीब्रौ वक्तव्यौ यज्वरीरिषः । यज्वनीरिपः । रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात् * । रविधाने बहुव्रीहेरुपसंख्यानं कर्तव्यम् । बहुधीवरी । बहुपीवरी । किं पुनः कारणं न सिध्यति । प्रतिषिद्धत्वात् । अनो ब-

---

नाच्चेः पूजायामिति यदा नलोपः प्रतिषिध्यते तदापि ङीब् भवति ॥

वनो र च । निःशुनीति । शुनो निष्क्रान्ता युवानमतिक्रान्तेति प्रादिसमासस्ततो ङीप् । श्वन्शब्दस्य गौरादिपाठे ऽप्युपसर्जनत्वादत्र ङीष् न भवति । मघोनीति । मघमस्यास्तीति छन्दसीवनिपौ वक्तव्याविति वनिप् । स चार्थवानिति प्रश्नः । अव्युत्पन्नमिति । श्वन्नुक्षन्नित्यौणादिको मघवन्छब्दः । उणादिषु च नावश्यं व्युत्पत्तिनिमित्तं कार्यं भवतीति प्रागेवोक्तम् । वनो न हश इति । द्वयोरपि ङीब्रेफयोर्निषेधः । सहयुध्वेति । सह चेति क्वनिप् । शर्वरीति । शॄ हिंसायामित्येतस्मादन्येभ्योपि दृश्यन्तइति वनिप् । तत्र गुणे रपरत्वे च कृते हशन्तो भवतीति पूर्वः पक्षः । प्रेत्वरीति । इण् गतावित्यस्मात्प्रपूर्वादन्येभ्योपि दृश्यन्तइति क्वनिब्वनिपोरन्यतरः स ह्रस्वान्ताद्विहित इति ङीब्रौ न स्यातामिति प्रश्नः । छान्दसत्वादिति । प्रईरसद्योस्तुट् चेत्युणादिसूत्रमनपेक्ष्य तदुक्तम् । यज्वरीति । सुयजोर्ङ्वनिप् । वा छन्दसीति पूर्वसवर्णदीर्घः । बहुधीवरीति । बहवो धीवानोऽस्यामिति बहुव्रीहिस्तस्मात् अनो बहुव्रीहेरिति ङीपः प्रतिषेधः प्राप्नोति । रेफस्य ङीप्सन्नियोगेन विधानात्तदभावादेवाभावप्रसङ्गः । यदि वा स्त्रियां यदुक्तं तस्य सर्वस्यानोबहुव्रीहेरिति प्रतिषेधविधानादत्र ङीब्रौ न प्राप्नुतः तस्माद्वनो र च बहुव्रीहेश्चेति वक्तव्यमित्यर्थः । तत्र बहुव्रीहेश्चेत्यनेन लक्षणान्तरेणान उपधालोपिन इत्यनेन विहिते ङीपि रेफमात्रं विधेयम् । यदि तु द्वावपि ङीब्रौ विधीयेयातां तदा सुपर्वादेरनुपधालोपिनोपि स्याताम् । अन इति । अनो बहुव्रीहेरित्यस्यानन्तरमुपधालोपिनो वेति वक्तव्यम् । तेनान उपधालोपि-

हुव्रीहेरिति प्रतिषेधः प्राप्नोति । अनो बहुव्रीहेः प्रतिषेधे वोपधालोपिनो वावचनम् । अथ वा अनो बहुव्रीहिप्रतिषेधे उपधालोपिनोवेति वक्तव्यम्। अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहारः । यथोपसंख्यानं चोदितं तथा नित्यभ्यां ङीब्राभ्यां भवितव्यम् । यथा परिहारः तथा विभाषया भवितव्यम् । यथोपसंख्यानं चोदितमेवमपि विभाषया भवितव्यम् । न ह्यत्र ङीब् दुर्लभः । सिद्धोऽत्र ङीप् । अन उपधालोपिनोन्यतरस्यामिति । ङप्संनियोगेन र उच्यमानो ऽन्येन सति न स्यादित्येवमर्थमुपसंख्यानं चोद्यते । किं पुनः कारणं ङीप्संनियोगेन र उच्यते। इह मा भूत् । सुपर्वा चारुपर्वेति । तत्तह्यु पसंख्यानं कर्तव्यम् । न कर्तव्यम् । वक्ष्यति । डाबुभाभ्यामन्यतरस्यामित्यत्रान्यतरस्यांग्रहणस्य प्रयोजनं डाप्प्रतिषेधाभ्यां मुक्ते ङीब्रावपि यथा स्यातामिति ॥

न षट्स्वस्रादिभ्यः ॥ १० ॥ कस्यायं प्रतिषेधः । ङीबनन्तरस्य प्रतिषेधः ।अथेदानीं ङीपि प्रतिसिद्धे षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् । अत इति प्राप्नोति । असिद्धो नलोपस्तस्या-

---

न्नोन्यतरस्यामित्येतन्न वक्तव्यं भवति । तत्रानुपधालोपिनो नित्यो ङीप्प्रतिषेधो भवति सुपर्वेति । उपधालोपिनस्तु ङीब्विकल्पस्तेन बहुराजी बहुराजानौ बहुराजेति रूपत्रयं सिध्यति । एवं बहुधीवरी बहुधीवानौ बहुधीवेति वन्नन्तस्याप्युपधालोपिनो रूपत्रयं भवति । इतरः पूर्वोक्तमभिप्रायमप्रतिपद्याह । अन्यथा कृत्वेति । अन्येन सतीति । प्रकरणान्तरविहितत्वात्तस्य ङीप इति भावः । बहुव्रीहेश्चेति वचनेन प्रकरणान्तरविहिते पाक्षिके ङीपि रेफो विधीयतइति तदेव रूपत्रयं भवतीत्यर्थः । किं पुनरिति । ङीप्संनियोगमनपेक्ष्य रेफमात्रवन्नन्तस्य स्त्रियां विधीयताम् । ततश्च बहुधीवरीत्यत्रापि रेफो भविष्यति अन उपधालोपिन इत्यनेन च ङीबिति प्रश्नः । डाबिति । एतत्तत्रैव व्याख्यास्यते । केचिच्चोदयन्ति । वनिति प्रत्ययग्रहणं कृद्ग्रहणं वा ततश्च प्रत्ययग्रहणे यस्मात्स विहित इति कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति वा बहुधीवरी अतिधीवरीति रेफो न प्राप्नोति । नैष दोषः । असमहत्पूर्वेति प्रतिषेधेन तदन्तविधेर्ज्ञापितत्वात् ॥

न षट् । कस्यायमिति । यदि ङीपः प्रतिषेधस्तदा पञ्च ब्राह्मण्य इत्यत्र नलोपे सति अदन्तत्वाट्टाप् प्राप्नोतीति मत्वा प्रश्नः । आचार्यः शिष्यबुद्धिपरीक्षार्थं परिहाराभासमाह । ङीबनन्तर इति । यस्तु टाबृचीति पादत्वाट्टाब्विहितस्तस्यात्र प्रसङ्गाभावात् ङी-

सिद्धत्वान्न भविष्यति। परिगणितेषु कार्येषु नलोपोऽसिद्धः न चेदं तत्र परिगण्यते। इदमपि तत्र परिगण्यते। कथम्। प्रत्याहाराच्चापा सिद्धम् *। सुबिति नेदं प्रत्ययग्रहणम्। किं तर्हि प्रत्याहारग्रहणम्। क्व संनिविष्टानां प्रत्याहारः। प्रथमैकवचनात्प्रभृत्याऽऽचापः पकारात्। यदि प्रत्याहारग्रहणम्। दोषस्त्वित्वे *। इत्वे दोषो भवति। बहुचर्मिका। बहुवर्मिका। प्रत्ययस्थात्कात्पूर्वस्यात इति इत्वं न प्राप्नोति। तस्मान्नोभौ *। तस्मात् षट्संज्ञकेभ्य उभौ न भवत इति वक्तव्यम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। स्त्रियामिति वर्तते स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः। षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् प्रत्याहाराच्चापा सिद्धं दोषस्त्वित्वे तस्मान्नोभौ॥१॥

डाबुभाभ्यामन्यतरस्याम्॥१३॥ किमर्थं मुभाभ्यामित्युच्यते। उभाभ्यां डाब्यथा स्यात्। मन्नन्तादन्नन्ताच्च। नैतदस्ति प्रयोजनम्। प्रकृतमुभयमनुवर्तते। अथान्यतरस्यांग्रहणं किमर्थम्। अन्यतरस्यां डाब्यथा स्यात्। डापामुक्ते त्रिप्रतिषेधो यथा स्यादिति। नैतदस्ति प्रयोजनम्। इह डाबुच्यते प्रतिषेधोपि। तावुभावपि वचनाद्भविष्यतः। इदं तर्हि प्रयोजनम्। डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यात्। सिद्धोत्र ङीप्। अन उपधालोपिनोन्यतरस्यामिति। अथ तद-

---

बनन्तर इत्युक्तम्। परिगणितेष्विति। नलोपः सुप्स्वरेति सूत्रं नियमार्थं सुबादिविधिष्वेव नलोपोऽसिद्धो नान्यत्रेत्यर्थः। आचाप इति। यङश्चाबित्यस्याच्च प्रत्याहारे टापोन्तर्भावात्टाब्विधिः सुब्विधिः तत्र नलोपस्यासिद्धत्वमस्त्येवेत्यर्थः। दोषस्त्वित्वे इति। तत्र हि सुब्विधिरिति सर्वविभक्त्यन्तावयवः समास आश्रितः। ततश्च टापि सुपि विधिरित्वं सुब्विधिर्भवतीति इत्वे कर्तव्ये नलोपोस्यासिद्धत्वात्कात्पूर्वोऽकारो न भवतीतीत्वं न स्यादित्यर्थः। स्त्रियां यत्प्राप्नोतीति। अर्थाश्रयप्राप्तिमात्रापेक्षोयं प्रतिषेध इत्यर्थः।

डाबु। योगाभ्यामिति। योगस्था प्रकृतिर्योगशब्देनोच्यते। प्रकृतमिति। द्वयोरपि स्वरितत्वप्रतिज्ञानादपेक्षणाद्वेति भावः। एवमुभाभ्यामिति प्रत्याख्यातम्। तावुभाविति। यदि यत्रैव ङीप् प्रतिषेधस्तत्रैव डाप् स्यात्तदा प्रतिषेधमविधायैव मनो डाबित्युच्येत ततोऽनो बहुव्रीहेरित्यनेनापि डाबेव विधीयेत स एव हि ङीपं बाधिष्यते किं प्रतिषेधेन। तस्मादुभयविधानसामर्थ्यादुभयं भविष्यतीत्यर्थः। सिद्धोत्रेति। ननु यत्र तेन न सिध्यति सुपर्वेत्यादौ तदर्थमन्यतरस्यांग्रहणं स्यात्। नैतदस्ति। यदानेनान्यतरस्यांग्रहणेन पक्षे ङीबनुज्ञा-

न्यतरस्यांग्रहणं शक्यमकर्तुम् । बाढं शक्यम् । कथम् । इह डाबप्युच्यते प्रतिषेधोपि ङीबपि । तत्सर्वं वचनाद्भविष्यति । नैवं शक्यं विज्ञातुम् । अक्रियमाणे हि तत्रान्यतरस्यांग्रहणे ऽनवकाशो ङीब्डाप्प्रतिषेधौ बाधेत । डाप्प्रतिषेधावप्यनवकाशौ तौ वचनाद्भविष्यतः । सावकाशौ डाप्प्रतिषेधौ । कोवकाशः । सुपर्वा चारुपर्वेति । तस्मादन्यतरस्यांग्रहणं कर्तव्यम् । इदं तु खल्वन्यतरस्यांग्रहणं शक्यमकर्तुम् । इदमप्यवश्यं कर्तव्यम् । किं प्रयोजनम् । डाप्प्रतिषेधाभ्यां मुक्ते ङीब्रावपि यथा स्यातामिति । रविधाने बहुव्रीहेरुपसंख्यानंचोदितं तन्न वक्तव्यं भवति । अथेह कथं भवितव्यं बहवः श्वानोऽस्यां रथ्यायां बहवो युवानोस्यां शालयामिति । बहुशूका बहुयूका इति भवितव्यम् । का रूपसिद्धिः । डाप् टिलोपः संप्रसारणम् । संप्रसार-

---

यते तदान उपधालोपिन इति नियमार्थं भवति । उपधालोपिन एवान्नन्ताद् ङीब् भवति नान्यस्मादिति । तत्श्च सुपर्वेत्यादेरनुपधालोपिनो ङीपा न भाव्यमेव । अथ तदिति । अन्तराले विचारः क्रियते । इदमेवान्यतरस्यांग्रहणं भवतु तत्रत्यं न कर्तव्यं भवतीति मन्यते । इतरो ऽकरणं संमन्यते । बाढमिति । ङीबपीति । अन्यतरस्याङ्ग्रहणेनाचत्वेन प्रापित इति भावः । इदं त्विति । अस्मिन्नन्यतरस्यांग्रहणे क्रियमाणे ऽन उपधालोपिनोन्यतरस्यामिति नियमार्थं कर्तव्यम् । तदेवेहाकृतेन्यतरस्यांग्रहणे विध्यर्थं भविष्यतीति भावः । इदमपीति । असतीहान्यतरस्यांग्रहणेन उपधालोपिनोन्यतरस्यामिति सूत्रं विध्यर्थं स्यात्तत्र प्रकरणान्तरेण ङीपो विधानाद्वनो रचेत्यनेन् क्वन्नेभ्यो ङीबित्येतस्य चविधीयमान ङीपसंयोगेन विधीयमानो रेफो बहुधीवरीत्यत्र न स्याद् बहुधीव्रीति स्यात् । सतित्विहान्यतरस्यांगहणे ऽन उपधालोपिन इति सूत्रं नियमार्थं भवति न तु विध्यर्थमिति बहुधीवरीत्यत्र क्वन्नेभ्यो ङीबित्यनेनैव ङीब् भवति । ततश्च वनोरचेति रेफादेशः सिध्यति । यदि तत्र न्यतरस्यांग्रहणेन पक्षे ङीबनुज्ञायते तदा मन्नन्तादपि प्राप्नोति । तदा व्यवस्थितविभाषाविज्ञानाच्च भविष्यति । अथवा डाबुभाभ्यामित्येको योगः क्रियते ततोन्यतरस्यामिति द्वितीयस्तत्रानो बहुव्रीहेरिति वर्तते न तु मन इति । अथेहेति । यदि नद्यृतश्चेत्यनेन नद्यन्ताद् बहुव्रीहेः कब्विधीयते तदात्रापि कपा भाव्यम् । अथ नद्यन्तानां वर्तिपदानां यो बहुव्रीहिस्ततः कबिति तदा तत्र कपा न भाव्यमिति संशय्य पृच्छति । आचार्यदेशीय आह । बहुशूकेति । सम्प्रसारणं परपूर्वत्वमिति । सम्प्रसारणस्य डापश्चेत्यर्थः । ततो हल इति सम्प्रसारणान्तस्य दीर्घत्वमङ्गप्रत्यययोरेकादेशस्य पूर्वं

थापरपूर्वत्वम् । नद्यृतश्चेति कप् । कपा तावन्न भवितव्यम् । किं कारणम् । नद्यन्तानां यो बहुव्रीहिरित्येवं तद्विज्ञायते । न चैष नद्यन्तानां बहुव्रीहिः । संप्रसारणेनापि न भवितव्यम् । वक्ष्यत्येतत् श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति । परपूर्वत्वेन चापि न भवितव्यम् । वक्ष्यत्येतत् संप्रसारणपूर्वत्वे समानाङ्गग्रहणमसमानाङ्गप्रतिषेधार्थमिति । तस्माद्बहुश्वा बहुयुवेति भवितव्यमिति ॥

अनुपसर्जनात् ॥ १४ ॥ अनुपसर्जनादिति किमर्थम् । बहुकुरुचरा मथुरा । नैतदस्ति प्रयोजनम् । कुरुचरशब्दात्प्रत्ययो विधीयते । तत्र कः प्रसङ्गो यद्बहुकुरुचरशब्दात्स्यात् । नैव प्राप्नोति । नार्थः प्रतिषेधेन । तदन्तविधिना प्राप्नोति । अत उत्तरं पठति ।

अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात् * ।

अनुपसर्जनग्रहणमनर्थकम् । किं कारणम् । प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते । ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्य * । एवं तर्हि ज्ञापयत्याचार्यः । पूर्वत्र तदन्तविधिप्रतिषेधो न भवतीति । किमेतस्य ज्ञापने प्र-

प्रत्यन्तवद्भावात्ततो नदीसंज्ञायामुपजातायां नद्यृतश्चेति कप् । इदानीमाचार्य आह । कपा तावदिति । वक्ष्यतीति । ङापि परतः पूर्वमङ्गं ङाबन्तन्तु प्रत्ययान्तरे इति संप्रसारणस्य ङापश्च समानाङ्गत्वं नास्तीत्युकाराकारयोरेकादेशाभावो यथा शकन्ध्वाविति ॥

अनुपसर्जनात् । उपसर्जनमिह शास्त्रीयं गृह्यते समासावयवभूतम् । तच्चावयवाश्रयकार्यं समुदायस्य न प्राप्नोति । यदवयवे कार्यमकृतार्थं तत्समुदायस्य भवति । यथा जुगुप्सत इत्यात्मनेपदम् । न तु यदवयवे कृतार्थम् । यथा पणायतीति न भवति आत्मनेपदम् । तदन्तविधिश्च ग्रहणवतेति प्रतिषिद्धः । अत्रानर्थकोयं प्रतिषेध इति मत्वाह । अनुपसर्जनादिति किमर्थमिति । इतरो ऽमहत्पूर्वेति प्रतिषेधेन तदन्तविधिर्ज्ञापित इति मत्वाह । बहुकुरुचरेति । बहवः कुरुचरा अस्यामिति बहुव्रीहिः । कुरुचरशब्द उपसर्जनमिति ङीब्न भवति । कुरुचरशब्दादिति । टिड्ढाणञित्यत्र टित्प्रातिपदिकं गृह्यते । तच्च किञ्चित्स्वाभाविकं भवति यथा नदट्चोरडिति । किञ्चित्त्ववयवटित्त्वद्वारेण । अवयवे हि यत्र टित्त्वमकिञ्चित्करं तत्र समुदयार्थं तद्विज्ञायते स चावयवः क्वचिद्धातुष्टिद्भवति । यथा स्तनंधयीति । क्वचित्तद्धितः ट्युट्युलादिः । क्वचित् कृद् ल्युडादिः । तत्र यं समुदा-

योजनम्। भवती अतिभवती महती अतिमहतीत्यत्र तदन्तविधिः सिद्धो भवति। नैतदस्ति प्रयोजनम्। उक्तमेतत्। वर्णोऽप्युगित्। प्रत्ययोऽप्युगित्। प्रातिपदिकमप्युगिदिति। इदं तर्हि। बहुधीवरी। बहुपीवरीति। एतदपि नास्ति प्रयोजनम्। अत्राप्युक्तं रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वादिति। इदं तर्हि। अतिधीवरी। अतिपीवरी। पूर्वसूत्रनिर्देशो वापिशलमधीतइति*। पूर्वसूत्रनिर्देशो वा पुनरयं द्रष्टव्यः। पूर्वसूत्रे ऽप्रधानस्योपसर्जनमिति संज्ञा क्रियते यावद् ब्रूयात्प्रधानादुत्पत्तव्यमप्रधानान्नेति तावदनुपसर्जनादिति। किं प्रयोजनम्। आपिशलमधीते ब्राह्मणी आपिशला ब्राह्मणी। अणन्तादीकारो मा भूदिति। अथानुपसर्जनादित्युच्यमाने कस्मादेवात्र न भवति अणन्तं ह्येतदनुपसर्जनम्। नानुपसर्जनग्रहणेनाणन्तं विशेष्यते। अणन्तादनुपसर्जनादिति। किं तर्हि। अणेव विशेष्यते। अण् यः अनुपसर्जनमिति। जातिशब्देभ्यस्त्वतिप्रसङ्गः *। जातिशब्देभ्यस्त्वतिप्रसङ्गो भवति। अवन्ती। कुन्ती। गान्धारी। सिद्धं तु जातेरनुपसर्जनत्वात् *। सिद्धमेतत्। कथं

---

यं योवयवो न व्यभिचरति तदर्थमवयवस्य टित्वमित्यनेनाभिप्रायेणोक्तं कुरुचरशब्दादिति। न तु तदुग्रहणपरिभाषाश्रयेण नहि टिदिति तत एव ग्रहणम्। बहुधीवरीति। वनोरचेत्यत्र वन्नन्तस्य प्रातिपदिकस्य ग्रहणादेव तदन्तविधिर्न स्यादिति भावः। उपसंख्यानादत्र सिद्धिं मत्वाह। एतदपीति। अतिधीवरीति। धीवानमतिक्रान्तेति तत्पुरुषः। नन्वमहत्पूर्वेत्यनेनैव ज्ञापितस्तदन्तविधिः। ततश्च नार्थोनेन ज्ञापकेनेत्याह। पूर्वसूत्रनिर्देश इति। वाशब्दस्त्वर्थे। अथवा पूर्वं तदन्तविधेर्ज्ञापितत्वादुपसर्जनेनापि तदन्तविधिः स्यादिति प्रयोजनसमुच्चयार्थो वाशब्दः। पूर्वसूत्रशब्देन पूर्वाचार्यकृतं व्याकरणमुच्यते। आपिशलिना प्रोक्तमितीञश्चेत्यण्। ततोध्येत्रा तदधीत इत्यण्। तस्य प्रोक्ताल्लुगिति लुक्। प्रोक्तप्रत्ययस्याणोऽत्रोपसर्जनत्वान् ङीब् न भवति। अणन्तमिति। प्रत्यये लुप्ते प्रकृतेरेव तदर्थाभिधानादिति भावः। अणेवेति। अत्र प्रोक्तार्थस्योपसर्जनत्वादर्थद्वारेणाण्प्रत्यय उपसर्जनमिति भावः। यस्त्वध्येत्रां प्रत्यय उत्पन्नस्तस्य लुप्तत्वात्तदाश्रयो ङीब् न भवति। प्रत्ययलक्षणेनापि न भवत्यस्योऽकार इति विज्ञानात्। अतिप्रसङ्ग इति। तेन तेभ्योपि प्रतिषेधः प्राप्नोतीत्यर्थः। अवन्तीति। अवन्तेरपत्यं स्त्री। वृद्धेत्कोसलाजादाञ्ञ्यङ। तस्य स्त्रियामवन्तिकुन्तिकुरुभ्यश्चेति लुक्। गान्धारीति। गान्धारेरपत्यं स्त्री। साल्वेयगान्धारिभ्यां चेत्यञ्। तस्यातश्चेति लुक्। अत्र प्रत्ययार्थं प्रति

थम्। अनुपसर्जनादित्युच्यते। न च जातिरुपसर्जनम्। एतदपि नास्ति प्रयोजनम्। स्त्रियामिति वर्तते। तेनायं विशेषयिष्यामः। स्त्रियां योऽणिवहित इति। एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी काशकृत्स्नीमधीते काशकृत्स्ना ब्राह्मणी। अत्र प्राप्नोति। नैष दोषः। अध्येत्र्यामभिधेयायामणा ङीकारेण भवितव्यम्। यश्चाऽध्येत्र्यामभिधेयायामण्। लुप्तः सः। यश्च श्रूयते। उत्पन्नस्तस्मादीकार इति कृत्वा पुनर्न भविष्यति। इदं तर्हि प्रयोजनम्। प्रधानेन तदन्तविधिर्यथा स्यात्। कुम्भकारी। नगरकारी। अत्र हि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। अवयवादुत्पत्तिः प्राप्नोति। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति संघातादुत्पत्तिर्भविष्यति। कृद्ग्रहण इत्युच्यते। न चैतत्कृद्ग्रहणम्। कृदकृद्ग्रहणमेतत् कृदप्ययमण्। तद्धितोऽपि। एवं तर्हि ईकारान्तेन समासो भविष्यति यद्येवं लभ्येत कृतं स्यात् तत्तु न लभ्यते। किंकारणम्। अत्र हि गतिकारकोपपदानां कृद्भिः सह समासो भवतीति समास एव तावद्भवति। समासे च कृते। अवयवादुत्पत्तिः प्राप्नोति। अवयवादुत्पत्तौ

---

प्रकृत्यर्थस्योपसर्जनत्वादितोमनुष्यजातेरिति ङीष् नं प्राप्नोति। तस्य तु दाक्षीत्यादिरवकाशः। सिद्धंत्विति। प्रत्यये लुप्ते प्रकृतिरेवापत्यलक्षणां जातिमाह। सा चानुपसर्जनमित्यर्थः। एतदपीति। यदुक्तं पूर्वसूत्रनिर्देशो वेति तद्भाष्यकारः प्रत्याचष्टे। स्त्रियां योऽणिति। आपिशलिशब्दात्तु यः प्रोक्तार्थेऽण्प्रत्ययः स स्त्रियां न विहितः। उत्पन्न इति। सोपि लुक्तद्धितलुकीति लुप्तः। पुनर्नेति। सकृत्प्रवृत्तौ शास्त्रस्य चरितार्थत्वात् पुनः प्रवृत्त्यभावः। अकारान्तस्य चाध्येत्र्यां स्त्रियां वृत्त्या टाब् भवति। इदं तर्हीति। प्रधानेन तदन्तविधेर्ज्ञापनार्थमित्यर्थः। नन्वमहत्पूर्वेति ज्ञापितोसौ। एवं तर्हि ज्ञापकाद्यथा प्रधानेन भवति एवमुपसर्जनेनापि स्यादिति सर्वथायं योगः कर्तव्यः। भाष्यकारेण तु सूत्रमिदं ज्ञापनायाश्रितं गणपठितप्रतिषेधानपेक्षया। सर्वादिवार्तिके तु भाष्यमनुपसर्जनादित्ययं योगः प्रत्याख्यायत इत्यादि तदपेक्षया। एवं तर्हीति। कुम्भस्य कारीशब्देनोपपदलक्षणः समासः करिष्यते। स्त्रीभ्यो ढगित्यत्र च ङ्याप्प्रातिपदिकादिति त्रितयाधिकारात् स्त्रीप्रत्ययान्तात्समासप्रातिपदिकाड्ढग्विधास्यते। समासमन्तरेण स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्यासंभवात्समासः स्त्रीप्रत्ययान्तो गृह्यते। ङ्याबन्तेभ्यस्तु सुपर्ण्यादिभ्यो ङ्याब्ग्रहणानुवृत्त्या भविष्यतीति भावः। अवयवादिति। अत्र चोदयन्ति। कृत्तद्धितसमासा-

सत्यां को दोषः। कौम्भकारेयो न सिध्यति। अवयवस्य वृद्धिस्वरौ स्याताम्। तस्मादनुपसर्जनाधिकारः। अनुपसर्जनाधिकारे जातेर्ङीष् विधाने सुपर्ण्या उपसंख्यानम् *। अनुपसर्जनाधिकारे जातेर्ङीष्विधाने सुपर्ण्या उपसंख्यानं कर्तव्यम्। सुपर्णी। न वा समासस्यानुपसर्जनत्वाज्जातिवाचकत्वाच्च शब्दस्य सामान्येन ङीष्विधानम् न वा एष दोषः। किं कारणम्। समासस्यानुपसर्जनत्वात्। समासोचानुपसर्जनम्। स च जातिवाचकः। समासस्यानुपसर्जनत्वात्तस्य जातिवाचकत्वाच्छब्दस्य सामान्येन ङीष् भविष्यति जातेरस्त्रीविषयाद्योपधादिति। कथं कृत्वा चोदितम्। कथं कृत्वा परिहारः बहुव्रीहिरिति कृत्वा चोदितम्। तत्पुरुष इति कृत्वापरिहारः॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
चतुर्थाध्यायस्य प्रथमे पादे प्रथममाह्निकम्॥

---

चेत्यत्र कृद्ग्रहणपरिभाषया कुम्भकारशब्दस्य प्रातिपदिकत्वाच्चत एव ङीब् भविष्यतीति। तदयुक्तम्। अत्रास्याः परिभाषाया अनुपस्थानस्य पुंयोगसूत्रे प्रतिपादनात्। नन्वेवमपि कारशब्दान् ङीपि विहिते कुम्भकारीशब्दादेव ढक् भविष्यति। स्त्रीप्रत्ययग्रहणे तदादिनियमाभावात्। तथा च परमकारीषगन्धीपुत्र इत्यत्र संप्रसारणं भवति। एवं तर्हि तदादिनियमाभावादनियमः प्रसज्येत। तथा च कदाचित्कारीशब्दात्प्रत्ययः स्यात्। कदाचित् कुम्भकारीशब्दात्। यदा तु कुम्भकारशब्दान् ङीब्विधीयते तदा कुम्भकारीशब्द एव स्त्रीप्रत्ययान्तो भवति न तु कारीशब्द इति ततः प्रत्ययो न भवति। ननु कदाचिन्नियमाभावात्कारीशब्दोपि स्त्रीप्रत्ययान्तो भवतीति। ततोपि ढक्प्रसङ्गः। नैष दोषः। नियमप्रतिषेधेनाधिकस्य तदन्तस्य कार्यं विधीयते न तु न्यूनस्य। अथवा स्त्रीप्रत्यये तदादिनियमाभावमनाश्रित्य कुम्भकारीति प्रयोजनम्। सुपर्णीति। शोभनानि पर्णान्यस्या इति बहुव्रीहिः। तत्र पर्णशब्दस्योपसर्जनत्वान् ङीष् न प्राप्नोति। न वेति। सुपर्णशब्दो जातिवाचि प्रातिपदिकं तच्चानुपसर्जनम्। बहुकुक्कुटा नगरीत्यत्र तु जातिवाचिनः कुक्कुटशब्दस्योपसर्जनत्वात्समासस्याजातिवाचित्वान् ङीषोऽभावः। जातेरिति। जातेरित्यनुवर्तमाने पाककर्णपर्णेत्यनेनेत्यर्थः। बहुव्रीहिरिति। नास्त्युपसर्जनमस्मिन्नित्यनुपसर्जनमित्याश्रीयमाणे पर्णशब्दस्योपसर्जनत्वान् ङीष् नस्यात्। तत्पुरुषे तु दोषाभावः। समासस्योपसर्जनत्वाभावात्॥ इत्युपाध्यायजैय्यटपुत्त्रकैय्यटकृतेमहाभाष्यप्रदीपेचतुर्थाध्यायस्य प्रथमपादे प्रथममाह्निकम्॥

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥१५॥

ढग्रहणे सानुबन्धकस्योपसंख्यानम्* । ढग्रहणे सानुबन्धकस्योपसंख्यानं कर्तव्यम्। कारिकेयी हारिकेयी। किं पुनः कारणं न सिध्यति अननुबन्धकग्रहणे हि न सानुबन्धकस्य* । अननुबन्धकग्रहणे हि न सानुबन्धकस्य ग्रहणं भवतीति। एषा परिभाषा कर्तव्या। कान्येतस्याः परिभाषायाः प्रयोजनानि । तव्यग्रहणे तव्यद्ग्रहणं मा भूत्। दिन् ग्रहणे दिनुग्रहणंमाभूत्। ननु चेयमपि कर्त्तव्या तदनुबन्धकग्रहणेऽतदनुबन्धकग्रहणं नेति। कान्येतस्याः परिभाषायाः प्रयोजनानि। यद्ग्रहणे ण्यद्ग्रहणं माभूत्। अङ्ग्रहणेचङ्ग्रहणं माभूत्। अज् ग्रहणे णज् ग्रहणं मा भूत्। तेद्वे एते परिभाषेकर्तव्ये। न कर्तव्ये। आचार्यप्रवृत्तिर्ज्ञापयति भवत एते परिभाषेइति यदयं वामदेवाड्ड्यड्ड्याविति ययतौ ङितौ करोति। तत्तर्ह्युपसंख्यानं कर्तव्यम्। न कर्तव्यम्। अननुबन्धको ढशब्दः स्त्रियां नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते। ननु चायमस्ति शिलाया ढ इति। नैष स्त्रियां वर्तते। अयं तर्हि सभाया यः ढश्छन्दसीति। एषोपि न स्त्रियां वर्तते। किं कारणम्। तच्च साधुरिति वर्तते। कथं च स्त्री नाम सभायां साध्वी स्यात्। अ-

---

टिड्ढाणञ्। तव्यग्रहण इति पूरणगुणेति तव्येन समासप्रतिषेध उच्यमानस्तव्यता न भवतीति ब्राह्मणकर्तव्यमिति समासो भवत्येव तत्र कृत्स्वरेणान्तस्वरितं भवति। तव्येन तु समासे कृत्स्वरेण तशब्दाकार उदात्तः स्यात्। दिव्ग्रहणे इति। तेनाचष्ट ऊरिति दिवं औदिति न भवति। अक्षद्यूभ्यामिति दिव उदिति न भवति। अन्यथा ऊठि कृते एकदेशविकृतस्यानन्यत्वादौत्वोत्वेस्याताम्। परिभाषायान्तु सत्यां प्रातिपदिकस्य स्वर्गान्तरिक्षवाचिनो दिव्शब्दस्य ग्रहणम्। प्रसङ्गेन परिभाषान्तरप्रतिपादनायाह। ननु चेयमिति। स एवानुबन्धो यस्येत्यर्थः। उपात्तानुबन्धव्यतिरिक्तानुबन्धयुक्तस्त्वतदनुबन्धकः। यद्ग्रहण इति। यतो नाव इत्यादावित्यर्थः। अङ्ग्रहण इति। ऋदृशोङि गुण इत्यत्र चङो ग्रहणाभावादङि विधीयमानं श्वयतेर इत्यलं चङि न भवत्यशिश्वियदिति। ड्यड्याविति। यस्येति लोपेन वामदेव्यमिति रूपे सिद्धे ङित्करणं ययतोश्चातदर्थ इत्यत्र ड्यड्यतोर्ग्रहणनिवारणार्थम्। एवं चैतड् ङित्वस्य प्रयोजनं भवति यद्यते परिभाषे भवतस्तेनावामदेव्यमित्यत्रान्तोदात्तत्वं न भवति अपि त्वव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम्। नैष स्त्रियामिति। शिलेव शिलेयमिति नपुंसकलिङ्ग एव शिलेयशब्दः स्वभावात्। कथं स्त्रीनामेति। यत्नसभायां विदुषामेव पुरुषाणां साधुत्वाधिकारादिति भावः। ननु

अग्रहणमनर्थकं तदन्ताद्धि ङीन्विधानम् *। अञ्ग्रहणमनर्थकम्। किं कारणम्। तदन्ताद्धि ङीन्विधानम्। तत्तदन्तादञन्तान् ङीन्विधीयते। शार्ङ्गरवाद्यञो ङीनिति। न चास्ति विशेषः। अञन्तान् ङीपो वा ङीनो वा तदेवरूपं स एव स्वरः। नवा जात्यधिकारात् *। न वानर्थकम्। किंकारणम्। जात्यधिकारात्। जातेरिति तत्रानुवर्तते। अजात्यर्थोयमारम्भः। औदपानी। औत्सीति। तच्चावश्यं जातिग्रहणमनुवर्त्यम्। अनधिकारे हि पुंयोगादाख्यायां ङीन्प्रसङ्गः *। अननुवर्तमाने हि जातिग्रहणे पुंयोगादाख्यायां ङीन्प्रसज्येत। बैदस्य स्त्री बैदीति। यदि तर्ह्यस्य निबन्धनमस्ति। इदमेव वक्तव्यम्। तन्न वक्तव्यम्। तदप्यवश्यं वक्तव्यम्। अनुच्यमाने हि तस्मिन् बैदस्य भगिनी बैदीति। परत्वाज्जातिलक्षणो ङीष् ङीपं बाधेत। ङीनि पुनः सति परत्वान् ङीन् ङीषं बाधते। ख्युन उपसंख्यानम् *। ख्युन उपसंख्यानं कर्तव्यम्। आढ्यंकरणी। सुभगंकरणी। अल्पमिदमुच्यते ख्युन इति। नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्। नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानं कर्तव्यम्। नञ्। स्त्रैणी। स्नञ्। पौंस्नी। ईकक्। शाक्तीकी याष्टिकी। ख्युन्। आढ्यंकरणी। सुभगंकरणी। तरुण। तलुन। तरुणी। तलुनी॥

---

सभायां साधुरियं ब्राह्मणपङ्क्तिः परिषद्वेति संभवति स्त्रियाः सभायां साधुत्वमेवं तर्हिच्छन्दसि सभेयशब्दस्यैवंविधायां स्त्रियां प्रयोगाभावः। अञ्ग्रहणमिति। शार्ङ्गरवाद्यञो ङीनित्यनेनाञन्तान्ङीन्विधानादत्राञन्तान्ङीब्विधानमनर्थकम्। स्वरे विशेषाभावाद् अञन्तस्याद्युदात्तत्वान्ङीपि ङीनि वाद्युदात्तस्यैवावस्थानात्। औत्सीति। उत्स भवेति भावादावर्थे उत्सादिभ्योऽञित्यञ्विधाने जातिवाचित्वाभावः। बैदस्य भगिनीति। अनेन जातिवाचित्वं दर्शयति। या हि बैदस्य भगिनी सा बिदस्यापत्यमिति तस्यां जातिनिमित्त एव बैदशब्दः प्रवर्तते न पुंयोगनिमित्तः। परत्वादिति। परत्वग्रहणेन बाधकत्वं लभ्यत इत्यपवादत्वादिदमुक्तं भवति। ख्युन इति सूत्रे ख्युनः पाठोऽनार्षः। नञ्स्नञीति। तरुणतलुनशब्दयोरवयोर्थ ग्रहणं तरुणी सुरेति। प्राणिधर्मो हि वयः। गौरादिषु तरुणतलुनशब्दयोः पाठान् ङीषपि भवति। स्वरे विशेषः। अथ वा वयोवाचिभ्यामपि गौरादिपाठात्परत्वान् ङीषेव स्यादिति वयोवचनावपि तरुणतलुनशब्दावुपसंख्यानं प्रयोजयतः तत्र सामर्थ्यान्ङीब्ङीषोर्विकल्पः।

यञश्च ॥ १६ ॥ आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम् *। आपत्यग्रहणं कर्तव्यम्। द्वीपाद्यञः प्रतिषेधार्थम्। इह मा भूत्। द्वैप्येति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। नैवं विज्ञायते। कञ्ङ्करपो यञश्चेति। कथं तर्हि। कञ्ङ्करपो ऽयञश्चेति॥

प्राचां ष्फस्तद्धितः॥ १७॥ तद्धितवचनं किमर्थम्। तद्धितवचनं षितः प्रातिपदिकादीकारार्थम् *। तद्धितवचनं क्रियते। षितः प्रातिपदिकादीकारो यथा स्यात्। नैतदस्ति प्रयोजनम्। षित्करणसामर्थ्यादेवात्रेकारो भविष्यति। यथैव तर्हि षित्करणसामर्थ्यादप्रातिपदिकादीकारो भवति। एवं प्रातिपदिकादित्यस्यानुवर्तनसामर्थ्यादषितोपि प्रातिपदिकादीकारः स्यात्। अस्त्यन्यत् प्रातिपदिकादित्यनुवृत्तौ प्रयोजनम्। किम्। उत्तरार्थम्। अत इञ्। दाक्षिः॥ प्लाक्षिः॥

सर्वत्र लोहितादिकतन्तेभ्यः॥ १८॥ सर्वत्रग्रहणं किमर्थम्। प्राचामेव हि स्यात्। नैतदस्ति प्रयोजनम्। सिद्धं प्राचां पूर्वेण। इदं तर्हि प्रयोजनम्। सर्वेषामेव यथा स्यात्। आवट्यायनी। चापं बाधित्वा ष्फो यथा स्यात्। लोहितादिषु शाकल्यस्योपसंख्यानम् *।

---

यञश्च। आपत्यग्रहणमिति। अपत्ये भव आपत्यः। द्वैप्येति। द्वीपे भवेति भवादावर्थे द्वीपादनुसमुद्रं यञिति यञ्। कञ्ङ्करपो ऽयञश्चेति। अयं संहितापाठ आर्षः। तत्र गर्गादिभ्यो यञित्यत्राकारप्रश्लेषादञ्विधीयते स एव चेहानुक्रियते। तत्राऽकारोनुनासिक इत्संज्ञक इह विशेषणार्थ इति ञोग्रहणाभावाद् द्वैप्येति टाबेव भवति। यस्कादिभ्यो गोत्रे यञञोश्चेत्यत्राप्यकारप्रश्लेषः। अथ वा गोत्रग्रहणानुवृत्त्या गर्गादिभ्यो यञित्यस्यैव लुप्ताकारस्य निर्देशः।

*प्राचां ष्फ। षित्करणसामर्थ्यादिति। धातोस्त्वपादेः षित्वमङ्विधौ चरितार्थमिति त्रपाच्चमित्यादौ ङीष् न भवति। यथैव तर्हीति। यदि षिद्गौरादिभ्यश्चेत्यत्र षित्प्रातिपदिकशब्दयोर्विशेषणविशेष्यभावोनास्ति। तदा समुच्चयेन भाव्यमिति भावः। उत्तरार्थमिति। अत्र त्वनुवर्तनं नान्तरीयकम्। एतच्च गौरादिग्रहणाद्विज्ञायते। समुच्चये गौरादिभ्यो ङीषः सिद्धत्वात्। अत इञिति। अन्यथाऽत इति समर्थविशेषणं स्यादिति भावः॥

सर्वत्र। सिद्धमिति। आरम्भसामर्थ्यात् प्राचामिति न संभन्त्स्यत इति भावः। सर्वेषामिति। अपवादविषयाणामपीत्यर्थः। इहानुपयोगात्पूर्वसूत्रेण सर्वत्रग्रहणं संबध्यते।

लोहितादिषु शाकल्यस्योपसंख्यानं कर्तव्यम् । शाकल्यायनी । यदि पुनरयं शकलशब्दो लहितादिषु पठ्यते । नैवं शक्यम् । इह हि शाकल्यस्य च्छात्राः शाकला इति । कण्वादिभ्यो गोत्र इत्यण्न स्यात् । एवं तर्हि । कण्वात्तु शकलः पूर्वः । कण्वशब्दात् शकलशब्दः पूर्वः पठितव्यः । कतादुत्तर इष्यते । कतशब्दात् शकलशब्द उत्तरः पठितव्यः । पूर्वोत्तरौ तदन्तादी । पूर्वोत्तरौ गणौ तदन्तादी द्रष्टव्यौ । ये कण्वादयस्ते शकलादयः । येकतपर्यन्तास्ते शकलपर्यन्ताः । किं प्रयोजनम् । ष्फार्थौ तत्र प्रयोजनम् । ष्फार्थौ तत्र प्रयोजयतः । कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते । पूर्वोत्तरौ तदन्तादी ष्फार्थौ तत्र प्रयोजनम् ॥१॥

कौरव्यमाण्डूकाभ्यां च ॥ १९ ॥ कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम् * । कौरव्यमाण्डूकयोरासुरेरुपसंख्यानं कर्तव्यम् । आसुरायणी । छश्च* । छश्चेति वक्तव्यम् । आसुरीयः कल्पः ॥

---

तेनावट्यायनीति प्राचां ष्फः सिद्धो भवति । अन्यथा ह्यावट्याच्चेति चाबुदीचां सावकाशः परत्वात्प्राचां ष्फं बाधेत । कण्वाच्चिति । गर्गादिषु कपि कत कुरुकत अनडुह् कण्व शकल इत्येवं गणसन्निवेशः । तत्रानडुद्कुरुकतशब्दावतः स्थानादपकृष्यान्यत्र पठितव्यौ । शकलशब्दस्तु कतकण्वशब्दयोर्मध्ये पठितव्यः । कतशकलकण्वेति । तत्र क त स्यान्तः कतन्त इति यत्पुरुषेण शकलशब्द उच्यते । शकन्ध्वादित्वान्निपातनाद्वा पररूपत्वम् । तथा कतोऽन्तो येषां तानि कतन्तानि । तत्र बहुव्रीहितत्पुरुषयोर्बहुव्रीहिः श्रियते । स्वरभिन्नानां यस्यो त्तरस्वरविधिः सम्रियतइति वचनात् । एवं कण्वादिभ्यो गोत्रे इत्यत्राप्येक शेषः । ष्फाणाविति । शाकल्यायनीति । स्त्रीयामनेन ष्फः । शाकल्यस्य छात्रा इति छापवादः कण्वादिभ्यो गोत्रइति शैषिकोऽण् भवति ।

कौरव्य । आसुरायणीति । प्राचां ष्फस्तद्धित इत्यत्र सूत्रपाठापेक्षया तद्धितग्रहणं प्रत्याख्यातम् । आसुरिशब्दात्तु ष्फस्य तद्धितसंज्ञाप्रयोजनमिकारलोप अकारान्तात्तुष्फे सवर्णदीर्घत्वेनापि रूपं सिध्यति । आसुरीय इति । आसुरिणा प्रोक्त इति शेषेर्थे छापवादे इञश्चेत्यणि प्राप्ते छस्य प्रतिप्रसव इहैव लाघवार्थं क्रियते । अन्यथा द्विरासुरिग्रहणं कर्तव्यं स्यात् ॥

वयसि प्रथमे ॥ २० ॥ वयस्यचरम इति वक्तव्यम्। इहापि यथा स्यात्। वधूटी। चिरण्टीति। इह कस्मान्न भवति। उत्तानशया लोहितपादिका। द्विवर्षा। त्रिवर्षेति। नैतानिवयोवाचीनि। कथं तर्हि वयो गम्यते। संबन्धाद् वयो गम्यते। यदि तर्हि यत्रसंबन्धाद्वयो गम्यते। तत्र न प्राप्नोति। इहापि न प्राप्नोति। कुमारीति। अत्रापि संबन्धाद्वयो गम्यते। को सौ संबन्धः। योसौ पुंसा सहासंप्रयोगः। संबन्धादेवात्र वयो गम्यते। इह पुनः संबन्धसंबन्धात्। इह तावत्। उत्तानशयेति। यदा कर्तृत्वं विशेषितं भवति तत उत्तरकालं वयो गम्यते। लोहितपादिकेति। यदा बहुव्रीह्यर्थो विशेषितस्तत उत्तरकालं वयो गम्यते। द्विवर्षा त्रिवर्षेति। यदा द्विवर्षो विशेषितः। तत उत्तरकालं वयो गम्यते। यदि तर्हि यत्र संबन्धादेव वयो गम्यते तत्र भवितव्यम्। इहापि प्राप्नोति। कन्येति। निपातनादेतत्सिद्धम्। किं निपातनम् कन्यायाः कनीनचेति ॥

---

वयसि। वयस्यचरम इति। ये त्रीणिवयांसीच्छन्ति कौमारयौवनस्थाविराणि। तन्मतेनेदं वक्तव्यम्। वधूटचिरण्टशब्दयोर्द्वितीय वयोवचनत्वात् यदा तु द्वे एव वयसीउपचयापचयलक्षणे इति दर्शनं तदेतन्न वक्तव्यम्। यौवनस्यापि प्रथमवयोरूपत्वात्। उत्तानशयेति। एते हि शब्दाः प्रथमवयोविषयाः प्रयुज्यन्तइति भावः। नैतानीति। नैतेषां वयः प्रवृत्तिनिमित्तमित्यर्थः। संबन्धादिति। विशेषणविशेष्यभावलक्षणादित्यर्थः। ततश्च बहिरङ्गत्वाद्वयःप्रतीतेर्ङीप्न भवति। कुमारीति। पुंसा सहासंप्रयोगोस्य प्रवृत्तिनिमित्तम्। न तु प्रथमं वयः। तथा च वृद्धकुमारीति प्रयोगः पाणिगृहीतीति तु प्रथमवया अपि कुमारीशब्देन नोच्यतइति भावः। संबन्धादेवेति। औत्पत्तिकाद्वाच्यवाचकभावलक्षणात्संबन्धादित्यर्थः। कुमारशब्दस्य हि प्रथमं वयः प्रवृत्तिनिमित्तम्। साहचर्यात्तु पुंस सहासंप्रयोगमुपादाय वृद्धायां गौणः कुमारीशब्दः प्रयुज्यते। संबन्धसबन्धादिति। कर्तृमात्रादेरभिधेयस्य शब्दसंबन्धस्य प्रमाणान्तरावगतेन विशेषणेन संबन्धादित्यर्थः। कर्तृत्वमिति। उत्तानशयेति। शेतिक्रियायाः कर्त्री शब्दार्थः। यदा तु प्रकरणादिवशात्प्रथमवयो विशिष्टा कर्त्री प्रतीयते। तदा प्रथमवयोविषयत्वं बहिरङ्गमित्यर्थः। लोहितपादिकेति। अत्राप्यन्यपदार्थमात्रं शब्दार्थः। विशेषप्रतिपत्तिः प्रकरणायत्ता। द्विवर्षेति। द्वे वर्षे भूतेति ठञो वर्षाल्लुक् चित्तवति नित्यमिति लुक्। अत्रापि परिमाणमात्रं शब्दार्थः शालादावपि प्रयोगाद्। वयः प्रतिपत्ति स्तु प्रमाणान्तरनिबन्धना।

अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ २२ ॥ इमौ द्वौ प्रतिषेधावुच्येते । तत्रैकः शक्योऽवक्तुम् । कथम् । एवं वक्ष्यामि । परिमाणान्तात्तद्धितलुकि ङीब्भवतीति । तन्नियमार्थं भविष्यति । परिमाणान्तादेव तद्धितलुकि ङीब् नान्यत इति । ततो बिस्ताचितकम्बल्येभ्यो नेति । तद्धितलुकीत्येव ॥

बहुव्रीहेरूधसो ङीष् ॥ २५ ॥ ऊधसो नकारो लिङ्गाधिकारे* । ऊधसो नकारो लिङ्गाधिकारे वक्तव्यः । इह मा भूत् । महोधाः पर्जन्य इति । न वा समासान्ताधिकारे स्त्रीग्रहणात् * । न वा लिङ्गाधिकारे नकारः कर्तव्यः । किं कारणम् । समासान्ताधिकारे स्त्रीग्रहणात् । समासान्ताधिकार एव स्त्रीग्रहणं कर्तव्यम् । इतरथा हि कब्विधिप्रसङ्गः * । इतरथा हि कब्विधिः प्रसज्येत । कस्यां पुनरवस्थायां कप्प्राप्नोति । प्राग्ङीषुत्पत्तेः । प्राक्तावन्न प्राप्नोति । किं कारणम् । नहि ङीष्विभाषा । उत्पन्ने तर्हि ङीषि प्राप्नोति । उत्पन्ने चापि न भवितव्यम् । किं कारणम् । नद्यन्तानां यो बहुव्रीहिरित्येवं सः । न चैष नद्यन्तानां बहुव्रीहिः । प्रागेव तर्हि प्राप्नोति । ननु चोक्तं न हि ङीष्विभाषेति । यद्यपि न ङीष्विभाषा । कप्तु विभाषा । कपोऽवकाशः । अन्यो बहुव्रीहिः । अयवकः अव्रीहिकः ।

---

अपरिमाण । परिमाणान्तादेवेति । तद्धितलुक्येवेति तु विपरीतनियमो न भवति । लक्ष्यानुसारित्वान्नियमस्य । तेन तद्धितलुकि समाहारे च द्व्याढकीति ङीब् भवति । पञ्चाश्वेत्यादौ न भवति । बिस्तादीनां परिमाणवाचित्वात्प्रतिषेधो विधेयः ॥

बहुव्रीहेः । ऊधस इति । ऊधसोनङिति समासान्तप्रकरणे सूत्रमकृत्वा बहुव्रीहेरूधसो ङीष् नश्चेति वक्तव्यम् । तत्रालोन्त्यस्येत्यन्त्यस्य नकारो ङीष्प्रत्ययश्च स्त्रियां भवतीत्यर्थो भवति । धनुषो नङिति समासान्तेषु पठितव्यमेवं च महोधाः पर्जन्यः कुण्डोध्नी धेनुकमित्यनङ् न भवति । न वेति । समासान्तप्रकरण एव ऊधसोनङ् स्त्रियामिति वक्तव्यम् । तत्रैवावश्यं कर्तव्यं कप्समासान्तनिवृत्त्यर्थमित्यर्थः । कस्यां पुनरिति । द्वावप्येव कपौ नद्यृत्लक्षणो नित्यः शेषलक्षणो विकल्पितस्य तत्र कस्य प्रसङ्ग इति प्रश्नः । प्रागिति । शेषलक्षण इत्यर्थः । नहि ङीषिति । यद्यत्र कप्स्यात् ङीष्विधानमनर्थकं स्यादिति भावः । द्वयोस्तु विकल्पे सति परस्परपरिहारेण प्रवर्तनान्नास्ति ङीषोऽनवकाशत्वम् । उत्पन्न इति । नद्यृल्लक्षण इत्यर्थः ॥

ङीषोवकाशः। विभाषा कब् यदा न कप् सोऽवकाशः। कुण्डोध्नी। घटोध्नी। कप्प्रसङ्गे उभयं प्राप्नोति। परत्वात्कप्स्यात्। तस्मात्सुष्ठूच्यते न वा समासान्ताधिकारे स्त्रीग्रहणादितरथा हि कब्विधिप्रसङ्ग इति॥

दामहायनान्ताच्च॥ २७॥ दामहायनान्तात्संख्यादेः *। दामहायनान्तात्संख्यादेरिति वक्तव्यम्। इह मा भूत् उद्दामा वडवेति। तत्पुरुषविज्ञानाद्वा सिद्धम् *। बहुव्रीहेरिति वर्तते। तत्पुरुषश्चायमुत्क्रान्ता दाम्न उद्दामेति। भवेत् सिद्धं यदा तत्पुरुषः। यदा तु खलु बहुव्रीहिस्तदा न सिध्यति। उत्क्रान्तं दाम अस्या इति। ननु चेतनावत एतद्भवति उत्क्रमणं वाऽपक्रमणं वा। दाम चाचेतनम्। अचेतनेष्वपि चेतनवदुपचारो दृश्यते। तद्यथा। स्रस्तान्यस्या बन्धनानि। स्रस्यन्ते चास्या बन्धनानीति। तच्च हि संख्यादेरिति वक्तव्यम्। न वक्तव्यम्। कृतमनुवर्तते। क्व प्रकृतम्। संख्याव्ययादेर्ङीबिति। यदि तदनुवर्तते। अव्ययादेरपि प्राप्नोति। नैष दोषः। संख्यादेरित्यनुवर्तते। अव्ययादेरिति निवृत्तम्। कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोनुवर्तते एकदेशो न। एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति। तद्यथा। तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ पक्षात्तिरित्यत्र मूल इत्यनुवर्तते। पाक इति निवृत्तम्। अथेह कथं भवितव्यम्। द्वौ हायनावस्याः शालाया द्विहायना त्रिहायनेति। हायनो वयसि स्मृतः॥ वयोवाचिनो हायनशब्दस्य ग्रहणम्। न चैष वयोवाची। अथ णत्वं कस्मान्न भवति। णत्वमपि वयोवाचिन एव॥

केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च॥ ३०॥ मामकग्रहणं किमर्थम्। नाणन्तादित्येव सिद्धम्। नियमार्थोयमारम्भः।

---

दामहाय। संख्यादेरिति। संख्याव्यययोर्द्वन्द्वनिर्देशादनुवृत्तिरलभ्येति भावः। चेतनावत इति। लोकव्यवहारे उत्क्रमणादौ चेतनस्यैव कर्तृत्वेन प्रसिद्धत्वान्नहि घट उत्क्रामतीति प्रसिद्धिरिति भावः। अचेतनेष्वपीति। देशान्तरप्राप्तिरचेतनानामपि दृश्यत इत्यर्थः। एकयोगेति। शब्दानुमानपक्षे यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञायते स एवानुवर्तते अर्थानुमानपक्षे तु द्वन्द्वार्थस्यैकत्वादनुवृत्तिः स्यात्। हायन इति। वक्तव्यमेतदिति भावः। णत्वमपीति। त्रिचतुर्भ्यां हायनस्येति विहितम्॥

केवल। मामिकेति। युष्मदस्मदोरन्यतरस्यां खञ्चेत्यण्। तवकममकावेकवचने इति

मामकशब्दात्संज्ञाछन्दसोरेव । क्व मा भूत् । मामिका बुद्धिरिति ॥

राात्रेश्चाजसौ ॥ २१ ॥ अजसादिष्विति वक्तव्यम् । इहापि यथा स्यात् । रात्रिं रात्रिं रात्रिस्मरिष्यन्तो रात्रिमजानन्तः । सर्वां रात्रिं सहोषित्वा पत्न्या मे कान्त रात्रिकाम् ॥ १ ॥

अन्तर्वत्पतिवतोर्नुक् ॥ २२ ॥ अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे *। अन्तर्वत्पतिवदिति गर्भभर्तृयोग इति वक्तव्यम् । इह मा भूत् । प्रथले त्वया पतिमतो पृथिवीति । अथान्तःशब्दस्यागर्भसंयोगे किं प्रत्युदाह्रियते । अन्तरस्यां शालायामस्तीति । किं पुनः कारणं वाक्यमेवोदाह्रियते न पुनर्मतुप् । अस्ति सामानाधिकरण्ये मतुब् विधीयते । न चास्मिन्विषयेऽस्तिना सामानाधिकरण्यम् । इहापि तर्हि न प्राप्नोति । अन्तर्वत्नीति । एवं तर्ह्यन्तर्वत्पतिवतोर्नुङ्मतुब्वत्वे निपातनात् ॥ अन्तर्वदिति मतुप् निपात्यते । वत्वं सिद्धम् । पतिवदिति वत्वं निपात्यते मतुप् सिद्धः । किमविशेषेण । नेत्याह । गर्भिण्यां जीवत्पत्यां च । एतस्मिन्विषये । वा च च्छन्दसि नुग्भवेत् ॥ वा च छन्दसि नुग्वक्तव्यः । सान्तर्वती देवानुपैत् । सान्तर्वत्नी देवानुपैत् । पतीवती तरुणवत्सा । पतिवत्नी तरुणवत्सा । अन्तर्वत्पतिवतोर्नुङ्मतुब्वत्वे निपातनात् । गर्भिण्यां जीवत्पत्यां च वा च छन्दसि नुङ्भवेत् ॥ १ ॥

पत्युर्नो यज्ञसंयोगे ॥ २३ ॥ यज्ञसंयोग इत्युच्यते । तत्र नेदं सिध्यति । इयमस्य पत्नी । क्व तर्हि स्यात् । पत्नीसंयाजा इति यत्र यज्ञसंयोगः । नैष दोषः । पतिशब्दोयमैश्वर्यवाची । सर्वेषु गृहस्थेन प-

---

ममकादेशः । टाप् । मामकनरकयोरुपसंख्यानमितीत्वम् ॥

अन्तर्वत् । अन्तर्वदिति । अन्तर्वत्नी गर्भिणी । पतिवत्नी जीवद्भर्तृकेत्यर्थः । किं पुनरिति । अन्तर्वतीति नुगभाव एवप्रत्युदाहार्य इति मन्यते । न चात्रेति । अन्तःशब्दस्याधिकरणप्रधानत्वादिति भावः । वाचेति । मतुब्वत्वे तु नित्यं भवतः ॥

पत्युर्नो । इयमस्य पत्नीति । यज्ञसंयोगे इति पतिशब्दस्य विशेषणं मन्यते । तेन यत्र यज्ञवाचिसमवधाने पतिशब्दः प्रयुज्यते पत्नी संयाजा इत्यादौ तत्रैव नत्वेन भाव्यमिति भावः । पतिशब्दोयमिति । पतिशब्दार्थस्य यज्ञसंयोग इति विशेषणम् । पत्न्याश्च दम्प-

श्वमहायज्ञा निर्वर्त्याः । यच्चाह: सयंप्रातर्होमं चरुपरोडाशान्निर्वपति तस्यासावीष्टे । एवमपि तुषजकस्य पत्नी न सिध्यति उपमानात्सिद्धं पत्नीव पत्नी ॥

विभाषा सपूर्वस्य ॥ ३४ ॥ पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानम् * । पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानं कर्त्तव्यम् । वृद्धपतिः वृद्धपत्नी स्थूलपतिः स्थूलपत्नी । वचनाद्भविष्यति । अस्तिवचने प्रयोजनम् किम् । आशापतिः । आशापत्नी । सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात्* । सिद्धमेतत् । कथम् । पत्युः प्रातिपदिकविशेषणत्वात् । नैवं विज्ञायते । अस्ति अस्मात्पतिशब्दात्पूर्वः सोयं सपूर्वः । सपूर्वात्पतिशब्दादनुपसर्जनादिति । कथं तर्हि । अस्ति अस्मिन्प्रातिपदिके पूर्वं तदिदं सपूर्वम् । सपूर्वात्प्रातिपदिकात्पत्यन्तादनुपजर्नादिति ॥

पूतक्रतोरै च ॥ ३६ ॥ पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम् । पूतक्रत्वादयः पुंयोगप्रकरणे वक्तव्याः । पूतक्रतोः स्त्री पूतक्रतायी । यया हि पूताः क्रतवः पूतक्रतुः सा भवति । लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतप्रसङ्गः * । लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतं प्राप्नोति ।

---

त्योः सहाधिकाराद् यज्ञ कर्तृत्वात्तत्फलसंवन्धाद् यज्ञसंयोगः । तुषजकस्येति । त्रैवर्णिकानामेव सभार्याणां यज्ञेधिकारो न तु शूद्रस्य । उपमानादिति । अग्निसाक्षिपूर्वकपाणिग्रहणाश्रयादिति भावः ॥

विभाषा । सहशब्दोत्र विद्यमानवचनो विद्यमानपूर्वं सपूर्वं न सपुत्र आगत इत्यादिवत्तुल्ययोगे सहशब्दो न हि पूर्वस्य नकारादेश इष्यते । तत्र पतिशब्दविशेषणं सपूर्वग्रहणमिति मत्वाह । पत्युरिति । उपसर्जनसमास इति । सर्वोपसर्जने बहुव्रीहावित्यर्थः । आशापतिरिति । आशायाः पतिरिति षष्ठीसमासः । प्रातिपदिकविशेषणत्वादिति । प्रातिपदिकं पतिशब्देनविशेष्यते । तदेवानुपसर्जनग्रहणेन सपूर्वग्रहणेन च । पूर्वशब्दश्चावयववाची गृह्यते न तु व्यवस्थावाची । शब्दे ऽवयवस्य प्रत्यासन्नत्वात् । सामर्थ्याच्च पतिशब्देन तदन्तविधिर्भवति । ग्रहणवतेति तदन्तविधिप्रतिषेधबाधनात् ।

पूतक्र । पूतक्रत्वादीनामिति । त्रय एते योगाः ङीप्सहिताः पुंयोगादाख्यायामित्यचानुवर्तयितव्या इत्युक्तं भवति । तेन यदा पुंयोगात् स्त्रियां पूतक्रत्वादयो वर्तन्ते तदायं विधिर्नान्यदा । लिङ्गसंनियोगेनेति । लिङ्गार्थविहितः प्रत्ययो लिङ्गशब्देनोच्यते । यद्यपि स्त्रीप्रत्य-

पञ्चेन्द्राख्यो देवता अस्य पञ्चेन्द्रः । पञ्चाग्निः । दशाग्निः । किमुच्यते सर्वत्रेति । अन्यत्रापि नावश्यमिहैव । क्वान्यत्र । पञ्चभिर्धीवरीभिः क्रीता पञ्चधीवा । दशधीवेति। लिङ्गग्रहणेन नार्थः सर्वत्रागमादेशानां लुकि तत्कृतप्रसङ्ग इत्येव । इदमपि सिद्धं भवति। पञ्चमेन गृह्णाति पञ्चकः । नैतदस्ति । मडर्थं परादिः स डटो गृहणेन गृहीष्यते । इदं तर्हि प्रयोजनं षष्ठेन गृह्णाति षट्क इति । सिद्धं त्वागमादेशानामङ्गतः स्त्रीप्रकरणवचनात् * । सिद्धमेतत् । कथम् । आगमादेशा ये इह स्त्रीप्रकरणे उच्यन्ते ते ऽङ्गाधिकारे कर्तव्याः । स्त्रीप्रत्ययग्रहणेन नार्थः ।सिद्धं त्वागमादेशानामङ्गतो वचनादित्येव । इदमपि सिद्धं भवति । षष्ठेन गृह्णाति षट्क इति । लिङ्गलुकि वा प्रकृतिप्रत्यापत्तिवचनम् * । अथ वा लिङ्गलुक्येव प्रकृतिप्रत्यापत्तिर्वक्तव्या । लिङ्गग्रहणेन नार्थः । लुकि वाप्रकृतिप्रत्यापत्तिवचनमित्येव । इदमपि सिद्धं भवति षट्केन गृह्णाति षट्क इति। किं पुनरत्र ज्यायः । लुकिप्रकृतिप्रत्यापत्तिवचनमित्येव ज्यायः । इदमपि सिद्धं भवति पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः । दशपटुरि-

---

येन सहागमादेशानां विधानं तथापि विधानोत्तरकालं स्त्रीप्रत्यये लुप्ते ऽपि तेषां श्रवणं प्रसज्येत। तन्निवृत्तौ प्रमाणाभावात् ।यथायमलकयोरेकविनाशे ऽपि नापरस्य विनाश इति भावः। पञ्चेन्द्राख्य इति। तद्धितार्थे द्विगुः। सास्य देवतेत्यण् । तस्य द्विगोर्लुगनपत्य इति लुक् । लुक्तद्धितलुकीति ङीषो लुक् । अत्रानुको निवृत्तिर्न प्राप्नोति। पञ्चाग्निरिति । पञ्चाग्नायो देवता अस्येति पूर्ववत्सर्वम् । अत्रैकारस्य निवृत्तिर्न प्राप्नोति । पञ्चभिरिति । आर्हीयष्ठक् । तस्याध्यर्द्धपूर्वेति लुक् । ततो ङीपो लुक् । अत्र रेफस्य निवृत्तेरप्रसङ्गः । पञ्चमेनेति । तावतिथग्रहणमिति लुग्वेत्यत्र तावतिथेन गृह्णातीति लुक् चेत्युपसंख्यानात्कन् प्रत्ययो डटस्य लुक् । स डट इति । एतेन मट्सहितस्य लुगित्यर्थः । षट्क इति । डटिपरतः पूर्वभक्तस्थुगागमो डटि निवृत्ते ऽपि न निवर्तेत प्रत्ययलक्षणेनापि प्रसज्येत । ननु कपि पूर्वस्य पदत्वात्संयोगान्तस्य लोप इति थुको लोपो भवति । एवं तर्हि चतुर्थेन गृह्णाति चतुष्क इत्युदाहरणम् । अत्र हि रात्सस्येति नियमात् थुकः संयोगान्तलोप इति नास्ति । सिद्धं त्विति । स्त्रीप्रकरणे यआगमादेशास्ते ऽङ्गतोऽङ्गाधिकारे वक्तव्या इत्यर्थः । तत्र स्त्रीप्रत्यये परतोऽङ्गस्य विधीयमाना आगमादेशास्तत्र लुप्ते न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधान्न भविष्यन्तीति भावः । पञ्चपटुरिति । यणादेशस्यामाङ्गत्वात्प्रत्य-

ति ॥ तत्तर्हि वक्तव्यम् । न वक्तव्यम् । संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः । तद्यथा । देवदत्तयज्ञदत्ताभ्यामिदं कार्यं कर्तव्यम् । देवदत्तापाये यज्ञदत्तोपि न करोति ॥

वर्णादनुदात्तात्तोपधात्तो नः ॥ ३९ ॥ असितपलितयोः प्रतिषेधः * । असितपलितयोः प्रतिषेधो वक्तव्यः । असिता । पलिता । छन्दसि क्नमेके * छन्दसि क्नमेके इच्छन्ति । असिक्न्यस्योषधे पलिक्नीरिद्युवतयो भवन्ति । वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानम् * । वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानं कर्तव्यम् । पिशङ्गी ॥

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥४२॥ नीलादोषधौ * । नीलादोषधाविति वक्तव्यम् । नीली ओषधिः । प्राणिनि च * । प्राणिनि चेति वक्तव्यम् । नीली गौः नीली वडवा । वा संज्ञायाम् * । वा संज्ञायामिति वक्तव्यम् । नीली नीला ॥

---

यलक्षणप्रतिषेधाभावः । यद्यपि यणादेशः प्रत्ययलक्षणो न भवति । तथापि स्त्रीप्रत्ययलुको बहिरङ्गत्वादसिद्धत्वाद्यणादेशोऽन्तरङ्गो न निवर्तेतेति । प्रत्यापत्तौ लिष्टं सिध्यतीत्यर्थः । संनियोगशिष्टानामिति । लौकिकोयं न्यायः । एकं कस्मिन् प्रयोजने येषां सहाधिकारस्तत्रान्यतरनिवृत्तावितरनिवृत्तिः । लिङ्गमपि शास्त्रेऽस्ति बिल्वकादिभ्यश्छस्य लुगित्यत्र छस्येति स्थानिनिर्देशस्तस्य हि प्रयोजनं छमात्रस्य लुग्यथा स्यात् कुकोनिवृत्तिर्मा भूदिति । यदि चैषा परिभाषा नाभविष्यत् तदा कुङ्न्यवर्त्स्यदिति किं तन्निर्देशेन । कथं पञ्चपटुरिति । न हि यणादेशः संनियोगशिष्टः । एवं तर्ह्यन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधत इत्यक्षत एव यणादेशे लुकि सति निमित्ताभावाद्यण् न भवति । न च लुको बहिरङ्गत्वादसिद्धत्वम् । नाजानन्तर्य इत्यसिद्धत्वप्रतिषेधात् । इकोयणचीत्यत्र हि अचीत्यानन्तर्यमाश्रितम् ।

वर्णा । छन्दसि क्नमिति । तस्य स्थान इति बोद्धव्यम् । अत्र केचित् । छन्दोग्रहणं प्रयोगदर्शनार्थमिच्छन्ति । तेत भाषायामपि क्नादेशो भवति । गतोगणस्तूर्णमसिक्निकानामिति । भाष्यकारेण त्वेतन्नोपत्यस्तमित्ययुक्तमित्याहुः । पिशङ्गादिति । उत्तरसूत्रेण ङीषि प्राप्ते ङीब्विधिः । स्वरे विशेषः । पिशङ्गशब्दो लघावन्ते द्वयोश्च बह्वषो गुरुरिति मध्योदात्तत्वादनुदात्तान्तः ।

जानपद । नीलादिति । सर्वैरस्यनाच्छादने प्राप्नोतीति वचनम् ।

वोतो गुणवचनात्॥४४॥ गुणवचनादित्युच्यते को गुणो नाम। सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥१॥ अपर आह। उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि। वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः॥२॥ गुणवचनान्ङीबाद्युदात्तार्थः*। गुणवचनान् ङीब्वक्तव्यः। किं प्रयोजनम्। आद्युदात्तार्थः। आद्युदात्ताः प्रयोजयन्ति। वस्वी। पट्वी। खरुसंयोगोपधप्रतिषेधश्च*। खरुसंयोगोपधानां प्रतिषेधो वक्तव्यः। खरुरियं ब्राह्मणी। पाण्डुरियं ब्राह्मणी॥

---

वोतो। उत इति वचनाद्वचनग्रहणाच्चादेर्ङीर्न ग्रहणम्। विशेषणस्यापि तु गुणस्य ग्रहणं प्राप्नोति। यथा यस्य गुणस्य हि भावादित्यत्र। ततश्च जात्यादिवचनादपि ङीष् प्राप्नोति आखुरित्यादाविति पृच्छति। को गुण इति। सत्त्व इति। द्रव्यमाश्रयते तत एव च द्रव्यान्निवर्तते भिन्नजातीयेषु दृश्यते यः स गुणः। एतेन जातेर्गुणत्वं निवारितम्। सा हि द्रव्ये निविशमाना द्रव्यं न कदा चिज्जहाति। न च भिन्नजातीयानि द्रव्याण्यभिनिविशते। यद्यपि गवाश्वादिषु प्राणित्वमस्ति तथापि प्राणित्वेन तेषामेकजातीयत्वमेव। क्रियायास्तु पूर्वोक्तलक्षणयोगाद् गुणत्वं प्राप्नोति। सापि हि द्रव्ये निविशते कदा चिद् द्रव्यान्निवर्तते। निष्क्रियं हि द्रव्यं कदा चिद् भवति कदा चित्सक्रियम्। भिन्नजातीयानि च द्रव्याण्याश्रयतीत्याह। आधेय इति। उत्पाद्यो यथा घटादेः पाकजो रूपादिः। अक्रियाजोऽनुत्पाद्यो यथा कणादेर्महत्वादिः। क्रियातूत्पाद्यैव न निष्येति तस्याह विध्यभावात् गुणत्वाभावः। एवं तु द्रव्यस्यापि गुणत्वं प्राप्नोति। अवयविद्रव्यमवयद्रव्येषु निविशतेऽसमवायिकारणसंयोगनिवृत्तौ च विनाशात्ततोऽपैति भिन्नजातीयेषु च हस्तपादादिषु दृश्यते। द्विविधं तन्नित्यानित्यभेदेन। निरवयवस्य द्रव्यस्यात्मपरमाण्वादेर्नित्यत्वादित्याह। असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः। अत्र पृथग्जातिष्वित्यसमासः। समासे हि जात्यन्ताच्छ बन्धुनीति छः प्रसज्येत। तत्र व्यक्तिषु जात्याधारेषु दृश्यमानो जातिषु दृश्यत इत्युच्यते। अयमेवार्थः श्लोकान्तरेणोच्यते। उपैत्यन्यदिति। अन्यद् द्रव्यं शुक्लादिको गुण आगच्छत्यन्यत्तु परित्यजति भिन्नजातीयेषु च द्रव्येषु दृष्टः। सर्वलिङ्गाश्रयगतलिङ्गग्राहित्वाद्वाचकः सर्वलिङ्गानाम्। शब्दधर्मस्य वाचकत्वस्यार्थ आरोपाद् वाचक इत्युच्यते। द्रव्यादन्य इति। यथोक्तलक्षणयुक्तत्वेपि यस्य द्रव्यत्वं नास्ति स गुण इत्यर्थः। वस्वीति। धान्ये निदित्यतो निदिति वर्तमाने शृस्वृस्निहीति वसुशब्द आद्युदात्तो व्युत्पादितः। तस्मान् ङीपि सति ईकारोनुदात्तो भवति। ङीषि तूदात्तः स्यात्। अन्तोदात्तात्तु ङीम्ङीषोर्विशेषाभावः उदात्तयणो हल्पूर्वादिति ङीप उदात्तत्वविधानात्।

पुंयोगादाख्यायाम् ॥ ४८ ॥ गोपालिकादीनां प्रतिषेधः * । गोपालिकादीनां प्रतिषेधो वक्तव्यः गोपालिका । पशुपालिका । किं पुनरत्रोदाहरणम् । प्रष्ठी प्रचरीति । कथं पुनरयं प्रष्ठशब्दोकारान्तः स्त्रियां वर्तते । तस्येदमित्यनेनाभिसंबन्धेन । यथा ह्यसौ तत्कृतान्स्नानोद्वर्तनपरिषेकान् लभते एवं प्रष्ठशब्दमपि लभते । यद्येवं, पुंयोगादाख्यायां तद्धितलुग्वचनम् * । पुंयोगादाख्यायां तद्धितस्य लुग्वक्तव्यः । तस्येदमिति प्राप्नोति । न तर्हीदानीमिदं भवति । प्राष्ठ्र ब्रूमाः प्राचर्य ब्रूमा इति । भवति च । विभाषा लुग् वक्तव्यः । यदा लुक् तदा प्रष्ठी यदा न लुक्तदा प्राष्ठी । यद्येवं नार्थो लुका विभाषा तद्धितोत्पत्तिः । यदा तद्धितोत्पत्तिः । तदा प्राष्ठी । यदा न तद्धितोत्पत्तिः । तदा प्रष्ठी । एवमपि लुग् वक्तव्यः । नह्यन्तरेण तद्धितलुकं परार्थे शब्दो वर्तते । यदि पुनस्तस्यामेव प्रष्ठशब्दो वर्तते ।

---

पुंयोग ॥ पुंसा योगः पुंयोगस्तस्माद्धेतोर्यत्प्रातिपदिकं स्त्रियां वर्तते ततो ङीष् भवति । आख्याग्रहणं गुणभूतेनापि पुंसा संबध्यते । अन्येन संबन्धासंभवात् । गणकादयो हि शब्दाः पुंयोगात् स्त्रियां वर्तमाना न पुंयोगस्याख्या भवन्ति स्त्रियां च पुंयोगमन्तरेण न प्रवर्तन्त इति स्त्रिया अपि नाख्याः । पुंयोगात् स्त्रियां वर्तमानानां स्त्रीं प्रत्याख्यात्वमव्यभिचारान्न विशेषणम् । पुंविशेषणस्य तु प्रयोजनं प्रजाता प्रसूतेत्यादौ ङीष्निवृत्तिः । प्रसूतादयो हि पुंयोगात् स्त्रिया प्रवर्तन्ते पुमांसं तु नाचक्षते । गोपालिकादीनामिति । सिद्धये इति वाक्यशेषः । किं पुनरिति । यदि प्रष्ठादिशब्दः पुंसि व्युत्पाद्यते ततः स्त्रीवृत्तिर्न स्यात् । अथ तत्समर्थाचरणात् प्रस्थानादिक्रियां प्रति कर्तृत्वमाश्रित्य स्त्रियां व्युत्पाद्यते तदान्तरङ्गत्वाट्टापि कृते सुबुत्पत्तौ सत्यां समासे कृते अकारान्तत्वाभावान्ङीष् न स्यादिति प्रश्नः । तस्येदमित्यनेनेति । यथा राजामात्यो राजकार्याणि राजव्यपदेशं च लभते तथा प्रष्ठभार्यापीत्यर्थः । स्नानशब्दः करणसाधन इत्यपुनरुक्तः परिषेकशब्दः तद्धितलुग्वचनमिति । तस्येदमिति । संबन्धस्य भेदनिबन्धनत्वाद् भेदाश्रयतद्धितोत्पतौ सत्यां तस्य लुग्वक्तव्यः । लुकि च सति प्रकृतिरेव प्रष्ठशब्दस्तद्धितार्थं स्त्रियमभिधत्त इति प्रष्ठीति ङीष् सिध्यति । न ह्यन्तरेणेति । तद्धितस्य विकल्पे नोत्पत्तावपि पक्षे वाक्यमेव भवति प्रष्ठस्येयमिति । तत्र च प्रष्ठशब्दः पुंस्येव वर्तते न तु स्त्रियाम् । तस्मात् स्त्रीवृत्तित्वमस्येच्छता तद्धितलुग्विधेय इत्यर्थः । यदि पुनरिति । यथा पञ्चभिर्हलैः कृषतीति प्रतिविधानात् कर्तृत्वमेवं स्त्रिया अपि प्रस्थानादौ कर्तृत्वं स्यादे-

कथं पुनस्तस्यामेवाप्रतिष्ठमानायां प्रष्ठशब्दो वर्तते। यथैव ह्यसावकुर्वती किं चित्पापं भर्तृकृतान्बन्धनादिक्लेशान् लभते । एवं प्रष्ठशब्दमपि लभते । सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः *। सुबन्तसमासवचनाच्चाकारान्तता नोपपद्यते । सुबन्तानां समासस्तत्रान्तरङ्गत्वाट्टाप् । टाप्युत्पन्ने समासः । स्थाशब्दः समस्येत। तत्र पुंयोगादाख्यायामकारान्तादितीकारो न प्राप्नोति । सिद्धं तु स्त्रियाः पुंशब्देनाभिधानात् * । सिद्धमेतत् । कथम् । स्त्रियाःपुंशब्देनाभिधानात् । स्त्री पुंशब्देनाकारान्तेनाभिधीयते ननु चोक्तं पुंयोगादाख्यायां तद्धितलुग्वचनमिति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति । नातस्तद्धितोत्पत्तिर्भवतीति । यदयंपुंयोगादाख्यायामिति ईकारं शास्ति। नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । ये ऽनीकारास्तद्धितास्तदर्थमेतत्स्यात् । यत्तर्ह्याख्याग्रहणं करोति । न हि तद्धितान्तमाख्या भवति । अथ वा पुनरस्तु तस्येदमित्यनेनैवाभिसंबन्धेन । ननु चोक्तं पुंयोगादाख्यायां तद्धितलुग्वचनमिति। नैष दोषः । नावश्यमयमेवाभिसंबन्धो भवति तस्येदमिति । अयमप्यभिसं-

---

वेति भावः । कथमिति । साक्षात्तस्याः क्रियाया अकरणादकर्तृत्वं मन्यते । यथैवेति । साक्षात्पापमकुर्वत्यपि संविधाचीत्वात्कर्तृत्वमापद्यते यथा स्वामिदासी पचत इति स्वामिनः संविधातृत्वात् पक्तृत्वं दासस्य तु साक्षात् तथा स्त्रीपुंसयोः प्रस्थातृत्वमित्यर्थः । तत्रान्तरङ्गत्वादिति । प्रातिपदिकं पूर्वं लिङ्गमभिदधाति पश्चात्संख्यामिति तन्निमित्तस्य सुपो बहिरङ्गत्वमिति भावः । सिद्धं त्विति । तस्येदमिति संबन्धात् तच्छब्दलाभं मन्यते। यदयमिति । अणि हि ङीप् सिद्धो न चाणन्तान् ङीपि ङीषि वा विशेषः । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वात् । येनीकारा इति यथा भानोरियं वृद्धाच्छः । भानवीया । अत्र टाब्बाधनार्थमिदं वचनं स्यात् । न हि तद्धितान्तमिति । तद्धितान्तस्य शब्दस्य प्रकृत्यर्थे पुंस्यवर्तनादिति भावः । तदेवमाख्याग्रहणं तस्येदमिति भेदविवक्षायामपि तद्धितोत्पत्तिमन्तरेणप्रष्ठशब्दस्य स्त्रियां वृत्तित्वं साधुत्वं च ज्ञापयति। तेन न केवला प्रकृतिः प्रयोक्तव्येति नियमो निवर्तत इत्युक्तम् । अस्मिंस्तु व्याख्याने तद्धितस्य नित्यो बाधः प्राप्नोतीति । सिद्धं तु स्त्रिया इत्येतत्पक्षान्तराश्रयेण व्याचष्टे । अथ वेति । अनेनाभिसंबन्धेनेति । एतत्पूर्वकेण सोऽयमिति संबन्धेनेति भावः । इतरो भेदसंबन्ध एवानेनोक्त इतिमत्वाह । ननु चेति। अयमपीति। अभेदाच्च भेदस्य निवृत्तत्वात्तद्धितानुत्पत्तिः ।भेदस्य

बन्धो भवति सोयमिति। कथं पुनरतस्मिन् स इत्येतद्भवति। चतुर्भिः प्रकारैरतस्मिन्स इत्येतद्भवति। तात्स्थ्यात् ताद्धर्म्यात् तत्सामीप्यात् तत्साहचर्यादिति। तात्स्थ्यात्तावत्, मञ्चा हसन्ति गिरिर्दह्यते। ताद्धर्म्यात्, जटिनं यान्तं ब्रह्मदत्त इत्याह। ब्रह्मदत्ते यानि कार्याणि जटिन्यपि तानि क्रियन्त इति। अतो जटी ब्रह्मदत्त इत्युच्यते। तत्सामीप्यात्, गङ्गायां घोषः। कूपे गर्गकुलम्। तत्साहचर्यात्। कुन्तान्प्रवेशय यष्टीः प्रवेशयेति। अथ वा पुनरस्तु तस्यामेव प्रष्ठशब्दः। ननु चोक्तं सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिरिति। नैष दोषः। गतिकारकोपपदानां कृद्भिः सह समासवचनम्। गतिकारकोपपदानां कृद्भिः सह समासो भवतीत्येषा परिभाषा कर्तव्या। कानि पुनरस्याः परिभाषायाः प्रयोजनानि। प्रयोजनं क्तादल्पाख्यायाम्। अभ्रलिप्ती। सूर्यविलिप्ती। सुबन्तानां समासः। तत्रान्तरङ्गत्वाट्टाप्। टापि कृते समासः। विलिप्ताशब्दः समस्येत तत्र क्तादल्पाख्यायामकारान्तादिति ङीष् न प्राप्नोति। जातेङीष्विधाने। जातेङीष्विधाने प्रयोजनम्। व्याघ्री। कच्छपी। सुबन्तानां समासः। तत्रान्तरङ्गत्वाट्टापि कृते समासः। घ्राशब्दः समस्येत। तत्र जातेरस्त्रीविष-

---

तु विवक्षायां तद्धितो न निवार्यते। कथं पुनरिति। भिन्नानामभेदाभावादिति प्रश्नः। चतुर्भिरिति। आरोप्यते ताद्रूप्यं न तु मुख्यमित्यर्थः। मञ्चा हसन्तीति। अत्र बालेषु मञ्चत्वारोपान्मञ्चशब्दप्रवृत्तिर्हसन्तीति पदान्तरप्रयोगाद्विज्ञायते। जटिनमिति। ब्रह्मदत्तवद्धर्मलाभात्तद्रूपारोपः। सिंहो माणवको गौर्वाहीक इत्यादावपि ताद्धर्म्यात्ताद्रूप्यारोपात्तच्छब्दप्रवृत्तिः। तदुक्तं हरिणा। गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते। अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थित इति। इह तु साहचर्यात् स्त्रियां प्रष्ठत्वारोपः। अथ वेति। संविधायीत्वात् प्रस्थाने कर्तृत्वं स्त्रियाः पुरुषगताया वा प्रस्थानक्रियायास्तस्यामारोपादिति भावः। अभ्रविलिप्तीति। अभ्रशब्दस्य तृतीयान्तस्य विलिप्ताशब्देन कर्तृकरणे कृतेति समासः। ततः करणपूर्वादिति वर्तमाने क्तादल्पाख्यायामिति ङीष् न प्राप्नोति। वचनसामर्थ्याट्टाबन्तादपि भविष्यतीति चेदत इत्यधिकारो बाध्येत। परिभाषा चान्यार्थावश्यं कर्तव्या। अथ वा वचनात् प्रातिपदिकाधिकारो बाध्येत ततश्च वाक्ये ङीष् प्रसज्येत। अभ्रैर्विलिप्ता द्यौरिति। व्याघ्रीति व्याङ्पूर्वाज्जिघ्रतेर्घ्रः संज्ञायां प्रतिषेध इति यस्य प्रतिषेधादातश्चोपसर्गे इति कप्रत्ययः। तत्र घ्रशब्दमात्रं जातौ न वर्तत इति

याद्योपधादकारान्तादिति ङीष् प्राप्नोति। समासान्तस्य णत्वे। समासान्तस्यणत्वे प्रयोजनं, वक्ष्यति। प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थमिति। तस्मिन् क्रियमाणे माषवापिणी। व्रीहिवापिणी। सुबन्तानां समासः तत्रान्तरङ्गत्वान्नकारान्तत्वान्ङीप्। ङीपि कृते समासः। वापिनीशब्दः समस्येत। तत्र समासान्तस्येति णत्वं न प्राप्नोति। कृदन्तात्तद्धिते वृद्धिस्वरौ च*। कृदन्तात्तद्धितेवृद्धिस्वरौच प्रयोजनम्। सांकूटिनम्। व्यावक्रोशी। अत्रावयवादुत्पत्तिः प्रसज्येत। गतिककारकोपपदानां कृद्भिः सह समासो भवतीति न दोषो भवति। सत्यामप्येतस्यां परिभाषायामवयवादुत्पत्तिः प्राप्नोति। किं कारणम्। प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति संघातादुत्पत्तिर्भविष्यति। यदि तर्ह्येषा परिभाषास्ति। नैतदस्याः परिभाषायाः प्रयोजनं भवति। एतयैव सिद्धम्। न सिध्यति। किं कारणम्। अप्रातिपदिकत्वात्।

---

टावेव स्यात्। ङीषस्तु सूकर्यादिरवकाशः। समासान्तग्रहणमिति। समासस्य प्रातिपदिकस्य योऽन्त्यो नकारस्तस्य णत्वमित्यर्थः। तत्र माषान्वपत्यभीक्ष्णमिति बहुलमाभीक्ष्ण्ये इति णिनौ कृते ऋन्नेभ्य इति ङीपि कृते सुबन्तेन यदि समासः स्यात्तदा समासस्यान्त इकारो न तु नकार इति णत्वं न स्यात् माषवापिणइत्यादेरेव तु स्यात्। सांकूटिनमिति। अभिविधौ भाव इनुणितीनुण्प्रत्ययः। तत्र कूटिनित्येतस्माच्छब्दात्समर्थाद्विभक्तिश्च प्राप्नोति अणिनुण इत्यण्प्रत्ययश्च तत्र स्वार्थिकत्वादन्तरङ्गत्वादण्प्रत्ययः स्यात्। ततश्च कूटिनित्यस्यैवाङ्गत्वादादिवृद्धिः स्यात्। प्राक् सुबुत्पत्तेः समासेऽन्तरङ्गत्वात् पूर्वं समासः। अण्प्रत्ययो हि प्रातिपदिकविशेषापेक्षत्वाद्बहिरङ्गः। तत्र संकूटिनित्यस्मात्समासप्रातिपदिकादण्प्रत्यये सतीष्टं सिध्यति। व्यावक्रोशीति। कर्मव्यतिहारे णच् स्त्रियामिति णच्। णच स्त्रियामित्यञ्। सत्यामपीति। णच इनुण इति प्रत्ययग्रहणपरिभाषोपस्थानात् कूटिनित्यादेरेवावयवात्तद्धितोत्पत्तिप्रसङ्ग इत्यर्थः। कृद्ग्रहण इति। अनया परिभाषया प्रत्ययग्रहणपरिभाषा बाध्यत इत्यर्थः। नैतदस्या इति। गतिकारकोपपदानामित्यस्याः सांकूटिनमित्यादि न प्रयोजनम्। अकृत एव समासे कृद्ग्रहणपरिभाषया संघातात्तद्धितोत्पत्तिर्भविष्यतीति भावः। अप्रातिपदिकत्वादिति णचः स्त्रियामञ् अणिनुण इत्यत्र प्रातिपदिकाधिकारात् णजन्तादिनुणन्ताच्च प्रातिपदिकात्तद्धितो विधीयते। तत्र कृद्ग्रहणपरिभाषया णजिनुणन्तत्वं सिध्यति न तु प्रातिपदिकत्वम्। तत्र

कृत्त्वात् प्रातिपदिकसंज्ञा भविष्यति। ननु चेदानीं प्रातिपदिकसंज्ञायामप्येतया परिभाषया शक्यमिहोपस्थातुम्। नेत्याह। इह हि मूलकेनोपदंशं भुङ्क्ते इति वाक्ये ऽपि लुक् प्रसज्येत। स्वरे च दोषः स्यात्। प्रकारकः प्रकरणम्। गतिकारकोपपदात् कृदन्तमुत्तरपदं प्रकृतिस्वरं भवतीत्येष स्वरो न स्यात्। नैष दोषः। द्वे अत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि। तत्रावयवस्य या प्रातिपदिकसंज्ञा तदाश्रयः स्वरो भविष्यति। इहापि तर्हि सांकूटिनं व्यावक्रोशीति द्वे अत्रापि प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि तत्रावयवस्य या प्रातिपदिकसंज्ञा तदाश्रया अवयवादुत्पत्तिःप्राप्नोति। अवयवादुत्पत्तौ सत्यां को दोषः। कौम्भकारेयो न सिध्य

---

समासग्रहणेन नियमार्थेन संघातस्य प्रातिपदिकसंज्ञानिषेधात्संघातात्तद्धितो न स्यादित्यर्थः। ननु चेति। कृतद्धितसमासाश्चेत्यत्रापि कृद्ग्रहणे कृद्ग्रहणपरिभाषया संकूटिन्नित्यस्य विनापि प्राक्सुबुत्पत्तेः समासेन प्रातिपदिकसंज्ञा भविष्यति तन्निबन्धनश्च तद्धित इति भावः। मूलकेनोपदंशमिति। उपदंशस्तृतीयायामिति णमुल्। अत्र यदि सगतिकारकस्य कृदन्तस्य प्रातिपदिकसंज्ञा स्यात्। तदा प्रातिपदिकान्तर्वर्तित्वात्सुब्लुक् प्रसज्येत। यद्येवं तृतीयाप्रभृतीन्यन्यतरस्यामिति विकल्पेन समासविधानस्य किं प्रयोजनमिति चेत्। दधि उपदंशं भुङ्क्त इत्यत्र पक्षे प्रकृतिभावः। अन्यथाऽसत्यस्मिन्विकल्पविधाने अमैवाव्ययेनेति नित्यसमासः स्यात्। ततश्च सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः इति प्रकृतिभावः प्रतिषिध्येत। प्रकारक इति। अत्र समुदायस्य प्रातिपदिकसंज्ञायां सत्यां सुबुत्पत्तौ पदव्यपदेशोऽस्ति न तूत्तरपदव्यपदेशस्तत्र समुदायस्य कृदन्तव्यपदेशे तदन्तर्भावाद्गतेस्तस्मात् कृदन्तमुत्तरपदं न भवतीति कारकशब्दस्य प्रकृतिस्वरो न स्यात्। वचनं किमर्थमिति चेत्। उपपदार्थं स्याद् अमावास्येत्यादौ। गतिकारकग्रहणं तूत्तरार्थं स्यात्। अथवा वचनस्याप्रातिपदिकत्वलक्षणमप्रामाण्यं स्यात्। द्वे इति। गतिकारकपूर्वस्यापीत्यत्रापिशब्दात्कारकशब्दस्यापि प्रत्ययान्तस्य प्रातिपदिकसंज्ञाप्रकारकशब्दस्यापि समुदायस्येत्यर्थः। तदाश्रय इति। कारकशब्दस्य प्रातिपदिकसंज्ञायां सत्यां गतिकारकोपपदानामित्येतदनाश्रयणे सुप्युत्पन्ने समासे कृतेपिग्रहणात्कारकशब्दस्यापि कृदन्तत्वाद् गतेरुत्तरत्वात्स्वरो भविष्यतीत्यर्थः। कौम्भकारेय इति। एतच्चोपलक्षणम्। सांकूटिनंव्यावक्रोशीत्यपि न सिध्यति। समुदायावयवसन्निधाने द्विवचनवत्समुदाय एव प्रकृतित्वेनाश्रयिष्यत इति चेत्प्रकारके दोषः स्यात्। समुदायस्य कृदन्तत्वे तदन्तर्भावाद् गतेस्तदाश्रयः स्वरो न स्यात्। किञ्च समुदाये विरते अवयवा अ-

-ति । अवयवस्य वृद्धिस्वरौ स्याताम् । तस्मात्प्रयोजनमेवैतदस्याः प-
रिभाषायाः उभाभ्यां तु खलु सिध्यति । अवदानायां ङीप्प्रसङ्गः ।

---

पि द्विरुक्ता भवन्तीति पृथग्द्विर्वचनं न प्रयुज्यते । इह तु समुदायादुत्पत्तौ तस्यैवाङ्गसं-
ज्ञायां तन्निबन्धनानि कार्याणि प्रवर्तन्ते नावयवानामित्यवयवादपि प्रत्ययोत्पत्तिप्रसङ्गः ।
तत्र कुम्भकारशब्दे यदिकारशब्दस्यापि प्रातिपदिकसंज्ञासमुदायस्यापि गतिकारकोप-
पदानामित्येतच्च नाश्रीयते तदा कारशब्दात्प्रातिपदिकान् ङीपि कृते कारीशब्दस्य स्त्री
प्रत्ययान्तत्वात्तत एव ढकि सति तस्यैवादिवृद्धिः स्यात् । ननु चानुपसर्जनादिति सूत्रं प्र-
धानेन तदन्तविध्यर्थमित्युक्तम् । तत्र कारशब्दान्तात् ङीब् भविष्यति तत्कथमुक्तं कौम्भ-
कारेयो न सिध्यतीति । नैष दोषः । गतिकारकोपपदानामित्येतद्वचनमत्र प्रदेशे आ-
श्रितम् । अस्मिंश्चासति उपपदस्य सुबन्तेन सह समासेन भाव्यम् । तत्रान्तरङ्गत्वात्कार-
शब्दादेव ङीपि सति सुबुत्पत्तौ सत्यां समासः प्रसज्येत । ततश्च कारीशब्दादेव ढक् स्या-
त् । यद्यपि स्त्रीप्रत्यये तदादिनियमो नास्ति तथापि स्त्रीभ्यो ढगिति समुदायाड्ढकं
बाधित्वाद्यच इति परत्वादन्तरङ्गत्वाद्वाऽवयवाड्ढक् प्रसज्येत । तस्मात् स्थितमेतत् कृत्तद्धि-
तसमासाश्चेत्यत्र कृद्ग्रहणपरिभाषा नोपतिष्ठते । यस्मादप्रत्यय इत्यस्य प्रतिषेधस्य बा-
धनार्थं तत्र कृद्ग्रहणम् । परिभाषोपस्थाने तु सति मूलकेनोपदंशं भुङ्क्ते इति वाक्य-
स्यापि स्यात् । तथा च समासग्रहणाद्यो नियमः स बाध्येत । मध्ये ऽपवादा इति न्याया-
च्च । अप्रत्यय इत्ययं निषेधः कृद्ग्रहणेन बाध्येते । न तु समासग्रहणकृतो नियमः । त-
श्च परत्वात्समासग्रहणेन गतिकारकपूर्वस्यापि कृदन्तस्य वाक्यस्य प्रातिपदिकसंज्ञाया नि-
वर्तनात् । यस्मात्कृद्विहितस्तदादेरेव कृदन्तस्य प्रातिपदिकसंज्ञाऽवतिष्ठते । तस्मादिति।
गतिकारकोपपदानामित्यस्याः सांकूटिनमित्यादिप्रयोजनमित्यर्थः । उभाभ्यामिति। सां-
कूटिनादि परिभाषाद्वयेन सिध्यति न केवलया कृद्ग्रहणपरिभाषयेत्यर्थः । ननु च ग-
तिकारकपूर्वस्यापीत्यपिग्रहणात् कूटिनित्यस्यापि इनुणन्तत्वादण् प्राप्नोति । नैष दोषः।
उभयोरपीनुणन्तत्वे प्रातिपदिकत्वे चार्थविच्छेदाभावादवयवविच्छेदे प्रमाणाभावात्समु-
दायादेवोत्पत्तिर्भवति । असत्यां त्वेकतरस्यां परिभाषायामवयवस्यैवेनुणन्तत्वात्प्रातिपदि-
कत्वात्तत एव तद्धितोत्पत्तिः प्रसज्येत । गतिकारकोपपदात् कृदित्यत्र तु गतिकारकयो-
र्भेदेनोपादानात् निमित्तभावाद्यथासंभवं क्वचित् केवलस्य कृदन्तस्य क्वचित् गतिकारक-
पूर्वस्य गत्यादिभ्य उत्तरस्य स्वरो भवति । तदेव गतिकारकोपपदानामिति वचनात् प्रा-
क् सुबुत्पत्तेः समासे प्रष्ठशब्दोऽकारान्तः । पुंयोगात् प्रख्यानासङ्गात् पुंस्कर्टकप्रख्यान-
क्रियायां संविधात्रीत्वाद्वा कर्टत्वात् स्त्रियां वर्तते पुंसो वाचकश्चेति प्रष्ठीत्युदाहरणं भ-
वतीति । अवदातायामिति । प्राक्सुबुत्पत्तेः समास इत्येतत्प्रसङ्गे नात्रेदमुक्तं वर्णादनुदा-

अवदातायां ङीप् प्राप्नोति। अवदाता ब्राह्मणी। वर्णादनुदात्तात्तो पधात्तो न इति। नैष वर्णवाची। किं तर्हि विशुद्धवाची। आतश्च विशुद्धवाची। एवं ह्याह। त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च। एतच्छिवं विजानीहि ब्राह्मणाग्र्यस्य लक्षणमिति ॥१॥ सूर्याद्देवतायां चाब् वक्तव्यः। सूर्यस्य स्त्री सूर्या। देवतायामिति किमर्थम्। सूरी

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्॥ ४९ ॥ हिमारण्ययोर्महत्त्वे *। हिमारण्ययोर्महत्त्व इति वक्तव्यम्। महद्धिमं हिमानी। महदरण्यमरण्यानी। यवाद्दोषे *। यवाद्दोष इति वक्तव्यम्। दुष्टो यवो यवानी। यवनाल्लिप्याम् *। यवनाल्लिप्यामिति वक्तव्यम्। यवनानी लिपिः। उपाध्यायमातुलाभ्यां वा *। उपाध्यायमातुलाभ्यां वेति वक्तव्यम्। उपाध्यायी। उपाध्यायानी। मातुली। मातुलानी। मुद्गलाच्छन्दसि लिच्च *। मुद्गलाच्छन्दसि लिच्चेति वक्तव्यम्। रथीरभून्मुद्गलानी। आचार्यादणत्वं च *। आचार्यादणत्वं चेति वक्तव्यम्। आचार्यानी। अर्यक्षत्रियाभ्यां वा *। अर्यक्षत्रियाभ्यांवेति वक्तव्यम्। अर्या अर्याणी। क्षत्रिया क्षत्रियाणी ॥

क्रीतात् करणपूर्वात् ॥ ५० ॥ करणपूर्वादिति किमर्थम्। गवा क्रीता। अश्वेन क्रीता। करणपूर्वादित्युच्यमाने ऽप्यत्र प्राप्नोति। एषोपि करणपूर्वः क्रीतशब्दः। विभक्त्या व्यवहितत्वान्न भविष्यति।

---

त्तादित्यत्र तु वक्तव्यम्। अवदातशब्दो गौरवाचीति मन्यते। विशुद्धवाचीति। वर्णान्तरव्यतिकीर्णेपि विशुद्धिमुपादाय प्रयुज्यते। सूरीति। सूर्यतिष्येति यलोपः ॥

इन्द्रवरुण। महद्धिममिति। महत्वयोगे हिमारण्ययोः स्त्रीत्वम्। यवानीति। जात्यन्तरमेवाभिधीयते। दोषस्तु यवत्वजातेरभावे तदाकारानुकृतिमात्रमित्याहुः। यवनानीति। तस्येदमित्यणो बाधको ङीष्। उपाध्यायेति। उपाध्यायस्याप्राप्ते मातुलस्य तु नित्यं प्राप्ते आनुग्विकल्प्यते। मुद्गलानीति। ङीषो लित्वादानुगाकारस्य लित्स्वरः। अर्येति। केचित्तु पुंयोग एवेच्छन्ति। अन्ये तु स्वार्थ एवेच्छन्ति। पुंयोगे तु अर्यी क्षत्रियीत्येव भवितव्यम् ॥

क्रीतात्। करणपूर्वादिति किमर्थमिति। क्रियमाणे ऽपि करणपूर्वग्रहणे पूर्वशब्दस्य व्यवस्थावाचित्वादनिष्टप्रसङ्ग इति पृच्छति। विभक्त्येति। कर्मादीनां द्योतिका विभ-

यदि तर्हि विभक्तिरपि व्यवधायिका भविष्यति। मनसाक्रीतीति न सिध्यति। एवं तर्हि नैवं विज्ञायते करणमस्मात् क्रीतशब्दात् पूर्वं सोयं करणपूर्वस्तस्मात्करणपूर्वात् क्रीतशब्दादनुपसर्जनादिति। कथं तर्हि। करणमस्मिन्प्रातिपदिके पूर्वं तदिदं करणपूर्वं तस्मात् करणपूर्वात्प्रातिपदिकात्क्रीतान्तादनुपसर्जनादिति॥

बहुव्रीहेश्चान्तोदात्तात्॥ ५२॥ अन्तोदात्ते जातप्रतिषेधः *। अन्तोदात्ताज्जातस्य प्रतिषेधो वक्तव्यः। दन्तजाता स्तनजाता। पाणिगृहीत्यादीनां विशेषे *। पाणिगृहीत्यादीनां विशेष इति वक्तव्यम्। पाणिगृहीती भार्या चेत्। यस्या हि यथाकथं चित्पाणिर्गृह्यते पाणिगृहीता सा भवति। बहुलं तणि *। बहुलं तणीति वक्तव्यम्। किमिदं तणीति। संज्ञाछन्दसोर्ग्रहणम्। किंप्रयोजनम्। प्रवद्धविलून्याद्यर्थम्। प्रवद्धविलूनी। प्रवद्धविलूना। अन्तोदात्ताद-बहुनञ्सुकालसुखादिपूर्वात्*। अन्तोदात्तादबहुनञ् सुकालसुखादिपूर्वादिति वक्तव्यम्। बहु। बहुकृता। बहु। नञ्। अकृता। नञ्। सु। सुकृता। सु। काल। मासजाता। वत्सरजाता। काल। सुखादि। सुखजाता। दुःखजाता। चिप्रजाता। सुखादि। जातिपूर्वाद्वा *। अथ वा जातिपूर्वादिति वक्तव्यम्॥

---

तस्य इति दर्शने इदमुच्यते। अन्यथा विभक्तेः करणाभिधाने व्यवधानाभावः। मनसाक्रीतीति। मनसः संज्ञायामिति तृतीयाया अलुक्। करणमस्मिन्निति पूर्वशब्दोवयववचनः समासप्रातिपदिकं चान्यपदार्थस्तेन वाक्ये ङीष् भविष्यतीत्यर्थः॥

बहुव्रीहेः। दन्तजातेति। वा जात इत्यन्तोदात्तत्वं वा भवति। पाणिगृहीतीति। यस्या अग्निसाक्षिपूर्वकं पाणिग्रहणं कृतं साभिधीयते। प्रवद्धविलूनीति। प्रवद्धं विलूनं यस्या इति बहुव्रीहिः। अपरे तु कर्मधारयं कुर्वन्ति। बहुकृतेति। बहूनि कृतान्यनयेति. बहुव्रीहिः। बहोर्नञ्वदुत्तरपदभूम्नीत्यन्तोदात्तत्वम्। अकृता सुकृतेत्यत्र नञ्सुभ्यामिति। मासजातेत्यादौ जातिकालसुखादिभ्य इति। सुखादयः सुखादिभ्यः कर्तृवेदनायामिति क्यङर्थंगणे पठिता इह गृह्यन्ते। अथ वेति। बहुव्रीहावन्तोदात्तनिमित्तेष्वन्येषु निषिद्धेषु जातिरेवान्तोदात्तनिमित्तं ज्ञान्तस्यावशिष्यत इति जातिग्रहणमेवात्र कर्तव्यमित्यर्थः॥

**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** ॥ ४४ ॥ स्वाङ्गाच्चोपसर्जनादित्युच्यते। किं स्वाङ्गं नाम। अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्॥ अतत्स्थं तत्र दृष्टं च तस्य चेत्तत्तथायुतम्॥१॥ अप्राणिनोऽपि स्वाङ्गम्। अद्रवमिति किमर्थम्। बहुलोहिता। नैतदस्ति। बह्वचो नेति प्रतिषेधो भविष्यति। इदं तर्हि। बहुकफा। मूर्तिमदिति किमर्थम्। बहुछिः बहुबुमनाः। नैतदस्ति। अत इति वर्तते। इदं तर्हि बहुज्ञाना। प्राणिस्थमिति किमर्थम्। श्लक्ष्णमुखा शाला। अविकारजमिति किमर्थम्। बहुगडुः बहुपिटका। नैतदस्ति। इह तावद्बहुगडुरिति। अत इत्यनुवर्तते बहुपिटकेति बह्वचो नेति प्रतिषेधो भविष्यति। इदं तर्हि। बहुशोफा। अतत्स्थं तत्र दृष्टं च। अप्राणिस्थं प्राणिनि दृष्टं च स्वाङ्गसंज्ञं भवति। दीर्घकेशी रथ्या। तस्य चेत्तत्तथायुतम्। अप्राणिनोपिस्वाङ्गसंज्ञं भवतीति। दीर्घनासिकी अर्चा। तुङ्गनासिकी अर्चेति। अथोपसर्जनग्रहणं किमर्थम्। इह मा भूत्। शिखा। उपसर्जनग्रहणमनर्थकं बहुव्रीह्यधिकारात्*। उपसर्जनग्रहणमनर्थकम्। किं कारणम्। बहुव्रीह्यधिकारात्। बहुव्रीहेरिति प्रकृतमनुवर्त्तते। क्व प्रकृतम्। बहुव्रीहेश्चान्तोदात्तादिति बह्वजर्थं तर्हि उपसर्जनग्रहणं कर्तव्यम्। बह्वचो नेति प्रतिषेधं वक्ष्यति तद्बह्वज्ग्रहणमुपसर्जनविशेषणं यथा विज्ञायेत। बह्वच उपसर्जनान्नेति। अथाक्रियमाणे उपसर्जनग्रहणे कस्य बह्वज्ग्रहणं विशेषणं स्यात्। बहुव्रीहेरिति वर्तते। बहुव्रीहिविशेषणं विज्ञायेत। अस्तिचेदानीं

---

स्वाङ्गाच्चो। किंस्वाङ्गमिति। किं स्वमङ्गं स्वाङ्गमाहोस्विल्लक्षणान्तरप्रयुक्तमिति प्रश्नः। अद्रवमिति। द्रवतीति द्रवम्। ततोन्यदद्रवम्। मूर्तिः काठिन्यम्। अथ वा सर्वगतद्रव्यपरिमाणं सा यस्यास्ति तन् मूर्तिमत्। अविकारजमिति। विकारो वातादिवैषम्यम्। तस्माद्यन्न जातमित्यर्थः। तथाप्राणिस्थमपि यत् पूर्वं प्राणिनि दृष्टं तदपि स्वाङ्गम्। यथा रथ्यापतिताः केशाः। तस्य चेदिति। अप्राणिनोपि सुखं स्वाङ्गं भवति। यदि यथा प्राणिना तत्संबद्धं तथं वाप्राणिनापि। अप्राणिनोपीति। तस्य चेत्तत्तथायुतमित्यस्य सामर्थ्यलभ्योऽयमध्याहारः। बहुलोहितेति। लोहितं रुधिरमुच्यते। नैतदस्तीति। ङीषभावार्थं लोहितस्यास्वाङ्गत्वप्रतिपादनं नोपयुज्यते। स्वाङ्गे ध्रुवे। उपसर्गात् स्वाङ्गं ध्रुवमपर्श्वित्वादिकार्याभावार्थं तू पयुज्यते एव। अस्ति चेदानीमिति। अनेकपदावयवत्वाद-

कश्चिदबह्वज् बहुव्रीहिः। यदर्थो विधिः स्यात्। अस्तीत्याह। स्वडा स्वडीति। बह्वजर्थमिति चेत्स्वाङ्गग्रहणात्सिद्धम्*। स्वाङ्गग्रहणं क्रियते। तदबह्वज्ग्रहणेन विशेषयिष्यामः स्वाङ्गाद्बह्वचो नेति। एवं तर्हि अन्तोदात्तादिति वर्तते। अनन्तो दात्तार्थोयमारम्भः। अनन्तो दात्तार्थमिति चेत् सहादिक्रतत्वात्सिद्धम्। यदयं सहनञ्विद्यमानपूर्वाच्चेति प्रतिषेधं शास्ति तज् ज्ञापयत्याचार्यः अनन्तोदात्तादपि भवतीति। स्वाङ्गसमुदायप्रतिषेधार्थं तु *। स्वाङ्गसमुदायप्रतिषेधार्थं तर्ह्युपसर्जनग्रहणं कर्तव्यम्। स्वाङ्गाद्यथास्यात् स्वाङ्गसमुदायान्मा भूत्। कल्याणपाणिपादा। अथ क्रियमाणेप्युपसर्जनग्रहणे कस्मादेवात्र न भवति स्वाङ्गं ह्येतदुपसर्जनम्। नस्वाङ्गसमुदायः स्वाङ्गग्रहणेन गृह्यते। तद्यथा। न जनपदसमुदायो जनपदग्रहणेन गृह्यते। काशिकोशलीया इति। जनपदतदवध्योश्चेति वुञ् न भवति। एतदपि नास्ति प्रयोजनम्। अस्वाङ्गपूर्वादिति वर्तते। तेन स्वाङ्गं विशेषयिष्यामः। अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं तदन्ताद्बहुव्रीहेरिति। यच्चात्रास्वाङ्गपूर्वपदात्परं स्वाङ्गं न तदन्तो बहुव्रीहिः। यदन्तश्च बहुव्रीहिर्नासौ ऽस्वाङ्गपूर्वपदात्परं स्वाङ्गम्। ननु च तत्पूर्वस्मिन्योगे बहुव्रीहिविशेषणम्। नेत्याह। पूर्वपदविशेषणं तत्।

---

बह्वच्त्वं बहुव्रीहेर्न संभवति। तत्र विधिसामर्थ्याद्बह्वज्ग्रहणमुत्तरपदविशेषणं भविष्यतीति मत्वा प्रश्नः। स्वडेति। स्वडो वृश्चिकावयवविशेषः। अनन्तोदात्तार्थ इति। बहुव्रीह्यधिकारात् स्वाङ्गस्योपसर्जनत्वे लब्धे पुनरुपसर्जनग्रहण मुपसर्जनमात्रपरिग्रहार्थमित्यनन्तोदात्तादपि ङीब् भविष्यतीति भावः। सहादिक्रतत्वादिति। सहादीनां क्रतः सहादिक्रतः प्रतिषेधस्तद्भावः सहादिक्रतत्वं तस्मादित्यर्थः। सहादिपूर्वस्य हि बहुव्रीहेः पूर्वपदप्रकृतिस्वरे शेषनिघाते च नास्त्यन्तोदात्तत्वमिति प्रतिषेधं न विदध्यादिति भावः। कल्याणपाणिपादेति। पाणी च पादौ च पाणिपादं तत्कल्याणं यस्या इति बहुव्रीहिः। अत्र पाणिपादशब्द उपसर्जनम्। स च स्वाङ्गससमुदायवाची न तु स्वाङ्गवाची। यस्तु स्वाङ्गवाची पादशब्दः स उपसर्जनं न भवतीति ङीष् न भवति। असति तूपसर्जनग्रहणे पादशब्देन स्वाङ्गवाचिना स्वाङ्गान्तो बहुव्रीहिर्भवतीति ङीष् स्यात्। काशिकोशलीया इति। काशयश्च कोशलाश्चेति द्वन्द्वस्तत्रभवा इत्यवृद्धादपीतिवुञ् न भवति द्वन्द्वत्वाच्च

न स्वाङ्गमस्वाङ्गम्। पूर्वं पदं पूर्वपदम्। अस्वाङ्गं पूर्वपदमस्वाङ्गपूर्वपदमस्वाङ्गपूर्वपदादिति। यद्येवं पूर्वस्मिन्योगे बहुव्रीहिरविशेषितो भवति बहुव्रीहिश्चविशेषितः। कथम्। क्तादिति वर्तते तेन बहुव्रीहिं विशेषयिष्यामः। अस्वाङ्गात् पूर्वपदात्परं यत् क्तान्तं तदन्त। इबहुव्रीहेरिति। इद तर्हि प्रयोजनम्। बहुव्रीहेरिति वर्तमाने उपसर्जनग्रहणमुपसर्जनमात्राद्यथा स्यात्। निष्केशी यूका। अतिकेशी मालेति॥

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ५५॥ नासिकादीनां विभाषायां पुच्छाच्च*। नासिकादीनां विभाषायां पुच्छाच्चेति वक्तव्यम्। कल्याणपुच्छी। कल्याणपुच्छा। कबरमणिविषशरेभ्यो नित्यम्। कबरमणिविषशरेभ्यो नित्यमिति वक्तव्यम्। कबरपुच्छी। कबर। मणिपुच्छी। मणि। विषपुच्छी। विष। शरपुच्छी। शर। उपमानात्पक्षाच्च पुच्छाच्च*। उपमानात्पक्षात्पुच्छाच्चेति वक्तव्यम्। उलूकपक्षी शाला उलूकपुच्छी सेनेति। नासिकादिभ्यो विभाषायां सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन*। नासिकादिभ्यो विभाषायांसहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधोभवति विप्रतिषेधेनेतिवक्तव्यम्। नासिकादिभ्यो विभाषाया अवकाशः। कल्याणनासिको कल्याणनासिका। सहनञ्विद्यमानपूर्वलक्षणस्य प्रतिषेधस्यावकाशः। समुखा अमुखा विद्यमानमुखेति। इहोभयं प्राप्नोति। सनासिका अनासिका विद्यमाननासिकेति। सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो भवति विप्रतिषेधेन। नैष युक्तोविप्रतिषेधः। अयं विधिः। स प्रतिषेधः। विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः। अयमपि विधिः न मृदूनामिव कार्पासानां क्वतः प्रतिषेधविषये आरभ्यते। स यथैव बह्वज्लक्षणं च संयोगोपधलक्षणं च प्रतिषेधं बाधते। एवं सहनञ्विद्यमानपूर्वलक्षणमपि बाधेत।

---

क्त एव भवति। न स्वाङ्गमिति। पर्युदासाश्रयेण तत्सदृशं शब्दान्तरमर्थान्तरवाचि गृह्यत इत्यर्थः। निष्केशीति। केशेभ्यो निष्क्रान्तेति प्रादिसमासस्तत्पुरुषः॥

नासिकोदर। कबरपुच्छीति। कबरशब्देन वर्णविशेषोभिधीयते। विधिप्रतिषेधयोरिति। विङ्कृतसर्म: प्रतिषेधस्त्वपवाद इति तुल्यबलत्वाभावादस्या अपि प्राप्तेः सहादिलक्षणेनैव प्रतिषेधेन भाव्यमित्यर्थः। न मृदूनामिति। मृदुभिः कार्पासैः क्वतः पटो मृ-

का तर्हि गतिः। इह तावन्नासिकोदर इति बह्वज्लक्षणश्च प्रतिषेधः प्राप्नोति। सहनञ्विद्यमानपूर्वलक्षणश्च। पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते न परान् इत्येवमियं विभाषा बह्वज्लक्षणं प्रतिषेधं बाधिष्यते। सहनञ्विद्यमानलक्षणं न बाधिष्यते। ओष्ठजङ्घादन्तकर्णशृङ्गाच्चेति संयोगोपधलक्षणश्च प्रतिषेधः प्राप्नोति। सहनञ्विद्यमानपूर्वलक्षणश्च। मध्ये ऽपवादाः पूर्वान्विधीन् बाधन्त इत्येवमियं विभाषा संयोगोपधलक्षणं प्रतिषेधं बाधिष्यते। सहनञ्विद्यमानपूर्वलक्षणं न बाधिष्यते॥

दिक्पूर्वपदान्ङीप्॥ ६०॥ दिक्पूर्वपदान् ङीषोनुदात्तत्वम्*। दिक्पूर्वपदान् ङीषो ऽनुदात्तत्वं वक्तव्यम्। प्राङ्मुखी प्रत्यङ्मुखी ङीब्विधाने ह्यन्यत्रापि ङीप्विषयान् ङीप्प्रसङ्गः *। ङीब्विधाने हि सति अन्यत्रापि ङीप्विषयान् ङीप् प्राप्नोति। प्राग्गुल्फा। प्रत्यग्ललाटा। ननु चैते विशेषा अनुवर्तेरन्। असंयोगोपधाद्बह्वचोनेति। यद्यप्येते विशेषा अनुवर्तेरन् संयोगोपधाद्बह्वचोनेति। एवमपि दिक्पूर्वपदान् ङीपा मुक्ते ङीष् प्रसज्येत। नैष दोषः। उक्तमेतत्। यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गो न भवतीति। अथ वा ङीष आदेशो ङीप् करिष्यते तत्तर्हि ङीषो ग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। अन्यतोङीषिति। तर्हि प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। दिक्पूर्वपदादित्येषा पञ्चमी ङीषिति प्रथमायाः षष्ठीमिह कल्पयिष्यति तस्मादित्युत्तरस्येति। प्रत्ययविधिरयम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भव-

---

दुरेव भवति। अयं तु विधिः प्रतिषेधापवादत्वाद्बलवानित्यर्थः। का तर्हीति। विधेरपि बलवत्वे विप्रतिषेधाभाव इति मन्यते। इदानीं यथा विप्रतिषेधोपपत्तिस्तथा दर्शयति। इह तावदिति॥

दिक्पूर्व। अन्यत्रापीति। यत्रापि प्रतिषिद्धो ङीपित्यर्थः। असंयोगोपधादित्यादिकस्तु प्रतिषेधोनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ङीष एव भवति नानेन विधीयमानस्य ङीपो लभ्यत इति भावः। एवमपीति। वेत्यनुवर्तनाद्विकल्पेन ङीब् विधीयते पक्षे प्राङ्मुखेत्यपि यथा स्यात्। तत्र ङीपा मुक्तेपक्षे ङीष् प्राप्नोतीत्यर्थः। उक्तमिति। पारेमध्ये ष-

न्ति। नायं प्रत्ययविधिः। विहितस्य प्रत्ययः प्रकृतस्यानुवर्तते॥

जातेरस्त्रीविषयादयोपधात्॥ ६३॥ जातेरित्युच्यते। का जातिर्नाम। आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह॥१॥ अपर आह। प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः। असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥२॥ गोत्रं च चरणानि च। कः पुनरेतयोर्जातिलक्षणयोर्विशेषः। यथा पूर्वं जातिलक्षणं तथा कुमारीभार्य इति भवितव्यम्। यथोत्तरं तथा कुमारभार्य इति भवितव्यम्। अथास्त्रीविषयादिति कथमिदं विज्ञायते समानायामाकृतौ यदस्त्रीविषयमिति। आहो स्वित् क्व-

---

च्चिदा वेत्यादौ। ततश्च ङीपा मुक्ते टाबेव भविष्यतीति नार्थः सूत्रभङ्गेनेत्यर्थः॥

जातेरस्त्री। का जातिरिति। लक्षणविप्रतिपत्त्या प्रश्नः। आकृतिग्रहणेति। गृह्यतेनेनेतिग्रहणमिति करणसामान्ये पदं संश्रियते तत्राकृतिशब्दसंनिधाने स्त्रीत्वप्रतिपत्तिर्बहिरङ्गत्वात् स्त्रीप्रत्ययनिमित्तं न भवति। आकृतिर्ग्रहणं यस्याः साकृतिग्रहणाऽवयवसंनिवेशविशेषव्यङ्ग्येत्यर्थः। एतेन गोत्वादिजातिर्लक्षिता। ब्राह्मणत्वादिस्तु न संगृहीता। ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वादिति तत्संग्रहायाह। लिङ्गानामिति। लिङ्गानि सर्वाणि भजतीति सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वाद्भजेर्ण्विरिति ण्विप्रत्ययः। लिङ्गानामिति कर्मषष्ठी। अप्राप्तप्रमाणार्थं चेदं वचनमिति तटादेः सर्वलिङ्गत्वेऽप्याकृतिग्रहणत्वाज् जातिरूपोपपत्तिः। उपदेशापेक्षं च लिङ्गानामिति। जातिलक्षणमिति ब्राह्मणत्वादिरेव लक्ष्यते। तेन देवदत्तेत्यसर्वलिङ्गत्वेऽपि जातिलक्षणङीषभावः। सकृदिति। अयं गौरिति सकृदुपदिष्टा जातिर्निग्रहीतुं निखेतुं पिण्डान्तरे शक्येत्यर्थः। गोत्रमिति। अपत्यमित्यर्थः। चरणशब्देन शाखाध्यायिनो गृह्यन्ते। गोत्रस्य सर्वलिङ्गत्वात् पृथगुपादानं नाडायनं नपुंसकमिति दर्शनात्। प्रादुर्भावेति। सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां या आविर्भावतिरोभावौ प्राप्नोति यावद्द्रव्यभाविनीत्यर्थः। गुणैर्युगपद्द्रव्येण संबध्यते यथा निर्गुणस्य द्रव्यस्योपलम्भो न भवत्येवं जातिरहितस्यापीत्यर्थः। बह्वर्थामिति सर्वव्यक्तिव्यापिनीमित्यर्थः। अथ शब्दोत्र विषयवाची। चरणानीति। चरणशब्दोध्ययनवचनः इह तूपचाराद्ध्येतृषु वर्तते। कुमारीभार्य इति। कौमारमयावद्द्रव्यभाव्यप्याकृतिग्रहणत्वाज्जातिरिति जातेश्चेति पुंवद्भावप्रतिषेधः। उत्तरे तु लक्षणे कौमारं जातिर्न भवति अयावद्द्रव्यभावित्वात्। पूर्वोक्तमेव लक्षणं भाष्यकारस्याभिमतमपर आहेत्यभिधानादित्याहुः। तथा च युवतितरेति ङ्याप्सूत्रे उदाहरणं ददौ तसिलादिष्विति प्राप्तस्य पुंवद्भावस्य जातेश्चेति निषेधात्। अथेति। यदा अस्त्रीविषयोऽस्मिन्नर्थे

चिदस्त्रीविषयमिति। किं चातः। यदि विज्ञायते समानायामाकृतौ यदस्त्रीविषयमिति। द्रोणी कुटी पात्रीति न सिध्यति। अथ विज्ञायते क्व चिदस्त्रीविषयमिति। माला बलाका अत्रापि प्राप्नोति। अस्तु क्व चिद्यदस्त्रीविषयमिति। कथं माला बलाकेति। अजादिषु पाठः करिष्यते। अयोपधादिति किमर्थम्। इभ्या क्षत्रिया। अल्पमिदमुच्यते अयोपधादिति। अकोपधादित्यपि च वक्तव्यम्। इहापि यथा स्यात्। चटका मूषिकेति। यद्यकोपधादित्युच्यते। काकी कोकी पिकी शुकी उलूकीति न सिध्यति। अस्तु तर्ह्ययोपधादित्येव। कथं चटका मूषिकेति। अजादिषु पाठः कर्तव्यः। योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधः *। योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधो भवतीति वक्तव्यम्। हय। हयी। गवय। गवयी। मुकय। मुकयी। मत्स्य। मत्सी। मनुष्य। मनुषी॥

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ॥ ६४॥ सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः *। सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेधो वक्तव्यः। सत्पुष्पा। प्राक्पुष्पा। प्रत्यक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा। संभस्त्राजिनशणपिण्डेभ्यः फलात् प्रतिषेधः *। संभस्त्राजिनशणपिण्डेभ्यः फलात्प्रतिषेधो वक्तव्यः सम्। संफला। भस्त्रा। भस्त्राफला। अजिन। अजिनफला। शण। शणफला। पिण्ड। पिण्डफला। श्वेताच्च *। श्वेताच्चेति वक्तव्यम्। श्वेतफला। त्रेश्च प्रतिषेधो वक्तव्यः। त्रिफला। मूलान्नञः *।

---

प्रवृत्तिनिमित्त इत्यन्यपदार्थः प्रवृत्तिनिमित्तमाश्रीयते तदा समानायामाकृतावस्त्रीविषयादित्येष पक्षो भवति। यदा तु प्रातिपदिकमन्यपदार्थत्वेनाश्रीयते तदा यत्र क्व चिदस्त्रीविषयादित्येष॰ पक्षः संपद्यते। द्रोणीति द्रोणशब्दः परिमाणविशेषे पुंल्लिङ्गो गवादन्यां तु स्त्रीलिङ्गः। मालेति। मलनं माल इति पुंल्लिङ्गः क्षेत्रविशेषे नपुंसकम्। स्रजि स्त्रीलिङ्गः। बलमाकायतीति बलाकशब्दो यौगिकः पुंसि दृश्यते। अस्त्विति। अन्य एव क्रियावाची जातिशब्दस्त्वन्य एवेति। परिहारान्तरमप्यत्र संभवति। गवयीति। गौरादिष्विदानींतनैर्गवयादयः प्रक्षिप्ता इति वार्त्तिकारम्भाद्विज्ञायते॥

पाककर्ण। सदच्काण्डेति। अञ्चतिः क्विबन्तो गृह्यते। अयमप्यजादिषु पाठ इदानींतनः। त्रिफलेति। त्रयाणां फलानां समाहार इति द्विगुः। ततो द्विगुलक्षणान्

मूलान्नञः प्रतिषेधो वक्तव्यः। अमूला ॥

इतो मनुष्यजातेः*। जातेरिति वर्तमाने पुनर्जातिग्रहणं किमर्थम्। अयोपधादिति वर्तते। योपधादपि यथा स्यात्। औदमेयी। इतो मनुष्यजातेरिञ उपसंख्यानम्*। इतो मनुष्यजातेरिञ उपसंख्यानं कर्तव्यम्। सौतंगमी मौनिचिती ॥

ऊङुतः ॥ ६६ ॥ किमर्थो ङकारः। विशेषणार्थः। क्व विशेषणार्थेनार्थः। नोङ्धात्वोरिति। नो धात्वोरितीयत्युच्यमाने यवाग्वा यवाग्वै इत्यत्रापि प्रसज्येत। अथ दीर्घोच्चारणं किमर्थम्। न उङुत इत्येवोच्येत। का रूपसिद्धिः।ब्रह्मबन्धूः। वीरबन्धूः। सवर्णदीर्घत्वेन सिद्धम्। न सिध्यति। गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वं प्रसज्येत। इह च ब्रह्मबन्धूच्छत्त्रम्। ब्रह्मबन्धूच्छत्त्रम्। षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वान्नित्यस्तुक् प्रसज्येत। इह च ब्रह्मबन्धूः। वीरबन्धूरिति। न द्यृतश्चेति कप् प्रसज्येत। नैष दोषः। यत्तावदुच्यते ब्रह्मबन्धूः वीरबन्धूरिति गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वं प्रसज्येतेति। उभयत आश्रयणे नान्तादिवत्। यदप्युच्यते इह च ब्रह्मबन्धूच्छत्त्रं ब्रह्मबन्धूच्छत्त्रं षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वान्नित्यस्तुक् प्रसज्येतेति। पदान्तपदाद्योरेकादेशोऽसिद्धः। न चैष पदान्तपदाद्योरेकादेशः। यदप्युच्यते ब्रह्मबन्धूः वीरबन्धूरिति न द्यृतश्चे-

---

ङीपः परत्वान् ङीष् प्राप्तो निषिध्यते। तन्निषेधसामर्थ्याच्च ङीबपि न भवति। तयोरत्र विशेषाभावात्।

इतो म। औदमेयीति। उदमेयस्यापत्यमत इञ्। सौतंगमीति। सुतंगमेन निर्वृत्तेति वुञ्छणादिसूत्रेण इञ्।

ऊङुतः। यवाग्वेति। वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषा नोपतिष्ठत इति भावः। गोस्त्रियोरिति। एकादेशस्यान्तवद्भावादुपसर्जनान्तं प्रातिपदिकं स्त्रीप्रत्ययान्तं भवतीति भावः। नद्यृत इति। नद्यन्तो बहुव्रीहिर्भवतीति भावः। दीर्घोच्चारणे तु तत्सामर्थ्यात् कब्ह्रस्वौ न प्रवर्तेते। उभयत इति। एकादेशस्यान्तवत्त्वेन प्रातिपदिकसंज्ञासंपाद्याऽन्यथाऽप्रत्यय इति प्रतिषेधप्रसङ्गः। आदिवत्त्वेन च स्त्रीप्रत्ययत्वं साध्यमित्येकोवयवो युगपद्द्वयोरित्येषा बुद्धिर्विरोधान्न प्रवर्तते। स्त्रीप्रत्ययविशेषणं चोपसर्जनम्। न चात्र स्त्रीप्रत्ययस्योपसर्जनत्वमिति ह्रस्वाऽप्रसङ्गः। पदान्तेति। अधीत्येत्यादावेवेत्यर्थः। तस्मादिति।

ति कप्प्रसज्येतेति । नद्यन्तानां यो बहुव्रीहिरित्येवं तत् । नचैष न-द्यन्तानां बहुव्रीहिः । शेषलक्षणस्तर्हि कप् तस्माद्दीर्घोच्चारणं कर्तव्य-म् । ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम्* । ऊङ्प्रकरणेऽप्राणि-जातेश्चारज्ज्वादीनामिति वक्तव्यम् । अलाबूः । कर्कन्धूः । अप्राणिजा-तेरिति किमर्थम् । कृकवाकुः । अरज्ज्वादीनामितिकिमर्थम् । र-ज्जुर्हनुः ।

संहितशफलक्षणवामादेश्च ॥७०॥ सहितसहाभ्यांच * । सहि-तसहाभ्यां चेति वक्तव्यम् । सहितोरूः । सहोरूः ॥

कद्रुकमण्डल्वोश्छन्दसि ॥ ७१ ॥ अत्यल्पमिदमुच्यते कद्रुकम-ण्डलुगुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् । कद्रूः । कमण्डलूः । गुग्गुलूः । मधूः । जतूः । पतयालूः ॥

यङश्चाप् ॥ ७४ ॥ षाच्च यञश्चाप् * । षाच्च यञश्चाब्वक्तव्यः । शार्कराक्ष्या । पौतिमाष्या । तत्रायमप्यर्थः । गौकक्ष्यशब्दः क्रौड्या-दिषु पठ्यते स न पठितव्यो भवति । यदि न पठ्यते । गौकक्षीपु-त्त्र इति संप्रसारणं न प्राप्नोति । इष्टमेवैतत्संगृहीतं गौकक्ष्यापुत्त्र इ-त्येव भवितव्यम् । एवं हि सौनागाः पठन्ति । ष्यङः संप्रसारणे गौ-कक्ष्याः प्रतिषेध इति ॥

---

उकारद्वयं दीर्घेण निर्दिष्टं तत्र द्वितीय उकारः परत्वाद्बाधकस्य शेषलक्षणस्य कपो बाध-नार्थं इति भावः । अलाबूरिति । ऊङि सति नोङ्धात्वोरिति विभक्तेरुदात्तत्वनिषेधो भवत्यलाब्वेति ।

संहित । सहितोरूरिति । नन्वेकदेशविकृतस्यानन्यत्वात्संहितशब्दग्रहणेन सहि-तशब्दस्य सिद्धं ग्रहणम् । एवं तर्हि विद्यमानं हितमस्य सहित इति यदा व्युत्पत्तिस्तदर्थं वार्तिकम् । सहोरूरिति । सहते इति सहौ ऊरू इतिव्युत्पत्तिः अथवाविद्यमानावूरू य-स्याः सासहोरूरित्यूर्वतिशयप्रतिपादनार्थः प्रयोगः ॥

कद्रु । गुग्गलुमधुजतूनांछन्दसिलिङ्गव्यत्ययेनस्त्रीत्वम् । पतयालुशब्दः स्पृहिगृहीत्या-लुजन्तः ॥

यङश्चाप् । शार्कराक्ष्येति । गर्गादियञन्ताएते ॥

आवस्याच्च ॥ ९५ ॥ अन उपधालोपिन ऊधसो ङीष् पूर्वविप्रतिषिद्धम् * । अन उपधालोपिनोऽन्यतरस्यामित्येतस्मादूधसो ङीष्भवति पूर्वविप्रतिषेधेन। अनउपधालोपिन इत्यस्यावकाशः। बहुराज्ञी बहुतक्ष्णी। ऊधसो ङीष्भवतीत्यस्यावकाशः। विभाषा ङीप्। यदा न ङीप् सोवकाशः। ङीप्प्रसङ्गे उभयं प्राप्नोति। ऊधसो ङीष्भवति पूर्वविप्रतिषेधेन। स तर्हि पूर्वविप्रतिषेधो वक्तव्यः। न वक्तव्यः। अन उपधालोपिनोन्यतरस्यामित्यत्र ऊधसो ङीष्भवतीत्येतदनुवर्तिष्यते आवस्थाद्यञः ष्फस्चापः * । आवस्थाद्यञः ष्फस्चापो भवति पूर्वविप्रतिषेधेन। आवस्थाद्यञस्चापोवकाशः। उदीचामावस्था। ष्फस्यावकाशः। अन्यानि यञन्तानि। गार्ग्यायणी। वात्स्यायनी। आवस्थशब्दात्प्राचामुभयं प्राप्नोति। आवस्थायनी। ष्फो भवति पूर्वविप्रतिषेधेन। आवस्थग्रहणेन नार्थः। यञः षफस्चापइत्येव। इदमपि सिद्धं भवति। शार्कराक्ष्यायणी पौतिमाष्यायणी। यञ्ग्रहणेनापि नार्थः। ष्फस्चाप इत्येव। गौकक्ष्यशब्दः क्रौड्यादिषु पठ्यते। इदमपि सिद्धं भवति गौकक्ष्यायणी। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। एवं वक्ष्यामि। प्राचां ष्फ स्तद्धितः सर्वत्र। क सर्वत्र। यत्र ष्फस्चान्यस्च प्राप्नोति। ष्फ एव तत्र भवतीति। ततो लोहितादिकतन्तेभ्यः। सर्वत्र। क सर्वत्र। प्राचां चोदीचां च ॥

अणिञोरनार्षयो र्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ९८ ॥ इह कस्मान्नभवति। दाक्षीस्ताक्षीति। आतिशायिकेनायन्तमपा निर्देशः क्रियते। सच त्रिप्रभृतिषु वर्तते। त्रिप्रभृतीनामभावात्। यद्येवम्। प्रक-

---

आव। अनइति। यद्यपीदमन्यत्र वक्तव्यं तथाप्यन्यार्थ पूर्वविप्रतिषेधप्रतिपादनप्रसङ्गेनात्रोक्तम्। गौकक्ष्यायणीति। गोकक्ष्यस्यापत्यं गोत्रं स्त्रीगर्गादित्वाद्यञ्। ततः ष्यङ्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद्यञन्तात् ष्फोविधीयमानः ष्यङन्तादपि भवतीति प्रक्रियाश्रयेणेदमुक्तम् ॥

अणिञोः। दाक्षीति। दक्षस्यापत्यं गोत्रं स्त्रीत्यत इञ्। उत्तमशब्दमव्युत्पन्नमन्त्यमात्रवचनमाश्रित्य प्रश्नः। स चेति। यत्रैकोऽनुद्गतः प्रथमोच्चारितत्वात्। त्रयस्तूद्गता ऊर्ध्वोच्चारिताः तत्रोत्तमशब्दः प्रयुज्यते। एवं चतुष्प्रभृतिषु प्रयुज्यते। उद्गतापेक्षया तु

र्षे चेत्तमं कृत्वा दाक्ष्या नोपोत्तमं गुरु। आम्विधिः केन ते नस्यात्प्रकर्षेयद्ययं तमः॥१॥ प्रकर्षे चेत्तमं कृत्वा दाक्ष्यानोपोत्तमं गुर्वित्युच्यते। आम्विधिः केन तव नस्यात्। अव्ययघादिति प्राप्नोति। प्रकर्षेयद्ययंतमः प्रकर्षे वर्तते उद्गतस्य प्रकर्षोयं गतशब्दोच लुप्यते। उन्गतस्यायं प्रकर्षः। गत शब्दस्याच लोपो भवति। नाव्ययार्थ प्रकर्षोस्ति धात्वर्थोच प्रकृष्यते। नामयव्ययार्थस्य प्रकर्षः। कस्य तर्हि। धात्वार्थस्य। उद्गतोपेचतं किं चित् त्रयाणांद्वौकिलोद्गतौ॥ अनुद्गतमपेक्ष्योत्र उद्गतमित्येतद्भवति। त्रयाणां द्वौ किलोद्गतौ। त्रयाणां किल द्वावुद्गतौ भवतः। चतुष्प्रभृतिकर्तव्योवाराह्यायांनसिध्यति। चतुष्प्रभृतिषुष्यङ्वक्तव्यः। वाराह्यायांनसिध्यति। वाराह्यायां न प्राप्नोति। किंकारणम्। चतुष्प्रभृतीनामभावात्। भिद्यतेस्य स्वरस्तेनविधिश्चामोनलक्ष्यते। भिद्यते खल्वस्यस्वरस्तेनातिशायनिकेन तमशब्देन उत्तमस्य। विधिश्चामो न क्वचि-

---

त्रिप्रभृतिष्वित्युक्तम्। प्रकर्षे चेति। चण् चेदर्थे वर्तते। क्व चित्तु प्रकर्षे चेदिति पाठः। यदि प्रकर्षप्रत्ययं कृत्वा दाक्ष्या गुरूपोत्तमं न भवतीत्युच्यते। तत उच्छब्दात्तमपि सति किमेत्तिङव्ययघादित्याम्प्रत्ययप्रसङ्गादुत्तमामिति प्राप्नोति। उद्गतस्येति। उच्छब्दोत्र समाधानक्रियावचनः क्रियाप्रकर्षद्वारको द्रव्यप्रकर्ष इत्यद्रव्यप्रकर्षइतिवचनादाम् न भवतीत्यर्थः। गतशब्दोत्रेति। उच्छब्देन गतार्थस्याभिधानादप्रयोग एव गतशब्दस्य लोपः। धात्वर्थोत्रेति। धातुशब्देन धात्वर्थोत्र क्रियाभिधीयते सोऽर्थोविषयः प्रयोजनं वा यस्य स धात्वर्थः। साधनाधारः पदार्थः स प्रकृष्यते क्रियाप्रकर्षद्वारेणेत्यर्थः। त्रयाणामिति। यत्र त्रयो वर्णास्तत्रैकोऽनुद्गतोद्वावुद्गतौ द्वयोस्त्वैकस्य प्रकर्षेतरपातमपोबाधनादुत्तमशब्दो नास्तीति वाराह्ये ति ष्यङ् नप्राप्नोति। यत्र चतुषप्रभृतयो वर्णास्तत्रैव ष्यङ् स्यादित्यर्थः। भिद्यत इति। तमपः पित्त्वादनुदात्तत्वादुत्तमशब्द आद्युदात्तः प्राप्नोतीत्यन्तोदात्तस्येष्यते। एतच्चोञ्छादिषूत्तमशश्वत्तमौ सर्वत्रेति पाठानपेक्षयोक्तम्। न च क्रियाप्रकर्षे ऽपि आमन्तस्य क्व चित्प्रयोगो दृश्यते इत्यनभिधानादुच्छब्दत्तमबेव नास्ति। अव्युत्पन्न एवोत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमाहेत्याह। शब्दान्तरमिति। दृष्टमिति। त्रिग्रहणं बहुत्वोपलक्षणार्थम्। तेन त्रिप्रभृतिषु यदभ्यन्तरमन्त्यभूतं तत्र दृष्टमित्यर्थः। आतिशायनिकेनेति। आतिशायिनिकश्चतुष्प्रभृतीनामन्त्यमाह। अव्युत्पन्नस्तु त्रिप्रभृतीनामित्यन्त्यत्वमात्रेण सदृशार्थत्वमिति भावः। तम इति। तमान्तोऽव्युत्पन्नशब्द इत्यर्थः।

दपि लक्ष्यते। शब्दान्तरमिदं विद्याद् दृष्टमभ्यन्तरं त्रिषु। एवं तर्हि अन्योयमातिशायनिकेन समानार्थः तमस्त्रि प्रभृतिषु वर्तते। किं पुनरयमणिञोरादेशः। आहो स्विदणिञ्भ्यां पर इति। कश्चात्र विशेषः। ष्यङ्यनादेशे यलोपवचनम् *। ष्यङि अनादेशे यलोपो वक्तव्यः। औदमेघ्यायाश्छात्रा औदमेघाः। द्विरणिविधिः। द्विश्चाणिविधेयः औदमेघ्यायाश्छात्रा औदमेघाः। औदमेघ्यानां संघ औदमेघः। इञ इत्यण् न प्राप्नोति। अस्तु तर्हि आदेशः। आदेशे ऽल्लोपवचनम् यद्यादेशः। अतो लोपो वक्तव्यः। औडुलोम्या शारलोम्येति। ये चाभावकर्मणोरिति प्रकृतिभावः प्रसज्येत। नवा ष्यङो लोपनिमित्तत्वात् *। न वा एष दोषः। किं कारणम्। ष्यङो लोपनिमित्तत्वात्। लोपनिमित्तः ष्यङ्। न चाकृते लोपे ष्यङ् प्राप्नोति। किं कारणम्। गुरूपोत्तमयोरित्युच्यते। नचाकृते लोपे गुरूपोत्तमता भवति। अथ वा पुनरस्तु परः। ननु चोक्तं ष्यङ्यनादेशे यलोपवचनं द्विरण् विधिरिति। नैष दोषः। यत्तावदुच्यते यलोपवचनमिति। अदोष एषः। किं कारणम्। पुंवद्भावात्। यञादौ तद्धिते पुंवद्भावो भविष्यति। भस्याढे तद्धिते पुंवद्भवतीति। अयं तर्हि दोषो द्विरणिविधिरिति। नैष दोषः। सिद्धश्च प्रत्ययविधौ। स च सिद्धः प्रत्ययविधौ। उभयमिदमुक्तमादेशः पर इति च। किमत्र न्याय्यम्। आदेश इ-

---

किं पुनरिति। प्रत्ययविधावपि गापोष्टग् व्रीह्यिंशाल्योर्ढगित्यादौ षष्ठी दृश्यत इति संदेहात्प्रश्नः। औदमेघा इति। उदमेघस्यापत्यं गोत्रं स्त्री अत इञ्। यद्यत्र इञन्तात्परः स्त्रियां ष्यङ् विधीयते तदाऽपत्ययकारो न भवतीति यलोपो न प्राप्नोति। आदेशपक्षे तु स्थानिवद्भावाद् ष्यङ् आपत्येति यलोपः सिध्यति। द्विरिति। इञश्चेत्यस्यानन्तरं ष्यङश्चेति वक्तव्यम्। तेनेञः परो यः ष्यङ् तदन्तादण् भवतीत्ययमर्थो भवति। संघाङ्केत्यत्रापि तथैव वक्तव्यम्। आदेशपक्षे तु स्थानिवद्भावात्सिध्यति। औडुलोम्येति। उडुलोम्नोऽपत्यं गोत्रं स्त्री बाह्वादिषु लोमन्शब्दस्य पाठात् केवलस्यापत्येनयोगाभावात् सामर्थ्यात्तदन्तग्रहणादिञ्प्रत्ययः। तत्र यदि तदादेशः ष्यङ् क्रियेत तदा ये चाभावकर्मणोरिति प्रकृतिभावाट्टिलोपो न प्राप्नोति। प्रत्ययपक्षे त्विञा व्यवधानात् प्रकृतिभावाभावः। न वेति। आनुपूर्व्याश्रयेण दोषं परिहरति। सिद्धश्चेति। यद्यपि लिङ्गविशिष्टपरिभाषाश्रयेण इञन्तात्प्रातिपदिकादण् विधीयमानः ष्यङन्तादपि सिध्यति। तथापि पुंवद्भावस्य

त्येतद् न्याय्यम् । कुत एतत् । एवं चैवहि कृत्वा आचार्येणसूत्रंप-
ठितंषष्ठ्याचनिर्देशः कृतः । अतएवैषपक्षोनिर्दोषः । ननुचपरस्मिन्न-
पिसतियेदोषास्ते परिहृताः । पुंवद्भावेनयलोपः परिहृतः सचपुंवद्भा-
वोऽढेभवति । तत्रते औदमेघेयो न सिध्यति । अनुबन्धौत्वयाकार्यौ ।
यस्यादेशः अनुबन्धौ तेन कर्तव्यौ । एकः सामान्यग्रहणार्थः । अप-
रः सामान्यग्रहणाविघातार्थः । क्व सामान्यग्रहणार्थेनार्थः । यङश्चा-
बिति । अथ क्व सामान्यग्रहणाविघातार्थेनार्थः । अत्रैव । किं प्रयो-
जनम् । चाबर्थम् । चाब्यथा स्यात् । तव कथं चाप् । टाब्विधिर्मम ।
मम टापा सिद्धम् । ननु च ममापि टापा सिद्धं स्यात् । न सिध्य-
ति । अण इति चेञ इति चेतीकारः प्राप्नोति । नैष दोषः । नैवं
विज्ञायते अणन्तादकारान्तात् इञन्तादिकारान्तादिति । कथं त-
र्हि । अणोऽकार इञ् य इकार इति । स्वरार्थस्तर्हि । स्वरार्थस्तर्हि
त्वया चाब्वक्तव्यः । ञितीत्याद्युदात्तत्वं माभूत् । चितोऽन्त उदात्तो
भवतीत्यन्तोदात्तत्वं यथा स्यादिति । तवापि तर्हि ष्यङा उक्तत्वात्
स्त्रीत्वस्य टाब् न प्राप्नोति । नैष दोषः । उक्तेऽपि हि भवन्त्येते । उक्तेऽपि
स्त्रीत्वे भवन्त्येते टाबादय इति । उक्तमेतत् । स्वार्थिकाष्टाबादय इति ।

---

न्याय्यत्वात्स एवोक्तः । षष्ठ्या चेति । चशब्दो हेतौ । अणिञोरनार्षयोरिति षष्ठीनिर्देशः आदेशार्थ एव प्रत्ययपक्षस्याभिमतत्वे ह्यसंदेहाय पञ्चम्येवोच्चार्येत । औदमेघेय इति । ष्यङन्तात् स्त्रीभ्यो ढक् । इदानीं प्रत्ययवाद्यादेशवादिनो दोषमुद्भावयति । अनुबन्धाविति । टापा ममेति । प्रत्ययवादी प्रत्यये कृते टापं करोतीत्यर्थः । आदेशवाद्याह । ममापीति । अण इति । अकारः प्रधानं तद्विशेषणमण् । तत्रानल्विधाविति प्रतिषेधात् स्थानिवद्भावाभावः । अणन्तादकारान्तादिति तु विज्ञायमाने स्वाश्रयमिकारान्तत्वं स्थानिवद्भावादणन्तत्वं चेति स्यादेव ङीप् प्रत्ययः । इञादेशस्य तु ष्यङो न स्वाश्रयमिकारान्तत्वं नापि स्थानिवद्भावप्रापितमनल्विधाविति प्रतिषेधादिति ततः सिद्ध एव टाप् । यदा चेञ उपसंख्यानमित्यत्रेत इत्यपेक्ष्यते तदा ष्यङि कृतेऽनिकारान्तत्वान् ङीषो ऽप्रसङ्गः । प्रत्ययवाद्याह । स्वरार्थ इति । इञादेशो यदि ष्यङ् क्रियते तदन्ताच्च टाप् तदा वाराह्येत्याद्युदात्तं पदं स्यात्तस्मादन्तोदात्तार्थं त्वया चाब् विधेयः । आदेशवाद्याह । तवापीति । मम तु यङश्चाबिति वचनाच्चाब् भवतीति मन्यते । प्रत्ययवाद्याह । नैष दोष इति । उक्त इति । द्योतित इत्यर्थः । एकस्य स्त्रीत्वद्योतने सामर्थ्याभावाद्द्वयोर्द्योतकत्वम् । एतच्च

सानुबन्धकस्यादेशो मम। ममापि तर्हि सानुबन्धकस्यादेशे ञित्कार्यं नेति। तेन ञिन्न भविष्यति। अस्थानिवत्त्वे दोषस्ते वृद्धिरत्र न सिध्यति। अस्थानिवत्त्वे दोषः। वृद्धिस्तेन प्राप्नोति। औडुलोम्या। शारलोम्येति। न चेदानीमर्द्धजरतीयं लभ्यम्। वृद्धिर्मम भविष्यति। स्वरो नेति। तद्यथा। अर्द्धं जरत्याः कामयन्ते अर्द्धं नेति। त्वयाप्यत्र विशेषार्थं कर्तव्यं स्याद् विशेषणम्। त्वयाप्यत्र विशेषणार्थोऽनुबन्धः कर्तव्यः। क्व विशेषणार्थेनार्थः। ष्यङः सम्प्रसारणमिति। अक्रियैव विशेषोऽत्र सानुबन्धो विशेषवान्। अक्रियैव मम विशेषः। सानुबन्धस्तु विशेषवान्। पाश्यायां ते कथं न स्यात्। पाश्यापतिरित्यत्र तव कस्मान्न भवति। एको मे स्याद्विशेषणम्। एको मम विशेषणार्थः। त्वया पुनर्द्वौ कर्तव्यौ। अथ कस्मिन्सति कः करिष्यते। किं चातः। अन्यस्मिन्सूत्रभेदः स्यात्। यद्येताभ्यामन्यः क्रियते। सूत्रभेदः कृतो भवति। षितिलिङ्गं प्रसज्यते। अथ षित् क्रियते षित इति ईकारः प्राप्नोति। ङिति चेक्रियते दोषः। अथ ङित् क्रियते चेक्रियते दोषो भविष्यति। लोलूयापुत्रः। लोलूयापतिरिति। व्यवधानान्न दुष्यति।

---

प्रयोगदर्शनादेवसीयते। आदेशवाद्याह। सानुबन्धकस्येति। इञ एवाकृतञकारेत्संज्ञकस्य यादेशः करिष्यते तेन ञित्स्वराभावात्प्रत्ययस्वरे टापि कृते एकादेश उदात्तेनोदात्त इति वाराह्याशब्दोऽन्तोदात्तो भविष्यतीत्यर्थः। प्रत्ययवाद्याह। अस्थानिवत्त्व इति। अर्द्धजरतीयमिति। समासाच्च तद्विषयादिति छप्रत्ययः। सुखं न कामयन्ते अङ्गान्तरं तु कामयन्ते जरत्याः। आदेशवाद्याह। त्वयाप्यत्रेति। प्रत्ययवाद्याह। अक्रियैवेति। यस्य संप्रसारणमिति वक्ष्यते। निरनुबन्धकत्वाद्यायमेव ग्रहीष्यते। आम्बष्ठ्यापुत्र इत्यादौ तु असंप्रसारणमिति वक्ष्यते... यङः सानुबन्धकत्वात्संप्रसारणं न भविष्यतीत्यर्थः। आदेशवाद्याह। पाश्यायामिति। यदीह यप्रत्ययं विधाय यस्य संप्रसारणमित्युच्यते तदा पाशानां समूहः पाशादिभ्यो य इति च प्रत्ययस्य पाश्यापतिरित्यादौ संप्रसारणप्रसङ्गः। प्रत्ययवाद्याह। एक इति। आदेशवाद्याह। अथेति। चेक्रियित इति धातोरेकाच इत्यनेन विहिते यङीत्यर्थः। यङः पूर्वाचार्यसंज्ञा चेक्रियितमिति। प्रत्ययवाद्याह। व्यवधानादिति। लोलूयेत्यत्र यङन्तादप्रत्ययादित्यकारप्रत्यये सति अकारेण व्यवधानादित्यर्थः। पुत्रपत्योरिति। सप्तमीनिर्देशादनन्तरस्य यङः संप्रसारणेन भाव्यम्। तत्र वाराह्याशब्दे टापा सहैकादेशस्य पूर्वं प्रत्यन्तवद्भावात् पुत्रपत्योरनन्तरो यङ् भवति। लोलूयेत्यत्र तु यङन्तादप्रत्ययादित्यका-

अकारेण व्यवधानान्न दोषो भविष्यति । योनन्तरो धातुः सः । यो धातुः सोनन्तरः । धातोरिति वर्तते । यस्माच्चानन्तरो नासौ धातुः । यश्च धातुर्नासावनन्तरः । नचेदुभयतः साम्यमुभयत्र प्रसज्यते । न चेदुभयतः साम्यं भवति । उभयत्र प्राप्नोति । यदि पुनर्यङा धातुर्विशेष्येत । यङा विशेष्येत यदीह धातुर्यङ् धातुना वा यदि तुल्यमेतत् । यद्येवं यङा धातुर्विशेष्येत । अथापि धातुना यङ् । तुल्यमेतद्भवति । उभौ प्रधानं यदि नात्र दोषः । अथोभौ प्राधानं भवतः नात्र दोषो भवति । तथा प्रसार्येत तु वाक्पतिस्ते । तथा सति वाक्पतिः वाक्पुत्र इत्यत्र सम्प्रसारणं प्राप्नोति । धातुप्रकरणस्येह न स्थानमिति निश्चयः । धातुप्रकरणस्येह स्थानं नास्तीति कृत्वा एष निश्चयः क्रियते । अवश्यमात्वार्थं धातुग्रहणं कर्तव्यम् । इह मा भूत् । गोभ्यां-

---

रप्रत्यये कृते ऽतोलोप इति यङोऽकारो लुप्यते तत्र टापि कृते एकादेशे च पुत्रपत्योरनन्तरो यङ् न भवत्याकारेण व्यवधानादिति संप्रसारणं न भविष्यतीत्यर्थः । आदेशवाद्याह । योनन्तर इति । यङः संप्रसारणमिति भवता सूत्रं क्रियते तदा लिटि धातोरित्यतो धातुग्रहणानुवृत्तौ सत्यां धातुना यङ् विशेष्यते । तत्र पुत्रपत्योरनन्तरो यङन्तो धातुर्न संभवतीति सामर्थ्याद्यथाऽधातोरनन्तरस्य वाराहीपुत्र इति संप्रसारणं भवति । एवं लोलूयापुत्र इत्यत्र व्यवहितस्यापि धातोः स्यादित्यर्थः । धातुत्वमानन्तर्यं च विशेषणमाश्रितं तत्रैकस्योभयासंभवात्सामर्थ्यादेकतरविशेषणाश्रयणादुभयोरपि संप्रसारणप्रसङ्ग इत्यर्थः । न चेदिति । एकस्य यदा धर्मद्वयं न संभवति तदान्यतररूपाश्रयणादुभयोः साम्यात्कार्यप्राप्तिः । प्रत्ययवाद्याह । यदीति । तदा किं दोषः स्यान्नवेति पृच्छति । आदेशवाद्याह । यङेति । जुसि चेत्यादावङ्गेनेको विशेषणे ऽङ्गस्येको वा विशेषोऽस्त्येव । यङा तु धातौ विशेष्यमाणेधातुना वा यङि विशेषो नास्तीत्यर्थः । प्रत्ययवाद्याह । उभाविति । यङ्धात्वोः परस्परेण विशेषणविशेष्यभावो नास्ति समुच्चयेन तु कार्यं विधीयते पुत्रपत्योरनन्तरस्य यङो धातोश्चेति । तत्र वाराहीपुत्र इत्यादौ भविष्यति न तु लोलूयापतिरित्यादौ धातोर्व्यवधानात् । ततश्च सामर्थ्याद्धातुग्रहणस्योत्तरार्थैवानुवृत्तिः । आदेशवाद्याह । तथेति । यदि यङ्धात्वोः समुच्चयो न तु विशेषणविशेष्यभावस्तदावाक्पतिशब्दे पत्युरनन्तरस्य यङो धातोश्चेति वचेर्धातोः संप्रसारणप्रसङ्गः । प्रत्ययवाद्याह । धातुप्रकरणस्येति । धातुग्रहणं नानुवर्तत इति नास्त्यतिप्रसङ्गः । आदेशवाद्याह । अवश्यमिति । आदेच उपदेशेऽशितीत्येतदर्थमवश्यमनुवर्त्यं धातुग्रहणमित्यर्थः । प्रत्ययवाद्याह ।

गोभिः नौभ्यांनौभिरिति। आत्वार्थं यदि कर्तव्यं तत्रैवैतत्करिष्यते। उपदेशे यदेजन्तं तस्य चेदात्वमिष्यते॥ १॥ उद्देशो रूढिशब्दानां तेन गोर्न भविष्यति। एवं तर्हि उपदेशे आत्वमित्युच्यते। उद्देशश्च प्रातिपदिकानां नोपदेशः॥

गोत्रावयवात्॥ ७९॥ किमर्थमिदमुच्यते। गोत्रावयवादगोत्रार्थम्। गोत्रावयवादित्युच्यते। अगोत्रार्थोऽयमारम्भः। गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम्*। गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टं प्राप्नोति। आहिच्छत्री कान्यकुब्जीति। एवं तर्हि गोत्रादेव गोत्रावयवात्। गोत्रादिति चेद्वचनानर्थक्यम्। गोत्रादिति चेद्वचनमनर्थकं भवति। सिद्धं गोत्रे पूर्वेणैव। इदं तर्हि प्रयोजनम्। गुरूपोत्तमयोरित्युच्यते। अगुरूपोत्तमार्थोऽयमारम्भः। अगुरूपोत्तमार्थमिति चेत् सर्वेषामवयवत्वात्सर्वप्रसङ्गः। अगुरूपोत्तमार्थमिति चेत् सर्वेषामवयवत्वात्सर्वत्र प्राप्नोति। अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम्। बभूवुस्तत्रागस्त्याष्टमैर्ऋषिभिः प्रयोजनमभ्युपगतः।

---

आत्वार्थमिति। एतदिति। एतत्प्रयोजनार्थं व्याख्यानमित्यर्थः। उपदेशशब्देन शास्त्रमुच्यते। तेन शास्त्रे ये पठिता एजन्तास्तेषामात्वं विधीयते। प्रातिपदिकानि तु न प्रतिपदं शास्त्रे पठितानि किं तर्हि प्रकृत्यादिविभागकल्पनाद्वारेण साधुत्वेन प्रतिपादितानि। ननु नौद्व्यचष्ठन् गोद्व्यच इत्यादौ उपदेशे यानि प्रातिपदिकानि पठितानि तेषामात्वप्रसङ्गः। एवं च गोतो णिदिति णित्त्वातिदेशाज् ज्ञापकात्तेषामात्वाभावः। न ह्यात्वे गोशब्दस्य कृते णित्वस्यास्ति प्रयोजनम्। एवं प्रत्ययपक्षोपि निर्दोषः। अत एव क्रोड्यादिभ्यश्चेति पञ्चमीनिर्देशः। औदमेघेय इत्यादौ तु सिद्धः प्रत्ययपक्षेऽपियलोपः। ष्यङ आपत्यादिहितत्वात् स्वार्थिकत्वादापत्यत्वादित्याहुः॥

गोत्रा। अवयवशब्दस्यानेकार्थत्वात् संदेहात्प्रश्नः। किमर्थमिति। पृथग्भाववाचिनमवयवशब्दमाश्रित्याह। गोत्रावयवादिति। गोत्रावयवो गोत्रात् पृथग्भूतो गोत्रं न भवतीत्यर्थः। सप्तम्यर्थे चेयंपञ्चमी। तेन गोत्रेऽणिञोः ष्यङ् भवतीत्यर्थः। इहापीति। पूर्वसूत्रे गोत्रग्रहणानर्थक्यप्रसङ्गादेषोर्थ इह नाश्रीयत इति भावः। इदानीमेकदेशवाच्याश्रयेणाह। एवं तर्हीति। यथा घृतावयवो घृतमेवं गोत्रावयवोपि गोत्रमित्यर्थः। गोत्रादिति चेदिति। पौत्रप्रभृत्यपत्यसमुदायस्य गोत्रत्वे तदवयवस्यापि गोत्रत्वात् पूर्वेणैव ष्यङ् सिद्ध इत्यर्थः। सर्वप्रसङ्ग इति। यथा भार्गवगोत्रस्य साधारणस्यावान्तरगो-

तत्रभवतां यदपत्यं तानि गोत्राणि अतोऽन्ये गोत्रावयवाः तत उत्पत्तिः प्राप्नोति । तच्चानिष्टम् । तस्मान्नार्थोऽनेन योगेन कथं येभ्योऽगुरूपोत्तमेभ्य इष्यते । सिद्धं तु रौड्यादिषूपसंख्यानात् * । सिद्धमेतत् कथम् । रौड्यादिषूपसंख्यानात् । रौड्यादिषूपसंख्यानं कर्तव्यम् । के पुना रौड्यादयः । ये क्रौड्यादयः । भारद्वाजीयाः पठन्ति । सिद्धं तु कुलाख्याभ्यो लोके गोत्राभिमताभ्य इति । सिद्धमेतत् । कथम् । कुलाख्या लोके गोत्राभिमताः गोत्रावयवा इत्युच्यन्ते । अथ वा गोत्रावयवः को भवितुमर्हति यो गोत्रादवयुतः । कश्च गोत्रादवयुतः । योनन्तरः । दैवदत्त्या याज्ञदत्त्येति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
चतुर्थस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

समर्थानां प्रथमाद्वा ॥ ८२ ॥ समर्थवचनं किमर्थम् । समर्थादुत्पत्तिर्यथा स्यात् । उपगोरपत्यमिति । असमर्थान्मा भूदिति ।

---

त्राणि च्यवनादीनि तेषु ऋषिशब्देभ्यः पूर्वसूत्रे ऽनार्षयोरिति ष्यङ्प्रतिषेधादन्टषिशब्देभ्यो गुरूपोत्तमेभ्य एव ष्यङिष्यते न लगुरूपोत्तमेभ्य इति भावः । तत्रभवतामिति । अ-मरत्वाष्टमानामित्यर्थः । कथं येभ्य इति । पुणिकमुखरादिभ्यः । ये क्रौड्यादय इति । पूर्वाचार्यसंज्ञयैवमभिहितमित्यर्थः । कुलाख्याभ्य इति । अप्रधानवचनोऽवयवशब्द इह गृह्यते । तत्र प्रवराध्यायपठितानां मुख्यं गोत्रत्वम् । ये त्वादिपुरुषाः श्रुतशीलसंपन्ना अपत्यसन्तानप्रसिद्धिहेतवस्तेषा मप्रधानगोत्रत्वं तेभ्योऽनेन ष्यङ्विधानम् । पुणिकस्यापत्यं गोत्रं स्त्री पौणिक्या मौखिक्या मौखर्येति । योनन्तर इति । पृथग्वाच्यवयवशब्दोऽपत्यत्वेन गोत्रसादृश्ये सति पृथग्भावोन्तरङ्गत्वादाश्रीयत इति जातादौ ष्यङ् न भवति । आहिच्छत्रीति । तदेवमर्थद्वयमस्य सूत्रस्य भाष्यकारेण व्याख्यातम् । अभिधानलक्षणाश्च कृत्तद्धितसमासा इति सर्वत्रानन्तरापत्ये ष्यङ् न भवति ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य
प्रथमे पादे द्वितीयमाह्निकम् ॥

---

समर्थानाम् । समर्थवचनमिति । तस्यापत्यमित्यादौ श्रूयमाणविभक्तिसंबन्धापेक्षायां विभक्तौ विज्ञायमानायामसामर्थ्ये प्रत्ययप्रसङ्ग एव नास्तीति मत्वा प्रश्नः । समर्थादिति । समर्थादेवेत्यवधारणं द्रष्टव्यम् । न तस्यापत्यमित्यादौ लक्षणवाक्ये संबन्धप्रतिपादनाय

कम्बल उपगोरपत्यं देवदत्तस्येति। समर्थवचनमनर्थकम्। नह्यसमर्थेनार्थाभिधानम्। समर्थवचनमनर्थकम्। किं कारणम्। नह्यसमर्थेनार्थाभिधानम्। नह्यसमर्थादुत्पद्यमानेन प्रत्ययेनार्थाभिधानं स्यात्। अनभिधानात्तत उत्पत्तिर्न भविष्यति। अथ प्रथमवचनं किमर्थम्। प्रथमवचनं प्रकृतिविशेषणार्थम्। प्रथमात्प्रत्ययोत्पत्तिर्यथा स्यात्। अप्रथमान्मा भूत्। उपगोरपत्यमिति अपत्यशब्दात्। प्रथमवचनमनर्थकं नह्यप्रथमेनार्थाभिधानम्। प्रथमवचनमनर्थकम्। किं कारणम्। नह्यचाप्रथमेनार्थाभिधानम्। नह्यप्रथमादुत्पद्यमानेन प्रत्ययेनार्थस्याभिधानंस्यात् अनभिधानात्तत उत्पत्तिर्न भविष्यति। अथवा वचनं किमर्थम्। वाक्यमपि यथा स्यात्। उपगोरपत्यमिति। वावचने चोक्तम्। किमुक्तम्। तत्र तावदुक्तं वावचनानर्थक्यं च तत्र नित्यत्वात् सन इति। इहापि वावचनमनर्थकम्। किं कारणम्। तत्र नित्यत्वात्प्रत्ययः स्यात्। इह द्वौ पक्षौ। वृत्तिपक्षश्चावृत्तिपक्षश्च। स्वभावतश्चैतद्भवति। वाक्यं च वृत्तिश्च। स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्धुमन्यदतः संज्ञायाः। न च संज्ञाया भावाभावाविष्येते। तस्मान्नार्थो वावचनेन। अथ तत्समर्थग्रहणं नैव कर्तव्य-.

---

विभक्त्युच्चारणम्। इह तस्य प्रयोजनाभावात्। किं तर्हि षष्ठ्यन्तात्प्रत्ययविध्यर्थम् तस्येति निर्दिष्टम्। अपत्यमिति। प्रत्ययार्थत्वेन निर्दिष्टमिति। परस्परसंबन्धस्याप्रतिपादनादसमर्थादपि प्रत्ययः स्यादिति भावः। ऋद्धस्योपगोरपत्यमित्यादावपि प्रत्ययो न भवति सापेक्षत्वादसामर्थ्यात्। समर्थवचनमिति। प्रयुक्तानामिदमन्वाख्यानं प्रवृत्तम्। तत्र कम्बलउपगोरपत्यं देवदत्तस्येतियोर्थः प्रयीयते नासौ कम्बल औपगवो देवदत्तस्येति प्रत्यये कृते इति प्रत्ययो न भविष्यतीत्यर्थः। प्रकृतिप्रत्ययौ च प्रत्ययार्थं सह ब्रूते इति प्रत्ययो न भविष्यतीत्यर्थः। असमर्थशब्देनासमर्थादुत्पन्नः प्रत्यय उपचारादभिहितः। अपत्यशब्दादिति। अपत्यविशेषवाचिनो देवदत्तादिशब्दादित्यर्थः। तथाहि। यथेन्द्रो देवता यस्य तदैन्द्रं हविरिति प्रथमान्तात्प्रत्ययो भवति। एवं देवदत्तोऽपत्यमस्योपगोरिति प्रत्ययप्रसङ्गः। लक्षणवाक्यापेक्षस्य प्राथम्यं नियतत्वादाश्रीयते न तु विग्रहवाक्यापेक्षनियतमन्यथा पर्यायेण सर्वस्य प्राथम्यात् प्रथमादित्यनर्थकं स्यात्। प्रथमवचनमिति। देवदत्तिरित्युक्तेऽपत्यं प्रतीयते नत्वपत्यवानित्यर्थः। इहेति। व्यपेक्षैकार्थीभाव-

म् । कर्तव्यं च । किं प्रयोजनम् । समर्थादुत्पत्तिर्यथा स्यादसमर्था-न्मा भूदिति । किं पुनः समर्थ मर्थाभिधाने यच्छक्तम् । किं पुनः स्तत् । कृतवर्णानुपूर्वीकं पदम् । सौत्थितिः वैचमाणिरिति । अथ तद्वावचनं नैव कर्तव्यम् । कर्तव्यं च । किं प्रयोजनम् । नित्याः शब्दाः नित्येषु शब्देषु वाक्यस्य साधुत्वमनेनान्वाख्यायते ॥

प्राग्दीव्यतोऽण् ॥ ८३ ॥ अयुक्तोयं निर्देशः । नहि तत्र कश्चिद् दीव्यच्छब्दः पठ्यते कस्तर्हि । दीव्यतिशब्दः । कथं तर्हि निर्देशः कर्तव्यः । प्राग्दीव्यतेरिति । स तथा तर्हि निर्देशः कर्तव्यः प्राग्दीव्यतेरिति । न कर्तव्यः । दीव्यतिशब्दे च दीव्यच्छब्दोस्ति तस्मादेषा पञ्चमी । किं पुनः कारणं विकृतनिर्देशः क्रियते । एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवद्भवतीति । किमे-

---

योरत्यन्तभेदाद्भिन्नार्थस्य वाक्यस्य वृत्त्या बाधनं न भविष्यतीत्यर्थः । कृतवर्णानुपूर्वीकमिति । तस्यैव लोकेऽर्थप्रतिपादनाय प्रयोगात्समर्थत्वमिति भावः । सौत्थितिरिति । विभज्यान्वाख्याने सुउत्थित इत्यस्मादपि प्रत्ययः स्यात् । ततश्च साउत्थितिरित्यनिष्टप्रसङ्गो वार्णादाङ्गं बलीय इति वृद्धिप्रसङ्गात् । नन्वन्तरङ्गत्वाद्वार्णेषु कार्येषु कृतेषु प्रत्ययो भविष्यति । एवं तर्ह्येतदनेन समर्थवचनेन ज्ञाप्यते । अस्तीयं परिभाषा अकृतव्यूहाः पाणिनीया इति । तेन पपुषः तस्थुष इत्यादि सिद्धं भवति । अन्तरङ्गत्वात्पूर्वं कृतोपीडागम एतत्परिभाषावशान्निवर्तते । तत्र पपावस् अस् इति स्थिते इट् च प्राप्नोति संप्रसारणं च । तत्र संप्रसारणं बलीयः प्रतिपदविधानादिति । तत्र कृते बलादित्वाभावादिण्नास्तीति सिद्धं पपुष इति । वाक्यस्येति । वृत्तिवाक्ययोरवान्तरार्थभेदेऽपि प्रधानार्थाभेदादैकार्थ्याद्वाक्यस्य वृत्त्याबाधः स्यात् । तथा ह्यौपगवमानयेत्युक्ते योर्थ आनीयते स एवोपगोरपत्यमानयेत्युक्तौ तत्र यथा गोशब्देन गावीशब्दो निवर्त्यते । सत्यामपि गावीशब्दादधिकस्य स्त्रीत्वस्य प्रतिपत्तौ जातिलक्षणार्थाभेदात् । एवं वाक्यस्यापि वृत्त्या निवृत्तिः स्यादिति तदभ्यनुज्ञानाय वावचनम् ॥

प्राग्दीव्यतोऽण् । अयुक्त इति । प्रसिद्धन्यायकरणो युक्तिः । प्रसिद्धस्य च कदाचिद्विस्पष्टप्रतिपत्त्यर्थः । प्रयोगो दृश्यते न्यायेनायुक्तमिति । नहीति । दीव्यतिशब्दवाच्यस्यार्थस्यैवावधिभावो विवक्षितः । अर्थानामेवावधिमत्वस्येष्टत्वात् । समानजातीयानामेवावधिमद्भावस्य सुप्रसिद्धत्वात् । समुदाये चैकदेशस्य गुणभावादवधित्वानुपपत्तिरिति भावः । दीव्यच्छब्द इति । एकदेशेन समुदायो निर्दिश्यते । स चार्थप्रधान इत्यर्थः स्या-

तस्य ज्ञापने प्रयोजनम् । एकदेशविकृतेषूपसंख्यानं चोदितं तन्न वक्तव्यं भवति । अथ वा प्राक्शब्दोयं दिक्शब्दः दिक्शब्दैश्च योगे पञ्चमी भवति । तत्राप्रथमासमानाधिकरणे इति कृत्वा शता भविष्यति । अथ प्राग्वचनं किमर्थम् । प्राग्वचनं सकृद्विधानार्थम् । प्राग्वचनं क्रियते सकृद्विधानार्थम् । सकृद्विहितः प्रत्ययो विहितो यथा स्यात् । योगे योगे तस्य ग्रहणमाकर्षणमिति । नैतदस्ति प्रयोजनम् । अधिकारादप्येतत् सिद्धम् । अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठते । अधिकारात्सिद्धमिति चेदपवादविषयेणप्रसङ्गः * । अधिकारात् सिद्धमिति चेदपवादविषयेण् प्राप्नोति । अत इञ् । अण् चेत्यणपि प्राप्नोति । तस्मात् प्राग्वचनम् *। तस्मात्प्राग्वचनं कर्तव्यम् । अथ क्रियमाणेपि प्राग्वचने कथमिदं विज्ञायते प्राग्दीव्यतोयाः प्रकृतयः आ।इ। स्वित्प्राग्दीव्यतो येऽर्था इति। किं चातः । यदि विज्ञायते प्राग्दीव्यतो याः प्रकृतय इति। स एव दोषः । अपवादविषयेणप्रसङ्ग इति । अथ विज्ञायते प्राग्दीव्यतो येर्था इति । न दोषो भवति । समानेर्थे प्रकृतिविशेषादुत्पद्यमान इञणं बाधते । यथा न दोषस्तथास्तु । प्राग्दीव्यतो येर्था इति विज्ञायते । कुत एतत् । तथा ह्ययं प्राधान्येनार्थं प्रतिनिर्दिशति । इत-

---

वधित्वं सम्पद्यते । तत्रेति । तेन पचत्वित्यादौ पदसंज्ञा सिद्धा भवति । अथवेति । नैवेदमनुकरणं किं तर्ह्यर्थ एवावधित्वेन निर्दिश्यते । तत्र दिवेर्लटि कृतेऽर्थादित्यनेन गम्यमानार्थत्वादप्रयुक्तेनाप्रथमान्तेन सामानाधिकरण्यात् प्रथमासमानाधिकरणे निषेधाद्दा लटः शत्रादेशः कृत इत्यर्थः । अथेति । एकदेशाक्षेपद्वारेण प्राग्दीव्यत इति समुदाय आक्षिप्तः । अणित्येवं वक्तव्यमधिकारार्थमिति मत्वा प्रश्नः । सकृद्विधानार्थमिति । प्राग्दीव्यतोर्थे[illegible]स्तान् सर्वानपेक्ष्यानेनाण् प्रत्ययः सकृद्विधीयत इत्यर्थः । विहितो यथास्यादिति । सर्वेष्वर्थेषु विहितो यथास्यादित्यर्थः । अण् चेति । प्रतियोगमुपस्थाने द्वयोरेकविषयत्वाद्विकल्पः स्यान्न तु बाध्यबाधकभावः । स एव दोष इति । सर्वास्वेत्प्रकृतय इहापेक्ष्यन्ते तदैकविषयत्वादण् इञादीनां बाध्यबाधकभावो न स्यात् । समानेर्थ इति। अर्थापेक्षणे सत्यर्थेष्विदमणिविधानमिति प्रकृत्यन्तरे सावकाशो ऽण् प्रत्ययः एकस्मिन्नर्थे प्रकृतिविशेषादुत्पद्यमाने नेञादिना तक्रकौण्डिन्यन्यायेन बाध्यतइत्यर्थः । तथाहीति । यज्जातीयो ऽवधिस्तज्जातीयो ऽवधिमानिति भावः । प्राधान्ये नेति । तात्पर्येणेत्यर्थः ।

रथा हि बह्व्यस्तत्र प्रकृतयः पठ्यन्ते ततो यां कां चिदेवावधित्वेनो-पाददीत । अथ वा । पुनरस्तु प्राग्दीव्यतो बाः प्रकृतय इति । ननु चोक्तमपवादविषयेऽप्रसङ्ग इति । न वा क्व चिद्भाववचनात् *। न वा एष दोषः । किं कारणम् । क्व चिद्भाववचनात् । यदयं क्व चिद्भाववचनं करोति । पीलाया वा । उदश्वितोन्यतरस्यामिति । तज्ज्ञापयत्या-चार्यः नापवादविषयेऽणभवतीति । यद्येतज्ज्ञाप्यते नार्थः प्राग्वचने-न । अधिकारात्सिद्धम् । ननु । चोक्तमधिकारात्सिद्धमिति चेदपवाद-विषयेऽप्रसङ्ग इति । नैष दोषः । परिहृतमेतत् । न वा क्व चिद्भाव-वचनादिति । किं पुनः कारणमियानवधिर्गृह्यते न प्राक् ठक इत्ये-वोच्येत । एतज्ज्ञापयत्यर्थ्यैवतद्भवतीति । किमेतस्य ज्ञापने प्रयोज-नम् । प्रकृतिविशेषादुत्पद्यमान इञणं बाधते ॥

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ८५ ॥ ण्यप्रकरणे वाङ्मति-पितृमतां छन्दस्युपसंख्यानम् * । ण्यप्रकरणे वाङ्मतिपितृमतां छ-न्दस्युपसंख्यानं कर्तव्यम् । वाक् । वाच्यः । मति । मात्यः । पितृम-त् । पैतृमत्यः । पृथिव्या ञाञौ * । पृथिव्या ञाञौ वक्तव्यौ । पा-र्थिवा पार्थिवी । देवस्य यञञौ* । देवस्य यञञौ वक्तव्यौ । दैव्यं दैवम् । बहिषष्टिलोपो यञ् च * । बहिषष्टिलोपो यञ् च वक्त-व्यः । बहिर्भवो बाह्यः । ईकक् च* । बहिष ईकक्चवक्तव्यः बाही-कः । ईकञ् छन्दसि * । ईकञ् छन्दसि वक्तव्यः । बहीकमस्तु भ-

---

यां कांचिदिति । प्राक्कुलत्यादण् इति वक्तव्यं स्यादित्यर्थः । पीलाया वेति । सूत्रमप्ये-तदनारम्भणीयं स्यात् । द्व्यचइत्यनेनैव ठकः सिद्धत्वादनेनाप्यणः । दश्वित इति । उद-श्वित इत्येव ठग्विधानाय कर्तव्यं स्यादनेनाणः सिद्धत्वादित्यर्थः । न प्राक् ठक इति । यद्यपीहानेकं ठग् ग्रहणमस्ति तथापि व्याख्यानात्प्राग्वहतेष्ठगित्ययमेवावधित्वेन गृह्यते । एतदिति । एवं हि स्पष्टो बाध्यबाधकभावो भवति ज्ञापकाश्रयणमन्तरेणेवेत्यर्थः ।

दित्यदित्या । अणपवादो ण्यः ॥वाङ्मतीति। कुर्वादिषु मतिपितृमच्छब्दयोरपत्यार्थे भाषायामपि ण्यविधानार्थः पाठः । अनेन तु च्छन्दसि सर्वेषु प्राग्दीव्यतीयेषु ण्यविधिः । बहिष इति। ढिलोपवचनमव्ययानां भमात्रे टिलोप इत्यस्यानित्यत्वज्ञापनार्थं तेनारातीय-

द्रं वः। स्थाम्नोकारः *। स्थाम्नो ऽकारो वक्तव्यः। अश्वत्थामः।लोम्नोपत्येषु बहुषु *। लोम्नोऽपत्येषु बहुषु अकारो वक्तव्यः। उडुलोमाः शारलोमाः। बहुष्विति किमर्थम्। औडुलोमिः। शारलोमिः। सर्वत्र गोरजादिप्रसङ्गे यत् *। सर्वत्र गोरजादिप्रसङ्गे यद्वक्तव्यः। गवि भवं गव्यम्। गोः स्वं गव्यम्। गौर्देवता यस्य स्थालीपाकस्य गव्यः स्थालीपाकः। ण्यादयोर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम्*। ण्यादयोर्थविशेषलक्षणादणपवादाद्भवन्ति पूर्वविप्रतिषेधेन। ण्यादीनामवकाशः। दितिर्देवतास्य दैत्यः। अदितिर्देवतास्य आदित्यः। अर्थविशेषलक्षणस्याणपवादस्यावकाशः। दुलेरपत्यं दौलेयः। बालेयः।इहोभयं प्राप्नोति। दितेरपत्यं दैत्यः। अदितेरादित्यः। अपरस्यार्थ विशेषलक्षणस्याणपवादस्यावकाशः। अचित्तहस्तिधेनोष्ठक्। आपूपिकम्। शाष्कुलिकम्। ण्यादीनामवकाशः।वार्हस्पत्यम्।प्राजापत्यम्। इहोभयं प्राप्नोति। बनस्पतीनां समूहो वानस्पत्यम्।

---

इत्येवमादि सिद्धं भवति। स्थाम्न इति। भाष्यकारवचनप्रामाण्यात्तदन्तस्य ग्रहणं न केवलस्य। अश्वत्थाम इति। अश्वस्येव स्थाम बलं यस्येति बहुव्रीहिः। पृषोदरादित्वात्सकारस्य तकारः।अपत्यादावर्थे ऽकारप्रत्ययः। नस्तद्धित इति टिलोपः। उडुलोमा इति। बाह्वादिषु लोमन्शब्दस्य पाठादिञि प्राप्ते ऽकारो विधीयते। केचिदाहुरिञ्यपि कृते तस्य बह्वच इञः प्राच्यभरतेष्विति लुकि प्रत्ययलक्षणेन स्वादिष्विति पदसंज्ञायां नलोपेन सिद्धं रूपम्। भसंज्ञा तु वर्णाश्रयत्वात्प्रत्ययलक्षणेन न भविष्यति न ङिसंबुद्ध्योरिति ङौ नलोपनिषेधाद्वा। तदेतदयुक्तम्। प्राच्यभरतगोत्रादन्यत्र लुगभावात्। किं चोडुलोमैरुडुलोमभ्य इत्यादौ सुब्विधौ न लोपस्यासिद्धत्वादैसादि न स्यात्। न लुमताङ्गस्येति प्रत्ययलक्षणनिषेधाद्वा पदसंज्ञाया अभावः। यथा काश्यपेनप्रोक्तमधीयते काश्यपिन इत्यत्राणो लुकि कृते नलोपो न भवति। एवमिहापि न स्यात्। सर्वत्रेति। नापत्य एव। यद्वा। प्राग्दीव्यतीये अन्यत्र च तेन गवा चरति गव्य इत्यपि भवतीति केचिदाहुः। अजादिप्रसङ्ग इति किम्। गोभ्यो हेतुभ्य आगतं गोरूप्यम्। ण्यादय इति। ण्यादयो येननाप्राप्तिन्यायेनाण एवापवादाः। ठगादिभिरणपवादैस्तु सह संप्रधारणायां परत्वात्त एव स्युरिति वार्तिकारम्भः। अर्थ विशेषो लक्षणं निमित्तं यस्य सोर्थ विशेषलक्षणः। यस्त्वर्थ सामान्यलक्षणोऽणपवादस्स परत्वाद्भवति उष्ट्रपतिर्नाम पत्रं तस्येदमौष्ट्रपतम्। पत्त्याद्युपरिषदस्त्वेत्यञ् भवति न तु ण्यः। वार्हस्पत्यमिति। बृहस्पतिर्देवता अस्येति ण्यः।

ण्यादयो भवन्ति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः। न वक्तव्यः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति। दितिवनस्पतिभ्यामपत्यसमूहयोरिति ॥

उत्सादिभ्योऽञ् ॥ ८६ ॥ अञ्प्रकरणे ग्रीष्मादच्छन्दसि * । अञ्प्रकरणे ग्रीष्मादच्छन्दसीति वक्तव्यम् । ग्रैष्मम् । अच्छन्दसीति किमर्थम्। त्रिष्टुब् ग्रैष्मी । यद्यच्छन्दसीत्युच्यते । ग्रैष्मावेतौ मासौ । अत्र न प्राप्नोति । अच्छन्दसीत्युच्यते । नेदं छन्दः समीचितम् । काठकं कालापकं मौदकं पैप्पलादकमिति। किं तर्हि । प्रत्ययार्थविशेषणमेतत् । नचेच्छन्दः प्रत्ययार्थो भवतीति ॥

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥ किमर्थं नञ्स्नञावुच्येते । न नञेवोच्येत । का रूपसिद्धिः । पौंस्नम् । पुंस् इति सकारान्तः । नञ्शब्दश्च प्रत्ययः । न सिध्यति। संयोगान्तस्य लोप इति लोपः प्राप्नोति । एवं तर्हि नैवार्थो नञा नापि स्नञा। अञ् प्रकृतः सोनुवर्तिष्यते । नकारस्यागमो वक्तव्यः। अथ नकारे आगमे सति किं पूर्वान्तः करिष्यते आहोस्वित्परादिः । किं चातः। यदि पूर्वान्तः । स्त्रैणाः । बहुषु लोपः प्राप्नोति। स्त्रैणानां संघः । संघाङ्कलक्षणेष्वञ् यञिञामणि त्यण् प्राप्नोति । अथ परादिः । पौंस्नम् । स एव दोषः । संयोगान्तस्य लोपः प्रा-

---

दितिवनस्पतिभ्यामिति। इतश्चानिञ इति दितेर्ढञ् भवति । वनस्पतेरचित्तहस्तिधेनोष्ठगिति ठञ्भवति ॥

उत्सा । ग्रीष्मादिति । छन्दः शब्देनेह वृत्तमुच्यते । तस्मिन्नभिधेये ऽञ् प्रतिषेधादण् एव भवति । त्रिष्टुबिति । ग्रीष्मो देवता अस्या इत्यण् । यदातु ग्रीष्मे भवेति ग्रैषार्थ विवक्षा तदा तु ग्रैषिकि ऋत्वण् सिद्ध एव । न चाञा ग्रैषिकस्य बाधप्रसङ्गोऽर्थ विशेषलक्षणानां तुल्यकक्ष्याणामेव प्रत्ययानांख्यादिभिर्बाधनात् । ऋत्वण्तुकक्ष्यान्तरप्राप्तत्वादञोबाधकः । तथा हि । कालाट्ठञणोपवादष्ठञोपि ऋत्वण् । ग्रैष्मावेताविति । शैषलक्षणार्थादन्यत्र बोद्धव्यम् । शेषे ऋत्वणा भाव्यमित्युक्तम् ॥

स्त्रीपुंसाभ्याम् । लोपः प्राप्नोति । तच कर्तव्यापूर्वंचासिद्धमित्यनुस्वारस्यासिद्धत्वादनुस्वारस्यापि वा अयोगवाहस्य प्रत्याहारे इष्टत्वात्संयोगान्तत्वादिति भावः । अञ् प्रकृत इति । तत्र भत्वात्पदत्वाभावात् संयोगान्तलोपाप्रसङ्गः । बहुषु लोप इति । यञञोश्चेत्यनेन । अथ परादिरिति । परादौ नशब्दः संपद्यत इत्यञ्कार्याभावः । ननु च तद्भक्तस्य

प्नोतीति। अस्तु पूर्वान्तः। कथं स्त्रैणाः स्त्रैणानां संघ इति। उभयत्र लौकिकस्य अगोत्रस्य ग्रहणम्। न चैतल्लौकिकं गोत्रम्। ईकारस्तर्हि प्राप्नोति। इष्टमेवैतत्संगृहीतं स्त्रैणी पौंस्नीत्येव भवितव्यम्। एवं हि सौनागाः पठन्ति। नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानमिति। टिलोपस्तर्हि प्राप्नोति। नुग्वचनान्न भविष्यति। भवेदिह नुग्वचनान्न स्यात्स्त्रैणमिति। इह तु खलु पौंस्नमिति नुग्वचनादेव प्राप्नोति। तस्मान्नञ्स्नञौ वक्तव्यौ। अथ हेमौ नञ्स्नञौ प्राग्भवनाद् आहो स्वित्प्राग्वतेः। कश्चात्र विशेषः। नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधः *। नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधो वक्तव्यः। स्त्रीवत् पुंवदिति। किं पुनः कारणं न सिध्यति। इमौ नञ्स्नञौ प्राग्भवनादित्युच्येते। तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। वतेः प्रागिति वक्ष्यामि। वतेः प्रागिति चेद् भाव उपसंख्यानम् *। वतेः प्रागिति चेद् भाव उपसंख्यानं कर्तव्यम्। स्त्रीभावः स्त्रैणं पुंभावः पौंस्नमिति। सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेध इति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न वत्यर्थे नञ्स्नञौ भवत इति। यदयं स्त्रियाः पुंवदिति निर्देशं करोति। एवमपि स्त्रीवदिति न सिध्यति। योगापेक्षं ज्ञापकम्॥

---

तद्ग्रहणेन ग्रहणात्परादावपि नकारे ऽञ्कृतं प्राप्नोति। एवं तर्हि असावसावञित्याश्रयणाददोष इति मन्यते। पररूपं च शकन्ध्वादित्वात्सौत्रत्वाद्वा निर्देशस्य भवति। उभयत्रेति। यञञोश्चेत्यत्र यस्कादिभ्यो गोत्र इत्यनुवर्तते। सङ्घाङ्केत्यत्रापि गोत्रचरणाद्वुञित्यतः। ऋषिप्रजननस्य लोके गोत्रमित्युच्यते। स्त्री च नर्षिर्नापि पुंशब्दवाच्यं सामान्यमिति भावः। टिलोपस्तर्हीति। प्रकृत्यैकाजित्यत्रेष्ठेमेयःस्वित्यनुवर्तनात् प्रकृतिभावो नास्ति। इह तु खल्विति। यं विधिं प्रतीति यस्य तु विधेरिति च न्यायाभ्यामित्यर्थः। ननु च स्त्रीशब्दस्यापि नुगेव लोपनिमित्तम्। अन्यथा श्रीर्देवता अस्येति श्रायमित्यादाविव षायस्येति लोपात्परत्वाद् वृद्धिः स्यादितिचिन्त्यमेतत्। पौंस्ने दोषप्रसङ्गाद्वा। स्त्रैणेनाकारिसूक्ष्मेक्षा। वत्यर्थ इति। प्राग्भवनात्सर्वेष्वर्थेषु नञ्स्नञौ प्रकृतिविशेषाद्विधीयमानौ प्रकृत्यन्तरेषु सावकाशस्य वतेर्बाधकौ प्राप्नुत इति भावः। योगापेक्षमिति। अयं योगो वत्यर्थे न प्रवर्तते इति पुंवदिति निर्देशेन ज्ञाप्यत इत्यर्थः। त्वतलोस्तु नञ्स्नञ्भ्यां

द्विगोर्लुगनपत्ये ॥ ८८ ॥ इह कस्मान्न भवति। त्रैविद्यः पाञ्चनदः षाट्कुलः। इह तावत् त्रैविद्य इति। नैवं विज्ञायते तिस्रो विद्या अधीते त्रैविद्य इति। कथं तर्हि त्र्यवयवा विद्या त्रिविद्या त्रिविद्यामधीते त्रैविद्य इति। इहापि पाञ्चनद इति नैवं विज्ञायते। पञ्चसु नदीषु भवः पाञ्चनद इति। कथं तर्हि पञ्चानां नदीनां समाहारः पञ्चनदं पञ्चनदे भवः पाञ्चनद इति। षाट्कुल इति। नैवं विज्ञायते षट्सु कुलेषु भवः षाट्कुल इति। किं तर्हि षण्णां कुलं षट्कुलं षट्कुले भवः षाट्कुल इति। अजादिग्रहणं च कर्तव्यम्। इह मा भूत्। पञ्चगर्गरूप्यं पञ्चगर्गमयम्। द्विगोर्लुकि तन्निमित्तग्रहणम् *। द्विगोर्लुकि तन्निमित्तग्रहणं कर्तव्यम्। द्विगुनिमित्तं यस्तद्धितः तस्य लुग्भवतीति वक्तव्यम्। इह मा भूत्। पञ्चकपालस्येदं खण्डं पाञ्चकपालमिति। अर्थविशेषाऽसंप्रत्यये ऽतन्निमित्तादपि*। अर्थविशेषासंप्रत्यये ऽतन्निमित्तादपीति वक्तव्यम्। किं प्रयोजनम्। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पञ्चकपाल्यां संस्कृत इत्यपि विगृह्य पञ्चकपाल इत्येव यथा स्यात्। अथ क्रियमाणे ऽपि तन्निमित्तग्रहणे कथमिदं विज्ञायते। तस्य निमित्तं तन्निमित्तं तन्निमित्तादि-

---

समावेशायाचत्वादित्यत्र यत्नः करिष्यते। तेन स्त्रीत्वं स्त्रीता। पुंस्त्वं पुंस्तेत्यपि भवति॥

द्विगोर्लुग्। त्रैविद्य इति। द्विगोरत्राण् प्रत्यय इति मन्यते। अवयवेति। विद्यात्रयरूपस्य समुदायस्य विद्यात्वं विवक्षितमित्यर्थभेदो नास्ति। अव्यविकन्यायाच्च द्विग्वभावः। पञ्चनदमिति। नदीभिश्चेति समाहारेऽव्ययीभावः। कृष्णोदक्पाण्डुसंख्यापूर्वाया इत्यच् समासान्तः। षण्णामिति। आदिपुरुषाणां कुलमिति कुलसामान्यस्य विवक्षितत्वाद्य एवार्थः षट्सु कुलेषु भव इति स एव षण्णां कुले भव इतीति भावः। पञ्चगर्गरूप्यमिति। पञ्चभ्यो गर्गेभ्यो हेतुभ्य आगतमिति द्विगुः। ततो रूप्यमयटौ। द्विगुनिमित्तमिति। द्विगोर्निमित्तमिति षष्ठीसमासः। क्वचिद् द्विगुनिमित्त इति पाठः। तत्र द्विगोर्निमित्तं यस्मिंस्तद्धिते तदीयो योऽर्थः स द्विगुनिमित्त इति व्याख्येयम्। पञ्चकपालस्येति। पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे द्विगुः। ततोऽण्। तस्यानेन लुक् पुनस्तस्येदमित्यण्। तस्य द्विगुं प्रत्यनिमित्तत्वाल्लुगभावः। अर्थविशेषाऽसंप्रत्यय इति। तद्धितहेतुकाद् द्विगोर्लुकि योऽर्थः प्रतीयते स एवातद्धितहेतुकादपि यदीत्यर्थः। समाहारद्विगुस्तद्धितार्थ इति द्विगुना

ति आहोस्वित् स निमित्तमस्य सोयं तन्निमित्तस्तन्निमित्तादिति । किं चातः । यदि विज्ञायते । तस्य निमित्तं तन्निमत्तं तन्निमित्तादिति । क्रियमाणेपि तन्निमित्तग्रहणे ऽत्र प्राप्नोति । पञ्चकपालस्येदं खण्ड पाञ्चकपालमिति । अथ विज्ञायते । स निमित्तमस्य सोयं तन्निमित्तस्तन्निमित्तादिति । न दोषो भवति । यथा न दोषस्तथास्तु । स निमित्तमस्य सोयं तन्निमित्तः । तन्निमित्तादिति विज्ञायते । कुत एतत् । यदयमाह अर्थविशेषाऽसंप्रत्यये तन्निमित्तादपीति । तत्तर्हि निमित्तग्रहणं कर्तव्यम् । न कर्तव्यम् । द्विगोरिति नैषा पञ्चमी मा तर्हि सबन्धे षष्ठी । द्विगोस्तद्धितस्य लुग्भवतीति । कश्च द्विगोस्तद्धितः । निमित्तम् । यस्मिन् द्विगुरित्येतद्भवति । कस्मिंश्चैतद्भवति । प्रत्यये । इदं तर्हि वक्तव्यम् । अर्थविशेषासंप्रत्यये तन्निमित्तादपीति । एतच्च न वक्तव्यम् । इहास्माभिस्त्रैशब्द्यं साध्यं पञ्चसु कपालेषु संस्कृतः पंचकपाल्यां संस्कृतः पञ्चकपालोदशकपालइति तत्र द्वयोः समानार्थयोरेकेन विग्रहः । अपरस्मादुत्पत्तिर्भविष्यत्ययमविकन्यायेन । तद्यथा अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति आविकमिति । एवं पञ्चसु कपालेषु संस्कृत इति विगृह्य पञ्चकपाल इति भविष्यति । पञ्चकपाल्यां संस्कृत इति विगृह्य वाक्यमेव भविष्यति । तत् त्रैशब्द्यं चेह साध्यं तच्चैवं सति सिद्धं भवति ।

---

समानार्थ इति तदिदं लुग्विधानं तस्येति तद्धितस्य । स निमित्तमिति । स तद्धितोर्थद्वारेण निमित्तं यस्येत्यर्थः । यदयमिति । पञ्चकपाल्यां संस्कृत इत्यत्रापि तद्धितस्य निमित्तं द्विगुरिति किं द्वितीयवार्त्तिकारम्भेण । किं च तन्निमित्तग्रहणमपि व्यावर्त्याभावादनर्थकं स्यात् । निमित्तमिति । निमित्तनिमित्तिभावलक्षणस्य संबन्धस्यान्तरङ्गत्वात् स एवाश्रीयते न तु पौर्वापर्यलक्षणः । पौर्वापर्यस्य च पञ्चम्यालाभात् षष्ठ्याश्रयणमनर्थकं स्यात् । अव्यविकन्यायेनेति अव्यविकशब्दयोर्यो न्यायस्तेनेत्यर्थः । क्वचिदविरविकन्यायेनेति पाठस्तत्र च दृष्टान्तत्वेनोपन्यासः । अव्यविकन्यायेन तद्द्वारेण यथाप्रत्ययमुत्पादयति न स्वयं तथायमपीत्यर्थः । अथवाऽविरित्यस्य विभक्त्यन्तस्यानुकरणमविरिति । ततोऽनुकार्येणार्थेनार्थवत्वाद्या विभक्तिरुत्पद्यते तस्याद्वन्द्वान्तर्भावाल्लोपः न तु पूर्वस्या अनुकरणत्वात् संभूाभावात् । यथाऽस्यवामीयमिति षष्ठ्या लुगभावः । अथवा भाष्यकारवचनप्रामाण्यादस्य साधुत्वम् । एवमिति । पञ्चकपालीशब्दात्त्वनभिधानात्तद्धितानुत्पत्तिरिति भावः ॥

गोत्रेऽलुगचि ॥ ८९ ॥ गोत्रेऽलुगचीति चेदितरेतराश्रयत्वादप्रसिद्धिः॥ गोत्रेलुगचीतिचेदितरेतराश्रयत्वादप्रसिद्धिः ॥ केतरेतराश्रयता। अलुङ्निमित्तोजादिः। अजादिनिमित्तश्चालुक्। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते। विप्रतिषेधाल्लुकश्छविधानम्*। विप्रतिषेधाल्लुकः छोभविष्यति। लुकोवकाशः। गर्गाः। वत्साः। बिदाः। उर्वाः। छस्यावकाशः। शालीयो मालीयः। गार्गीयो वात्सीयः। इहोभयं प्राप्नोति। गर्गाणां छात्राः गार्गीयाः। वात्सीयाः। छो भवति विप्रतिषेधेन। नैष युक्तो विप्रतिषेधः। भूम्नीति च लुक् प्राप्तो बाह्ये चार्थे विधीयतेऽजादिः। बहिरङ्गमन्तरङ्गाद् विप्रतिषेधादयुक्तं स्यात् ॥ १॥ भूम्नि प्राप्तस्यलुको यदजादौ तद्धितेऽलुकं शास्ति। एतद्ब्रवीति कुर्वन् समानकालावलुग्लुकौ च ॥ यदयं भूम्निप्राप्तस्य लुकोऽजादौ तद्धिते ऽलुकं शास्ति। तज्ज्ञापयत्याचार्यः समानकालावेतावलुग्लुकाविति। यदि वा लुकः प्रसङ्गे भवत्यलुक् छस्तथा प्रसिद्धोस्य। यदि वा लुकः प्रसङ्गे ऽलुग्भवति तथास्यच्छः प्रसिद्धो भवति। पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः। लुग्वालुकः प्रसङ्गं प्रतीक्षते छेऽलुगस्य तथा। लुग्वा पुनरलुकः प्रसङ्गं यदि प्रतीक्षते। तथा ऽस्य-

---

गोत्रे ऽलुगचि। यस्कादिभ्यो गोत्र इति प्रकरणेन प्राप्तस्य लुको विषयविशेषे ऽयमपवादः गोत्रे लुगचोति चेदिति। अस्मिन् सूत्रन्यासे दोषः। यदि तु गोत्रे लुगित्युक्त्वा ह्लिनित्युच्येत तदा न स्याद्दोष इत्यर्थः। अलुङ्निमित्त इति। गर्गाणां छात्रा इति प्राग्दीव्यतीयार्थविवक्षायां सत्यलुकि वृद्धत्वाच्छेन भाव्यं नान्यथा छे च कृते इयादेशे परतोऽलुगितोतरेतराश्रयत्वम्। व्यक्तिपक्षेऽचीति परसप्तम्याश्रयणेऽयं दोषः। आकृतिपक्षे तु विषयसप्तम्याश्रयणे ऽस्य दोषस्यानवतारः। गार्गीया इति। गार्ग्यस्यायं छात्रइति यदा एकवचनान्ता प्रकृतिस्तदेदं छस्यावकाशप्रदर्शनम्। भूम्नीति चेति। प्रत्ययार्थं बहुत्वमात्रापेक्षो लुगन्तरङ्गोबाह्यप्राग्दीव्यतीयार्थापेक्षत्वात्तु बहिरङ्गोजादिप्रत्ययः। अन्तरङ्गबहिरङ्गयोश्चातुल्यकालत्वादयुक्तो विप्रतिषेधः। तुल्यकालत्वप्रतिपादनायाह। भूम्नीति। समानकालाविति। यदि पूर्वं लुक् प्रवर्तेत तदाभिनिर्वृत्तस्य निवर्तयितुमशक्यत्वादनर्थकमलुग्विधानं स्यात्। तस्मादलुग्विधानान्न तावत्पूर्वं लुक् प्रवर्तत इति लुकोपि सापेक्षत्वादन्तरङ्गत्वाभावादुपपन्नएव विप्रतिषेध इत्यर्थः। यदि वेति। अन्तरेणापि विप्रतिषेधं लुगपवादत्वादलुकस्तन्निमित्तमजादिप्रत्ययो बलवत्त्वात्प्रवर्त्तत इत्यर्थः। पूर्वमिति। निरपवा-

ञ्छे ऽलुक् सिद्धो भवति। प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशत इति। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् *। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः। बिदानामपत्यं माणवकः बैदः बैदौ। किमर्थमिदम्। नाचीत्येवालुक् सिद्धः। अचीत्युच्यते। न चात्राजादिं पश्यामः। प्रत्ययलक्षणेन। वर्णाश्रये नास्ति प्रत्ययलक्षणम्। एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि *। एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः। बैदस्यापत्यं बहवो माणवका बिदाः। बैदयोर्वा बिदाः। अञ्यो बहुषु। यञ्यो बहुष्वित्युच्यमानो लुग्न प्राप्नोति। मा भूदेवम्। अञ् योबहुषु यञ् यो बहुष्विति। अञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवं भविष्यति। नैवं शक्यम्। इह हि दोषः स्यात्। काश्यपप्रतिकृतयः काश्यपा इति। नैष दोषः। यत्तावदुच्यते। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्य इति। न वक्तव्यः अचीत्येवालुक् सिद्धः। अचीत्युच्यते न चात्राजादिं पश्यामः। प्रत्ययलक्षणेन। ननु चोक्तं वर्णाश्रये नास्ति प्रत्ययलक्षणमिति। यदि वा कानि चिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति। त-

---

देविषये उत्सर्गेण प्रवर्त्तितव्यमिति पश्चादसौ प्रवर्त्तत इति भावः। प्रकल्प्येति। अन्यथा-निर्विषयो ऽपवादः स्याद्यदि सर्वत्रोत्सर्गः प्रवर्तेतेति भावः। गोत्रस्येति। गोत्रप्रत्ययस्येत्यर्थः। बहुषु लोपिन इति। बहुष्वर्थेषु विधीयमानलोपस्येत्यर्थः। बहुवचनान्तस्येति यदातदर्थान्तरे यूनिसंक्रामतितदन्ताद्यूनियदा प्रत्ययः क्रियतेइत्यर्थः। द्व्येकयोरिति। द्वित्वैकत्वयोरित्यर्थः। द्वयोर्यूनोरेकस्मिन्वा यूनि यदाप्रत्यय उत्पद्यत इत्युक्तं भवति। बिदानामिति बिदस्यापत्यानि बहूनि। अनृष्यानन्तर्य इति गोत्रेञ्। तदन्ताद्यून्यत इञ्। तस्य ण्यक्षत्रियार्षञित इति लुक्। तत्राञो बहुषूत्पन्नत्वाल्लुक् प्राप्तः प्रतिषिध्यते। अञन्तमिति। इञि लुप्ते युवसु बहुष्वञन्तस्य वर्तनाल्लुग्भविष्यतीत्यर्थः। काश्यपा इति। काश्यपस्यापत्यं बिदादित्वादञ्। तत एकस्यैव काश्यपस्य बह्व्यः प्रतिकृतयो यदा विवक्षिता भवन्ति तदैवेप्रतिकृताविति कन्प्रत्ययस्तस्य देवपथादित्वाल्लुप्। हरीतक्यादिषु व्यक्तिरिति वचनाल्लिङ्गमेव युक्तवद्भावेन भवति। वचनं त्वभिधेयगतमेव। यद्यैकशेषः क्रियते तदा ऽञन्तस्य प्रकृतिबहुत्वे वर्त्तमानाल्लुक् यदिप्रसङ्गः। यदि वेति। यद्यर्थ वेत्यर्थः। अदृणेड् इत्यत्र हलादौ पिति सार्वधातुके विधीयमान

था चेदमपि भविष्यति। अथ वाऽविशेषेणालुकमुक्त्वा हलि नेति व- क्ष्यामि। यद्यविशेषेणा लुकमुक्त्वा हलि नेत्युच्यते। बिदानामपत्यं बह्वो माणवका बिदाः। अत्राप्यलुक् प्राप्नोति। अस्तु पुनरस्य यु- वबहुत्वे वर्तमानस्य लुग्भविष्यति। पुनरलुकस्मान्न भवति। समर्था- नां प्रथमस्य गोत्रप्रत्ययान्तस्यालुगुच्यते। न चैतत्समर्थानां प्रथमं गो- त्रप्रत्ययान्तम्। किं तर्हि। द्वितीयमर्थमुपसंक्रान्तम्। अवश्यं चैत- देवं विज्ञेयम्। अत्रिभरद्वाजिका। वसीष्ठकश्यपिका। भृग्वङ्गिरसि- का। कुत्सकुशिकिका इत्येवमर्थम्। गर्गभार्गविकाग्रहणं वा निय- मार्थम्। अथ वा गर्गभार्गविकाग्रहणं कर्तव्यम्। तन्नियमार्थं भवि- ष्यति। एतस्यैव गोत्रप्रत्ययान्तस्य द्वितीयमर्थमुपसंक्रान्तस्यालुग्भव- ति नान्यस्येति। यदप्युच्यते। एकवचनद्विवचनान्तस्य च प्रवृत्तौ ब-

---

स्तपर्णक इमितोमागमो लुप्तेऽपि सार्वधातुके भवति। तत्र हि हलीत्यनेन सार्वधातुकं वि- शेष्यते। ततश्च हलादिसार्वधातुकाश्रयत्वादिमागमः प्रत्ययलक्षण इति लुप्तेऽपि प्रत्यये प्रवर्तते। गर्गे हितं गर्गहितमित्यादौ त्वत्रादयोऽत्र् मात्रे विधीयमानावर्णरूपतानिमित्ता एव न तु प्रत्ययत्वनिमित्ता इति प्रत्ययलक्षणाभावाल्लोपे न प्रवर्तन्ते। इहाप्यजादौ प्रत्यये लुगुच्यमानः प्रत्ययलक्षणो भवतीति लुप्तेऽपि प्रत्यये प्रवर्तत इति भावः। अविशेषेणेति। प्राग्दीव्यतीयोऽर्थ एवापेक्ष्यते न त्वजादिः प्रत्ययविशेष इत्यर्थः। हलि नेति। गर्गेभ्य आ- गतं गर्गरूप्यं गर्गमयमिति हलादावलुङ् न भवति। बिदानामपत्यमिति। अत्रापि प्राग्- दीव्यतीयार्थस्य विवक्षितत्वादलुक् प्राप्नोतीत्यर्थः: युवबहुत्व इति। लुग्विधौ गोत्रप्रत्य- यमात्रं गृह्यत इति युवबहुत्वेऽपि लुक् प्रवर्तत इति भावः। प्रथमस्येति। प्रथमादित्यनु- वृत्तमिहार्थवशात् षष्ठ्यन्तं संपद्यते। प्रथमार्थवृत्तित्वाच्च प्राथम्यं गोत्रप्रत्ययस्य द्वितीया- र्थवृत्तित्वे त्वलुगभावः। अत्रिभरद्वाजिकेति। अत्रेरपत्यानि बहूनि इतश्चानिञ इति ढ- क्। तदन्ताद्युवबहुत्वे अत इञ्। तस्य ण्यक्षत्रियार्षेति लुक्। अत्रिभृग्वितिढको लुक्। भरद्वाजशब्दाद्बिदाद्यञ्। ततो यूनीञ्। पूर्ववल्लुक्। अञोऽपि युवबहुत्वे लुगिष्यते। अ- नेन प्रथमस्योच्यमानोऽत्रिभरद्वाजानां मैथुनिकेति प्राग्दिव्यतीयार्थविवक्षायामलुग्न भ- वति। वसिष्ठकश्यपिकेति। वसिष्ठादृष्यण्। यूनीञो लुक्। अणोऽप्यत्र्यादिसूत्रेण लुक्। कश्यपाद्बिदाद्यञ्। यूनीञो लुक्। अञो यञञोश्चेति लुक्। पूर्ववल्लुन्। भृगोः ऋष्यण्। यूनीञो लुक्। अणोऽत्रिभृग्विति लुक्। एवमङ्गिरसः। कुत्सादृष्यण् तस्माद्यूनीणो द्वयच इति फिञा भाव्यं न त्विञेति युववित्रक्षा न क्रियते। कुशिकाद्बिदाद्यञ्। यूनीञो लु-

हुषु लोपो यूनि वक्तव्यः। न वक्तव्यः। ननु चोक्तम्। अञ्यो बहुषु य-ञ्यो बहुष्वित्युच्यमानो लुङ् प्राप्नोतीति। माभूदेवमञ्यो बहुषु य-ञ्यो बहुष्विति। अञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवं भविष्यति। ननु चोक्तं नैवं शक्यमिह हि दोषः स्यात् काश्यपप्रतिकृतयः काश्य-पा इति। नैष दोषः। लौकिकस्य तत्र गोत्रस्य ग्रहणम्। न चैतल्लौ-किकं गोत्रम्। यद्यञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवमुच्यते। बिदानाम-यमपत्यं माणवको बैदः बैदौ अत्रापि प्राप्नोति। अलुगत्र लुकं बाधिष्यते। अलुकि च कृते पुनर्लुको निमित्तं नास्तीति कृत्वा पुनर्लुग्न प्राप्नोति। उक्तं वा। किमुक्तम्। आपत्यं वा गोत्रम्। परमप्रकृतेश्चापत्यः। आप-त्याज्जीववंश्यात् स्वार्थे द्वितीयो युवसंज्ञः स चास्त्रियामेको गोत्रग्रह-णा नर्थक्यं च। बहुवचनलोपिषु च सिद्धमिति। तत्र बिदानामप-त्यं माणवक इति विगृह्य बिदशब्दाद् द्व्येकयोरुत्पत्तिर्भविष्यति। बैदः बैदौ। बैदस्यापत्यं बहवो माणवका इति विगृह्य बिदशब्दाद् बहुषूत्पत्तिर्भविष्यति बिदा इति अविरविकन्यायेन॥

---

क्। अञोपि लुक्। वुन् गर्गादियञो लुक्। भृगोर्ऋष्यण्। यूनोञो लुक्। अग्रोत्रिष्व-ष्विति लुक् प्राप्तो न गोपवनादिभ्य इति प्रतिषिध्यते। स एष प्रतिषेधो नियमार्थ इति बिदा इत्यत्रयुवलक्षणे र्थे ऽलुङ् न भवतीत्यर्थः। लोपो यूनीति। लोपग्रहणेन लुग् लक्ष्य-। पैलो हि प्रत्ययलक्षणेन वृद्धिस्वरप्रसङ्गः। लौकिकस्येति। अपत्यस्येत्यर्थः। काश्यप इत्यञन्तं तु प्रतिकृतिबहुत्वे वर्त्तते नापत्यस्य बहुत्वे। निमित्तं नास्तीति। बहुत्वं नास्ति द्वित्वैकत्वविषयत्वादित्यर्थः। आपत्यं वेति। अपत्यस्येदमापत्यं पौत्र प्रभृत्यपत्यमित्यर्थ-स्तद्गोत्रसंज्ञं भवति। परमप्रकृते रिति। गर्गादेरेवापत्यप्रत्ययःकार्यो न त्वनन्तरगोत्र-युवभ्य इत्यर्थः। आपत्यादिति। गर्गादेर्यदा पौत्रप्रभृतेरपत्ये चतुर्थादौ जीववंश्ये प्रत्ययः क्रियते तदा स्वार्थे द्वितीयो यजिञोश्चेत्यादिना फगादिः क्रियते गार्ग्यायण इति। स-चेति। स्त्रियां द्वितीयप्रत्ययाभावाद् गार्गीत्येव भवति। एक इति। परमप्रकृतेश्चापत्य इ-त्यनेन तदर्थस्य लाभात्। बहुवचनलोपिष्विति। युवबहुत्वे बिदा इत्यादि सिद्धम्। द्वि-त्वैकत्वयोस्तु बैदो बैदावित्यादीत्यर्थः। तत्र बिदानामिति गोत्रस्य बहुषु लोपिन इति वार्त्तिकप्रयोजनमन्यथा साधयति। परमप्रकृतेरेव यूनि प्रत्ययः। आपत्याज्जीववंश्यादि-त्यनेन स्वार्थिको द्वितीयो ण्यक्षत्रियार्षञित इति लुप्यते। अविरविकन्यायेनेति। के-चिदाहुरग्रन्थोयमिति। परमप्रकृतेश्चापत्य इति वाचनिकत्वादस्यार्थस्य। अन्ये तु वचन-स्यैवाव्यविकन्यायमूलत्वप्रतिपादनायैतदुक्तमित्याहुः॥

यूनि लुक् ॥ ९० ॥ यूनिलुगचीति चेत् प्रत्ययस्यायथेष्टप्रसङ्गः*। यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टं प्राप्नोति । अनिष्टे प्रत्ययेऽवस्थिते लुक् । अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत। सिद्धं त्वविशेषेण लुग्वचनं हलि चेति प्रतिषेधः * ।सिद्धमेतत् । कथम् । अविशेषेण लुकमुक्त्वा हलि नेति वक्ष्यामि । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टप्रसङ्ग इति । नैष दोषः । अचीति नैषा परसप्तमी । का तर्हि । विषयसप्तमी । अजादौ विषय इति । तत्राचि विषये लुक्क्रिते यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति । कानि पुनरस्य योगस्य प्रयोजनानि । प्रयोजनं सौवीरगोत्रेभ्यो णठक्छाः । ण । फाण्टाहृतेरपत्यं माणवकः फाण्टाहृतः । फाण्टाहृतस्य यूनः छात्राः फाण्टाहृताः । ण । ठक् । भागवित्तेरपत्यं माणवको भागवित्तिकः । भागवित्तिकस्य यूनश्छात्राभागवित्ताः। ठक् । छ । तैकायनेरपत्यं माणवकस्तैकायनीयः । तैकायनीयस्य यूनश्छात्राः तैकायनीयाः । छ । इञ्ण्यौ सर्वत्र । इञ्ण्यौ सर्वत्र प्रयोजनम् । औपगवेर्यूनश्छात्राः औपगवीयाः । वृद्धवदतिदेशे सति इञो गोत्र इत्यण् प्राप्नोति। नैष दोषः । प्रत्याख्यायतेसावतिदेशः । कथं पुनर्यानि

---

यूनि लुक् । यूनि लुगचोति चेदिति। अस्मिन् सूत्रन्यासे दोषो न तु न्यासान्तर इत्यर्थः । फाण्टाहृतस्यापत्यमित्यत इञ्। तस्यापत्यं युवा फाण्टा हृतिमिमताभ्यामिति णः। तस्य छात्रा इति प्राग्दीव्यतीयार्थविवक्षायामिञश्चेत्यणिष्यते । स च न प्राप्नोति । णान्तत्वात् । ततश्च वृद्धलक्षण एवच्छे परतोणस्यलुक् स्यादिति च्छश्रवणप्रसङ्गः। भागवित्तेरिति। भागवित्तस्यापत्यमित्यत इञ् । ततो यूनि वृद्धाट्ठक् सौवीरेषु बहुलमिति ठक्। तस्य छात्रा इत्यर्थे ठको लुकोञश्चेत्यण् । तैकायनेरिति । तिकस्यापत्यमिति तिकादिभ्यः फिञ् । ततो यूनि फेश्छचेति च्छः । यमुन्दश्च सुषामा च वार्ष्यायणि फिञः स्मृता इति परिगणनं भाष्यकारैर्ण फेश्छचेत्यत्रनाश्रितमिति तैकायनेश्छो भवति । परिगणनाश्रये तु प्राप्नोति। तस्य छात्रा इति च्छे लुप्ते वृलक्षणः छः । औपगवेरिति । उपगोरपत्येण् । ततो यूनीञ् तस्मिन् लुप्ते छः । किं पुनरिञो लुकः प्रयोजनं यदा तस्मिन्न लुप्तेपि सिद्धश्छो वृद्धलक्षण, इत्याह । वृद्धवदिति । वृद्धशब्दः पूर्वाचर्यसंज्ञा गोत्रस्य तत्र यूनो वृद्धवदतिदेशादिञो लुक्यसत्यण् स्यात् । कथं पुनर्यानीति । गार्ग्यायणानां समूह

प्रयोजनानि तानि ज्ञापकेन सिद्धानि । यत्खच्छान्तात्तर्हि इञ् प्रयोजनम् । यत् । श्वशुरस्यापत्यं श्वशुर्यः । श्वशुर्यस्यापत्यं श्वाशुरिः । श्वाशुरेर्यूनश्छात्राः श्वाशुराः । यत् । ख । कुलस्यापत्यं कुलीनः कुलीनस्यापत्यं कौलीनिः कौलीनेर्यूनश्छात्राः कौलीनाः । ख । छ । स्वसुरपत्यं स्वस्रीयः स्वस्रीयस्यापत्यं स्वास्रीयिः । स्वास्रीयेर्यूनः छात्राः स्वास्रीयाः । एतान्यपि हि न सन्ति प्रयोजनानि । अत्रापि यूनि श्वशुर्यः कुलीनः स्वस्रीय इत्येव भवितव्यम् । उक्तमेतत् । अणिञोर्लुकि अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति । अब्राह्मणगोत्रमात्रादित्युच्यते । न चैतदब्राह्मणगोत्रमात्रम् । अब्राह्मणगोत्रमात्रादिति नायं पर्युदासः । यदन्यद् ब्राह्मणगोत्रमात्रादिति । किं तर्हि । प्रसज्यप्रतिषेधः । ब्राह्मणगोत्रमात्रान्नेति । अवश्यं चैतदेवं विज्ञेयम् । मायूरिः । कापोतिः । कापिञ्जलिरित्येवमर्थम् । एवं तर्हि अण्ण्योसर्वत्र प्रयोजनम् । अण् । ग्लुचुकायनेरपत्यं माणवकः ग्लौचुकायनः । ग्लौचुकायनस्य यूनश्छात्रा ग्लौचुकायनाः । ण्यस्य कापिञ्जलाद्यर्थम् । कापिञ्जलादेरपत्यं माणवकः कापिञ्जलाद्यः कापिञ्जलाद्यस्य यूनश्छात्राः कापिञ्जलादाः । प्राग्दीतोधिकारे

---

इत्यादौ नोक्तलक्षणो वुञिष्यते स न प्राप्नोति । ज्ञापकेनेति । राजन्याद्वुञ् मनुष्याच्चेति वक्ष्यमाणेन । तदेवमिञो लुका विनाप्यौपगवीया इति छस्य सिद्धत्वादनुदाहरणमेतत् । इदानीमिञउदाहरणान्तरं दर्शयितुमाह । यत्खच्छान्तादिति । श्वाशुरिरिति । आपत्यस्य च तद्धिते नातीति यलोपः । उणादीनामव्युत्पन्नत्वाद् न य्वाभ्यामिति वृद्धिनिषेध ऐजागमश्च न प्रवर्त्तते । कुलीन इति । कुलात् खः । स्वस्रीय इति । स्वसुश्छः । एतान्यपीति । लक्षणान्तरेण युवप्रत्ययस्य लुकः सिद्धत्वादित्यर्थः । न चैतदिति । अब्राह्मणशब्देन ब्राह्मणसदृशक्षत्रियादिग्रहणाच्छ्वशुरादिशब्दैश्च क्षत्रियादेरनभिधानादित्यर्थः । प्रसज्यप्रतिषेध इति । युवप्रत्ययमात्रस्य लुकं विधाय ब्राह्मणगोत्रात्परस्य स निषिध्यते इत्यर्थः । मायूरिरिति । मयूरस्य पक्षिविशेषस्य गोत्र इञ् तदन्ताद्यूनि यञिञोश्चेति फक् । तस्य लुक् । ग्लुचुकायनेरिति । ग्लुचुकस्यापत्यं गोत्रमिति प्राचामवृद्धात्फिन्बहुलमिति फिन् । ततो यून्यण् । तस्य लुक्यणेव भवति । अन्यथा वृद्धत्वाच्छः स्यात् । कापिञ्जलादेरिति । कपिञ्जलादस्यापत्यमत इञ् । ततो यूनि कुर्वादिभ्यो ण्य इति ण्यः । तस्य लुकीञश्चेत्यण् भवति । अन्यथा छः स्यात् । प्राग्दीव्यत इति । प्राग्दीव्यतो येऽर्थास्तेषु विवक्षितेष्वित्यर्थः । वृद्धवदिति । गोत्रवदित्यर्थः । अन्यथा गोत्रसंज्ञया युवसंज्ञया बाधितत्वाद् गो-

यूनो वृद्धवदतिदेशः * । प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः कर्तव्यः । युवा वृद्धवद्भवतीति वक्तव्यम् । किं प्रयोजनम् । गार्ग्यायणानां समूहो गार्ग्यायणकं गार्ग्यायणानां किं चिद् गार्ग्यायणकम् । गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः । गोत्राश्रयो वुञ् यथा स्यात् । यदि वृद्धवदतिदेशः क्रियते । औपगवेर्यूनश्छात्रा औपगवीया इतीञो गोत्र इत्यण् प्राप्नोति । यदि पुनर्युवा वृद्धवदित्यनेनानुत्पत्तिरतिदिश्येत कथं पुनर्युवा वृद्धवदित्यनेनानुत्पत्तिः शक्या निर्देष्टुम् । वतिनिर्देशोयम् । कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा । उशीनरवन्मद्रेषु यवाः सन्ति न सन्तीति , मातृवदस्याः कलाः सन्ति न सन्तीति । एवमिहापि युवा वृद्धवद्भवति न भवतीति । एवं वाक्यशेषं समर्थयिष्यामहे यथा गोत्रे युवप्रत्ययो न भवति । प्राग्दीव्यतोधिकारे यून्यपि न भवतीति । तद्वक्तव्यम् । यद्यप्येतदुच्यते । अथ वैतर्हि यूनि लुगित्येतन्न क्रियते । कथं तर्हि फक्फिञोरन्यतरस्यामिति । फक्फिञ्वर्ती युवा वा वृद्धवद्भवतीति वक्ष्यामि । यदा तर्हि न वृद्धवत्तदा गार्ग्यायणानां समूहो गार्ग्यायणकम् । गार्ग्याय-

---

णाश्रयकार्याप्रसङ्गः । गार्ग्यायणानामिति । गर्गस्य गोत्रं गर्गादिभ्यो यञ् । तदन्ताद्यूनि यञिञोश्चेति फक् । तदन्तात्समूहे गोत्रोक्षोष्ट्रेत्यादिना वुञ् । इदमर्थे गोत्रचरणाद्वुञिति वुञ् । सास्य भक्तिरित्यत्रार्थे गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् इति वुञ् औपगवेरिति । सत्यतिदेशे यूनि लुगित्यस्य प्रत्याख्यानादिञो लुगभावाद्वृद्धवदतिदेशादिञश्चेत्यण्प्रसङ्गः । एतद्दोषपरिहारायाह । यदि पुनरिति । यथा गोत्रे युवप्रत्ययो नोत्पद्यते यथा यून्यपि । प्राग्दीव्यतीयार्थविवक्षायां युवप्रत्ययस्यानुत्पादादिञ् चेत्यण् भविष्यतीत्यर्थः । अतिदिश्यतेति । अतोयं दोषो न स्यादिति वाक्यशेषः । एवंवाक्यशेषमिति । उभयसंभवेन भवतीत्यध्याहरिष्यत इत्यर्थः । एवमित्यनेनानन्तरप्रक्रान्तो न भवतीति वाक्यशेषः परामृश्यते । तद्वक्तव्यमिति । ततश्च गौरवं स्यादिति भावः । अथ वैतर्हीति । एवं सतीत्यर्थः । एतेन गौरवं परिहृतम् । कथमिति । यूनि लुगित्यस्मिन्नकृते फक्फिञोरन्यतरस्यामित्येतदपि न कर्तव्यम् । विधेयकार्यानिर्देशात् । ततश्च गार्ग्यायणस्य छात्राः गार्गीयाः गार्ग्यायणीया इति रूपद्वयं न सिध्यतीति भावः । फक्फिञ्वर्तीति । वर्तनं वर्तः फक्फिञोर्वर्तः फक्फिञ्वर्तः स विद्यते यस्मिन् यूनि स वा वृद्धवत् । ततः पक्षे फक्फिञोरुत्पत्तिः पक्षेऽनुत्पत्तिरिति द्वैरूप्यसिद्धिः । यदा तर्हीति । गार्ग्यायणानां समूह इति विवक्षायां यदा

यानां किंचिद् गार्ग्यायणकम् । गार्ग्यायणो भक्तिरस्य गार्ग्यायण-
कः । गोत्राश्रयो वुञ् न प्राप्नोति । यदि पुनर्युवा वृद्धवदित्यनेनार्थो-
तिदिश्यते । प्राग्दीव्यतोधिकारे यूनो वृद्धवदर्थो भवतीति । तद्वक्त-
व्यम् । यद्यप्येतदुच्यते । अथ वैतर्हि यूनि लुगित्येतन्न क्रियते । त-
त्कथं फक्फिञोरन्यतरस्यामिति । फक्फिञ्वन्तौ युवार्थौ वा वृद्धव-
द्भवतीति वक्ष्यामि । यदा तर्हि न वृद्धवत् । तदा गार्ग्यायणानां समूहो
गार्ग्यायणकम् । गार्ग्यायणानां किंचिद् गार्ग्यायणकम् । गार्ग्यायणो
भक्तिरस्यगार्ग्यायणकः । गोत्राश्रयो वुञ् न प्राप्नोति । एवं तर्हि राज-
न्याद्वुञ् मनुष्याच्च लौकिकं ज्ञापकं परम् । यदयं वुञ्विधौ राजन्यम-
नुष्ययोर्ग्रहणं करोति । तज्ज्ञापयत्याचार्यः लौकिकं परं गोत्रग्र-
हणमिति । युवा च लोके गोत्रमित्युपचर्यते । किं गोत्रोसि माणवक ।
गार्ग्यायणः । किं गोत्रोसि माणवक । वात्स्यायनः । यद्येतज्ज्ञाप्यते । औ
पगवेर्यूनश्छात्राः औपगवीयाः । गोत्राश्रय इञोगोत्रइत्यण् प्राप्नोति । सा-
महिकेषु ज्ञापकम् । यदि सामूहिकेषु ज्ञापकम् । गार्ग्यायणानांकिंचि-
द्गार्ग्यायणकम् । गार्ग्यायणोभक्तिरस्यगार्ग्यायणकः । गोत्राश्रयोवुञ्-
नप्राप्नोति । एवं तर्हि वुञ्विधौ ज्ञापकम् । यदि वुञ्विधौ ज्ञापकम् ।
शालङ्केर्यूनश्छात्राः शालङ्काः । इञोगोत्र इत्यण्न प्राप्नोति । अस्तु

---

वृद्धवदतिदेशात् फकोनुत्पत्तिस्तदा गार्ग्यकमिति सिध्यति । यस्मिंस्तु पक्षे वृद्धवदतिदेशा-
भावात् फक्श्रवणं तत्र गोत्रलक्षणो वुञ् न प्राप्नोति । इदानीमर्थातिदेशदर्शनायाह ।
यदि पुनरिति । यूनि लुगित्येतदिति । यूनो गोत्रत्वातिदेशाद् युवप्रत्ययस्याभावाल्लुग्न
विधेय इत्यर्थः । यदयमिति । प्राग्गोत्रसंज्ञाया गोत्रे कुञ्जादिभ्य इत्यतो गोत्रग्रहणानु-
वर्त्तनाच्छास्त्रीयगोत्राभिधायिनौ राजन्यमनुष्यशब्दौ ततश्च गोत्र ग्रहणेनैव ताभ्यां वुञः
सिद्धत्वात् किं तयोर्ग्रहणेन । गृहीतौ तु ज्ञापयतो गोत्रग्रहणं लौकिकगोत्रपरमिति ।
राजन्यमनुष्यशब्दौ च लौकिके प्रयोगे जातिविशेषवाचित्वाल्लौकिकगोत्राभिधायिनौ न
भवत इति कर्तव्यं तयोर्ग्रहणम् । लौकिकं च गोत्रमपत्यमात्रम् । परमिति । अपत्या-
धिकारादुत्तरमित्यर्थः । उपचर्यत इति । व्यवह्रियत इत्यर्थः । शालङ्केरिति । शलङ्कुरप-
त्यमिति बाह्वादेराकृतिगणत्वादिञ् । पैलादिषु शालङ्किशब्दपाठान्निपातनाच्छलङ्काद्देशः ।
अत एव च निपातनाद् गोत्रे ऽपि नडादिफकेञ् न बाध्यते । ततो यूनि फक् । तस्य पै-
लादित्वाल्लुकि कृते इञन्तं यूनि वर्तत इति गोत्राश्रय इञश्चेत्यण् न प्राप्नोति ।

तर्ह्यविशेषेण। कथमौपगवेर्यूनश्छात्रा औपगवीयाः। गोत्रेऽञ् इति विशेषयिष्यामः। गोत्रे य इञ् विहित इति॥

तस्यापत्यम्॥ ९२॥ तस्येदमित्यपत्येऽपि॥ तस्येदमित्यपत्येऽपि अण् सिद्धः। तस्येदंविशेषा ह्येते अपत्यं समूहो विकारो निवास इति। किमर्थं तर्हीदमुच्यते। बाधनार्थं कृतं भवेत्॥ ये तस्य बाधकास्तद्बाधनार्थम्। कथं पुनरशैषिकः शैषिकं बाधेत। उत्सर्गः शेष एवासौ॥ यो ह्युत्सर्गः सोपि शेष एव। अथ तस्मिन् बाधकबाधनार्थे सति किं प्रयोजनम्। वृद्धान्यस्य प्रयोजनम्॥ वृद्धानि प्रयोजयन्ति। भानोरपत्यं भानवः। श्यामगोरपत्यं श्यामगव इति। कथं पुनरिच्छतापि अपवादः प्राप्नुवन् शक्यो बाधितुम्। तस्यग्रहणसामर्थ्यात्। किमिदं भवानध्यारुह्य तस्यग्रहणस्य प्रयोजनमाह न पुनः

---

गोत्रेऽञमिति। कण्वादिभ्यो गोत्र इत्यत्र गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्यते। गोत्रप्रत्ययानुवादेन ह्यत्राण्विधीयते। कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्योऽण् भवतीति। कण्वादयश्च गर्गादिषु पठितास्तत्र च गोत्र इति वर्त्तते। अपत्याधिकारे च गोत्रग्रहणादेव शास्त्रीयं गोत्रं गृह्यते। तदेव कण्वादिभ्यो गोत्र इत्यत्रानूद्यते। तदेवेञश्चेत्यत्रानुवर्त्तते। तेन गोत्रे य इञ् विहितस्तदन्तादण् विधीयमानः शालङ्केर्भविष्यति न त्वौपगवेरित्यर्थः। नन्वौपगविशब्दे ऽनेन सूत्रेणाञो लुका भाव्यम्। नैष दोषः। पूर्वमेवास्योदाहरणस्य प्रत्याख्यानादन्यथासिद्धत्वादित्यभिप्रायेणेदमुक्तम्॥

तस्यापत्यम्। तस्येदमिति। इदमिति संबन्धिसामान्ये सर्वविशेषान्तर्भावादपत्यस्याप्यन्तर्भूतत्वादित्यर्थः। बाधका इति। जातौ बहुवचनम्। तस्येदमित्यनेन विधीयमानस्याणो बाधकश्छस्तस्य बाधनार्थमिदं सूत्रमित्यर्थः। कथं पुनरिति। एकस्मिन्नर्थे प्राप्तौ सत्यां बाध्यबाधकभावो भवति। तत्र शेषे ऽर्थे विधीयमानश्छः अण् त्वनेनापत्य इति भिन्नार्थत्वादनयोः कथं बाध्यबाधकभाव इति प्रश्नः। उत्सर्ग इति। प्रकृतिसामान्यसंबद्धः सामान्यभूतो ऽपत्यार्थ उक्तः। अथ वेदमितिसामान्यभूतोर्थ उत्सर्गस्तदन्तर्भावादसत्यस्मिन्पृथग्योगे ऽपत्यार्थ उत्सर्गः शेष एव भवति। अनुपयुक्तत्वादित्यर्थः। कथं पुनरिति। प्रकृतिसामान्याद्विधानादणेवोत्सर्गः। प्रकृतिविशेषात्तु विधानाच्छोपवाद इति मत्वा प्रश्नः। तस्यग्रहणसामर्थ्यादिति। एकदेशेन सूत्रं लक्ष्यते। तेन पृथक्सूत्रारम्भादित्यर्थः। पृथक्सूत्रे हि अपत्यार्थस्य शेषत्वाभावाच्छस्याभावः। इतरोऽज्ञाताभिप्राय आह। किमिदमिति। अध्यारुह्येति। तत्रैव तात्पर्यं कृत्वेत्यर्थः। सिद्धान्तवादी

सर्वस्यैव योगस्य। अवश्यमुत्तरार्थमर्थनिर्देशः कर्तव्यः। समर्थविभक्तिरपि तर्हि अवश्यमुत्तरार्था प्रतिनिर्देष्टव्या। एवं तर्हि योगविभागकरणसामर्थ्यात्। इतरथा हि तस्यापत्यमत इञ् भवतीत्येव ब्रूयात्। पुलिङ्गेनायं निर्देशः क्रियते एकवचनान्तेन च। तेन पुल्लिङ्गादेवोत्पत्तिः स्यात्। एकवचनान्ताच्च। स्त्रीनपुंसकलिङ्गाद् द्विवचनबहुवचनान्ताच्चेदं न स्यात्। तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात् *। तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणम्। किं कारणम्। तस्याविवक्षितत्वात्। नात्र निर्देशस्तन्त्रम्। कथं पुनस्तेनैव च नामनिर्देशः क्रियते। तच्चातन्त्रं स्यात्। तत्कारी च भवांस्तद्द्वेषी च। नान्तरीयकत्वादत्र पुंल्लिङ्गेन निर्देशः क्रियते एकवचनान्तेन च। अवश्यं कया चिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्यः। तद्यथा। कश्चिद् धान्यार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय तुषपलालान्युत्सृजति। यथा कश्चिन्मांसार्थी मत्स्यान्सशकलान्सकण्टकानाहरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय शकलकण्टकानुत्सृजति। एवमिहापि नान्तरीयकत्वात्पुंल्लिङ्गेन निर्देशः क्रियते। एकवचनान्तेन च। न ह्यत्र निर्देशस्तन्त्रम्। सर्वनामनिर्देशे विशेषाऽसंप्रत्ययः सामान्यनिर्देशात् *। सर्वनामनिर्देशे विशेषासंप्रत्ययः। किं कारणम्। सामान्यनिर्देशात् सर्वनाम्नाऽयं निर्देशः क्रियते। सर्वनाम च सामान्यवाचि। तेन सामान्यवाचिन एवोत्पत्तिः स्याद् विशेषवाचिनो न स्यात्। सामा-

---

स्वाभिप्रायं दर्शयितुमाह। एवं तर्हीति। पुल्लिङ्गेनेति। यद्यपि नपुंसके ऽपि तस्येति रूपं तथापि पुंनपुंसकयोर्युगपन्निर्देशस्य कर्तुमशक्यत्वात् कामचारादेवमुक्तम्। स्त्रीनपुंसकलिङ्गादिति। सुमातुरपत्यं सौमात्रः। चत्रस्यापत्यं चात्रिरित्यादावित्यर्थः। तद्धितार्थनिर्देश इति। तद्धितप्रकरणादेवमुक्तम्। सर्वत्रैव हि शास्त्रे ऽस्मिन्नान्तरीयकत्वादुपात्तं लिङ्गसङ्ख्यं न विवक्ष्यते। क्व चित्सङ्ख्या तु विवक्ष्यते। यथा सुप्सुपेति। अप्रमाणमिति। तद्वशात्कार्यस्य विधिनिषेधौ न भवत इत्यर्थः। भावसूत्रे विस्तरेण भाष्यमेतद् व्याख्यातमिति तत एवावधार्यम्। सामान्यनिर्देशादिति। तस्येत निर्देशात्तच्छब्दादेव सामान्यवाचिनः प्रत्ययः स्याद्गोपग्वादिभ्य इत्यर्थः। सामान्यचोदना इति। विशेषाणामेव का-

न्यचोदनास्तु विशेषेषु*। सामान्यचोदनास्तु विशेषेष्ववतिष्ठन्ते। तद्यथा। गौरनुबन्ध्योऽजोऽग्नीषोमीय इति। आकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते। विषम उपन्यासः। अस्तिकारणं येनैतदेवं भवति। किं कारणम्। असंभवात्। आकृतावारम्भणादीनां संभवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणालम्भनविशसनादीनि क्रियन्ते। इदमप्येवंजातीयकमेव। असंभवात् सामान्यवाचिन उत्पत्तौ विशेषवाचिन उत्पत्तिर्भविष्यति। अपत्याभिधाने स्त्रीपुंलिङ्गस्याप्रसिद्धिर्नपुंसकलिङ्गत्वात् *। अपत्याभिधाने स्त्रीपुंलिङ्गस्याप्रसिद्धिः। किं कारणम्। नपुंसकलिङ्गत्वात्। अपत्यं नपुंसकलिङ्गं तेन नपुंसकलिङ्गस्यैवापत्याभिधानं स्यात्। स्त्रीपुंलिङ्गस्य न स्यात्। ननु चेदं पुरस्तादेव चोदितं परिहृतं च। उत्पत्तिस्तत्र चोद्यते। इह पुनरुत्पन्नेनाभिधानं चोद्यते। सिद्धं तु प्रजनस्य विवक्षितत्वात् *। सिद्धमेतत्। कथम्। प्रजनस्य विवक्षितत्वात्। प्रजनोऽत्र विवक्षितः। स च सर्वलिङ्गः। किं पुनः कारणं समानायामप्रवृत्तौ अपत्यं नपुंसकलिङ्गं प्रजनः सर्वलिङ्गः। एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम् *। एकार्थत्वेपि शब्दान्यत्वाल्लिङ्गान्यत्वं दृश्यते। तद्यथा। पुष्यः तारका नक्षत्रं गेहं कुटी मठ इति। अवयवान्यत्वाच्च *। अवयवान्यत्वाच्च लिङ्गान्यत्वं दृश्यते। तद्यथा।

---

र्येसिद्ध्यर्थं सामान्यमुपादीयते न तु स्वार्थमित्यर्थः। इदमपीति। अपत्यमित्यनेनैव सम्बन्धिशब्दत्वादपत्यवन्मात्रस्याक्षेपात्सामान्येनापत्यस्य विशेषणाद्विशेष्यभावायोगादिहापि सामान्येन विशेषा एव गृह्यन्ते। यदा तु प्रकरणवशाद्विशेषे सर्वनाम वर्तते तदा तस्मादपि प्रत्ययो भवति तादायनिरिति। नपुंसकलिङ्गस्येति। औपगवमित्यनेनैवापत्यस्याभिधानं स्यात। औपगव औपगवीत्येवं न स्यादित्यर्थः। प्रजन इति। प्रसवमात्रं विवक्षितं न तु लिङ्गसंख्ये अपीत्यर्थः। स चेति। सन्ततिरपत्यं प्रसव इति सर्वलिङ्गस्य शब्दैरभिधीयमानस्य दर्शनादित्यर्थः। समानायामिति। एकस्मिन्नर्थ इत्यर्थः। अपत्यमिति। अपत्यशब्दप्रत्याय्यमानमित्यर्थः। प्रजन इति। सर्वलिङ्गैः प्रत्याय्यमानत्वात्सर्वलिङ्ग इत्युच्यते। एकार्थ इति। एकैकोर्थः सर्वलिङ्गः स च केन चिच्छब्देन प्रत्याय्यमानः केन चिदेव लिङ्गेन युक्तः प्रतीयते। अवयवान्यत्वादिति। स्वार्थिकस्यापि प्रत्ययस्योत्पत्तौ भिन्नावयवत्वाद्भिन्नशब्दप्रत्याय्यमानत्वादेकस्यैवार्थस्य लिङ्गभेदोवगम्यते किं पुनरत्य-

कुटी कुटीरः । शमी शमीरः । शुण्डा शुण्डारः । अवयवान्यत्वात्किल लिङ्गान्यत्वं स्यात् । किं पुनर्यत्र शब्दान्यत्वमपि ॥

एको गोत्रे ॥९३॥ किमर्थमिदमुच्यते॥उत्पादयितारं प्रत्यपत्ययोगात् तस्य चाभिसंबन्धस्य विवक्षितत्वादेकवचनं गोत्रे* । उत्पादयितोत्पादयिताऽपत्येन युज्यते तस्य च विवक्षितत्वात् । उत्पादयितुः स चाभिसम्बन्धो विवक्षितः । उत्पादयितारं प्रत्यपत्ययोगात्तस्य चाभिसम्बन्धस्य विवक्षितत्वात् । उत्पादयितुरुत्पादयिरपत्याभिधाने ऽनेकःप्रत्ययः प्राप्नोति । इष्यते चैक एव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्येकवचनं गोत्रे । एवमर्थमिदमुच्यते । कथं पुनर्ज्ञायते उत्पादयितोत्पादयितापत्येन युज्यत इति । एवं हि दृश्यते

---

न्तभिन्नशब्दप्रत्याय्यमानस्य लिङ्गभेदावगतिर्न स्यादित्यर्थः ॥

एको गोत्रे । एकशब्दोयमन्यप्रधानासहायसंख्याप्रथमसमानवाची इह तु संख्यावाची प्रथमवाची वा गृह्यते इत्येव निर्णयोऽर्थान्तरासंभवात् । किमर्थमिति । क्रियमाणे पि सूत्रद्वये सर्वमिष्टं न सिध्यतीति प्रश्नः । इह पौत्रप्रभृतावपत्ये विवक्षिते मूलप्रकृतेरेव गर्गादेः प्रत्यय इष्यते । न त्वनन्तरापत्यवाचिनो गार्गिप्रभृतेर्नापि गोत्रप्रत्ययान्ताद् गार्ग्यप्रभृतेः । यूनि तु गोत्रप्रत्ययान्तादेवेष्यते न तु मूलप्रकृत्यनन्तरयुवभ्यः । स्त्रियां तु युवकार्यं नेष्यते । अपि तु गोत्रकार्यमेव । एतत्सर्वमेतस्मात्सूत्रद्वयाद्यथा न सिध्यति तथा क्रमेण वक्ष्यते । वार्तिककारः प्रयोजनं तावदाद्यस्य सूत्रस्य कथयितुमाह । उत्पादयितारमिति । प्रतिशब्दो लक्षणे वाक्यकारेण प्रयुक्तः । उत्पादयितृसामान्यविवक्षया च द्विर्वचनं नाकारि भाष्यकारेण तु भेदविवक्षया वीप्सामाश्रित्य द्विर्वचनं कृतम् । अपत्ययोगादिति । अपत्यस्य योग इति कर्तृषष्ठी समासः । उत्पादयिता चात्र कर्मत्वेन न विवक्षितः किं तर्हि प्रतिशब्दयोगविवक्षायां कर्मप्रवचनीययुक्ते द्वितीयया निर्दिष्टः । अन्यथोपपदविभक्तेः कारकविभक्तिर्बलीयसीति कर्मणि कृद्योगलक्षणा षष्ठी स्यात् । तस्य चेति । सम्बन्धयर्थो यदा लोके न विवक्ष्यते तदा नासौ शब्दसंस्कारनिमित्तं भवति । अपत्येन योगस्तु लोके उत्पादयितुरेव विवक्षित इति तन्निमित्तानेकप्रत्ययप्रसङ्ग इत्यर्थः । एकवचनमिति । एकस्य प्रत्ययस्य प्रतिपादनमित्यर्थः । यावन्त्यपत्यानि तावतां प्रत्ययानां प्रसङ्गे सति एक एव प्रत्ययो यथा स्यादित्येवमर्थमित्यर्थः । गोत्र इति च जात्यपेक्षयैकवचनं तेन गोत्रसमुदाये प्रत्ययसमुदायो निवार्यते । कथमिति । एकमप्यपत्यं पितृपितामहादीनां सर्वेषां संबन्धि भवति । तथा चापत्यं पौत्रप्रभृतिगोत्रमिति सूत्रकारेण सामानाधिकरण्येन निर्देशः कृत इति प्रश्नः । एवं हि दृश्यत इति । शब्दार्थसंबन्धे लोकव्यव-

लोके पितामहस्योत्सङ्गे दारकमासीनं कश्चित्कं चित्पृच्छति कस्यायं दारकइति । स आह । देवदत्तस्य यज्ञदत्तस्य चेति । उत्पादयितारंव्यपदिशति नात्मानम् । अस्ति प्रयोजनमेतत् । किं तर्ह्रीति । तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो गोत्रे नियतत्वात् * । तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो वक्तव्यः । औपगवस्यापत्यमिति । किं कारणम् । गोत्रे नियतत्वात् । गोत्रे ह्ययं नियमः क्रियते । तेन यश्चासौ यथाजातीयकश्च गोत्रे प्रत्ययः प्राप्राप्नोति स एकः स्यात् । कश्च प्राप्नोति । यः प्रत्ययान्तात् । परमप्रकृतेश्चोत्पत्तिः * । परमप्रकृतेश्चोत्पत्तिर्वक्तव्या । अयोगाद्धि

---

हार एव प्रमाणं नान्यत् । तत्र च प्रष्टृप्रतिवक्त्रोरुत्पादयितृविषय एव प्रश्नप्रतिवचने इति तत एतदवधार्यत इत्यर्थः । अपत्यं पौत्रप्रभृतीनीति सामानाधिकरण्यं तु गौणमाश्रयिष्यते । तत्रेति । अनन्तरोक्ते प्रयोजने अभिमते सूत्रस्यासामर्थ्यान्नापत्यादिति वक्तव्यम् । अपत्यप्रत्ययान्तादपत्ये प्रत्ययाभावार्थम् । गोत्र इति । यदैको गोत्रे इति गोत्रशब्दोपादानेन नियमः कृतः तदायं प्रतिषेधो वक्तव्यः । यदि त्वेकोपत्य इति उच्यते तदाऽपत्यप्रत्ययान्तादपत्ये नैवापरः प्रत्ययः स्यादपत्यजाताविकस्यैव विधानात् । एको गोत्र इति तूच्यमाने तदानन्तरापत्यप्रत्ययान्ताद् गोत्रे प्रत्ययः स्यादेव । तुल्यजातीयापेक्षो हि नियमः । तेन गोत्रप्रत्यय एवापरो निवार्यते । ततश्च गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो मा भूत् । अनन्तरापत्यप्रत्ययान्तात्तु गोत्रे प्रत्ययः स्यादेवेति भावः । अथ वा यद्युत्पादयितैवापत्येन युज्यते न तु पितामहादिरेको गोत्र इत्येतच्च नियमार्थं तदा यतोनेकप्रत्ययप्रसङ्गो गोत्राकृतौ विवक्षितायां तस्मादेक एवेति नियम्यते । अपत्यप्रत्ययान्तादेव च क्रमेणापत्यपरंपराविवक्षायामनेकप्रत्ययप्रसङ्गात्तत एवैकाभ्यनुज्ञानद्वारेणानेकनिवारणं स्यादिति भावः । यश्चासौ यथाजातीयकश्चेति । यत्प्रकृतिरित्यर्थः । उभयोपादानं सर्वविशेषयोगप्रतिपत्त्यर्थम् । परमप्रकृतेरिति । गर्गादेरित्यर्थः । अयोगादिति । उत्पादयितर्यपत्ययुक्ते गर्गस्य पौत्रादिना अपत्यापत्यवत्संबन्धाभावात्प्रत्ययो न प्राप्नोति । यद्यपि गर्गादिभ्यो यञिति विधानसामर्थ्याद् गर्गादिभ्यो गोत्रप्रत्ययाः सिध्यन्ति तथापि ये ऽणादयोऽनन्तरापत्ये सावकाशास्ते परमप्रकृतेरुपग्वादेर्गोत्रे न प्राप्नुवन्तीति विवक्षितम् । अथोच्यते । एको गोत्र इत्येतत्परमप्रकृतेर्विध्यर्थं भविष्यतीति । नियमस्तर्हि न प्रकल्प्येत । ततश्चापत्यमालायां प्रत्ययमालाप्रसङ्गः । ननु परमप्रकृतेः प्रत्ययोत्पत्तावुच्यमानायामपि प्रकृतिप्रत्ययार्थयोः परस्परायोगस्तदवस्थएवेति प्रयोगो नैव स्यात् । नैष दोषः । पारंपर्येण संबन्धसद्भावात्प्रयोगो भविष्यति । साक्षात् संबन्धे तु प्रत्ययस्य चरितार्थत्वाद् गौणसंबन्धाश्रयेणोत्पत्तिर्न स्यादितिवक्तव्या । इदानीमेतद् दोषद्वयं वक्ष्यमाणेन दोषेण सह प-

न प्राप्नोति। एतयोश्चैव परिहारः। पठिष्यति ह्याचार्यः। यूनि चान्तर्हिते प्राप्तिरिति। तस्य च। यथा तत्प्रत्ययान्तं यथा तदेव विकारावयवप्रत्ययान्तं द्वितीयं तृतीयं च विकारं संक्रामति। एवमिहापि तदेवापत्यप्रत्ययान्तं द्वितीयं च तृतीयं चापत्यं संक्रमिष्यति। भवेत्सिद्धम्। औपगवस्यापत्यमौपगवः। यश्च स एवानन्तरं दृश्यते स एव गोत्रे। इदं तु खलु न सिध्यति। गर्गस्यापत्यं गार्ग्य इति। अत्र ह्यन्योऽनन्तरे दृश्यते अन्यो गोत्रे। स्त्रियां चानियमः *। स्त्रियां च युवत्यां नियमो न प्राप्नोति औपगवीयं माणविका। नियमाद्धि स्त्री पर्युदस्यते। एको

---

रिहर्तुमाह। एतयोश्चेति। चशब्दो वक्ष्यमाणापेक्षया समुच्चयार्थः। तत्प्रयान्तमिति। जितश्च तत्प्रत्ययादित्येतत् सूत्रं प्रत्याख्यायते। यो हि कपोतस्य तदवयवस्य तद्विकारस्य वावयवो विकारो वासो ऽभेदोपचारात् कापोतस्याप्यवयवो विकारश्च भवतीति कापोत एव भविष्यतीति नार्थो मयड्बाधनार्थेन जितश्च तत्प्रत्ययादित्यनेन सूत्रेण। तत्र यथा कपोतस्य विकारावयवाभ्यामभेदोपचारात्कापोतस्य वेत्युभयथेष्टं सिध्यति। तथेहाप्युपगौपगवयोरौपगवतदपत्ययोर्वा ऽभेदोपचारात्पौत्रप्रभृतिरौपगवशब्देनाभिधास्यते। गार्ग्यायणापत्यं च गार्ग्यायणशब्देनेति दोषत्रयमपि परिहृतम्। अस्य परिहारस्याव्याप्तिं दर्शयितुमाह। भवेदिति। अत्र ह्यन्य इति। यदि गार्गौ गर्गत्वमारोप्यते तदा गार्गिरेव भेदसंबन्धस्य निवृत्तत्वाद् गर्गशब्दवाच्य इति गार्गेरपत्यं गार्गिरेव स्यात्। गार्ग्यश्चेष्यते। अथ गार्गितदपत्ययोरभेदाध्यवसायस्तथापि गार्गेरपत्यं गार्गिः प्राप्नोति। गर्गादिभ्यो यञिति वचनसामर्थ्याद् गार्ग्यः स्यात् तथापि गार्गिरपि स्यात्। तस्मादपत्यविषये दोषवानभेदोपचार इति भेद एवाश्रयणीयः। तथा च प्रत्ययान्तात्प्रतिषेधः। परमप्रकृतेश्चोत्पत्तिर्वक्तव्येति स्थितमेतत्। स्त्रियां चेति। चशब्दो दोषसमुच्चयार्थः। तत्रानन्तरापत्यस्त्रियां गोत्रस्त्रियां चानियमप्रसङ्गाभावात्सामर्थ्यात्पौत्रप्रभृतेरपत्यं स्त्री गृह्यते। युवसंज्ञया गोत्रसंज्ञाया एकसंज्ञाधिकारे हृद्यं युवेति वचनात्तु शब्दाद्वा नियमार्थाद्बाधितत्वात् स्त्रियाः पौत्रप्रभृतेरपत्यस्य गोत्रसंज्ञा नास्तीत्येको गोत्र इत्येष नियमो नास्ति। अस्त्रियामिति निषेधाद् गोत्राद्यूनीत्यपि नास्ति नियमस्तथा च स्त्रियां विवक्षितायामनेकप्रत्ययप्रसङ्गः। औपगवस्यापत्यं स्त्रीत्यत इञितीञ् प्राप्नोति। इतो मनुष्यजातेरिति ङीष् इञन्तान्न प्राप्नोति। गोत्रं च चरणैः सहेत्यत्र शास्त्रीयस्य गोत्रस्य ग्रहणात् स्त्रियाश्चास्या गोत्रसंज्ञाया अभावात्। एतच्चैव उपसंख्यानमजात्यर्थमित्येतदनपेक्ष्यैवोदाहृतम्। गोत्रलक्षणश्च यञादिः पौत्राणामेव स्यात्। अजीवद्वंश्यायां च स्त्रियां पौत्रप्रभृतेरपत्ये। जीवद्वंश्यायां तु न स्यात्। अपत्यसामान्यलक्षण एव तु स्यात्। नियमादिति। सामान्यापेक्षमेक-

गोत्रे गोत्राद्यून्यस्त्रियामिति। कतरस्मिन्पक्षेऽयं दोषः। उत्पादयितर्यपत्ययुक्ते। उत्पादयितरि तावत् अपत्ययुक्ते न दोषः। उत्पादयितर्यपत्ययुक्ते न सर्वत उत्पत्त्या भवितव्यम्। तत्र नियमो नोपपद्यते। असति नियमे नैष दोषः। सर्वेषु तर्ह्यपत्ययुक्तेष्वयं दोषः। सर्वेषु तर्ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम्। तत्र नियम उपपन्नो भवति। सति च नियम एष दोषः। उत्पादयितरि चापत्ययुक्ते स्त्रिया युवत्याभिधानं न प्राप्नोति। किं कारणम्। गोत्रसंज्ञां युवसंज्ञा बाधते। गोत्राद्यूनि चास्त्रियां प्रत्ययो विधीयते। यूनि चान्तर्हिते ऽप्राप्तिः *। यूनि चान्तर्हिते नियमस्याप्राप्तिः। गार्ग्यायणस्यापत्यमिति। कतरस्मिन्पक्षेऽयं दोषः। सर्वेष्वपत्ययुक्तेषु। सर्वेषु अपत्ययुक्तेषु तावन्न दोषः। सर्वेष्वपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम्। तत्र नियम उपपन्नो भवति। सति च नियमे नैष दोषः उत्पादयितर्यपत्ययुक्ते ऽयं दोषः। उत्पादयितरि तर्ह्यपत्ययुक्ते परमप्रकृतेरनन्तराद् गोत्राच्चायोगान्न प्राप्नोति। यूनश्च न प्राप्नोति। किं कारणम्। गोत्रादिति नियमात्। सन्तु तर्हि सर्वेपत्ययुक्ता इति।

---

वचनं नियमद्वयादित्यर्थः। कतरस्मिन्निति। येनोद्भावितो दोषस्तदीयोयं न प्रश्नः। विरोधात्। किं तर्हि पक्षप्रविभागदर्शनेन भाष्यकारेणान्तरोक्तमेवार्थं प्रश्नपूर्वकं विवृणोति। उत्पादयितरि तावदिति। अनियम इति यदुक्तं तत्र वाक्छलमुद्भावयति। यदोत्पादयितुरेवापत्येन योगो नान्यस्य तस्मिंश्च विवक्षिते एकस्या एव प्रकृतेरेक एव प्रत्ययः प्राप्नोति नानेकस्तदा सूत्रद्वयं नैव नियमार्थं किं तर्हि विध्यर्थमिति किमुच्यते स्त्रियां चानियम इति। प्रत्ययमालाप्रसङ्गदोषस्तु गोत्रलक्षणप्रत्ययाप्रसङ्गदोषश्च स्थित एव। सर्वेष्विति। वक्ष्यमाणेन न्यायेन सर्वे अपत्येन युज्यन्त इति पक्षोपपत्तिः। इदानीं वाक्छलं परिहरति। उत्पादयितरि चेति। चशब्दो न केवलं पक्षान्तरे यावदस्मिन्नपीत्यस्यार्थस्य द्योतनार्थः। अभिधानं न प्राप्नोतीति। गोत्रविषयेण यञादिप्रत्ययेनेत्यर्थः। अयमेवात्रानियमो विवक्षितः। एको गोत्र इत्येतन्नियमपूर्वकं स्त्रिया गोत्रप्रत्ययेनाभिधानं न प्राप्नोतीत्येषोर्थोऽत्र विवक्षित इत्यर्थः। यूनि चेति। चतुर्थादिना व्यवहिते पञ्चमादावित्यर्थः। अत्रापि पूर्ववत्प्रश्नपूर्वकं पक्षप्रविभागेन विवरणं कर्तुमाह। कतरस्मिन्निति। तत्र नियम इति। गोत्रादेव यूनीतिभावः। परमप्रकृतेरिति। पञ्चमस्य त्रिभिरपत्यापत्यवत्संबन्धाभावादित्यर्थः। यूनश्चेति। चतुर्थादित्यर्थः। गोत्रादिति। चतुर्थस्य

कथं पुनर्ज्ञायते सर्वेपत्ययुक्ता इति। एवं हि याज्ञिकाः पठन्ति। दशपुरुषानूकं यस्य गृहे शूद्रा न विद्येरन् स सोमं पिबेदिति। यदि च सर्वेपत्ययुक्ता भवन्ति। तत एतदुपपन्नं भवति। कथं यदुक्तं पितामहस्योत्सङ्गे दारकमासीनं कश्चित्कं चित्पृच्छति कस्यायमपत्यमिति स आह देवदत्तस्य यज्ञदत्तस्य वेति उत्पादयितारं व्यपदिशति नात्मानमिति। उत्पत्तिस्तस्य विवक्षिता सर्वेषां नेदमपत्यं देवदत्तस्त्वस्योत्पादयितेति। अथ सर्वेष्वपत्ययुक्तेषु किमनेन क्रियते एको गोत्र इति। सर्वेषामपत्ययोगात् प्रत्ययान्ताद् गोत्रे प्रतिषेधार्थमेको गोत्रे *। सर्वेषामप्यपत्ययोगात् प्रत्यान्ताद्गोत्रे प्रतिषेधार्थ-

---

युवत्वाद् गोत्रसंज्ञाया अभावः। ननूत्पादयितर्यपत्ययुक्ते नियन्तव्यस्याभावाद् गोत्राद्यूनीति विध्यर्थं भविष्यति। तत्रानन्तरे यूनि गोत्राच्छिन्न एव प्रत्यय इति व्यवहिते यूनि गोत्रेण तस्यायोगादप्राप्तः प्रत्ययो विधास्यते। तत्किमुच्यते यूनि चान्तर्हिते ऽप्राप्तिः प्रत्ययस्येति। उच्यते। उत्पादयितर्यपत्ययुक्ते गोत्रसमुदाये प्रत्ययमालाप्रसङ्गनिवृत्त्यर्थमेको गोत्र इति सूत्रं यथा नियमार्थम्। एवं युवसमुदाये द्व्यवसामान्ये वा युवशब्देनोच्यमाने गोत्रादगोत्राच्च प्रत्ययप्रसङ्गे गोत्रादेव यूनीति नियमे क्रियमाणे विध्यर्थत्वाभावाद्युक्तमुक्तं यूनि चान्तर्हित इति। सन्तु तर्हीति। तेन व्यवहिते ऽपि यूनि गोत्रादेवेति वचनाद् गोत्रप्रत्ययो भविष्यतीति नास्त्ययं दोषो यूनि चान्तर्हित इति। दशपुरुषानूकमिति। अनुपूर्वाल्कायतेरनूकानमनुक इति घञर्थे कविधानमिति कः। अन्येषामपीति दीर्घत्वम्। दशपुरुषा अस्मिन्ननूक इति बहुव्रीहिः। दशपुरुषोऽनूकोऽस्मिन्निति पुनर्बहुव्रीहिः। दशपुरुषानुसंशब्दनं दशसु पुरुषेष्विति यावत्। शूद्रा इति। विवाहिताः। शूद्रावेदी पतत्यध इति वचनात्पातहेतुः शूद्रा। एकस्मिंश्च पतिते सर्वेषां च पात इत्येतद्दशपुरुषानूकशब्देनोक्तं भवति। ततश्चार्थादेकस्यैवसर्वान्प्रत्यपातहेतुत्वादपत्यत्वमित्युक्तं भवति। नन्वेकस्यैवापत्योत्पत्तौ व्यापारात्कथं तेनान्येषां संबन्धः। क्रियागर्भो हि सर्वत्र संबन्धो नान्यथेति उद्घुष्यते। नैष दोषः। पुत्रोत्पादनमेव पौत्राद्युत्पत्तौ व्यापारः तदन्तरेण तस्यासंभवात्। अपत्यं पौत्रप्रभृतीतिमुख्यं सामानाधिकरण्यमस्मिन्पक्ष उपपद्यते। पूर्वत्र तु पक्षे गौणं सामानाधिकरण्यं स्यादपत्यापत्यस्यापत्यत्वोपचारात्। उत्पत्तिस्तस्येति। सामान्यशब्दस्यापि क्व चिद्विशेषवृत्तिदर्शनात्। यथा गोमण्डले स्थितं गोपालकं कश्चित्पृच्छति गां पश्यसीति। सर्वेषामिति। यदा गार्ग्यस्य पौत्रप्रभृति सर्वेषां गर्गगार्गिगार्ग्याणामपत्यं भवति तदा गार्गिगार्ग्याभ्यां प्रत्ययो मा भूद् गर्गशब्दादेव यथा स्यादिति एवमर्थमेको गोत्र इत्येतदित्यर्थः।

मेकोगोत्र इत्युच्यते। अस्तिप्रयोजनमेतत् । किंतर्हीति। तत्र न तु ज्ञायते कएको भवति । यो वा परमप्रकृतेर्यो वानन्तरादिति । नियमानुपपत्तिस्थानियमश्च नोपपद्यते । किं कारणम् । न ह्येकस्मिन्नपत्येनेकप्रत्ययप्राप्तिः * । नह्येकस्मिन्नपत्येऽनेकः प्रत्ययः प्राप्नोति । किं तर्हि । अपत्यान्तरे शब्दान्तरात्प्रत्ययान्तरप्राप्तिः * । अपत्यान्तरे अपत्यान्तरे शब्दान्तराच्च शब्दान्तरात् प्रत्ययान्तरं प्रत्ययान्तरं प्राप्नोति । फगन्तादिञ् इञन्तात्फगिति । फगिञोर्दाशतयी प्रत्ययमाला प्राप्नोति । कतरस्मिन्पक्षएष दोषः । सर्वेष्वपत्ययुक्तेषु। सर्वेष्वपत्ययुक्तेषु तावन्न दोषः । सर्वेषुह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम् । तत्र नियम उपपन्नो भवति । सति नियमे नैष दोषः उत्पादयितरि तर्ह्यपत्ययुक्ते अयं दोषः । उत्पादयितरि तर्ह्यपत्ययुक्ते न सर्वत उत्पत्त्या भवितव्यम् ।तत्र नियमो नोपपद्यते। असति नियमे एष दोषः । उत्पादयितरिचापत्ययुक्ते नायं दोषः । कथम् । अपत्यं समुदायस्चेन्नियमोस्य समीक्षितः । तस्मिंस्तु बहवः प्राप्ता नि-

---

न तु ज्ञायत इति। एक इति सामान्येनोपादानाद्विशेषस्यानवगम इत्यप्रतिपादकत्वात्संदेहलक्षणमप्रामाण्यंप्रसक्तमित्यर्थः । उत्पादयितरि त्वपत्ययुक्ते क्रमेण संबन्धविवक्षायां गोत्रसमुदाये प्रत्ययमालाप्रसङ्गे एक एव भवतीत्युच्यमाने य एव परमप्रकृतेः प्राप्नोति स एव भवतीति नास्ति तत्रैकविशेषाज्ञानलक्षणो दोषः । न ह्येकस्मिन्निति ।एकेनैव तस्यार्थस्योक्तत्वाद् यस्मिन्नपत्ये एकः प्रत्ययः क्रियते तस्मिन्नेव नास्त्यपरस्य प्रत्ययस्य प्रसङ्ग इति तन्निवारणमनर्थकमेवेत्यर्थः। अपत्यान्तर इति। सामान्यापेक्षं वार्त्तिकएकवचनम्। भाष्यकारस्तु भेदं वीप्सां च साकल्यप्रतिपादनायाश्रित्य विवृणोति । दाशतयीति । दशावयवा यस्य संघातस्य स दशतयः संघः ।तत्र भवा दाशतयी। अनेकप्रत्ययप्रसङ्गप्रतिपादनपरं चैतत् । न त्वत्र दशार्थो विवक्षितः । अन्तोनन्तरमेव क्व चित्पुस्तके अपत्यं समुदायश्चेदिति पठ्यते । अन्यत्र तु प्रत्ययमालाप्रसङ्गग्रन्थान्तरं कतरस्मिन्नित्यादि सर्वं पूर्वोक्तं पठ्यते । तत्पुनरुक्तत्वादग्रन्थत्वादन्यैरुपेक्षितम्। अन्ये त्वेवं पठन्ति । कतरस्मिन् पक्ष एष दोषः । सर्वेष्वपत्ययुक्तेषु । सर्वेष्वपत्ययुक्तेषु तावन्न दोषः । सर्वेषु ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यं तत्र नियम उपपन्नो भवति। सति च नियमे नैष दोषः । उत्पादयितर्ह्यपत्ययुक्तेऽयं दोषः । उत्पादयितर्ह्यपत्ययुक्ते न सर्वत उत्पत्त्या भवितव्यम् । तत्र नियमो नोपपद्यते । असति नियमे एष दोषः । उत्पादयितरि चापत्ययुक्ते न दोषः । कथम् । अपत्यं समुदायश्चेदिति । अयं ग्रन्थ एव । पक्षप्रविभागेन दोषपरिहारात् । अस्याय-

यमोऽस्य भविष्यति ॥ अपत्यमित्यनेन सर्वंसुपग्वादिपितृकमपत्यं समीचितम्। तस्मिंस्तु बहवः प्रत्ययाः प्राप्ताः। नियमोऽस्य भविष्यति एको गोत्र इति। यदप्युच्यते स्त्रियां चानियम इति। एवं वक्ष्यामि। गोत्राद्यूनि प्रत्ययो भवति स्त्रियां नेति। एवमपि स्त्रिया युवत्या अभिधानं न प्राप्नोति। एवं तर्हि वक्ष्यामि। गोत्राद्यूनि प्रत्ययो भवति ततः स्त्रियां लुक्। एवमप्यौपगवी माधविका। अनुपसर्जनलक्षण ईकारो न प्राप्नोति। मा भूदेवम्। अस्त्योऽनुपसर्जन इति।

---

मर्थः। यदा सर्वे ऽपत्येन युज्यन्ते तदैकस्मिन्नेव गोत्रापत्ये गर्गगार्गिगार्ग्येभ्य पर्यायेणापत्यापत्यवत्सम्बन्धविवक्षायां प्रत्ययप्रसङ्गः। तत्र यदा गर्गशब्दात् प्रत्यय उत्पद्यते तदैक एव गोत्रापत्ये प्रत्ययो भवति। यदि तु गार्गिगार्ग्यशब्दाभ्यामुत्पद्यते तदा पूर्वस्मिन् स्थिते परस्योत्पादनादनेकः प्रत्ययः कृतः स्यात्। तस्मादनेकप्रत्ययनिवारणार्थैको गोत्र इति नियमः क्रियते। तेन गर्गशब्दादेवोत्पत्तिरनुज्ञाता भवति। यदा तूत्पादयितैवापत्येन युज्यत इति पक्षो गोत्रशब्देन चैकमेवापत्यमुच्यते। तदोत्पादयितुरेवैक एव प्रत्ययः प्राप्नोतीति नियन्तव्याभावान्नियमो नोपपद्यत इत्यपत्यपरम्पराविवक्षायां प्रत्ययमालाप्रसङ्गदोष आपतत्येव। अत्रापि पक्षे परिहारोऽभिधीयते। अपत्यं समुदायश्चेदिति। अपत्यशब्देनापत्यसामान्यवाचिनापि प्रकरणवशाद् गोत्रापत्यमेवोच्यते। तेनायमर्थो गोत्रशब्देन गोत्रसमुदायोऽभिधीयते अवयवधर्मेण समुदायस्य गोत्रव्यपदेशात्। अन्ये त्वाहुः। अपत्यं पौत्रप्रभृतिगोत्रमित्यत्रापत्यशब्देन समुदायोऽभिधीयत इति तस्यैव गोत्रसंज्ञा क्रियते। क्व चित्तु अवयवमात्रेऽपि गोत्रशब्दो वर्त्तते। समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इति न्यायात्। ततश्चैको गोत्र इत्यस्यायमर्थः। पौत्रप्रभृत्यपत्यपरम्पराविवक्षायां प्रत्ययमालाप्रसङ्गे एक एव कर्त्तव्यो नानेक इति तेन परमप्रकृतेरेव सम्बन्धिसम्बन्धाश्रयेणापत्यापत्यवत्सम्बन्धविवक्षायां प्रत्ययः कर्तव्य इत्युक्तं भवति। तस्मिन्निति। समुदाय इत्यर्थः। एवमपीति। अस्त्रियामिति योगविभागे ऽपि कृते यदि नाम गोत्रादेव यूनीत्यस्य नियमस्य निषेधो न भवति तथापि प्राधान्याद्युवप्रत्ययस्यैव निषेधः। प्राप्नोति न तु युवसंज्ञायाः ततश्च गोत्रलक्षणः प्रत्ययो न प्राप्नोति। अपत्यसामान्यलक्षण एव तु प्रत्ययः स्यादित्यर्थः। ततश्च गर्गस्यापत्य स्त्रीति गार्ग्यशब्दाद्यञ् न स्यात्। तदभावाद्यञश्च प्राचां ष्फ तद्धित इति ङीष्फौ न स्यातां गार्गी गार्ग्यायणीति। स्त्रियां लुगिति। गार्ग्यशब्दात्फको लुकि कृते यञाश्रयं रूपद्वयं सिध्यति। एवमपीति। औपगवस्यापत्यं स्त्रीत्यत इञ् तस्य लुकि कृतेऽनुपसर्जनाधिकारादणन्तार्थं द्वारेणोपसर्जनत्वात्तदर्थस्य प्रत्ययार्थप्रतिविशेषेण

अणन्तादनुपसर्जनादित्येवं भविष्यति । नैवं शक्यम् । इह हि दोषः स्यात् । काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी काशकृत्स्नीमधीते काशकृत्स्ना ब्राह्मणीति । अणन्तादितीकारः प्रसज्येत । नैष दोषः । अध्येतृग्रामभिधेयायामण ईकारेण भवितव्यम् । यश्चाचाध्येतृग्रामभिधेयायामण्,लुप्तः सः । यश्च श्रूयते उत्पन्नस्तस्मादीकार इति कृत्वा पुनर्न भविष्यति । इह तर्हि औपगवी माणविका भार्यास्य औपगवीभार्यः । जातिलक्षणः पुंवद्भावप्रतिषेधो न प्राप्नोति । मा भूदेवं वृद्धिनिमित्तस्येत्येवं भविष्यति । यस्तर्हि न वृद्धिनिमित्तम् । ग्लुचकायनी माणविका भार्यास्य ग्लुचकायनीभार्यः । तस्मात्स्त्रियां युवत्यां युवसंज्ञैव पर्युदसितव्या । युवसंज्ञायां पर्युदस्तायां गोत्रप्रत्य-

---

यणत्वादण्लक्षण ईकारो न प्राप्नोतीत्यर्थः । अणन्तादिति । प्रत्यये लुप्ते प्रकृतिरेव प्रत्ययार्थमाहेत्यणन्तस्यानुपसर्जनत्वमिति भावः । काशकृत्स्निनेति । इञश्चेत्यण् । तदन्तादध्येत्रर्थेऽण् । तस्य प्रोक्ताल्लुगिति लुक् । लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् । अत्राणन्तस्याध्येत्रर्थे संक्रान्तत्वादनुपसर्जनत्वादीकारस्य प्रसङ्गः । पुनर्न भविष्यतीति । शास्त्रस्य सकृत्प्रवृत्त्या चरितार्थत्वादिति भावः । टाप् तु पूर्वमनुत्पन्न इति उत्पद्यते । अपवादस्याप्रवृत्तावुत्सर्गस्यानिवारणात् । नन्वेवमापिशलिना प्रोक्तमापिशलं तदधीते आपिशला ब्राह्मणीति ङीप् प्राप्नोति । तस्मादण एवानुपसर्जनग्रहणं विशेषणमित्यौपगवीमाणविकेति न सिध्यति । एवं तर्हि वक्ष्यमाणाद्दोषादिष्टसिद्ध्यभावादेतद्भाष्यकारेण सुष्ठु न निरूपितम् । जातिलक्षण इति । गोत्रसंज्ञाया अभावे जातिरूपाभावात् । यदा तु गोत्रं च चरणैः सहेत्यत्र गोत्रशब्देनापत्यमात्रं गृह्यते तदौपगवीभार्य इत्यत्र जातिलक्षणङीष्पुंवद्भावप्रतिषेधौ सिध्यत एव । ग्लुचुकस्यापत्यमिति प्राचामवृद्धादिति फिन्प्रत्ययः तदन्तादणो लुकि क्रियमाणे जातित्वाभावादितो मनुष्यजातेरिति ङीष् न प्राप्नोति अथापि सर्वतोक्तिन्नर्थादिति ङीष् क्रियते । तथापि पुंवद्भावप्रतिषेधो न प्राप्नोति । लुक् चाधिको विधेयः। तस्मादिति । अस्त्रियामिति योगविभागे सति यूनीति वर्त्तते । परिभाषा चेयम् । तेन युवसंज्ञाया मस्त्रियामित्युपतिष्ठते । तदुपस्थानेन, स्त्रियां युवसंज्ञा निवार्यते इति गोत्रसंज्ञा प्रवर्त्तते । यूनि वर्त्तत इति । युवसंज्ञाया अभावे ऽपि युवत्वेन पौत्रप्रभृतेरपत्यमुपलक्ष्यत इति यूनीत्युक्तम् । इदानीं पक्षद्वयोक्तदोषपरिहाराय तत्संकीर्त्तनं करोति । इहेति । सर्वेष्विति । ननु नायं दोषः पूर्वसूत्रः । नैतदस्ति । न ज्ञायते क एको भवतीत्यभिधानादर्थ उक्त एवायं दोषः । तस्मादिति । नापत्यादित्येव वक्तव्यम् । तेनापत्यप्रत्ययान्ता-

यान्तमेतद्यूनि वर्तते। ईहोत्पादयितर्यपत्ययुक्ते प्रत्ययान्तात्प्रतिषेधो वक्तव्यः। परमप्रकृतेश्चोत्पत्तिर्वक्तव्या। सर्वेष्वपत्ययुक्तेषु प्रत्ययान्तात्प्रतिषेधो वक्तव्यः। तस्मात्प्रतिषेधः *। तस्मात्प्रतिषेधो वक्तव्यः। संज्ञाकारिभ्यो वा प्रत्ययोत्पत्तिः *। अथ वा संज्ञाकारिभ्यः प्रत्ययोत्पत्तिर्वक्तव्या। यदि संज्ञाकारिभ्यः प्रत्ययोत्पत्तिरुच्यते। कथं गार्ग्यायणो वात्स्यायन इति। गोत्राद्यूनीति च *। गोत्राद्यूनीत्येतद्वक्तव्यम्। तच्च जात्यादिनिवृत्त्यर्थम्। तच्चावश्यं संज्ञाकारिग्रहणं कर्तव्यम्। किं प्रयोजनम्। जात्यादिनिवृत्त्यर्थम्। जात्यादिभ्य उत्पत्तिर्माभूदिति। जातिर्न वर्तते। संख्या न वर्तते। सर्वनाम न वर्तते। जातिर्न वर्तते। काकस्यापत्यं कुररस्यापत्यमिति। संख्या न वर्तते। नवानामपत्यं दशानामपत्यमिति। सर्वनाम न वर्तते। सर्वेषामपत्यं विश्वेषामपत्यमिति। यत्तावदुच्यते जातिर्न वर्तते काकस्यापत्यं कुररस्यापत्यमिति। येनैव हेतुना एकः काकस्तेनैव हेतुना द्वितीयस्तृतीयश्च काको भविष्यति। यदप्युच्यते संख्या न वर्तते नवानामपत्यं दशानामपत्यमिति। संख्येयमपेक्ष्य संख्या प्रवर्तते। तत्सापेक्षम्। सापेक्षमसमर्थं भवतीति असामर्थ्यान्न भविष्यति। यदप्युच्यते सर्वनाम न वर्तते सर्वेषामपत्यं विश्वेषामपत्यमिति। निर्देश्यमपेक्ष्य निर्देशः प्रवर्तते। तत्सापेक्षम्। सापेक्षमसमर्थं भवति असमर्थत्वान्न भविष्यति। यत्तावदुच्यते येनैव हेतुना एकः काकस्तेनैव हेतुना द्वितीयस्तृतीयश्च काको भविष्यतीति। नैतद्विवदामहे। काको न काक इति। किं तर्हि। येनैव हेतुना एतद्वाक्यं भवति काकस्यापत्यं कुररस्याप-

---

दपत्ये प्रत्ययो न भवतीत्ययमर्थः संपद्यते। संज्ञाकारिभ्य इति। कुलव्यपदेशहेतव आदिपुरुषाः संज्ञाकारिण उच्यन्ते। जातिर्नेति। प्रत्ययं नोत्पादयतीत्यर्थः। परार्थाभिधानं हि वृत्तिः। सति च प्रत्यये प्रकृतिः प्रत्ययार्थे वर्तते तत्र जात्यादिवृत्तिः संज्ञाकारिग्रहणेन निवार्यते। येनैवेति। अपत्यविशेषप्रतिपत्तये प्रकृत्यर्थो विशेषणमुपादीयते। स च विशेषो जातिसंबन्धावगमेनैवावगम्यत इत्यपत्यापत्यवत्संबन्धविवक्षाया एवात्राभाव इत्यर्थः। संख्येयमिति। ब्राह्मणादिकमवश्यमपेक्षणीयं निराधारस्य गुणस्याभावादित्य-

त्यमिति । तेनैव हेतुना वृत्तिरपि प्राप्नोति । यदप्युच्यते संख्येयमपेक्ष्य संख्या प्रवर्त्तते तत्सापेक्षम् सापेक्षं चासमर्थं भवतीति । भवति वै कस्यचिदर्थात् प्रकरणाद्वा अपेक्ष्यं निर्ज्ञातम् । यदा निर्ज्ञातं तदा वृत्तिः प्राप्नोति । यदप्युच्यते सर्वेषामपत्यं विश्वेषामपत्यमिति निर्देश्यमपेक्ष्य निर्देशः प्रवर्त्तते तत्सापेक्षम् सापेक्षं चासमर्थं भवतीति। भवति वै कस्य चिदर्थात्प्रकरणाद्वा अपेक्ष्यं निर्ज्ञातम्। यदा निर्ज्ञातं तदा वृत्तिः प्राप्नोति । एवं तर्हि अनभिधानाज्जात्यादिभ्य उत्पत्तिर्न भविष्यति । तच्चावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणे ऽपि च संज्ञाकारिग्रहणे यत्र जात्यादिभ्य उत्पद्यमानेन प्रत्ययेनार्थाभिधानं भवति, भवति तत्रोत्पत्तिः । तद्यथा । कुतश्चरति मायूरिः केन कापिञ्जलिः कृशः । आहिंसेन च दष्टस्य पाञ्चिः सुतसमो मतः ॥ १ ॥ तादायनिर्यादायनिः कैसायनिरिति । तदेतदनन्यार्थं संज्ञाकारिग्रहणं कर्त्तव्यम् । प्रत्ययान्ताद्वा प्रतिषेधो वक्तव्यः । उभयं न कर्तव्यम् । गोत्रग्रहणं करिष्यते । एका ऽपत्ये प्रत्ययो भवतीत्येव । यदि चेदानीं प्रत्ययान्तादपि प्रत्ययः स्यात्सैकोपत्ये प्रत्ययः कृतः स्यात् । यदि गोत्रग्रहणं न क्रियते । कथं गार्ग्यायणो वात्स्यायन इति । वक्तव्यमेवैतत् । गोत्राद्यून्यस्त्रियामिति । अथापि गोत्रग्रहणं क्रियते । एवमपि न दोषः । नैकग्रहणेनप्रत्ययोभिसंबध्यतएकोगोत्रेप्रत्ययोभवतीति किंतर्हिंप्रकृतिरभिसंबध्यते । एकाप्रकृतिर्गोत्रप्रत्ययमुत्पादयतीति । यदि चेदानीं प्रत्ययान्तादपिप्रत्ययः स्याद् । नैका प्रकृतिर्गोत्रे

---

र्थः । निर्देश्यमिति । पूर्वप्रकृतमित्यर्थः । वृत्तिरपीति । यदा जात्युपव्यञ्जनानि नाभिव्यक्तानि तदा पितृसंबन्ध एव विशेषावगमायोपादीयते तत्र वाक्यवद्वृत्तिप्रसङ्ग इत्यर्थः । भवतीति । ततश्च संख्याशब्द एव विशिष्टसंख्येयवाचीति सापेक्षत्वाभावाद्वर्त्तत एवेत्यर्थः। आहिंसेनेति । अहेरपत्यमितस्त्वनिञ इति ढक् । पाञ्चिरिति । बाह्वादित्वादिञ् । तादायनिरिति । उदीचां वृद्धादिति फिञ् । एका प्रकृतिरिति । एकशब्दः संख्यावाचीति केचिदाहुः । प्रथमातिक्रमे च कारणाभावात् वरमप्रकृतिरेवैकशब्देन गृह्यते । शब्दापेक्षया चैक इति पुंल्लिङ्गनिर्देशः । अन्ये तु साधारणे एक इत्याहुः । परमप्रकृतिश्च सर्वप्रत्ययसाधारणीति तत एवोत्पत्तिर्भवति । सर्वे ऽपत्येन युज्यन्त इत्ययं च पक्षः प्रमाणोपपन्नत्वात्

प्रत्ययमुत्पादयेत्। अथ वा अस्थानेयं यत्नः क्रियते। न ह्यीदं लोकाद्भिद्यते। लोके हि संख्यां प्रवर्तमानामुपाचरन्ति एक इति वा प्रथम इति वा। यावद् ब्रूयात् प्रथमो गोत्रे प्रत्ययमुत्पादयतीति तावदेको गोत्र इति॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
चतुर्थस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम्॥

---

अतइञ्॥ ९५॥ इञोऽवृद्धावृद्धाभ्यां फिञ्फिनौविप्रतिषेधेन *। इञो वृद्धावृद्धाभ्यां फिञ्फिनौ भवतः विप्रतिषेधेन। इञोवकाशः। दाक्षिः प्लाक्षिः। फिञोवकाश.। तादायनिः। यादायनिः। इहोभयं प्राप्नोति। तापसायनिः। सांमितिकायनिः। फिनोऽवकाश.। ग्लुचायनिः। त्वचायनिः। इञः स एव। इहोभयं प्राप्नोति। ग्लुचुकायनिः। फिञ्फिनौ भवतो विप्रतिषेधेन। इह कस्मान्न भवति दाक्षिः प्लाक्षिः बहुलवचनात्। तद्राजश्च *। तद्राजस्येञो भवति विप्रतिषेधेन। तद्राजस्यावकाशः। ऐक्ष्वाकः। इञः स एव। इहोभयं प्राप्नोति। पाञ्चालः। वैदेहः। वैदर्भः। तद्राजो भवति विप्रतिषेधेन॥

---

स्थितः। न ह्योदमिति। लोके योर्थ एकशब्दस्य दृश्यते स एवेहाश्रीयते। लोके च प्रथमशब्दसमानार्थ एकशब्दो दृश्यते इनीहापि प्रथमार्थ एवाश्रीयते। शास्त्रे ऽपि प्रथमार्थ एकशब्दो दृश्यते एके ऽल्पप्राणा इत्यत्र प्रथमे ऽल्पप्राणा इति गम्यते। उपाचरन्तीति। व्यवहरन्तीत्यर्थः। अस्यां पङ्क्तावेकमानयेत्यादावनियतस्यैकस्यावगमात्संख्यावाच्येकशब्दो न प्रथमावाची॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटविरचिते भाष्यप्रदीपे चतुर्थस्याध्यायस्य
प्रथमे पादे तृतीयमाह्निकम्॥

---

अत इञ्। दाक्षिरिति। वा नामधेयस्येति यदा वृद्धसंज्ञा नास्ति तदा यमिञोवकाशः। इञः स एवेति। प्राचामवृद्धात् फिन् बहुलमिति प्राचां मतेन फिनो विधानात्। उदीचां मतेन तदभावादिञोवकाश इति भावः। इह कस्मादिति। प्राचां मतेन वृद्धत्वात् फिन् प्राप्नोतीति भावः। ऐक्ष्वाक इति। इक्ष्वाकोरपत्यमिति जनपदशब्दात् क्षत्रियादञित्यञ्। दाण्डिनायनादिसूत्रेणोकारलोपो निपात्यते। पाञ्चाल इति। पाञ्चालविदेहविदर्भेभ्योञ्॥

बाह्वादिभ्यश्च ॥ ९६ ॥ बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोन्यत्र तेषां प्रतिषेधः * । बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोन्यत्र तेषां प्रतिषेधो वक्तव्यः । बाहोरपत्यं बाहविः । यो हि बाहुर्नाम बाहवस्तस्य भवति । नडस्यापत्यं नाडायनः यो हि नडो नाम नाडिस्तस्यभवति । संबन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधः *। संबन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधो वक्तव्यः। श्वशुरस्यापत्यं श्वशुर्यः ।यो हि श्वशुरो नाम श्वाशुरिस्तस्य भवति । प्रत्ययग्रहणेन नार्थः । संबन्धिशब्दानां तत्सदृशात्प्रतिषेध इत्येव । इदमपि सिद्धं भवति । मातृपितृभ्यां स्वसा । मातृष्वसा पितृष्वसा । अन्या तु मातृस्वसेति ॥

सुधातुरकङ्च॥ ९७ ॥ सुधातृव्यासयोः * । सुधातृव्यासयोरितिवक्तव्यम् । सौधातकिः । वैयासकिःशुकः । अत्यल्पमिदमुच्यते । सुधातृवासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम्।सौधातकिः। वैयासकिः । शुकः । वारुडकिः । नैषादकिः । चाण्डालकिः। वैम्बकिः। तत्तर्हि वक्तव्यम् । न वक्तव्यम् । प्रकृत्यन्तराण्येवैतानि ॥

---

बाह्वा । बाह्वादिप्रभृतिष्विति । प्रभृतिग्रहणेन वक्ष्यमाणानां कुञ्जादिनडादीनां ग्रहणम् । लौकिक इति ।लोके विदित इत्यर्थः । गोत्रभाव इति । संज्ञाकारित्वे आदिपुरुषत्व इत्यर्थः । एतच्च स्मृतिशास्त्रस्यार्थतोऽनादित्वादनाद्यर्थाभिधायित्वं बाह्वादिग्रहणस्य न्याय्यत्वाल्लभ्यते । यत्तु कार्यं विशिष्टशब्दस्वरूपोपादानेन न विधीयते । किं तु प्रकारान्तरेण यथा अत इञिति तदिदानींतनार्थाभिधायिनोऽपि भवति दैवदत्तिरिति । संबन्धिशब्देति । अयमपि न्यायानुवादः आदिमत्वात् यंज्ञा श्वशुरस्य संबन्धोपाधिकस्य त्वनादित्वात्तद्ग्रहणस्यैव न्याय्यत्वात् । मातृस्वसेति । मातृशब्दोत्र स्त्रियावाची न जननीवाचीति मातृपितृभ्यां स्वसेति षत्वं न भवति । यद्यपि क्रियाशब्दार्थोपि नित्यस्तथापि प्रसिद्धतरः संबन्धिलक्षणोर्थ इति तस्यैव ग्रहणं युक्तम् । उक्तं च हरिणा । अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिष्विति ॥

सुधातुरकङ्च । प्रकृत्यन्तराणीति । स्वार्थिककन्प्रत्ययान्तत्वादिति भावः । अव्यविकन्यायेन च कन्रहितैर्वाक्यमेव भवति । व्यासकशब्दाच्च कन्नन्तादृषिवाचिनोपि बाह्वादेराकृतिगणत्वादिञ् भवति न तु कृष्यणिति भावः ॥

गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ९८ ॥ किमर्थश्चकारः । स्वरार्थः। चितोऽन्तोदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् । अथ ञकारः किमर्थः । ञकारो वृद्ध्यर्थः । ञ्णितीति वृद्धिर्यथास्यात् । एकेन ककारेणोभयं सिद्धम् । अवश्यमत्र विशेषणार्थोऽन्योनुबन्धः कर्तव्यः । क्व विशेषणार्थेनार्थः । व्रातच्फञोरस्त्रियामिति। फगित्युच्यमाने । नाडायनः अत्रापि प्रसज्येत । अथापि फञ् इत्युच्यते । एवमप्याश्वायनः अत्रापि प्रसज्येत । तस्माच्चकार एव कर्तव्यः । अन्तोदात्तत्वमपि यथा स्यात् । चकारे चेदानीं विशेषणार्थे क्रियमाणेऽवश्यं वृद्ध्यर्थोऽन्योनुबन्धः कर्तव्यः । स च ञकार एव कर्तव्यः । सूत्रभेदो मा भूदिति । अथ क्रियमाणेऽपि वै चकारे अन्तोदात्तत्वं न प्राप्नोति । किं कारणम् । परत्वाज् ञ्नितीत्याद्युदात्तत्वं प्राप्नोति । चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति । ञित्करणसामर्थ्यादाद्युदात्तत्वं प्राप्नोति । अस्त्यन्यद् ञित्करणे प्रयोजनम् । किम् । वृद्ध्यर्थो ञकारः । चित्करणेऽप्यन्यत्तर्हि प्रयोजनम् । किम् । विशेषणार्थश्चकारः । शक्योऽत्र विशेषणार्थोऽन्योनुबन्ध आसङ्क्तुम् । तत्र ञकारानुरोधादन्तोदात्तत्वं भवति । वृद्ध्यर्थोऽप्यन्यः शक्योऽनुबन्ध आसङ्क्तुम् तत्र ञकारानुरोधादाद्युदात्तत्वं प्राप्नोति । एवं तर्हि स्वरे योगविभागः करिष्यते । इदमस्ति । चितः । चितोऽन्त उदात्तो भवतीति । ततस्तद्धितस्य । तद्धितस्य चितोऽन्त उदात्तो भवतीति । किमर्थमिदं परत्वात् ञ्नितीत्याद्युदात्तत्वं प्राप्नोति । तद्बाधनार्थम् । ततः कितः । कितस्तद्धितस्यान्त उदात्तो भवतीति । किं पुनरत्र स्वरार्थेन चकारेणानुबन्धेन । यावताच्फञन्ताञ् ञो विधीयते । तत्र ञ्नितीत्याद्युदात्तत्वेन भवितव्यम् । नैतदस्ति । बहुषु लोपे कृते अन्तोदात्तत्वं यथा स्यात् । कौञ्जायना इति।

---

गोत्रे । अथापि फञ् इति । सर्वथा सामान्यग्रहणं प्राप्नोतीत्येवं परमेतत् फञिति क्रियमाणे कौञ्जायना इति ञित्स्वरप्रसङ्गः । सूत्रभेद इति । चफञ्यपि सिध्यति । सूत्रभेदस्तु स्यादिति भावः । एवं तर्हीति । चकारस्य विशेषणे चरितार्थत्वाद्वृद्धौ च ञकारस्य परत्वाञ् ञित्स्वरप्राप्तावित्यर्थः । तत्र ञ्नितीति । सतिशिष्टस्वरस्य बलीयस्त्वादिति

इह केचिद् द्व्यचयोः फिञं विदधति बहुषु च फकम् । केचित्फ-ञन्ताज् ञ्यम् । किमत्र न्याय्यम् । अवचनमेव न्याय्यम् । द्व्यच-योर्हि फिञि सति बहुषु च फकि कौञ्जायनानामपत्यं माणवकः कौञ्जायन्यः कौञ्जायन्यौ । केन यशब्दः श्रूयेत । द्व्यचयोरित्युच्यमानो न प्राप्नोति । इह कौञ्जायन्यस्यापत्यं बहवो माणवकाः कौञ्जायनाः । केन यशब्दो न श्रूयेत । द्व्यचयोरित्युच्यमानः प्राप्नोति । त-देतत्कथं कृत्वा अवचनं ज्यायो भवति । यदि तन्नास्ति । आपत्यं वा गोत्रम् । परमप्रकृतेश्चापत्यः । आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः । स चास्त्रियाम् । एको गोत्रग्रहणानर्थक्यं च । बहुवचन-लोपिषु च सिद्धमिति । सति हि तस्मिन् द्व्यचयोरपि फिञि सति बहुषु च फकि सति न दोषो भवति । तत्र कौञ्जायनानामपत्यं मा-णवक इति विगृह्य कुञ्जशब्दाद् द्व्यचयोरुत्पत्तिर्भविष्यति । कौञ्जाय-न्यः कौञ्जायन्यौ । कौञ्जायन्यस्यापत्यं माणवका इति विगृह्य कुञ्ज-शब्दाद्बहुषूत्पत्तिर्भविष्यति । कौञ्जायना इति ॥

ऋष्यानन्तर्ये विदादिभ्योऽञ् ॥ १०४ ॥ ऋष्यानन्तर्य इत्युच्य-ते तत्रेदं न सिध्यति । कौशिको विश्वामित्र इति । किं कारणम् । वि-श्वामित्रस्तपस्तेपे नानृषिः स्यामिति । तत्र भवानृषिः संपन्नः । स पुनस्तपस्तेपे नानृषेः पुत्रः स्यामिति । तत्र भवान् गाधिरपि ऋषिः

---

भावः । इहेति । पूर्वे वैयाकरणाः । केन यशब्द इति । यशब्दस्य बहुत्वे प्रयोगाभावात् । यदा तु ञ्यः क्रियते तदा गोत्रे ऽलुगचीति लुकि प्रतिषिद्धे यशब्दः श्रूयते । कौञ्जायन्य-स्यापत्यानि बह्वनीत्यत्र इञो ण्यक्षत्रियार्षेति लुकि तद्राजान्तस्य बहुषु वर्तमानाच्च-ञ्यस्य लुक् सिध्यति । आपत्यं चेति । गोत्रे लुगचीत्यत्रैतद्व्याख्यातम् । कुञ्जशब्दादेव यू-नि फिञि फकि च कृते स्वार्थिकस्य चेञो लुकि कृते सर्वेष्टसिद्धिः ॥

ऋष्या । ऋष्यानन्तर्यं इत्यस्यार्थं द्वयं सम्भवति । ऋषीणामानन्तर्ये अव्यवधानेन भवति । यद्वाऽनन्तरमेवानन्तर्यं तेन ऋषिभ्योऽनन्तरापत्ये प्रत्ययो न भवतीति । उभयत्रा-प्यसमर्थसमासो भवतिना नञः सम्बन्धात् । तत्राद्यपक्षाश्रयेण पूर्वः पक्षो द्वितीयपक्षा-श्रयेणोत्तरम् । संज्ञागोत्राधिकारादिति । संज्ञया यद् गोत्रं पौत्रप्रभृति तदेवाधिकृतं न त्वपत्यमात्रमित्यर्थः । तेषामनन्तर इति । अन्यथा प्रतिषेधोऽनर्थकः स्यात् । तत्रर्षिभ्यो गोत्र एव प्रत्ययः । ऋषिभ्यस्त्वनन्तरापत्य ऐवेत्येष विषयविभागः । नन्वस्माज् ज्ञाप-

संपन्नः। स पुनस्तपस्तेपे नान्त्वषेः पौत्रः स्यामिति। तत्र भवान् कुशिकोपि ऋषिः संपन्नःतदेतदृष्यानन्तर्यं भवति। तत्रानृष्यानन्तर्यं इति प्रतिषेधः संप्राप्नोति। नैष दोषः। नैवं विज्ञायते। ऋष्यानन्तर्ये न भवतीति। कथं तर्हि ऋषावनन्तरे नेति। यद्येवम्। अनृष्यानन्तर्यवचनमनर्थकं सज्ञागोत्राधिकारात्*। अनृष्यानन्तर्यवचनमनर्थकम्। किं कारणम्। संज्ञागोत्राधिकारात्। संज्ञागोत्रइति वर्तते कः प्रसङ्गो यदनन्तरे स्यात्। नैव प्राप्नोति। नार्थः प्रतिषेधेन। एवं तर्हि सिद्धे सति यदनृष्यानन्तर्य इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो बिदादिषुयेऽनृषयः पठ्यन्ते तेषामनन्तरेपि वृत्तिर्भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। नानान्द्रः। पौत्रः। दौहित्र इत्येतत् सिद्धं भवति॥

वतण्डाच्च॥ १०८॥ किमर्थमिदमुच्यते। न गर्गादिभ्यो यञित्येव सिद्धम्। लुक् स्त्रियामिति वक्ष्यामीति। यदि पुनस्तत्रैवोच्येत नैवं शक्यम्। आङ्गिरसग्रहणं हि विच्छिद्येत॥

शिवादिभ्योऽण्॥ ११२॥ किमर्थं शिवादिभ्योऽण् विधीयते। न यथाविहितमित्येवोच्येत। शिवादिभ्यो यथाविहितमितीयत्युच्यमाने इञ् प्रसज्येत। इञतो यथाविहितः। पुनर्वचनमिदानीं किमर्थं स्यात्। ये तस्य बाधकास्तद्बाधनार्थम्। स वै नास्ति यस्तं बाधेत। तत्रारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स भविष्यति। कश्चासावण्एव। उत्तरार्थं तर्हि। अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्य इत्यत्र यथा विहितमितीयत्युच्यमाने ढक् प्रसज्येत। ढगतो

---

कादनृषिभ्योपत्यमात्रे प्रत्ययः प्राप्नोति। नैष दोषः। विशेषविषयस्यानुमानस्याश्रयणात्॥

वतण्डा। लुक् स्त्रियामिति वक्ष्यामीति। तत्र च वतण्डशब्दानुवृत्त्यर्थमेतदित्यर्थः। यदीति। गर्गादिगण एव वतण्डशब्दानन्तरं लुक् स्त्रियामिति पठितव्यमितिभावः। आङ्गिरसग्रहणमिति। तथा च सर्वत्र लुक् स्यात्। योगविभागस्तर्हि किमर्थो न वतण्डाल्लुक् स्त्रियामित्येकयोग एवोच्येत। आङ्गिरसे शिवाद्यण्बाधनार्थो योगविभागः। वतण्डो नाम ऋषिः। तत ऋषित्वादेवाणि सिद्धे शिवादिषु तस्य पाठो गोत्रे गर्गादियञा समावेशार्थः। अनेन तु योगेनाङ्गिरसेऽण्प्रसङ्गे यञ्विधानादण् बाध्यते। अन्यत्र तु गोत्रे यञणौ द्वावपि भवतः। ऋषित्वादेव च वातण्डोत्यत्र ऋण् भवति॥

शिवा। गोत्र इति निवृत्तमपत्यमित्येवानुवर्तते। ढगत इति। ननु मातृशब्दस्यास्त्री-

यथाविहितः । पुनर्वचनमिदानीं किमर्थं स्यात् । ये तस्य बाधकास्तद्बाधनार्थम् । स वै नास्ति यस्तं बाधेत । तत्रारम्भसामर्थ्याद् यो विहितो न च प्राप्नोति स भविष्यति । कः पुनरसावणेव । उत्तरार्थमेव हि तर्हि । ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यत्र यथाविहितमितीयत्युच्यमाने इञ् प्रसज्येत । इञतो यथाविहितः । पुनर्वचनमिदानीं किमर्थं स्यात् । ये तस्य बाधकास्तद्बाधनार्थम् । स वैनास्ति यस्तं बाधेत । तत्रारम्भसामर्थ्याद्यो विहितो न प्राप्नोति स भविष्यति । कश्चासावणेव । उत्तरार्थमेव तर्हि । मातुरुत्संख्यासंभद्रपूर्वायाः । कन्यायाः कनीन चेति । अत्र यथाविहितमितीयत्युच्यमाने ढक् प्रसज्येत । ढगतो यथाविहितः । पुनर्वचनमिदानीं किमर्थं स्यात् । मातुरुकारं वक्ष्यामि । कन्यायाः कनीनभावमिति । यद्येतावत्प्रयोजनं स्यात् । तत्रैव ब्रूयात् स्त्रीभ्यो ढक् मातुरुकारः कन्यायाश्च कनीन इति । इदं तर्हि प्रयोजनम् । अयमृष्टिषेणशब्दः शिवादिषु पठ्यते । अत्र यथाविहितमितीयत्युच्यमाने इञ् प्रसज्येत । तं परत्वात्सेनान्ताण्ण्यो बाधेत । तत्रारम्भसामर्थ्यादिञ् प्रसज्येत । पुनरण्ग्रहणादणेव भवति

ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ११४ ॥ ऋषिस्त्रयणोर्ढक्ढ्रकौ विप्रतिषेधेन * । ऋष्यणस्त्र्यणश्च ढक्ढ्रकौ भवतो विप्रतिषेधेन । ऋष्यणोऽवकाशः । वासिष्ठः । वैश्वामित्रः ढकोऽवकाशः । दुलि । दौलेयः । वलि । वालेयः । इहोभयं प्राप्नोति । अत्रि । आत्रेयः । स्त्र्यणोऽवकाशः । मकन्दिका । माकन्दिकः । ढ्रकोऽवकाशः । काणिकेरः । इहोभयंप्राप्नोति । पौणिकेरः । मौद्गलिकेरः । ढक्ढ्रकौ भवतो विप्रतिषेधेन । द्व्यचो ढकोढ्रक्ढञौ * । द्व्यचो ढग् भवतीत्येतस्माद्ढक्-

---

प्रत्ययान्तत्वात्कथं ढग्विहितः । एवं तर्हि परिहारान्तराभिधानाय विचारितमितन्नाष्यकारेण । तं परत्वादिति । परत्वग्रहणेन बाधकत्वं लक्ष्यते । तेनापवादत्वादित्यर्थः ॥

ऋष्यन्ध । ऋषिस्त्र्यण इति । अवृद्धाभ्यो नदीमानुषीभ्य इति मानुषीलक्षणेण स्त्र्यणशब्देनोक्तः । अत्र च यथासङ्ख्यं सम्बन्धः । दौलेय इति । दुलेरन्तृषिलाद् ढकोयमवकाशः । काणिकेर इति । काणेव काणिका । पौणिकेर इति । पुणिका तन्नामिका क्षुद्रा च ।

ढञौ भवतो विप्रतिषेधेन। द्व्यचो ढग्भवतीत्यस्यावकाशः। दाक्षेयः। गौप्तेयः। ढ्रकः स एव। इहोभयं प्राप्नोति। नटी। नाटेरः। दासी। दासेरः। ढञो ऽवकाशः। कामण्डलेयः। हैरण्यवाहेयः। माद्रवाहेयः। ढकः स एव। इहोभयं प्राप्नोति। जम्बू। जाम्बेयः। ढक्ढञौ भवतो विप्रतिषेधेन। न चर्ष्यणः पुनर्वचनमन्यनिवृत्त्यर्थम्। न वा एष युक्तो विप्रतिषेधः। योयमृष्यणो ढकश्च। किं कारणम्। ऋष्यणः पुनर्वचनमन्यनिवृत्त्यर्थम्। सिद्धोत्राणुत्सर्गेणैव। तस्य पुनर्वचने एतत्प्रयोजनं येन्येतदपवादाः प्राप्नुवन्ति तद्बाधनार्थम्। स यथैव तदपवादमिञं बाधते। एवं ढकमपि बाधेत। तस्मादृषिभ्योणिवधाने ऽत्र्यादिप्रतिषेधः*। तस्मादृषिभ्यो ऽणिवधाने ऽत्र्यादिभ्यः प्रतिषेधो वक्तव्यः। न वक्तव्यः। मध्येपवादाः पूर्वान्विधीन्बाधन्त इत्येवमृष्यण् इञं तदपवादं बाधिष्यते ढकं न बाधिष्यते। अयं चाप्ययुक्तो विप्रतिषेधो योयं ढकः ढ्रक्ढञोश्च। किं पुनः कारणम्। ढकः पुनर्वचनमन्यनिवृत्त्यर्थम्। सिद्धोत्र ढक्। स्त्रीभ्यो ढगित्येव। तस्य पुनर्वचन एतत्प्रयोजनं येन्येतदपवादाः प्राप्नुवन्ति तद्बाधनार्थम्। स यथैव तन्नामिकाणं तदपवादं बाधते एवं ढ्रक्ढञावपि बाधेत। तस्मात्तन्नामिकाण्यद्व्यचः*। तस्मात्तन्नामिकाणि अद्व्यच इति वक्तव्यम्। न वक्तव्यम्। मध्येपवादाः पूर्वान्विधीन्बाधन्ते इत्येव मयं ढक् तन्नामिकाणं तदपवादं बाधिष्यते। ढ्रक्ढञौ न बाधिष्यते। ऋष्यन्धकवृष्णिकुरुवंशः सेनान्तात्पण्यः*। ऋष्यन्धकवृष्णिकुरुवंशः सेनान्तात्पण्यो भवति विप्रतिषेधेन। ऋष्यणोवकाशः। वासिष्ठः। वैश्वामित्रः। ण्यस्यावकाशः। पारिषेणयः। वारिषेणयः। जातसेनो नाम ऋषिस्तस्मादुभयं प्राप्नोति। ण्यो भवति विप्रतिषेधेन। जातसेन्यः। अन्धकाणोवकाशः। श्वाफल्कः। चैत्रकः। राध्वसः। ण्यस्य स एव। उग्रसेनो नामान्धकस्तस्मादुभयं प्रा-

---

जाम्बेय इति। चतुष्पाद्भ्यश्चणो ढञ् ढेलोपो कद्वा इत्यूकार लोपः। जम्बूशब्दस्यास्त्रीप्रत्ययान्ताढ् ढक्प्राप्तिश्चिन्त्या। नवेति। प्राप्तिमात्रं बाध्यं.मन्यते। मध्येपवादा इति। पूर्वस्य निर्ज्ञातस्वरूपत्वाद्बाध्यत्वं नतूत्तरस्यानिर्ज्ञातस्वरूपस्येति भावः। अथाप्याहुः। कथं

प्नोति । ण्यो भवति विप्रतिषेधेन । औग्रसेन्यः । वृष्ण्यण्योवकाशः । वासुदेवः । बालदेवः । ण्यस्यसएव । विष्वक्सेनोनाम वृष्णिस्तस्मादुभयं प्राप्नोति ण्यो भवति विप्रतिषेधेन । वैष्वक्सेन्यः । कुर्वण्योवकाशः । नाकुलः । साहदेवः । ण्यस्य स एव । भीमसेनो नाम कुरुस्तस्मादुभयं प्राप्नोति । ण्यो भवति विप्रतिषेधेन । भैमसेन्यः । सेनान्ताण्ण्यो भवति विप्रतिषेधेन । जातोग्रविष्वग्भीमेभ्य इति वक्तव्यम् ॥

मातुरुत्संख्यासम्भद्रपूर्वायाः ॥ ११५ ॥ किमर्थं स्त्रीलिङ्गेन निर्देशः क्रियते न संख्यासंभद्रपूर्वस्येत्येवमुच्यते । स्त्रीलिङ्गे यो मातृशब्दस्तस्माद्यथा स्यात् । इह मा भूत् । संमिमीते संमाता । संमातुरपत्यं सांमात्र इति ॥

कन्यायाः कनीन च ॥ ११६ ॥ इदं विप्रतिषिद्धम् । को विप्रतिषेधः । अपत्यमिति वर्तते । यदि च कन्या नापत्यम् । अथापत्यं न कन्या । कन्या चापत्यं चेति विप्रतिषिद्धम् । नैतद्विप्रतिषिद्धम् । कथम् । कन्याशब्दोयं पुंसाभिसम्बन्धपूर्वके संप्रयोगे निवर्तते । या चेदानीं प्रागभिसम्बन्धात् पुंसा सह संप्रयोगं गच्छति तस्यां कन्याशब्दो वर्तत एव । कन्यायाः कन्योक्तायाः कन्याभिमतायाः सुदर्शनायाः यदपत्यं स कानीन इति ।

---

पुनर्नित्यानां शब्दानामनित्यान्धकादिवंशाश्रयेणान्वाख्यानं युज्यते । अत्र समाधिः । त्रिपुरुषानूकं नाम कुर्यादिति न्यायेनान्धकादिवंशा अपि नित्या एव । अथ वाऽनित्योपायाश्रयेणापि नित्यान्वाख्यानं दृश्यते । यथा शङ्काश्रयणेन कालस्य ॥

मातुरुत् । अणि सिद्धे तत्सन्नियोगेनोत्वार्थं वचनम् । स्त्रीलिङ्ग इति । अर्थधर्मं स्त्रीत्वं शब्दे समारोप्य क्रियाशब्दनिवृत्त्यर्थः स्त्रीलिङ्गनिर्देशः कृतः । न्यायानुवादश्चायं स्त्रीलिङ्गनिर्देशः । सम्बन्धिशब्दस्य प्रसिद्धतरत्वात् तस्यैव ग्रहणस्य सिद्धत्वात् । एतच्च बाह्वादिभ्यश्चेत्यत्रोक्तम् ।

कन्यायाः । वदीति । अक्षतयोनिः कन्या सा कथमपत्येन सम्बध्येतेति भावः । अभिसम्बन्धपूर्वक इति । शास्त्रोक्तो विवाहोभिसम्बन्धस्तत्पूर्वके पुरुष संयोगे कन्याशब्दो निवर्तते । या तु शास्त्रोक्तेन विवाहसंस्कारेण विना पुरुषं युनक्ति सा कन्यात्वं न जहाति । कन्योक्तासा इति । कन्यैवा सा युक्ता । तदेव व्याचष्टे । कन्याभिमताया इति । कन्यैव साभिमता स्मृतिकाराणामित्यर्थः । सुदर्शनायां इति । प्रकटदर्श-

स्त्रीभ्यो ढक् ॥ १२० ॥ इदं सर्वेष्वेव स्त्रीग्रहणेषु विचार्यते। स्त्रीग्रहणेस्त्रीशब्दग्रहणं स्यात्। स्त्रीप्रत्ययग्रहणं वा। स्त्र्यर्थग्रहणं वा। किं चातः। यदि स्त्रीशब्दग्रहणमर्थग्रहणं वा। इडबिड्। ऐडबिडः। पृथ्। पार्थः। उशिक्। औशिजः। दरद्। दारदः। अत्रापि प्राप्नोति। अथ प्रत्ययग्रहणम्। लैखाभ्रेयः। वैमात्रेयः। इति न सिध्यति। अस्तु प्रत्ययग्रहणम्। कथं लैखाभ्रेयः वैमात्रेय इति। शुभ्रादिषु पाठः करिष्यते। वडवाया वृषे वाच्ये। वडवाया वृषे वाच्ये ढग् वक्तव्यः। वडवाया वृषः वाडवेयः। अण् क्रुञ्चाकोकिलात्स्मृतः। क्रौञ्चः। कौकिल इति। आरक् पुंसि ततोन्यत्र। ततोन्यत्र आरक् पुंसि वक्तव्यः। मुषिकाया अपत्यं पुमान्मौषिकारः। मृग्याः पुमान्मार्गारः। गोधाया ढ्रक्विधौ स्मृतः॥ गोधायाः पुमान् गौधेरः॥

चटकाया ऐरक् ॥ १२८ ॥ चटकायाः पुल्लिङ्गनिर्देशः *। चटकायाः पुल्लिङ्गेन निर्देशः कर्तव्यः। इहापि यथा स्यात्। चटकस्यापत्यं चाटकैरः। यदि पुंल्लिङ्गेन निर्देशः क्रियते। चटकाया अपत्यं चाटकैर इति न सिध्यति। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवं भविष्यति। स्त्रियामपत्ये लुग्वक्तव्यः *। चटकस्यापत्यं चटका॥

---

नाया अगुप्तत्वादित्यर्थः। अन्ये त्वाहुः। मुनिदेवतामाहात्म्यात्कन्या पुंयोगेप्यक्षतयोनिर्भवति। यथा कुन्ती मन्त्राहूतदिनकरोत्पादितकर्णाख्यपुत्रापि पुनः कन्यैवाभूत्। तदपत्यं कानीनशब्दाभिधेयम्॥

स्त्रीभ्यो। बहुवचननिर्देशात् स्वरूपग्रहणे निरस्ते पक्षत्रयसम्भावनापूर्वकं प्रत्ययग्रहणमिह व्यवस्थाप्यते। इदं सर्वेष्विति। तत्र क्वचित्क्वचित्पक्ष आश्रीयते। इह तु स्वरितत्वप्रतिज्ञानात् स्वरितेनाधिकारावगतिर्भवतीत्यस्याप्यर्थस्याश्रयणाट्टाबादिप्रत्ययग्रहणम्। स्त्रियां क्तिन्नित्येतत्प्रकरणविहितास्तु प्रत्यया व्यवधानान्न गृह्यन्ते। स्त्रीशब्दग्रहणमिति स्त्रीलिङ्गानां शब्दानां ग्रहणमित्यर्थः। अर्थग्रहणमिति। अर्थे कार्यासम्भवे तदभिधायिशब्दग्रहणमेव सम्बध्यते। इडविडादयः शब्दा स्त्रीवृत्तयो न तु स्त्रीप्रत्ययान्ता इति। तेभ्योऽणेव भवति। वडवाया इति। वृषो बीजाश्वः। तेन चार्थेन विशेषविहितेनापत्यलक्षणो ढको बाध्यते। तेनापत्ये वाडव इति भवति। क्रौञ्च इति। अपत्य एवायं ढगपवादः।

चटकायाः। पुंल्लिङ्गेनेति। अन्यथा पुंल्लिङ्गादिञ् प्रसज्येत॥

आरगुदीचाम् ॥ १३० ॥ आरग्वचनमनर्थकं रका सिद्धत्वात्*। आरग्वचनमनर्थकम् । किं कारणम् । रका सिद्धत्वात् । गोधा आकारान्ता रच्क प्रत्ययः । एवं तर्हि सिद्धे सति यदारकं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । जाडारः पाण्डार इत्येतत्सिद्धं भवति ॥

क्षुद्राभ्यो वा ॥ १३१ क्षुद्राभ्य इत्युच्यते । का क्षुद्रानाम । अनियतपुंस्का । अङ्गहीना वा ॥

पितृष्वसुश्छण् ॥१३२॥ ढकि लोपः ॥१३३॥ केन विहिते पितृष्वसुः ढकि लोप इत्युच्यते । एतदेव ज्ञापयति पितृष्वसु र्ढगिति । यदयं ढकि लोपं शास्ति ॥

मातृष्वसुश्च ॥ १३४ ॥ ढकि लोप इत्युच्यते तच्चेदं न सिध्यति मातृष्वस्रीयः । नैष दोषः। एवं वक्ष्यामि। पितृष्वसुश्छण् ढकि लोपः ततो मातृष्वसुश्च। पितृष्वसुर्यदुक्तं तन्मातृष्वसुर्भवतीति। किं पुनस्तत्। छण्किलोपाविति ॥

राजश्वशुराद्यत् ॥१३७॥ राज्ञोऽपत्ये जातिग्रहणम्*। राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम्। राजन्यो नाम जातिः। क्व मा भूत्। राजन इति॥

व्यन्सपत्ने ॥१४५॥ व्यन्वचनमनर्थकं प्रत्ययार्थाभावात् * । व्यन्वचनमनर्थकम् ! किं कारणम् । प्रत्ययार्थाभावात् । किमिदं प्रत्ययार्थाभावादिति । अपत्यार्थाभावात्। अपत्यमिति वर्तते । अनपत्ये चापि सपत्ने भ्रातृव्यशब्दो वर्तते । पाप्मना भ्रातृव्येण । अस्तु तावदपत्यं सपत्नश्च । तत्र भ्रातृव्य इति । कथं पाप्मना भ्रातृव्येणेति ।

---

क्षुद्राभ्यो । अङ्गहीना वेति । वाशब्दश्चार्थे ।

मातृष्वसुः । तच्चेदमिति । अनन्तरस्य विधिं मन्यते । एवं वक्ष्यामीति । व्याख्यास्यामीत्यर्थः । चकारेण पितृष्वसुरित्यनुकृष्यते इति कार्यद्वयलाभः ॥

राज । राजशब्दः क्षत्रियशब्दपर्यायः । जातिग्रहणमिति । यदा प्रकृतिप्रत्ययसमुदायेन जातिर्गम्यते तदा प्रत्ययो नान्यदा । तेन क्षत्रियजातौ प्रतिपिपादयिषितायां राजन्यशब्दप्रयोगो वैश्ये शूद्रे वा राजापत्ये राजनशब्दप्रयोगः॥

व्यन्सपत्ने । प्रत्ययार्थाभावादिति । भ्रातृव्यशब्दः सर्वस्मिन्सपत्न दृश्यते । न हि सर्वः सपत्नो भ्रातुरपत्यमित्यपत्यलक्षणस्य प्रत्ययार्थस्याभाव इत्यर्थः । अस्तु तावदिति । वि-

उपमानात्सिद्धं भ्रातृव्य इव भ्रातृव्य इति।

गोत्रस्त्रियाः कुत्सने ण च ॥ १४७ ॥ सिमर्थो णकारः। वृद्ध्यर्थः। ञ्णितीति वृद्धिर्यथा स्यात्। गार्गो जाल्मः। गोत्रस्त्रियाः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य *। गोत्रस्त्रियाः प्रत्ययस्य णित्करणमनर्थकम्। किं कारणम्। वृद्धत्वात्प्रातिपदिकस्य। वृद्धमेवेदं प्रातिपदिकम्। लुगर्थं तर्हि णकारः कर्तव्यः। यल्लुगन्तमवृद्धं तत्र वृद्धिर्यथास्यात्। वातण्डो जाल्मः। लुगर्थमिति चेन्न लुक्प्रतिषेधात् *। लुगर्थमिति चेत्तन्न। किं कारणम्। लुक्प्रतिषेधात्। प्रतिषिध्यते तत्र लुक्। गोत्रे लुगचीति। व्यवहितत्वादप्रतिषेधः। ईकारेण व्यवहितत्वात्प्रतिषेधो न प्राप्नोति। व्यवहितत्वादप्रतिषेध इति चेन्न पुंवद्भावात् *। व्यवहितत्वादप्रतिषेध इति चेत्तन्न। किं कारणम्। पुंवद्भावात्। पुंवद्भावोऽत्र भवति। भस्याढे तद्धिते। पुंवद्भवतीति। फिनर्थं तु णकारः कर्तव्यः। यत्फिनन्तमवृद्धं तत्र वृद्धिर्यथा स्यात्। ग्लौचुकायनो जाल्म इति। पुंवद्भावप्रतिषेधार्थं च णकारः कर्तव्यः। गार्गी भार्या अस्य गार्गीभार्यः। वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो यथा स्यात्। गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम्*। गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनमेतदितिभवति। नास्ति गार्गी इति। अवंश्यत्वद्वास्त्रियाः प्रयोजनम्*। अवंश्यत्वाद्वा स्त्रि-

---

रोधाभावात्सपत्नेनापत्नार्थो न बाध्यते। न च समुदायार्थः सपत्नः। प्रकृतिप्रत्ययार्थयोस्त्यागप्रसङ्गात्। न च गत्यन्तरसम्भवे तत्त्यागो युक्त इति भावः॥

गोत्र। बहूनां गोत्रप्रत्ययानां वृद्धिमत्त्वदर्शनादिचारः। गोत्रस्त्रिया इति। वातण्ड इति। वातण्डस्यापत्यं गोत्रं स्त्री। वतण्डाच्चेति यञ्। तस्य लुक् स्त्रियामिति लुक्। शार्ङ्गरवादित्वान् ङीन्। वतण्ड्या अपत्यमिति णः। व्यवहितत्वादिति। अचीति परसप्तमीं मन्यते। विषयसप्तम्यां तु न दोषः। अथ वा यतो गोत्रप्रत्ययादव्यवहितोजादिरुत्पद्यते तस्यालुगिति विज्ञानाद्विषयसप्तम्यामपि दोषाय व्यवधानम्। पुंवद्भावादिति। पुंवद्भावेन रूपातिदेशाद्वातण्डशब्दात् स्त्रीवृत्तेर्णप्रत्यय इति भावः। ग्लौचुकायन इति। ग्लुचुकस्यापत्यं स्त्री प्राचामिति फिन्प्रत्ययः। इतो मनुष्यजातेरिति ङीष् पुंवद्भावे कृते णः। नास्ति गार्गेति। गार्ग्या अपत्यं स्त्रीत्यत्रार्थे नास्ति प्रत्ययः। अस्त्रियामिति युवसंज्ञानिषेधाद् गोत्रसंज्ञावस्थानादेको गोत्र इति नियमाद् गोत्रप्रत्ययान्तादपर-

याः प्रयोजनमेतद्भवति। न च स्त्री वंश्या। अस्ति गार्गी स्त्री। अपर आह। द्वावेव वंशौ। मातृवंशः पितृवंशश्च। यावता मातृवंशोऽस्ति नास्ति गार्गी॥

वृद्धाट्ठक् सौवीरेषु बहुलम् ॥ १४८॥ गोत्रस्त्रियाः। वृद्धाट्ठक् फेश्छ च। फाण्टाहृति। इमे चत्वारो योगाः। एषां त्रयः कुत्सने। त्रयः सौवीरगत्रे आद्यो योगः कुत्सन एव। अन्त्यः सौवीरगोत्र एव॥

फाण्टाहृतिमिमताभ्यां णफिञौ॥ १५०॥ किमर्थो णकारः। वृद्ध्यर्थः। णितीति वृद्धिर्यथा स्यात्। फाण्टाहृतः। फाण्टहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य*। फाण्टाहृतेः प्रत्ययस्य णित्करणमनर्थकम्। किं कारणम्। वृद्धत्वात्। प्रातिपदिकस्य। वृद्धमेवैतत्प्रातिपदिकम्। पुंवद्भावप्रतिषेधार्थं तु *। पुंवद्भावस्य प्रतिषेधार्थं णकारः कर्तव्यः। फाण्टाहृता भार्या अस्य फाण्टाहृताभार्याः। वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो यथा स्यात्। उक्तं वा *। किमुक्तम्। गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम्। अवंश्यत्वाद्वा स्त्रियाः प्रयोजनमिति॥

---

गोत्रप्रत्ययानुत्पादात्। अवंश्यत्वाद्वेति। गार्ग्या अपत्यं या स्त्री तस्या न युवसंज्ञा नापि गोत्रसंज्ञा न हि सा गर्गस्यापत्यम्। पौत्रप्रभृतेरपत्यस्य गोत्रसंज्ञा विधीयते तदभावादेको गोत्र इति नियमाभावात्तस्य भावादस्ति गार्गीत्यर्थः। न च स्त्री वंश्येति। पितृपितामहादिर्वंश्यो न मातृमातामहादिरित्यर्थः। तस्मात् पुंवद्भावप्रतिषेधार्थो णकारः। न च जातेश्चेति प्रतिषेधः सिध्यति। गोत्रत्वाभावे जातित्वाभावात्। यदा च गोत्रं च चरणैः सहेत्यत्रापत्यमात्रं गृह्यते तदा जातित्वमस्त्येव। फिनर्थस्तु कर्तव्य एव णकारो वृद्धये। मातृवंश इति। गार्ग्या अपत्यं या स्त्री सा मातृवंशेन गर्गकुलाभवत्येवेति गर्गापेक्षया तस्या गोत्रत्वादेको गोत्र इति नियमात्प्रत्ययान्तराभावान्नास्ति गार्गी। पौत्रप्रभृतिग्रहणं तु व्यवहितापत्योपलक्षणम्। तस्मात् फिनर्थो णकारः॥

वृद्धाट्ठक् सौ। गोत्रस्त्रिया इति। विषयविभागकथनार्थोऽत्रोपक्षेपः कुत्सनग्रहणस्य सौवीरग्रहणस्य च सूत्रद्वय एवानुवर्तनाद्यथोक्तविषयविभागलाभः॥

फाण्टा। फाण्टाहृतेरिति। यथासंख्यसंबन्धस्येष्टत्वान्न मिमतशब्दार्थं णित्वम्। पूर्वनिपातव्यवस्था तु शास्त्रे नावश्यं सर्वत्राश्रीयते इति तदनाश्रयणमपि न यथासंख्याभावं सूचयितुमलम्। शिष्टं भाष्यं पूर्ववद्व्याख्येयम्॥

कुर्वादिभ्यो ण्यः ॥१५१॥ वामरथस्य कण्वादिवत्स्वरवर्जम्*। वामरथस्य कण्वादिवद्भावो वक्तव्यः। किमविशेषेण। नेत्याह। स्वरवर्जम्। स्वरं वर्जयित्वा। किं प्रयोजनम्। वामरथ्यस्यच्छात्राः। वामरथाः। कण्वादिभ्यो गोत्र इत्यण्यथा स्यात्। यदि कण्वादिवदित्युच्यते। प्रत्ययाश्रयमनतिदिष्टं भवति। तत्र को दोषः। वामरथाः। बहुषु लोपो न प्राप्नोति। वामरथानां संघः। वामरथाः। संघाङ्कलक्षणेष्वञ्यञिञामणित्यण्न प्राप्नोति। यदि पुनर्यञ्वदित्युच्यते। एवमपि प्रकृत्याश्रितमनतिदिष्टं भवति। तत्र को दोषः। वामरथ्यस्यच्छात्रा वामरथाः। कण्वादिभ्यो गोत्र इत्यण्न प्राप्नोति। अस्तु तर्हि कण्वादिवदित्येव। कथं वामरथाः। वामरथानां संघ इति च। यदयं स्वरवर्जमित्याह तज्ज्ञापयत्याचार्यः प्रत्ययाश्रयमप्यतिदिष्टं भवतीति॥

उदीचामिञ्॥ १५३॥ उदीचामिञ्विधौ तक्ष्णोण्वचनम्। उदीचामिञ्विधौ तक्ष्णोण् वक्तव्यः ताक्ष्णः। यदि पुनरयं तक्षशब्दः शिवादिषु पठ्येत। शिवादिरिति चण्यविधिः*। शिवादिरिति चेण् ण्यो विधेयः। ताक्ष्ण्यः। सिद्धं तूदीचां वा ण्य वचनात्*। सिद्धमेतत्। कथम्। उदीचां वा ण्यवचनात्। उदीचां वा ण्योभवती

कुर्वा। वामरथस्येति। प्रकरणात्प्रत्ययान्तस्येति विज्ञेयम्। कण्वादीनां यञन्तायत्कार्यं तदतिदेशः केवलानां तेषां कार्यस्य कस्य चिदनभिधानात्। वामरथा इति। छे प्राप्तेऽण्विधिः। आपत्यस्येति यलोपः। यदीति कण्वादिवदिति वचनात्कण्वादीनामाहृत्य यत्कार्यं विहितं कण्वादिभ्यो गोत्र इति तस्यैवातिदेशः प्राप्नोति न तु यञमात्रनिबन्धनस्येति भावः। एवमपीति। सामान्यातिदेशे विशेषानतिदेशात्। यदयमिति। लिङ्गादाहृत्यानाहृत्य च कण्वादीनां यञन्तानां यत्कार्यं विधीयते तदतिदिश्यते।

उदीचाम्। उदीचामिति। इञबाधनायाण्विध्यर्थं वचनम्। ताक्ष्ण इति। षपूर्वहन्धृतराज्ञामणीत्यल्लोपः। यदीति। विशेषविहितेनाणा बाधितत्वादिञ् न भविष्यतीति भावः। ण्यविधिरिति। यद्यणा कार्यमात्रं बाध्यते तदा द्वयोरपि ण्येञोर्बाधः स्यात्। अथविशेषचिन्ता तदा पुरस्तादपवादा इति न्यायाण् ण्यस्यैव बाधः प्राप्नोति नेञः। सिद्धमिति। विकल्पितण्यमुक्ते पक्षे तक्षन्शब्दात् प्राग्दीव्यतोऽणित्यण् भवति। ननु जातसेनोग्रसेनविष्वक्सेनभीमसेनेभ्यो ण्येन मुक्ते पक्षे अण् ऋष्यादिलक्षणः प्राप्नोति। यथान्यासेतु तेभ्योण्येञौ भवतः। एवं तर्हि बाह्वादेराकृतिगणत्वादेतेभ्यो ण्येनमुक्ते इञ्

ति वक्तव्यम् । यथेन मुक्तो यो यतः प्राप्नोति स ततो भविष्यति ॥

कौसल्यकार्मार्याभ्यां च ॥ १५५ ॥ किमिदं कौसल्यकार्मार्य-योर्विकृतयोर्ग्रहणं क्रियते । एवं विकृताभ्यां यथा स्यात् । अल्पल्प-मिदमुच्यते । कौसल्यकार्मार्याभ्यां चेति । फिञ्प्रकरणेदगुकोस-लकर्मारच्छागवृषाणां युट् च * । फिञ्प्रकरणे दगुकोसलकर्मार-च्छागवृषाणां युट्चेति वक्तव्यम् । दगु । दागव्यायनिः । कोसल । कौ-सल्यायनिः । कर्मार । कार्मार्यायणिः । छाग छाग्यायनिः । वृष । वार्ष्यायणिः । यदि युट् क्रियते युटि कृते अनादित्वादादेशो न प्रा-प्नोति । इदमिह संप्रधार्यमादेशः क्रियतां युडिति । किमत्र कर्तव्य-म् । परत्वादादेशः । नित्यो युट् । कृते ऽप्यादेशे प्राप्नोति अकृते ऽपि युडप्यनित्यः । अन्यस्य कृते आदेशे प्राप्नोति अन्यस्याकृते । शब्दान्तर-स्य प्राप्नुवन्विधिरनित्यो भवति । अन्तरङ्गस्तर्हि युट् । कान्तरङ्गता । उत्पत्तिसंनियोगेन युडुच्यते उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्ग-स्यादेशः । आदेशोप्यन्तरङ्गः । कथम् । वक्ष्यत्येतत् । आयन्नादिषूप-देशिवद्वचनं स्वरसिद्ध्यर्थमिति । अनवकाशस्तर्हि युट् । एवं तर्हि पूर्वान्तः करिष्यते । यदि पूर्वान्तः करिष्यते । दागव्यायनिः । ओर्गुणो न प्रा-प्नोति । अस्तु तर्हि परादिरेव । ननु चोक्तम् । युटि कृते अनादित्वा-दादेशो न प्राप्नोतीति । नैष दोषः । सिद्धं त्वादेशस्य युड्वचनात् * । सिद्धमेतत् । कथम् । आदेशस्य युड्वचनात् । युडादिष्टस्येति वक्तव्यम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । चेन संनियोगः करिष्यते । युट् च । किं च । यच्चान्यत्प्राप्नोति । किं चान्यत् प्राप्नोति । आदेशः ॥

वाकिनादीनां कुक् च ॥ १५८ ॥ यदि पुनरयं कुट् परादिः क्रियते ।

---

भविष्यतीत्यदोषः ॥

कौसल्य । किमिदमिति । कोसलस्यापत्यं वृद्धेत्कोसलाजादाञ्ञ्यङिति ञ्यङ् । कर्मारस्यापत्यं कारिलक्षणो ण्य इत्येवं यौ कौसल्यकार्मार्यशब्दौ तयोर्ग्रहणं नेष्यत इति प्रश्नः । उत्तरं तु । प्रत्ययसंनियोगेनैवंभूतप्रकृत्यादेशविधानार्थ एव निर्देशः । अङ्गा-स्यादेश इति । अङ्गनिमित्तप्रत्ययावयवस्येत्यर्थः । चेनेति । तेन युगपदागमादेशौ भवतः ॥

वाकि । क्रियतइति । गणसूत्रमेवैवं पठतीति इत्यर्थः । यद्यपि वाकिनादीनां कुट्चेति

कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् * । कुटि सति प्रत्यया-देरादेशो नोपपद्यते । किं कारणम् । अनादित्वात् । कुटि कृते ऽनादित्वादादेशो न प्राप्नोति । एवं तर्हि पूर्वान्तः । करिष्यते । पूर्वान्ते नलोपवचनम् * । यदि पूर्वान्तः करिष्यते । न लोपो वक्तव्यः । चार्मिकायणिः । वार्मिकायणिः । न लोपः प्रातिपदिकान्तस्येति न लोपो न प्राप्नोति । परादौ तु पुनः सति न लोपः प्रातिपदिकान्तस्येति नलोपः सिध्यति । अस्तु तर्हि परादिरेव । ननु चोक्तं । कुटि कृते अनादित्वादादेशो न प्राप्नोतीति । सिद्धं त्वादिष्टस्य कुडुचनात् * । सिद्धमेतत् । कथम् । कुड्चादिष्टस्येति वक्तव्यम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । चेन सनियोगः करिष्यते । कुट च । किं च । यच्चान्यत् प्राप्नोति । किं चान्यत्प्राप्नोति । आदेशः । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं पूर्वान्ते नलोपवचनमिति । नैष दोषः । क्रियते न्यास एतत् । चर्मिवर्मिणोर्नलोपश्चेति । कारिभ्य इञोगोत्रात्फिञ् विप्रतिषेधेन * । कारिभ्य इञ् भवतीत्येतस्मादगोत्रात् फिञ् भवति विप्रतिषेधेन । कारिभ्य इञ् भवतीत्यस्यावकाशः । अयस्कारिः लौहकारिः । फिञोवकाशः । तापसायनिः । साम्मितिकायनिः । इहोभयं प्राप्नोति । नापितायनिः । फिञ् भवति विप्रतिषेधेन ॥

मनोर्जातावञ्यतौ षुक् च ॥१६१॥ अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्द्धन्यस्तेन सिध्यति माणवः ॥ १ ॥ यदि षुक् पूर्वान्तः क्रियते । मानुषाः । बहुषु लोपः प्राप्नोति । माणु-

---

सूत्रपाठे लाघवं भवति । न लोपश्चेति गणसूत्रैकदेशस्याकरणात् । तथापि गणपाठस्य पश्चात् सूत्रप्रणयनात् गणपाठदर्शनात् कुक्चेत्युक्तमिति भावः । लिङ्गविशिष्टपरिभाषया चर्मिणीवर्मिणीभ्यां प्रत्ययविधानाढ्कस्यादढइति पुंवद्भावः सिध्यति । कुटि तु भत्वाभावात् पुंवद्भावो न स्यात् ॥

मनोः। अपत्य इति । णत्वविधानार्थमिदम् । अणः सिद्धत्वात् । न च न दण्डमाणवान्तेवासिष्विति निपातनाण्णत्वस्य सिद्धत्वाद्वचनं नारम्भणीयम् । निपातनादर्थविशेषस्यानिश्चयात् । अनवीतविद्यत्वान् मूढत्वं विहिताकरणान्निषिद्धाचरणाच्च कुत्सितत्वम् । मानुषा इति । अपत्याधिकारादपत्ये प्रत्ययो विधीयते । जातिग्रहणं तु प्रकृतिप्रत्ययविशे-

षाणां संघः। संघाङ्कलक्षणेष्वञ्यञिञामण् प्राप्नोति। अस्तु तर्हि परादिः। यदि परादिः क्रियते मानुषो। अञन्तादितीकारो न प्राप्नोति। अस्तु तर्हि पूर्वान्त एव। कथं मानुषा मानुषाणां संघ इति च। उभयत्र लौकिकस्य गोत्रस्य ग्रहणम्। न चैतल्लौकिकं गोत्रम्। किं तर्हि। जातिः। इह तर्हि मानुष्यकमिति हलस्तद्धितस्येति यलोपः प्राप्नोति। परादावप्येष दोषः। यद्धि तद्धलस्तद्धितस्येति हल्ग्रहणं न तदङ्गविशेषणं शक्यं विज्ञातुम्। इह हि दोषः स्यात्। वृकाट्टेण्यण्। वार्केणीति। तस्मादुभाभ्यामेतद्वक्तव्यम्। प्रकृत्याके राजन्यमनुष्ययुवान इति॥

अपत्यं पौत्रप्रभृति गोत्रम्॥ १६२॥ पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यं तस्य पौत्रप्रभृति संज्ञाकरणम्। पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यविवक्षा तस्य पौत्रप्रभृति गोत्रसंज्ञं भवतीति वक्तव्यम्। गर्गोपि कं चित्प्रति पौत्रः। कुशिकोपि। तत्र मा भूदिति। तत्तर्हि

---

षत्वं न तु जातिः प्रत्ययार्थ इति यञञोश्चेति लुक्प्रसङ्गः। परादौ तु षञ् भवति न लञिति लुगभावः। ननु तदन्तस्तद्ग्रहणेन गृह्यते इति परादावप्यञन्तप्रसङ्गः। एवं तर्हि अकारप्रश्लेषादकारमात्रस्याञोत्र ग्रहणात्परादावञ् कार्याभावः। ईकार इति। शार्ङ्गरवाद्यञो ङीनित्यनेनेति भावः। न चैतदिति। अपत्ये व्युत्पादितस्यापि मानुषशब्दस्य ब्राह्मणशब्दस्येव जातिवाचित्वादपत्यवाचित्वाभावादित्यर्थः। इह तर्हीति। हलन्तादङ्गात्परस्य तद्धितयकारस्य लोप इति मन्यते। हलस्तद्धितस्येति वर्त्तमाने आपत्यस्य च तद्धितेनातीति लोपोत्र प्राप्नोति। हलस्तद्धितस्येत्यत्र ल्वीतीति वर्त्तते। वार्केणीति। वृकशब्दादायुधजीविसंघविशेषवचनात् स्वार्थे टेण्यण्॥

अपत्यम्। पौत्रप्रभृतेरिति। नन्वपत्यमात्रस्य लोके गोत्रत्वादपत्यविशेषे गोत्रशब्दस्य नियमात्परिभाषेयं न्याय्या न तु संज्ञा। नैष दोषः। लिङ्गवती परिभाषा भवति विध्यन्तरशेषभूता वा। न चेयं तथा। यथा च वृद्ध्यादयः सर्वार्थप्रत्यायनयोग्या अपि संज्ञिविशेषे शक्त्यवच्छेदकरणात् संज्ञा उच्यन्ते तथेयमपि। उक्तं च हरिणा। व्यवहाराय नियमः संज्ञानां संज्ञिनि क्व चित्। नित्य एव तु संबन्धो डित्थादिषु गवादिवत्॥ वृद्ध्यादीनां च शास्त्रेस्मिन् शक्त्यवच्छेदलक्षणः। अकृत्रिमो हि संबन्धो विशेषण विशेष्यवदिति। गर्गोपोति। वस्तुस्थित्या तस्यापि पौत्रत्वमवश्यंभावि। सत्यां च गोत्रसंज्ञायां गो-

वक्तव्यम्। न वक्तव्यम्। समर्थानां प्रथमादिति वर्त्तते। समर्थानां प्रथमस्य यदपत्यं पौत्रप्रभृति विज्ञायते। जीवद्वंश्यं च कुत्सितम्*। जीवद्वंश्यं च कुत्सितं गोत्रसंज्ञं भवतीति वक्तव्यम्। गार्ग्यस्त्वमसि जाल्म वात्स्यस्त्वमसि जाल्म इति। का पुनरिह कुत्सा। पितृतो लोके व्यपदेशवता अस्वतन्त्रेण भवितव्यम्। य इदानीं पितृमान् स्वतन्त्रो भवति स उच्यते गार्ग्यस्त्वमसि जाल्म वात्स्यस्त्वमसि जाल्म। न त्वं पितृतो व्यपदेशमर्हसीति ॥

जीवति तु वंश्ये युवा ॥ १६३ ॥ जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेत्यं च *। जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेत्यं चेति वक्तव्यम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। पौत्रप्रभृतीति वर्तते। एवं तर्हि अन्वाचष्टे पौत्रप्रभृतीति वर्ततइति। किमेतस्यान्वाख्याने प्रयोजनम्। तत्र दैवदत्त्यर्थम्। देवदत्तस्यापत्यं दैवदत्तिरिति। अनन्तरं यदपत्यं तत्र युवसंज्ञा मा भूदिति। उच्यमानेऽप्येतस्मिन् देवदत्तस्य पौत्रस्य युवसंज्ञा प्राप्नोति। एतदपि पौत्रप्रभृति भवति। न पौत्रप्रभृतीत्यनेनापत्यमभिसंबध्यते पौत्रप्रभृति यदपत्यमिति। किं तर्हि। वंश्योऽभिसंबध्यते। पौत्रप्रभृति वंश्ये जीवति यदपत्यमिति। एवमपि देवदत्तस्य द्वौ पुत्रौ तयोः कनीयसि युवसंज्ञा प्राप्नोति भ्रा-

---

त्रयूनीति वचनाद्यूनि प्रत्ययप्रसङ्गो गार्ग्यादेव च यूनीष्यते। समर्थानामिति। यद्यप्यपत्यशब्दस्य संबन्धिशब्दत्वेन चोद्यमेतत्परिक्रियते। नहि गर्गशब्दस्यापत्यत्वं सदपि वस्तुस्थित्यार्थं इति। तथापि परिहारान्तरसद्भावाद्भाष्यकारेणैतन्नोक्तम्। जीवद्वंश्यमिति यूनश्चकुत्सायमितिसूत्रमनार्षमिति वचनम्। नत्वं पितृत इति। पितृतो व्यपदेशे हि गार्ग्यायण इति भाव्यम्।

जीवति। अभिजनप्रबन्धो वंशः। तत्र भवो वंश्यः पित्रादिः। तस्मिन् जीवति यस्य संज्ञेष्यते न स निर्दिष्ट इत्यपत्यमात्रस्य युवसंज्ञा प्राप्नोतीति मत्वाह। पौत्रप्रभृत्यपेत्यं चेति। इदं संज्ञाविधानमिति शेषः। पौत्रप्रभृतीति व्यधिकरणं विशेषणमपत्यस्यापेत्य युवसंज्ञा विधीयते। पौत्रप्रभृतेर्यदपत्यं तद्युवसंज्ञमित्यर्थः। अनन्तरमिति। अनन्तरस्य च युवसंज्ञायां ण्यक्षत्रियार्षेति लुक् प्रसङ्गः। इतरः पौत्रप्रभृति यदपत्यमिति सामानाधिकरण्येन संबन्धं मत्वाह। देवदत्तस्येति। आचार्यदेशीय आह। न पौत्रप्रभृतीति। चोदक आह। एवमपीति। भ्रातरीत्यनेन वंश्यस्य निवर्त्तितत्वात्तद्विशेषणस्यापि पौत्रप्रभृ-

तरि च ज्यायसीति। एवं तद्यदपत्यमेवाभिसंबध्यते न तु पौत्रप्रभृतिसमानाधिकरणमपत्यम्। नैवं विज्ञायते। पौत्रप्रभृति यदपत्यमिति। कथं तर्हि। पौत्रप्रभृतेर्यदपत्यमिति। वृद्धस्य च पूजायाम् *। वृद्धस्य च पूजायां युवसंज्ञा वक्तव्या। तत्रभवन्तो गार्ग्यायणाः। तत्रभवन्तो वात्स्यायनाः। का पुनरिह पूजा। युवत्वं लोके ईप्सितं पूजेत्युपचर्यते। तत्रभवन्तश्च युवत्वेनोपचर्यमाणाः पूजिता भवन्ति। आपत्यो वा गोत्रम् *। अथ वा आपत्यो गोत्रसंज्ञं भवतीति वक्तव्यम्। परमप्रकृतेश्चापत्यः*। परमप्रकृतेश्चापत्यो भवतीति वक्तव्यम्। आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः। आपत्याज्जीवद्वंश्यात् स्वार्थे द्वितीयः प्रत्ययः स च युवसंज्ञो भवतीति वक्तव्यम्। स चास्त्रियाम् *। स चास्त्रियां भवतीति वक्तव्यम्। एकोगोत्रग्रहणानर्थक्यं च *। एवं च कृत्वा एकोगोत्रग्रहणमनर्थकं भवति। बहुवचनलोपिषु च सिद्धम् *। बहुवचनलोपिषु च सिद्धं भवति। तत्र बिदानामपत्यं माणवक इति विगृह्य बिदशब्दाद् द्व्यकयोरुत्पत्तिर्भविष्यति। बैदः बैदौ। बैदस्यापत्यानि बहवो माणवका इति विगृह्य बिदाशब्दाद्वहुषूत्पत्तिर्भविष्यति। बिदा इति॥

वान्यस्मिन्सपिण्डे स्थविरतरे जीवति॥ १६५॥ अन्यग्रहणं किमर्थम्। भ्रातरीति वर्तते। सपिण्डमात्रे यथा स्यात्। अथ स्थविरतरग्रहणं किमर्थम्। उभयतो विशिष्टे यथा स्यात्। स्थानतो वयस्तश्च।

---

तिग्रहणस्य निवृत्तौ ज्यायसि भ्रातरि जीवत्यनन्तरापत्यस्यापि कनीयसो युवसंज्ञाप्रसङ्ग इत्यर्थः। कथं तर्हीति। एतच्चेहार्थादपत्यग्रहणाल्लभ्यते। अन्यथा पौत्रप्रभृतेरपत्यत्वाव्यभिचारादनर्थकमेवापत्यग्रहणं स्यात्। वृद्धस्येति। सूत्रेषु तु कैश्चिद् वृद्धस्य च पूजायामिति वार्त्तिकदर्शनात्प्रक्षिप्तम्। गार्ग्यायणा इति। युवसंज्ञाविधानसामर्थ्यात् स्वार्थे युवप्रत्ययः। युवत्वमिति। ननु युवशब्दो ऽनपेक्षितप्रवृत्तिनिमित्त एव संज्ञेति कथमेतदुच्यते। प्रायेणाल्पवयसो जीवद्वंश्यत्वं भवतीति तदध्यारोपः पूजेत्यदोषः। आपत्यो वेति। गोत्रे लुगचीत्यत्र व्याख्यातम्॥

वान्यस्मिन्। सपिण्डमात्र इति। अन्यथा पूर्वेण नित्यायां युवसंज्ञायां प्राप्तायामियं विभाषा स्यात्। उभयत इति। ज्यायसीत्यनुवृत्त्या वयः प्रकर्षे लब्धे स्थविरतर इति वच-

अथ जीवतीति वर्तमाने पुनर्जीवतिग्रहणं किमर्थम्। जीवतो जीवति यथा स्यात्। मृते हि माभूत्। मृते हि गार्ग्यो मृत इत्येव भवितव्यम्। अथ गोत्रयूनोः समावेशो भवति। उताहो न। किं च प्राप्नोति। बाढं प्राप्नोति। न ह्ययमेकसंज्ञाधिकारः। किं चातः। गोत्रयूनोः समावेशे कोऽदोषस्तत्कृतं भवेत्॥ गोत्रयूनोः समावेशे को दोषः तत्कृतं प्राप्नोति। गोत्राश्रया विधयो यून्यपि प्राप्नुवन्ति। यास्कायनयः। लाह्यायनयः। यस्कादिभ्यो गोत्रे इति लुक् प्राप्नोति। यस्कादिषु न दोषोऽस्ति न यूनीत्यनुवर्तनात्॥ यस्कादिषु न दोषः। किं कारणम्। न यूनीत्यनुवर्तनात्। नयूनीति तत्रानुवर्त्तते। क्व प्रकृतम्। न तौल्वलिभ्य इति। दोषोऽत्रिबिदपञ्चाला न यूनीत्यनुवर्त्तनात्॥ यदि न यूनीत्यनुवर्त्तते। अत्रयः बिदाः पञ्चाला माणवका इति न सिध्यति। नैष दोषः। संबन्धमनुवर्त्तिष्यते। न तौल्वलिभ्यः तद्राजस्य बहुषु तेनैवास्त्रियां लुग् भवति। न तौल्वलिभ्यो यूनि न। यस्कादिभ्यो गोत्रे लुग् भवति। न यूनि। तौल्वलिभ्य इति निवृत्तम्। यञञोश्च। अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च लुग्भवति। यूनिनेत्यपि निवृत्तम्। इह तर्हि काण्व्यायनीयाः। कण्वादिभ्यो गोत्रइत्यण् प्राप्नोति। कण्वादिषु न दोषोऽस्ति न यून्यस्ति ततः परम्॥ कण्वादिषु दोषो नास्ति। किं

---

नसामर्थ्यादुभयनिमित्तः प्रकर्ष आश्रीयते। जीवत इति। जीवतीत्याख्यातपदं संज्ञिविशेषणार्थमिहोपात्तमित्यर्थः। मृते होति। संज्ञिनि सपिण्डे चेति भावः। अथेति। एकसंज्ञाधिकारादन्यत्र समावेशस्य दर्शनादर्शनाभ्यां प्रश्नः। यास्कायनय इति। यस्कस्यापत्यं गोत्रमिति शिवाद्यण्। तदन्ताद्यूनि अणो द्व्यच इति फिञ्। एकदेशविकृतस्यानन्यत्वाद्वृद्धो यस्येति लोपे च यास्कितिशब्दो यस्कशब्द एवेति लुक् प्राप्नोति। न यूनीति। तत्र वाक्यभेदेन संबन्धो यस्कादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवति यूनि तु न भवतीति। अत्रय इति। अत्रेर्गोत्रे इतश्चानिञ इति ढक्। बिदादञ्। पञ्चालाज्जनपदशब्दादित्यञ्। ततो बहुषु युवस्तत इञ्। तस्य ण्यक्षत्रियार्षेति लुकि कृते ढगञोर्लुगिष्यते स नयूनीत्यनुवर्त्तनान्न प्राप्नोति। संबन्धमिति। तेन यस्कादिभ्यो गोत्र इत्यत्रैव न यूनीति संबध्यते नान्यत्रेत्यर्थः। इह तर्हीति। व्यवहितेऽपि परशब्दस्य दृष्टत्वदर्शनात्कण्वशब्दात्परः फग् भवतीति गोत्रसंज्ञायामण्प्रसङ्गः। विहितविशेषणाश्रयेण परिहारमाह। कण्वादिष्विति। कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तात्प्राति-

कारणम् । न यून्यस्ति ततः परम् । कण्वादिभ्यो यो विहितस्तदन्तात्प्रातिपदिकादित्युच्यते । यश्चात्र कण्वादिभ्यो विहितः न तदन्तं प्रातिपदिकम् । यदन्तं च प्रातिपदिकं नासौ कण्वादिभ्यः परः । इह तर्ह्यौपगवस्यापत्यमौपगविरिति एको गोत्र इत्येतस्मान्नियमात्प्रत्ययो न प्राप्नोति । एको गोत्रे प्रतिपदम् । प्रतिपदमत्र प्रत्यया विधीयन्ते । गोत्राद्यून्यस्त्रियामिति । तदन्तात्तर्ह्यनेकः प्रत्ययः प्राप्नोति । गोत्राद्यूनि च तत्स्मरेत् । गोत्राद्यून्यस्त्रियामिति तत् स्मरेत् । किम् । एक इत्येव । गोत्रे तर्ह्यलुगुक्तः स यून्यपि प्राप्नोति । अस्तु पुनर्यूनि लुगित्येवं लुग् भविष्यति । नैवं शक्यम् । फक्फिञोर्हि दोषः स्यात् । शालङ्कर्यूनः छात्राः शालङ्काः । पैलस्य पैलीयाः । फक्फिञोरन्यतरस्यामित्यन्यतरस्यां श्रवणं प्रसज्येत । तस्माद्युवसंज्ञायां गोत्रसंज्ञायाः प्रतिषेधो वक्तव्यः । नवक्तव्यः । तुर्नियामकः । तुः क्रियते । स नियामको भविष्यति । जीवति वंश्ये अपत्यं युवसंज्ञमेव भवतीति । यदि तर्हि युवसंज्ञायां गोत्रसंज्ञा न भवति । य इष्यन्ते यूनि गोत्राश्रया विधयस्ते न सिध्यन्ति । गार्ग्यायणानां समूहो गार्ग्यायणकम् । गार्ग्यायणानां किं चिद् गार्ग्यायणकम् । गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः । गोत्राश्रयो वुञ् प्राप्नोति । एवं तर्हि । राजन्याद् वुञ् मनुष्याच्च ज्ञापकं लौकिकपरम् । यदयं वुञ्विधौ राजन्यमनुष्ययोर्ग्रहणं करोति । तज् ज्ञापयत्याचार्यः । लौकिकं परं गोत्रग्रहणमिति । युवा च लोके गोत्रमित्युपचर्यते । किं गोत्रोसि माणवक गार्ग्यायणः । किं गोत्रोसि माणवक वात्स्यान इति । यद्येतज् ज्ञाप्य-

---

पदिकाच्छेषेऽर्थे ऽण्प्रत्यय इति सूत्रार्थाश्रयणात्तद्दोषाभावः । प्रतिपदमिति । एको गोत्र इति नियमादप्राप्तो यून्यपरः प्रत्ययो विधीयतइत्यर्थ- । तदन्तात्तर्हीति । यदि एको गोत्र इति नियमो बाध्यते तदौपगवेर्यूनोऽपत्यमित्यत्रापि यूनो गोत्रत्वे सति यञिञोश्चेति फक्प्रसङ्गः । गोत्रादिति । गोत्राद्यूनीत्यत्रैकग्रहणमनुवर्त्तते तेनैकस्यैव युवप्रत्ययस्यानुज्ञानादनेकः प्रत्ययो न भविष्यतीत्यर्थः । यद्यप्याद्यस्य युवप्रत्ययस्य यूनि लुगिति लुकि कृते इष्टं सिध्यति । तथापि परिहारान्तरसंभवादेतन्नाश्रितम् । स यून्यपीति । अत्रीणां यूनां छात्रा इत्यादावित्यर्थः । पुनरिति । परत्वादलुकं बाधित्वा लुग्भविष्यती-

ते औपगवेर्यूनः छात्रा औपगवीयाः। इञो गोत्र इत्यण् प्राप्नोति। सामूहिकेषु ज्ञापकम्। यदि सामूहिकेषु ज्ञापकम्। गार्ग्यायणानां किं चिद् गार्ग्यायणकम्। वुञ्विधावेव तज्ज्ञापकम्। यदि वुञ्विधौ ज्ञापकं शालङ्केर्यूनः छात्राः शालङ्काः। इञो गोत्रइत्यणन प्राप्नोति। अस्तु तर्ह्यविशेषेण। कथमौपगवेर्यूनः छात्रा औपगवीयाः। इञो गोत्र इत्यण् प्राप्नोति। नैष दोषः। गोत्रेणाऽनेन विशेषयिष्यामः। गोत्रे य इञ्विहित इति

जनपदशब्दात् क्षत्रियादञ्॥ १६८॥ क्षत्रियादेकराजात्सङ्घप्रतिषेधार्थम्*। क्षत्रियादेकराजादिति वक्तव्यम्। किं प्रयोजनम्। सङ्घप्रतिषेधार्थम्। सङ्घान्माभूत्। पञ्चालानामपत्यं विदेहानामपत्यमिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। न ह्यन्तरेण बहुषु लुकं पञ्चालानामित्येतद्भवति। यस्तस्मादुत्पद्यते सयुवप्रत्ययः स्यात्। युवप्रत्ययश्चेत्तस्य लुक्। तस्मिंश्चालुग् भविष्यति। इदं तर्हि क्षौद्रका-

---

त्यर्थः। शालङ्केरिति। शालङ्केरपत्यं गोत्रमिति बाह्वादेराकृतिगणत्वादिञ्। पैलादिषु शालङ्किशब्दपाठान्निपातनादिञ्प्रत्ययः शलङ्कादेशश्च। ततः शालङ्केरपत्यं युवेति यञिञोश्चेति फक्। तस्य पैलादिभ्यश्चेति लुक्। ततः शालङ्केर्यूनः छात्रा इति प्राग्दीव्यतीयार्थविवक्षायां यूनो गोत्रसंज्ञायां सत्यां पैलादिषु लुको गोत्रेलुगचीत्यलुग् बाधकः स्यात्। तस्यापि यूनि लुगिति परत्वाल्लुग् बाधकः तस्यापि फक्फिञोरन्यतरस्यामिति विकल्प इति पक्षे तु फकः श्रवणप्रसङ्गः। यदा तु यूनो गोत्रसंज्ञा नास्ति तदा गोत्रेलुगचीत्यस्याप्रवृत्तौ पैलादिभ्यश्चेति लुग्भवत्येव ततः कण्वादिभ्यो गोत्रे इञश्चेत्यणि सति शालङ्का इति भवति। फक्फिञोरन्यतरस्यामित्ययं च विकल्पोनन्तरस्य यूनि लुगित्यस्यैव बाधको न तु पैलादिलुकोव्यवहितस्यान्तरङ्गस्य च। पैलीया इति। पीलाया अपत्यं गोत्रं पीलाया वेत्यण्। ततो यून्यणो द्व्यच इति फिञ्। तस्य पैलादिभ्यश्चेति लुक्। ततो वृद्धाच्छः। तुर्नियामक इति। अनेकार्थत्वान्निपातानामवधारणार्थत्वात्तु शब्दस्य।

जनपद। एकराजादिति। एकश्चासौ राजा चेति क्षत्रिय एकराजः। तेनैकक्षत्रियवाचिन एव प्रत्ययो न तु बहुत्वसंख्यायुक्तक्षत्रियवाचिन इत्यर्थः। यथैवैकः क्षत्रियः पञ्चालस्तथैव बहवः क्षत्रियाः पञ्चाला इति प्रत्ययप्रसङ्गे वचनमिदम्। न ह्यन्तरेणेति। पञ्चालापत्येषु यौगिकः पञ्चालशब्दस्तद्राजस्याञो बहुषु लुसत्वात्। तस्य लुगिति। अक्षत्रियार्षञित इत्यनेन। तस्मिंश्चेति। गोत्रेलुगचीत्यनेन। यद्येवं पाञ्चाल इति सर्वथा भवितव्यमिति

णामपत्यं मालवानामपत्यमित्यत्रापि प्राप्नोति चौद्रक्यो मालव्य इ-ति ॥ नैतत् तेषां दासे वा भवति कर्मकरे वा । किं तर्हि तेषामेव कस्मिंश्चित् । यावता तेषामेव कस्मिंश्चित् । यस्तस्मादुत्पद्यते स युवप्रत्ययः स्यात् । युवप्रत्ययश्चेत्तस्य लुक् । तस्मिंश्चालुग् भविष्यति । अथ क्षत्रियग्रहणं किमर्थम् । इह मा भूत् । विदेहो नाम ब्राह्मणस्तस्यापत्यं वैदेहिः । क्षत्रियग्रहणानर्थक्यं चोक्तम् * । किमुक्तम् । एकं तावदुक्तं बाह्वादिप्रभृतिषु येषां दर्शनं लौकिके गोत्रभावे ततोऽन्यत्र तेषां प्रतिषेध इति । अपरमुक्तमनभिधानादिति । क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् * । क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्प्रत्ययो भवतीतिवक्तव्यम् । पञ्चालानां राजा पाञ्चालः । पूरोरण् वक्तव्यः । पौरवः । पाण्डोर्ड्यण्वक्तव्यः । पाण्ड्यः ॥

द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ १७० । अणोञ्यङ्ण्योऽविप्रतिषेधेन * । अणोञ्यङ्ण्य इञ इत्येते भवन्ति विप्रतिषेधेन । अणोऽवकाशः । आङ्गः वाङ्गः । ञ्यङोऽवकाशः । आम्बष्ठ्यः सौवीर्यः । इहोभयं प्राप्नोति । दार्व्यः । ण्यस्यावकाशः । निचक्र । नैचक्यः । अणः स एव । इहोभयं प्राप्नोति । नीप । नैप्यः । इञोऽवकाशः । आजमीढिः । आजक्रन्दिः । अणः स एव । इहोभयं प्राप्नोति । बुध । बौ-

---

किं वार्त्तिकारम्भेण । तत्र वार्त्तिककारस्याभिप्रायमाहुः । असति वार्त्तिकारम्भे बहुवचनान्तादेव प्रत्ययः स्यात् नैकवचनान्तात् । जनपदे हि बहुवचनान्तः पञ्चालशब्दो वर्तत इति तस्यैव जनपदसमानशब्दत्वं क्षत्रियवृत्तित्वं च । भाष्यकारस्तु मन्यते प्रातिपदिकस्य जनपदसमानशब्दत्वं ग्राह्यं न सुबन्तस्येत्येकवचनान्तात् प्रत्ययः केन निवार्यइति । इदं तर्हीति । चौद्रकस्य राज्ञो भृत्या अपि क्षत्रियाः चौद्रका उच्यन्ते । ततश्चापत्यापत्यवत्सम्बन्धाभावाद् गोत्रयुवाश्रयकार्याभावादनिष्यमाणोपि तद्राजो ऽत्र प्राप्नोतीत्यर्थः । नैतदिति । मुख्यया वृत्त्या दासेषु वृत्त्यभावादुपचरितार्थात्प्रत्ययादर्शनात् तदेवोत्तरमित्यर्थः । पूरोरिति । सिद्धे प्राग्दीव्यतीये ऽणि तद्राजसंज्ञार्थमिदं वचनम् । पुरुषशब्दो न जनपदवाची । अन्यथा द्व्यञ्मगधेत्यणः सिद्धत्वाद्वचनमनर्थकं स्यात् । पाण्डोरिति । बाह्वादिप्रभृतिषु येषां दर्शनं लौकिके गोत्रभाव इति वचनाद् युधिष्ठिरादिपितुः पाण्डोर्ग्रहणात्तद्वाचिनः पाण्डव इत्येव भवति ॥

द्व्यञ्मग । दार्व्य इति । दार्वस्यापत्यमिति ञ्यङ् । बौधिरिति । साल्वावयवलक्षण इञ् ।

धिः। आङ्ण्येञो भवन्ति विप्रतिषेधेन। आङः कुरुनादिभ्योण्यो भवति विप्रतिषेधेन। अयङोवकाशः। आवन्त्यः कौन्त्यः। ण्यस्य स एव। नैषोनामजनपदस्तस्मादुभयं प्राप्नोति। ण्योभवति विप्रतिषेधेन। नैष्यः। इञ् मगध॥

कम्बोजाल्लुक्॥ १७५॥ कम्बोजादिभ्योलुग्वचनं चोलाद्यर्थम्*। कम्बोजादिभ्यो लुग्वक्तव्यः। किं प्रयोजनम्। चोलाद्यर्थम्। चोलः। शकः। केरलः। यवनः॥

अतश्च॥ १७७॥ इहकस्मान्न भवति आम्बष्ठ्या सौविर्येति। अत इत्यु च्यते। नैषो ऽकारः तदन्तविधिना प्राप्नोति। अतउत्तरं पठति। अत इति तदन्ताग्रहणमवन्त्यादिभ्यो लुग्वचनात्*। अत इति तदन्तस्याग्रहणम्। किं कारणम्। अवन्त्यादिभ्यो लुग्वचनात्। यदयमवन्त्यादिभ्यो लुकं शास्ति। तज् ज्ञापयत्याचार्यः नात्र तदन्तविधिर्भवतीति। पर्श्वादिभ्यो लुग्वक्तव्यः। पर्शुः। रक्षाः। असुरी। यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वादिलुकः। यदयं न प्राच्यभर्गादियौधेयादिभ्य इति प्रतिषेधं शास्ति तज् ज्ञापयत्याचार्यः भवति पर्श्वादिभ्यो लुगिति॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
चतुर्थाध्यायस्य प्रथमे पादे चतुर्थमाह्निकं पादश्चसमाप्तः॥

---

अतश्च। पर्शुरिति। पर्शोरपत्यं स्त्रीहञ्मगधेत्यण्। तस्यातश्चेति लुक्। पर्श्वादियौधेयादिभ्यामणञाविति स्वार्थे ऽण्। तस्य भिन्नप्रकरणत्वाल्लुगप्राप्तो वचनेन विधीयते। तत ऊङुत इत्यूङ्। रक्षा इति। रक्षसः क्षत्रियविशेषस्यापत्यं स्त्रीति पूर्ववदस्य लुकि कृते स्त्रिया अभिधायकात्सुलोपे दीर्घत्वे च रक्षा इति भवति। रक्ष इत्ययुक्तः पाठः। असुरीति। असुरशब्दात् स्त्रियामपत्ये ऽञो लुक्। ततो ऽण्। तस्यापि लुक्। जातिलक्षणो ङीष्। यौधेयादिप्रतिषेध इति। यदि पाश्चमिकस्यापि तद्राजस्यातश्चेति लुङ् स्यात्तदा यौधेयादिभ्यो विहितस्याञो लुक्प्रतिषेधविधानमनर्थकमेव स्यादित्यर्थः। युधाया अपत्यं स्त्री द्व्यचइति ढक्। ततः स्वार्थे ऽञ्। तस्य लुकि प्रतिषिद्धे ऽञन्तलक्षणे ङीनि कृते यौधेयीति भवति। यदि त्वञो लुक् स्यात्तदा ढलक्षणे ङीपि सति उदात्तनिवृत्तिस्वरः स्यात्॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य प्रथमे पादे
चतुर्थमाह्निकम् पादश्चायं समाप्तः॥

तेन रक्तं रागात् ॥ १ ॥ रागादिति किमर्थम् । देवदत्तेन रक्तं वस्त्रम् । रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाध्यानर्थक्यम् *। रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाधिग्रहणमनर्थकम् । न ह्यरागादुत्पद्यमानेन प्रत्ययेनार्थाभिधानं स्यात् । अनभिधानात्तत उत्पत्तिर्न भविष्यति ॥

लाक्षारोचनाट्ठक् ॥ २ ॥ ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम् * । ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानं कर्तव्यम् । शाकलिकं कार्दमिकम् । नील्या अन् *। नील्या अन् वक्तव्यः । नील्या रक्तं नीलम् । पीतात्कन् *। पीतात्कन्वक्तव्यः । पीतेन रक्तं वस्त्रं पीतकम् । पीतकशब्दो वा प्रकृत्यन्तरम् । तस्माल्लुग्वक्तव्यः । हरिद्रामहारजनाभ्यामञ् *। हरिद्रामहारजनाभ्यामञ्वक्तव्यः । हारिद्रम् । माहारजनम् । रागादित्युच्यते । तत्रेदं न सिध्यति । हारिद्रौ कुक्कुटस्य पादौ । काषायौ गर्दभस्य कर्णाविति । उपमानात्सिद्धम् । हरिद्राविव हारिद्रौ । काषायाविव काषायौ ॥

नक्षत्रेण युक्तः कालः ॥ ३ ॥ अयुक्तोयं निर्देशः । योगो हि नाम स भवति ययोः संनिकर्षविप्रकर्षौ स्तः । न च कालनक्षत्रयोः संनिकर्षविप्रकर्षौ स्तः । नित्ये हि कालनक्षत्रे । कथं तर्हि निर्देशः कर्तव्यः । नक्षत्रेण चन्द्रमसो

---

तेन रक्तम् । रक्तादीनामिति । रक्तादीनां शब्दानां योर्थः स एव यदि लौकिके प्रयोगे प्रत्ययेनाभिधीयते तदा प्रत्ययो भवति । नान्यथा । प्रयुक्तानां शब्दानां साध्वसाधुविवेकाय शास्त्रारम्भाद्देवदत्तेन रक्तं वस्त्रमिति वाक्याद्योर्थोवगम्यते नासौ दैवदत्तं वस्त्रमित्यत्रावगम्यते । स्वस्वामिसम्बन्धस्यैवातः सम्प्रत्ययादत एवानभिधानात् कोपेन रक्तं मुखं रूपेण कान्तायां रक्त इत्यादौ वर्णाभिव्यञ्जयोर्न भविष्यति प्रत्ययः ॥

लाक्षा । ठक्प्रकरण इति । शकलकर्दमयोः सूत्रे पाठो नार्षः । नील्या इति । ओषधिविशेषो नीली । अण्बाधनार्थं वचनम् । नीलशब्दस्तु गुणगुणिनोरभेदोपचारान्मतुब्लोपाद्वा नील्या रक्ते वस्त्रे सिध्यति । पीतादिति । रागविशेषवाची पीतशब्दः प्रकृत्यन्तरमिति । स्वार्थिककन्प्रत्ययान्तमित्यर्थः । उपमानादिति । रूपसादृश्यनिमित्तादित्यर्थः ॥

नक्षत्रेण । योगो हीति । अप्राप्तिपूर्विका प्राप्तिर्योगः स कालनक्षत्रयोर्नास्ति द्वयोरपि नित्यत्वात् । न च चन्द्रमसैव योगः पुष्यादीनां नक्षत्रता । सर्वदा तेषां लोके नक्षत्रव्यवहारादर्शनात् । अथापि सम्बन्धमात्रं योगः स चनित्यानामपि प्रधानपुरुषवदविरुद्धः ।

योगात्तद्युक्तात्काले प्रत्ययविधानम्*। नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानं भवतीति वक्तव्यम्। पुष्येण युक्तः पुष्ययुक्तः। पुष्ययुक्तश्चन्द्रमा अस्मिन्काले पौषमहः। पौषी रात्रिः। तत्रोत्तरपदलोपः*। तत्रैव सति उत्तरपदलोपो वक्तव्यः। पुष्ययुक्तशब्दाद्धि प्रत्ययो विधीयते। लिङ्गवचनानुपपत्तिश्च*। लिङ्गवचनयोश्चानुपपत्तिः। चन्द्रमसो यल्लिङ्गं वचनं च तद्युक्तवद्भावे न प्राप्नोति। कालयोगात्सिद्धम्*। अस्तु नक्षत्रेण युक्तः काल इत्येव। ननु चोक्तम्। अयुक्तोयं निर्देशः। योगो हि नाम स भवति ययोः संनिकर्षविप्रकर्षौ स्तः। न च कालनक्षत्रयोः संनिकर्षविप्रकर्षौ स्तः। नित्ये हि कालनक्षत्रे। नै दोषः। पुष्यसमीपगते चन्द्रमसि पुष्यशब्दो वर्तते। तेन तत्संज्ञकेन कालो विशेष्यते। तथा च संप्रत्ययः*। एवं च कृत्वा लोकेच संप्रत्ययो भवति। पुष्यसमीपगते चन्द्रमसि वक्तारो भवन्ति पुष्येणाद्य मघाभिरद्येति॥

लुबविशेषे॥ ४॥ इह कस्मान्न भवति। पौषी रात्रिः पौषमहरिति। अविशेषइत्युच्यते। विशेषश्चात्र गम्यते। रात्रिरित्युक्तेऽहर्नेति गम्यते। अहरित्युक्ते रात्रिर्नेति गम्यते। इहापि तर्हि न प्राप्नोति। अद्य पुष्य इति। अत्रापि हि विशेषो गम्यते। अद्येत्युक्ते नह्यन श्व इति गम्यते। अविशेषोपि तु गम्यते। अद्येत्युक्ते न ज्ञायते रात्रौ दिवा वेति। यतो विशेषस्तदाश्रयो लुब्भविष्यति। इहापि तर्हि। यद्यपि विशेषो गम्यते अविशेषोपि तु गम्यते। रात्रिरित्युक्ते न ज्ञा-

---

तथापि कालविशेषावगमार्थः पौषादिशब्दप्रयोगः। एवं सत्यसत्यां कालविशेषावगतौ न स्यात्। तदुक्तादिति। नक्षत्रयुक्तचन्द्रवाचिनः काले ऽभिधेये प्रत्ययो विधेय इत्यर्थः। चन्द्रनक्षत्रयोश्चाविभुत्वादस्ति कादाचित्को योगः। कालस्तु नित्यो व्यापी चेति योगाभावः। लिङ्गेति। मघायुक्तशब्दात्प्रत्यये क्रियमाणे तस्य च लुपि सति मघा इति स्त्रीत्वबहुत्वे न सिध्यत इत्यर्थः। कालयोगादिति। कालस्यैव पुष्यादिसमीपस्थेन चन्द्रमसायोगश्चाश्रीयत इत्यर्थः। पुष्यसमीपगत इति। मुख्यार्थासम्भवे गौणस्याश्रयणादिति भावः। मघादयः शब्दाश्चपरित्यक्तस्वलिङ्गसङ्ख्या एव चन्द्रमसि वर्तन्ते। यथा मञ्चादयो मञ्चान् स्त्रियः पश्येति। तेन युक्तवद्भावेपि दोषाभावः॥'

लुब। अविशेषस्वरूपदर्शनाय प्रश्नप्रतिवचने। इहेति। पौषमहरित्यहर्विशेषानवगमा-

यते कदेति । दिवेत्युक्ते न ज्ञायते कदेति । यतो विशेषस्तदाश्रयो लुप्प्राप्नोति । एवं तर्हि । नक्षत्रेण युक्तः काल इति वर्तते । नक्षत्रेण युक्तस्य कालस्याविशेषे । कियान्पुनः कालो नक्षत्रेण युज्यते । अहोरात्रः ॥

संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ५ ॥ इह कस्मान्न भवति युक्तवद्भावः । श्रवणा रात्रिः । निपातनादेतत्सिद्धम् । किं निपातनम् । विभाषा फाल्गुनी श्रवणा कार्तिकी चैत्रीभ्य इति ॥

दृष्टं साम ॥ ७ ॥ दृष्टं साम कलेर्ढक् * दृष्टं सामेत्यत्र कलेर्ढग्वक्तव्यः । कलिना दृष्टं साम कालेयं साम गीयते । अपरआह । सर्वत्राग्निकलिभ्यां ढक् * । सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः । अग्निनादृष्टमाग्नेयम् । अग्नौ भवमाग्नेयम् । अग्नेरागतमाग्नेयम् । अग्नेः स्वमाग्नेयम् । अग्निर्देवता अस्याग्नेयम् । कलिना दृष्टं कालेयम् । कलौ भवं कालेयम् । कलेरागतं कालेयम् । कलेः स्वं कालेयम् । कलिर्देवताऽस्य कालेयम् । दृष्टे सामनि जाते चाप्यण्डिद् द्विर्वा विधीयते । दृष्टे सामनि जाते च द्विरण् डिद्वा वक्तव्यः । उशनसादृष्टं साम औशनम् । औशनसम् । शतभिषजि जातः शातभिषजः । शातभिषः । तीयादीकक् । तीयादीकक् वक्तव्यः । द्वैतीयकः । तार्तीयीकः । न विद्यायाः । विद्याया न भवतीति वक्तव्यम् । द्वि-

---

इत्यविशेष इति लुप्प्रसङ्गः । अहोरात्र इति । तेनाहोरात्रस्य यदावान्तररात्र्याद्यवयवविशेषाविवक्षा तदा लुप् । विशेषविवक्षायां तु श्रवणम् । पौषोहोरात्र इत्यत्रापि विशेषस्य शब्देनाश्रितत्वाल्लुब भावः ॥

दृष्टम् । कलिनादृष्टमिति । यस्य साम्नो विशिष्टकार्यविषयो विनियोगो ज्ञानातिशयसम्पत्त्या कलिनाज्ञायि तत्तेन दृष्टमित्युच्यते । सर्वत्रेति । सर्वेषु प्राग्दीव्यतीयेष्वर्थेष्वित्यर्थः । जाते चेति । जातार्थे यो द्विरण् विधीयते । पूर्वं विहितो बाधकेन निवर्तितः पुनर्विधीयत इत्यर्थः । स सा डिद्भवति । शतभिषजीति । शतभिषजयुक्तः काल इत्यण् । तस्य लुक् । ततो जातेर्थे प्राग्दीव्यतीयेत्यण् विहितः कालाट्ठञिति ठञा बाधितः पुनः सन्धिवेलेत्यादिसूत्रेण विधीयते । तीयादीकगिति । अर्थानिर्देशात्स्वार्थ एवेति ज्ञेयम् । न विद्याया इति । विद्यावाचिनो न भवतीत्यर्थः । गोत्रादिति । यथाङ्के गोत्रप्रत्ययान्तात्प्रत्य-

तीया विद्येत्येव । गोत्रादङ्कवदिष्यते । औपगवकम् । कापटवकम् । दृष्टे सामनि जाते च द्विरण् डिद्वा विधीयते । तीयादीकक्न विद्याया गोत्रादङ्कवदिष्यते ॥ १ ॥

वामदेवाड् ड्यड्यौ ॥ ९ ॥ किमर्थौ डकारः । डिति टेरिति टिलोपो यथा स्यात् । नैतदस्ति प्रयोजनम् । यस्येति लोपेनाप्येतत्सिद्धम् । एवं तर्हि सिद्धे सति यद्यतौ डितौ करोति तज् ज्ञापयत्याचार्यः । भवत एते परिभाषे । अननुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणं तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणमिति । किमेतस्य ज्ञापने प्रयोजनम् । अवामदेव्यमित्येष स्वरो भवति । सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ । ग्रहणं मा तदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥ १ ॥

परिवृतो रथः ॥ १० ॥ परिवृतो रथइति तदेकान्तग्रहणम् * । परिवृतो रथ इत्यत्र तदेकान्तग्रहणं कर्तव्यम् । येन परिवृतो रथो रथैकान्तश्चेत् स भवतीति वक्तव्यम् । इह मा भूत्पुत्रैः परिवृतो रथः । छात्रैः परिवृतो रथ इति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । कस्मान्न भवति पुत्रैःपरिवृतोरथःछात्रैःपरिवृतोरथइति । अनभिधानात् ॥

पाण्डुकम्बलादिनिः ॥ ११ ॥ अयं योगः शक्योऽवक्तुम् । कथं पाण्डुकम्बली पाण्डुकम्बलिनौ पाण्डुकम्बलिन इति । इनिनैतन्मत्वर्थीयेन सिद्धम् । पाण्डुकम्बलीति ॥

कौमारापूर्ववचने ॥ १२ ॥ कौमारापूर्ववचन इत्युभयतः स्त्रिया अपूर्वत्वे * । कौमारापूर्ववचन इत्यत्रोभयतः स्त्रिया अपूर्वत्व इति

---

यः । एवं दृष्टे सामनीत्यर्थः । औपगवकमिति । गोत्रचरणाद्वुञिति वुञ् ॥

वामदेव । अवामदेव्यमिति । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमित्यर्थः । अन्यथा ययतोश्चातदर्थ इत्यनेनान्तोदात्तत्वं स्यात् । ग्रहणमिति । अतदर्थग्रहणेन सूत्रं लक्ष्यते । नञ् स्वर इति । नञ्ज्ञाश्रयेऽन्तोदात्तत्वे विधीयमान इत्यर्थः ॥

परि । तदेकान्तग्रहणमिति । रथस्य ञ्चर्मवस्त्रादयोवयवाइति तद्वाचिभ्य एव प्रत्ययो भवतीत्यर्थः । अनभिधानादिति । पौत्रो रथइत्यादावभिधानस्याभावादित्यर्थः ॥

पाण्डुकम्बला । इनिनैतदिति । अण्चानभिधानान्न भवतीति तद्बाधनार्थमपीदं न वाच्यमिति भावः ॥

कौमारापू । उभयत इति । उभयस्मिन्नुभयतः । यदि कौमारीति स्त्रियां प्रयोगो ऽय

वक्तव्यम् । अपूर्वपतिं कुमारीमुपपन्नः कौमारो भर्ता । कुमारी अपूर्वपतिः पतिमुपपन्ना कौमारी भार्या । कौमारापूर्ववचने कुमार्या अणिविधीयते । अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥ अथ वा कुमार्यां भवः कौमारः । यद्येवं कौमारीभार्येति न सिध्यति । पुंयोगात् स्त्र्यभिधानम् * । पुं योगात् स्त्र्यभिधानं भविष्यति । कौमारस्य भार्या कौमारीति ॥

सास्मिन् पौर्णमासीति ॥ २१ ॥ सास्मिन्पौर्णमासीति संज्ञाग्रहणम् * । सास्मिन्पौर्णमासीत्यत्र संज्ञाग्रहणं कर्तव्यम् । असंज्ञायां हि गरीयानुपसंयोगः * । अक्रियमाणे हि संज्ञाग्रहणे गरीयानुपसंयोगः कर्त्तव्यः स्यात् । मासार्द्धमासयोरिति वक्तव्यं स्यात् । इह मा भूत् पौषी पौर्णमास्यस्मिन्पञ्चदशरात्रे दशरात्रे वेति । संवत्सरपर्वणीति च वक्तव्यं स्यात् । भृतकमासे मा भूदिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । इतिकरणः क्रियते । ततश्चेद्विवक्षा ॥

कस्येत् ॥ २५ ॥ यस्येति लोपः कस्मान्न भवति । इकारोच्चारणसामर्थ्यात् । अथ यत्कायं हविः । कथं तस्य संप्रैषः कर्त्तव्यः । य-

---

कौमारः पतिरिति पुंस्युभयत्रापि स्त्रियाः पाणिग्रहणस्यापूर्वत्वे प्रयोगः कार्य इत्यर्थः । एतच्च निपातनसामर्थ्याल्लभ्यमेव वार्तिककृता प्रकाशितम् । अपूर्वपतिमिति । अविद्यमानः पूर्वः पतिर्यस्यास्तां प्राप्त इत्यर्थः । द्वितीयासमर्थात्कुमारीशब्दादुपयन्तर्यण् प्रत्ययः । स्त्रियां तु स्वार्थे प्रत्ययः । कुमार्यां भव इति । रोगादिषु तु यद्यभिधानं नास्ति तदानभिधानात्प्रत्यया भावः । कौमारस्य भार्येति । प्रत्यासत्त्यायैव तस्य कौमारव्यपदेशनिबन्धनं सैवाभिधीयते नान्या ।

सास्मिन् । संज्ञाग्रहणं सूत्रे नार्षमिति वार्त्तिकमारब्धम् । उपसंयोग इति । उपसंयुज्यत इत्युपसंयोग इत्युपाधिरुच्यते । अनेक उपाधिर्निर्देष्टव्यः स्यादित्यर्थः । संवत्सरपर्वणीति । संवत्सरस्य द्वादश पर्वाणि मासान्तास्तत्र पर्वविशिष्टे मासि यथा स्यात् । भृतकमासे पौष्या पौर्णमास्या तद्वति मासादिव्यपदेशभाजि पौषशब्दो मा भूदित्येवमर्थमित्यर्थः ॥

कस्येत् । इकारोच्चारणसामर्थ्यादिति । यदा कशब्दस्येकारादेशस्तदायं परिहारः । यदा तु किमोऽकारस्ये कारस्तदा लोपेऽपि कार्यमिति सिध्यति । यद्यपि कशब्दस्येत्वेऽकृते परत्वाद्वृद्ध्या लोपो बाध्यते यथा श्रीर्देवता अस्य श्रायमिति । तथापि परिहारान्तरसङ्का-

दि तावत्किमः कादेशः। कस्मै अनुब्रूहीति भवितव्यम्। अथ न किमः। कायानुब्रूहीति भवितव्यम्। यद्यपि किमः। अथापि न किमः। उभयथा कस्मायनुब्रूहीति भवितव्यम्। सर्वस्य हि सर्वनामसंज्ञा क्रियते। सर्वश्च प्रजापतिः। प्रजापतिश्च कः। अपर आह। यद्येव किमः। अथापि न किमः। उभयथा कायानुब्रूहीति भवितव्यम्। संज्ञोपसर्जनयोर्हि सर्वनामसंज्ञा प्रतिषिध्यते। संज्ञा चैषा तत्रभवतः॥

अपोनप्त्रपांनप्तृभ्यां घः॥ २७॥ अथ यदपोनप्त्रियमपांनप्त्रियं वा हविः। कथं तस्य संप्रैषः कर्तव्यः। अपोनपाते अनुब्रूहि। अपांनपाते अनुब्रूहीति। अपोनप्त्रपां नप्तृभावः कस्मान्न भवति। प्रत्ययसंगेन ऋकारान्तत्वमुच्यते। तेनासति प्रत्यये न भवितव्यम्॥

छ च॥ २८॥ छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् *। छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानं कर्तव्यम्। पैङ्गाक्षीपुत्रीयम्। तार्णविन्दवीयम्। शतरुद्राद्घ च *। शतरुद्राद्घप्रत्ययो वक्तव्यः। छश्च वक्तव्यः। शतरुद्रियम्। शतरुद्रीयम्॥

कालेभ्यो भववत्॥ ३४॥ कथमिदं विज्ञायते भवे ये प्रत्ययाः

---

वादेतज्ज्ञाष्यकृता नोक्तम्। अथेति। कल्पकारविप्रतिपत्त्या संशयः। अध्वर्युणा होतुः सम्प्रैषः क्रियते। यदि तावदिति। किमो विभक्तौ कादेशं कृत्वा कस्येति। यदि निर्देशः कृत इत्यर्थः। किंशब्दश्च प्रश्नाच्चेपयोरिव प्रजापतौ वर्तते। अथ नेति। यदा कशब्दस्यैव कस्येति निर्देश इत्यर्थः। सर्वस्येति। सर्वार्थवाचिन इत्यर्थः। सर्वश्चेति। कार्यकारणयोरभेदादिति भावः। प्रजापतिश्च क इति। सर्वादिषु कशब्दस्यापाठेऽपि अन्वर्थसंज्ञाविज्ञानात् सर्वनामसंज्ञा भवति। गणपाठस्तु प्रपञ्चार्थः। येषां तु सकलं कृत्स्नमित्यादीनां सर्वनामसंज्ञा नेष्यते तेषां न बहुव्रीहाविल्यत्र नेति योगविभागात्तदभावः। योगसंप्रदानं देवता। मन्त्रस्तुल्यस्वार्थः। संज्ञा चैषेति। यद्येवं कादेशाभावात्कायेति किमो न सिध्यति। एवं तर्हि कस्येत्यत एव निपातनात्कादेशो भविष्यतीत्यदोषः।

अपो। अथेति। वेदे क्व चिदपोनप्त्रे स्वाहेति ऋकारान्तः प्रयोगो दृश्यते। क्वचिदपोनपादपांनपादिति तकारान्तप्रयोग इति प्रश्नः। प्रत्ययसंनियोगेनेति। वेदे तु छान्दसत्वात् क्व चित्तकारान्तप्रयोगः॥

काले। कथमिति। कालेभ्य इति सत्यच्छ्रवणाद्भवेन वाभिसंबन्धः स्यात् सास्यदेवते-

विहितास्ते भवन्ति कालेभ्यः सास्य देवतेत्यस्मिन्नर्थ इति । आहोस्वित्कालेभ्यो भवे ये प्रत्यया विहितास्ते भवन्ति सास्य देवतेत्यस्मिन्नर्थ इति । कश्चात्र विशेषः । कालेभ्यो भवे चेत् प्रत्ययमात्रप्रसङ्गः * । यदि विज्ञायते भवे ये प्रत्ययाविहितास्ते भवन्ति कालेभ्यः सास्य देवतेत्यस्मिन्नर्थ इति । प्रत्ययमात्रं प्राप्नोति । यः कालेभ्यो भवे तस्य विधाने प्रातिपदिकमात्रात्प्रसङ्गः * । अथ विज्ञायते कालेभ्यो भवे ये प्रत्यया विहितास्ते भवन्ति सास्य देवतेत्यस्मिन्नर्थ इति । प्रातिपदिकमात्रात् प्राप्नुवन्ति । सिद्धं तूभयनिर्देशात् * । सिद्धमेतत् । कथम् । उभयनिर्देशात् । उभयनिर्देशः कर्त्तव्यः । कालेभ्यो भववत् कालेभ्य इति * । स तर्ह्युभयनिर्देशः कर्त्तव्यः । न कर्त्तव्यः । भववदिति वतिनिर्देशोयम् । यदि च याभ्यः प्रकृतिभ्योयेन विशेषणेन भवे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन सास्य देवतेत्यस्मिन्नर्थे भवन्ति । ततोऽमी भववत्कृताः स्युः अथहि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यान्नामी भववत्कृताः स्युः ॥

महाराजप्रोष्ठपदाठ् ठञ् ॥ ३५ ॥ ठञ्प्रकरणे तदस्मिन्वर्त्ततइति नवयज्ञादिभ्य उपसंख्यानम् * । ठञ् प्रकरणे तदस्मिन्वर्त्तते इति नवयज्ञादिभ्य उपसंख्यानं कर्तव्यम् । नवयज्ञोऽस्मिन्काले वर्त्तते नावयज्ञिकः । पाकयज्ञिकः । पूर्णमासादण् * । पूर्णमासादण्वक्तव्यः । पूर्णमासोस्मिन्काले वर्त्तत पौर्णमासी तिथिः ।

पितृव्यमातुलमातामहपितामहाः ॥ ३६ ॥ पितृव्यमातुलेति किं निपात्यते । पितृमातृभ्यां भ्रातरि व्यड्डुलचौ * । पितृमातृभ्यां भ्रातरि व्यड्डुलचौ प्रत्ययौ निपात्येते । पितृभ्राता पितृव्यः । मातुर्भ्रा-

---

त्यनेन वेति प्रश्नः । प्रत्ययमात्रमिति । दिगादिभ्यो यदिति यत्प्रत्ययो भवे विहितः स कालवाचिभ्यः प्राप्नोतीत्यर्थः । प्रातिपदिकमात्रादिति । कालाट्ठञिति ठञिन्द्रादेरपि प्राप्नोति । सिद्धं त्विति । वतिरतिदेशमात्रे चरितार्थ इति न सर्वसादृश्यं लभ्यतइति वार्त्तिककारो मन्यते । वतिनिर्देशोयमिति । कालेभ्यो भव इत्येव भवार्थे विहिताः प्रत्ययाः सिध्यन्तीति वतिनिर्देशः सर्वसादृश्यपरिग्रहार्थः कृतः ।

पितृव्यमातुल । मह वेति । पितृशब्दस्यानङादेशो निपात्यते महच्च प्रत्ययः । तेन

ता मातुलः। अथ मातामहपितामहेति किं निपात्यते। मातृपितृभ्यां पितरि डामहच्* । मातृपितृभ्यां पितरिडामहच् प्रत्ययोनिपात्यते। मातुः पितामातामहः। पितुःपितापितामहः। मातरिषिच्च*। मातृपितृभ्यांमातरिडामहच्षिच्चभवति। पितुर्माता पितामही मातुर्मातामातामही। महोवाछन्दस्यानङोवग्रहदर्शनात्*। महो वा पुनरेष भवति। छन्दस्यानङोवग्रहदर्शनात्। छन्दस्यानङोवग्रहो दृश्यते। मातामहः पितामह इति अवेर्दुग्धे सोढदूसमरीसचः *। अवेर्दुग्धे सोढदूसमरीसच इत्येते प्रत्यया भवन्तीति वक्तव्यम्। अविसोढम्। अविदूसम्। अविमरीसम्। तिलान्निष्फलात्पिञ्जपेजौ*। तिलान्निष्फलात्पिञ्जपेजौ वक्तव्यौ। तिलपिञ्जः। तिलपेजः। पिञ्जः छन्दसि डिच्च*। पिञ्जः छन्दसि डिच्च वक्तव्यः। तिलिपिञ्जं दण्डानतम्॥

भिक्षादिभ्योऽण्॥३८॥ किमर्थं भिक्षादिषु युवतिशब्दः पठ्यते। न तस्य समूह इत्येव सिद्धम्। न सिध्यति। अनुदात्तादिलक्षणोऽञ् प्राप्नोति। तद्बाधनार्थम्। अत उत्तरं पठन्ति। भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्। प्रत्ययविधौ भिक्षादिषु युवतिग्रहणानर्थक्यम्। किं कारणम्। पुंवद्भावस्य सिद्धत्वात्। प्रत्ययविधौ पुंवद्भावोऽत्र भविष्यति। भस्याढे तद्धिते पुंवद्भवतीति। सिद्धश्च प्रत्ययविधौ। स च सिद्धः प्रत्ययविधौ॥

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्॥३९॥ वृद्धाच्च *। वृद्धाच्चेति वक्तव्यम्। वृद्धानां समूहो वार्द्धकम्। अञो वुञ्पूर्वविप्रतिषिद्धम् *। अञो वुञ्भवति पूर्वविप्रतिषेधेन। अञोवकाशः। कापोतम्। वुञोवकाशः। ग्लुचकायनिः। ग्लौचुकायन-

---

पदसंज्ञायां सत्यां पितेत्यवग्रहो भवति। डामहचि तु न स्यात्। अविसोढमिति। षत्वं सकारोच्चारणसामर्थ्यान्न भवति। अन्यथा षोढप्रत्ययं प्रक्रिया लाघवार्थं कुर्यात्। एवं दूसमरीसयोरपि षत्वाभावः सकारस्य। तिलपिञ्ज इति। तिलो धान्यविशेषः। फलरहित इत्यर्थः॥

भिक्षा। पुंवद्भावोत्रेति। पुंवद्भावे सत्याद्युदात्तत्वादण् सिद्ध इत्यर्थः। सिद्धश्चेति। पूर्वं पुंवद्भावः पश्चात्प्रत्यय इत्यर्थः॥

गोत्रो। कापोतमिति। लघावन्तेद्वयोश्चबह्वषोगुरुरितिमध्योदात्तत्वादनुदात्तादिः क-

कम् । इहोभयं प्राप्नोति । औपगवकम् । कापटवकम् । वुञ्भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । वक्ष्यत्येतत् । पूर्वोऽपि वुञ् परमञं बाधतइति । अथ वा इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति । ठक् तु विप्रतिषेधात् *। ठक् तु भवत्यञो विप्रतिषेधात् । ठकोवकाशः । सात्तुकम् । अञः स एव । इहोभयं प्राप्नोति आपूपिकम् । शौष्कुलिकम् । ठग्भवति पूर्वविप्रतिषेधेन ॥

केदाराद्यञ्च ॥ ४० ॥ गणिकायाश्च *। गणिकायाश्चेति वक्तव्यम् । गणिकानां समूहो गाणिक्यम् ॥

ब्राह्मणमाणववाडवाद्यन् ॥ ४१ ॥ किमर्थंब्राह्मणादिभ्योयन्विधीयते नञ्प्रकृतस्सोनुवर्त्तिष्यते । नह्यस्ति विशेषो ब्राह्मणादिभ्यो यञो वा यनो वा । तदेव रूपं स एव स्वरः । एवं तर्हि सिद्धे सति यद् ब्राह्मणादिभ्यो यनं शास्ति तज्ज्ञापयत्याचार्यः अन्येभ्योप्ययं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । यन्प्रकरणे पृष्ठादुपसंख्यानं वक्ष्यति तन्न वक्तव्यंभवति । यन्प्रकरणे पृष्ठादुपसंख्यानम् * । यन्प्रकरणे पृष्ठादुपसंख्यानं कर्तव्यम् । पृष्ठानां समूहः पृष्ठ्यः । षडहः ॥

ग्रामजनबन्धुभ्यस्तल् ॥ ४३ ॥ गजसहायाभ्यां च * । गजसहायाभ्यां चेति वक्तव्यम् । गजता । सहायता अह्नः खः * । खो वक्तव्यः । अह्नां समूहोऽहीनः । क्रतौ *। क्रताविति वक्तव्यम् । इह मा भूत् । अह्नाय धूतपाप्मानो भास्कराजितमृत्यवः । पर्श्वाः सण् * । पर्श्वाः सण् वक्तव्यः । पर्शूनां समूहःपार्श्वम् । यदि सण् क्रियते इत्संज्ञा न प्राप्नोति । एवं तर्हि णस्वक्तव्यः ॥

खण्डिकादिभ्यश्च ॥ ४५ ॥ खण्डिकाशुकोलूक, किमर्थं खण्डिकादिषूलूकशब्दः पठ्यते । न अनुदात्तादेरञित्येव सिद्धम् । न सि-

---

पोत शब्दः । सक्तुशब्दस्तुन्प्रत्ययान्तत्वादाद्युदात्तः । शष्कुलीशब्दो ङीषन्तोन्तोदात्तत्वादनुदात्तादिः ।

ग्राम । आह्नायेति । खण्डिकादिषु दर्शनादहःशब्दादञ् तदन्ताच्चतुर्थी ॥

खण्डि । तत्रेताविति । चाषशब्दः चषेर्घञन्तादचन्तोदात्तः । उलूकशब्दो लघावन्ते-

ध्यति। चाषोलूकयोश्छन्दस्याद्युदात्तः प्रयोगो दृश्यते। चाषिणकिकदीविना, यदुलूकोवदतिनैकयोश्छन्दसि सामूहिकोदृश्यतेतचैताव-नुदात्तादी इदंतर्हिप्रयोजनम्। अयमौलूक्यो गोत्रम्। तत्र गोत्राश्रयोवुञ्प्राप्तस्तद्बाधनार्थम्। एतदपि नास्ति प्रयोजनम्। बहुवचनान्तानां हि सामूहिकः। बहुषु च लुक्। तत्र लुकि कृते अनुदात्तादेरित्येव सिद्धम्। न सिध्यति। गोत्रेऽलुगचीत्यलुक् प्राप्नोति। अञ्सिद्धिरनुदात्तादेः कोर्थः चुद्रकमालवात्। अनुदात्तादेरञित्येवाञ्-सिद्धः। किमर्थं चुद्रकमालवशब्दः खण्डिकादिषु पठ्यते। गोत्राश्रयो वुञ् प्राप्तस्तद्बाधनार्थम्। गोत्राद्वुञ्। न च तद्गोत्रम्। गोत्राद्वुञ् भवतीत्युच्यते न च चुद्रकमालवशब्दो गोत्रम्। न च गोत्रसमुदायो गोत्रग्रहणेन गृह्यते। तद्यथा। न जनपदशब्देन गृह्यते। काशिकोसलीया इति वुञ्न प्राप्नोति। तदन्तविधिना प्राप्नोति। तदन्तान्न स सर्वतः। परिगणितेषु कार्येषु तदन्तविधिः। न चेदं तत्र परिगण्यते। ज्ञापकं स्यात्तदन्तत्वे। एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति। तथा चापिशलेर्विधिः। एवं चापिशलेराचार्यस्य विधिरुपपन्नो भवति। धेनुरनञि ठकमुत्पादयति। धेनूनां समूहो धैनुकम्। अनञीति किमर्थम्। अधेनूनां समूहः। आधेनवम्।

---

द्वयोश्चेति मध्योदात्तः। औलूक्यशब्दो गर्गादियञन्तः। बहुवचनान्तानामिति। द्वयोस्तु समूहव्यवहारो लोके प्रायो नास्तीति भावः। बहुषु चेति। यञञोश्चेत्यनेन। लुकि कृत इति। ननु लुक्यपि कृते प्रत्ययलक्षणेन गोत्रलक्षणो वुञ् पूर्वविप्रतिषेधेन प्राप्नोत्येव। एवं तर्हि परिहारान्तराभिधानात्तन्नोक्तम्। सारूप्याचौलूक्यशब्दार्थं उलूकशब्दस्य यञन्तस्य पाठः। कृतयञ्लुक् उलूकशब्दस्यानुकरणे गणे निर्दिष्टः। अञ् सिद्धिरिति। चुद्रकस्यापत्यानीति जनपदशब्दाद्विहितस्य तद्राजस्य लुक्। मालवात्तु द्वन्द्वलक्षणस्य अञः। ततो द्वन्द्वः। ततः समासान्तोदात्तत्वेनानुदात्तादित्वमिति भावः। अत्र च गोत्रेऽलुगचीति यञोलुक् प्रतिषेधादापत्येति यल्लोपः। न चेति। च शब्दो ह्यर्थे। नहीत्यर्थः। वुञ्न भवतीति। अवृद्धादपीत्यनेन। तदन्तादिति। तदन्ताद्वुञ् प्राप्नोतीति यदुच्यते तन्न यस्मात्स तदन्तविधिः सर्वत्र न भवति। उगिद्वर्णग्रहणवर्ज प्रत्ययविधौ तदन्तविधेरिष्टत्वात्। भवतीहेति। समूह प्रकरण इत्यर्थः। एवं चेति। तदन्तविध्यभावे ह्यनञिति प्रतिषेधो नर्थकः स्यादित्यर्थः। आधेनवमिति। तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरेणाद्यु-

सेनायां नियमार्थं वा । अथ वा नियमार्थोयमारम्भः । क्षुद्रकमालवशब्दात्सेनायामेव । क्व माभूत् । क्षौद्रकमालवकमन्यदिति । यथा बाध्येत बाञ् वुञा । अथैतज्ज्ञापयत्याचार्यः पूर्वोपि वुञ् परमञं बाधतइति । ननु चोक्तं गोत्राद्वुञ् न च तद्गोत्रमिति । तदन्तविधिना प्राप्नोति । ननु चोक्तं तदन्तान्न स सर्वत इति । ज्ञापकं स्यात्तदन्तत्वे । एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति । कथं पुनरेतदुभयं शक्यं ज्ञापयितुम् । भवति च तदन्तविधिः । पूर्वोपि वुञ् परमञं बाधत इत्युभयं ज्ञाप्यते । अञ् प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायाम् * । अञ् प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायामिति वक्तव्यम् । क्षौद्रकमालवी सेना चेत् । क्व मा भूत् । क्षौद्रकमालवकमन्यदिति ॥

पाशादिभ्यो यः ॥ ४९ ॥ पाशतृणधूमवात । पृथग्वावातादर्शनान्न समूहः । पृथग्वातादर्शनादयुक्तोयं वातशब्दस्य सामूहिके पाठः । न हि पृथग्वाता दृश्यन्ते । न तर्हीदानीमिदं भवति वात्येति । शीघ्रत्वे तु । शीघ्रो वातो वात्या । अथ वा पृथग्वाता अपि दृश्यन्ते । तद्यथा । पूर्वो वातः । उत्तरो वातः । सर्वतो वातः वान्तु दिशो दश ॥

---

दात्तत्वादण् । अन्ये त्वाहुः । उत्सादित्वादञ् । तत्र हि वष्कया स इति समासनिषेधात्तदन्तविधिरस्ति जङ्गलधेन्वित्युत्तरपदस्य वा वृद्धिः । नियमार्थं वेति । वा शब्दः समुच्चये । एव मथवेत्ययमपि । यदा सेनारूपः समूहः तदा ऽञ् प्रत्ययो ऽन्यदा तु वुञ् वेत्यर्थः । ननु चेति । ज्ञापकं स्यादित्युक्तमपि चोद्यपरिहारायानूदितम् । उभयमिति । अन्यथानुपपत्त्या ज्ञापकत्वं भवत्युभयेन च विनाक्षुद्रकमालवादञ्विधानं नोपपद्यते इत्युभयस्यापि ज्ञापकत्वमित्यर्थः । अञ् प्रकरण इति । यद्यपि गणएवैतत्पठ्यते तथापि क्षुद्रकमालवादिति योगविभागेनार्थद्वयं ज्ञाप्यं ततः सेनासंज्ञायामिति नियमः कर्तव्य इति दर्शयितुं वार्त्तिकारम्भः ।

पाशा । पृथगिति । वातपरमाणूनामनेकत्वे ऽपि वातसंज्ञकस्यावयविन एकत्वादनेकाश्रयरूपसमूहानुपपत्तिरित्यर्थः । शीघ्रत्वे त्विति । ततश्च वातात्कैशघ्र्य इति पृथग्वक्तव्यमित्यर्थः । अथ वेति । एकस्यापि वातस्य दिग्भेदनिमित्तभेदप्रतिभासादनेकाश्रयसमूहोपपत्तिः । यथैकापि दिक् सूर्योदयास्तमयाद्युपाधिभेदादनेकाव्यपदिश्यते । तथा च दश दिश इति लोके व्यवहारः । यद्वा भिन्ना एव वाता अवयविनः पृथगुपलम्भात् ॥

खलगोरथात् ॥५०॥ इनित्रकठ्यचश्च ॥५१॥ खलादिभ्य इनिः*। खलादिभ्य इनिर्वक्तव्यः। खलिनी। डाकिनी। कुटुम्बिनीति॥

विषयो देशे ॥ ५२ ॥ विषयाभिधाने जनपदे लुब् बहुवचनविषयात्। विषयाभिधाने जनपदे लुब् बहुवचनविषयाद्वक्तव्यः। अङ्गानां विषयो देशः अङ्गाः। वङ्गाः। सुह्माः। पुण्ड्राः। गान्धार्यादिभ्यो वा *। गान्धार्यादिभ्यो वेति वक्तव्यम्। गान्धारः। गान्धारयः वासातः वासातयः शैबः शिबयः। राजन्यादिभ्यो वा वुञ् *। राजन्यादिभ्यो वा वुञ्वक्तव्यः। राजन्यकः। राजन्याः। दैवयातवाः दैवयातवकः। बैल्ववनादिभ्यो नित्यम् *। बैल्ववनादिभ्यो वुञ् नित्यमिति वक्तव्यम्। बैल्ववनकः। आम्बरीषपुत्रकः। आत्मकामेयकः। तत्तर्हीदं बहु वक्तव्यम्। न वाभिधेयस्य निवासविषयत्वाद् निवासविवक्षायां लुग्विषयविवक्षायां प्रत्ययः*। न वा वक्तव्यम्। किं कारणम्। अभिधेयस्य निवासविषयत्वाद्यदत्राभिधेयं स निवासश्च विषयश्च। अभिधेयस्य निवासविषयत्वात्। निवासविवक्षायां लुप्। विषयविवक्षायां प्रत्ययो भविष्यति। इदं तर्हि प्रयोजनम्। एतज् ज्ञास्यामि। इह नित्यो विधिरिह विभाषेति। एतदपि नास्ति प्रयोजनम्। यावता यदभिधेयं स निवासश्च विषयश्च। अभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुप्। विषयविवक्षायां प्रत्यय इत्येव॥

---

विषयो। विषयाभिधान इति। अङ्गानां निवासो जनपद इत्यतः स्वस्वामिभावो न प्रतीयते। अङ्गानां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते न तु निवासार्थ इति। जनपदे लुबिति चातुरर्थिकस्य लुब्विधीयमानो विषये न प्राप्नोतीति वचनम्। बहुवचनविषयादिति। बहुवचनान्ताच्छब्दात्परस्य प्रत्ययस्येत्यर्थः। गान्धार इति। गान्धारस्यापत्यं गान्धारिः। तस्यापत्यानि साल्वेयगान्धारिभ्यां चेत्यञ्। ततो गान्धारीणां विषय इत्यण्। ततस्तस्य वा लुप्। लुपि युक्तवद्दिति लिङ्गसंख्यातिदेशः। राजन्या इति। औत्सर्गिकस्याणो विषयाभिधान इति लुप्। वुञ् पक्षे तु तद्विधानसामर्थ्याल्लुबभावः। न वेति जनपदलक्षणस्याभिधेयस्याङ्गादिसंबन्धिनो निवासरूपत्वं विषयरूपत्वं चास्ति। यद्यपि विषयनिवासयोः परस्परव्यभिचारस्तथाप्यङ्गादीनां य एव स्वो विषयः स एव तेषां निवास इति स्मर्यते। तत्रैकस्योभयरूपत्वात्प्रयोगदर्शनवशादङ्गादौ निवासविवक्षैव

सोख्यादिरिति छन्दसः प्रगाथेषु ॥ ५५ ॥ छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थे उपसंख्यानम् * । छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानं कर्तव्यम् । त्रिष्टुबेव त्रैष्टुभम् । अनुष्टुबेवानुष्टुभम् । जगत्येव जागतम् ।

तदधीते तद्वेद ।.५६॥ किमर्थं मुभावयर्थौ निर्दिश्येते । न योधीते वेत्त्यप्यसौ । यस्तु वेत्त्यधीतेप्यसौ । नैतयोरावश्यकः समावेशः। भवति हि कश्चित्संपाठं पठति न वेत्ति तथा कश्चिद्वेत्ति न च संपाठं पठति ॥

क्रतूक्थादिसूत्रान्ताठ्ठक् ॥ ६० ॥ उक्थादीत्युच्यते । कानि पुनरुक्थानि । सामानि । यद्येवं सामगमात्रे औक्थिक इति प्राप्नोति । नैष दोषः । तादर्थ्यात्ताच्छब्द्यं भविष्यति। उक्थार्थं मुक्थम्। इह उक्थान्यधीते औक्थिकः। यज्ञमधीते याज्ञिकः । य इदानीमौक्थिक्यं याज्ञिक्यं वाधीतेकथं तत्र भवितव्यम् । औक्थिको याज्ञिक इत्येव भवितव्यम्। कथम्। तस्येदं प्रत्ययाल्लुक् । तस्यदं प्रत्ययाल्लुग्वक्तव्यः।तस्येदंप्रत्ययस्य च । सतर्हिवक्तव्यः। न वक्तव्य। इहास्माभिस्त्रैशब्द्यं

---

गान्धार्यादिषु राजन्यादिषु च पर्यायेणोभयविवक्षा बैल्ववनादिषु विषयविवक्षा वाश्रीयत इति नार्थो लुब्विधिना न तद्विकल्पेन वा। नापि विकल्पबाधनार्थेन नित्यवचनेनेत्यर्थः॥

सोख्यादि । छन्दस इति । छन्दःशब्देनाक्षरेयत्ताविशेषवाचिनो गायत्र्यादिशब्दग्रहणम् । नपुंसकादिति । नपुंसकार्थाभिधायिन इत्यर्थः । नपुंसकार्थाभिधायित्वं च त्रिष्टुबादीनां स्वार्थिकाण्प्रत्ययान्तानामेवेति नपुंसके स्वार्थ इत्युक्तं भवति ॥

तदधीते । न य इति । यो हि यं ग्रन्थमधीते स तं स्वरूपतोवश्यं वेत्ति । यश्च स्वरूपतो वेत्ति सोवश्यमधीतइति भावः । नैतयोरिति । अर्थावबोधो वेदनमभिप्रेतं न तु स्वरूपमात्रवेदनम् । तत्र परस्परव्यभिचारदर्शनादुभयोपादानमित्यर्थः । संपाठमिति । अर्थनिरपेक्षं स्वाध्यायं पठतीत्यर्थः ॥

क्रतू । कात्यायनीति । उक्थशब्दो येषु सामसु रूढस्तान्यधीयाने प्रत्ययो नेष्यते । यदधीयाने प्रत्यय इष्यते। तत्रौक्थशब्दो न रूढ इति प्रश्नः । उक्थार्थमिति । सामलक्षणं प्रातिशाख्यं शास्त्रमित्यर्थः । मुख्यार्थाभिधायिनस्तूक्थशब्दात्प्रत्ययो नेष्यते । तत्र वाक्यमेव भवत्युक्थान्यधीते वेद वेति । इहेति । उक्थशब्देन गौण्या वृत्त्या सामलक्षणमौक्थिक्यमुच्यते । य इदानीमिति । औक्थिकानामाम्नाय इतीदमर्थे छन्दोगौक्थिकेतिञः । तस्येदं प्रत्ययादिति । अध्येतृवेदितृोरुत्पन्नस्याणो लुगाम्नाये विहित-

साध्यम्। उक्थान्यधीते औक्थिक्यमधीते औक्थिक इति। तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः अपरस्मादुत्पत्तिर्भविष्यति। अविरविकन्यायेन। तद्यथा। अवे मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवत्याविक इति। एवमुक्थान्यधीतइति विगृह्य औक्थिकइति भविष्यति। औक्थिक्यमिति विगृह्य वाक्यमेव भवति। विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक्स्मृतः॥ विद्या वायसविद्यिकः। सार्पविद्यिकः। लक्षण। गौलक्षणिकः। आश्वलक्षणिकः। कल्प। पाराशरकल्पिकः। मातृकल्पिकः। सूत्र। वार्तिकसूत्रिकः। सांग्रहसूत्रिकः। अकल्पादेरिति किमर्थम्। काल्पसूत्रः। विद्याचानङ्गक्षत्रधर्मत्रिपूर्वा *। विद्याचानङ्गक्षत्रधर्मत्रिपूर्वेति वक्तव्यम्। आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। त्रैविद्यः। आख्यानाख्यायिकेतिहासपुराणेभ्यश्च। आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेकग्वक्तव्यः। यावक्रीतिकः। प्रैयङ्गविकः। यायातिकः। आख्यान। आख्यायिका। वासवदत्तिकः। सौमनोत्तरिकः। ऐतिहासिकः। पौराणिकः। सर्वसादेर्द्विगोश्च लः *। सर्वसादेर्द्विगोश्च लो वक्तव्यः। सर्ववेदः। सर्वतन्त्रः।

---

स्य अस्य वेत्यर्थः। विद्येति। इकगिति। ठगित्यर्थः। अकल्पादेरित्येतदानन्तर्यात् सूत्रान्तस्यैव कल्पादेर्निषेधं करोति। तथा च भाष्ये काल्पसूत्र इति प्रत्युदाहृतम्। अन्ये तु सर्वेषामेव निषेधमिच्छन्तः काल्पविद्य इत्यादि भाव्यमित्याहुः। तत्तु प्रथमातिक्रमे कारणातिक्रमाद्भाष्यविरुद्धमिति लक्ष्यते। त्रैविद्य इति। अवयवा विद्या त्रिविद्या तामधीत इति प्रत्ययः कार्यः। तिस्रो विद्या अधीत इति क्रियमाणे द्विगोर्लुगिति लुक्प्रसङ्गः। आख्यानेति। द्वयोरर्थग्रहणं द्वयोः स्वरूपग्रहणम्। यावक्रीतिक इति। यावक्रीताधिकारेण कृतमाख्यानमुपचाराद् यावक्रीतशब्देनोच्यते। तदधीते वेद वा यावक्रीतिकः। एवं प्रैयङ्गवाधिकारकृताख्यानाध्यायी प्रैयङ्गविकः। वासवदत्तिक इति। वासवदत्तामधिकृत्य कृताख्यायिकाऽधिकृत्य कृते ग्रन्थ इत्यत्रार्थे वृद्धाच्छः। तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्। ततोऽनेन ठक्। एवं सौमनोत्तरिक इति। ऐतिहासिक इति। इतिहशब्द उपदेशपारंपर्ये वर्तते। इति हास्यते ऽस्मिन्निति इतिहासः। हलश्चेति घञ्। मयूरव्यंसकादित्वात्समासस्ततष्ठक्। सर्वसादेरिति। सशब्दोऽर्थवान् गृह्यतइति सर्वशब्दः पृथङ्निर्दिष्टः। द्विगोश्चेत्यनेन द्विगोर्लुगिति स्मारितम्। सर्ववेद इति। सर्ववे-

सवार्तिकः । ससंग्रहः । पञ्चकल्पः । द्वितन्त्रः । द्विवेदः । अनुसूर्लक्ष्य-लक्षणे सर्वसादेर्द्विगोश्च लः । इकन्पदोत्तरपदात् शतषष्टेः षिकन्पथः॥ १

अनुब्राह्मणादिनिः ॥ ६२.॥ अयं योगः शक्योऽवक्तुम् । कथमनु-ब्राह्मणी अनुब्राह्मणिनौ अनुब्राह्मणिन इति । इतिनैतन्मत्वर्थीयेन सिद्धम् । अनुब्राह्मणमस्यास्तीत्यनुब्राह्मणी

वसन्तादिभ्यष्ठक् ॥ ६३ ॥ अयुक्तोयं निर्देशः । अधीते वेदेति वर्तते । न च वसन्तोनामाध्ययनमस्ति । नैष दोषः । साहचर्यात्ता-च्छब्द्यं भविष्यति । वसन्तसहचरितमध्ययनं वसन्तः ॥

प्रोक्ताल्लुक् ॥ ६४ ॥ अयुक्तोयं निर्देशः । प्रोक्तादिति भवितव्यम् । सौत्रो निर्देशः ॥

सूत्राच्च कोपधात् ॥ ६५ ॥ संख्याप्रकृतेरिति वक्तव्यम् । इह मा भूत् । माहावार्तिकः । चान्दनगन्धिकः । कालापकः ॥

---

दानधीतइत्यणो लुक् । सवार्तिक इति । वृत्तौ साधु वार्तिकम् । कथादिभ्यष्ठगिति ठक् । वार्त्तिकान्तमधीत इत्यन्तवचने सहस्याव्ययीभावः । अव्ययीभावे चाकाले इति सभावः । ततोऽणो लुक् । पञ्चकल्प इति । पञ्चकल्पानधीतइति द्विगुः । ततो विद्यालक्षणेति ठक् । तस्य लुक् । अनुसूरिति । अनुसूशब्दो ग्रन्थविशेषवाची स ठकमुत्पादयति । लक्ष्यलक्षणशब्दौ चेत्यर्थः । अनुसूमधीतइति ठक् । इसुसुक्तान्तादिति कादेशः केण इति ह्रस्वो वृद्धिश्च । तत आनुसुक इति भवति । लक्ष्यमधीते लाक्षिकः । लक्षणमधीते लाक्षणिकः । इकन्निति । पूर्वपदमधीते पूर्वपदिकः । शतपथमधीते शतपथिकः शतपथिकी । षष्ठिपथिकः । षष्ठिपथिकी ॥

अनुब्रा । अयमिति । अध्येतृवेदित्रोरनभिधानादणू भविष्यतीति तद्बाधनार्थमपि सूत्रं न कर्तव्यम् ॥

वसन्ता । वसन्तसहचरितमिति । यत्र वसन्तो वर्ण्यते यद्वा वसन्तेऽधीयते तत्साहचर्यात्ताच्छब्द्यं लभते ॥

प्रोक्ता । अनुक्त इति । अर्थस्य प्रोक्तत्वादर्थस्य च प्रत्ययेन पौर्वापर्यासंभवादिति भावः । सौत्र इति । प्रोक्तशब्दस्येह स्वरितत्वं प्रतिज्ञातं तेन तदधिकारविहितप्रत्ययग्रहणमित्यर्थः ॥

सूत्रा । संख्याप्रकृतेरिति । अष्ट अध्यायाः परिमाणमस्य संख्याया अतिशदन्तायाः कन्निति कन्प्रत्ययस्ततोऽष्टकमधीयते इति अणो लुकि कृते ऽष्टकाः पाणिनीया इत्युदाहरणम्॥

छन्दोब्राह्मणानिच तद्विषयाणि ॥ ६६ ॥ किमर्थमिदमुच्यते। अन्यत्राभिधेयस्यानित्यत्वात् छन्दोब्राह्मणानां तद्विषयवचनम् *। अन्यत्राभिधेयमनित्यं भवति। पाणिनीयमिति वा भवति। पाणिनीया इति वा। अन्यत्राभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानामप्यनित्यता प्राप्नोति। इष्यते च तद्विषयतैव स्यादिति। तच्चान्तरेण यत्नं नसिध्यतीति छन्दोब्राह्मणानां तद्विषयवचनम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। तत्र यथाधिकारं तद्विषयप्रसङ्गः *। तत्र यथाधिकारं तद्विषयता प्राप्नोति। अधीते वेदेति वर्त्तते। तेनाध्येतृवेदित्रोरेव तद्विषयता स्यात्। येन्ये उपचारास्तत्र तद्विषयता न स्यात्। यथेह भवति। पाणिनीयं महत्सुविहितमिति। एवमिहापि स्यात्। कठं महत्सुविहितमिति। सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात् *। सिद्धमेतत्। कथम्। प्रोक्ताधिकारे एव तद्विषयता वक्तव्या। तेन प्रोक्तं छन्दोब्राह्मणान्यध्येतृवेदित्रोरिति तत्तर्ह्यध्येतृवेदितृग्रहणं कर्त्तव्यम्। ननु चेहापि क्रियते। परार्थमेतद्भविष्यति। तदधीते तद्वेदेति। एवं तर्हि यावदिह छन्दोब्राह्मणग्र-

---

छन्दो। इह प्रोक्तप्रत्ययान्तस्यानेकः प्रकारो दृश्यते। स्वातन्त्र्यमुपाध्यन्तरयोगो वाऽध्येतृवेदित्रोः प्रत्ययश्च। स्वातन्त्र्यं तावद् यथा। पाणिनिना प्रोक्तं व्याकरणं पाणिनीयमिति। उपाध्यन्तरयोगो महत् पाणिनीयमिति वाक्यम्। पाणिनीयमधीयतइति। अध्येतृवेदित्रोः प्रत्ययः। पाणिनीया इति। छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानामध्येतृवेदितृप्रत्ययविषयतैवेष्यते न तु स्वातन्त्र्यादीति तद्विषयार्थमिदं सूत्रम्। क्रियमाणेपि चैतस्मिन्नधीते वेदेतयधिकारादध्येतृवेदितृविषयस्य वाक्यस्यैव निवृत्तिः सिध्यति न तु स्वातन्त्र्यादेरिति मत्वा पृच्छति। किमर्थमिति। अन्यत्रेति। पाणिनीयादौ। अभिधेयस्येति। प्रोक्तलक्षणस्यार्थस्येति। अनित्यत्वादिति। नानाविषयत्वादन्येतृवेदित्रोर्नित्यं विशेषणत्वेनाप्रयोगादनियतत्वादित्यर्थः। तत्र यथाधिकारमिति। अधिकारमनतिक्रम्येत्यर्थः। अधीते वेदेत्यधिकारादध्येतृवेदित्रोरेव विवक्षितयोस्तद्विषयता विधीयमाना तद्विषयमेव वाक्यं निवर्त्तयेद् न तु क्रियान्तरमित्यर्थः। येन्ये उपचारा इति। व्यवहारा इत्यर्थः। सिद्धं त्विति। अध्येतृवेदित्रोरेव विवक्षितयोः छन्दोब्राह्मणेषु प्रोक्तप्रत्यय उत्पद्यते नान्यत्रेत्येवं वक्तव्यमित्यर्थः। परार्थं तदिति। छन्दोब्राह्मणान्यध्येतृवेदित्रोरिति परिभाषां कृत्वा पुराणप्रोक्ते कल्पे चेति करिष्यते। चकारेण ब्राह्मणग्रहणमनुकृ-

हणं तावत्तत्राध्येतृवेदितृग्रहणम् । ननु च तत्रापि क्रियते । परार्थं यद्भविष्यति । पुराणप्रोक्तेषु ब्राह्मणकल्पेषु । शौनकादिभ्यश्छन्दसीति । इह वा छन्दोब्राह्मणग्रहणं क्रियते । तत्र वाध्येतृवेदितृग्रहणम् । कोन्वत्र विशेषः । याज्ञवल्क्यादिभ्यः प्रतिषेधः * । याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः । याज्ञवल्कानि ब्राह्मणानि । सौलभानि । किं प्रोक्ताधिकारे तद्विषयता क्रियतइत्यतो याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः । नेत्याह । सर्वथा याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः ॥ इनिर्वा प्रोक्ते तद्विषयः * ॥ अथ वा इनिः प्रोक्ते तद्विषयो भवतीति वक्तव्यम् । यदि इनिः प्रोक्ते तद्विषयो भवतीत्युच्यते एवमपि पैङ्गीकल्पः अत्रापि प्राप्नोति । काश्यपकौशिकग्रहणं च कल्पे नियमार्थम् * । काश्यपकौशिकग्रहणं कल्पे नियमार्थं द्रष्टव्यम् । काश्यपकौशिकाभ्यामेवेनिः कल्पे तद्विषयो भवति नान्येभ्य इति । एवमपि कणादीनां तद्विषयता न प्राप्नोति । तैत्तिरीयाः । वारतन्तवीयाः । यदि पुनश्छगणादयः प्रोक्ते तद्विषया भवन्तीत्युच्यते । एवमपि पैङ्गीकल्पः । अत्रापि प्राप्नोति । काश्यपकौशिकग्रहणं च कल्पे नियमार्थमित्येव । एवमप्यौत्सर्गिकाणस्तद्विषयता न प्राप्नोति । क्रौडाः । काङ्कताः मौदाः पैप्पलादाः । छगणादयश्चाप्यौत्सर्गिकाण-

---

ष्यते । ततः शौनकादिभ्य इति । ततश्छन्दोग्रहणमनुवर्त्तिष्यतइति भावः । याज्ञवल्कानीति । याज्ञवल्कस्यापत्यमिति गर्गादित्वाद्यञ् । तदन्तात्प्रोक्तार्थे कण्वादिभ्यो गोत्र इत्यण् अत्रतद्विषयता न भवति । सौलभानीति । सुलभेन प्रोक्तानीति तेन प्रोक्तमित्यण् । किं त्वित्यस्यानन्तरं प्रतिषेधवचनात् । तन्निमित्तत्वं प्रतिषेधवचनस्याशङ्क्य पृच्छति । किं प्रोक्ताधिकार इति । इनिर्वेति । इनिशब्देन णिनिरपि गृह्यते । कर्मन्दकृशाश्वादिनिरित्ययमिनिरपि । तेनेनेरेव प्रोक्तार्थे विहितस्य तद्विषयता भविष्यति न त्वण इत्यर्थः । पैङ्गीति । पिङ्गेन प्रोक्तः कल्पइति णिनिः । अत्रापि छन्दोब्राह्मणग्रहणेऽक्रियमाणे तद्विषयताप्रसङ्गः । काश्यपकौशिकग्रहणं चेति । इनेरध्येतृवेदित्रोरिति परिभाषां कृत्वा काश्यपकौशिकाभ्यां कल्प इति सूत्रं नियमार्थं कर्तव्यमित्यर्थः । एवमपीति । इनेरेकस्योपादानात्तित्तिर्यादिसूत्रविहितानां छत्रादीनां तद्विषयता न स्यात् । क्रौडा इति । क्रोडेन प्रोक्तं छन्दोधीयते । कङ्कतेन सुदेन पिप्पलादेन चेति तेन प्रोक्तमित्यण् । तस्य छणादिष्वनन्तर्भावात्तद्विषयता न प्राप्नोति । दोषान्तरमुद्भावयति । छणादय इति ।

मध्येत्ववेदित्रोरेव बाधेरन् । येन्ये उपचारास्तत्र न बाधेरन् । तित्तिरिणा प्रोक्ताः श्लोका इति । अस्तु तर्ह्यविशेषेण । ननु चोक्तं याज्ञवल्क्यादिभ्यः प्रतिषेध इति । वक्ष्यत्येतत् याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वादिति तत्रैव वक्तव्यं तद्विषयता च न भवतीति । कथं काश्यपिनः कौशिकिन इति । इनिः प्रोक्ते तद्विषयो भवतीत्युच्यमाने अवश्यमत्र काश्यपकौशिकग्रहणं कल्पे नियमार्थं द्रष्टव्यम् । तदेवेदानीं विध्यर्थं भविष्यति । कथं पराशरिणो भिक्षवः शैलालिनो नटाः । अत्रापि तद्विषयता चेत्यनुवर्त्तिष्यते ॥

तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥ तेन निर्वृत्तम् ॥ ६८ ॥ तस्य निवासः ॥ ६९ ॥ अदूरभवश्च ॥ ७० ॥ किं पुनरेकयोग आ-

---

अध्येत्ववेदित्वविवक्षायामेव प्रोक्तार्थं उत्पद्यमानाश्छणादयस्तत्रैव स्वयं भवन्त औत्सर्गिकान् बाधेरन् । अन्यत्र तु स्वयमभवन्तो न बाधेरन् इत्यर्थः । तित्तिरिणा प्रोक्ता इति । तित्तिरिवरतन्त्वित्यत्र छन्दोग्रहणं कर्तव्यमिति वक्ष्यते तेनात्र छण् न भवति । तदभावेप्यण् नेष्यते । यद्येवमपवादाभावेऽत्सर्गस्य प्रवृत्तिः केन वार्यते अथानभिधानादिकमुत्सर्गानुत्पत्तौ हेतुरभिधीयते तर्हि छणादयस्तापीति दोषो नोपन्यसनीय इति चिन्त्यमेतत् । अस्तु तर्हीति । इह वा छन्दोब्राह्मणानि च तद्विषयाणीति क्रियेत । प्रोक्ताधिकारे वा छन्दोब्राह्मणान्यध्ये त्ववेदित्रोरित्युच्येत नास्ति विशेषः । इहापि च प्रकरणे प्रोक्तग्रहणानुवृत्त्या प्रोक्तप्रत्ययान्तानां छन्दोब्राह्मणवाचिनां तद्विषयता विधीयमाना सर्वं स्वतन्त्वादि निवर्त्तयितुं क्षमेति यथाधिकारमित्ययं दोषो नावतरति । सिद्धं तु प्रोक्ताधिकारइत्येतदपि वार्त्तिकमत्रैव सूत्रे प्रोक्तानुगित्यतः प्रोक्तशब्दस्याधिकार इत्येव के चिद्व्याचक्षते । वक्ष्यत्येतदिति । पुराणप्रोक्ते ष्वित्यत्र । कथमिति । कल्पे तद्विषयता न प्राप्नोतीति प्रश्नः । अत्रापि तद्विषयता चेति । अर्थमात्रमत्र निर्दिष्टम् । तथा हि । यद्यत्रप्रकरणे सूत्रमिदं क्रियते । तदाव्यवहितत्वात्कथं तत्र तद्विषयग्रहणस्यानुवृत्तिः स्यात् । अथ प्रोक्तप्रकरणे छन्दोब्राह्मणान्यध्येत्ववेदित्रोरित्युच्यते तदा तद्विषयग्रहणं नास्ति । तस्मात्प्रोक्तप्रकरणे ऽध्येत्ववेदित्वग्रहणं पाराशर्यशिलालिभ्यामित्यादावनुवर्त्यमिति भाष्यकारो मन्यते । यद्वा । याज्ञवल्क्याद्यर्थं तद्विषयता च नेति यदुक्तं तदेव तद्विषयताग्रहणमुत्तरत्रानुवर्त्यमित्यर्थः ।

अदूर । चतुर्णां योगानां किमेकवाक्यता अथ वा नानावाक्यतेति विचारः । किं पुनरिति । ननु समर्थविभक्तयः प्रत्ययार्थाश्च भिन्ना इति कथमेकयोगत्वसंभावना । उच्यते । अणादयः पञ्चएतैर्योगैर्विधीयन्तइति तद्विधानापेक्षमेकयोगत्वं संभवति । यदा युगपदेते-

शो खिन्नाना योगाः । किं चातः । यद्येको योग उत्तरेष्वर्थादेशनेषु दे-शे तन्नाम्नीत्यनुवृत्तिः कर्त्तव्या न ह्येकयोगे अनुवृत्तिर्भवति । कथं ज्ञायते । यदयं तदधीते तद्वेदेति द्विस्तद्ग्रहणं करोति । अथ नाना योगाः ओरञित्येवमाद्यनुक्रमणं यदेव सर्वान्त्यमर्थादेशनं तस्यैव विषये स्यात् । यथेच्छसि तथास्तु । अस्तु तावदेको योगः ननु चोक्तमुत्तरेष्वर्थादेशनेषु देशे तन्ना देशितन्नाम्नीत्यस्यानुवृत्तिः कर्तव्या न ह्येकयोगे ऽनुवृत्तिर्भवतीति । एकयोगे प्यनुवृत्तिर्भवति । कथं ज्ञायते । यदयं तदस्यास्त्यस्मिन्निति मतुबिति द्विस्तद्ग्रहणं न करोति । कथं तदधीते तद्वेदेति । प्रमादकृतमाचार्यस्य शक्यमकर्तुम् । अथ वा सन्तु पुनर्नाना योगाः । ननु चोक्तम् । ओरञित्येवमाद्यनुक्रमणं यदेव सर्वान्त्यमर्थादेशनं तस्यैव विषये स्यात् । नैष दोषः गोयूथवदधिकाराः । तद्यथा । गोयूथमेकदण्डप्रघट्टितं सर्वं समं घोषं गच्छति तद्वदधिकाराः ॥

ओरञ् ॥ ७१ ॥ ओरञ्विधेर्नद्यां मतुब्विप्रतिषिद्धम् * । ओरञ्विधेर्नद्यां मतुब्भवति विप्रतिषेधेन । ओरञ्विधेरवकाशः । कक्षतु काक्षतवम् । काकपेलवम् । नद्यां मतुपोवकाशः । उदुम्बरावती । मशकावती । इहोभयं प्राप्नोति । इक्षुमती । द्रुमती । मतुब्भवति विप्रतिषेधेन ॥

---

ष्वर्थेष्वणादयो विधीयन्ते ग्रहणकवाक्येनैकेन तदैकयोगत्वं तदा चैतन्निबन्धनानि प्रक्रियावाक्यान्युपप्लवन्ते । तदा तु क्रमेण भिन्नेष्वर्थेषु प्रत्ययविधानं तदा नानावाक्यता । देशे तन्नाम्नीति चतुर्ष्वपि योगेषु प्रत्ययान्तोपाधित्वे नैतदुपयुज्यते । एकयोगे च प्रथमेनैवार्थे नानन्तर्यात्संवध्येत नान्यैः । नानायोगत्वे तु स्वरितत्वादधिकारे सति सर्वैरर्थैरस्योपाधेः संबन्ध उपपद्यते । प्रमादकृतमिति । शिष्याणां सुखाववोधाय लाघवं प्रत्ययनावधानजक्षणेन प्रमादेन कृतमित्यर्थः । लौकिको ह्यधिकारोपेक्षालक्षण एकस्मिन्नपि योगे न विरुध्यते । अर्थं समुदायं चापेक्ष्य समर्थविभक्तिरुपाधिर्वा निर्दिश्यमानः प्रत्येकमभिसंबध्यते यत्त्वन्यच्चोक्तं न चैकयोगे ऽनुवृत्तिर्भवतीति । यच्छास्त्रीयमधिकारमन्तरेणैव संबन्धस्यान्याय्यत्वमनाश्रित्येत्यविरोधः । गोयूथवदिति । स्वरितलिङ्गासङ्गदण्डप्रेर्यमाणा अधिकारगवा आनन्तर्यव्यवधाननिरपेक्षाः सममेव कार्यदेशमनुसरन्तीत्यर्थः ।

ओर । उदुम्बरावतीति । मतौ बह्वचोनजिरादीनामिति दीर्घः ।

मतोश्च बह्वजङ्गात् ॥ ७२ ॥ अङ्गग्रहणं किमर्थम् । यथा बह्वज्ग्रहणमङ्गविशेषणं विज्ञायेत । बह्वजङ्गादिति । अथाक्रियमाणेऽङ्गग्रहणे कस्य बह्वज्ग्रहणं विशेषणं स्यात् । मत्वन्तविशेषणम् । तत्र को दोषः । इहापि प्रसज्येत । मालावतां निवासः मालावतम् । अस्ति चेदानीं कश्चिदबह्वज्मत्वन्तोयदर्थो विधिः स्यात् । अस्तीत्याह । स्ववान् स्ववान् ॥

नद्यां मतुप् ॥ ८५ ॥ किमर्थं नद्यां मतुब्विधीयते न तदस्यास्त्यस्मिन्निति मतुबित्येव सिद्धम् । नद्यां मतुब्वचनं मत्वर्थेऽण्विधानात् * । नद्यां मतुब्वचनं क्रियते । मत्वर्थेऽण्विधानात् । अयं मत्वर्थेऽण्विधीयते । स विशेषविहितः सामान्यविहितं मतुपं बाधेतेति । निर्वृत्ताद्यर्थं च * । निर्वृत्ताद्यर्थं च नद्यांमतुब्वचनं क्रियते । निर्वृत्ताद्यर्थेषु मतुब्यथा स्यात् ॥

कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ८७ ॥ महिषाच्च * । महिषाच्चेति वक्तव्यम् । महिष्मान् ॥

नडादीनां कुक् च ॥ ९१ ॥ यदि पुनरयं कुट् परादिः क्रियते । कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् * । कुटि सति प्रत्ययादेरित्यादेशस्यानुपपत्तिः । कुटि कृते अनादित्वादादेशो न प्राप्नोति । एवं तर्हि पूर्वान्तः करिष्यते । पूर्वान्ते ह्रस्वत्वम् * । यदिपूर्वान्तः । ह्रस्वत्वं वक्तव्यम् । कुञ्चकीयः । परादौ पुनः सति केण इति ह्रस्व-

---

मतो । अङ्गग्रहणमिति । मतोश्च बह्वच इत्येवास्तु व्यधिकरणे पञ्चम्यौ व्याख्यास्येते बह्वचो यो विहितो मतुप् तदन्तादञ् भवतीति स एवार्थः सम्पद्यतइति प्रश्नः । यथेति । सामानाधिकरण्ये सम्भवति वैय्यधिकरण्याश्रयणस्यान्याय्यत्वादित्यर्थः ।

नद्याम् । अयमिति । तदस्मिन्नस्तीति देशे तन्नाम्नीत्येतस्मात्रविहितो नद्यामपि देशत्वाद्विशिष्टलिङ्गो नदीदेशोऽग्रामा इत्यत्र तु पृथङ्नदीग्रहणं सर्वनदीवाच्यवयवाद्यपरिग्रहार्थम् । स विशेषविहित इति । देशे तन्नाम्नि विधानात् । निर्वृत्ताद्यर्थं चेति । निर्वृत्तादिषु चिहदर्थेषु अप्राप्त एव मतुब् विधीयते । तदस्मिन्नस्तीत्यत्र त्वर्थे प्रतिप्रसूयत इत्यर्थः ।

नडा । सूत्रकारेण कुक् पूर्वान्तः कृतः । तत्र कुञ्चा यस्मिन् सन्तीति कुञ्चकीयमिति ह्रस्वो न सिध्यति । तक्षकीयमित्यत्र च नलोपो न प्राप्नोति । परादौ तु केण इति ह्रस्वो मान्तस्य च पदत्वान्नलोपः सिध्यतीति मन्वान आह । यदि पुनरयमिति ।

त्वं सिद्धं भवति । अस्तु तर्हि परादिः । ननु चोक्तं कुटि कृते नादित्वादादेशो न प्राप्नोतीति । सिद्धं त्वादिष्टस्य कुड्वचनात् * । सिद्धमेतत् । कथम् । आदिष्टस्य कुड्वचनात् । कुट् चादिष्टस्येति वक्तव्यम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । संनियोगात्सिद्धम् * । संनियोगः करिष्यते । क एष यत्नश्चोद्यते संनियोगो नाम । चकारः कर्तव्यः । कुट् च । किं च । यच्चान्यत्प्राप्नोति । किंचान्यत् प्राप्नोति। आदेशः । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं पूर्वान्ते ह्रस्वत्वमिति । निपातनात्सिद्धम् । किं निपातनम् । कुत्वा ह्रस्वत्वं चेति । तत्तर्हि पूर्वान्ते सति निपातनं कर्त्तव्यम् परादावप्येष दोषः । यदि तत्कोण इति ह्रस्वत्वम् । न तत्कादिमात्रे शक्यं विज्ञातुम् । इहापि प्रसज्येत । नदीकल्पः परीवाहः कुमारीकाम्यतीति । तस्मादुभयमेतद्वक्तव्यम् । कुत्वा ह्रस्वत्वश्चेति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
चतुर्थाध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

---

शेषे ॥९२ ॥ शेष इत्युच्यते । कः शेषो नाम । अपत्यादिभ्यश्चातुरर्थपर्यन्तेभ्यो येन्येर्थाः स शेषः । किमर्थं पुनः शेषग्रहणं क्रियते । शेषे घादयो यथा स्युः स्वार्थे मा भूवन्निति । नैतदस्ति प्रयोजनम् । इदं तावदयं प्रष्टव्यः । अणादयः स्वार्थे कस्मान्न भवन्तीति । अपत्याद्यर्थे-

---

क एव इति । आगमादेशौ सह भवत इत्युच्यमाने गौरवप्रसङ्ग इति मन्यते। निपातनादिति । गण एव कुत्वा ह्रस्वत्वं च तद्वन्नलोपश्चेत्युच्चारणादित्यर्थः । यदि तदिति। कोण इत्यत्र कप्रत्ययस्य ग्रहणं न तु वर्णमात्रस्य यतस्तदादिविधिः स्यादित्यर्थः ॥

इत्युपाध्याय जैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ॥

---

शेषे । शेषग्रहणमन्तरेणापत्यादीनां चातुरर्थपर्यन्तानां निवृत्तत्वादवशिष्यमाणेषु जातादिषु घादयः सिध्यन्तीति मत्वा पृच्छति । कः शेष इति । इतरः शिष्यबुद्धिपरीक्षार्थं शेषं दर्शयति । अपत्यादिभ्य इति । येनाभिप्रायेण पृष्टवांस्तेनैव पुनः पृच्छति । किमर्थमिति । स्वार्थे मा भूवन्निति । अर्थानिर्देशे हि स्वार्थे घादिप्रसङ्गो विप्रकर्षात्तु जा-

ष्वणादयो विधीयन्ते तेन स्वार्थे न भविष्यन्ति । इमेऽपि तर्हि जातादिष्वर्थेषु विधीयन्ते तेन स्वार्थे न भविष्यन्ति । कथं पुनरिहोच्यमाना घादयो जातादिष्वर्थेषु शक्या विज्ञातुम् । अनुवर्तिष्यन्ते तत्र घादयः । यद्यनुवर्तिष्यन्ते घादयः । या या परापरा प्रकृतिस्तस्याः पूर्वेपूर्वे प्रत्ययाः प्राप्नुवन्ति । एवं तर्हि जातादिष्वर्थेषु घादीनपेक्षिष्यामहे । अयुक्ता एवं बहुनोऽपेक्षा । अपेक्ष्यमाणो यमनन्तरं योगमपेक्षेत । बहुनोऽप्यपेक्षा भवति । तद्यथा । कषादिषु यथाविध्यनुप्रयोग इति । ससामान्यकं विशेषकं सर्वमपेक्षते । अथ वा पुनरस्त्वनुवृत्तिः । ननु चोक्तं याया परापरा प्रकृतिस्तस्यास्तस्याः पूर्वेपूर्वे प्रत्ययाः प्राप्नुवन्तीति नैष दोषः । संबन्धमनुवर्तिष्यते । राष्ट्रावारपाराद्घखौ । ग्रामाद्यखञौ । राष्ट्रावारपाराद्घखौ । कत्र्यादिभ्यो ढकञ् । राष्ट्रावारपाराद्घखौ । ग्रामाद्यखञाविति । अत उत्तरं पठति । शेषवचनं घादीनामपत्यादिष्वप्रसङ्गार्थम् * । शेषवचनं क्रियते । शेषे घादयो यथा स्युः । अपत्यादिषु मा भूवन्निति । कथं च प्राप्नुवन्ति । तस्येदंवचनात्प्रसङ्गः * । तस्येदंविशेषा ह्येते अपत्यं समूहो निवासो विकार इति विप्रतिषेधात्सिद्धम् * । अणादयः क्रियन्तां घादय इति । किमत्र कर्तव्यम् । अणादयो भवन्ति विप्रतिषेधेन । न वा प-

---

ताद्भिर्घादीनां सम्बन्धो न स्यादिति भावः । अपत्यादिष्विति । प्राग्दीव्यत इति विशिष्टावधिपरिच्छिन्नार्थाश्रयेणाणादीनां विधानादिति भावः । इमेपीति । घादिविधानवाक्येष्वर्थनिर्देशाभावात् । तत्रजात इत्यादिष्वर्थनिर्देशवाक्येषु प्रत्ययानुपादानात् परस्पराकाङ्क्षावशादेकवाक्यतायां सत्यां जातादिष्वेव घादयो भविष्यन्ति न तु स्वार्थ इत्यर्थः एवं तर्हीति । तत्र जात इत्यादिषु प्रत्ययानिर्देशादवश्याकाङ्क्षितव्या घादय इति भावः । अयुक्तेति । बहुनोवस्तुनोपेक्षा न युक्ता । अनन्तरेणैव त्वयेनाकाङ्क्षाविच्छेदसम्भवादिति भावः । अनन्तरमिति । विभाषा पूर्वाह्णापराह्णाभ्यामित्येतदित्यर्थः । कषादिष्विति । यथात्र कषादिष्विति वचनेनापेक्षा प्रतिपाद्यते तथेहापि योगविभागसामर्थ्यात्प्रत्ययसमुदायापेक्षा भविष्यतीति मन्यते । ससामान्यकमिति । उपमाने कर्मणि चेत्यत्र धातुसामान्यं प्रकृतित्वेनोपादीयते ऽन्यत्र तु विशेषः । ततश्च सर्वस्यैवापेक्षा भविष्यतीत्यर्थः । अथ वेति । स्वरितत्वादिति भावः । विप्रतिषेधादिति भावः । विप्रतिषेधादिति । पूर्वविप्रतिषेधादिति भावः । नवेति । अनिष्टप्रसङ्गाद्विप्रतिषेध आश्रयितुं न युक्तः । परश्चब्दस्य

रत्वाद्घादीनाम् * । न वा एष युक्तो विप्रतिषेधः । किं कारणम् । परत्वाद्घादीनाम् । विप्रतिषेधे परमित्युच्यते । पूर्वे चाणादयः परे घादयः । परेऽणादयः करिष्यन्ते । सूत्रविपर्यासः कृतो भवति । अणपवादत्वाच्चाण्विषये घादिप्रसङ्गः * । अणपवादत्वाद् घादीनामण्विषये घादयः प्राप्नुवन्ति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति अण्विषये घादयो न भवन्तीति । यदयं फेश्छ चेति फिञन्ताच्छं शास्ति । नैतदस्ति ज्ञापकम् । फिनर्थमेतत् स्यात् । सौवीरगोत्रेष्विति वर्तते । न च फिन्नन्तं सौवीरगोत्रमस्ति । गोत्रग्रहणं सामूहिकेषु ज्ञापकम् । दैवयातवग्रहणं वैषयिकेषु । भास्त्रायणग्रहणं नैवासिकेषु ॥

---

व्यवस्थाविषयस्य तत्र ग्रहणादिष्टवाची संगृह्यत इति चेदिष्टानिष्टत्वस्य वचनाद्विना दुर्ज्ञानत्वात्तद्ग्रहणस्यायुक्तत्वात् । अणपवादत्वादिति । नाप्राप्तेऽणि विधीयमाना घादयोऽपत्यादिष्वप्यणं बाधेरन्निति शेषाधिकारः कर्तव्य इत्यर्थः । इदानीं भाष्यकारोऽसत्यपि शेषाधिकारे ज्ञापकैर्नापत्यादिषु शेषाधिकारप्रत्याख्यानाय घादीन् व्यावर्तयति । नैष दोष इति । फेश्छ चेति । फेर्वेत्येवं ठञ्विधानार्थं कर्तव्यम् । तत्रठका मुक्ते पक्षे वृद्धाच्छ इतिच्छो भविष्यति नार्थश्छविधानेन । तत्तु ज्ञापकार्थं सम्पद्यते ‘घादयोऽपत्यादिषु न भवन्तीत्यर्थस्य । अपत्य एव ज्ञापकं स्यादित्याशङ्क्य ज्ञापकान्तरमाह । गोत्रग्रहणमिति । गोत्रोष्ट्रोरभ्रेत्येतदिति भावः । गोत्रचरणाद्वुञिति समूह इदमर्थान्तभूत वुञि सिद्धे पुनर्वुञ्विधानं यथोक्तार्थज्ञापनम् । दैवयातवग्रहणमिति । राजन्यादिगणपठितमिति भावः । देवयातूनामपत्यानि दैवयातव इति गोत्रप्रत्ययान्तमेतत् । भास्त्रायणग्रहणमिति । अरीहणादिगणपठितं वुञ्विधानार्थमिति भावः । यद्यपि न्यायेनापत्यादिषु घाद्यभावः सिध्यति । तथापि विस्पष्टप्रतिपत्तये भाष्यकारो ज्ञापकान्युपन्यास्यत् । तथाहि । विशेषशब्दसन्निधाने सामान्यशब्द उपादीयमानस्तत्रैव वा विशेषेऽवतिष्ठते । यथा वृक्षः शिंशपेति । विशेषान्तरेषु वा । यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति । तस्येदमिति सामान्यमपत्यादिशब्दसन्निधावुपादीयमानं यद्यपत्यादिष्वेवावतिष्ठेत तदा सामान्योपादानमनर्थकमेव स्यात् । तस्मादपत्यादिविशेषपरिहारेण विशेषान्तराणि तस्येदमित्यनेन ग्राहिष्यन्ते । यदि तर्हि शेषग्रहणं प्रत्याख्यायते तदा तस्य लक्षणतया यानि शब्दरूपाणि साध्यानि तानि कथं सिध्यन्ति । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । चतुर्भिरुह्यते चातुरं शकटम् । आश्वो रथः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्ण औलूखलो यावकः । चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति । तस्येदमिति संस्कृतं भक्षा इति च सिद्धत्वान्नार्थं स्यादर्थेन शेषवचनेन । तत्र जात इत्यत्र तु सूत्रेऽस्य

राष्ट्रावारपाराद्घखौ ॥ ९३ ॥ अवारपारादिगृहीतादपि *। अवारपारादिगृहीतादपीति वक्तव्यम्। अवारपारीणः अवारीणः पारीणः। विपरीताच्च *। विपरीतादपीति वक्तव्यं पारावारीणः ॥

कच्छादिभ्यो ढकञ् ॥ ९५ ॥ ग्रामाच्चेति वक्तव्यम्। ग्रामेयकः। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। कच्छादिभ्यो ढकञित्यत्र ग्रामादित्येतदनुवर्तिष्यते ॥

कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु ॥ ९६ ॥ अयं योगः शक्योऽवक्तुम्। कथं कौलेयकः कौक्षेयकः ग्रैवेयकः। कुलस्यापत्यं, कुक्षिग्रीवात्तु कन्ढञः। कुलस्यापत्यंकौलेयक इति भविष्यति। कुक्षिग्रीवादपि ढञन्तात्कन्भविष्यति ॥

कापिश्याःष्फक् ॥ ९९ ॥ वाह्लादिपर्दिभ्यश्चेति वक्तव्यम्। वाह्लायनी। और्दायनी। पार्दायनी ॥

रङ्कोरमनुष्येऽण्च ॥ १०० ॥ अमनुष्यइति किमर्थम्। राङ्कवो मनुष्यः। रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात् *। रङ्कोरमनुष्यग्रहणमनर्थकम्। किं कारणम्। मनुष्यतत्स्थयोर्वुञ्विधानात्। अयं मनुष्यतत्स्थयोर्वुञ्विधीयते। स बाधको भविष्यति। एवं तर्हि ज्ञापयत्याचार्यः अमनुष्ये मनुष्यस्थे ष्फगणौ भवत इति। अमनुष्येमनुष्यस्थे ष्फगणोर्ज्ञापकमिति चेतन्न। किं कारणम्। मनुष्यस्थेष्फगणोर्ज्ञापकमितिचेन्नानिष्टत्वात् *। अमनुष्येअनिष्टत्वात्। न ह्यमनुष्ये मनुष्यस्थे ष्फगणाविष्येते। किं तर्हि। वुञ् वेष्यते। अणग्रहणं च

---

लवणत्वमाश्रित्यैतेषां सिद्धिमभिधास्यति नागनाथः ॥

कुल। कुलस्यापत्यमिति। पुनः प्रत्ययार्थत्वेऽपि कुलं प्रकृत्यर्थः संपद्यते। कन्निति। स्वार्थिक इति भावः ॥

कापि। वाह्लादीति। अवृद्धादपीति वुञि प्राप्ते ष्फगारभ्यते इत्याहुः ॥

रङ्को। रङ्कवो जनपदस्ततः प्राग्दीव्यतोऽणित्यण् प्राप्तस्ततोऽवृद्धादपीति वुञ् प्राप्तः ततः ओर्देशे ठञ् प्राप्तः ततः कोपधादण् ततः कच्छादिभ्यश्चेत्यण् प्राप्तस्ततः ष्फगणौ विधीयेते। कच्छादिषु कोपधत्वादेवाणिसिद्धे रङ्कुशब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ् विधानार्थः। स बाधक इति। विशेषविहितत्वादिति भावः। अमनुष्ये मनुष्यस्थ इति। चूडादावित्यर्थः। यदि हि मनुष्यस्थे वुञं ष्फगणौ न बाधेयातां मनुष्यप्रतिषेधोनर्थकः

कच्छादिभ्योऽणुवचनात् * । अण्ग्रहणं चानर्थकम् । किं कारणम् । कच्छादिभ्योऽणुवचनात् । कच्छादिपाठादत्राण्भविष्यति ॥

अव्ययात्त्यप् ॥ १०४ ॥ परिगणनं कर्तव्यम् । अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः ॥ अमा । अमात्यः । इह । इहत्यः । क्व । क्वत्यः । तसि । ततस्त्यः । त्र । तत्रत्यः । इतरथा ह्यौत्तराहौपरिष्टपारतानां प्रतिषेधो वक्तव्यः स्यात् । औत्तराहः । औपरिष्ट । पारतः । त्यब्नेर्ध्रुवे । त्यब्नेर्ध्रुवे वक्तव्यः । नित्यः । निसो गते । त्यब्वक्तव्यः । निष्ट्यः । अरण्यात्सः * । अरण्याण्णो वक्तव्यः । आराण्याः सुमनसः । दूरादेत्यः * । दूरादेत्यो वक्तव्यः । दूरेत्यः । उत्तरादाहञ् । उत्तरादाहञ् वक्तव्यः । औत्तराहः । अव्ययात्त्यप्याविष्ट्यस्योपसंख्यानं छन्दसि * । अव्ययात्त्यबित्यत्राविष्ट्यस्य छन्दस्युपसंख्यानं कर्तव्यम् । आविष्ट्यो वर्द्धते चारुरासु । अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो विप्रतिषेधेन * । अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो भवति विप्रतिषेधेन । अव्ययात्त्यब्भवतीत्यस्यावकाशः । अमात्यः । वृद्धाच्छस्यावकाशः । शालीयो मालीयः । आरादुभयं प्राप्नोति । आरातीयः । तीरोत्तरपदादञ् भवतीत्यस्यावकाशः । काकतीर । का-

---

स्यात् । कच्छादिभ्योऽण्वचनादिति । ततश्चैकविषयत्वात्पर्यायेण ष्फगणौ भविष्यत इति नार्थोऽण्वचनेनेत्यर्थः । तदेवं रङ्कोश्चेत्येव वक्तव्यम् । यत्तु कैश्चिदभ्यधायि । अमनुष्यग्रहणेन पर्युदासाश्रयेण मनुष्यसदृशे प्राणिनि ष्फग्विधीयते नाप्राणिनि । अत एव विशेषविहितत्वादणो बाधकः स्यादित्यण्ग्रहणमपि कृतमिति । तदयुक्तम् । न हि भाष्यकारवार्त्तिककाराभ्यामभियुक्ततरः शब्दविषये कश्चिदस्ति ॥

अव्यया । अमेहेति । योऽव्ययात्त्यब्विधिः सोमादिभ्य एव स्मृत इत्यर्थः । अमाशब्दः सहार्थे सामीप्ये च वर्तते । तेन समीपे भवतीत्यमात्यः । औत्तराह इति । आहि च दूरे उत्तराच्चेत्याहिप्रत्ययः । उत्तराहि भवः । उपरिष्टाद्भवः । परतो भव इत्यण् । अव्ययानां भमात्रे इति टिलोपः । परतः शब्दो विभाषापरावराभ्यामित्यतसुजन्तः । त्यब्नेर्ध्रुवे इति । ध्रुवं नियत मुच्यते । निसो गत इति । निर्गतो वर्णाश्रमेभ्य इति निष्ट्यः चाण्डालादिः । ह्रस्वात्तादौ तद्धित इति सकारस्य मूर्द्धन्यस्तकारस्य ष्टुत्वम् । अरण्यास इति । अणि सति ङीप् स्यादिति णो विधीयते । आविष्ट्य इति । आविश्शब्दाद् वृद्धाच्छे प्राप्ते त्यब्विधिः । आविर्भूत आविष्ट्यः । आरातीय इति । असति परिगणने ऽत्र प्राप्नोति ।

रवतीरम्। छस्य स एव। वायसतीरादुभयं प्राप्नोति। वायसतीरीयः। रूप्योत्तरपदादञ् भवतीत्यस्यावकाशः। चणारूप्यम्। चाणारूप्यम्। छस्य स एव। माणिरूप्यादुभयं प्राप्नोति। तं चापि छं परत्वाद्योपधलक्षणो वुञ्बाधते। माणिरूप्यकः। उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादञ्भवतीत्यस्यावकाशः। शिवपुर। शैवपुरम्। छस्य स एव। वाडवकर्षादुभयं प्राप्नोति। वाडवकर्षीयः। कोपधादण् भवतीत्यस्यावकाशः। निलीनक। नैलीनकः। छस्य स एव। औलूकादुभयं प्राप्नोति। औलूकी। तेभ्यष्ठञ्ञिठौ*। तेभ्यस्त्वव्ययादिभ्यष्ठञ्ञिठौ भवतो विप्रतिषेधेन। अव्ययात्त्यब्भवतीत्यस्यावकाशः। अमात्यः। ठञ्ञिठयोरवकाशः। कारतन्तविकी। कारतन्तविका। आरान्नामवाहीकग्रामस्तस्मादुभयं प्राप्नोति। आरात्की। आरात्का। तीरोत्तरपदादञ्भवतीत्यस्यावकाशः। करवतीर। कारवतीरी। ठञ्ञिठयोः स एव। कास्तीरं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति। कास्तीरिकी। कास्तीरिका। रूप्योत्तरपदाञ्ञ्यो भवतीत्यस्यावकाशः। चणारूप्य। चाणारूप्यम्। ठञ्ञिठयोः स एव। दासरूप्यं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति। तौ चापिठञ्ञिठौ परत्वाद्योपधलक्षणो वुञ् बाधते। दाशरूप्यकः। उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादञ्भवतीत्यस्यावकाशः। शिवपुर। शैवपुरः। ठञ्ञिठयोः स एव। शाकलं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति। शाकलिकी शाकलिका

---

योपधलक्षण इति। धन्वयोपधाद्वुञिति वुञ्। परत्वग्रहणेन बाधकत्वं लक्ष्यते अपवादत्वादिह छस्य वुञ् बाधकः वार्त्तिककारेण तु प्राप्तिमात्राश्रयेण छस्य रूप्योत्तरपदलक्षणस्य च ञस्य विप्रतिषेध उक्तः। शिवपुरमिति। शिवस्य पुरमिति षष्ठीसमासः समासस्वरेणान्तोदात्तत्वम्। प्रस्थपुरवहान्ताच्चेत्यत्र वृद्धात् प्राचामित्यतो वृद्धाधिकारादत्र वुञ् न भवति। कोपधादिति। प्रस्थोत्तरपदपलद्यादिकोपधादणित्ययमाण्विवक्षितः। एतस्माद्धि परश्छः। यस्तु कोपधादणित्यण् स जनपदवुञोऽपवादः। तस्यापि वृद्धादच्छे कान्तखोपधादित्यत्र खोपधग्रहणात् छो बाधकः परत्वात् औलूकादिति। उलूका अस्मिन् सन्तीति तदस्मिन्नस्तीत्यण्। औलूको नाम ग्रामः। तेभ्य इति। ये छस्य बाध्याः अव्ययादिलक्षणाः प्रत्ययास्तेभ्य इत्यर्थः। आरात्कीति। परिगणनानपेक्षयाऽयं विप्रतिषेध उक्तः। शाकलमिति। शकलानि सन्त्यस्मिन्निति पूर्ववदण्। कोपधलक्षण इति। ह-

कोपधादण्भवतीत्यस्यावकाशः। निलीनक । नैलीनकः। ठञ्ञिठयोः स एव । सौसुकं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति। तौ चापि ठञ्ञिठौ परत्वात्कोपधलक्षणश्छो बाधते । सौसुकीयः । न वा ठञादीनां छापवादत्वात्तद्विषये चाभावादितरेषाम् *। न वार्थो वि- प्रतिषेधेन । किं कारणम् । ठञादीनां छापवादत्वात् ठञादयश्छा- पवादा,स्तद्विषये चाभावादितरेषाम् । तद्विषये छविषये त्वबादीना- मभावः । कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम् *। अयं चाप्ययुक्तो विप्रतिषेधः । योयं कोपधादणः छस्य च । किं कारणम् । कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम् । सिद्धोत्राण् उत्सर्गेणैव । तस्य पुनर्वचनए- तत्प्रयोजनं ये तस्य बाधकास्तद्बाधनार्थम् । स यथैव तदपवादमञं बाधते । एवं छमपि बाधेत । तस्मादन्तोदात्ते कोपधप्रतिषेधः * । तस्मादन्तोदात्ते कोपधादञः प्रतिषेधो वक्तव्यः । न वक्तव्यः । मध्येप- वादाः पूर्वान्विधीन् बाधन्तइत्येवं कोपधादण् अञं बाधिष्यते छं न बाधिष्यते। छादोर्देशे कालाट्ठञ् * । छादोर्देशे कालाट्ठञित्येतद्भवति विप्रतिषेधेन । छस्यावकाशः । शालीयो मालीयः । ओर्देशे ठञ्भव- तीत्यस्यावकाशः । निषादकर्षूर्नाम देशः । नैषदकर्षुकः । द्वहोभयं प्राप्नोति । दाक्षिकषुकः । कालाट्ठञ्भवतीत्यस्यावकाशः । आर्द्धमा- सिकम् । सांवत्सरिकम् । छस्य स एव । मासादुभयं प्राप्नोति । मा- सिकम् । नक्षत्रादण् *। नक्षत्रादण्भवति छाद्विप्रतिषेधेन । अणो- वकाशः । तैषः। पौषः छस्य स एव। स्वातेरुभयं प्राप्नोति। सौवातः ।

---

ष्ठादकेकान्तेत्यत्राकेकान्तग्रहणे कोपधग्रहणं कर्तव्यमिति विहितः। नवेति। यदुक्तं तेभ्य- ष्ठञ्ञिठाविति तन्निराकरोति । अव्ययादिलक्षणानां प्रत्ययानां परत्वाच्छेन बाधितानां छापवादैः ठञादिभिरुत्कृष्टबलैः सह संप्रधारणा नास्तीत्यर्थः। अञं बाधतइति । उ- दीच्यग्रामलक्षणमित्यर्थः । तस्मादिति । उदीच्यग्रामाच्च बह्वचोन्तोदात्तादकोपधादिति वक्तव्यमित्यर्थः। भाष्यकारो विप्रतिषेधं समर्थयितुमाह। न वक्तव्य इति। दाक्षिकर्षु- क इति। दाक्षिकर्षूर्नाम वाहीकग्रामः तत्र भव इति ठञ्। इसुसुक्तान्तात्कः केण इति ह्रस्वः। सौवात इति। अतेः सुपूर्वादन्यतिभ्यामितीण्प्रत्ययः। स्वातिना युक्तः काल इ- त्यण्। लुबविशेषइति लुप्। स्वातौ भव इति सन्धिवेलादिसूत्रेणाण्। जातेर्थे तु लुकां

अव्ययाद् ट्युट्युलौ *। छाद्भवतो विप्रतिषेधेन। ट्युट्युलोरवकाशः। दोषातनम्। दिवातनम्। छस्य स एव। प्रातःशब्दादुभयं प्राप्नोति। प्रातस्तनम्। शरीरावयवाद्यत् *। छाद्भवति विप्रतिषेधेन। यतोऽवकाशः। दन्त्यम्। ओष्ठ्यम्। छस्य स एव। पादादुभयं प्राप्नोति। पद्यम्। वर्गान्ताच्चाशब्दे यत्खौ *। छाद्भवतो विप्रतिषेधेन। यत्खयोरवकाशः। अक्रूरवर्ग्यः अक्रूरवर्गीणः। छस्य स एव। वासुदेववर्गादुभयं प्राप्नोति। वादेववर्ग्यः। वादेववर्गीणः। बह्वचोन्तोदात्ताट्ठञ् *। छाद्भवति विप्रतिषेधेन। ठञोवकाशः। नतानत। नातानतिकः। छस्य स एव। सामस्तशब्दादुभयं प्राप्नोति। सामस्तिकः। आयस्थानेभ्यष्ठक् *। छाद्भवति विप्रतिषेधेन। ठकोऽवकाशः। शौल्किकम्। गौल्मिकम्। छस्य स एव। आपणादुभयं प्राप्नोति। आपणिकम्। विद्यायोनिसंबन्धेभ्यो वुञ् *। छाद्भवति विप्रतिषेधेन। वुञोऽवकाशः। औपाध्यायकम्। पैतामहकम्। छस्य स एव। द्व्योभयं प्राप्नोति। आचार्यकम्। मातुलकम्। ऋतष्ठञ् *। छाद्भवति विप्रतिषेधेन। ठञोऽवकाशः। हौतृकम्। स्वास्रकम्। छस्य स एव। द्व्योभयं प्राप्नोति। शास्तृकम्। भ्रातृकम्। रूप्यमयटौ *। छाद्भवतो विप्रतिषेधेन। रूप्यमयटोरवकाशः। देवदत्तरूप्यम्। देवदत्तमयम्। छस्य स एव। वायुदत्तादुभयं प्राप्नोति। वायुदत्तरूप्यम्। वायुदत्तमयम्। अचित्ताट्ठक् *। छाद्भवति विप्रतिषेधेन। ठकोऽवकाशः। आपूपिकः। शाष्कुलिकः। छस्य स एव। पायसादुभयं प्राप्नोति पायसिकः। गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् *। छाद्भवति विप्रतिषेधेन। वुञोवकाशः। ग्लौचुकायनकः। ऐषुकारकः। छस्य स

---

भाष्यम्। अविष्ठाफाल्गुनीत्यादिना। पद्यमिति। यपत्यतदर्थ इति पद्भावः। अक्रूरवर्ग्य इति। अक्रूरो नाम क्षत्रियः भगवान् वासुदेवो वा। नातानतिक इति। नतो ऽनुदात्तः। अनत उदात्तः ततो द्वन्द्वः। समासस्वरेणान्तोदात्तः। सामस्तं नाम शास्त्रम्। आपणिकमिति। आपणादागतमिति ठक्। स्वास्रकमिति। उणादीनां क्व चिद् व्युत्पत्तिनिमित्तकार्याभावान् नद्यृभ्यामिति न प्रवर्तते। शास्तृकमिति। शासिस्तृन् तृचौ। शंसिक्षत्तादिभ्यः संज्ञायां चानिटाविति तृन्प्रत्ययः। पायसिक इति। पयसि संस्कृत इत्यण् त-

एव । द्वहोभयं प्राप्नोति । गार्गकः वात्सकः । मालवकः । णिनिरन्ते-वासिब्राह्मणेभ्यः* । छाद्भवति विप्रतिषेधेन । णिनेरवकाशः । हारिद्र-विणः । तौम्बुरविणः । भाल्लविनः । छस्य स एव । द्वहोभयं प्राप्नोति । आरुणिनः । शाठ्यायनिनः । पत्त्रपूर्वादञ् * । छाद्भवति विप्रतिषेधे-न । अञोऽवकाशः । उष्ट्र । औष्ट्रम् । औष्ट्ररथम् । छस्य स एव । द्व-होभयं प्राप्नोति । वामी । वामम् । वामीरथम् । द्वन्द्वाद्वुन्वैरमैथु-निकयोः * । छाद्भवति विप्रतिषेधेन । वुनोऽवकाशः । अहिनकुलि-का । छस्य स एव । द्वहोभयं प्राप्नोति । काकोलूकिका । श्वावरा-हिका । गोत्रचरणाद्वुञ् * । छाद्भवति विप्रतिषेधेन । वुञोवका-शः । ग्लौचुकायनकम् । काठकम् । कालापकम् । छस्य स एव । द्व-होभयं प्राप्नोति । गार्गकम् । वात्सकम् । मौदकम् । पैप्पलादकम् । कण्वादीञ्ञोणविधेः* । कण्वादिभ्योण् भवति इञोण्भवतीत्येतस्माद् वुञ् भवति विप्रतिषेधेन । कण्वादिभ्योण्भवति इञोण्भवतीत्यस्याव-काशः । काण्वाः दण्डमाणवाः । दाक्षाः दण्डमाणवाः । वुञः स एव । द्वहोभयं प्राप्नोति । काण्वकम् । दाक्षकम् । ठञ् ञिठाभ्यामो-र्देशे ठञ् * । ठञ् ञिठाभ्यामोर्देशे ठञ् भवति विप्रतिषेधेन । ठ-ञ् ञिठयोरवकाशः । कारतन्तविकी । कारतन्तविका । ओर्देशेठञ् भवतीत्यस्यावकाशः । निषादकर्षूः । नैषादकर्षुकः । द्वहोभयं प्राप्नो-

---

तत्रठक् । गार्गक इति । गार्ग्यो भक्तिरस्येति वुञ् । आपत्यस्येति यलोपः । मालवक इति । मालवस्यापत्यम् । वृद्धेत्कोसलेति ञ्यङ् । पूर्ववद्वुञ् यलोपौ । भाल्लविन इति । भल्लुना प्रोक्तमधीयत इति पुराणप्रोक्तेष्विति णिनिः । तदन्तादध्येतर्यण् । तस्य प्रोक्ताल्लुगिति लुक् । आरुणिन इति । अरुणिर्वैशंपायनान्तेवासी । तेन प्रोक्तं छन्दोधीयत इति णिनिः । शाट्यायनिन इति । शटस्यापत्यं शाट्यः । तस्यापत्यं युवा यञिञोश्चेति फक् । शाठ्यायनेन प्रोक्तं ब्राह्मणमधीयत इत्यर्थविवक्षायां यूनि लुक् । फक्फिञोरन्यतरस्यामि-ति पक्षे लुगभावः । पुराणप्रोक्तेष्विति णिनिः । उष्ट्ररथमिति । रथाद्यत्पत्त्रपूर्वादित्यञ् । वा-मीति । वामी वडवा तस्या वाह्यमिति पत्त्राध्वर्यु त्यञ् । श्वावराहिकेति । श्वा च वराहश्चेति द्वन्द्वः । येषां च विरोध इत्येकवद्भावः । श्वनोदन्तदंष्ट्रेति दीर्घः । ततो वैरे वुन् । काण्वा इति । काण्वो गर्गादियञन्तः । तस्य दण्डमाणवा इत्यण् । वुञश्च न दण्डमाणवान्ते-वासिष्विति निषिद्धः । पुरस्तादपवादा इति न्यायेनाण् कं बाधते न वुञमिति विप्रति-

ति । नापितवास्तुकः । ठञ् भवति विप्रतिषेधेन । न वाठञोनवकाशत्वात्* । नवार्थौ विप्रतिषेधेन । किं कारणम् । ठञोनवकाशत्वात् । अनवकाशष्ठञ् ठञ्ञिठौ बाधिष्यते ननु चेदानीमवकाशः प्रक्लृप्तः । यद्वृद्धमुवर्णान्तं बाह्लीकग्रामश्च स ठञ्ञिठयोरवकाशः । यद्वृद्धमुवर्णान्तं न च बाह्लीकग्रामः स ठञोवकाशः । यद् वृद्धमुवर्णान्तं बाह्लीकग्रामश्च तस्मादुभयं प्राप्नोति । एवं तर्हि नायमस्य विप्रतिषेधस्योपालम्भः । कस्य तर्हि । छादेर्देशे कालाट्ठञित्येतस्य । ननु च तत्राप्यवकाशः प्रक्लृप्तः । यद्वृद्धमनुवर्णान्तं स छस्यावकाशः । यद्वृद्धमुवर्णान्तं स ठञोवकाशः । यद्वृद्धमुवर्णान्तं देशश्च तस्मादुभयं प्राप्नोति । एवं तर्हि वृद्धात् प्राचामित्यनेन वृद्धग्रहणेन किं क्रियते । यावद् ब्रूयात् पूर्वस्मिन् योगे वृद्धाच्चावृद्धाच्चेति । यदेतस्मिन् योगे वृद्धग्रहणं तदनवकाशं तस्यानवकाशत्वादयुक्तो विप्रतिषेधः । योपधप्रस्थादीनां वुञ् * । ठञ्ञिठाभ्यां भवति विप्रतिषेधेन । योपधाद् वुञ् भवतीत्यस्यावकाशः । साङ्काश्य । साङ्काश्यकः । काम्पिल्यकः । ठञ्ञिठयोः स एव । दाशरूप्यं नाम बाह्लीकग्रामः तस्मादुभयं प्राप्नोति । दाशरूप्यकः । प्रस्थान्ताद् वुञ् भवतीत्यस्यावकाशः । मालाप्रस्थकः । ठञ्ञिठयोः स एवं पातालप्रस्थं नाम बाह्लीकग्रामस्तस्मादुभयं प्राप्नोति । पातालप्रस्थकः । पुरान्ताद् वुञ् भवतीत्यस्यावकाशः । काञ्चीपुर । काञ्चीपुरकः । ठञ्ञिठयोः स एव नान्दीपुरं नाम बाह्लीकग्रामस्तस्मादुभयं प्राप्नोति । नान्दीपुरकः । वहान्ताद्वुञ् भवतीत्यस्यावकाशः । वातवह । वातहकः । ठञ्ञिठयोः स एव । कौक्कुटीवहं नाम बाह्लीकग्रामस्तस्मादुभयं प्राप्नोति । कौक्कुटीवहकः । ओष्ठञः * । वुञ् भवति विप्रतिषेधेन । ओष्ठञोवकाशः । नैषादकर्षुकः । वुञः स एव । आ-

---

षेध उक्तः । एवं तर्हीति । छठञोरपि विप्रतिषेधो नास्तीति दर्शयति । वृद्धात्प्राचामिति । ठञो विशेषविहितत्वादित्यर्थः । यावद् ब्रूयादिति । यदि वृद्धाच्छ इत्यतो वृद्धग्रहणं ओर्देश इत्यत्रानुवर्तेत तदा वृद्धात्प्राचामिति सूत्रं न कुर्यात् । एतद्धि नियमार्थं क्रतं प्राग्देशवाचिनो वृद्धादेव यथा स्याद् अवृद्धान्मा भूद् माल्लवास्तव इति । न च वृद्धग्रहणानुवृत्तात्प्राप्तिष्ठञोस्तीति किं नियमार्थेन सूत्रेणेत्यर्थः । वुञेति । परत्वादिति भा-

प्रीतिमायोरुभयं प्राप्नोति । आप्रीतिमायवकः । जनपदानामकार्थौ* । ओष्ठञो भवतो विप्रतिषेधेन । अकस्यावकाशः । अङ्गाः । अङ्गकः । ओष्ठञः स एव । जिह्नवो नाम जनपदस्तस्मादुभयं प्राप्नोति । जैह्न-वकः । अणोवकाशः । ऋषिक । आर्षिकः । ओष्ठञः स एव । इक्ष्वा-कवो नाम जनपदस्तस्मादुभयं प्राप्नोति । ऐक्ष्वाकः । न वा वुञप-वादत्वादणः * । न वार्थो विप्रतिषेधेन । किं कारणम् । वुञपवा-दत्वादणः । वुञपवादोण् । वुञ्च ओष्ठञं बाधिष्यते । कोपधादणो-कान्ताच्छः * । कोपधादण्भवतीत्येतस्मादकान्ताच्छो भवति विप्र-तिषेधेन । कोपधादण्भवतीत्यस्यावकाशः । निलीनकः । अकान्ता-च्छो भवतीत्यस्यावकाशः । आरीहणकम् आरीहणकीयः । ब्राह्मणको नाम जनपदस्तस्मादुभयं प्राप्नोति । ब्राह्मणकीयः । धन्ववुञश्च * । छो भवति विप्रतिषेधेन । धन्वनो वुञ् भवतीत्यस्यावकाशः । पारे-धन्वकः । छस्य स एव । आष्टकं नाम धन्व तस्मादुभयं प्राप्नोति । आष्टकीयः । न वा छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् * । न वार्थो विप्रतिषेधेन । किं कारणम् । छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् । सिद्धोत्र छः । वृद्धाच्छ इत्येव । तस्य पुनर्वचनएतत्प्रयोजनम् । ये ऽ-न्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् । स यथैवान्यांस्तदपवादा-न् बाधते एवमिममपि बाधिष्यते ॥

जनपदतदवध्योश्च ॥ १२४ ॥ जनपदतदवध्योर्वुञ् विधानेऽवयव-मात्रात्प्रसङ्गः * । जनपदतदवध्योर्वुञो विधाने अवयवमात्रात् प्रा-

वः । कोपधादण इति । जनपदवाचिनः कोपधाद्योण्विधीयते तस्मादित्यर्थः । आरीहण-कमिति । आरोहणेन निर्वृत्तमिति वुञ्छणकठेति वुञ् । अयञ्च न जनपदवाचीति कोपधा-दणो न विषयः । ब्राह्मणक इति । ब्राह्मणकोष्णिके संज्ञायामित्यत्र ब्राह्मणा आयुधजी-विनो यस्मिन्देशे तस्मिन्नर्थेब्राह्मणकशब्दो निपातितः । धन्ववुञ इति । धन्वशब्दो मरुदेश-वाची । पारे धन्वेति । धन्वनः पारमिति पारे मध्ये षष्ठ्यावेत्यव्ययीभावः । अनश्च नपुंस-कादन्यतरस्यामिति पच्चे ऽच् समासान्तः । आष्टकीय इति । वृद्धादकेकान्तेतिच्छः । येन्य इति । वुञादयः । स यथैवेति । ततश्चापवादत्वादेव च्छो बाधको न तु परत्वादित्यर्थः ॥

जनपद । तस्यावधिस्तदवधिरिति षष्ठीसमासाश्रयेण चोदयति । जनपदेति । अव-यवमात्रादिति । यो जनपदस्यावधिः सीमा अजनपदोपि तस्मादपि प्राप्नोति विशिष्टाद्-

प्नोति। मौञ्जीनाम बाह्लीकेषु ग्रामस्तस्मिन्भवो मौञ्जीयः। एवं तर्हि जनपदादेव जनपदावधेः। जनपदादिति चेद्वचनानर्थक्यम् *। जनपदादिति चेदवधिग्रहणमनर्थकम्। जनपदादित्येव सिद्धम्। इदं तर्हि प्रयोजनम्। जनपदावधेर्वुञेव यथा स्यात्। यदन्यत्प्राप्नोति। तन्माभूत्। किंचान्यत् प्राप्नोति। छः। गर्तोत्तरपदात् छविधेर्जनपदाद् वुञ् पूर्वविप्रतिषिद्धमिति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति॥

अरण्यान्मनुष्ये॥ १२९॥ अल्पमिदमुच्यते। मनुष्यइति। पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्। आरण्यकः पन्थाः। आरण्यकोध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती। वा गोमयेषु *। वा गोमयेष्विति वक्तव्यम्। आरण्यकाः गोमयाः। आरण्याः गोमयाः॥

विभाषा कुरुयुगंधराभ्याम्॥ १३०॥ कुरुयुगन्धरेभ्यो वावचनान् मनुष्यतत्स्थयोर्वुञ् विधानम् *। कुरुयुगन्धरेभ्यो वावचनान् मनुष्यतत्स्थयोर्वुञित्येतन्नभवति विप्रतिषेधेन। कुरुयुगन्धरेभ्यो वा वचनस्यावकाशः। कौरवः। कौरवकः। यौगन्धरः। यौगन्धरकः। मनुष्यतत्स्थयोर्वुञ् भवतीत्यस्यावकाशः। अन्ये कच्छादयः। काच्छको मनुष्यः। काच्छकमस्येप्सितम्। जल्पितम्। हसितम्। स्मितम्। इहोभयं प्राप्नोति। कौरवको मनुष्यः। कौरवकमस्येप्सितम्। हसितम्। जल्पितम्। स्मितम्। वुञ् भवति विप्रतिषेधेन। नैष युक्तो विप्रतिषेधः। न हि कुरुशब्दस्यान्ये कच्छादयो ऽवकाशः। कुरुशब्दस्य यः कच्छादिषु पाठः सोऽनवकाशः। न खल्वपि कुरुशब्दो विभाषां प्रयोजयति। अनेन वुञ् कच्छादिषु पाठादण्भविष्यति।

---

पदादादित्यर्थः। मौञ्जीनाम बाह्लीकेष्विति। सामीपिकमिदमधिकरणम्। तेन बाह्लीकग्रामेभ्य इति ठञ्ञिठौ न भवतः। एवं तर्हीति। स चासाववधिस्तदवधिरिति कर्मधारय आश्रीयते इत्यर्थः॥ कस्यासाववधिरिति चेत् प्रत्यासत्त्या जनपदस्येति विज्ञायते। वुञेवेति। त्रिगर्त्तेषु भवः त्रैगर्तक इत्यत्रैवेत्यर्थः।

विभाषा। अन्ये कच्छादय इति। समुदाये कार्यं विधीयमानं केषु चिदप्यवयवेषु प्रवर्तमानं सावकाशमेवेति मन्यते। नहीति। सर्वएवावयवास्तत्र कार्यित्वेन निर्दिष्टा

सैषा युगन्धरार्था विभाषा ॥

कच्छादिभ्यश्च ॥ १३३ ॥ किमर्थं साल्वानां कच्छादिषु क्रियते । साल्वानांकच्छादिषुपाठोऽखिधानार्थः* । साल्वानां कच्छादिषु पाठः क्रियतेऽखिधानार्थः । अन्यथा स्याद् वुञ् मा भूदिति । नवापदा तिगोयवागूग्रहणमवधारणार्थम्* । न चैतत्प्रयोजनमस्ति । किं कारणम् । अपदातिगोयवागूग्रहणमवधारणार्थं भविष्यति । अपदातावेव साल्वात् । गोयवाग्वोरेव साल्वादिति ॥

गर्त्तोत्तरपदाच्छः ॥ १३७ ॥ गर्त्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् विप्रतिषिद्धम्* । गर्त्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् भवति पूर्वविप्रतिषेधेन । गर्त्तोत्तरपदाच्छो भवतीत्यस्यावकाशः । श्वाविद्गर्त्तः । श्वाविद्गर्त्तीयः । वुञोवकाशः । अङ्गा । आङ्गकः । इहोभयं प्राप्नोति । त्रैगर्तकः । वुञ् भवति पूर्वविप्रतिषेधेन । स तर्हिपूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । उक्तमेवावधिग्रहणस्य प्रयोजनम् । जनपदावधेर्युञेव यथा स्यात् । यदन्यत् प्राप्नोति तन्माभूदिति ॥

गहादिभ्यश्च ॥ १३८ ॥ गहादिषु पृथिवीमध्यस्य मध्यमभावः* । गहादिषु पृथिवीमध्यस्य मध्यमभावो वक्तव्यः । पृथिवीमध्येभवो मध्यमीयः । चरणसंबन्धेन निवासलक्षणोण्* । चरणसंबन्धेन

---

इति भावः । सैषेति । ननु युगन्धरशब्दादप्यवृद्धादपीति नित्ये वुञि सिद्धेऽन्तरेणापि विभाषाग्रहणं विकल्पो विज्ञास्यते । नैतदस्ति । युगन्धरान्नित्यो वुञ् । अवृद्धादित्यनेन तु विभाषेत्येवमपि विज्ञायते । तस्माद्विभाषाग्रहणं कर्तव्यमेव ॥

कच्छा । साल्वशब्दो गणे पठ्यते तस्य प्रत्याख्यानायाह । नवेति । जनपदतदवध्योरिति वुञि सिद्धे अपदातौ साल्वाद् गोयवाग्वोश्चेति वुञो नियमादन्यत्राण् भविष्यतीत्यर्थः । ननु वुञभावे छः प्राप्नोति नत्वणिति चिन्त्यमेतत् ॥

गर्तो । श्वाविद्गर्तीय इति।श्वानं विध्यतीति क्विप् । नहिवृतीति दीर्घः । श्वाविधां गर्त इति समासः ॥

गहा । मध्यो मध्यमं चाण् चरण इति गणपाठस्तं विशेषेऽवस्थापयितुमाह । गहादिष्विति । पृथिवीमध्यवाच्येव मध्यशब्दो ग्राह्यो न तु मध्यान्तरवाचीत्यर्थः । चरणसंबन्धेनेति । पृथिवीमध्यं निवास एषां चरणानामित्यर्थे माध्यमाश्चरणा इति भवतीत्य-

निवासलक्षणोऽण् वक्तव्यः। त्रयः प्राच्याः। त्रय औदीच्याः। त्रयो माध्यमाः। सर्वे निवासलक्षणाः॥

वृद्धादकेकान्तखोपधात्॥ १४१॥ ईकान्तादपीति वक्तव्यम्। इहापि यथा स्यात्। रौणीकीयः। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम्*। अकेकान्तग्रहणे कोपधग्रहणं कर्त्तव्यम्। किं प्रयोजनम्। सौसुकाद्यर्थम्। सौसुकीयः

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
चतुर्थाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्। पादश्चसमाप्तः॥

युष्मदस्मदोरन्यतरस्यां खञ्च॥ १॥ युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः*। युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः कर्त्तव्यः।युष्मदस्मदोरन्यतरस्यां छो भवति।युष्मदीयः।अस्मदीयः।ततः खञ् च। खञ् भवति युष्मदस्मदोरन्यतरस्याम्।यौष्माकीणः।आस्माकीनः।किमर्थो योगविभागः।संख्यातानुदेशप्रतिषेधार्थः। संख्यातानुदेशो माभूत्॥

---

र्थः। चरणाः कठादयः। निवासलक्षण इति। सोऽस्य निवास इत्यत्रार्थ इत्यर्थः।

वृद्धा। अकेकान्तग्रहण इति। अकेकान्तग्रहणमपनीय कोपधग्रहणं व्यापकं कर्तव्यमित्यर्थः॥　इति श्रीमहाभाष्यप्रदीपे चतुर्थस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्॥ पादश्च समाप्तः॥

युष्मदस्मदोरन्यतरस्यां खञ् च। त्यदादित्वाद्वृद्धत्वाच् छे प्राप्ते खञ् विधीयते। ततश्छस्य बाधे प्राप्ते चकारेण छोऽनुकृष्यते। एवं च खञ् छावन्यतरस्यां युष्मदस्मदोर्विधीयेते। तेन पक्षे यथाप्राप्तमण् भवति। तत्र खञ्छयोर्युष्मदस्मदोश्च संख्यासाम्याद्यथासंख्यं प्राप्नोति तन्निराकरणायाह। युष्मदस्मद्भ्यामिति। के चित्त्वाहुरेक एवानेन खञ् विधीयते चकारेण तु तस्य सहायता द्योत्यते। तत्र प्रकरणाच्छेति विज्ञायते। अन्यतरस्यांग्रहणेन चाणः प्रतिप्रसवः क्रियते। तत्र यद्येक एवापूर्वः खञ् विधीयते। यदि वा त्रयः खञ् छाणः सर्वथा नास्ति संख्यासाम्यमिति यथासंख्यनिरासाय न कर्तव्यो योगविभाग इति। अत्राहुः। चकारेण छस्यानुकर्षणं क्रियते। तेन यावदुक्तं खञ् छाविति तावत् खञ् चेति। ततश्च सिद्धोऽपि छप्रत्ययोऽनेनैवाबाधाय चकारेण समुच्चयार्थे नानुकृष्य विधीयत इति स्यादेव यथासंख्यमन्यतरस्यांग्रहणेन तु खञ् छयोः पक्षेऽनुत्पत्तिः प्रतिपाद्यते। तदनुत्पत्तौ चापवादाभावात्सामान्येनाण् भवतीति कुतः प्रत्ययत्रयस्यानेन विधानम्॥

तस्मिन्नणि च युष्माकास्माकौ ॥ २ ॥ आदेशविधाने च * । किम् । योगविभागः कर्तव्यः । तस्मिन्नणि युष्माकास्माकौ भवतः । यौष्माकः । आस्माकः । ततः खञि । खञि च युष्माकास्माकौ भवतः । यौष्माकीणः। आस्माकीनः । किमर्थो योगविभागः क्रियते । संख्यातानुदेशप्रतिषेधार्थ इत्येव । तत्र पुनः खञ्ग्रहणम्* । तत्र पुनः खञ्ग्रहणं कर्त्तव्यम्। न ह्यन्तरेण खञ्ग्रहणं योगाङ्गमुपजायते। तत्तर्हि वक्तव्यम् । न वक्तव्यम्। एवं वक्ष्यामि तस्मिन्खञि युष्माकास्माकौ भवतः। ततोणि च। अणि च युष्माकास्माकौ भवत इति ॥

तवकममकावेकवचने ॥ ३ ॥ एकार्थग्रहणं च *। एकार्थग्रहणं च कर्तव्यम्। एकार्थयोर्युष्मदस्मदोरिति वक्तव्यम् । किमर्थम् । न एकवचनइत्येव सिद्धम् । न सिध्यति । किं कारणम् । एकवचनाभावात् । एकवचन इत्युच्यते न चात्रैकवचनं पश्यामः । यदि पुनरेकवचनपरत्वेनाण्खञौ विशिष्येयाताम् । नैवं शक्यमिह हि प्रसज्येयाताम् । युष्माकं छात्रो यौष्माकीणः । अस्माकं छात्र आस्माकीनः । इह च न स्याताम् । तव छात्रः तावकीनः । मामकीनः । तस्मान्नैवं शक्यम् । न चेदेवमेवार्थग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । नेदं पारिभाषिकस्यैकवचनस्य ग्रहणम् । किं तर्ह्यन्वर्थग्रहणम् । उच्यते

---

तस्मिन् । तत्र पुनरिति । खञ्यणि चेति वक्तव्यमित्यर्थः । अन्यथा पूर्वसूत्रे खञ् चेति चकारेण छोऽनुकृष्ट इति स एवानन्तर्यात्तस्मिन्नित्यनेन परामृश्येत । एवं वक्ष्यामीति । एवं व्याख्यास्यामीत्यर्थः । तस्मिन्नित्यनेन पूर्वेण साक्षाद्विहितः खञ् परामृश्यते न तु चकारानुकृष्टश्छः । चशब्दो हि समुच्चयस्य द्योतकः प्रकृतमनुकर्षति । तत्र किं प्रकृतं स्यादिति विचारप्रवृत्तौ विलम्बिताच्छस्य प्रतीतिरव्यवहिता तु खञ इति तस्यैव सर्वनाम्ना परामर्शो युक्त इति भावः । अथ वा पूर्वसूत्रे योगविभागस्य व्याख्यातत्वान्नैव चकारेण छस्यानुकर्षणमिति कुतस्तस्यानन्तर्यं यतस्तस्य परामर्शः स्यात् ॥

तवक । कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययादिति न्यायात् प्रत्ययस्यैकवचनस्य ग्रहणं स्यात् तस्य च नित्यत्वाल्लुक्प्रवर्त्तनात् प्रत्ययलक्षणप्रतिषेधाच्च एकवचनपरता युष्मदस्मदोर्न संभवतीति मत्वाह । एकार्थग्रहणं चेति । यदि पुनरिति । तत्रायं तावक इत्यादि सिध्यतीति मन्यते । नैवं शक्यमिति । अव्याप्त्यतिव्याप्तिदोषद्वयदुष्टत्वादिति भावः । अन्वर्थग्रहणमिति । उभयगतिरिह शास्त्रे संभवति । तत्र विषयभेदेन क्व चित्कृ-

वचनम् । एकस्यार्थस्य वचनमिति ॥

अर्द्धाद्यत् ॥ ४ ॥ अर्द्धाद्यद्विधाने सपूर्वाट्ठञ् * । अर्द्धाद्यद्विधाने सपूर्वाट्ठञ् वक्तव्यः । बालेयार्द्धिकः । गौतमार्द्धिकः । दिक्पूर्वपदाद्य-च्च * । दिक्पूर्वपदाद्यच्च ठञ्च वक्तव्यः । पूर्वार्द्ध्यः । पौर्वार्द्धिकः । दक्षि-णार्द्ध्यः । दाक्षिणार्द्धिकः । उत्तरार्द्ध्यः । औत्तरार्द्धिकः । किमर्थमिद-मुच्यते । यथान्यास एव दिक्पूर्वपदादर्द्धशब्दादुभयमुच्यते । इदम-प्यपूर्वं क्रियते । अर्द्धाद्यद्विधाने सपूर्वपदाट्ठञिति । तदुद्वेष्यं विजा-नीयात् सर्वमेव विकल्पतइति । तथाचार्यः सुहृद्भूत्वान्वाचष्टे दि-क्पूर्वपदार्द्धाद्यथान्यासमेव भवतीति ॥

श्वसस्तुट् च ॥ १५ ॥ श्वसस्तुट्यादेशानुपपत्तिरनादित्वात् * । श्वसस्तुटि कृते आदेशानुपपत्तिः । किं कारणम् । अनादित्वात् । तु-टि कृते अनादित्वादादेशो न प्राप्नोति । एवं तर्हि पूर्वान्तः करि-ष्यते । पूर्वान्ते कप्रतिषेधः * । यदि पूर्वान्तः । कादेशस्य प्रतिषेधो वक्तव्यः । शौवस्तिकम् । तान्तादिति कादेशः प्राप्नोति । अस्तु तर्हि परादिः । ननु चोक्तं श्वसस्तुट्यादेशानुपपत्तिरनादित्वादिति । सिद्धं त्वादिष्टस्य तुड्वचनात् * । सिद्धमेतत् । कथम् । तुट् चातिदिष्टस्येति वक्तव्यम् । संनियोगाद्वा * । अथ वा येन संनियोगः । क्रियते तुट् च । किं च । यच्चान्यत् प्राप्नोति । किं चान्यत् प्राप्नोति । आदेशः ॥

---

त्रिमस्य ग्रहणं क्वचिदकृत्रिमस्य क्वचिदुभयोः । अथ वचनात् प्रत्ययलक्षणं भवतीति क-स्मान्नाश्रितम् । उच्यते । अन्वर्थग्रहणे सत्यव्यवहिताप्रतिपत्तिर्भवतीति तदेवाश्रितम् । ए-कवचने इति च प्रथमादिवचनान्तम् । युष्मदस्मदोः समानाधिकरणं विशेषणम् । एक-स्येति । वाच्यवाचकसंबन्धे षष्ठी । एकार्थाभिधानाय ये उच्येते युष्मदस्मदीतयोरादेशा-वित्यर्थः ॥

श्वसस्तुट् च । अनादित्वादिति । यद्यपि ठस्येक इत्यत्रादिग्रहणं नास्ति । तथाप्य-ङ्गस्यानिमित्तं यष्ठस्तस्येक इति सूत्रार्थाश्रयणाद् यथा कर्मणि घटोऽठजित्यठजङ्गस्य नि-मित्तं न ठ इति कर्मठ इत्यत्रेकादेशो न भवति । एवं तुटि कृते समुदायोऽङ्गसंज्ञानिमित्तं न ठमात्रमिति कादेशो न प्राप्नोतीति भावः । शौवस्तिकमिति । द्वारादीनां चेति वृद्धि-प्रतिषेध ऐजागमश्च । संनियोग इति । तेनागमादेशौ सह भवतः ॥

सर्वत्राण्च तलोपश्च ॥ २२ ॥ हेमन्तस्याणि तलोपवचनानर्थक्यं हेम्नः प्रकृत्यन्तरत्वात् * । हेमन्तस्याणि तलोपवचनमनर्थकम् । किं कारणम् । हेम्नः प्रकृत्यन्तरं हेमन् शब्दः । आतश्च प्रकृत्यन्तरम् । एवं ह्याह । हेमन् हेमन्नागनीगन्तिकर्णौ तस्मादेतौ हेमन्नशुष्यत इति । अलोपदर्शनाच्च *। अलोपः खल्वपि दृश्यते । पङ्क्तिर्हैमन्तीति । अपर आह । हेमन्तस्याण्वचनमपि च तलोपवचनमनर्थकं हेम्नः प्रकृत्यन्तरत्वात् । हेमन्तस्याण्वचनमपि च तलोपवचनमनर्थकम् । किं कारणम् । हेम्नः प्रकृत्यन्तरत्वात् । प्रकृत्यन्तरं हेमन्शब्दः । अलोपदर्शनाच्चेत्येव । तत्र ऋतुभ्य इत्येव सिद्धम् ॥

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २३ ॥ चिरपरुत्परारिभ्यस्त्नः *। चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । चिरत्नम् । परुत्नम् । परारित्नम्। अग्रादिपश्चाड्डिमच् *। अग्रादिपश्चाड् डिमज्वक्तव्यः । अग्रिमम् । आदिमम् । पश्चिमम् । प्रागस्य च्छन्दसि गलोपश्च *। त्नश्च वक्तव्यः । प्रत्नमात्मानम् । अन्ताच्च* । अन्ताच्चेति वक्तव्यम् । अन्तिमः । अथ सायचिरयोः किं निपात्यते । सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियुक्तम् * । सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियोगेन निपात्यते । सायंतनम् । चिरंतनम् । नैतदस्ति प्रयोजनम् । म-

---

सर्वत्र । हेम्न इति । हेमन्तपर्यायो हेमन्छब्दोऽप्यस्ति तस्माद्दत्वणि कृते हैमनमिति भविष्यति नार्थ स्तलोपविधानेन सर्वत्राणित्येव वक्तव्यम् । भाषायां चैतद्वृत्तिविषय एव हेमन्शब्द ऋतुवाचीत्यस्वपदविग्रहः कर्तव्यः । हेमन्ते साधु हैमनमिति । अनीति प्रकृतिभावाट्टिलोपाभावः । हेमन् हेमन्निति । सप्तम्येकवचनस्य छन्दसि सुपां सुलुगिति लुक् । न ङिसंबुध्योरिति नलोपप्रतिषेधः । अपर आहेति । सूत्रस्यैव प्रत्याख्यानम् । तथा हि । छन्दस्येवरूपत्रयमिष्टम् । हैमनं हैमन्तिकं हैमन्तमिति । तत्र हेमन्शब्दस्य ऋत्वणि हैमनमिति भवति । हेमन्ताच्चेत्यनेन ठञि हैमन्तिकमिति । सर्वे विधयः छन्दसि विकल्प्यन्त इति हेमन्तशब्दादृत्वणि हैमन्तमिति भवति । भाषायां तु हेमन्हेमन्तशब्दयोर्ऋत्वणि हैमनं हैमन्तमिति रूपद्वयमिष्टं सिध्यतीति नार्थः सूत्रेणेत्यर्थः ॥

सायंचिरंप्राह्णेप्रगे । चिरपरुदिति । ट्युट्युल्भ्यां त्नस्य समावेश इष्यते न तु ट्युट्युलोर्बाध इत्याहुः । सायचिरयोरिति । स्यतेर्घञि सायशब्दस्य चिरशब्दस्य च मन्ता न-लि

कारान्तः सायंशब्दः। यदि मकारान्तः। कथं सायाह्नः। सायमोः ह्ने मलोपः *। सायमोह्ने मलोपो वक्तव्यः। कथं सायतरे। तरे चेति वक्तव्यम्। मथं सासंसाये। वा सप्तम्यां चेति वक्तव्यम्। अथ प्राह्णप्रगयोः किं निपात्यते। प्राह्णप्रगयोरेदन्तत्वम् *। प्राह्णप्रगयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। नैतदस्ति प्रयोजनम्। सप्तम्या अलुकापि सिद्धम्। भवेत्सिद्धं यदा सप्तमी। यदा त्वन्या विभक्तयः तदा न सिध्यति। तुडुक्तम् *। किमुक्तम्। तुड्यादेशानुपपत्तिरनादित्वादिति। तुटि कृते ऽनादित्वादादेशो न प्राप्नोति। एवं तर्हि पूर्वान्तः करिष्यते। पूर्वान्ते विसर्जनीयः *। यदि पूर्वान्तः विसर्जनीयोवक्तव्यः। प्रातस्तमंपुनस्तनम्। परादौ पुनः सति खरवसानयोर्विसर्जनीयइति विसर्जनीयः सिद्धो भवति। अस्तु तर्हि परादिः। ननु चोक्तं तुटि कृते ऽनादित्वादादेशो न प्राप्नोतीति। सिद्धं त्वादिष्टस्य तुड्वचनात् *। सिद्धमेतत्। कथम्। आदिष्टस्य तुड्वचनात्। तुडादिष्टस्येति वक्तव्यम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। चसंनियोगाद्वा *। अथ वा चेन संनियोगः करिष्यते। तुट् च। किंच। यच्चान्यत्प्राप्नोति। किं चान्यत् प्राप्नोति। आदेशः॥

विभाषा पूर्वाह्णापराह्णाभ्याम्॥ २४॥ पूर्वाह्णापराह्णाभ्यां सुब-

---

पात्यते इत्यर्थः। मकारान्त इति। अनेन सायंशब्दः प्रत्याख्यायते। अव्ययत्वादेव टुग्टुलोः सिद्धत्वाच्चिरशब्दस्यैव तु मान्तत्वं निपात्यते। सायशब्दस्तु घञन्तोवसानमात्रवाची न तु कालविशेषवाचीति तस्येह ग्रहणमयुक्तमिति भावः। सायमोह्न इति। अह्नोह्न एतेभ्य इत्यह्नादेशष्टजन्तो निर्दिष्टः। संख्याविसायपूर्वस्याह्नस्येति ज्ञापकादेकदेशिसमासः। सायतर इति। तरपि रूपमेतत्। सा सप्तम्यामिति। मलोपे च कृते साय इति भाष्यकारवचनप्रामाण्यादव्ययसंज्ञाभावः। अलुकेति। घकालतनेषु कालनाम्न इत्यनेन। यदा त्वन्या इति। प्राह्णः सोढोस्य प्राह्णेतन इत्यादौ। अनादित्वादिति। अङ्गसंज्ञानिमित्तस्य योरनादेश उच्यमानो मृत्युशब्द इव तुटि कृतत्युशब्दोऽङ्गनिमित्तं न तु युशब्द इति न स्यादित्यर्थः। यदीति। पदान्तस्य रेफस्य विधीयमानस्तुकि कृते अपदान्तत्वान्न प्राप्नोतीत्यर्थः॥

विभाषा। सुबन्तवचनमिति। ङ्याप्प्रातिपदिकाधिकारात् प्रातिपदिकस्यै तद्धितोत्पत्तौ प्रकृतित्वेन भाव्यं न तु सुबन्तस्येति भावः। दोषातनमिति। दोषाशब्दस्यापि का-

न्तवचनं सप्तमीश्रवणार्थम् * । पूर्वाह्णापराह्णाभ्यां सुबन्ताभ्यां तद्धितो भवतीति वक्तव्यम् । किं प्रयोजनम् । सप्तमीश्रवणार्थम् । सप्तम्याः श्रवणं यथा स्यात् । पूर्वाह्णेतनम् । अपराह्णेतनम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति भवत्यत्र सप्तमीति । यदयं घकालतनेषु कालनाम्न इति यत्सप्तम्या अलुकं शास्ति । अलुग्वचनं ज्ञापकमिति चेदव्ययात् सप्तमीप्रसङ्गः *। अलुग्वचनं ज्ञापकमिति चेदव्ययात् सप्तमी प्राप्नोति । दोषातनं दिवातनम् । अस्त्वव्ययादिति लुग्भविष्यति । इहापि तर्हि लुक्प्राप्नोति । पूर्वाह्णेतनम् । अपराह्णेतनम् अलुगत्र लुकं बाधिष्यते । इहापि तर्हि बाधेत । दोषातनम् । दिवातनम् । समानाश्रयो लुगलुका बाध्यते । कश्च समानाश्रयः । यश्च प्रत्ययाश्रयः । अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति । न सिध्यति । इह हि सति प्रत्यये लुका भवितव्यम् । तत्र च प्रत्यय एव नास्ति कुतो लुग्भविष्यति । सैषा ज्ञापकेनासती विभक्तिराकृष्यते । सा यथैवेह बाधिका भवति । पूर्वाह्णेतनम् । अपराह्णेतनमिति । एवमिहापि स्यात् । दोषातनम् । दिवातनमिति । एवं तर्हि न ब्रूमो ऽलुग्वचनं ज्ञापकं भवत्यत्र सप्तमीति । किं तर्हि भवति सुबन्तादुत्पत्तिरिति किं पुनर्ज्ञाप्यमेतद् यावता समर्थानां प्रथमाद्वेति वर्तते । सामर्थ्यं च सुबन्तेन । ज्ञाप्यमित्याह । कथम् । ङ्याप्प्रातिपदिकादित्यपि वर्तते । तत्र कुत एतत् सुबन्तात्समर्थादुत्पत्तिर्भविष्यति । न पुनर्ङ्याप्प्रातिपदिकादिति । कथं यत्तदुक्तं वृद्धाच्छा-

---

त्ववांचित्वादलुगनुमितायाः सप्तम्याः श्रवणप्रसङ्गः । समानाश्रय इति । सुपोधातुप्रातिपदिकयोरित्ययं लुक् तद्धितोत्पत्तिनिमित्तप्रातिपदिकसंज्ञकसमुदायान्तर्वर्त्तिसुप्स्थानिको ऽलुकस्तद्धितविशेषनिमित्तस्य समानाश्रयः । अत्र चेति । अव्ययादाप्सुप इत्ययं लुग् अव्ययमात्रापेक्षत्वादन्तरङ्गत्वाद्भवतीत्यर्थः । नसिध्यतीति । प्रातिपदिकात् प्रत्ययोत्पत्तिरलुग्विधानात्तु ज्ञापकाद्विभक्तिरिति पक्षः प्रकान्तस्तत्र प्रत्यय उत्पन्ने विभक्त्या भाव्यं न तु पूर्वं तत्रश्चाव्ययादाप्सुप इत्ययमपि लुक्तद्धितोत्पत्त्युत्तरकालभाविसुप्स्थानिकत्वादलुकः समानाश्रयत्वाद्बाध्यत इत्यर्थः । एतच्च हलदन्तादित्यस्यानुवृत्तिमनपेक्ष्योच्यते । तत्र च प्रत्यय इति । प्राक्तद्धितोत्पत्तेः सुप्संज्ञकः प्रत्ययो नास्तीत्यर्थः । कथं यदिति । यदयं लु-

वर्णस्वरद्व्यज्लक्षणप्रत्ययविधौ तत्संप्रत्ययार्थमिति। समर्थस्य यद्वृद्धं ङ्याप्प्रातिपदिकादिकमित्येवमेतद्विज्ञायते। यद्येतज्ज्ञाप्यते। कथं द्विपद आगतं द्विपाद्रूप्यम् प्रष्ठौह आगतं प्रष्ठवाड्रूप्यम्। कीलालप आगतं कीलालपारूप्यम्। पपुष आगतं पपिवद्रूप्यम्। पद्भाव ऊठ् आकारलोपः प्रसारणमित्येते विधयः प्राप्नुवन्ति। लुकि कृते न भविष्यन्ति। इह तर्हि सामसु साधु सामन्यः वेमन्यः। नलोपः प्रातिपदिकान्तस्येति नलोपः प्राप्नोति। लुकि कृते भत्वान्न भविष्यति। इदमिह संप्रधार्यं लुक् क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वान्नलोपः। एवं तर्हीदमिह संप्रधार्यं नलोपः क्रियतां तद्धितोत्पत्तिरिति। किमत्र कर्तव्यम्। परत्वान्नलोपः। असिद्धो नलोपः। तस्यासिद्धत्वात्तद्धितोत्पत्तिर्भविष्यति। परिगणितेषु कार्येषु नलोपोसिद्धः। न चेदं तत्र परिगण्यते। इदमपि तत्र परिगण्यते। कथम्। सुब्विधिरिति सर्वं विभक्त्यन्तः समासः। सुपो विधिः सुब्विधिः। सुबन्ताद्विधिः सुब्विधिरिति॥

---

विधानेन समर्थस्य प्रकृतित्वमनुमीयते तदा ङ्याप्प्रातिपदिकाधिकारस्य वृद्धादिविशेषणत्वेन ङ्याप्प्रातिपदिकस्य प्रकृतित्वप्रतिपादनप्रयोजनं यदुक्तं तत्कथं न विरुध्येतेति प्रश्नः परिहारमाह। समर्थस्येति। समर्थस्य विभक्त्यन्तस्य प्रत्ययप्रकृतित्वेनाश्रितस्यावयवभूतं ङ्याप् प्रातिपदिकं वृद्धादिति चेद्भवति ततः समर्थादेव प्रत्ययो भवतीति नास्ति विरोध इत्यर्थः। कथं द्विपद इति। विभक्त्यन्तात्प्रत्ययोत्पत्तावाश्रीयमाणायां विभक्तिनिमित्तानि कार्याण्यन्तरङ्गत्वात् प्राप्नुवन्तीति प्रश्नः। सर्वत्र हेतुमनुष्येभ्योन्यतरस्यां रूप्य इति रूप्यप्रत्ययः। लुकि कृतइति कृताकृतप्रसङ्गित्वान्नित्यत्वादिति भावः। वर्णाश्रयत्वाद् भसंज्ञायाः प्रत्ययलक्षणत्वाभावात्पद्भावादिकमनित्यम्। इह तर्हीति। नलोपस्य प्रत्ययलक्षणेन प्राप्त्या नित्यत्वं मन्यते। परत्वादिति। द्वावपि लुङ्नलोपौ नित्यौ यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति नलोपोपि नित्य इति भावः। एतच्चान्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधतइत्यनाश्रित्योक्तम्। एतदेवत्वाश्रयणीयमन्यथान्तरङ्गत्वात्पद्भावादयो नित्यमपि लुकं बाधेरन्। तदुक्तम्। परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति। सुबन्ताद्विधिरिति। ततश्च तद्धितोपि सुब्विधिरिति तत्र कर्तव्ये नलोपस्यासिद्धत्वादप्रवृत्तिः। तद्धिते तु कृते लुकोपि सुब्विधित्वात्तत्र नलोपस्यासिद्धत्वाल्लुक् प्रवर्तते। ततो भत्वान्नलोपाभावः॥

तत्र जातः ॥ २५ ॥ किमर्थं जातादयोऽर्था निर्दिश्यन्ते । जातादिष्वर्थेषु घादयो यथा स्युः स्वार्थे मा भूवन्निति । नैतदस्ति प्रयोजनम् । शेष इत्यनुवर्तते । तेन स्वार्थे न भविष्यन्ति । अत उत्तरं पठति । तत्र जातादिषु वचनं नियमार्थम् ॥ नियमार्थोऽयमारम्भः । जातादिष्वेव घादयो यथा स्युरिह मा भूवन् । तत्रास्ते तत्र शेत इति । यदि नियमः क्रियते । दार्षदाः सक्तवः । औलूखलो यावक इति न सिध्यति । संस्कृतमित्येवं भविष्यति । भवेत् । सिद्धं दार्षदाः सक्तव इति । इदं तु न सिध्यति । औलूखलो यावक इति संस्कृतं नाम तद्भवति यत्तत एवापकृष्याभ्यवह्रियते । न च यावक उलूखलादेवापकृष्याभ्यवह्रियते । अवश्यं रन्धनादीनि प्रतीक्ष्याणि । तस्मान्नार्थोऽनेन नियमेन । कस्मान्न भवति तत्रास्ते तत्र शेत इति । अनभिधानात् । तच्चावश्यमनभिधानमाश्रयितव्यम् क्रियमाणेष्वप्यर्थनिर्देशेषु यत्र जातादिषूत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं न भवति तत्र प्रत्ययोत्पत्तिर्न भवति । तद्यथा । अङ्गुल्या खनति वृक्षमूलादागत इति । न तर्हीदानीं जातादयोऽर्था निर्देष्टव्याः । निर्देष्टव्याश्च । किं प्रयोजनम् । अपवादविधानार्थम् । प्रावृषष्ठप् । प्रावृषि जातः प्रावृषिकः । क्व मा भूत् । प्रावृषि भवाः प्रावृषेण्या बलाहका इति । यानि त्वेतानि निरपवादानि अर्थादेशनानि तानि शक्यान्यकर्तुम् । कृतलब्धक्रीतकुशलाः स्रौघ्नो देवदत्त इति ॥

---

तत्र । जातादिषु घादीनामपेक्षामाश्रित्य शेषग्रहणं प्रत्याख्यातम् । इह तु शेष इत्यस्य लक्षणत्वमधिकारत्वं चाश्रित्य जाताद्यर्थाक्षेपः । किमर्थमिति । प्रत्ययार्थवशेनाभिधानसामर्थ्ये न च समर्थविभक्तिर्लप्स्यतइति तन्निर्देशोपि न कर्तव्य इति भावः । तेन स्वार्थ इति । ननु स्वार्थोपि प्रत्ययविधावनुपयोगाच्छेषइति कुतस्तत्र नस्युः । उच्यते । अन्तरेणापि शेषाधिकारं चातुर्थपर्यन्तापत्याद्यर्थनिवृत्त्या स्वार्थे प्रादिषु प्राप्तेषु शेषाधिकारः स्वार्थव्यतिरिक्तार्थपरिग्रहार्थः । तत्र आस्ते इति । स्रुघ्नआस्त इत्यादावपि शेष इत्यस्य लक्षणत्वात्प्रत्ययप्रसङ्गः । संस्कृतमिति । उपयोगफलाहि क्रियासंस्कार इति मन्यते । तच्चावश्यमिति । अर्थनिर्देशकरणवादिनाप्यनिष्टवृत्तये ऽवश्यमाश्रयितव्यमनभिधानमित्यर्थः । अपवादविधानार्थमिति । असंकरेण विशिष्टएवार्थेपवादा यथा स्युरित्येवमर्था अर्थनिर्देशा इत्यर्थः ॥

अविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ३४ ॥ लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् *। लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानं कर्त्तव्यम्। चित्रायां जाता चित्रा स्त्री रेवत्यां जाता रेवती स्त्री। रोहिणी स्त्री। फल्गुन्यषाढाभ्यां टानौ *। फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ। फल्गुनी आषाढा उपदधाति। अविष्ठाषाढाभ्यां छण् *। अविष्ठाषाढाभ्यां छण्वक्तव्यः। आविष्ठीयाः। आषाढीयाः। तत्तर्हि वक्तव्यम्। न वा नक्षत्रेभ्यो बहुलं लुग्वचनात् *। न वा वक्तव्यम्। किं कारणम्। नक्षत्रेभ्यो बहुलं लुग्वचनात्। नक्षत्रेभ्यो बहुलं लुगित्येवमत्र लुग् भविष्यति ॥

प्रायभवः ॥ ३९ ॥ प्रायभवग्रहणमनर्थकं तत्रभवेन कृतत्वात् *। प्रायभवग्रहणमनर्थकम्। किं कारणम्। तत्रभवेन कृतत्वात्। यो हि राष्ट्रे प्रायेण भवति तत्र भवोसौ भवति। तत्र तत्रभव इत्येव सिद्धम्। न सिध्यति। अनित्यभवः प्रायभवः। नित्यभवस्तत्र भवः। अनित्यभवः प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् *। यद्भवानमुक्तसंशयं तत्रभवःउदाहरणं न्याय्यं मन्यते। स्रौघ्नो देवदत्त इति। तेनैतत्तुल्यम्। सोप्यवश्यमुदग्देशादीन्यभिनिष्क्रामति। अथैतद्भवान् प्रायभवे उदाहरणं न्याय्यं मन्यते। तत्रभवे किमुदाहरणम्। यत्तत्र नित्यं भवति स्रौघ्नाः प्राकारा इति। एवं तर्हि तत्रभव इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते। स यथैव तस्मिन्दृष्टापचारे अङ्गुलीयमिति भवति एवं प्रायभवेपि भविष्यति। इदं तर्हि प्रयोजनम्। प्रायभ इति प्रकृत्य उपजानूपकर्णोपनीवेष्ठक् वक्ष्यति स प्रायभवे यथा स्या-

---

अविष्ठा। रेवतीरोहिणीति। नक्षत्राणो लुकि कृते लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक्। ततो गौरादिषु पिप्पल्यादयश्चेति पाठादादिशब्दस्य प्रकारार्थत्वात् ङीष् प्रत्ययः। नवेति। लुक एव प्रत्ययास्तूपसंख्येयाः॥

प्राय। तत्रभवेनेति। भवे सामान्ये प्रायभवस्यापि विशेषस्यान्तर्भावादिति भावः। अनित्यभव इति। अर्थभेदमनेनाचष्टे। यस्तत्र कदा चिद्भवति कदा चिन्न भवति स प्रायभवः। यस्य तु नियत आधाराधेयभावः स तत्रभव इति भावः। एतन्निराकरोति। सु-

तत्रभवे मा भूत् । उपजानुभवं गच्छति । अथेदानीं तत्रभव इति प्रकृत्य शरीरावयवाद्यद्विधीयते सोऽत्र कस्मान्न भवति । अनभिधाना-त् । यथैव तर्ह्यनभिधानाद्यन्न भवति । एवं ठगपि न भविष्यति ॥

कोशाड्ढञ् ॥४२॥ विकारे कोशाड्ढञ् * । विकारेकोशाड्ढञ्व-क्तव्यः । कोशस्य विकारः कौशेयम् । संभूते ह्यर्थानुपपत्तिः * । सं-भूतइत्युच्यमानेऽर्थस्यानुपपत्तिः स्यात् । न ह्यदः कोशे संभवति । किं तर्हि । कोशस्यादो विकारः । यदि विकार इत्युच्यते भस्मन्यपि प्राप्नोति । भस्मापि कोशविकारः । अथ संभूतइत्युच्यमाने क्रिमौ कस्मान्न भवति । क्रिमिरपि कोशे संभवति । अनभिधानात् । यथैव तर्हि क्रिमावनभि-धानान्न भवत्येवं भस्मन्यपि न भवति । अर्थश्चोपपन्नोभवति ॥

कलाप्यश्वत्थयवबुसाद्वुन् ॥ ४८ ॥ अयुक्तोयं निर्देशः । का-लादिति वर्तते । न च कलापीनामकालोऽस्ति । नैष दोषः । साहचर्या-त्ताच्छब्द्यं भविष्यति । कलापिसहचरितः कालः कलापी काल इति ॥

तत्रभवः ॥५३॥ तत्रेति वर्तमाने पुनस्तत्रग्रहणं किमर्थम् । तत्र प्रकरणे पुनस्तत्रवचनं कालनिवृत्त्यर्थम् * । तत्रप्रकरणेपुनस्तत्रवचनं कालाधिकारनिनिवृत्त्यर्थम् । कालाधिकारो निवर्त्यते । न हि काको

---

क्रसंग्रयेनेति । अथेति । जानुसमीपस्थशरीरावयववाच्युपजानुशब्द इति भावः । एवं ठ-गपीति । तत्रभवाधिकारे ठग्विधीयमानः प्रायभव एव भविष्यतीत्यर्थः ॥

को.ग्रा । विकारे इति । तस्य विकार इत्यत्र प्रकरणे सूत्रमिदं कर्तव्यम् । एण्या ढञि-ति कृत्वा कोशाड्ढिति कर्तव्यम् । अर्थानुपपत्तिरिति । कौशेयशब्दस्य लौकिको योऽर्थः सू-त्रवस्त्रलक्षणः स एवं नोपपद्यते लौकिकोर्थो न संगृहीतः स्यादित्यर्थः । नह्यद इति । कौशेयशब्दाभिधेयं वस्त्रसूत्रलक्षणं कोशेन संभवतीत्यर्थः । ननु कोशस्य वस्त्रकारण-त्वात् कार्यस्य चकारेण संभवात् कथमनुपपत्तिः । नैष दोषः । लोकप्रसिद्धार्थबाध ए-वं कृतः स्याद् नहि कार्यावस्थायां लोकः कार्यकारणयोः संभवक्रियापेक्षमेवाधाराधेय-भावमधिगच्छति; किन्तर्हि प्रकृतिविकारभावम् । अर्थश्चेति । लौकिकोर्थो विकारे प्र-त्ययविधानेन शास्त्रेणानुसृतत्वाद्युक्तो भवतीत्यर्थः ॥

कलाप्य । कलापिसहचरित इति । यस्मिन् काले मयूराः कलापिनो भवन्ति स कालापीत्यर्थः ॥

तत्र भवः । नहि काक इति । यथा काकवाशितस्य कालाधिकारनिवृत्तिर्नाभिधेया

वाध्यत इत्येवाधिकारा निवर्त्तन्ते । कोवाभिसंबन्धः यत्तत्रग्रहणं कालाधिकारं निवर्तयेत् । एषोभिसंबन्धः कालाभिसंबन्धं हि तत्रग्रहणमनुवर्तते । तत्रग्रहणं च तत्रग्रहणस्य निवर्त्तकं भवति । तस्मिंश्च निवर्त्तमाने कालाधिकारोपि निवर्त्तते ॥

गम्भीराञ्ञ्यः ॥ ५८ ॥ अव्ययीभावाच्च ॥ ५९ ॥ ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् *। ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानं कर्तव्यम् । पारिमुख्यम् । पार्यौष्ठ्यम् । अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधः *। अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधो वक्तव्यः । औपकूलः । औपशालः ॥

अन्तः पूर्वपदाट्ठञ् ॥ ६० ॥ अत्यल्पमिदमुच्यते । समानस्य तदादेश्च ॥ समानस्य सामानिकः । तदादेः । सामानग्रामिकः । सामानदेशिकः । अध्यात्मादिषु चेष्यते । आध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम् । ऊर्द्ध्वंदमाच्च देहाच्च ॥ ऊर्द्ध्वंदमाच्च देहाच्च ठञ् वक्तव्यः । और्द्ध्वदमिकम् । और्द्ध्वदेहिकम् । लोकोत्तरपदस्य च ॥ लोकोत्तरपदस्य च ठञ् वक्तव्यः । ऐहलौकिकम् । पारलौकिकम् । मुखपार्श्वतसोरीयः ॥ मुखपार्श्वत इत्येताभ्यां तसन्ताभ्यामीयप्रत्ययो वक्तव्यः । मुखतीयः । पार्श्वतीयः । कुग्जनस्य परस्य च ॥ ईयो वक्तव्यः । कुगागमः । जनकीयः । परकीयः । ईयः कार्योथ मध्यस्य । मध्यीयः । मण्मीयौ प्रत्ययौ तथा ॥ मण्मीयौ चापि प्रत्ययौ वक्तव्यौ माध्यमः । मध्यमीयः । मध्यो मध्यं दिनण् चास्मात् ॥ मध्यशब्दोयं

---

तथा तत्रशब्दस्यापीत्यर्थः । तत्रग्रहणं चेति । सप्तम्यर्थमात्रप्रतिपत्तिप्रयोजनम् तत्रग्रहणं कालसम्बद्धस्य विशेषफलस्य तत्रग्रहणस्य निवृत्तिविरोधात् करोतीत्यर्थः ॥

गम्भीराञ्ञ्यः । ञ्यप्रकरण इति । अव्ययीभावाच्चेत्येतदतिव्यापकत्वादकृत्वा परिमुखादिभ्य एव ञ्यो विधेयः गणे चाव्ययीभावकार्ययुक्तानि परिमुखादीनि पठितव्यानि न तु प्रातिपदिकान्येव । तेन तेषां बहुव्रीहितत्पुरुषाणां ग्रहणं न भविष्यतीति भावः । अथ सूत्रं क्रियते तदातिव्याप्तिपरिहारार्थेदं वक्तव्यमित्याह । अव्ययीभावादिति ॥

अन्तः । ऊर्द्ध्वंदमाच्चेति । दम उत्तरपदे ठञ्संनियोगेनोर्द्ध्वशब्दस्य मकारान्तत्वं निपात्यते । ऐहलौकिकमिति । अनुशतिकादित्वादुभयपदवृद्धिः । मुखतीयमिति । अव्ययानां भमात्रे टिलोपः । मध्यमीय इति । गहादिषु मध्यो मध्यमं चाण् चरण इति यत्न-

मध्यंभावमापद्यते दिनण् चास्मात्प्रत्ययो भवतीति वक्तव्यम् । माध्यंदिन उपद्यायति । स्थाम्नो लुगजिनात्तथा ।। लुक्स्थाम्नो वक्तव्यः। अश्वत्थामा । अजिनात्तथा । अजिनान्ताच्च लुग्वक्तव्यः । कृष्णाजिनः । उष्ट्राजिनः । सिंहाजिनः । व्याघ्राजिनः। बाह्वो दैव्यः पाञ्चजन्योथ गम्भीराञ्ञ्य इष्यते ॥

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः।। ६६ ।। किमर्थं भवव्याख्यानयोर्युगपदधिकारः क्रियते । भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः * । भवव्याख्यानयोयुगपदधिकारः क्रियते । अपवादविधानार्थः । युगपदपवादान् वक्ष्यामीति। किमुच्यते ऽपवादविधानार्थं इति न पुनर्निर्देशार्थोऽपि स्यात्। कृतनिर्देशौ हि तावर्थौ। एकस्तत्र भव इति । अपरस्तस्येदमिति । अथ व्याख्यातव्यनाम्नो ग्रहणं किमर्थम् । तत्र व्याख्यातव्यनाम्नो ग्रहणं भवार्थम्*। तत्र व्याख्यातव्यनाम्नो ग्रहणं क्रियते । भवार्थम् । किमुच्यते भवार्थमिति न पुनर्व्याख्यानार्थमपि स्यात् । व्याख्याने ह्यवचनात्सिद्धम् * । व्याख्याने हि क्रियमाणे अन्तरेण वचनं सिद्धम् । यत्प्रति व्याख्यानमित्येतद्भवति : तस्मादुत्पत्तिर्भविष्यति ।किं च प्रत्येतद्भवति । व्याख्यातव्यस्य नाम । यदुच्यते भवार्थमिति तन्न व्याख्यानार्थमपि व्याख्यातव्यनाम्नो ग्रहणं क्रियते । इह मा भूत् । पाटलिपु-

ठितं तत्र पृथिवीमध्यमध्यमवाची मध्यशब्दो गृह्यतइत्युक्तम् । ततोन्यत्रापि भवार्थे मध्यमीय इति यथा स्यादिति मीयप्रत्ययविधिः । जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति यथा स्यान्मध्यान्तरवाचिनो मा भूदित्येवमर्थं गह्यादिषु पृथिवीमध्यस्य मध्यमभाव इत्युक्तम् । स्थाम्नो लुगजिनात्तथेति । उभाभ्यामपि तदन्तविधिरिष्यते । बाह्व इति । गम्भीराञ्ञ्य इत्यत्रेदं वक्तव्यमित्यर्थः ॥

तस्य व्या । अधिकारोयमिति वृत्तिकारैर्व्याख्यायि तत्र प्रयोजनं पृच्छति । किमर्थमिति । यथा विहितविधानार्थमेव भवव्याख्यानयोरुपादानं कृत्स्नात्र भवतीति भावः । अपवादविधानार्थं इति वक्ष्यमाणाष्ठञादयोऽपवादा भवव्याख्यानयोर्यथा स्युरित्येवमर्थं तयोरधिकार इत्यर्थः । निर्देशार्थोपीति । अणादीनां घादीनाञ्चार्थे निर्देशार्थोपीत्यर्थः । भवार्थमिति । उत्तरैर्योगैर्भवे व्याख्यातव्यनाम्न एव प्रत्यया यथा स्युरित्येवमर्थमित्यर्थः । व्याख्याने होति । व्याख्यानशब्दस्य संबन्धिशब्दत्वाद् व्याख्यातव्यापेक्षस्य सि-

त्रस्य व्याख्यानी सुकोसलेति । अथ क्रियमाणेपि व्याख्यातव्यनाम्नो ग्रहणे कस्मादेवात्र न भवति । अवयवश आख्यानं व्याख्यानम् । पाटलिपुत्त्रं चास्मै अवयवश आचष्टे । ईदृशा अस्य प्राकारा ईदृशा अस्य प्रासादा इति । सत्यमेवमेतत् । क्व चित्तु का चित् प्रसृततरा गतिर्भवति । शब्दग्रन्थेषु चैषा प्रसृततरा गतिर्भवति । निरुक्तं व्याख्यायते व्याकरणं व्याख्यायत इत्युच्यते न कश्चिदाह पाटलिपुत्त्रं व्याख्यायत इति । भवे मन्त्रेषु लुग्वचनम् * । भवे मन्त्रेषु लुग्वक्तव्यः । अग्निष्टोमे भवो मन्त्रः । अग्निष्टोमः । राजसूयः । वाजपेयः । कल्पे च व्याख्याने * । कल्पे च व्याख्याने लुग्वक्तव्यः । अग्निष्टोमस्य व्याख्यानं कल्पो ऽग्निष्टोमः । राजसूयः । वाजपेयः । स तर्हि वक्तव्यः । न वा ताद्थ्यात्ताच्छब्द्यम् * । न वा वक्तव्यः किं कारणम् । ताद्थ्यात्ताच्छब्द्यं भविष्यति । अग्निष्टोमार्थोऽग्निष्टोमः । राजसूयः । वाजपेयः ॥

क्रतुयज्ञेभ्यश्च ॥ ६८ ॥ क्रतुग्रहणं किमर्थम् । यज्ञेभ्य इतीयत्युच्यमाने यएव संज्ञीभूतका यज्ञास्तत एवोत्पत्तिः स्यात् । आग्निष्टोमिको राजसूयिको वाजपेयिकः । यत्र वा यज्ञशब्दोस्ति । नावयज्ञिकः । पाकयज्ञिकः । इह न स्यात् । पाञ्चौदनिकः । शातौदनिकः । दाशौदनिक इति । क्रतुग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ यज्ञग्रहणं किमर्थम् । क्रतुभ्य इतीयत्युच्यमाने य एव संज्ञीभूतकाः क्रतवस्तत उत्पत्तिः स्यात् । आग्निष्टोमिको राजसूयिको वाजपेयिक इति । इह न स्यात् । पाञ्चौदनिकः । शातौदनिकः । दाशौदनिक इति । यज्ञग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

---

स्त्वादिति भावः । पाटलिपुत्त्रस्येति । यादृशः सुकोसलायां प्राकारादिसंनिवेशः तादृशः पाटलिपुत्त्र इति पाटलिपुत्त्रं व्याख्यातव्यं भवतीति स्यादेव प्रत्ययः । व्याख्यातव्यनामग्रहणात्तु व्याख्यातव्यत्वेन प्रसिद्धतमस्य ग्रन्थस्य यन्नाम तस्य ग्रहणादतिप्रसङ्गाभावः । अग्निष्टोमे भव इति । अग्निष्टोमशब्दोत्र क्रतुवाच्येव न तु व्याख्यातव्यवाचीति ठञभावादणो लुक् । कल्पे चेति । अत्र ठञ एव लुक् ।

क्रतु । क्रतुयज्ञशब्दयोः पर्यायत्वात्प्रश्नः ॥ क्रतुग्रहणमिति । संज्ञीभूतका इति । मुख्या इत्यर्थः । यज्ञेति । बहुवचननिर्देशात् स्वरूपग्रहणे निरस्ते तदन्तविधिः स्यादिति भावः । पाञ्चौदनिक इति । सोमपानाभावादमुख्यत्वमेषामिति भावः । तस्माद् गौणमुख्यपरिहारार्थमुभयोरुपादानम् ॥

द्वाजूद्वाह्मणक्प्रथमाध्वरपुरश्चरणनामाख्यातादृक् ॥ ७२ ॥ नामाख्यातग्रहणं संघातविगृहीतार्थम् *। नामाख्यातग्रहणं संघातविगृहीतार्थं द्रष्टव्यम्। नामिकः। आख्यातिकः। नामाख्यातिकः॥

विदूराञ्ञ्यः ॥ ८४ ॥ अयुक्तोयं निर्देशः। न ह्यसौ विदूरात् प्रभवति। किं तर्हि। वालवायात् प्रभवति। विदूरे संस्क्रियते। एवं तर्हि, वालवायो विदूरं च ॥ वालवायशब्दो विदूरशब्दमापद्यते अस्मात् प्रत्ययो वक्तव्यः। प्रकृत्यन्तरमेव वा। अथ वा प्रकृत्यन्तरं विदूरशब्दोस्ति वालवायस्य। न वै तत्र वालवायं विदूर इत्युपाचरन्ति। न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥ यथा। वणिजो वाराणसीं जित्वरीत्युपाचरन्ति। एवं वैयाकरणा वालवायं विदूर इत्युपाचरन्ति। वालवायो विदूरं च प्रकृत्यन्तरमेव वा ॥ न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥ १ ॥

अभिनिष्क्रामति द्वारम् ॥ ८६ ॥ अयुक्तोयं निर्देशः चेतनावत एतद्भवति + निष्क्रमणमपक्रमणं वा द्वारं चाचेतनम्। कथं तर्हि निर्देशः कर्त्तव्यः। अभिनिष्क्रमणं द्वारमिति। स तर्हि तथा निर्देशः कर्त्तव्यः। न कर्त्तव्यः।। अचेतनेष्वपि चेतनवदुपचारो दृश्यते। तद्यथा। अयमस्य कोणोभिनिसृतः। अयमभिप्रविष्ट इति ॥

---

विदूरा। वालवाय इति। आदेश एव सूत्रे निर्दिष्टः। तेन त्वनुरूपः स्थानी वालवायशब्द आक्षिप्यते। यथा शिवादिगणे विश्रवणरवणेत्यादेशौ पठ्येते ताभ्यां तु विश्रवःशब्दः स्थानित्वेनाक्षिप्यते। प्रकृत्यन्तरमिति। विदूरशब्दो नगरविशेषस्येव पर्वतविशेषस्यापि वाचकः स एव च प्रकृतित्वेनाश्रीयतइत्यर्थः। पर्वते विदूरशब्दो न प्रसिद्ध इति चेद् जित्वरीवद्व्यवहरेत् प्रतिनियतपुरुषापेक्षापि प्रसिद्धिर्भवति वणिजस्य मङ्गलार्थं वाराणसीं जित्वरीति व्यवहरन्ति ॥

अभि। चेतनावत इति। निष्क्रमणस्य पादविक्षेपरूपत्वादिति भावः। यद्यपि शकटादीनां निष्क्रमणादि भवति तथापि चेतनाधिष्ठानान्न तु स्वतन्त्राणामिति भावः। अचेतनेष्वपीति। देशान्तरप्राप्तिलक्षणकार्यदर्शनादचेतनेष्वपि क्रियाव्यवहारः। न च पादविक्षेप एव निष्क्रमणम्। वायुर्निष्क्रामतीति दर्शनात्। ननु द्वारस्य देशान्तरप्राप्तिफलं निष्क्रमणं नैवास्ति। एवं तर्हि करणस्यापि कर्तृ साध्यक्रियारोपादभिनिष्क्रामति द्वारमिति निर्देशः ॥

अधिकृत्य कृते ग्रन्थे ॥ ८७ ॥ लुबाख्यायिकाभ्यो बहुलम् * । अधिकृत्य कृतेग्रन्थ इत्यत्र लुबाख्यायिकाभ्यो बहुलं वक्तव्यः । वासवदत्ता । सुमनोत्तरा । न च भवति भैमरथी ॥

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥८८॥ द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः * । द्वन्द्वे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः । दैवासुरम् । राक्षोसुरम् । दैवासुरी । राक्षोसुरी ॥

सोऽस्य निवासः ॥८९॥ अभिजनश्च ॥९०॥ अथ निवासाभिजनयोः को विशेषः । निवासो नाम यत्र संप्रत्युष्यते । अभिजनो नाम यत्र पूर्वैरुषितम् ॥

वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥ किमर्थं वासुदेवशब्दात् वुन्विधीयते । न गोत्रक्षत्रियाख्येभ्यो बहुलं वुञित्येवसिद्धम् । न ह्यस्ति विशेषः । वासुदेवशब्दाद् वुञो वा वुनो वा । तदेव रूपं स एव स्वरः । इदं तर्हि प्रयोजनम् । वासुदेवशब्दस्य पूर्वनिपातं वक्ष्यामीति । अथ वा नैषा क्षत्रियाख्या । संज्ञैषा तत्र भगवतः ॥

जनपदिनां जानपदवत्सर्वं जनपदेन समानशब्दानांबहुवचने १००॥

---

अधि । आख्यायिकाभ्य इति । तादर्थ्ये चतुर्थी । आख्यायिकाभिधानाय यः प्रत्ययस्तस्य बहुलं लुब् भवतीत्यर्थः ॥

सोऽस्य । निवासाभिजनयोरिति । अभिजनशब्देन पूर्वे बान्धवा उच्यन्ते । तत्संबन्धाद् देशोभिजनो गृह्यते । निवासशब्देनाप्यधिकरणसाधनेन देश एवेत्यविशेषात्प्रश्नः । निवासो नामेति । यत्र स्वयं वसति स तस्य निवासः । यत्र पूर्वं बान्धवानामुषितं सोभिजन इत्यर्थः । निवाससाहचर्याच्चाभिजनो देशो गृह्यते न तु पूर्वे बान्धवाः ॥

वासुदेव । वसुदेवस्यापत्यं वासुदेवः ऋष्यन्धकेत्यणन्तः । तत्र गोत्रत्वात् क्षत्रियत्वाच्च वुञि रूपस्वरयोः सिद्धत्वात् प्रश्नः । किमर्थमिति । पूर्वनिपातमिति । अभ्यर्हितं पूर्वं निपततीत्यस्य ज्ञापनार्थमित्यर्थः । संज्ञैषेति । नित्यः परमात्मदेवताविशेष इह वासुदेवो गृह्यतइत्यर्थः । प्रसङ्गेन च निर्देशेन पूर्वोक्तोप्यर्थो ज्ञाप्यते ॥

जन । जनपदिनो जनपदस्वामिनः क्षत्रियाः । तद्वाचिनां बहुवचने जनपदवाचिना शब्देन समानश्रुतीनां जनपदवत् सर्वं भवति सोऽस्य भक्तिरित्येतस्मिन् विषये । यथा अङ्गा जनपदो भक्तिरस्य आङ्गक इत्यत्रतद्वदपि वुञ् भवति । एवमङ्गा क्षत्रिया भक्तिरस्ये-

सर्ववचनं किमर्थम्। सर्ववचनंप्रकृतिनिर्ह्रासार्थम् *। सर्ववचनं क्रियते प्रकृतिनिर्ह्रासो यथा स्यात्। तच्च मद्रवृज्यर्थं द्रष्टव्यम्। माद्रो भक्तिरस्य माद्रौ वा भक्तिरस्य मद्रक इत्येव यथा स्यात्। वार्ज्यो वा भक्तिरस्यवार्ज्यौ वा भक्तिरस्य वृजिक इत्येव यथा स्यात्॥

तेन प्रोक्तम्॥ १०१ प्रोक्तग्रहणमनर्थकं तत्रादर्शनात्*। प्रोक्तग्रहणमनर्थकम्। किं कारणम्।तत्रादर्शनात्। ग्रामे ग्रामे कालापकं काठकं च प्रोच्यते तत्रादर्शनात्। न च तत्र प्रत्ययो दृश्यते। ग्रन्थे च दर्शनात्*। यत्र च दृश्यते ग्रन्थः स भवति। तत्र कृते ग्रन्थइत्येव सिद्धम्। छन्दोर्थं तर्हीदं वक्तव्यम्। न हिच्छन्दांसि क्रियन्ते। नित्यानिच्छन्दांसि। छन्दोर्थमिति चेत्तुल्यम् *। छन्दोर्थमिति चेत्तुल्यमेतद्भवति। ग्रामेग्रामे काठकंकालापकं च प्रोच्यते। तत्रादर्शनात्। न च तत्र प्रत्ययो दृश्यते। ग्रन्थे दर्शनात्। यत्र दृश्यते ग्रन्थः स भवति। तत्र कृते ग्रन्थइत्येव सिद्धम्। ननु चोक्तम्। न हि च्छन्दांसिक्रियन्ते। नित्यानि च्छन्दांसीति। यद्यप्यर्थो नित्यः। या त्वसौ वर्णानुपूर्वी। साऽनित्या। तद्भेदाच्चैतद्भवति। काठकम्। कालापकम्। मौदकम्। पैप्पलादकमिति। न त-

---

त्वचापि भवति एवं स्थिते प्रश्नः। सर्ववचनमिति। अन्तरेणापि सर्ववचनं जनपदवदिति सामान्येनातिदेशः क्रियमाणः सर्वस्य भविष्यतीति भावः। प्रकृतिनिर्ह्रासार्थमिति। अन्ति सर्वग्रहणे प्रत्ययस्यैव प्राधान्यादतिदेशः स्यान्न तु प्रकृतेरपि। सर्वग्रहणात्तु भवति। निर्ह्रासोपचयोस्तत्त्वमित्यर्थः। वृद्धिनिमित्तेषु वुञादिषु विशेषाभावं मत्वाह। तच्चेति। द्वित्वैकत्वयोश्च शब्दभेदादतिदेशः प्रकृतिनिर्ह्रासार्थः। न तु बहुत्वे तत्र मद्रा इति शब्दभेदाभावात्। मद्रक इति। मद्रस्यापत्यमिति द्व्यञ्मगधेत्यण्। माद्रशब्दस्य मद्रशब्दातिदेशः। तत्प्रत्ययादेशस्च वार्ज्य इति। वृजेरपत्यमिति वृद्धेत्कोसलेति ञ्यङ्॥

तेन। प्रपूर्वो वचिः प्रकाशने अध्यापनरूपे वा वर्तते करणे वा। तत्राद्येर्थे प्रत्ययो न दृश्यते द्वितीये तु सूत्रान्तरेण सिद्धमिति मत्वाह। प्रोक्तग्रहणमिति। ग्रामे ग्रामइति। सुशर्मादीनां प्रतिग्रामं प्रवक्तृत्वे ऽपि सुशर्मणा प्रोक्तं काठकं सौशर्मणमिति प्रयोगो न दृश्यतइत्यर्थः। नित्यानीति। कर्तुरस्मरणात्तेषामिति भावः। या त्वसाविति। महाप्रलयादिषु वर्णानुपूर्वीविनाशे पुनरुत्पद्य ऋषयः संस्कारातिशयाद्वेदार्थं स्मृत्वा शब्दरचनां विदधतीत्यर्थः। तद्भेदादिति। आनुपूर्वीभेदादित्यर्थः। ततश्च कठादयः वेदानुपूर्व्याः कर्तार एव न तु स्थिताया एव सुशर्मादिवत्प्रवक्तारः। ततश्च छन्दस्यपि कृते ग्रन्थ इत्येव

र्हीदानीमिदं वक्तव्यम्। वक्तव्यं च। किं प्रयोजनम्। यत्तेन प्रोक्तं न च तेन कृतम्। माथुरीवृत्तिः। यदि तर्हि अस्य निबन्धनमस्ति। इदमेव वक्तव्यम्। तन्न वक्तव्यम्। तदप्यवश्यं वक्तव्यम्। यत्तेन कृतं न च तेन प्रोक्तम्। वाररुचं काव्यम्। जालूकाः श्लोकाः॥

कलापिवैशंपायनान्तेवासिभ्यश्च॥ १०४॥ प्रत्यक्षकारिग्रहणम्। प्रत्यक्षकारिग्रहणं कर्त्तव्यम्। अन्तेवास्यन्तेवासिभ्यो मा भूदिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। कलापि खाडायनग्रहणं ज्ञापकं वैशंपायनान्तेवासिषु प्रत्यक्षकारिग्रहणस्य। यदयं कलापिखाडायनग्रहणं करोति तज्ज्ञापयत्याचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति। कथं कृत्वा ज्ञापकम्। वैशंपायनान्तेवासी कठः। कठान्तेवासी खाडायनः। वैशंपायनान्तेवासी कलापी। यद्यन्तेवास्यन्तेवासिभ्योऽपि स्यात्कलापिखाडायनग्रहणमनर्थकं स्यात्पश्यति त्वाचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति ततः कलापिखाडायनग्रहणं करोति। छन्दोग्रहणं चेतरथा ह्यतिप्रसङ्गः* । छन्दोग्रहणं च कर्तव्यम्। इतरथा ह्यतिप्रसङ्गः। इतरथा ह्यतिप्रसङ्गः स्यात्। इहापि प्रसज्येत तित्तिरिणा प्रोक्ताः श्लोका इति॥

पुराणप्रोक्तेषुब्राह्मणकल्पेषु॥ १०५॥ पुराणप्रोक्तेषु ब्राह्मणक-

---

सिद्धः प्रत्यय इति भावः। माथुरीति। माथुरेण प्रथमतः प्रकाशितेत्यर्थः। कलापिनोणित्यणग्रहणस्याधिकविधानार्थत्वादृहणादप्यचाण् भवति। द्विविधं चेह प्रोक्तं गृह्यते। परकृतं स्वकृतं वा। यत् प्रकाशितं तेन प्रोक्ताधिकारएव कटादिभ्यो वक्ष्यमाणप्रत्ययविधानम्॥

कलापि। प्रत्यक्षकारिग्रहणमिति। करोतेः क्रियासामान्यवाचित्वात् सामान्यस्य सर्वविशेषेषु समवायादध्ययनमिह करणं गृह्यते। शिष्यशिष्याणामपि शिष्यव्यवहारदर्शनाद् वार्तिकारम्भः। कलापिखाडायनग्रहणमिति। वैशंपायनान्तेवासी कलापी। कलाप्यन्तेवासिनां वैशंपायनान्तेवासित्वाणिनी सिद्धे पृथक् कलापिग्रहणं प्रत्यक्षकारिग्रहणे लिङ्गम्। तथा वैशंपायनान्तेवासी कठः। कठान्तेवासी खाडायनो वैशंपायनान्तेवासी भवत्येवेति णिनौ सिद्धे शौनकादिषु णिन्यर्थं खाडायनग्रहणं साक्षाच्छिष्यग्रहणे लिङ्गमित्यर्थः। तित्तिरिणेति। छणोऽभावे यथाण् भवति तथा छन्दोब्राह्मणानीत्यत्रोक्तम्॥

पुराण। तुल्यकालत्वादिति। शाट्यायनादिप्रोक्तैर्ब्राह्मणैरेककालत्वादित्यर्थः॥

ल्पेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्* । पुराणप्रोक्तेष्विति याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः । याज्ञवल्क्यानि ब्राह्मणानि सौलभानि इति । किं कारणम् । तुल्यकालत्वात् । एतान्यपि तुल्यकालानीति ॥

कृते ग्रन्थे ॥ ११६ ॥ कृते ग्रन्थे मक्षिकादिभ्योऽण्* । कृते ग्रन्थइत्यत्र मक्षिकादिभ्योऽणुक्तव्यः । मक्षिकाभिः कृतं माक्षिकम् । तद्विशेषेभ्यश्च* । तद्विशेषेभ्यश्चाणवक्तव्यः । सरघाभिः कृतं सारघम् । गार्मुतम् । पौत्तिकम् । स तर्हि वक्तव्यः । न वक्तव्यः । योगविभागात्सिद्धम् * । योगविभागः करिष्यते । कृते ग्रन्थे । ततः संज्ञायाम् । संज्ञायां च तेन कृतइत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सरघाभिः कृतः सारघम् । गार्मुतम् । पौत्तिकम् ततः कुलालादिभ्यो वुञ् । संज्ञायामित्येव ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
चतुर्थाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

---

तस्येदम् ॥ १२० ॥ तस्येदमित्यसंनिहिते ऽप्राप्तिरिदमः प्रत्यक्षत्ववात्* । तस्येदमित्यसंनिहिते ऽप्राप्तिः । किं कारणम् । इदमः प्रत्यक्षवाचित्वादिदमित्येतत् प्रत्यक्षे वर्तते । तेनेहैव स्यात् तस्येदमिति । तस्यादस्तस्य तदित्यत्र न स्यात् । सिद्धं तु यद्योगा षष्ठी तत्र* । सिद्धमेतत् । कथम् । यद्योगा षष्ठी वर्तते तत्रेति वक्तव्यम् । अनन्तरादिषु च प्रतिषेधः* । अनन्तरादिषु च प्रतिषेधो वक्तव्यः । तस्यानन्तरस्तस्य समीप इति । किं यद्योगा षष्ठी वर्तत इत्यतोनन्तरादिषु प्रतिषेधो वक्तव्यः ।

---

कृते । योगविभाग इति । संज्ञायां कुलालादिभ्यो वुञिति सूत्रं विभक्तमित्यर्थः ॥
इति जैय्यटपुत्त्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य तृतीये पादे ।
प्रथममाह्निकम् ॥

तस्येदम् । इदम इति । इदंशब्दाद्योर्थः प्रतीयते तस्मिन्नेव प्रत्ययप्रसङ्ग इत्यर्थः । सिद्धं त्विति । येन संबन्धिना योगे षष्ठी विधीयते तस्मिन् प्रत्ययइत्यर्थः । सर्वत्रेति । पाणिनीये कात्यायनीयेच न्यासइत्यर्थः । पाणिनीयन्यासे ऽपि देवदत्तस्येदमनन्तरमिति प्रत्ययप्र-

नैत्याह। सर्वथानन्तरादिषु प्रतिषेधो वक्तव्यः । सिद्धं तु परिगणनात्*। सिद्धमेतत्। कथम् । परिगणनं क्रियते । स्वे ग्रामजनपदमनुष्येभ्यः*। स्वे ग्रामजनपदमनुष्येभ्य इति वक्तव्यम् । ग्राम । स्रौघ्नः। माथुरः । जनपद । आङ्गकः । वाङ्गकः । मनुष्य । दैवदत्तः। याज्ञदत्तः । पत्त्राद्वाह्ये * । पत्त्राद्वाह्य इति वक्तव्यम्। आश्वमौष्ट्रं गार्दभम् । रथाद्रथाङ्गे * । रथाद्रथाङ्ग इति वक्तव्यम् । आश्वरथम् । गार्दभरथम् । औष्ट्ररथम् । वहेस्तुरणिट् च * । वहेस्तृन्तादण् इट् च वक्तव्यः । संवोढुः स्वं सांवहित्रम् । अग्नीधः शरणे रञ्भं च * । अग्नीधः शरणे रञ् प्रत्ययो भसंज्ञा च वक्तव्या । अग्नीधः शरणमाग्नीध्रम् । समिधामाधाने षेण्यण् *। समिधामाधाने षेण्यण् वक्तव्यः । समिधामाधाने मन्त्रः सामिधेन्यो मन्त्रः । सामिधेनी ऋक् । चरणाद्धर्माम्नाययोः * । चरणाद्धर्माम्नाययोरिति वक्तव्यम् । काठानां धर्म आम्नायो वा काठकम् । मौदकम् । पैप्पलादकम् । तत्तर्हीदं बहु वक्तव्यम् । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं तस्येदमित्यसंनिहितेऽप्राप्तिरिति । किमिदमपि भवान् प्रत्ययार्थमेवोपालभते न पुनः प्रकृत्यर्थमपि । यथैव तर्हि इदमित्येतत् प्रत्यक्षे वर्तते एवं तदित्येतत्परोक्षे वर्तते । तेनेहैव स्यात्तस्येदमिति। अस्यामुष्य इत्यत्र न स्यात् । अस्त्यत्र विशेषः । एकशेषनिर्देशोऽत्र भविष्यति । तस्य च अमुष्य च तस्येति । इहापि तर्ह्येकशेषनिर्देशो भविष्यति । तच्च अदश्च इदं च इदमित्येव । यदप्युच्यते । अनन्तरादिषु प्रतिषेधो वक्तव्य इ-

---

सङ्गः । सिद्धं त्विति । असंनिहिते प्रत्ययविधानमनन्तरादिषु चाप्राप्तिरित्यर्थः। स्व इति। तेनात्मीयज्ञातिधनेष्वेव प्रत्यया भवन्ति न त्वनन्तरादिषु । पत्त्राद्वाह्य इति । पत्त्राध्वर्युपरिषद इत्यत्रायमर्थनिर्देशः । रथादिति । रथाद्यत्पत्त्रपूर्वादञित्येतयोर्योगयोरर्थनिर्देशः । सांवहित्रमिति । मन्त्र पूर्वत्रासिद्धमिति ढत्वादीनामिटि कर्तव्ये ऽसिद्धत्वात् ह्रस्व इति इट् रूपम् । आग्नीध्रमिति । अग्निमिन्धइति क्विप् । अन्तर्भावितण्यर्थ त्वादिन्धिः सकर्मकः । होताग्नीदुच्यते । तस्य शरणं गृहमाग्नीध्रम् । भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वाभावः। चरणादिति । गोत्रचरणादित्यत्रायमर्थनिर्देशः । एकशेषनिर्देश इति । त्यदादीनि सर्वैर्नित्यमित्येकशेषः । त्यदादीनां यद्यत्परं तत्तच्छिष्यत इत्युक्तेः पूर्वशेषदर्शनाच्छेत्युक्तमिति

ति । न वक्तव्यः । अनभिधानादनन्तरादिषूत्पत्तिर्न भविष्यति ॥

द्वन्द्वाद्वुन्वैरमैथुनिकयोः॥१२५॥ वैरे देवासुरादिभ्यः प्रतिषेधः*। वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः । दैवासुरम् । राक्षोसुरम् ॥

सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ १२७ ॥ सङ्घादिषु घोषग्रहणं कर्तव्यम् । गार्गो घोषः । वात्सो घोषः । किमर्थो णकारः । वृद्ध्यर्थः । अणीतीति वृद्धिर्यथा स्यात् । सङ्घादिषु प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य * । सङ्घादिषु प्रत्ययस्य णित्करणमनर्थकम् । किं कारणम् । वृद्धत्वात् प्रातिपदिकस्य । वृद्धमेतत् प्रातिपदिकम् । लिङ्गपुंवद्भावप्रतिषेधार्थं तु* । लिङ्गपुंवद्भावप्रतिषेधार्थस्तु णकारः कर्तव्यः । लिङ्गार्थम् । वैदी । पुंवद्भावप्रतिषेधार्थम् । वैदी स्थूणाऽस्य वैदीस्थूणः । वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो यथा स्यात्॥

रैवतिकादिभ्यश्छः॥ १३१ ॥ कौपिञ्जलहास्तिपदादण् * । कौपिञ्जलहास्तिपदादण् वक्तव्यः । कौपिञ्जलः । हास्तिपदः । आथर्वणिकस्येकलोपश्च* । आथर्वणिकस्येकलोपश्चाण् वक्तव्यः । आथर्वणो धर्मः । आथर्वण आम्नायः । इदमाथर्वणार्थमाथर्वणिकार्थं च चतुर्ग्रहणं क्रियते । वसन्तादिषु अथर्वन्शब्द आथर्वणशब्दश्च पठ्यते । षष्ठे अध्याये प्रकृतिभावार्थं ग्रहणं क्रियते । इदं चतुर्थमिकलोपार्थं द्विग्रहणं शक्यमकर्तुम् । कथम् । तेन प्रोक्तमिति प्रकृत्य ऋषिभ्यो लुग्वक्तव्यः । वसिष्ठो नुवाको विश्वामित्रोनुवाक इत्येवमर्थम् । ततो

---

पूर्वस्यापि तदः शेषः । सौत्रत्वाच्च निर्देशस्यैकवचनं विभक्त्यन्तानां चैकशेषः । एकशेषद्वारेण चैतत्प्रतिपादयति षष्ठ्यन्तमात्रं प्रकृतित्वेन विवक्षितं तत्प्रतियोगिमात्रं च प्रत्ययार्थत्वेन यत्त्वपरं लिङ्गसंख्याप्रत्यक्षपरोक्षादिकं तदविवक्षितम् ॥

सङ्घाङ्क । घोषग्रहणमिति । घोषे ऽपि प्रत्ययः सिध्यति । वैषम्याच्च यथासंख्यं न भवति । लिङ्गेति । लिङ्गविहितप्रत्ययो लिङ्गशब्देनोच्यते ॥

रैवति । अपाणिनीयः सूत्रेषु पाठ इत्याह । कौपिञ्जलेति । गोत्रे वुञि प्राप्ते ऽण्विधिः । अस्मादेव निपातनादपत्यार्थे कुपिञ्जलहस्तिपादशब्दाभ्यामण् । पादस्य पद्भावश्च । गोत्राधिकाराद् गोत्रप्रत्ययान्तादिदं विधानम् । अण् वक्तव्य इति । कौपिञ्जलहास्तिपदादपत्यस्यापाणिनीयत्वात् । ऋषिभ्यो लुगिति । वसिष्ठादिशब्दसिद्धयेऽवश्यंवक्तव्यो लु-

वक्तव्यम्। अथर्वणो वेति। तेन सिद्धमथर्वा इति। आथर्वण इति च। अथ वसन्तादिष्वाथर्वणशब्दः पठितव्यस्तच्च नार्थः प्रकृतिभावार्थेन नापि इकलोपार्थेन। यदि वसन्तादिष्वाथर्वणशब्दः पठ्यते। अथर्वाणमधीते आथर्वणिक इति न सिध्यति। नैष दोषः। इहा-स्माभिस्त्रैशब्द्यं साध्यम्। अथर्वाणमधीते। आथर्वणमधीते। आथ-र्वणिक इति। तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः। अ-परस्मादुत्पत्तिर्भविष्यति। अव्यविकन्यायेन। तद्यथा। अवेर्मांस-मिति विगृह्याविकशब्दादुत्पत्तिर्भवति आविकमिति। एवमाथर्व-णमधीतइति विगृह्य आथर्वणिक इति भविष्यति। अथर्वाणमधी-तइति विगृह्यवाक्यमेव भविष्यति। तत्राभिसंबन्धमात्रं कर्तव्यम्। आथर्वणिकानामिदमिति। न चेदानीमन्यदाथर्वणिकानां स्वं भवि-तुमर्हति अन्यदतो धर्मादाम्नायाद्वा॥

तस्य विकारः॥ १३२॥ तस्येति वर्त्तमाने पुनस्तस्यग्रहणं कि-मर्थम्। तस्यप्रकरणे तस्य पुनर्वचनं शैषिकनिवृत्त्यर्थम् *। तस्यप्र-करणे तस्य पुनर्वचनं क्रियते। शैषिकनिवृत्त्यर्थम्। शैषिका निव-र्त्तन्ते। कथं च प्राप्नुवन्ति। तस्येदंवचनात् प्रसङ्गः *। तस्येदंवि-

---

क् न त्वऽसत्यस्मिन् सूत्रे आथर्वणिकानां धर्म आम्नायो वेत्यत्रार्थे आथर्वणशब्दो न सि-ध्यतीत्याह। तत्रेति। यदेवाथर्वणा प्रोक्तमाथर्वणं शास्त्रं तदेवाथर्वणिकानामाम्नायो न तु तेषामाम्नायान्तरमाथर्वणशब्दवाच्यं धर्मस्तु आथर्वणसादृश्यादाथर्वणशब्देनाभिधास्य-ते। न चेदानीमिति। चरणाद् धर्माम्नाययोरिति वचनादर्थान्तरे प्रत्ययाभावादित्यर्थः॥

तस्य विकारः। शैषिकनिवृत्त्यर्थमिति। विकारावयवयोर्मा भूवन्नित्येवमर्थं तस्यग्र-हणमित्यर्थः। कथं चेति। किमधिकारात् प्राप्नुवन्ति। अथ तस्येदमिति वचनात्। य-द्यधिकारात् प्राप्तानां तस्यग्रहणेन निवृत्तिः क्रियते तदा पुनरपि तस्येदमित्यनेन प्राप्नु-वन्ति। अथ तस्येदमित्यनेन प्राप्तानां तस्यग्रहणेन निवृत्तिः क्रियते। तदासौ नोपपद्यते उत्तरार्थत्वादस्य योगस्य तत्रैव चरितार्थत्वादिति प्रश्नः। तस्येदं वचनादिति। तस्यग्रह-णं घादिसंबन्धस्य तस्यग्रहणस्य निवर्त्तकं घादीनपि निवर्त्तयति। तन्निवर्त्तनसामर्थ्यात्तस्ये-दमित्यनेनापि विकारावयवयोर्घादयो न भवन्ति। अन्यथा तन्निवर्त्तनमनर्थकं स्यादि-त्यर्थः। प्राग्दीव्यत इत्यवधिविशेषाश्रयेण त्वणादीनामधिकारादणादय इह संबध्यन्त इ-

शेषा ह्येते । अपत्यं समूहो निवासो विकार इति । किमर्थमिदमुच्यते ।। बाधनार्थं कृतं भवेत् ॥ ये तस्य बाधकास्तद्बाधनार्थम् । कथं पुनरशैषिकं बाधेत । उत्सर्गः शेष एवासौ ॥ यो ह्युत्सर्गः सोऽपि शेष एव । के पुनः शैषिकाणां विकारावयवयोः प्राप्नुवन्ति । यावता सर्वमप्यपवादैर्व्याप्तम् । इह न किं चिदुच्यते । हलसीराट्ठगिति । कथं पुनरिच्छताप्यपवादः प्राप्नुवन् शक्योबाधितुम् । तस्यग्रहणसामर्थ्यात् । किमिदं भवानध्यारुह्य तस्यग्रहणस्यैव प्रयोजनमाह । न पुनः सर्वस्यैवयोगस्य । अवश्यमुत्तरार्थोर्थनिर्देशःकर्त्तव्यः।समर्थ विभक्तिरपि तद्यवश्यमुत्तरार्था निर्देष्टव्या । प्रकृता समर्था विभक्तिरनुवर्त्तते तस्येदमिति । न वा संप्रत्ययः ॥ । न वा संप्रत्यय इत्येतावता सूत्रेण

---

ति विपर्ययोऽच न चोदनीयः । घादयोऽनुवर्त्तन्ताम् अणादयो मानुवर्त्तन्तामिति । किमर्थमिति । सर्वस्यैव सूत्रस्याक्षेपः । बाधनार्थमिति । तस्येदमित्यत्राणादयो घादयश्चाणाद्यपवादा विहिताः । तत्र विकारावयवयोरणादय एव यथा स्युस्तदपवादा घादयो मा भूवन्निति एवमर्थमिदमुच्यते । ये तस्येति । अण इत्यर्थः । कथं पुनरिति । तस्येदमित्यस्मात्तस्य विकार इत्यस्य पृथङ्निर्देशादनेन विधीयमानोऽण्प्रत्ययोशैषिकः कथं विकारेऽप्राप्तान् घादीन् बाधतइति प्रश्नः । उत्सर्ग इति । असत्यस्मिन् पृथक् सूत्रे विकारोपि तस्येदमित्यत्रान्तर्भावाच्छेषो भवतीति घादयः प्राप्नुवन्ति । उत्सर्गत्वं विकारस्य प्रकृतिविशेषासंबन्धादसति हि योगविभागे बिल्वादिभ्योण् विकार इति वक्तव्यम् । तत्र प्रकृतिविशेषसंबद्ध एव विकार उपयुक्तत्वादशेषः स्यात् । प्रकृतिमात्रसंबद्धस्त्वनुपयोगाच्छेष एव स्यात् । सति तु योगविभागे विकारस्यापि अण्विधावुपयोगादशेषत्वाद् घादीनामप्राप्तिः । अप्राप्त्यनुमानमेव बाध इति भावः । के पुनरिति । शैषिकाणामिति निर्द्धारणे षष्ठी । अपवादैरिति । वक्ष्यमाणैरणादिभिरित्यर्थः । हलसीरादिति । हलशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः सीरशब्दोपिकन्नन्तो नित्त्वात् । ततश्चैताभ्यां विकारे न कश्चिदणपवादोस्तीति ठकं बाधित्वाणेव भवति हालः सैर इति । कथं पुनरिति । हलसीराट्ठगित्ययमण एवापवादः कथमणैव शक्यो बाधितुं योगस्तूत्तरार्थ एव स्यादिति प्रश्नः । तस्यग्रहणसामर्थ्यादिति । बाधकबाधनार्थादणः पुनर्विधानादित्यर्थः । तस्यग्रहणमेवानन्यार्थमिति तत्सामर्थ्यादित्युक्तम् इदमर्थाद्विकारस्योत्कर्षो बाधकबाधनार्थ एवेत्यर्थः । न वेति । घादीनां प्राधान्यात्तस्यग्रहणे गुणे प्राप्ते निवर्त्तमाने ऽपि निवृत्तिर्न शक्यते प्रतिपादयितुं न हि गुणानुयायि प्रधानं भवति । अवयवे अर्थो घादीनां निवृत्तत्वादप्रा

शैषिकाणां निवृत्तेः । न वा काको वाश्यत इत्येवमधिकारा निवर्त्त-न्ते । यदि खल्वपि विकारावयवयोः शैषिका नेष्यन्ते । महता सूत्रेण निवृत्तिः कर्त्तव्या । अवयवे चाप्राण्योषधिवृत्तेभ्योऽनिवृत्तिः * । अ-वयवे चाप्राण्योषधिवृक्षेभ्योऽनिवृत्तिरिष्टा तत्र निवृत्तिः प्राप्नोति । पाटलिपुत्रकाः प्राकाराः । पाटलिपुत्रकाः प्रासादा इति । अणम-यटोश्च विप्रतिषेधानुपपत्तिः मयडुत्सर्गात् * । अणमयटोश्च विप्रति-षेधो नोपपद्यते । पठिष्यति हि विप्रतिषेधम् । अणो वृद्धान्मयडिति स विप्रतिषेधो नोपपद्यते । किं कारणम् । मयडुत्सर्गात् । निवर्त्त-मानेषु शैषिकेषु वृद्धान्मयडुत्सर्गः तस्याणपवादः । उत्सर्गापवादयो-श्चायुक्तो विप्रतिषेधः । अनुवृत्तौ हि छस्योत्सर्गापवादविप्रतिषेधा-न्मयट् * । अनुवर्त्तमानेषु शैषिकेषु वृद्धाच्छ उत्सर्गः । तस्याणमय-टावपवादौ । अपवादविप्रतिषेधान्मयड् भविष्यति । यत्तावदुच्यते न वा संप्रत्यय इयता सूत्रेण शैषिकाणां निवृत्तेरिति संप्रत्यय एव। न ह्यत्राण् दुर्लभः । सिद्धोत्राण् । तस्येदमित्येव । सोयं पुनस्तस्यग्र-हणेन सापवादस्याणः प्रसङ्गे इमं निरपवादकमणंप्रतिपादयति त-त्र ये तावत् द्वितीयास्तानपवादत्वाद्बाधिष्यते । तृतीयास्तान्परत्वा-त् । ये चतुर्थास्तत्र केचित्पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते इ-त्येवमिमं न बाधिष्यन्ते । केचिन्मध्येऽपवादाः पूर्वान् विधीन् बा-धन्तइति । एतावन्तश्चैते स्युः यदुत द्वितीयास्तृतीयाश्चतुर्था वा न पञ्चमाः संति न षष्ठाः । सदप्युच्यते । अवयवे च प्राण्योषधिवृक्षेभ्यो

---

ण्योषधिवृक्षेभ्योऽप्रसङ्ग इत्यर्थः । पाटलिपुत्रका इति । पाटलिपुत्रस्यावयवा इति तस्ये-दमित्यर्थे रोपधेतोः प्राचामिति वुञ् । मयडुत्सर्गादिति । मयडुत्सर्गः शैषिकेषु निवृत्तेषु सामान्येन विधानमित्यर्थः । अप्राप्तएव वृद्धाच्छे नित्यं वृद्धेति मयडारम्भात् । अनुदात्ता-देरित्ययमवृद्धेषु कृतार्थस्तत्राविशेषादञ्मयटोः कोपधाच्चेत्ययमपवादोणिति शाकमय-मित्यत्र मयट् न लभ्यतइत्यर्थः । अपवादविप्रतिषेधादिति । शाकशब्दाच्छापवादयोरण्-मयटोः परत्वान्मयट् सिध्यतीत्यर्थः । इदानीं भाष्यकारः सूत्रेणैवेष्टसिद्धिं प्रतिपादयितु-माह । यत्तावदिति । इदमिति । घादीनामिह निवृत्तत्वादयमण् निरपवादः घाद्यनुवृ-त्तौ हि योगविभागोनर्थकः स्यात्तस्येदमित्यनेनैव विकारेप्यणादीनां घादीनां च सिद्ध-

निवृत्तिरिति । प्राग्दीव्यतोऽणित्येषोऽप्रतियः प्राग्घितात्प्रभृति... 

निवृत्तिरिति । प्राग्घोषधिवृक्षेभ्यो निवृत्तिरुच्यते । तत्र कः प्रसङ्गो यदप्राग्घोषधिवृक्षेभ्यो निवृत्तिः स्यात् । यदप्युच्यते । अणमयटोश्च विप्रतिषेधानुपपत्तिर्मयडुत्सर्गादिति । माभूद्विप्रतिषेधः । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त इत्येवमणञ् बाधिष्यते मयटं न बाधिष्यते ॥

अवयवे च प्राग्घोषधिवृक्षेभ्यः ॥ १३५ ॥ किमर्थं विकारावयवयोर्युगपदधिकारः क्रियते । विकारावयवयोरुक्तम् * । किमुक्तम् । तत्र तावदुक्तम् । भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः । कृतनिर्देशौ हि ताविति । इहापि विकारावयवयोर्युगपदधिकारोऽपवादविधानार्थः कृतनिर्देशौ ह्येतावर्थौ तस्येदमिति ॥

---

त्वात् । तत्रेति । यथा हलसीराट्ठगित्यणि ठग्विधीयमानो द्वितीयो भवति तमपवादत्वादयमण् बाधते तृतीयकक्ष्या प्राप्तः । ये तृतीयस्थाने प्राप्तत्वादस्याणस्तुल्यकक्ष्यत्वात्परत्वाद् बाध्या यथा तृजीनां विकार इति तस्येदमित्यण् प्रथमः । अवृद्धादपीति वुञ् द्वितीयः। मद्रवृज्योः कन्निति तृतीयोनेन बाध्यते । वार्ज इति । वृजिशब्दस्य फिट्सूत्रेषु विकल्पेनोदात्तत्वविधानात् पक्षे आद्युदात्तत्वादण् । पक्षे अनुदात्तादेश्चेत्यञ् । ये चतुर्था इति। यथा त्रिगर्तानां विकारः त्रैगर्त इति त्रिगर्तशब्दो बहुव्रीहिः पूर्वपदप्रकृतिस्वरेणाद्युदात्तः । तत्राण् प्रथमः । जनपदलक्षणो वुञ् द्वितीयः । गर्त्तोत्तरपदलक्षणश्छस्तृतीयः । तदवधिग्रहणविहितो वुञ् चतुर्थः । केचिन्मध्य इति । यथा यथा रङ्कूणां विकारो राङ्कव इत्यत्राण् प्रथमः । तदपवादयोरवृद्धादपीति ओर्देशे ठञिति वुञ्ठञोस्तुल्यकक्ष्ययोरन्यतरो द्वितीयः । ततः कोपधादणिति वा कच्छादिपाठाद्वाण् तृतीयः । मनुष्यतत्स्थयोर्वुञिति चतुर्थः पूर्वमेवाणं बाधते न तु विकाराणं बाधते । तेनैव तु परत्वाद्वुञ् बाध्यते । तत ओरञित्यञि प्राप्ते कोपधाच्चेत्यण् प्रतिप्रसूयते । न पञ्चमा इति । शैषिका इति शेषः । अन्यथा प्रावृषो विकारः प्रावृण्मयः इति मयडस्त्वेवात्राण् प्रथमः । तदपवादः कालाट्ठञिति द्वितीयः । ऋत्वण् तृतीयः । प्रावृष एण्य इति चतुर्थः । विकाराण् पञ्चमः । नित्यंवृद्धेति मयट् षष्ठी भवति । यदपीति । अवयवे च प्राग्घोषधिवृक्षेभ्य इति प्रकृतिविशेषाद्विधीयमानोण् तस्मादेव शैषिकाणां बाधको न तु प्रकृत्यन्तरात् स्वयमेवाभावादित्यर्थः । अञमिति । ओरञ् अनुदात्तादेश्चेति सूत्रद्वयविहितं कोपधाच्चेत्यण् बाधिष्यते न तु मयटम् । मयटैव तु परत्वादण् बाधिष्यतइत्यर्थः ॥

अवयवे । कृतनिर्देशौ ह्येताविति । यद्यपि शैषिकनिवृत्त्यर्थत्वमुक्तं तथापि तदनपेक्ष्य कचित्तावदणादयस्त्रिष्ठाः आश्मनं मार्त्तिकमित्यादावित्यभिसंबन्धायेतदुक्तम् ॥

बिल्वादिभ्योऽण् ॥ १३६ ॥ किमर्थं बिल्वादिषु गवीधुकाशब्दः पठ्यते। न कोपधादित्येव सिद्धम्। बिल्वादिषु गवीधुकाग्रहणं मयट्प्रतिषेधार्थम् *। बिल्वादिषु गवीधुकाग्रहणं क्रियते मयट्प्रतिषेधार्थम्। मयडतो मा भूदिति ॥

अनुदात्तादेश्च ॥ १७० ॥ अनुदात्तादेरञो विधाने आद्युदात्तान् ङीष उपसंख्यानम् *। अनुदात्तादेरञो विधाने आद्युदात्तान्ङीष उपसंख्यानं कर्तव्यम्। कुवली। कौवलम्। बदरी। बादरम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। निघाते कृतेऽनुदात्तादेरित्येव सिद्धम्। न सिध्यति। किं कारणम्। पदस्य ह्यनुदात्तादित्वम् *। पदस्य हि निघातः। सुबन्तं च पदम्। ङ्याप्प्रातिपदिकाच्च प्रत्ययो विधीयते। न वा समर्थस्यानुदात्तादित्वात् *। न वा वक्तव्यम्। किं कारणम्। समर्थस्यानुदात्तादित्वात्। समर्थमनुदात्तादित्वेन विशेषयिष्यामः। नैवं शक्यम्। इह च प्रसज्येत। वाचो विकारः। त्वचो विकार इति। एतद्धि समर्थमनुदात्तादि। इह च न स्यात्। सर्वेषां विकारः सर्वं इति। तस्मान्नैवं शक्यम्। न चेदेवमुपसंख्यानं कर्तव्यम्। न कर्त्तव्यम्। आचार्यप्रवृत्तिर्ज्ञापयति। यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात इति। यदयं भिक्षादिगणे गर्भिणीशब्दं पठति। कथं कृत्वा ज्ञापकम्। भिक्षादिषु गर्भिणीशब्दस्य पाठे एतत्प्रयोजनम्। अनुदात्तादिलक्षणोऽञ् मा भूदिति। यदि पदस्य निघातः। गर्भशब्दोयमाद्युदात्तस्तस्मादिनिरिन्नन्ताच्च: प्रत्ययः प्राप्नोति स तावत् स्यात्। तस्मिन्नवस्थिते निघातस्तत्र कोऽनुदात्तादिलक्षणस्याञः प्रसङ्गः। पश्यति त्वाचार्यः। या-

अनु। कुवलीति। कुवलबदरशब्दौ ग्रामादीनांचेत्याद्युदात्तौताभ्यां गौरादित्वान्ङीष्। पदस्येति। अनुदात्तं पदमेकवर्जमिति वचनादिह चानुदात्तादिग्रहणस्य ङ्याप्प्रातिपदिकविशेषणत्वात्। यथोक्तम्। वृद्धाद्वृद्धावर्णस्वरद्वज्लक्षणे च प्रत्ययविधौ तत्सं-प्रत्ययार्थमिति। न वेति। विभक्त्युत्पत्तौ सत्यां ङ्यन्तस्यानुदात्तादित्वं मन्यते। न च वृद्धाद्वृद्धेत्यनेन विरोधः। समर्थावयवस्य ङ्याप्प्रातिपदिकस्य वृद्धादिविशेषणत्वेनाश्रयणात्। एतद्धीति। सावेकाच इति विभक्तेरुदात्तत्वात् प्रातिपदिकयोस्तु धातुस्वरेणान्तोदात्।

वत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वनिघात इति । अतो भिक्षादिषु गर्भिणीशब्दं पठति। पदग्रहणं किमर्थम् । पदग्रहणं परिमाणार्थम् *। पदग्रहणं क्रियते । परिमाणार्थं पदावधिर्यथा स्यात्। वाक्यस्य माभूत् । अनुदात्तं पदमेकवर्ज्यमिति ॥

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४३ ॥ किमर्थं मयड्वैतयोरित्युच्यते मयड्वैतयोरिति वचनमपवादविषयेऽनिवृत्त्यर्थम् । मयड्वैतयोरित्युच्यते । अपवादविषयेऽनिवृत्तिर्यथा स्यादिति । बिल्वमयं बैल्वम् । एतयोरित्यर्थनिर्देशः । एतयोरित्यर्थनिर्देशो द्रष्टव्यः । तद् द्वैध्यं विजानीयात् । योगयोर्वा प्रत्यययोर्वेति । तदाचार्यः। सुहृद्भूत्वाऽन्वाचष्टे । एतयोरित्यर्थनिर्देश इति ॥

ञितश्च तत्प्रत्ययात् ॥ १५५ ॥ किमर्थमिदमुच्यते । विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम् *। विकारो विकारेण युज्यते अवयवश्चावयवेन । विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्राप्नोति। इष्यते चाञेव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञ्विधानम् । एवमर्थमिदमुच्यते ।न वा दृष्टो ह्यवयवे समुदाय-

---

त्वम् । सर्वशब्दश्च सर्वस्य सुपीति सुप्याद्युदात्तः । केवलस्त्वयमुणादिष्वन्तोदात्तो निपातित इत्यनुदात्तादिः । तस्मादिमत्यव्युत्पत्तेः प्रागनुदात्तादित्वमाश्रयणीयम् । पूर्वस्य निघात इति । प्राग् व्यवस्थितस्य निघात इत्यर्थः । गर्भशब्द इति । अर्तिगृभ्यां भन्निति प्रत्ययस्य नित्त्वात् । पदग्रहणमिति । यस्य पदत्वं भविष्यति तस्यैवैकवर्जमनुदात्तं यथा स्यात् पदसमूहस्य माभूदित्येवमर्थं पदग्रहणमित्यर्थः ॥

मयट् । किमर्थमिति । विकारावयवौ प्रकृतावेवेति भावः । मयडिति । एतयोरित्येतस्मिन् सति पुनर्विधानं मयटो भवति तच्चापवादविषयेऽपि प्राप्त्यर्थं संपद्यते । योगयोर्वेति । योगयोः प्रत्यययोर्वा विषये मयडित्यर्थः स्यादित्यर्थः । ञितश्च तत्प्रत्ययात् । तयोर्विकारावयवयोर्यो ञित्प्रत्ययः तदन्ताद्विकारावयवयोरेवाञ् भवतीति सूत्रार्थः ।

ञित। किमर्थमिति। अन्तरेणापि सूत्रं सिद्धिमत्त्वात्प्रश्नः। विकारावयवयोरिति । कपोतस्य विकारो यन्मांसं कापोतं तस्यापि विकारो रसो भवति कपोतावयवस्य सक्थ्यादेः कापोतस्यावयवोऽन्यो भवतीति इष्टत्वान्मयट्प्रसङ्गे तन्निवृत्त्यर्थमञ विधानमित्यर्थः । नवेति । यदा कपोतावयवस्य सक्थ्यादेरवयवी विवक्ष्यते तदा कपोतशब्दादेवसक्थ्याद्यव-

शब्दो विकारे च प्रकृतिशब्दः। तस्मान्मयडभावः। नचैतत्प्रयोजनमस्ति। किं कारणम्। दृष्टोह्यवयवे समुदायशब्दस्तद्यथा पूर्वे पञ्चालाः। उत्तरे पञ्चालाः। तैलं भुक्तम्। घृतं भुक्तम्। शुक्लो नीलः कृष्ण इति। विकारे च प्रकृतिशब्दो दृश्यते। तद्यथा शालीन् भुङ्क्ते मुद्गैः शालिविकारान्मुद्गविकारैरिति। तस्मान्मयडभावः। तस्मान्मयडभावो भविष्यति। नैतद्विवदामहे। अवयवे समुदायशब्दोस्ति नास्तीति। विकारे वा प्रकृतिश्ब्द इति। किं तर्हि विकारावयवशब्देष्वस्ति। तत उत्पत्तिः प्राप्नोति। विकारावयवशब्दात्प्रसङ्ग इति चेन्न तेनानभिधानात् *। विकारवयवशब्दात् प्रसङ्ग इति चेत्तन्न। किं कारणम्। तेनानभिधानात्। न हि विकारावयवशब्दादुत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं स्यात्। अनभिधानात्तत्र उत्पत्तिर्न भविष्यति। तच्चावश्यमनभिधानमाश्रयितव्यम्। अभिधाने ह्यन्यतो मयट्प्रसङ्गः। अभिधाने सत्यन्यतोपि मयट् प्रसज्येत। बैल्वस्य विकार इति। तस्मात्प्रत्ययान्ताल्लुग्वचनम् *। तस्मात्प्रत्ययान्ताल्लुग्वक्तव्यः। यदि लुगुच्यते। कथं गौमयं भस्म द्रौवयं मानम्। कापित्थो रस इति। अन्यच्च गोमायाद्द्रुवयात्फलाच्च लुग्वक्तव्यः। इह तर्हि औष्ट्रकी। अजन्तादितीकारो न प्राप्नोति। इष्टमेवैतत्संगृहीतम्। औष्ट्रिकेत्येव भवितव्यम्। इह हि सौनागाः पठन्ति। वुञश्चाञ् कृतप्रसङ्ग इति। इह तर्हि पालाशी समिदित्यनुपसर्जनल-

---

यवद्वृत्तेरञ् भविष्यति। कपोतविकारमांसवृत्तेश्च कपोतशब्दान्मांसविकारे रस इत्यर्थः। तेनेति। मयटः कापोतमयमिति विकारावयवयोः प्रयोगाभावादित्यर्थः। तस्मादिति। यद्यनभिधानं नाश्रीयते तदा ञितश्च तत्प्रत्ययादिति सूत्रमपनीय बैल्वमयादिनिवृत्त्यर्थं तत्प्रत्ययाल्लुगिति वक्तव्यम्। अन्यच्चेति। गोश्च पुरीष इति विकारे प्रत्ययं मन्यते। यदातु पुरीषं नावयवो नापि विकारस्तदा गोर्मयट् तत्प्रत्यय एव न भवतीति लुकः प्रसङ्ग एव नास्ति। द्रुवयशब्दो द्रोर्विकार इति मानेवय इति वयप्रत्ययान्तः। एताभ्यामनुदात्तादिलक्षणोञ्। औष्ट्रकीति। वृद्धलक्षणस्य मयटो लुकि कृतेऽजन्तत्वाभावादीकाराप्रसङ्गः। वुञश्चेति। पाणिनीयलक्षणे दोषोद्भावनमेतत्। पालाशीति। पलाशस्य विकारः। पाणिनीयपलाशादिभ्यो वेति पक्षे ऽञ्। अदन्ताद्विकारे मयटो लुकि ईकाराप्रसङ्गः।

त्वण ईकारो न प्राप्नोति । मा भूदेवम् । अञ् योनुपसर्जनमिति अ-ञन्तादनुपसर्जनादित्येवं भविष्यति । नैवं शक्यम् । इह हि दोषः स्यात् । काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणीति । अणन्तादितीकारः प्रसज्येत । तस्मादस्तु न तेनानभिधानादित्येव । इह तर्हि कापोती रस इति प्राणिशब्दो नोपपद्यते । नैष दोषः । इदं तावदयं प्रष्टव्यः । योसावाद्यः कपोतः सलोमकः सपक्षः न च संप्रति प्राणीति । कथं तत्र प्राणिशब्दो वर्त्तत इति । अथ मतमेतत् । प्रकृत्यन्वया विकारा भवन्तीति । इहापि न दोषो भवति ॥

क्रीतवत्परिमाणात् ॥ १५६ ॥ कथमिदं विज्ञायते । क्रीते ये प्रत्यया विहितास्ते भवन्ति परिमाणाद्विकारावयवयोरिति । आहो स्वित्परिमाणात् क्रीते ये प्रत्यया विहितास्ते भवन्ति विकारावयवयोरिति । किं चातः । यदि विज्ञायते क्रीते ये प्रत्यया विहितास्ते भवन्ति परिमाणाद्विकारावयवयोरिति प्रत्ययमात्रं प्राप्नोतीति । अथ विज्ञायते परिमाणात् क्रीते ये प्रत्यया विहितास्ते भवन्ति विकारावयवयोरिति प्रकृतिमात्रात् प्राप्नुवन्ति । तस्मात्,क्रीतवत्परि-

---

लवणे त्वजन्तादञि सतीकारः सिध्यति । काशकृत्स्नेति । अणन्तस्य स्त्रियामध्येत्रामनुपसर्जनत्वादीकारप्रसङ्गः । तस्मादिति । यस्माल्लुकि पालाशीति न सिध्यति तस्मादनभिधानान्मयटोनुत्पत्तिराश्रयितव्या । केषां चित्तु ग्रन्थः । नैष दोषः । अध्येत्राममभिधेयायामण ईकारेण भवितव्यम् । यत्राध्येत्रां वर्त्तते लुसः सः यत्र श्रूयते उत्पन्नस्तस्मादीकः । अथ वा पुनरस्तु न तेनानभिधानादिति । अनेन यद्यपि काशकृत्स्ना परिहृता तथाप्यापिशला न परिहृता भवति । पालाश्या पिशलेन संवदेते तस्मादस्तु न तेनानभिधानादित्येष पाठो युक्तः । इह तर्हीति ।-उद्गतप्राणे मांसे प्राणिवाचिनः कपोतशब्दस्य वृत्तिः । सत्यां चावृत्तौ प्राणिवाचित्वाभावाद्रसे मांसविकारे कापोतशब्दो न सिध्यतीति चोद्यम् । कथं तत्रेति । तत्रापि लोके कपोतशब्दो दृश्यत इति प्रश्नः । प्रकृत्यन्वया इति । प्रकृतेरन्वयी येषु ते प्रकृत्यन्वयाः । प्रकृतिरेव विकाररूपतामापद्यमाना विकारावस्थायामपि क्व चित्प्रकृतिशब्देनाभिधीयत इत्यर्थः ॥

क्रीतव । प्रत्ययमात्रमिति । मुद्गैः क्रीतं मौद्गिकमिति क्रीते ठञ्विहित इति शूर्पस्य विकार इत्यत्रापि प्राप्नोति । प्रकृतिमात्रादिति ! शूर्पादञन्यतरस्यामित्यञ् ठञौ इ-

माणादङ्गं च *। अङ्गंच क्रीतवद्भवतीति वक्तव्यम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। क्रीतवदिति वतिनिर्देशोयम्। यदि च याभ्यःप्रकृतिभ्यो येन विशेषणेन क्रीते प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन परिमाणाद्विकारावयवयोरपि भवन्ति। ततोऽमी क्रीतवत् कृताः स्युः। अथ हि प्रकृतिमाचाद्वा स्युः प्रत्ययमाचं वा स्यात्तथा क्रीतवत्कृताः स्युः। अणो वृद्धान्मयट् *। अणो वृद्धान्मयडित्येतद्भवति विप्रतिषेधेन। अणोवकाशः। तित्तिडिक। तैत्तिडिकम्। मयटोऽवकाशः। काष्ठमयम्। इहोभयं प्राप्नोति। शाकमयम्। ओरञोनुदात्तादेरञश्च *। ओरञोनुदात्तादेरञश्च मयड् भवति विप्रतिषेधेन। ओरञोवकाशः। अरडु। आरडवम्। मयटः स एव। इहोभयं प्राप्नोति। दारु। दारुमयम्। अनुदात्तादेरञ् भवतीत्यस्यावकाशः। कुवल। कौवलम्। जरद्वृच। जारद्वृचम्। मयटः स एव। इहोभयं प्राप्नोति। आम्रमयम्। मयटः प्राण्यञ्विप्रतिषेधेन *। मयटः प्राण्यञ् भवति विप्रतिषेधेन। प्राण्यञोऽवकाशः। गृध्र। गार्ध्रम्। मयटः स एव। इहोभयंप्राप्नोति। चाषम्। भासम्। प्राण्यञ् भवति विप्रतिषेधेन। न वानवकाशत्वादपवादो मयट् *। न वैष युक्तोविप्रतिषेधः। योयमञो मयटश्च। किं कारणम्। अनवकाशत्वादपवादो मयट्। अनवकाशो मयट् सावकाशमञं बाधि-

---

त्वस्य विकार इत्यचापि प्राप्नुतः। अङ्गं चेति। कालेभ्यो भववदित्यत्र यदुक्तं सिद्धं तूभयनिर्देशःदिति। तदेवानेन प्रतिपाद्यते। अङ्गग्रहणेन प्रत्यासत्त्या परिमाणमेव गृह्यते। तेनायमर्थो भवति क्रीतार्थे यथा परिमाणमङ्गं यथा च परिमाणात् प्रत्ययस्तथा विकारेपि परिमाणमङ्गंप्रत्ययश्च। तेन यस्मात्परिमाणात् क्रीते यः प्रत्ययस्तस्मादेव स एव विकारेपि भवति। न वक्तव्यमिति। क्रीते परिमाणादित्येवान्यतरविशेषणत्वे परिमाणस्य सिद्धे वतिनिर्देशात्सर्वसादृश्यपरिग्रहार्थादुभयविशेषणं परिमाणग्रहणमर्थाद्भवतीत्यर्थः। अण इति। कोपधाच्चेति विहितात्। कौवलमिति। कुवल्या विकार॰इत्यर्थेऽञ्। मयटः स एवेति। काष्ठमयमिति। काष्ठशब्दस्याद्युदात्तत्वात्। आम्रमयमिति। आम्रशब्दोमितस्योर्दीर्घश्चेति रगन्तोनुदात्तादिः। गार्ध्रमिति। गृध्रस्य विकार इत्यर्थः। नवेति। ओरञोनुदात्तादेरञश्चेति य उक्तो विप्रतिषेधस्तन्निराकरोति यद्यनुवर्त्तन्तइति। तस्य विकार

ष्यते। स कथमनवकाशः। यद्यनुवर्त्तन्ते शैषिकाः। अथ निवृत्ताः शैषिकाः। द्व्यमाद्युदात्तं मयटोवकाशः। प्राण्यञश्च*। अयं चाप्ययुक्तो विप्रतिषेधः योयं मयटः प्राण्यञश्च। किं कारणम्। अनवकाशत्वापवादमयडित्येवमनवकाशो मयट्। स यथैव ओरञमनुदात्तादेरञं च बाधत एवं प्राण्यञमपि बाधेत। तस्मान्मयड्विधाने प्राणिप्रतिषेधः*। तस्मान्मयड्विधाने प्राणिभ्यः प्रतिषेधो वक्तव्यः। स तर्हि वक्तव्यः। न वक्तव्यः। मध्येपवादाः पूर्वान्विधीन्बाधन्त इत्येवं मयं मयट् ओरञमनुदात्तादेरञं च बाधिष्यते प्राण्यञं न बाधिष्यते यद्येतदस्ति। मध्येऽपवादापुरस्तादपवादा इति। मानुवृत्तन् शैषिकाः। पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त इत्येवमयमण् अञं बाधिष्यते मयटं न बाधिष्यते। अनुदात्तादेरञः प्राण्यञ्विप्रतिषेधेन *। अनुदात्तादेरञः प्राण्यञ् भवति विप्रतिषेधेन। अनुदात्तादेरञ् भवतीत्यस्यावकाशः। जारद्वृच। जारद्वृचम्। प्राण्यञः स एव। इहोभयं प्राप्नोति। कपोत। कापोतम्। प्राण्यञ् भवति विप्रतिषेधेन। कः पुनरत्र विशेषः। तेन वा सत्यनेन वा। सापवादकः स विधिः। अयं पुनर्निरपवादः। यदि तेन स्यादिह न स्यात्। श्वाविधो विकारः शौवाविधम्॥

---

इत्यत्र शैषिकाणामनुवृत्तौ छे प्राप्ते मयडारभ्यमाणोन्यपूर्वको भवतीति छस्यैवाणोपि बाधक इत्यर्थः। एतच्च बाध्यसामान्यचिन्तायां येन नाप्राप्तइति न्यायस्यानवतारादेतन्न्यायानपेक्षयोच्यते। अथेति। तन्निवृत्तौ विध्यन्तरपूर्वको मयण् न भवतीति काष्ठमयादौ सावकाशः परत्वादेवाञं बाधते न त्वपवादत्वादित्यर्थः। प्राण्यञश्चेति। पूर्वं च विप्रतिषेधाभावेपीष्टसिद्धिर्भवत्येव। दारुमयमाम्रमयमिति। प्राण्यञि तु तदभावे चार्षं भासमितीष्टं न सिध्यति मयट्प्रसङ्गात्। तस्मादिति। नित्यं वृद्धशरादिभ्यो ऽप्राणिन इति वक्तव्यमित्यर्थः। यद्येतदस्तीति। यद्येतदाश्रीयत इत्यर्थः। मानुवृतन्निति। वृत्तेर्लुङ्गो लुङीति वा परस्मैपदम्। पुषादिद्युतादीति च्लेरङादेशः। शैषिकाणां निवृत्त्यनुवृत्त्योरपि विप्रतिषेधोपपत्त्या मयटा परत्वात्कोपधलक्षणोण् बाध्यत इत्यर्थः। जरद्वृच इति। जरद्वृचशब्दः समासस्वरेणान्तोदात्तत्वादनुदात्तादिः। स एवेति। गार्द्धमिति। कपोतशब्दो लघावन्त इति मध्योदात्तत्वादनुदात्तादिः। सापवाद इति। मयटा परत्वाद्बाध्यमानत्वात्। अयमिति। अनेन परत्वान्मयटो बाधनात्। श्वाविध इति। श्वानं विध्यतीति

फले लुक् ॥ १६३ ॥ फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात्* । फले लुग्वचनमनर्थम् । किं कारणम् । प्रकृत्यन्तरत्वात् प्रकृत्यन्तरमामलकशब्दः फले वर्त्तते । एकान्तदर्शनात् प्राप्नोति । एकान्तदर्शनात् प्रसङ्ग इति चेद् वृक्षे लुग्वचनम्*। एकान्तदर्शनात् प्रसङ्ग इति चेद् वृक्षे लुग्वक्तव्यः । वृक्षोऽपि हि फलैकान्तः ॥

लुप् च ॥ १६६ ॥ लुप्प्रकरणे फलपाकशुषामुपसंख्यानम्* । लुप्प्रकरणे फलपाकशुषामुपसंख्यानं कर्त्तव्यम् । व्रीहयः यवाः माषा मुद्गाः तिलाः ॥ पुष्पमूलेषु बहुलम्* । पुष्पमूलेषु बहुलं लुग्वक्तव्यः । मल्लिका । करवीरम् । बिसम् । मृणालम् । न च भवति पाटलानि मूलानि ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
चतुर्थाध्यायस्य तृतीये पादे द्वितीयमाह्निकम्
पादश्च समाप्तः ॥

---

क्विप् । नहिवृतीति दीर्घः । कृत्स्वरेणोत्तरपदस्यान्तोदात्तत्वादनुदात्तादित्वम् । अत्र मयडभावात् प्राग्दीव्यतीयोऽञ् भवति । द्वारादीनां चेति वृद्धिप्रतिषेधे ऐजागमश्च भवति ॥

फले । प्रकृत्यन्तरत्वादिति । आमलकादिशब्दः फले न यौगिकः आमलक्याः फलमिति किं तर्हि जातिशब्दएवेत्यर्थः । एकान्तदर्शनादिति । आमलक्या अवयवे आमलकं दृश्यते । ततश्च यौगिक एव फले आमलकशब्द इत्यर्थः । फलैकान्त इति । फलमेकान्तो यस्येति बहुव्रीहिः । यदि संबन्धदर्शनाद्यौगिकत्वमामलकशब्दस्य फले व्यवस्थाप्यते तदा संबन्धाविशेषादामलकस्येयमामलकी वृक्ष इति वृक्षावयविनि च्छप्रत्ययमुत्पाद्य लुग्विधेयः । तस्मादुभयत्राप्यामलकादयो जातिशब्दा एव स्वभावतो वर्तन्ते इत्यभ्युपगन्तव्यमित्यर्थः ॥

लुप् च । फलपाकशुषामिति । फलपाकेन ये शुष्यन्ति व्रीह्यादयस्तद्वाचिनामित्यर्थः । व्रीहय इति । बिल्वाद्यण् । यवा माषा इति । तृणधान्यानां च द्व्यषामित्याद्युदात्तत्वादौत्सर्गिकोऽण् । मुद्गशब्दाद् बिल्वाद्यण् । पाटलानीति । पाटलिशब्दो बिल्वादिः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य तृतीये पादे
द्वितीयमाह्निकम् । पादश्च समाप्तः ॥

प्राग्वहतेष्ठक् ॥ १ ॥ ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् * । ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानं कर्तव्यम् । माशब्दिकः । नैत्यशब्दिकः । कार्यशब्दिकः । आहौ प्रभूतादिभ्यः * । आहौ प्रभूतादिभ्यष्ठग्वक्तव्यः । प्रभूतमाह प्राभूतिकः । पार्याप्तिकः । पृच्छतौ सुस्नातादिभ्यः * । पृच्छतौ सुस्नातादिभ्यष्ठग्वक्तव्यः । सौस्नातिकः । सौखरात्रिकः । सौखशायनिकः । गच्छतौ परदारादिभ्यः * । गच्छतौ परदारादिभ्यष्ठग्वक्तव्यः । पारदारिकः गौरुतल्पिकः ॥

आकर्षात् ष्ठल् ॥ ९ ॥ इह केषां चित्सांहितिकं षत्वम् । केषां चित् षिदर्थम् तत्र न ज्ञायते केषा सांहितिकं षत्वं केषा षिदर्थमिति । किमत्र न्याय्यम् । परिगणनं कर्तव्यम् । आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ॥ आवासथत्किसरादेः षितः षडेते ठगधिकारे ॥ १ ॥

विभाषा विवधात् ॥ १७ ॥ वीवधाच्चेतिवक्तव्यम् । वैवधि कः ॥

त्रेर्मम् नित्यम् ॥ २० ॥ नित्यग्रहणं किमर्थम् । विभाषा मा भूत् ।

---

प्राग्वहतेष्ठक् । तदाहेति । तदिति कर्ममात्रं निर्दिश्यते । न तु द्वितीयासमर्थविभक्तिः । आहौ प्रभूतादिभ्य इत्यतो भेदेन वचनात्तेन पदसमुदायादयं प्रत्ययः । माशब्द इत्याह माशब्दिकः । नित्यः शब्द इत्याह नैत्यशब्दिकः तत्र पदसमुदायार्थ इतिनाप्रत्यवमृश्यमानो वचनक्रियासंबन्धात् कर्म संपद्यते। अप्रातिपदिकत्वात्तु द्वितीयानुत्पत्तिः । प्रभूतमाहेति । क्रियाविशेषणत्वात् कर्मत्वम् । पृच्छताविति । तिङन्तानुकरणमेतत् ।तत्र शब्दे कार्यासंभवात्तिङन्तार्थे ठग्विधिः ।

आक । इहेति । एकस्य वानेकस्य वा षकारस्य व्यञ्जनपरस्य श्रुत्वा विशेषानवधारणात्सांहितिकेऽपि वा षकारे नचिचेति द्विर्वचनविधानादनेकषकारत्वसंभवात्संशयः । आकर्षेति । श्लोकवार्तिककारः संदिग्धानसंदिग्धांश्च भ्रान्तिनिरासाय पर्यजीगणत् । षडेतइति । विधिवाक्यापेक्षं ष ट्त्वं प्रत्ययास्तु सप्त ते ।

विभाषा । वीवधाच्चेति वक्तव्यमिति । अत्र विवधवीवधशब्दौ पर्यायौ । तत्राविरविकन्यायो न संभवति ।उभाभ्यां प्रत्ययस्येष्टत्वात् । ततो वीवधाच्चेति वक्तव्यमित्युक्तम् ॥

त्रेर्मप् । विभाषा मा भूदिति । द्वे अत्र विभाषे संभवतः । एका महाविभाषा अपरा विभाषा विवधादिति । तत्रान्तरेणापि नित्यग्रहणं पूर्वसूत्र एवानन्तरस्य विभाषाग्रहण-

नैतदस्ति प्रयोजनम्। पूर्वस्मिन्नेवयोगे विभाषाग्रहणं निवृत्तम्। इदं तर्हि प्रयोजनम्। चेर्मब्वचनं नित्यविषयार्थम्*। नित्यं क्त्रान्तं मब्विषयमेव यथा स्यात्। केवलस्य प्रयोगो मा भूदिति। अस्ति प्रयोजनमेतत्। किं तर्हीति। तत्र यथाधिकारं तद्विषयताप्रसङ्गः*। तत्र यथाधिकारं तद्विषयता प्राप्नोति। निर्वृत्तइति वर्तते। तेन निर्वृत्त एव क्त्रान्तं मब्विषयं स्यात्। येन्ये उपचारास्तत्र न स्यात्। क्वचिमं महत्सु विहितमिति। एवं तर्हि भाव इति प्रकृत्य इमब्वक्तव्यः। कुट्टिमा भूमिः। सेकिमोसिरित्येवमर्थम्। ततो वक्तव्यम्। चेः। चेश्चेमप्प्रत्ययो भवति। ततो नित्यम्। नित्यं च चेरिमप् प्रत्ययो भवति। किमर्थमिदम्। नित्यं क्त्रान्तमिमब्विषयमेव यथा स्यात् केवलस्य प्रयोगो मा भूदिति॥

चूर्णादिनिः॥२३॥ अयं योगः शक्योवक्तुम्। कथं चूर्णी चूर्णिनौ चूर्णिन इति। इनिनैव मत्वर्थीयेन सिद्धम्॥

लवणाल्लुक्॥२४॥लवणाल् लुग्वचनानर्थक्यं रसवाचित्वात्*। लवणाल् लुग्वचनमनर्थकम्। किं कारणम्। रसवाचित्वात्। रसवाच्येष लवणशब्दः। नैषः संसृष्टिनिमित्तः। आतश्च रसवाची। असंसृष्टे च दर्शनात्*। असंसृष्टेपि हि लवणशब्दो वर्तते। तद्यथा। लवणं क्षीरम्। लवणं पानीयमिति। चेः संसृष्टे चादर्शनात्*। संसृष्टे

---

स्यात्स्वरितत्वादननुवृत्तत्वान्महाविभाषा नित्यग्रहणेन निवर्त्यते। इतरोनन्तरा विभाषा निवर्त्यत इत्युक्तमिति मत्वाह। नैतदस्तीति। इतरः स्वाभिप्रायं प्रकाशयति। इदं तर्हीति। निर्वृत्त एवेति। पङ्क्त्या निर्वृत्तमित्यस्यैव वाक्यस्य निवृत्तिः न तु पक्तिः क्रियत इत्यादेरपीत्यर्थः। क्वचिमं महदिति। प्रत्ययप्रयोगमन्तरेणापि महत्त्वादीनि क्त्रिमशब्दार्थविशेषणानि स्युरित्यर्थः। भाव इति प्रकृत्येति। भाववाचिनः शब्दान्निर्वृत्ते ऽर्थे इमब् विधेय इत्यर्थः। चेरिति। पूर्वेण सिद्धे नित्यार्थं वचनम्। तेन निर्वृत्ते तान्तवाक्यं निवर्त्यते। ततो नित्यमित्यनेनोपचारान्तरविषयस्यापि वाक्यस्य निवृत्तिः क्रियत इति तद्विषयता चिप्रत्ययस्य सिध्यति॥

चूर्णा। इनिनेति। ठक् तुसंसृष्ट इत्यनेनानभिधानान्न भविष्यतीति भावः॥

लव। रसवाचित्वादिति। रसस्य गुणत्वाद् गुणवाचिनां शुक्लादीनां गुणगुणिनोरभेदोपचाराद् गुणवृत्तिदर्शनान्नार्थो लुकेत्यर्थः। असंसृष्टे चेति। लवणेन द्रव्येण यदसंसृष्टं लवणरसयुक्तं चेत्तत्रापि लवणशब्दस्य दर्शनाद् गुणशब्दत्वमेवास्येत्यर्थः। संसृष्टे चेति।

चापि यदा नोपलभ्यते। तदाह लवणः सूपः। अलवणा यवागूः अलवणं शाकमिति॥

प्रयच्छति गर्ह्यम्॥ ३०॥ अयुक्तोयं निर्देशः। यदसावल्पं दत्वा बहु गृह्णाति तद्गर्ह्यम्। कथं तर्हि निर्देशः कर्त्तव्यः। प्रयच्छति गर्ह्यायेति *। स तर्हि तथा निर्देशः कर्त्तव्यः। नकर्तव्यः। तादर्थ्यात्ताच्छब्द्यं भविष्यति गर्ह्यार्थं गर्ह्यम्। मेस्याल्लोपो वा*। मेस्याच्छब्दलोपोवावक्तव्यः। द्विगुणं मे स्यादितिगच्छतिद्वैगुणिकः। त्रैगुणिकः। वृद्धेर्वृधुषिभावः *। वृद्धेर्वृधुषिभावो वक्तव्यः। वार्धुषिकः॥

धर्मं चरति॥४१॥ अधर्माच्च*। अधर्माच्चेति वक्तव्यम्। आधर्मिकः॥

ऋतोञ्॥ ४९॥ नृनराभ्याभञ्वचनम् *। नृनराभ्यामञ्चेति वक्तव्यम्। नुर्धर्म्यानारी। नरस्यापि नारी। विशसितुरिड्लोपश्च*। विशसितुरिड्लोपश्चाञ्च वक्तव्यः। विशसितुर्धर्म्यं वैशस्तम्। विभाजयितुर्णिलोपश्च *। विभाजयितुर्णिलोपोऽञ्च वक्तव्यः। विभाजयितुर्धर्म्यं वैभाजित्रम्॥

शिल्पम्॥ ५५॥ किं यस्य मृदङ्गः शिल्पं स मार्दङ्गिकः। किं चातः। कुम्भकारे प्राप्नोति। एवं तर्ह्युत्तरपदलोपो द्रष्टव्यः। शिल्प-

---

लवणद्रव्यसंसृष्टमपि यल्लवणरसं न संभवति तत्र न दृश्यते लवणशब्द इत्यर्थः॥

प्रयच्छ। अयुक्तोयमिति। उत्तमर्णो यदल्पं ददाति न तद् गर्ह्यम्।।यत्त्वल्पं दत्वा बहु गृह्णाति तदेव गर्ह्यमित्यर्थः। गर्ह्यायेति। द्विगुणाय प्रयच्छति द्वैगुणिक इतिचतुर्थ्यन्तात् प्रत्ययो विधेय इत्यर्थः। मेस्याल्लोपो वेति। उपचारापेक्षया विकल्पार्थो वाशब्दः। द्विगुणं मेस्यादिति वाक्यात् प्रत्ययो मेस्याच्छब्दलोपश्च। वार्द्धुषिक इति। वृद्ध्यर्थं धनं प्रयच्छतीत्यर्थः॥

धर्मम्। अधर्माच्चेति। तदन्तविधेर्ग्रहणवता प्रातिपदिकेन निषेधाद्वचनम्। येन विधिरित्येव धर्मान्तञ इति वार्त्तिकमनपेक्ष्यैतदुक्तम्॥

ऋतोञ्। नृनराभ्यामिति। नृशब्दस्य सूत्रेणैव सिद्धे प्रत्यये दृष्टान्तत्वेनोपादानम्। यथा नृशब्दादञ् भवत्येवं नरशब्दादपीत्यर्थः॥

शिल्पम्। अभ्यासपूर्वकं क्रियासु कौशलं शिल्पम्। मृदङ्गादिषु द्विविधा क्रिया ऽभ्याहननलक्षणा निष्पादनलक्षणा च। तत्रविशेषानुपादानात् पृच्छति। किं यस्येति। एवं तर्हीति। उपचरितवृत्तिः शिल्पशब्द आश्रीयत इत्ययमेवेवशब्दलोपः। कुम्भकारस्य हि

मिव शिल्पम्। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः। मौरजिकः। पाणविकः। पैठरिकः॥

शक्तियष्ट्योरीकक्॥ ५९॥ किमर्थमीकगुच्यते। न कगेवोच्येत। का रूपसिद्धिः। शाक्तीको याष्टीक इति। शक्तियष्ट्योरीकारोन्ते क-शब्दस्य प्रत्ययः। न सिध्यति। विभाषा चैव हि शक्तियष्ट्योरीकारः। अपि च कीप इति ह्रस्वत्वं प्रसज्येत। एवं तर्हीकगुच्यते। का रूप-सिद्धिः। शाक्तीको याष्टीक इति। सवर्णदीर्घत्वेन सिद्धम्। न सि-ध्यति। यस्येति लोपः प्राप्नोति। ईकारोच्चारणसामर्थ्यान्न भविष्य-ति। यदि तर्हि प्राप्नुवन् विधिरिकारोच्चारणसामर्थ्याद् बाध्यते। स-वर्णदीर्घत्वमपि न प्राप्नोति। यं विधिं प्रत्युपदेशोनर्थकः स विधि-र्बाध्यते। यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। यस्येति लोपं प्र-तीकारोच्चारणमनर्थकं सवर्णदीर्घस्य तु निमित्तमेव॥

अस्तिनास्तिदिष्टं मतिः॥ ६०॥ किं यस्यास्ति मतिः आस्तिकः। किं चातः। चौरे ऽपि प्राप्नोति। एवं तर्हि इतिलोपोत्र द्रष्टव्यः। अस्तीत्यस्य मतिः। आस्तिकः। नास्तीत्यस्य मतिः नास्तिकः।

---

मृदङ्गं मुख्यं शिल्पं वादकस्य तूपचरितम्। मृदङ्गवादनमिति। लोके तु मार्दङ्गिकश-ब्दस्य मृदङ्गवादनशिल्पोभिधेयः। तत्र साहचर्यान्मृदङ्गशब्दस्य वृत्तिविषये वृत्त्या गता-र्थत्वादप्रयोगो वादनशब्दस्य॥

शक्ति। ईकारान्त इति। बह्वादिपाठात्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्र-हणमिति वचनात् शक्तीयष्टिशब्दाभ्यां कग्भविष्यतीत्यर्थः। ईकारोच्चारणसामर्थ्यादिति। अन्यथा ककमेव विदध्यात्। न चावग्रहनिवृत्तिरिकारस्य प्रयोजनम्। यतो न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्। यं विधिमिति। एवं च दीर्घोच्चा-रणं प्रत्याख्यातम्। इककः सिद्धत्वात्। अन्ये त्वाहुः शक्तियष्टिभ्यां ठगिति ठग्विधानादे-व यस्येति लोपाभावः सिद्धः प्रहरणमित्यनेन हि ठकि सिद्धे पुनष्ठग्विधानं यस्येति लो-पाभावार्थमेव वाक्यनिवृत्तये नित्यार्थं तत्स्यादिति चेत्तन्न। शक्तियष्टिभ्यामित्येवाधिक-स्य ठकः पूर्वेणासिद्धस्य पुनर्विधानेन वाक्यनिवृत्तेरपि सिद्धत्वात्॥

अस्ति। चौरे पीति। तस्यापि मतिसद्भावात्। अचेतनस्य पदार्थो नास्तिकः स्यादि-ति वक्तव्यम्। न्यायस्य तु प्रदर्शनाद्भाष्यकारेण प्रतिपदं नोक्तम्। अस्तीत्यस्येति। परलो-कार्थका च सत्ता विज्ञेया। तत्रैव विषये लोके प्रयोगदर्शनात् तेन परो लोकोस्तीति

दिष्टमित्यस्य मतिः दैष्टिकः ॥

छत्रादिभ्यो णः ॥ ६२ ॥ किं यस्य छत्रधारणं शीलं छात्रः। किं चातः। राजपुरुषे प्राप्नोति। एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः। छत्रमिव छत्रम्। गुरुश्छत्रं तत्र गुरुणा शिष्यश्छत्रवत् छाद्यः। शिष्येण च गुरुश्छत्रवत्परिपाल्यः ॥

हितं भक्षाः ॥ ६५ ॥ हितं भक्षा इति चतुर्थीनिर्देशः *। हितं भक्षा इति चतुर्थीनिर्देशः कर्त्तव्यः। इतरथा ह्यनिर्देश.*। इतरथा ह्यनिर्देशो न भवति। हितशब्देन च योगे चतुर्थी विधीयते सा प्राप्नोति। स तर्हि चतुर्थीनिर्देशः कर्त्तव्यः। न कर्त्तव्यः। एवं वक्ष्यामि। हितं भक्षास्तदस्मै। ततो दीयते नियुक्तम्। तदस्मा इति ॥

तद्वहति रथयुगप्रासङ्गम् ॥ ७६ ॥ वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधानानर्थक्यं विहितत्वात् *। वहतीत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधिरनर्थकः। किं कारणम्। विहितत्वात्। विहितोऽत्र प्रत्ययस्तस्येदमिति। शब्दभेदादविधानम् शब्दभेदादविधिरयंभवति अन्यो हि शब्दो रथं वहति अन्यो हि रथस्य वोढेति। शब्दभेदादविधानमिति चेदर्थाश्रयत्वात् प्रत्ययविधानस्यार्थसामान्यात्सिद्धम् *। शब्दभेदादविधानमिति चेदर्थाश्रयः प्रत्ययवि-

---

मतिर्यस्य स आस्तिकस्तद्विपरीतो नास्तिकः। दिष्टशब्दो दैवपर्यायः। तेन दैवपरायणो दैष्टिकः ॥

छत्रा। राजपुरुष इति। यः पुरुषो राज्ञश्छत्रं धारयति स छात्रशब्दाभिधेयः स्यादित्यर्थः। उत्तरपदलोप इति। उत्तरपदस्येवशब्दस्य लोपो द्रष्टव्य इत्यर्थः। गौणी वृत्तिश्छत्रशब्दस्याश्रयणीया। तत्रैव प्रत्ययस्य दर्शनादित्युक्तं भवति। गुरुश्छत्रमिति। अज्ञानं शिष्यस्य छादयति निवर्त्तयति यतस्तत्र छत्रं शीलमस्य गुरुविषयं पालनं शीलमस्येत्यर्थः ॥

हितम्। इतरथा हीति। यदि चतुर्थी न निर्दिश्यते तदा प्रकृताया अस्मेति षष्ठ्याः संबन्धायोग्यत्वादिहानुपस्थानात्प्रत्ययार्थो न निर्दिष्टः स्यादित्यर्थः ॥

तद्वह। शब्दभेदादिति। षष्ठ्यन्तात् प्रत्ययो विधीयमानो द्वितीयान्तान्न प्राप्नोतीत्यर्थः। अर्थसामान्यादिति। अर्थस्यैक्यात् षष्ठ्यन्तादेव प्रत्ययोत्पत्ताविष्टसिद्धिर्भवत्येवेत्यर्थः।

धि: य एवार्थो रथं वहति स एवार्थो रथस्य वोढेति। तत्रार्थसामान्यात् सिद्धम्। इदं तर्हि प्रयोजनम्।। यो द्वौ रथौ वहति स द्विरथ्य:। यो द्वयो रथयोर्वोढा स द्विरथ:। तेन सति लुग्भवति। अनेन सति कस्मान्न भवति। प्राग्दीव्यतइत्युच्यते॥

संज्ञायां जन्या: ८२॥ किं निपात्यते। जनन्या जनीभावो निपात्यते यश्च प्रत्यय:। जन्या इति निपातनानर्थक्यं पञ्चमीनिर्देशात् *। जन्या इति निपातनमनर्थकम्। किं कारणम्। पञ्चमीनिर्देशात्। जनीशब्दादेषा पञ्चमी। इदं तर्हि प्रयोजनम्। सर्वकाल: प्रत्ययविधिर्यथा विज्ञायेत। जनीं वहन्ति जन्या: जनीं वोढारो जन्या:। जनीमवाक्षुर्जन्या इति॥

विध्यत्यधनुषा॥ ८३॥ विध्यत्यकरणेन *। विध्यत्यकरणेनेति वक्तव्यम्। इतरथा ह्यनिष्टप्रसङ्ग: *। अधनुषेत्युच्यमाने ऽनिष्टप्रसङ्ग: स्यात्। इहापि प्रसज्येत। शर्कराभिर्विध्यति। कण्टकैर्विध्यतीति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। कस्मान्न भवति कण्टकैर्विध्यति शर्कराभिर्विध्यतीति। अनभिधानात्॥

गृहपतिना संयुक्ते ञ्य:॥ ९०॥ गृहपतिना संयुक्तइत्युच्यते। तत्र दक्षिणाग्नावपि प्राप्नोति। दक्षिणाग्निरपि गृहपतिना संयुज्यते। एवं तर्हि गृहपतिना संयुक्तइत्युच्यते। सर्वश्च गृहपतिना संयुक्त:। तत्र प्रकर्षगतिर्विज्ञायते। साधीयो यो गृहपतिना संयुक्त:।

---

ननु रथाद्रथाङ्गइति तत्रोक्तम्। वोढर्यपि प्रयोगदर्शनादिष्यतामित्यदोष:। द्विरथ्य इति। रथसीताहलेभ्यो यद्विधाविति तदन्त विधि:॥

वृत्तिकारैर्यन्निपातनमाश्रितं तदनर्थकं विधि-
संज्ञायाम्। निपातनानर्थक्यमिति। वृत्तिकारैर्यन्निपातनमाश्रितं तदनर्थकं विधि-
नैवेष्टसिद्धिर्भवत्येवेत्यर्थ:। जनीशब्दादिति। जायतेस्यां गर्भ इति जनी वधूरुच्यते। जनिसहिभ्यामितीण्प्रत्ययो जनिवध्योश्चेति वृद्धिप्रतिषेध:। सर्वकालइति। यद्यपि विध्यर्थत्वेपि संख्याकालयोरविवक्षयैतत् सिध्यति तथापि न्यायानुसरणे प्रतिपत्तिगौरवं स्यादिति निपातनाश्रयणम्॥

विध्य। शर्कराभिरिति। प्रधानस्याच सापेक्षत्वाद् वृत्तिप्रसङ्ग:। अनभिधानादिति। शर्कराभि: पद्य इति प्रयोगाभावादित्यर्थ:। एवं चाधनुषेत्यपि न वक्तव्यम्। अन्ये त्वाहु: धनुषा करणविशेषेण करणमात्रं लक्ष्यतइति सर्वत्र करणे प्रवर्त्तते॥

गृह। गृहपतिर्यजमान:। यस्मिन्निति। यजमानेन पत्न्या च ये रागविशेषा: क्रि-

कश्च साधीयः । यस्मिन्पत्नीसंयाजाः क्रियन्ते। अथ वा गृहपतिर्नामन्त्रः स यस्मिन्नुच्यते । अथ वा संज्ञायामिति वर्त्तते ॥

मत्वर्थे मासतन्वोः ॥ २१८ ॥ मासतन्वोरनन्तरार्थे वा* । मासतन्वोरनन्तरार्थे वेति वक्तव्यम् । मध्वस्मिन्नस्ति मध्वस्मिन्ननन्तरमिति वा माधव्यः । माधवः । लुगकारेकाररेफाश्च प्रत्ययाः * । लुगकारेकाररेफाश्च प्रत्यया वक्तव्याः । लुक् । मधुः । नभः । तपः । अकारः । इषः । ऊर्जः । इकारः । शुचिः । रेफश्च । शुक्रः ॥

वसोः समूहे च ॥ १४० ॥ अक्षरसमूहे छन्दस उपसंख्यानम्*। अक्षरसमूहे छन्दस उपसंख्यानं कर्त्तव्यम् । ओ श्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । ये यजामहइति पञ्चाक्षरम् । यजेति द्व्यक्षरम् । द्व्यक्षरो वषट्कारः । एष वै सप्तदशाक्षरः छन्दस्यः प्रजापतिर्यज्ञमनुविहितः । छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् * । छन्दसि वहुभिर्वसव्यैरुपसंख्यानं कर्त्तव्यम् । हस्तौ पृणस्व बहुभिर्वसव्यैः । अग्निरीशे वसव्यस्येत्युपसंख्यानम् * । अग्निरीशे वसव्यस्येत्युपसंख्यानं कर्तव्यम् । तत्तर्हि उपसंख्यानं कर्त्तव्यम् । न कर्त्तव्यम् । स्वार्थविज्ञानात्सिद्धम् * । स्वार्थविज्ञानात् सिद्धमेतत् । वसव एव वसव्याः पान्तु ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

पादोध्यायश्च समाप्तः ॥ इति चतुर्थोध्यायः ॥

---

यन्ते ते पत्नीसंयाजास्ते च गार्हपत्य एव क्रियन्ते न दक्षिणाग्नौ । अथ वेति । स च मन्त्रो गार्हपत्यविषय एव ॥

मत्वर्थे। अनन्तरार्थे वेति। वाशब्दः समुच्चये । मत्वर्थे मासतन्वर्थविशेषणेपि प्रत्ययोनन्तरार्थेपीत्यर्थः। मधुरिति । मधु विद्यतेस्मिन् नभांसि विद्यते यस्मिन् तपो विद्यतेऽस्मिन्निति यतो लुक् । नभः शब्दोत्राभ्रवाची । अत्र नभस्तप इति नपुंसकत्वं छान्दसत्वात् । इष इति । एषणमिट् सास्मिन्नस्ति ऊर्गस्मिन्नस्ति शोचनं शुक् सास्मिन्नस्तीति प्रत्ययाः । शुक्र इत्यत्रायस्मयादित्वाज्जश्त्वाभावः ॥

वसोः । अक्षरसमूह इति । अक्षरसमूहवाचिनश्छन्दः शब्दाद्यत्प्रत्ययः । ओश्रावयेति । अक्षराणि गण्यन्ते । स्वार्थविज्ञानादिति । वसोरिति योगविभागः कर्तव्यः । तेन स्वार्थे भविष्यतीत्यर्थः ॥ इत्युपाध्यायजैय्यटपुत्त्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् । पादोध्यायश्च समाप्तः ॥

पञ्चमोऽध्यायः

# महाभाष्यम्

## महर्षिपतञ्जलिप्रणीतम्

कैय्यटकृतव्याख्यासहितम् ।

पण्डितकृपारामशर्म्मणा स्वकीयतिमिरनाशकयन्त्रालये

काशिकराजकीयप्रधानपाठशालायां
व्याकरणशास्त्रे लब्धप्रतिष्ठेन
त्रिपाठिपं० भगवत्प्रसादशर्म्मणा
संशोधयित्वा
प्रकाशितम् ।

काश्याम्

सम्वत् १९४६

यह पुस्तक पण्डित कृपाराम शर्मा की दूकान पर मिलेगी ।

प्रथम वार १०००

प्राक् क्रीताच्छः ॥ १ ॥ प्राग्वचनं किमर्थम् । प्राग्वचनउक्तम्*। किमुक्तम्। तत्र तावदुक्तम् । प्राग्वचनं सकृद्विधार्थम् अधिकारात्सिद्धमिति चेदपवादविषये ऽप्रसङ्ग इति । इहापि प्राग्वचनं क्रियते । सकृद्विधानार्थम् । सकृद्विहितः प्रत्ययो विहितो यथा स्याद् योगेयोगे तस्य ग्रहणं मा कार्षमिति । नैतदस्ति प्रयोजनम् । अधिकारादप्येतत्सिद्धम् । अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगेयोग उपतिष्ठते । अधिकारात्सिद्धमिति चेदपवादविषये छप्रसङ्गः। अधिकारात् सिद्धमिति चेदपवादविषये छः प्राप्नोति । उगवादिभ्यो यत् इत्येति छोपि प्राप्नोति । तस्मात् प्राग्वचनं कर्त्तव्यम् । अथ क्रियमाणेपि प्राग्वचने किमिदं विज्ञायते प्राक् क्रीताद्याः प्रकृतय आहो स्वित्प्राक्क्रीताद्ये ऽर्था इति । किं चातः । यदि विज्ञायते प्राक्क्रीताद्याः प्रकृतय इति स एव दोषः अपवादविषये छप्रसङ्ग इति । अथविज्ञायते प्राक् क्रीताद्य ऽर्था इति न दोषो भव-

---

श्रीनमःपरमात्मने । प्राक् क्रीताच्छः । प्राग्वचनमिति । छ इत्येवाधिकारोस्त्विति प्रश्नः । प्राग्वचन उक्तमिति । अस्मिन् प्राग्वचनबे यद्वक्तव्यं तदन्यत्रोक्तं न्यायस्य तुल्यत्वात्। प्राग्दीव्यतोणित्यत्र यदुक्तं तदेवेहापि द्रष्टव्यमित्यर्थः । सकृद्विधानार्थमिति । प्राक्क्रीताद्ये ऽर्थास्तानपेक्ष्य सकृदेवानेन तेष्वर्थेषु छस्य विधानं यथा स्यादित्यर्थः । विहितो यथास्यादिति । पुनः श्रुत्या प्रकर्षप्रतिपत्तिः । सुष्ठु लाघवेन विहितो यथा स्यादित्यर्थः । योगेयोग इति । असति सकृद्विधाने तस्मै हितं छ इत्येवं प्रत्ययनिर्देशसूचं कर्त्तव्यस्तथा च शास्त्रगौरवप्रसङ्गः । अधिकारादिति । छ इत्येतावदेव सूत्रमस्तु नार्थः प्राक्क्रीतादित्यनेन । यथैव प्रत्ययादयोधिकारा अवधिविशेषोपादानमन्तरेणेष्टं साधयन्ति एवमयमपि साधयिष्यतीत्यर्थः । प्रतियोगमित्यनेन लाघवार्थत्वमधिकारस्य दर्शयति। योगेयोउपतिष्ठतइत्यनेन न त्वधिकारस्य व्यापारः प्रदर्श्यते । उगवादिभ्यो यच्छस्ते तीति नदीस्रोतोन्यायेन प्रतिसूत्रमधिकारस्योपस्थानात् उत्सर्गापवादयोः संनिधानाविशेषात्तव्यत्तव्यानीयरामिव विकल्पः स्यादित्यर्थः । केचिदाहुः । उगवादिभ्योयदित्ययमप्यधिकारस्ततो द्वयोरपि पाराध्यात्परस्परासंबन्धादुपलक्षणमेतत् । इदं तु प्रदर्शनीयं शरीरा । वयवाद्यच्छस्ते ति । स एव दोष इति । तस्मै हितमित्यादिष्वर्थनिर्देशेषु स्याप्प्रातिपदिकादिति सामान्यप्रकृतिरधिकारात्सविहिता शरीरावयवाद्यदित्यादौ तु विशेषप्रकृतिरुक्ता प्राक्क्रीतात् प्रकृतिभ्यो विधीयमानश्छो विशेषप्रकृतेरपि प्राप्नोतीत्यर्थः ।

ति। समाने ऽर्थे प्रकृतिविशेषादुत्पद्यमानो यत् छं बाधिष्यते। यथा न दोषस्तथास्तु। प्राक् क्रीताद्य ऽर्था इति विज्ञायते। कुत एतत्। तथा ह्ययं प्राधान्येनार्थं प्रतिनिर्दिशति इतरथा हि बह्व्यस्तत्र प्रकृतयः पठ्यन्ते ततो यां कां चिदेव प्रकृतिमवधित्वेनोपाददीत। अथ वा पुनरस्तु प्राक् क्रीताद्याः प्रकृतय इति। ननु चोक्तमपवादविषयेपि छप्रसङ्ग इति। न वा क्व चिद्वावचनात्*। न वा एष दोषः। किं कारणम्। क्वचिद्वावचनात्। यदयं क्व चिद्वावचनं करोति। विभाषा हविरपूपादिभ्य इति। तज्ज्ञापयति नापवादविषये छो भवतीति। यद्येवं, नार्थः प्राग्वचनेन। अधिकारात्सिद्धम्। ननु चोक्तमधिकारात्सिद्धमिति चेदपवादविषये छप्रसङ्ग इति। परिहृतमेतत्। न वा क्व चिद्वावचनादिति। अथ किमर्थमियानवधिर्गृह्यते न प्राक्ठञ इत्येवोच्येत। एतज्ज्ञापयत्याचार्यः अर्थेष्वेवभवतीति। किमेतस्य ज्ञापने प्रयोजनम्। समानेर्थे प्रकृतिविशेषादुत्पद्यमानो यत् छं बाधते॥

उगवादिभ्यो यत्॥ २॥ यञ्ञ्यावञः पूर्वविप्रतिषिद्धं सनङ्गूपानहौ प्रयोजनम्*। यञ्ञ्यौ भवतः अञः पूर्वविप्रतिषेधेन। किं प्रयोजनम्। सनङ्गूपानहौ प्रयोजनम्। यतोवकाशः शङ्कव्यं दारु। पिच-

---

समानेऽर्थ इति। तस्मै हितमित्यस्मिन्नर्थे शरीरावयवाद्यद्विधीयमानः प्रकृत्यन्तरे सावकाशं छं बाधते तक्रमिव कौण्डिन्ये दधीत्यर्थः। तथा ह्येति। यथाजातीयोऽवधिस्तथाजातीयेनावधिमता भाव्यम्। यथा मासात्पर इत्युक्ते कालः प्रतीयते ग्रामात् पूर्व इत्युक्ते देशः। अन्यथात्पूर्वइत्यत्रेव। यां कां चिदिति। आपरिखायाश्छ इत्येवंवाच्यं स्यादित्यर्थः। अथवेति। अभ्युपगम्यवादोयम्। न त्वयं पक्षो युक्तः। अवधिविजातीयत्वात्। नन्वस्मिन्पक्षे छस्यार्थो न निर्दिष्टः स्यात् ततश्च स्वार्थे प्राप्नोति। नैष दोषः। तस्मै हितमित्यादीनामर्थनिर्देशानां प्रत्ययं प्रति साकाङ्क्षत्वात् संनिहितेन छेन निराकाङ्क्षीकरणादर्थस्य लाभात् स्वार्थे प्रत्ययाप्रसङ्गात्। वावचनादिति। विकल्पवचनादित्यर्थः। अर्थेति। ठञः परोर्थः प्रकृतिर्वा प्राक्क्रीताद्वास्तीति लाघवार्थं प्राक् ठञ इति वक्तव्यम्। प्राग्वतेष्ठञिति प्रत्यासन्नष्ठञ् ग्रहीष्यत इत्यर्थः। अर्थेष्विति। तेन ज्ञापकाश्रयणमन्तरेण न्यायेनापवादविषये छस्याप्रवृत्तिः सिध्यति। प्राक् ठञ इति तूच्यमाने तुल्यजातीयस्यावधिमतोऽभावादर्थाः प्रकृतयो वावधिमत्त्वेन संगृह्येरन्।

उगवा। यञ्ञ्याविति। छापवादानां परविप्रतिषेधाबाधनायेदम्।

व्यः कार्पासः। अञोवकाशः वाध्रं वारत्रम्। सनङ्गुर्नाम चर्मविकारः तस्मादुभयं प्राप्नोति। सनङ्ग्व्यं चर्म। अयस्यावकाशः। औपानह्यंदारु। अञः स एव। उपानन्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति। औपानह्यं चर्म। ढञ्च*। ढञ्च भवत्यञः पूर्वविप्रतिषेधेन। ढञोवकाशः। छादिषेयं तृणम्। अञः स एव। छदिर्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति छादिषेयं चर्म। ढञ् भवति पूर्वविप्रतिषेधेन। हविरपूपादिभ्यो विभाषायां यत्*। हविरपूपादिभ्योविभाषाया यद्भवति पूर्वविप्रतिषेधेन। हविरपूपादिभ्यो विभाषाया अवकाशः। आमिक्ष्यमामिक्षीयम्। पुरोडाश्यं पुरोडाशीयम्। यतः स एव। इहोभयं प्राप्नोति चरव्यास्तण्डुलाः यद्भवतिपूर्वविप्रतिषेधेन। अन्नविकारेभ्यश्च*। अन्नविकारेभ्यश्च विभाषाया यद्भवति पूर्वविप्रतिषेधेन। अन्नविकारेभ्यो विभाषाया अवकाशः। सुर्याः सुरीयाः। यतः स एव। इहोभयं प्राप्नोति सक्तव्या धाना इति। यद्भवति पूर्वविप्रतिषेधेन्। स तर्हि पूर्वविप्रतिषेधो वक्तव्यः। न वक्तव्यः। इष्टवाची परशब्दः विप्रतिषेधे परं यदिष्टं तद्भवतीति। अयं नाभिशब्दो गवादिषु पठ्यते। तत्रैव चोच्यत नाभिनंभ चेति। तत्र चोच्यते। नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात्। नाभेर्नभभावे प्रत्ययस्यानुपपत्तिः। किंकारणम्। प्रकृत्यभवात्। विकृतेः प्रकृतावभिधेयायां प्रत्ययेन भवितव्यम्।

---

छदिर्नामेति। छादनं छदिस्तच्च चर्मविकारोपि संभवति। अत्राहुः छदिरुपानहोः प्रतिपदं प्रत्ययविधानादयुक्तो विप्रतिषेधः। तथा चोक्तम्। परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति नार्थः पूर्वविप्रतिषेधेनेति चिन्त्यमेतत्। हविरपूपादिभ्य इति सूत्रपाठानुपूर्वीप्रदर्शनार्थमपूपादिग्रहणम्। न ह्यपूपादिषु प्रतिपदं कश्चिदुकारान्तः पठ्यते। पाठेऽपि वापवादोसौ भवतु त्सर्गापवादयोश्चायुक्तो विप्रतिषेधस्तस्माद्धविर्विशेषवाचिविषय एव विप्रतिषेधोऽभिमतः। गवादिगणे हविःशब्दस्य पाठात् स्वरूपग्रहणाच्च विभाषाहविरित्यत्र हविर्विशेषवाचिग्रहणम्। चरव्या इति। चर्वधिकरणं हविरुपचाराच्चरुशब्देनोच्यते। अन्नविकारेभ्य श्चेति। अपूपादिष्वन्नविकारेभ्यश्चेति पठ्यते तद्विषयोयं विप्रतिषेध उच्यते। प्रपञ्चार्थश्चायं पाठो हविरपूपादिभ्यो विभाषाया यदित्युक्तत्वात्। तत्र सामर्थ्यादपूपादिग्रहणेनानिर्द्धारितविशेषा अन्नविकारा एव गृह्यन्ते। प्रकृत्यभावादिति। यद्यपि हितार्थे नभ्यं तैलं नभ्यं लोहबन्धनमिति सिध्यति।

नच नाभिसंज्ञकाया विकृतेः प्रकृतिरस्ति। यदेव हि तन्मण्डलचक्राणां तदेव मण्डलचक्रं तन्नभ्यमित्युच्यते। सिद्धं तु शाखादिषु वचनाद् ह्रस्वत्वं च*। सिद्धमेतत्। कथम्। शाखादिषु नाभिशब्दः पठितव्यः। ह्रस्वत्वं च वक्तव्यम्। नाभिरिव नभ्यमिति। कः पुनरिहोपमार्थः। यत्तदक्षधारणं परिवर्त्तनं वा। अपर आह। यत्तदञ्जनोपाञ्जनमिति। न तर्हीदानीमिदं वक्तव्यं नाभिनभ चेति। वक्तव्यं च। किं प्रयोजनम्। यान्येतान्यरवन्ति चक्राणि तदर्थम्। तत्र नाभिसंज्ञायाविकृतेः प्रकृतिरस्ति यानि चाप्यनरवन्ति चक्राणि तदर्थमपीदं वक्तव्यम्। दृश्यते हि समुदायादवयवस्य पृथक्त्वम्। तद्यथा।

---

तथापि नभ्यं चक्रमिति न सिध्यति। न हि चक्रस्य नाभिर्विकृतिरपि त्ववयवः। नापितादर्थ्यमस्ति अवयविनोऽवयवार्थत्वाभावादिति पर्यनुयोगः। यस्तु शरीरावयवो नाभिस्ततः परत्वाद्धितार्थे शरीरावयवाद्यदिति यता भाव्यं नाभ्यं तैलमिति। गवादियता सन्नियुक्तो नभभावोन्यस्य यति न भवति। न चेति। यद्यपि दारुलक्षणा प्रकृतिर्नाभिरस्ति। तथापि नभ्यशब्दवाच्यं चक्रं नाभेः प्रकृतिर्नास्तीत्यर्थः। मण्डलचक्राणामिति। नेयं निर्द्धारणे षष्ठी सामान्य विशेषाभावात्। न हि भवति गवां गौः संपन्नक्षीरतमेति। तस्मादवयवावयविभावे षष्ठी। मण्डलाकारं चक्रं येषां तानि मण्डलचक्राणि शकटानि। तेषां मण्डलाकारं यच्चक्रं तन्नभ्यमुच्यते। तच्च नाभेः प्रकृतिर्न भवतीति तत्र प्रत्ययो न प्राप्नोतीत्यर्थः। कः पुनरिति। अवयवावयविनोः सादृश्याभावादिति प्रश्नः। इतरः क्रियाद्वारकं सादृश्यं प्रतिपादयति। यत्तदिति। छिद्रवान् रथाङ्गविशेषो नाभिशब्दवाच्यः स यथाऽक्षाख्यं काष्ठविशेषं धारयति परिवर्तते चैवं चक्रमपीति तत्सादृश्यान्नभ्यशब्देनाभिधास्यत इत्यर्थः। अञ्जनोपाञ्जनमिति। अञ्जनं तैलाभ्यङ्गः उपाञ्जनं समीपाभ्यङ्गः। यान्येतानीति। एतच्चोपलक्षणम्। नभ्यो लोहबन्धो नभ्योक्ष इत्याद्यर्थमपि पठितव्यमेव। अरवत्सु चक्रेषु पृथग्व्यवस्थितेभ्यः काष्ठेभ्यः पृथग्भूता एवनाभ्यादयोवयवा उत्पद्यन्ते तत्र नाभिप्रकृतिकाष्ठं नभ्यं भवत्येव। अररहितं तु चक्रमेकस्मादेव काष्ठादुत्पद्यत इति पृथङ्नाभेः प्रकृतिभूतकाष्ठाभावात् प्रत्ययाप्रसङ्गः स्यादित्यर्थः। यानि चापीति। अनराणीति वक्तव्ये चक्रजातिविशेषप्रतिपत्त्यर्थो मतुब्निर्देशः। अनराणीत्युक्ते भग्नाराण्यपि चक्राणि प्रतीयेरन् तस्मादरवत्पर्युदासेनानुपजातारचक्रप्रतीतिरनरवन्तीत्यनेन भवति। ननु यथा वृक्षा एव बहवो वनं न तु तद्व्यतिरिक्तम्। एवं नाभ्यादय एव चक्रं तत्र भेदनिबन्धनो नाभिचक्रयोः प्रकृतिविकारभावो न स्यादित्याशङ्क्य भेदं तावदवयवावयविनोः साधयति। दृश्यत इति। भेदेनापि व्यवहारोवय-

वार्च्ची शाखेति । गुणान्तरयोगाच्च विकारशब्दो दृश्यते । तद्यथा । बैभीतको यूपः । खादिरं चषालमिति । तत्रावयवात्समुदाये वृत्तिर्भविष्यति । अथ यो नभ्यार्थो वृत्तः कथं तत्र भवितव्यं नभ्यो वृत्तो नभ्या शिंशिपेति । नभ्यात्तु लुग्वचनम् * । नभ्यात्तु लुग्वक्तव्यः । स तर्हि लुग्वक्तव्यः । न वक्तव्यः । तादर्थ्यात्ताच्छब्द्यं भविष्यति । नभ्यार्थो नभ्यइति ॥

कम्बलाच्च संज्ञायाम् ॥ ३ ॥ अयं योगः शक्योऽवक्तुम् । कथमशीतिशतं कम्बल्यमिति । निपातनादेतत्सिद्धम् । किं निपातनम् । अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकीति । इदं तर्हि प्रयोजनम् संज्ञायामिति वक्ष्यामीति । इह मा भूत् कम्बलीया ऊर्णा। एतदपि नास्ति प्रयोजनम् । परिमाणपर्युदासेन पर्युदासे प्राप्ते कम्बल्यग्रहणं तत्र क्रियते परिमाणार्थम् । परिमाणं च संज्ञैव ॥

विभाषा हविरपूपादिभ्यः ॥ ४ ॥ किमियं प्राप्ते विभाषा आहो स्विदप्राप्ते कथं च प्राप्ते कथं वाऽप्राप्ते । उगवादिति वा नित्ये प्राप्ते अन्यत्र वाऽप्राप्ते । हविरपूपादिभ्यो ऽप्राप्ते * । हविरपूपादिभ्योऽप्राप्ते विभाषा प्राप्ते नित्यो विधिः । चरव्यास्तण्डुलाः ॥

---

वावयविनोदृश्यते न केवलमभेदेनैवेत्यर्थः । ननुप्रकृत्युच्छेदे विकारस्य दर्शनं यथा काष्ठोच्छेदे भस्मनः । न चेह चक्रोच्छेदे नाभिदर्शनमित्याशङ्क्याह । गुणान्तरयोगादिति । तत्रावयवीयस्वक्रस्य नाभिसंज्ञकः सोऽञ्जनादिगुणयुक्तनाभिसंज्ञावयवप्रकृतिस्तद्द्वारेण चक्रमपि प्रकृतिर्दृश्यते ह्यवयवनिबन्धनो व्यपदेशः समुदाये यथा पटो दग्ध इत्यादौ । तत्र बुद्धिपरिगृहीतभाविविकारापेक्षा लब्धप्रकृतिव्यपदेशनाभिलक्षणावयवद्वारकस्वक्रस्य नभ्यव्यपदेशः । तादर्थ्यादिति । अनेनैव न्यायेन चरव्यतण्डुलार्था व्रीहयोपि चरव्याः अङ्गारीयकाष्ठार्थो वृक्षोप्यङ्गारीय एवेति प्रकृतौ छो न भवतीति वेदितव्यम् ।

कम्बला । निपातनादिति । अन्तस्वरितपाठाच्च यदन्तत्वं विज्ञास्यते । परिमाणपर्युदासेनेति । अपरिमाणान्ताद्द्विगोस्तद्धितलुकि पञ्चाश्वेत्यादौ ङीपि प्रतिषिद्धे कम्बल्यग्रहणे तत्र परिमाणार्थमेवेत्यर्थः । परिमाणं च संज्ञैवेति । संज्ञायत इति संज्ञा ।

विभाषा । किमियमिति । यद्यपि हविरपूपादिभ्यो विभाषाया यदिति पूर्वविप्रतिषेधप्रदर्शनादप्राप्तविभाषात्वमिहावगतम् । तथापि शिष्याणां सुखावबोधनायोपन्यासः ॥

शरीरावयवाद्यत् ॥ ६ ॥ यत् प्रकरणे रथाच्च * । यत्प्रकरणे रथाच्चोपसंख्यानंकर्तव्यम् । रथाय हिता रथ्या ॥

खलयवमाषतिलवृषब्रह्मणश्च ॥ ७ ॥ वृषशब्दोयमकारान्तो गृह्यते । वृषन्शब्दोपि नकारान्तोस्ति तस्योपसंख्यानं कर्त्तव्यं वृषशब्दश्चादेशो वक्तव्यः । वृष्णे हितमिति विगृह्य वृष्यमित्येव यथा स्यात् । तथा ब्रह्मशब्दो नकारान्तो गृह्यते ब्राह्मणशब्दश्चाकारान्तोप्यस्ति तस्योपसंख्यानं कर्त्तव्यं ब्रह्मन्शब्दश्चादेशो वक्तव्यः । ब्राह्मणेभ्यो हितमिति विगृह्य ब्रह्मण्यमित्येव यथा स्यात् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । समानार्थावेतौ । वृषशब्दः वृषन्शब्दश्च । ब्रह्मन्शब्दो ब्राह्मणशब्दश्च । अतश्च समानार्थौ एवं ह्याह । कुतोनुचरसि ब्रह्मन् कुतो नुचरसि ब्राह्मणेति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः । अपरस्मादुत्पत्तिर्भविष्यति अविरविकन्यायेन । तद्यथा । अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति आविकमिति । एवमिहापि वृषाय हितमिति विगृह्य वृष्यमिति भविष्यति । वृष्णे हितमिति विगृह्य वाक्यमेव । तथा ब्राह्मणे हितमिति विगृह्य ब्रह्मण्यमिति भविष्यति ब्राह्मणेभ्यो हितमिति विगृह्य वाक्यमेव भविष्यति । चैशब्द्यं चेह साध्यं तच्चैवं सति सिद्धं भवति ॥

---

शरीरा । रथायेति । हितार्थ एव रथाद्यथास्यादर्थान्तरे मा भूदित्येवमर्थ मुगवादिभ्यो यदित्यत्रोपसंख्यानं न कृतम् । के चिद् रथसीताहलेभ्यो यद्विधाविति तदन्तविधिमिच्छन्ति । अन्ये तु हलसीताशब्दयोः साहचर्यात् चतुर्थाध्यायविहित एव यति तदन्तविधिर्न त्वस्मिन्नित्याहुः ।

खल । वृषशब्दोयमिति । न तु कृतनलोपोऽकारान्तोऽन्यथाऽसंदेहाय कृतनलोपो निर्दिश्येतेति भावः । वृषन्शब्द इति । उच्चारणादेव नान्तत्वे ज्ञाते नकारान्त इति वचनं स्वरूपनिरूपणार्थम् । तस्येति । अन्यथा ततम्छः प्रसज्येत । वृषशब्दस्यादेश इति । अन्यथा ये चाभावकर्मणोरिति प्रकृतिभावाद्वृषण्यमिति स्यात् । कुतोनुचरसीति । ब्रह्मशब्दस्यानेकार्थत्वाद् ब्राह्मणशब्दपर्यायत्वं नातिप्रसिद्धमिति व्युत्पादयति । एकेन विग्रह इति एकेन विग्रह एवेत्यर्थः । विग्रहस्तु द्वाभ्यामपि भवतीति नासौ नियम्यते । वगृह्येति । भिन्नकर्तृकत्वात् क्त्वानुपपत्तिः । नैष दोषः । उत्पत्तिशब्देनोत्पादनमुच्यते अन्तर्भावितण्यर्थत्वात् पदेः परावरयोगे चेति वा क्त्वाप्रत्ययः । वृषन्ब्राह्मणशब्दाभ्यामनभिधानाच्छ प्रत्ययो न भवतीत्यर्थः ।

आत्मन्विश्वजनभोगोत्तरपदात्खः ॥ ९ ॥ भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात् * । भोगोत्तरपदात्खविधानेऽनिर्देशः । अगमको निर्देशो ऽनिर्देशः । किं कारणम् । पूर्वपदार्थहितत्वात् । उत्तरपदार्थप्रधानस्तत्पुरुषः पूर्वपदार्थप्रधाने च प्रत्यय इष्यते । पितृभोगाय हिते प्राप्नोति । पित्रे चैव हित इष्यते । एवं तर्हि भोगीनर्प्रत्ययो विधास्यते । भोगीनरिति चेद्वावचनम् * । भोगीनरिति यदि प्रत्ययो विधीयते वावचनं कर्त्तव्यम् । मात्रीयः पित्रीयइत्यपि यथा स्यादिति । राजाचार्याभ्यां नित्यम् * राजाचार्याभ्यांनित्यमितिवक्तव्यम् । राजभोगीनः । आचार्यादणत्वं च । आचार्यभोगीनः । किं भोगीनरप्रत्ययोविधीयत इत्यतः राजाचार्याभ्या नित्यमिति वक्तव्यम् । नेत्याह । सर्वथा राजाचार्याभ्यां नित्यमिति वक्तव्यम् । इह च ग्रामणिभोगीनः सेनानिभोगीन इति उत्तरपद इति ह्रस्वत्वं न प्राप्नोति । इह चाब्भोगीन इति अपो भीति तत्वं प्राप्नोति । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं भोगोत्तरपदात्खविधाने ऽनिर्देशः पूर्वपदार्थहितत्वादिति । नैष दोषः । अयं भोगशब्दोऽस्त्येव द्रव्यपदार्थकः । तद्यथा । भोगवानयं देश इत्युच्यते यस्मिन् गावः सस्यानि च वर्त्तन्ते । अस्तिक्रियापदार्थकः । तद्यथा । भोगवानयं ब्राह्मण इत्युच्यते यः सम्यक्स्नानादीः क्रिया-

---

आत्मन् । अनिर्देश इति । योयं हितमिति प्रत्ययार्थनिर्देशः । स भोगोत्तरपदात्खविधाने विवक्षितार्थप्रत्यायनासामर्थ्यादनिर्देशः । तत्कार्याकरणात् । तथाहि । लोके पितृभोगीणादिशब्दैः पित्रादिहितस्यार्थस्य प्रतिपत्तिः पित्रादिभोगहितस्य प्रतिपत्तिप्रसङ्गः । वावचनमिति । अन्यथा भोगीनराच्छो बाध्येत । भोगोत्तरपदात्खविधाने केवलेभ्यः पित्रादिभ्यो बाधकाभावाच्छः सिध्यति । किंभोगीनरिति प्रत्यासत्त्याश्रयेण प्रश्नः । सर्वथेति । सामर्थ्यं बलवदित्युत्तरम् । ननु भोगोत्तरपदात्खविधाने क्रियमाणे ऽपि नित्यग्रहणे केवलाभ्यां राजाचार्याभ्यां छस्य निवृत्तिर्न सिध्यति । एवं तर्हि तथा पाठः कर्त्तव्यः । यथेष्टं सिध्यति राजाचार्याभ्यां नित्ये भोगोत्तरपदाभ्यामेव हिते प्रत्ययइति । ग्रामणि भोगीन इति । ग्रामण्यो भोग इति षष्ठीसमासः । इको ह्रस्वोऽङ्यो गालवस्येति ह्रस्वः । तत्त्वं प्राप्नोतीति । भकारादौ प्रत्ययेऽङ्गस्य विधीयमानमिति भावः । द्रव्यपदार्थक इति । भोगो धनमुच्यते । भोगवानयं ब्राह्मण इति ।

अनुभवति। तद्यः क्रियापदार्थकस्तस्येदं ग्रहणम्। यश्च पितृस्थाभ्यः क्रियाभ्यो हितः संबन्धादसौ पित्रे हितो भवति। यदि संबन्धादस्तु द्रव्यपदार्थकस्यापि ग्रहणम्। योपि हि पितृद्रव्याय हितः संबन्धादसौ पित्रे हितो भवति। अथ वा भोगशब्दः शरीरवाच्यपि दृश्यते। तद्यथा। अहिरिव भोगैः पर्येति। अहिरिव शरीरैरिति गम्यते। एवं पितृशरीराय हितः पितृभोगीण इति। खविधाने पञ्चजनादुपसंख्यानम् *। खविधाने पञ्चजनादुपसंख्यानं कर्त्तव्यम्। पञ्चजनाय हितः पञ्चजनीनः। समानाधिकरण इति वक्तव्यम्। यो हि पञ्चानां जनाय हितः पञ्चजनीयः स भवति। सर्वजनाट्ठञ्च *। सर्वजनाट्ठञ्च वक्तव्यः खश्च। सर्वजनाय हितः सार्वजनिकः। सर्वजनीनः। समानाधिकरण इति च वक्तव्यम् यो हि सर्वेषां जनाय हितः सर्वजनीयः स भवति। महाजनान्नित्यम् *। महाजनान्नित्यं ठञ्वक्तव्यः। महाजनाय हितो माहाजनिकः। तत्पुरुष इति वक्तव्यम्। बहुव्रीहौ मा भूत्। महान् जनोऽस्य महाजनः। महाजनाय हितो महाजनीयः। यदि तर्ह्यतिप्रसङ्गाः सन्तीत्युपाधिः क्रियते। आद्यन्यासेष्युपाधिः कर्त्तव्यः। आ-

---

धनवानपि कृपणो निर्भोग उच्यते। तस्मादत्र क्रिया भोगशब्दवाच्या। संबन्धादिति। यस्तु पितृधनाय हितो नासाववश्यं पितृहितो भवति। ममैतद्धनं भविष्यतीत्येवं बुद्ध्या पितृधनरक्षणादिति भावः। योपीति। यस्तु ममैतद्भविष्यतीति मन्यते नासौ पितुरेतद्धनमिति रक्षति किं तर्हि ममैतदित्यभिमानेन। अहिरिवेति। समुदाये वृत्तो भोगशब्द एकदेशेषु फणेषु प्रयुज्यते। केचिदाहुः। भुजङ्गाङ्गमेव भोगशब्देनोच्यते न तु सर्वशरीरमिति। तदयुक्तम्। अनन्तत्वात् प्रयोगविषयस्यावधारणस्य कर्तुमशक्यत्वात्। पञ्चजनादिति। मनुष्याः पञ्चजना उच्यन्ते। चत्वारो वर्णाः रथकारपञ्चमाः पञ्चजना येति। दिक्संख्ये संज्ञायामिति समासः। समुदाये वृत्तस्यावयवेपि वृत्त्या एकवचनं यथा सप्तर्षिरिति। योहिपञ्चानामिति। ननु सापेक्षत्वादत्र समासेन न भाव्यम्। संख्या हि संख्येयविशेषमपेक्षते। संख्येयस्यैव जनापेक्षया व्यतिरेकस्तद्द्वारेण तु संख्याया गुणस्येति साक्षात्संबन्धाभावात्समासाप्रसङ्गः। नैष दोषः। प्रकरणादिवशाद्यदाविशिष्टसंख्येयवृत्तित्वावसायः संख्याशब्दानां तदा जनादिना साक्षात्संबन्धाद्भवति वृत्तिः। सर्वजनायेति। सर्वोजन इति पूर्वकालैकसर्वेति समासः। सर्वेषां जनायेति। सर्वसाधारणाय वेश्यादिजनायेत्यर्थः। महाजनादिति। नित्यग्रहणं सर्वजनादुक्तः खोमा भूदित्येवमर्थ-

त्मन्विश्वजनसमानाधिकरण इति वक्तव्यम्। यो हि विश्वेषां जनाय हितः विश्वजनीयः स भवति। अथमतमेतदनभिधानादाद्यन्यासे न भवतीति। इहापि नार्थ उपाधिग्रहणेन। इहाप्यनभिधानान्न भविष्यति॥

सर्वपुरुषाभ्यां णढञौ॥ १०॥ सर्वाण्णस्य वावचनम् *। सर्वाण्णस्यवेति वक्तव्यम्। सार्वः। सर्वीयः। पुरुषाद्वध इति वक्तव्यम्। पौरुषेयो बधः। अत्यल्पमिदमुच्यते पुरुषाद्वध इति। पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्। पौरुषेयो बधः। पौरुषेयो विकारः। पौरुषेयस्समूहः। तेन कृतं पौरुषेयं न दैवतम्॥

तदर्थं विकृतेः प्रकृतौ॥१२॥ तदर्थमिति कृत्यनामभ्यष्ठञ्*। तदर्थमिति कृत्यनामभ्यष्ठञ्वक्तव्यः। इन्द्रमहार्थमैन्द्रमहिकम् गाङ्गामहिकम्। कावेरुपञ्चिकम्। न वा प्रयोजनेन कृतत्वात् *। न वा वक्तव्यम्। किं कारणम्। प्रयोजनेन कृतत्वात्। यद्वीन्द्रमहार्थम् इन्द्रमहस्तस्य प्रयोजनं भवति। तत्र प्रयोजनमित्येव सिद्धम्॥

छदिरुपधिबलेर्ढञ्॥१६॥ उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात् *। उपध्यर्थमिह प्रत्ययस्यानुपपत्तिः। किं कारणम्। उपध्यभावात्। विकृतेः प्रकृतावभिधेयायां प्रत्ययेन भवितव्यम्। न चोपधिसंज्ञिकाया विकृतेः प्रकृतिरस्ति। यद्धि तद्रथाङ्गं तदौप-

---

म्। महाजनशब्दस्य समानाधिकरणपद आत्वनिर्देशादेवावसीयते।

सर्व। सर्वादिति। अनुकरणत्वात्सर्वनामकार्याभावः। सर्वनामानीत्यन्वर्थसंज्ञाविज्ञानात्। अनाश्रितार्थस्य च शब्दरूपस्यानुकरणमिति प्रकृतिवद्भावादपि सर्वनामत्वं न भवति। पुरुषाद्वधेति। प्रत्ययार्थसामर्थ्येन षष्ठीसमर्थविभक्तिर्लभ्यते। कृते तु तेनेति तृतीयोपात्तैव। पुरुषश्च लोकप्रसिद्धः पाण्यादियुक्त इह गृह्यते। न तु सांख्यादिशास्त्रप्रसिद्धस्तत्र प्रत्ययस्यादर्शनादित्याहुः।

तदर्थम्। कृत्यनामभ्य इति। अवश्यकर्तव्यत्वात्करणार्हत्वाद्वा कृत्या उत्सवास्तन्नामभ्य इत्यर्थः। नवेति। प्रयुज्यतेऽनेनेति प्रयोजनं फलमप्यभिधीयते कारणमपीति भावः।

छदि। उपध्यभावादिति। उपधिशब्दो विकृतिवाची नास्ति। एकस्यैवरथाङ्गविशेषस्योपध्यौपधेयशब्दाभ्यामभिधानात् प्रकृतिप्रत्ययार्थस्य प्रकृतिविकारभावाभावादित्यर्थः।

धेयमित्युच्यते। सिद्धं तु कृदन्तस्य स्वार्थेऽवचनात्*। सिद्धमेतत्। क-थम्। कृदन्तस्य स्वार्थेऽवक्तव्यः। उपधीयत उपधेयम्। उपधेयमेवौप-धेयम्। सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु ननु चोक्तम् उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावादिति। नैतदस्ति। अयमु-पधिशब्दोऽस्त्येव कर्मसाधनः। उपधीयत उपधिरिति। अस्ति भा-वसाधन उपधानमुपधिरिति। तद्यो भावसाधनस्तस्येदं ग्रहणम्। एवमपि न सिध्यति। किं कारणम्। विकृतेः प्रकृताविति वर्तते। प्रकृति-विकृतिग्रहणं निवर्त्तिष्यते। तच्चावश्यं निवर्त्यम्। इहार्थमुत्तरार्थं च। इहार्थं तावत्। बालेयास्तण्डुलाः। उत्तरार्थम्। ऋषभोपानहोर्ञ्यः। आर्षभ्यो वत्स इति। अथ तदर्थमित्यनुवर्त्तते उताहो न। किं चार्थोऽनु-वृत्त्या। बाढमर्थः। तदस्य तदस्मिन् स्यादिति तदर्थं यथा स्यात् इ-ह मा भूत्। प्रासादो देवदत्तस्य स्यादिति। प्राकारो नगरस्य स्या-दिति। यदि तदर्थमित्यनुवर्त्तते। ऋषभोपानहोर्ञ्यः। ऋषभार्थो घासः। उपानदर्थस्तिलकल्क इत्यत्रापि प्राप्नोति। एवं तर्हि अनु-वर्त्तते प्रकृतिविकृतिग्रहणम्। ननु चोक्तं बल्यृषभयोर्न सिध्यतीति। किं पुनर्भवान् विकारं मत्वाह बल्यृषभयोर्न सिध्यतीति। यदि तावद्यः प्रकृत्युपमर्देन भवति स विकारः। वैभीतिको यूपः खादिरं चषाल-

---

सिद्धं त्विति। उपधेयशब्दात्कर्मसाधनयदन्तात् स्वार्थेऽञ् वक्तव्य इत्यर्थः। तद्यो भावसा-धन इति। तत्र हि तादर्थ्यं संभवति। उपधानक्रियार्थत्वाद्रथाङ्गविशेषस्य। एवम-पीति। यद्यपि लोके क्रियाविकारत्वेन क्वचिन्निर्दिश्यते। बहुविकारो यं मनुष्यो हसति गायति नृत्यतीति। तथापि प्रत्ययविधौ विशिष्ट एव प्रकृतिविकारभावो गृह्यते यत्र प्रकृ-त्युच्छेदो यत्र वा प्रकृते रूपान्तरापत्तिः। बालेया इति। अत्र तण्डुलानां तादर्थ्यम-स्ति। न तु प्रकृतिविकारभावो बल्यवस्थायामपि तण्डुलानां तदवस्थत्वादिति भावः। आर्षभ्य इति। यथा पक्वमाम्रफलमाम्रफलविकारत्वेन न प्रसिद्धमपि तु प्रत्यभिज्ञाव-शात्तत्त्वेनैवमृषभोऽपि न वत्सविकारः। अथेति। तदर्थग्रहणाननुवृत्तौ स्वार्थे प्रत्ययउप-धिशब्दात्सिध्यतीति भावः। ऋषभोपानहरथादयश्च शब्दास्तादर्थ्याद्वत्सादिषु वर्त्तमानाः स्वार्थ एव प्रत्ययमुत्पादयिष्यन्ति। प्रासाद इति। अत्र संभावनामात्रं गम्यते न तु ता-दर्थ्यमिति प्रत्ययो नेष्यते इति कारणापरामर्शेनेदमुच्यते। यदि तर्हि तदस्येत्यनेन ताद-र्थ्ये प्रत्ययः क्रियते तदा योग्यतामात्रविवक्षायां प्रत्ययाप्रसङ्गः। अरणीयं स्थूणाकाष्ठमि-

मिति न सिध्यति। अथमतमेतत्तदेव गुणान्तरयुक्तं विकार इति बत्यृषभयोरपि सिद्धं भवति। गुणान्तरयुक्ता हि तण्डुला वालेयाः। गुणान्तरयुक्तश्च वत्स आर्षभ्यः। औपधेयं तु न सिध्यति। वचनात्स्वार्थिको भविष्यति॥

तदस्य तदस्मिन्स्यादिति॥ १६॥ स्याद्ग्रहणं किमर्थम्। इह मा भूत्। प्रासादो देवदत्तस्य प्राकारो नगरस्येति। अथ क्रियमाणेपि स्याद्ग्रहण इह कस्मान्न भवति प्रासादो देवदत्तस्य स्यात्

---

ति। अत्रापि बुद्धिपरिकल्पितारोपिततादर्थ्याश्रयणे प्रत्ययो भविष्यतीत्याहुः। गुणान्तरयुक्ताहीति। बत्सावस्थायां यो गुणः सन्निवेशलक्षणो लाक्षादिकृतलौहित्यादिलक्षणो वा तदपेक्षया प्राक्तनगुणयुक्तादित्यर्थः। गुणान्तरयुक्तश्च वत्सइति। सुजातावयवः संहननवान्महाप्राणऋषभावस्थाप्राप्तये यदा परिपोष्यते न तु दानविक्रयार्थं तदातादर्थ्यस्य संभवः। आम्रं तु पक्कं यद्यप्याम्रविकारो गुणभेदात्। तथापि तत्त्वबुद्ध्युत्पादाल्लोके प्रकृतिविकारभावस्याऽप्रसिद्धत्वात्। तत्र प्रत्ययाभावः। आम्रपक्कावस्थयो राम्रशब्द एव वाचकत्वेन प्रवर्त्तते न तु शब्दान्तरं वत्सर्षभशब्दवत्। औपधेयंत्विति। सत्यपि क्रियापेक्षेद्रव्यस्य तादर्थ्ये प्रकृतिविकारभावात्। वचनादिति। कर्मसाधनकिप्रत्ययान्तादुपधिशब्दात्स्वार्थे ढञ् प्रत्यय उपध्यौपधेयशब्दयोर्लोकेपर्यायत्वादेकस्यार्थस्यात्मापेक्षया तादर्थ्ये प्रकृतिविकारभावा भावात्।

तदस्य। स्याद्ग्रहणमिति। क्रियमाणे ऽपि स्याद्ग्रहणे नैवातिप्रसङ्गनिवृत्तिरितिकरणादेव सर्वातिप्रसङ्गनिवृत्तिः सेत्स्यतीति प्रश्नः। प्रासादो देवदत्तस्येति। अक्रियमाणे स्याद्ग्रहणे स्वस्वामिसंबन्धादावतिप्रसङ्ग उक्तः। अस्येति षष्ठ्या संबन्धमात्रस्य प्रतिपादनात्सामान्ये च सर्वविशेषान्तर्भावात्। ननु तदर्थग्रहणानुवृत्त्यात्र न भविष्यति। तथा च छन्दिरुपधिबलेर्ढञित्यत्र भाष्यं बाढमर्थ इत्यादि। एवं तर्ह्यसति स्याद्ग्रहणे प्रासादार्थोयं देवदत्त उत्पन्नो योग्योयंप्रासादलाभइति तादर्थ्यसंभवात्प्रत्ययप्रसङ्गः। अस्येति। यदा देवदत्तनामा केन चिदीश्वरो दृष्टस्ततः प्रासादं विस्तीर्णं दृष्ट्वासौ संभावयति नायं प्रासादो ऽन्यस्य संभवति देवदत्तस्यायंप्रासादः स्यादिति तदा प्रत्ययः प्राप्नोतीत्यर्थः। नन्वत्र तादर्थ्यं न प्रतीयत इति प्रत्ययो न भविष्यति। एवं तर्हि प्रासादलाभयोग्योसौ देवदत्तः प्रासादार्थ इत्येवं विवक्षायामिदमुदाहरणम्। अथ वा तदर्थग्रहणमत्र नानुवर्त्तते इतिकरणेनानिष्टनिवृत्तेः साधयिष्यमाणत्वात् पूर्वसूत्रे तु [भाष्यकारेणेतिकरणापरामर्शेन प्रसङ्गान्तरेण तदर्थग्रहणस्यैवानुवृत्तिर्दर्शिता न त्वसौ सिद्धान्तस्तथा चान्यार्थमपि दारु योग्यतामात्रेण प्रासादीयमुच्यते न च तत्र तदार्थ्यलेशोप्यस्ति। न च प्रतीयते येनास्द

प्राकारो नगरस्य स्यादिति । शक्यार्थे लिङिति वक्तव्यम् । नैवं श-क्यम् । इदानीमेवह्युक्तं नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशे-षणमिति । एवं तर्हि इतिकरणः क्रियते । ततश्चेद्विवक्षा भवति । विवक्षा च द्वयी । अस्त्येव प्रायोक्त्री विवक्षा । अस्ति लौकिकी । प्रायोक्त्री विवक्षा प्रयोक्ता हि मृद्व्या स्निग्धया श्लक्ष्णया जिह्वया मृ-दून्स्निग्धान् श्लक्ष्णान् शब्दान् प्रयुङ्क्ते । लौकिकी विवक्षा यत्र प्रा-यस्य संप्रत्ययः प्राय इति लोको व्यपदिश्यते । न च प्रासादो देव-दत्तस्य स्यात् प्राकारो नगरस्य स्यादित्यत्रोत्पद्यमानेन प्रत्ययेन प्रा-यस्य संप्रत्ययः स्यात् । यद्येवं, नार्थः स्याद्ग्रहणेन । न हि प्रासादो

---

पि तादर्थ्यं बुद्ध्या परिकल्प्य प्रयोगः क्रियेत । शक्यार्थ इति पठितव्यमित्यर्थः । इदानी-मेवेति । चिरवृत्तमपि वस्तु बुद्ध्या भावितत्वात्प्रत्यासन्नमिव प्रतीयते । उपदेशेऽजनुना-सिक इदित्यत्रेदमुक्तम् । प्रायग्रहणादसंज्ञायामपि घञ् भवति । प्रायवचनात्संज्ञाया-मेव घञ् स्याद्वा न वा न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति तत्र हि घञ् विधेयत्वात्प्रधानं तस्यैव प्रायग्रहणं च विशेषणं न्याय्यम् । न तु संज्ञायां प्रायग्रहणं विशेषणं परार्थस्य स्वसंस्कारप्रतिपत्तावयोग्यत्वाच्छब्देन पारार्थ्यापन्नस्यैव प्रत्यायनादेक-वाक्यत्वाच्चोपाधिविशेषणशब्दयोश्च क्व चित्पर्यायत्वं क्रियाभावशब्दयोरिव । क्वचित्तु भे-देन व्यवहारः । तदुक्तम् । अर्थविशेष उपाधिस्तदन्तवाचः समानशब्दो यः । अनुपाधि-रतोन्यच्छ्लाघादिविशेषणं यद्वदिति तत्र स्यादित्येतत्प्रकृत्यर्थविशेषणायोपात्तं परतन्त्र-मयोग्यं शक्यार्थ इत्यनेनविशेषणेनसंबन्धानुभवे । ननुविशेषणसंबन्धमननुभूयप्रकृत्यर्थंवि-शेषयिष्यति । नैतदस्ति । विशेषणसंबन्धानुभवेप्रधानत्वंतस्यस्यात् । ननूपाधित्वंप्रतीति-कालएवस्वतस्य पारार्थ्यमवगतमिति कुतोविशेषणसंबन्धः । अथोपाधिद्वयेन प्रकृत्य-र्थः संबध्येत । तदिहापि प्रसज्येत । शक्यः प्रासादो देवदत्तस्य स्यादिति । तत्र ज्ञातुमु-पभोक्तुं वा शक्य इति प्रकृत्यर्थस्य शक्यार्थत्वविशेषणसंबन्धसंभवः । मृदूनिति । अपभ्रं-शानित्यर्थः । तस्मात् प्रयोक्तृविवक्षा नाश्रीयते प्रयोक्तुः स्वातन्त्र्यान्नियमाभावात् । प्रा-यस्येति । समग्रकल्पस्येत्यर्थः । तस्माद्यत्रार्थे लोकाः शब्दान् प्रयुञ्जते तदर्थाभिधानि यः त एव शास्त्रेणानुविधीयन्ते । प्रयोगमूलत्वाद् व्याकरणस्मृतेः । अयमेव न्यायः क्वचिदि-ति करणेनोपसंगृह्यते । तत्रेतिशब्दो हेत्वर्थः सन् विवक्षामनुसारयति । योऽयमर्थ-स्तदस्य तदस्मिन् स्यादिति तदर्थप्रत्यायनाय यदा विवक्षा भवति अतो हेतोरयमर्थः । प्रत्ययोत्पत्तिनिमित्तत्वेनाश्रीयत इति । अथ वा एवमर्थं वृत्तिरितिशब्दो विविक्षामनुसा-

देवदत्तस्य प्राकारो नगरस्येत्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य संप्रत्ययः स्यात्॥

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्॥ १९॥ किमर्थं संख्यायाः पृथग्ग्रहणं क्रियते। न संख्यापि परिमाणमेव तत्र परिमाणपर्युदासो भविष्यति। एवं तर्हि सिद्धे सति यत्संख्यायाः पृथग्ग्रहणं करोति तज्ज्ञापयत्याचार्य्यः अन्या संख्या अन्यत्परिमाणमिति। किमेतस्य ज्ञापने प्रयोजनम्। अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकीति। द्वाभ्यां शताभ्यां क्रीता द्विशता। त्रिशता। परिमाणपर्युदासो न भवतीति। यद्येतज्ज्ञाप्यते। तदस्य परिमाणं संख्यायाः संज्ञासंघसूत्राध्ययनेष्विति विशेषणं न प्रकल्पते परिमाणं या संख्येति। इह च क्रीतवत्परिमाणादिति संख्याविहितस्य प्रत्ययस्यातिदेशो न प्रकल्पते। शतस्य विकारः शत्यः। शतिकः। साहस्र इति। यत्तावदुच्यते एतज्ज्ञापयत्याचार्य्योऽन्या संख्या ऽन्यत्परिमाणमिति। नैतज्ज्ञापकसाध्यमन्यासंख्यान्यत्परिमाणमिति। न्याय-

---

यति। एवं यदि लोकस्य विवक्षा भवति तत्र प्रत्यय इत्यर्थः। न च लोकस्य प्रासादो देवदत्तस्य स्यादित्यर्थस्य प्रतिपादनाय प्रासादीयो देवदत्त इति शब्दप्रयोगेच्छाभवति भवाद्यर्थप्रतिपादनायैवैतच्छब्दप्रयोगात्।

आर्हा। किमर्थमिति। परिमीयतेऽनेनेति परिमाणमिति क्रियाशब्दत्वात्परिमाणशब्दस्य संख्याया अपि परिच्छेदहेतुत्वात् पृथग्ग्रहणं न कर्तव्यमिति मत्वा प्रश्नः। एवंतर्हीति। आचार्य्यदेशीयः परिहरति। यथा प्राच्यभाङ्गरतानां ग्रहणे सिद्धे बह्वच इत्यत्रभेदेनोपादानमन्यत्र प्राच्यग्रहणे भरतग्रहणनिवारणार्थम्। तेनेञः प्राचामिति भरतेभ्यो युवप्रत्ययस्य लुङ् भवति औद्दालकिः पिता औद्दालकायनः पुत्र इति। एवमिहापि संख्याग्रहणमन्यपरिमाणग्रहणे संख्याया अग्रहणार्थम्। तेन द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यत्र द्विगुलक्षणस्य ङीपोपरिमाणान्तत्वात् प्रतिषेधः सिध्यति। यथा पञ्चाश्वेति। पणपादेति नित्येयति प्राप्ते शाणाद्वेत्यत्र ऽतशाणाभ्यां वेति वचनाद्यत्प्रत्ययाभावात् पक्षे शताच्च ठन्यतावशत इत्यत्रासमासग्रहणानुवृत्त्या संख्यालक्षणस्य कनोऽध्यर्द्धपूर्वेति लुकि कृते द्विशतेति भवति। यद्येतदिति। शिष्य आचार्यदेशीयेनोक्ते दूषणमुद्भावयति। इदानीमाचार्य आह। यत्तावदिति। परिमाणशब्दः क्रियाशब्दत्वेपि विशिष्टपरिच्छेदहेतौ द्रोणादौ रूढो न संख्यामभिधेयत्वेन गृह्णाति यथा पङ्कजशब्दः पद्ममेवाभिदधाति न तु कुसु-

सिद्धमेवैतत् । भेदमात्रं संख्याह । यच्चेषीकान्तं यच्चापरिमाणं तस्य सर्व- स्य संख्याभेदमात्रं ब्रवीति । परिमाणं तु सर्वतः । सर्वतोमानमिति चा- तः परिमाणमिति । प्रस्थस्य च समानाकृतेर्न कुतश्चिद्विशेषो गम्यते । न चोन्मानतो न परिमाणतो न प्रमाणतः । किं पुनरुन्मानं किं परिमा- णं किंप्रमाणम् । ऊर्ध्वमानं किलोन्मानम् ॥ ऊर्ध्वंयन्मीयते तदुन्मान- म् । परिमाणंतु सर्वतः ॥सर्वतो मानमिति चातः परिमाणम् । कुत एत- त् । परिः सर्वतो भावे वर्त्तते । आयामस्तु प्रमाणं स्यात् ॥ आयामविव- क्षायां प्रमाणमित्येतद्भवति । संख्या बाह्या तु सर्वतः ॥ आतश्च सर्वतः संख्या बाह्या । भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्च न ॥ एवंचकृत्वा संख्यायाः पृथग्ग्रहणं क्रियते । यदप्युच्यते तदस्य परिमाणं संख्या-

---

दादिकमपीत्यर्थः । भेदमात्रमिति । भेदः पदार्थानां वैलक्षण्यं तन्मात्रं संख्याशब्दः प्रति- पादयति । मूर्तामूर्तं गणनात्मकत्वात् संख्यायाः, एको घट इत्यत्रापि द्व्यादिनिरासाद्भे- दावगतिरस्त्येव । यच्चेषीकान्तमिति । अपचितपरिमाणोपलक्षणमिषीकान्तग्रहणम् । तेनायमर्थः । हिमवदादि महापरिमाणमपि संख्यया गण्यते सप्त कुलाचला इति । अप चितपरिमाणमपि त्रयः परमाणव इति । यच्चापरिमाणमिति । अमूर्तमप्यात्मादि गण्य- ते इत्यर्थः ॥ उन्मानप्रमाणपरिमाणानि तु मूर्तद्रव्यविषयाण्येव । क्वचित्पाठः यच्च परिमा णमिति । तत्रायमर्थः । द्रोणादिपरिमाणमपि संख्यया परिच्छिद्यते द्रोणाविति । परि- माणग्रहणं चोपलक्षणं सर्वस्य संख्यापरिच्छेद्यत्वात् । तदुक्तम् । दिष्टिप्रस्थसुवर्णादि मू- र्तिभेदाय कल्पते । क्रियाभेदाय कालस्तु संख्यासर्वस्य भेदिकेति ॥ सर्वत इति । आरोह- परिणाहाभ्यां स्वगताभ्यां धान्यादि येन मीयते काष्ठादिमयेन तत्परिमाणं प्रस्थादिकमु- च्यते । प्रस्थस्य चेति । संख्ययैव विशेषो गम्यते द्वौ प्रस्थौ त्रयः प्रस्था इति न लभ्यत इत्यर्थः । भिन्नसन्निवेशस्य हस्तादिनापि परिच्छेदो भवतीति समानाकृतिग्रहणं समा- नसन्निवेशप्रतिपादनार्थम् । प्रसङ्गेन उन्मानप्रमाणयोरपि स्वरूपप्रतिपादनंप्रश्नपूर्वकं क रोति । किं पुनरिति । ऊर्ध्वमिति । ऊर्ध्वदिगवस्थितं परिच्छेदकमुन्मानमुच्यते । यथा हास्तिनमुदकमित्यत्र हस्तीति के चिदाहुः । अन्ये तु हस्तग्रादेः प्रमाणे चान्तर्भावात्तु- लादण्डादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेर्गुरुत्वं मीयते तदुन्मानं तच्चोर्ध्वारोपणादूर्ध्वमुच्यतइत्याहुः । आयाम इति । वि- स्तारो येन मीयते दारुवस्त्रादीनां तत्प्रमाणं हस्तादि तच्चायामपरिच्छेदत्वादुपचारा- दायामशब्देनोच्यते । नैषेति । नकुतश्चित् संनिवेशादेः संख्या मानं सन्निवेशादिनिरपेक्षं

याः संज्ञासंघसूत्राध्ययनेष्विति विशेषणं न प्रकल्पतइति। आहायं परिमाणं या संख्येति न चास्ति संख्या परिमाणं तत्र वचनादियती विवक्षा भविष्यति। यदप्युच्यते। क्रीतवत्परिमाणादिति च संख्याविहितस्य प्रत्ययस्यातिदेशो न प्रकल्पते इति। संख्याया इति च तत्र वक्तव्यम्। किं पुनरिमे ठगादयः प्रागर्हाद्भवन्ति। आहो स्वित्सहार्हेण। कश्चात्र विशेषः। ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः *। ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः। अर्हे ठगादयो विधेयाः। शतमर्हतिशत्यः। शतिकः। साहस्र इति। वस्ने वचनात्सिद्धम्। इह यः शतमर्हति शतं तस्य वस्नं भवति। तत्र सोऽस्यांशवस्नभृतय इत्येव सिद्धम्। वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः *। वस्ने वचनात्सिद्धमितिचेन्मांसौदनिकादिष्वप्राप्तिः। मांसौदनिकोतिथिः। श्वेतच्छत्रिकः। कालायसूपिकः। तथा गुणानां परिप्रश्ने भवति। किमयं ब्राह्मणोऽर्हति शत्यः। शतिकः। साहस्रः। नैष्किक इति न सिध्यति। सन्तु तर्हि सहार्हेण। अर्हाच्चेद्भोजनादिष्वतिप्रसङ्गः *। अर्हाच्चेद्भोजनादिष्वतिप्रसङ्गो भवति। भोजनमर्हतीति। किमुच्यते भोजनादिष्वतिप्रसङ्ग इति। यदाच्छेदादिभ्य इत्युच्यते। अवश्यं मांसौदनिकाद्यर्थं योगविभागः कर्त्तव्यः। तदर्हति। ततश्छेदादिभ्यो नित्यमिति। तस्मिन् क्रियमाणे भोजनादिष्वतिप्रसङ्गो भवति। उक्तं वा *। किमुक्तम्। अनभिधनादिति। अनभिधानाद्भोजनादिष्वतिप्रसङ्गो न भविष्यति। अथ वा योगविभागः करिष्यते। कथं मांसौदनिकोतिथिः। श्वेतच्छत्रिकः। कालायसूपिकः।

---

मानमित्यर्थः। तथाहि। द्वौ मेरुसर्षपावित्यपि भवति। इयती विवक्षेति। रूढिपरित्यागेन परिच्छेदकत्वमात्रमाश्रयिष्यते इत्यर्थः। नन्वेवमप्यव्यभिचारात् संख्याया विशेषणमनर्थकम्। नैषदोषः। प्रत्ययार्थस्य यदापरिच्छेदिका संख्या तदा प्रत्ययो यथा स्यात् पञ्चको गोसंघ इति यदा तु प्रकृत्यर्थस्यैव परिच्छेदिका संख्या पञ्चगावोऽस्य संघस्येति तदा मा भूदित्येवमर्थं संख्यापरिमाणग्रहणेन विशेष्यते। संख्याया इति च तत्रेति। लक्ष्यसिद्धये संख्याग्रहणं तत्राधिकं कर्त्तव्यमित्यर्थः। किं पुनरिति। किं मर्यादायामाङ् अथाभिविधाविति प्रश्नः। अर्हतिशब्दैकदेशानुकरणत्वाचार्हशब्दः। वस्नेवचनादिति। पटादेरर्थस्य शत्यादिशब्दैरभिधानादिति भावः। मांसौदनिक इति।

अस्मिन्दीयते अस्मा इति च। एवमेतत्सिद्धम्। अथ वा पुनः सन्तु प्रागर्हात्। ननु चोक्तं ठगादयः प्रागर्हाच्चेदर्हे तद्विधिरिति। परिहृतमेतद् वस्नेवचनात्सिद्धमिति। ननु चोक्तं वस्नेवचनात्सिद्धमिति चेत् मांसौदनिकादिष्वप्राप्ति रिति। तथा गुणानां परिप्रश्ने भवति। किमर्थं ब्राह्मणो ऽर्हति शतमर्हति शत्यः शतिकः। साहस्रः नैष्किक इति न सिध्यतीति। नैष दोषः। अस्मिन्दीयते अस्मा इति च एवमेतत् सिद्धं भवति॥

असमासे निष्कादिभ्यः॥ २०॥ असमासइति किमर्थम्। परमनिष्केण क्रीतं परमनैष्किकम्। नैतदस्ति प्रयोजनम्। निष्कशब्दात्प्रत्ययो विधीयते। तत्र कः प्रसङ्गो यत्परमनिष्कशब्दात्स्यात्। नैव प्राप्नोतिनार्थः प्रतिषेधेन। तदन्तविधिनाप्राप्नोति। ग्रहणवता प्रातिपदिकेनतदन्तविधिः प्रतिषिध्यते। अतउत्तरंपठति। निष्कादिष्वसमासग्रहणंज्ञापकंपूर्वंचतदन्ताप्रतिषेधस्य*। निष्कादिष्वसमासग्रहणं क्रियते। ज्ञापकार्थम्। किं ज्ञाप्यम्। एतज्ज्ञापयत्याचार्यः पूर्वंच तदन्तविधेः प्रतिषेधो न भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। प्राग्वतेष्ठञित्यत्र तदन्तविधिः सिद्धो भवति। नैतदस्ति प्रयोजनम्। ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते। न च ठञि-

---

नहि मांसौदनोऽतिथिभ्यमितिभावः। अस्मिन्दीयत इति। अधिकरणत्वं वा विवक्षित्वाप्रत्ययो विधास्यत इति विकल्पप्रदर्शनार्थमुभयोरुपादानम्। तत्र तदस्मिन् वृद्ध्यायलाभशुल्कोपदादीयत इति योगविभागः क्रियते। तदस्मिन्नित्येको योगः। विद्धायलाभशुल्को पदाइतिद्वितीयः पूर्वयोगस्यसर्वविषयत्वज्ञापनार्थः दीयत इति तृतीयो योग उभयोर्योगयोः शेषः। ततो दीयतेतदस्मिन्निति सप्तम्यर्थे ठगादयः प्रत्यया भवन्ति। तदस्मिन्दीयते तदस्मा इति चोपसंख्यानमितिवचनात्। चतुर्थेपि भवन्तीति सर्वेष्टिसिद्धिः। यद्यप्यर्हते पि न दीयते। तथापि योग्यतया संभावितदानाश्रयप्रत्ययोत्पादनेन विशिष्टस्वरूपनिरयशब्दंव्युत्पत्तिरविरुद्धेतिमन्यते।

अस। असमास इति। वक्ष्यमाणः प्रष्टुरभिप्रायः। परमनैष्किकमिति। ठञ्वा न भवति। निष्कशब्दस्यंपरिमाणवाचित्वात् पूर्वेणाप्राप्तौऽनेनठञ्विधीयते। निष्कादिष्विति। पूर्वंच ग्रहणंवार्तिककारः पठन्कृष्णतिल्यादिसिद्धिं प्रयोजनंमेने। भाष्यकारस्तुन्यायव्युत्पादनायपूर्वंच ग्रहणमविवक्षितार्थं मत्वाप्रयोजनानि प्रदर्श्य दूषयित्वा च कृष्णतिल्याद्यर्थत्वमेवज्ञापकस्य स्थापयिष्यति। प्राग्वतेष्ठञित्यत्रेति। तेनपरमनिष्कशब्दाट्ठञ्सिद्धोभवति। केवलात्प्रातिपदिकाट्ठञ् विधीयमानः समासान्तस्यादित्याभासमात्रेणेदमुक्तम्। न च ठञ्वि-

धौ का चित्प्रकृतिर्गृह्यते। इदं तर्हि प्रयोजनम्। आर्हा दगोपुच्छ संख्यापरिमाणाट्ठक्। परमगोपुच्छेन क्रीतं पारमगोपुच्छिकम्। एतदपि नास्ति प्रयोजनम्। विधौ प्रतिषेधः। प्रतिषेधस्यायम्। एवं तर्हि ज्ञापयत्याचार्यः इत उत्तरं तदन्तविधेः प्रतिषेधो न भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। पारायणतुरायणचान्द्रायणं वर्त्तयति द्वैपारायणिकः त्रैपारायणिकः अत्र तदन्तविधिः सिद्धो भवति। एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत् प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति। पूर्वत्रैव तर्हि प्रयोजनम्। खलयवमाषतिलवृषब्रह्मणश्च। राजमाषेभ्यो हितं राजमाष्यम्। कृष्णतिलेभ्यो हितः कृष्णतिल्यः। प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि *। प्राग्वतेः संख्यापूर्वपदानां तदग्रहणमलुकि कर्त्तव्यम्। पारायणतुरायणचान्द्रायणं वर्त्तयति। द्वैपारायणिकः। त्रैपाराय-

---

धाविति। यत्र विशिष्ट प्रकृतिरुपादयते तत्रतदन्तविधेः प्रतिषेधः। ठञ्विधौतुच्या प्प्रातिपदिकाधिकारात्प्रातिपदिकमात्रं प्रकृतित्वेनाऽऽश्रीयते। तत्रहि समासस्य प्रातिपदिकत्वात्तदन्तविधेर्नप्रतिषेधइतिठञ् सिध्यतीति भावः। पारमगोपुच्छिकमिति। ठक्प्रतिषेधाट्ठञ् भवति। यद्येवंकेवलस्यप्रतिषेधोनप्राप्नोति गौपुच्छक इति। नैष दोषः। यस्यां परिभाषायां प्रातिपदिकश्रुतिरस्ति सेहनोपतिष्ठत इति सामान्यापेक्षंज्ञापकमिहाश्रीयते। तेनग्रहणवताप्रातिपदिकेन तदन्तविधिर्नास्ति व्यपदेशिवद्भावोऽप्रातिपदिकेनेति द्वयोरप्यत्रानुपस्थानात्तदन्तविधिना तदन्तस्य कार्यं केवलस्यापि व्यपदेशिवद्भावेन। विधौ प्रतिषेध इति। पूर्वादिनिः सपूर्वाच्चेति प्रत्ययविधौ ग्रहणवतेत्येतस्याः परिभाषाया ज्ञापितत्वाद् यत्रैव प्रत्ययो विधीयते तत्रैवानया तदन्तविधिः प्रतिषिध्यते। अगोपुच्छ संख्यापरिमाणादित्यनेन तु ठक् प्रतिषिध्यतइति न तदन्तविधिप्रतिषेधो नापि व्यपदेशिवद्भावप्रतिषेधः। अन्ये त्वाहुः। गोपुच्छात्परष्ठक् साधुर्न भवतीत्येवं प्रतिषेधे विधीयमाने गोपुच्छश्रुतेः सर्वत्राविशेषात् केवलादन्ताच्च ठकोसाधुत्वं सिध्यतीति नात्र तदन्तविधिना प्रयोजनमिति तदभावे तत्प्रतिषेधस्याप्रसङ्ग इति ज्ञापनस्यापि न प्रयोजनम्। वक्ष्यत्येतदिति। तत्रावश्यं वक्तव्यमसत्यस्मिन् ज्ञापके विध्यर्थं सति तु नियमार्थं संख्यापूर्वपदानामेव यथा स्यादिह माभूत् परमपरायणं वर्तयतीति। यथा लुगन्तायाः प्रकृतेर्मा भूद् द्विशूर्पेण क्रीतं द्विशौर्पिकमिति। राजमाष्यमिति। ननु राजमाषशब्दस्य जात्यन्तरवाचित्वान्माषशब्दस्यानर्थक्यादत्र प्रत्ययो न प्राप्नोति। नैष दोषः। यथैक-

णिकः। अलुकीति किमर्थम्। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। त्रिशूर्पम्। द्विशूर्पेण क्रीतं द्विशौर्पिकम्। त्रिशौर्पिकम्॥

शताच्च ठन्यतावशते॥ २१॥ शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः*। शतप्रतिषेधे न्यशतत्वे प्रतिषेधो न भवतीति वक्तव्यम्। इह मा भूत्। शतेन क्रीतं शत्यं शाटकशतमिति। अन्यशतत्व इति किम्। शतकं निदानमिति॥

संख्याया अतिशदन्तायाः कन्॥ २२॥ डतेश्च*। डतेश्चेति वक्तव्यम्॥

---

विंशतिर्नरसिंहो गौरखरो लोहितशालिरित्यादीनां समुदायानामार्थान्तराभिधायित्वेपि नावयवानामानर्थक्यं तस्यापि शब्दसंस्काराय हि शास्त्रे सर्वत्र परिकल्पितार्थवत्ताश्रीयते। तात्त्विकी तु वाक्यस्यैवार्थस्य प्रत्यायनाय प्रयोगात्। द्वाभ्यामिति। तद्धितार्थेति समासे कृते शूर्पादञन्यतरस्यामित्यञ्ठयोरन्यतरस्याध्यर्द्धेति लुक्। ततो द्विशूर्पेण क्रीतमित्यञभावे सामान्यविहितष्ठञ् भवति। तस्य द्विगुनिमित्तत्वाभावाल्लुगभावः। परिमाणान्तस्येत्युत्तरपदवृद्धिः।

शताच्च। संख्याया इति कनि प्राप्ते ठन्यतौ विधीयेते। तत्राशत इति प्रत्ययार्थविशेषणं न प्रकृतेरसंभवात्। नहि शतशब्दस्याशते वृत्तिः संभवति। तत्र प्रत्ययार्थस्य द्विविधं शतत्वम्। प्रकृत्यर्थव्यतिरिक्तसंख्येयान्तरविषयं प्रकृत्यर्थविषयं च। तत्र पूर्वं यथा शतेन क्रीतं शत्यं शाटकशतमिति। अपरन्तु शतमध्यायाः परिमाणमस्य ग्रन्थस्य शतक इति। अत्र हि केवलं प्रत्ययोत्पादनाय प्रकृतिप्रत्ययार्थयोर्भेदविवक्षा तात्त्विकस्त्वभेद इति प्रत्यार्थस्यैकत्वेपि शतत्वमस्त्येव। यथा शतमित्येकत्वे विभक्तिवाच्ये सत्यपि शतत्वं न निवर्तते। तत्राद्यस्य निषेधो मा भूदित्याह। शतप्रतिषेध इति। तत्र केचिदाहुः न्यायसिद्ध एवार्थो वार्तिककारेण प्रतिपादितः। प्रकृत्यर्थस्य शतस्य यत्र प्रत्ययार्थत्वं तत्रान्तरङ्गमहेयं संख्यान्तरासाधारणं च शतत्वमन्यत्र तु शत्यं शाटकशतमित्यादौ शब्दान्तरप्रयोगसमधिगम्यत्वाद् बहिरङ्गमिति तत्र प्रतिषेधाप्रसङ्गः। अन्ये त्वाहुः। शतको ग्रन्थइत्यर्थः ग्रन्थस्यैकसंख्यत्वाच्छतत्वमनुमीयते। तत्र यथा वृक्ष इत्यत्र मूलाद्यवयवसमवेतबहुत्वसंख्याश्रयं बहुवचनं न भवति। एवमशत इति प्रतिषेधो ग्रन्थेन प्राप्नोत्यन्यशतत्वे च प्राप्नोतीति वार्तिकारम्भः। ततोन्यशतत्वे प्रतिषेधाभावात्सामर्थ्यादनुमीयमानशतत्वविषयः प्रतिषेधः संपद्यते। एवं च सति शतं गावः परिमाणमस्यशतको गोसंघ इत्यत्रापि प्रतिषेधो भवति। आपिशलकाशकृत्स्नयोस्त्वग्रन्थ इति वचनादप्यत्र प्रतिषेधाभावो नियतकालास्तु स्मृतयो व्यवस्थाहेतव इति मुनित्रयमतेनाद्यत्वेसाध्वसाधुप्रविभागः।

संख्यायाः। डतेश्चेति। विंशतिशब्दात्तु विंशतिकात्खइति ज्ञापकात्कन् भवति। न च डतेरिति

इहापि यथा स्यात्। कतिभिः क्रीतं कतिकम्। किं पुनः कारणं न सिध्यति। त्यन्तायाः नेति प्रतिषेधः प्राप्नोति। तिप्रतिषेधाड्डतिग्रहणमिति चेदर्थवद्ग्रहणात्सिद्धम् *। अर्थवतस्तिशब्दस्य ग्रहणम्। नच डतेस्तिशब्दोऽर्थवान्। नैषा परिभाषा इह शक्या विज्ञातुम्। न हि केवलेन प्रत्ययेनार्थो गम्यते। किं तर्हि। सप्रकृतिकेन। क्व तर्ह्येषा परिभाषा कर्तव्या भवति। यान्येतानि शब्दसंघातग्रहणानि। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। अर्थवद्ग्रहणात्सिद्धम्। ननु चोक्तं नैषा परिभाषेह शक्या विज्ञातुं न हि केवलेन प्रत्ययेनार्थो गम्यते केन तर्हि सप्रकृतिकेनेति। केवलेनापि प्रत्ययेनार्थो गम्यते। कथम्। उक्तमन्वयव्यतिरेकाभ्याम्॥

वतोरिड्वा ॥ २३ ॥ कस्यायमिड्विधीयते। कन इत्याह। तत्कनो ग्रहणं कर्तव्यम्। अक्रियमाणे हि प्रत्ययाधिकारात्प्रत्ययोऽयं विज्ञायेत। टित्करणसामर्थ्यादादिर्भविष्यति। अस्त्यन्यट्टित्करणस्य प्रयोजनम्। टित इति ईकारो यथा स्यात्। अकारान्तप्रकरणे ईकारः। न चैषोऽकारान्तः। एवमपि कुत एतट्टित्करणसामर्थ्यादा-

---

समुदायस्यार्थवत्त्वात्तदवयवस्तिशब्दोनर्थकोऽत एव विंशतिशब्दे शति च प्रत्ययत्वात्तिशब्दस्यानर्थक्याज्ज्ञापकमन्तरेणापि कन् सिद्धः। नैषेति लौकिक्यर्थवत्ता प्रकृतीनां प्रत्ययानां च नास्ति केवलानां प्रयोगाभावादिति भावः। यान्येतानीति। यद्यपि प्रत्यया अपि शब्दसंघातास्तथापि तेषामानर्थक्यादर्थवन्तः शब्दसंघाता इह विवक्षिताः। यथोक्तं संग्रहणे पायसं करोतीति सुण्न भवति। उदग्रहणे गर्मुद्ग्रहणं न भवति। गर्मुत् स्यास्यतीति। हन्ग्रहणे प्लीहन्ग्रहणं न भवति प्लीहानाविति। केवलेनापीति। शास्त्रव्यवस्थाहेतुरन्वयव्यतिरेकगम्यार्थवत्ताश्रीयतइत्यर्थः। अत एव शेर्थवद्ग्रहणात्काशे कुशे वंश इत्यादौ शेशब्दस्यग्रहणाभावः। उपसर्गाणामपि केवलानां प्रयोगाभावाल्लौकिक्या अर्थवत्ताया अभावादन्वयव्यतिरेकव्यवस्थाप्यैवासावाश्रीयते।

वतोरि। कस्यायमिति। टित्वादस्यागमत्वं निश्चितम्। आगमी न निर्दिष्ट इति तद्विषयः प्रश्नः। वतोरिति पञ्चमीनिर्देशाद्वत्वन्तस्यागमित्वमयुक्तम्। कन इति। वत्वन्तस्य संख्यात्वात् पूर्वेण विहितस्येति भावः। आनन्तर्याच्च कनमागमिनं मन्यते। तदिति संख्यायास्तावदनेकस्य प्रत्ययस्य विधानादागमिविशेषो दुर्लभः। प्रत्ययाधिकाराच्च परेट्

द्भिर्भविष्यति न पुनरकारान्तप्रकरणे अनकारान्तादपि ईकारः स्यात् । तस्मात्कनो ग्रहणंकर्त्तव्यम् । न कर्त्तव्यम् । प्रकृतमनुवर्त्तते । क्व प्रकृतम् । संख्याया अतिशदन्तायाः कनिति । तद्वै प्रथमानिर्दिष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः । वतोरित्येषा पञ्चमी कन्निति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितःप्रत्ययः प्रकृतश्चानुवर्त्तते ॥

विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ॥ २४ ॥ असंज्ञायमिति किमर्थम् । त्रिंशत्को विंशतिकः । कथं चात्र कन्भवति । संख्यायाः कन्भवतीति । अतिशदन्ताया इति प्रतिषेधः प्राप्नोति । एवं तर्ह्याचार्य्यप्रवृत्तिर्ज्ञापयति भवत्यत्र कन्निति । यदयं विंशतिकात्ख इति प्रत्ययान्तनिपातनं करोति । विंशतेरेतज्ज्ञापकं स्यात् । नेत्याह । योगपेक्षं

---

इत्वादिवदिटः प्रत्ययत्वप्रसङ्गः । अनकारान्तादिति । यथा डित्यभस्यापि टिलोपः । अथ प्रयोजनाभावाद्दकारस्येत्संज्ञा न भवतीति कस्मान्न कल्प्यते । नैतदस्ति । हलन्त्यमिति श्रुतेर्बलीयस्त्वादत इति प्रकरणस्य दुर्बलस्य बाधोपपत्तौ प्रयोजनलाभात् । न चेति । पञ्चमीहि प्रत्ययस्वरूपमुत्पादयति । यथा गुप्तिज्किद्भ्यः सनिति न तु षष्ठींप्रकल्पयति । असतः षष्ठीप्रकल्पनाभावादिति भावः । प्रकृतश्चेति । स्वरितत्व प्रतिज्ञानादिति भावः ननु विधानार्थापि कनोनुवृत्तिः संभवति । इटा मा बाधीति तत्रेट्कनौ वा भवतः पञ्चेठञितिप्रत्ययत्रयं स्यात् । नैष दोषः । पूर्वसूत्रेण तावत् कन्विहितस्तस्येहानुवृत्तिर्विधानार्था न भवतीति प्रतीतिरुपजायते । तस्मादित्युत्तरस्यैषा परिभाषावतिष्ठते तत्र किमनिष्टप्रकल्पनयानेकबाधोऽस्तु अथेष्टप्रकल्पनया सर्वानुग्रह इति । तत्र सर्वानुग्रहो न्याय्यः लक्ष्यस्यतथावस्थानाच्च ।

विंशति । प्रत्ययान्तनिपातनमिति । कन्प्रत्ययान्तोच्चारणमित्यर्थः । ननु विंशतिशब्देशतिचः प्रत्यय त्वात्तिशब्दस्यानर्थकत्वात् प्रतिषेधप्रसङ्गाभावात्किं ज्ञापकाश्रयणेन । उच्यते । द्विदशशब्दस्य विंशादेशस्तिप्रत्यय इत्येषा प्रक्रियाश्रीयते । एवं हि ज्ञापकाश्रयेण त्रिंशत्कशब्दोपि सिध्यति । अन्यथा त्रिंशच्छब्दे शतोर्थवत्त्वाद्दशदन्तायाइति प्रतिषेधः स्यात् । ननु विंशतिशब्दादज्ञाताद्यर्थविवक्षायां कन्प्रत्यये विंशतिकशब्दः स्यादिति कथं ज्ञापकम् । नैतदस्ति । स्वार्थिके कन्प्रत्यये विंशतिकाया इति निर्देशः स्याद् असंज्ञायां ड्वुनो विधानात् संज्ञाविषयमेवज्ञापकमाश्रयणीयम् । योगापेक्षमिति । यथाएवदितियोगापेक्षत्वाज्ज्ञापकस्य वत्यर्थे नञ्स्नञोरप्रवृत्तौ स्त्रीवदित्यपि भवति । एवमे-

ज्ञापकम्। अथ वा योगविभागः करिष्यते। विंशतित्रिंशद्भ्यां कन् भवतीति। ततोऽड्वुनसञ्ज्ञायामिति॥

कंसाट्टिठन्॥ २५॥ टिठन्नर्धाच्च *। टिठन्नर्धाच्चेति वक्तव्यम्। अर्धिकः। अर्धिकी। कार्षापणाद्वा प्रतिश्च *। कार्षापणाद्वा टिठन्वक्तव्यः। वा च प्रतिरादेशो वक्तव्यः। कार्षापणिकः। कार्षापणिकी। प्रतिकः। प्रतिकी॥

अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्॥ २८॥ द्विगोर्लुग्युक्तम् *। किमुक्तम्। तत्र तावदुक्तं द्विगोर्लुकि तन्निमित्तग्रहणम्। अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति। इहापि द्विगोर्लुकि तन्निमित्तग्रहणं कर्त्तव्यम्। द्विगोर्निमित्तं यस्तद्धितस्तस्य लुग्भवतीति वक्तव्यम्। इह मा भूत्। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। द्विशूर्पेण क्रीतं द्विशौर्पिकम्। त्रिशौर्पिकम्। अर्थविशेषसंप्रत्यये ऽतन्निमित्तादपि *। अर्थविशेषस्यासंप्रत्यये ऽतन्निमित्तादपीति वक्तव्यम्। किं प्रयोजनम्। द्वयोः शूर्पयोः समाहारः द्विशूर्पी। द्विशूर्प्या क्रीतमिति विगृह्य द्विशूर्पमित्येव यथा स्यात्। अथ क्रियमाणेपि तन्निमित्तग्रहणे कथमिदं विज्ञायते। तस्य निमित्तं तन्निमित्तं तन्निमित्तादिति। आहोस्वित्स निमित्तं यस्य सोयं तन्निमित्तः। तन्निमित्तादिति। किं चातः। यदि विज्ञायते तस्य निमित्तं तन्निमित्तं तन्निमित्तादिति। क्रियमाणेपि हि तन्निमित्तग्रहणे ऽत्र प्राप्नोति। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। द्विशूर्पेण क्रीतं द्विशौर्पिकम्। त्रिशौर्पिकम्। अथ विज्ञायते स निमित्तमस्य सोयं तन्निमित्तस्तन्निमित्तादिति। न दोषो भवति। यथा न दोषस्तथास्तु। सनिमित्तमस्य सोयं तन्निमित्तस्तन्निमित्तादिति विज्ञायते। कुत एतत्। यदयमाह। अर्थविशेषा-

---

तद्योगापेक्षं विंशतिकादिति ज्ञापकमिति त्रिंशत्कशब्दोपि संज्ञायां भवतीत्यर्थः॥

कंसात्। अर्धिकइति। अर्धशब्दः कार्षापणस्यार्धे रूढ इति भागवदपेक्षायामसामर्थ्यं नाशङ्कनीयमिति केचिदाहुः। अन्ये तु प्रकरणादिवशाद्यदा निर्ज्ञातो भागवद्विशेषो भवति तदा नास्त्यसामर्थ्यमिति सविशेषवार्धस्य ग्रहणेन भाव्यमित्याहुः॥

अध्यर्ध। द्विगोर्लुग्युक्तमिति। द्विगोर्लुगनपत्यइत्यत्र भाष्ये व्याख्यातमिति तत एव

संप्रत्ययेऽतन्निमित्तादपीति । तत्तर्हि तन्निमित्तग्रहणं कर्त्तव्यम् । न कर्तव्यम् । द्विगोरिति नैषा पञ्चमी । का तर्हि । संबन्धषष्ठी द्विगोस्तद्धितस्य लुग्भवति । द्विगोर्यस्तद्धितः । किं च द्विगोस्तद्धितः । निमित्तम् । यस्मिन् द्विगुरित्येतद्भवति । कस्मिंश्चैतद्भवति । प्रत्यये । इदं तर्हि वक्तव्यम् । अर्थविशेषासंप्रत्यये ऽतन्निमित्तादपीति । एतच्च न वक्तव्यम् । इहास्माभिस्त्रैशब्द्यं साध्यम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पमिति । द्विशूर्प्या क्रीतं द्विशूर्पमिति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः करिष्यते । अपरस्मादुत्पत्तिर्भविष्यति अव्यविकन्यायेन । तद्यथा । अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति आविकमिति । एवमिहापि द्वाभ्यां शूर्पाभ्यां क्रीतमिति विगृह्य द्विशूर्पमिति भविष्यति । द्विशूर्प्या क्रीतमिति विगृह्य वाक्यमेव भविष्यति । असंज्ञायामिति किमर्थम् । पाञ्चलोहितिकम् । पाञ्चकलायिकम् । संज्ञाप्रतिषेधानर्थक्यं च तन्निमित्तत्वाल्लोपस्य * । संज्ञाप्रतिषेधश्चानर्थकः । किं कारणम् । तन्निमित्तत्वाल्लोपस्य । नान्तरेण तद्धितं तद्धितस्य च लुकं द्विगुसंज्ञास्ति । यस्तस्मादुत्पद्यते । नासौ तन्निमित्तः स्यात् । एवं तर्हि इदं स्यात्पञ्चानां लोहितानां समाहारः पञ्चलोहिती । पञ्चलोहित्या क्रीतमिति । अत्रापि पञ्चलोहितमितत्येव भवितव्यम् । कथम् । उक्तं ह्येतत् । अर्थविशेषासंप्रत्यये ऽतन्निमित्तादपीति । उक्तं संख्यात्वे प्रयोजनं तस्मादिहाध्यर्द्धग्रहणानर्थक्यम् * । उक्तं संख्यात्वेऽध्यर्द्धग्रहणस्य प्रयोजनम् । किमुक्तम् । अध्यर्द्धग्रहणं च समासकन्विध्यर्थं लुकि चाग्रहणमिति । तस्मादिहा-

---

र्थक्यम् । संज्ञाप्रतिषेधानर्थक्यमिति । इह वृत्तिकारा असंज्ञाग्रहणं प्रत्ययान्तविशेषणं व्याचक्षते न चेत् प्रत्ययान्तं संज्ञेति पाञ्चलोहितिकपाञ्चकलायिकशब्दौ च परिमाणविशेषस्य संज्ञे इति लुङ्न भवति । वार्तिककारस्तु द्विगुविशेषणमसंज्ञाग्रहणं संनिधानादवगस्य प्रत्याचष्टे । तन्निमित्तत्वादिति । तस्याः संज्ञाया लोप एव निमित्तमित्यर्थः । पञ्चलोहितपञ्चकलायशब्दो द्विगुकृततद्धितलुकावेव संज्ञे ततो नार्थः प्रतिषेधेनेत्यर्थः । पञ्चलोहितीति । समाहारद्विगुं संज्ञां मन्यते ततश्च नलोपनिमित्तैव संज्ञा । अत्रापीति । अव्यविकन्यायेन वाक्यविषय एव समाहारद्विगुरित्यर्थः । अध्यर्द्धग्रहणं चेति । बहुगणादिसूत्र इदमुक्तम् ।

ध्यर्द्धग्रहणमनर्थकम् । द्विगोरित्येव लुक् सिद्धः ॥

विभाषा कार्षापणसहस्राभ्याम् ॥ २९ ॥ कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानम् *। कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानं कर्त्तव्यम् । अध्यर्द्धं सुवर्णम् । अध्यर्धसौवर्णिकम् । अध्यर्द्धशतमानम् । अध्यर्द्धशातमानम् । द्विशतमानम् ॥ द्विशातमानम् ॥

द्वित्रिपूर्वान्निष्कात् ॥ ३० ॥ विस्ताच्च ॥ ३१ ॥ द्वित्रिभ्यां द्वैयोग्यम् *। द्वित्रिभ्या मिति यदुच्यते तद्द्वैयोग्यमिति द्रष्टव्यम् । किमिदं द्वैयोग्यमिति । द्वयोर्योगयोर्भवं द्वियोगं द्वियोगस्यभावोद्वैयोग्यमिति । तद्द्विष्यं विजानीयात् । अविशिषेणेत उत्तरं द्वित्रिभ्यामिति । तदाचार्यः सुहृद्भूत्वान्वाचष्टेद्वित्रिभ्यां द्वैयोग्यमिति । तत्र च बहुग्रहणम् *। तत्र च बहुग्रहणं कर्त्तव्यम् । बहुनिष्कम् । बहुनैष्किकम् । बहुविस्तम् । बहुवैस्तिकम् ।

खार्या ईकन् ॥ ३३ ॥ खार्या ईकन् केवलायाश्च * । खार्या ईकन् केवलायाश्चेति वक्तव्यम् । खारीकम् । काकिण्याश्चोपसंख्यानम् * । काकिण्याश्चोपसंख्यानं कर्त्तव्यम् । अध्यर्द्धकाकिणीकं द्विकाकिणीकम् । केवलायाश्च * । केवलायाश्चेति वक्तव्यम् । काकिणीकम् ॥

शाणाद्वा ॥ ३५ ॥ शतशाणाभ्यां वा *। शतशाणाभ्यां वेति वक्तव्यम् ।

---

न च संख्याकार्याभावज्ञापनमध्यर्द्धग्रहणस्येह प्रयोजनम् । कन्समासाभावप्रसङ्गात् । तस्मात्तत्रत्यवार्त्तिकमेव कर्त्तव्यम् । तस्मिंश्च सति इहाध्यर्द्धग्रहणमनर्थकं द्विगुत्वाल्लुकः । सिद्धत्वात् ।

विभाषा कार्षापण । अध्यर्द्धं सुवर्णमिति । अध्यर्द्धेनसुवर्णेन क्रीतमिति द्विगौकृते ठञो लुक् । अलुक्पक्षे परिमाणान्तस्येत्युत्तरपदवृद्धिः । उन्मानस्यापिवृद्धौ माणप्रतिषेधात् ग्रहणात् । द्विशातमानमिति । शतमानादिसूत्रेणाण् ।

द्वित्रि । द्वयोर्योगयोरिति । तद्धितार्थे द्विगौ कृते बह्वचोन्तोदात्ताठ्ठञ् । द्विगोर्लुगनपत्ये इति लुक् । अथ द्विगु र्न व्याख्यातव्यंनाम तदा अण एव लुक् । द्वैयोग्यशब्देन चाधाराधेयभाव उच्यते । समासकृत्तद्धितेषु संबन्धाभिधानमिति वचनात् ॥

खार्या । केवलायाश्चेति । अध्यर्द्धपूर्वद्विगोरित्यधिकारात्केवलायानप्राप्नोतीति वचनम् । शाणा । शतशाणाभ्यामिति । शतान्तात्पूर्वेण नित्ये यति प्राप्ते विकल्पार्थं वचन-

अध्यर्द्धशतमध्यर्द्धशत्यम्। पञ्चशतम् पञ्चशत्यम्। अध्यर्द्धशाणमध्यर्द्धशाण्यम्। पञ्चशाणं पञ्चशाण्यम्। द्वित्रिपूर्वादण्च*। द्वित्रिपूर्वादण्चेति वक्तव्यम्। द्विशाणम्। त्रिशाणम्। द्वैशाणम्। त्रैशाणम्। द्विशाण्यम्। त्रिशाण्यम्॥

तेन क्रीतम्॥ ३७॥ तेन क्रीतमिति करणात्*। तेन क्रीतमित्यत्र करणादिति वक्तव्यम्। इह माभूद् देवदत्तेन क्रीतं यज्ञदत्तेन क्रीतमिति। अकर्त्रेकान्तात्*। अकर्त्रेकान्तादिति वक्तव्यम्। इह मा भूत्। देवदत्तेन पाणिना क्रीतमिति। संख्यैकवचनात् द्विगोश्चोपसंख्यानम्*। संख्याया इति वक्तव्यम्। इहापि यथा स्यात्। पञ्चभिः क्रीतं पञ्चकम्। किंपुनः कारणं न सिध्यति। एकवचनान्तादिति वक्ष्यति। तस्यायं पुरस्तादपकर्षः। एकवचनात्। एकवचनान्तादिति वक्तव्यम्। इह माभूत्। शूर्पाभ्यां क्रीतं शूर्पैः क्रीतमिति। द्विगोश्चेति वक्तव्यम्। इहापि यथास्यात्। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं त्रिशूर्पमिति। यद्येकवचनान्तादित्युच्यते। मुद्गैः क्रीतं मौद्गिकं माषैः क्रीतं माषिकमिति न सिध्यति। परिमाणस्य संख्याया यदेकवचनं तदन्तादिति वक्तव्यम्। तत्तर्ह्येकवचनान्तादिति वक्तव्यम्। तस्मिंश्च क्रियमाणे बहु वक्तव्यं भवति। न वक्तव्यम्। कस्मान्न भवति शूर्पाभ्यां क्रीतं शूर्पैः क्रीतमिति। उक्तं वा*। किमुक्तम्। अनभिधानादिति। यद्येवं

---

म्। यदभावपक्षे कनोलुक्। द्वित्रिपूर्वादण्चेति सूत्रे ष्वनार्षः पाठ इति वार्तिकारम्भः।

तेन क्रीतम्। संख्यैकवचनादिति। समाहारद्वन्द्वः। परिमाणस्येति। परिमाणस्य या संख्या तस्या यद्वाचकं द्योतकं वैकवचनं तदन्तादिति वक्तव्यमिति वचनाद मुद्गादीनां चाप्रतिषेधः। अनभिधानादिति। वृत्तौ संख्याविशेषानवगमात् परिमाणशब्देभ्यो द्विवचनबहुवचनान्तेभ्यः प्रत्ययाभावः। एकत्वसंख्यायुक्ते चार्थे तेषांस्वभावतोवृत्त्येकवचनान्तेभ्य एवप्रत्ययः। द्व्यादयस्तु शब्दा लुप्तायामपि विभक्तौ स्वप्रवृत्तिनिमित्तभूतां संख्यामवगमयन्तीति तेभ्यः प्रत्ययो भवत्येव एकयाच मुद्गादिव्यक्त्याक्रयासंभावात् बहुवचनान्तादेव प्रत्ययः। यदा तु जातिशब्दत्वंमुद्गादीनामभ्युपेयतेतदैकवचनान्तेभ्योपि प्रत्ययः। ननु यन्निष्केण क्रीतं तस्य निष्को वस्नोभवतीति सोऽस्यांशवस्नभृतय इत्यनेन प्रत्ययः सिद्ध

करणादकर्त्रैकान्तादित्यपि न वक्तव्यम्। कतुः कर्त्रैकान्ताद्वा क-स्मान्न भवति। अनभिधानात्॥

तस्य निमित्तं संयोगोत्पातौ॥ ३८॥ संयोगोत्पातयोः को वि-शेषः। संयोगोनाम स भवति इदं कृत्वेदमवाप्यत इति। उत्पातो-नाम स भवति याहच्छिको भेदो वा छेदो वा पद्मं वा पर्णं वा। तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यान-म् *। तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरु-पसंख्यानं कर्तव्यम्। वातस्य शमनं कोपनं वा वातिकम्। पैत्ति-कम्। श्लैष्मिकम्। संनिपाताच्च*। सन्निपाताच्चेति वक्तव्यम्। सान्निपातिकम्॥

गोद्यचो संख्यापरिमाणाश्वादेर्यत्॥ ३९॥ यत्प्रकरणे ब्रह्मव-र्चसाच्च *। यत्प्रकरणे ब्रह्मवर्चसाच्चोपसंख्यानं कर्तव्यम्। ब्रह्मवर्च-सस्य निमित्तं संयोगः ब्रह्मवर्चस्यः। उत्पातोवा॥

तदस्मिन् वृद्ध्यायलाभशुल्कोपदादीयते॥ ४०॥ तदस्मिन्दीय-तेस्माद्इतिच*। तदस्मिन्दीयतेस्माद्इति चेति वक्तव्यम्। पञ्च वृद्धिर्वा

---

इति नार्थोनेन योगेन। अत्राहुः। यस्य शतं मूल्यं न भवति अथ च तेन क्रीतं कार्यव-शात्तदर्थमिदम्॥

तस्य। संयोगोत्पातयोरिति। कोऽनयोः शब्दयोरर्थ इति प्रश्नः। नत्वेकार्थत्वं मन्य-मानस्य प्रश्नः। कोसौ विशेषः। येन संयोगोत्पातौ प्रतिपद्यामहे। इदंकृत्वेति। यथा काम्यैर्यागैः पुत्रादयोऽवाप्यन्ते तत्र संयुज्यन्ते फलविशेषेण येन यागादिना करणेन स यागादिरर्थः संयोगः। याहच्छिक इति। अतर्कितोपनतः। भेद इति। वस्त्रादेः। छेद इ-ति। उपानदादेः। भाविनः शुभस्याशुभस्य वासूचकोर्थ उत्पात इत्यर्थः। तस्य चनि-मित्तत्वं फलविशेषविषयबुद्ध्युत्पत्तिहेतुत्वान्न तु फलं प्रतिकारणत्वात्। वातिकमिति। शमनकोपने एवात्र प्रत्ययार्थः। न तु निमित्तम्। ठगत्र प्रत्ययः। प्रकारणादिवशाच्च क्वचिच्छमनं प्रतीयतेक्वचित्कोपनम्।

गोद्यचो। ब्रह्मवर्चस्यइति। ब्रह्मणो वर्चो ब्रह्मवर्चसं वृत्तस्वाध्यायसंपदुच्यते। ब्रह्म-हस्तिभ्यां वर्चस इत्यच्समासान्तः॥

तदस्मिन्। यत्र नद्योदारादौ शुल्कादि दीयते तत्र प्रत्ययो विधीयमानः संप्रदानेन प्राप्नोतीत्याह। तदस्मिन्निति। तस्मिन्नपीति। संप्रदानमेव दानक्रियापेक्षयाधिकरणत्वेन

आयो वा लाभो वा शुल्को वा उपदा वा दीयते अस्मै पञ्चकः। सप्तकः। अष्टकः। नवकः। दशकः। तत्तर्हि उपसंख्यानं कर्तव्यम्। न कर्तव्यम्। यद्धि यस्मै दीयते तस्मिन्नपि तद्दीयते तच्च तदस्मिन्दीयते इत्येव सिद्धम्॥

पूरणार्द्धाट्ठन् ॥ ४८ ॥ ठन्प्रकरणे ऽन्नन्तादुपसंख्यानम् * । ठन्प्रकरणे ऽन्नन्तादुपसंख्यानं कर्तव्यम् । द्वितीयिकः । तृतीयिकः । किं पुनः कारणं न सिध्यति । पूरणादित्युच्यते । न चैतत्पूरणान्तम् । अनेतत्पर्यवपन्नम् । पूरणं नामार्थः । तमर्थमाह तीयशब्दः । पूरणं सोसौ भवति। पूरणान्तात्स्वार्थे भागे अन् सोपि पूरणं भवत्येव ॥

संभवत्यवहरति पचति ॥ ५२ ॥ तत्पचतीति द्रोणादण् * । तत्पचतीति द्रोणादण् चेति वक्तव्यम् । द्रोणं पचति द्रौणी द्रोणिकी ॥

कुलिजाल्लुक्खौ च ॥ ५५ ॥ कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिन् त्रिकभावात् * । कुलिजाच्चेत्येव सिद्धं नार्थो लुक्खग्रहणेन । किं कारणम् । पूर्वस्मिन् त्रिकभावात् । पूर्वस्मिन्योगे सर्व एष त्रिको निर्दिश्यते । द्वाढकी । द्वाढकिकी । द्वाढकीना ॥

---

विवक्ष्यते । यथा सममन्नाद्ध्यखेदानमिति ।

पूरणा । अन्नन्तादिति । यथा गोस्त्रियोरित्यत्र स्त्रीशब्देन स्त्र्यधिकारविहितानां टाबादीनां ग्रहणमेवमिहापि पूरणाधिकारविहिता एव डडादयो गृह्येरन्निति वचनम् । द्वितीयिकइति । द्वयोः पूरणो भाग इति द्वे स्तीयस्तदन्तात्पूरणाद्भागे तीयादन्निति स्वार्थे अन् प्रत्ययः। ततो द्वितीयो वृद्ध्यादिरस्मिन्दीयत इति ठन् प्रत्ययः। पर्यवपन्नमिति। व्यवहितमित्यर्थः। पूरणं नामेति। अर्थग्रहणमिह न तु पूरणाधिकारविहितप्रत्ययग्रहणमिति भावः। स्वार्थ इति। स्वस्याः प्रकृतेरर्थः स्वार्थः। सा हि प्रत्ययस्यात्मीया तदर्थे चान्विधीयमानः पूरणाभिधायित्वात्पूरणव्यपदेशमासादयतीत्यर्थः।

संभ। द्रोणादिति। द्रोणपरिमिते व्रीह्यादौ वर्त्तमानाद् द्रोणशब्दात्प्रत्ययस्तस्यैव पाकसंभवात् ॥

कुलि। कुलिजाच्चेति सिद्ध इति। कुलिजाच्चेत्येव सूत्रमस्तु द्विगोष्ठं खेत्यनुवर्त्तते खो न्यतरस्यामिति च तत्र ष्ठन्खाभ्यां मुक्तेपक्षे ठञ् तस्याध्यर्द्धपूर्वेति लुक् । एवं रूपत्रयं सिद्धम्। न च ठञः पक्षे लुगभावेन चतुर्थं रूपमिष्यत इति लुक्खग्रहणं वार्त्तिककृता प्रत्याख्यातम्।

तदस्यपरिमाणम् ॥ ५७ ॥ संख्यायाः संज्ञासंघसूत्राध्ययनेषु ॥ ५८ ॥ संज्ञायां स्वार्थे *। संज्ञायां स्वार्थे कन् प्रत्यय उत्पाद्यः। पञ्चैव पञ्चकाः शकुनयः। त्रिकाः शालङ्कायनाः। सप्तका ब्रह्मवृचाः। ततः परिमाणिनि *। ततः परः प्रत्ययः परिमाणिनीति वक्तव्यम्। पञ्चकः संघः। दशकः संघः। जीवितपरिमाणे चोपसंख्यानम् *। जीवितपरिमाणे चोपसंख्यानं कर्त्तव्यम्। षष्टिर्जीवितपरिमाणमस्य षाष्टिकः। साप्ततिकः। जीवितपरिमाणे चेत्यनर्थकं वचनं कालादिति सिद्धत्वात् *। जीवितपरिमाणे चेत्यनर्थकं वचनम्। किं कारणम्। कालादिति सिद्धत्वात्। कालादित्येव सिद्धम्। इह यस्य षष्टिर्जीवितपरिमाणं षष्टिर्जीवितमसौ भूतो भवति। तत्र तमधीष्टो भृतो भूतो भावीत्येव सिद्धम्। अवश्यं चैतदेवं विज्ञेयम्। इह वचने हि लुक्प्रसङ्गः *। इह हि क्रियमाणे लुक् प्रसज्येत। द्विषाष्टिकः। त्रिषाष्टिकः। अनेन सति लुग्भवति। तेन सति कस्मान्न भवति। आर्हादित्युच्यते। न सिध्यति। किं कारणम्। नहीमे कालशब्दाः। किं तर्हि। संख्याशब्दाः। इमेऽपि कालशब्दाः। कथम्। संख्या संख्येये वर्तते यदि तर्हि योयः काले वर्त्तते स स कालशब्दः रमणीयादिष्वतिप्रसङ्गो भवति। रमणीयं कालं भूतः शोभनं कालं भूतः। अथ मतमेतत्।

---

तदस्य। संज्ञायां स्वार्थ इति। इहादशभ्यः संख्या संख्येये वर्त्तन्ते न तु संख्यानमात्रे ततः परा तु संख्या संख्याने संख्येये च। तत्र य एव शकुनयः पञ्चत्वसंख्यायुक्ताः पञ्चशब्दस्य वाच्यास्त एव पञ्चकशब्दस्यापि। ततश्च परिमाणपरिमाणिभावाभावात् स्वार्थ एव प्रत्ययो वक्तव्यः। यदा तु वृत्तिविषये संख्यामात्रवृत्तित्वं पञ्चादीनामाश्रीयते। तथा च द्वेशकयोरिति सूत्रकारेण द्वित्वैकत्वे द्वेशकशब्दवाच्ये आश्रित्य निर्देशः कृतः संख्येयार्थत्वे हि द्वेशकेष्विति स्यात् तदा परिमाणपरिमाणिभावाश्रयेणापि शक्यः प्रत्यय उत्पादयितुम्। जीवितपरिमाणे चेति। पूर्वापेक्षः समुच्चयः। संघादिषु प्रत्ययो विधीयमानोऽन्यत्र न प्राप्नोतीति वचनम्। द्विषाष्टिक इति। संख्यायाः संवत्सरसंख्यस्येत्युत्तरपदवृद्धिः। आर्हादिति। अध्यर्धपूर्वेत्यत्रार्हादित्यनुवर्त्तनादार्हीयस्य लुका भाव्यम्। तमधीष्टइत्यनेन प्रत्ययोऽर्हात्पर इति तस्य लुगभावः। न हीम इति। मासादय एव कालशब्दा न तु निमित्तान्तरेण काले प्रयोगमात्रेणेति भावः। संख्यासंख्येय इति। काले संख्येये वर्त्तमानस्य संख्यावा-

काले दृष्टः शब्दः कालशब्दः कालं यो न व्यभिचरतीति । न रम-णीयादिष्वतिप्रसङ्गो भवति । जीवितपरिमाणे तूपसंख्यानं कर्त्तव्यम् । इह चोपसंख्यानं कर्त्तव्यम् । वार्षशतिको वार्षसहस्रिकइति । किं पुनः कारणं न सिध्यति । न हि वर्षशब्दः संख्या । किं तर्हि । संख्येये वर्त्तते वर्षशब्दः । एवं तर्ह्यन्येभ्योपि दृश्यते खारशताद्यर्थम् * । अन्येभ्योपि दृश्यत इति वक्तव्यम् । किं प्रयोजनम् । खारशताद्यर्थम् । खारशतिको राशिः । खारसहस्रिको राशिः । अयं तर्हि दोषः । इह वचने हि लुक्प्रसङ्ग इति । न ब्रूमो यत्र क्रियमाणे दोषस्तत्रकर्तव्यमिति । किं तर्हि । यत्र क्रियमाणे नदोषो भवति तत्र कर्तव्यम् । क्व च क्रियमाणे न दोषः । प-रिमाणात्।तत्तर्हि उपसंख्यानंकर्त्तव्यम् । न कर्त्तव्यम् । कालादित्ये-व सिद्धम् । ननु चोक्तं नेमे कालशब्दाः किं तर्हि संख्याशब्दा इति। ननु चोक्तमिमेपि कालशब्दाः।कथं संख्या संख्येये वर्त्तते।ननु चोक्तं यदि तर्हि योयः शब्दः काले वर्त्तते स स कालशब्दः रमणीयादि-ष्वतिप्रसङ्गो भवतीति । उक्तं वा * । किमुक्तम् । अनभिधानादि-ति । अनभिधानाद्रमणीयादिभ्यूत्पत्तिर्न भविष्यति । स्तोमे डविधिः पञ्चदशाद्यर्थः * । स्तोमे डो विधेयः । किंप्रयोजनम् ।पञ्चदशाद्यर्थम् । पञ्चदशस्तोमः । सप्तदश स्तोम इति । इति श्रीमद्भगवत्पतञ्जलिविर-चिते व्याकरणमहाभाष्ये पञ्चमाध्यायस्य प्रथमे पादे प्रथममाह्निकम्॥

---

चिनः कालाभिधायित्वमुपपन्नमिति भावः । वार्षशतिक इति । संख्यायाः प्रत्ययो विधी-यमानस्तदन्तान्न प्राप्नोति । संख्यापूर्वपदानामेव प्राग्वतेस्तदन्तविधिरिष्यते। खारशताद्य-र्थमिति । खारशब्दोऽकारन्तो वार्त्तिककारवचनात् साधुः । तदस्य परिमाणमिति योग-विभागः कर्त्तव्य इत्युक्तं भवति । अनभिधानादिति । नहि रमणीयादयो वृत्तिविषये कालेवर्तन्ते षष्ठ्यादयस्तु वृत्तौ संख्येयेषु संवत्सरेष्वुखभावतो वर्त्तन्त इति युक्तं तेषां का-लवाचित्वम् । लोके च संवत्सरसंख्यया जीवितं प्रायेण परिच्छिद्यतइति संवत्सरवृत्तित्वं षष्ठ्यादीनामुच्यते । स्तोमेडविधिरिति । डित्करणं विंशः स्तोमस्त्रिंशः स्तोमइत्यादौ टिलोपार्थं पञ्चदश इत्यत्र तु नस्तद्धित इति टिलोपः सिध्यति । स्तोमो मन्त्रसमूहः ॥

इत्युपाध्यायजैय्यटपुत्त्रकैय्यटविरचिते भाष्यप्रदीपे पञ्चमस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ॥

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्॥ ५९॥ इमे विंशत्यादयः सप्रकृतिकाः सप्रत्ययकाश्च निपात्यन्ते। तत्र न ज्ञायते का प्रकृतिः कः प्रत्ययः कः प्रत्ययार्थ इति। तत्र वक्तव्यमियं प्रकृतिरयं प्रत्ययः अयं प्रत्ययार्थ इति। इमे ब्रूमः द्विशब्दादयं दशदर्थाभिधायिनः स्वार्थे शतिच् प्रत्ययो निपात्यते विन्भावश्च द्वौ दशतौ विंशतिः। विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिः॥ विंशत्यादयो दशदर्थे चेत्समासो नोपपद्यते। विंशतिगवमिति।

---

पङ्क्ति। इमे विंशत्यादय इति। सूत्रे पठितानां प्रत्यक्षत्वादिदमा परामर्शः। पङ्क्तिशब्दश्छन्दोविशेषे सन्निवेशविशेषेच रूढो नैवावयवार्थानुसारेण प्रवर्तत इति तत्परित्यागेनविंशत्यादय एवविचार्यन्ते। वक्ष्यमाणवार्त्तिकावतारणार्थं चायं भाष्यउपक्षेपः। सप्रकृतिका इति। प्रकृतिप्रत्ययप्रकरणे उच्चारणादिति भावः। सहशब्दोत्र विद्यमानार्थः। न तुल्ययोगार्थः। तेन विद्यमानप्रकृतिप्रत्यया इत्यर्थः। निपात्यन्त इति। प्रकृतित्वमेषां कस्मान्न विज्ञायते। पञ्चम्याः प्रत्ययस्य चानुपादानादनिष्पन्नस्य च प्रकृतित्वाभावात्। प्रत्ययत्वं तर्हि कस्मादेषां न भवति। लोके केवलानां प्रयोगदर्शनात्। शताच्च ठन्यतावशते विंशत्यादिभ्य इति शास्त्रे च केवलानामुच्चारणात्। विधिनिपातनयोश्चायं भेदो यत्रावयवानिर्दिश्यन्ते समुदायो ऽनुमीयते स विधिः। यत्र तु समुदायः श्रूयते अवयवाश्चानुमीयन्ते तन्निपातनम्। का प्रकृतिरिति। प्रकृतिप्रत्ययविशेषयोः प्रश्नः। प्रकृत्यर्थं तु न पृच्छति। प्रकृतौ विज्ञातायां तदर्थस्यापि विज्ञानात्। कः प्रत्ययार्थ इति। लोके विंशत्यादीनां संख्येये च प्रयोगो दृश्यते तत्र लौकिकार्थानुगुणं प्रत्ययार्थमाश्रित्य साधुत्वायैषामन्वाख्यानं क्रियत इत्यर्थः। इमे इति। वचनक्रियायामाभिमुख्यं प्रतिपादयितुं प्रत्यक्षार्थसर्वनाम्नोपादानम्। वचनमात्रं चेह विवक्षितं न तु कर्त्रभिप्रायं क्रियाफलमित्यात्मनेपदं न कृतम्। द्विशब्दादिति। दशद्वर्गलक्षणसंख्येयवाचिन इत्यर्थः। समुदाये च निपात्यमाने नान्तरीयकमवयवानां निपातनमित्यभिप्रायेण शतिच्प्रत्ययो निपात्यत इत्युच्यते। स्वार्थ इति। प्रत्ययस्य स्वात्मीया प्रकृतिस्तस्य अर्थ इत्यर्थः। अथ वा यः प्रकृतेरर्थः स एव प्रत्ययानां स्वार्थः पितृधनमिव पुत्रस्य तत्रैवार्थेऽभिमतः। न हि समासमात्रं वचनमात्रं वा न सिध्यति। विंशतिगवमिति। विंशतिशब्देन द्वयोर्दशतोरभिधानं न तु दशत्सम्बन्धिनां द्रव्याणाम्। ततश्च दशदपेक्षया गवां व्यतिरेकोपजननात् षष्ठ्या भाव्यम्। गवां विंशतिरिति ततः समानाधिकरणपदनिबन्धनद्विगुसमासाप्रसङ्गः। षष्ठ्यन्तं चेति। उपसर्जनं पूर्वमिति लक्षणेन। गुणेनषष्ठी न समस्यत इति प्रतिषेधः संख्याया न भवति शतसहस्रान्ताच्चनिष्कादिति प्रत्ययविधानात् ज्ञापकात् क्रोशशतयोजन-

किं कारणम्। द्रव्यमनभिहितं तस्यानभिहितत्वात् षष्ठी प्राप्नोति। षष्ठ्यन्तं च समासे पूर्वं निपतति। तत्र गोविंशतिरिति प्राप्नोति। न चैवं भवितव्यम्। गोविंशतिरिति। भवितव्यं च । विंशतिगवं तु न सिध्यति। इह च त्रिंशत्पूली। पञ्चाशत्पूली। चत्वारिंशत्पूली। समानाधिकरणलक्षणः समासो न प्राप्नोति । वचनं च विधेयम्। विंशति.। द्वित्वाद्विंशतोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति। एवं तर्हि परिमाणिनि विंशत्यादयो भविष्यन्ति। परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम् *। परिमाणिनि चेत् पुनःस्वार्थे प्रत्ययो विधेयः। विंशकःसंघः । षष्ठीवचनविधिश्च *। षष्ठी च विधेया गवां विंशतिः। द्रव्यमभिहितं तस्याभिहितत्वात् षष्ठी न प्राप्नोति। एकवचनं च विधेयम्। विंशतिर्गावः। गोभिः सामानाधिकरण्याद्बहुषु बहुवचनमिति बहुवचनं प्राप्नोति। अनारम्भो वा प्रातिपदिक-

---

शतयोरिति वार्त्तिकवचनाच्च। द्विवचनं प्राप्नोतीति। स्वार्थिकाः प्रकृतलिङ्गमेव केचिदतिवर्त्तन्ते न तु संख्यामपि संख्यान्तरविरोधात्। लिङ्गानां तु विरोधाभावः स्त्रीसूत्रे प्रतिपादितः। एवं तर्हीति। तदस्य परिमाणमित्यधिकारात्परिमाणोपाधेः संख्याया अस्येति परिमाणिनि प्रत्ययः। परिमाणी च द्विविधः। द्रव्यसंघातो भिन्नानि वा द्रव्याणि। तत्र संघस्यैकत्वाद् विंशतिरित्येकवचनं सिध्यति। द्रव्याणां तु परिमाणित्वे विंशतिगवं त्रिंशत्पूलीति समानाधिकरणसमाससिद्धिरिति भावः। परिमाणं यस्य स संघो विंशतिरित्यभिधीयते। तत्र विंशतिः परिमाणं यस्य संघस्येति संघान्तरस्य परिमाणिनो ऽसंभवाद्विंशकः संघ इति सिद्धये विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायामिति ड्वुन्प्रत्ययःस्वार्थे वक्तव्यः। ननु यदा द्रव्याणि परिमाणीनि विंशतिशब्दाभिधेयानि तदा संघे परिमाणिनि प्रत्ययः सिध्यत्येव। विंशतिर्गावः परिमाणमस्य विंशकः संघ इति। एवं तर्हि विंशतिशब्देन संघस्याभिधानं प्राप्नोति न चेष्यते। विंशतिगोसंघ इति। तस्माद्यदा संघे परिमाणिनि विंशत्यादयो निपात्यन्ते तदा तत्र तेषां केवलानां प्रयोगो मा भूदिति पुनः स्वार्थे नित्यं प्रत्ययो विधेयः। षष्ठीवचनविधिश्चेति। संघे परिमाणिनि विंशत्यादीनां केवलानां नित्यं प्रयोगो नेष्यते भिन्नेषु तु द्रव्येषु परिमाणिषु प्रत्ययोत्पत्तावाश्रीयमाणायां विंशतिशब्देन द्रव्याणामभिधानाद् व्यतिरेकाभावाद् गवां विंशतिरिति षष्ठी न प्राप्नोति द्रव्यसामानाधिकरण्याद् बहुवचनप्रसङ्गश्च। तदेवं व्युत्पत्तिपक्षे दूषणान्यभिधायाव्युत्पत्तिपक्षं निर्दोषमाश्रित्यारम्भं प्रत्याख्यातुमाह। अनारम्भो वेति। वाशब्दस्त्वर्थे। स-

विज्ञानाद्यथा सहस्रादिषु *। अनारम्भो वा पुनः विंशत्यादीनां न्याय्यः। कथं सिध्यति। प्रातिपदिकविज्ञानात्। कथं प्रातिपदिकविज्ञानम्। विंशत्यादयोऽव्युत्पन्नानि प्रातिपदिकानि। यथा सहस्रादिषु। तद्यथा। सहस्रमयुतमर्बुदमिति। नचानुगमः क्रियते। भवति चाभिधानम्। यथा सहस्रादिष्वित्युच्यते। अथ सहस्रादिष्वपि कथं भवितव्यम्। सहस्रं गवाम्। सहस्रं गावः। सहस्रगवम्। गोसहस्रमिति। यावताऽत्रापि संदेहः। नासूया कर्त्तव्या यत्रानुगमः क्रियते। ननु चोक्तं विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिः परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानं षष्ठीवचनविधिश्चेति। नैष दोषः। समुदाये विंशत्यादयो भविष्यन्ति॥ किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। संघ इति वर्त्तते। संघः समूहः समुदाय इत्यनर्थान्तरम्। एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति। भा-

---

हस्रादिवदव्युत्पन्ना एव विंशत्यादयोर्थवदधातुरिति लब्धप्रातिपदिकसंज्ञा अर्थवत् सूत्रे स्यानुज्ञातसाधिमानः संख्यायां संख्येये च प्रयोगभेदेनाच्चादिपदवदनेकार्थतथा स्वभावतो वर्तमाना रूढिशब्दत्वाच्च नियतलिङ्गसंख्याः यथा आपीदारा इति भावः। इदानीं भाष्यकार आरम्भं समर्थयमान आह। यथेति। अयमत्रार्थः। अक्षादयः परस्परानन्वितानेकार्थाभिधायिनो भिन्नासु जातिषु रूढशब्दा एव न तु यौगिकाः विंशत्यादयः सहस्रादयश्च। शुक्लादिवद् गुणिनि यौगिका एव। नहि संख्यानिरपेक्षाः संख्येयविशेषमेते प्रत्याययन्ति येनैषां रूढिशब्दत्वमुच्येत। अत्रापि संदेह इति। क एषां मुख्यार्थः को वासोयमिति संबन्धादौपचारिक इति संदेहः। नासूयेति। अननुगमो हि दोषायाशक्योवानन्त्यात्सर्वशब्दानुगमो नत्वनुगम एव स्वप्रज्ञापराधादशक्यार्थविशेषनिश्चयत्वाद्दोषत्वेनोद्भावनीय इत्यर्थः। समुदाय इति। अस्येति प्रत्ययार्थस्यानुवर्तनात्समुदायः परिमाणी प्रत्ययार्थत्वेनाश्रीयते न तु भिन्नानि द्रव्याणीत्यर्थः। किं वक्तव्यमिति। अस्येत्यनुवर्तनात्परिमाणिमात्रे प्रत्ययो लभ्यते न तु तद्विशेष इति मत्वा प्रश्नः। संघ इति वर्तत इति। पूर्वसूत्रे द्वन्द्वनिर्दिष्टस्यापि संघशब्दस्यैव स्वरितत्वादिहानुवृत्तिः। ननु प्राणिसमूहः संघः ततश्च वृक्षाणां विंशतिरिति न प्राप्नोतीत्याह। संघः समूह इति। सामान्येन प्राणिनामप्राणिनां समुदायः संघ इत्यर्थः। ननु चोक्तं परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानमिति। नैष दोषः। द्रव्यसंघयोर्दशतोः संघे प्रत्ययो निपात्यते न तु द्रव्यसंघे। इह द्रव्याणां द्रव्यसंघस्य दशतां दशत्संघस्य च पारमार्थिको भेदो नास्ति को-

ववचनाः सन्तो गुणवचना भवन्ति । गुणवचनाः सन्तो अविशिष्टा भवन्त्यन्यैर्गुणवचनैः । अन्येषु च गुणवचनेषु कदा चिद् गुणः गुणिविशेषको भवति । तद्यथा । शुक्लः पट इति । कदा चिद् गुणिना गुणो व्यपदिश्यते । तद्यथा । पटस्य शुक्ल इति । तद्यदा तावदुच्यत विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिरिति । सामानाधिकरण्यं तदा गुणगुणिनोः । वचनपरिहारस्तिष्ठतु तावत् । परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानमिति । संहनने वृत्तः संहनने वर्त्तिष्यते । संख्यासंहनने वृत्तो द्रव्यसंहनने वर्त्तिष्यते । अथ षष्ठी तदा गुणिनागुणो विशिष्यते । वचनपरिहारः उभयोरेवम् । उभयोरपि पक्षयोरेवं कृत्वा वचनपरिहारः । यदि तर्हि इमे विंशत्यादयो गुणवचनाः स्युः सधर्मभिरन्यैर्गुणवचनैर्भवितव्यम् । अन्ये च गुणवचनाः द्रव्यस्य लिङ्गसङ्ख्ये अनुवर्त्तन्ते । तद्यथा । शुक्लं वस्त्रम् । शुक्ला शाटी । शुक्लः

---

वत्वं बुद्धया परिकल्प्यते । बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तो ऽसत्यपि वास्तवे भेदे भेदमवगमयन्ति । त एत इति । निपातनसामर्थ्याद्विशिष्टे दशते संघे वर्तमानाभाववचना भवन्ति । भावशब्देनात्र धर्ममात्रमुच्यते । भाव इव भावः यथा पाकादिभावः पराश्रय एवमन्योपि धर्मः पराश्रयत्वाद् भावः । गुणवचना इति । गुणमुक्तवन्तो गुणवचना गुणमुक्त्वा द्रव्यमभिदधतीत्यर्थः । अन्यैरिति । शुक्लादिभिरुभयवचनैस्तुल्या इत्यर्थः । गुणिविशेषक इति । भाष्यकारवचनात्कर्तरि चेति अनित्यः षष्ठीसमासनिषेधः । शेषषष्ठ्या वा समासः । अथ वा गुणिनं विशिनष्टीति कर्मण्यण् । ततः स्वार्थे कन्प्रत्ययः । पटः शुक्ल इति । गुणगुणिनोरव्यतिरेकविवक्षया मतुब्लोपाद्वा सामानाधिकरण्यमेवं विंशत्यादीनामपि द्रव्येण सामानाधिकरण्यम् । कदा चिदिति । आधारान्तरव्यवच्छेदायोपजातव्यतिरेकेण गुणिना गुणो विशेष्यते । पटस्य शुक्लः न शङ्खादेरित्यर्थः । दशदर्थे चेदिति । अस्मिन् पक्षे यो दोषः स पक्षान्तराश्रयेण परिह्रियत इत्यर्थः । वचनपरिहार इति । समुदायाभिधाने वचनदोषो नावतरति । सामानाधिकरण्ये त्ववतरति । स च परस्तः परिहरिष्यते । तिष्ठत्विति । परस्ताद्वक्ष्यमाणत्वात् । संहनन इति । संघः संहननं तत्र दशतोः संघे वृत्तो विंशतिशब्दो गवादिद्रव्यसंघे परिमाणिनि प्रत्ययमुत्पादयिष्यतीत्यर्थः । विंशतिः परिमाणमस्य गोसंघस्य विंशको गोसंघ इति । वर्त्तिष्यत इति । परार्थाभिधानंवृत्तिर्विवक्षिता नतु विंशतिशब्दः कदा चिदपि गोसंघे

कम्बलः । शुक्लौ कम्बलौ शुक्लाः कम्बला इति । यदसौ द्रव्यं श्रितो गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति । विंशत्यादयः पुनर्नानुवर्त्तन्ते । अन्येपि वै गुणवचना नावश्यं द्रव्यस्य लिङ्गसंख्ये अनुवर्त्तन्ते । गावो धनं पुत्रा अपत्यम् । इन्द्राग्नी देवता विश्वेदेवा देवता यावन्तस्ते तां वाशितामनुयन्ति सर्वे ते दक्षिणासमृद्ध्या इति। अथाऽऽनानुवृत्तौ हेतुः शक्योऽवक्तुम् । बाढंशक्योऽवक्तुं कामं तर्ह्युच्यताम् । इहकदाचिद्गुणः प्राधान्येन विवक्षितो भवति । तद्यथा पञ्चोडुपशतानि तीर्णानि पञ्चवध्रीशतानि तीर्णानि अश्वैर्युद्धमसिभिर्युद्धमिति । न चासयो युध्यन्ते । असिगुणाः पुरुषा युध्यन्ते । गुणस्तु खलु प्राधान्येन विवक्षितो भवति । इह तावद् गावो धनमिति । धिनोतेर्ध-

---

वर्त्तते । गुणिनेति । गवादिनेत्यर्थः । ननु दशतस्य संघस्यगवादिर्गुणेन भवति दशतीहि तस्य गुणिनौ । नैष दोषः । गवां दशतोश्च तात्विकभेदाभावाद्गवामपि गुणित्वात्। तत्राव्यभिचाराद् दशतांविंशतिर्न विशेष्यते दशतोर्विंशतिरिति गोभिस्त्वश्वादिव्यावृत्तये विशिष्यते । गवां विंशतिरिति । यथा पटस्य शौक्ल्यमिति पटेन शङ्खादिव्यावृत्तये शौक्ल्यं विशेष्यते न तु शुक्लेन गुणेन स्वसमवेतं गुणसामान्यं शुक्लस्यशौक्ल्यमितिव्यभिचाराभावात् । वचनपरिहारउभयोरिति । समुदायाभिधाने गुण्यभिधाने चेत्यर्थः । तत्र समुदायाभिधाने तस्यैकत्वात्सिद्धमेकवचनमिति सामर्थ्यात् परिहृत एव वचनदोषः । सामानाधिकरण्ये तु परिहार उच्यते इति भावः । तं वचनदोषं यदि तर्हीत्यनुभाष्य परिहरति । विंशत्यादयः पुनरिति । प्राक् शतात्तेषां स्त्रीलिङ्गत्वादेकवचनान्तत्वाच्च शतस्य नपुंसकत्वादेकवचनान्तत्वाच्चेति भावः । विंशती विंशतयः शते शतानीति तु प्रत्ययविवक्षायामिकशेषो भवति । गावो धनमिति । धनादीनां साकाङ्क्षत्वाद्भेदकत्वात् क्रियायां पारतन्त्र्याच्च गुणत्वम् । यथा शुक्लमित्युक्ते किं तदिति नित्यं द्रव्यमाकाङ्क्षति शुक्लं च वस्त्रमिति द्रव्यस्य भेदकम् । शुक्लमानयेति क्रियायांद्रव्यपरतन्त्रं द्रव्यानयनमन्तरेण गुणानयनासंभवादिति शौक्ल्यंगुणः । एवं धनमित्युक्ते किं तदिति गवाद्याकाङ्क्षति गावो धनमिति गवांप्रीतिहेतुत्वावगमाद्भेदकं धनमानयेत्युक्ते गवादिद्रव्यानयनात् क्रियायां पारतन्त्र्यमितिधनं गुणः ।उडुपशतानीति । अत्र संख्यालक्षणस्य गुणस्य तरणे प्राधान्यं विवक्षितम् । तीर्णानीति कर्त्तरि निष्ठाभिधानात् । तत्त्वतस्तु संख्येयानामुडुपानां प्लवनेकर्तृत्वम् । अथ वोडुपानांकरणानामेवकर्तृत्वविवक्षायामिदमुदाहरणम् । अश्वैरिति । अश्वाअसयश्चाधिकरणत्वात्करणत्वाच्चोपकारित्वाद्गुणा अपिसन्तः प्रकारेप्राधान्येनविवक्षिताः कर्त्तरितृतीयाविधानात् । धिनोतेर्धनमिति । समुदायस्य प्री-

नम् । एको गुणः स च प्राधान्येन विवक्षितः । पुत्त्रा अपत्यमिति । अपतनादपत्यमेको गुणश्च प्राधान्येन विवक्षितः । इन्द्राग्नी देवता विश्वेदेवा देवता इति । दिवेरैश्वर्यकर्मणो देवस्तस्मात् स्वार्थे तल् । एको गुणः स प्राधान्येन विवक्षित. । यावन्तस्तं तां वाशितामनुयन्ति सर्वे ते दक्षिणासम्ज्ञा इति । दक्षतेर्वृद्धिकर्मणो दक्षिणा एको गुणः स प्राधान्येन विवक्षितः । विंशत्यादिषु चाप्येको गुणः स प्राधान्येन विवक्षितः । तस्यैकत्वादेकवचनं भविष्यति । अयं तर्हि विंशत्यादिषु भाववचनेषु दोषः गोविंशतिरानीयतामिति। भावानयने चोदिते द्रव्यानयनं न प्राप्नोति । नैष दोषः । इदं तावदयं प्रष्टव्यः। अथेह गौरनुबन्ध्योजोऽग्नीषोमीय इति । कथमाकृतौ चोदितायां द्रव्ये आरम्भणालम्भनविशसनादीनि क्रियन्त इति । असंभवादाकृतावारम्भणादीनां संभवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणादयः क्रियन्ते। इदमप्येवं जातीयकमेव । असंभवाद्भावानय-

---

तिहेतुत्वन्त्वनत्वं न त्वेकैकस्य गोपिण्डस्येति धनमेकं गोभिर्विशिष्यते । अश्रितसंख्याविशेषाश्च गोपिण्डा धनं विशिषन्तः समुदायस्य प्रीतिहेतुत्वं प्रत्याययन्तीति गावोपि धनसंख्यां नानुवर्तन्ते गोधनमित्युक्ते विवक्षितार्थानवगमात् । अपतनादिति । बहूनां चापतनहेतुत्वं न त्वेकैकस्य तथा चोच्यते वरमपुत्त्रत्वं नत्वेकपुत्त्रतेति लोकाश्रयत्वाल्लिङ्गस्यापत्यशब्दो नपुंसकलिङ्ग एव प्रयुज्यते । प्रत्येकं त्वपतनहेतुत्वे विवक्षिते पुत्त्रा अपत्यानीति बहुवचनं भवत्येव । इन्द्राग्नी देवतेति । संहत्य देवतात्वमेकं हविष्प्रतीति द्विवचनाभावः । देवते इत्युच्यमाने प्रत्येकं देवतात्वं प्रतीयते ततश्च विकल्पेन देवताकार्यं स्यात् । यथा खादिरे बध्नाति पालाशे बध्नातीति बध्नातावेकार्थत्वादधिकरणविकल्पः । नवैतेदक्षिणेति । अत्रापिसमुदायस्यदक्षिणात्वमित्येकवचनम् । दक्षिणा इति तु बहुवचने दाने विकल्पः स्यात् । विंशत्यादिष्विति । विंशतिसंख्यासमुदितद्रव्यसमवायिनी न तु प्रत्येकं शुक्लादिवत्परिसमाप्तेतिद्रव्यगते लिङ्गसंख्ये नानुवर्तेते पञ्चादयस्तु नित्यं संख्येयवचना इति संख्येयलिङ्गसंख्यानुविधायिनः । भावानयन इति । न ह्यन्यस्मिंश्चोदिते ऽन्यस्यानुष्ठानं युक्तम् । न हि दण्डं छिन्धीत्युक्ते कश्चिद्दण्डिनं छिनत्तीति भावः । इदं तावदिति । अन्यस्मिंश्चोदिते ऽन्यत्रापि तदव्यभिचारिणि कार्यं दृश्यतइति मत्वा प्रश्नः। असंभवादिति । आकृतौ कार्याणां साक्षादसंभवाद् द्रव्येषु कार्याणि क्रियन्तइत्यर्थः । येषां तावद्व्यतिरिक्ता जातिस्तेषामेतदेव जातौ कार्यं चोद्यमानं द्रव्यविषयमेवोपतिष्ठते ।

नस्य द्रव्यानयनं भविष्यति। अथ वा अव्यतिरेकात्॥

छेदादिभ्यो नित्यम्॥ ६४॥ पन्थो ण नित्यम्॥ ६६॥ छेदादिपथिभ्यो विग्रहदर्शनान्नित्यग्रहणानर्थक्यम् *। छेदादिपथिभ्यो नित्यग्रहणमनर्थकम्। किं कारणम्। विग्रहदर्शनात्। विग्रहो दृश्यते। छेदमर्हति पन्थानं गच्छतीति। विकारार्थं तर्हीदं नित्यग्रहणं कर्त्तव्यम्। नित्यग्रहणं क्रियते विकारेण विग्रहो माभूदिति। विराग विरङ्गं च पन्था ण नितयमिति। विकारार्थमिति चेदकङादिभिस्तुल्यम् *। विकारार्थमिति चेदकङादिभिस्तुल्यमेतत्। यथाकङादिभिर्विकारैर्विग्रहो न भवति। एवमाभ्यामपि न भविष्यति। किं पुनरिहाकर्त्तव्यं नित्यग्रहणं क्रियते आहो स्विदन्यच कर्त्तव्यं न

---

यथा चाग्निमानयेति चोदिते नान्तरीयकत्वादचोदितमपि पात्रमानीयते। तथा जातिचोदनायां द्रव्ये क्रियाप्रवृत्तिः। अव्यतिरेकादिति। जातितद्वतोर्गुणगुणिनोश्च तात्त्विकभेदाभावाद् द्रव्यमेव तेन द्वारेण तासुतासु क्रियासु चोद्यत इत्यर्थः। सहस्रादयस्तु पृषोदरादित्वादनुज्ञातसाधिमानः॥

छेदादि। पन्थोण। छेदादिपथिभ्य इति। नित्यग्रहणं प्रत्ययान्तरनिवृत्त्यर्थं तावदिह न भवति तस्याप्राप्तत्वात्। यथ कगोपूर्वाट्ठञ् नित्यमित्यत्रनित्यग्रहणं मतुब्निवृत्त्यर्थंन्। तथा हि। छेदादिभ्य इति ठग् विधीयते नचैतेभ्यः प्रत्ययान्तरप्रसङ्गः। पथिशब्दात् ष्कन्प्रत्ययोविधानसामर्थ्याद् भवत्येव प्रत्ययान्तरस्य तु प्रसङ्गाभाव.। नापितद्विषयार्थःनित्यग्रहणम्। यथाचेर्मन्नित्यमितिमप्प्रत्ययादन्यत्र चान्तप्रयोगनिवारणफलं नित्यग्रहणम्। छेदादिनामन्यत्र प्रयोगस्येष्टत्वात्। नापि प्रत्ययार्थविशेषणम्। नित्यं छेदमर्हतीत्यस्यासंभवात्। न हि कश्चित्पदार्थो नित्यं छेदमर्हति यो पिवेत सादिश्च‍च्छिन्नः प्रारोहति सोपि न नित्यं छेदमर्हति कालान्तरे तस्य च्छेदप्रवर्तनात्। नित्यं पन्थानं गच्छतीति यद्यप्यर्थः संभवति तथापि नात्रैवार्थे पान्थशब्दस्य प्रयोग इष्यते कदा चिद्गच्छत्यपि प्रयोगात्। वाक्यनिवृत्त्यर्थं नित्यग्रहणं स्यात्। यथा नित्यं क्रीडाजीविकयोरिति। एतदप्यप्रयोजनं शिष्टप्रयोगे वाक्यस्य दर्शनात्। विकारेणेति। नित्यग्रहणं विकारेण संबध्यते। विरङ्गादेशः पन्थादेशश्च नित्यं प्रत्ययविषयौ भवतो न तु ताभ्यां वाक्यं कर्त्तव्यमित्यर्थः। अन्यथा तयोः साधुत्वं सर्वविषयमित्याशङ्क्येत प्रत्ययविधानंत्वन्वाचीयमानं विज्ञायेतेति भावः। अकङादिभिरिति।सुधातुरकङ्च। कल्याण्यादीनामिनङ्। परस्त्री परशुं चेति प्रत्ययसंनियोगेन विधीयमानानामादेशानां तदभावे

क्रियते। इहाकर्त्तव्यं क्रियते एष एव न्यायो यदुत संनियोगशिष्टा-नामन्यतरापाये उभयोरप्यभावः। तद्यथा। देवदत्तयज्ञदत्ताभ्या-मिदं कर्त्तव्यमिति देवदत्तापाये यज्ञदत्तोपि न करोति॥

यज्ञर्त्विग्भ्यां घखञौ॥ ७१॥ यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युप-संख्यानम् *। यज्ञर्त्विग्भ्यांतत्कर्मार्हतीत्युपसंख्यानं कर्त्तव्यम्। यज्ञ-कर्मार्हतीति यज्ञियो देशः। ऋत्विक्कर्मार्हतीत्यार्त्विजीनं ब्राह्मणकु-लमिति॥

पारायणतुरायणचान्द्रायणं वर्त्तयति॥ ७२॥ तद्वर्त्तयतीत्यनि-र्देशस्तत्रादर्शनात् *। तद्वर्त्तयतीत्यनिर्देशः। अगमको निर्देशोऽनि-र्देशः। पारायणं को वर्त्तयति यः परस्य करोति। तुरायणं को व-र्त्तयति यस्त्वरुपुरोडाशान्निर्वर्तयति। तत्रादर्शनात्। न च तत्र प्र-त्ययो दृश्यते। इष्यते चात्र दर्शनात् *। इष्यते चात्र प्रत्ययो दृश्यते।

---

प्रसङ्ग एव नास्तीति नार्थो विकारेण वाक्यनिषेधार्थेन नित्यग्रहणेन। संनियोगशिष्टा-नामिति। विशिष्टप्रयोगसिद्धय ययोरेकस्मिन् विषये विधिस्तयोस्तद्विषयादन्यत्रैकस्याप्र-योगे परोपि न प्रयुज्यते। यथा श्रुवः श्रृ चेति श्रुसंनियोगे विधीयमानस्य श्रृभावस्य वि-षयान्तरे प्रयोगाभावो ऽस्यैव न्यायसिद्धस्यार्थस्य बिल्वकादिभ्यश्छस्य लुगित्यत्र लिङ्गं वक्ष्यते। इदं कर्त्तव्यमिति। धर्मनिर्णयादिकं तत्र ह्येकस्य संदेहसंभवादनधिकारः॥

यज्ञर्त्विक्। तत्कर्मार्हतीति। ननु वृत्तिविषये यज्ञार्थव्यापारे यज्ञशब्दस्य वृत्त्या सिद्ध सूत्रेणैव प्रत्ययो यथा मृदङ्गवादनवृत्ते मृदङ्गशब्दात् ठग् भवति मार्दङ्गिक इति। नै-तदस्ति। तत्र हि गौणार्थवृत्तिभ्य एव प्रत्यय इष्यते न तु मुख्यार्थवृत्तिभ्यस्ततश्च गौणमु-ख्यपरिभाषा तत्र नाश्रीयते। इह तु यश्च तत्कर्मार्हति तयोरपि प्रत्यय इष्यते। तत्र मु-ख्यार्थसंभवे गौणपरिग्रहणस्यान्याय्यत्वात्सूत्रेण न सिध्यतीति वार्त्तिकारम्भः। ननु यो देशो यज्ञकर्मार्हति स यज्ञमर्हतीति नार्थो वार्त्तिकारम्भेण। नैतदस्ति। यस्य यज्ञेधि कारः स यज्ञमर्हति अधिकारश्च कर्त्तुरर्थिनो विदुषः शास्त्रेणापर्युदस्तस्तस्य न तु देशादेस्तस्य तु योग्यत्वाद्य ज्ञार्थव्यापारार्हत्वमुच्यते।

पारा। अनिर्देश इति। इष्टार्थसाधनत्वाभावान्निर्देशकार्याकरणादनिर्देशः। पर-स्येति। शिष्यस्य। करोतीति। उच्चारयति अध्यापक इत्यर्थः। शिष्यस्तु केवलं प्रतिप-द्यते न तु निष्पादयति अध्यापकाधीनत्वाद्विषयत्तेरिति भावः। तुरायणमिति। यज्ञवि-शेषमृत्विगेव सव्यापारत्वाद निष्पादयति। यजमानस्तु षणोमात्रस्तद्दति भावः। उभौ ता-

यः पारायणमधीते स पारायणिक इत्युच्यते। यस्तुरायणेन यजते स तौरायणिक इत्युच्यते यश्चैवाधीते यश्च परस्य करोति। उभौ तौ वर्त्तयतः। यश्च यजते यश्च पुरोडाशान्निर्वर्तयति उभौ तौ वर्त्तयतः उभयत्र कस्मान्न भवति। अनभिधानात्॥

योजनं गच्छति॥ ७४॥ योजनं गच्छतीत्यत्र क्रोशशतयोजनशतयोरुपसंख्यानम् *। योजनं गच्छतीत्यत्र क्रोशशतयोजनशतयोरुपसंख्यानं कर्त्तव्यम्। क्रोशशतं गच्छति क्रौशशतिकः। योजनशतं गच्छति यौजनशतिक इति। ततोऽभिगमनमर्हतीति च*। क्रोशशतयोजनशतयोरुपसंख्यानं कर्त्तव्यम्। क्रोशशतादभिगमनमर्हति क्रौशशतिको भिक्षुः। योजनशतादभिगमनमर्हति यौजनशतिको गुरुः।

उत्तरपथेनाहृतं च ॥७७॥ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् *। आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानं कर्त्तव्यम्। वारि। वारिपथेनगच्छति वारिपथिक.। वारिपथेनाहृतः वारिपथिकः। वारि। जङ्गल। जङ्गलपथेन गच्छति जाङ्गलपथिक.। जाङ्गलपथेनाहृतं जाङ्गलपथिकम्। जङ्गल। स्थल। स्थलपथेन गच्छति स्थालपथिकः। स्थलपथेनाहृतं स्थालपथिकम्। स्थल। कान्तार। कान्तारपथेन गच्छति कान्तारपथिकः। कान्तारपथेनाहृतं कान्तारपथिकम्। अजपथशङ्कुपथाभ्यां च *। अजपथशङ्कुपथाभ्यांचेति वक्तव्यम्। अजपथेन गच्छति आजपथिकः। अजपथेनाहृतम् आजपथिकम्। शङ्कुपथेन गच्छति शाङ्कुपथिकः। शङ्कुपथेनाहृतं शाङ्कुपथिकम्। मधुकमरिचयोरण् स्थलात् *। मधुकम-

---

विति। अन्यतरासंनिधौ क्रियाया अनुत्पादादुभयोः कर्तृत्वम्। यश्चेति। यजमाने देवतोद्देशेन स्वं द्रव्यं त्यजतीति तस्यापि तुरायणनिर्वर्त्तने कर्तृत्वम्। तदेवं भाष्यकारेण यथान्यासं सूत्रं समर्थितम्। अनभिधानादिति। अध्यापके च प्रयोगाभावात्।

उत्तरपथकारः प्रत्ययार्थसमीपे श्रूयमाणः प्रत्ययार्थमेव गच्छतीत्येतं समुच्चिनोति। समर्थविभक्तिस्तु तत्रापि सूत्रोपात्ता तृतीयैव। तेन वारिपथेन गच्छतीत्यादिपाठो युक्तो न द्वितीयान्तपाठः। द्वितीयापक्षे आक्रान्ते अनाक्रान्ते च प्रकृत्यर्थे प्रत्ययः स्यादाक्रान्ते चेष्यते। मधुकमरिचयोरिति। अत्र मुख्यगमनासंभवादाहृत एव च प्रत्ययमिच्छन्ति।

रिचयोरण् स्थलाद्वक्तव्यः। स्थालपथं मधुकम्। स्थालपथं मरिचम्॥

तमधीष्टो भृतो भूतो भावी॥८०॥ अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्त्वादर्शनात् *। अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकः। किं कारणम्। तत्त्वादर्शनात्। न ह्यसौ मासमधीष्यते। किं तर्हि। मुहूर्त्तमसावधीष्टो मासं तत्कर्म करोति। सिद्धंतुचतुर्थीनिर्देशात् *। सिद्धमेतत्। कथम्। चतुर्थीनिर्देशः कर्त्तव्यः। तस्मायधीष्ट इति। स तर्हि चतुर्थीनिर्देशः कर्त्तव्यः। न कर्त्तव्यः। तादर्थ्यात्ताच्छब्द्यं भविष्यति। मासार्थो मुहूर्तोमासः॥

अवयसि ठंश्च॥ ८१॥ अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः *। अवयसि ठंश्चेत्यनन्तरस्यानुकर्षो द्रष्टव्यः। द्वेष्यं विजानीयाद् द्वयमप्यनुवर्त्तत इति। तदाचार्यःसुहृद् भूत्वान्वाचष्टे अवयसि ठंश्चेत्यनन्तरस्यानुकर्ष इति॥

षष्टिकाः षष्टिरात्रेण पच्यन्ते॥९०॥ षष्टिके संज्ञाग्रहणम् *। षष्टिके संज्ञाग्रहणं कर्तव्यम्। मुद्गा अपि हि षष्टिरात्रेण पच्यन्ते। त

---

अन्ये तु गौणगमनाश्रयेण गच्छतीत्यत्राप्यर्थे प्रत्ययमाहुः। प्रत्ययार्थोपाधित्वाच्च द्वयोरसंदेहार्थोन्यतरप्रयोगः।

तमधी। अधीष्टभृतयोरिति। यावन्तं कालमध्येषणं भरणं च क्रियते ततः प्रत्ययो नेष्यते। अध्येषणभरणफलव्यापरव्याप्यात्तु कालादिष्यते। ततो न प्राप्नोति। तस्याध्येषणभरणाभ्यामव्याप्त्या द्वितीयानुपपत्तिरिति निष्प्रयोजनो द्वितीयानिर्देशः। सिद्धं त्विति। तेन मासायाधीष्टो भृतो वेति तादर्थ्ये चतुर्थ्यन्तात् प्रत्ययः। मासव्यापिव्यापारार्थमधीष्ट इत्यर्थः। तदर्थ्यादिति। मासादिशब्दा अध्येषणरणव्याप्तमुहूर्त्तादिकालवाचिन एवाश्रीयन्ते भूतभाविनोस्तु प्रत्ययविधौ मुख्यार्थवृत्तय इति विभागोलक्ष्यपरतन्त्रत्वाल्लक्षणस्य।

अवय। अनन्तरस्येति। खतः। द्वेष्यमिति। विपरीतमित्यर्थः। व्यवहितस्यापि क्वचिदनुवृत्तिर्दृष्टा। यथा द्वितीयाटौ स्वेन इत्यत्रैतद इव इदम इति दर्शनादिहापि क्वचिद भ्राम्येदित्यर्थः।

षष्टिकाः। बहुवचनमतन्त्रम्। एकवचनान्तस्यापि षष्टिकशब्दस्य लोके प्रयोगात्। संज्ञाग्रहणमिति। षष्टिरात्रेण पच्यन्ते इत्यत्रार्थे निपात्यमानस्य धान्यविशेष एव प्रयो

च मा भूदिति। उक्तं वा *। किमुक्तम्। अनभिधानादिति।

तदस्य ब्रह्मचर्यम् ॥ ९४ ॥ तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम् *। तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानं कर्तव्यम्। महानाम्नीनां ब्रह्मचर्यं माहानाम्निकम्। आदित्यव्रतिकम्। तच्चरतीति च *। तच्चरतीति च महानाम्न्यादिभ्य उपसंख्यानं कर्तव्यम्। महानाम्नीश्चरति माहानाम्निकः। आदित्यव्रतिकः। नैष युक्तो निर्देशस्तच्चरतीति। महानाम्न्यो नामर्चः। न च तायर्यन्ते व्रतं तासां चर्यते। नैष दोषः। साहचर्यात्ताच्छब्द्यं भविष्यति। महानाम्नीसहचरितं व्रतं महानाम्न्यो व्रतमिति। अवान्तरदीक्षादिभ्यो डिनिः*। अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः। अवान्तरदीक्षी तिलव्रती। अष्टाचत्वारिंशतो ड्वुंश्च *। अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः। अष्टाचत्वारिंशकः। अष्टाचत्वारिंशी चातुर्मास्यानां यलोपश्च *। चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः। चातुर्मासकः। चातुर्मासी। अथ किमिदं चातुर्मास्यानामिति। चातुर्मासाण्ण्यो यज्ञे तत्र भवे *। चतुर्मासाण् ण्यो वक्तव्यः यज्ञे तत्र भव इत्येतस्मिन्नर्थे। चतुर्षु मासेषु भवन्ति चातुर्मास्यानि यज्ञाः।

---

गाथम्। अनभिधानादिति। लोके तु स्वार्थे प्रयुज्यमानानां शब्दानां साधुत्वमात्र मनेन प्रतिपाद्यते न त्वर्थनियोगः क्रियते।

तदस्य। द्विधेदं सूत्रं व्याख्यायते। तदिति द्वितीयासमर्थात् कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति ब्रह्मचर्यं चेद् गम्यते। मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी। तथा तदिति प्रथमासमर्थात्कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति यत्तदस्येति षष्ठीनिर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति मासो ब्रह्मचर्यमस्य मासिकं ब्रह्मचर्यमिति वाक्ये मासस्य प्राधान्यात् प्रथमैव न तु द्वितीया तस्याः षष्ठीविषये विधानात्। महानाम्न्यादिभ्य इति। ब्रह्मचर्यस्य प्रत्ययार्थत्वात् सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः। न च ता इति। चरणमनुष्ठानं तच्च क्रियाविषयमिति भावः। महानाम्नीव्रतमिति। लिङ्गसंख्ये अजहदेव महानाम्नीशब्दो व्रते वर्तते। डिनेर्डित्करणमष्टाचत्वारिंशदर्थम्। अन्येषां यस्येति लोपेन रूपस्य सिद्धत्वात्। अष्टाचत्वारिंशक इति। वृत्तिविषये वर्षेष्वेव संख्येयेष्वष्टाचत्वारिंशच्छब्दो वर्तते। चतुर्षु वेदेष्वष्टाचत्वारिंशत् वर्षाणि व्रतं चरति प्रतिवेदं द्वादशवर्षाणि

संज्ञायामण् *। संज्ञायामण् वक्तव्यः। चतुर्षु मासेषु भवति चातुर्मासी पौर्णमासी ॥

तस्य दक्षिणायज्ञाख्येभ्यः ॥ ९५ ॥ आख्याग्रहणं किमर्थम्। तस्य दक्षिणायज्ञेभ्य इतीयत्युच्यमाने य एव संज्ञीभूतका यज्ञास्तत उत्पत्तिः स्यात्। आग्निष्टोमिक्यः राजसूयिक्यः। यत्र वा यज्ञशब्दोस्ति। नावयज्ञिक्यः। पाकयज्ञिक्यः। इह न स्यात् पाञ्चौदनिक्यः। दाशौदनिक्यः। आख्याग्रहणे पुनः क्रियमाणे न दोषो भवति। ये च संज्ञीभूतका यज्ञा ये च न संज्ञीभूतका यत्र च यज्ञशब्दोस्ति यत्र च नास्ति तदाख्यामात्रात्सिद्धं भवति ॥

तत्र च दीयते कार्यं भववत् ॥ ९६ ॥ कार्यग्रहणमनर्थकं तत्रभवेन कृतत्वात् *। कार्यग्रहणमनर्थकम्। किं कारणम् ॥ तत्रभवेन कृतत्वात्। यदि मासि कार्यं मासे भवं तद्भवति तत्र तत्रभव इत्येव सिद्धम्। किमिदं भवान् कार्यग्रहणमेव प्रत्याचष्टे न पुनर्दीयते ग्रहणमपि। यथैव हि यन्मासि कार्यं तन्मासि भवं भवति। एवं यदपि मासि दीयते तदपि मासि भवं भवति। तत्र तत्रभव इत्येव सिद्धम्। न सिध्यति। न तन्मासि दीयते। किं तर्हि मासे गते।

---

व्रतचरणात्। चातुर्मासीति। तत्र भव इत्येवाण् सिद्धः। तस्य तु द्विगोर्लुगनपत्य इति लुक् प्राप्नोतीति पुनरण् विधिः। कालाट्ठञित्यस्याप्राप्तिः समुदायस्याकालवाचित्वात्तदन्तविध्यभावाच्च। केचित्तु यथा कथंचित्कालवृत्तेष्ठञ इष्टत्वात् ठञेव प्राप्ते तस्य च लुकि इदमण्विधानमित्याहुः।

तस्य। आख्याग्रहणमिति। यज्ञेभ्य इति बहुवचननिर्देशात् स्वरूपग्रहणाभावात्तदर्थाभिधायिभ्यः प्रत्ययो लभ्यत इति प्रश्नः। संज्ञीभूतकाः। सर्वलोकप्रसिद्धाः। प्रसिद्धत्वादेव ते यज्ञा मुख्या इति भावः। यत्र वेति। बहुवचननिर्देशाद्यज्ञशब्दान्ता एव गृह्येरन् नान्ये। एवं यज्ञशब्दश्रुतिर्बहुवचनं चानुगृहीतं भवतीति भावः। आख्याग्रहण इति। ये यज्ञं प्रसिद्धमप्रसिद्धं वाचक्षते सर्वेभ्यष्ठञ् भवति।

तत्र च। दीयते कार्यमित्येतयोरर्थयोः कालवाचिभ्यो भववत्प्रत्यया भवन्तीति सूत्रार्थस्तत्र कार्यस्य भवेऽन्तर्भावादेवात्रप्रत्ययानां सिद्धिमत्वाह। कार्यग्रहणमिति। मासे गते इति। मासे दीयतइति नैषाधिकरणसप्तमी किं तर्हि यस्य च भावेनेति। तत्र भव इत्यत्र चाधिकरणसप्तम्याश्रितोपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायादिह त्वतिदेश-

एवं तर्हि औपश्लेषिकमधिकरणं विज्ञास्यते। एवं तर्हि योगविभागोत्तरकालमिदं पठितव्यम्। तस्य दक्षिणा यज्ञाख्येभ्यः। तत्र च दीयते। ततः कार्यं भववत्। कालादिति॥

व्युष्टादिभ्योऽण्॥ ९७॥ अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानम्*। अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानं कर्तव्यम्। चौणीमान्यण्ग्रहणानि। व्युष्टादिभ्योऽण्। समयस्तदस्य प्राप्तम्। ऋतोरण्। प्रयोजनम्। विशाखाषाढादण् मन्थदण्डयोरिति चौणि। तत्र न ज्ञायते कतरस्मिन्नण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम्। अविशेषात्सर्वत्र। व्युष्टादिभ्योऽण्भवतीत्युक्त्वाग्निपदादिभ्यश्चेति वक्तव्यम्। अग्निपदे दीयते कार्यं वा आग्निपदम्। पैलुमूलम्। समयस्तदस्य प्राप्तमृतोरण्। अग्निपदादिभ्यश्चेति वक्तव्यम्। उपवस्ता प्राप्तोऽस्योपवस्त्रम्। प्राशिता प्राप्तोऽस्य प्राशित्रम्। प्रयोजनं विशाखाषाढादण् मन्थदण्डयोः। अग्निपदादिभ्यश्चेति वक्तव्यम्। चूडा प्रयोजनमस्य चौडम्। श्रद्धा प्रयोजनमस्य श्राद्धम्॥

अनुप्रवचनादिभ्यश्छः॥ १११ छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम्*। छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानं कर्त्तव्यम्। विशिः। गेहानुप्रवेश-

---

सामर्थ्याद्भावलक्षणसप्तमीपरिग्रहः। औपश्लेषिकमिति। मासेऽतिक्रान्ते यद्दीयते तस्य मास औपश्लेषिकमधिकरणमिति तत्र भव इत्यनेनैव सिद्धमित्यर्थः। कारकप्रकरणे च गौणस्यापि संज्ञाभवतीत्युक्तम्। एवं तर्हीति। प्रयत्यविध्यर्थं दीयत इत्यपात्तं न त्वतिदेशार्थं तेनाग्निष्टोमे दीयते आग्निष्टोमिकं भक्तमित्येवमादि सिद्धम्। केचिदाहुः। दीयमानस्य भवत्वात् क्रतुयज्ञेभ्यश्चेति ठञ् सिद्ध इति। तदयुक्तम्। व्याख्यातव्यनाम्न इति तत्रानुवर्तननात्। तदेवं कार्यग्रहणमेव वार्त्तिककृता प्रत्याख्यातम्। प्राग्वतः संख्यापूर्वपदानामिति वचनाद् द्वयोर्वाजपेययोर्दीयते द्वैवाजपेयिकमित्यत्रापि योगविभागाट्ठञ्भवति।

व्युष्टा। अण्प्रकरण इति। प्रकरणं प्रस्तावः अग्निपदादिभ्य इति। आदिशब्दः प्रकारे। तत्र क चिदर्थे कुतश्चिदण्प्रत्ययो भवति तत्राण्दर्शनमात्रकृतं साद्दश्यमाश्रीयते।

अनुप्र। चनादिति। चनस्य केवलस्य पूर्वपदेन संबन्धाभावात् सामर्थ्यात् तदन्त-

नीयम्। पूरि। प्रपापूरणीयम्। पदि। गोप्रपदनीयम्। अश्वप्रपद-नीयम्। रुहि। प्रासादारोहणीयम्। स्वर्गादिभ्यो यत् *। स्वर्गादिभ्यो यत्प्रत्ययो भवति। स्वर्ग्यम्। धन्यम्। यशस्यम्। आयुष्यम्। पुण्याहवाचनादिभ्यो लुक् *। पुण्याहवाचनादिभ्यो लुग्वक्तव्यः। पुण्याहवाचनम् शान्तिवाचनम्। स्वस्तिवाचनम्॥

ऐकागारिकट्चौरे॥ ११३॥ एकागारान्निपातनानर्थक्यं ठञ्-प्रकरणात् *। एकागारान्निपातनमनर्थकम्। किं कारणम्। ठञ्प्रकरणात्। ठञ्प्रकृतः सोनुवर्त्तिष्यते। इदं तर्हि प्रयोजनं चोर इति वक्ष्यामीति। इह मा भूत्। एकागारं प्रयोजनमस्य भिक्षोरिति। यद्येतावत्प्रयोजनं स्यात् कागाराच्चौर इत्येव ब्रूयात्॥

आकालिकडाद्यन्तवचने॥ ११४॥ आकालान्निपातनानर्थक्यं ठञ्प्रकरणात् *। आकालान्निपातनानर्थक्यम्। किं कारणम्। ठ-

---

ग्रहणम्। स्वर्ग्यमिति। स्वर्ग्यः प्रयोजनमस्येति ठञि प्राप्ते यद्विधिः। पुण्याहवचनादिभ्य इति साहचर्यादभिधाने सिद्धे भेदविवक्षायां प्रत्ययश्रवणनिवृत्त्यर्थं लुग्विधानम्॥

ऐका। एकागारादिति। प्रयोजनमित्यनेनैव ठञः सिद्धत्वात्सूत्रं निपातनार्थं न कर्तव्यमित्यर्थः। ठञ्प्रकरणादिति। प्रयोजनमित्यत्र ठञ्प्रकृतस्तेनैवैकागारिकशब्दः सिद्ध इत्यर्थः। एकशब्दोऽसहायवाची। असहायं गृहमस्य मुमुषिषोः प्रयोजनं स ऐकागारिकः। ससहायं तु गृहमनेकपुरुषाधिष्ठानान्मोषितुमशक्यम्। ठञ् प्रकृत इति। प्राग्वतेष्ठञित्यत्र ठञ्प्रत्ययः प्रयोजनमित्यत्रानुवर्त्तिष्यते। इदं तर्हीति। नियमार्थमेतदित्यर्थः। भिक्षोरिति। एकामेव यो भिक्षां गृह्णीते न द्वितीयां तस्याभिधानं मा भूदित्यर्थः। यद्येतावदिति। अनभिधानाद्भिक्षोर्न भविष्यतीति नियमार्थमप्येतन्नोपयुज्यते इति भावः। न च ञित्स्वरनिवृत्त्यर्थं निपातनम्। ञित् स्वरस्येष्टत्वात्। एतच्च भाष्यवार्त्तिककाराभ्यां निराकरणात् ज्ञायते।

आकालि। आकालादिति। आकालशब्दात् प्रत्ययनिपातनमनर्थकं प्रकृतिमुच्चार्य प्रकृतष्ठञ् विधेय इत्यर्थः। तत्रावृत्तः कालो यस्यासावाकालो न च कालस्यावृत्तिः संभवतीत्ययमर्थो भवति। उत्पत्तिकालेन समानो यस्य विनाशकालः। एवंहि तस्योत्पत्तिकालो विनाश आवृत्तो भवति। यदि य एवोत्पत्तिकालः स एव विनाशकालः। न चोत्पादविनाशयोरेककालत्वं संभवतीति निरन्तरविनाशकालप्रतीतिर्भवति। निरन्तरो हि कालो भेदाग्रहणात् स एव काल इति लोके व्यवह्रि-

ञ्प्रकरणात्। ठञ् प्रकृतः सोनुवर्तिष्यते। इदं तर्हि प्रयोजनम्। एतस्मिन्विशेषे निपातनं करिष्यामि। समानकालस्याद्यन्तविवक्षायामिति। आकालाट्ठंश्च *। आकालाट्ठंश्च वक्तव्यः। आकालिकी। आकालिका॥

तेन तुल्यं क्रिया चेद्वतिः॥ ११५॥ इदमयुक्तं वर्तते। किमत्रायुक्तम्। यत्तृतीयासमर्थं क्रिया चेत्सा भवतीत्युच्यते। कथं च ह-

---

यते। ततः स्वार्थे ठञ् विधेयः। आद्यन्तवचने विषय इति भावः। भाष्यकारोनिपातनं समर्थयितुमाह। इदं तर्हीति। निपातने हि समानकालशब्दः प्रकृतित्वेनाश्रीयते तस्याकालआदेशोनिपात्यते। समानशब्द एकवाची एककालावाद्यन्तौ यस्यासावाकालिकः आचिर्जन्मान्तो विनाशः। जन्मविनाशयोश्चाव्यवहितकालत्वादेककालत्वम्। विधौ त्वयमर्थः क्लेशेन प्रतीयत इति निपातनाश्रयणम्। उक्तं च। धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च। अनुबन्धविकाराणां रूढ्यर्थं च निपातनमिति। अन्ये वर्षादिष्वप्याकालिकशब्दमिच्छन्ति। यस्मिन्नेव काले मध्याह्नादावुत्पत्तिर्येषां तस्मिन्नेव द्वितीयादिदिवससंबन्धिनि विनाशस्तान्याकालिकानि। आकालाट्ठंश्चेति। आकालशब्दव्युत्पत्तिः प्रदर्शिता ततः स्वार्थे ठन्प्रत्ययश्चकारात् ठञ्। अर्थस्तु पूर्वं प्रदर्शितः॥

तेन। इदमयुक्तमिति। सूत्रोपात्तं वस्तु इदमा परामृश्यते। यत्तृतीयासमर्थमिति। तेन तुल्यमित्यनेन क्रमेण प्रकृतिप्रत्ययार्थौ निर्दिष्टौ तत्र क्रियाग्रहणं प्रकृत्यर्थस्यैव प्राथम्याद् व्यतिक्रमहेत्वभावाद्विशेषणं न्याय्यम्। एतच्चासंभावादयुक्तमित्यर्थः। ननु तेनेत्यस्य विविभक्तिकत्वेन क्रियाग्रहणेन कथं संबन्धः। सोपस्करत्वात् सूत्राणां यत्तृतीयासमर्थं क्रिया चेत्सा भवतीत्येवं संबन्धसंभवाददोषः। कथं चेति। तृतीयासत्त्ववाचिनः प्रातिपदिकाद्विधीयते। क्रिया तु साध्यरूपत्वादसत्त्वभूता ततो विशेषणविशेष्यभावोऽसंभवादयुक्तः। पाकादयो घञाद्यन्तवाच्याः सत्त्वधर्मसमन्वयात् क्रियाधर्मातीतास्तथा च तत्र क्त्वोर्थप्रत्ययाभावः। भोक्तुं पाक इत्यादौ धातुवाच्यक्रियापेक्षस्तुमुन्प्रत्ययो विभक्तिस्तु तृतीयादिः सत्वरूपाश्रया न क्रियारूपताश्रया। पचत्यादीनां तु क्रियावाचिनामप्रातिपदिकत्वादसत्त्वभूतार्थाभिधानाच्च तृतीयाद्यभावः। कृत्वाहृत्वाकर्तुंहर्तुमित्यादीनामव्ययकृतां यद्यपि क्रियावाचित्वं तथा च पक्त्वा कृत्वेति क्त्वोर्थोत्पत्तिर्भवति तथाप्यसत्त्ववाचित्वात्तेभ्यस्तृतीयाद्यभावः। प्रातिपदिकार्थमात्रे तु प्रथमाया एवोत्पत्तिः। शयितव्यादयो यद्यपि क्रियावचनाः पक्तव्यः शयितव्यमिति क्त्वोर्थप्रत्ययदर्शनात् तथापि तत्रोपमानोपमेयभावासंभवो न हि भवति शयितव्येन तुल्यो देवदत्तः शयितव्येन तुल्यः शुक्ल इति। उपमानं हि प्रसिद्धगुणक्रियाहेतुकं भवति। यथास्याश्चन्द्र

तीयासमर्थं नाम क्रिया स्यात्। नैतदयुक्तम्। सर्वएते शब्दाः गुणसमुदायेषु वर्तन्ते। ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति। आतश्च गुणसमुदाये। एवं ह्याह। तपःश्रुतं च योनिश्च एतद् ब्राह्मणकारकम्। तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥ १॥ यथा गौरः शुच्याचारः पिङ्गलः कपिलकेश इति। एतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्तीति। समुदायेषु च शब्दाः प्रवृत्ता अवयवेष्वपि प्रवर्तन्ते। तद्यथा। पूर्वे पञ्चालाः उत्तरे पञ्चालाः। तैलं भुक्तम्। घृतं

---

इव मुखमिति। नापि शयितव्येन तुल्यः शायक इति क्रियावतः क्रियोपमानं संभवति। क्रियातद्वतोरत्यन्तभेदात्। क्रियाणामपि भिन्नजातीयानां नास्त्युपमानोपमेय भावः। शयितव्येन तुल्यमासितव्यमित्यत्यन्तभेदात्। नाप्येकजातीयानां शयितव्येन तुल्यं शयितव्यमिति। यथा गौरिव गौरिति। येनैव हेतुनैको गौस्तेनैवापरोपीति क उपमानोपमेयभावः। नन्वाधारभेदादेकजातीयानामपि भेदाश्रय उपमानोपमेयभावो भवति। यथा राज्ञः शयितव्यमिति। सापेक्षत्वादत्र प्रत्ययेन न भाव्यमित्यदोषः। ननु यदा प्रकरणादिवशादपेक्ष्यं निर्ज्ञातं भवति तदा प्रत्ययप्रसङ्गः। तथा राजशयितव्येन तुल्यं देवदत्तस्य शयितव्यमित्यत्र सापेक्षत्वाभावात्तथा स्नातव्येन तुल्यं गमनं मन्दत्वानृन्तत्वेन तुल्यंगमनं बहुविकारत्वादितिभोक्तुं पाक इत्यादौ च क्रियानिबन्धनः कार्यदर्शनात्तैलपाकेन तुल्योघृतपाक इत्यादावस्ति तृतीयासमर्थस्यापि क्रियावाचित्वं तत्क्रिमुच्यते कथं च तृतीयासमर्थं नाम क्रिया स्यादिति। अत्रोच्यते। उपमानोपमेयभावस्त्रितयसंनिधानायत्तो येनोपमीयते यच्चोपमीयते यश्च तयोः साधारणोर्थः एतत् त्रयमवश्यापेक्ष्यं तत्र यदा क्रियोपमानत्वेन विवक्ष्यते तदासाववश्यंमपेक्ष्यसाधारणधर्माधारत्वात् क्रियारूपतां हित्वा सत्त्वरूपतां प्रतिपद्यत इति मत्वा भाष्यकृतैतदुक्तम्। सर्वे एत इति। उपमानोपमेयभावविषयाः शब्दा एतच्छब्देन परामृश्यन्ते। तप इति। चान्द्रायणादि। श्रुतमिति। वेदवेदाङ्गादीनाम्। योनिरिति। ब्राह्मणाद् ब्राह्मण्यां जन्म। ब्राह्मणकारकमिति। शेषषष्ठीसमासः तृजकाभ्यां कर्त्तरि कर्त्तरि चेत्येताभ्यां तु कर्त्तरि या षष्ठी या च तृजकनिमित्ता कर्मणि तस्या एव समासनिषेधो न तु शेषषष्ठ्याः। न हि सा तृजकसंबन्धनिमित्ता। ब्राह्मणव्यपदेशस्य निमित्तमेतदित्यर्थः। तपः श्रुताभ्यामिति। नासौ परिपूर्णो ब्राह्मणः। जातिलक्षणैकदेशाश्रयस्तु तत्र ब्राह्मणशब्दप्रयोगः। अत एव च तस्य सर्वासु ब्राह्मणक्रियासु नास्त्यधिकारः। शुच्याचारोनुपहताचारः। एतानिति। गौरत्वादयो ब्राह्मणस्य पुरा कल्पदर्शनेनाद्यत्वेपि क्व चित्तदन्वयदर्शनेन व्यञ्जका इति तानपि शब्दार्थान्तर्भूतत्वेनाश्रयन्तीत्यर्थः। पूर्वे पञ्चाला इति। समुदा-

भुक्तम्। शुक्लो नीलः कृष्ण इति। एवमयं ब्राह्मणशब्दः समुदाये प्रवृत्तो ऽवयवेष्वपि वर्तते यदि तर्हि तृतीयासमर्थं विशेष्यते। प्रत्ययार्थो ऽविशेषितो भवति। तत्र को दोषः। तृतीयासमर्थात् क्रियावाचिनः गुणतुल्येपि प्रत्ययः स्यात्। पुत्रेण तुल्यः स्थूलः। पुत्रेण तुल्यः पिङ्गल इति। अस्तु तर्हि प्रत्ययार्थं विशेषणम्। यत्तत्तुल्यं क्रिया चेत्सा भवतीति। एवमपि तृतीया समर्थमविशेषितं भवति। तत्र को दोषः। तृतीयासमर्थादक्रियावाचिनः क्रियातुल्येपि प्रत्ययः प्रा-

---

यरूपारोपादवयवे समुदायवृत्तिशब्दवृत्तिर्नतूपात्तार्थे त्यागेनार्थान्तराभिधानं शब्दानामुपपद्यते। शब्दार्थसंबन्धस्यानित्यत्वप्रसङ्गात्। पूर्वादिशब्दसामानाधिकरण्याच्चावयववृत्तित्वावसायः समुदायवृत्तित्वे हि पञ्चालानां पूर्व इति षष्ठ्या भाव्यम्। तैलं भुक्तमिमि। यदाद्रव्यसंरुक्तते विशिष्टमात्रमात्रायुक्तेर्थे तलादयो वर्त्तन्ते तदैषां समुदायशब्दत्वमेकदेशोपयोगि च तदा तैलं भुक्तमिति प्रयोगस्तदावयववृत्तित्वमवसेयम्। यदा तु जातिशब्दस्तैलादयस्तदा संस्थानप्रमाणनिरपेक्षा जातिसमाश्रयेण वर्त्तन्तइत्यनुदाहरणमेतत्। शुक्ल इति। स्वयमशुक्लोप्यवयवः शुक्लसमुदायसंबन्धात्तद्रूपारोपात् शुक्ल इत्युच्यते। एवमयमिति। यैव क्रियोपमेये श्रूयते तस्यामेव ब्राह्मणादिशब्दो वर्त्तते इत्यर्थः। ब्राह्मणेन तुल्यमधीते ब्राह्मणवदधीते क्षत्रिय इति। अध्ययनक्रियाविशेषणत्वात् तुल्यमिति द्वितीया नपुंसकत्वं च। ब्राह्मणाध्ययनेन क्षत्रियाध्ययनस्य तुल्यत्वसंभवात्सामर्थ्याद्ब्राह्मणशब्दस्य वृत्तिरित्युपपद्यते तृतीयासमर्थस्य क्रियावाचित्वम्। ननु भिन्नकर्तृकयोरध्ययनयोस्तुल्यत्वे आश्रीयमाणे ऽन्यः साधारणो धर्मोपेक्षणीयः कर्त्रोरिव तूपमानोपमेयत्वे ऽध्ययनमेव साधारणो धर्म इति नास्ति धर्मान्तरापेक्षा। उच्यते। शब्दानुपात्ता अपि यथा चन्द्र इव मुखमस्या इत्यादौ कान्त्यादयः प्रतीयन्ते तथात्रापि सौष्ठवादयः प्रत्येष्यन्ते। ननु चोक्तं साधारणधर्माधारत्वात्सत्त्वरूपापत्त्या क्रियारूपहानिरिति। एवं तर्हि सामर्थ्याद् भूतपूर्वगत्याश्रयणम्। यस्यार्थस्य क्रियारूपताभूत् स संप्रति क्रियारूपापन्नोपि सत्त्वभावापन्नस्तृतीयान्तशब्दवाच्यः परिगृहीष्यते। अत एव ब्राह्मणादयः शयितव्यादयश्च भूतपूर्वक्रियारूपार्थवाचित्वेन तुल्या इति संप्रति क्रियारूपार्थवाच्यसंभवाद् भूतपूर्वगतिरभ्युपेयते। अविशेषित इति। एकेन विशेषणेन द्वयोः संबन्धाभावादिति भावः। गुणतुल्यइति। गुणेन तुल्य इति तृतीयासमासः। पुत्रेण तुल्यः स्थूल इति। पुत्रशब्दोत्र श्रुताध्ययननिर्देशस्थानादिप्रसिद्धक्रियान्तर्भावेण स्वार्थमभिदधातीति संभवति क्रियावाची। अस्तु तर्हीति। समानविभक्तित्वात् प्रधानत्वाच्च प्रत्ययार्थः क्रमबाधेन विशेष्यत इति भावः। क्रियातुल्ये ऽपीति। अत्रोदाहरणमूह्यम्। क्व चित्तु पुस्तके भाष्य

प्नोति। स्थूलेन तुल्यः पुत्त्रः स्थूलेन तुल्यो याति। नैष दोषः। यत्त-त्तुल्यं क्रिया चेत्सा भवतीत्युच्यते। तुलया च संमितं तुल्यम्। यदि च तृतीयासमर्थोऽपि क्रियाप्रत्ययार्थोऽपि क्रिया ततस्तुल्यं भवति। अ-थ वा पुनरस्तु यत्तत्तृतीयासमर्थं क्रिया चेत्सा भवतीत्येव। ननु चोक्तं प्रत्ययार्थोऽविशेषित इति। तत्र को दोषः। तृतीयासमर्थात् क्रियावाचिनो गुणतुल्योऽपि प्रत्ययः प्राप्नोति। पुत्त्रेण तुल्यः स्थूलः पुत्त्रेण तुल्यः पिङ्गल इति। नैष दोषः। यत्तत्तृतीयासमर्थं क्रिया चेत्सा भवतीत्युच्यते। तुलया च संमितं तुल्यम्। यदि च तृतीया-समर्थमपि क्रिया प्रत्ययार्थोऽपि क्रिया ततस्तुल्यं भवति। किं पुनरत्र न्यायः। प्रत्ययार्थं विशेषणमेव न्यायः। कुत एतत्। एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितं वतिना सामानाधिकरण्यं कृतम्।

---

एव पठ्यते स्थूलेन तुल्यः पुत्त्रः स्थूलेन तुल्यो यातीति तत्र पुत्त्रादयो निर्देशस्थानादिभिः क्रियावन्तः स्थौल्यगुणयुक्तेन पित्रादिना स्थौल्येनैव गुणेन तुल्या इति विवक्षायामपि व-तिप्रसङ्गः क्रियाग्रहणं च क्रियावत उपलक्षणं निष्क्रियनिवृत्तिफलत्वात्तस्येत्यभिप्रायेण पक्षद्वये ऽप्यतिप्रसङ्गचोदना। नैष दोष इति। एकस्मिन्नप्यर्थे विशेषिते सामर्थ्यादुभयो-र्विशेषितत्वात्। तुलया च संमितमिति। सदृशमित्यर्थः। यथा तुला परिच्छिनत्ति द्र-व्यविशेषमेवं यत्सादृश्येन वस्त्वन्तरं परिच्छिनत्ति तत्तुल्यमुच्यते। ततः प्रत्ययार्थे विशे-षिते सामर्थ्यात् प्रकृत्यर्थोऽपि विशेषितो भवति। न ह्यक्रियया क्रिया तुल्या भवतीति सामर्थ्यात् क्रियावाचिन एव प्रत्ययो विधीयते। न च क्रियाशब्देन क्रियावान् गृह्यते। मुख्यार्थसंभवे गौणग्रहणस्यायुक्तत्वात्। न च स्थूलेन तुल्यः पुत्त्र इत्यादौ क्रिययोस्तुल्य-त्वप्रतीतिः क्रियापदानुपादानात्। अत एव न पुत्त्रादेः क्रियावत्त्वप्रतीतिः। स्थूलेन तु-ल्यो यातीत्यत्रापि न क्रियातुल्या। स्थूलेन यस्तुल्यः स्थौल्येन गुणेन स यातीत्यर्थावग-मात्। यदा तु स्थूलेन तुल्यं यातीति क्रियातुल्यत्वविवक्षा तदा वतिर्भवत्येव स्थूलवद्या-तीति। अथ वेति। पूर्वोक्तेनैव न्यायेन प्रकृत्यर्थे विशेषिते प्रत्ययार्थोऽपि विशेषित इत्य-र्थः। किं पुनरिति। उक्तदोषपरिहाराद् द्वयोरपि प्रशस्तत्वादन्यतरप्रकर्षविषयः प्रश्नः। वतिनेति। वतिशब्देन वत्यर्थ उच्यते। तेनायमर्थः प्रकृत्यर्थविशेषणपक्षे वाक्याध्याहा-रेण समर्थनीयम्। तेन क्रियेत्यनयोः पदयोर्भिन्नविभक्तित्वात्। तुल्यं क्रियेत्यनयोस्तु प-दयोरेकविभक्तिकत्वात् सुतरामेव सामानाधिकरण्योपपत्तिः अन्ये तु वतिप्रत्ययेनैव सामा-नाधिकरण्यं व्याचक्षते। वतिर्भवति स च क्रियावाची। एवं च क्रियायां तुल्यायां वति-

अपि च वतेरव्ययेषु पाठो न कर्तव्यो भवति। क्रियायामयं भवन् लिङ्गसंख्याभ्यां न योक्ष्यते॥

तत्र तस्येव ॥ ११६ ॥ किमर्थमिदमुच्यते। न तेन तुल्यं क्रियाचेद्वतिरित्येव सिद्धम्। न सिध्यति। तृतीयासमर्थात्तत्र प्रत्ययः।

---

भवतीत्यर्थः संपद्यते। अपि चेति। प्रत्ययार्थविशेषणपक्षे मुख्या क्रिया साध्यमानस्वभावा ऽसत्त्वभूता संभवति। तस्यां वतिर्विधीयमानो विनापि गणपाठेनाव्ययसंज्ञां प्रतिपद्यते। यन्नव्येति लिङ्गसंख्यानुपादानात्तदव्ययमिति अव्ययलक्षणं, गणपाठस्तु प्रपंचार्थ इति भाष्यकाराभिप्रायः। क्रियमात्रं चेद्दवतिनाभिधीयत इति तद्विशेषप्रतिपत्तये क्रिया शब्दप्रयोगः। प्रकृत्यर्थविशेषणपक्षे तु भूतपूर्वगतिर्वाऽश्रयणीया क्रियाग्रहणेन वा क्रियावत् उपलक्षणे क्रियाद्वारकं क्रियावतः साट्टश्यमाश्रयणीयम्। तत्र गत्यन्तरसंभवेत् भूतपूर्वाश्रयणमयुक्तम्। द्वितीये तु पक्षे क्रियावान् प्रत्ययार्थः स्याद् ब्राह्मणेन तुल्योऽध्येति। तथा च लिङ्गसंख्यावदर्थाभिधायित्वादव्ययसंज्ञार्थो वतेः पाठः कर्त्तव्यःस्यात्। पाठसामर्थ्याच्च सत्त्ववाचित्वे ऽव्ययसंज्ञाप्रवृत्तिः। तदेवं स्थितमेतत् प्रत्ययार्थविशेषणं क्रिया ब्राह्मणेन तुल्योऽध्येतेत्येवमादौ क्रियावतोः साट्टश्यं विवक्षितं न तु क्रिययोरिति प्रत्ययाभावः। उत्तरसूत्रेणापि वतेर्विहितस्यासत्त्वभूतार्थाभिधायित्वमिवशब्दस्येव। तदर्हमित्यनेनापि क्रियाया वतिर्विधीयतइति तदर्थोप्यव्ययेषु वतेः पाठो न कर्त्तव्यः।

तत्र। किमर्थमिति। तुल्यार्थैरिति या तृतीया तयैवेवयोगे सर्वविभक्त्यर्थाः व्याप्ताः यथा ब्राह्मण इवाधीते ब्राह्मणेन तुल्यमधीते ब्राह्मणमिव पश्यति ब्राह्मणेन तुल्यं पश्यति ब्राह्मणेनेवाधीतं ब्राह्मणेन तुल्यमधीतम्।ब्राह्मणायेव वैश्याय ददाति ब्राह्मणेन तुल्यं वैश्याय ददाति ब्राह्मणादिववैश्यादधीते ब्राह्मणेन तुल्यं वैश्यादधीते।ब्राह्मणस्येव क्षत्रियस्य स्वं ब्राह्मणेन तुल्यं क्षत्रियस्य स्वम्।ब्राह्मण इव क्षत्रिये वर्त्तते ब्राह्मणेन तुल्यं क्षत्रिये वर्त्तते इति। तंच तृतीयया षष्ठीसप्तम्यर्थस्य व्याप्तत्वात् तृतीयान्तादेव पूर्वेण प्रत्ययो विधास्यते। क्रियाग्रहणं च न करिष्यते। य एव चार्थो मथुरायामिव पाटलिपुत्रे प्राकारा इति स एव मथुरया तुल्याः पाटलिपुत्रे प्राकारा इति। तथा देवदत्तस्येव यज्ञदत्तस्य शुक्ला दन्ता देवदत्तेन तुल्या यज्ञदत्तस्य शुक्ला दन्ता इति। मथुराशब्देन च तदवयवाः प्राकारा उच्यन्ते देवदत्तशब्देनापि दन्ता इति प्रश्नः। न सिध्यतीति। पूर्वसूत्रे अवश्यं कर्त्तव्यं क्रियाग्रहणं गवा तुल्यो गवय इत्यादौ प्रत्ययनिवृत्त्यर्थं तस्मिन् क्रियमाणे गुणद्रव्ययोस्तुल्यत्वे प्रत्ययो न प्राप्नोतीति षष्ठीसप्तम्यन्तादिवार्थे वतिर्विधीयत इत्यर्थः। इवशब्दस्य द्योतकत्वान्न व्यतिरेकहेतुः। गौरिव गवय इति। यथा चशब्दो धवस्य खदिर-

यदाऽन्येन कर्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते। न च काचिदिवशब्देन योगे तृतीया विधीयते। ननु च सप्तम्यपि न विधीयते। एवं तर्हि सिद्धे सति यदिवशब्देन योगे सप्तमीसमर्थाद्वतिं शास्ति तज्ज्ञापयत्याचार्यो भवतीवशब्देन योगे सप्तमीति। किमेतस्य ज्ञापने प्रयोजनम्। देवेष्विव नाम ब्राह्मणेष्विव नाम एष प्रयोग उपपन्नो भवति॥

तदर्हम्॥ ११७॥ किमर्थमिदमुच्यते न तेन तुल्यं क्रिया चेद्व-

---

त्येति। तुल्यशब्दस्तु वाचकत्वादुपमाने व्यतिरेकहेतु र्देवदत्तेन तुल्यो देवदत्तस्य तुल्यः इति वा तत्र दन्तप्राकारादिसंबन्धोपजनितषष्ठीसप्तम्यन्तादिवार्थे ऽनेन प्रत्ययः। नन्विवेत्येव सूत्रमस्तुपूर्वसूत्राच्च तेनेत्यनुवर्त्तिष्यते तदनुवृत्त्या च शेषविषये सर्वा विभक्त्ययइवशब्दप्रयोगे उपमानाद्भवन्तीत्यनुमास्यते इत्याशङ्क्याह। न च काचिदिति। अयमर्थः। इवशब्दस्तावदसत्त्ववाचित्वान्न व्यतिरेकहेतुरिति तद्योगे लक्षणेन तृतीया नास्ति नापि तद्योगे शेषविये ज्ञापयितुमिष्टेति हित्वा तृतीयां विभक्त्यन्तरमाश्रितम्। ननु चेति। तत्र यथा शेषविषये ज्ञापकात्सप्तमीभवत्येवं तृतीयापि भविष्यतीति भावः। एवंतर्हीति तृतीयानुवृत्त्यैव इवयोगेऽस्मादेव ज्ञापकादनुमिततृतीयान्ताद्वतौ सिद्धे तत्रेति सप्तमीनिर्देशो ज्ञापयति शेषविषये भवतीवयोगे सप्तमीति। तृतीयातु नेष्यत इति नासौ ज्ञाप्यते। देवेष्विति। देवानामिवेत्यर्थः। नन्वसति प्रयोजने ज्ञापकं भवति। अस्ति च सप्तम्युपादानस्य प्रयोजनं मथुरायामिव मथुरावत्पाठलिपुत्रे प्राकार इत्यादौ प्राकाराद्याधेयापेक्षाधिकरणविहितसप्तम्यन्तात्प्रत्ययविधानम्। किंच ज्ञापकात्सप्तम्यनुमानेऽधिकरणसप्तम्यन्तादितरनुत्पत्तिः स्यात्। एवं तर्हि तन्त्रेण सूत्रद्वयमुच्चारितमितिभाष्यकाराभिप्रायः। तत्रैकेन सूत्रेण स्वलक्षणविहितषष्ठीसप्तम्यन्ताद्वतिर्विधीयतेद्वितीयेन त्विवशब्दयोगे तस्येत्यस्यार्थे तत्रेति सप्तमो विधीयते। सप्तम्या षष्ठी मा बाधि इति तस्येत्यनेन प्रतिप्रसूयते। महाविभाषाधिकाराद्वा षष्ठी न बाध्यते।

तदर्हम्। किमर्थमिति। इह क्रियाग्रहणमनुवर्तते तेन द्वितीयान्तादर्हणस्य कर्त्र्या क्रियायां वतिर्विधीयते। राजानमर्हति छत्त्रं ब्राह्मणमर्हति छत्त्रं राजवद्वर्तते ब्राह्मणवद्वर्तत इति। तत्र राज्ञातुल्यं वर्तते इति विग्रहाश्रयेण पूर्वेण वतिः सिद्धः। राजानमर्हति छत्त्रमित्यादौ क्रियानुवर्तनात् प्रत्ययेन न भाव्यम्। राजवद्रूपमस्येत्यादावपि तत्र तस्येवेति सिद्धो वतिः। तेन तुल्यमित्येतत्तु चोदकेनोपलक्षणायोपात्तम्। इह तर्हि राजवद्वर्तते राजेति भेदाभावाद्भेदनिबन्धनसादृश्याभावादप्राप्तो वतिरनेन विधीयते। अत्रापि राजत्वेन प्रसिद्धा ये पृथुभरतभगीरथादयस्त इदानींतनानां राज्ञामुपमानानीति सिद्धो वतिरिति

तिरित्येव सिद्धम्। न सिध्यति। तृतीयासमर्थात्तत्र यदान्येन कर्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते इह पुनर्द्वितीयासमर्थादात्माहार्यां क्रियायामर्हति कर्तरि निश्चितबलाधाने प्रत्यय उत्पाद्यते। ब्राह्मणवद्भवान् वर्त्तते एतद्वृत्तं ब्राह्मणमर्हतीति॥

उपसर्गाच्छन्दसि धात्वर्थे॥ ११८॥ अर्थग्रहणं किमर्थम्। न उपसर्गाच्छन्दसि धाताविल्येवोच्येत। धातुर्वै शब्दः। शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञास्यते। कः पुनर्धात्वर्थः। क्रिया। इदं तर्हि प्रयोजनम्। उत्तरपदलोपो यथाविज्ञायेत। धातुकृतोऽर्थो धात्वर्थ इति। कः पुनर्धातुकृतोऽर्थः। साधनम्। किं प्रयोजनम्। साधने ऽयं

---

प्रश्नः। न सिध्यतीति। यदा राजशब्दः सामान्यवचन- प्रसिद्धविशेषविषयो वा राजवदयं वर्तते पृथुरिति तदा सादृश्याभावादितरप्राप्तिः। तथा चिच्छेदक्षतहस्तवदिति क्षतहस्तमर्हति च्छेदनमित्यर्हणं गम्यते न तु सादृश्यम्। आत्माहार्यामिति। द्वितीयान्तवाच्यस्यार्थस्यात्मनोर्हा या क्रिया तस्यामित्यर्थः। अर्हतिकर्तरीति। अर्हतेः कर्तरि क्रियारूपे वृत्तादिक इत्यर्थः। निश्चितबलाधान इति। निश्चितस्यार्थस्यान्ययोगनिवृत्त्यर्थं बलाधानं पुनरुपादानेन निश्चयनमित्यर्थः। यदा राज्ञः किञ्चन वृत्तं प्रसिद्धमेवान्यनिवृत्त्यर्थं पुनरुपादीयते राजानमेतदर्हति वृत्तं न त्वराजानमिति। तदार्थवदेतत् सूत्रम्। यदा त्वेकमेव वस्त्ववस्थाभेदपरिकल्पितभेदमुपमानोपमेयत्वेन विवक्ष्यते तदा नार्थोऽनेन योगेन। तथा च इवशब्दस्यापि प्रयोगो दृश्यते। राजेवायं राजा युध्यते वैयाकरण इवायं वैयाकरणो ब्रूते त्वमिव बुध्यस्वेति। तथा सदृशस्त्वं तवैवेति।

उपसर्गात्। अर्थग्रहणमिति। धाताविल्येव धात्वर्थो लभ्य इति भावः। धातुर्वै शब्द इति। तत्रार्थग्रहणमन्तरेणार्थस्य ग्रहणं न स्यादिति भावः। येनाभिप्रायेण प्रश्नस्तमेवाविष्कर्तुमाह। शब्दे कार्यस्येति। नहि वतिप्रत्ययस्य धातुवाच्य उपपद्यत इति सामर्थ्याद्धातुसहचरितोऽर्थ आश्रयिष्यत इत्यर्थः। अथवा धातुर्वै शब्दः शब्दे कार्यस्येत्येकग्रन्थ एवायम्। उत्तरपदलोप इति। गम्यमानार्थत्वादप्रयोग एव शब्दस्य लोपः। धातुकृत इति। धातुशब्देनात्र धात्वर्थ उच्यते। क्रियाकृतोऽर्थ आश्रयिष्यत इत्यर्थः। क्रियया कारकं कर्मादिव्यपदेशयुक्तं क्रियते। क्रियापेक्षत्वात्कर्मादिव्यपदेशस्य। बहुव्रीह्याश्रयाश्चायमर्थो गृह्यते। धतुर्धात्वर्थः क्रिया सा अर्थः प्रयोजनं यस्य साधनस्य तस्मिन्वर्तमानादुपसर्गात् स्वार्थे वतिप्रत्ययो वृत्तिविषये चोपसर्गः क्रियाविशेषविशिष्टशक्त्याधारे च द्रव्ये वर्तत इति तस्यार्थे विधीयमानस्य वतेः सत्त्ववाचित्वादन्वर्थसंज्ञाविज्ञानादलिङ्गासंख्यस्य विधीयमानाव्ययसंज्ञा न प्रवर्तते। साधनशब्देनात्र शक्त्याधारो द्रव्यं विवक्षि-

भवन् लिङ्गसंख्याभ्यां योच्यते। उद्गतानि उद्वत: निगतानि निवत इति। स्त्रीपुंसाभ्यां वत्युपसंख्यानम् *। स्त्रीपुंसाभ्यां वत्युपसंख्यानं कर्तव्यम्। स्त्रीवत् पुंवदिति। किं पुनः कारणं न सिध्यति। इमौ नञ्स्नञौ प्राग्भवनादित्युच्येते तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम्। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न वत्यर्थे नञ्स्नञौ भवत इति। यदयं स्त्रिया पुंवदिति निर्देशं करोति। एवमपि स्त्रीवदिति न सिध्यति। योगापेक्षं ज्ञापकम्॥

तस्य भावस्त्वतलौ॥ ११९॥ स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानम्*। स्त्रीपुंसाभ्यांत्वतलोरुपसंख्यानं कर्तव्यम्। स्त्रीभावः स्त्रीत्वं स्त्रीता। पुंभावः पुंस्त्वं पुंस्तेति। किं पुनः कारणं न सिध्यति। इमौ नञ्स्नञौ प्राग्भवनादित्युच्येते तौ विशेषविहितौ सामान्यविहितौ त्वतलौ बाधेयाताम्। वावचनं च *। वावचनं च कर्तव्यम्। किंप्रयोजनम्। नञ्स्नञावपि यथा स्याताम्। स्त्रीभावः स्त्रैणं पुंभावः पौंस्नमिति। अपवादसमावेशाद्वा सिद्धम् *। अपवादसमावेशाद्वा सिद्धमेतत्। तद्यथा। इमनिच्प्रभृतिभिरपवादैः समावेशो भवति। एवमाभ्यामपि भविष्यति। नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्ति। इमनिचप्रभृतिभिरपवादैः समावेशो भवतीति। किं तर्हि आचक्ष:-

---

तम्। उद्गतान्युद्वत इति। पुंस्त्वमत्र नपुंसकप्रसङ्गे च्छान्दम्। वत्युपसंख्यानमिति। वतिप्रत्यये विधीयमान इत्यर्थः। इमौ नञ्स्नञाविति। प्राग्भवनाद्येऽर्थास्तान् नपेक्ष्य प्रकृतिविशेषाद्विधीयमानौ प्रकृतिसामान्याद्विधीयमानस्य सर्वस्य प्रत्ययस्य सर्वेष्वर्थेषु नञ्स्नञौ बाधकौ ततो वत्यर्थे वतिरुपसंख्यायते। तेन चोपसंख्यानेन विशिष्टार्थविषयेणार्थान्तरे सावकाशौ नञ्स्नञौ बाध्येते। योगापेक्षमिति। स्त्रीपुंसाभ्यामिति योगो वत्यर्थे न प्रवर्त्तते इत्यस्यार्थस्य पुंवदिति ज्ञापकमित्यर्थः।

तस्य।वावचनं चेति।अन्यथार्थान्तरे सावकाशयोर्नञ्स्नञोरुपसंख्यानविहिताभ्यांविशिष्टार्थविषयाभ्यांत्वतल्भ्यां बाधः स्यात्। अपवादसमावेशाद्वेति।वाशब्दः पूर्वोक्तं वचनव्यावृत्त्यर्थोवावचनं न कर्त्तव्यम्। अपवादसमावेशात्सिद्धत्वादित्यर्थः।यथा प्रकृतिविशेषाद्विधीयमानैरिमनिजादिभिस्त्वतलौ समाविशत एवं नञ्स्नञ्भ्यामित्यर्थः। नैवेश्वर इति। ईश्वरभयाद्विरुद्धमप्यनुष्ठीयते। नापीति। तेषां हि वचनमदृष्टेऽर्थे प्रमाणम्। एतेन इ-

दित्यस्माद्यत्नादिमनिच्प्रभृतिभिरपवादैः समावेशो भवति । न चैता-
वत्राभ्यन्तरौ । एतावप्यत्राभ्यन्तरौ । कथम् । अपवादसदेशा अप-
वादा भवन्तीति । एतच्चैव न जानीमः । अपवादसदेशा अपवादा
भवन्तीति । अपि च कुत एतद् एतावप्यत्राभ्यन्तराविति । न पुनः
पूर्वौ वा स्यातां परौ वा । एवं तर्हि वक्ष्यत्याचत्वादित्यत्र चकार-
करणस्य प्रयोजनं नञ्स्नञ्भ्यामपि समावेशो भवतीति । तस्य भाव
इत्यभिप्रायादिष्वतिप्रसङ्गः *। तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्गो
भवति । इहापि प्राप्नोति अभिप्रायो देवदत्तस्य मोदकेषु भोजने ।
ये नो भावास्ते नो भावाः । पुत्राः पौत्रैश्चेष्टन्त इति । सिद्धं तु यस्य

---

ष्टादृष्टार्थाभाव उक्तः । यत्नादिति । नञ्स्नञोश्चासौ यत्नो न व्याप्रियते आचत्वादित्य-
स्मात्सूत्रादूर्ध्वमात्वसंशब्दनात् नञ्स्नञोरसंनिधानात् । एतावप्यत्रेति । प्राग्भवनात्
प्रतिसूत्रमुपस्थानात् त्वतलापवादैरिमनिजादिभिः समानदेशौ नञ्स्नञावित्यर्थः । एत-
च्चैव न जानीम इति । विध्यधिकारपरिभाषारूपसंभवादन्यतमरूपनिश्चयाभावात् । त-
त्राधिकारपक्षे कार्यकालपरिभाषापक्षे च प्रतिसूत्रं प्रत्यर्थं चोपस्थानात्स्यादनयोरभ्य-
न्तरत्वम् । यदा तु प्राग्भवनाद्येऽर्थास्तानपेक्ष्य नञ्स्नञौ विधीयेते यथोद्देशं वा परि-
भाषाश्रीयते तदा नास्त्यनयोरभ्यन्तरत्वम् । तथा च ष्यञादयोऽर्थविशेषलक्षणादप-
वादात्पूर्वविप्रतिषिद्धमिति पूर्वविप्रतिषेधो विधीयते । यथोद्देशपरिभषापक्षयोरेव संभ-
वति । न तु प्रतिसूत्रमुपस्थाने । न पुनरिति । कार्यकालपरिभाषापक्षेऽपि प्राग्भवनाद्ये
ऽर्थास्तत्र नञ्स्नञ्भ्यामुपस्थातव्यम् । तत्र यदि तावद्भाव इत्यर्थनिर्ज्ञानमात्र एव नञ्-
स्नञावुपतिष्ठेते तस्यभावस्त्वतलौ स्त्रीपुंसाभ्यां भावे नञ्स्नञाविति । तदास्मिन्प्रदेशे सं-
निधानादाचत्वादित्येतस्मात्सूत्रात्पूर्वौ नञ्स्नञौ भवतो नाभ्यन्तरौ । अथ तूत्सर्गापवा-
दविधानोपयोगविज्ञानानन्तरं नञ्स्नञोरुपस्थानं तदा ब्रह्मणस्त्व इत्येतस्मात्परौ न-
ञ्स्नञौ भवतः । तथापि नाभ्यन्तरौ गुणवचनब्राह्मणादिभ्यः कर्मणि चेत्यत्र तु प्रकृति-
विशेषसंबद्धस्य कर्मार्थस्योपादानात् प्रकृत्यन्तरेण तस्यासंबन्धात्कर्मणि नञ्स्नञोरनुप-
स्थानादभ्यन्तरत्वं नाशङ्कनीयम् । एवं तर्हीति । चशब्देन यत्नेन समावेशः सिध्यति । ए-
तच्च तत्रैव व्याख्यास्यते । अभिप्रायादिष्विति । अनाश्रितप्रवृत्तिनिमित्तविशेषो भावश-
ब्दवाच्यो यावत्कश्चिदर्थस्तस्य सर्वस्य विशेषानुपादानाद् ग्रहणस्य न्याय्यत्वादतिप्रसङ्गः । ये
नो भावा इति । अस्माकं येऽभिप्रायास्ते नित्यमेवास्माकं भवन्तीत्यर्थः । भवन्तीति भा-
वाः । भवतेश्चेति वक्तव्यमिति कर्त्तरि णः । यस्य गुणस्येति । गुणशब्देन यावान् कश्चि-
त्पराश्रयो भेदको जात्यादिरर्थः स सर्व इह गृह्यते । यस्य भावादित्येतावत्युच्यमाने पुत्र

**गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ *। सिद्धमेतत्। कथम्। यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम्। न चाभिप्रायादीनां भावाद् द्रव्ये-**

---

स्यभावात् पितरि पितृशब्दस्य प्रवर्त्तनात् पितृत्वमिति पुत्त्रे भावप्रत्ययः स्यात् पुत्त्रत्वमिति च पितरीति गुणग्रहणम्। भावाद्विद्यमानत्वादित्यर्थः। द्रव्यशब्देन विशेष्यभूतसत्त्वभावापन्नोऽर्थ उच्यते। तस्मिन्द्रव्ये शब्दनिवेशः शब्दनिवेशः शब्दस्य प्रवृत्तिर्यस्य गुणस्य शब्देन वाच्यस्यावाचस्य वाभावात् स त्वतलाद्यभिधेय इत्यर्थः। तत्र ये रूपादयः शब्दा गुणमात्रवृत्तयः तेभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः। रूपत्वमिति। ये तु शुक्लादयो गुणगुणिवृत्तयो गुणगुणिनोरभेदोपचारान्मतुब्लोपाद्वा तेभ्यो गुणवृत्तिभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः। गुणिवृत्तिभ्यस्तु गुणे। अणुमहद्दीर्घादयो नित्यं परिमाणिनि वर्तन्ते न तु परिमाणमात्रे। तेन तेभ्यः परिमाणे गुणे भावप्रत्ययः। षत्वं णत्वमिति भिन्नवर्णव्यक्तिसमवेते सामान्यविशेषे प्रत्ययः। गवादयो यदा जातिमात्रवाचिनः तदा तेभ्यः शब्दस्वरूपे प्रत्ययः। तथा हि। अर्थं जातौ शब्दस्वरूपमध्यस्यते यो गोशब्दः स एवार्थ इति ततः शब्दस्वरूपमेव तत्र प्रवृत्तिनिमित्तं नान्यत्। द्रव्यवाचिभ्यस्तु गवादिभ्यो जातौ प्रत्ययः। समासकृत्तद्धितास्तु यद्यपि केवलं संबन्धं नाभिदधति तथापि संबन्धिनि वर्त्तमानाः संबन्धं प्रवृत्तिनिमित्तमपेक्षन्त इति तेभ्यः संबन्धे भावप्रत्ययः। तथा च राजपुरुषत्वमिति स्वस्वामिभावः प्रतीयते। पाचकत्वमिति क्रियाकारकसंबन्धः। औपगवत्वमिति अपत्यापत्यवत्संबन्धः। केचिदौपगवत्वमित्यपत्यप्रत्ययान्ताद्भावप्रत्ययस्य जातिमभिधेयामिच्छन्ति तन्मते ऽर्थान्तरवृत्तिस्तद्धित उदाहार्यः। उक्तं च। समासकृत्तद्धितेषु संबन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्य इति। रूढिशब्दा गौरखरसप्तपर्णलोहितशाल्यादयो जातिविशेषावच्छिन्नद्रव्यवाचिन इति तेभ्यो जाताविव भावप्रत्ययः। एवं कुम्भकारत्वं हस्तित्वमिति। अभिन्नरूपाः शुक्लादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्तास्तथापि तेभ्यो भावप्रत्ययो गुण एव भवति न तु संबन्धे। गुणगुणिनोर्जातितद्वतोरिव सोऽयमित्यभिसंबन्धेन लोकनिरूढेन भेदसंबन्धस्य न्यग्भावाद् गुणवचनेभ्यो लुगिति लुग्विधानद्वारेणाभेदेनैव गुणिनोऽभिधानं न तु भेदं कृत्वा मत्वर्थोत्पत्तिरित्याख्यायते। अव्यभिचरितसंबन्धात् सतो भावः सत्तेति जाताविव भावप्रत्ययः। नहि सद्वस्तु सत्तासंबन्धं व्यभिचरतीति सत्तासंबन्धानपेक्षणान्न संबन्धे प्रत्ययः। राजपुरुषयोस्तु संबन्धस्य कादाचित्कत्वात्तदपेक्षो राजपुरुषशब्दः स्वार्थमभिधत्त इति ततः संबन्धे प्रत्ययो युक्तः। तस्मात् सर्वेषु पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः सत्तैव भावप्रत्ययवाच्या न तु सत्सत्तयोः संबन्धः समवायाख्यः। धवखदिरत्वमिति

देवदत्तशब्दो वर्त्तते। किं पुनर्द्रव्यं के पुनर्गुणाः। शब्दस्पर्शरूपरसगन्धा गुणास्ततोऽन्यद् द्रव्यम्। किं पुनरन्यच्छब्दादिभ्यो द्रव्यमाहोस्विदनन्यत्। गुणस्यायं भावाद् द्रव्ये शब्दनिवेशं कुर्वन् ख्यापयत्यन्यच्छब्दादिभ्यो द्रव्यमिति। अनन्यच्छब्दादिभ्यो द्रव्यम्। न ह्यन्यदुपलभ्यते। पशोः खल्वपि विशसितस्य पर्णशतेन्यस्तस्य नान्यच्छब्दादिभ्य उपलभ्यते। अन्यच्छब्दादिभ्यो द्रव्यम्। तत्त्वनुमानगम्यम्। तद्यथा। ओषधिवनस्पतीनां वृद्धिह्रासौ। ज्योतिषां गतिरिति। कोऽसावनुमानः। इह समाने वर्ष्मणि परिणाहे च अन्यत्तुलाग्रं भवति लोहस्य अन्यत्का-

---

जातिद्वन्द्वाज्जातिसमुदाये। कुत्वमित्यादौ संज्ञास्वरूपे संज्ञिष्वध्यस्तेप्रत्ययः। अन्ये तु संज्ञासंज्ञिसंबन्ध इत्याहुः। किं पुनरिति। प्रकृतिप्रत्ययार्थयोर्भेदप्रतिपत्त्यर्थः प्रश्नः। शब्दस्पर्शेति। एतच्चोपलक्षणं पराश्रयस्य सर्वस्य भेदकस्य जात्यादेरिह गुणत्वेनाभिमतत्वाद्विशेष्यस्य सर्वनाम्ना प्रत्यवमृश्यस्य द्रव्यत्वेन तत एतदुक्तं भवति। यथा शब्दादय आश्रिताः ससंगिणो गुणा एवमन्योपि जात्यादिधर्मो गुण इति। किं पुनरन्यदिति। भेदावगमहेतुप्रमाणप्रश्नः। अयमिति। तात्त्विकभेदाभेदचिन्तापरिहारेण लोकप्रसिद्धं भेदमाश्रित्य प्रत्ययार्थ आचार्येण व्यवस्थापित इत्यर्थः। न ह्यन्यदिति। असत्यपि भेदे लोके भेदव्यवहारदर्शनान्नास्ति ततो भेदनिश्चयः। न च रूपादिव्यतिरेकेण द्रव्यं प्रत्यक्षेणोपलभ्यते रूपादिसंनिवेशमात्रे घटादिव्यवहारात्। पशोः खल्वपीति। उपलब्धिलक्षणेन प्राप्तस्य द्रव्यानुपलम्भादसत्त्वनिश्चयो युक्त इति भावः। पर्णशते न्यस्तस्येति। बहुधा विभक्तस्येत्यर्थः। एतेन भागानां परस्पराव्यवधानेन व्यवधानस्यानुपलब्धिकारणस्याभावः प्रतिपादितः। नन्ववयवविभागात्संयोगनिमित्तावयविद्रव्यस्य विनाशादनुपलम्भः स्यात्। एवं तर्ह्युपलब्धिलक्षणप्राप्तस्यसर्वदानुपलम्भादसत्त्वनिश्चयोस्तु। अनुमानगम्यमिति। यद्यपि गुणव्यतिरिक्तद्रव्यवादिभिः प्रत्यक्षप्रमाणग्राह्यं द्रव्यमभ्युपगतं रूपाद्यालम्बनप्रत्ययविलक्षणपदार्थालम्बनप्रत्ययोत्पादात्। तथापि प्रत्यक्षे विप्रतिपन्नं प्रतिसाक्षिस्थानीयानुमानोपन्यासः। प्रत्यक्षापलापिनं प्रत्यक्षपूर्वकानुमानासंभवात्सामान्यतोदृष्टमनुमानमुपन्यस्यते। ओषधिवनस्पतीनामिति। भाष्यकारवचनाज्जातिरप्राणिनामित्येकवद्भावो न भवति। ओषध्यादीनामुपचयापचयपूर्वको देशविशेषसंबन्धो दृष्ट इति वनस्पत्यादीनामङ्कुराद्यवस्थासु दृष्टानां कालान्तरे देशविशेषसंबन्धदर्शनादुपचयापचयानुमानम्। ज्योतिषां गतिरिति। गतिपूर्विकां देशान्तरप्राप्तिमश्वादीनामुपलभ्यादित्यादीनां देशान्तरप्राप्तया गत्यनुमानम्। कोऽसावनुमानइति। अनुमीयते ऽनेनेत्यनुमानशब्दे न हेतुरुच्यते। समान इति। वर्ष्मोच्छ्रायः परिमाणं पारिमाण्डल्यम्। क्वचित्परिणाह इति पाठः। परिणाहः पारिमाण्डल्यमेव। स-

र्पासानां यत्कृतो विशेषस्तद् द्रव्यम् । तथा कश्चित्स्पृशन्नेव च्छिनत्ति । कश्चित् लम्बमानोऽपि न च्छिनत्ति । यत्कृतो विशेषस्तद् द्रव्यम् । तथा कश्चिदेकेनैव प्रहारेण व्यपवर्गं करोति कश्चिद् द्वाभ्यामपि न करोति । यत्कृतो विशेषस्तद् द्रव्यम् । अथवा यस्य । गुणान्तरेष्वपि प्रादुर्भवत्सु तत्त्वं न विहन्यते तद्द्रव्यम् । किं पुनस्तत्त्वम् । तद्भावस्तत्त्वम् । तद्यथा । आमलकादीनां फलानां रक्तादयः पीतादयश्च गुणाः प्रादुर्भवन्ति । आमलकं बदरमित्येव भवति । अन्वर्थं खल्वपि निर्वचनं गुणसंद्रावो द्रव्यमिति । यदि तर्हि षष्ठीसमर्थाद् गुणे प्रत्यया उत्पाद्यन्ते । किमियता सूत्रेण एतावद्वक्तव्यं षष्ठी समर्थाद् गुण इति । षष्ठीसमर्थाद् गुण इतीयत्युच्यमाने द्विगुणा रज्जुस्त्रिगुणा रज्जुः । अत्रापि प्राप्नोति । नैष दोषः । गुणशब्दोऽयं बह्वर्थः । अस्त्येव समेष्ववयवेषु वर्तते । तद्यथा । द्विगुणारज्जुरिति । अस्ति द्रव्यपदार्थकः । तद्यथा । गुणवानयं देश इत्युच्यते । यस्मिन् गावः सस्यानि च वर्तन्ते । अस्त्यप्रधाने वर्तते । तद्यथा । यो यत्राप्रधानं भवति स आह । गुणभूता वयमत्रेति । अस्त्याचारे वर्तते । तद्यथा गुणवानयं

---

यत्तुलाग्रमिति । तुल्याग्रस्यान्यथात्वं नामोन्नामलक्षणं गुरुत्वभेदाद् गुरुत्वस्य च समवायिकारणं द्रव्यमिति रूपादिव्यतिरिक्तद्रव्यसिद्धिः । विशेष इति । तुलाग्रस्य नामोन्नामलक्षणो भेद इत्यर्थः । स्पृशन्नेवेति । खड्गादिः । लम्बमानोऽपीति । कर्पासादिः । व्यपवर्गमिति । विभागम् । तत्त्वमिति । एकाकारबुद्धिः निमित्तत्वमित्यर्थः । यदि रूपाद्यालम्बनैवामलकादिबुद्धिः स्यात्तदा पूर्वरूपादिविनाशादपूर्वरूपादिप्रादुर्भावाच्च तदेवेदमामलकमिति प्रत्यभिज्ञाप्रत्ययो नोत्पद्येत । अस्ति चभिन्नाकारबुद्ध्युत्पत्तिस्तस्मादस्ति रूपाश्रयो द्रव्यम् । एतच्च पाकजरूपाद्युत्पत्तौ ये द्रव्यविनाशनेच्छन्ति । तन्मते न द्रव्यं प्रत्यभिज्ञाश्रयेणोक्तम् । ये तु पाकजरूपाद्युत्पत्तौ पूर्वद्रव्यविनाशमपूर्वद्रव्यारम्भं चाभ्युपगच्छन्ति तन्मतेन द्रव्यभेदे ऽपि जातेरेकत्वाज्जातिप्रत्यभिज्ञाश्रयेणोक्तम् । जातेश्चाधारो द्रव्यं ततो जातिमन्तरेण प्रत्यभिज्ञाया अभावाद् द्रव्यमन्तरेण जात्युपलम्भाभावाद् द्रव्यस्य सद्भावादित्यादिना गुरुणा सूत्रेणेत्यर्थः । द्विगुणा रज्जुरिति । विषयप्रदर्शनमात्रमेतत् । रज्जुग्रहात्तु षषड्गन्तादवयवलक्षणे गुणे त्वतल्प्रसङ्गः । कथं प्रसङ्ग इत्य आह । गुणशब्दोऽयमिति । क्वचित्तु पाठः नैषदोष गुणशब्दोऽयमिति । तत्रायमर्थः । यतोऽयं गुणशब्दो बह्वर्थः ततोऽस्य गुणस्याभावादित्यस्मिन् न्यासेऽतिप्रसङ्गो न भवति शब्देन विष्टस्य गुणस्य शब्दप्रवृत्तिनिमि-

ब्राह्मण इत्युच्यते । यः सम्यगाचारं करोति । अस्ति संस्कारे वर्तते । तद्यथा । संस्कृतमन्नं गुणवदित्युच्यते । अथवा सर्वत्रैवायं गुणशब्दः समेषु अवयवेषु वर्तते । तद्यथा । द्विगुणमध्ययनं त्रिगुणमध्ययनमित्युच्यते । चर्चागुणान् क्रमगुणांश्चापेक्ष्य भवति । न संहितागुणांश्चर्चागुणांश्च । यद्येवं गुणवदन्नमिति गुणशब्दो नोपपद्यते । नह्यन्नस्य सूपादयो गुणाः समा भवन्ति । नावश्यं वर्णतः परिमाणत एव वा साम्यं भवति । किं तर्हि । युक्तितोपि । आतश्च युक्तितः । यो हि मुद्गप्रस्थे लवणप्रस्थं प्रक्षिपेत् । नासौ युक्तं स्यात् । यदि तावदवरेणान्नं नादोऽत्तव्यं स्यत् । अथाधिकेनान्नं बाढो जग्ध्वा प्राश्नुयात् । शुक्लादिषु तर्हि वर्त्यभावाद् वृत्तिर्न प्राप्नोति । शुक्लत्वं शुक्लतेति । किं पुनः कारणं शुक्लादय एवोदाह्रियन्ते न पुनर्घटादयोपि । घटत्वं

---

स्वरूपस्योपादानात्। अथवेति । पूर्वोक्तविषये सर्वास्विमित्यर्थः । त्रिगुणमध्ययनमिति । पदक्रमसंहितालक्षणावयवत्रययोगात् । चर्चा गुणाः । पदविच्छेदगुणाः । पदक्रमाध्यायी द्विगुणमधीत इत्युच्यते । न संहिता गुणांश्चेति । वेदान्तसंहितां वेदान्तरपदानि वाधीयानोद्विगुणमधीत इति नोच्यते । अध्ययनक्रमभेदादेकस्याध्ययनस्य द्विगुणत्वाभावात् । यद्यपि क्रमपाठे पदावृत्त्याधिक्यं भवति । तथापि युक्तितः साम्योपपत्तिः गुणवानयं देश इत्यत्रापि गोसस्यादयो युक्तितः समाः देशावयवत्वाद् गुणा उच्यन्ते गवादीनां देशावयवत्वमुपचरितं गुणवृत्तावशमित्यत्रापि गृहाद्यवयवसद्भावात्मनिर्देशः गुणवानयं ब्राह्मण इत्यादावपि ब्राह्मणादिशब्दार्थे गुणसमुदायैकदेशाचारवाचो गुणशब्दः युक्तितश्चाचारस्य साम्यम् । यद्येवमिति । यथा द्विगुणा रज्जुरित्यादौ प्रमाणतोऽवयवस्य साम्यं न तथात्रेति प्रश्नः । युक्तित इति । अथ क्रियायां यद्योग्यं तत्तममित्यर्थः । यदि तावदिति । युक्तितः साम्याभावे अन्नमेव तन्न स्यात् । कुतः पुनस्तस्य गुणवत्त्वमित्यर्थः । तदेवं षष्ठीसमर्थाद्गुण इत्युच्यमानेऽतिप्रसङ्गाद्यस्य गुणस्य भवादित्याश्रयितव्यम् । अत्राप्यव्याप्तिं चोदयति । शुक्लादिष्विति । पटस्य शुक्ल इति व्यतिरेकदर्शनाद् गुणमात्रवचनाः शुक्लादयः । पटस्य शुक्लत्वमित्यादौ गुण एव त्वतलादिप्रत्ययो दृश्यते । न च गुणे वर्तमानानां तेषां गुण एव प्रवृत्तिनिमित्तमिति मत्वा प्रश्नः । गुणसमवायिनि तु सामान्ये स्यात् प्रत्ययः किन्तु पटस्य शुक्लत्वमिति पटेन संबन्धाभावप्रसङ्गः । वर्त्यभावादिति । वर्तनं वर्तो वृत्तिरित्यर्थः । वर्तोऽस्मिन्नस्तीति वर्ती प्रत्ययार्थः प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावादित्यर्थः । न पुनर्घटादय इति । तेऽपि जातिमात्रवचनास्ततो जातौ प्रत्ययाप्रसङ्गः ।

वृत्तेति । अस्त्यत्र विशेषः । उभयवचना ह्येते द्रव्यं चाहुर्गुणं च । यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति । इमेपि तर्हि उभयवचनाः । कथम् । आरभ्यते मतुब्लोपः गुणवचनेभ्यो मतुपो लुग्भवतीति । यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति । डित्थादिषु तर्हि वर्त्यभावाद् वृत्तिर्न प्राप्नोति । डित्थत्वं डित्थता । डाम्भिट्टता डाम्भिट्टत्वमिति । तत्रापि कश्चित् प्राथमकल्पिकः डित्थोडाम्भिट्टश्चेति । तेन कृतां क्रियां गुणं वा यःकश्चित् करोति स उच्यते डित्थत्वं तएतद् डाम्भिट्टत्वं त एतदेवं डित्थाः कुर्वन्ति । एवं डाम्भिट्टाः कुर्वन्ति । यस्तर्हि प्राथमकल्पिको डित्थो डाम्भिट्टश्च तस्य वर्त्यभावाद् वृत्तिर्न प्राप्नोति । नैष दोषः । यथैव तस्य कार्थंचित्कः प्रयोगः एवं वृत्तिरपि भविष्यति । यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने किमेभिस्त्रिभिर्भावग्रहणैः क्रियते । एकेन शब्दः प्रतिनिर्दिश्यते द्वाभ्या-

---

द्रव्यं चाहुरिति । विशिष्टजातियुक्तमित्यर्थः । गुणं चेति । जातिलक्षणम् । यतो द्रव्यवचना इति । यस्माद्द्रव्यवचनास्तस्माज्जातौ प्रवृत्तिनिमित्ते प्रत्ययः आरभ्यते मतुब्लोप इति । वृक्षादयो जातितद्वतोरभेदविवक्षायां द्रव्यमाहुः । नहि यथा पटस्य शुक्ल इति व्यतिरेको दृश्यते तथा धवस्य वृक्ष इति । तत्र गुणद्रव्ययोर्व्यतिरेकदर्शनान्मतुब्श्रवणनिवृत्त्यर्थो लुगारम्भः । डित्थादिष्विति । डित्थादयो यदृच्छाशब्दा अर्थगतं न किंचित्प्रवृत्तिनिमित्तमपेक्षन्ते पुरुषेच्छावशेन प्रवर्तनात् । तेन कृतार्थमिति । डित्थसहचरितगुणक्रियादर्शनादन्यत्राप्युपचारात्प्रवर्तमानस्य डित्थशब्दस्य गुणक्रिये एव प्रवृत्तिनिमित्तमित्यर्थः । कार्थंचित्क इति । विनयादिषु कथंचिच्छब्दस्य पाठात् स्वार्थे ठक् प्रत्ययः । शब्दस्वरूपमर्थमध्यस्यायं डित्थ इति संज्ञासंज्ञिसंबन्धः क्रियते । ततः शब्दस्वरूपासङ्गाद्यथा डित्थशब्दस्यार्थे प्रयोगस्तथैव शब्दस्वरूपेऽर्थेध्यस्ते प्रत्ययः । अन्येतूत्पत्तिप्रभृत्याविनाशात् कौमाराद्यवस्थाभेदभिन्नद्रव्यसमावयिनीं जातिमिच्छन्ति । यद्दर्शनादवस्थान्तरेपि स एवायं डित्थ इति प्रत्यभिज्ञाप्रत्यय उत्पाद्यते तस्यां प्रत्ययः । यद्वेति । पूर्वत्र लक्षणे जातिगुणद्रव्यलक्षणार्थाभिधायिभ्यो गवादिभ्यः शब्दस्वरूपगुणसामान्यादिषु प्रत्ययः । इह तु शब्दाभिधायिभ्य पूर्वोक्तेष्वेवार्थेष्विति प्रकृत्यर्थभेदेपिप्रधानप्रत्ययार्थाभेदापेक्षो विकल्पः । किमेभिरिति । भावशब्दत्रयस्यार्थभेदं पृच्छति । एकेनेति । भवन्तीति भावाः शब्दाः । भवतेश्चेति वक्तव्यमिति कर्त्तरि णः । द्वाभ्यामिति । स च द्विविधो वाच्यप्रवृत्तिनिमित्तरूपोऽत्र तु करणसाधनो घञ् । तत्र शुक्लस्यभावः शुक्लत्वमिति

अर्थः। यद्वा सर्वे शब्दाः स्वेनार्थेन भवन्ति स तेषामर्थ इति। तद-
भिधाने वा त्वतलौभवत इति वक्तव्यम्। नैवमन्यच्च भवन्ति। नहि
तेन रक्तंरागादित्यत्र शब्देन रक्ते प्रत्यया उत्पद्यन्ते शब्दे असंभवादर्थेन
रक्ते प्रत्यया भविष्यन्ति। तत्तर्ह्यन्यतरत्कर्त्तव्यम्। सूत्रं च भिद्यते।
यथान्यासमेवास्तु। ननु चोक्तं तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्ग
इति। उक्तं वा *। किमुक्तम्। अनभिधानादिति। अनभिधाना-
दभिप्रायादिषूत्पत्तिर्न भविष्यति। त्वतल्भ्यां नञ्समासः पूर्वविप्र-
तिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम् *। त्वतल्भ्यां नञ्समासो भवति पू-

---

शुक्लशब्दस्य गुणे वर्त्तमानस्य भावो गुणसमवायिसामान्यं तस्माद्धि निमित्ताच्छुक्लशब्दः स्वस्मिन्नर्थे गुणलक्षणे भवति प्रवर्त्तत इत्यर्थः। द्रव्ये तु वर्त्तमानस्य शुक्लशब्दस्य गुणो भावस्तथा गोशब्दस्य द्रव्ये वर्त्तमानस्य जातिर्भावो राजपुरुषशब्दस्य संबन्ध इत्यादि बोद्धव्यम्। स्वेनार्थेनेति। शब्दानां स्वार्थोवाच्यस्तेन भवन्ति। तत्र वाचकत्वेन प्रवर्त्तन्तइत्यर्थः। वाच्योर्थः शब्दभवने करणत्वेन विवक्षितोर्थप्रत्यायनाय शब्दप्रयोगाद्भवत्यर्थस्य करणत्वम्। स तेषामर्थ इति। यत्तदोर्नित्यमभिसंबन्धादित्यपेक्षते। यस्मात्प्रवृत्तिनिमित्तात् स्वेनार्थेन प्रयुज्यन्ते सोर्थस्तेषां प्रवृत्तिनिमित्ततया संबन्धीत्यर्थः। एतेन प्रकृतिप्रत्ययार्थयोः संबन्धो दर्शितः। नैवमन्यत्रेति। अन्यत्र शब्दार्थसंबन्धी प्रत्ययार्थो निर्दिश्यते। न तु शब्दसंबन्धीत्यर्थः। अत्रोत्तरं शब्दे ऽसंभवादिति। शब्दसंबधित्वं प्रत्ययार्थस्य नोपपद्यते। कषायादिशब्देन रागाद्यसंभवात्ततः शब्दार्थसंबन्धित्वं प्रत्ययार्थस्याश्रीयते। इह तु शब्दस्य तदर्थस्येव भावसंबन्धसंभवात्तद्वाचिनी कामचारात् प्रकृतिराश्रीयते। तथा हि। शुक्लस्य द्रव्यस्य गुणो भावस्तद्वशाद्धि शुक्लं द्रव्यं भवति। गोत्वसंबन्धाच्च गौर्द्रव्यम्। एवं शुक्लशब्दस्यापि द्रव्ये वर्त्तमानस्य गुणो भावः। तद्वशात्तस्य द्रव्ये प्रवर्त्तनात्। गोत्ववशाच्चगो शब्दस्येतयेवं सर्वेचावसेयम्। नानात्वं यौगपद्यमित्यादौ पूर्वत्र लक्षणे नानाभूतार्थाभिधायिनो युगपच्छब्दार्थाभिधायिनस्य द्रव्यधर्मे असहभावे युगपद्भावे च प्रत्यय उत्तरत्र तु शब्दाभिधायिन्यां पुर्वोक्त एव भावे प्रत्ययः। तत्तर्ह्यन्यतरदिति। यस्य गुणस्य भावादिति वा। यद्वा सर्वे भावा इति वेत्यर्थः। अनभिधानादिति। न हि गोत्वमश्वत्वमित्याद्युक्ते ऽभिप्रायाद्यवगम्यते। किं तु जात्यादीत्यर्थः। तत्र भवत्यनेनेति करणसाधनेन घञन्तेन भावशब्देन जात्यादिके उच्यमाने वाच्यसंबन्धिनि शब्दसंबन्धिनि च पूर्वोक्तन्यायाद् द्रव्यादिवाचिनः शब्दाभिधायिनो वा शुक्लादेस्त्वतलादय इति स्थितम्। त्वतल्भ्यामिति। न ब्राह्मणस्य भाव इति युगपद्भावनञर्थसंबन्धविवक्षायां यदि परत्वात्त्वतलौ कृतयोर्नञ् समासः स्यात्तदाव्ययपूर्वपदप्रकृतिस्वरेणाद्युदा·

र्वविप्रतिषेधेन । किं प्रयोजनम् । त्वतलोः स्वरसिद्ध्यर्थम् । त्वतलोः स्वरसिद्धिर्यथा स्यात् । त्वतलोरवकाशः भावस्य वचनं प्रतिषेधस्यावचनम् । ब्राह्मणत्वम् । ब्राह्मणता । नञ्समासस्यावकाशः प्रतिषेधस्य वचनं भावस्यावचनम् । अब्राह्मणः । अवृषलः । उभयवचने उभयं प्राप्नोति । अब्राह्मणत्वम् । अब्राह्मणता । नञ्समासो भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः नात्र त्वतलौ प्राप्नुतः । किं कारणम् । असामर्थ्यात् । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । यावता ब्राह्मणशब्दः प्रतिषेधमपेक्षते । नञ्समासोपि तर्हि न प्राप्नोति । किं कारणम् । असामर्थ्यादेव । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । यावता ब्राह्मणशब्दो भावमपेक्षते । प्रधानमत्र ब्राह्मणशब्दः भवति च प्रधानस्य सापेक्षस्यापि समासः इदं तर्हि प्रयोजनम् । नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थमिति वक्ष्यति । तत्र व्यवस्थार्थमिदं वक्तव्यम् । वा छन्दसि *। वा छन्दसि नञ्समासो वक्तव्यः । निर्वीर्यतां वै यजमान आशास्ते । अपशुतां गौः । अयोनित्वाय । अशिथिलत्वाय । अगोतामनपत्यताम् । भवेदिदं युक्तमुदाहरणम् अयोनित्वाय अशिथिलत्वा-

---

त्त्वं प्रसज्येत । नञ्समासात्तु त्वप्रत्यये प्रत्ययस्वरेणाद्युदात्तं पदं भवति । तलि तु लित्स्वरेण मध्योदात्तमिति तदर्थं पूर्वविप्रतिषेध आश्रीयते । यावता ब्राह्मणशब्द इति । प्रत्ययार्थस्याप्राधान्याद् ब्राह्मणार्थस्य नञर्थापेक्षत्वादसामर्थ्यादप्रधानस्य सापेक्षत्वे सति ऋद्धस्य राजपुरुष इत्यादाविव वृत्त्यभावात्त्वतलोरप्रसङ्गः । प्रधानमत्रेति । उत्तरपदार्थप्रधानत्वात्तत्पुरुषस्य । यथा राजपुरुषोभिरूप इति प्रधानस्य सापेक्षत्वेपि वृत्तिर्भवत्येवं भावमपेक्षमाणस्यापि ब्राह्मणस्य नञ्समासो भवतीत्यर्थः । इदं तर्हीति । न्यायेनैव पूर्वं नञ्समासे सिद्धे त्वतल्भ्यामिति वचनं नियमार्थम् । त्वतलोरेव कर्त्तव्ययोः पूर्वं नञ्समासो नान्यत्र भावप्रत्यय इत्यन्यो भावप्रत्ययः प्राग्भवति पश्चान्नञ्समासः । न्यायस्य नियमार्थेन वचनेन बाधात् । ततश्च सतिशिष्टत्वादप्रथिमेत्यादौ नञ्स्वरो भवत्ययः । शौक्ल्यमित्यादौ च नञः प्रकृत्यनेकदेशत्वादुत्तरपदवृद्धिः सिध्यति । यदि तु पूर्वं नञ्समासः स्यात् ततो न नञ्पूर्वादिति प्रतिषेधात् ष्यञोप्रसङ्गादशौक्ल्यमित्यादि न सिध्येत् । वाछन्दसीति । छन्दोविषये क्वचित् पूर्वं त्वतलौ ततो नञ्समास क्वचित् तु विपर्ययः । अयोनित्वायेति । प्रत्ययस्य पश्चान्नञ्समासे सति नञ्स्वरो भवति । भवेदिदमिति ।

येति। इदं त्वयुक्तम्। अपशुतामिति। न ह्यसौ समासभावमाशास्ते। किं तर्हि। उत्तरपदाभावमाशास्ते न पशोर्भाव इति। नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम् *। नञ्समासादन्यो भाववचनो भवति विप्रतिषेधेन। किं प्रयोजनम्। स्वरोत्तरपदवृद्ध्यर्थम्। स्वरार्थमुत्तरपदवृद्ध्यर्थं च। स्वरार्थं तावत्। अप्रथिमा। अम्रदिमा। उत्तरपदवृद्ध्यर्थम्। अशौक्ल्यम्। अकार्ष्ण्यम्॥

आ च त्वात्॥ १२०॥ किमर्थश्चकारः। अनुकर्षणार्थः। त्वतलावनुकृष्येते। नैतदस्ति प्रयोजनम्। प्रकृतौ त्वतलावनुवर्त्स्येते। अत उत्तरं पठति। आ च त्वादिति चकारकरणमपवादसमावेशार्थम् *। आ च त्वादिति चकारकरणं क्रियते। अपवादसमावेशार्थम्। इमनिच्प्रभृतिभिरपवादैः समावेशो यथा स्यात्। नैतदस्ति प्र

---

अत्र हि नञ्समासभावप्रत्यययोर्युगपत् प्राप्तिः। नह्यसौ समासभाव इति। समासशब्देन समासार्थो जात्यन्तरयुक्तं वस्तु उच्यते। तद्भावमसौ नाशास्ते। अपशुः पशुसदृशो भूयासमिति। किं तर्हि उत्तरपदार्थस्याभावमिति। उत्तरपदार्थस्य पशुत्वस्याभावमाशास्ते पशुर्मा भूवमिति। ततश्च पूर्वं भावप्रत्ययः पश्चान्नञ्समासो विनापि वा छन्दसीति वचनेन सिध्यति। न पशोर्भाव इति। भावस्य नञ्संबन्धात्। पशोरसबन्धात्॥

आ च त्वात्। वक्ष्यमाणैर्विशेषविहितैस्त्वतलौ मा बाधिषातां गुणवचनादिभ्यः कर्मणि च यथा स्यातामिति सूत्रम्। किमर्थश्चकार इति। वक्ष्यमाणोऽभिप्रायः। अथ त्वतलोरुत्तरत्राधिकारादेव सिद्धत्वात् सूत्रमेव कस्मान्नाक्षिप्तम्। नैतदस्ति। गुणवचनादिभ्यः कर्मणि विधानार्थं त्वादनुवृत्तेरपवादैरसंदिग्धैः संदिग्धतदर्थोपस्थानौ त्वतलौ बाधेयातामिति सूत्रमवश्यं कर्त्तव्यम्। किं चासत्यस्मिन् सूत्रे त्वतलोरुत्तरस्मिन्ननुवृत्तिर्दुर्ज्ञाना उत्तरेषां प्रत्ययनिर्देशान्निराकाङ्क्षत्वात्त्वतलोरपि पूर्वसूत्रेण प्रातिपदिकसामान्याद्भावे विधानादाकाङ्क्षाया अभावात्। अनुकर्षणार्थ इति। अन्यथाभिधेयानुपादानादवधिमात्रनिर्देशोऽनर्थकः स्यात्। प्रकृताविति। विधेयमन्तरेणावध्युपादानस्यानर्थक्यादेव साकाङ्क्षत्वात् प्रकृतौ त्वतलावपेक्षिष्येते इत्यर्थः। अपवादसमावेशार्थमिति। नञ्स्नञ् समावेशार्थमित्यर्थः। भाष्यकारस्तु न्यायव्युत्पादनाय वक्ष्यमाणापवादसमावेशार्थत्वमुपन्यस्य दूषयित्वा च नञ्स्नञ् समावेशार्थत्वं विवरिष्यते। इमनिच्प्रभृतिभिरिति। असति चकारे प्राक् त्वादर्थे त्वतलौ भवत इत्ययमेवार्थः स्यादिति कर्मण्येव गुणवचनादिभ्यस्त्वतलोर्विधिः स्यान्न त्वपवादेन समावेशः। चशब्दात्तत्रापि भवतीति भावः। नैतदस्तीति। आत्वाद्याः प्रकृतयस्ताभ्यस्त्वतलौ भवत इति विज्ञायमाने सूत्रार्थे सिद्धोऽपवादैः

योजनम् आ त्वादित्येवेमनिच्प्रभृतिभिरपवादैः समावेशो भविष्यति। इदं तर्हि प्रयोजनम् आत्वाद्याः प्रकृतयः ताभ्यश्च त्वतलौ यथा स्यातां यतश्चोच्येते । एतदपि नास्ति प्रयोजनम् । आत्वादित्येव आत्वाद्याः प्रकृतयः ताभ्यस्त्वतलौ भविष्यतः यतश्चोच्येते । इदं तर्हि प्रयोजनम् । आ त्वाद्येर्थास्तत्र त्वतलौ यथा स्यातां यत्र चोच्येते । एतदपि नास्ति प्रयोजनम् । आ त्वादित्येव आ त्वाद्येर्थास्तत्र त्वतलौ भविष्यतः । यत्र चोच्येते । इदं तर्हि प्रयोजनम् । आत्वाद्याः प्रकृतयस्ताभ्यश्च त्वतलौ यथा स्याताम् । यस्याश्च प्रकृतेरेतस्मिन्विशेषेऽन्यः प्रत्यय उत्पद्यते । किं कृतं भवति । स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानं चोदितं तन्न वक्तव्यं भवति ॥

---

समावेशः । आत्वाद्याः प्रकृतय इति । गुणवचनब्राह्मणादिप्रकृतयः । ताभ्यश्चेति । कर्मणीति भावः । अनेन सूत्रार्थो व्याख्यातः । यतश्चोच्येते इति । अनेन चशब्दस्य प्रयोजनमाख्यायते । यतो विशेषप्रकृतेर्भावे पूर्वसूत्रेण प्रसक्ताविमनिजादिभिश्चबाधितौ ततोपि यथा स्यातामित्येवमर्थश्चशब्दोऽन्यथा कर्मणि त्वतल्विधावस्य सूत्रस्योपयोगात्त्वतलोरपवादैर्बाधः स्यात् । एतदपि नास्तीति । आत्वात्प्रकृतीः सर्वा अपेक्ष्य त्वतलौविधीयमानावपवादविषये कर्मणि च भविष्यत इतिनार्थश्चशब्देनेत्यर्थः । आत्वाद्ये ऽर्था इति । जातौ बहुवचनम् । कर्मण एकस्यैवार्थस्य वक्ष्यमाणत्वात् । अयमर्थो यद्यवधिमत्यः प्रकृतय आश्रीयन्ते तदापवादैः समावेशः सिध्यति । प्रतिप्रसवार्थत्वादस्यसूत्रस्य । गुणवचनादिभ्यस्तु कर्मणि त्वतलोर्विधानं न सिध्यति तस्मादवधिमदर्थपरिग्रहेण कर्मणि त्वतलौ सूत्रेण विधीयेते चकारेण तु भावे अपवादैः सक्रावेश्येते । यत्रचोच्येते इति । भावे विशेषप्रकृतिभ्योऽपवादैः प्रसक्तबाधादित्यर्थः । एतदपीति । अर्थान् प्रकृतीश्चाविशेषेणावधिमत्त्वेनापेक्ष्य त्वतल्विधानान्नार्थश्चकारेणेत्यर्थः । केचित्तु प्रातिपदिकसामान्यात्कर्मणि त्वतलाविच्छन्तो भाष्यमन्यथा व्याचक्षते । तत्त्वयुक्तम् । प्रकृतिविशेषसंबन्धस्य कर्मार्थस्योपादानात् प्रकृत्यन्तरेण तस्य संबन्धायोग्यत्वात् । तस्माद् गुणवचनेत्यतः प्रभृति प्राक् त्वाद्याविशेषप्रकृतयस्ताभ्य एव च प्रकृतिभ्यः कर्मणि त्वतलौ भवतः आपादपरिसमाप्तेर्भावकर्माधिकाराद् भावे तु प्राक्कादेतस्मात् सूत्रादूर्ध्वं याः प्रकृतयस्ताभ्यः। पूर्वसूत्रेण तु ङ्यप्प्रातिपदिकादिति सिद्धान्तः । यस्याश्चेति । प्रकृतिविशेषान्नञ्स्नञौ प्राग्भवनात्सर्वेष्वर्थेषु विधीयमानौ त्वतलौर्बाधकौ प्राप्नुत इति तद्विषये त्वतलौ प्राप्येते । प्राग्भवानादित्यवध्युपादानाच्च नञ्स्नञावपि भावे भवतोऽन्यथा प्राग्वतेरित्येव वक्तव्यं स्यादित्यर्थे हि नञ्स्नञ्भ्यां पुंवदिति लिङ्गान्न भाष्यम् ।

न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः ॥१२१॥ कस्यायं प्रतिषेधः। त्वतलोरित्याह। नैतदस्ति प्रयोजनम्। इष्येते नञ्पूर्वात्तत्पुरुषात्त्वतलौ। अब्राह्मणत्वं अब्राह्मणतेति। अत उत्तरं पठति। न नञ्पूर्वादित्युत्तरस्य प्रतिषेधः*। न नञ्पूर्वादित्युत्तरस्य भावप्रत्ययस्य प्रतिषेधः क्रियते। नैतदस्ति प्रयोजनम्। परिगणिताभ्यः प्रकृतिभ्य उत्तरो भावप्रत्ययो विधीयते। न च तत्र काचिन्नञ्पूर्वा प्रकृतिर्गृह्यते। तदन्तविधिना प्राप्नोति। ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते। यत्र तर्हि तदन्तविधिरस्ति पत्यन्तपुरोहितादिभ्यो यगिति। यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्। प्रत्यन्ताद्यग् भवति। नञ्पूर्वात्तत्पुरुषान्नेति॥ एवं तर्हि ज्ञापयत्याचार्यः उत्तरो भावप्रत्ययो नञ्पूर्वाद्बहुव्रीहेर्भवतीति नेष्यते। त्वतलावेवेष्येते। अविद्यमानाः पृथवोस्यापृथुः अपृथोर्भावः अपृथुत्वम्। अपृथुतेति। एवं तर्हि ज्ञापयत्याचार्यः उत्तरो भावप्रत्ययो ऽन्यपूर्वात्तत्पुरुषाद्भवतीति। नैवेष्यते त्वतलावेवेष्येते। परमः पृथुः परमपृथुः परमपृथोर्भावः परमपृथुत्वम्। परमपृथुता। एवं तर्हि ज्ञापयत्याचा-

---

न नञ्पूर्वा। कस्यायमिति। प्रतिषेध्यस्यानुपादानाद् अनन्तरयोश्च त्वतलोः प्रतिषेधस्यानिष्टत्वात्प्रश्नः। आचार्यदेशीय आह। त्वतलोरिति। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति मन्यते। उत्तरस्य प्रतिषेध इति। अधिकारादस्य सूत्रस्येति भावः। परिगणिताभ्य इति पृथ्वादिप्रभृतिभ्यो गणे सूत्रे च पठिताभ्यः। यत्र तर्हीति। एतच्चोपलक्षणम्। हायनान्तयुवादिभ्योऽण् इगन्ताच्च लघुपूर्वाद् योपधाद् गुरूपोत्तमाद्वुञित्येतैः सूत्रैर्नञ्पूर्वात्पुरुषादस्त्येव प्रसङ्गः। यद्येतावदिति। अत्र प्रदेशे प्रयोजनाभावात् प्रत्यन्तसूत्रस्य परतः प्रतिषेधो विधेयः स एवोत्तरत्रानुवर्त्स्यते। एवं तर्हीति। अत्र प्रदेशे प्रतिषेधाधिकारस्योपादानादिमनिजादीनामपि प्रतिषेधो विज्ञायते। तत्र तदन्तविध्यभावात् प्रसङ्गाभावात् किं प्रतिषेधेन कृतश्चासौ नञ्पूर्वाद्बहुव्रीहेरन्यपूर्वाच्च तत्पुरुषात्प्रत्ययविधानं ज्ञापयतीति पूर्वः पक्षः। अनिष्टत्वेन तूत्तरम्। एवं तर्हीति। प्रसङ्गाभावात्प्रतिषेधो न कर्तव्यः कृतस्तु ज्ञापयति यत्रापि विषये उत्तरो भावप्रत्ययो न प्राप्नोति तत्रापि भवति न पृथोर्भाव इति अत्र हि प्रकृत्यर्थस्य नञर्थापेक्षत्वात्सापेक्षत्वादसामर्थ्यादिमनिज् प्राप्नोतीति ज्ञापकाद् भवत्यप्रथिमेति। नञ् पूर्वस्य तत्पुरुषस्य प्रत्यासन्नात्तदर्थविग्रहवाक्यावस्थेति तद्विषयमेव ज्ञापनमाश्रीयते। त्वतलौ तु कृते नञ्समासे भवतो न तु सापेक्षा-

र्यः । उत्तरो भावप्रत्ययः सापेक्षाद्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थं मित्युक्तं तदुपपन्नं भवति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । सर्व एते तद्धिताः सापेक्षाद्भवन्तीति यदयं नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिता इत्याह ॥

पृथ्वादिभ्य इमनिज्वा ॥ १२२ ॥ वावचनं किमर्थम् । वाक्यमपि यथा स्यात् । नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा तया वाक्यमपि भविष्यति इदं तर्हि प्रयोजनम् । त्वतलावपि यथा स्याताम् । एतदपि नास्ति प्रयोजनम् । आ च त्वादित्येतस्मादपवादात् त्वतलावपि भविष्यतः । अत उत्तरं पठति । पृथ्वादिभ्यो वावचनमण्समावेशार्थम् * । पृथ्वादिभ्यो वावचनं क्रियते । अणसमावेशो

---

इत्तरप्रत्ययविषयत्वाज् ज्ञापनस्य । यदयमिति । वक्ष्येभ्यो न हित इत्यादौ प्रतिषेधापेक्षणात्तद्धितानुत्पत्तौ नञः परस्य संपाद्याद्यर्थं तद्धितान्तस्यान्तोदात्तविधानमनुपपन्नम् । तत्क्रियमाणं सामान्येन सर्वस्तद्धितो नञर्थापेक्षाद्भवतीति ज्ञापयति तदेवं सूत्रमेतत् प्रत्याख्यातम् । त्वतल्भ्यां नञ् समास इत्येतदिदानीं विध्यर्थं न नियमार्थम् । चतुरादिभ्यस्तु नञपेक्षेभ्योनभिधानात् ष्यञ् भवति । क्रते तु नञ् समासे ब्राह्मणादेराकृतिगणत्वात् ष्यञि सत्याचतुर्यमित्यादि भवति । यथातथयथापुरयोः पर्यायेणेत्येतत् सूत्रं विवक्षाभेदेन रूपद्वयसिद्धिं मत्वा भाष्यकारेण प्रत्याख्यास्यते । यदापूर्वं भावविवक्षा पश्चात्प्रतिषेधविवक्षा तदा अयाथातथ्यमयाथापुर्य्यमिति भवति । पूर्वं तु प्रतिषेधविवक्षायामायथातथ्यमायथापुर्यमिति भवति । न पत्युर्भाव इत्यत्र पतिशब्दः केवलं प्रातिपदिकं न पत्यन्तमिति यगभावे त्वतल्भ्यां नञ् इति वचनान्नञ् समासे क्रते त्वतलौभवतः । न पटोर्भावो न मनुष्यस्य भावो न द्विहायनस्य भाव इत्यादौ पूर्वोक्तज्ञापकान्नञर्थापेक्षत्वे ऽपि पूर्वं प्रत्ययः पश्चान्नञ्समासः । अपाटवममानुष्यकमद्वैहायनमिति । अशुचिशब्दात्तु तत्पुरुषादिगन्तादितीष्यतएवाण् आशौचमशौचमिति । नञ् शुचीश्वरेति पूर्वपदस्य वा वृद्धिरुत्तरपदस्य नित्यम् । न शुक्लस्य भाव इत्यादौ सापेक्षात् ष्यञनुत्पत्तौ चाशौक्ल्यमित्यादि भवति । तदेवं सूत्रेऽस्मिन्प्रत्याख्याते लक्ष्यदर्शनवशात् क्व चिद्भावनिषेधयोर्युगपद्विवक्षायां ज्ञापकान्नञर्थापेक्षत्वेऽपि पूर्वं यथाप्राप्तं भावप्रत्ययः पश्चान्नञ्समासः । त्वतलौ तु क्रते नञ्समासे, क्व चित् पूर्वं भावविवक्षा क्व चित् पूर्वं निषेधविवक्षा ।

पृथ्वादि । वावचनमिति । वक्ष्यमाणोभिप्रायः । आचार्यदेशीयः परिहरति । वाक्यमपीति । अण्समावेशार्थमिति । यत्रोत्सर्गापवादौ विभाषा तत्रापवादेनमुक्ते उ-

अग्रा स्यात्। पार्थवं प्रथिमा॥

गुणवचनब्राह्मणादिभ्यः कर्मणि च॥१२४॥ ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम् *। ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानं कर्त्तव्यम्। चातुर्वर्ण्यम्। चातुर्वैद्यम्। चातुराश्रम्यम्। अर्हतो नुम् च *। अर्हतो नुम् च ष्यञ्च वक्तव्यः। अर्हतो भावः। आर्हन्त्यम्। आर्हन्ती॥

स्तेनाद्यन्नलोपश्च॥१२५॥ किमिदं न लोपे वर्णग्रहणमाहोस्वित् संघातग्रहणम्। किं चातः। यदि वर्णग्रहणं स्तेयं न लोपे कृते अयादेशः प्राप्नोति। अथ संघातग्रहणम्। अन्त्यस्य लोपः कस्मान्न भवति। सिद्धोन्त्यलोपो यस्येत्येव। तत्रारम्भसामर्थ्यात् सर्वस्य भविष्यति॥

हायनान्तयुवादिभ्योण्॥१३०॥ अण्प्रकरणे श्रोत्रियस्य यलोपश्च *। अण्प्रकरणे श्रोत्रियस्योपसंख्यानं कर्तव्यम्। यलोपश्च वक्तव्यः। श्रोत्रियस्य भावः श्रौत्रम्॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

पादश्चायं प्रथमः समाप्तः॥

---

त्सर्गो न प्रवर्त्तते न प्रवर्त्तते। वाक्यानुज्ञानार्थत्वाद्विभाषायाः। लिङ्गं च पारिमध्ये षष्ठ्या वा पीलाया वेत्यादिषु विकल्पवचनमस्यार्थ स्येत्यण्समावेशार्थं मिह वावचनम्॥

गुण। चातुर्वर्ण्यादीनामिति। प्रत्ययान्तोच्चारणं भावकर्मसंबन्धनिवृत्त्यर्थ मिति स्वार्थ एव ष्यञ् भवति। चत्वारो वर्णाश्चातुर्वर्ण्यम्। चतुर्वेदमेव चातुर्वैद्यम्। अथ वा चतस्रो विद्या अधीते विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिति ठकः सर्वसादेर्द्विगोश्च लइति लुक्। चतुर्विद्य एव चातुर्वैद्यमनुशतिकादेराकृतिगणत्वादुभयपदवृद्धिः। अर्हतो नुम् चेति। अर्हः प्रशंसायामिति शत्रन्तोर्हच्छब्दः पूजाद्यर्थाभिधायी। आर्हन्तीति। षित्करणात् स्त्रियामपि ष्यञन्तः प्रयोगः। तथा चौचिती मैत्रीत्यादि प्रयुज्यते॥

स्तेना। अयादेशः प्राप्नोतीति। यस्येत्यकारलोपस्य पूर्वविधौ स्थानिवद्भावात्। अथेति। नानर्थकेलोन्त्यविधिरित्येषा परिभाषा प्रयोजनाभावान्नाद्दता। आरम्भसामर्थ्यादिति। अलोन्त्यस्येत्यनुसंहारो बाध्यत इत्यर्थः॥

हायनान्त। यलोपश्चेति। यदा छन्दसः श्रोत्रभावो घंश्च प्रत्यय इति पक्षस्तदा घस्य लोपो यदा तु वाक्यार्थे पदवचनमिति दर्शनं तदा घशब्देन इयेतिरूपं लक्ष्यते। क्व चित्तु यलोपश्चेति पाठः॥ इत्युपाध्यायजैय्यटपुत्रकैय्यटकृतेभाष्यप्रदीपे पञ्चमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्। पादश्च समाप्तः॥

विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥ तिलादिभ्यः खञ्च * । तिलादिभ्यः खञ्चेति वक्तव्यम् । तिल्यम् । तैलीनम् । किमर्थमिदमुच्यते ॥ न यता मुक्तो धान्यानां भवने क्षेत्रे खञित्येव सिद्धम् । न सिध्यति । किं कारणम् । उमाभङ्गयोरधान्यत्वात् * । धान्यानां भवने क्षेत्रे खञित्युच्यते । न चोमाभङ्गे धान्ये । चमेषु यत् पठ्यते तद्धान्यम् । न चैते तत्र पठ्येते । तर्हि खञ्ग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । धान्यानां भवने क्षेत्रे खञिति । यदेतदनुवर्तते । । व्रीहिशाल्योर्ढग् यवयवकषष्टिकाद्यदिति खञ्चेति खञपि प्राप्नोति । संबन्धमनुवर्त्तिष्यते धान्यानां भवने क्षेत्रे खञ् व्रीहिशाल्योर्ढग् भवति । धान्यानां भवने क्षेत्रे खञ् । यवयवकषष्टिकाद्यद्भवति । धान्यानां भवने क्षेत्रे खञ् भवति । विभाषातिलमाषोमाभङ्गाणुभ्यः । भवने क्षेत्रे खञ्ग्रहणमनुवर्तते । धान्यानामिति निवृत्तम् । अथ वा मण्डूकप्लुतयोधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः । अथ वा अन्यवचनाच्चकाराकरणात् प्रकृतस्यापवादो विज्ञास्यते । यथोत्सर्गेण प्रसक्तस्यापवादः । अन्यस्य प्रत्ययस्य वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात् प्रकृतस्य खञः ठग्यतौ बाधकौ भविष्यतः । यथोत्सर्गेण प्र-

---

विभाषा । नयतामुक्त इति । महाविभाषया वाक्ये सिद्धे विभाषाग्रहणमुत्सर्गप्राप्त्यर्थमेवेति भावः । उमाभङ्गयोरिति । निमित्ताभावात्ताभ्यां खञोप्राप्तिः । विभाषाग्रहणं तु तिलमाषाणुभ्य एव खञः प्राप्त्यर्थं स्यात् । चमेष्विति । यवाश्च मे माषाश्च मइति चमेशब्दस्य पुनः पुनरुच्चारणाच्चमेशब्देन तद्वन्तोनुवाका उच्यन्ते । अथ वा चमेशब्दस्य चमिति यन्मा कारान्तं तदनुकरणं चमिति । आगन्तुना चाकारेण चमशब्दो भवति । चमेशब्दो विद्यते येष्वनुवाकेषु ते चमाः । अध्यायानुवाकयोर्लुगिति छस्य लुक् । संबन्धमनुवर्त्तिष्यत इति । धान्यग्रहणेन संबन्धमनुरोत्स्यतइत्यर्थः । अथ वा संबध्यतइति संबन्धः धान्यग्रहणसंबद्धमनुवर्त्तिष्यते इत्यर्थः । ततो धान्यसामान्यसंबन्धं खञ्ग्रहणं व्रीह्यादिभिर्वाक्यविशेषैर्न संबध्यते । भवने क्षेत्र इत्येतत्तु प्रत्ययेनाभिधायकेन संबध्यते । अथ वेति । यत्रैवार्थित्वं तत्रवाधिकाराः संबध्यन्ते नान्यत्रेत्यर्थः । यथोत्सर्गेणेति । उत्स-

सक्तस्यापवादो बाधको भवति। अथ वा एतज्ज्ञापयति अनुवर्तन्ते नाम विधयो न चानुवर्तनादेव भवन्ति। किं तर्हि। यत्नाद्भवन्ति। अथ वा यता सुक्त धान्यानां भवने क्षेत्रे खञित्येव सिद्धम्। ननु चोक्तं न सिध्यति। किं कारणम्। उमाभङ्गयोरधान्यत्वादिति। नैष दोषः। धिनोतेर्धान्यम्। एते चापि धिनुतः। अथ वा अणसप्तदशानि धान्यानि॥

यथामुखसंमुखस्य दर्शनः खः॥ ६॥ संमुखेति किं निपात्यते। संमुखेति समस्यान्तलोपः *। संमुखेति समस्यान्तलोपो निपात्यते। संमुखस्य दर्शनः संमुखीनः॥

अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु॥ ९॥ अयानयन्नेयइत्युच्यते। तत्र न ज्ञायते कः अयः कः अनयः इति। अयः प्रदक्षिणम्।

---

संस्यान्यत्र चरितार्थत्वादपवादविषये प्रवृत्तिः संदिग्धेत्यसंदिग्धे नापवादेनासौ बाध्यते। एवं खञ उत्तरार्थायामनुवृत्तौ नान्तरीयकोपस्थानसंभवात्संदिग्धप्रवृत्तित्वादसंदिग्धप्रवृत्तिभ्यां ढग्यद्भ्यां बाधः। धान्यानामित्यनेन प्राप्तस्य खञो ठग्यतावपवादौ न तु तत्रानुवृत्त्या संनिहितस्येति साधर्म्यवैधर्म्यसंभवाद्यथोत्सर्गेण प्रसक्तस्येत्युक्तम्। अथ वेति। विभाषाग्रहणमेव ज्ञापयति अनुवर्तमाना अप्यधिकारा यत्र यत्र यत्नो विभाषाग्रहणादिकस्तु तत्रैव भवन्ति नान्यत्रेति। अन्यथा विभाषाग्रहणमनर्थकं स्यात्। अनुवर्तनादेव खञः सिद्धत्वात्। धिनोतेरिति। योगरूढिरियम्। उमाभङ्ग्योरपीति भावः। चणकेषु त्वधान्यान्यपि कानि चित्पठ्यन्ते धान्यान्यपि कानिचिन्नपठ्यन्ते। नह्नितद्धान्यपरिगणनार्थमितितत्रापाठादुमाभङ्गयोरधान्यत्वं न भवति। अणसप्तदशानीतिधान्यपरिगणनार्थास्मृतिरियम्॥

यथामुख। समस्यान्तलोप इति। समं सुखं यत्रादर्शादौ प्रतिबिम्बाश्रये सतिदृश्यते स संमुखीन इति। प्रयोगदर्शनान्निपातनमाश्रितम्। संशब्दस्य निपातस्यार्थसंगत्यभावादनाश्रयणम्। प्रत्ययसंनियोगेनकारलोपो निपात्यमानस्तदभावे न भवति। संमुखीनादर्शादिसादृश्याचान्योप्यभिमुखावस्थानः संमुखीन उच्यत इत्याहुः।

अनुपद। तत्र ज्ञायतइति। अयनमय इति गमनमात्रमयशब्देनोच्यते। तत्र प्रतिषेधस्त्वनयशब्देनेति विरुद्धाथाभिधानादयानयंनेय इत्यसमन्वयाशङ्कया प्रश्नः। अयः प्रदक्षिणमिति। एकश्च तकारापेक्षया शारस्य प्रदक्षिणं गमनमयोद्वितीया पेक्षया प्रसव्यं वामापरपर्यायं गमनमनयोरूढिवशादुच्यते। परैरिति। द्वितीयश्च तकारसंबन्धिभिः

अनयः प्रसव्यम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परैः पदानामसमावेशः सोऽयानयः। अयानयं नेयः अयानयीनः शारः॥

परोवरपरंपरपुत्रपौत्रमनुभवति॥ १०॥ परोवरेति किं निपात्यते। परोवरे परस्योत्ववचनम् *। परोवरेति परस्यौत्वं निपात्यते। यद्येवं परस्यौत्ववचनमिति प्राप्नोति। शकन्ध्वादिन्यायेन निर्देशः। अथ वा नैवं विज्ञायते परस्यौत्वं निपात्यतइति। कथं तर्हि परस्य शब्दरूपस्यादेरुत्वं निपात्यतइति। परांश्चावरांश्चानुभवति। परोवरीणः। अथ परंपरेति किं निपात्यते। परपरतराणां परंपरभावः *। परपरतराणां परंपरभावो निपात्यते। परांश्च परतरांश्चानुभवति परंपरीणः॥

समांसमां विजायते॥ १२॥ इह समांसमीना गौः। सुपो

शारैः पदानां स्थानानांगृहापरपर्यायाणामनाक्रमणमनध्यासनमित्यर्थः। ससहायस्य शारस्य परैर्नाक्रम्यते पदम्। असहायस्तु शारेण परकीयेण बाध्यत,। इति द्यूतव्यवहारः। अयसहितोनय इत्युत्तरपदलोपी समासस्तत्पुरुषः। अथ वा अय श्चासावनयो ऽयानय इत्येकदेशद्वारेण समुदायस्य कृताकृतादिवद्व्यपदेशात्समानाधिकरणसमासः। समाहारद्वन्द्वो वा। अयानयमिति। नयतेर्द्विकर्मकत्वादयानयमित्यप्रधानेऽपि कर्मणि द्वितीया प्रधाने तु कृत्यप्रत्ययः। तत्र केचित् फलकशिरस्थस्यैव स्वशारवर्गमानेयस्यायानयीनमित्यभिधानमिच्छन्ति। यस्तु शार एकपार्श्व एव संचरति तत्र न भवति प्रत्ययो यो हि शारः पार्श्वात् पार्श्वान्तरमानीयते स एवायानयं नीयते ऽन्यस्त्वयमेव नीयते ऽनयमेव वा॥

परो। परस्योत्ववचनमिति। परशब्दस्यान्तस्यौकारो निपात्यत इत्यर्थः। तत एङः पदान्तादतीति पूर्वैकादेशः। शकन्ध्वन्यायेनेति। शकन्ध्वादिषु पररूपं वक्तव्यमिति पररूपेण निर्देशः। परस्येति। अवरशब्दस्यादेरकारस्येत्यर्थः। तथाद्गुणः तत्र केचित्सामान्येन निपातन मिच्छन्ति। तेन खप्रत्ययाभावे ऽपि प्रयोग उपपन्नो भवति पारोवर्यविदिति पारंपर्यमविच्छिन्नमिति च। अन्ये तु परंपराशब्दमव्युत्पन्नमाचक्षते। तस्मात्स्वार्थे ष्यञि पारंपर्यमिति भवति। परोवर्यविदित्यस्यासाधुत्वमाहुः प्रत्ययसंनियोगेनैव निपातनस्य युक्तत्वं मन्यमानाः॥

समाम्। विजायते प्रसूयत इत्यर्थः। तत्र समायांसमायामित्यस्मात्पदसमुदायात् प्रत्ययो वचनाद्भवति। तद्धितान्तत्वात् प्रातिपदिकत्वे सति तदवयवस्योत्तरपदवत् पूर्व-

धातुप्रातिपदिकयोरिति सुब्लुक् प्राप्नोति। समांसमां विजायत इति यलोपवचनादलुग्विज्ञानम् *। समांसमां विजायत इति यलोपवचनादलुग्विज्ञानं भविष्यति। यदयं यलोपं शास्ति तज्ज्ञापयत्याचार्यो नात्र लुग्भवतीति। समांसमां विजायत इति। यलोपवचनादलुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वचनम् *। समांसमां विजायत इति यलोपवचनादलुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वक्तव्यः। सिद्धं तु पूर्वपदस्य यलोपवचनात् *। सिद्धमेतत्। कथम्। पूर्वपदस्य यलोपो वक्तव्यः। अनुत्पत्तावुत्तरपदस्य वावचनम् *। अनुत्पत्तौ पूर्वपदस्य उत्तरपदस्य च यलोपो वा वक्तव्यः। समांसमां विजायते। समायां समायां विजायत इति॥

आगवीनः॥ १४॥ आगवीन इति किं निपात्यते। गोराङ्पूर्वादातस्य गोः प्रतिदानात्कारिणि खः *। गोराङ्पूर्वादातस्य गोः प्रतिदानात् कारिणि खो निपात्यते। आतस्य गोः प्रतिदानात्कर्मकारीति आगवीनः कर्मकरः॥

शालीनकौपीने अधृष्टाकार्ययोः॥ २०॥ किं यः शालायामधृष्टः स शालीनः। कूपे वा यदकार्यं तत्कौपीनम्। नेत्याह। उत्तरपद-

---

पदे ऽपि सुपो लुक् प्राप्तो यलोपवचनान्न भवति। यादः सुब्भक्तत्वात्सुब्लुकैव यलोपे सिद्धे सूत्रे यलोपवचनं नियमार्थं यकारस्यैव लोपो भवति न तु सर्वस्य प्रत्ययस्येत्यर्थः। उत्तरपदस्य लुग्वचनमिति। यलोपनिपातनात् पूर्वपदवदुत्तरपदेपि लुङ् न प्राप्नोतीति भावः। सिद्धं त्विति। तेन पूर्वपद एव यलोपनिपातनादामः श्रवणं भवति। उत्तरपदे तु सुब्लुग्भवत्येवेत्यर्थः। अनुत्पत्ताविति। वाक्ये पूर्वोत्तरपदयोर्वायलोपो वक्तव्यः। तेन द्वैरूप्यं भवति॥

आगवीनः। किं निपात्यत इति। का प्रकृतिः कः प्रत्ययः कः प्रत्ययार्थ इति प्रश्नः। गोराङ्पूर्वादिति। यो गवा धृतः आ गोः प्रत्यर्पणात् कर्म करोति स आगवीन उच्यते। तत्र वृत्तिविषये गोशब्दो गोप्रत्यर्पणे वर्त्तते। तत्र आङ्गोशब्दयोराङ्मर्यादाभिविध्योरित्यव्ययीभावे कृत्स्ने च कृते खो निपात्यते॥

शालीनकौपीने। किं यः शालायामिति। अस्यां कल्पनायां शालाकूपशब्दयोर्मुख्यार्थत्वमाश्रितं भवतीति भावः। शालायामधृष्ट इति। अन्यत्र धृष्टः। कूप इति। लज्जनादिकमित्यर्थः। उत्तरपदलोप इति। लोकप्रसिद्धार्थानुवादेन साधुत्वान्वाख्यानादधृ-

लोपोऽत्र द्रष्टव्यः । शालाप्रवेशनमर्हत्यधृष्टः स शालीनः । कूपावतरणमर्हत्यकार्यं तत्कौपीनम् ॥

व्रातेन जीवति ॥ २१ ॥ व्रातेन जीवतीत्युच्यते । किं व्रातं नाम । नानाजातीया अनियतवृत्तयः उत्सेधजीविनः संघाः व्राताः । तेषां कर्म व्रातम् । व्रातकर्मणा जीवतीति व्रातीनः ॥

हैयङ्गवीनं संज्ञायाम् ॥२१॥ हैयङ्गवीनमिति किं निपात्यते । ह्योगोदोहस्य हियङ्ग्वादेशः जंज्ञायां तस्य विकारे * ह्योगोदोहस्य हियङ्ग्वादेशो निपात्यते संज्ञायां तस्य विकार इत्येतस्मिन्नर्थे । ह्योगोदोहस्य विकारो हैयङ्गवीनं घृतम् । संज्ञायामिति किमर्थम् । ह्योगोदोहस्य विकार उदश्वित्त्र मा भूदिति ॥

---

ष्टाकार्यमात्रे च शालीनकौपीनशब्दयोः प्रयोगादिति भावः । तत्र वृत्तिविषये शालाकूपशब्दौ तत्कर्मिकायां क्रियायां वर्तेते इति । गम्यमानार्थत्वादप्रयोग एवोत्तरपदस्य लोपः शालाप्रवेशनमिति । अत्र प्रागल्भ्याभावादासितुमशक्यत्वाच्छालामेव प्रवेष्टुमर्हतीत्यर्थः । कूपावतरणमिति । यदकार्यं तत्प्रच्छादनीयत्वात् कूपावतरणमर्हतीत्यर्थः । अकार्ययोगत्वात्पुरुषलिङ्गमपि कौपीनमुच्यते । तत्साहचर्यात्तदाच्छादनमपि कौपीनम् । अथ वाऽकार्यशब्दे करोतिः क्रियासमान्यवचनः । तेनाद्रष्टव्यत्वात् लज्जाहेतुदर्शनत्वात्पुरुषलिङ्गं कौपीनमस्पृश्यत्वाच्च तदाच्छादनम् ।

व्रातेन । किं व्रातं नामेति । व्रातशब्दस्तावत्संघवचनः । तत्र यः संघेन जीवति तत्र व्रातीनशब्दो न प्रयुज्यते । व्रातकर्मणा जीवति तु प्रयुज्यते । व्रातकर्मणि च व्रातीयशब्देन भाव्यमिति प्रश्नः । नानाजातीया इति । एकजातीयक्षत्रियादिसङ्घनिराकरणम् । अनियतवृत्तय इति । नियतवृत्त्याऽऽयुधजीविसंघनिषेधः । उत्सेधजीविन इति । उत्सेधः शरीरं तदायासेन भारवहनादिना जीवन्ति न तु बुद्धिवैभवेनेत्यर्थः । व्रातानां कर्मत्वत एव निपातनाच्छं बाधित्वाण् भवति । तेषामेवान्यतमो व्रातीन उच्यते । यस्त्वन्यस्तत्कर्मणा जीवति स नोच्यते ।

हैयङ्गवीनम् । किं निपात्यत इति । प्रकृतिसंदेहात्प्रश्नः । ह्योगोदोहस्येति । ह्यस्शब्दस्य गोदोहशब्देन सुप्सुपेति समासः । दुह्यत इति दोहः क्षीरमुच्यते । ह्यस्शब्देन कालप्रत्यासत्तिः प्रतिपाद्यते । तेनाविकृतरूपं गव्यमेव घृतं हैयङ्गवीनमुच्यते इत्याहुः ।

पद्मात्तिः ॥ २५ ॥ मूल इति वक्तव्यम्। पक्षस्य मूलं पक्षतिः। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। मूल इति वर्तते। क्व प्रकृतम्। तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचाविति। यदि तदनुवर्तते। पाके ऽपि प्राप्नोति मूल इत्यनुवर्तते पाक इति निवृत्तम्। कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्त्तते एकदेशो वानिवर्तते। एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति। तद्यथा। संख्याव्ययादेर्ङीप्। दामहायनान्ताच्च। संख्यादेरित्यनुवर्तते अव्ययादेरिति निवृत्तम्

विनञ्भ्यां नानाञौ न सह ॥ २७ ॥ इह नानेति सहार्थो गम्येत। द्वौ हि प्रतिषेधौ प्रकृतमर्थं गमयतः। न न सह सहैवेति। नैष दोषः। नायं प्रत्ययार्थः। किं तर्हि। प्रकृतिविशेषणमेतत्। विनञ् इत्येताभ्यामसहवाचिभ्यां नानाञौ भवतः। कस्मिन्नर्थे। स्वार्थ इति।

वेः शालच्छङ्कटचौ ॥ २८॥ कस्मिन्नर्थे शालजादयो भवन्ति।

---

पक्षा। मूल इति वक्तव्यमिति। अन्यथाऽनिर्दिष्टार्थत्वात् स्वार्थे प्रत्ययप्रसङ्गः। कथं पुनरिति। एकस्मिन्नर्थे योगः संबन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थः। द्वन्द्वस्य तदर्थस्य चैकत्वादेकदेशानुवृत्तिर्नसंभवतीति भावः। एकसूत्रनिर्दिष्टानां त्वेकदेशानुवृत्तिर्दृश्यते। एकयोगनिर्दिष्टानामपीति। अर्थाधिकारपक्षेऽर्थस्यैकत्वाद्विच्छेदाभावान्न स्यादेकदेशानुवृत्तिः। शब्दाधिकारपक्षे तु यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञातं तत्सदृशशब्दान्तरसंनिधानं योगान्तरे प्रतीयते इति दोषाभावः।

विनञ्। सहार्थो गम्येतेति। नसहेति प्रत्ययार्थनिर्देशं मन्यते। प्रकृत्यर्थेन प्रत्ययार्थो विशेषणीयः। ततः प्रतिषेधस्य प्रतिषेधाद्विधिना भाव्यमितिभावः। नायमिति। लोकप्रसिद्धार्थानां शब्दानामिह साधुत्वाख्यानात्। लोके च नानाशब्दस्य पृथग्भावाभिधायित्वान्न सहेति प्रकृत्यर्थनिर्देशः। यद्येवं सहेत्येव प्रत्ययार्थो निर्देश्यः विनञोः प्रतिषेधार्थत्वाद् द्विगार्द्दभरथिक इत्यादौ विशब्दस्य गुणप्रतिषेधवृत्तित्वदर्शनात्। नैतदस्ति क्रियावाचिनोपि विशब्दात् सहार्थे प्रत्ययो विज्ञायेत विगतौ सहविक्रान्तौ सहेति। इह तु विनादेवदत्तेन नानादेवदत्तेनेत्यस्य सत्वभूतस्याप्यर्थस्य व्यतिरेकहेतुत्वंभवति यथा मातुः-स्मरतीति।

वेः शा। कस्मिन्नर्थे शालजादयइति। वक्ष्यमाणप्रत्ययापेक्षं बहुवचनमसहार्थस्य

न सह इत्यनुवर्तते। भवेत् सिद्धम्। विशाले शृङ्गे विशङ्कटे शृङ्गे इति। इह खलु संगतोर्थो गम्यते संकटमिति। प्रकटमिति प्रगतार्थो गम्यते। उत्कटमिति उद्गतार्थो गम्यते। एवं तर्हि साधने शालजादयो भवन्ति। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। उपसर्गेभ्य इमे विधीयन्ते। उपसर्गाश्च पुनरेवमात्मका यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः। यत्र हि न प्रयुज्यते ससाधनां तत्र क्रियामाहुः। तएते उपसर्गेभ्यो विधीयमानाः ससाधनायां क्रियायां भविष्यन्ति। एवमपि भवेत्सिद्धं विशाले शृङ्गे इति। इदन्तु न सिध्यति। विशालो विशङ्कटः। एतदपि सिद्धम्। कथम्। अकारो मत्वर्थीयः। विशाले अस्य स्तः विशालः। विशङ्कटे अस्य स्तः विशङ्कटः॥

संप्रोदश्च कटच्॥ २९॥ कटच्प्रकरणे अलाबूतिलोमाभ्योरजस्युपसंख्यानम्*। कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्युपसंख्यानं कर्तव्यम्। अलाबूकटः। तिलकटः। उमाकटः। भङ्गायाश्च*। भाङ्गायाश्चेति वक्तव्यम्। भङ्गाकटः। गोष्ठादयः स्थानादिषु पशु-

---

सर्वत्रासंभवादर्थानुपादानाच्च प्रश्नः। विशाले इति। नानादेशगमनादस्त्यत्रासङ्गार्थत्वमिति भावः। किं वक्तव्यमिति। शब्दान्तरवाच्यक्रियाविशेषस्य द्योतका उपसर्गाः वाचका भावे द्योत्याभावादनर्थका एवेति भावः। ससाधनामिति। क्रियोपसर्जनं ससाधनमाहुरित्यर्थः। नियतविषयाः शब्दानां शक्तयो दृश्यन्ते यथा छिदशा इत्यादौ कर्त्रर्थाद्यभिधानमिति भावः। उपसर्गेभ्य इति। अन्यत्रोपसर्गसंज्ञादर्शनाद्विषयान्तरेऽपि योग्यतामात्राश्रयं प्रादीनामिदमभिधानम्। विशाल इति। शृङ्गयोरेव विगमनक्रियाकर्तृत्वं न तु गोरिति भावः। विशाले अस्येति। मतुप्प्रत्ययस्तु गव्यमभिधानान्न भवति। विशालवानित्युक्तेऽपि विशालगवयुक्तस्य गोष्ठादेरवगमो न तु गोरित्यर्थः। व्युत्पत्त्यनुसारेण चेदमुच्यते। गुणशब्दास्तु विशालादयः साधुत्वान्वाख्यानाय तु कं चिदुपायमाश्रित्य व्युत्पत्तिः क्रियते। यथाप्रतिलोमोऽनुलोम इति।

संप्रोद। अलाबूतिलोमाभङ्गाभ्य ओषधित्वादवयवे ऽलाबूशब्दादोरञित्यञि प्राप्ते तिलोमाभङ्गाभ्यां घृतादित्वादन्तोदात्तत्वादनुदात्तादेश्चेत्यञि प्राप्ते भङ्गायास्तृणधान्यानां च द्व्यषामित्याद्युदात्तत्वादणि प्राप्ते रजसि कटज्विधिः। गोष्ठादय इति। प्रयोगसमवायिप्रत्ययरूपं निर्दिष्टम्। चकारस्तु स्वरार्थोनुबन्ध आसङ्क्तव्यः। तथा हि। समासा-

नामादिभ्यः* । गोष्ठजादयः प्रत्ययाः स्थानादिष्वर्थेषु पशुनामादिभ्यो वक्तव्याः । गोगोष्ठम् । अविगोष्ठम् । संघे कटच् वक्तव्यः । अविकटः । उष्ट्रकटः । विस्तारे पटच्च वक्तव्यः । अविपटः । उष्ट्रपटः । द्वित्वगोयुगच् । गोयुगच्शब्दश्च प्रत्ययो वक्तव्यः । उष्ट्रगोयुगम् । खरगोयुगम् । स्नेहने तैलच्शब्दश्च प्रत्ययो वक्तव्यः । इङ्गुदतैलम् । सर्षपतैलम् । संभवने च्चेत्रे शाकटशब्दश्च प्रत्ययो वक्तव्यः । इक्षुशाकटम् । मूलशाकटम् । शाकिनशब्दश्च प्रत्ययो वक्तव्यः । इक्षुशाकिनम् । मूलशाकिनम् । उपमानाद्वा सिद्धम् * । उपमानाद्वा सिद्धमेतत् । गवां स्थानं गोष्ठम् । यथा गवां तद्वदुष्ट्राणाम् । कटच् न वक्तव्य इति । यथा नानाद्रव्याणां संघातः कटः । एवमवयः संहता अविकटः । पटच्च न वक्तव्य इति । यथा पटः प्रस्तीर्णः । एवमवयः प्रस्तीर्णा अविपटः । गोयुगच्शब्दश्च प्रत्ययो न वक्तव्य इति । गोर्युगं गोयुगम् । यथा गोस्तद्वदुष्ट्रस्य उष्ट्रगोयुगम् । तैलशब्दश्च प्रत्य-

---

श्रयेण प्रत्ययाः प्रत्याख्यायन्ते । तत्र चित्स्वरसमासस्वरयोरभेदादेकफलत्वमाश्रप्रत्याख्यानयोरुपपद्यते । सर्वत्रादिशब्दः प्रकारे । गवां स्थानमिति । तस्येदमित्यत्रार्थे सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यदिति यति प्राप्ते गोष्ठच्प्रत्ययः । अविकट इति । अवीनां समूह इत्यणि प्राप्ते कटच् । अवीनां विस्तार इत्यर्थे पटच् । अप्रस्तृते समूहे अविकटः प्रस्तृते त्वविपटः । उष्ट्रगोयुगमिति । द्वावुष्ट्रावित्यत्रार्थे गोयुगच् प्रत्ययः । अन्ये त्वाहुः । उष्ट्रस्य ग्रीवाबन्धने यानाङ्गे गोयुगच् प्रत्ययः।इङ्गुदतैलमिति।लघावन्त इत्याद्युदात्तत्वात्तस्य विकार इत्यणप्राप्तः । सर्षपशब्दस्य सादीनां शाकानामित्याद्युदात्तत्वे प्राप्ते परत्वादथ द्वितीयं प्रागीषादित्यनुवर्तमाने यान्तानां च गुर्वादीनामिति मध्योदात्तत्वं भवति । ततोनुदात्तत्वादिञ् प्राप्तः इक्षुशाकटमिति । इक्षूणां भवनं क्षेत्रमित्यर्थे शाकटशाकिनौ । गवां स्थानमिति । गावस्तिष्ठन्ति यस्मिन्निति घञर्थे कविधानमिति कः । तत्र गोष्ठसाधर्म्यादुष्ट्रादिस्थानमपि गोष्ठशब्देनोच्यते । तत्र विशेषप्रतिपत्त्यर्थं सुष्ट्रादीनामन्यतमेन विशेष्यते । मुख्यगोष्ठप्रतिपत्तये च गोभिरपि गोष्ठस्यविशेषणात् गोगोष्ठमित्यपि भवति । नानाद्रव्याणामिति । रज्जुवीरणादीनामित्यर्थः । तत्साधर्म्यादन्योपि संघातः कटशब्दाभिधेयोऽविभिर्विशेषितोऽविकट इत्युच्यते । यथा पट इति । विस्तारसामान्यादन्योपि संघातः पटशब्दाभिधेयोऽविभिर्विशेष्यते । अविपट इति । गोयुगमिति । युगशब्देन द्वयमुच्यते ग्रीवाबन्धनं काष्ठञ्च । तत्र यानाङ्गे युगः पुंस्युक्त इति पुंस्त्वं प्रायि

यो न वक्तव्य इति । प्रकृत्यन्तरं तैलशब्दो विकारे वर्तते एवं च कृत्वा तिलतैलमित्यपि सिद्धं भवति । शाकटशब्दस्य प्रत्ययो वक्तव्य एव । शाकिनशब्दस्य प्रत्ययो वक्तव्य एव ॥

इनच्पिटच्चिकचि च ॥ ३३ ॥ इनच्पिटच्कः: चिकचिचिकादेशाश्च *। इनच्पिटच्कः: प्रत्यया वक्तव्याः । चिकचिचिक् इत्येते च प्रकृत्यादेशा वक्तव्याः । चिकिनः । चिपिटः । चिक्कः । क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी * । क्लिन्नस्य चिल्पिल् इत्येतौ प्रकृत्यादेशौ वक्तव्यौ लश्च प्रत्ययः अस्य चक्षुषी इत्यस्मिन्नर्थे । क्लिन्ने अस्य चक्षुषी चिल्लः । पिल्लः । चुल् च वक्तव्य. । चुल्लः । यद्यस्येत्युच्यते । चिल्ले चक्षुषी इति न सिध्यति । तस्मान्नार्थोऽस्य ग्रहणेन । कथं चिल्लः पिल्ल इति । अकारो मत्वर्थीयः । चिल्ले अस्य स्तः चिल्लः पिल्ले अस्य स्तः पिल्ल इति ॥

प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥३७॥ प्रमाण इतिकिमयंप्रत्ययार्थःप्रमाणे प्रत्ययार्थ इति। प्रमाण इति नायं प्रत्ययार्थः । क्व तर्हि

---

क बोध्यम् । प्रकृत्यन्तरमिति । अव्युत्पन्नं विशिष्टस्नेहद्रव्यवाचीत्यर्थः । तिलतैलमित्यपीति । अपिशब्दात्तैलमपीत्यर्थः । यदि तु तैलच् प्रत्ययो विधीयते तदाविशेषविहितेन तैलचा तिलशब्दादञ् बाध्येत । ततश्च तैलमिति न सिध्येत् । यदा त्वव्युत्पन्नएव तैलशब्दो विकारविशेषवाची तदा तिलानां तैलमिति समासेकृतेतिलतैलमिति भवति। तिलानां विकार इत्यत्राञि तैलमिति। उपमानाश्रयेणापि इङ्गुदितैलमित्यादि सिध्यति। तिलविकारोमुख्यं तैलं तत्साहश्यादन्यदपि तैलमिङ्गुदादिभिर्विशेष्यते । गौणसंभवे च मुख्यतैलप्रतिपादनायं तिलैर्विशेषणात्तिलतैलमित्यपि भवतीति केचिदाहुः । व्युत्पत्त्युपाय एव तिलानां विकारस्तैलमिति रूढिशब्दश्चायं स्नेहद्रव्यवृत्तिः । तथा च साहश्यानुकरणमन्तरेणइङ्गुदतैलादयः शब्दा प्रयुज्यन्ते । यथा प्रकृष्टो वीणायां प्रवीण इति व्युत्पत्तिमात्रं क्रियते कौशलं त्वस्य प्रवृत्तिनिमित्तम्। तेन वीणायां प्रवीण इत्यपि भवति ॥

इनच् । सूत्रेनिशब्दस्य द्वावादेशौ प्रत्ययौ विहितावित्यादेशत्रयप्रत्ययत्रयविधानाय वार्त्तिकम् । तस्मान्नार्थ इति । क्लिन्नशब्दाच्चक्षुर्विशेषार्थाभिधायिनः स्वार्थे लो विधेयः । अकारो मत्वर्थीय इति । अर्श आदिषु स्वाङ्गाद्धीनादिति पाठात् । मतुप् त्वनभिधानान्न भवति ॥

प्रमाणे । किमयमिति । सप्तमीनिर्दिष्टस्येह शास्त्रे प्रकृत्यर्थप्रत्ययार्थत्वदर्शनादुभयसंभवाच्च प्रश्नः । अस्येत्यनुवर्तनादिति । नन्वेवमपि प्रमेयवाचिनः प्रमाणे प्रत्ययप्रसङ्गः ।

प्रत्यया भवन्ति। तद्वति। कुत एतत्। अस्येत्यनुवर्तनात्। क्व प्रकृतम्। तदस्य संजातं तारकादिभ्य इतजिति। प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम। ऊरुद्वयसम्। ऊरुदघ्नम्। प्रमाणे लः। प्रमाणे लो वक्तव्यः। शमो दिष्टिर्वितस्तिः। द्विगोर्नित्यं लो वक्तव्यः। द्विशमम्। त्रिशमम्। द्विदिष्टिः। त्रिदिष्टिः। द्विवितस्तिः। त्रिवितस्तिः। किमर्थमिदमुच्यते। संशये श्राविणं वक्ष्यति। तस्यायं पुरस्तादपकर्षः। डट्स्तोमे वक्तव्यः। पञ्चदशः स्तोमः। शन्शतोर्डिनिः। शन्शतोर्डिनिर्वक्तव्यः। त्रिंशिनो मासाः। पञ्चदशिनोऽर्धमासाः। विंशतेश्च। विंशतेश्चेति वक्तव्यम्। विंशिनोऽङ्गिरसः। प्रमाणपरिमाणाभ्यां संख्यायाश्चापि

---

उदकं प्रमेयमस्योरोरिति। नैष दोषः। अनियतप्रमेयविषयत्वात् प्रमाणानामेकेन प्रमेयेण विशेषणे दुःसंबन्धत्वात् प्रमेयस्य तु नियतप्रमाणप्रतिपादनाय ऊरुमात्रादयः शब्दा लोके प्रयुज्यमानाः साधुत्वेनान्वाख्यायन्ते। प्रथमश्चेति। यद्यायामवाच्येव प्रमाणशब्दः सूत्र उपात्तः। तदोर्ध्वमाने प्राप्तौ द्वयसज्दघ्नचौ प्रमाणादपकृष्य विधीयेते। अथ तु परिच्छेदमात्रं प्रमाणमिहाश्रीयते। तदोर्ध्वमान एव यथा स्यातामिति नियमाय वचनम्। प्रमाणे ल इति। प्रमाणशब्दा लोके ये प्रसिद्धा दिष्टिहस्तादयस्तेभ्यः परस्य प्रत्ययस्य लुग् भवति। स च संभवान्मात्रच एव। इतरयोरूर्ध्वमान एव हि विधानम्। मात्रचस्त्वविशेषेण परिच्छेदकमात्रवाचिनः स्मरणात्। द्विगोर्नित्यमिति। तदन्तविध्यभावाल्लुगप्राप्तिः। किमर्थमिति। नित्यग्रहणम्प्रति प्रश्नः। नहि विकल्पः प्रकृत इति भावः। श्राविणमिति। श्रवणं श्रावः। स यस्यास्तीति श्रावी। मात्रच्प्रत्ययः। तस्य परत्वाच्छ्रवणे प्राप्ते नित्यग्रहणाद् बाधकबाधनार्थाल्लुगेव भवति। द्वौ शमौ प्रमाणमस्य स्यात्। न वा द्विशममिति प्रकरणादिवशाच्च निश्चयसंशयविषयध्योगावधारणम्। डट् स्तोम इति। अत्रायामस्य प्रमाणस्यासंभवात्परिच्छेदोपाधिकायाः संख्यायास्तोमे डट्प्रत्ययः। पञ्चदशमन्त्राः परिमाणमस्य स्तोमस्य पञ्चदशः। विंशिन इति। विंशतिशब्दात्संख्यामात्रवाचिनः। संख्येये प्रमेये डिनिः। तिविंशतेर्डितीति तिलोपस्तस्य यस्येति चेत्यकारलोपे कर्तव्ये ऽसिद्धवदत्राभादित्यसिद्धत्वं न भवति। भाष्यकारवचनात्तस्य सिद्धत्वात्। तदस्य परिमाणं संख्यायाः संज्ञेत्यत्र स्तोमे डविधिः। पञ्चदशाद्यर्थमित्युक्तेऽपि स्त्रियां डीवर्थमिह डड्विधीयते स्तोमसाहचर्याच्च स्त्रियां प्रयोगः सप्तदशी रात्रिरिति। तत्र तु ङीवर्थं टावर्थं यदि प्रयोगो दृश्यते। तददर्शने तु प्रपञ्चार्थम्। डिनेः सामान्यविधानात्तत्र शन्शतोर्डिनिः छन्दसिवक्तव्य इति वचनं प्रपञ्चार्थमेव। प्रमाणपरिमाणाभ्यामिति।

संशये ॥ मात्रज्वक्तव्यः । शममात्रम् । दिष्टिमात्रम् । कुडवमात्रम् । पञ्चमात्राः । दशमात्राः । वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् * । वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलं वक्तव्यौ । तावदेव तावद्द्वयसम् । तावन्मात्रम् ॥ यावदेव यावद्द्वयसम् । यावन्मात्रम् ॥

यत्तदेतेभ्यः परिमाणे वतुप् ॥ ३९ ॥ किमर्थं परिमाण इत्युच्यते । न प्रमाण इति वर्तते । एवं तर्हि सिद्धे सति यत्परिमाणग्रहणं करोति तज् ज्ञापयत्याचार्यः अन्यत् प्रमाणमन्यत् परिमाणमिति । डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते ॥ नैतज् ज्ञापकसाध्यमन्यत्प्रमाणमन्यत्परिमाणमिति । उक्तोत्र विशेषः । मात्राद्यप्रतिघाताय । एवं च कृत्वा मात्रादीनां प्रतिघातो न भवति । भावः सिद्धश्च डावतोः । डावत्वन्ताच्च मात्रजादीनां भावः सिद्धो भवति वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् * । वतुप्प्रकरणे युष्मदस्मद्भ्यां

---

रूढिशब्दौ भेदेनोपात्तौ । शममात्रमिति । शमः प्रमाणमस्य स्यान्न वा दिष्टिः प्रमाणमस्य स्यान्न वा कुडवं प्रमाणमस्य स्यान्न वेत्यत्रार्थे मात्रच् । पञ्चमात्रा इति । पञ्चस्युर्न वेति संशय्यमानार्थवाचिनः स्वार्थे प्रत्ययः अथ वा वृत्तिविषये द्वेकयोरित्यादिवत्संख्यामात्रवाचिनः षष्ठ्यर्थे प्रत्ययः । पञ्चत्वसंख्या प्रमाणमेषां स्यान्न वेति संशय्य पञ्चमात्राः । तावदेवेति । तत्परिमाणं यस्य धान्यादेः तत्तावद्धान्यादिकं ततः स्वार्थे प्रत्ययः । उत्तरसूत्रे तु भावः सिद्धश्च डावतोरित्यर्थान्तरे वत्वन्तान्मात्राादिप्रतिपादनम् ॥

यत्तदे । किमर्थमिति । प्रमाणपरिमाणशब्दयोरेकार्थत्वं मत्वा प्रश्नः । न प्रमाण इति वर्तत इति । काक्वा नञः प्रयोगाद्वर्तत एवेत्यर्थः । अथ वाऽनेकार्थत्वान्निपातानां ननुशब्दस्यार्थे न शब्दो वर्तते । आचार्यदेशीय आह । एवं तर्हीति । आचार्य आह । डावताविति । पूर्वाचार्यप्रक्रियापेक्षो निर्देशः । इह तु वतुपं विहायासर्वनाम्न इत्यात्त्वं विहितम् । पूर्वाचार्यास्तु डावतुं विदधिरे । अर्थवैशेष्यादिति । विशिष्यत इति विशेषः विशेषस्य भावो वैशेष्यमर्थस्य वैशेष्यमर्थवैशेष्यमर्थभेदस्तस्मात्परिमाणशब्दस्य पृथङ्निर्देशः क्रियते । उक्तोत्रेति । आयामस्तु प्रमाणं स्यात्परिमाणं तु सर्वत इति । मात्राद्यप्रतिघातायेति । यदि प्रमाण इत्यनुवृत्त्या प्रमाणोपाधिकेभ्यो यदादिभ्यो वतुब्विधीयते तदासौ विशेषविहितत्वात्सामान्यविहितान् मात्रादीन् बाधेत परिमाणग्रहणे तु सति भिन्नोपाधिविषयत्वाद्बाध्यबाधकभावाभावः । तेन तन्मात्रं यन्मात्रमित्यादि प्रमाणोपाधौ प्रकृत्यर्थे सिद्धं भवतीति भावः । सिद्धश्चेति । तत्परिमाणमस्य धान्यस्य तत्तावद्धान्यं राशीकृ

छन्दसि सादृश्य उपसंख्यानं कर्तव्यम्। न त्वावामन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। त्वावतः पुरुवसो, यज्ञं विप्रस्य मावतः। त्वत्सदृशस्य मत्सदृशस्येति॥

किमिदंभ्यां वो घः॥ केन विहितस्य किमिदंभ्यां वतुपो वो घत्वमुच्यते। एतदेव ज्ञापयति भवति किमिदंभ्यां वतुबिति। यदयं किमिदंभ्यामुत्तरस्य वतुपो वो घत्वं शास्ति। अथ वा योगविभागः करिष्यते। किमिदंभ्यां वतुब् भवति। ततो वो घ इति॥

किमः संख्यापरिमाणे डति च॥ ४१॥ बहुष्विति वक्तव्यम्। इह मा भूत्। कियान्। कियन्तौ। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। किमित्येतत् परिप्रश्ने वर्तते। परिप्रश्नश्चानिर्ज्ञाते। अनिर्ज्ञातं च बहुषु। द्व्येकयोः पुनर्निर्ज्ञातं निर्ज्ञातत्वाद् द्व्येकयोः परिप्रश्नो न। परिप्रश्नाभावात् किमेव तावन्नास्ति कुतः प्रत्ययः॥

संख्याया अवयवे तयप्॥ ४२॥ इह कस्मान्न भवति बह्ववोऽवयवा अस्याः संख्याया इति। अवयवे या संख्येत्युच्यते। न च का

---

तं तावत्प्रमाणमस्य कुड्यादेस्तावन्मात्रम्। यादृग्राशीकृतस्य दैर्घ्यं तादृगस्यापीत्यर्थः। एकविषयत्वे तु वतुपैवोक्तत्वाद्विशिष्टस्य प्रमेयस्य तदन्तान् मात्रादयो न स्युः। यस्य हि तावत्प्रमाणं तस्य तत् प्रमाणमिति तावच्छब्दस्यैव तत्रापि प्रयोगः स्यात्। सादृश्य इति। विषयनिर्देशोयं सदृशस्तु प्रत्ययार्थः।

किमिदम्। एतदेवेति आदेशविधानान्यथानुपपत्त्या प्रत्ययोनुमीयते॥

किमः। बहुष्विति वक्तव्यमिति। का संख्यापरिमाणमस्य वर्गस्येति यदा वर्गावयवगतसंख्याविशेषविषयः प्रश्नस्तदा प्रत्ययःप्राप्नोति कति वर्ग इति। तदा पञ्चक इत्याद्युत्तरेणभाव्यम्। तस्मादत्र प्रत्ययनिवृत्तये बहुष्विति वक्तव्यमिति भावः। किमित्येतदिति। इहास्येत्यधिकाराद्यदीया संख्या पृच्छ्यते तत्रैव प्रत्ययेनोत्पत्तव्यम्। तत्र यदि वर्गावयवगतसंख्याविशेषप्रश्नस्तदावयवेष्वेव प्रत्ययेन भाव्यं नतु व्यवहितसंख्यासंबन्धे वर्गे। ततः कति गावोऽस्मिन्वर्ग इति भवति कति गावोयं वर्ग इति च संघसंघिनोरभेदविवक्षायाम्। कियानिति तु परिमाणोपाधौ प्रकृत्यर्थे प्रयुज्यते। संख्याप्रश्ने तु कियन्त इति बहुवचनान्तस्यैव प्रयोगः।

संख्यायाः। बह्वोवयवा इति। उत्सृष्टभेदस्य संख्यालक्षणस्यार्थस्यैकत्वादीन्विशेषानवयवान्मत्वा प्रश्नः। अवयवे या संख्येति। अवयवे यः संख्यावाची शब्दो वर्तते तस्मा-

चित्संख्यास्ति यस्या बहुशब्दोवयवः स्यात् ननु चेयमस्ति । संख्येत्येव । नैषा संख्या। संज्ञैषा । अवयवविधाने ऽवयविनि प्रत्ययः * । अवयवविधाने ऽवयविनि प्रत्ययो भवतीति वक्तव्यम् । इह मा भूत् । पञ्चावयवा दशावयवा इति । अथ वाऽवयविनीत्युच्यमाने ऽवयवस्वामिनि कस्मान्न भवति । पञ्च पञ्चवयवा देवदत्तस्येति । अवयवशब्दोयं गुणशब्दः । अस्येति च वर्तते । तेन यं प्रत्यवयवो गुणस्तस्मिन्नवयविनि प्रत्ययेन भवितव्यम् । कं च प्रत्यवयवो गुणः । समुदायम् । यद्येवमवयविनीत्यपि न वक्तव्यम् । अवयवे कस्मान्न भवति । अस्येति वर्तते ॥

उभादुदात्तो नित्यम्॥ ४४ ॥ किमर्थमुदात्त इत्युच्यते । उदात्तो

---

इस्येत्यधिकारादवयविनि प्रत्ययो भवति । न च सामान्यविशेषयोरवयवावयविभावः संभवतीति भावः । बहुशब्द इति । बहुशब्दवाचोर्थ इत्यर्थः । अथैवं कल्प्यते बहव एकत्वगुणा अवयवा अस्या विंशतिसंख्यायास्तत्समुदायस्वरूपायाः सा बहुतयी विंशतिरिति। तथापि प्रत्ययार्थस्य प्रकृत्यर्थो विशेषणमव्यभिचारादनुपपन्नम् । संख्येत्येवेति । संख्याशब्दवाच्या संख्यावयविनीत्यर्थः । नैषा संख्येति । संख्याशब्देन संख्याविशेषो नाभिधीयत इत्यर्थः । संज्ञैषेति । एकत्वादीनां संख्यात्वजातियुक्तानां संख्येत्येषा संज्ञा । तत्र संख्याशब्दप्रतिपाद्यस्य सामान्यविशेषस्यावयवित्वासंभव इत्युक्तमेतत् । बहुतयं यूथमित्येतदवयवावयविभेदविवक्षायां भवति । बहुतयं रूपमित्येतच्चित्रस्य रूपस्यावयवित्वविवक्षायां भवति । यद तु रूपसामान्यं विवक्ष्यते शुक्लादिविशेषविषयं तदा सामान्यविशेषयोरवयवावयविभावाभावान्न भवति । अवयविनीति । स्वार्थे प्रत्ययो मा भूदित्येवमर्थमवयविनीति वक्तव्यम्। अवयवस्वामिनीति । अवयवाः सन्त्यस्येति व्युत्पत्त्या स्वामिनोप्यवयविशब्देनाभिधानात्तत्रापि प्रत्ययेन भाव्यमिति मत्वा प्रश्नः । अवयवशब्दोयमिति । संबन्धिशब्दान्नियत एव संबन्धिनि मत्वर्थीयो भवति । यथा पितृमानिति पुत्र एवाभिधीयते पुत्रवानितिपितैव । तथेहाप्यवयविशब्देनावयवारब्ध एवोच्यते न तु स्वामीत्यर्थः । अस्येति च वर्तत इति । अत इनिठनावित्यत्र तदस्यास्त्यस्मिन्निति मतुबित्यतोऽस्येति वर्त्तते । सप्तम्यर्थे त्विनिठनोरभावः । सप्तम्यां च न तौ स्मृताविति वचनात् । अस्येति वर्त्तत इति । तदस्य संजातमित्यतः ।

उभा । उभयो मणिरित्यवयविनोऽवयवद्वित्वनिमित्तो व्यपदेशः । उभौ पीतलोहितावयवौ यस्य स उभयः । उभये देवमनुष्या इति वर्गद्वयापेक्षम तिरोहितभेदानां वर्गाणामभिधानम् । किमर्थमिति । किमप्राप्तमाद्युदात्तत्वं विधातुमुदात्तवचनमुता

यथा स्यात् । नैतदस्ति प्रयोजनम् । प्रत्ययस्वरेणाप्येष स्वरः सिद्धः । न सिध्यति । चितोन्त उदात्तो भवतीति अन्तोदात्तत्वं प्रसज्येत । अथ उदात्त इत्युच्यमाने कुत एतदादेरुदात्तत्वं भविष्यति न पुनरन्तस्येति उदात्तवचनसामर्थ्याद् यस्याप्राप्तः स्वरस्तस्य भविष्यति । कस्य चाप्राप्तः । आदेः । अन्तस्य पुनश्चित्स्वरेणैव सिद्धम् ॥

तदस्मिन्नधिकमिति दशान्ताड्डः ॥४५॥ इह कस्मान्न भवति । एकादश माषा अधिका अस्मिन् कार्षापणशत इति । अधिके समानजातौ । समानजाताविष्यते । अथेह कस्मान्न भवति । एकादश कार्षापणा अधिका अस्यां कार्षापणत्रिंशतीति । इष्टं शतसहस्रयोः । शतसहस्रयोरधिक इष्यते । अथेहैकादशं शतसहस्रमिति कस्याधिक्येन भवितव्यम् । यस्य संख्या तदाधिक्ये । डः कर्तव्यो मतो मम । यदि तावच्छतानि संख्यायन्ते शताधिक्ये भवितव्यम् । अथ सहस्राणि संख्यायन्ते सहस्राधिक्ये भवितव्यम् । डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः * । डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः । अगमको-

---

मन्त्रितस्वरबाधनार्थमन्तस्यैवोदात्तत्वं विधातुमिति प्रश्नः । उदात्त इति । आदेरिति भावः । स्थानिवद्भावात्पित्त्वादनुदात्तत्वं प्राप्तं बाधित्वा चित्स्वरे प्राप्ते आदेरुदात्तत्वं विधीयते । प्रत्ययस्वरेणापीति । स्थानिवद्भावात्प्रत्ययत्वाच्चित्स्वरं तुपूर्वपक्षवादित्वान्न पश्यति । सर्वदर्शित्वे पूर्वपक्षमेव न विदधीत । कुत एतदिति । स्वरान्तरबाधनार्थमन्तस्यैवोदात्तमस्त्विति मन्यते । हे उभयेत्यामन्त्रिताद्युदात्तत्वप्रसङ्गः । उदात्तेति । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते इति चित्स्वर एवानेन बाध्यते नामन्त्रितस्वरः ।

तदस्मिन् । अधिके समानजाताविति । समाना या जातिस्तस्यां सत्यामधिकेऽर्थे वर्तमानात् प्रत्ययः । प्रकृतिप्रत्ययार्थयोस्तुल्यजातीयत्वे प्रत्यय इत्यर्थः । न्यायप्राप्त एवायमर्थ उक्तः । तथा ह्येकादशाधिका अस्मिन् गोशत इति वाक्ये शतविशेषणत्वेनाप्युपात्ता गावः संनिधानात् प्रकृत्यर्थमपि विशिंषन्ति । एवं वृत्तावपि एकादशं गोशतमित्युक्ते गावः प्रकृत्यर्थतया प्रतीयन्ते । शब्दान्तरप्रयोगमन्तरेणाधिकाधिकिभावस्तुल्यजातिविषय एव प्रसिद्धः । न च वृत्तौ भिन्नजातीयसंख्येयवाचिना शब्देन प्रकृत्यर्थो विशेष्टुं शक्यते । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं नेति न्यायात् । तस्य संख्येति ।

निर्देशोऽनिर्देशः। नह्येकादशानां शतमधिकरणम्। सिद्धं तु पञ्चमीनिर्देशात् *। सिद्धमेतत्। कथम्। पञ्चमीनिर्देशः कर्तव्यः। तदस्मादधिकमिति। स तर्हि पञ्चमीनिर्देशः कर्तव्यः। न कर्तव्यः। यद्यपि तावद्वैषयिके व्यापके वाधिकरणे संभवो नास्ति। औपश्लेषिकमधिकरणं विज्ञास्यते। एकादश कार्षापणा उपश्लिष्टा अस्मिन्छते एकादशं शतम्॥

शदन्तविंशतेश्च॥ ४६॥ किमर्थं शद्ग्रहणेन्तग्रहणम्। शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम्। शद्ग्रहणेऽन्तग्रहणं क्रियते प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति। इह न प्राप्नोति एकत्रिंशं शतम्। इष्यते चात्रापि स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति। अन्तग्रहणमेवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति। संख्याग्रहणं च *। संख्याग्रहणं च कर्तव्यम्। इह मा भूत। गोत्रिंशदधिका अस्मिञ्छत इति। विंशतेश्च। विंशतेश्चान्तग्रहणं कर्तव्यमिहापि यथा स्यात्।

---

शतानां सहस्रं शतसहस्रमिति व्युत्पत्तिः क्रियते सहस्राणां शतं शतसहस्रमिति च। संख्याया अल्पीयस्या इति द्वन्द्वे चाद्वन्द्वे च स्मरणाच्छतस्य पूर्वनिपातः। तत्र शतानां सहस्रमिति शतानि संख्यायन्त इति तान्येव प्रकृत्यर्थतया विज्ञायन्ते। एकादशशतान्यधिकान्यस्मिन्शतसहस्रे तदेकादशशतसहस्रमिति। शतसहस्राणां शतं शतसहस्रमिति तु सहस्राणां संख्येयत्वात्तेषामेव प्रकृत्यर्थत्वम्। एकादशसहस्राण्यधिकान्यस्मिन्नेकादशमिति प्रकारणादिवशाच्छतानां सहस्राणां वा संख्येयत्वावसायः। यस्य संख्या तदाधिक्येइत्येतत्प्रत्ययार्थे न तुल्यजातीयस्य प्रकृत्यर्थस्याश्रयणाल्लभ्यतइति नायमपूर्वार्थः। न ह्येकादशानामिति। तेषां शतेन्तर्भावादिति भावः। पञ्चमीनिर्देश इति। यस्मादधिकमिति निपातनाद् बुद्धिप्रकल्पितापायाश्रयणाद्वा पञ्चमी। औपश्लेषिकमिति। एवं चाधिकसंबन्धे पञ्चमीसप्तम्यौ भवतः। अधिका खारी द्रोणेनेति कर्तरि तृतीयापि भवति॥

शदन्त। अन्तग्रहणमिति। केवलस्य शतः प्रातिपादिकस्यासंभवात्प्रत्ययग्रहणपरिभाषया वा तदन्तविधिर्भविष्यतीति प्रश्नः। संख्याग्रहणं चेति। संख्याया अवयवे तयबित्यतः संख्याया इत्यनुवर्तत इति व्याख्यानं कर्तव्यमित्यर्थः। एकत्रिंशदादयश्शब्दाः संख्यान्तरस्य नरसिंहादय इव जात्यन्तरस्य वाचका न तु संख्यासमूहस्य। विंशतेश्चेति। ग्रहणक

एकविंशं शतम्। चकारात्संख्याग्रहणं च कर्तव्यम् इह मा भूत्। गोविंशतिरधिकास्मिन्छत इति॥

संख्याया गुणस्य निमाने मयट्॥ ४७॥ निमाने गुणिनि *। निमाने गुणिनीति वक्तव्यम्। किं प्रयोजनम्। गुणेषु मा भूत्। भूयसः *। भूयस इति च वक्तव्यम्। किं प्रयोजनम्। भूयसो वाचिकायाः संख्याया उत्पत्तिर्यथा स्यात्। अल्पीयसो वाचिकायाः संख्याया उत्पत्तिर्माभूदिति एकोऽन्यतरः *। एकश्चेदन्यतरो भवतीति वक्तव्यम्। इह मा भूत्। द्वौ यवानां त्रय उदश्वित इति। समानानाम् *। समानानां चेति वक्तव्यम्। इह मा भूत्। एको-

---

तेति तदन्तविधिनिषेधात्तदन्तादपि यथा स्यादिति वचनम्।

संख्यायाः। तदस्य संजातमित्यतस्तु दस्येत्यनुवर्तते। मेङ् प्राणिदान इत्यस्माद्धातोः करणे ल्युटि निमानशब्दः स च मूल्यवाची प्रकृत्यर्थविशेषणं चैतत्। निमाने वर्तमानात्संख्यावाचिनोऽस्येति षष्ठ्यर्थे मयट्प्रत्ययो गुणस्य चेन्निमानं भवति। गुणशब्दः समानावयववचनः निमानस्य निमेयापेक्षत्वान्निमेयं प्रत्ययार्थः संपद्यते। निमानस्य च गुणत्वमन्तरेण निमेयस्य गुणत्वं नोपपद्यते इति सामर्थ्यान्निमानस्यापि गुणत्वं विज्ञायते। यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानामित्युदाहरणम्। भागविशेषप्रतिपत्त्यर्थं यवादेः प्रकृत्यर्थविशेषणस्योपादानं नित्यसापेक्षत्वाच्च वृत्तिर्भवति। संख्याया इति किम्। यवभागौ निमानमस्योदश्विद्भागस्य। गुणस्येति किम्। द्वौ कार्षापणौ निमानमस्य व्रीहेर्द्विमयो व्रीहिः कार्षापणयोरिति मा भूत्। निमानइति किम्। यवानां द्वौ भागौ समीपेऽस्योदश्विद्भागस्येत्यत्र माभूत्। गुणिनीति। द्विमयमुदश्विदिति। गुणिनि निमेये प्रत्ययो यथा स्यादित्येवमर्थम्। गुणेषु मा भूदिति। स्वार्थे मा भूदित्येवमर्थमित्यर्थः। अन्यथा द्वौ यवानां गुणौ निमानमस्योदश्विद्भागस्य द्विमयौ यवानामुदश्वित इति स्वार्थे मयट् प्रसज्येत। भूयस इति निमेयभागसंख्याया निमानभागसंख्या यदाधिका भवति तदा प्रत्ययो यथा स्यादेकोयवभागौ निमानमस्योदश्विद्भागस्येत्यत्र मा भूदिति। एकोऽन्यतर इति। अन्यतरशब्देन निमेयमेव विवक्षितम्। एक एव यदि निमेयगुणो भवति तदा प्रत्ययः। द्वयोर्बहुषु च निमेयगुणेषु न भवति। द्वौ यवानां त्रय उदश्वित इति। नन्वत्र भूयस्त्वाभावान्न भविष्यति एवं तर्ह्युदाहरणदिगियम्। इदंत्वत्रोदाहरणं त्रयो यवानां द्वावुदश्वित इति। अथ वा द्वौ यवानां निमेयौ त्रय उदश्विता भागा निमानमिति विवक्षायामुदाहरणम्। एको य-

यवानामध्यर्धमुदश्वित इति। तत्तर्हीदं बहु वक्तव्यम्। न वक्तव्यम्। यत्तावदुच्यते गुणिनीति वक्तव्यमिति। न वक्तव्यम्। गुणेषु कस्मान्न भवति। अस्येति वर्तते। यदुक्तं भूयस इति वक्तव्यमिति। न वक्तव्यम्। अल्पीयसो वाचिकायाः संख्याया उत्पत्तिः कस्मान्न भवति। अनभिधानात्। यदुक्तमेकश्चेदन्यतरो भवतीति वक्तव्यमिति। न वक्तव्यम्। कस्मान्न भवति। द्वौ यवानां च य उदश्वित इति। तन्त्रं विभक्तिनिर्देशः। यदप्युच्यते। समानानामिति वक्तव्यमिति। न वक्तव्यम्। कस्मान्न भवति एको यवानामध्यर्धमुदश्वित इति। अनभिधानात्। निमेये चापि दृश्यते। निमेये चापि प्रत्ययो दृश्यते। द्विमया यवाः। त्रिमयाः। किं पुनरिह निमानं किं निमेयम्। यावता उभयं त्यज्यते। सत्यमेवैतत्। क्वचित्तु का चित् प्रसृततरा गतिर्भवति। तद्यथा। समाने त्यागे धान्यं विक्रीणीत यवान् विक्रीणीते न कश्चिदाह कार्षापणं विक्रीणीत इति। अथ वा येनाधिगम्यते तन्निमानं यदधिगम्यते तन्निमेयम्॥

तस्य पूरणे डट्॥ ४८॥ तस्यपूरणे इत्यतिप्रसङ्गः *। तस्य पू-

---

वानामध्यर्धमुदश्वित इति। भूयस इत्येतदपेक्ष्येदमुदाहरणम्। तदपेक्षायां तु द्वौ यवानामध्यर्ध मुदश्वित इत्युदाहार्यम्। अन्ये त्वध्यर्ध शब्दात्प्रत्ययनिवृत्त्यर्थमिदमुदाहरणमित्याहुः। तदयुक्तम्। अध्यर्धशब्दस्य समासकनोरेवं संख्यासंज्ञात्वादन्यत्र संख्यात्वाभावात् प्रत्ययाप्रसङ्गात्। अध्यर्धपञ्चमादयोपि समासकनोरेवं संख्यासंज्ञा नान्यत्रेति तेभ्योपि प्रत्ययाप्रसङ्गः। अस्येति वर्तत इति। तेन स्वार्थे मयण्न भवति। किं तर्हि निमेये चोरादौ स्वभागापेक्षया लब्धगुणव्यपदेशे निमेयगुणमात्रे तु प्रत्ययो न भवति। अनभिधानात्। तन्त्रमिति। पशुना यजेतेत्यादिवद् गुणस्येत्येकत्वसंख्या विवक्षिता। एतदर्थमेव गुणनिमान इति लघुरपि समासनिर्देशो न कृतः। अनभिधानादिति। अन्यूनाधिकैकगुणमुदश्विदादिनिमेय वक्तुं प्रत्ययान्तस्य सामर्थ्यादित्यर्थः। द्विमया यवा इति। उदश्वितौ द्वौ गुणौ निमेयौ येषामेकगुणानां यवानां ते द्विमयाः। यावतेति। तथा च निमेयस्यापि निमानत्वान्निमेये चापि दृश्यत इति न वक्तव्यमिति मन्यते। प्रसृततरा गतिरिति। आशु द्रागिति प्रतिपत्तिरित्यर्थः। अथ वेति। येन मूल्येन करणेन क्रय्यं प्राप्तुमिष्यते तन्निमानं यत्प्रेप्स्यते तन्निमेयमित्यर्थः। देशकालापेक्षव्यवहारापेक्षत्वान्निमानानिमेयभावस्य॥

तस्य पूरणे डट्। तस्येति संबन्धमात्रं विवक्षितं नैकत्वम्। न ह्येकस्य पूरणं संभव-

रण इत्यतिप्रसङ्गो भवति। इहापि प्राप्नोति। पञ्चानामुष्ट्रिकाणां पूरणो घट इति। सिद्धं तु संख्यापूरण इति वचनात् *। सिद्धमेतत्। कथम्। संख्यापूरण इति वक्तव्यम्। एवमपि घटे प्राप्नोति। संख्येयं ह्यसावद्भिः पूरयति। संख्यापूरण इति ब्रूमः। न ब्रूमः संख्येयपूरण इति। यस्य भावादन्यसंख्यात्वं तत्र *। अथ वा यस्य भावादन्या संख्या प्रवर्तते तत्रेति वक्तव्यम्। एवमपि द्वितीये ऽध्याये अष्टम इति प्राप्नोति। सर्वेषां हि तेषां भावात्संख्या प्रवर्तते। चरमोपजाते पूर्वस्मिंश्चापगते * चरम उपजाते पूर्वस्मिंश्चानपगते इति वक्तव्यम्। एवमपि एकादशी द्वादश्यौ सौविष्टकृती इदं द्वितीयमिदं तृतीयं दश दशमानीति न सिध्यति। सूत्रं च भिद्यते। यथा-

---

सीति द्व्यादिभ्य एव द्विवचनबहुवचनान्तेभ्यः प्रत्ययविधिः। तस्य पूरण इति। संख्यावाचिनः शब्दात् पूरणे डट्प्रत्ययः इत्येतावानेव सूत्रार्थः। तथा च लब्धपञ्चत्वसंख्यानां संख्येयानामुष्ट्रिकादीनां पूरणे घटे प्रत्ययोनिष्टः पाप्नोति। एवमपीति। आधारधर्मेण पूरणेनाधेयायाः संख्यायास्तद्द्वारेण संस्पर्शादिति भावः। संख्यापूरण इति ब्रूम इति। द्वे संख्याग्रहणे अनुवर्तेते। तत्रैकं प्रकृतिविशेषणमपरं पूरणविशेषणम्। ततश्च येन पञ्चत्वादिसंख्या संपद्यते स प्रत्ययार्थः। अथ वैकस्मिन्नेव संख्याग्रहणे ऽनुवर्तमाने प्रत्यासत्त्या संख्यापूरण एव प्रत्ययो भवति न तु विप्रकृष्टे पञ्चत्वादिसंख्यासंख्येये ऽनन्तर्भूते। यस्य वेति। न्यासान्तरं वा कर्त्तव्यमित्यर्थः। तेन पञ्चत्वसंख्या भवत्यनेनेत्यत्रार्थे पञ्चम इति भवति। एवमपीति। प्रसिद्धसंनिवेशविशेषस्य ग्रन्थस्य यो द्वितीयोध्यायः। यथेह समर्थः पदविधिरित्यादिस्तस्याप्यष्टमशब्देनाभिधानं प्राप्नोति। तद्भावे ऽष्टत्वसंख्याया भावात्। तदभावे ऽभावात्। द्वितीयग्रहणं चोपलक्षणं न्यायस्य तुल्यत्वात्प्रथमाध्यायादावप्यष्टमाद्यभिधानप्रसङ्गात्। यदा तु व्युत्क्रमेण गणना क्रियते तदा द्वितीयोध्यायः पश्चाद्गण्यमानोऽष्टमादिव्यपदेशत्वे नेष्यत एव। तथा च भाष्यकारो वक्ष्यति। भवत्येवेति। पूरणग्रहणे तु क्रियमाणे चरमोपजातस्य गणनापेक्षायां पूरणत्वात् संनिवेशमात्रापेक्षया द्वितीयेष्टमव्यपदेशाभावः। द्वितीयं न्यासान्तरमाह। चरमोपजात इति। गणनायां क्रियमाणायां पूर्वस्मिन्संख्येयेऽनुपगते बुद्ध्या परिगृहीतत्वादपेक्षिते यद् बुद्धौ पश्चादुपजायते तत्र प्रत्यय इत्यर्थः। एकादशीद्वादश्याविति। द्वादशीसंनिधावेकादश्याश्चरमोपजातत्वाभावः। एवं तृतीयसंनिधौ द्वितीयस्य चरमत्वाभावः दशदशमानीति। शततमस्येव चरमोपजनात्नवानां दशमानां चरमत्वाभावः। सूत्रं चेति। न च केवलमव्याप्तिदोषो

न्यासमेवास्तु। ननु चोक्तं तस्य पूरणे इत्यतिप्रसङ्ग इति। परिहृतमेतत्। सिद्धं तु संख्यापूरणे इति वचनादिति। तत्तर्हि संख्याग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। संख्याया गुणस्य निमाने मयडिति। एवं तर्हि नेयं वृत्तिरुपालभ्यते। किं तर्हि वृत्तिस्थानमुपालभ्यते। वृत्तिरेवात्र न प्राप्नोति। किं कारणम्। प्रत्ययार्थाभावात्। नैष दोषः। वचनात्स्वार्थिको भविष्यति। अथ वा पूर्वस्याः संख्यायाः परापेक्षयोत्पत्तिर्वक्तव्या। उत्तरा च संख्या आदेशो वक्तव्यः। अथ वा न्यूने ऽयं कृत्स्नशब्दो द्रष्टव्यः। चतुर्षु पञ्चशब्दः। अथ वा सर्व एव द्व्यादयोऽन्योन्यमपेक्षन्ते। यद्येवं द्वितीये ऽध्याये अष्टम इति प्राप्नोति। भवत्येव। प्रकृत्यर्थाद्बहिः सर्वा वृत्तिः

---

यावत् सूत्रभेदोपीति चशब्दस्यार्थः। एवं तर्हीति। वृत्तिः परार्थाभिधानमुच्यते। उपसर्जनपदानां प्रधानार्थाभिधानात्। तदयमर्थः। इष्टविषयवदनिष्टे ऽपि विषये प्रवृत्तिः प्राप्नोत्येवमुपालम्भो न क्रियते। किं तर्हि इष्टे विषये प्रत्ययो न सिध्यति अनिष्ट एव प्राप्नोतीत्युच्यते। वृत्तिस्थानमिति। प्रत्ययार्थ इत्यर्थः। प्रत्ययार्थे हि स्वार्थोपसर्जने प्रकृतिर्वर्तत इति प्रत्ययार्थो वृत्तिस्थानम्। अयमत्रार्थः। प्रकृत्यर्थव्यतिरिक्तेन प्रत्ययार्थेन भवितव्यम्। यथौपगवमिति। इह तु पञ्चमः पञ्चशब्दार्थेऽन्तर्भूतः। तथा हि। पञ्चानीयतामित्युक्ते पञ्चमस्याप्यानयनं भवति। ततश्चात्र प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावात्पञ्चानमुष्टिकानां पूरणो घट इत्यत्रैवानिष्टे विषये प्रत्ययप्रसङ्गः। वचनादिति। प्रकृत्यर्थान्तर्भावमात्रेण स्वार्थिकत्वं न तु सर्वात्मना तत्र संख्याग्रहणद्वयानुवर्त्तनादन्तरङ्गत्वाद्वा संख्यासंप्रतिपत्तिहेतौ प्रकृत्यर्थान्तर्भूतेपि प्रत्ययो भविष्यतीत्यर्थः। पूर्वस्या इति। चतुःशब्दादिभ्यः प्रत्ययो विधेयः पञ्चादयश्चादेशाः कर्तव्या इत्यर्थः। तेन चतुर्णां पञ्चत्वसंख्योपजननद्वारेण पूरणः पञ्चमः। न्यून इति। यथार्द्धतृतीया द्रोणा इत्यत्रार्द्धद्रोणोपि द्रोणशब्देनाभिधीयते। तथाच द्रोणा इति बहुवचनमवयवेन विग्रहः समुदायः समासार्थः तथेहापि वृत्तिविषये चतुर्षु पञ्चशब्दो वर्त्तते। तेन न्यूनानां पञ्चानां पूरणः पञ्चमः। न्यूनाश्च पञ्च चत्वारो भवन्ति। तथा हि पञ्चसु लब्धव्येषु चतुरो लब्ध्वा ब्रवीति न्यूनानि पञ्च लब्धानीति।। अथ वेति। सर्वेष्वेव पञ्चशब्दो वर्तत इत्येकैकमन्तरेण पञ्च न भवन्तीति पञ्चभ्यो बुद्ध्यैकतमं निष्कृष्य प्रत्ययो विधीयते। पञ्चानां पूरणः पञ्चसंख्यानिमित्तत्वात्पञ्चमः। भवत्येवेति। गणनापेक्षायां यथा पूर्वं व्याख्यातम्। प्रकृत्यर्थादिति। पूर्वोक्तार्थसंग्रहश्लोकाः। बहिरिति। बाह्यार्थे सर्वा वृत्तिर्न तु स्वार्थ इत्यर्थः। वचनादिति

प्रायेण लक्ष्यते। पूरणे स्यात्कथं वृत्तिर्वचनादिति लक्ष्यताम्॥ १॥ तस्याः पूर्वा तु या संख्या तस्यां भवतु तद्धितः। आदेशश्चोत्तरा संख्या तथा न्याय्या भविष्यति॥२॥ न्यूने वाकृत्स्नशब्दोयं पूर्वस्यामुत्तरा यदि। सामर्थ्यं च तथा तस्यास्तथा न्याय्यं भविष्यति॥३॥ अन्योन्यं वा व्यपाश्रित्य सर्वस्मिन् द्व्यादयो यदि। प्रवर्तन्ते तथा न्याय्या वृत्तिर्भवति पूरणे॥ ४॥ बहूनां वाचिका संख्या पूरणश्चैक इष्यते। अन्यत्वादुभयोर्न्याय्यावार्क्षीशाखानिदर्शनम्॥ ५॥

नान्तादसंख्यादेर्मट्॥ ४९॥ मडादिषु यस्यादिस्तन्निर्देशः *। मडादिषुयस्यादिः क्रियते तन्निर्देशः कर्तव्यः। अस्यादिर्भवतीति वक्तव्यम्। अक्रियमाणे प्रत्ययाधिकारात् प्रत्ययोयं विज्ञायेत। तत्र कोदोषः। प्रत्ययान्तरे हि सति स्वरे दोषः * प्रत्ययान्तरे हि सति स्वरे दोषः स्यात्। विंशतितमः। एष स्वरः प्रसज्येत। विंशतितम इति चेष्यते। स तर्हि तथा निर्देशः कर्तव्यः। न कर्तव्यः। प्रकृतं डड्ग्रहणमनुवर्तते क्व प्रकृतम्। तस्य पूरणे डडिति। तद्वै प्रथमानिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः। नान्तादित्येषा पञ्चमी डडितिप्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति। प्रत्ययविधिर-

---

स्वार्थ इत्यर्थः। पूर्वस्यामुत्तरेति। यदोत्तरसंख्यावाची पञ्चादिशब्दः पूर्वसंख्यायां वर्तत इत्यर्थः। सामर्थ्यं चेति। तस्या न्यूनार्थाभिधायिन्याः संख्यायाः प्रत्ययार्थेन संबद्धत्वंन्याय्यमित्यर्थः। अन्योन्यं वेति। अपेक्षितपरस्पराः संख्येयाः पञ्चादिशब्दवाच्यास्तेषामन्यतमे पञ्चत्वादिसंख्याहेतौ प्रत्ययः बहूनामिति। पूर्वस्मात्पञ्चादयं भेदः पूर्वस्मिन् पञ्चेसर्व एवातिरोहितभेदः पञ्चशब्दार्थः। उत्तरत्र तु समुदायः शब्दार्थः। अवयवस्तु नोपात्तो न च त्यक्तः। प्रत्ययेन त्वभिधीयते। अन्यत्वादुभयोरिति। समुदायावयवयोर्भेदाद् समुदायः प्रकृत्यर्थोवयवः प्रत्ययार्थः। यथा वार्क्षी शाखेति। प्रत्यस्तमितमूलाद्यवयवसमुदायः प्रकृत्यर्थः। अवयवस्तु शाखाप्रत्ययार्थोऽनुदात्तादेश्चेत्यञ्प्रत्ययः।

नान्ता। मडादिष्विति। षष्ठीस्थाने योगेत्यत्र षष्ठीति योगविभागात्। तत्र चाद्यन्तौ टकिताविन्त्यस्यानुवर्त्तनात् षष्ठीनिर्दिष्टस्यागमिनोभवाच्चरेष्ट इत्यादिवन्मडादयो डडपवादाः प्रत्ययाः प्राप्नुवन्ति। तत्र मट्थट्थुकामागमत्वप्रत्ययत्वयो विशेषाभावः। तमट् तु प्रत्ययत्वे सत्याद्युदात्तः स्यादागमत्वे त्वनुदात्तो भवतीति डट्स्वरेण विंशतितम इन्तोत्यदात्तत्वं भवति। प्रकृतमिति। स्वरितत्वादिति भावः। विहित इति। नाम्नो वि-

यम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति। नायं प्रत्यय-विधिर्विहितः प्रत्ययः प्रकृतश्चानुवर्तते॥

षट्कतिकतिपयचतुरां थुक्॥५१॥ चतुरश्छयतावाद्यचरलोपश्च *। चतुरश्छयतौ वक्तव्यौ आद्यचरलोपश्च वक्तव्यः। तुरीयम्। तुर्यम्। अथ किमर्थं थट्थुकौ पृथक् क्रियेते। न सर्वं थडेव वा स्यात् थुगेव वा। थट्थुकोः पृथक्करणं पदान्तविधिप्रतिषेधार्थम् *। थट्थुकोः पृथग्ग्रहणं क्रियते पदान्तविधिप्रतिषेधार्थम्। पदान्तविध्यर्थम्। पदान्तप्रतिषेधार्थं च। पदान्तविध्यर्थं तावत्। पञ्चमयानि पञ्चथानि भवन्ति। रथः सप्तथः। पदान्तस्येति नलोपो यथा स्यात्। पदान्तप्रतिषेधार्थम्। षष्ठः। पदान्तस्येति जश्त्वं मा भूत। इह चतुर्थ इति। पदान्तस्येति विसर्जनीयो मा भूदिति॥

बहुपूगगणसंघस्य तिथुक्॥५२॥ बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः *। बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिर्वक्तव्या। इहापि यथा स्यात्। बह्वीनां पूरणी बहुतिथी। कतिपयानां पूरणी कतिपयथी। तावतीनां पूरणी तावतिथी। बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः सिद्धा। कथम्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति। पुंवद्वचनं च *। पुंवद्भावश्च वक्तव्यः। बह्वीनां पूरणी बहुतिथी। किमर्थम् न भस्याढे तद्धिते पुंवद्भवतीति सिद्धम्। भस्येत्युच्यते। यजादौ च भं भवति। न चात्र यजादिं प-

---

धानार्था डट इहानुवृत्तिरपि त्वागमसंबन्धप्रतिपत्त्यर्थेत्यर्थः॥

षट्। आद्यचरलोप इति। अचरशब्देनाच् सहितं व्यञ्जनमुच्यते। छयङ्गां च डण् न बाध्यते। डटि चतुरस्थुग्विधानात्। न सर्वमिति। सर्वं थकाररूपं थडेव क्रियतां थुगेव वेत्यर्थः। पदान्तविधिप्रतिषेधार्थमिति। विधिप्रतिषेधौ नलोपादीनां पदान्तकार्याणां विषयविभागेन व्यवतिष्ठेयातामित्यर्थः। पञ्चथानीति। थटि सति स्वादिष्विति पदत्वात्तन्निबन्धनो नलोपो भवति। थुकि तु सति थकारान्तस्य भत्वं स्यात्। षष्ठ इति यद्यत्र थट् क्रियते ततः षकारान्तस्य पदत्वात्तन्निबन्धनं जश्त्वं स्यात्। थुकि तु तदन्तस्य भत्वात्पदत्वाभावः॥

बहु। लिङ्गविशिष्टादिति। लिङ्गसहचरितः प्रत्ययो लिङ्गं तदधिकादित्यर्थः।

श्यामः । किं कारणम् । तिथुका व्यवहितत्वान्न प्राप्नोति । इदमिह संप्रधार्यम् । तिथुक् क्रियतां पुंवद्भाव इति । किमत्र कर्तव्यम् । परत्वात्पुंवद्भावः । नित्यस्तिथुक् । कृते पि पुंवद्भावे प्राप्नोति । अकृते पि प्राप्नोति । तिथुगप्यनित्यः । अन्यस्य कृते पुंवद्भावे प्राप्नोत्यन्यस्याकृते । शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति । अन्तरङ्गस्तर्हि तिथुक् । कान्तरङ्गता । उत्पत्तिसंनियोगेन तिथुगुच्यते । उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्य पुंवद्भावः । पुंवद्भावे कृते पुनः प्रसङ्गविज्ञानात् तिथुक् सिद्धः । बहुतिथी ॥

षष्ठ्यादेश्चासंख्यादेः ॥५८॥ असंख्यादेरिति किमर्थम् । इह मा भूत् । एकषष्ठः । द्विषष्ठः । असंख्यादेरिति शक्यमवक्तुम् । कस्मान्न भवति एकषष्ठो द्विषष्ठ इति । षष्ठिशब्दात्प्रत्ययो विधीयते । कः प्रसङ्गो यदेकषष्ठिशब्दात् स्यात् । नैव प्राप्नोति । नार्थः प्रतिषेधेन । तदन्तविधिना प्राप्नोति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते । एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति । किमेतस्य

---

तिथुकेति । तिथुकि कृते तदन्तस्य भत्वं न तु स्त्रीप्रत्ययान्तस्येत्यर्थः । उत्पत्तिसंनियोगेनेति । यदैव प्रकृतयः पूरणविषयाः प्रत्ययोत्पत्तिनिमित्तं तदैवागम इत्यर्थः । प्रकृतिप्रत्ययाविति । भस्येति वचनादुभयमाश्रीयते । सिद्धश्चेति । तेन प्राक् प्रत्ययोत्पत्तेः पुंवद्भाव इत्यर्थः ॥

षष्ठ्यादेः । किमर्थमिति । इह प्रत्यासत्त्यापङ्क्त्यादिसूत्रनिपातिताः षष्ठ्यादयो गृह्यन्ते न लोकप्रसिद्धा विप्रकृष्टास्तथा चानर्थकः प्रतिषेध इति मत्वा प्रश्नः । इतरो व्याप्तिन्यायाश्रयाल्लौकिकग्रहणादतिप्रसङ्ग इति मत्वाह । एकषष्ठ इति । प्रत्यासत्तिन्यायाश्रयेणाह । षष्ठिशब्दादिति । षष्ठिशब्दस्योपलक्षणत्वात्सप्तत्यादयोपि गृह्यन्ते । प्रत्यय इति । प्रत्ययभक्तत्वात्तदवयवत्वादागम एव प्रत्ययशब्देनोक्तः । तदन्तविधिनेति । शास्त्रीयाणामपि षष्ठ्यादीनां ग्रहणे तैः संख्याया विशेषणात्तदन्तविधौ सति षष्ठ्याद्यन्तस्य संख्यावाचिनो ग्रहणप्रसङ्गः । भवतीहेति । इह प्रकरण इत्यर्थः । तत्र यदि लौकिकसंख्याग्रहणं ज्ञाप्यते तदैकान्नविंशतिशब्दान्मयण्न प्राप्नोतीति भाष्यकारेण 'शास्त्रीयग्रहणाभ्युपगमेन तदन्तविधिज्ञापनमुक्तम् । एवं चैकान्नविंशतितम इति भाव्यमिति लभ्यते । यत्र च ज्ञापकात्तदन्तविधिस्तत्र व्यपदेशिवद्भावात् केवलानामपि ग्रहणं भवति । ज्ञापकेन सामान्येन ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति व्यपदेशिवद्भावो ऽप्रातिपदि-

ज्ञापने प्रयोजनम्। एकविंशतितमः। एतत्सिद्धं भवति॥

मतौ छः सूक्तसाम्नोः॥ ५९॥ छप्रकरणे ऽनेकपदादपि*। छप्रकरणेऽनेकपदादपीति वक्तव्यम्। इहापि यथा स्यात्। अस्यवामीयम्। कयाशुभीयम्। किं पुनः कारणं न सिध्यति। अप्रातिपदिकत्वात्। सिद्धं तु प्रातिपदिकविज्ञानात्*। सिद्धमेतत्। कथम्। प्रातिपदिकविज्ञानात्। कथं प्रातिपदिकविज्ञानम्। स्वं रूपं शब्दस्याशब्दसंज्ञेति वचनात्। स्वरूपं शब्दस्याशब्दसंज्ञा भवतीति। एवं योऽसावाम्नाये अस्यावामशब्दः पठ्यते सोऽस्यपदार्थः। किं पुनरन्ये आम्नायशब्दाः। अन्य इमे। ओमित्याह। कुत एतत्। आम्नायशब्दानामान्यभाव्यं स्वरव-

---

केनेति परिभाषाद्वयस्यानुपस्थानज्ञापनादथ वा सूत्रोपात्तानां केवलानां प्रथमं ग्रहणं भवति। ततो ज्ञापकेन लक्षणविशेषो वाक्यान्तरमनुमीयतइति तदन्तस्यापि ग्रहणं भवति। तेन विंशतितम इति भवति। एकषष्ट्यादिभ्यो विंशत्यादिभ्य इति विकल्पेन तमड् भवति। केचित्त्वसंख्यादेरिति प्राप्तिमात्रापेक्षया निषेधाश्रयणादसंख्यादेरिति योगविभागाद्वा विकल्पितस्यापि तमटो निषेधमिच्छन्त एकषष्टितम इति न भवितव्यमित्याहुः। एतत्तु भाष्यकारेणानुक्तत्वादसंबद्धम्। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्येतच्च त्यागहेतुत्वाभावात् कथं त्यज्येत॥

मतौ छः। मतुशब्देन साहचर्यान्मत्वर्थ उच्यते। तद्विशेषणं सूक्तसाम्नी। प्रधानानुयायित्वाच्च गुणानां प्रथमासमर्थविभक्तिरस्त्युपाधिकत्वं च प्रकृते गम्यते। अच्छावाकशब्दो ऽस्मिन्नस्ति अच्छावाकीयं सूक्तमित्युदाहरणम्। अनेकपदादपीति। कर्मधारयो बहुव्रीहिर्वा पदसमुदायादित्यर्थः। अस्य वाम इत्यस्मिन्नस्तीति षष्ठीप्रथमयोरुपलक्षणात्पदसमुदायात्मकत्वात्प्रातिपदिकत्वाभावात्प्रत्ययो न प्राप्नोतीति वचनम्। सिद्धं त्विति। अस्य वामस्येति वेति यत्पदद्वयं पठ्यते तदेकदेशस्यास्यवामशब्दस्य यदनुकरणमस्यवामशब्दोनुकार्येणार्थेनार्थवत्त्वाल्लब्धप्रातिपदिकसंज्ञस्तस्मादेतत्प्रत्ययविधानमित्यर्थः। स्वं रूपमिति। दृष्टान्तत्वेनास्योपन्यासः। यथा स्वंरूपमिति वचनादग्नेर्ढगित्यत्राग्निशब्दस्वरूपमग्निशब्दस्य प्रत्यायकमेवमाम्नायपठितस्यास्यवामशब्दस्य छप्रत्ययप्रकृतिरस्यवामशब्दः प्रत्यायक प्रत्यर्थवत्त्वात्पदसमुदायरूपत्वाभावाच्च प्रातिपदिकत्वमित्यर्थः। न त्वनुकार्यानुकरणविषये स्वंरूपमित्युपतिष्ठते। स्वशास्त्रविषयत्वादस्य लौकिकत्वाच्चानुकार्यानुकरणभावस्य। एवं योसाविति। एवंशब्दस्तथाशब्दस्यार्थे। यथात्र शास्त्रेवचनात् स्वंरूपं शब्दस्य प्रत्यायकं तथानुकार्यस्यानुकरणमित्यर्थः। किं पुनरिति। अभिन्नरूपत्वा-

र्णानुपूर्वीदेशकालनियतत्वात् * । आम्नायशब्दानामान्यभाव्यमन्यभावः सिद्धः । स्वरवर्णानुपूर्वीदेशकालनियतत्वात् । स्वर । स्वरो नियत आम्नाये अस्यवामशब्दस्य । वर्णानुपूर्वी । वर्णानुपूर्वी खल्वप्याम्नाये नियता अस्यवामशब्दस्य । देशः । देशः खल्वप्याम्नाये नियतः । श्मशाने नाध्येयम् । चतुष्पथे नाध्येयमिति । कालः । कालः खल्वप्याम्नाये नियतः । नामावास्यायामधीयीत न चतुर्दश्यामिति । पदैकदेशसुबलोपदर्शनाच्च * । पदैकदेशः खल्वप्याम्नाये दृश्यते । अस्यवामीयम् । ननु चैष सुब्लोपः स्यात् । सुबलोपदर्शनाच्च । सुबलोलोपःखल्वपि दृश्यते । अस्य वामीयमिति । तस्मादन्ये आम्नायशब्दा अन्ये इमे । यदि तर्हि अन्यआम्नायशब्दा अन्य इमे मत्वर्थो नोपपद्यते । अस्यवामशब्दोनास्तीति । न संज्ञा संज्ञिनं व्यभिचरति ॥

---

दनुकार्यानुकरणयोरभेदं मन्यमानः पृच्छति । आम्नायशब्दानामिति । अन्यस्य भावोन्यभावः । अन्यभाव एवान्यभाव्यम् । ब्राह्मणादिषु प्रतिषदपाठात् स्वार्थे ष्यञ् । अथ वा अन्यो भावोन्यद्वस्तु तस्य भाव आन्यभाव्यम् । अन्यवस्तुत्वमित्यर्थः । यद्यप्यनुकार्यानुकरणयोरर्थभेदादन्यत्वनिश्चयस्तथाप्यन्यत्वस्य दार्ढ्याय स्वरादिभेदोपन्यासः । स्वरइति । अस्येत्यूडिदमित्यन्तोदात्तत्वम् । वामशब्दः कषोत्वत इत्यन्तोदात्तः । अथ वा ज्वलितिकसन्तेभ्योण इति णान्तः प्रत्ययस्वरेणान्तोदात्तः । अनुकरणं त्वस्यवामशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । प्रकृतिवदनुकरणमित्येतत्तु विरोधादत्र स्वरे नाश्रीयते । अनुकरण एकस्मिन् पदे उदात्तद्वयविरोधात् । वर्णानुपूर्वीति । अनुकरकरणं तु व्युत्क्रमेणाप्युच्चार्यमाणं सादृश्यादनुकार्यस्य प्रत्यायकं भवति । देश इति । अनुकरणस्य तु देशकालनियमाभावः । पदैकदेशेति । आम्नाये अस्यवामस्येति प्रयुज्यते तदेकदेशस्यास्यवामशब्दस्यानुकरणमेकदेश एवास्यवामशब्दो दृश्यते । अस्यवामीयशब्दे प्रकृतिरित्यर्थः । सुब्लोपदर्शनाच्चेति । यदि षष्ठ्या लुकि कृते रूपमेतद्भवतीत्युच्यते तदा पूर्वपदेपि लुक्प्रसङ्गः अनुकरणस्य तु विभक्त्यर्थाप्रतिपादनात् सुप्त्वाभावाल्लुगभावः । मत्वर्थो नोपपद्यत इति । अनुकार्येण सूक्तनाम्नोस्तद्वत्ता न त्वनुकरणेनेति भावः । न संज्ञेति । अनुकरणं प्रत्यायकत्वात्संज्ञा । अनुकार्यं तु प्रत्याय्यत्वात् संज्ञि । अव्यभिचारश्चावश्यप्रत्याय्यत्वात्संज्ञिनस्तत्र यथा गवादयः शब्दाः सास्नालाङ्गूलवदर्थं प्रत्याययन्तस्तेनार्थेन तद्वति मतुपमुत्पादयन्ति गोमानिति । तथा अनुकरणशब्दाः प्रथमासमर्थाः स्वेनार्थेनानुकार्येण तद्वति छप्रत्ययमिति न कश्चिद्दोषः । अनुकरणशब्दश्चानुकार्यं स्वजातिसमवेतं वक्तीति जातिशब्द इति छकारवार्तिके ऽभिहितम् ॥

अध्यायानुवाकयोर्लुक् ॥ ६० ॥ अध्यायानुवाकाभ्यां वा लुक् *। अध्यायानुवाकाभ्यां वा लुग्वक्तव्यः । स्त्रक्षः स्त्रक्षीयः । गर्दभाण्डः । गर्दभाण्डीयः । अनुवाकः । अनुवाकीयः ॥

धनहिरण्यात्कामे ॥६५॥ धनहिरण्यात्कामाभिधाने * । धनहिरण्यात्कामाभिधान इति वक्तव्यम् । षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः * । षष्ठ्यर्थे हि सति अनिष्टं प्राप्नोति । धने कामोऽस्येति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । कस्मान्न भवति । धने कामोऽस्येति । अनभिधानात् ॥

शीतोष्णाभ्यां कारिणि ॥ ७२ ॥ किं यः शीतं करोति स शीतकः । यो वा उष्णं करोति स उष्णकः । किं चातः । तुषारे चादित्ये च प्राप्नोति । एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः । शीतमिव शीतम् । उष्णमिवोष्णम् । य आशु कर्तव्यानर्थांश्चिरेण करोति स उच्यते शीतक इति । यः पुनराशु कर्तव्यानर्थानाश्वेव करोति स उच्यते उष्णक इति ॥

---

अध्याय । अध्यायानुवाकाभ्यामिति । तादर्थ्ये एषा चतुर्थी अध्यायानुवाकार्थीयश्छस्तस्य वा लुग्वक्तव्यः । तेन पक्षे श्रवणं भवति । लुग्विधानमेव ज्ञापकमध्यायानुवाकयोश्छो भवतीति । तत्रमतुप्प्रकरण एवास्मिन् सूत्रे कर्तव्ये यदत्र च्छस्य लुग्विधानं तस्मात्प्राग्दीव्यतीयाधिको लुगनुमीयते इत्याहुः ।

धन । कामाभिधान इति । इच्छामात्राभिधान इत्यर्थः । षष्ठ्यर्थे हीति । यद्यप्यत्र षष्ठ्यर्थो न प्रकृतस्तथापि कामयत इति कामः कर्तृसाधनकामशब्दोपादाने धनस्य कामयिता देवदत्तादिर्धनकशब्देनाभिधीयतेति सामर्थ्यात् षष्ठ्यर्थ एव प्रत्ययः स्यादित्यर्थः । अनभिधानादिति । कामशब्देनेच्छामात्रमभिधीयते न तु कामयिता । ततश्च तत्रेत्यधिकाराद्धनहिरण्याभ्यां सप्तम्यन्ताभ्यामिच्छामात्रे प्रत्ययो भवति । धनको देवदत्तस्येति न तु तद्वतोति भावः ।

शीतो । किं यः शीतमिति । शीतोष्णशब्दयोः स्पर्शविशेषो मुख्यार्थ इति तत्संप्रत्ययेनैव भाव्यमिति मत्वा प्रश्नः । उत्तरपदलोप इति । नात्र समासावयव उत्तरपदमभिप्रेतं समासस्यासंभवात् । किं तर्हि उत्तरं यत्पदं द्योतक इवशब्दस्तस्यापि गतार्थत्वाद्वृत्तिविषयेऽप्रयोग इत्यर्थः । यथा मन्दतायुक्तं शतं सति शीते कार्यकरणे पाटवाभावस्तद्वन्मन्दकरणं शीत मित्युच्यते एवमाशुकरणमुष्णम् । तत्र क्रियाविशेषणाभ्यां कर्मभ्यां प्रत्ययः शीतं कारी शीतकोऽलस इत्यर्थः उष्णं कारी उष्णको दक्षः । प्रयोगदर्शनाच्च गौणस्याप्यर्थस्येह ग्रहणं चिह्नवति ।

अधिकम् ॥ ७३ ॥ अधिकमिति किं निपात्यते। अध्यारूढस्यो-त्तरपदलोपः कंश्च प्रत्ययः। अध्यारूढमधिकम्। भवेत्सिद्धमध्यरूढो द्रोणः खार्यां अधिको द्रोणः खार्यामिति। इदं तु न सिध्यति। अ-ध्यारूढा द्रोणेन खारी अधिका द्रोणेन खारीति। गत्यार्थानां हि क्तः कर्तरि विधीयते। गत्यर्थानां वै क्तः कर्मण्यपि विधीयते ॥

पार्श्वेनान्विच्छति ॥७५॥ किं यः पार्श्वेनान्विच्छति स पार्श्वकः। किं चातः। राजपुरुषेपि प्राप्नोति। एवं तर्हि उत्तरपदलोपो ऽत्र द्रष्टव्यः। पार्श्वमिव पार्श्वम्। यदृजुनोपायेनान्वेष्टव्यानर्थाननृजुनो-पायेनान्विच्छति स उच्यते पार्श्वक इति ॥

अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ७६ ॥ किं योऽयः शूलेना-न्विच्छति स आयःशूलिकः। किं चातः। शिवभागवते प्राप्नोति। एवं तर्हि उत्तरपदलोपोत्र द्रष्टव्यः। अयःशूलमिवायःशूलं यो मृदु-नोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स उच्यते आयःशूलिकः॥

तावतिथंग्रहणमिति लुग् वा ॥७७॥ तावतिथं ग्रहणमिति लु-

---

अधिकम्। किं निपात्यत इति। एद्यधिशब्दात् साधनक्रियावचनात् कन्निपात्यते तदा कर्तृकर्मणोरन्यतरस्य साधनस्याभिधानेन भाव्यम्। तत्र कर्तुरङ्गीकरणे कर्मणोभि-धानं न प्राप्नोति कर्माश्रयणे कर्तुरभिधानस्याप्रसङ्ग इति मत्वा प्रश्नः। अध्यारूढस्येति। लौकिके प्रयोगे अधिकशब्देन विषयभेदेन कर्तृकर्मणोरनभिधानदर्शनादनङ्गीकृतसा-धनभेदमध्यारूढस्येदं निपातनं स चोभयार्थ इति न कश्चिद्दोषावसरः। खार्यामिति। यदा कर्तरि क्तस्तदा कर्मणो ऽनभिधानाद् द्वितीयायां प्राप्तायां यस्मादधिकमिति ज्ञा-पकात्पञ्चमी भवति। औपश्लेषिकाधिकरणविवक्षायां तु सप्तमी तथापि तदस्मिन्नधिक-मिति निर्देशः कृतः।

पार्श्वेन। राजपुरुष इति। स हि राजा पार्श्वाश्रयेणार्थमिच्छतीति भावः। ऋजु-नेति यथा पार्श्वं तिर्यगवस्थानादनृजु तथान्योप्यनृजुरुपायः पार्श्वमित्यर्थः।

अयः। शिवभागवत इति भगवान् भक्तिरस्य भागवतः। शिवस्य भागवत इति षष्ठी समासः अवयवसंस्पर्शद्वारेण समुदायार्थविशेषणाच्छिवो भगवान्भक्तिर्यस्य प्रतीयते। एवं तर्हीति। यथा ऽयःशूलं तीक्ष्णमेवान्योपि तीक्ष्ण उपायोऽयःशूलमुपचारादुच्यते।

तावतिथम्। तावतिथमिति पूरणप्रत्ययान्तनिर्देशः। गृह्यतेनेनेति ग्रहणम् तत्राय-मर्थः। पूरणप्रत्ययान्ताद् ग्रहणोपाधिकात् स्वार्थे कन् भवति। तस्य च कनो वा लुग्

ग्वावचनानर्थक्यं विभाषाप्रकरणात् *। तावतिथंग्रहणमिति लुग्वा-वचनमनर्थकम्। किं कारणम्। विभाषाप्रकरणात्। प्रकृता महा-विभाषा तयैतत्सिद्धम्। तावतिथेन गृह्णातीति लुक् च *। ताव-तिथेन गृह्णातीत्युपसंख्यानं कर्तव्यं लुक् च वक्तव्यः। षष्ठेनगृह्णा-ति षट्कः॥

शृङ्खलमस्य बन्धनं करभे॥ ७९ ॥शृङ्खलमस्य बन्धनं करभ इ-त्यनिर्देशः *। शृङ्खलमस्य बन्धनं करभ इत्यनिर्देशः। अगमको नि-र्देशोऽनिर्देशः। न हि तस्य शृङ्खलं बन्धनं शृङ्खलवत्यसौ रज्ज्वा बध्य-ते। सिद्धं तु तद्वन्निर्देशाल्लुक् च *। सिद्धमेतत्। कथम्। तद्वन्निर्देशः कर्तव्यः। लुक् च वक्तव्यः। शृङ्खलवद्बन्धनमिति। स तर्हि तद्वन्निर्देशः कर्त्तव्यः। न कर्तव्यः। इह यदन्तरेण यस्य प्रवृत्तिर्भवति तत्तस्य निमित्तत्वाय कल्पते। न चान्तरेण शृङ्खलं बन्धनं प्रवर्तते। अथवा साहचर्यात्ताच्छब्द्यं भविष्यति। शृङ्खलसहचरितं बन्धनं शृङ्खलं बन्धनमिति॥

तदस्मिन्नन्नं प्राये संज्ञायाम्॥ ८२ ॥ प्राये संज्ञायां वटकेभ्य इ-निः *। प्रायेसंज्ञायां वटकेभ्य इनिर्वक्तव्यः। वटकिनी पौर्णमासी॥

---

भवति। पञ्चमं ग्रहणं पञ्चकमिति। एतत्सूत्राश्रयेण वार्तिकारम्भः। तावतिथमिति। महाविभाषाधिकाराद्विकल्पेन प्रत्ययोत्पादनाद् रूपद्वयस्य सिद्धत्वादित्यर्थः यदातु पूरणप्रत्ययस्य वा लुग्विधीयते पञ्चकं ग्रहणं पञ्चमकं ग्रहणमिति। तदा लुग्वाग्रहणं च कर्तव्यमेव। अन्यथा रूपद्वयं कथं सिध्येत। तावतिथेनेति। स्वार्थप्रत्ययो विधीय-मानो ग्रहीतरि न प्राप्नोतीति वचनम्। लुक्च पूरणप्रत्ययस्यैव न तु कनः।

शृङ्खलम्। शृङ्खलमिति। बध्यतेऽस्वातन्त्र्यीक्रियतेऽनेनेति बन्धनमुच्यते। रज्जोस्वा-स्वतन्त्रीकरणे करणत्वं न तु शृङ्खलस्येति भावः। काष्ठमयं पाशकं पादे यद्बध्यते तच्छृङ्खलमुच्यते। बाल उष्ट्रः करभः। इहेति। यद्यपि रज्जोः करणत्वं तथापि शृङ्खल-स्य करणत्वमस्त्येव तदन्तरेण बन्धनस्याभावात्। अथ वेति। रज्जुः शृङ्खलशब्देन तत्साह-चर्यादुच्यत इत्यर्थः॥

तदस्मिन्नन्नम्। वटकेभ्य इनिरिति। कनि प्राप्ते वचनम्। मत्वर्थीयस्त्विनिः सप्तम्यां च न तौ स्मृताविति नास्ति॥

श्रोत्रियंश्छन्दोधीते ॥ ९४ ॥ किं निपात्यते। श्रोत्रियंश्छन्दोधीत इति वाक्यार्थे पदवचनम् *। छन्दोधीत इत्यस्य वाक्यस्यार्थे श्रोत्रियन्नित्येतत्पदं निपात्यते। छन्दसो वा श्रोत्रभावः तदधीत इति घंश्च *। छन्दसो वा श्रोत्रभावो निपात्यते तदधीत इत्यस्मिन्नर्थे घंश्च प्रत्ययः छन्दोधीते श्रोत्रियः ॥

श्राद्धमनेनभुक्तमिनिठनौ ॥ ८५ ॥ इनिठनोः समानकालग्रहणम् *। इनिठनोः समानकालग्रहणं कर्तव्यम्। अद्यभुक्ते श्वः श्राद्धिक इति मा भूत्। उक्तं वा *। किमुक्तम्। अनभिधानादिति ॥

साक्षाद् द्रष्टरि संज्ञायाम् ॥ ९१ ॥ संज्ञायामिति किमर्थम्। त्रिभिः साक्षाद् द्रष्टव्यं भवति यश्च ददाति यस्मै च दीयते यश्चोपद्रष्टा तत्र सर्वत्र प्रत्ययः प्राप्नोति । संज्ञाग्रहणसामर्थ्यादिनिकान्तेवासिनोर्न भवति ॥

क्षेत्रियच्परक्षेत्रे चिकित्स्यः ॥ ९२ ॥ किं निपात्यते। क्षेत्रियः

---

श्रोत्रियन्। वाक्यार्थ इति। वाक्यार्थस्य संबन्धरूपस्य क्रियारूपस्य वाऽसत्त्वभूतत्वात् श्रोत्रियशब्दस्य च सत्त्वभूतार्थाभिधायित्वाद्वाक्यार्थग्रहणेन तदाश्रयश्छन्दोध्याय्युपचारादभिहितः। तत्राविद्यमानप्रकृतिप्रत्ययविभागः श्रोत्रियशब्दो निपात्यते। नकारः स्वरार्थः। तेनाद्युदात्तत्वं निष्करणसामार्थ्याद्द्रपवर्गाभावे ऽपि भवति। छन्दसो वेति। तस्मिन्पक्षे घना ऽणो बाधप्रसङ्गात् छान्दसशब्दो न सिध्यतीति तावतिथंग्रहणमितिस्यतो वाग्रहणमनुवर्त्यम्। अथ वा विशेषतः छन्दोध्यायिनि तदर्थानुष्ठायिनि श्रोत्रियशब्दस्य निपातनादध्येतृमात्रे छान्दसशब्दस्य नास्ति बाधः।

श्राद्ध। समानकालग्रहणमिति। भुजिना समाने काले प्रत्ययप्रयोगो यथा स्यात्। यस्मिन्काले भुजिक्रियाऽऽहितव्यसिलक्षणविशेषानुवृत्तिस्तस्मिन्नेव श्राद्धिश्राद्धिकशब्दयोरुच्चारणम्। न तु कालान्तरे। स च समानः कालो लोकप्रसिद्धानुसारेणाद्यतन एवद्रष्टव्यः तेन यदा द्वितीये ऽहनि कस्य चिदन्नमपरिणतं तदा प्रत्ययाभावः ॥

साक्षात्। संज्ञायत इति संज्ञेत्यर्थ एव व्यपदिश्यमानो विधीयते। अथ वा संज्ञायते ऽनयेति संज्ञा निपातनाद्ल्युडभावः। ततः शब्द एव संज्ञाशब्देनोच्यते। संज्ञायां विषये कार्यं भवतीत्यर्थः। लक्ष्यानुसारिप्रतिपत्त्रपेक्षया प्रश्नः। संज्ञाग्रहणं किमर्थमिति। लक्षणानुसारिप्रतिपत्त्रपेक्षया तूत्तरम्। त्रिभिरिति। अन्तेवासिशब्देन शिष्यसाधर्म्यात्पारतन्त्र्यादधमर्ण उच्यते ॥

क्षेत्रि। परक्षेत्रे जन्मान्तरशरीरेचिकित्स्यो व्याधिरसाध्यत्वात् क्षेत्रियः। तथा पर

श्रोत्रियवत् * । क्षेत्रियः श्रोत्रियवन्निपात्यते । परक्षेत्राद्वा तत्र चिकित्स्य इत्येतस्य वाक्यस्यार्थे क्षेत्रियजित्येतत्पदं निपात्यते । परक्षेत्राद्वा तत्र चिकित्स्य इति परलोपो घंश्च * । परक्षेत्राद्वा तत्र चिकित्स्य इत्येतस्मिन्नर्थे परलोपो घंश्च प्रत्ययः । परक्षेत्रे चिकित्स्यः क्षेत्रियः ॥

इति पञ्चमाध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

तदस्यास्त्यस्मिन्निति मतुप् ॥ ९४ ॥ किमर्थमिमावर्थावुभौ निर्दिश्येते अस्यास्मिन्निति । न यद्यस्य भवति तस्मिन्नपि तद् भवति । यच्च यस्मिन् भवति तत्तस्यापि भवति । नैतयोरावश्यकः समावेशः । भवन्ति हि देवदत्तस्य गावो न च तास्तस्मिन्नाधृता भवन्ति । भव-

---

क्षेत्रे धान्यार्थे क्षेत्रे यानि तृणानि जातानि विनाश्यानि तानि क्षेत्रियाणि । तथा परदारे नियाम्यः क्षेत्रियः । तथा परशरीरेषु संक्रमय्य यद्विषं चिकित्स्यते तत् क्षेत्रियम् ।

इति श्रीभाष्यप्रदीपे पञ्चमाध्याये द्वितीये पादे प्रथममाह्निकम् ॥

तदस्य । शाखावान् वृक्ष इत्यादौ वृक्षादेराधारभावोऽप्यस्ति तत्पूर्वकं संबन्धित्वं चेत्यन्यतरोपादानेनेष्टविषये सिद्धिं मत्वा पृच्छति । किमर्थमिति । कस्मा इदं किमर्थम् । कोर्थोऽस्येति वाकिमर्थमेतच्च निर्देशक्रियाविशेषणं न तु निर्दिश्यमानविशेषणमिति नपुंसकैकवचननिर्देशः । तयद्यस्येति । नशब्दः काक्वा प्रयुक्तो भवत्येवेति विधिं गमयति । नैतयोरावश्यक इति । अवश्यंभाव आवश्यकम् मनोज्ञादेराकृतिगणत्वादोरावश्यक इति निपातनाद्वा वुञ् प्रत्ययः । अव्ययानां भमात्र इति टिलोप आवश्यकमस्मिन्नस्तीत्यावश्यकः । अर्शआदेराकृतिगणत्वादच्प्रत्ययः । इह यदा संबन्धः सर्वकारकपूर्वः नाधारपूर्वक एव यथा देवदत्तस्य गाव इति क्रयप्रतिग्रहादिक्रियाविषयकर्तृत्वपूर्वकः स्वस्वामिसंबन्धस्तदा सप्तम्युपादाने कारकान्तरपूर्वसंबन्धाग्रहणादस्येति षष्ठ्यर्थोऽप्युपपादनीयः । तथा षष्ठ्यर्थमात्रनिर्देशे यत्राधिकरणं शेषसंबन्धनिमित्तसंबन्धित्वेनाविवक्षितम् । वृक्षा अस्मिन् पर्वते सन्तीति तत्र प्रत्ययो न स्यात् । न ह्यत्र क्रियाकारकपूर्वः शेषसंबन्धो दृश्यते । वृक्षैः पर्वतस्यानारम्भात् । नावयवावयविभावः । आनन्तर्यादिसंबन्धसंभवे ऽपि तत्र मत्वर्थीयैर्न भाव्यम् । तस्मादुभयोपादानम् । ननु किमुच्यते न तास्तस्मिन्नाधृता भवन्तीति । यावता यस्य चेश्वरवचनमित्येतत्प्रत्याख्यानायाधिब्रह्मदत्ते पञ्चाला इति सप्तमीसिद्ध्यर्थं भाष्यकारेणाभिहितं परिग्रहीतव्यम् । परिग्रहीत्रधीनमित्यादि । तथाच देवदत्ते गाव इत्यपि भवितव्यम् । कारकप्रकरणे हि गौणमुख्यन्यायस्यानाश्रयणाद् गौणस्याधारस्याप्यधिकरणसंज्ञया भाव्यम् । यथा गङ्गायां घोषः कूपे गर्गकुलमिति । तत-

न्ति च पर्वते वृक्षा न च ते तस्य भवन्ति । अथास्तिग्रहणं किमर्थम् । सत्तायामर्थे प्रत्ययो यथा स्यात् । नैतदस्ति प्रयोजनम् । न सत्तां पदार्थो व्यभिचरति । इदं तर्हि प्रयोजनम् । संप्रति सत्तायां यथा स्या-

---

स्य सप्तम्युपादाने ऽपि गोमान्देवदत्त इति सिध्यत्येव । नैतदस्ति । सप्तमीमात्रनिर्देशे मुख्य एवाधिकरणे मत्वर्थीयाः स्युः । वृक्षवान् पर्वत इत्यादौ न तु गौणे गोमान् देवदत्त इत्यादौ कारकप्रकरणे हि गौणमुख्यन्यायानाश्रयणम् । अयं तु प्रत्ययविधिरिति स्यात् न्यायाश्रयणमिति षष्ठीनिर्देशोपिकृतः । अथास्तिग्रहणमिति । संभवे व्यभिचारे च विशेषणविशेष्यभावो भवति । यथा नीलोत्पलमिति । सत्तां तु पदार्थो न व्यभिचरति । तामन्तरेण पदोच्चारणसंभवात्तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वादिति प्रश्नः । सत्तायां प्रत्ययो यथा स्यादिति । सत्तायां वर्तमानात्सत्तोपाधिकार्थाभिधायिनः प्रत्ययो यथा स्यादित्यर्थः । न सत्तां पदार्थो व्यभिचरतीति । यावद्बुद्ध्या पदार्थो न विषयीकृतस्तावत्पदस्य प्रयोगाभावः । तस्माद्बुद्धिसत्तासमाविष्टोर्थो विधिनिषेधजननादिभिः संबध्यते । वृक्षोस्ति वृक्षो नास्ति वृक्षो जायत इति । अत्यन्तासतोपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगस्तस्माद्बुद्ध्यारूढोपचरितसत्ताशब्दप्रयोगाश्रयत्वादव्यभिचारेत्यर्थः । सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपत्तॄणां बहीरूपतयावभासते । यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्तदा वृक्ष इत्यतः सत्तावगमादस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात् । नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाप्रसङ्गः । अङ्कुरो जायत इति च प्रयोगो न स्यात् । सतो जन्मविरोधात् । उपचारसत्तायां त्वेते दोषा नावतरन्ति । बुद्धिसत्तासमाविष्टस्य बहिः सत्त्वासत्त्वजननप्रतिपादनायास्ति नास्ति जायत इति प्रयोगयोगात् । अन्ये तु वर्णयन्ति यत्र क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोप्यस्तीति गम्यत इत्येतदाश्रयणेन न सत्तां पदार्थो व्यभिचरतीत्युक्तम् । तेषां संप्रति सत्तायां यथा स्यादिति परिहारग्रन्थो नोपपन्नः । राजपुरुष इत्यादौ च संबन्धप्रतिपादने ऽस्तेराक्षेपाभावादनैकान्तिकमेतत् । संप्रति सत्तायामिति । वर्तमानसत्तायां बाह्यायां सत्तायामित्यर्थः । भूतभविष्यत्सत्तायामिति । भूतभविष्यतोर्या सत्ता अतीतानागतवस्तुपरामर्शिबुद्धितत्त्वोत्प्रेक्षितोपचरितरूपा तस्यां मा भूदित्यर्थः । या तु मुख्या सत्ता सा भूतभविष्यत्सत्तेति व्यपदेष्टुं न शक्यते । सदित्यस्य लडन्तस्य वर्तमानकालविषयत्वाद् भूतभविष्यतोः सत्तेति संबन्धायोगात् । नापि भूता सत्ता भविष्यन्ती सत्तेति सामानाधिकरण्येन संबन्धोपपत्तिः । अथाश्रयस्य भूतभविष्यत्वाद्भूता सत्ता भविष्यन्ती सत्तेत्युच्यते तथाप्यसौ वर्तमाना न भवतीति तत्र प्रत्ययाभावः । तेन गावोस्यासन् गावोस्य भवितार इत्यत्रार्थे गोमानिति प्रयोगो न भवति । न तर्हीति । विद्यमान एव

त् । भूतभविष्यत्सत्तायां मा भूत् । गावोऽस्यासन् गावोऽस्य भवितार इति । न तर्हीदानीमिदं भवति। गोमानासीत् गोमान् भवितेति। भवति। न त्वेतस्मिन् वाक्ये । यदि त्वेतस्मिन्वाक्ये स्यात् । यथेहास्तेः प्रयोगो न भवति । गोमान् यवमानिति । एवमिहापि न स्यात् । गोमानासीत् । गोमान् भवितेति । सति चास्तेः प्रयोगे यथेह बहुवचनं श्रूयते । गावोऽस्यासन् गावोस्य भवितार इति । एवमिहापि स्यात् । गोमानासीत् गोमान् भवीतेति । का तर्हीयं वाचोयुक्तिः गोमानासीत् गोमान् भवितेति । एषैषा वाचो युक्तिः । नैषा गवां सत्ता कथ्यते । किं तर्हि । गोमतस्सत्तैषा कथ्यते। अस्त्यत्र वर्तमानकालोऽस्तिः । कथं तर्हि भूतभविष्यत्सत्ता गम्यते धातुसंबन्धे प्रत्यया इति

---

देवदत्ते तद्गवीनामतीतानागतत्वप्रतिपादनाय गोमानासीत् गोमान् भवितेति प्रयुज्यते। तत्र प्रकृत्यर्थस्य संप्रति सत्ताया अभावात् प्रत्ययाप्रसङ्गः। गुणधर्मस्य च प्रधान आरोपादासीद्भवितेति प्रत्ययार्थस्यातीतानागतव्यपदेश इति चोदको मन्यते। भवतीति । अवस्थातुर्विद्यमानत्वेऽप्यवस्थाविशेषस्य भूतभविष्यत्वादासीद्भवितेति व्यपदेशः यथेश्वरोऽयमासीर्दरिद्र सिद्धान्तवादिनोभिप्रायः । न त्वेतस्मिन्वाक्य इति। गावोस्याऽऽसन् गावोऽस्य भवितार इत्यर्थेऽगोमानिति न प्रयुज्यते इत्यर्थः॥यथेति। प्रत्ययान्तेनैव प्रकृत्यर्थोपाधेः प्रतीतत्वात्तदुपाधिवाचिनः प्रयोगाभावः यथा दाण्डाक्रीडेति प्रहरणशब्दस्येति भावः। सति चेति। सामान्याभिधानेविशेषावगमाय दृश्यते प्रयोगः । यथोत्पुच्छयत इत्यादावसनविशेषप्रतिपादनाय व्युत्परीणामभिमनायत इत्यादौ च प्रत्यायार्थभवनविशेषावगमाय सुदुरुदभीनार्मति भावः। एवमिहापीति। प्रकृत्यर्थसत्ताकालविशेषावधारणाय वाक्यवद्बहुवचनान्तस्यास्तेः प्रयोगप्रसङ्गः। का तर्हीति। गोमतो वर्तमानत्वादासीद्भवितेति। प्रयोगानुपपत्तिरितिमत्वा प्रश्नः एषैषेति।या एषा शिष्टैःप्रयुक्ता सैषैव वाचोयुक्तिः। यथास्माभिर्व्याख्यायते न त्वन्यथेत्यर्थः। नैषेति । साक्षादित्यर्थः। गोमत्सत्तेति। अतीतानागता चेति शेषः। अवस्थाविशेषस्यातीतानागतत्वादवस्थातुरतीतानागतत्वमिति प्रागेवोक्तम्। अस्त्यत्रेति । चोदकः। गोमानित्यादौ वर्तमानसत्तायुक्तः प्रकृत्यर्थः प्रतीयत एवास्तिर्भवन्तीपर इत्यन्तरङ्गत्वात्सत्तायास्तथा च प्रत्ययान्तादेव शब्दशक्तिस्वाभाव्यात् प्रकृत्यर्थसत्तावगमात् सत्तावाचिपदाप्रयोगः। तस्मादङ्गीकृतसत्तः प्रकृत्यर्थं प्रत्ययार्थमवच्छिनतीति न कर्तव्यमस्तिग्रहणम्। चोदक एव कथं तर्हीत्याशङ्क्य धातुसंबन्ध इति परिहरति। तत्रारम्भपक्षे प्रत्ययाधिकारे प्रत्ययग्रहणस्येदं प्रयोजनमधात्वधिकारविहितानामपि तद्धितानां

इदं तर्हि प्रयोजनमस्तियुक्ताद्यथा स्यात्। अनन्तरादियुक्तान्मा भूदिति। गावोस्यानन्तरा गवोस्य समीप इति। अथ क्रियमाणेऽप्यस्तिग्रहण इह कस्मान्न भवति गावोस्य सन्त्यनन्तरा गावोस्य सन्ति समीप इति। असामर्थ्यात्। कथमसामर्थ्यम्। सापेक्षमसमर्थं भवतीति। यथैव तर्हि क्रियमाणे ऽस्तिग्रहणे ऽसामर्थ्यादनन्तरादिषु न भवति। एवमक्रियमाणे ऽपि न भविष्यति। अस्त्यत्र विशेषः। क्रियमाणे ऽस्तिग्रहणे नान्तरेण तृतीयस्य पदस्य प्रयोगमनन्तरादयोर्था गम्यन्ते। अक्रियमाणे पुनरस्तिग्रहणे अन्तरेणापि तृतीयस्य पदस्य प्रयोगमनन्तरादयोर्था गम्येरन्। अथेह कस्मान्न भवति चित्रगुः शबलगुरिति। बहुव्रीहिणोक्तत्वान्मतुप्प्रत्ययार्थस्य। अथेह क-

---

कालान्तरे धातुसंबन्धे साधुत्वं यथा स्यादिति। यदा तु तत्सूत्रं प्रत्याख्यायते तदा हि स्वकाल एव प्रत्यया विधीयन्ते। तत्राग्निष्टोमयाज्यस्य पुत्रो जनितेति विरुद्धकालक्रियासंबन्धादग्निष्टोमयाजित्वस्यैव वाक्यार्थवशाद्भावित्वं गम्यते तथेहापि गोमानासीद् गोमान् भवितेति विरुद्धकालक्रियासंबन्धाद् गोमत्सत्तालक्षणावस्थाविशेषविषयातीतानागतत्वप्रतीतिरवस्थातुः सत्वे असत्वे च। तत्र प्रकृत्यर्थस्य वर्तमानसत्ताभावप्रतीतावपि शब्दसंस्कारस्यान्तरङ्गस्यानिवृत्तिर्यथा ग्रामान्नागच्छतीति। अस्तियुक्तादिति। अस्तिनैव युक्तादित्यर्थः। पूर्वोक्तेनन्यायेनास्त्युपाधिकत्वे लब्धे पुनरस्तिग्रहणं विशेषणान्तरयुक्तप्रकृत्यर्थनिराकरणार्थम्। गावोस्येति। अनन्तरमव्यवहितं समीपं तु व्यवहितमपीति भावः। गावोस्य सन्त्यनन्तरा इति। केवलानामनन्तरादीनां भवत्वस्तिग्रहणान्निरासः। इह तु सत्तासद्भावात् प्राप्नोत्येव प्रत्यय इति भावः। असामर्थ्यादिति। इह यः प्रकृत्यर्थोपाधिः प्रत्ययान्तेनान्तर्भावयितुं शक्यस्तदुपाधेरेव प्रत्ययेन भाव्यम्। न च गोमानित्येतत्प्रकृत्यर्थस्यानन्तर्यं गमयितुं शक्नोतीति तदाभिधानाय वाक्यमेव प्रयुज्यते। स्वस्वामिभावस्तु सत्तयैवान्तर्भावित इति तत्प्रतीतिर्भवत्येव। क्रियमाण इति। प्रकृत्यर्थविषयं यदापेक्ष्यं तृतीयत्वं गावः सन्त्यनन्तरा अस्येति। तत्रास्तिग्रहणे क्रियमाणे केवल एवास्त्यर्थ उपाधिभावेन प्रत्ययान्तेऽन्तर्भवति न त्वानन्तर्यादिविशिष्ट इति प्रतीतिर्भवति। असति त्वस्तिग्रहणे धर्मान्तरावच्छिन्नस्याप्यस्त्यर्थस्यान्तर्भाव आशङ्क्येतेत्यर्थः। तत्र क्रियमाणेस्तिऽग्रहणे स्त्यर्थस्यैवान्तर्भावावगमाद्वाक्ये यत्तृतीयं पदमनन्तरा इति तद्वृत्तौ स्वार्थप्रतिपादनायावश्यं प्रयोक्तव्यम्। तत्प्रयोगे चासामर्थ्यम्। अक्रियमाणे त्वस्तिग्रहणेऽनेकस्याप्युपाधेरन्तर्भावसंभावनया वृत्तावनन्तरपदप्रयोगमन्तरेणाप्यानन्तर्यावगमादसामर्थ्यं न स्यादित्यर्थः। चित्रगुरिति। सत्ताविशिष्टचित्रगवार्थः षष्ठ्यर्थश्चास्तीति प्रश्नः। बहुव्रीहिणेति। षष्ठ्य-

स्मान्न भवति चित्रा गावो यस्य सन्तीति । कुतः कस्मान्न भवति । किमवयवादाहोस्वित्समुदायात् । अवयवात् कस्मान्न भवत्यसामर्थ्यात् । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । समुदायात्तर्हि कस्मान्न भवति । अप्रातिपदिकत्वात् । ननु च भोः आकृतौ शास्त्राणि प्रवर्तन्ते । तद्यथा । सुपेति वर्तमाने अन्यस्यान्यस्य च समासो भवति । सत्यमेवैतत् । आकृतिस्तु प्रत्येकं परिसमाप्यते । यावत्येतत्परिसमाप्यते ङ्याप्प्रातिपदिकादिति तावदुत्पत्त्या भवितव्यम् । अवयवे चैतत् परिसमाप्यते न समुदाये । अथेह कस्मान्न भवति । पञ्च गावः सन्त्यस्य पञ्चगुर्दशगुरिति । प्रत्येकमसामर्थ्यात्समुदायाद प्रातिपदिकत्वात् समासात्समासेनोक्तत्वात् । नैतत् सारम् । उक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितः । तद्यथा । द्वैमातुरः । पाञ्चनापितिरिति । नैष द्विगुः । कस्तर्हि । बहुव्रीहिः । अपवादत्वाद् द्विगुः

---

र्थ एव बहुव्रीहिविधानादित्यर्थः। कुतः कस्मादिति।समुदायावयवसंनिधानात्प्रश्नः।सापेक्षमिति । चित्रा इति गुणपदं विशेष्यापेक्षं द्रव्यद्वारेणैव चित्रार्थस्य देवदत्तादिनासंबन्धाद्गाव इत्येतदपि गुणापेक्षमित्येकार्थीभावं प्रतिपत्तुं न शक्नोति । तस्माद्वृत्तौ चित्रादिगुणानपेक्षप्रकृत्यर्थोपसर्जनप्रत्ययार्थावगमात्तत्समानार्थमेव वाक्यं प्रदर्शयितव्यं गावोऽस्य सन्तीति अप्रातिपदिकत्वादिति । यदा सुबन्तात् प्रत्ययोत्पत्तिः समर्थात् प्रत्ययः प्रातिपदिकात्तु परः श्रूयत इत्येवमाश्रयणं तदा सुबन्तसमुदायस्य समासग्रहणान्नियमार्थादप्रातिपदिकत्वं सुबन्तत्वमपि नास्ति समुदायात्सुपोऽविधानात् प्रातिपदिकसमुदायस्याप्यर्थान्तरोपजनाभावादेका प्रातिपदिकसंज्ञा नास्तीत्यप्रातिपदिकत्वम् । विशेषणविशेष्यभावस्य हि पदावस्थायां प्रादुर्भावः न प्रातिपदिकावस्थायाम् । आकृताविति । जातौ कार्यमुच्यमानमनपेक्षितव्यक्तिगतसंख्याविशेषं सर्वत्र प्रवर्तते । यथा ब्राह्मणो न हन्तव्य इति । ततश्च प्रातिपदिकसमुदायादपि प्रत्ययोत्पत्तिप्रसङ्गः अन्यस्यान्यस्य चेति । अनेन जात्याश्रयत्वं कार्याणां समर्थयते । यदि हि व्यक्तिः पदार्थः स्यात्तदा कस्य विदेवैकस्य सुबन्तस्य समासः प्रसज्येत न तु सर्वस्येत्यर्थः । प्रत्येकमिति । आश्रयगतैकत्वसंख्याविशिष्टा जातिः कार्ये आश्रीयते । यथा पशुना यजेतेति भावः । ङ्याप्प्रातिपदिकादित्यत्रैकवचनात्तानां समाहारनिर्देशाद् गुणे संख्याया विवक्षितत्वादेकैकस्मात्प्रातिपदिकात्प्रत्ययोत्पत्तिः न तु तत्समुदायादित्यर्थः । उक्तेपीति । द्विगोर्लुग्विधानात्तद्धितार्थे त्यत्र स्यादर्थस्याऽर्थशब्दस्य ग्रहणाद्वा तद्धितार्थाद द्विगोस्तद्धितो भवति पञ्चगुशब्दं च द्विगुं मन्यते न बहुव्रीहिम् । अपवादत्वादिति । अन्यपदार्थमात्रेसुबन्त-

प्राप्नोति । अन्तरङ्गत्वाद्बहुव्रीहिर्भविष्यति । कान्तरङ्गता । अन्यपदार्थे बहुव्रीहिरिति वर्तते । विशिष्टे ऽन्यपदार्थे तद्धितार्थे द्विगुस्तस्मिंश्चास्य तद्धिते ऽस्तिग्रहणं क्रियते । यदि तर्हि अतिप्रसङ्गाः सन्तीति तद्धितविधावस्तिग्रहणं क्रियते । बहुव्रीहावप्यस्तिग्रहणं कर्तव्यमस्तियुक्ता-द्यथा स्यादनन्तरादियुक्तान्माभूदिति । अथ बहुव्रीहौ दोषा न सन्ति तद्धितविधावपि नार्थोऽस्तिग्रहणेन । सत्यमेवमेतत् । क्रियते त्विदानीं तद्धितविधावस्तिग्रहणम् । तद्वै क्रियमाणमपि प्रत्ययविध्यर्थं-नोपाध्यर्थम् । अस्तिमानिति मतुब् यथा स्यात् । किं च कारणं न स्यात् । अप्रातिपदिकत्वात् । नैष दोषः । अव्ययमेषो ऽस्तिशब्दः । नैषोऽस्तेर्लट् । कथमव्ययत्वम् । विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा । निपातोऽव्ययमित्यव्ययसंज्ञा । एवमपि न सिध्यति । किं कारणम् । अस्तिना सामानाधिकरण्ये मतुब् विधीयते । न चास्तेरस्तिना सामानाधिकरण्यं तदेतत् क्रियमाणमपि प्रत्ययविध्यर्थं नोपाध्यर्थम् । तस्माद्द्विगोस्तद्धितस्य प्रतिषेधो वक्तव्यः । यदेतद् नास्ति सर्वत्र मत्वर्थे प्रतिषेध इति । सति हि तस्मिंस्तेनैव

---

मात्रस्य विधीयमानस्य बहुव्रीहेः संख्यायास्तद्धितार्थे पञ्चगुरित्यादौ विधीयमानो द्विगु-र्विशेषविषयत्वाद्बाधकः प्राप्नोतीत्यर्थः । अन्तरङ्गत्वादिति । ननु चानवकाशेनान्तरङ्गम-पि बाध्यते । नैष दोषः । यत्रैकनिमित्ता द्विगुबहुव्रीहिप्राप्तिस्तत्र द्विगुना बहुव्रीहिर्बा-ध्यतामिह तु द्विगुरस्त्यर्थमधिकमपेक्षते । तदाह । तस्मिंश्चास्येति । तेन त्रिशिष्टस्य ष-ष्ठ्यर्थस्य तद्धितार्थत्वादस्त्यर्थोऽविश्यापेक्ष्यो द्विगुना षष्ठ्यर्थमात्रापेक्षस्तु बहुव्रीहिः । यदि तर्हीति । यदि वचनमन्तरेणानन्तरादीनां निवृत्तिर्नास्तीत्यर्थः । अथ न सन्तीति । अ-नभिधानादेवानिष्टाप्रसङ्गादिति भावः । प्रत्ययविध्यर्थमिति । अस्तीति लुप्तपञ्चमीकः प्रक्ृ-तिनिर्देश इति भावः । अव्ययमिति । कर्तृविशिष्टसत्तावाचीति भावः । तथा चास्तित्वमिति भावप्रत्ययप्रयोगोपपत्तिः । न चास्तेरिति । गवादीनां संभवव्यभिचाराभ्यामस्तीति सामा-नाधिकरण्यं संभवत्यस्तेस्त्वव्यभिचारादस्तिसामानाधिकरण्याभावः । तत्रास्तिमानिति वृत्तिविषये ऽस्तिक्रियायाः कर्तृविशेषे धनेऽस्तिशब्दो वर्तते । कर्तृसामान्येन प्रत्यार्थस्य विशेषणायोगात् । तस्माद्द्विगोरिति । उपाध्यनुपादानेऽपि शब्दशक्तिस्वाभाव्यान्मतुपो बहु-व्रीहेश्चास्त्युपाधिकार्थविषयत्वाद्द्विगुबहुव्रीह्योस्तुल्याश्रयत्वादन्तरङ्गबहिरङ्गभावाभावाद्वि-शेषविहितेनद्विगुनाबहुव्रीहिबाधनाद्द्विगोर्मतुबादेस्तद्धितस्य प्रतिषेधो वक्तव्यः तेनैव त-

तत्सिद्धम्। अथ मत्वर्थीयान्मत्वर्थीयेन भवितव्यम्। न भवितव्यम्। किं कारणम्। अर्थगत्यर्थः शब्दप्रयोग इति अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते। तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्। किं कारणम्। उक्तार्थानामप्रयोग इति। न तर्हीदानीमिदं भवति। दण्डिमती शाला हस्तिमत्युपत्यकेति। भवत्यर्थान्तरे वृत्तित्वादर्थान्तरे वृत्तिः। षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते। सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते। अथ मत्वन्तान्मतुपा भवितव्यम्। गोमन्तोऽस्य सन्ति यवमन्तोऽस्य सन्तीति। न भवितव्यम्। किं कारणम्। यस्य गोमन्तः सन्ति गावोऽपि तस्य सन्तीति। तत्रोक्तो गोभिरभिसंबन्धे प्रत्यय इति कृत्वा तद्धितो न भविष्यति। न तर्हीदानीमिदं भवति। दण्डिमती शाला हस्तिमत्युपत्यकेति। भवत्यर्थान्तरे वृत्तादर्थान्तरे वृत्तिर्भविष्यति। षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते। सप्तम्यर्थे वृत्तं षष्ठ्यर्थे वर्तते। इहापि सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते। षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते।

---

त् सिद्धमिति। द्विगौ प्रतिषिद्धे बहुव्रीहेर्भावाद् द्विगुप्रतिषेध एवयुक्तः पञ्चखट्व इत्यादौ बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरो भवति। द्विगौ तु समासान्तोदात्तत्वप्रसङ्गः। अथेति। यवमानस्यास्तीत्यादौ। अर्थगत्यर्थ इति। यस्य यवमानस्ति तस्य यवैरपि तत्संबन्धद्वारेण संबन्धोऽस्तीति यवमानित्यनेनैव यवमत्संबन्धावगमादिति भावः। दण्डिमतीति। यस्यां शालायां दण्डिनः पुरुषाः सन्ति दण्डा अपि तस्यां सन्तीति दण्डवतीत्यनेनैव पूर्वोक्तेन न्यायेन दण्डिसंबन्धावगमान्मतुप्न प्राप्नोतीति भावः। अर्थान्तरे वृत्तादिति यदुक्तं तदेव विभजति। षष्ठ्यर्थे वेति। एकजातीये हि संबन्धे मतुप्न भवति। यस्य हि यवमान्विद्यते तस्य यवा अपि सन्ति। इह तु यस्यां शालायां हस्तिनो गोमन्तस्तस्यां नावश्यं हस्ता गावश्च सन्ति छिन्नहस्तानामपि हस्तित्वजातिसंबन्धात्तद्देशासंनिहितगोभिरपि गोमत्त्वाच्च। अथ मत्वन्तादिति। पूर्वोक्तन्यायस्य मतुप्यपि सद्भावात्प्रश्नः। यस्य गोमन्त इति गावो विद्यन्ते येषु ते गोमन्तो ग्रामास्ते यस्य सन्तीत्यर्थः। गावोपीति। द्विविधो हि गोभिः संबन्धः साक्षात्पारंपर्येण वेति भावः। ततो गोमानित्ययं शब्दो द्विविधमपि संबन्धं शब्दप्रवृत्तिनिमित्तत्वेनान्तर्भावयितुं शक्तस्तत्र पारंपर्येण गोसंबन्धेऽभिहिते गोमत्संबन्धोऽप्याक्षिप्त एव तद्द्वारकत्वात्गोसंबन्धस्य। न तर्हीति। न्यायस्यतुल्यत्वादिति भावः। इहापीति। मत्वन्तादपि मतुप्प्रसङ्गो न्यायस्य तुल्यत्वादित्यर्थः।

अन्यथाजातीयकः खल्वपि गोभिरभिसंबन्धे प्रत्ययः । अन्यथाजातीयकस्तद्वता । येनैव खल्वपि हेतुना एतद्वाक्यं भवति गोमन्तोऽस्य सन्ति यवमन्तोऽस्य सन्तीति । तेनैव हेतुना वृत्तिरपि प्राप्नोति । तस्मान्मत्वर्थीयान्मतुबादेः * । तस्मान्मत्वर्थीयान्मतुबादेः प्रतिषेधो वक्तव्यः । तं चापि ब्रुवता समानवृत्तौ सरूप इति वक्तव्यम् । भवति हि दण्डिमती शाला हस्तिमत्युपत्यकेति । शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ १ ॥ किं पुनरि-

---

अन्यथाजातीयक इति । संबन्धे प्रत्ययावगम इत्यर्थः । गोमानित्युक्ते साक्षाद् गोभिः संबन्धः प्रतीयते । गोमत्संबन्धे गोसंबन्धो नावश्यंभावी नहि गोमत्स्वामिनाभाव्यमिति नियम इत्यर्थः । येनैवेति । वृत्तिवाक्ययोस्तुल्यार्थत्वाद्वृत्तेरिव वाक्यस्याभावः स्याद् वाक्यवद्वा वृत्तिप्रसङ्गः । मत्वर्थीयान् मतुबादिप्रतिषेध इति । न केवलं मत्वन्तान् मतुब् नेष्यते । यावता ठन्नन्तादिनिठनावपि नेष्येते इति सामान्येनोक्तम् । सामान्येन प्रतिषेधं विधाय विशेषप्रतिपादनायाह । तं चापीति । समानवृत्ताविति । समाने प्रत्ययार्थे षष्ठ्यर्थे वृत्तं षष्ठ्यर्थे न वर्तते सप्तम्यर्थे वृत्तं सप्तम्यर्थे न वर्तते इत्यर्थः । तेन सप्तम्यां च न तौ स्मृताविति वचनात् षष्ठ्यर्थ इनिठनोर्विधानात्समानवृत्तित्वाद्विरूपोपि इनिष्ठन्नन्तान्न भवति । दण्डिका अस्य सन्तीति तथा भिन्नवृत्तावपि सरूपो न भवति । यवमन्तो ग्रामा अस्य सन्तीति । अथ हस्तिमान् राजेति समानवृत्तित्वात् कथं प्रत्ययः । हस्तिशब्दस्य जातिशब्दत्वान्न संबन्धः प्रवृत्तिनिमित्तमित्यदोषोतएवाहस्तीति कृते मत्वर्थीये नञ्समासः क्रियते न बहुव्रीहिः । न ह्यहस्त इत्युक्ते जातिपर्युदासप्रतीतिर्यत्र तु समासार्थत्वं तत्र बहुव्रीहिरेव भवति यथा ऽगुरनश्व इति । न तु अगोमाननश्ववानिति । यत्रापि मत्वर्थीयेनर्थविशेषप्रतीतिस्तत्रापि तदन्तेन नञ्समासो यथाऽदण्डी अपुच्छीश्रवागमीति । दण्डपुच्छसंयोगनिषेधस्य सम्यग्भावित्वनिषेधस्य च बहुव्रीहेरनवगमात् । शैषिकादिति । शैषिकाच्छैषिकः सरूपो नेष्टः । यथा शालायां भवः शालीयो घटस्तत्र भवस्तस्येदमिति वा छान्ताच्छो न भवति । विरूपस्तु भवत्येव । अहिच्छत्रे भव आहिच्छत्रः तत्र भव आहिच्छत्रीय इति । तथामतुबर्थीयान्मतुबर्थीयः सरूपोनेष्टो यथा यवमानस्यास्तीति । मत्वन्तान् मतुब् न भवति । सामानवृत्ताविति तु श्लोकानुरोधान्नोक्तम् । पूर्वमेव च विषयः प्रविभक्तः । सन्नन्तादिति । सरूपइत्यपेक्ष्यते । सारूप्यं चाव्यभिचारात् । तेन समानत्वं लक्ष्यते । तदर्थं कृतम् । तेनेच्छासन्नन्तादिच्छासन्न भवति । अर्थान्तराभिधायिनस्तु भवत्येव । जुगुप्सिषते मीमांसिषतइति । किं पुनरिति । विशेषानुपादानात् सन्मात्रस्य सर्वत्र चानिष्टप्रसङ्गात् प्रश्नः । अभिधानतो व्यवस्था वक्ष्य-

मे मतुप्प्रभृतयः सन्मात्रे भवन्ति । एवं भवितुमर्हति । मतुप्प्रभृतयः सन्मात्रे इति चेदतिप्रसङ्गः *। मतुप्प्रभृतयः सन्मात्र इति चेदतिप्रसङ्गो भवति । इहापि प्राप्नोति । व्रीहिरस्य यवोस्येति । तस्माद् भूमादिग्रहणं कर्तव्यम् । के पुनर्भूमादयः । भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने । संबन्धेस्ति विवक्षायां भवन्ति मतुबादयः ॥ २॥ भूम्नि । गोमान् यवमान् । निन्दायाम् । ककुदावर्ती । संखादकी । प्रशंसायाम् । रूपवान् । वर्णवान् । नित्ययोगे । क्षीरिणो वृक्षाः । कण्टकिनो वृक्षाः । अतिशायने । उदरिणी कन्या । संसर्गे । दण्डी । छत्री । तत्तर्हि भूमादिग्रहणं कर्तव्यम् । न कर्तव्यम् । कस्मान्न भवति । व्रीहिरस्य यवोस्येति । उक्तं वा *। किमुक्तम् । अनभिधानादिति । इतिकरणः खल्वपि क्रियते । ततश्चेद्विवक्षा, भूमादियुक्तस्यैव च विवक्षा । गोमान् यवमान् । भूमादियुक्तस्यैव सत्ता कथ्यते । नहि कस्य चिद्यवो नास्ति । संखादकी । ककुदावर्ती । निन्दायुक्तस्यैव सत्ता कथ्यते । न हि कश्चिन्न संखादकी । रूपवान् वर्णवान् । प्रशंसायुक्तस्यैव सत्ता कथ्यते । नहि कस्य चिद्रूपं नास्ति । क्षीरिणो वृक्षाः । कण्टकिनो वृक्षा इति । नित्ययुक्तस्यैव सत्ता कथ्यते । नहि कस्य चित् क्षीरं नास्ति । उदरिणी कन्येति । अतिशायनयुक्तस्यैव सत्ता कथ्यते । न हि कस्य चिदुदरं नास्तीति । दण्डी । छत्री । संसर्गयुक्तस्यैव सत्ता कथ्यते । न हि कस्य चिद्दण्डो नास्ति छत्रं वा । यावतिभिः खल्वपि गोभिर्वाहदोहप्रसवाः कल्पन्ते । तावतीषु सत्ता कथ्यते । कस्य चिच्छतस्त्रिभिः कल्पन्ते । कस्य चिच्छतेनापि न प्रकल्प-

---

मीत्याह । एवं भवितुमर्हतीति । भूमेति । यद्यपि त्रिप्रभृतिषु बहुत्वं व्यवस्थितं तथाप्यभिधानमाश्रयणीयम् । न हि यस्य त्रयः यवाः सन्ति स यवमानित्युच्यते । इतिकरण इति । इतिशब्दस्य बह्वर्थत्वादिह विवक्षार्थत्वमिति भावः । न हि कस्य चिदिति । मत्वर्थीयान्तानभिधानस्यापि संबन्धोस्तीत्येवंपरमेतत् । न हि कश्चिन्न संखादकीति । संखादकी दशनः स च सर्वस्याप्यस्तीति विशेषणोपादानान्निन्दाप्रतीतिः । न हीति । रूपमात्रसंबन्धे ऽवगते रूपवानयमिति विशेषणोपादानात् प्रशंसाप्रतीतिः । यावतीभिरिति । क्रियमाणे ऽपि भूमादिग्रहणे विशिष्टमेव बहुत्वमभिधानवशादाश्रयणीयं ततश्चाकरणमे-

क्ते। सन्मात्रे चर्षिदर्शनात् *। सन्मात्रे च पुनः ऋषिर्दर्शयति म-तुपम्। यवमतीभिरद्भिर्यूपं प्रोक्षतीति। गुणवचनेभ्यो मतुपो लुक्*। गुणवचनेभ्यो मतुपो लुग्वक्तव्यः। शुक्लः। कृष्ण इति। अव्यतिरेका-त्सिद्धम्। न गुणो गुणिनं व्यभिचरतीति। अव्यतिरेकात्सिद्धमिति चेद् दृष्टो व्यतिरेकः॥ दृश्यते व्यतिरेकः। तद्यथा। पटस्य शुक्ल इति। तथा च लिङ्गवचनसिद्धिः। एवं च कृत्वा लिङ्गवचनानि सिद्धानि भवन्ति। शुक्लं वस्त्रम्। शुक्ला शाटी। शुक्लः कम्बलः। शुक्लौ कम्बलौ। शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति॥

रसादिभ्यश्च॥ ९५॥ किमर्थमिदमुच्यते न तदस्यास्त्यस्मिन्नि-त्येव मतुप् सिद्धः। रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् *। रसा-दिभ्यः पुनर्वचनं क्रियते। अन्येषां मत्वर्थीयानां प्रतिषेधार्थम्। म-तुबेव यथा स्यादन्ये मत्वर्थीया प्राप्नुवन्ति ते मा भूवन्निति। नैतद-स्ति प्रयोजनम्। दृश्यन्ते ह्यन्ये रसादिभ्यो मत्वर्थीयाः। रसको नटः। उर्वशी वै रूपिण्यप्सरसाम्। स्पर्शिको वायुरिति॥

प्राणिस्थादातो लजन्यतरस्याम्॥ ९६॥ इह कस्मान्न भवति।

---

ब भूमादीनां क्रिया इति भावः। यवमतीभिरिति। संस्कारस्यादृष्टार्थत्वाज्जातिमात्र-संबन्धोऽत्र विवक्षित। गुणवचनेभ्य इति। शुक्लादय एवाभिन्नरूपा गुणे तद्वति च द्रव्ये वर्तमाना गृह्यन्ते न तु रूपादयः सर्वदा गुणमात्रवाचिनः। अव्यतिरेकादिति। गुणगु-णिनोः सोयमित्यभिसंबन्धादभेदाध्यवसायादुत्पत्तिरेव मतुपो नास्तीत्यर्थः। न गुण इ-ति। गुणगुणिनोर्जातितद्वतोरिव युतसिद्धाभावात्सोयमित्यभेदात्संबन्ध इत्यर्थः। दृश्यते व्यतिरेक इति। जातिरुत्पत्तिप्रभृत्या ऽऽविनाशाद्द्रव्यं न जहाति तदात्मैव प्रतीयते शब्देन चभिधीयते गोः शाबलेय इति न तु शाबलेयस्य गौरिति। गुणाः पुनरुपायिनश्चा-पायिनश्चेति द्रव्याद्भेदेन प्रतीयन्ते शब्देन चा भिधीयन्त इत्यर्थः। पटस्य शुक्ल इति। ततश्चभे-दविवक्षायाः सद्भावान् मतुपः श्रवणं स्यादिति लुग्वक्तव्य एव। तथा चेति। यस्माद् द्रव्ये वर्तमाना शुक्लादयो यौगिका न तु वरणपञ्चालादिवद्रूढिशब्दास्ततो द्रव्यगतलिङ्गसंख्यो-पादायिनो रूढित्वे नियतलिङ्गसंख्यत्वं सर्वत्र वा सर्वलिङ्गसंख्यत्वं प्रसज्येत॥

रसा। दृश्यन्ते ह्येति। प्रयोगमूलत्वाल्लक्षणस्य नियमार्थत्वायोगात्सूत्रं प्रत्याख्यातम्। प्राणि। लोकप्रसिद्धशरीरादिसंघातः प्राणी तत्र चैतन्यापगमे ऽपि प्राणिव्यवहारस्य

चिकीर्षाऽस्यास्ति जिहीर्षाऽस्यास्तीति। प्राण्यङ्गादिति वक्तव्यम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। कस्मान्न भवति। जिहीर्षाऽस्यास्ति चिकीर्षाऽस्यास्तीति। अनभिधानात्॥

सिध्मादिभ्यश्च॥ ९७॥ सिध्मादिषु यान्यकारान्तानि तेभ्यो लचा मुक्ते इनिठनौ प्राप्नुतः। इनिठनौ च नेष्येते। कथं तौ न भविष्यतः। लजन्यतरस्यामिति समुच्चयः *। लजन्यतरस्यामिति समुच्चयोयं न विभाषा लच्च मतुप् च। कथं पुनरेतज् ज्ञायते लजन्यतरस्यामिति समुच्चयो न विभाषेति। पिच्छादिभ्यस्तुन्दादीनां नानायोगकरणं ज्ञापकं समावेशस्य *। यदयं पिच्छादिभ्यस्तुन्दादीनां नानायोगं करोति तज् ज्ञापयत्याचार्यः समुच्चयोयं न विभाषेति। यदि विभाषा स्यात् नानायोगकरणमनर्थकं स्यात्। तुन्दादीन्यपि पिच्छादिष्वेव पठेत्। नैतदस्ति ज्ञापकमस्ति ह्यन्यन्नानायोगकरणे प्रयोजनम्। किम्। तुन्दादिषु यानि अकारान्तानि तेभ्य इनिठनौ यथा स्याताम्। यानि तह्यंकारान्तानि तेषां पाठः किमर्थः। ज्ञापकार्थ एव। अपर आह। तुन्दादिभ्यः पिच्छादीनां नानायोगकरणं ज्ञापकमसमावेशस्य। यदयं तुन्दादिभ्यः पिच्छादीनां नानायोगं करोति तज् ज्ञापयत्याचार्यः समुच्चयोयं न विभाषेति। यदि विभाषा स्यान्नानायोगकरणमनर्थकं स्यात्। पिच्छादीनपि तुन्दादिष्वेव पठेत्। नैतदस्ति ज्ञापकमस्ति ह्यन्यन्नानायोगकरणे

---

रूढत्वान्मृतावस्थायामपि चूडालादिव्यपदेशप्रवृत्तिः।

सिध्मा। प्राणिस्थादात इत्यतोन्यतरस्यांग्रहणं विकल्पार्थमनुवर्तत इति मत्वाह सिध्मादिष्विति। समुच्चय इति। अनेककार्यार्थत्वान्निपातानां समुच्चयेन्यतरस्याशब्दोऽयं वा विकल्पार्थ एव तत्र लचा मुक्ते प्रकृत एव मतुब् भवति न त्विनिठनौ। वक्ष्यमाणज्ञापकादिसामर्थ्यात्समुच्चयः संपद्यते। पिच्छादिभ्य इति। तुन्दादिभ्य इलचेत्यत्र चत्वारः प्रत्यया इष्यन्ते इलजिनिठनौ मतुबिति। तत्र यद्यन्यतरस्यां ग्रहणानुवृत्त्या पिच्छादिभ्यः प्रत्ययचतुष्टयं स्यात्तदा तुन्दादिष्वेव पिच्छादयः पठितव्याः पिच्छादिष्वेव वा तुन्दादयः। पृथक्पाठात्तु ज्ञायते ऽन्यतरस्यांग्रहणेन मतुप् समुच्चीयते। न तु यथा प्राप्तमभ्यनुज्ञायते। तेन सिध्मादिपिच्छादिभ्य इनिठनौ न भवतः। नैतदस्तीति। तुन्दादिभ्योऽनकारान्तेभ्योपीनिठनाविष्येते। तत्र यदि तुन्दादिषु पिच्छादयः पठेरंस्तदा पिच्छा-

प्रयोजनम्। किम्। पिच्छादिषु यान्यनकारान्तानि तेभ्य इनिठनौ मा भूतामिति। यानि तर्ह्यकारान्तानि तेषां पाठः किमर्थः। ज्ञापकार्थ एव। वस्य च पुनर्वचनं सर्वविभाषार्थम् *। वस्य खल्वपि पुनर्वचनं क्रियते सर्वविभाषार्थम्। केशाद्वोन्यतरस्यामिति। एतदेव ज्ञापयत्याचार्यः समुच्चयोयं न विभाषेति। द्युद्रुभ्यां नित्यार्थमेकेऽन्यतरस्यांग्रहणमिच्छन्ति। कथम्। विभाषामध्ये यं योगः क्रियते। विभाषामध्ये ये विधयो नित्यास्ते भवन्तीति॥

लोमादिपामादिपिच्छादिभ्यःशनेलचः॥ १००॥ न प्रकरणे दद्रुकत्वं च *। नप्रकरणे दद्रा उपसंख्यानं कर्तव्यम्। ह्रस्वत्वं च वक्तव्यम्। दद्रुणः। अत्यल्पमिदमुच्यते। शाकीपलालीदद्र्वा ह्रस्वत्वं चेति वक्तव्यम्। शाकिनम्। पलालिनम्। दद्रुणम्। विष्वगित्युत्तरपदलोपश्चाकृतसंधेः *। विष्वगित्युपसंख्यानं कर्तव्यम्। उत्तरपदलोपश्चाकृतसन्धिर्वक्तव्यः। विष्वग्गतान्यस्य विषुणः॥

---

दिभ्योऽनकारान्तेभ्य इनिठनौ स्याताम्। अथ पिच्छादिषु तुन्दादयः पठ्येरंस्तदा तुन्दादिभ्योनकारान्तेभ्य इनिठनौ न स्यातामित्यर्थः। यानि तर्हीति। कानि चिदकारान्तानि पिच्छादिषु पठितानि कानि चित्तु तुन्दादिषु पठितानि। तत्र भेदेन पाठो ज्ञापक एव यथोक्तार्थ स्येत्यर्थः। वस्य च पुनर्वचनमिति। केशाद्व इत्येव वक्तव्यम्। तत्र प्रकृतान्यतरस्यांग्रहणानुवृत्त्या ठन्निनिमतुपो भविष्यन्तीति किमन्यतरस्यांग्रहणेन ठन्निनिप्राप्त्यर्थेन। तत्पुनः क्रियमाणं पूर्वस्यान्यतरस्यां ग्रहणस्य मतुप्समुच्चयार्थत्वं ज्ञापयतीत्यर्थः। द्युद्रुभ्यामिति। सति प्रयोजने ज्ञापकं न भवतीति पूर्वोक्तमेव ज्ञापकमाश्रयणीयम्।

लोमा। नप्रकरण इति। प्रकरणं प्रस्तावः। महत् शाकं शाकी। नानाजातीयकशाकसमाहारो वा शाकी। पलाली पलालचोदोऽथ वा भिन्नानि शालिको द्रवादिपलालानि पलाली। विष्वगिति। विषु नानाञ्चन्तीति विश्वञ्चितानि सन्त्यस्योमि विषुणम्। विष्वग्गतानीति। अर्थप्रदर्शनपरमेतत्। यानि हि विष्वञ्चितानि विष्वग्गतानि विष्वग्गतं गमनमेषामित्यर्थः। तत्र विषुणशब्देन विषुवदाख्यः काल उच्यते। तस्य हि नानागतानि दिनानि सन्ति तदाश्रयत्वाद्दिवसान्तराणां न्यूनाधिकभावस्य। तथा वायुमृत्युश्च विषुणस्तथान्योप्यनवस्थितप्रकृतिर्मनुष्यादिर्विषुणस्तत्र वृत्तिविषये गमनक्रियान्तर्भावाद्विष्वग्गमनस्यास्तीत्येव वाय्वादेरभिधानमित्याहुः॥

प्रज्ञाश्रद्धार्चाभ्यो णः॥१०१॥ वृत्तेश्च*। वृत्तेश्चेति वक्तव्यम्। वार्त्तम्॥

तपःसहस्राभ्यां विनीनी ॥ १०२ ॥ अण् च ॥ १०३॥ किमर्थं तपःशब्दाद्विन्विधीयते। नासन्तादित्येव सिद्धम्। तपसो विन्वचनमणविधानात् *। तपसो विन्वचनं क्रियते। किं प्रयोजनम्। अण्विधानात्। तपःशब्दादण् विधीयते। स विशेषविहितः सामान्यविहितं विनं बाधेत। अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् *। अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानं कर्तव्यम्। ज्यौत्स्नः। तामिस्रः। कौण्डलः। कौतपः। वैपादिकः॥

ऊषसुषिमुष्कमधो रः ॥ १०७ ॥ अयं मधुशब्दोऽस्त्येव द्रव्यपदार्थकः। अस्ति रसवाची। आतश्च रसवाची। अपि मधुन्येव हि मध्विदं मधुरमिति प्रयुज्यते। तद्यो रसवाची तस्येदं ग्रहणम्। यदि हि द्रव्यपदार्थकस्य ग्रहणं स्यादिहापि प्रसज्येत मध्वस्मिन्घटेऽस्ति। रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्*। रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानं कर्तव्यम्। खरः। मुखरः। कुञ्जरः। नगाच्च*। नागाच्चेति वक्तव्यम्। नगरम्॥

---

प्रज्ञा। वार्त्तमिति। वृत्तिशब्दो विच्छेदप्रतिविधानादिषु वर्तते। इह प्रज्ञशब्दात् स्वार्थेऽपि विहिते प्राज्ञो व्याकरणमिति भाव्यम्। यथा कृतपूर्वी कटमिति कृद्ग्रहणात्तद्विषयप्रयोगे षष्ठ्यभावो यदा तु प्रज्ञाशब्दान्मत्वर्थीयो णो विधीयते। तदा प्रज्ञावतः प्राधान्यात्प्रज्ञानक्रियाया उपलक्षणत्वादनाविर्भावाद्व्याकरणादिभिः कर्मभिः संबन्धाभावः। केचित्तत्रापि गुणभूतया प्रज्ञानक्रियया व्याकरणादीनां संबन्धमिच्छन्तः प्राज्ञो व्याकरणमिति भवितव्यमित्याहुः। विषयत्वविवक्षायां तु प्राज्ञो व्याकरण इति॥

अण् च। तामिस्रमिति। तमः समूहस्तमिस्रम्। तद्यत्रास्ति तमिस्रा रात्रिर्वा यस्मिन्नस्ति तत्तामिस्रम्। कुण्डलाहैः कौण्डल इत्याहुः॥

ऊष। द्रव्यपदार्थ इति। माक्षिके माध्वीके च प्रसिद्धस्येत्यर्थः। आतश्चेति। रसमात्रे मधुशब्दस्य प्रवृत्त्यभावाद्वृत्तिविषय एव यत्नप्रतिपाद्यं रसवाचित्वं मन्यते। मधुन्येवेति। न हि तदेव तस्मिन्विद्यत इति सामर्थ्याद्वृत्तिविषये रसविशेषवाची मधुशब्द इत्यर्थः। तद्यो रसवाचीति। अभिधानशक्तिस्वाभाव्यादिति भावः। मतुबपि रसवाचिनोऽनभिधानान्न भवति। खर इति। शब्दनिष्पत्तिकारणं कण्ठविवरं महदस्यास्तीत्यर्थः। मुखर इति। स्वव्यापारे शब्दोच्चारणे प्रतिबद्धं मुखमस्येत्यर्थः। कुञ्जर इति। वृत्तिविषये कुञ्जशब्देन हस्तिहनुरुच्यते। तेन तद्वान् भञ्जरो हस्तिशब्दवज्जातिशब्दोऽयम्। नगरमिति।

केशाद्वोऽन्यतरस्याम् ॥ १०९ ॥ वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् * । वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानं कर्तव्यम् । मणिवः । हिरण्यवः । छन्दसीवनिपौ च * । छन्दसि ईवनिपौ च वक्तव्यौ वश्च मतुप् च । रथीरभून्मुद्गलानी गविष्टौ । सुमङ्गलीरियं वधूः । ऋतावानम् । मघवानमीमहे । उद्वाच उद्वती च । मेधारथाभ्यामिरन्निरचौ * । मेधारथाभ्यामिरन्निरचौ वक्तव्यौ । मेधिरः । रथिरः । अपर आह । वप्रकरणे अन्येभ्योऽपि दृश्यत इति वक्तव्यम् । बिम्बावं कुररावमिष्टकावम् ॥

रजःकृष्यासुतिपरिषदो वलच् ॥ ११२ ॥ वलच्प्रकरणेऽन्येभ्योऽपि दृश्यते * । वलच्प्रकरणे अन्येभ्योऽपि दृश्यत इति वक्तव्यम् । भ्रातृवलः । पुत्रवलः । उत्सङ्गवलः ॥

अत इनिठनौ ॥ ११५ ॥ इनिठनोरेकाक्षरात्प्रतिषेधः * । इनिठनोरेकाक्षरात्प्रतिषेधो वक्तव्यः । स्ववान् खवान् । अत्यल्पमिदमुच्यते एकाक्षरादिति, एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ ॥ एकाक्षरात् । स्ववान् । खवान् । कृतः । कारकवान् । जातेः । वृक्षवान् । प्लक्षवान् । व्याघ्रवान् । सिंहवान् । सप्तम्यां च न तौ स्मृ-

---

नगा वृक्षाः पर्वताश्च । नगरशब्दोऽपि जातिशब्द एव । नगशब्दोऽश्मादिषु पठ्यते वुञ्छण्कठजित्यादिना नगरशब्दस्य सिद्धत्वान्नगाच्चेति न वक्तव्यम् ॥

केशा । मणिव इति । नागविशेषस्येयं संज्ञा । हिरण्यव इति । निधिविशेषस्य । वै चित्तु कुञ्जरस्येत्याहुः । छन्दसीवनिपौ चेति । चशब्दो वश्च समुच्चायार्थोऽन्यतरस्यांग्रहणस्य सर्वसंबन्धान्मतुबपि भवतीति मत्वाह । वश्च मतुप् चेति । रथीरिति । रथोऽस्यास्तीत्यर्थः । सुमङ्गलीरिति । लाघवाद्बहुव्रीहिणा भाव्यमिति न्यायः छान्दसत्वादत्र नाश्रितः । मघवेति । मघमस्यास्तीति मघवा । मतुपि तु मघवत्शब्दः । मघवा बहुलमित्येतन्नकर्तव्यम् । श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वात् । उद्वाचेति । उद्गतमस्यास्तीति ससाधनक्रियावचनादुपसर्गात् प्रत्ययः । मेधारथाभ्यामिति । एतदपि छन्दोविषयम् । बिम्बावं कुररावमिति । अन्येषामपि दृश्यतइति दीर्घः ॥

रजः । भ्रातृवल इति । वल इत्यत्राण्ग्रहणानुवर्तनाद्दीर्घाभावः । पुत्रवल इति । दीर्घत्वं वनगिर्योः संज्ञायामित्यतः संज्ञानुवृत्त्या संज्ञायां विधीयते । तेन पुत्रावल उत्सङ्गावल इति । संज्ञायां भवतीत्यसंज्ञायां दीर्घाभावः ॥

ती । दण्डा अस्यां शालायां सन्तीति । यदि क्रतो नेत्युच्यते । कार्यी कार्यिक इति न सिध्यति । तथा जातेर्नेत्युच्यते । तण्डुली तण्डुलिक इति न सिध्यति । एवं तर्हि नायं समुच्चयः क्रतश्च जातेश्चेति । किं तर्हि । जातिविशेषणं क्रद्ग्रहणम्, क्रद्यो जातिरिति । कथं कारकवान् । अनभिधानान्न भविष्यति । यद्येवं, नार्थो नेन । कथं स्ववान् खवान् वृत्तवान् प्लत्तवान् दण्डा अस्यां शालायां सन्तीति । अनभिधानान्न भविष्यति ॥

व्रीह्यादिभ्यश्च ॥ ११६ ॥ शिखादिभ्य इनिर्वाच्यः इकन् यवखदादिषु ॥ किं प्रयोजनम् । नियमार्थम् । इनिरेव शिखादिभ्य इकन्नेव यवखदादिभ्यः । शिखायवखदादिभ्यो नियमस्यावचनं निवर्तकत्वात् * । शिखायवखदादिभ्यो नियमस्यावचनम् । किं कारणम् । निवर्तकत्वात् । किं निवर्तकम् । अनभिधानम् ॥

एकगोपूर्वाट्ठञ् नित्यम् ॥ ११८ ॥ नित्यग्रहणं किमर्थम् । विभाषा मा भूत् । नैतदस्ति प्रयोजनम् । पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम् । एवं तर्हि यत्सिद्धे सति नित्यग्रहणं करोति तज्ज्ञापयत्याचार्यः प्रागेतस्माद्योगाद्विभाषेत्यनुवर्तत इति । अथ अत इत्यनुवर्तते उताहो न । किं चातः । यद्यनुवर्तते । ऐकगविको न सिध्यति । समासान्ते क्रते भविष्यति । एवमपि गौशकटिको न सिध्यति । अथ निवृत्त, मिहापि प्राप्नोति गोर्विंशतिरस्यास्तीति । निवृत्तम् । इह कस्मान्न भवति गोविंशतिरस्यास्तीति अनभिधानान्न भविष्यति ।

रूपादाहतप्रशंसयोर्यप् ॥ १२० ॥ यप्प्रकरणे ऽन्येभ्योपि दृश्यते *। यप्प्रकरणे ऽन्येभ्योपि दृश्यतइति वक्तव्यम् । हिम्याः पर्वताः । गुण्या ब्राह्मणाः ॥

बहुलं छन्दसि ॥ १२२ ॥ छन्दोविन्प्रकरणेष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्च *। छन्दोविन्प्रकरणेष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम् । अष्ट्रावी । मेखलावी । द्वयावी । उभयावी । रुजावी । हृदयावी । मर्मणश्चेति वक्तव्यम् । मर्मावी । सर्वत्रामयस्य* । सर्वत्रामयस्योपसंख्यानं कर्तव्यम् । आमयावी । शृ-

ङ्गवृन्दाभ्यामारकन् *शृङ्गवृन्दाभ्यामारकन् वक्तव्यः। शृङ्गारकः। वृन्दारकः। फलबर्हाभ्यामिनज्* फलबर्हाभ्यामिनज् वक्तव्यः। फलिनः। बर्हिणः। हृदयालुरन्यतरस्याम् *। हृदयाच्चालुर्वक्तव्यः अन्यतरस्याम्। हृदयालुः। हृदयी। हृदयिकः। हृदयवान् शीतोष्णतृप्रेभ्यस्तन्न सहत* शीतोष्णतृप्रेभ्यस्तन्न सहत इति चालुर्वक्तव्यः। शीतालुः उष्णालुः तृप्रालुः। हिमाच्चेलुः *। हिमाच्चेलुर्वक्तव्यः तन्न सहत इत्येतस्मिन्नर्थे। हिमेलुः। बलाच्चोलः*। बलाच्च ऊलो वक्तव्यस्तन्न सहतइत्येतस्मिन्नर्थे। बलूलः। वातात्समूहे च। वातात्समूहे च तन्न सहते इत्येतस्मिन्नर्थे च ऊलो वक्तव्यः। वातूलः। पर्वमरुद्भ्यां तप् *। पर्वमरुद्भ्यां तप् वक्तव्यः। पर्वतः मरुत्तः। ददाति वृत्तं वा*। ददाति वृत्तं वा पुनरेतद्भविष्यति। मरुद्भिर्दत्तो मरुत्तः॥

आलजाटचौ बहुभाषिणि॥ १२५॥ कुत्सित इति वक्तव्यम्। यो हि सम्यग् बहु भाषते वाग्मीत्येव स भवति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। नानायोगकरणसामर्थ्यान्न भविष्यति॥

स्वामिन्नैश्वर्ये॥ १२६॥ इह कस्मान्न भवति स्वमस्यास्तीति। नैष दोषः। नायं प्रत्ययार्थः। किं तर्हि। प्रकृतिविशेषणमेतत्। स्वामिन्नैश्वर्ये निपात्यते इति॥

वातातीसाराभ्यां कुक्॥ १२९॥ पिशाचाच्चेति वक्तव्यम्। पिशाचकी वैश्रवणः॥

पुष्करादिभ्यो देशे॥१३५॥ इनि प्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानम्*। इनि प्रकरणेबलाद्बाहूरुपूर्वपदादुपसंख्यानं कर्तव्यम्। बाहुबली। ऊरुबली। सर्वादेश्च*। सर्वादेश्चेनिर्वक्तव्यः। सर्वधनी। सर्वबीजी। सर्वकेशी। अर्थाच्चासंनिहिते*। इनिर्वक्तव्यः। अर्थी। असंनिहि-

---

स्वामि। स्वमस्येति। धनवाच्यत्र स्वशब्दः। नायं प्रत्ययार्थ इति। प्रत्ययार्थविषयत्वात्प्रत्ययार्थ उच्यते। ऐश्वर्ये इति। यदि विषयसप्तमी स्यात्तदा ईशितरि धनवाचिनोपि प्रत्ययः स्यात् प्रकृत्यर्थस्त्वैश्वर्यमिहोपात्तमिति वृत्तिविषय एव च स्वशब्द ऐश्वर्ये वर्तते। तेन धनवान्निर्धनवेशिता स्वामिशब्दाभिधेयः॥

पुष्क। अर्थाच्चेति। विरोधादस्तीति न संबध्यते। अर्थी संनिहितोस्येत्यर्थे ऽप्राप्ते

तदिति किमर्थम्। अर्थवान्। तदन्ताच्च *। तदन्ताच्चेति वक्तव्यम्। धान्यार्थी हिरण्यार्थी। किमर्थं तदन्तादित्युच्यते। न तदन्तविधिना सिद्धम्। ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते। एवं तर्हि इनन्तेन सह समासो भविष्यति। धान्येनार्थी धान्यार्थी। स हि समासो न प्राप्नोति। यदि पुनरयमर्थयतेर्णिनिः स्यादेवमपि क्रियामेव कुर्वाणे स्यात्। तूष्णीमप्यासीनो यस्तत्समर्थ्यानाचरति सोभिप्रायेण गम्यते। अर्थी अयमनेनेति। एवं तर्हि अयमर्थशब्दोऽस्त्येव द्रव्यपदार्थकः। तद्यथा। अर्थवानयं देश इत्युच्यते। यस्मिन् गावः सस्यानि च वर्तन्ते। अस्ति क्रियापदार्थको भावसाधनः। अर्थनमर्थ इति। तद्यः क्रियापदार्थकः तस्येदं ग्रहणम्। एवं च कृत्वाऽर्थिकप्रत्यर्थिकावपि सिद्धौ भवतः॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्॥ पादश्च समाप्तः॥

---

एवेनिर्विधीयते। तक्रकौण्डिन्यन्यायेनास्तुप्पाधिकादिनेरभावः। धान्यार्थीति। धान्यमर्थ इति कर्मधारयो धान्यार्थी सन्निहितोस्येति प्रत्ययः। एवं तर्हीति। धान्येनार्थी धान्यार्थी तृतीयासमासो भविष्यतीत्यर्थः। स हीति। तृतीयातत्कृतार्थेनेत्यनेनार्थशब्देन समासो विधीयमानोर्थिशब्देन न प्राप्नोतीत्यर्थः। सुप्सुपेत्येतन्नाश्रितम्। न्यायस्य परिहारस्याभिधास्यमानत्वात्। एवमपीति। कृतामुहूर्तक्रियासाधनाभिधायित्वात्। न ह्यगच्छन् गन्तेत्यभिधीयते। तद्यः क्रियापदार्थक इति। नन्वत्रापिनिरीहे न प्राप्नोति। नैषदोषः। णिनिपक्षएव दोषस्यावतारो णिनेः कर्तरि विधानात्। क्रियां हि कुर्वन् कर्तेत्युच्यते। मत्वर्थीयस्तु संबन्धे भवति। तत्र क्रियाकारकभावस्य न्यग्भावान्निरीहेपि सिद्धः प्रत्ययः। एवं च कृत्वेति। यद्यर्थोस्यासंनिहित इत्युच्यते तदेनेरेव विधानाठ्ठन स्यात्। अथापि णिनिनार्थीति साध्यते तथाप्यर्थिक इति न सिध्येदिति। क्रियापदार्थकत्वे सत इनिठनाविति प्रत्ययद्वयं सिध्यति। मतुप् तु क्रियापदार्थकादनभिधानान्न भवति धनवाचिनोप्यनभिधानादिनिठनोरभावः॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे पञ्चमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्॥ पादश्च समाप्तः॥

प्राग्दिशो विभक्तिः ॥ १ ॥ विभक्तित्वे किं प्रयोजनम्। विभक्तित्वे प्रयोजनमित्प्रतिषेधः *। इदानीम्, न विभक्तौ तुस्मा इतीत्वप्रतिषेधः सिद्धो भवति। यद्यत्रम्, किमोत्। क्व प्रस्मन् दीव्यसि क्वार्धमासा अत्रापि प्राप्नोति। तौ चोक्तम् *। किमुक्तम्। विभक्तौ तवर्गप्रतिषेधोऽवक्तव्य इति। इदमो विभक्तिस्वरश्च *। इदमो विभक्तिस्वरश्च प्रयोजनम्। इतः इह। इदमस्तृतीयादिर्विभक्तिरुदात्ता भवतीत्येष स्वरः सिद्धो भवति। त्यदादिविधयश्च *। त्यदादिविधयश्च प्रयोजनम्। यतः। यत्र। कुतः। कुत्र। विभक्ताविति त्यदादिविधयः सिद्धा भवन्ति ॥

किं सर्वनामबहुभ्योऽद्व्यादिभ्यः॥ २ ॥ बहुग्रहणे संख्याग्रहणम् *। बहुग्रहणे संख्याग्रहणं कर्तव्यम्। इह मा भूत्। बहो बहोरिति। अथ किमर्थं किम उपसंख्यानं क्रियते न सर्वनाम्न इत्येव सिद्धम्। द्व्यादिप्रतिषेधात्किम उपसंख्यानं क्रियते। अद्व्यादिभ्य इति प्रतिषेधे प्राप्ते किम उपसंख्यानं क्रियते ॥

एतदोन्॥ ५ ॥ क्वायं नकारः श्रूयते। नक्व चित् श्रूयते लोपोस्य

---

प्राग्दिशो विभक्तिः। कं प्रयोजनमिति। प्रयोजनसामान्यविवक्षायामेकवचननिर्देशः। इत्प्रतिषेध इति। अन्यथा मिदचोऽन्त्यात्पर इति देशविध्यर्थादिदानीमो मकारस्य हलन्त्यमितीत्संज्ञा स्यात्। तौ चोक्तमिति। तवर्गस्य चोक्तमित्यर्थः। थमोरित्संज्ञापरिभाषार्थं मुकारकरणमित्संज्ञायाः प्रतिषेधस्यानित्यत्वं ज्ञापयतीति। तद्वितपर्युदासोपि न वक्तव्यः। इत इहेति। इत इति मुख्यमुदाहरणम्। अत्र हि लित्स्वरे प्राप्ते विभक्तेरूडिदमितगुदात्तत्वं भवति। इहेत्यत्र तु प्रत्ययस्वरेणान्तोदात्तत्वं सिध्यति। ननु मध्येऽपवादा इति न्यायादनुदात्तौ सुप्पितावित्येतं स्वरं विभक्तिस्वरो बाधते नलित्स्वरं लित्स्वर एव तु परत्वाद्विभक्तिस्वरं बाधते। नैष दोषः। ऊडिदमित्येतत्सूत्रं लितोत्यत्रानुवर्तते। तेन लित्स्वरं बाधित्वा विभक्तिस्वरो भवति। तृतीयादिग्रहणे न च तृतीयामारभ्य प्राग् दिशः प्रत्यया विभक्तिसंज्ञा गृह्यन्ते।

किं स। किम उपसंख्यानमिति। उपेत्यसंख्यानं प्रतिपदं सूत्र उच्चारणमित्यर्थः। द्व्यादिषु किंशब्दस्य पाठे प्रयोजनं कस्य भवांश्च काविति त्यदादीनां यद्यत् परं तच्छिष्यत इति किमः शेषो द्व्यादिभ्यस्तु प्राक् पाठे भवतः शेषः स्यात् ॥

एतदो। इह केचिदशं पठन्ति केचिदनम्। तत्रोत्तरपाठापेक्षया विचारः। क्वायं

भवति नलोपः प्रातिपदिकान्तस्येति। यदि न क्व चित् श्रूयते कि-
मर्थमुच्चार्यते। अनेकाल्शित्सर्वस्येति सर्वादेशो यथा स्यात्। क्रि-
यमाणेपि वै नकारे सर्वादेशो न प्राप्नोति। किं कारणम्। नलोपे
कृते एकाल्त्वात्। इदमिह संप्रधार्यम्। नलोपः क्रियतां सर्वादेश
इति। किमत्र कर्तव्यम्। परत्वान्नलोपः। असिद्धे नलोपः। तस्या-
सिद्धत्वात्सर्वादेशो भवति। परिगणितेषु कार्येषु नलोपोसिद्धः। न
चेदं तत्र परिगण्यते। एवं तर्ह्यानुपूर्व्या सिद्धमेतत्। नाकृते स-
र्वादेशे प्रातिपदिकसंज्ञा प्राप्नोति। न चाकृतायां प्रातिपदिकसंज्ञा-
यां नलोपः प्राप्नोति। तदानुपूर्व्या सिद्धमेतत्। नैतदस्ति प्रयोजन-
म्। अलोन्त्यस्य विधयो भवन्तीति। अकारस्याकारवचने प्रयोजनं
नास्तीति कृत्वान्तरेण नकारं सर्वादेशो भविष्यति। अस्त्यन्यदकार-
स्याकारवचने प्रयोजनम्। किम्। येन्येकारादेशाः प्राप्नुवन्ति तद्-
बाधनार्थम्। तद्यथा। मो राजि समः क्वाविति मकारस्य मका-
रवचनसामर्थ्यादनुस्वारादयो न भवन्ति। तस्मान्नकारः कर्तव्यः। न
कर्तव्यः। क्रियते न्यास एव। प्रश्लिष्टनिर्देशोयम् अ अ इति।
सोनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति। एतद इति योगवि-
भागः *। एतद इति योगविभागः कर्तव्यः। एतदः एत इत् इ-

---

नकार इति। इत्कार्याभावादित्संज्ञायामसत्यां श्रवणेन भाव्यमिति प्रश्नः। लोपोस्येति। ने-
त्संज्ञाद्वारेण लोपः। किं तर्हि संपादितानेकाल्व्यपदेशस्य येकृतकार्यत्वाल्लक्षणान्तरेति भा-
वः। क्रियमाणेपीति। ननु यावदेतदः स्थाने आदेशो न प्रवृत्तस्तावत् प्रातिपदिकान्तत्वाभा-
वान्न लोपाप्रसङ्गः। प्रवृत्तिकाले त्वनेकाल्त्वात् सिद्धः सर्वादेशः। एवं मन्यते। स्वरूपेणार्थे-
नार्थवत्वादप्रवृत्तोऽप्येतदः स्थाने बुद्धिस्थ इति प्रातिपदिकं भवत्येव। ततश्च नलोपे कृते
अनेकाल्त्वाभावात् सर्वादेशो न प्राप्नोति। आनुपूर्व्या सिद्धमिति। यदुक्तं स्वरूपेणार्थेनार्थ-
वत्वात् प्रातिपदिकमिति। तदयुक्तम्। सर्वत्र स्वरूपप्रवृत्तिप्रतिपत्तिसंभवादर्थवद्ग्रहणसाम-
र्थ्याद्व्यतिरिक्तबाह्यार्थग्रहणादन्यथा न क्व चिन्नकारस्य श्रवणं स्यात्। नाकृत इति। अ-
र्थवतः संज्ञाविधानात् स्यान्यर्थे नार्थवत्त्वमेष्टव्यमित्यर्थः। अकारस्याकारवचन इति। त्य-
दाद्यत्वं कृत्वादेशं मन्यते। बाध्यबाधकभावमनपेक्ष्यैतदुक्तम्। तदपेक्षायां हि दकारस्य
स्थाने त्यदाद्यत्वस्यास्य चाऽस्य विशेषोनास्तीतिपक्तव्यम्। येन्य इति। एतच्छब्दाकारेण
सह पररूपं लित्स्वरश्च बाध्येत। योगविभाग इति। अन्वाधनार्थम्। तत्र रे फादिरनव-

त्वेतावादेशौ भवतः रथोः। ततः अन्। अश्च भवति। एतद इति। केन विहिते थकारे एतद आदेश उच्यते। एतदश्च थम उपसंख्यानम् *। एतदश्च थम उपसंख्यानं कर्तव्यम्। एतत्प्रकारमित्थम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। एतज्ज्ञापयति भवत्यत्र थमुरिति। यदयं थकारादावादेशं शास्ति। कुतो नु खल्वेतत्। ज्ञापकादत्र थमुर्भविष्यति। न पुनरयं एवासावविशेषविहितः थकारादिस्तस्मिन्नादेशः स्यादिदमा थकारादिं विशेषयिष्यामः। इदमो अः थकारादिरिति

पञ्चम्यास्तसिल्॥ ७॥ सप्तम्यास्त्रल्॥ १०॥ इदं विचार्यते। इमे तसिलादयो विभक्त्यादेशा वा स्युः परे वेति। कथं वा आदेशाः स्युः कथं वा परे। यदि पञ्चम्याः सप्तम्याः इति षष्ठी तदादेशाः। अथ पञ्चमी ततः परे। कुतः संदेहः। समानो निर्देशः। कश्चात्र विशेषः। तसिलादयो विभक्त्यादेशाश्चेत् सुब्लुक्स्वरगुणदीर्घत्वैत्त्वौत्वस्मादादिविधिप्रतिषेधः *। तसिलादयो विभक्त्यादेशाश्चेत् सुब्लुक्स्वरगुणदीर्घत्वैत्त्वौत्वस्मादादिविधीनां प्रतिषेधो वक्तव्यः। सुब्लुक्। ततस्त्यः। यतस्त्यः। तत्रत्यः यत्रत्यः। सुपो धातुप्रातिपदिकयोरिति सुब्लुक् प्राप्नोति। सुब्लुक्। स्वर। यदा। तदा। अनुदात्तौ सुप्पितावित्येष स्वरः। प्राप्नोति। स्वरगुण। कस्मात्। कुतः। घेर्ङितीति गुणः प्राप्नोति। गुण। दीर्घ। तस्मिंस्तर्हि अतो दीर्घो यञि, सुपि चेति दीर्घत्वं प्राप्नोति। दीर्घ। एत्वम्। तेषु। तत्र। बहुवचने झल्येदित्येत्वं प्राप्नोति। एत्वम्। औत्वम्। कस्मिन् कुत्र। इदुद्भ्यामौत् अच्च घेरित्यौत्वं प्राप्नोति। औत्व। स्मादादिविधिः। तस्मात्ततस्तस्मिंस्तत्र। ङसिङ्योः स्मात्स्मिनाविति स्मायादयः प्राप्नुवन्ति। पञ्चमीनिर्देशात्सिद्धम् *। सन्तु परे। यदि परे समानशब्दानां प्रतिषेधः *। यदि परे समानशब्दानां प्रतिषेधो वक्तव्यः। तस्मात्तस्यति यस्मात्तस्यति। पञ्चम्यन्तात्परस्य त-

---

तनेर्हिलन्यतरस्यामिति हिल्प्रत्ययः। अविशेषविहित इति। प्रकारवचने थालिति भावः। इदमेति। एवं च थ सुना थाल् बाध्यते।

पञ्चम्याः। पञ्चमीनिर्देशादिति। आदेशपक्षस्य बहुदोषत्वात् प्राथम्यात् पञ्चम्याश्रयेण प्रत्ययाश्रयणमित्यर्थः। तस्मात्तस्यतीति। पञ्चमीनिर्देशे तसेश्चेत्यस्यायमर्थः।

सेस्तसिल्भवतीति तसिल् प्राप्नोति । अनादेशे स्वार्थविज्ञानात्समानशब्दाप्रतिषेधः * । अनादेशे स्वार्थविज्ञानात्समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । तसिल् कस्मान्न भवति । स्वार्थविज्ञानात् पञ्चम्यन्तात्परस्य स्वार्थे वर्तमानस्य तसिला भवितव्यम् । न चात्र पञ्चम्यन्तात्परस्तसिः स्वार्थे वर्तते ॥

तसेश्च ॥ ८ ॥ किमर्थं तसेस्तसिलुच्यते । तसेस्तसिल्वचनं क्रियते । किं प्रयोजनम् । स्वरार्थम् । लिति प्रत्ययात्पूर्वमुदात्तं भवतीत्येष स्वरो यथा स्यात् । ननु चायं तसिल् तसिं बाधिष्यते न सिध्यति । परत्वात्तसिः प्राप्नोति । तसिलोऽवकाशः । ततो हीयते । ततोऽवरोहति । तसेरवकाशो ग्रामत आगच्छति नगरत आगच्छति । इहोभयं प्राप्नोति ततः आगच्छति यत आगच्छतीति । परत्वात्तसिः प्राप्नोति । तस्मात्सुष्ठूच्यते तसेस्तसिल्वचनं स्वरार्थमिति ॥

पर्यभिभ्यां च ॥ ९ ॥ पर्यभिभ्यां च सर्वोभयार्थे * । पर्यभिभ्यां चेति यदुच्यते तत्सर्वोभयार्थे द्रष्टव्यम् । यावत्सर्वतः तावत्परितः । यावदुभयतः तावदभितः ॥

इतराभ्योऽपि दृश्यन्ते ॥ १४ ॥ इह कस्मान्न भवति । सः । तौ । ते । भवदादिभिर्योगे * । भवदादिभिर्योगे इति वक्तव्यम् । के पु-

---

पञ्चम्यः परस्य तसेस्तसिलादेशो भवतीति । तसेरिति निर्देशे इकार उच्चारणार्थः । तत्स्य धातोरपि तस्यतेः पञ्चम्याः परस्य तसिलादेशः तद्धितादेशवत्प्रसज्येत । तद्विधानसामर्थ्याच्च प्रत्ययस्वरेऽपि लित्स्वरप्रसङ्गः । आदेशपक्षे तु नायं दोषः । अपादाने चाहीयरुहोरित्यत्राप्यादेशपक्षाश्रयणात्ततश्च पञ्चम्याः स्थाने यस्तसिस्तस्य तसिल्विधानाद्धातोः प्रसङ्गाभावः । स्वार्थे वर्तमानस्येति । पञ्चम्यन्तप्रकृत्यर्थ इत्यर्थः । इह स्वार्थिकैः साहचर्यात्तसिलादेशोऽपि स्वार्थिको विज्ञायते । यदि च स्वार्थिकस्य स्थाने भवति । ततः स्वार्थिको भवति । अथ वा तसेरितीकारो विवक्षितो न तूच्चारणार्थः ।

तसेश्च । स्वरार्थमिति । ननु त्यदाद्यर्थत्वाद्रूपाद्यर्थमपि तसिल्वचनम् । न च विभक्त्यादेशपक्षाश्रयेण त्यदादिविधिसिद्धिरादेशपक्षस्य सदोषत्वात्परित्यागात् । एवं तर्हि स्थान्यादेशभावः किमर्थं आश्रितः तसिश्चेति प्रत्यय एव परत्वात्तसेर्बाधकस्य तसिलो बाधकः कर्तव्यः । तस्य च विभक्तिसंज्ञकत्वात्त्यदादिविधिः सिध्यतीत्याशङ्क्य स्वरार्थमित्युक्तम् ।

नर्भवदादयः। भवान्दीर्घायुर्देवानांप्रिय आयुष्मानिति। सभवान्। तत्रभवान्। ततोभवान्। तंभवन्तम्। ततोभवन्तम्। तत्रभवन्तम्। तेनभवता। तत्रभवता। ततोभवता। तस्मैभवते। तत्रभवते। ततोभवते। तस्माद्भवतः। तत्रभवतः। ततोभवतः। तस्यभवतः। तत्रभवतः। ततोभवतः। तस्मिन्भवति। तत्रभवति। ततो भवति। सदीर्घायुः। तत्रदीर्घायुः। ततोदीर्घायुः। तंदीर्घायुषम्। तत्रदीर्घायुषम्। ततोदीर्घायुषम्। सदेवानांप्रियः। तत्रदेवानांप्रियः। ततोदेवानांप्रियः। तंदेवानांप्रियम्। तत्रदेवानांप्रियम्। ततोदेवानांप्रियम्। सआयुष्मान्। तत्रायुष्मान्। ततआयुष्मान्। तमायुष्मन्तम् तत्रायुष्मन्तम्। ततआयुष्मन्तम्॥

अधुना॥ १७॥ अधुनेतिकिं निपात्यते। इदमोऽश्भावो धुना च प्रत्ययः। इदमो वा लोपः अधुना च प्रत्ययः। अस्मिन्काले अधुना॥

दानीं च॥ १८॥ इदानीमिति इदमस्तृतीयादिर्विभक्तिरुदात्ता भवतीत्येष स्वरः प्राप्नोति। इदानीमिति निपातनात्स्वरसिद्धिः*। इदानीमिति निपातनात्स्वरसिद्धिर्भविष्यति। आद्युदात्तनिपातनं करिष्यते। स निपातनस्वरः विभक्तिस्वरस्य बाधको भविष्यति। उक्तं वा *। किमुक्तम्। आदौ सिद्धमिति॥

तदो दाच॥ १९॥ तदो दावचनमनर्थकं विहितत्वात् *। तदो दावचनमनर्थकम्। किं कारणम्। विहितत्वात्। विहितोत्र दाप्रत्ययः। सर्वैकान्यकिंयत्तदः काले देति॥

तयोर्दार्हिलौ च च्छन्दसि॥ २०॥ तयोरिति प्रातिपदिकनिर्देशो

---

दानीम्। केचिदिदानीमिति सूत्रं पठन्ति। अन्ये तु दानीं चेति। एष स्वर इति। अन्त्योन्त्यस्येति वचनादन्त्यस्योदात्तत्वं प्राप्नोति। आदौ सिद्धमिति। आदेः परस्येतिवचनात्

तदो। दावचनमिति। सूत्रकारेण त्वदाप्रत्ययः कृत इत्याहुः। स्वरे च विशेषः। अदाप्रत्यये तदाशब्द आद्युदात्तो भवति। दाप्रत्यये त्वन्तोदात्तः।

तयो.। योगयोर्वेति। तत्र पूर्वयोर्योगयोर्विषये दार्हिलौ भवतः। चशब्दाद्योगद्वयविहितौ प्रत्ययाविति सूत्रार्थः स्यात्तत्र यदि यथा संख्यमाश्रीयते त इदमः छन्दसि इदा

द्रष्टव्यः। इत्थं विजानीयात् दार्हिलौ धागयोर्वाप्रत्यययोर्वेति। तदाचार्यः सुहृद् भूत्वान्वाचष्टे तयोरिति प्रातिपदिकनिर्देश इति॥

सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः॥२२॥ सद्य इति किं निपात्यते। समानस्य सभावो द्यश्चाहनि *। समानस्य समासो निपात्यते द्यश्च प्रत्ययः अहन्यभिधेये। समाने अहनि सद्यः। परुत्परारीति किं निपात्यते। पूर्वपूर्वतरयोः परभावः उदारी च संवत्सरे *। पूर्वपूर्वतरयोः परभावो निपात्यते। उदारी च प्रत्ययौ संवत्सरेऽभिधेये। पूर्वस्मिन्संवत्सरे परुत्। पूर्वतरे संवत्सरे परारि। ऐषम इति किं निपात्यते। इदमः समसण् *। इदमः समसण्प्रत्ययो निपात्यते संवत्सरेऽभिधेये। अस्मिन्संवत्सरे ऐषमः। परेद्यवीति किं निपात्यते। परस्मादेद्यव्यहनि *। परस्मादेद्यविप्रत्ययो निपात्यते अहन्यभिधेये। परस्मिन्नहनि परेद्यवि। अद्येति किं निपात्यते। इदमोऽश्भावो द्यश्च *। इदमोऽश्भावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये। अस्मिन्नहनि अद्य। पूर्वेद्युरन्येद्युरन्यतरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युरिति किं निपात्यते। पुर्वान्यान्यतरेतरापरापराधरोभयोत्तरेभ्य एद्युसुच् *। पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्प्रत्ययो निपात्यते अहन्यभिधेये। पूर्वस्मिन्नहनि पूर्वेद्युः अन्यस्मिन्नहनि अन्येद्युः। अन्यतरस्मिन्नहनि अन्यतरेद्युः। इतरस्मिन्नहनि इतरेद्युः। अपरस्मिन्नहनि अपरेद्युः। अधरस्मिन्नहनिः अधरेद्युः। उभयोरह्नोः उभयेद्युः। उत्तरस्मिन्नहनि उत्तरेद्युः। द्युश्चोभयात् *। उभयशब्दाद् द्युश्च वक्तव्यः। तस्मान्मनुष्येभ्यउभयद्युः॥

---

इदानीमिति रूपद्वयमेव स्यान्न त्वधुना एतर्हीति। विशेषविहिताभ्यां छन्दोविषयाभ्यां दादानींभ्यां र्हिलधुनाप्रत्यययोर्बाधप्रसङ्गात्। तदस्तु तदानीं तदा तर्हीतिरूपत्रयं सिध्यत्येव। अथापि यथासंख्यानाश्रयणादिदमोर्हिल्विधीयते तथाप्यधुनेति छन्दसि न स्यादेव। अथ तयोरिति प्रत्ययपरामर्शस्तयोः पूर्वसूत्रविहितयोर्विषये दार्हिलौ भवतस्तदानन्तर्यात्तदएव दार्हिलौ स्यातामिति इदम इदा इति न सिध्येत्। प्रातिपदिकपरामर्शे तु चकारेण यथाप्राप्त्यभ्यनुज्ञाने न कश्चिद्दोषः।

**दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः॥२७॥** इह कस्मान्न भवति पूर्वस्मिन्देशेवसतीति। नैष देशो, देशविशेषण-मेतत्॥

**दक्षिणोत्तराभ्यामतसुच्॥ २८॥** किमर्थमतसुच् क्रियते। न तु सुजेव क्रियेत। तत्रायमप्यर्थः। स्वरार्थश्चकारो न कर्तव्यो भवति।

---

दिक्शब्दे। दिशां शब्दा दिक्शब्दा रूढ्या ये दिशो वाचकाः पूर्वादयस्ते गृह्यन्ते। न त्वैन्द्रादयो यौगिकाः तत्र दिश उपलक्षणत्वे नोपादानादिहापि प्राप्नोति। पूर्वस्मिन् गुरौ वसतीति। अत्र हि देशसंबन्धात्कालसंबन्धाद्वापूर्वशब्दो गुरौ वर्तते तदर्थं विशेषणोपादानं दिग्देशकालेष्विति। विभक्तीनामुपाधीनां च साम्येपि यथासंख्या-भावस्तदर्थं स्वरितत्वाप्रतिज्ञानात्। तत्र यथा पूर्वादयः स्वभावाद्दिशि वर्तन्ते तथा देशकालयोरपि। यथा काले वर्तमाना दिशं नापेक्षन्ते तथा देशेपि दिगनपेक्षाः। यद्यपि भिन्नार्थं वृत्तित्वाद्भिन्ना एव पूर्वादयो दिग्देशकालेषु तथापि तत्र व्यपदेशनिबन्धनासादृश्याश्रयो दिक्शब्देभ्य इति व्यपदेशः। अनिर्दिष्टार्थत्वाच्च स्वार्थेयं प्रत्ययः। एवं स्थिते चोदकः पृच्छति। इह कस्मान्न भवति पूर्वस्मिन्देशे वसतीति। पूर्वशब्दस्य दिक्छब्दत्वाद्देशवृत्तित्वाच्च प्रसङ्गः। आचार्य आह। नैष देशोदेशविशेषणमेतदिति। अयमर्थः। विशेषणविशेष्ययोः कणखञ्जवत् कामचाराद्यदा पूर्वार्थो विशेष्यत्वेन प्रक्रंस्यते देशो विशेषणत्वेन तदा प्रत्ययो भवति। वृत्तौ विशेष्य प्राधान्याद्विशेषणमन्तर्भावयितुं शक्नोति। सत्यपि चान्तर्भावे दिग्देशकालानामविशेषेणान्तर्भावाद्विशेषाभिव्यक्तये देशादिशब्दप्रयोगो भवति। पुरस्ताद्दिश आगतो देशात्कालाद्वेति। यदा तु देशो विशेष्यत्वेन प्रक्रंस्यते पूर्वार्थो विशेषणत्वेन तदा प्रत्ययाभावः। दिग्देशकालेष्वित्यनेन ह्युपाधिभावो दिगादीनां समर्थितो न तु प्राधान्यं नापि वृत्तौ गुणः प्रधानमन्तर्भावयितुं शक्नोति। नैष देश इति। नैष पूर्वार्थो देशेन विशेष्यत इत्यर्थः। यो हि देशेन विशेष्यमाणो देशो भवति ततः प्रत्ययो न तु विशेषणादित्यर्थः। अत्येत्वाहुः। अवध्यपेक्षार्थाभिधायिभ्यः पूर्वादिभ्यः प्रत्ययेन भवितव्यम्। इह तु पूर्वदेशेवधिनिरपेक्ष एव पूर्वशब्दः प्रयुज्यते। तथा हि। पूर्वदेशाद्दक्षिणापथं गच्छन् कुत आगतस्त्वमिति पृष्टः पूर्वदेशादागतोहमिति वक्ति। प्रत्यागच्छंश्च दक्षिणपथादिति। तत्र नैष देश इत्यस्यायमर्थो नायमवधिमत्त्वेन देश उपात्तः। किं तर्हि अवधिनिरपेक्षदेशस्यैतद्विशेषणम्। वास्तवी तु व्यवस्था विद्यत इति सर्वनामसंज्ञा प्रवर्तत एव।

दक्षिण। आकृत्यन्तर इति। अन्या दिगाकृतिरन्या व्यवस्थाकृतिरिति भावः। दि-

प्रत्ययस्वरेणैव सिद्धम् । का रूपसिद्धिः । दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्य । दक्षिणोत्तरशब्दावकारान्तौ तसुशब्दः प्रत्ययः । भवेत्सिद्धम् । यदा अकारान्तौ । यदा तु खलु आकारान्तौ तदा न सिध्यति । तदापि सिद्धम् । कथम् । पुंवद्भावेन । कथं पुंवद्भावः । तसिलादिष्वाकृत्वसुच इति । न सिध्यति । भाषितपुंस्कस्य पुंवद्भावः । न चैतौ भाषितपुंस्कौ । ननु च भोः दक्षिणशब्द उत्तरशब्दश्च पुंसि भाष्येते । समानायामाकृतौ यद्भाषितपुंस्कमित्युच्यते । आकृत्यन्तरे चैतौ भाषितपुंस्कौ । दक्षिणोत्तरेति दिक्शब्दौ । दक्षिण उत्तर इति व्यवस्थाशब्दौ । यदि पुनर्दिक्शब्दा अपि अवस्थाशब्दाः स्युः । कथंयानि दिगुपदिष्टानि कार्याणि । दिशो यदा व्यवस्थां वक्ष्यन्ति । यदि तर्हि यो यः दिशि वर्तते स दिक्शब्दः रमणीयादिष्वतिप्रसङ्गो भवति । रमणीया दिक् शोभनादिगिति । अथ मतमेतत् । दिशि दृष्टः दिग्दृष्टः दिग्दृष्टः शब्दो दिक्शब्द इति दिशं यो न व्यभिचरति । न

---

शि वर्तमानाः पूर्वादयो निमित्तान्तरनिरपेक्षाः । देशकालयोस्तु व्यवस्थापेक्षाः । यदि पुनरिति । सर्वत्र व्यवस्थाशब्दाः सन्त्विति भावः । व्यवस्था मर्यादेति केचिदाहुः । एवं तु उत्तराः । कुरव इति संज्ञायां मर्यादानपेक्षणात् कुरूनुत्तरेणाप्यासीनानामुत्तराः कुरव इति प्रयोगाद्व्यवस्थाभावादसंज्ञायामिति प्रतिषेधानर्थक्यप्रसङ्गाच्चावद्द्रव्यमनपायो व्यवस्थेत्यपरे मन्यन्ते । दक्षिणा गाथका इति । सत्स्वेव गाथकेषु प्रावीण्यलक्षणस्य दाक्षिण्यस्य कादाचित्कत्वाद् व्यवस्थाभावो दिग्देशकालसंज्ञासु तु व्यवस्थासद्भावः । मर्यादालक्षणव्यवस्थावादिनस्तूत्तराः कुरव इत्यत्रापि मेरुं जम्बुद्वीपं वा ऽपेक्ष्योत्तरत्वविज्ञानात् प्रयोगकाले निरूढत्वाद्व्यवहारस्य प्रयोक्तृभिरनपेक्ष्यमाणापि वस्तुतो व्यवस्थास्तीति मन्यन्ते । अन्ये तु परस्परापेक्षात्मस्थितिर्व्यवस्थेत्याहुः । कथं यानीति । दिक्शब्देभ्यः सप्तमीत्यादिविहितानि । व्यवस्थाशब्दत्वे हि दिश उपलक्षणत्वं न स्यात्तस्या निमित्तत्वाभावादिति भावः । दिशो यदेति । निमित्तवतोऽप्यर्थस्योपलक्षणत्वात् । तथा च संख्याशब्दाः कालवृत्तयः कालशब्दत्वात्कालाधिकारविहितप्रत्ययभाजः । षष्ठिवर्षाणि भूतः षाष्टिक इति भावः । एतत्पक्षाश्रये ऽतिप्रसङ्गमाह । यदि तर्हीति । रमणीयादयो गुणक्रियानिमित्ता दिशि वर्तमाना दिक्शब्देन व्यपदिश्येरन्नित्यर्थः । दिशं यो न व्यभिचरतीति । व्यवस्थानिमित्तो यो न भवति स्वभावत एव यो दिशि वर्ततइत्यर्थः । दिशि दृष्ट इत्यर्थप्रदर्शनं दिशां शब्द इति तु षष्ठीसमासः । स्वरूपव्यतिरिक्तप्रवृत्तिनिमि-

एमणीयादिष्वतिप्रसङ्गो भवति। पुंवद्भावस्तु न प्राप्नोति। एवं तर्हि सर्वनाम्नोवृत्तिमात्रे पुंवद्भावो वक्तव्यः। दक्षिणोत्तरपूर्वाणामित्येवमर्थम्। विशेषणार्थं तर्हि। क्व विशेषणार्थेनार्थः। षष्ठ्यतसर्थप्रत्ययेनेति। षष्ठ्यतसर्थप्रत्ययेनेत्युच्यमाने इहापि स्यात्। ततो ग्रामात्। यतो-ग्रामादिति॥

उपर्युपरिष्टात्॥३१॥ उपर्युपरिष्टादिति किं निपात्यते। ऊर्ध्वस्योपभावो रिल्रिष्टातिलौ च *। ऊर्ध्वस्योपभावो रिल्रिष्टातिलौ च प्रत्ययौ निपात्यते। उपरि। उपरिष्टात्॥

पश्चात्॥३२॥ पश्चादिति किं निपात्यते। अपरस्य पश्चभाव आतिश्च प्रत्ययः *। अपरस्य पश्चभावो निपात्यते आतिश्च प्रत्ययः। पश्चात्। दिक्पूर्वपदस्य च *। दिक्पूर्वपदस्याऽपरस्य पश्चभावो वक्तव्य आतिश्च प्रत्ययः। दक्षिणपश्चात्। उत्तरपश्चात्। अर्धोत्तरपदस्य च समासे *। अर्धोत्तरपदस्य च समासे अपरस्य पश्चभावो वक्तव्यः। दक्षिणपश्चार्धः। उत्तरपश्चार्धः। अर्धे च *। अर्धे च परतोऽपरस्य पश्चभावो वक्तव्यः। पश्चार्धः॥

एनबन्यतरस्यामदूरेऽपञ्चम्याः॥३५॥ अपञ्चम्या इति प्रागसेः *। अपञ्चम्या इति यदुच्यते प्रागसेस्तद् द्रष्टव्यम्। इदं विजानीयात्। अविशेषेण इत उत्तरमपञ्चम्या इति। तदाचार्यः सुहृद् भूत्वान्वा-

---

त्तनिरपेक्षो दिशो यो वाचकः पूर्वादिशब्दः स दिक्शब्द आश्रीयते शब्दग्रहणादन्यथा दिग्भ्य इत्येव ब्रूयादित्यर्थः। यद्येवं दिशः पूर्वादीनि नामधेयानीत्यसंज्ञायामिति सर्वनामसंज्ञानिषेधात्पूर्वस्यां दिशि वसतीत्यादि न सिध्यति। पौरुषेयसंज्ञाश्रयणादिह च तदभावाददोषः। पुंवद्भावस्त्विति। दिशि वर्तमानानां प्रवृत्तिनिमित्तानपेक्षणात् समानायामाकृतौ भाषितपुंस्कत्वाभावात्। सर्वनाम्न इति। यद्यपि दिशि वर्तमानानां व्यवस्था न प्रवृत्तिनिमित्तं तथापि वास्तवी व्यवस्था विद्यतइति सर्वनामसंज्ञायाः प्रवर्तनात्। तदेवं व्यवस्थायामिति विषयो निर्दिश्यते न तु प्रवृत्तिनिमित्तं सर्वनाम्न इत्येतद्यावश्यं कर्तव्यमित्याह। दक्षिणोत्तरपूर्वाणामिति। अयं समानाकृतित्वानपेक्षः पुंवद्भावः दिग्वाचिनां त्वयं द्वन्द्वः। वृत्तिमात्र इति तद्धितवृत्तिः समासवृत्तिश्च। ततो ग्रामादिति। अन्यादियोगे पञ्चमीं बाधित्वा षष्ठी स्यात्। यदा ग्रामस्यापादानत्वं तदोपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायादप्रसङ्गः षष्ठ्याः।

षष्टे अपञ्चम्या इति प्रागस इति ॥

दक्षिणादाच् ॥ ३६ ॥ किमर्थश्चकारः। स्वरार्थः। चितोन्त उदात्तो भवतीति अन्तोदात्तत्वं यथा स्यात्। नैतदस्ति प्रयोजनम्। एकाजयं, तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन। प्रत्ययस्वरेणैव सिद्धम्। विशेषणार्थस्तर्हि। क्व विशेषणार्थेनार्थः। अञ्चारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥

संख्याया विधार्थे धा ॥ ४२ ॥ विधार्थ इत्युच्यते। को विधार्थो नाम। विधाया अर्थो विधार्थः। यद्येवम्। एका गोविधा। एका हस्तिविधा। अत्रापि प्राप्नोति। एवं तर्हि, धाविधानं धात्वर्थपृथग्भावे *। धाविधानं धात्वर्थपृथग्भावइति वक्तव्यम्। कः पुनर्धात्वर्थः पृथग्भावः। किं यत्तद्देवदत्तः कंसपात्र्यां पाणिना ओदनं भुङ्क्तइति। नेत्याह। कारकपृथक्त्वमेतत्। यत्तर्हि तत्करणे भुङ्क्ते सायं भुङ्क्त इति। नेत्याह। कालपृथक्त्वमेतत्। यत्तर्हि शीतं भुङ्क्ते उष्णं भुङ्क्ते इति। नेत्याह। गुणपृथक्त्वमेतत्। कस्तर्हि धात्वर्थपृथग्भावः। कारकाणां प्रवृत्तिविशेषः क्रिया। यद्येवं क्रियाप्रकारेयं भवति वि-

---

दक्षिणादाच्। विशेषणार्थइति। वाक्यस्मरणयोर्य आकारोननुबन्धकस्तद्ग्रहणवृत्तय इत्यर्थः ॥

संख्या। यदा विधाशब्दः स्त्रीलिङ्ग उपादीयते तदा तस्यानेकार्थत्वादनिष्टेऽपि विषये प्रसङ्गः। यदा तु विधानं विध इति घञर्थे कविधानमिति के कृते पुंल्लिङ्गनिर्देशस्तदा तस्यैकार्थत्वादनिष्टप्रसङ्गः। विधाया अर्थ इत्याचार्यदेशीयवचनम्। गोविधेति। यत्नं विधोच्यते। कः पुनरिति। किं धातुकृतोर्थो धात्वर्थ इति कारकं विवक्षितमथवा धातोरर्थो धात्वर्थः क्रिया विवक्षितेति प्रश्नः। कस्य इति। कल्यमहर्मुखमुच्यते। कालपृथग्भावात् पृथग्भावं मन्यते। कारकाणामिति। पूर्वपदार्थविषये एव प्रश्नप्रतिवचने। पृथग्भावस्य सुज्ञानत्वात्तद्विषयप्रश्नायोगात्। तत्र पञ्चधा गच्छतीत्येकस्या गमनक्रियायाः शब्देन निवृत्तभेदायाः प्रकारलक्षणपृथग्भावप्रतिपत्तिः। यद्येवमिति। सूत्रन्यासेनैव सिद्धे वार्त्तिकं नारम्भणीयमित्यर्थः। यथा हि सामान्यस्य भेदको विशेषः प्रकार उच्यते। न च गुणकालकारकपृथक्त्वे किं चित्सामान्यमुपात्तं यस्य प्रकारः स्यात्। ननु सूत्रन्यासे पञ्चधा श्लोका इत्यादावपि प्रत्ययेन भाव्यं वार्तिकन्यासे तु न भाव्यमेकधा भुङ्क्त इति च पृथग्भावाभावात्प्रत्ययस्य न प्रसङ्ग इति भिन्नं फलं सूत्रवार्तिकयोः। नैष दोषः। पञ्चधा श्लोका इत्यादौ क्रियापदाप्रयोगेपि अस्तोनिक्रियापदानुषङ्गादस्तिक्रिया-

धयुक्तगताश्च प्रकारे भवन्तीति। एवं विधम्। एवं युक्तम्। एवं गतम्। एवं प्रकारमिति॥

एकाद्धो ध्यमुञन्यतरस्याम्॥४४॥ सहभावे ध्यमुञ् *। सहभावे ध्यमुञ् वक्तव्यः। ऐकध्यं राशिं कुरु। सं तर्हि वक्तव्यः। न वक्तव्यः। न अधिकरणविचाल इत्युच्यते न चावश्यं स एवाधिकरणविचालः। यदेकमनेकं क्रियते। यदप्यनेकमेकं क्रियते सोऽप्यधिकरणविचालः॥

द्वित्र्योश्च धमुञ्॥ ४५॥ धमुञन्तात् स्वार्थे डदर्शनम् *। धमुञन्तात्स्वार्थे डो दृश्यते। स च विधेयः। पथि द्वैधानि। संशये द्वैधानि॥

याप्ये पाशप्॥ ४७॥ पाश्यपि कुत्सितग्रहणम् *। पाशपि

---

पृथग्भावः। एकधा भुङ्क्त इत्यादावनेकप्रकारभुजिक्रियापेक्ष एकप्रकारस्य भुजेरस्त्येव पृथग्भावः। एकः पाक इत्यादौ प्रकारस्याविवक्षितत्वात् प्रत्ययाभावः। प्रकारविवक्षायां तु भवत्येवैकधापाक इति। पञ्च पाका इत्यादौ भिन्ना एव पाका न त्वेकस्य प्रकारत्वं विवक्षितमिति प्रत्ययो न भवति। पञ्चधापाक इत्यादौ तु भवत्येव।

एकाद्धो। धाग्रहणेऽनुवर्तमाने पुनर्धाग्रहणं धामान्स्यादेशार्थमव्ययानन्तर्यादप्यधिकरणविचाल एव ध्यमुञ् विज्ञायेत। ततश्च विधार्थे न स्यादैकध्यं भुङ्क्त इति। सहभाव इति। अनेकस्यार्थस्यैकीकरणं सहभावः। इहाधिकरणविचाल एकस्य द्रव्यस्य विभागेनावस्थापनम्। यथैकं राशिं पञ्चधा कुरु इति। ऐकध्यं राशिं कुर्वित्यत्र त्वेकस्य विभागावस्थापनाभावान्नास्त्यधिकरणविचाल इति मन्यते। वचनं तु विधार्थमेव स्यात्। धाग्रहणं तूत्तरार्थमेव स्यात्। द्वयोरर्थयोर्धमुञर्थं द्वैधं भुङ्क्ते। एकं राशिं द्वैधं कुर्विति। न चावश्यमिति। अधिकरणं द्रव्यमुच्यते। तस्य विचालोऽन्यथाकरणं तच्चैकस्यानेकीकरणमनेकस्य वा एकीकरणमिति सूत्रेणैवेष्टसिद्धिरित्यर्थः। अनेकस्य यदेकीकरणं तत्र प्रकाराभावात्तदर्थमेवाधिकरणविचालेचेति सूत्रमेकस्यानेकीकरणे प्रकारस्यापि संभवात् पूर्वेणैव सिद्धत्वादित्याहुः॥

द्वित्र्योः। पथि द्वैधानीति। स्वार्थिकत्वेऽपि स्वभावात्सत्ववाचित्वात् लिङ्गसंख्यायोगस्तत्रैकशेषेण बहुवचनम्। क्व चित्तु मतिद्वैधानीति पाठः।

याप्ये। याप्यशब्दोऽयमस्त्यपादानसाधनो यापिता अस्माद् गुणा इति याप्यः कुत्सितः। अस्ति कर्मसाधनो यापयितव्यो याप्यः देशान्तरं प्रापयितव्य इत्यर्थः। तत्र विशेषानुपादानादतिप्रसङ्गं मत्वाह। पाशपीति। तद्गुण इति। कुत्सितत्वेन प्रतिपाद्य इत्यर्थः। एतच्चान्तरङ्गत्वाद्भ्य-

कुत्सितग्रहणं कर्तव्यम्। वैयाकरणपाशः। याज्ञिकपाशः। यो हि यापयितव्यो याप्यस्तत्र मा भूदिति। अथ वैयाकरणः शरीरेण कृशः व्याकरणेन शोभनः कर्तव्यो वैयाकरणपाश इति। न कर्तव्यः। कथम्। यस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने तद्गुणे वक्तव्ये प्रत्ययेन भवितव्यम्। न च कार्श्यस्य भावाद् द्रव्ये वैयाकरणशब्दः॥

पूरणाद् भागे तीयादन्॥ ४८॥ पूरणग्रहणं शक्यमकर्तुम्। न ह्यपूरणीयशब्दोऽस्ति यत्र दोषः स्यात्। ननु चायमस्ति मुखतीयः। पार्श्वतीय इति। अर्थवद्ग्रहणे नानर्थकस्येति। एवमस्य न भविष्यति। उत्तरार्थं तर्हि पूरणग्रहणं कर्तव्यम्। प्रागेकादशभ्यो ऽच्छन्दसीति पूरणाद्यथा स्यात्॥

एकादाकिनिच्चासहाये॥ ५२॥ एकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानम् *। एकादाकिनिचि द्विबह्वर्थे प्रत्ययो विधेयः। एकाकी। एकाकिनौ। एकाकिन इति। किं पुनः कारणं न सिध्यति। एकशब्दोऽयं संख्यापदम्। संख्यायाश्च संख्येयमर्थः। सिद्धं तु संख्यादेशवचनात् *। सिद्धमेतत्। कथम्। द्विबह्वर्थायाः संख्याया एकशब्द आदेशो वक्तव्यः। असहायस्य वा *। असहायस्य वा एकशब्द आदेशो वक्तव्यः। असहायः एकाकी। असहायौ एकाकिनौ। असहाया एकाकिनः। सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तमेकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानमिति। नैष दोषः। अयमेकशब्दो ऽस्त्येव संख्यापदम्। तद्यथा। एकः द्वौ

---

वे प्रवृत्तिनिमित्तस्य प्रत्यासन्नत्वात् कुत्साश्रयणस्य न्याय्यत्वात्। यत्र तु प्रवृत्तिनिमित्तस्याकुत्सा न संभवत्यश्वको देवदत्तकः सक इत्यादौ तत्र सहचरितगुणक्रियाकुत्साश्रयेण प्रत्ययो भवत्येव। एवं च देवदत्तपाश इत्याद्यपि भवति यद्यभिधानमस्ति॥

एकादा। एकदाकिनिचीति। एकशब्द- संख्यावाच्येवेति मन्यते। असहायशब्दं च तदर्थं स्वविशेषणत्वान्नाभिधेयनिर्देशो विद्यमानतुल्यजातीयैककार्यसहायार्थं वाचिनः प्रत्ययो यथा स्यादेकमाकाशमित्यादौ मा भूदिति। कथं पुनर्द्विबह्वर्थे प्रत्ययो विधीयते न ह्येकशब्दो द्विबह्वर्थे वर्तत इत्याह। सिद्धंत्विति। संख्येवादेशः संख्यादेशः स च द्विबहुशब्दयोरसहायस्य वेत्यर्थः। द्विबहुशब्दयोरप्यसहायग्रहणं विशेषणमाश्रयणी-

बहव इति । अस्त्यन्यार्थे वर्तते । तद्यथा । सधमादो द्युम्न एकास्ताः । अन्या इत्यर्थः । अस्त्यसहायवाची । तद्यथा । एकाग्नयः । एकहलानि । एकाकिभिः क्षुद्रकैर्जितमिति । तद्योऽसहायवाची तस्यैष प्रयोगः ॥

इति पञ्चमाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

---

अतिशायने तमबिष्ठनौ ॥ ५५ ॥ अतिशायन इत्युच्यते किमिदमतिशायन इति । देश्याः सूत्रनिबन्धाः क्रियन्ते । यावद्ब्रूयात्प्रकर्ष अतिशय इति तावदतिशायन इति । कस्य पुनः प्रकर्षे प्रत्यय उत्पद्यते । ङ्याप्प्रातिपदिकादिति वर्तते । ङ्याप्प्रातिपदिकस्य प्रकर्षे ङ्याप्प्रातिपदिकं वै शब्दः न च शब्दस्य प्रकर्षापकर्षौ स्तः । शब्दे ऽ

---

यमेव । अयमेकशब्द इति । उपलक्षणं चैतदर्थप्रदर्शनम् । प्राथम्ये ऽपि हि वर्तते एके मुख्यप्राणाः । एको गोत्र इति । समानार्थेपि वर्तते तेनैकदिगिति । साधारणेपि वर्तते देवदत्तयज्ञदत्तयोरेका मातेति । एकाग्नय इति । अत्राकिनिचः कनो वा लुग्विज्ञेयः ॥

इति भाष्यप्रदीपे पञ्चमाध्यायस्य तृतीयपादे प्रथममाह्निकम् ॥

---

अतिशायने तमबिष्ठनौ । किमिदमिति । किमयं ल्युडन्तस्य निर्देशआहोस्विद्युडन्तस्य । कस्येह ग्रहणमित्यर्थ इति संदिहानः पृच्छति । देश्या इति । देवष्टव्या देश्याः साधुत्वेन प्रतिपाद्या एते सूत्रे निबध्यन्ते प्रसङ्गेन साधुत्वप्रतिपादनार्थम् । ततो निपातनाद्दीर्घत्वमित्युक्तं भवति । यावदिति । यावत्तावच्छब्दौ परिमाणोपाधिकावपि परिच्छेदसाधर्म्यादन्यत्रापि प्रयुज्येते । प्रकर्ष इति । अनेकार्थत्वाद्धातूनां शेतिरभिभवे अतिशब्दस्तु द्योतकस्तस्यैवार्थस्य । यथा तिष्ठतिर्गतिनिवृत्तौ वर्तते । स एव गतावपि । प्रशब्दस्तु तद्गतस्य प्रारम्भस्य द्योतकः प्रतिष्ठत इति । कस्य पुनरिति । द्रव्यवाचिनीह प्रकृतिर्न च द्रव्यस्य प्रकर्षोस्तीति मत्वा प्रश्नः । ङ्याप्प्रातिपदिकादिति वर्तत इति । ननु सुबन्तसमानाधिकरणवृत्तिभिरेतैस्तद्धितैर्भवितव्यम् । यदुक्तं प्रियकुत्सनादिषु ततः प्रवर्ततेसौ विभक्त्यन्त इति । घकालतनेषु कालनाम्न इत्यलुग्विधानाल्लिङ्गाच्च । नैष दोषः । प्रकृतेरिदमुपलक्षणम् । सा च प्रकृतिः सुबन्ता वा भवतु ङ्याप्प्रातिपदिकं वेति विशेषे तात्पर्याभावः । न च शब्दस्येति । शब्दस्याभिधानत्वादभिधानस्य चाभिधेये गुणभावाद् गुणस्य च स्वोपकारं प्रत्यनपेक्षत्वादिति भावः । यदा तु तस्य गुणभावो नास्ति तदा भवत्येव प्रकर्षयोगः । उच्चतरः शब्दो नीचतरः शब्द इति । ननु च यथा शुक्लतरः पट इति गुणस्यापि प्रकर्ष आश्रीयते द्रव्यप्रकर्षहेतुत्वेन तथा शब्दस्याप्याश्रीयताम् । नैतदस्ति । शुक्लादयो

संभवादर्थे कार्यं विज्ञास्यते । कः पुनर्ङ्याप्प्रातिपदिकार्थः । द्रव्यम् । नवैद्रव्यस्य प्रकर्ष इष्यते । एवं तर्हि गुणः । एवमपि गुणग्रहणं कर्तव्यम् । द्रव्यमपि ङ्याप्प्रातिपदिकार्थो गुणोपि । तत्र कुत एतत् । गुणस्य प्रकर्षे भविष्यति न पुनर्द्रव्यस्य प्रकर्ष इति । क्रियमाणे चापि गुणग्रहणे समानगुणग्रहणं कर्तव्यम् । शुक्लात् कृष्णे मा भूदिति । न तर्हीदानीमिदं भवति । अध्वर्युर्वै श्रेयान् । पापीयान्प्रतिप्रस्थाता । अन्धानां काणतम इति । समानगुणे एषा स्पर्द्धा भवति । अध्वर्युर्वै श्रे-

---

द्रव्यसमवेताः स्वयं प्रकृष्टा द्रव्यप्रकर्षहेतवो भवन्तीति युक्तस्तत्र गुणप्रकर्षाश्रयः शब्दस्तु वाचकत्वादभिधेयासमवायात् स्वगतेन प्रकर्षेणाभिधेयं प्रकर्षयुक्तं न शक्नोत्यवगमयितुमिति तत्प्रकर्षं प्रत्यनपेक्ष एव । द्रव्यमिति । यत्किंचिदिदं तदितिसर्वनामपरामर्शयोग्यं वस्तु तद्द्रव्यत्वेन विवक्षितम् । तेन जाति गुणक्रिया अपि गृह्यन्ते । नवैद्रव्यस्येति । य इस्तु स्वातन्त्र्येणाभिधीयते तस्य प्रकर्षो नास्तीत्यर्थः । तथा हि । शुक्लतरं रूपमित्यत्र गुणस्यापि प्राधान्येनाश्रयणाद् द्रव्यस्याश्रितादेव निमित्तान्तरात् प्रकर्षः । एवं तर्हीति । आश्रितोभिधेयधर्मो गुणः स च कश्चिच्छब्दप्रवृत्तिनिमित्तं शुक्लतरः पटइति यथा । पटस्य स्वतो नशुक्लस्य नाप्यशुक्लस्य शुक्लो गुणो व्यपदेशहेतुरेवं स्वगतप्रकर्षद्वारेण द्रव्यस्य स्वतो ऽप्रकृष्टस्य प्रकृष्टव्यपदेशहेतुर्भवति । तदुक्तं हरिणा । द्रव्यस्याव्यपदेशस्य य उपादीयते गुणः । भेदको व्यपदेशाय तत्प्रकर्षोभिधीयतइति । अरूपं पररूपेण द्रव्यमाख्यायते यथा । अप्रकर्षं प्रकर्षेण गुणस्यापीष्यते तथा इति ॥ यद्यपि तत्र द्रव्ये बहवो गुणाः सन्ति तथाप्यन्तरङ्गत्वात्प्रवृत्तिनिमित्तगुणप्रकर्षाश्रयः प्रत्ययः । क्रियाशब्देभ्यः पाचकादिभ्यः क्रियायाः प्रवृत्तिनिमित्तत्वात् तत्प्रकर्षे प्रत्ययो जातिशब्देभ्यस्तु जातेः प्रकर्षाभावात्तत्सहचरितप्रसिद्धत्वाद्दोहादिप्रकर्षे प्रत्ययः । उपाधिसंसर्गेण तु विनाद्रव्यस्य नप्रकर्षोनापि शब्दावाच्यत्वमस्ति । तदुक्तम् । सर्वस्यैव प्रधानस्य न विनाभेदहेतुना । प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यतामिति । तत्रवास्तवः प्रकर्षो द्रव्ये भवतु मा वा आश्रितधर्मद्वारकस्तु तत्प्रकर्षः शब्देनाभिधीयते न तु तन्निरपेक्षः स्वगतः । अद्रव्यप्रकर्षइति निषेधउपचरितगुणक्रियागतप्रकर्षद्रव्यविषयो द्रष्टव्यः । एवमपीति । यथा गुणस्य नित्यस्य नित्यद्रव्यसमवेतस्य कस्य चिन्महत्त्वादेः स्वतः प्रकर्षो ऽनित्यस्य तु कारणकृतस्तथाद्रव्यस्यापीति मन्यते । समानगुणग्रहणमिति । द्वयोः परिपूर्णयोर्भिन्नजातीययोर्गुणयोरेकस्य परिपूर्णतरत्वे सति प्रकर्षसद्भावात् कृष्णाच्छुक्लतर इति मा भूदित्येवमर्थमित्यर्थः । अध्वर्युर्वैश्रेयानिति । अध्वर्योः परिपूर्णं प्रशस्यत्वं प्रतिप्रस्थातुरपि पापत्वं तयोः परस्परापेक्षः प्रकर्ष इति मन्यते । अन्धानां काणतम इति । अन्धा नेत्रद्वयेन न पश्यन्ति काणस्त्वे-

यान् अन्येभ्यः प्रशस्येभ्यः। पापीयान्प्रतिप्रस्थाता अन्येभ्यः पापेभ्यः। अन्धानां काणतम इति। कश्चिदयं सौक्ष्म्ये वर्तते। सर्वं इमे किं चित्पश्यन्ति अयमेषां काणतम इति। अदूरविकर्ष इति वक्तव्यम्। इह माभूत्। महान्सर्षपः महान्हिमवानिति। जातेर्न। जातेर्नेति वक्तव्यम्। इह माभूत्। वृक्षोयं प्लक्षोयमिति। न तर्हीदानीमिदं भवति। गोतरः गोतरा। अश्वतरः। अश्वतरेति। नैष जातेः प्रकर्षः। कस्य तर्हि। गुणस्य। गौरयं यः शकटं वहति। गोतरोयं यः शकटं वहति सीरं च। गौरियं या समांसमां विजायते। गोतरेयं या समांसमां विजायते स्त्रीवत्सा च। अश्वोयं यश्चत्वारि योजनानि गच्छति। अश्वतरोयं योष्टौ योजनानि गच्छति। तथा तिङश्चेत्यत्र क्रियाग्रहणं कर्तव्यम्। साधनप्रकर्षे माभूत्। नैष दोषः। यत्तावदुच्यते गुणग्रहणं कर्तव्यमिति। न कर्तव्यम्। यस्य प्रकर्षोस्ति तस्य प्रकर्षे भविष्यति। गुणस्य चैव प्रकर्षो न द्रव्यस्य। कथं विज्ञायते। एवं हि दृश्यते लोके इह समाने आयामे विस्तारे पटस्यान्योर्घो भवति काशिकस्यान्यो माथुरस्य। गुणान्तरं च खल्वपि शिल्पिन उत्पादयमाना द्रव्यान्तरेण प्रक्षालयन्ति। अन्ये न शुद्धं धौतकं कुर्व-

---

केनेति तदपीत्थं काणस्य प्रकर्षं मन्यते। समानगुणइति। समानगुणे भिन्नाश्रयवर्त्तिनि विवक्षिते तदाश्रया स्वर्द्धेत्यर्थः कश्चिदयमिति। ततश्चान्धानामपि वास्तव काणत्वं विद्यते न तु लोकप्रसिद्धम्। तच्चदर्शनप्रकर्षाश्रयः प्रत्ययस्तथा च लोके प्रसिद्धिरन्धानां काणो राजेति महान्हिमवानिति। सर्षपान्महीयान् हिमवानिति मा भूदित्यर्थः। जातेरिति। आश्रयप्रकर्षाज्जातेः प्रकर्षं मन्यते। कस्य तर्हीति। प्रश्नः। गुणस्येति। परिहारः। अभिधेयसहचरितलोकेप्रसिद्धगुणप्रकर्षाश्रयो द्रव्यस्य प्रकर्ष इत्यर्थः। के चित्तु गुणसमुदाये शब्दप्रवृत्तिं मन्यमानाः शब्दार्थान्तर्भूतस्यैवायं गुणस्य प्रकर्ष इत्याहुः। साधनप्रकर्षे मा भूदिति। ननु च साधनस्य गुणभावात् प्रधानस्य च क्रियायाः प्रकर्षसंभवात्तत्प्रकर्ष एव प्रत्ययो भविष्यति। एवं मन्यते। प्रधानानि स्वगतेनापि धर्मेण तद्वत्वेन व्यपदिश्यन्ते गुणगतेनापि तत्र साधनप्रकर्षोऽपि क्रियाप्रकर्षे प्रत्ययो मा भूत् स्वगते यथा स्यादित्येवमर्थं क्रियाग्रहणं कर्तव्यम्। नैष दोष इति। बहूनामपि दोषाणां प्रक्रमे सामान्यस्य विवक्षितत्वादेकवचननिर्देशः। यस्य प्रकर्षोस्तीति। संभवव्यभिचारापेक्षत्वादुपाधिनिर्देशस्येति भावः। काशिकस्येति। काशिषु भव इति ठञ्ञिठयोरेकतरः प्रत्ययः। गुणान्तरमिति। पूर्वं मूल्यान्तरदर्शनाद-

न्ति अन्येन शैफालिकमन्येन माध्यमिकम् । यदप्युच्यते क्रियमाणेचापि गुणग्रहणे समानगुणग्रहणं कर्तव्यम् । शुक्लात्कृष्णे मा भूदिति । न कर्तव्यम् । समानगुण एव स्पर्द्धा भवति । नह्याढ्याभिरूपौ स्पर्द्धेते वाचकेन खल्वप्युत्पत्तव्यम् । न च शुक्लात्कृष्णेप्रत्यय उत्पद्यमानो वाचकः स्यात् । यदप्युच्यते अदूरविप्रकर्षे इति वक्तव्यमिति । न वक्तव्यम् । अदूरविप्रकर्षे एव स्पर्द्धाभवति । नहि निष्कधनः शतनिष्कधनेन स्पर्द्धते । यदप्युच्यते । जातेर्नेति वक्तव्यमिति । न वक्तव्यम् । जननेन या प्राप्यते सा जातिः । न चैतस्यार्थस्य प्रकर्षापकर्षौ स्तः । यदप्युच्यते तिङश्चेत्यत्र क्रियाग्रहणं कर्तव्यम् । साधनप्रकर्षे मा भूदिति । न कर्तव्यम् । साधनं वै द्रव्यं न च द्रव्यस्य प्र-

---

गुणप्रकर्षः प्रतिपादितो ऽत्र तु प्रयत्नभेददर्शनादिति विशेषः । शुक्लादिति । कृष्णे प्रतियोगिनि विवक्षिते शुक्लशब्दात्प्रत्ययो मा भूदित्यर्थः । नह्याढ्याभिरूपाविति । स्पर्द्धाहेतोर्गुणस्य शब्दे नानाश्रयणाच्छब्दाश्रितस्पर्द्धाहेतुप्रकर्षे तु भवत्येव प्रत्यय आढ्याभिरूपयोराढ्यः श्रेयानिति । शुक्लकृष्णयोरपि तदा भवति प्रत्ययउज्ज्वलतरोयं कृष्णाच्छुक्ल इति । न च शुक्लादिति । शुक्लतर इत्युक्ते शब्दप्रवृत्तिनिमित्तप्रत्यासन्नशुक्लगुणान्तरापेक्षः प्रकर्षः शुक्लगुणनिमित्तद्रव्यप्रकर्षावगमादिति भावः । नहि निष्कधन इति । अदूरान्तरयोरेव संप्रधारणविषयत्वादिति भावः । जननेनेति । अयत्नलभ्यत्वप्रतिपादनपरमेतत् । नित्यानां परमाण्वादीनां जनमाभावात् तद्गताया जातेर्जननेनाप्राप्यत्वाद् अयत्न लभ्यस्यायमर्थः सत्तादिर्न प्रकर्षापकर्षभाक् । घटादिके च द्रव्ये यत्नेनोत्पाद्यमाने पुरुषप्रयत्नेन विना नित्या जातयो व्यक्तिमायान्ति । यद्यपि बलाकादिगतस्य शौक्ल्यादेरयत्न लभ्यत्वं तथाप्याश्रयभेदाद् गुणस्य भेदावगमादस्ति प्रकर्षापकर्षयोगो जातेस्त्वाश्रयभेदेपि भेदाभावात्प्रकर्षापकर्षयोः । साधनं वै द्रव्यमिति । ननु च शक्तिः साधनमस्ति च तत्प्र कर्षोयदाह साधकतमं करणमिति । नैष दोषः । पचति देवदत्तइति सामानाधिकरण्यदर्शनाच्छक्तिद्रव्ययोस्ति कृन्तेन भेदस्यानवगमादभेदमाश्रित्य निर्देशः । न च प्रधानस्य क्रियायाः स्वतःप्रकर्षसंभवे गुणभूतसाधनप्रकर्षापेक्षास्ति । पचति तरामितिचोक्ते क्रियाप्रकर्षो गम्यते नतु साधनप्रकर्षः । प्रकर्षयुक्तेपि साधने कदा चित् क्रियाप्रकर्षाभावात् क्रियाप्रकर्षे तु कार्यस्य कारणाव्यभिचारान्नियमेन साधनप्रकर्षानुमानात् क्रियाप्रकर्ष एव प्रत्ययः । एको द्वौ त्रय इत्यादिकायाः संख्यायाः सर्वत्र परिच्छेदकत्वाविशेषात् प्रकर्षाभावः । बहुत्वसंख्यायास्त्वनियतसंख्येयत्वाद्भवति प्रकर्षः बहुतरा इति । एवमुन्मानप्रमाणपरिमाणानामपि प्रकर्षा-

कर्षापकर्षौ स्तः। किं पुनरेकं शौक्ल्यमाहो स्विन्नाना। किं चातः। यद्येकम्, प्रकर्षो नोपपद्यते। नहि तेनैव तस्य प्रकर्षो भवति। अथ नाना। समानगुणग्रहणं कर्त्तव्यम्। शुक्लात् कृष्णो मा भूदिति। अस्त्वेकं शौक्ल्यं तत्तु विशेषवत्। किं कृतो विशेषः। अल्पत्वमहत्वकृतः। अथवा पुनरस्त्वेकं निर्विशेषं च। ननु चोक्तं प्रकर्षो नोपपद्यते नहि ते नैव तस्य प्रकर्षापकर्षौ स्त इति। गुणान्तरेण प्रच्छादनात् प्रकर्षो भविष्यति। अथवा पुनरस्तु नाना। ननु चोक्तं समानगुणग्रहणं कर्त्तव्यम्। शुक्लात् कृष्णो मा भूदिति। न कर्त्तव्यम्। समानगुण एव स्पर्द्धा भवति। नह्याढ्याभिरूपौ स्पर्द्धेते वाचकेन खल्वप्युत्पत्तव्यम्। न च शुक्लात्कृष्ण उत्पद्यमानो वाचकः स्यात्। किमन्तात्पुनरुत्पत्त्या भवितव्यम्। द्वितीयान्ताद् अतिशय्यमानात्। शु-

---

भावो विज्ञेयः। भाष्यकारेण तु जातिप्रकर्षाभावोक्तन्यायानुसारेण गम्यमानत्वान्नोक्तः। किं पुनरेकमिति। ननु समानधर्मोपलब्धाद्विशेषाग्रहणाच्च संशयो न चैकानेकयोर्विशेषाग्रहणम्। नैष दोषः। एकस्यापि भेदव्यवहारो दृश्यते। यथपरुत्नवान्पटुरासीत् पटुतरश्चैषमः। अन्यएवायं संवृत्त इति। तथानेकस्मिन्नप्येकव्यवहारो दृश्यते। यथा भिन्नापि क्रिया निवृत्तभेदाख्यातेनाभिधीयत इत्येकोच्यते। तत्त्वतो हि भवद्भिरास्यते भवन्त आसत इत्यादौ भिन्नैः कर्तृभिः साध्यानिस्वसमवेतानि भिन्नान्येवासनानि। एकत्वं चाश्रित्योक्तं न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वादिति। एवं च किमेकं शौक्ल्यमाश्रयभेदात्तूपचरितभेदमुतानेकमेवेति संशयात् प्रश्न उपपन्नः। यद्येकमिति। एकत्वेजातिवद् गुणस्य प्रकर्षानुपपत्तिः। समानगुणग्रहणमिति। तुल्ये भेदे यथा शौक्ल्यस्य शौक्ल्यान्तरापेक्षः प्रकर्ष एवं कृष्णाद्यपेक्षोपीति तदपेक्षे प्रकर्षे प्रत्ययनिवृत्त्यर्थं समानगुणग्रहणं कर्त्तव्यमित्यर्थः। ननु यस्याप्येकं शौक्ल्यं तेनापि भिन्नगुणापेक्षे प्रकर्षे प्रत्ययस्य निवृत्तिर्विधेया। नैष दोषः। एकत्ववादिनो यथा शौक्ल्यस्यात्मापेक्षप्रकर्षानुपपत्तिरेवं गुणान्तरापेक्षोपि प्रकर्षो नोपपद्यते। यथा गोत्वं नात्मापेक्षयानापि जात्यन्तरापेक्षया प्रकृष्यते गुणभेदवादी तु भेदनिबन्धनं प्रकर्षं सर्वत्रेच्छतीति तेनैव समानगुणग्रहणं कर्त्तव्यम्। विशेषवदिति। ततो विशेषाश्रयत्वादन्यत्वादुपपन्नः प्रकर्षः। अल्पत्वमहत्वकृत इति। क्वचिदाश्रयेल्पं शौक्ल्यं क्वचित्तु महदित्यर्थः। गुणान्तरेण प्रच्छादनादिति। संभेदात् मिश्रीकरणादित्यर्थः। यथा जात्युत्पलादिवासितायाः मल्लिकायाः। किमन्तादिति। अतिशायन इति किं प्रत्ययार्थनिर्देश आहोस्वित्प्रकृत्यर्थस्य विशेषणमिति सम-

क्लमतिशेते शुक्लतरः। कृष्णमतिशेते कृष्णतरः। यदि द्वितीयान्ता-त्तिशय्यमानात् कालीतिशेते कालीं कालितार इति प्राप्नोति। का-लतर इति चेष्यते। तथा काली अतिशेते कालं कालतरा इति प्रा-प्नोति कालितरेति चेष्यते। तथा गार्ग्यौतिशेते गर्गान् गर्गतर इति प्राप्नोति गार्ग्यतर इति चेष्यते। तथा गर्गा अतिशेरते गार्ग्यं गार्ग्यतरा इति प्राप्नोति गर्गतरा इति चेष्यते। एवं तर्हि प्रथमान्तात्स्वार्थिको भविष्यति। कालीतिशेते कालतरः। काली अतिशेते कालितरा। गार्ग्यः अतिशेते गार्ग्यतरः। गार्गा अतिशेरते गर्गतराः। यदि प्रथमान्तात्स्वार्थिकः। कुमारित-रा। किशोरितरा। अव्यतिरिक्तं वय इति कृत्वा वयसि प्रथम इति ङीप् प्राप्नोति। तरपोक्तत्वात् स्त्रीत्वस्य प्रत्ययो न भविष्यति। टा-बपि तर्हि न प्राप्नोति। उक्तेपि हि भवन्त्येते टाबादयः। उक्तमेतत्। स्वार्थिकाष्टाबादय इति। ङीबपि तर्हि प्राप्नोति। एवं तर्हि गुणो-

र्थविभक्तिप्रश्नद्वारेण विचारः। द्वितीयान्तादिति। यदा तिङन्तेन विस्पष्टार्थं विग्रहवाक्यं प्रदर्श्यते। तना द्वितीयान्तादुत्पत्तिः। कृदन्तेन तु वाक्यप्रदर्शने षष्ठ्या भाव्यम्। शुक्लस्या-तिशायन इति तदा षष्ठ्यादौ संदेहो भवति। कर्तरि षष्ठी वा स्यात् कर्मणि वा। कर-णे ल्युट् स्यात् कर्तरि वेति। अथवा द्वितीयाग्रहणमुपलक्षणार्थमिति षष्ठ्यपि गृह्यते। प्र-त्ययार्थसामर्थ्यलभ्या च समर्थविभक्तिः। कालितर इति। घरूपकल्पेति ह्रस्वः। गर्ग-तर इति प्राप्नोतीति। हत्तावपि लुग्विधानात्संख्याविशेषसंप्रत्ययाद्बहुवचनान्तात्प्रत्ययो-त्पत्तिरविरुद्धा। अव्यतिरिक्तं वय इति। प्रत्ययार्थपक्षेत्वर्थो वयः प्रतिपत्तिः वयः प्रकर्ष-णैवासौ कुमारीमतिशेते न तु गुणान्तरेण तस्य विप्रकर्षाच्छब्दो तु वयः प्रतिपत्तिर्ना-स्तीति ङीपो ऽप्रसङ्गः। स्वार्थिकत्वे तु शब्देनैव वयः प्रतिपत्तिरिति ङीप्प्राप्तिः। तरपोक्त-त्वादिति। तरपः स्वार्थिकत्वात् सर्वः पक्षत्यर्थस्तेन द्योत्यइति भावः। ङीबपीति। टा-बपवादत्वात् ङीप इति भावः। अन्ये त्वाहुः कुमारशब्दादुत्पन्ने ङीपा प्रथमवयोविशि-ष्टार्थगतस्य स्त्रीत्वस्याभिव्यक्तत्वात्तरबन्तात् स्त्रीत्वमात्रमभिव्यक्तमिति टाबेव भविष्यति। यथा यत्र तत्रेत्यादौ चलाधिकरणस्याभिव्यक्तत्वात्तद्धितान्तात्सामयिकी प्रथमैवोत्पद्यते न सप्तमी। भाष्यकारस्तु निमित्तस्य संनिधानादपवादेनैवात्र ङीपा भाव्यं न तु टापेति पक्षान्तरमाश्रयति। एवं तर्हि गुण इति। अतिशेतेनेनेति अतिशायनो गुणोभिधीयते। करणे ल्युट् आश्रयद्रव्यवाचिनः स्वसमवेते गुणे प्रत्ययविधिः। ततो व्यतिरिक्तार्थाभिधा-

भिधीयते। एवमपि लिङ्गवचनानि न सिध्यन्ति। शुक्लतरम्। शुक्लतरा। शुक्लतरः। शुक्लतरौ। शुक्लतरा इति। आश्रयतो लिङ्गवचनानि भवन्ति। गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। तद्यथा। शुक्लं वस्त्रं शुक्ला शाटी शुक्लः कम्बलः शुक्लौ कम्बलौ शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भविष्यति। अथवा क्रियाभिधीयते। एवमपि लिङ्गवचनानि न सिध्यन्ति। आश्रयतो लिङ्गवचनानि भविष्यन्ति। एवमपि द्विवचनं प्राप्नोति। यश्च हि अतिशेते यश्चातिशय्यते। उभौ तौ तस्याश्रयौ भवतः। नैष दोषः। कथमुशेतिरकर्मकः अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति। कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थ क्रियाणां वा भवन्ति। कर्तृस्थभावकश्च शेतिः। अथ यद्येवं द्वितीयान्तादुत्पत्तिः। प्रथमान्ताद्वा स्वार्थिकः। अथापि गुणोऽभिधीयते। अथापि क्रिया। किं गतमेतदियता सूत्रेण। आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्त्तव्यम्। गतमित्याह। कथम्। यदा तावद् द्वितीयान्तादुत्पत्तिः प्रथमान्ताद्वा स्वार्थिकः। तदा कृत्यल्युटो बहुलमित्येवमत्र ल्युड्भविष्यति। यदा गुणोऽभिधीयते तदा न्यायसिद्धमेव। यदापि क्रिया तदापि न्यायसिद्धमेव। अथवाऽतिशाययतीत्यतिशायनम्। कः प्रयोज्यार्थः।

---

नाद्यान्ताद्वयोर्लक्षणङीबभावः। गुणाभिधानेकालितरद्वति। सामानाधिकरण्याभावाद्घादिष्विति कृत्वो न प्राप्नोतीति चेद्वचनाद्वैयधिकरण्येऽपि भविष्यति। एवमपीति। षष्ठीप्रसङ्गस्तु द्रव्यवचनात्तचोदितः। सोयमित्यभेदस्य गुणगुणिनोः सर्वदात्र विवक्षितत्वात् सत्यस्मेपि त्वभेदविवक्षायां सत्त्वादिवत् स्वलिङ्गसंख्या ऽपरित्यागप्रसङ्गः। आश्रयत इति। विशेषणानां चाजातेरिति वचनात् तत्र हि विशेषणशब्देन परोपकारायोपात्ताः शेषभूताः शुक्लादयो गुणा गृह्यन्ते। अथवा क्रियेति। अतिशयो ऽतिशायनमिति भावेल्युड्विधानात्। आश्रयौ भवत इति। उभनोर्निर्वर्तकत्वादिति भावः। अकर्मका अपीति। अर्थान्तरवृत्तित्वात्। कर्मापदिष्टा इति। अतिशयक्रियाकर्तर्येव समवेता नतु कर्मणीति कर्माश्रयलिङ्गसंख्याभाव इत्युक्तं भवति। कर्मापदिष्टा इति द्विवचनमिह कर्मापदिष्टो विधिः। कर्माश्रित्य तस्य चोदितत्वात्। आश्रयतो लिङ्गवचनानीत्यत्र समवाय्याश्रयो गृह्यते न तु निर्वर्तक इत्यर्थः। ल्युट् भविष्यतीति। कर्तृसाधनः। कः प्रयोज्यार्थ इति।

गुणा गुणिनं प्रयोजयन्ति । गुणी वा गुणान् प्रयोजयति । कः पुन रिह शेत्यर्थः । इह यो यत्र भवति शेते ऽसौ तत्र । गुणाश्च गुणिनि शेरते । शेत्यर्थः कारितार्थो वा निर्देशोयं समीक्षितः । शेत्यर्थे नास्ति वक्तव्यं कारितार्थं ब्रवीमिते ॥ १॥ गुणी वा गुणसंयोगाद् गुणो वा गुणिना यदि । अभिव्यज्येत संयोगात्कारितार्थो भविष्यति ॥ २॥ इहाप्यस्यापि सूक्ष्माणि वस्त्राणि अस्यापि सूक्ष्माणि वस्त्राणीति परत्वादातिशायिकः प्राप्नोति । आतिशायने बहुव्रीहावुक्तम् * । किमुक्तम् । पूर्वपदातिशये आतिशायिकाद्बहुव्रीहिः सूक्ष्मवस्त्रतरार्थ इति । उत्तरपदातिशये आतिशायिको बहुव्रीहेर्बह्वाढ्यतरार्थ इति । इह त्रीणि शुक्लानि वस्त्राणि प्रकर्षापकर्षयुक्तानि । तत्र पूर्वमपेक्ष्योत्तरेद्वितरबन्ते । द्वयोस्तरबन्तयोरेकस्मात्प्रकर्षयुक्ताच्छुक्ल-

---

अचेतनत्वाद् गुणानां प्रयोजकत्वानुपपत्तिं मन्यते । गुणागुणिनमिति । अस्माभिः प्रकृष्टे स्वमतिशेष्वेति तत्समर्थाचरणलक्षणस्याचेतनानामपि प्रयोजकव्यापार इति कारकप्रकरणे प्रतिपादितम् । कः पुनरिति । शेतेरनेकार्थत्वात्प्रश्नः । यो यत्रेति । स्थानार्थः । शेतेर्यथा जलाशय इत्यत्रेति भावः । गुणा गुणिनीति । अवतिष्ठन्त इत्यर्थः । तान् गुणान् गुण्यतिशाययति अतिशयेनावस्थापयतीत्यर्थः । पूर्वं गुणानां प्रयोजकत्वमुक्तं पश्चाद्गुणिनः शेत्यर्थ इति । प्रकृत्यर्थोऽण्यर्थोपिचान्तर्भूतइत्यर्थः । शेत्यर्थे नास्तीति । तस्य प्रसिद्धत्वात् । गुणीवेति । गुणसंबन्धाद्गुणवानतिशेतेगुणिसंबन्धाद्गुणोवा । अभिव्यज्येतेति । प्रकृष्टत्वे नेतिभावः । कारितार्थ इति । गुणोगुणिनमतिशाययतिगुण्यपिगुणमित्यस्मिन्नर्थोपपत्तिः । परत्वादिति । सूक्ष्मतरस्य इति प्राप्नोति । सूक्ष्मवस्त्रतर इति चेष्यते । प्रकर्षस्यान्यपदार्थं प्रतिविशेषणत्वस्यच युगपद्विवक्षायां विप्रतिषेधोपपत्तिः आतिशायिकादिति । पूर्वविप्रतिषेधेनेति भावः । उत्तरपदातिशय इति । परविप्रतिषेधेन तत्र स्वरेविशेषस्तरबन्तेन समासे बह्वोर्नञ्वदुत्तरपदभूम्नीति बह्वाढ्यतरशब्दोन्तोदात्तो भवति । बहुव्रीहेस्तरपि सति तरपः पित्त्वादनुदात्तत्वान्मध्योदात्तत्वप्रसङ्ग स्तथा कपि विशेषो बह्वाढ्यतरक इति तरबन्तेन समासे भवति । बहुव्रीहेस्तरपि बह्वाढ्यकतर इति स्यात् । यदा त्वत्रैव पूर्वपदार्थोतिशयस्तदा बहुव्रीहौ कृते तरब्वेदितव्यः । प्रकर्षापकर्षयुक्तानीति । अवयवधर्मेण समुदायव्यपदेशस्तत्र प्रथममप्रकर्षयुक्तं मध्यमं पूर्वापेक्षयाप्रकर्षयुक्तमन्त्यापेक्षयाप्रकर्षयुक्तमन्त्यन्तु प्रकर्षयुक्तमेवेति योज्यम् । तत्रेति । पूर्वापेक्षयाद्वयोरपि प्रकृष्टत्वाच्छुक्लतरत्वं तयोस्त्वेकतरस्यान्यतरापेक्षया प्रकर्षविवक्षायां तरबन्तात्तरबुत्पत्तिप्रसङ्गः ।

तरशब्दादुत्पत्तिः प्राप्नोति। शुक्लशब्दादेव चेष्यते। शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययविज्ञानम् *। शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययो विज्ञायते। शुक्लतरशब्दे शुक्लशब्दोस्ति तस्मादुत्पत्तिर्भविष्यति। नैतद्विवदामहे शुक्लतरशब्दे शुक्लशब्दोस्ति नास्तीति किं तर्हि शुक्लतरशब्दोप्यस्ति तत उत्पत्तिः प्राप्नोति। तदन्ताच्च स्वार्थे छन्दसि दर्शनं श्रेष्ठतमायेति *। तदन्तादातिशायिकान्तात्स्वार्थे छन्दसि आतिशायिको दृश्यते। देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे। एवं तर्हि मध्यमात् शुक्लशब्दात्पूर्वंपरापेक्षादुत्पत्तिर्वक्तव्या। मध्यमस्य शुक्लशब्दः पूर्वमपेक्ष्य प्रकृष्टः परमपेक्ष्य न्यूनः। न च न्यूनः प्रवर्त्तते। अथ वा उत्पद्यतां लुग्भविष्यति। वाचकेन खल्वप्युत्पत्तव्यम्। न च शुक्लतरशब्दादुत्पद्यमानो वाचकः स्यात्। न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यम्। केन तर्हि। तमपा। पूर्वेण स्पर्द्धमानो यो मध्यमो लभते सितः। परस्मिन् न्यूनतामेति न च न्यूनः प्रवर्त्तते॥ १॥ अपेक्ष्ये

---

शुक्लतरस्येति। न्यूनमध्यमोत्कृष्टानां सर्वेषां शौक्ल्यसंभवाच्छुक्लव्यपदेशाच्छुक्लशब्दादेव तरबुत्पत्स्यत इत्यर्थः। शुक्लतरशब्द इति। शुक्लतरशब्दो वाचको यस्यार्थस्य तस्मिन्नर्थे शुक्लशब्दो वाचकत्वेनास्तीत्यर्थः। उत्पत्तिः प्राप्नोतीति। अनिष्टमपि प्राप्नोति सत्यामपीष्टसिद्धावित्यर्थः। श्रेष्ठतमायेति। श्रेष्ठायेत्यर्थः। मध्यमादिति। मध्यमवाचिनः शुक्लादन्यभिधेये प्रत्ययो वक्तव्यः। शुक्लमतिशेते शुक्लतर इति। अनेन च वक्तव्येन तक्रकौण्डिन्यन्यायेन तृतीयशुक्लवाचिनः शुक्लतरशब्दादुत्पत्तिर्बाध्यते। मध्यमस्य शुक्लः पूर्वापेक्षया शुक्लतरो भवति। तृतीयापेक्षया तु न्यूनत्वाच्छुक्ल एव भवति न शुक्लतर इति शुक्लशब्दादेव मध्यमशुक्लवाचिनः प्रत्ययो वक्तव्य इत्यर्थः। न च न्यून: प्रवर्त्तत इति। स्वगतप्रकर्षापेक्षायां तद्धितोत्पत्तावित्यर्थः। ततश्च पूर्वमतद्धितान्त एव शुक्लशब्दस्तृतीये शुक्लेऽभिधेये प्रत्ययमुत्पादयति। लुग्भविष्यतीति। गतार्थत्वादप्रयोग एव लुक्। एकेनैव तरपा आद्यमध्यमशुक्लापेक्षतृतीयप्रकर्षस्य प्रतिपादनात्। न चेति। शुक्लतरतरशब्दस्य प्रयोगाभावादवाचकत्वम्। न खल्वपीति। यदि तावत् त्रयाणामन्यतमस्य प्रकर्षो विवक्ष्यते। तदा शुक्लतममिति भाव्यम्। न तु शुक्लतरमित्यर्थः पूर्वमनपेक्ष्य द्वयोरन्यतरस्य प्रकर्षविवक्षा तदा पूर्वानपेक्षायां मध्यमं शुक्लमेव भवति न तु शुक्लतरमिति। शुक्लशब्दादेवोत्पत्तिः सिद्धा शुक्लतर इति न कश्चिद्दोषः। पूर्वोक्तार्थसंग्रहश्लोकाः। पूर्वेणेति। सितः शुक्लः पूर्वेण स्पर्द्धमानस्तदपेक्षयोत्तरः प्रकर्षं लभते। तृतीयापेक्षया न्यून एवेत्यर्थः। अपेक्ष्येति।

मध्यमः पूर्वमाधिक्यं लभते सितः । परस्मिन्न्यूनतामेति यथामात्यः स्थिते नृपे ॥ २ ॥ अस्तु वापि तरस्तस्मान्नापशब्दो भविष्यति । वाचकश्चेत्प्रयोक्तव्यो वाचकश्चेत्प्रयुज्यताम् ॥३॥

द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५७ ॥ द्विवचनइत्युच्यते तत्रेदं न सिध्यति । दन्तोष्ठस्य दन्ताः स्निग्धतराः । पाणिपादस्य पाणी सुकुमारतरौ । अस्माकं च देवदत्तस्य च देवदत्तोभिरूपतरः । यदि पुनर्द्व्यर्थोपपद इत्युच्यते तत्रायमप्यर्थः । विभज्योपपदग्रहणं न कर्त्तव्यं भवति । इहापि सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति द्व्यर्थोपपद इत्येव सिद्धम् । नैवंजातीयका द्व्यर्थता शक्या विज्ञातुम् । इहापि प्रसज्यत । सांकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा इति । अवश्यं खल्वपि विभज्योपपदग्रहणं कर्तव्यम् । यो हि बहूनां विभागस्तदर्थम् । सांकाश्यकेभ्यश्च पाटलिपुत्रकेभ्यश्च माथुरा अभिरूपतरा इति । तत्तर्हि द्व्य-

---

पूर्वेण समानार्थो दृष्टान्तोपादानाय तु पुनरुक्तः । नापशब्द इति । गतार्थत्वात् लुम्भावात् वाचकश्चेत्प्रयोक्तव्य इति । त्वं मन्यसे तदा शुक्लतरतरमिति यदि वाचकस्ततः प्रयुज्यतां न तु वाचकस्तस्मान्न प्रयोक्तव्य इत्यर्थः ॥

द्विवचन । द्विवचनं च विभज्यं च द्विवचनविभज्यम् । निपातनाद्भजेः विपूर्वात् यत्प्रत्ययो द्विवचनविभज्यं च तदुपपदं चेति कर्मधारयः । तस्मिन्सति तिङन्तात्सुबन्ताच्चातिशायने तरबीयसुनौ भवतः । तच्चोपपदं विग्रहवाक्यएव प्रयुज्यते । वृत्तौ तु गतार्थत्वान्नावश्यं प्रयुज्यते । एवं चोपपदग्रहणं विस्पष्टार्थम् । तत्रेदं न सिध्यतीति । पारिभाषिकद्विवचनाश्रयः पूर्वपक्षः । अर्थाश्रयस्तूत्तरपक्षः । अस्माकं चेति । अस्मदो द्वयोश्चैकस्मिन् बहुवद्भावः । यदि पुनरिति । पूर्वोक्तेषूदाहरणेषु क्वचिद्राशिद्वयापेक्षस्य क्वचिदर्थद्वयापेक्षस्य द्व्यर्थस्य विद्यमानत्वात्प्रत्ययः सिद्ध इति भावः । इहापीति । सांकाश्यकपाटलिपुत्रकराशिद्वयसंभवात् । सांकाश्यकानामिति । अत्रापि राशिद्वयस्य सद्भावात्तरप् स्यात् । सांकाश्यकावयवः समुदायः सांकाश्यकशब्देनोच्यते पाटलिपुत्रकावयवश्च पाटलिपुत्रकशब्देनोच्यते । एवं निर्द्धारणमुपपद्यते । बहूनां विभाग इति । बहूनां राशीनां मध्यादेकस्य राशेर्यत्र विभागः तत्र राशित्रयादिसद्भावात्तरब्न स्यात् । तत्तर्हीति । ननु चैवंजातीयिका द्व्यर्थतेत्यादिनातिप्रसङ्गोद्भावनेनास्य पक्षस्य दूषितत्वात्कथं पुनरङ्गीकरणम् । नैष दोषः । इह राशिद्वयापेक्षां द्व्यर्थतामाश्रित्याचार्यदेशीयेन यदि पुनरित्याद्यु-

र्थोपपदइति वक्तव्यम् । न वक्तव्यम् । नेदं पारिभाषिकस्य द्विवचनस्य ग्रहणम् । किं तर्ह्यन्वर्थग्रहणम् । उच्यते इति वचनं द्वयोरर्थयोर्वचनं द्विवचनमिति । तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानम् * । तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानं कर्तव्यम् । पटुरभवान्पटुरासीत् । पटुतरस्त्वैषम इति । सिद्धं तु गुणप्रधा-

---

न्यं तत्रायमप्यर्थ इति च । तत्र आचार्य्येणैवंजातीयकेतिराशिद्वयापेक्षा द्व्यर्थता दूषिता । ततोन्या द्व्यर्थताचार्य्यस्याभिमतेति ज्ञात्वा शिष्य आह । तत्तर्हीति । आचार्य्य आह । न वक्तव्यमिति । इयमाचार्य्यस्य द्व्यर्थताभिमता । इह गर्गोऽस्य गणिपादस्येति तिरोहितावयवभेदः समूहः समासार्थः । तच्चैतस्यां वृत्तावभेदैकत्वसंख्योपादायित्वावृत्तिपदस्य परित्यक्तभेदाङ्गीकृताभेदलक्षणैकत्वसंख्यदर्शनं छलक्षणार्थद्वयाश्रया द्व्यर्थतास्ति । यदा त्वितरेतरयोगद्वन्द्वस्तदावयवार्थभेदसद्भावाद् द्व्यर्थता नास्तीति तरन्न भवति प्लक्षन्यग्रोधानां प्लक्षाः स्निग्धतमा इति । अस्माकं च देवदत्तस्य चेत्यत्राप्यर्थद्वयसद्भावादस्ति द्व्यर्थत्वम् । सांकाश्यकानां च पाटलिपुत्रकाःअभिरूपतमा इत्यपरित्यक्तभेदाः समूहिनः शब्देन प्रत्याय्यन्ते न च राशिद्वयापेक्षा द्व्यर्थता शब्देन प्रतिपादिता राशिद्वयस्याप्रयोगादिति द्व्यर्थताभावात्तरबभावः । अथात्र यतश्च निर्धारणमिति कथं षष्ठी यावता पञ्चमीविभक्तइति पञ्चम्या तदपवादेन भाव्यम् । नैष दोषः । सर्वत्रैव निर्धारणे विभागोस्तीति विभक्तग्रहणसामर्थ्याद्यत्र विभाग एव शब्देन प्रतिपाद्यते स एव पञ्चम्या विषयः स एव च विभज्योपपदनिमित्तस्य प्रत्ययस्य । माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इति । समुदायशब्दप्रयोगे तु गवां कृष्णा संपन्नक्षीरतमेत्येवमादौ विभागाविभागसंभवान्न पञ्चमी नापि तरप्प्रत्ययो निर्धारणाश्रये तु षष्ठीसप्तम्यौ भवतो यस्मान्निर्धार्यते यस्यैकदेशो निर्धार्यते यश्च निर्धारणहेतुरेतत्त्रयसंनिधाने निर्धारणं भवतीति तत्रैव षष्ठीसमासनिषेधो भवति । इह तु नागानामुत्तमः नागोत्तम इति त्रयसंनिधानाभावात्संबन्धसामान्ये षष्ठीति समासो भवत्येव । सांकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा इत्यत्रापि शब्देन समुदायस्य प्रतिपादनाद्विभज्यमानस्य द्विरुपादानाद्विभागाविभागसद्भावाद्विभागविषयकार्याभावः । प्रतियोग्यपेक्षत्वात् प्रकर्षस्य विप्रकर्षश्चाच्चित्से विभज्यग्रहणादिहाप्यवधारणमाश्रीयते । तेन समुदायशब्दउच्चार्यमाणे विभज्योपपदनिमित्तप्रत्ययाप्रसङ्गः । पटुरभवानिति । पाटवस्यातिशयेपि प्रतियोग्यपेक्षत्वात् प्रकर्षस्य स एवायमिति प्रत्यभिज्ञानाद् गुणिन एकत्वात्तस्यैव प्रतियोगित्वायोगात् प्रकर्षप्रत्ययाप्रसङ्गः । सिद्धं त्विति । यद्यपि शब्देन गुणो प्राधान्येनोच्यते । तथापि गु-

नत्वात् * । सिद्धमेतत् । कथम् । गुणप्रधानत्वाद् गुणप्रधानोयं निर्देशः क्रियते । गुणान्तरयोगाच्चान्यत्वं भवति । तमेव गुणान्तरयुक्तं वक्तारो भवन्ति । अन्यो भवान् संवृत्त इति ।

अजादी गुणवचनादेव ॥ ५८ ॥ एवकारः किमर्थः । नियमार्थः । नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोन्तरेणैवकारं नियमार्थो भविष्यति । इष्टतोवधारणार्थस्तर्हि । यथैवं विज्ञायेत अजादी गुणवचनादेवेति । मैवं विज्ञायि अजादी एव गुणवचनादिति । किं च स्यात् । न व्यञ्जनादी गुणवचनात् स्याताम् ॥

प्रशस्यस्य श्रः ॥ ६० ॥ इदमयुक्तम् । किमत्रायुक्तम् । अजादी गुणवचनादेवेत्युक्त्वा अगुणवचनानामपि अजाद्योरादेशा उच्यन्ते । नैष दोषः । एतदेव ज्ञापयति भवत एतेभ्योऽगुणवचनेभ्योपि अजादी इति । यदयमजाद्योः परतः आदेशान् शास्ति । एवमपि तयोरिति वक्तव्यं स्यात् । तयोः परत इति । यदि पुनरयं विधिर्ज्ञायते नैवं शक्यं व्यञ्जनादी हि न स्याताम् । उपाधीनां च संकरः स्यात्। पुनर्विधानादजाद्योः । ननु चैते विशेषा अनुवर्त्तेरन् । यद्यप्येते अनुवर्त्तेरन् । व्यञ्जनादी तर्हि न स्याताम् । एवं तर्हि आचार्यप्रवृत्ति-

---

णाश्रयप्रकर्षनिमित्तत्वात्प्रत्ययोत्पत्तेस्तां प्रति गुणस्य प्राधान्यमाश्रित्य गुणप्रधानत्वादित्युच्यते । तत्र गुणभेदेन गुणिनो भेदारोपादुपपन्नो भेदाश्रयप्रकर्षनिमित्तः प्रत्ययः ॥

अजादी । नियमार्थ इति । अन्यथा प्रकर्षेऽजाद्योर्विधानादप्रकर्षे विधिः स्यात् । सिद्धे विधिरिति । स्वरितत्वादतिशायनस्यानुवर्त्तनात्तत्रैव पुनर्विधानं नियमार्थम् ।

प्रशस्य । एवमपीति । अन्यथा तरप्तमपोरादेशविधानं स्यादिति न ज्ञापकं स्यादजादिभावस्य । यदि पुनरिति । अजादी इत्यत्रानुवर्त्य प्रशस्यशब्दादजादी भवतः आदेशश्चेत्येवं व्याख्यानम् । व्यञ्जनादी इति । विशेषविहिताभ्यामजादिभ्यां बाधनात् । ज्ञापकत्वे तु नियमाप्रवृत्तिज्ञापनात् स्वशास्त्रेणैवाजाद्योर्विधानाद् व्यञ्जनाद्योर्भावस्याप्रसङ्गः। द्विवचनविभज्योपपदे ईयसुनन्यत्रेष्ठन्नित्युपाधिसंकरो न भवति । ननु चैतदिति । अतिशायनग्रहणम् द्विवचनविभज्योपपदे ईयसुन्नित्यनुवर्तिष्यतइत्यर्थः ॥ व्यञ्जनादी तर्हीति । यदि च तरप्तमपावनुवर्त्येयातां तदा तयोरपि आदय आदेशाः स्युः । तस्मात्तौ नानुवर्त्यौ । ततश्च विशेषविहिताभ्यां तयोर्बाधप्रसङ्ग एव । आचार्यप्रवृत्तिरिति । नियमाप्रवृत्तिज्ञापनद्वारेण अजादिभावो ज्ञाप्यते न तु साक्षादन्यथा पुनरपि व्यञ्जनाद्योर्बाधः स्यात् । क

ज्ञापयति भवत एतेभ्यो ऽगुणवचनेभ्यो ऽजादी इति। यदयमजाद्यो-रादेशं शास्ति। ननु चोक्तं तयोरिति वक्तव्यमिति। न वक्तव्यम्। प्रकृतमजादिग्रहणमनुवर्तते। क्व प्रकृतम्। अजादी गुणवचनादेवेति। तद्वै प्रथमानिर्दिष्टं सप्तमीनिर्दिष्टेन चेहार्थः। अर्थाद्विभक्तिविपरिणामो भविष्यति। तद्यथा। उच्चानि देवदत्तस्य गृहाणि आमन्त्रयस्वैनम्। देवदत्तमिति गम्यते। देवदत्तस्य गावोऽश्वा हिरण्यमाढ्यो वैधवेयः। देवदत्त इति गम्यते। पुरस्तात्षष्ठीनिर्दिष्टंसदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति। एवमिहापि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्सप्तमीनिर्दिष्टं भविष्यति॥

प्रशंसायां रूपप्॥ ६६॥ स्त्रीलिङ्गेनायं निर्देशः क्रियते एकवचनान्तेन चानेन स्त्रीलिङ्गादेवोत्पत्तिः स्यादेकवचनान्ताच्च। पुंनपुंसकलिङ्गाद्द्विवचनबहुवचनान्ताच्च न स्यात्। नैष दोषः। नायं प्रत्ययार्थः किं तर्हि प्रकृत्यर्थविशेषणमेतत् प्रशंसायां यत्प्रातिपदिकं वर्तते तस्माद्रूपप् भवति। कस्मिन्नर्थे। स्वार्थ इति।

---

प्रकृतमिति अजाद्योरिति सप्तम्यन्तं न प्रकृतं यत्तु प्रकृतमजादी इति न तदेवात्र संबध्यतइति प्रश्नः। अर्थादिति। सामर्थ्यादित्यर्थः। ननु चाजादी इति यथा श्रुतविभक्तिसंबन्धे अजादिविधानार्थं संभवति कथं विभक्तिविपरिणामः शक्य आश्रयितुम्। नैषदोषः प्रशस्यस्येति षष्ठीश्रवणात् स्थान्यादेशभावावगमादादेशस्य विधीयमानत्वात् प्राधान्यं प्रतीयते। तत्राजादी इत्यनुवर्त्तनादादेशविधौ प्रत्यययोर्गुणभावः। ततः सामर्थ्याद्विभक्तिविपरिणामः। विभक्तिशब्देन विभक्त्यन्तार्थ उच्यते॥ तस्य पूर्वशक्तित्यागेन शक्त्यन्तरोपजनेन विपरिणामव्यवहारः। प्रातिपदिकार्थ एव हि नानाशक्तियोगात् कर्मादिशब्दवाच्य इति स एव विशिष्टशक्तियुक्तो विभक्त्यन्तरवाच्यः। अथ वा तात्त्विकेपि भेदे शब्दस्य सारूप्यात्तत्त्वाध्यवसायाश्रयेण विभक्तिप्रत्ययत्यागोपादानाभ्यां प्रातिपदिकस्य विपरिणामव्यवहारोवसीयते। विभक्तेस्तूपचरितो विपरिणामव्यवहारः। नहि प्रथमायाः सप्तमीरूपेण विपरिणामसंभवः।

प्रशंसा। इह प्रत्ययस्य विधीयमानतया प्राधान्यात्तदङ्गत्वाच्च प्रकृतेः प्रधानेन प्रशंसायाः संबन्धस्य न्याय्यत्वात्तस्याः प्रत्ययार्थत्वं मत्वाह। स्त्रीलिङ्गेनायमिति। ततश्च पटोः प्रशंसा पटुरूपेति प्राप्नोति। अथ पटुरूपो देवदत्त इति सामानाधिकरण्याप्रसङ्गः कस्मान्न चोदितः। तत्र केचिदाहुः। दोषोपलक्षणार्थं तदुक्तम्। अन्ये त्वाहुः। सोयमित्यभेदविवक्षायां सामानाधिकरण्यं भविष्यति। भेदविवक्षा तु तथा लक्षणप्रयोगाभावान्न क्रियते।

स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते । प्रकृतेर्लिङ्गवचनाभावात् तिङ्प्रकृतेरभावववचनम्* । प्रकृतेर्लिङ्गवचनाभावात्तिङ्प्रकृतेरूपपोऽभावो वक्तव्यः । पचति रूपं पचतोरूपं पचन्तिरूपमिति । सिद्धं तु क्रियाप्रधानत्वात् * । सिद्धमेतत् । कथम् । क्रियाप्रधानमाख्यातं भवति । एका च क्रिया । द्रव्यप्रधानं नाम । कथं पुनर्ज्ञायते क्रियाप्रधानमाख्यातं भवति द्रव्यप्रधानं नामेति । यत्क्रियां पृ-

---

यद्येवं गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीत्यातिशायनप्रत्ययान्तवदभिमतलिङ्गवचनयोगाद्दोषाभावः। अत्राहुः। प्रकृत्यर्थविशेषणपक्षस्त्रोभयानुग्रहात् न्याय्यत्वादयं परिहारो भाष्यकारेण नाश्रितः । अन्ये त्वाहुः । प्रशंसामात्रे प्रत्ययविधानादन्तरङ्गत्वात् स्त्रीप्रत्ययेन भाव्यम् । पश्चात्तोयमित्यभिसंबन्धात्तद्दभिधामेप्यन्तरङ्गः स्त्रीप्रत्ययो न निवर्तेत प्रत्ययार्थविशेषणपक्षे, प्रकृत्यर्थविशेषणपक्षे च भमारिरूपेत्यव्यतिरिक्तं वय इति ङीप् कस्मान्न भवति कुमारीशब्दादुत्पन्नेन ङोपा वयोविशिष्टार्थगतस्य स्त्रीत्वस्य द्योतितत्वाद्रूपबन्तात् स्त्रीत्वमात्रम.भव्यङ्क्तुं टावेव क्रियते । ननु ङीपैव तदभिव्यक्तमिति टान्न प्राप्नोति । नैतदस्ति । कुमारिरूप इत्युच्यमाने कुटीरादिवल्लिङ्गान्तरं प्रतीयेत । तस्मादवश्यमभिव्यङ्क्तव्यं स्त्रीत्वमिति टाबुत्पद्यते । अयमेव च परिहार आतिशायिकप्रत्ययानां स्वार्थिकत्वपक्षे कुमारितरेत्यादावभिधानीयः । तिङ्प्रकृतेरिति । तिङ् प्रकृतिर्यस्य रूपपः ततः परस्या विभक्तेरभावो वक्तव्यः । एका च क्रियेति । आख्यातशब्दात् क्रियाभेदस्यानवगमात् क्रियाया एकत्वमुच्यते । भवद्भिरास्यत इत्यादौ तु केवलक्रियावचने द्विवचनबहुवचनादर्शनात् । पचतः पचन्तीत्यादौ लकारवाच्यकर्तृसमवेतद्वित्वबहुत्वाश्रयौ वचनभेद इति न ततः क्रियाभेदसिद्धिः । एकत्वाच्च क्रियाया रूपप्प्रत्ययान्ताद्विवचनबहुवचनाभावः । द्रव्यप्रधानं नामेति । प्रसङ्गेनोक्तं नत्वस्य कश्चित्प्रकृतोपयोगः । किं च देवदत्तः करोतीति । करोतिरत्र क्रियासामान्यवचनः । तत्र विशेषपरिज्ञानाय किंशब्दः क्रियाविशेषणं प्रवर्त्तते क्रियाविशेषणत्वाच्च किमित्येतद्द्वितीयान्तं नपुंसकं च । प्रकरणादिवशाच्च क्रियाप्रश्नावगतिः । गुणद्रव्यविषयस्यापि प्रश्नस्य संभवात् । वायकाः किं शुक्लं वस्त्रं करोत्यथ कृष्णं तथा किं शाटकं करोत्यथ प्रावारकमिति । केचित्तु क्रियाप्रश्नेप्यभूततद्भावववचनं करोतिं मन्यन्ते । किं करोति कां क्रियां निर्वर्त्तयतीत्यर्थः । तत्राख्यातवति प्रश्नवाक्ये प्रकरणादिवशात् क्रियाप्रश्नावगमादाख्यातेनैवोत्तरोपादानात्कालसंख्यासाधनोपग्रहाभिधानेप्याख्यातस्य क्रियाप्रधानत्वावगमः । एकपदोपात्तार्थापेक्षया च क्रिया प्रधानत्वमभिधीयते । व्रीहीनवहन्तीत्यादौ व्रीहिद्रव्यसंस्कारार्थत्वादवघातस्याप्राधान्यम् । अथ वा यद्यप्यार्थं व्रीहीणां प्राधान्यं तथापि साध्यत्वात् क्रियाया

ष्टः तिङाचष्टे । किं देवदत्तः करोति । पचतीति । द्रव्यं पृष्टः कृताचष्ट कतरो देवदत्तो यः कारको हारक इति । यदि तर्ह्येका क्रिया द्विवचनबहुवचनानि न सिध्यन्ति। पचतः पचन्तीति। नैतानि क्रियापेक्षाणि किं तर्हि साधनापेक्षाणि। इहापि तर्हि प्राप्नुवन्ति। पचतोरूपं पचन्तिरूपमिति । तिङोक्तत्वात्तस्याभिसंबन्धस्य न भविष्यति । एकवचनमपि तर्हि न प्राप्नोति । समयाद् भविष्यति । द्विवचनबहुवचनान्यपि तर्हि समयात्प्राप्नुवन्ति । एवं तर्हि एकवचनमुत्सर्गतः करिष्यते । तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने अपवादौ भविष्यतः । एवमपिपुंसकत्वं वक्तव्यम् । न वक्तव्यम् । उक्तं वा * । किमुक्तम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति। वृषलादिभ्य उपसंख्यानम् * । वृषलादिभ्य उपसंख्यानं कर्तव्यम् ।वृषलरूपः दस्युरूप इति । सिद्धं तु प्रकृत्यर्थवैस्पष्ट्यवचनात् * । सिद्धमेतत् । कथम् ।

---

शब्दं प्राधान्यं न तु व्रीह्योणां साधनत्वात् । द्रव्यं पृष्ट इति । यद्यपि यः पचतीति तिङन्तेनापि उत्तरं भवति । तथापि सर्वनाम्नापरामृश्य पाकक्रियायायाः कर्ता स देवदत्त इत्यभिधानात् केवलेनाख्यातेनोत्तरस्यादानादाख्यातस्य साधनप्रधानत्वाप्रसङ्गः । पदान्तरेण हि द्रव्योपलक्षणाय गुणभावं क्रिया नीयते । यदि तर्हीति । क्रियागतसंख्यापेक्षं वचनभेदं मन्यते । नैतानीति । लकारादिवाच्यकर्तृकर्मगतसंख्यापेक्षो वचनभेद इत्यर्थः । तिङोक्तत्वादिति ।उक्तार्थानामप्रयोग इति न्यायात् । एकवचनमपीति । पचतिरूपमित्यत्र तिङोक्तत्वादिति भावः । समयादिति । परश्चेति नियमान्न केवला प्रकृतिः प्रयोक्तव्येत्येवंरूपात् । द्विवचनबहुवचनान्यपीति । तैरपि समयस्य परिपालनात् । यद्यपि प्राथम्यादेकवचनेनैव समयः पाल्यतइति परिहारसंभवः । तथापि परिहारान्तरमाह । एकवचनमिति । द्वेकयोर्द्विवचनैकवचने इत्यत्रैकवचनग्रहणं न कर्तव्यम् । द्वयोर्द्विवचनमित्येव कर्तव्यम् । तच ङ्याप्प्रातिपदिकात् स्वादयो भवन्तीति संख्यानिरपेक्षमेकवचनमुत्सर्गो भवति । तस्य द्वित्वबहुत्वयोर्द्विवचनबहुवचनयोरपवादयोर्विधानादेकत्ववत्यर्थे अभेदैकत्ववति च संख्यारहिते ऽव्ययाद्यर्थे चावस्थितमेकवचनम् । तस्मादेकवचनेनैवात्र समयः पाल्यते न तु द्विवचबहुवचनाभ्यां तिङोक्ताभ्यामित्यर्थः । लिङ्गमशिष्यमिति । शास्त्रोपदेशेन विनापि सिद्धिर्लिङ्गस्य लोकव्यवहारगम्या । वृषलादिभ्य इति । वृषलादीनां निकृष्टत्वादुत्कृष्टविषयत्वाच्च प्रशंसायास्तत्राभावं मन्यते । न्यासान्तरेण सिद्धिं मत्वाह । सिद्धं त्विति । ननु प्रशंसायामित्येव सिद्धः प्रत्ययः सर्वस्य हि वस्तुनः स्वव्यापारे ऽति-

प्रकृत्यर्थस्य वैस्पष्ट्याद्‌इति वक्तव्यम् । वृषलरूपोयमप्ययं पलाण्डुना सुरां पिबेत् । चोररूपोयमप्ययमक्षणोरञ्जनं हरेत् । दस्युरूपोयमप्ययं धावतो लोहितं पिबेत् ॥

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः॥६७॥ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः *। ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनयोरनुपपत्तिः । पटुकल्पः । पटुकल्पौ । पटुकल्पा इति । एकोयमर्थः । ईषदसमाप्तिर्नाम । तस्यैकत्वाद् एकवचनं प्राप्नोति । प्रकृत्यर्थविशेषणत्वात्सिद्धम् *। सिद्धमेतत्। कथम् । नायं प्रत्ययार्थः । किं तर्हि । प्रकृत्यर्थविशेषणमेतत् ईषदसमाप्तौ यत्प्रातिपदिकं वर्त्तते तस्मात्कल्पबादयो भवन्ति । कश्चिन्नर्थे स्वार्थ इति । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्ते। प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः *।

---

शयात् प्रशंसा क्रियते वृषलादीनामप्यसावस्ति। एवं तर्हि यदा निन्दाप्रतिपादनाय चोररूप इत्युच्यते तदा प्रत्ययाप्रसङ्गाद्दशापत्रं वैस्पष्ट्याग्रहणमेवं कर्त्तव्यम् । सत्येव पाटवादेर्वैस्पष्ट्ये प्रशंसासद्भावाद् विवक्षावशाच्च येषामेव प्रशंसावाचित्वं तेषामेव निन्दावचनत्वं दृश्यते । यथा वाच्स इति । पुरुषातिशयप्रतिपादने प्रशंसा गम्यते। निष्ठ्ठत्वप्रतिपादने तु निन्दा । अथ तमबादीनां रूपपश्च को विषय विभागः। यावता अतिशायनमपि पूजा निन्दाविषयः। पटुतमः पापीयानिति । रूपप्प्रत्ययोप्युभयविषयः। पटुरूपः चोररूप इति । उच्यते । अतिशायनं समानप्रतियोग्यपेक्षं वैस्पष्ट्यं तु तन्निरपेक्षमिति स्पष्ट एव विषयविभागः । अप्ययं पलाण्डुनेत्यादौ गर्हायामपिशब्दः कर्मप्रवचनीयसंज्ञः॥

ईषदस। प्रत्ययानां विधेयतया प्राधान्यात्तदर्थत्वमीषदसमाप्तेर्मत्वाह। ईषदसमाप्ताविति। ईषदसमाप्तौ यथेष्टं लिङ्गवचनासिद्धिरित्यर्थः। एकवचनमिति। एकत्वादीषदसमाप्तेः। षष्ठीप्रसङ्गं तु न चोदयति। गुणगुणिनोरिह सर्वदा सोयमित्यभेदसंबन्धस्य विवक्षितत्वात् भेदनिबन्धनायाः षष्ठ्या अप्रसङ्गात्। यद्येवं गुणवचनानामाश्रयतो लिङ्गवचनानीति लिङ्गवचनदोषोपि नास्ति। नैवं शक्यम्। इह गुडकल्पा द्राक्षा बहुगुडा द्राक्षेति। यदि ईषदसमाप्तेर्द्राक्षाश्रयत्वं तदा बहुगुड इति न सिध्यति। अथ गुडाश्रयत्वं ततो गुडकल्पेति न सिध्यति । का पुनर्द्राक्षायां गुडस्येषदसमाप्तिर्येन माधुर्येण गुणेन द्राक्षायां गुडशब्दो वर्त्तते तस्येषदसमाप्त्या गुडस्येषदसमाप्तिः । प्रकृत्यर्थविशेषणत्वादिति। उभयानुग्रहादेव हि प्रकृतिरप्यनुगृहीता भवति प्रत्ययोपि द्योतकत्वात्तस्यैव च स्वार्थिकत्वात्प्रकृतितो लिङ्गवचनानि सिध्यन्ति। यत्र तु नेष्यते तत्रणचः स्त्रियामञिति ज्ञापकेन तदतिवृत्तिरिति वक्ष्यते। प्रकृत्यर्थे चेदिति । ननु गुडकल्पा द्राक्षेत्यादौ गुड

प्रकृत्यर्थे चेल्लिङ्गवचनयोरनुपपत्तिः। गुडकल्पा द्राक्षा। तैलकल्पा प्रसन्ना। पयस्कल्पा यवागूरिति। सिद्धं तु तत्संबन्ध उत्तरपदार्थे प्रत्ययवचनात् *। सिद्धमेतत्। कथम्। तत्संबन्धे ईषदसमाप्तिसंबन्धे उत्तरपदार्थे प्रत्ययो भवतीति वक्तव्यम्। सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तमीषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिरिति। परिहृतमेतत् प्रकृत्यर्थविशेषणत्वात्सिद्धमिति। ननु चोक्तं प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिरिति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति। स्वार्थिका अतिवर्तन्ते अपि लिङ्गवचनानीति। यदयं णचः स्त्रियामञिति स्त्रीग्रहणं करोति। यद्येतज्ज्ञाप्यते बहुगुडो द्राक्षा बहुतैलं प्रसन्ना बहुपयो यवागूरिति। अत्रापि प्राप्नोति। नाप्यतिवर्तन्ते। किं पुनरिहोदाहरणम्। पटुकल्पो मृ-

---

इयं द्राक्षेत्यभेदविवक्षायां गुडादयो द्राक्षायां वर्तमानाः प्रत्ययमुत्पादयन्तीति द्राक्षादिगतलिङ्गवचनोपपत्तौ नास्त्यव्याप्तिदोषः। नैतदस्ति। गुडादयः शब्दाइवार्थाभ्यन्तरीकरणेन सोयमित्यभेदसंबन्धेन द्राक्षादिषु वर्तमाना अपरित्यक्तस्वलिङ्गसंख्या एव वर्तन्ते तत्र बहुगुडो द्राक्षेत्यादि सिध्यति। गुणशब्देभ्यश्च पट्वादिभ्यः कल्पादिषु दोषाभावो जातिशब्देभ्यस्तु कल्पादिषु भिन्नलिङ्गसंख्यजात्यभिधाने गुडकल्पाद्राक्षेत्यादौ दोषः। सिद्धं त्विति। यद्यप्युत्तरपदशब्दः समासावयवे रूढस्तथापीह प्रकृत्यर्थस्य पश्चात्प्रत्ययार्थस्य भावात् प्रत्ययार्थविशेषवाचिनि द्राक्षादिपदे योगिको वर्तते तेन गुडादिभ्य उपमानवाचिभ्य उपमेये द्राक्षादौ प्रत्यय इत्युक्तं भवति। गुड इवेयं द्राक्षेषदसमाप्ता गुडकल्पेति। यद्यप्युपमानग्रहणं नोपात्तं तथापि सामर्थ्यादत्रोपमानोपमेयभाव आश्रीयते। पट्वादिभ्योपि तत्रैव प्रत्ययोत्पत्तिर्यस्य परिपूर्णपाटवं स लोके पटुरिति प्रसिद्धः तेन तुल्य ईषदसमाप्तः पटुकल्पो देवदत्त इति तत्संबन्ध इति वचनादोषत्साहस्ये प्रत्ययाभावः। सिध्यतीति। यद्यप्यस्मिन्पक्षे बहुगुडो द्राक्षेत्यादि न सिध्यति द्राक्षादिगतलिङ्गवचनप्रसङ्गात्तथाप्युक्तदोषपरिहारात् सिध्यतीत्युक्तम्। स्त्रीग्रहणमिति। कर्मव्यतिहारे णच् स्त्रियामिति स्त्रीलिङ्गे भावे णचो विधानात्तन्तादञ्प्रत्ययः स्वार्थिकत्वात् स्त्रियामेव भविष्यतीति स्त्रीग्रहणं न कर्तव्यम्। तत्क्रियमाणं लिङ्गवचनातिवृत्तिं ज्ञापयति। नापीति। उत्तरसूत्रे तुग्रहणाद्वक्ष्यमाणनियमार्थात्प्रकृतेर्ये लिङ्गवचने ते एव बहुच्युत्पन्ने भवतः। अथ वा स्त्रीग्रहणेनानुवृत्तिनियमाभावो ज्ञाप्यते इत्यनुवृत्त्यतिवृत्ती यथाप्रयोगं भवतः। अथ वा कासूगोणीभ्यां ष्टरजिति चित्करणेन स्त्रियां ङीषर्थं नानुवृत्तिरपि ज्ञाप्यत इत्युभयसिद्धिः। किं पुनरिति। गुणशब्दानामनन्तपरिमाणविषयत्वाद् गुणसंबन्ध-

टुकल्प इति । नैतदस्ति । निर्ज्ञातस्यार्थस्य समाप्तिर्वा विसमाप्तिर्वा भवति । गुणस्यानिर्ज्ञातः । इदं तर्हि गुडकल्पा द्राक्षा तैलकल्पा प्रसन्ना पयस्कल्पा यवागूरिति । द्रव्यमप्यनिर्ज्ञातम् । इदं तर्हि कृतकल्पम् । भुक्तकल्पम् । पीतकल्पम् । क्तान्तात्प्रत्ययविधानानुपपत्तिः क्तस्य भूतकाललक्षणत्वात्कल्पादीनां चासमाप्तिवचनात् *। क्तान्तात्प्रत्ययविधेरनुपपत्तिः । किं कारणम् । क्तस्य भूतकाललक्षणत्वाद् भूतकाललक्षणः क्तः । कल्पादीनां चासमाप्तिवचनात् । अविसमाप्तिवचनाश्च कल्पादयः । न चास्तिसंभवो यद्भूतकालश्च स्यादसमाप्तिश्चेति । सिद्धं तु आशंसायां भूतवद्वचनात् * । सिद्धमेतत् । कथम् । आशंसायां भूतवच्चेति एवमत्र क्तो भविष्यति । इदं चाप्युदाहरणं पटुकल्पो मृदुकल्प इति । ननु चोक्तं निर्ज्ञातस्यार्थस्य समाप्तिर्वा भवति विसमाप्तिर्वा गुणस्यानिर्ज्ञात इति । लोकतो व्यवहारं दृष्ट्वा गुणस्य निर्ज्ञानम् ॥ तद्यथा । पटुरयं ब्राह्मण इत्युच्य-

---

मात्रेण मन्दमध्यमोत्कृष्टगुणे सर्वत्र वर्त्तनादीषदसमाप्तेरभावं मत्वा प्रश्नः । निर्ज्ञातस्येति । अयमेवेत्येवं निश्चितस्येत्यर्थः । विसमाप्तिश्चेति । नञर्थे विशब्दः । गुणस्यानिर्ज्ञात इति । इयदेव पाटवमितीयत्तया न ज्ञायते गुणः । द्रव्यमिदानीमुपन्यस्यति । इदं तर्हीति । नन्वत्र न गुडादय ईषदसमाप्ताः किं तर्हि द्राक्षादय इति द्राक्षादिभ्य एव प्रत्ययेन भाव्यम् । नैष दोषः । यदपेक्षया परस्येषदसमाप्तिर्भवति तद्वाचिनः प्रत्ययेन भाव्यम् । तत्रेवार्थमभ्यन्तरीकृत्याभेदोपचाराद् गुड इव गुडो द्राक्षेति माधुर्याद् द्राक्षायां गुडत्वस्यारोपादारोपनिमित्तस्य माधुर्यस्येषदसमाप्तत्वाद् गुडादिभ्यः प्रत्ययोत्पत्तिरविरुद्धा । द्रव्यमपीति । इयता माधुर्येण द्राक्षा गुड उच्यते इत्येवमपरिज्ञानाद्देशभेदेन च गुडस्य भेदात्कं गुडमपेक्ष्य द्राक्षा गुड ईषदसमाप्ता उच्यत इत्येवमपरिज्ञानम् । कृतकल्पमिति । आशंसायां भूतवद्भविष्यति प्रत्ययविधानादस्तिक्रियाया ईषदसमाप्तिरुपाधिरिति भावः । इतरो यथोक्तमभिप्रायमप्रतिपद्याह । क्तान्तादिति । क्रियाफलनिर्वृत्तौ क्रियापवर्गो भवति सति च क्रियापवर्गे कुतः क्रियाया ईषदसमाप्तिरित्यर्थः । सिद्धं त्विति । भविष्यत्कालाया ईषदसमाप्तत्वात् । क्रियाया आशंसमानत्वादित्यर्थः । भीतः क्तोमतिबुद्धिपूजार्थभ्यश्चेति वर्तमानकालविषयक्तान्तादपि प्रत्ययैर्भाव्यं ज्ञातकल्पं पूजितकल्पमिति । तथा तिङन्तादपि पचतिकल्पमिति । यदापि क्रियैकदेशापवर्गाश्रयेण भूते क्तो विधीयते तदापि कल्पादयो भवन्ति । कृतकल्पं वस्त्रमिति । एवञ्च कृताकृतादय एकदेशक-

ते यो लघुनोपायेनार्थान् साधयति। पटुकल्पोयमित्युच्यते। यो न तथा साधयति । इदं चाप्युदाहरणम् । गुडकल्पा द्राक्षा तैलकल्पा प्रसन्ना पयस्कल्पा यवागूरिति । ननु चोक्तं द्रव्यमप्यनिर्ज्ञातमिति । लोकतो द्रव्यमपि निर्ज्ञातम् ॥

विभाषा सुपो बहुच्पुरस्तात्तु ॥ ६८ ॥ विभाषाग्रहणं किमर्थम्। विभाषा बहुच् यथा स्याद् बहुचा मुक्ते वाक्यमपि यथा स्यात्। नैतदस्ति प्रयोजनम्। प्रकृता महाविभाषा तया वाक्यमपि भविष्यति। इदं तर्हिप्रयोजनम् । कल्पादयोपि यथा स्युरिति । ननु च बहुजप्युच्यते कल्पादयोप्युच्यन्ते। तदुभयं वचनाद्भविष्यति । नैवं शक्यम् । अक्रियमाणे हि विभाषाग्रहणे ऽनवकाशो बहुच्कल्पादीन्बाधेत । कल्पादयोप्यनवकाशास्ते वचनाद्भविष्यन्ति। सावकाशाः कल्पादयः। कोऽवकाशः। तिङन्तान्यवकाशः। अथ सुब्ग्रहणं किमर्थम् । सुबन्तादुत्पत्तिर्यथा स्यात् । प्रातिपदिकान्मा भूदिति । नैतदस्ति प्रयोजनत् । नास्त्यत्र विशेषः । सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा । यद्येवमिहापि नार्थः सुब्ग्रहणेन सुप आत्मनः क्य-

---

रणाकरणाश्रयाः प्रयोगा उपपन्नाः। सकलक्रियापवर्गाश्रयभूतकालविषयत्वप्रत्ययापेक्षे तु चोद्यप्रतिसमाधाने। एवञ्च कालत्रयविषयेभ्यस्तिङन्तेभ्यः कल्पादयो भवन्ति। पचतिकल्पं पक्ष्यतिकल्पमपाक्षीत्कल्पमिति। लोकत इति। यावता माधुर्येण लोके द्राक्षायां गुडव्यवहारस्तावदाश्रय ईषदसमाप्तिसंभवः। अथवा गुडगतमाधुर्याश्रयेण द्राक्षायां गुडत्वारोपाद् गुडजात्यभावाच्चेषदसमाप्तं गुडत्वं द्राक्षायां गुड इयं द्राक्षा गुडकल्पा द्राक्षेति प्रयोगः॥

विभाषा। अथ सुब्ग्रहणमिति। सुबन्तस्य प्रियकुत्सनादिषु वर्तनादर्थलभ्यं सुबन्तत्वमिति प्रश्नः । प्रातिपदिकान्मा भूदिति अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्तापरिकल्पनात् प्रातिपदिकमपि स्वार्थादिपञ्चके प्रवर्त्तमानं प्रियकुत्सनादिषु प्रवर्तत इति ततोपि प्रत्ययप्रसङ्ग इति भावः। नास्त्यत्र विशेष इति। ननु सुबन्तादुत्पत्तौ सत्यां बहुसेच इत्यादौ सात्पदाद्योरिति षत्वप्रतिषेधः सिध्यति। प्रातिपदिकात्तूत्पत्तौ षत्वप्रसङ्गः। नैष दोषः। सुबन्तादुत्पत्ताववश्यं पदसंज्ञानिबन्धनकुत्वादिनिषेधार्थो यत्नः कर्तव्यः। बहुच्पूर्वस्य लुमता लुप्ते पदादिविधौ प्रत्ययलक्षणमिति तन्नियमार्थं पदादिविधावेव न पदान्तविधाविति। एवं च प्रातिपदिकादप्युत्पत्तौ यत्नः करिष्यते। सात्पदाद्योर्बहुच-

जिति। इहापि नास्ति विशेषः। सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा॥ अयमस्ति विशेषः। सुबन्तादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति। प्रातिपदिकादुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति। ननु च प्रातिपदिकादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा। कथम्। आरभ्यते नः क्य इति। तच्चावश्यं वक्तव्यम्। सुबन्तादुत्पत्तौ सत्यां नियमार्थम्। तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति। इदं तर्हि प्रयोजनम्। सुबन्तादुत्पत्तिर्यथा स्यात् तिङन्तान्मा भूदिति। एतदपि नास्ति प्रयोजनम्। ङ्याप्प्रातिपदिकादिति वर्त्तते। अत उत्तरं पठति। बहुचि सुब्ग्रहणात्पूर्वंच तिङो विधानम् *। बहुचि सुब्ग्रहणं क्रियते पूर्वंच तिङो विधिर्यथा विज्ञायेत। नैतदस्ति प्रयोजनम्। प्रकृतं तिङ्ग्रहणमनुवर्तते। क्व प्रकृतम्। अतिशायने तमबिष्ठनौ तिङश्चेति। एवं तर्हि बहुचि सुब्ग्रहणं पूर्वंच तिङोविधानात्। बहुचि सुब्ग्रहणं क्रियते पूर्वंच तिङोविधानात्। पूर्वंच तिङश्चेत्यनुवर्त्तते। तदिहापि प्राप्नोति। ननु च तिङ्ग्रहणं निवर्तते। अवश्यमुत्तरार्थमनुवर्त्त्यम्। अव्ययसर्वनाम्नामकच्प्राक् टेरिति। पचतकि जल्पतकीत्येवमर्थम्। यदि सुब्ग्रहणं क्रियते स्वरो न सिध्यति। बहुपटव एवं स्वरः प्रसज्येत। बहुपटव इति चेष्यते। पठिष्यत्याचार्यः चितः सप्रकृतेर्बह्वकजर्थमिति। स्वरः कथम्। स्वरः प्रातिपदि-

---

श्चेति। अतएव तुल्यन्यायतया सुप आत्मनः क्यजित्यस्य सुब्ग्रहणस्याक्षेपः। पूर्वंच तिङो विधिरिति। अस्यैवार्थस्य ज्ञापनार्थमिह सुब्ग्रहणं तेन पूर्वंच प्रातिपदिकात्तिङन्ताच्च कल्पादयः सिध्यन्तीत्यर्थः। नैतदस्तीति। ज्ञापकमन्तरेणापि तिङोनुवृत्तिः सिध्यतीत्यर्थः। एवं स्वर इति। जस उदात्तत्वं स्यात्। पटुशब्दोकारस्य चेष्यत इत्यर्थः। स्वरः प्रातिपदिकत्वादिति। बहुचि कृते प्रकृतिप्रत्ययसमुदायस्यार्थवत्वात् समुदायाच्च जसोऽविधानात्तस्याप्रत्ययान्तत्वात् प्रातिपदिकसंज्ञायां सत्यां पूर्वोत्पन्नाया विभक्तेर्लुकि कृते पटुशब्दस्योकारस्यादात्तत्वं भवति। या ह्यन्त्या विभक्तिरुत्पद्यते न सा प्रकृत्यवयव इति तस्या उदात्तत्वाऽप्रसङ्गः। ननु समासग्रहणस्य नियमार्थत्वात्प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा न प्राप्नोति। नैष दोषः अप्रत्यय इति प्रतिषेधो ज्ञापयति प्रकृतिप्रत्ययसमुदायस्य समासग्रहणेन प्रातिपदिकसंज्ञा न निवर्त्त्यत इति। अन्यथाऽप्रत्यय इति निषेधोऽनर्थकः स्यात्। नित्यपूर्वाऽर्थमिति। पुरस्तादेवेत्येवमवधारणार्थं तुग्रहणमित्यर्थः अन्यथा प्रत्ययवत्पूर्व-

कत्वात्। सुब्लुकि कृते प्रातिपदिकत्वात्स्वरो भविष्यति। अथ तु-ग्रहणं किमर्थम्। तुग्रहणं नित्यपूर्वार्थम् *। तुग्रहणं क्रियते नित्यं पूर्वो यथा स्यात्। विभाषा मा भूदिति। नैतदस्ति प्रयोजनम्। न विभाषाग्रहणेन पूर्वमभिसंबध्यते। किं तर्हि बहुजभिसंबध्यते विभाषाबहुज्भवतीति। यदा च भवति तदा पूर्वो भवतीति। इदं तर्हि प्रयोजनम्। प्रगुत्पत्तेर्यल्लिङ्गं वचनं च तदुत्पन्नेऽपि यथा स्यात्। बहुगुडो द्राक्षा बहुतैलं प्रसन्ना बहुपयो यवागूरिति। एतदपि नास्ति प्रयोजनम्। स्वार्थिकोऽयम्। स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते। एवं तर्हि सिद्धे सति यत्तुग्रहणं करोति तज्ज्ञापयत्याचार्यः। स्वार्थिका अतिवर्तन्ते अपि लिङ्गवचनानीति। किमेतस्य ज्ञापने प्रयोजनम्। गुडकल्पा द्राक्षा तैलकल्पा प्रसन्ना पयस्कल्पा यवागूरित्येतत् सिद्धं भवति। तमादिभ्यः कल्पादयो विप्रतिषेधेन *। तमादिभ्यः कल्पादयो भवन्ति विप्रतिषेधेन। तमादीनामवकाशः प्रकर्षस्य वचनम्। ईषदसमाप्तेरवचनम्। पटुतरः। पटुतमः। कल्पादीनामवकाशः ईषदसमाप्तेर्वचनं प्रकर्षस्यावचनम्। पटुकल्पो मृदुकल्पः। उभयत्र वचने उभयं प्राप्नोति। पटुकल्पतरो मृदुकल्पतरः। कल्पादयो भवन्ति विप्रतिषेधेन यद्येवमीषदसमाप्तेः प्रकर्षे तमादिः प्रत्ययः प्राप्नोति प्रकृतेरेव च प्रकर्ष इष्यते। तमादिरीषत्प्रधानादपि भवन् यस्य प्रकर्षोऽस्ति तस्य प्रकर्षे भविष्यति। कस्य च प्रकर्षोऽस्ति। प्रकृतेरेव॥

---

स्यापि विधेयतया प्राधान्याद्विभाषाग्रहणेन संबन्धः स्यादिति भावः। किं तर्हि बहुजिति। बहुजेव विधेयत्वात् प्रधानं विभाषाग्रहणेन संबध्यते। तस्य तु परदेशव्यावृत्तये पुरस्तादित्यनेन विशेषणेन देशविशेषो निर्दिश्यते ततश्च विभाषाग्रहणेन पुरस्तादित्यस्य गुणस्य संबन्धाभावो गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायात्। प्रागुत्पत्तेरिति। तु शब्दो नियमार्थः। पुरस्तादेव सर्वं भवतीति। तेन लिङ्गसंख्ये प्रकृतिगते भवतः प्रयोगश्च प्राक् प्रकृतेः पटुकल्पतर इति। ननु परत्वात्कल्पबादिभिर्बाधितत्वात्तरसमबुध्यां न भाव्यम्। नैष दोषः। कल्पबादिभिः प्रकर्षस्याद्योतनात्पुनः प्रसङ्गविज्ञानात् कल्पबाद्यन्तात् प्रकर्षज्ञापनाय तरसमपौ भवतः। प्रकृतेरेवेति। कल्पबादीनां या प्रकृतिः पट्वादिः तदर्थस्यैव प्रकर्षः संभवति नत्वीषदसमाप्तेः। असमाप्तिप्रकर्षे समासावीषदर्थाभावान्नास्तीषदसमाप्तेः प्रकर्षः॥

अव्ययसर्वनाम्नामकच्प्राक् टेः ॥ ७१ ॥ कस्य च दः ॥ ७२ ॥ कि-
मयं सुबन्तस्य प्राक् टेर्भवत्याहो स्वित् ङ्याप्प्रातिपदिकस्य । कुतः
संदेह- । उभयं प्रकृतम् । अन्यतरच्छक्यं विशेषयितुम् । किं चातः ।
यदि सुबन्तस्य । युष्मकाभिः अस्मकाभिः युष्मकासु अस्मकासु
युवकयोः आवकयोरिति न सिध्यति । अथ प्रातिपदिकस्य । त्व-
यका मयका त्वयकि मयकि इत्यचापि प्राप्नोति प्राप्नोति । अ-
स्तु सुबन्तस्य । कथं युष्मकाभिः अस्मकाभिः युष्मकासु अस्मका-
सु युवकयोरावकयोरिति । अनोकारसारादाविति वक्तव्यम् । अ-
कच्प्रकरणे तूष्णीमः काम् * । अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः ॥
आसितव्यं किल तूष्णीकाम् । शीले को मलोपश्च * । शीले को म-
लोपश्च वक्तव्यः । तूष्णीं शीलः तूष्णीकः । इह भिनत्ति छिनत्तीति
अमि कृते शप् प्राप्नोति । बहुभुक्तं बहुपीतं बहुचि कृते कल्पादयः
प्राप्नुवन्ति । उच्चकैः नीचकैः । अकचि कृतेकादयः प्राप्नुवन्ति । ननु-
चश्नम्बहुजकचोपवादास्ते बाधका भविष्यन्ति । श्नम्बहुजकच्सु ना-
नादेशत्वादुत्सर्गप्रतिषेधः * । श्नम्बहुजकच्सु नानादेशत्वादुत्सर्गस्य
प्रतिषेधो वक्तव्यः । समानदेशैरपवादैरुत्सर्गाणां बाधनं भवति । ना-
नादेशत्वान्न प्राप्नोति । कविधेस्तमादयः पूर्वविप्रतिषिद्धम् * । कवि-
धेस्तमादयो भवन्ति पूर्वविप्रतिषेधेन । कविधेरवकाशः । कुत्सादी-
नां वचनं प्रकर्षस्यावचनम् । पटुकः मृदुकः । तमादीनामवकाशः प्र-
कर्षस्य वचनं कुत्सादीनामवचनम् । पटुतरः पटुतमः । उभयवचने

---

अव्यय । अन्यतरदिति । प्रातिपदिकस्य प्राक् टेरकज् भवति सुबन्तस्य वा प्राक्
टेरित्यनेनान्यतरच्छक्यते विशेषे व्यवस्थापयितुमित्यर्थः । तूष्णीमः कामिति । मित्त्वा-
दचोन्त्यात्परः काम्भवति । अज्ञाताद्यर्थाविवक्षायां तूष्णीमित्येव भवति । शीले क इति ।
शील स्वभावो नियमश्च अज्ञाताद्यपवादः शील शब्दशक्तिस्वभावाच्च तद्वांस्तूष्णीक उ-
च्यते । इह भिनत्तीति । भिन्नदेशत्वाद्विरोधाभावादनेकेनापि प्रत्ययेन प्रदीपेनेव घटादे-
र्गार्ग्यायण्यां ष्फङीष्भ्यां स्त्रीत्वस्येवाज्ञातादेरेकस्यार्थस्य द्योतनमविरुद्धं मन्यमानो वा-
र्त्तिककार उत्सर्गप्रतिषेधं शास्ति । भाष्यकारस्तु विरोधमन्तरेणापि सामान्यविधेर्बाधकं
विशेषविधिमन्यत्रादीदृशत् । कविधेरिति । अज्ञातः । प्रकृष्टः पटुरित्यर्थद्वयविवक्षायां

उभयं प्राप्नोति। पटुतरकः पटुतमकः। समादयो भवन्ति पूर्वविप्रतिषेधेन। कदा चित् छिन्नकतरादयः *। कदाचित् छिन्नकतरादयो भवन्ति पूर्वविप्रतिषेधेन। छिन्नकतरं छिन्नकतमम्। एकदेशिप्रधानस्य समासः *। एकदेशिप्रधानस्य समासः कविधेर्भवति पूर्वविप्रतिषेधेन। अर्द्धपिप्पलिका अर्द्धकोशातकिका। उत्तरपदार्थप्रधानस्य संज्ञायां कन्विध्यर्थम् *। उत्तरपदार्थप्रधानस्य समासो भवति पूर्वविप्रतिषेधेन। किं प्रयोजनम्। संज्ञायां कन्विध्यर्थम्। संज्ञायां कन् यथा स्यात्। नवग्रामकम्। नवराष्ट्रकं नवनगरकम्। कदाचिद्द्वन्द्वः *। कदाचिद् द्वन्द्वः कविधर्भवति पूर्वविप्रतिषेधेन। प्लक्षकन्यग्रोधकौ प्लक्षन्यग्रोधकाविति वा॥

कुत्सिते॥ ७४॥ इह कुत्सितकः अनुकम्पितक इति स्वशब्देनोक्तत्वात्तस्यार्थस्य प्रत्ययो न प्राप्नोति। नैष दोषः। कुत्सितस्यानुकम्पायामनुकम्पितस्यकुत्सायाम्। अथवा स्वार्थमभिधाय शब्दो निरपेक्षोद्रव्यमाह समवेतम्। समवेतस्य वचने लिङ्गं वचनं

---

पटुतमक इति भवति। छिन्नकतरमिति। अनत्यन्तगतौ क्तादिति कनि कृते तरप्। अर्द्धपिप्पलिकेति। कुत्सितमर्द्धपिप्पल्या इत्याद्यर्थ विवक्षायां समासे कृते ततः कप्रत्ययः। नवग्रामकमिति। समासात्संज्ञायां कनिति कुत्सायां ह्रस्वत्वे वा कनि सत्याद्युदात्तत्वं भवति। पूर्वं तु कनि सति पश्चात्समासे क्रियमाणे अन्तोदात्तत्वप्रसङ्गः। अत्र संज्ञा कुत्सनादिहेतुका विषयभावेनास्ति सामानाधिकरण्यं च पदयोरिति युगपत्कार्यद्वयप्रसङ्गादस्ति विप्रतिषेधः॥.

कुत्सिते। स्वशब्देनोक्तत्वादिति। अनिर्द्धारितविशेषेऽर्थे यदा प्रकृतिर्वर्तते तदा तद्विशेषद्योतनाय स्वार्थिकः प्रत्ययो विधीयते। यदा तु निर्ज्ञातविशेष एवार्थे कुत्सितादयः शब्दा वर्तन्ते तदा विशिष्टस्यार्थस्याप्रतीतत्वाच्चरितार्थत्वात् प्रत्ययाप्रसङ्गः। प्रतीतेऽत्यायने नवस्याप्रसङ्गादिति भावः। कुत्सितस्येति। अर्थान्तराश्रयः प्रत्यय इत्यर्थः। अथ वेति। कुत्सितकुत्सायामपि कुत्सितक इति भवतीत्यर्थः। स्वशब्दोत्रात्मीयवचनोऽर्थशब्दोभिधेयवचनः। स्वोऽर्थः स्वार्थः। स चानेकप्रकारो जातिगुणक्रियासंबन्धस्वरूपलक्षणः। गौः शुक्लः पाचको राजपुरुषो डित्थ इति। तं स्वार्थमभिधाय तेन स्वार्थेन समवेतं संबद्धं द्रव्यमाह शब्दः। निरपेक्ष इत्यनेनैतद्दर्शयति। यथा द्रव्येऽभिधातव्ये स्वार्थोपेक्षते न तथा स्वार्थेऽभिधातव्ये ऽर्थगतं निमित्तान्तरमपेक्षते। द्रव्यशब्देन च इदं त-

विभक्तिं च ॥ १ ॥ अभिधाय तान् विशेषानपेक्षमाणश्च कृत्स्नमात्मानम् । प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः ॥ २ ॥ कथं पुनरिदं विज्ञायते कुत्सितादीनामर्थ इति आहो स्वित् कुत्सितादिसमानाधिकरणात्प्रातिपदिकादिति । कश्चात्र विशेषः । कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः * । कुत्सितादीनामर्थे चेल्लिङ्गवचनयोरनुपपत्तिः । पटुकं पटुका पटुकः पटुकौ पटुका इति । एकोयमर्थः कुत्सितं नाम तस्यैकत्वादेकवचनमेव प्राप्नोति । अस्तु तर्हि कुत्सितादिसमानाधिकरणात् प्रातिपदिकादिति । कुत्सितादिसमानाधिकरणात् प्रातिपदिकादिति चेदतिप्रसङ्गो यथा

---

दिति परामर्शयोग्यं वस्त्वभिधियते । तत्र जातिशब्दो यदा जातौ वर्त्तते तदारोपितस्वरूपां स्वरूपेणैकीकृतां जातिमाहेति तदा तेषां स्वरूपं स्वार्थः। जातिस्तु द्रव्यम् । यदा तु जातिविशिष्टं द्रव्यमाह । तदा जातिः स्वार्थः। शुक्लादयो यदा तु गुणे जातौ वर्त्तन्ते तदा तेषां स्वरूपं स्वार्थः । जातिर्द्रव्यम् । यदा तु गुणे वर्त्तन्ते तदा गुणसामान्यं स्वार्थो गुणो द्रव्यम् । यदा द्रव्ये वर्त्तन्ते तदा गुणः स्वार्थः । समवेतस्य द्रव्यस्याभिधाने सति लिङ्गवचनं विभक्तिं चाहेति संबन्धः । तान्विशेषानिति । लिङ्गादीनामेव परामर्शः । लिङ्गं स्त्रीत्वादि वचनं संख्या विभक्तिः कारकं कर्मादि । क्व चिल्लिङ्गसंख्याकारकाण्येव स्वार्थौ यथा स्त्री पुमान्नपुंसकम् । एको द्वौ बहवः कर्म करणं संप्रदानमिति । प्रवृत्तिनिमित्तलिङ्गसंख्याव्यतिरिक्तलिङ्गसंख्याभिधानम् । यथा स नपुंसकोभवत् गावो विंशतिरिति । तत्र ायमेव क्रमो यत्र तु प्रवृत्तिनिमित्तव्यतिरिक्तलिङ्गसंख्या ऽसंभवः स्त्रीपुमानेको द्वौ बहव इति । तत्र पुनर्लिङ्गसंख्ययोरभिधानाभावः । यद्यपि लोके पदादुच्चरितायुगपत्स्वार्थाः प्रतीयन्ते शब्दस्य विरम्य व्यापाराभावात्तथाप्यन्वयव्यतिरेकाभ्यां शास्त्रे संव्यवहाराय कल्पिताभ्यां प्रातिपदिकस्याप्रयोगार्हस्य कल्पितामर्थवत्तां कल्पितन्यायवशात् क्रमवत्तामाश्रित्येदमुच्यते । तथा हि । नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायात् पूर्वं स्वार्थाभिधानेन भाव्यम् । पश्चात्तद्धितविशिष्टस्य लिङ्गाद्याश्रयस्य द्रव्यस्याभिधानेन ततो भेदापेक्षबहिरङ्गसंख्यापेक्षया लिङ्गमन्तरङ्गमिति तदभिधीयते । ततः संख्या सा हि विजातीयक्रियापेक्षसाधनापेक्षया तुल्यजातीयक्रियापेक्षान्तरङ्गा । संख्याविधानानन्तरं तु कारकाभिधानम् । एतान्विशेषानभिधाय स्वार्थादिपञ्चकरूपं कृत्स्नमात्मानमपेक्षमाणः शब्दः प्रियकुत्सनादिषु विभक्त्यन्तः पुनः प्रवर्त्तते । पुनः शब्दस्तुशब्दस्यार्थे वर्त्तते विभक्त्यन्तस्त्वित्यर्थः। तत्र कुत्सितशब्दप्रवृत्तिनिमित्तव्यतिरिक्तायां कुत्सितत्वस्य कुत्सायां कप्रत्यय उपपन्नो भवति। यथा प्रकृष्टतम इति। प्रकृष्टस्य प्रकर्षे तमप्प्रत्ययः। तथा कु-

टाबादिषु * । कुत्सितादिसमानाधिकरणात्प्रातिपदिकादिति चे
दतिप्रसङ्गो भवति यथा टाबादिषु । कथं च टाबादिषु । उक्तं तत्र
स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्ग इति । एवमिहा-
प्यतिप्रसङ्गो भवति । इदं घृतकमिदं तैलकम् । इदंशब्दादपि प्रा-
प्नोति । सिद्धं तु येन कुत्सितादियुक्तं तद्युक्तात्स्वार्थे प्रत्ययविधा-

---

त्सितत्वम् । यदा कुत्स्यते नास्य सम्यक् कुत्सितत्वमिति तदा प्रत्ययः । अन्ये त्वाहुः ।
अनिर्धारितविशेषधर्मनिबन्धना कुत्सा कुत्सितशब्दप्रवृत्तिनिमित्तं ब्रह्महत्यादिविशेष-
निबन्धना तु कुत्सा प्रत्ययनिबन्धनम् । अनुकम्पितक इत्यत्रापि प्रयोक्तृधर्मे अनुकम्पायां
प्रवृत्तिनिमित्तव्यतिरिक्तायां कप्रत्ययः । केचित्तु निरपेक्षत्वं शब्दस्य स्वार्थादिपञ्चकाभि-
धाने मुख्यमन्तानपेक्षणाद् बुद्ध्यारूढोपचरितार्थसत्तामात्रापेक्षणाद्वाचक्षते । तत्र परि-
समाप्तस्वार्थादिपञ्चकस्य पदस्य कुत्सादिषु प्रवृत्तिः । तस्मात् स्वार्थादयः कुत्सादिहेतवः।
तथा हि । कश्चित् स्वार्थं कुत्सया कुत्स्यते । पटुकः पण्डितक इति । कश्चिल्लिङ्गेन । य-
था प्राप्य गाण्डीवधन्वानं विद्धि कौरवकान् स्त्रिय इति । कदा चित् संख्यया यथेदमेक-
कमेव शतमिति । शतभरणे यद् दुःखं तदेकस्य भरणइति शतत्वारोपेण कुत्सा । यत्र तु
प्रवृत्तिनिमित्तकुत्सा न संभवति देवदत्तको डित्थक इति । तत्राभिधेयसहचरितधर्मा-
न्तराश्रयः प्रत्ययः । कथं पुनरिति । यदा कुत्सितशब्दो भावसाधनः कुत्सा कुत्सित-
मिति तदा प्रत्ययार्थपक्षः । यदा तु कर्मसाधनः कुत्स्यतइति कुत्सितं मत्यादिसूत्रे च-
कारस्यानुक्तसमुच्चयार्थत्वात् वर्त्तमाने क्तः । क्रियावयवव्यपवर्गाश्रयो भूते वा तदा कुत्सा-
र्थवाचिनः कः प्रत्ययो भवतीति सामानाधिकरण्यपक्षोपपत्तिः । कः पुनर्वक्ष्यमाणस्य प्र-
कृत्यर्थविशेषणपक्षस्य सामानाधिकरण्यपक्षस्य च विशेषः । उच्यते । सामानाधिकरण्य-
पक्ष उपात्तकुत्सो ऽनुपात्तकुत्सो वा कुत्सितत्वोपलक्षितार्थवृत्तिः प्रत्ययमुत्पादयति प्र-
कृत्यर्थविशेषणपक्षेत्वङ्गीकृतकुत्सादेव प्रत्ययेन भाव्यम् । तत्र प्रकृत्यर्थविशेषणपक्षे अ-
नुपगृहीतकुत्सापदसामानाधिकरण्येव्ययसर्वनामशब्देभ्यः प्रत्ययेन भाव्यम् । पटुको नी-
चैरयं देवदत्त इति । यदा त्वङ्गीकृतकुत्सपदान्तराप्रयोगः तदा तेभ्य एवाश्रितकुत्सेभ्यः
प्रत्ययो भवति । नीचकैरसिको देवदत्त इति । लिङ्गवचनानुपपत्तिरिति । यथेष्टलिङ्गव-
चनानुपपत्तिरित्यर्थः । एतच्चोपलक्षणं कुत्सनमात्रस्य प्रत्ययेनाभिधाने षष्ठ्यपि द्रव्यवा-
चिनः प्राप्नोति । यद्यपि गुणगुणिनोरत्र सर्वदा सोयमित्यभेदसंबन्धेन शब्दा अप्रसङ्गो गु-
णवचनानां चाश्रयतो लिङ्गवचनानीति दोषपरिहारोस्ति तथापि निर्दोषप्रकृत्यर्थविशे-
षणपक्षसंभवात् प्रत्ययार्थपक्षो भाष्यकारेण नाश्रितः । इदंशब्दादिति । कुत्सितत्वयुक्ता-
र्थवृत्तित्वात्तस्य । सिद्धं त्विति । येन धर्मेण कुत्सादयस्तद्धर्मयुक्तार्थाभिधायिनः स्वार्थे

नात् *। सिद्धमेतत्। कथम्। येन कुत्सितादयोऽर्था गम्यन्ते तद्युक्तात् स्वार्थे प्रत्ययो भवतीति वक्तव्यम्। सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिरिति। नैष दोषः। नायं प्रत्ययार्थः किं तर्हि प्रकृत्यर्थविशेषणमेतत्। कुत्सितादिषु यत् प्रातिपदिकं वर्तते तस्मात्कादयो भवन्ति। कस्मिन्नर्थे, स्वार्थे इति। स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते॥

ठाजादावूर्ध्वं द्वितीयादचः॥ ८३॥ चतुर्थात्॥ चतुर्थाल्लोपो वक्तव्यः। बृहस्पतिदत्तकः। बृहस्पतिकः। प्रजापतिदत्तकः प्रजापतिकः। अनजादौ च॥ अनजादौ च लोपो वक्तव्यः। देवदत्तको देवकः। यज्ञदत्तको यज्ञक.। लोपः पूर्वपदस्य च॥ पूर्वपदस्य च लोपो वक्तव्यः। देवदत्तको दत्तकः। यज्ञदत्तको दत्तकः। अप्रत्यये तथैवेष्टः॥ देवदत्तो दत्तः। यज्ञदत्तो दत्त.। उवर्णाल्ल इलस्य च॥ उवर्णादिलस्य च लोपो वक्तव्यः। भानुदत्तको भानुलः। वसुदत्तको वसुलः। अथ ठग्रहणं किमर्थम्। न इकि कृते अजादावित्येव सिद्धम्। ठग्रहणमुको द्वितीयत्वे कविधानार्थम् *। ठग्रहणं क्रियते उकः द्वितीयत्वे कविधिर्यथास्यात्। वायुदत्तको वायुकः। पितृदत्तकः पितृकः। अजादिलक्षणे हि माथितिकादिवत् प्रसङ्गः *। अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत। तद्यथा मथितं पण्यमस्य माथितिक इति अकारलोपे कृते तान्तादिति कादेशो न भवति। एवमिहापि न स्यात्। द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम् *। द्वितीयादचो लोपे सन्ध्यक्षरस्य द्वितीयत्वे तदादेर्लोपो वक्तव्यः। लहोडः लहिकः कहोडः कहिकः॥

---

प्रत्ययविधानमित्यर्थः॥,

ठाजा। अप्रत्यय इति। प्रत्ययाभावेपि पूर्वोत्तरपदयोरन्यतरस्य वा लोप इत्यर्थः। भाष्ये तु पूर्वपदलोपउदाहरणमात्रम्। उवर्णादिति। लोपस्य ल इति पूर्वाचार्यसंज्ञा तत्रादेः परस्येतोकारलोपः। कादेशो न भवतीति। संनिपातलक्षणपरिभाषाया आश्रयणात्।यदा च देवभान्वादिभ्यष्ठज्विधीयते तदेकदेशाभावादजादिलक्षणलोपाप्रसङ्गात्तदर्थमपि ठग्रहणम्। तदादेरिति। संध्यक्षरात् परस्य लोपे प्राप्ते तदादेर्लोपवचनम्।

शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥ ८४ ॥ वरुणादीनां च तृतीयात् स चाकृतसंधीनाम् *। वरुणादीनां च तृतीयाल्लोप उच्यते स चाकृतसंधीनां वक्तव्यः। सुपर्याशीः। सुपरिकः। सुपरियः। सुपरिलः। इह षडङ्गुलिः षडिक इत्यजादिलोपे कृते पदसंज्ञा न प्राप्नोति। तत्र को दोषः। जश्त्वं न स्यात्। षडिके जश्त्वे उक्तम्*। किमुक्तम्। सिद्धमचः स्थानिवत्त्वादिति। यद्येवम्, वाचिकादिषु पदवृत्तप्रतिषेधः *। वाचिकादिषु पदवृत्तस्य प्रतिषेधो वक्तव्यः। वागाशीः वाचिक इति। सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात्*। सिद्धमेतत्। कथम्। एकाक्षरपूर्वपदानामुत्तरपदस्य लोपो वक्तव्यः। वाचिकः। इहापि तर्हि प्राप्नोति। षडङ्गुलिः षडिक इति। षषष्ठाजादिवचनात् सिद्धम् *। षषष्ठाजादिवचनात्सिद्धमेतत् ॥

---

शेवल। वरुणादीनामिति। आदिशब्दः प्रकारे। एकसूत्रोपात्तत्वं च साहश्यनिमित्तम्। सुपरिक इति। संहिताकार्ये तु कृते लोपे सति सुपर्यिक इति स्यात्। जश्त्वं न स्यादिति। भसंज्ञया पदसंज्ञाया अन्तर्वर्तिविभक्त्याश्रयायास्तद्धिताश्रयायाश्च द्विविधाया अप्येकसंज्ञाधिकाराद्बाधितत्वात्। सिद्धमच इति। षडङ्गुलिशब्दे ङ्गुलिशब्दस्य तेन लोपे कृते यस्येति चेत्यकारलोपः क्रियते। तस्य स्थानिवत्त्वाद् भसंज्ञां प्रत्यकारान्तमेतद्भवति। अन्तर्वर्तिविभक्त्याश्रया तु षकारान्तस्य पदसंज्ञा ततो भिन्नावधिकत्वाद्भसंज्ञयापदसंज्ञा न बाध्यत इति तन्निबन्धनजश्त्वप्रवृत्तिः। या तु स्वादौ पदमिति पदसंज्ञासैवैकावधिकत्वाद्भसंज्ञया बाध्यते। न च पदान्तविधिं प्रति न स्थानिवदिति स्थानिवत्त्वनिषेधोऽवतरति। विधिशब्दस्य भावसाधनस्य तत्राश्रयणात्। इह पदान्तस्य कस्यचिद्विधेयत्वात्। पदवृत्तप्रतिषेध इति। पदस्य यद्वृत्तं कार्यं तत्प्रतिषेध इत्यर्थः। सिद्धमिति। उत्तरपदस्याज्झलसमुदायत्वात्तल्लोपस्यानजादेशत्वादस्थानिवत्त्वात्तुल्यावधिकया भसंज्ञया द्विविधापि पदसंज्ञा बाधत इति पदनिबन्धनकार्याप्रसङ्गः। अत्रेदं बोध्यम्। संज्ञाशब्दैकदेशे लुप्ते संज्ञास्वरूपानुपलम्भात्कथं संज्ञिनोऽवगमः। नहि यस्य देवदत्त इति संज्ञा कृता स देवशब्दाद्दत्तशब्दाद्वा प्रतीयते। चेत्कदेशेन समुदायोऽनुमीयते समुदायस्त्वर्थवाचक इति युक्तं कल्पयितुमुच्चार्यमाणस्य प्रत्यायकत्वादेवं तर्ह्यनुनिष्पन्नत्वादवयवानामपि संज्ञात्वम्। तत्र वर्णानामनुनिष्पादिनां शास्त्रेणानन्वाख्यानादसाधुत्वम्। पदानामेव तु संज्ञैकदेशानां साधुत्वमिष्यत इति लोपविधानद्वारेण तदभ्यनुज्ञायते। तदुक्तम्। तुल्यायामनुनिष्पत्तौ योऽन्वाख्या इत्यसाधवः। नह्यन्वाख्यायते शास्त्रे तेषु दत्तादिवत् स्मृतिरिति। दृष्टश्चायं लोके व्यवहारो यत्समुदायस्य संज्ञात्वे तदेकदेशः प्रयुज्यते। त-

अल्पे ॥ ८५ ॥ ह्रस्वे ॥ ८६ ॥ किमर्थमिमावुभावर्थौ निर्दिश्येते। नयदल्पं ह्रस्वमपि तद्भवति । यच्च ह्रस्वमल्पमपि तद्भवति । नैतयोरावश्यकः समावेशः । अल्पं तैलमल्पं घृतमित्युच्यते । न कश्चिदाह ह्रस्वं घृतं ह्रस्वं तैलमिति । तथा ह्रस्वः पटः ह्रस्वः शाटक उच्यते । नहि कश्चिदाह अल्पः पटः अल्पः शाटक इति ॥

कुटीशमीशुण्डाभ्यो रः ॥ ८८ ॥ कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्वचनम् *। कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्भावो वक्तव्यः । कुटी कुटीरः । शमी शमीरः । शुण्डा शुण्डार इति । किं पुनः कारणं न सिध्यति । स्वार्थिकोयं, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते । उक्तं वा * । किमुक्तम् । स्वार्थिका अतिवर्तन्ते लिङ्गवचनानीति ॥

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ९१ ॥ वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधः *। वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधो वक्तव्यः । कृशो वत्सो वत्सतर इति मा भूदिति । स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम् । न च कार्श्यस्य भावाद् द्रव्ये वत्सशब्दः ॥

किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् ॥ ९२ ॥ वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ९३ ॥ किमादीनां द्विबह्वर्थे प्रत्ययविधाना-

---

न समुदायस्य मुख्यं संज्ञात्वमवयवानां त्वनुनिष्पन्नम् ।

अल्पे । किमर्थमिति । वंशादिष्वल्पत्वह्रस्वत्वयोःसमावेशदर्शनादन्यतरोपादानेनसिध्यतीति प्रश्नः । न कश्चिदाहाल्पःपट इति । ननु वोच्यतएव लोकेऽल्पः पट इति । यद्यप्युच्यते तथाप्यायामविस्तारहीनोऽल्प उच्यते यस्त्वायामहीनो विस्तीर्णश्च स ह्रस्व उच्यते न स्वल्पो ऽपि तु माहन् ।

कुटी।पुंवद्वचनमिति । प्रकृतिप्रत्ययसमुदायस्यायं पुंवद्भावो न तु प्रकृतेरिति स्त्रीप्रत्ययो न निवर्त्तते ।

वत्सो । कार्श्ये प्रतिषेध इति । तनुत्व इति सामान्येनोपादानादतिप्रसङ्ग इति भावः । यस्य गुणस्येति । । अन्तरङ्गत्वात् प्रवृत्तिनिमित्तस्यैव तानेव प्रत्यय इति भावः ।

किंय । उपाध्यानर्थक्यमिति । अयं भावः । द्वयोरित्यनर्थकं बहूनामपि निर्द्धारणे

दुपाध्यानर्थकम् *। किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाधीनां ग्रहणमनर्थकम्। किं कारणम्। बहिर्धारणं निर्द्धारणमिति। यावता द्वयोरेकस्यैव बहिर्धारणं भवति। अपर आह। बहूनां जातिपरिप्रश्ने डतमजित्यत्र बहुग्रहणमनर्थकम्। किं कारणम्। किमित्येतत्परिप्रश्ने वर्तते। परिप्रश्नश्चानिर्ज्ञाते। अनिर्ज्ञातं च बहुषु द्व्येकयोः पुनर्निर्ज्ञातम्। निर्ज्ञातत्वात् द्व्येकयोः परिप्रश्नो न परिप्रश्नाभावात् किमेव नास्ति कुतः प्रत्ययः॥

एकाच्च प्राचाम्॥९४॥ प्राग्वचनं किमर्थम्। विभाषा यथास्यात्। प्राग्वचनानर्थक्यं च विभाषाप्रकरणात्*। प्राग्वचनमनर्थकम्। किं कारणम्। विभषाप्रकरणात्। प्रकृता महाविभाषा तयैव सिद्धम्॥

अवक्षेपणे कन्॥ ९५॥ अवक्षेपणे कन्विधीयते। कुत्सिते कः। क एतयोरर्थयोर्विशेषः। अवक्षेपणं करणम्। कुत्सितं कर्म। अवक्षेपणं वै कुत्सितं करणं तेन यत्कुत्स्यते तदपि कुत्सितं भवति। तत्र कुत्सित इत्येव सिद्धं भवति। एवं तर्हि यत्परस्य कुत्सार्थमुपादीयते दिहोदाहरणम्। व्याकरणकेन नामायं गर्वितः याज्ञिकेन नामायंगर्वितः। यत्कुत्सार्थमुपादीयते ततत्रोदाहरणम्। देवद-

---

डतरच इष्टत्वादजातिपरिप्रश्ने ऽपि कतमशब्ददर्शनाद्वा बहूनामित्यत्र जातिपरिप्रश्नग्रहणं न कर्त्तव्यम्। अथ वा द्वयोरित्यस्य निर्द्धारणषष्ठ्यन्तत्वादेकस्येति न वक्तव्यम्। बहुग्रहणमिति। डतमच उत्सर्गस्य द्वयोरेकस्य निर्द्धारणे डतरचोपवादस्य विधानात्। बहूनामेव निर्द्धारणे डतमच् भविष्यतीत्यर्थः। किं कारणं किमेतदित्यादेरिहायमन्वयः। किमः संख्यापरिमाणे डति चेत्यत्रत्य एवायं ग्रन्थ इत्याहुः। नहीह संख्याग्रहणमस्ति येनास्य ग्रन्थस्योपयोगः स्यादत्यन्तासंबद्धश्चेहायं ग्रन्थः एकद्विविषयस्यापि प्रश्नस्य संभवात् को भवान् कतरो भवतोः कठ इति।

अवक्षे। क एतयोरर्थयोर्विशेष इति। यद्यपि ककनोः स्वरभेदस्तथाप्यसत्यर्थभेदे कुत्सिते कश्चेत्येव वक्तव्यम्। न तु पृथग्योगद्वयम्। पृथग्योगकरणात्तु नूनमनयोरर्थयोर्भेदः स तु न निश्चीयते इति प्रश्नः। अवक्षेपणमिति। येनावक्षिप्यते, निन्द्यते तद्वाचिनः कन् प्रत्ययो यस्तु स्वयं कुत्स्यते ततः क इति विषयविभागः। अवक्षेपणं वै कुत्सितमिति। न हि स्वयमकुत्सितमवक्षेपणं भवतीत्यवक्षेपणस्यापि कुत्सितत्वमस्तीत्यर्थः। यत्परस्य कुत्सार्थमिति। व्याकरणादिकं स्वयमकुत्सितमप्याश्रयविशेषमिदमुपाहरदव-

त्तको यज्ञदत्तकः ॥

लुम्मनुष्ये ॥ ९८ ॥ किमर्थं मनुष्ये लुबुच्यते । न लुगेवोच्येत । लिङ्गसिध्यर्थं लुम्मनुष्ये * । लिङ्गसिध्यर्थं मनुष्ये लुबुच्यते । चञ्चेव चञ्चा वध्रिकेव वध्रिका । खरकुटीव खरकुटी

जीविकार्थे चापण्ये ॥ ९९ ॥ अपण्ये इत्युच्यते तत्रेदं न सिध्यति । शिवः स्कन्दो विशाख इति । किं कारणम् । मौर्यैर्हिरण्यार्थिभिरर्च्याः प्रकल्पिता, भवेत्तासु न स्यात् । यास्त्वेताः संप्रति पूजार्थास्तासु भविष्यति ॥

समासाच्च तद्विषयात् ॥ १०६ ॥ तदित्यनेन किं प्रतिनिर्दिश्यते । छः । कथं पुनः समासो नाम छविषयः स्यात् । एवं तर्हीवार्थः । यदि तर्हि समासोपीवार्थे प्रत्ययोपि समासेनोक्तत्वात्प्रत्ययो न प्राप्नोति एवं तर्हि द्वाविवार्थौ । काकागमनमिव तालपतनमिव काकतालं काकतालमिव काकतालीयम् ॥

अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ११८

---

क्षेपणं परस्य भवतीति तद्वाचिनः कन्प्रत्ययः ।

लुम्मनुष्ये । लिङ्गसिद्ध्यर्थमिति । वचनं त्वभिधेयवदेव भवति चञ्चेव मनुष्याविति । तदुक्तम् । हरीतक्यादिषु व्यक्तिरिति । लुकि मनुष्यलिङ्गप्रसङ्गः ।

जीविकार्थे । यास्त्वेता इति । याः परिगृह्य गृहाद् गृहमटन्ति तास्वित्यर्थः । यास्तु विक्रीयन्ते तासु न भवति । शिवकान् विक्रीणीत इति ॥

समा । तदित्यनेनेति । इवार्थश्छस्य प्रकृत इति कस्य सर्वनाम्ना परामर्श इति प्रश्नः । आचार्यदेशीय आह । छ इति । कथं पुनरिति । अनेनैव छस्य विधानाच्छविषयस्यानुवादानुपपत्तिरित्यर्थः । एवं तर्हीवार्थ इति । प्रधानस्यापि च्छस्य परामर्शस्यायुक्तत्वाद् गुणभूतस्यैवेवार्थस्य परामर्शः । छे च विधीयमाने ऽस्मादेव ज्ञापकादिवार्थे समासः सुप्सुपेति वा । समासेनोक्तत्वादिति । वचनसामर्थ्यात्स्यादितिचेच्छस्त्रीश्यामादिभ्यो ऽतिप्रसङ्गः । एवं तर्हीति । शस्त्रीश्यामादीनां त्वन्तर्भूतेवार्थानामुपमेयप्रधानानामुपमेयान्तरेण संबन्धाभावाच्छस्याप्रसङ्गः । काकागमनमिवेति । वृत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ । तत्र काकागमनं देवदत्तागमनस्योपमानं तालपतनं दस्युनिपातस्य । तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति वधादिः काकतालीयादिशब्दवाच्यः संपद्यते ॥

अभि । अणो गोत्रादिति । गोत्रेणाखिशेष्यते । गोत्रे यो विहितोण् तदन्तेभ्योभिजि-

॥ ११८ ॥ अथो गोत्रग्रहणं गोत्रवचनम् *। अथो गोत्रात् गोत्रग्रहणं कर्त्तव्यम्। गोत्रादिति वक्तव्यम्। इह मा भूत्। आभिजितो मूहूर्तः। आभिजितः स्थालीपाक इति। गोत्रमिति च वक्तव्यम्। किं प्रयोजनम्। आभिजितकः। गोत्राश्रयो वुञ् यथा स्यात्। गोत्रमिति शक्यमकर्त्तुम्। कथमाभिजितकः। गोत्रादयं स्वार्थिको गोत्रमेव भवति। इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमाध्यायस्य तृतीयपादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ॥ १ ॥ पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् *। पादशतग्रहणमनर्थकम्। किं कारणम्। अन्यत्रापि दर्शनात्। अन्यत्रापि हि वुन् दृश्यते। द्विमोदकिकां ददाति ॥

स्थूलादिभ्यः प्रकारवचने कन् ॥ २ ॥ कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम् *। कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानं कर्त्तव्यम्। चञ्चत्कः बृहत्कः ॥

---

दादिभ्यो यञ् यथा स्यात्। आभिजितइति। एकत्र नक्षत्रेण युक्तः काल इत्यण। अपरत्र सास्य देवतेति। गोत्रमिति च वक्तव्यमिति। एवं मन्यते गोत्रचरणाद्वुञित्यत्र गोत्रग्रहणस्य स्वरितत्वाद् गोत्रे कुञ्जादिभ्यः च्फञिति गोत्राधिकारविहितप्रत्ययस्य ग्रहणे सति अस्य यञो ग्रहणं न स्यात् गोत्रत्वातिदेशात्तु भवति। अभिजितका इति। अभिजित्यस्यायमिति वुञ्। आपत्यस्य च तद्धिते नातीति यलोपः। गोत्राद्यमिति। गोत्रचरणाद्वुञित्यत्र गोत्रग्रहणेनार्थो गृह्यते तेन तद्वाचिनः प्रत्ययो विधीयमानो ऽस्मादपि यञो भवति। गोत्राधिकारविहितप्रत्ययग्रहणेत्वौपगव इत्यादावणाद्यन्ताद्वुञ् न स्यात्।

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

पादशतस्य। पादशतग्रहणमिति। द्वौ द्वौ माषौ ददातीत्यादावतिप्रसङ्गो न भवत्यनभिधानात्। यस्येतिलोपेन सिद्धेपुनर्लोपविधानमपरनिमित्तकत्वार्थम्। तेन लोपस्यास्थानिवत्वात् द्विपदिकेत्यादौ पादः पदिति पद्भावः सिध्यति ॥

स्थूला। चञ्चत्क इति। सादृश्यस्य द्योतकः कन् प्रत्ययः। अचञ्चन्नपि यश्चञ्चन्निव लक्ष्यते स चञ्चत्को यथा मणिः स्यन्दमानप्रभात्वात्। अबृहन्नपि बृहन्निव प्रसृतप्रभत्वाद्यो दृश्यते स बृहत्कः ॥

अनत्यन्तगतौ क्तात् ॥ ४ ॥ अनत्यन्तगतौ क्तात्तमादयः पूर्वविप्रतिषिद्धम् * । अनत्यन्तगतौ क्तात्तमादयो भवन्ति पूर्वविप्रतिषेधेन । अनत्यन्तगतौ क्तात्कन् भवतीत्यस्यावकाशः । अनत्यन्तगते र्वचनं प्रकर्षस्यावचनम् । छिन्नकं भिन्नकम् । तमादीनामवकाशः प्रकर्षस्य वचनमत्यन्तगतेरवचनम्। पटुतरःपटुतमः । उभयवचने उभयं प्राप्नोति । भिन्नतरकं छिन्नतरकम् । तमादयो भवन्ति पूर्वविप्रतिषेधेन। तदन्ताच्च स्वार्थे कन्वचनम् * । तदन्ताच्च स्वार्थे कन्वक्तव्यः। भिन्नतरकं छिन्नतरकम् ॥

न सामिवचने ॥ ५ ॥ सामिवचने प्रतिषेधानर्थक्यं प्रकृत्यभिहितत्वात् * । सामिवचने प्रतिषेधोनर्थकः । किं कारणम् । प्रकृत्यभिहितत्वात्। प्रकृत्याभिहितः सोर्थ इति कृत्वा कन्न भविष्यति ॥

अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः ॥७॥ अध्युत्तरपदात् प्रत्ययविधानानुपपत्तिर्विग्रहाभावात् * । अध्युत्तरपदात्प्रत्ययविधेरनुपपत्तिः । किं कारणम् । विग्रहाभावात् । विग्रहपूर्विका तद्धितोत्पत्तिः। न चाध्युत्तरपदेन विग्रहो दृश्यते । तस्मात्तत्रेदमिति

---

अनत्यन्त । भिन्नतरकमिति । भेदस्य प्रकर्षानत्यन्तगत्योर्युगपद्विवक्षायां पूर्वविप्रतिषेधात्तरपि कृते क्तान्तत्वाभावात्कन्न प्राप्नोतीत्याह । तदन्ताचेति । स्वार्थः पुनरनत्यन्तगतियुक्त एव न तु शुद्धः । शुद्धे हि स्वार्थे कनि सत्यनत्यन्तगतिर्न द्योतिता स्यात् । नन्वेष स्वार्थमात्रे कन् प्रतिपादितो दृश्यते चासौ यथैवं सूक्ष्मभिन्नतरकं भवति बहुतरकं व्याप्यते सुकरतरकं मन्यत इति । एवं तर्हि न सामिवचनइति प्रतिषेधेन स्वार्थिकः कन्नस्तीति ज्ञाप्यते । नहि सामिकृतादिभ्योनत्यन्तगतौ क्तादित्यस्य कनः प्रसङ्गो ऽसमासे सामिवचनेनैवानत्यन्तगतेर्द्योतनात् । समासेभ्यस्तु क्तान्तत्वाभावाच्च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति वचनात्सामिशब्दस्य गतिकारकत्वाभावात् । तस्मात्स्वार्थिकस्यैवासौ कनो निषेधः स्वार्थिकं कनं ज्ञापयति ॥

अष । विग्रहाभावादिति । अन्यत्रैविग्रहपूर्विका वृत्तिर्दृश्यते । यथा यावो यावक इति । यत्र तु विग्रहो नेष्यते तत्र नित्यग्रहणं क्रियते यथा त्रेर्मम्नित्यमिति । इह तु महाविभाषाधिकारस्य न किं चिन्निवर्तकमस्तीति विग्रहः प्राप्नोति । न चासौ दृश्यत इति प्रत्ययविधानं नोपपद्यत इत्यर्थः । सूत्रमुपालभ्य न्यासान्तरं पठति । तस्मात्तत्रेदमिति । तत्र महाविभाषाधिकारात्पक्षे वाक्यं भवति राजनीदमायत्तमिति । पक्षे प्रत्ययः

सधीनः *। तस्मात्तत्रेदमिति सधीनः प्रत्ययो वक्तव्यः। राजनीदं राजाधीनम्। यदि सधीनः क्रियते सकारस्येत्संज्ञा न प्राप्नोति। इह च स्त्र्यधीनो भ्र्वधीन इत्यङ्गस्येति इयङुवङौ स्याताम्। सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तमध्युत्तरपदात् प्रत्ययविधानानुपपत्तिर्विग्रहाभावादिति। नैष दोषः। अस्ति कारणं येनात्र विग्रहो न भवति। किं कारणम्। नित्यप्रत्ययोयम्। के पुनर्नित्यप्रत्ययाः। तमादयः प्राक्कनः। ञ्यादयः प्राग्वुनः। आमादयः प्राङ्मयटः। बृहतीजात्यन्ताः समासान्ताश्चेति। एवं तर्हि नायं प्रत्ययविधिरुपालभ्यते। किं तर्हि। प्रकृतिरुपालभ्यते। अध्युत्तरपदा प्रकृतिर्नास्ति। किं कारणम्। विग्रहाभावात्। विग्रहपूर्विका समासप्रवृत्तिः। न चाऽधिना विग्रहो दृश्यते। एवं तर्हि बहुव्रीहिर्भविष्यति। किं कृतं भवति। भवतिवै कश्चिदस्वपदविग्रहो बहुव्रीहिः तद्यथा। शोभनं मुखमस्याः सुमुखीति। नैवं शक्यम्। इह हि महदधीनमित्यात्वं कप् च प्रसज्येतायाम्। एवं तर्ह्यव्ययीभावो भविष्यति। एवमप्यधेः पूर्वनिपातः प्राप्नोति। राजदन्तादिषु पाठः क-

---

राजाधीनमिति। भाष्यकारो न्यासान्तरं दूषयति। यदीति। पदसंज्ञा नलोपाद्यर्थमवश्यमभ्युपेया। तमादय इति। अवक्षेपणे कन्नित्यस्मात्कनः प्रागित्यर्थः। शुक्ल इत्युक्ते सामान्यशब्दत्वात् प्रकर्षस्यानवगमात्प्रकर्षाद्युपाधिद्योतनायावश्यप्रयोज्यास्तमादय इति सामर्थ्यात्ते नित्याः। आमादय इति। किमेत्तिङव्ययघादित्यारभ्य तत्प्रकृतवचने मयडित्यस्मात् प्रागित्यर्थः। बृहतीजात्यन्ता इति। बहुवचननिर्देशादेतत्सूत्रविहितस्य खस्य ग्रहणम्। किं तर्हि प्रकृतिरिति। प्रकृत्यभावात् प्रत्ययोपि न प्राप्नोति। एतच्च शौण्डादिष्वधिशब्दस्य पाठमनपेक्ष्योच्यते। एवं तर्हि बहुव्रीहिरिति। वृत्तिविषये ससाधनक्रियावाचित्वादधिशब्दस्य राजाधिकृतो यस्मिंस्तद्राजाधीनमिति बहुव्रीहिः करिष्यते। विशेषणत्वविवक्षया च राजादीनां पूर्वनिपातः। यदि त्वाकिखट्वादिवद्राजानमधिगत इति तत्पुरुषः क्रियते। तदाधेः पूर्वनिपातः स्यात्। कप्चेति। शेषाद्विभाषेत्यनेन। तस्मिंश्च सत्यध्युत्तरपदत्वाभावात् खो न स्यात्। एवमप्यधेरिति। यथाधिस्त्रीति। राजदन्तादिष्विति। ननु विभक्त्यर्थे वृत्तेरधेरव्ययीभावो विधीयमानोधिकरणप्रधानः स्यान् नाधेयप्रधानः। नैष दोषः। साहचर्यादाधेयप्रधानो भविष्यति। खप्रत्यये चकृते कुटीरादिवदर्थेष्टं लिङ्गसंख्यं भविष्यति राजदन्तादिषु चाधेये धिरित्येवं विशिष्य पठितव्यं तेनाधिस्त्रीत्या-

रिष्यते । अथवा सप्तमीसमासोयम् अधिः शौण्डादिषु पठ्यते ॥

विभाषाञ्चेरदिक् स्त्रियाम् ॥८॥ दिग्ग्रहणं किमर्थम् । अस्त्रियामितीयत्युच्यमाने प्राचीना ब्राह्मणी प्राचीना शिखेत्यत्रापि प्रसज्येत । दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ स्त्रीग्रहणं किमर्थम् न यावता दिक् शब्दः स्त्रीविषय एव भवति वैकश्चिद्दिक् शब्दोऽस्त्रीविषयोपि । तद्यथा । प्राक्प्राचीनम् । उदक्उदीचीनम् ॥

वृन्नः स्त्रियामञ् ॥ १४ ॥ स्त्रग्रहणं किमर्थम् । न स्वार्थिको यम् । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते । एवं तर्हि सिद्धे यत् स्त्रीग्रहणं करोति तज्ज्ञापयत्याचार्यः स्वार्थिका अनुवर्तन्ते लिङ्गवचानीति । किमेतस्य ज्ञापने प्रयोजनम् । गुडकल्पा द्राक्षा तैलकल्पा प्रसन्ना पयस्कल्पा यवागूरित्येतत्सिद्धं भवति ॥

एकस्य सकृच्च ॥ १९ ॥ सकृदादेशे ऽभ्यावृत्तिग्रहणं निवर्त्यम् । किं प्रयोजनम् । पुनः पुनरावृत्तिरभ्यावृत्तिः । न चैकस्य पुनः पुनरा-

---

त्रावधिकरणप्रधानत्वेऽधेः परनिपाताभावः । अधिः शौण्डादिष्विति । अधिरीश्वरइत्यधेः कर्मप्रवचनीयत्वात्तस्य चेश्वरवचनमिति सप्तम्यन्ता राजादयोधिना समस्यन्ते । एवं च वाक्यमपि भवति । यथाधिब्रह्मदत्ते पञ्चाला इत्येवं राजन्यधिराजाधीनमिति वृत्तिविषये चाधिशब्द ईशितव्ये वर्त्तते । अथ वा धिकरणएव सप्तमी वृत्तिविषये च ससाधनक्रियावचनोधिर्न तु वाक्ये इत्यस्वपदविग्रहो राजन्यधिकृतं राजाधीनं राजायत्तमित्यर्थः ॥

विभाषाञ्चे । इह विभाषाग्रहणं पूर्वस्य विधेर्नित्यत्वज्ञापनार्थम् । द्वयोर्विभाषयोर्मध्ये नित्यो विधय इति न्यायात् । दिग्ग्रहणमिति । अञ्चत्यन्तः स्त्रियां वर्त्तमानो दिश्येव वर्ततइति प्रश्नः । प्राचीना ब्राह्मणीति । क्रियानिमित्तको दिग्देशकालनिमित्तको वा ब्राह्मण्यादौ स्त्रियां वर्त्तत इति खस्य प्रतिषेधाभावः । प्रागिति । प्राचीशब्दाद् दिग्वाचिनो दिक् शब्देभ्य इत्यस्तातेरस्त्यञ्चस्याञ्चेर्लुगिति लुक् । ततो ऽव्ययत्वात् स्त्रीत्वाभावः । खे तु कृते शब्दान्तरत्वान्नपुंसकत्वम् ।

एकस्य । सकृदादेश इति । अभ्यावृत्तिगणने सकृच्छब्दस्यासामर्थ्यात् पुनः पुनरावृत्तिः क्रियाया क्रियाभ्यावृत्तिस्तद्गणने वर्त्तमानात् संख्याशब्दात् कृत्वसुजित्येवं पूर्वसूत्रार्थमाश्रित्येदमुच्यते । यदा त्वभिमुखी वृत्तिरभ्यावृत्तिर्जन्मलक्षणोच्यते तदा तदनुवृत्तावपीह दोषाभावः । अस्मिन् पक्षे धात्वर्थस्यानुवाद आङ् । यथा अधिपरी अनर्थकाविति । किं प्रयोजनमिति । अभिमुखीवृत्तिरभ्यावृत्तिरभ्यावृत्तिरित्यर्थ न दोष इति प्रश्नः । न चैकस्येति । ननु चैकस्यैव पुनः पुनरावृत्तिर्यथा पञ्चकृत्वो भुङ्क्तइति । एकैवात्र भु-

वृत्तिर्भवति । अथ क्रियाग्रहणमनुवर्तते उताहो न । किं चार्थोऽन
वृत्त्या । बाढमर्थः । इह मा भूत् । एको भुङ्क्त इति । अथानुवर्तमा-
नेऽपि क्रियाग्रहणे इह कस्मान्न भवति । एकः पाक इति । पूर्वयोश्चापि
योगयोः कस्मान्न भवति । द्वौ पाकौ त्रयः पाकाः चत्वारः पाकाः प-
ञ्चपाकाः दश पाका इति । नैतत् क्रियागणनम् । किं तर्हि । द्रव्यगण-
नमेतत् । कथम् । कृदभिहितो भावो द्रव्यवद्भवतीति । इहापि तर्हि
द्रव्यगणनान्न प्राप्नोति । सकृद्भुक्त्वा सकृद्भोक्तुमिति । पूर्वयोश्चापि यो-
गयोर्द्विर्भुक्त्वा द्विर्भोक्तुम् । पञ्चकृत्वो भुक्त्वा पञ्चकृत्वो भोक्तुम् । दशकृ-
त्वो भुक्त्वा दशकृत्वो भोक्तुमिति । द्रव्यगणनान्न प्राप्नोति यदि खल्व-

---

जिक्रिया निवृत्तभेदाख्यातेनाभिधीयते । तस्याः पञ्चावृत्तयः पञ्चसंख्यया गण्यन्ते । स-
त्यमेतत् । अयं त्वत्रार्थः । न चैकस्य पुनः पुनरावृत्तिर्भवतीति । इह सकृद् भुङ्क्त-
इति भोजनमेककालं विवक्षितं तस्यैककालस्यैकशब्दवाच्यस्य कालभेदादप्यलब्धभेदस्य
पुनरावृत्त्यभावादभ्यावृत्त्यभावस्तत्र यथा साधु पचतीति भवत्येवमेकं भुङ्क्तइति । प्रा-
प्ते सकृच्छब्दप्रयोगार्थमिदं सूत्रम् । अथ क्रियाग्रहणमिति । प्रधाने निवर्त्तमाने गुणस्या-
पि निवृत्त्या भाव्यमिति मत्वा प्रश्नः । किं चार्थ इति । यदि प्रयोजनमस्ति ततः स्वरि-
तत्वात् क्रियाग्रहणं निवर्त्तमानेप्यभ्यावृत्तिग्रहणेनुवर्त्तिष्यत इति भाव । एको भुङ्क्तइ-
ति । अनेकोपि भुङ्क्त इति तन्निवृत्त्यर्थक एकशब्दप्रयोगः । अथानुवर्त्तमानेपीति । य-
था तुमुन्ण्वुलौ क्रियायां क्रियार्थायामित्यादिषु क्रियाप्रदेशेषु पाकादेर्ग्रहणं भक्तुं पाक
इत्यादिसिद्ध्यर्थं तथेहापि ग्रहणेन भाव्यमिति मत्वा प्रश्नः । द्वौ पाकाविति । यदैक मे-
व पाक्यं द्विष्पक्वं तदैतदुदाहरणम् । सुवर्णस्य द्वौ पाकाविति । एवमभ्यावृत्तिर्भवति तद्भे-
दाच्च पाकस्य भेदो यदा तु पाक्यद्रव्यभेदात्पाकभेदस्तदाभ्यावृत्त्यभावादेव पूर्वयोगाभ्यां
प्रत्ययाप्रसङ्गः । नैतत् क्रियागणनमिति । अभ्यावृत्तिग्रहणादेव क्रियासंप्रत्ययः सिद्धः ।
नहि द्रव्यगुणयोः स्वभावसिद्धयोः शब्देन प्रतिपाद्यमानयोरभ्यावृत्तिः संभवति । साध्या-
र्थविषयत्वात्तस्याः । तस्मात् क्रियाविशेषप्रतिपत्त्यर्थं क्रियाग्रहणं कृतं तेन साध्यस्वभा-
वैव क्रिया गृह्यते पाकादिभिस्तु शब्दैः सिद्धस्वभावाभिधीयते । सिद्धतायां घञादिविधा-
नात् । यद्यपि धातुनात्र साध्यस्वभावा क्रियाभिधीयते तथापि प्रत्ययार्थस्य प्राधान्या-
त्साध्यत्वं गुणभूतमिति क्रियाग्रहणादिह सिद्धता धर्मयुक्तपाकाद्यग्रहोन्यत्र तु धातुवाच्य-
क्रियाश्रयं पाकादिष्वपि कार्यं भवति । यादृशी च पूर्वसूत्रे क्रिया गृहीता तादृश्येवेहानुव-
र्त्तत इत्येकः पाक इत्यत्राप्ययं परिहार उपपन्नः । यथोक्तन्यायमप्रतिपद्य कृदभिहित इति
सामान्येनाभिधानाद् घञादीनामव्ययकृतां च विशेषमबुद्ध्वा पृच्छति । इहापि तर्हीति ।

पि पुनः पुनरावृत्तिरभ्यावृत्तिर्द्विरावृत्तेः सकृदिति स्यात् । चिरावृत्ते-र्द्विरिति। एवं तर्ह्यनुवर्तते अभ्यावृत्तिग्रहणम् । न तु पुनः पुनरावृत्ति-रभ्यावृत्तिः । किं तर्ह्यभिमुखीप्रवृत्तिरभ्यावृत्तिः । पूर्वा च परं प्रत्य-भिमुखी।परे च पूर्वां प्रत्यभिमुख्यौ । यदप्युच्यते । अनुवर्तमानेपि क्रियाग्रहणे इह कस्मान्न भवति एकः पाकः । पूर्वयोश्चापि योगयोः द्वौ पाकौ त्रयः पाकाः चत्वारः पाकाः पञ्च पाका दश पाका इति। परिहृतमेतत्। नैतत् क्रियागणनम् । किं तर्हि। द्रव्यगणनमेतत्। कृ-दभिहितो भावो द्रव्यवद्भवतीति । ननु चोक्तमिहापि तर्हि द्रव्यगण-नान्न प्राप्नोति सकृद्भुक्त्वा सकृद्भोक्तुमिति। पूर्वयोश्चापि यगयोः द्वि-भुक्त्वाद्विर्भोक्तुं त्रिर्भुक्त्वात्रिर्भोक्तुं पञ्चकृत्वोभुक्त्वापञ्चकृत्वोभोक्तुं दशकृत्वो-भुक्त्वा दशकृत्वोभोक्तुमिति। द्रव्यगणनान्न प्राप्नोति।नैष दोषः । क्रिया-गणनाद्भविष्यति। कथम्। कृदभिहितो भावो द्रव्यवदपि क्रियावदपि ॥

---

दोषान्तरं चाह । यदि खल्वपीति । आद्या हि क्रियाप्रवृत्तिरभ्यावृत्तिर्न भवति । किं तर्ह्यभिमुखीति । एतच्चाभिग्रहणाल्लभ्यते। अन्यथा हि क्रियावृत्तिगणन इति ब्रूयात् । पूर्वाचेति । अस्ति हि तासां प्रवृत्तीनामेकसाधनानां परस्परापेक्षा एतावत्य एताः प्रवृत्तय इति । सकृद्भुङ्क्त इत्यादौ लेकस्या अपि वृत्तेः स्वरूपलाभं प्रत्यभिमुख्यमस्ति। द्रव्यवदपीति । अयाद्रव्यं लिङ्गसंख्यासाधनैः संबध्यते तथा घञाद्यभिहितो भाव इत्यर्थः। अव्ययकृदभिहितस्तु भावो लिङ्गसंख्यासाधनसंबन्धाभावात् साध्यस्वभाव एव प्रतीयते न तु सिद्धस्वभाव इति क्रियावदेवासौ भवति न तु द्रव्यवदिति तत्र क्रियाभ्यावृत्तिसद्भावा-द्भवत्येव प्रत्ययः । अविप्रतिपत्तिविषयाख्यातवाच्यक्रियापेक्षश्च क्रियावदित्यतिदेशः। पूर्व-सूत्रे संख्याग्रहणमनियतविशेषवाचिभूर्यादिनिवृत्त्यर्थम् । तेहि बहुगणशब्दाभ्यां नियमा-र्थाभ्यां संख्याप्रदेशेषु निषिद्धग्रहणाः । अभ्यावृत्तिग्रहणं किमर्थं पञ्चपाका इत्यत्र क्रिया-मात्रगणने माभूदभ्यावृत्तिग्रहणे च क्रियमाणे क्रियाग्रहणात् क्रियायाविशेषो गम्यते नान्यथा । तदेवं यदैकस्या एव क्रियाया जन्मलक्षणाः प्रवृत्तयो गण्यन्ते तदा कृत्वसुजा-दयो भवन्ति नान्यथा । यदि तर्हि घञाद्यन्तप्रयोगे कृत्वसुजादयो न भवन्ति कथं द्वि-रावृत्तिः । द्विः प्रयोगो द्विर्वचनमित्यादयः प्रयोगाः द्विर्वचनेचेति ज्ञापकात् क्वचित् घ-ञाद्यन्तप्रयोगेपि कृत्वोर्थप्रत्ययो भवतीत्यदोषः । गणनग्रहणं यत्र साक्षादभ्यावृत्तिगण-नं तत्र प्रत्ययार्थमन्यथा क्रियाभ्यावृत्तावित्युच्यमाने सप्तदशप्राजापत्यानजांस्तूपरानेक-वर्णानालभेतेत्यत्राप्यालम्भनक्रियाया आभिमुख्येन प्रवृत्तिसंभवात् साधनभेदसामर्थ्यप्र-

देवतान्तात्तादर्थ्ये यत् ॥२४॥ देवतान्तादित्युच्यते। तत्रेदं न सिध्यति। पितृदेवत्यमिति। नहि पितरो देवता। नैष दोषः। दिवरैश्वर्यकर्मणो देवः तस्मात्स्वार्थे तल्। एवं च कृत्वा देवदेवत्यमपि सिद्धं भवति ॥

देवात्तल् ॥२७॥ तलि स्त्रीलिङ्गवचनम् *। तलि स्त्रीलिङ्गं वक्तव्यम्। देवता। किं पुनः कारणं न सिध्यति। देवशब्दोयं पुंल्लिङ्गः स्वार्थिकश्चायम्। स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्ते। उक्तं वा *। किमुक्तम्। स्वार्थिका अतिवर्त्तन्तेपिलिङ्गवचनानीति ॥

लोहितान्मणौ ॥ ३० ॥ लोहिताल्लिङ्गबाधनं वा *। लोहिताल्लिङ्गबाधनं वेति वक्तव्यम्। लोहितिका लोहिनिका। अक्षरसमूहे छन्दसउपसंख्यानम् *। अक्षरसमूहे छन्दसउपसंख्यानं कर्त्तव्यम्। ओ श्रावयेति चतुरक्षरमस्तुश्रौषडिति चतुरक्षरं येयजामहइति पञ्चाक्षरं यजेति द्व्यक्षरं द्व्यक्षरो वषट्कारः। एष वै सप्तदशाक्षरः छन्दस्यः प्रजापतिर्यज्ञमनुविहितः। छन्दसि बहुभिर्वसव्यै रुपसंख्यानम्*। छन्दसि बहुभिर्वसव्यैरुपसंख्यानं कर्त्तव्यम्। हस्तौ पृणस्व बहुभिर्वसव्यैः। अग्निरीशे वसव्यस्येति। उक्तं वा *। किमुक्तम्। स्वार्थविज्ञानात्सिद्धमिति। अपस्यो वसानाः अपो वसानाः। स्वा ओक्यः। स्व ओकः। कव्योसि हव्यसूदन कविरसि। रौद्रेणानीकेन कव्यतायै कवितायै। आमुष्यायणस्य। अमुष्यपुत्रस्य। क्षेम्यस्येशे। क्षेमस्येशे क्षे-

---

तिपक्षभेदालम्भ क्रियाभ्यावृत्तिविषये साधनगणनवाचिनोपि सप्तदशशब्दात् प्रत्ययः स्यात्। इह पञ्चकृत्वः पाक इत्यादौ करोत्यादिक्रियापेक्षः प्रत्ययः यथा पञ्चकृत्वः पटो रक्तइति॥

देवता। नहि पितर इति। देवताशब्दस्य जातिविशेषवाचित्वाद्भिन्नजातीयाभिधायिना सामानाधिकरण्याभावात् समासाभावात्प्रकृतिरेव नास्ति कुतः प्रत्यय इत्यर्थः। दिवेरिति। क्रियाशब्दो देवताशब्दो न तु जातिवाचीत्यर्थः। देवदेवत्यमिति। जातिशब्दत्वे तु देवताशब्दस्य द्वयोः पर्यायत्वाद्युगपत्प्रयोगो न स्यात्।

लोहिता। लोहितादिति। प्रतिपदविधिर्बलवत्वात् पूर्वमेव कन् स्यात्। तथा च लोहिनिकेति न सिध्येदिति वचनं नित्ये लिङ्गार्थप्रत्ययबाधे प्राप्ते विकल्पार्थम्। स्वार्थविज्ञानात् सिद्धमिति। वसोः समूहे चेत्यत्रोक्तम्। अपस्योऽवसाना इति। अपशब्दाद्

स्यमध्यवस्यति। वायुर्वचस्यम्। वच एव वचस्यम्। निष्केवल्यं निष्केवलम्। उक्थ्यमुक्थम्। जन्यन्ताभिः सजन्यन्ताभिः। जनन्ताभिः सजनन्ताभिः। स्तोमैर्जनयामि नव्यं नवम्। प्रत्नो नव्येभिः नवैः। ब्रह्मपूर्व्यम्। पाथः पूर्वं तनुषु पूर्व्यम्। पूर्वंपूर्व्याह्नः पूर्वाह्नः। पूर्व्याः विशः पूर्वा विशः। पूर्व्यासः पूर्वासः। सप्रपूर्व्यः सप्रपूर्वः। अग्निं वः पूर्व्यं पूर्वं तं जुषस्व यविष्ठ्य यविष्ठ। होत्रवाहं यविष्ठ्यं यविष्ठम्। त्वं ह यद्यविष्ठ्य यविष्ठ। समावद्वसति समावद्गृह्णाति। समं वसति समं गृह्णाति। समावद्देवयज्ञे हस्तौ समां समावद्वीर्यावहानि। समानि समावद्वीर्याणि करोति। समानि। य ईवते लोकेयईवतेब्रह्मणः। यईवते। नवस्यनूत्नप्तनप्खाश्च *। नवस्य नूइत्ययमादेशो वक्तव्यः त्नप्तनप्खाश्च प्रत्यया वक्तव्याः। नूत्नं नूतनं नवीनम्। नश्च पुराणे प्रात् *। नश्च पुराणे प्राद् वक्तव्यः। त्नप्तनप्खाश्च प्रत्यया वक्तव्याः। प्रणं प्रत्नं प्रतनं प्रीणम्॥

तद्युक्तात्कर्मणोऽण्॥ ३६॥ तदित्यनेन किं प्रतिनिर्दिश्यते। वागेव। यदेव वाचाव्याक्रियतेतत्कर्मणा क्रियते। अण्प्रकरणेकुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दसि *। अण्प्रकरणे कुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दस्युपसंख्यानं कर्त्तव्यम्। कौलालः। वारुडः। नैषादः। चाण्डालः। आमित्रः। भागरूपनामभ्यो धेयः *। भागरूपनामभ्यो धेयो वक्तव्यः। भागधेयं रूपधेयं नामधेयम्। मित्राच्छन्दसि *। मित्राच्छन्दसि धेयो वक्तव्यः। मित्रधेये यतस्व। अण्मित्राच्च *। अण् मित्राच्चेतिवक्तव्यम्। मैत्रमामित्रः। सान्नाय्यानुजावरानुषूकचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसांतपनानि निपात्यन्ते। सान्नाय्यः। आनुजावरः। आनुषूकः। चातुष्प्राश्यः। राक्षोघ्नः। वैयातः। वैकृतः। वारिवस्कृतः। आग्रायणः। आग्रहायणः। सांतपनः। आग्नीध्रसाधारणादञ् *।

---

द्वितीयाबहुवचनान्तात् यत् प्रत्ययो विभक्तेः स्वालुक्।

तद्युक्तात्। यदेव वाचेति। इदं त्वया कर्तव्यमिति संदेशवाचं श्रुत्वा यत् कर्म क्रियते तत्कार्मणमित्यर्थः।

आग्नध्रसाधारणादञ् वक्तव्यः। आग्नीध्रम्। साधारणम्। अपवसमरुद्भ्यां छन्दसि *। अपवसमरुद्भ्यां छन्दस्यञ्वक्तव्यः। आपवसे वर्त्तन्ते मारुतं शब्दः। नवसूरमर्त्तयविष्ठेभ्यो यत् *। नवसूरमर्त्तयविष्ठेभ्यो यद्वक्तव्यः। नव्यः। सूर्यः। मर्त्यः यविष्ठ्यः। क्षेमाद्यः *। क्षेमाद्यो वक्तव्यः। क्षेम्यस्तिष्ठन्। प्रतरणः सुवीरः॥

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्॥ ४२॥ बह्वल्पार्थान्मङ्गलामङ्गलवचनम् *। बह्वल्पार्थान्मङ्गलामङ्गलवचनं कर्तव्यम्। बहुशो देहि अनिष्टेषु श्राद्धादिषु मा भूत् इष्टेषु प्राशित्रादिषु यथा स्यात् अल्पशो देहि। इष्टेषु प्राशित्रादिषु मा भूद् अनिष्टेषु श्राद्धादिषु यथा स्यात्॥

प्रतियोगे पञ्चम्यास्तसिः॥ ४४॥ तसिप्रकरणे आद्यादिभ्यमुपसंख्यानम् *। तसिप्रकरणे आद्यादिभ्यमुपसंख्यानं कर्तव्यम्। आदितः मध्यतः अन्ततः॥

कृभ्वस्तियोगे संपद्यकर्तरि च्विः॥५०॥ च्विविधावभूततद्भावग्रहणम् *। च्विविधावभूततद्भावग्रहणं कर्तव्यम्। इह मा भूत्। संपद्यन्ते यवाः संपद्यन्ते शालय इति। अथ क्रियमाणेपि वै अभूततद्भावग्रहणे इह कस्मान्न भवति संपद्यन्ते ऽस्मिन् क्षेत्रे शालय इति। प्रकृतिविवक्षाग्रहणं च *। प्रकृतिविवक्षाग्रहणं च कर्तव्यम्। स-

---

कृभ्वस्तियोगे सं। च्विविधाविति। अभूततद्भावग्रहणं वार्त्तिके दृष्ट्वान्यैः सूत्रे प्रक्षिप्तम्। संपद्यन्ते अस्मिन्निति। अभूत्वाभवन्ति संपद्यकर्त्तरि च्विरिति च्विप्रसङ्गः। एतच्चोपलक्षणम्। कृभ्वस्तियोगाभावाच्च च्वेरप्रसङ्गात्तस्मादिदमुदाहरणम्। भवन्त्यस्मिन् क्षेत्रे शालय इति। प्रकृतिविवक्षाग्रहणं चेति। तेनात्र प्रकृतेरविवक्षितत्वात् च्वेरभावः यदा तु प्रकृतिरेव विकारात्मना संपद्यमाना विकारभेदेन भवनक्रियायां कर्त्री विवक्ष्यते तदा च्विप्रत्ययः अङ्कुरीभवन्ति यवा इत्यत्राभूततद्भाव एव प्रकृतिविवक्षाग्रहणेनव्याख्यात इत्याहुः। येन रूपेण प्रागभूतं कारणं.तेन रूपेण तस्य भावो ऽभूततद्भाव इत्याश्रयणादतिप्रसङ्गाभावः। संपद्यकर्त्तृत्वादेवाभूततद्भावे लब्धे पुनस्तदुपादानाद्यथोक्तविशेषलाभो ऽथ वा जन्मग्रहणे कर्त्तव्ये ऽभूततद्भावग्रहणाद्यथोक्तार्थपरिग्रहः। विकारशब्दाच्च प्रकृतिविकारभेदविवक्षायां प्रकृतौ विकारावस्थां प्राप्नुवत्यां वर्त्तमानात् स्वार्थे च्वि-

मीपादिभ्य उपसंख्यानम् *। समीपादिभ्य उपसंख्यानं कर्तव्यम्। समीपीभवति । अभ्याशीभवति । अन्तिकीभवति । किं पुनः कारणं न सिध्यति । नह्यसमीपं समीपं भवति । किं तर्हि । असमीपस्थं समीपस्थं भवति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । ताच्छब्द्यात्ताच्छब्द्यं भविष्यति ॥

अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ॥५७॥ किमर्थश्चकारः । स्वरार्थः । चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्। नैतदस्ति प्रयोजनम् । एकाजयं तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम् । अत उत्तरं पठति । डाचि चित्करणं विशेषणार्थम् *। डाचि चित्करणं क्रियते। विशेषणार्थम् । क्व विशेषणार्थेनार्थः । लोहितादिडाज्भ्यः क्यषिति । डा इति उच्यमाने इह डा इतीपि प्रसज्येत अथ वद्ग्रहणे नानर्थकस्येतीत्येवमेतस्य न भविष्यति । इदं तर्हि नाभापृथिव्या निहितो दविद्युतत् । तस्माच्चकारः कर्तव्यः ॥

मद्रात् परिवापणे ॥ ६७ ॥ भद्राच्च *। भद्राच्चेति वक्तव्यम् । भद्राकरोति ॥

समासान्ताः ॥६८॥ अन्तग्रहणं किमर्थम् । अन्तो यथा स्यात् । नैतदस्ति प्रयोजनम् । प्रत्ययपरत्वेनाप्येतत्सिद्धम् । इदं तर्हि प्रयोजनम् । तद्ग्रहणेन ग्रहणं यथा स्यात् । कानि पुनस्तद्ग्रहणस्य प्रयोजनानि । प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः । अव्ययीभावः प्रयोजनम् । प्रतिराजम्। उपराजम् । अव्ययीभावश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात्। नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य । इदं तर्हि

---

प्रत्ययः । समीपादिभ्य इति । प्रकृतिविकारभावाभावान्न प्राप्नोतीति वचनम् । ताच्छब्द्यादिति । असमीपस्थस्य तस्य समीपस्थत्वभावात्सिद्धः सूत्रेण प्रत्यय इत्यर्थः ।

समासान्ताः । अन्तग्रहणमिति । समीपवचनमन्तशब्दं मत्वा प्रश्नः । अवयववचनायेनोत्तरमाह । अन्तो यथा स्यादिति । इतरो ऽगृहीताभिप्राय आह । नैतदस्तीति । इतरोऽभिप्रायं प्रकाशयन्नाह । इदं तर्हीति ।

प्रयोजनम्। नाव्ययीभावादतोऽम्त्वपञ्चम्या इत्येष विधिर्यथा स्यात्। अव्ययीभावः। द्विगुः। द्विगुसंज्ञा च प्रयोजनम्। पञ्चगवं दशगवम्। द्विगुश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात्। नैतदस्ति प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य। इदं तर्हि प्रयोजनम्। द्विपुरी त्रिपुरी। द्विगोरकारान्तादिति ईकारो यथा स्यात्। एतदपि नास्ति प्रयोजनम्। पुरशब्दोयमकारान्तः तेन समासो भविष्यति। आतश्चाकारान्तः। एवं ह्याह। क्षेमे सुभिक्षे कृतसंचयानि पुराणि राज्ञां विनयन्ति कोपमिति॥ इदं तर्हि प्रयोजनम्। द्विधुरी त्रिधुरी द्विगोरकारान्तादिति ङीब् यथा स्यात्। द्विगु। द्वन्द्व। द्वन्द्वसंज्ञा च प्रयोजनम्। वाक्त्वचं स्रक्त्वचम्। द्वन्द्वश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात्। नैतदस्ति प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य। इदं तर्हि प्रयोजनम्। कोशश्च निषच्च कोशनिषदं कोशनिषदिनी। द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिरितीनिर्यथा स्यात्। द्वन्द्वतत्पुरुषः। तत्पुरुषसंज्ञा च प्रयोजनम्। परमधुरा उत्तमधुरा परवल्लिङ्गमिति परवल्लिङ्गता यथा स्यात्। नैतदस्ति प्रयोजनम्। उत्तरपदार्थप्रधानस्तत्पुरुषः। इदं तर्हि प्रयोजनम्। अर्द्धधुरा। एतदपि नास्ति प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य। इदं तर्हि। निर्धुरः। अव्ययं तत्पुरुषे प्रकृतिस्वरं भवतीत्येष स्वरो यथा स्यात्। बहुव्रीहि। बहुव्रीहिसंज्ञा च प्रयोजनम्। उच्चधुरः नीचधुरः। बहुव्रीहौ प्रकृत्या पूर्वपदं भवतीत्येष स्वरो यथा स्यात्।

न पूजनात् ॥६९॥ इदं विप्रतिषिद्धम्। को विप्रतिषेधः। परिगणिताभ्यः प्रकृतिभ्यः समासान्तो विधीयते। न च तत्र का चित् पूजनान्ता प्रकृतिर्निर्दिश्यते। नैतद्विप्रतिषिद्धम्। नैवं विज्ञायते याभ्यः प्रकृतिभ्यः समासान्तो विधीयते न चेत्ताः पूजनान्ता भवन्तीति। कथं तर्हि न चेत्ताः पूजनात्परा भवन्तीति। पूजायां स्वतिग्रहणम्*। पूजायां स्वतिग्रहणं कर्तव्यम्। सुराजा अतिराजा। क्व मा भूत्। परमगवः उत्तमगवः। प्राग्बहुव्रीहिग्रहणं च *। प्राग् बहुव्रीहिग्रहणं

च कर्तव्यम्। इह माभूत्। स्वक्षः अत्यक्ष इति॥

किमः क्षेपे॥ ७०॥ क्षेपइति किमर्थम्। कस्य राजा किंराजः। क्षेपइति शक्यमकर्तुम्। कस्मान्न भवति कस्य राजा किंराज इति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति॥

बहुव्रीहौ संख्येये डजबहुगणात्॥ ७३॥ डच्प्रकरणे संख्यायास्तत्पुरुषस्योसंख्यानं निस्त्रिंशाद्यर्थम् *। डच्प्रकरणेसंख्यायस्तत्पुरुषस्योपसंख्यानं कर्तव्यम्। किं प्रयोजनम्। निस्त्रिंशानि वर्षाणि निश्चत्वारिंशानि वर्षाणि। अन्यत्राधिकलोपात् *। अन्यत्राधिकलोपादिति वक्तव्यम्। इह मा भूदेकाधिका विंशतिः एकविंशतिः। द्व्यधिका विंशतिः द्वाविंशतिः। अव्ययादेरिति च वक्तव्यम्। इह मा भूत्। गोचत्वारिंशदिति। तत्तर्हि वक्तव्यम्। यद्यप्येतदुच्यते। अथ वै तर्हि अन्यत्राधिकलोपादित्येतन्न क्रियते॥

ऋक्पूरब्धूः पथामानक्षे॥ ७४॥ अनक्ष इति कथमिदं विज्ञायते। न चेदक्षधूरन्तः समास इति। आहोस्विन्न चेदक्षः समासार्थ इति। किं चातः। यदि विज्ञायते न चेदक्षधूरन्तः समास इति। सिद्धमक्षस्य धूः अक्षधूरिति। इदं तु न सिध्यति। दृढधूरयमक्षः। अस्तु तर्हि न चेदक्षः समासार्थ इति। सिद्धं दृढधूरक्ष इति। इदं तु न सिध्यति। अक्षस्य धूः अक्षधूरिति। एवं तर्हि नैवं विज्ञायते। अक्षधूरन्तः समास इति नापि न चेदक्षः समासार्थ इति। कथं तर्हि न चेदक्षस्य धूरिति। एवं च कृत्वा नापि न चेदक्षधूरन्तः समासइति विज्ञायते नाप्यक्षः समासार्थ इति अथवोभयोर्न भवति॥

अचणोऽदर्शनात्॥ ७६॥ अदर्शनादित्युच्यते। तत्रेदं न सि-

---

ऋक्पूरब्धू। कथमिदमिति। यद्यक्षइति स्वरूपग्रहणमक्षेपूर्वपदे धूरन्तात्समासान्तो न भवतीति तदा न चेदक्षधूरन्तः समास इत्ययं पक्षो भवति यदा त्वक्ष इत्यर्थग्रहणं तदा न चेदक्षः समासार्थ इत्ययं पक्षः। उभयथा च दोषप्रसङ्ग इति प्रश्नः। अक्षधूरन्त इत्यस्यायमर्थोऽक्षशब्दस्य यः समीपे धूः शब्दस्तदन्तः समास इति। न चेदक्षस्य धूरिति अक्षस्य धूरपेक्षया ऽधिकरणत्वादनक्षइत्यधिकरणसप्तमी। चक्रसंबद्धः काष्ठविशेषः शकटावयवोऽक्षः॥

अचणो। अदर्शनादिति वचनादक्षीवाचीत्यक्षिसदृशार्थं प्रवृत्तिरिहाक्षिशब्द उपात्तः।

ध्यति। कम्बराक्षम्। अदर्शनादिति शक्यमकर्तुम्। कथं ब्राह्मणाक्षि। अप्राण्यङ्गादिति वक्तव्यम्॥

अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ७७ आद्यास्त्रयो बहुव्रीहयः। अदृष्टा चतुर्णामचतुरः। विदृष्टा चतुर्णां विचतुरः। सुदृष्टा चतुर्णां सुचतुरः। ततः परे एकादश द्वन्द्वाः। स्त्रीपुंस। धेन्वनडुह। ऋक्साम। वाङ्मनस। अक्षिभ्रुव। दारगव। ऊर्वष्ठीव। पदष्ठीव। नक्तंदिव। रात्रिंदिव। अहर्दिव। ततोऽव्ययीभाव। सह रजसा सरजसम्। ततस्तत्पुरुः। निश्चितं श्रेयो निःश्रेयसम्। ततः षष्ठीसमासः। पुरुषस्यायुः पुरुषायुषम्। ततो द्विगुः। द्वे आयुषी द्व्यायुषं त्रीण्यायूंषि त्र्यायुषम्। ततो द्वन्द्वः ऋक् चयजुश्च ऋग्यजुषम्। जातादय उक्षान्ताः समानाधिकरणाः। जातः उक्षा जातोक्षः। महानुक्षा महोक्षः। वृद्ध उक्षा वृद्धोक्षः। ततोऽव्ययीभावः। शुनः समीपमुपशुनम्। ततः सप्तमी समासः। गोष्ठे श्वा गोष्ठश्वः। चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम् *। चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानं कर्तव्यम्। त्रिचतुराः। उपचतुराः॥

ब्रह्महस्तिभ्यां वर्चसः॥ ७८॥ पल्यराजभ्यां च *। पल्यराजभ्यां चेति वक्तव्यम्। पल्यवर्चसम्। राजवर्चसम्॥

अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः॥ ८७॥ अहर्ग्रहणं द्वन्द्वार्थम् *। अहर्ग्रहणं द्वन्द्वार्थं द्रष्टव्यम्। किमुच्यते द्वन्द्वार्थमिति। न पुनस्तत्पुरुषार्थमपि स्यात्। तत्पुरुषाभावात्। नहि रात्र्यन्तोऽहरादिस्तत्पुरुषोस्ति॥

---

गवाक्षमित्याद्युदाहरणम्, दर्शनवाचित्वे तु ब्राह्मणाक्षीत्यादौ समासान्ताभावः। कम्बराक्षमिति। अश्वानां बहुच्छिद्रकं सुखावरणमुच्यते। तेनाश्वाः पश्यन्तीति दर्शनत्वात्समासान्ताप्रसङ्गः। एवं नवाक्षेपि। अप्राण्यङ्गादिति। तेन गवाक्षकम्बराक्षे सिध्यतः।

अच। अदृष्टा चतुर्णामिति। अर्थप्रदर्शनमेतदृष्टानि चत्वार्यस्येति अन्यपदार्थे बहुव्रीहयः आद्यास्त्रयः कर्तव्या।

अङ्गोऽङ्ग एतेभ्यः ॥ ८८ ॥ अङ्गोऽङ्गवचनानर्थक्यं चाङ्गष्टखोर्नियमवचनात् * । अङ्गोऽङ्गवचनमनर्थकम् । किं कारणम् अङ्ग ष्टखोर्नियमवचनात् । अङ्गष्टखोरेवेत्येतन्नियमार्थं भविष्यति ॥

अनसन्तान्नपुंसकाच्छन्दसि ॥ १०३ ॥ अनसन्तान्नपुंसकाद्वा * । अनसन्तान्नपुंसकाच्छन्दसि वेति वक्तव्यम् । ब्रह्मसामम् । ब्रह्मसाम । देवच्छन्दसं देवच्छन्दः ॥

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥ ११३ ॥ किमर्थं षच् प्रत्ययान्तरं विधीयते । न टच्प्रकृतः सोऽनुवर्तते । अत उत्तरं पठति । षचि प्रत्ययान्तरकरणमन्तोदात्तार्थम् * । षचि प्रत्ययान्तरं क्रियते । अन्तोदात्तार्थम् । अन्तोदात्ताः प्रयोजयन्ति चक्रसक्थं चक्रसक्थी ॥

द्वित्रिभ्यां ष मूर्ध्नः ॥ ११५ ॥ किमर्थं मूर्ध्नः षः प्रत्ययान्तरं क्रियते न षच्प्रकृतः सोऽनुवर्तेत । मूर्ध्नः षवचनम् * । किम् । अन्तोदात्तार्थमित्येव । द्विमूर्धः त्रिमूर्धः ॥

अप्पूरणीप्रमाण्योः ॥ ११६ ॥ अपि प्रधानपूरणीग्रहणम् * । अपि

---

अङ्गो । अङ्गाङ्गवचनानर्थक्यमिति । अङ्ग एतेभ्य इत्येतावत् सूत्रमज्विधानार्थं कर्तव्यम् । टजचोरत्र विशेषाभावात् । रात्राह्नाहाः पुंसीति वचनात् स्त्रियां ह्यभावात् तत्रा ङ्गष्टखोरेवेति नियमाट्टिलोपाभावादल्लोपेन पूर्वाह्लादयः सिद्धा इति नार्थो ऽङ्गादेशविधानेनेत्यर्थः ।

बहु । अन्तोदात्तार्थमिति । सक्थं चाक्रान्तादिति विभाषान्तोदात्तत्वं विधीयते । तत्रान्तोदात्तान् ङीब्ङीषोर्नास्ति विशेषः । ङीप उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वात् । यदा तु पूर्वपदप्रकृतिस्वरेणानुदात्तत्वं तदा ङीषि सतीकारस्योदात्तत्वं भवति । ङीपि तु सत्यनुदात्त ईकारः स्यादित्यर्थः । चक्रसक्थीति । यद्युक्तोयं पाठोऽत्र ह्यक्रान्तादिति विकल्पनिषेधाच्चित्वान्नित्येनान्तोदात्तत्वेन भाव्यम् । तस्माद् गौरसक्थीत्यन्तोदात्तत्वाभावपक्ष उदाहार्यः ।

द्वित्रिभ्याम् । द्विमूर्धइति । यद्यत्र षच् स्यात् तदा चित्वान्नित्यमन्तोदात्तत्वं स्यात् । द्वित्रिभ्यां पादन्मूर्धसु बहुव्रीहाविति तु विभाषान्तोदात्तत्वं यदा समासान्तविधेरनित्यत्वाद् द्विमूर्द्धेति समासान्ताभावस्तदा सावकाशम् । षे तु सति समासान्तपक्षेपि पक्षेन्तोदात्तत्वं पक्षे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति स्वरद्वयसिद्धिः ।

अप्पूरणी । कल्याणपञ्चमीकः पक्ष इति । अत्र वर्त्तिपदार्थ एव पूरणी न लभ्य-

प्रधानपूरणीग्रहणं कर्त्तव्यम्। प्रधानं यापूरणीति वक्तव्यम्। इह मा भूत्। कल्याणी पञ्चमी अस्य पक्षस्य कल्याणपञ्चमीकः पक्षः। अथेह कथं भवितव्यम्। कल्याणी पञ्चमी आसां रात्रीणामिति कल्याणीपञ्चमा रात्रय इति भवितव्यम्। रात्रयोऽत्र प्रधानम्। नेतर्नक्षत्रे उपसंख्यानम्*। नेतुर्नक्षत्रे उपसंख्यानं कर्त्तव्यम्। पुष्यनेत्राः मृगनेत्राः। छन्दसि च *। छन्दसि च नेतुरुपसंख्यानं कर्त्तव्यम्। बृहस्पतिनेत्राः सोमनेत्राः मासात् भृतिप्रत्ययपूर्वपदाट् ठज्विधिः *। मासात् भृतिप्रत्ययपूर्वपदात् ठच् विधेयः। पञ्चकमासिकः। षट्कमासिकः। दशकमासिकः॥

अञ्नासिकायाः संज्ञायां नसं चास्थूलात्॥ ११८॥ खरखुराभ्यां नस् वक्तव्यः। खरणाः। खुरणाः। शितिना अर्चना अहिना इति नैगमाः। शितिनाः। अर्चनाः। अहिनाः॥

उपसर्गाच्च॥ ११९॥ वेर्ग्रो वक्तव्यः। विग्रः। ख्यश्च वक्तव्यः। विख्यः॥

ऊधसोऽनङ्॥ १३१॥ ऊधसोनङि स्त्रीग्रहणम् *। ऊधसोनङि स्त्रीग्रहणं कर्त्तव्यम्। इह मा भून्महोधाः पर्जन्य इति॥

गन्धस्येदुत्पूतिसुसुरभिभ्यः॥ १३५॥ गन्धस्येत्वे तदेकान्तग्रहणम् *। गन्धस्येत्वे तदेकान्तग्रहणं कर्त्तव्यम्। इह मा भूत्। शोभना गन्धा अस्य सुगन्ध आपणिक इति। अथानुलिप्ते कथं भवितव्यम् यदि तावद्यदनुगतं तदभिसमीक्षितुं सुगन्ध इति भवितव्यम्।

---

पदार्थः। पक्षस्य तिरोहितावयवभेदस्यान्यपदार्थत्वात्। यथा वृक्ष इत्यस्य शब्दस्यावयव्यभिधेयो न तु शाखादयोऽवयवा अनुमीयमानत्वाच्छब्दार्थत्वादित्यर्थत्वादित्यप्राधान्यं पूरण्याः। कल्याणीपञ्चमा इति। अत्रावयववे विग्रहः समुदाय उद्भूतावयवभेदः समासार्थ इति रात्रिषु पञ्चम्या अन्तर्भावादन्यपदार्थत्वात् प्राधान्यं पूरण्याः। पञ्चकमासिकइति। पञ्चभृतिरस्य मासस्य पञ्चको मासः। सोऽस्यांशवस्नभृतय इति संख्यायाः कन्। पञ्चको मासोऽस्येति बहुव्रीहौ कृते स्वार्थे ठच्।

अञ्नासि। खरखुराभ्यामिति। आदेशप्रत्यययोः प्रसङ्गे केवलादेशविधानार्थं वचनम्॥

उप। विग्र इति। विगता नासिका यस्य स विग्रः॥

गन्ध। गन्धशब्दोऽस्ति द्रव्यवाची गन्धानर्पिनष्टीति। अस्ति च गुणवाची चन्दनगन्ध इति। तत्र गुणवाचिग्रहणार्थमाह। गन्धस्येत्वइति। रूपादिसमुदायात्मकस्य द्रव्यस्य गन्धलक्षणो गुण एकान्तो भवति। रूपादिव्यतिरिक्तावयविद्रव्यवादिपक्षे त्वेकान्त एवैकान्तस्तत्स्वरूपोपलम्भादित्याश्रीयते। यदनुगतमिति। अनुगतं निलीनमविभागापन्न

अथ यत्प्रविशीर्णं सुगन्ध इति भवितव्यम् ॥

शेषाद्विभाषा ॥ १५४ ॥ शेषादित्युच्यते । कः शेषः । याभ्यः प्रकृतिभ्यः समासान्तो न विधीयते स शेषः । किमर्थं पुनः शेषग्रहणं क्रियते । याभ्यः प्रकृतिभ्यः समासान्ता विधीयन्ते ताभ्यः कब्मा भूदिति । नैतदस्ति प्रयोजनम् । ये प्रतिपदं विधीयन्ते ते ऽबाधका भविष्यन्ति । अनवकाशा हि विधयो बाधका भवन्ति सावकाशाश्च समासान्ताः । कोऽवकाशः । विभाषा कप् । यदा न कप् सोऽवकाशः । कपः प्रसङ्ग उभयं प्राप्नोति । परत्वात्कप् प्राप्नोति । तस्माच्छेषग्रहणं कर्तव्यम् । किं पुनरिदं शेषग्रहणं कबपेक्षम् । यस्माद्बहुव्रीहेः कब् न विहित इति । आहोस्वित्समासान्तापेक्षम् । यस्माद् बहुव्रीहेः समासान्तो न विहित इति । किं चातः । यदि विज्ञायते कबपेक्षम् । अनृचो बह्वृच इत्यत्रापि प्राप्नोति । अथ समासान्तापेक्षम् । अनृक्कं साम बह्वृक्कं सूक्तमिति न सिध्यति । अस्तु कबपेक्षम् कथमनृचो बह्वृच इति । विशेष एतद् वक्तव्यम् । अनृचो माणवे । बह्वृचश्चरणाख्यायामिति । इदं तर्हि ऊधसोनङि स्त्रीग्रहणं चोदितं तस्मिन् क्रियमाणेऽपि प्राप्नोति । एवं तर्हि नैव कबपेक्षं शे-

---

कुङ्कुमादिर्यदा देवदत्तादेर्भवति तदा तत्स्थत्वाद्गन्धस्यैकान्तत्वादित्वं भवति । प्रविशीर्णमिति । विभागेनावस्थितं देवदत्तादेः पृथगुपलभ्यमित्यर्थः ॥

शेषा । कः शेष इति । अनेकस्योपयुक्तत्वात्किमपेक्षः शेष आश्रीयत इति प्रश्नः । इतरः सामान्येनाह । याभ्य इति । समासान्तविशेषस्तु न प्रदर्शितः । किमर्थमिति । सामान्येन विभाषा कब्विधीयताम् । तस्य विशेषे समासान्ता बाधका भविष्यन्तीति प्रश्नः । परत्वात्कप्प्राप्नोतीति । उपदशा उपविंशा इत्यादिषु नित्यं डजादय इष्यन्ते । किं पुनरिति । पूर्वं याभ्यः प्रकृतिभ्य इति सामान्येनोक्तं ततो विशेषज्ञापनाय प्रश्नः । यद्यपि कबपेक्षे शेषत्वे शेषग्रहणमनर्थकमन्तरेणापि शेषग्रहणमशेषान्नित्यं कब्विधानसामर्थ्याद्विभाषितकप्प्रसङ्गाभावाच्छेषादेव कब्विकल्पविज्ञानात् । तथापि विचारमात्रं क्रियते । अनृच इति । ऋगन्तात्कन्न विहित इति शेषत्वात्पक्षे परत्वात्कप्प्रसङ्गः । कबभावपक्षे ऽस्वकारस्यावकाशः समासान्तरं च । विशेष एतदिति । तत एव विशेषविषयाद्वचनादत्र कन्न भविष्यतीत्यर्थः । तस्मिन् क्रियमाणेऽपीति । अक्रियमाणे स्त्रीग्रहणे कुण्डोघ्नीत्यत्र पक्षे परत्वात्कप्प्राप्नोति । क्रियमाणेऽपि स्त्रीग्रहणे तस्य पुन्नपुंसकनिवृत्त्यर्थत्वात् पक्षे परत्वात्कपः प्रसङ्ग एव । एतच्चोदाहरणमात्रम् । उपदशादिषु पक्षे कप्प्रसङ्गात् । नैव कबपेक्षमिति । शेषग्रहणानर्थक्यप्रसङ्गात् । यस्माद्धि नित्यः कब्विहितस्तस्माद्विभाषा न

ग्रग्रहणं नापि समासान्तापेक्षम् । किन्त्वनन्तरो यो बहुव्रीह्यधिकारः सोपेक्ष्यते । अनन्तरे बहुव्रीह्यधिकारे यस्माद् बहुव्रीहेः समासान्तो न विहित इति । कथमनृचो बह्वृच इति । वक्तव्यमेवैतत् । अनृचो माणवे बह्वृचश्चरणाख्यायामिति ॥

ईयसश्च ॥१५६॥ ईयस उपसर्जनदीर्घत्वं च* । ईयसउपसर्जनदीर्घत्वं चेति वक्तव्यम् । बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी विद्यमानश्रेयसी । पुंवद्वचनात्सिद्धम्* । पुंवद्वचनात्सिद्धमेतत् । पुंवद्भावोऽत्र भवति । ईयसो बहुव्रीहौ पुंवद्वचनमिति ॥ इति श्रीभगवत्पतञ्जलिविरचिते महाभाष्ये पञ्चमाध्याये चतुर्थे पादे प्रथममाह्निकम् ॥ पादोऽध्यायश्च समाप्तः ॥

---

प्राप्नोति विरोधादिति पूर्वोक्तन्यायात् । समासान्तापेक्षमपि न भवति । अनृक्कं बह्वृक्कमित्यत्र कपो ऽप्रसङ्गात् । अनन्तरे बहुव्रीह्यधिकार इति । एवं चोधसो ऽनङित्यनन्तरे बहुव्रीह्यधिकारेऽनङो विधानात्कुण्डोघ्नीत्यादौ स्त्रियां कप् न भवति । कथमनृच इति । बहुव्रीह्यधिकारात्प्रागकारविधानाच्छेषत्वात्कचि कप्प्रसङ्गः । वक्तव्यमेवैतदिति । यद्येवं समासान्तापेक्षेऽपि शेषत्वे ऽनृचबह्वृचयोर्विशेषवचनादन्यत्रानृक्कबह्वृक्कयोः पक्षे कपः सिद्धत्वात्कस्य चिद्दोषस्याप्रसङ्गात्किमर्थमनन्तरबहुव्रीह्यधिकारापेक्षः शेष आश्रीयते । बहुव्रीह्यधिकाराच्च तत्पुरुषादिभ्यः कपोऽप्रसङ्गः । किं चोपदशा इत्यादौ पक्षे कप्प्राप्नोति । अनन्तरे बहुव्रीह्यधिकारे डचो ऽविधानात्तथा प्रियपथः प्रियधुर इत्यत्रापि प्राप्नोति । तस्मात्समासान्तापेक्षमेव शेषत्वमाश्रयणीयमिति चिन्त्यमेतद्भाष्यम् ॥

ईय । उपसर्जनदीर्घत्वमिति । ह्रस्वापवादो दीर्घत्वं विधेयम् । पुंवद्वचनादिति । गोस्त्रियोरुपसर्जनस्येति ह्रस्वः प्राप्तः पुंवद्भावेन निवर्त्यते । यथा पुंविषयस्येकारस्य ह्रस्वो न भवति । एवमीयसः परस्येति श्रवणं भवति । बहुश्रेयसीत्यत्र हल्ङ्यादिलोपे विवदन्ते । के चिदाहुः । हल्ङ्यादिलोपेन न भाव्यम् । ङ्यापोः स्त्रीप्रत्यययोर्ग्रहणात् स्त्रीप्रत्यये चानुपसर्जने तदादिनियमाभावादत्रोपसर्जनत्वान् ङीपस्तदादिनियमाद्धल्ङ्यादिलोपस्य प्रसङ्गाभावात् । अन्ये त्वाहुः । दीर्घग्रहणं तत्र ह्रस्वनिवृत्त्यर्थं कृतम् । अतिखट्व इत्यत्र लोपो मा भूदिति । यदि चोपसर्जने तदादिनियमः स्यात्तदा ह्रस्वान्लोपस्य प्रसङ्गाभावात्तद्व्यावृत्तये दीर्घग्रहणं न कुर्यात् कृतं तु यथेष्टमुपसर्जनादपि दीर्घाल्लोपं प्रापयतीति बहुश्रेयसीति सिद्धमिष्टम् । इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमाध्याये चतुर्थे पादे प्रथममाह्निकम् ॥ पादोऽध्यायश्च समाप्तः ॥

षष्ठोऽध्यायः

# महाभाष्यम्

## महर्षिपतञ्जलिप्रणीतम्

कैय्यटकृतव्याख्यासहितम्।

पण्डितकृपारामशर्म्मणा स्वकीयतिमिरनाशकयन्त्रालये

काशिकराजकीयप्रधानपाठशालायां
व्याकरणशास्त्रे लब्धप्रतिष्ठेन
त्रिपाठिपं० भगवत्प्रसादशर्म्मणा
संशोधयित्वा
प्रकाशितम्।

---

काश्याम्

सम्वत् १९४६

यह पुस्तक पण्डित कृपाराम शर्मा की दूकान पर मिलेगी।

प्रथम वार १०००

ॐ परब्रह्मणे नमः॥ एकाचो द्वे प्रथमस्य॥१॥ एकाच इति किमयं बहुव्रीहिः। एको ऽच् यस्मिन्स एकाच् एकाच इति आहोस्वित् तत्पुरुषोयं समानाधिकरणः। एकोऽच् एकाच् एकाच इति। किं चातः। यदि बहुव्रीहिः। सिद्धं पपाच पपाठ। इयाय आरेति न सिध्यति। अथ तत्पुरुषः समानाधिकरणः। सिद्धमियाय आरेति। पपाच पपाठेति न सिध्यति। अत उत्तरं पठति। एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशः *। एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशोयम्। एकवर्णेषु च कथम्। एकवर्णेषु व्यपदेशिवद्वचनात् *। व्यपदेशिवदेकस्मिन्कार्यं भवतीति वक्तव्यम्। एवमेकवर्णेषु द्विर्वचनं भविष्यति। एकाचो द्वे भवत इत्युच्यते। तत्र न ज्ञायते कस्यैकाचो द्वे भवत इति। वक्ष्यति लिटि धातोरनभ्यासस्येति। तेन धातोरेकाच इति विज्ञायते। यदि धातोरेकाच इति, सिद्धं पपाच पपाठ। ज-

---

ॐनमःपरमात्मने। एकाचो द्वे प्रथमस्य। एकाच इति किमयमिति। निर्देशस्य समानत्वाद्भिन्नार्थत्वाच्च एकवचननिर्देशाच्च द्वयोर्युगपदाश्रयितुमशक्यत्वाद्धलादिः शेष इत्यादेर्बहुव्रीहिलिङ्गस्य दर्शनाद्दीर्घ इणः कितीति तत्पुरुषलिङ्गोपलम्भात् स्वरस्य दुरवधारणत्वादेकश्रुत्या वा सूत्रपाठात् स्वरान्निश्चयाभावात्प्रश्नः। बहुव्रीहितत्पुरुषयोर्विग्रहप्रदर्शनं विरुद्धार्थप्रतिपादनार्थम्। नहि संज्ञाभेदमात्राद्दोषः किन्तु विरुद्धार्थप्रतिपादनात्। किं चात इति। द्वयोर्विशेषं पृच्छति। सिद्धं पपाचेति। प्रथमत्वाभावेपि व्यपदेशिवद्भावाद्वक्ष्यमाणाद्योगविभागाद्वा बहुव्रीहिपक्षे पचेर्द्विर्वचनं सिध्यति न तु तत्पुरुषपक्षे। बहुव्रीनिर्देश इति। बहुव्रीहेर्निर्देश उच्चारणं बहुव्रीहिणावार्थस्य निर्देशः प्रतिपादनमित्यर्थः। व्याप्तिन्यायाश्रयेण बहुव्रीहिराश्रीयते। वक्ष्यमाणव्यपदेशिवद्भावात्तत्पुरुषफलस्य बहुव्रीहिणा कृतत्वादत एव प्रयोजनाभावात् तल्लाहृत्य कश्चिपाणमन्यतमानाश्रयणं लिङ्गमप्यनेकं बहुव्रीहेरस्ति हलादिः शेषः शर्पूर्वाः खयः लिट्यभ्यासस्योभयेषामिति अज्मात्रस्य द्विर्वचने ऽभ्यासस्य हलभावाच्छेषसंप्रसारणाद्ययोगात्। एकवर्णेषु चेति। मुख्य एकाज्व्यपदेशो येषां ते व्यपदेशिनः पचादयस्ते यथा द्विर्वचनं प्रतिपद्यन्ते तथैकवर्णा अपि। कस्यैकाच इति। विधिं मत्वा विशेषानुपादानात् पृच्छति। वक्ष्यतीति। नायं विधिः। किं तर्हि अधिकार इत्यस्मात्तन्त्रादस्योत्तरवाक्येष्वर्थविशेषस्य व्यवस्थानम्। धातोरेकाच इति। वैयधिकरण्येन संबन्धोभिमतो धातोरवयवस्यैकाच इत्यर्थः। इतरस्तु सामानाधिकरण्येन संबन्धं मत्वाह। यदि धातोरिति।

जागार पुपुत्रीयिषतीति न सिध्यति। धातोरिति नैषैकाचसमानाधिकरणा षष्ठी धातोरेकाच इति। किं तर्हि अवयवयोगैषा षष्ठी धातोर्य एकाजवयव इति। अवयवयोगैषा षष्ठी चेत्सिद्धं जजागार पुपुत्रीयिषतीति। पपाच पपाठेति न सिध्यति। एषोपि व्यपदेशिवद्भावेन धातोरेकाजवयवो भवति। एकाचो द्वे प्रथमस्येत्युच्यते तेन यत्रैव प्रथमश्चास्ति तत्र द्विर्वचनं स्यात्। जजागार पुपुत्रीयिषतीति। पपाच पपाठेत्यत्र न स्यात्। प्रथमत्वे च *। प्रथमत्वे च किम्। व्यपदेशिवद्भावात्सिद्धमित्येव। स तर्हि व्यपदेशिवद्भावो वक्तव्यः। न वक्तव्यः। उक्तं वा *। किमुक्तम्। तत्र व्यपदेशिवद्वचनमेकाचो द्वे प्रथमार्थम्। षत्वे चादेशसंप्रत्ययार्थम्। नैष दोषः। अवचनाल्लोकविज्ञानात्सिद्धमित्येव। योगविभगो वा एकाज्मात्रस्य द्विर्वचनार्थः*। अथवा यो

---

नेषेति। सर्वानुग्रहाय वैयधिकरण्यमाश्रीयते। तस्मिन्ननेकविषयत्वाल्लक्षणस्य। प्रथमग्रहणाच्च सामानाधिकरण्ये च व्यवच्छेद्याभावात्प्रथमग्रहणमनर्थकं स्यात्। यत्रैव प्रथमश्चेति। प्राथम्यस्य द्वितीयापेक्षत्वात्। अवचनादिति। वचनरहितं यल्लोकविज्ञानं वचनेनानिबद्धं लोकव्यवहारात्मकं तस्मात्सिद्धमित्यर्थः। तथा हि। लोके शिलापुत्रकस्य शरीरमिति बहिर्वस्तुभेदे ऽसत्यपि भेदस्य व्यवहारोऽवस्थाभेदाश्रयो दृश्यते। शिलापुत्रः क्रीयमाणत्वाद्यनेकावस्थायुक्तो यो दृष्टस्तस्येदं शरीरमिति परिदृश्यमानावस्थाभेदेन निर्दिश्यते। एकमेव हि वस्तु तदेवेदमिति प्रत्यभिज्ञानादेकत्वप्रत्ययः। तदप्यवस्थाभेदान्नानारूपमाभाति। यथा हन्त्यात्मानमात्मनेत्येकस्यापि बुद्ध्यावस्थापितावस्थाभेदाश्रयः कर्तृकर्मकरणभावः। इयायेत्यत्रापि प्रयोगभेदादिति इतो यन्ति आयन् जिगमिषति इत्याद्यनन्तरूपत्वेन एकोयमिकारो ऽजिति व्यपदिश्यते। अथ वान्वयव्यतिरेकाभ्यां परिकल्पितार्थत्वाच्छब्दार्थं समुदायस्याविवक्षितार्थ एको वर्णो ऽजिति व्यपदिश्यते। एवं पचेरनन्तप्रयोगविषयस्य प्रयुज्यमानं लिडादिपरं रूपमवयव इति व्यपदिश्यते। प्रथमव्यपदेशोपि प्रयोगभेदादेवेति प्रथमगर्भेण हतेत्यादिर्लौकव्यवहार एकस्मिन्नपि दृश्यते। असतोपि द्वितीयादीन् बुद्ध्या परिकल्प्य व्यवहारान्तराश्रयत्वात्तद्धर्म्याद्वा। प्रसिद्धत्वाच्चैवंविधस्य व्यवहारस्य नास्ति गौणत्वं, सत्यपि वागौणत्वे लिटाभ्यासस्योभयेषां दीर्घ इणः कितीत्यादेर्न्याप्रकाशवति शास्त्रीयकार्यप्रवृत्तिः। योगविभागो वेति। तेन प्राथम्यार्थो व्यपदेशिवद्भावो नाश्रयितव्यः। तत्र हि योगविभागसामर्थ्याल्लिटि धातोरनभ्यासस्येत्यादावेकाच इति प्रथमस्येति च वाक्यभेदेन संबध्यते। एकवाक्यतायां तस्यैव दोषस्य प्रसङ्गात्। तस्मादेतस्मादुग्रहणकवाक्यात् प्रक्रियावाक्यानि लक्ष्यसंस्कारकाणि उपप्लवन्ते। धातोरव

ग विभागः करिष्यते। एकाचो द्वे भवतः। अथर्थं योगविभागः। एकाज्मात्रस्य द्विर्वचनार्थः। एकाज्मात्रस्य द्विर्वचनं यथा स्यात्। इयाय पपाच। ततः प्रथमस्य। प्रथमस्यैकाचो द्वे भवतः। इदमिदानीं किमर्थम्। नियमार्थम्। यत्र प्रथमश्चाप्रथमश्चास्ति तत्र प्रथमस्यैवैकाचो द्विर्वचनं यथा स्यात्। अप्रथमस्य मा भूदिति। जजागार पुपुत्रीयिषतीति। एकाचोऽवयवैकत्वादवयवानां द्विर्वचनप्रसङ्गः *। एकाचोऽवयवैकत्वादवयवानां द्विर्वचनं प्राप्नोति। नेनिजतीत्यत्र निज्शब्दोऽप्येकाच्। इज्शब्दोऽप्येकाच्। इकारोऽप्येकाच्। निशब्दोऽपि। तत्र निज्शब्दस्य द्विर्वचने रूपं सिद्धम्। दोषाश्च न सन्ति। इज्शब्दस्य द्विर्वचने रूपं न सिध्यति। दोषा अपि न सन्ति। इका-

---

यवस्यैकाचोलिटि द्वे भवत इत्येकं वाक्यम्। धातोः प्रथमस्यैकाच इति नियमार्थं द्वितीयम्। अजादेर्धातोर्द्वितीयस्यैकाच इतितृतीयम्। एकाच इति। अवयवा अप्येकाचः समुदायोपि व्यपदेशिवद्भावाद्धातोरवयवस्य। ततो विशेषानुपादानात्सर्वेषां द्विर्वचनप्रसङ्गः। निज्शब्दोपीति। यथा येनैव हस्तेन बाहुर्हस्तवानुच्यते तेनैव देवदत्तोपि। एवमिकारेण सर्वं एकाज्व्यपदेशभाज इति भावः। इकारोपीति। व्यपदेशिवद्भावादितिभावः। अर्थ वता व्यपदेशिवद्भाव इत्यनाश्रित्येकारोपीत्युक्तम्। न ह्येतद्वचनमपि तु न्यायः। अर्थवतो भेदकल्पनसंभवादनर्थकोपि यदि भेदेनाश्रयितुं शक्यते ततस्तत्रापि भवत्येव व्यपदेशिवद्भावः। शक्यते चेकारोप्यनेकसमुदायान्तर्भावाद् नानारूप इवोपलभ्यमानेन रूपेणैकाजिति व्यपदेष्टुम्। नन्वर्थवत्त्वात्समुदायस्यैव द्विर्वचनं भविष्यति नावयवानामनर्थकानाम्। नैतदस्ति। यत्र विशिष्टं शब्दस्वरूपमुपादीयते तत्रार्थवत्परिभाषोपतिष्ठते। यथा शे इत्यत्र। अन्यथाऽर्थवदधातुरित्यत्रार्थवद्ग्रहणमनर्थकं स्यात्। अधातुरप्रत्यय इति पर्युदासाश्रयणात्तत्सदृशशब्दग्रहणादर्थवत्परिभाषोपस्थानादनर्थकस्य ग्रहणाप्रसङ्गाद्धातोरवयवस्यैकाच इत्यवयवत्वेनाश्रयणाच्चानर्थकस्याप्यङ्गीकरणान्नास्तीहैतत्परिभाषोपस्थानम्। अत्र च पर्यायेण सर्वेषां द्विर्वचनप्रसङ्गश्चोद्यते। न तु युगपत्। न ह्येकोवयवो युगपदनेकस्यावयविनोऽवयवत्वेन शक्योपेक्षितुमवयवस्य गुणत्वात्परार्थत्वादेकं प्रति गुणभावादपरं प्रतिगुणभावायोगात्पर्यायेण त्वपेक्षाया अविरोधात्सर्वप्रसङ्ग उच्यते। एकस्यैवैकाचो द्विर्वचनेकृते एकाज्व्यपदेशहेतोरचोपि द्विरुक्तत्वात्तस्मिन्नेव प्रयोगेऽपरस्यैकाचो द्विर्वचनाप्रसङ्गः। प्रवृत्तत्वाल्लक्षणस्य तस्मात् प्रयोगान्तरे पर्यायेण सर्वेषां द्विर्वचनप्रसङ्गः। इज्शब्दस्येति। इकारस्य लघूपधगुणे सत्यभ्यासस्यासवर्णइति ईकारस्य इयङि नियेजेति रूपं स्यात्। इकारस्यापि द्विर्वचनएतदेव रूपम्। दोषा अपि न सन्तीति। रूपासि-

रस्य द्विर्वचने रूपं न सिध्यति । दोषाश्च सन्ति । निशब्दस्य द्विर्वचने रूपं सिद्धम् । दोषाश्च भवन्ति । तत्र को दोषः । तत्र जुस्भाववचनम् * तत्र जुस्भावो वक्तव्यः । अनेनिजुः । पर्यवेविषुः । अभ्यस्तात् झेर्जुस् भवतीति जुस्भावो न प्राप्नोति जकारेण व्यवधानात् । स्वरश्च । स्वरश्च न सिध्यति । नेनिजति यत्परिवेविषतीति । अभ्यस्तानामादिरुदात्तो भवतीत्यजादौ लसार्वधातुक इत्येष स्वरो न प्राप्नोति । अड्भावश्च : अड्भावश्च न सिध्यति । नेनिजति । परिवेविषतीति । अदभ्यस्तादित्यड्भावो न प्राप्नोति । नुम्प्रतिषेधश्च । नुम्प्रतिषेधश्च न सिध्यति । नेनिजत् । परिवेविषत् । नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधो न प्राप्नोति । जकारेण व्यवधानात् । शास्त्रहानिश्च । शास्त्रहानिश्च भवति । समुदायैकाचः शास्त्रं हीयते । सिद्धं तु तत्समुदायैकाच्त्वात् शास्त्राहानेः * । सिद्धमेतत् । कथम् । तत्समुदायैकाच्त्वात् । किमिदं तत्समुदायैकाच्त्वादिति । तस्य समुदायस्तत्समुदायः । एकाज्भाव एकाच्त्वम् । तत्समुदायस्यैकाच्त्व तत्समुदायैकाच्त्वं तत्समुदायस्यैकाच्त्वादिति । तत्समुदायैकाचो द्विर्वचनंभविष्यति । कुतएतत् शास्त्राहानेः, एवंहि शास्त्रमहीनं भवति । ननु च समुदयैकाचो द्विर्वचने क्रियमाणे अवयवैकाचः शास्त्रं हीयते । न हीयते । किं कारणम् । अवयवात्मकत्वात्समुदायस्य * । अवयवात्मकः सयुदायः । अभ्यन्तरो हि समुदाये अवयवः । तद्यथा । वृक्षः प्रचल-

---

र्झेरन्यस्य जुस्भावाद्यसिद्धिदोषस्याप्रसङ्गात् । स्वरइति । स्वरविधौ व्यञ्जनस्याविद्यमानत्वात् स्वरसिद्धिरिति चेन्न । हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्येव व्यवस्थापनात् । यत्परिवेविषतीति । यच्छब्दप्रयोगो निपातैर्यद्यदीति निघातप्रतिषेधार्थः । शास्त्रहानिश्चेति । एकस्मिन्नेकाच्यवयवे द्विरुच्यमाने पूर्वोक्तेन न्यायेनान्येषां तस्मिन्नेव प्रयोगे द्विर्वचनाभावात्तद्विषयं शास्त्रं त्यक्तं स्यात् । सिद्धं त्विति । समुदाये द्विरुच्यमानेऽवयवानामपि तत्रान्तर्भावाद्द्विर्वचनसंबन्धान्न कस्मिंश्चिच्छास्त्रहीनमित्यर्थः । नन्विति । शास्त्रेण साक्षात्समुदाय एवानुगृहीतः स्यात् न त्ववयवा इति प्रश्नः । न हीयत इति । यद्यपि समुदाये द्विरुच्यमाने साक्षादवयवेषु शास्त्रं न प्रवृत्तं तथापि शास्त्रीयफलसंयत्त्या शास्त्राहानिरुच्यते । अवयवे तु द्विरुच्यमाने तस्मिन् प्रयोगेऽवयवान्तराणां समुदा-

म्सन् सहावयवैः प्रचलति। तत्र बहुव्रीहिनिर्देशे अनचकस्य द्विर्वचन-मन्यपदार्थत्वात् *। तत्र बहुव्रीहिनिर्देशे अनच्कस्य द्विर्वचनं प्राप्नोति। आटतुः। आटुः। किं कारणम्। अन्यपदार्थत्वाद् बहुव्रीहेः अन्यपदार्थे बहुव्रीहिर्वर्तते। तेन यदन्यदचस्तस्य द्विर्वचनं स्यात्। तद्यथा। चित्रगुरानीयतामित्युक्ते यस्य गावः सन्ति स आनीयते न गावः। सिद्धं तु तद्गुणसंविज्ञानात्पाणिनेर्यथा लोके *। सिद्धमेतत्। कथम्। तद्गुणसंविज्ञानाद्भगवतः पाणिनेराचार्यस्य। यथा लोके, तद् यथा। लोके शुक्लवाससमानय लोहितोष्णीषा ऋत्विजः प्रचरन्तीति तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति। एवमिहापि। अथ यस्य द्विर्वचनमारभ्यते किं तस्य स्थाने भवति आहोस्विद् द्विष्प्रयोग इति। कश्चात्र विशेषः। स्थाने द्विर्वचने णिलोपवचनं समुदायादे-

---

शस्य च शास्त्रीयफलसंबन्धाभावाद्धीनमेव शास्त्रं स्यात्। अनच्कस्येति। एकस्य वा ऽनेकस्य वा हल एव द्विर्वचनप्रसङ्गः। तद्यथेति। चित्रगुशब्दस्यान्यपदार्थ एव वाच्यो न तु वर्त्तिपदार्थ इति न तस्य कार्येण सम्बन्धः। सिद्धं त्विति। तस्यान्यपदार्थस्य गुणो विशेषणं तस्य संनिज्ञानं स वर्त्तिपदार्थो गुणो वा यस्यान्यस्य पदार्थस्य तस्य संविज्ञानम्। संनिहितविशेषणस्यान्यपदार्थस्य विशिष्टसंबन्धाश्रयेण केन चिद्बहुव्रीहिणाभिधानादित्यर्थः। शुक्लवाससमिति। असत्यपि स्वस्वामिभावे वासः संयोगाश्रयो बहुव्रीहिरिति शुक्लवासः संयुक्तपुरुषानयने पृथगचोदितान्यपि वासांसि सामर्थ्यादानयनेन संबध्यन्ते। इह तु यः शुक्लवासा दृष्टस्तमानयेति दर्शनक्रियायां वासांस्युपलक्षणत्वेनोपात्तानि तया च तानि युक्तान्येव। दर्शनक्रिया त्वानयनक्रियोपलक्षणत्वेन निर्दिष्टेति नावश्यं तत्र शुक्लानां वाससा संविज्ञानम्। चित्रगुशब्दस्तु स्वस्वामिभावविशिष्टमन्यपदार्थमाहेति नास्त्यानयने वर्तिपदार्थसंनिधानम्। इह तु एकोच् यस्य स एकाजिति विशिष्टावयवोपलक्षितस्यावयविनोन्यपदार्थत्वादपरित्यागेनावयविनोभावात्तस्य कार्यं विधीयमानं तत्रान्तर्भावात्संनिहितो ऽवयव उपलक्षणभावेनाप्युपादीयमानः प्रतिपद्यते। अथ यस्येति। सोपस्कारत्वात् सूत्राणां तन्निबन्धनानि लक्ष्यसंस्कारकाणि वाक्यान्तराण्युपपद्यन्ते। तत्र द्वे इत्येतत् संख्येये वर्त्तते। तच्च संख्येयं शब्दानामन्वाख्येयत्वेन प्रस्तुतत्वाच्छब्दरूपं वा स्यात्तत्संबन्धि वोच्चारणम्। तत्र यदा शब्दरूपं संख्येयं तदैकाच इति स्थानेयोगा षष्ठी षष्ठीस्थानेयोगेति परिभाषोपस्थानात्तदा स्थाने द्विर्वचनमित्येष पक्षो भवति यथास्तेर्भूरिति। यदा तूच्चारणं संख्येयं तदा तस्य क्रियारूपत्वात् क्रियायाः शब्दस्य च स्थान्यादेशभावायोगादेकाच इति कर्मणि षष्ठी विज्ञायते उच्चारणशब्दाध्याहा-

शत्वात् *। स्थानिद्विवचने णिलोपो वक्तव्यः । आटिटत् । आशिशत् । किं कारणम् । समुदायादेशत्वात् । समुदायस्य समुदाय आदेशः । तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययसमुदायस्य नष्टो णिर्भवतीति णेरनिटीति णिलोपो न प्राप्नोति । इदमिह संप्रधार्यम् । द्विर्वचनं क्रियतां णिलोप इति । किमत्र कर्तव्यम् । परत्वाण्णिलोपः । नित्यं द्विर्वचनं कृतेपि णिलोपे प्राप्नोत्यकृतेपि । अनित्यं द्विर्वचनम् । अन्यस्य कृते लोपे प्राप्नोत्यन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । नित्यमेव द्विर्वचनम् । कथम् । रूपस्य स्थानिवत्त्वात् । यच्च सन्यङन्तस्य द्विर्वचने *। यच्च सन्यङन्तस्य द्विर्वचने चोद्यं तदिहापि योज्यम् ।। किं पुनस्तत् । सन्यङन्तस्येति चेदशः सन्यनिटः । दीर्घकुत्वे संप्रसारणषत्वमधिकस्य द्विर्वचनात् । आद्वद्गोऽभ्यस्तविधिप्रतिषेधः । सन्यङाश्रये च समुदायादेशत्वात् । अलाश्रये वा व्यपदेशाअसिद्धत्वादिति । अस्तु तर्हि द्विः प्रयोगो द्विर्वचनम् । द्विष्प्रयोगो द्विर्वचनमिति चेण्णत्वषत्वाकारणकारादेशादेरेत्ववचनं लिटि *। द्विष्प्रयोग इति चेण्णकारषकारादेशादेरेत्वं लिटि वक्तव्यम् । नेमतुः । नेमुः । सेहे । सेहाते । सेहिरे । अनादेशादेरिति प्रतिषेधः प्राप्नोति । स्थाने द्विर्वचने सति समुदायस्य समुदाय आदेशः । तत्र संप्रमुग्धत्वात्

---

रेण, शेषलक्षणा वा यथा मातुः स्मरतीति द्विः प्रयोगो द्विर्वचनमित्येष पक्षो भवति । तत्र गुणदोषपरीक्षार्थो विचारः क्रियते । आटिटदिति । प्राक् द्विर्वचनं भवति । द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य इति । अथ वा कृते यणि लोपे द्विर्वचनेचीति रूपस्थानिवद्भावात् कृताकृतप्रसङ्गित्वान्नित्यत्वाद् द्विर्वचनम् । तच्चैकस्य टिशब्दस्य शब्दान्तरं समुदायरूपमादेशस्तत्र णेरभावादिकारलोपाप्रसङ्गः । न च स्थानिवद्भावाण्णिग्रहणेनादेशस्य ग्रहणम् । नह्ययं णेरादेशः । किं तर्हि समुदायस्य टिशब्दस्य । यत्र च द्वौ स्थानित्वेन निर्दिष्टौ यथैकः पूर्वपरयोरिति । तत्रान्यतरेणादेशस्य व्यपदेशो भवति खट्वर्श्य इति । इह तु समुदाये णिरन्तर्भूतत्वाद्द्वादेशेन संबध्यते न तु साक्षादित्यविषयोयं स्थानिवद्भावस्य । अनित्यं द्विर्वचनमिति । द्विर्वचनेऽचीति कार्यस्थानिवद्भावं मन्यते । अशेः सन्यनिट इत्यादि सन्यङोरित्यत्र व्याख्यास्यते । नेमतुरिति । णीन , इति णत्वे कृते धातुरादेशादिर्भवति । ततो द्विष्प्रयोगेप्यादेशादित्वं न व्यावर्त्तते । स्थाने द्विर्वचने तु शब्दान्तरत्वादादेशादित्वाभावः । आदेशादिव्यपदेशस्य चाऽत्रालाश्रयत्वात् स्था-

प्रकृतिप्रत्ययस्य नष्टः स आदेशादिर्भवति। द्विष्प्रयोगे चापि द्विर्वचने सति न दोषः । वक्ष्यति तत्र लिड्ग्रहणस्य प्रयोजनम् । लिटि य आदेशादिस्तदादेर्नेति । इड्वचनं च यङ्लोपे॥ इड्भावश्च यङ्लोपे वक्तव्यः । बेभिदिता । बेभिदितुम् । एकाच उपदेशेनुदात्तादितीट्प्रतिषेधः प्राप्नोति । स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स भवति य एकाजुपदेशेनुदात्तः । द्विष्प्रयोगे चापि द्विर्वने न दोषः । एकाज्ग्रहणेनाङ्गं विशेषयिष्यामः । एकाचोङ्गादिति । ननु चैकैकमचाङ्गम् । समुदाये यावाक्यपरिसमाप्तिस्तयाङ्गसंज्ञा भविष्यति । कुत एतत् । शास्त्रहानेः। एवं हि शास्त्रमहीनं भवति। इड्दीर्घप्रतिषेधश्च। इटो दीर्घत्वस्य च प्रतिषेधो वक्तव्यः । जरीगृहिता । जरीगृहितुम्। ग्रहोलिटि दीर्घं इति दीर्घत्वं प्राप्नोति । स्थाने पुनर्द्विर्वचने समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टो ग्रहिः । द्विष्प्रयोगे चापि द्विर्वचने न दोषः । ग्रहिणाङ्गं विशेषयिष्यामः ग्रहेरङ्गादिति । ननु चैकैकमप्यचाङ्गम् । समुदाये या वाक्यपरिसमाप्तिस्तयाङ्गसंज्ञा भविष्यति । कुत एतत् । शास्त्राहानेः । एवं हि शास्त्रमहीनं भविष्यति। पदादिविधिप्रतिषेधश्च॥ पदादिलक्षणविधेः प्रतिषेधो वक्तव्यः । सिषेच। सुष्वाप । सात्पदाद्योरितिषत्वप्रतिषेधः प्राप्नोति। स्थानेपुन-

---

तत्वाभावः । लिटीति । सत्वनत्वयोरनैमित्तिकत्वान्निमित्तत्वाभावः । बेभिदितेति । बेभिद्यशब्दात्तृजल्लोपयलोपयोः कृतयोरिट्प्रतिषेधः प्राप्नोति । पूर्वस्मादपि विधौ स्थानिवद्भाव इत्यनाश्रित्य चोद्यप्रतिसमाधाने । एकाचोङ्गादिति । उपदेशग्रहणेनानुदात्त एव विशेष्यते न त्वेकाजिति भावः । आवृत्तिसंख्यया चैतद् द्व्यजङ्गं नैकाच् । ननु चैकैकमिति । एकमेव द्विरुच्यत इत्येकस्माद्यः प्रत्ययविधिः सोपरस्मादपीति द्वे अङ्गे भवतस्तत्र परं यदेकाजङ्गं तदाश्रय इट्प्रतिषेधः प्राप्नोतीत्यर्थः । आवृत्तिसंख्याश्रया चैकैकमिति वीप्सा । समुदाय इति । एकैवाङ्गसंज्ञा समुदायस्य न पृथगवयवयोः समुदायस्य प्राधान्यात् प्रधाने कार्यसंप्रत्ययात् समुदाय व्यवहारोप्यावृत्तिसंख्याश्रयः । जरीगृहितेति । जरीगृह्यशब्दात्तृच् । ग्रहिणाङ्गमिति । अत्र वचो जरीगृहीत्यङ्गं न तु ग्रहिः । विशेषणसामर्थ्याद्धि यथाश्रुतरूपाङ्गीकरणम् । सिषेचेति । सिचेर्लिड्विहित इति लिडन्तं पदमि-

द्विर्वचने सति दोषः। समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स पदादिर्भवति। द्विः प्रयोगे चापि द्विर्वचने न दोषः। सुप्तिङ्भ्यां पदं विशेषयिष्यामः। सुप्तिङन्तं पदम्। यस्मात् सुप्तिङ्विधिः तदादि सुबन्तं तिङन्तं च। ननु चैकैकस्मादप्यत्र सुप्तिङ्विधिः। समुदाये या वाक्यपरिसमाप्तिः तया पदसंज्ञा भविष्यति। कुत एतत्। शास्त्राहानेः। एवं हि शास्त्रमहीनं भवति। तावेव सुप्तिङौ यौ ततः परौ सैव प्रकृतिराद्या। आदिग्रहणं च कृतं समुदायपदत्वमेतेन॥

अजादेर्द्वितीयस्य॥ २॥ द्वितीयस्येत्यवचनमजादेरिति कर्मधारयात्पञ्चमी*। द्वितीयस्येति शक्यमवक्तुम्। कथम्। अजादेरिति नैषा बहुव्रीहिः षष्ठी। अज् आदिर्यस्य सोयमजादिः अजादेरिति। किं तर्हि। कर्मधारयात्पञ्चमी अच् आदिः अजादिः अजादे. परस्येति। तत्रान्तरेण द्वितीयग्रहणं द्वितीयस्यैव भविष्यति। तत्र द्वितीयद्विर्वचने प्रथमनिवृत्तिः प्राप्तत्वात् *। द्वितीयद्विर्वचने प्रथमस्य निवृत्तिर्व-

---

ति तदादेरेव पदत्वात्पदादिः सकार इति षत्वप्रतिषेधप्रसङ्गः। प्रकृतिप्रत्ययस्येति। प्रत्ययो ज्ञानम्। प्रकृतिविज्ञानस्येत्यर्थः। अथ वा प्रकृतेः प्रत्ययस्य चेत्यर्थः। तावेवेति। परिहारान्तरम्। उच्चारणक्रियाया एव द्वित्वं न तूच्चार्यमाणस्य शब्दस्य। ततश्चैकस्मादेव प्रत्ययविधिः। न तु द्वाभ्यामित्येकैवाङ्गसंज्ञा पदसंज्ञा चेति नास्ति दोषः। आदिग्रहणं चेति। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीत्यत्र। समुदायपदत्वमिति। सिषेचशब्दस्य पदसंज्ञा न तु सेचशब्दस्य तदवयवस्य। नन्वेवं बेभिदितेति स एवैकाज् धातुरितीट्प्रतिषेधः प्राप्नोति। नैष दोषः। उच्चारणभेदाद्विरोधिसंख्याप्रादुर्भावात् पूर्वसंख्याकृतव्यपदेशनिवर्तनात्। तथा च गिरिणेत्यादौ सावेकाच इति विभक्तेरुदात्तत्वं न भवति। तदत्रावृत्तिभेदाद्रूपद्वयमाश्रित्य समुदाये वाक्यपरिसमाप्तिरिति परिहार उक्तः। रूपभेदानङ्गीकरणे तु तावेव सुप्तिङाविति द्वितीयः परिहारः॥

अजादेः। द्वितीयस्येति शक्यमवक्तुमिति। अजादेरिति बहुव्रीहिपक्षे सामर्थ्यादप्रथमार्थे प्रारब्धे विज्ञायमाने तृतीयानामप्येकाचां द्विर्वचनप्रसङ्गाद् द्वितीयस्येति वक्तव्यम्। कर्मधारयपक्षे त्वजादेरिति पञ्चमीनिर्देशात्तस्मादित्युत्तरस्येति परिभाषो पस्थानादनन्तरस्यैव कार्येण भाव्यं न व्यवहितस्येति नार्थो द्वितीयग्रहणेन तत्र व्याख्यानात् स्वपदार्थप्रधानत्वात्तदन्तरङ्गत्वाद्वा कर्मधारय एवाश्रयितव्य इति भावः। प्राप्तत्वादिति। यः

क्त्वा। अटिटिषति। अशिशिषतीति। किं कारणम्। प्राप्तत्वात्। प्राप्नोत्यजादेर्द्वितीयस्यैकाचो द्विःप्रथमस्येति। ननु च द्वितीयद्विर्वचनं प्रथमद्विर्वचनं बाधिष्यते। कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्। असति खल्वपि संभवे बाधनं भवति। अस्ति च संभवो यदुभयं स्यात्। न वा प्रथमस्य विज्ञाने हि द्वितीया प्राप्तिरद्वितीयत्वात्*। न वा वक्तव्यम्। किं कारणम्। प्रथमविज्ञाने हि सति द्वितीयस्याप्राप्तिः स्यात्। किं कारणम्। अद्वितीयत्वात्। नह्रीदानीं प्रथमद्विर्वचने कृते द्वितीयो द्वितीयो भवति। कस्तर्हि। तृतीयः। तद्यथा। द्वयोरासीनयोस्तृतीय उपजायमाने न द्वितीयो द्वितीयो भवति। कस्तर्हि। तृतीयः। न हि किं चिदुच्यते अकृते द्विर्वचने यो द्वितीयस्तस्य भवितव्यमिति। किं तर्हि, कृते द्विर्वचने यो द्वितीयस्तस्य द्विर्वचनं भविष्यति। अनारम्भसमसेवं स्यात्। अटः प्रथमस्य द्विर्वचनं स्यात्। हलादिः शेषः। द्वितीयस्य द्विर्वचनम्। हलादिः शेषः। त्रयाणामकाराणां पररूपत्वे अटिषतीत्ये

---

ष्वपि सत्यामेव प्राप्तौ निवृत्तिरुच्यते नत्वसत्यां तथापि विशिष्टाप्राप्तिरिह हेतुत्वेन विवक्षिता प्राप्ते विघातकाभावादित्यर्थः। ननु चेति। येननाप्राप्तिन्यायात्। कथमन्यस्येति। विरोधाद्बाध्यबाधकभावं मन्यते। यथा काणेः। इह च विरोधाभावः। अविरोधे हि समुच्चयो दृश्यते। यथाकृत्कृत्यप्रत्ययसंज्ञानाम्। भिन्नफलत्वात् संज्ञानां समुच्चय इति चेदिहाप्यस्त्येव फलभेदः। एकेन प्रथमस्य द्विर्वचनविधानादजादेर्द्वितीयस्येत्यनेन तु द्वितीयस्य। नवेति। अनेनासंभवः प्रदर्श्यते। यस्य द्वितीयस्यैकाचो द्विर्वचनं विधेयम्। तस्य प्रथमद्विर्वचने कृते ऽद्वितीयत्वात् द्वितीयद्विर्वचनं न प्राप्नोतीत्यर्थः। ननु यदि नियोगतः प्राक् प्रथमद्विर्वचनं स्यात्ततोयं विरोधः स्याद् यदा तु पूर्वं द्वितीयद्विर्वचनं तदा विरोधाभावात् स्यादेव प्रथमद्विर्वचनम्। नैतदस्ति। नित्यत्वात्प्रायस्यात् क्रमव्यतिक्रमहेत्वभावात् पूर्वं प्रथमद्विर्वचनं तत्र कृते ऽद्वितीयत्वाद् द्वितीयद्विर्वचनाप्रसङ्ग इत्यनवकाशत्वाद् द्वितीयद्विर्वचनेन प्रथमद्विर्वचनं बाध्यते। तद्यथेति। यदा द्वयोः पुरस्तान्मध्ये वा तृतीय उपजायते तदायं दृष्टान्तो यदा तु परतः उपजायते तदा न भवति। नहि किं चिदिति। द्वितीयनिर्देशात्। विशेषानुपादानात्। सामर्थ्यादत्र विशेष आश्रीयत इति मत्वाह। अनारम्भसमामिति। अटि स इति स्थिते प्रथमद्विर्वचनमट् अट् हलादिः शेष इति टकारस्य निवृत्तिः। द्वितीयद्विर्वचनमट् अट्। ततो हलादिः शेषः। तत्र द्वयोस्त्रयाणां वा ऽकाराणां पररूपे विशेषाभावाद् द्वितीयद्विर्वचनमनर्थकं स्यादित्यर्थः। हलादि शेषो द्वितीयद्विर्वचनमित्ययं क्रमः कथं लभ्यते। विपरीतक्रमः कस्मान्न भवति। उच्यते। नि-

व रूपं स्यात्। नानारम्भसममटः प्रथमस्य द्विर्वचनम्। हलादिः शेषः। इत्वम्। द्वितीयस्य द्विर्वचनम्। हलादिः शेषः। इत्वम्। इयोरिकारयोः सवर्णदीर्घत्वम्। अभ्यासस्यासवर्णे इतीयङादेशः। ईयटिषतीत्येतद्रूपं यथा स्यात्। ओणेश्चोणोणिषतीति। नानिष्टार्था शास्त्रप्रवृत्तिर्भवितुमर्ह-

त्यत्वत्पूर्वं हलादिः शेषो भवति द्वितीयद्विर्वचनं तु शब्दान्तरप्राप्त्याऽनित्यम्। तस्मिं कृते हलादिःशेषेऽटः प्राप्नोति। अकृते तु टट्शब्दस्य। अन्तरङ्गत्वात्त्वतोगुणइति पररूपं मन्यत इतीत्वस्य बाधकं मन्यते। इत्वं हि सनमभ्यासं चापेक्षतइति बहिरङ्गम्। प्राग-भ्यासविकारेभ्योऽङ्गाधिकारइति पक्षे इत्वमाङ्गं न भवतीति वार्णादाङ्गं बलवदित्यपि नास्ति। सत्यपि वेत्वस्याङ्गत्वेनानाश्रयत्वादाङ्गवार्णयोरत्र परिभाषानुपस्थानमिति भावः। तस्मात्सामर्थ्यादकृते प्रथमद्विर्वचने यो द्वितीयस्तस्य द्विर्वचनेन भाव्यम्। स च प्रथमद्वि-र्वचने कृते द्वितीयो न भवतीति सामर्थ्यात्प्रथमद्विर्वचनं द्वितीयद्विर्वचनेन बाध्यते। कृतेपि प्रथमद्विर्वचने यो द्वितीयस्तस्य द्विर्वचनं नानर्थकमिति मत्वाह। नानारम्भसममिति। इत्वमिति। आसप्तमपरिसमाप्तेरङ्गाधिकारादाङ्गमित्वम्। सामान्येन च वार्णादाङ्गं बल-वादित्याश्रीयते न समानाश्रयाङ्गवार्णविषयमेवेति इत्वमेव प्रवर्तते न पररूपम्। तत्र कृते द्वितीयद्विर्वचनं प्राप्नोत्यभ्यासस्यासवर्णइतीयङादेशश्च। तत्र नित्यत्वाद्द्वितीयद्वि-र्वचनं प्राप्नोत्यभ्यासस्यासवर्णइतीयङादेशश्च। तत्र नित्यत्वाद्द्वितीयद्विर्वचनम्। इयङा-देशो ह्यनित्यः। कृते द्वितीयद्विर्वचने नित्यत्वादित्वे चासवर्णइति वचनादियङोऽप्रस-ङ्गात्। ननु परस्यकृतेपीत्वे तस्य स्थानिवद्भावात्पूर्वस्येयङ् प्राप्नोति। नैष दोषः। स-वर्णे न भवतीति प्रसज्यप्रतिषेध आश्रीयते। सवर्णे च यो विधिः स सवर्णस्य विधिर्भव-तीति सवर्णविधौ स्थानिवत्वप्रतिषेधादियङोऽप्रसङ्गात्। इयोरिकारयोरिति। अथ पर-स्येयङादेशः कस्मान्न भवति। अन्तरङ्गत्वात्पूर्वमेकादेशं मन्यते। एकादेशस्य त्वभ्यास-ह्रस्वत्वं विशेषाभावान्नोक्तम्। ईयटिषतीति। अस्यामपि प्रक्रियायां नास्ति द्वितीयद्विर्व-चने विशेषः। अकृतेपि तस्मिन्नेतद्रूपलाभात्। प्रथमद्विर्वचने कृते हलादिःशेषः इत्वमि-यङिति कार्यप्रवर्तनादत एवान्येषां ग्रन्थ इत्वं परस्येयङादेशो इयोरिकारयोः सवर्णदी-र्घता ईयटिषतीत्येतद्रूपं यथा स्यादिति युक्तं एवायं ग्रन्थो वार्णादाङ्गं बलवदिति परस्ये-कारस्येयङा भाव्यं न त्वेकादेशेन। तस्मिन् कृते एकादेशस्तस्य त्वन्तवद्भावाद्ध्रस्वत्वं न भवति। नाभ्यासादीनां ह्रस्वत्वइत्यन्तादिवद्भावप्रतिषेधात्। ओणेरेति। अत्रापिउ-वोणिषतीति पाठे न भाव्यम्। उवोणिषतीत्येतस्याकृते द्वितीयद्विर्वचने सिद्धत्वात्। ना-निष्टार्थेति। द्वितीयस्येति व्यक्तिराश्रीयते न जातिः। या चाकृते प्रथमद्विर्वचने द्वितीय-व्यक्तिः सा कृते तस्मिन् द्वितीया न भवतीति विरोधाद्द्वितीयद्विर्वचनेन प्रथमद्विर्वच-

ति। यथा वा द्विविकारेऽलोन्त्यविकाराभावः *। यथा वा आदिविधावलोन्त्यविधिर्न भवति। एवं द्वितीयद्विर्वचने प्रथमद्विर्वचनं न भविष्यति। विषम उपन्यासः। नाप्राप्तेऽलोन्त्यविधाने आदिविधिरारभ्यते स तस्य बाधको भविष्यति। इदमप्येवंजातीयकम्। नाप्राप्ते प्रथमद्विर्वचने द्वितीयद्विर्वचनमारभ्यते। तद्बाधकं भविष्यति। यदप्युच्यते असति खल्वपि संभवे बाधनं भविष्यति। अस्ति च संभवो यदुभयं स्यादिति। नैतदस्ति। सत्यपि संभवे बाधनं भवति। तद्यथा। दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि दधिदानस्य संभवे तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपि संभवे प्रथमद्विर्वचनस्य द्वितीयं द्विर्वचनं बाधिष्यते। तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनानिवृत्तिः *। तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिर्वक्तव्या। अटिटिषतीति। यथैवाचो निवृत्तिरेवं व्यञ्जनस्यापि प्राप्नोति। तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिरशासनात्पूर्वस्य *। तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिः सिद्धा। कुतः। अशासनात्पूर्वस्य। नेह वयं पूर्वस्य प्रतिषेधं शिष्मः। किं तर्हि। द्वितीयस्य द्विर्वचनमारभामहे। व्यञ्जनानि पुनर्नटभार्यावद्भवन्ति। तद्यथा। नटानां स्त्रियो रङ्गगता यो यः पृच्छति कस्य यूयं कस्य यूयमिति

---

नं बाध्यते। यथा वेति। भवतु द्वितीयस्येति जातिनिर्देशस्तथापि सामान्यविहितस्य विशेषविहितमसत्यपि विरोधे बाधकं भवति यथा दीर्घमित्यादावादेः परस्ये त्यादेर्विधीयमानमपीत्वमन्त्यस्य न भवत्येवमिहापि द्वितीयद्विर्वचनं विधीयमानं प्रथमस्य न भवति। ननु चाप इत्येका षष्ठ्यादेः परस्येत्यादिमलमनुसंह्रतेति कुतोऽलोन्त्यस्य प्रसङ्गः। इह तु प्रथमस्येति द्वितीयस्येति च षष्ठीद्वयसंभवादुभयोः प्रसङ्गः। नैतदस्ति। अप इत्येकापि षष्ठी वचनद्वयप्रामाण्याद्यन्तावुपसंक्रियेत। अप आद्यन्तयोरीत्वं भवतीति। एकस्माद्धि ग्रहणकवाक्याल्लक्ष्यसंस्कारकमनेकं प्रक्रियावाक्यमुपप्लवते। यथैवाचो निवृत्तिरिति। यथाभूतस्य प्रथमैकाचो द्विर्वचनं प्राप्तं तथाभूतस्य द्वितीयद्विर्वचनेन बाध्यं सव्यञ्जनस्य च प्राप्तमिति व्यञ्जनानामपि द्विर्वचनबाधप्रसङ्ग इत्यर्थः। अशासनात् पूर्वस्येति। अप्राप्यमानं बाधो नहि प्रमाणेन प्राप्तं बाधितुं शक्यते प्रमाणत्वाविशेषात् तस्मादजादिधातुद्वितीयद्विर्वचनविषये प्रथमद्विर्वचनं न विहितं न प्रतिषिद्धम्। नटभार्यावच्च व्यञ्जनानि भवन्तीति द्वितीयैकाजन्तर्भावात्तानि द्विरुच्यन्त इत्यर्थः। न्यायसिद्धेयं लिङ्गदर्शन-

तं तं तव तवेत्याहुः। एवं व्यञ्जनान्यपि यस्य यस्याचः कार्यमुच्यते तं तं भजन्ते। न्द्रादिप्रतिषेधाच्च*। यदयं नन्द्राः संयोगादय इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः पूर्वं निवृत्तौ व्यञ्जनस्यानिवृत्तिरिति। तत्र द्वितीयाभावे प्रथमद्विर्वचनं प्रतिषिद्धत्वात् *। तत्र द्वितीयस्यैकाचो ऽभावे प्रथमस्य द्विर्वचनं न प्राप्नोति। आटतुः। आटुः। किं कारणम्। प्रतिषिद्धत्वात्। अजादेर्द्वितीयस्येति प्रतिषेधात्। नैष दोषः। सति तस्मिन् प्रतिषेधः *। सति द्वितीयस्य द्विर्वचने प्रथमस्य प्रतिषेधः सति तस्मिन् प्रतिषेध इति चेद्धलादिः शेषे दोषः*। सति तस्मिन् प्रतिषेध इति चेद्धलादिः शेषे दोषो भवति। हलादिः शेष सत्यादौ हल्यनाद्यस्य हलो लोपः स्यात्। इहैव स्यात् पपाच पपाठेति। इह न स्यात्। आटतुः। आटुरिति। लोकवद्धलादिः शेषे *। लोकवद्धलादिः शेषे सिद्धम्। तद्यथा। लोके ईश्वर आज्ञापयति ग्रामाद्ग्रामान्मनुष्या आनीयन्तां प्रागाङ्गं ग्रामेभ्यो ब्राह्मणा आनीयन्तामिति येषु तत्र ग्रामेषु ब्राह्मणा न सन्ति न तर्हीदानीं ततोऽस्यानयनं भवति। यथा तत्र क्व चिदपि ब्राह्मणस्य सत्ता ऽत्रा-

---

माह। न्द्रादिप्रतिषेधाच्चेति। न्द्राश्च ते आदयस्तेषां द्विर्वचनप्रतिषेधादन्यानि द्वितीयेनाचा सह द्विरुच्यन्ते। तत्र द्वितीयाभाव इति। इहाजादेरित्यजादिसामान्यनिर्देशात्तत्र द्वितीयद्विर्वचनमारभ्यमाणं प्रथमद्विर्वचनस्य बाधकमिति यस्यामप्यजादिव्यक्तौ द्वितीयाभावाद् द्वितीयद्विर्वचनाभावस्तस्यामपि प्रथमद्विर्वचनाप्रसङ्गः। अटिटिषतीत्यादावजाद्याकृतौ विधीयमानं द्वितीयद्विर्वचनमाटतुरित्यादावपि प्रथमद्विर्वचनं बाधतेत्यर्थः। अप्राप्तिरेवात्र प्रतिषेधत्वेन विवक्षिता। सति तस्मिन्निति। अजादेरिति व्यक्तिनिर्देशो नाकृतिनिर्देशः। अतो नायमपवादो ऽजादिमात्रनिबन्धनो द्वितीयस्यैकाचः संभवमभिसमीक्ष्य प्रवर्तते। यत्रेदानीं द्वितीयो नास्ति तत्रानुपजातनिमित्तो ऽपवाद एवं न प्रवर्तत इति प्रथमैकाचो द्विर्वचनमुत्सर्गः प्रवर्तत एव तेन यस्यामेवाजादिव्यक्तौ द्वितीयद्विर्वचनं प्रवर्तते तस्यामेव प्रथमद्विर्वचनं बाध्यते नान्यस्यामित्यर्थः। जात्युपलक्षिता व्यक्तिः प्राधान्येनाश्रीयते न तु जातिः। तेन सर्वस्यामेवाजादिव्यक्तौ द्वितीयवत्यामिदं शास्त्रं प्रवर्तते। व्यक्तिपदार्थाश्रयणे दोषमाह। सति तस्मिन्निति। लोकवदिति। आकृतिपदार्थस्तत्राश्रीयत इति भावः। प्रागाङ्गमिति। यथा ग्रामाकृतेराश्रयणात् क्व चिदपि ग्रामे वर्तमानो ब्राह्मणो मनुष्यान्तरानयनं निवर्तयति तथाभ्यासजातेराश्रयणात् क्व चिदभ्या-

द्वयस्य निवर्तिका भवति। एवमिहापि क्व चिदपि हलादिः सन् सर्वस्यानाद्यस्य हलो निवर्तको भवति। क्व चिदन्यत्र लोप इति चेद्द्विर्वचनम् *। क्व चिदन्यत्र लोप इति चेद् द्विर्वचनमप्येवं प्राप्नोति। क्व चिदपि द्वितीयः सन् सर्वस्य प्रथमस्य निवर्तकः स्यात्। तस्मादस्तु सति तस्मिन् प्रतिषेध इत्येव। ननु चोक्तं सति तस्मिन् प्रतिषेध इति चेद्धलादिः शेषे दोष इति। प्रतिविधास्यते हलादिः शेषे॥

नन्द्राः संयोगादयः ॥३॥ किमर्थमिदमुच्यते। न्द्रादेर्द्विर्वचनप्रसङ्गस्तत्र न्द्राणां प्रतिषेधः*। न्द्रादेरेकाचो द्विर्वचनं प्राप्नोति। तत्र न्द्राणां संयोगादीनां प्रतिषेध उच्यते। ईर्ष्यतेस्तृतीयस्य द्वे भवतः*। ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम्। के चिदाहुः। एकाच इति। ईर्ष्यिषिषति। अपर आह। व्यञ्जनस्येति। ईर्ष्यियिषति। कण्ड्वादीनां च *। कण्ड्वादीनां च तृतीयस्य द्वे भवत इति वक्तव्यम्। कण्डूयियिषति। असूयियिषति। वा नामधातूनां तृतीयस्य द्वे भवत इति वक्तव्यम्। अश्वयियिषति। अशिश्वीयिषति। अपर आह। यथेष्टं वा। यथेष्टं वा नामधातूनामिति। पुपुत्रीयिषति। पुत्त्रीयिषति। पुत्रीयियिषति॥

पूर्वोऽभ्यासः ॥ ४ ॥ पूर्वोऽभ्यास इत्युच्यते। कस्य पूर्वोऽभ्याससंज्ञो भवति। द्वे इति वर्तते। द्वयोरिति वक्तव्यम्। स तर्हि तथानिर्देशः कर्तव्यः। न कर्तव्यः। अर्थाद्विभक्तिविपरिणामो भविष्यति। तद्यथा। उच्चानि देवदत्तस्य गृहाणि। आमन्त्रयस्वैनम्। देवदत्तमिति गम्यते। देवदत्तस्य गावोऽश्वा हिरण्यं च आढ्यो वैधवेयः। देवदत्त इति गम्यते पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति। एवमिहापि पुरस्तात् प्रथमानिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति॥

---

शे वर्तमानो हलादिः सर्वत्रानादेर्हलो निवृत्तिं करोतीत्यर्थः। तस्मादस्त्विति। इह व्यक्तिपक्ष आश्रीयते। हलादिः शेषे तु जातिपक्षः। व्यक्तिपक्षेऽपि वा प्रतिविधास्यते अङ्गलभ्यासो भवति तत आदिः शेष इति॥

नन्द्राः। किमर्थमिति। पूर्वस्याचो व्यञ्जनानीति पूर्वपक्षोनटभार्यावत् व्यञ्जनानीत्युत्तरः पक्षः।

पूर्वोऽभ्यासः। कस्य पूर्व इति। अवध्यवधिमत्संबन्धे दिग्योगलक्षणा पञ्चमी भवति। यथा ग्रामात्पूर्व इति। इह त्ववयवावयविसंबन्धो विवक्षितः कस्य पूर्वोऽवयव इति षष्ठ स्यभावो यथा पूर्वं कायस्येति। विपरिणाम इति। पूर्वविभक्त्यारीन सामर्थ्याद्विभक्त्यन्तरस्योह इत्यर्थः व

उभे अभ्यस्तम् ॥ ५ ॥ अभ्यस्तसंज्ञायां सहग्रहणं कर्तव्यम् *। उभे अभ्यस्तं सहेति वक्तव्यम् । किं प्रयोजनम् । आद्युदात्तत्वे पृथगप्रसङ्गार्थम् * । आद्युदात्तत्वं सहभूतयोर्यथा स्यादेकैकस्य मा भूदिति । यस्मिन्नेवाभ्यस्तकार्ये ऽदोषस्तदेव पठितम् । अनुदात्तं पदमेकवर्जमिति । नास्ति यौगपद्येन संभवः । पर्यायस्तर्हि प्रसज्येत । पर्यायश्च, तावत्पूर्वस्य परेण रूपेण व्यवहितत्वान्न भविष्यति । परस्य तर्हि स्यात् । तत्राचार्यप्रवृत्तिर्ज्ञापयति न परस्य भवतीति । यदयं विभेत्यादीनां पिति प्रत्ययात्पूर्वमुदात्तं भवतीत्याह । एवं व्यवधानान्न पूर्वस्य ज्ञापकान्न परस्य । उच्यते चेदमभ्यस्तानामादिरुदात्तो भवतीति । तत्र स एव दोषः । पर्यायः प्रसज्येत । तस्मात् सहग्रहणं कर्तव्यम् । न कर्तव्यम् । उभेग्रहणं क्रियते तत्सहार्थं विज्ञास्यते । अस्त्यन्यदुभेग्रहणस्य प्रयोजनम् । किम् । उभेग्रहणं संज्ञिनिर्देशार्थम्*। अन्तरेणाप्युभेग्रहणं प्रकृतः संज्ञिनिर्देशः । कथम् । द्वे इति वर्तते । इदं तर्हि प्रयोजनम् । किम् । यत्रोभे शब्दरूपे श्रूयेते । तत्राभ्यस्तसंज्ञा यथा स्यादिह मा भूत् ईर्त्सन्ति ईप्सन्तीति ।

---

उभे । सहग्रहणमिति । सहभूतयोः परस्परापेक्षयोरेकाभ्यस्तसंज्ञा यथा स्यादित्येवमर्थं सहेति कर्तव्यम् । आद्युदात्तत्वइति । यस्यानुदात्ते क्रियमाणे उदात्तस्वरितविधानमनर्थकमापद्यते । सवर्ज्य इति व्याख्याने प्रधानवाचिन्येकशब्दे यौगपद्यप्रसङ्गः । एकवर्जमिति । संख्यावचने तु विरोधाद्यौगपद्यासंभवात्पर्यायप्रसङ्गः । उभेग्रहणमिति । सहभावोपसर्जनद्वित्वमुभशब्दस्यार्थ इति भावः । द्वे इत्यनुवृत्त्याद्विरुक्तस्याभ्यस्तसंज्ञायां लब्धायामुभेग्रहणं सहभूतयोरकाभ्यस्तसंज्ञार्थम् । ईर्त्सन्तीति । कृते द्विर्वचने ऽकृतएवाभ्यासलोपे ऽन्तरङ्गत्वादुभयोः प्रत्येकं प्रवृत्ताभ्यस्तसंज्ञा कृतेऽभ्यासलोपे परस्य न निवर्तेत उभेग्रहणात्तु निरस्यतइति भावः । ऋध आपश्च सन् । सनीवन्तर्धेतीडभावपक्षे द्विवचनात्परत्वात् प्रतिपदविधेर्बलवत्त्वादाप्ज्ञप्यृधामीदितीत्वं रपरत्वं च । नन्द्राः संयोगादय इति रेफस्य द्विर्वचनप्रतिषेधः । पूर्वत्रासिद्धीयमद्विर्वचनइति वचनाद् धकारस्य चर्त्वेन तकारे कृते त्सइत्यस्य द्विर्वचनम् । अन्येत्वाहुः । अभ्यासलोपसंनियोगेनेत्वमुच्यमानं द्विर्वचनं प्रतीक्षतइति प्राग्द्विर्वचनम् । तच्च यदा पूर्वत्रासिद्धीयमद्विर्वचनइत्येतदुभौ साभ्यासस्येति सूत्रारम्भादनित्यत्वाद् नाश्रीयते तदा धृसित्यस्य तदाश्रयणे तु त्सइत्यस्य । तत ईत्वाभ्यासलोपौ । ईतर्घ ईप्स इति स्थिते । लेट् झिः । अडागमश्च प्राप्नोति अपूच । क्ष

ईत्संन् इप्सन्। ऐत्संन्। ऐप्सन्। किं च स्यात्। अड्भावो नुम्प्रतिषेधो जुस्भाव इत्येते विधयः प्रसज्येरन्। अड्भावे तावन्न दोषः। सप्तमे योगविभागः करिष्यते। इदमस्त्यदभ्यस्तादिति। तत आत्मनेपदेषु। तत आत्मने पदेषु चाड्भवति। अनत इत्युभयोः शेषः। यदप्युच्यते नुम्प्रतिषेधं इति। एकादेशे कृते व्यपवर्गाभावान्न भविष्यति। इदमिह संप्रधार्यं नुम्प्रतिषेधः क्रियतामेकादेश इति। किमत्र कर्त्तव्यम्। परत्वान्नुम्प्रतिषेधः। नित्य एकादेशः कृतेपि नुम्प्रतिषेधे प्राप्नोत्यकृतेपि। एकादेशोप्यनित्यः। अन्यस्य कृते नुम्प्रतिषेधे प्राप्नोति। अन्यस्याकृते। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। अन्तरङ्गस्तर्ह्येकादेशः। कान्तरङ्गता। वर्णावाश्रित्यैकादेशः। विधिविषये नुम्प्रतिषेधः। विधिश्च नुमः सर्वनामस्थाने। प्राक्तु सर्वनामस्थनोत्पत्तेरेकादेशस्तच नित्यत्वाच्चान्तरङ्गत्वाच्चैकादेशः। एकादेशे कृते व्यपवर्गाभावान्नुम्प्रतिषेधो न भविष्यति। यदप्युच्यते जुस्भाव इति। एकादेशे कृते व्यपवर्गाभावान्न भविष्यति। एकादेश इत्युच्यते। केन चाचैकादेशः। अन्तिना। नाचान्तिभावः प्राप्नोति। किं कारणम्। जुस्भावेन बाध्यते। नात्र जुस्भावः प्राप्नोति। किं कारणम्। शपा व्यवहितत्वात्। एकादेशे कृते नास्ति व्यवधानम्। किं पुनः कारणम्। निमित्तवानन्तिरेकादेशं तावत्प्रती-

---

ताकृतप्रसङ्गित्वान्नित्यत्वाच्छप्। अड्भावस्तु शपि कृते तेन व्यवधानान्न प्राप्नोतीत्यनित्यः। ततो झोन्त इत्यन्तादेशस्य प्राप्नोति पूर्वेण सह शप एकादेशस्य। तत्र वर्णाश्रयत्वादन्तरङ्गत्वादेकादेशस्ततो ऽड्भावः प्राप्नोति। अथवा शपः प्रागेव परत्वादड्भावः प्राप्नोति। सोपि हि नित्यः। शप एकादेशे कृते त्सवड्भावात्तस्य प्रसङ्गात्। ईत्संन्निति। झतार कृते शपश्च प्राप्नोत्येकादेशस्य। तत्र वर्णाश्रयत्वादन्तरङ्गत्वादेकादेशे कृते धातुसार्वधातुकयोर्व्यपवर्गाभावाच्छपो ऽप्राप्तिः। तत्र सार्वधातुकमात्रापेक्षत्वाच्छबेवान्तरङ्गत्वात्पूर्वं भवति। तत्र शब्दपरविप्रतिषेधात्परयोरकारयोः पूर्वमेकादेशस्ततः पूर्वेणेति प्रक्रियाश्रयः सिद्धान्तो भविष्यति। पूर्वपक्षे तु पूर्वयोरकारयोरेकादेशे कृते नुम्प्रतिषेधप्रसङ्गश्चोद्यते। ऐत्संन्निति। ईत्संलङ् झिः शप्। अकारयोः पररूपएकादेशे कृते तस्यान्तवड्भावाज्जुस् प्राप्नोति। अन्यस्याकृतइति। मितः पूर्वभक्तत्वान्नुमि कृते शब्दान्तरत्वम्। निमित्तवानिति। अन्तादेशे प्राक् कृते एकादेशे च व्यपवर्गाभावाज्जुसो ऽप्रसङ्गः। पूर्वं ह्येति। उत्सर्गाणां विषया-

च्यते न पुनस्तावत्येव निमित्तमस्तीत्यन्तिभावेन भवितव्यम् । इहा-पि तर्हि तावत्येव निमित्तमस्तीत्यन्तिभावः स्यात् । अनेनिजुः । प-र्यवेविषुः । अस्तु अन्तिभावे कृते स्थानिवद्भावाज् झिग्रहणेन ग्रहणाज्जु-स्भावो भविष्यति । अथ वा यद्यपि निमित्तवानन्तिरयं तस्य जुस्भा वो ऽपवादः । न चापवादविषये उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवा-दा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयमुत्सर्गः प्र-वर्तते । तत्तावदत्र न कदा चिदप्यन्तिभावो भवति । अपवादं जुस्-भावं प्रतीक्षते । न खल्वपि क्व चिदभ्यस्तानां झेश्चानन्तर्यं सर्वत्र वि-करणैर्व्यवधानं तेनावश्यं विकरणनाशः प्रतीक्ष्यः । क्वचिल्लुका क्वचि-त् श्लुना क्व चिदेकादेशेन । स यथैव श्लुलुकौ प्रतीक्षते यथैकादेश-मपि । एवं तर्हीदमिह व्यपदेश्यं सद् आचार्यो न व्यपदिशति । कि-म् । स्थानिवद्भावम् । स्थानिवद्भावाद्व्यवधानम् । व्यवधानान्न भवि-ष्यति । पूर्वविधौ स्थानिवद्भावः । न चायं पूर्वस्य विधिः । पूर्वस्माद-पि विधिः । तदेतदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते । क-थं चैकैकस्याप्यभ्यस्तसंज्ञा प्राप्नोति । प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति तद्यथा । प्रत्येकं वृद्धिगुणसंज्ञे भवतः । ननु चायमप्यस्ति दृष्टान्तः स-मुदाये वाक्यपरिसमाप्तिरिति । तद्यथा । गर्गाः शतं दण्ड्यन्तामि-ति । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते तत्र यदि प्रत्येकमित्युच्यते । इहापि सहग्रहणं कर्तव्यम् । अथ तत्रान्तरेण प्रत्येकमिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः । इहापि नार्थः सहग्रहणेन ॥

जक्षित्यादयः षट् ॥६॥ जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम् *। जक्षित्यादिषु सप्तग्रहणं कर्तव्यम् । सप्त जक्षित्यादयोऽभ्यस्तसंज्ञा भ-वन्तीति वक्तव्यम् । किं प्रयोजनम् । वेवीत्यर्थम् । वेवीतेरभ्यस्तसंज्ञा

---

न्तरस्यापि संभवादपवादविवर्जिते विषये प्रवृत्तेर्न्याय्यत्वात् । प्रकल्प्य चेति । यथा न सं-प्रसारणमितिवचनात्परस्य यणः पूर्वं संप्रसारणं प्रवर्तते । पूर्वस्य तु तन्निमित्तः प्रतिषेधः । यदि तु परस्य यणः पूर्वं न प्रवर्तेत तदा पूर्वस्यापि प्रतिषेधो न स्यात् ॥

जक्षित्या । जक्षितिरादिर्येषामन्ते जक्षित्यादय इत्याशयेनाह । जक्षित्यादिष्विति ।

यथा स्यात्। वेव्यते। अभ्यस्तानामादिरित्याद्युदात्तत्वं भवति। अपरिगणनं वा गणान्तत्वात्*। न वार्थः परिगणनेन अस्त्वागणान्तमभ्यस्तसंज्ञा। इहापि तर्हि प्राप्नोति। आङः शासु। अस्तु। अभ्यस्तकार्याणि कस्मान्न भवन्ति। भूयिष्ठानि कार्याणि परस्मैपदेषु। आत्मनेपदी चायम्। स्वरस्तर्हि प्राप्नोति। यच्चाप्यस्यात्मनेपदेष्वभ्यस्तकार्यं स्वरस्तच्चाप्यस्यानुदात्तेतः परं लसार्वधातुकमनुदात्तं भवतीत्यनुदात्तत्वे कृते नास्ति विशेषो धातुस्वरेणोदात्तत्वे सत्यभ्यस्तस्वरेण वा। षसि वशी छान्दसौ। दृष्टानुविधयश्छन्दसि भवन्ति चर्करीतमभ्यस्तसंज्ञमेव। ह्नुङस्तर्हि प्राप्नोति। अस्तु। अभ्यस्तकार्याणि कस्मान्न भवन्ति। भूयिष्ठानि परस्मैपदेषु। आत्मनेपदी चायम्। स्वरस्तर्हि प्राप्नोति। अह्निविङोरिति प्रतिषेधविधानसामर्थ्यात्स्वरो न भविष्यति। अथ वा सप्तैवेमे धातवः पठ्यन्तेजक्ष् अभ्यस्तसंज्ञो भवति। इत्यादयश्च षट्, जक्षित्यादयः षडिति॥

---

वेव्यतइति। अभ्यस्तानामादिरित्युदात्तत्वं भवति। अन्यथा धातुस्वरे ङित्वाल्लसार्वधातुकानुदात्तत्वे यणादेशे च कृतउदात्तस्वरितयोर्यणइति स्वरितत्वं प्रसज्येत। आङः शास्विति। वेवीङोनन्तरमयं कैश्चित्पठ्यत इति भावः। भूयिष्ठानीति। बहुतराणीत्यर्थः। षसिवशी इति। षसशस्तिस्वप्नइति ये न पठन्ति केवलं षस स्वप्ने वश कान्ताविति तन्मतेनैतदुक्तम्। अन्ये त्वाहुः। शास्तीति धातुपाठ एव शासः श्तिपानिर्देशः कृतोऽर्थभेदात्तु द्विः पठ्यते। अन्ये तु। षस स्वप्नइति न पठन्ति। वशेर्भाषायां वार्तिककारमतेन प्रयोगः साधुः। चर्करीतमिति। यङ्लुगन्तस्य पूर्वाचार्यसंज्ञा। अह्निविङोरिति। यदि ह्नुङोभ्यस्तसंज्ञा स्यात् न्हुवाते ह्नुवतइत्यादौ कृतेभ्यस्तस्वरे लसार्वधातुकस्य भवितव्यमेव निघातेनेति प्रतिषेधोनर्थकः स्यात्। तस्मात्प्रतिषेधसामर्थ्यात् प्रत्ययस्वर एव भवति नाभ्यस्तस्वरः। नन्वसति प्रयोजने ज्ञापकम्। अस्ति च प्रतिषेधस्य प्रयोजनं हुते हुष इत्यादावनुदात्तत्वं मा भूत् प्रत्ययस्वर एव यथा स्यात्। अत्र ह्यभ्यस्तानामादिरिति न प्रवर्तते। अजादौ तस्य विधानात्। तत्रासति प्रतिषेधे अनुदात्ते चेत्याद्युदात्तं पदं स्यात् सति तु प्रतिषेधेन्तोदात्तं भवतीति ज्ञापकत्वं नोपपद्यते। एवं तर्ह्यभ्यस्तानामादिरित्यचाह्निविङोरित्यनुवृत्त्या प्रतिषेधसामर्थ्यादित्यर्थोभिप्रेतः। अथ वेति। नायं श्तिपा निर्देशः किं तर्हि जक्षिति पृथक् पदम्। इत्यादय इत्यत्र इतिशब्देन जक्षितिः परामृश्यते। आदिशब्दश्च समीपवाची। तेन तत्समीपाः षडभ्यस्तसंज्ञा इति सप्तानामेवाभ्यस्तसंज्ञा सूत्रेण संगृहीते त्यर्थः।

तुजादीनांदीर्घोऽभ्यासस्य ॥ ७ ॥ तुजादिषु छन्दः प्रत्ययग्रहणम् * । तुजादिषु छन्दः प्रत्ययग्रहणं कर्तव्यम् । छन्दसि तुजादीनां दीर्घो भवतीति वक्तव्यम् । प्रत्ययग्रहणं च कर्तव्यम् । अस्मिंश्च प्रत्यय इति वक्तव्यम् । इह मा भूत् । तुतोज शबलान् हरीन् । अनारम्भो वाऽपरिगणितत्वात् * । अनारम्भो वा छन्दसि दीर्घत्वस्य न्याय्यः । कुतः । अपरिगणितत्वात् । नहि छन्दसि दीर्घत्वस्य परिगणनं कर्तुं शक्यम् । किं कारणम् । अन्येषां च दर्शनात् । येषामपि दीर्घत्वं नारभ्यते तेषामपि छन्दसि दीर्घत्वं दृश्यते । तद्यथा । पूरुषो नारक इति । अनेकान्तत्वाच्च * । येषां चाप्यारभ्यते तेषामप्यनेकान्तः । यस्मिन्नेव च प्रत्यये दीर्घत्वं दृश्यते तस्मिन्नेव च प्रत्यये न दृश्यते । मामहान उक्थपात्रम् । ममहान इति च ॥

लिटि धातोरनभ्यासस्य ॥ ८ ॥ धातोरिति किमर्थम् । ईहांचक्रे । नैतदस्ति । लिटीत्युच्यते । न चात्र लिटं पश्यामः । प्रत्ययलक्षणेन । न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः । इदं तर्हि सस्वांसो विश्टृण्विरे । लिटि द्विर्वचने जागर्तेर्वेति वक्तव्यम् । यो जागार तमृचः कामयन्ते । यो जजागार तमृचः कामयन्ते । अनभ्यासस्येति किम् । क्षणो नोनाव वृषभो यदीदम् । नोनूयतेर्नोनाव । अभ्यासप्रतिषेधानर्थक्यं च छन्दसि वावचनात् * । अभ्यासप्रतिषेधश्चानर्थकः । किं कारणम् । छन्दसि वावचनात् । अवश्यं छन्दसि वा द्वे भवत इति वक्तव्यम् । किं प्रयोजनम् । प्रयोजनमादित्यान्याचिषामहे । यियाचिषामह इति प्राप्ते । देवता नोदातिप्रियाणि । ददातिप्रियाणि । मघवादातु । मघवाददातु । नस्तुतो वीरवद्धातु । वीरवद्दधातु । यावतेदानीं छन्दसि वा द्वे भवत इत्युच्यते । धातुग्रहणेनापि नार्थः । कस्मान्न भवति सस्वांसो विश्टृण्विरइति छन्दसि वावचनात् । तदेतद्धातुग्रहणं सान्यासिकं तिष्ठतु तावत् ॥

---

लिटि धातोः । अभ्यासप्रतिषेधानर्थक्यमिति । जुगुप्सिषते लोलूयिषतइत्यादौ सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्पुनः प्रवृत्त्यभावादुत्तरार्थोऽप्यभ्यासप्रतिषेधो न कर्तव्यः । चङीत्येतदर्थस्तु कर्तव्य एव । यदा सन्यङन्तास्णिचि कृते चङ् भवति अजुगुप्सदलोलूयदिति तदा द्विर्वचनं मा भूदिति चिन्त्यमेतत् ॥

सन्यङोः॥ ९ ॥ किमियं षष्ठी आहोस्वित्सप्तमी। कुतः सन्देहः। समानो निर्देशः। किं चातः। यदि षष्ठी, सन्यङन्तस्य द्विर्वचनेन भवितव्यम्। अथ सप्तमी, सन्यङोः परतः पूर्वस्य द्विर्वचनेन भवितव्यम्। कश्चात्र विशेषः। सन्यङोः परत इति चेदिटो द्विर्वचनं परादित्वात् *। सन्यङोः परत इति चेदिटो द्विर्वचनं कर्तव्यम्। अटिटिषति। अशिशिषति। किं पुनः कारणं न सिध्यति। परादित्वात्। इट् परादिः। इन्लेष्वेटो द्विर्वचनं कर्तव्यम्। जेघ्नीयते। ननु च यस्यापि सन्यङन्तस्य द्विर्वचनं तस्यापि स्थानिवद्भावप्रसङ्गः। ईटि स्थानिवद्भावादीटो द्विर्वचनं न प्राप्नोति। नैष दोषः। द्विर्वचननिमित्ते ऽचि स्थानिवदित्युच्यते न चासौ द्विर्वचननिमित्तम्। यस्मिन्नपि द्विर्वचनं यस्यापि द्विर्वचनं सर्वोसौ द्विर्वचननिमित्तम्। तस्मादीटो द्विर्वचनम् *। तस्मादुभाभ्यामेव ईटो द्विर्वचनं कर्तव्यम्। यस्मीभयोर्दोषो न तसेकस्योद्यो भवति। एकाच उपदेशे ऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधः *। एकाच उपदेशे ऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधो वक्तव्यः। बिभित्सति। चिच्छित्सति। द्विर्वचने कृते उपदेशेनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति। अस्तु तर्हि सन्यङन्तस्य सन्यङन्तस्येति चेदशः सन्यनिटः। सन्यङन्तस्येति चेदशः सन्यनिटो द्विर्वचनं वक्तव्यम्। इयक्षमाणा भृगुभिः। सजोषा। यस्यापि स-

---

सन्यङोः। किमियं षष्ठीति। विभक्तिविचारद्वारेण तदर्थो विचार्यते। किं चात इति। अर्थभेदप्रश्नः। सन्यङन्तस्येति। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्येति षष्ठीपक्षे तदन्तविधिः। सप्तमीपक्षे तु तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्धातोरित्यधिकाराच्च पूर्वस्य धातोः कार्यभाक्त्वम्। कश्चात्र विशेष इति। लक्ष्यगतविशेषप्रश्नः। इन्लेष्वेति। गमहनेत्युपधालोपस्य स्थानिवद्भावाद्धन एव द्विर्वचनप्रसङ्गः। यस्यापीति। सति तस्मिन् कार्यभावादस्त्येव निमित्तत्वमिति भावः। यद्यपि रूपस्थानिवद्भावादीटो न भवति द्विर्वचनं तथापि प्राप्तिमात्राश्रयेण द्विर्वचननिमित्तत्वमीकारस्योच्यते। अनुदात्तविशेषणं चेदिति। यदा तूभयविशेषणं तदा न दोषः। उपदेशएकाच्त्वात् सन्नन्तस्यापि द्विष्प्रयोगे द्विर्वचने दोष एव। स्थाने द्विर्वचने तु प्रकृतिप्रत्ययस्य संप्रमुग्धत्वादिटः प्राप्तिरेव नास्तीति न दोषः। इयक्षमाणा इति। यजेतेः सन्। स्मिपूङ्रञ्ज्व-

न्यङोः परतो द्विर्वचनं तेनाप्यत्रावश्यमिड्भावे यत्नः कर्तव्यः। अथे-र्हि प्रतिपदमिड्विधीयते स्मिपूङ्रञ्ज्वशां सनीति। ते नैव द्वितीय-द्विर्वचनमपि न भविष्यति। अथ वा नैतदथे रूपम्। यजेरेष छान्दसो वर्णलोपः। तद्यथा। तुभ्येदमग्ने। तुभ्यमिदमग्नयइति प्राप्ते। आम्बानां चरुम्। नाम्बानां चरुमिति प्राप्ते। आव्याधिनी उगणाः सुगणा इति प्राप्ते। इष्कर्तारमध्वरस्य। निष्कर्तारमध्वरस्येति प्राप्ते। शिवा उद्रस्य भेषजी। शिवारुद्रस्य भेषजीतिप्राप्ते। अथ्यर्थो वै गम्यते। कः पुनरश्नोत्यर्थः। अश्नोतिर्व्याप्तिकर्मा। एवन्तर्हि यजिरप्यश्यर्थे वर्तते। कथं पुनरन्यो नामान्यस्यार्थे वर्तते। बह्वर्था अपि धातवो भवन्ति। तद्यथा। वपिः प्रकिरणे दृष्टश्छेदनेपि वर्तते। केशान्वपति। ईडिः स्तुतिचोदनायाच्ञासु दृष्ट ईरणे चापि वर्तते। अग्निर्वा इतो वृष्टिमीट्टे मरुतो मुतश्च्यावयन्ति। करोतिरयमभूतप्रादुर्भावे दृष्टः निर्मलीकरणे चापि वर्तते। पृष्ठं कुरु पादौ कुरु उन्मृदानेति गम्यते। निक्षेपणे चापिदृश्यते। कटे कुरु घटे कुरु अश्मानमितः कुरु, स्थापयेति गम्यते। एवं तर्हि दीर्घकुत्वसंप्रसारणषत्वमधिकस्य द्विर्वचनात्। दीर्घत्वंद्विर्वचनाधिकस्य न सिध्यति। चिचीषति। तुष्टूषति। समुदायस्य समुदाय आदेशस्तत्र संप्रसुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः सन् भवति। तत्राजन्तानां सनीति दीर्घत्वं न

---

शां सनीति प्राप्त इट् छान्दसत्वान्न भवति। द्विर्वचनम्। हलादिः शेषः। सन्यत इतीत्वम्। अभ्यासस्यासवर्ण इतीयङ्। षत्वकत्वषत्वानि। तूर्ववत्सन इत्यात्मनेपदं शानच्। अचिचमाणा इति तु षष्ठीपचे प्राप्नोति। तेनैवेति। यथा छान्दसत्वादिण्न भवत्येवं द्वितीयद्विर्वचनमपि। तदभावात्प्रथमद्विर्वचनम्। वर्णलोप इति। यियक्षमाणा इति प्राप्ते यकारस्य लोपः उपेयप्रास्यर्थत्वादुपायानां धातूनां चानेकार्थत्वात्तन्नियमआदराभावः। दीर्घकुत्वेति। यस्माद्द्विर्वचनादाधिक्यमुपजायते तस्माद्दीर्घत्वादीनि न सिध्यन्ति। समुदायादेशत्वात् संप्रसुग्धत्वात्। यदा तु सन्यङोः परतो द्वि चनं तदा प्रत्ययसंमोहाभावाद्दीर्घत्वादीनि सिध्यन्ति। दीर्घत्वं द्विर्वचनाधिकस्येति। द्विर्वचनेन शब्दान्तरेणादेशेनाधिकत्वाद् दीर्घाद्यप्रसिद्धिः। स्थानेद्विर्वचने चायं दोषो न तु द्विष्प्रयोगे। तत्र प्रत्ययसंप्रमोहाभावात्। सर्वे सर्वपदादेशा इत्याश्रयेण संप्रमोहः। प्रागेव दीर्घत्वं भविष्यति त-

प्राप्नोति। इदमिह संप्रधार्यं दीर्घत्वं क्रियतां द्विर्वचनमिति। किमत्र कर्तव्यम्। परत्वाद्दीर्घत्वम्। नित्यं द्विर्वचनम्। कृतेपि दीर्घत्वे प्राप्नोत्यकृतेपि प्राप्नोति। दीर्घत्वमपि नित्यम्। कृतेपि द्विर्वचने प्राप्नोत्यकृतेपि प्राप्नोति। अनित्यं दीर्घत्वम्। नहि कृते द्विर्वचने प्राप्नोति। किं कारणम् समुदायस्य समुदाय आदेशस्तच्च संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्याजन्तता नास्तीति दीर्घत्वं न प्राप्नोति। द्विर्वचनमप्यनित्यम्। अन्यस्यकृते दीर्घत्वे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। उभयोरनित्ययोः परत्वाद्दीर्घत्वम्। यत्तर्हि नाकृते द्विर्वचने दीर्घत्वं तन्न सिध्यति। जुहूषति। कुत्वं द्विर्वचनाधिकस्य न सिध्यति। जिघांसति। जङ्घन्यते। किं कारणम्। समुदायस्य समुदाय आदेशस्तच्च संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टो हन्तिर्भवति। तत्राभ्यासाद्धन्तिहकारस्येति कुत्वं न प्राप्नोति। संप्रसारणं च द्विर्वचनाधिकस्य न सिध्यति। जुहूषति। जोहूयते। समुदायस्य समुदाय आदेशस्तच्च संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टो ह्वयतिर्भवति। तत्र ह्वोऽभ्यस्तस्येति संप्रसारणं न प्राप्नोति। नैष दोषः। वक्ष्यत्येतत् ह्वाभ्यस्तनिमित्तस्येति। यावता चेदानीं ह्वाभ्यस्तनिमित्तस्येत्युच्यते सोप्यदोषो भवति। यदुक्तं तत्तर्हि नाकृते द्विर्वचने दीर्घत्वं तन्न सिध्यतीति। षत्वं च द्विर्वचनाधिकस्य न सिध्यति। यियक्षति। समुदायस्य समुदाय आदेशस्तच्च संप्रमुग्धत्वात्प्रत्ययस्य नष्टः सन् भवति। तत्रेण्कुभ्यामुत्तरस्य प्रत्ययसकारस्येति षत्वं न प्राप्नोति। इदमिह संप्रधार्यं द्विर्वचनं क्रियतां षत्वमिति किमत्र कर्तव्यम्। परत्वात्षत्वम् पूर्वत्रासिद्धे षत्वं, सिद्धासिद्धयोश्च नास्ति संप्रधारणा आप्‍ज्ञप्यृधामीत्वमाभ्यस्त विधिप्रतिषेधः*। आप्‍ज्ञप्यृधामभ्यस्ताश्रयो विधिः प्राप्नोति स प्रतिषेध्यः। ईप्सन्ति। ईर्त्सन्ति। ईप्सन्। ईर्त्सन्। ऐप्सन्। ऐर्त्सन्। किं च स्यात्। अद्भावो नुम्प्रतिषेधो जुस्भाव इत्येते विधयः प्रसज्येरन्। नैष दोषः।

---

तो द्विर्वचनमिति मत्वाह। इदमिहेति। नित्यं द्विर्वचनमिति। आकृतिपक्षे शब्दान्तरप्राप्त्यभावात्। अनित्यमिति। व्यक्तिपक्षइति भावः। जुहूषतीति। ह्वातुमिच्छतीति सन्। अत्राकृते द्विर्वचने ऽभ्यस्तत्वाभावात् संप्रसारणाभावाद्दीर्घाप्रसङ्ग इति पूर्वं द्विर्वच-

उक्ता अत्र परिहाराः। सङाश्रये च कार्ये समुदायस्य समुदायादेशत्वा-त् झलाश्रये चाव्यपदेश आमिश्रत्वात्*। सङाश्रये च कार्ये समुदाय-समुदायादेशत्वाद् झलाश्रये च व्यपदेशः। किं कारणम्। आमिश्रत्वा-त्। आमिश्रीभूतमिवेदं भवति। तद्यथा क्षीरोदके संपृक्ते आमिश्रत्वान्न ज्ञायते कियत् क्षीरं कियदुदकमिति कस्मिन् वा अवकाशे क्षीरं क-स्मिन्नवकाशे उदकमिति। एवमिहाप्यामिश्रत्वान्न ज्ञायते का प्रकृ-तिः कः प्रत्ययः कस्मिन्नवकाशे प्रकृतिः कस्मिन्नवकाशे प्रत्यय इति। तत्र को दोषः। सङि झलीति कुत्वादीनि न सिध्यन्ति। इदमिह संप्रधार्यं द्विर्वचनं क्रियतां कुत्वादीनीति। किमत्र कर्तव्यम्। पर-त्वात्कुत्वादीनि। पूर्वत्रासिद्धं कुत्वादीनि, सिद्धासिद्धयोश्च नास्ति सं-प्रधारणा। एवं तर्हि पूर्वत्रासिद्धीयमद्विर्वचनइतिकर्तव्यम्। तच्चाव-श्यं वक्तव्यम्। विभाषिताः प्रयोजयन्ति। दोग्धा दोग्धा। द्रोढा द्रो-ढाः। यावता चेदानीं पूर्वत्रासिद्धीयमद्विर्वचन इत्युच्यते सोऽप्यदोषो भवति यदुक्तं षत्वं न सिध्यतीति। इह स्थाने द्विर्वचने णिलोपोऽप-रिहृतः। सन्यङोः परतो द्विर्वचनमिटो द्विर्वचनं वक्तव्यम्। सन्य-ङन्तस्य द्विर्वचने हन्तेः कुत्वमपरिहृतम्। तत्र सन्यङन्तस्य द्विर्वचनं द्विष्प्रयोगस्त्वेतयेष पक्षो निर्देशः। तत्रेदमपरिहृतं सन इट्प्रतिषेध इति। एतस्यापि सप्तमे परिहारं वक्ष्यति। उभयविशेषणत्वात्सिद्धमिति। कथं जेघ्नीयते। वक्ष्यत्येतत्। यङ्प्रकरणे हन्तेर्हिंसायां घ्नीति॥

दाश्वान् साह्वान् मीढ्वांश्च॥ १२॥ दाश्वानिति किं निपात्यते। दाशेः क्वसौ द्वित्वेट्प्रतिषेधौ*। दाशेः क्वसौ द्वित्वेट्प्रतिषेधौ निपात्येते। दा-श्वांसो दाशुषः सुतम्। दाश्वान्। साह्वानिति किं निपात्यते। सहेर्दी-र्घत्वं च। किं च। द्वित्वेट्प्रतिषेधौ च। साह्वान्बलाहकः। साह्वान्।

---

नं ततः संप्रसारणं ततो हल इति दीर्घत्वात्परत्वादजझनगमां सनीति दीर्घत्वम्। क्षी-रोदके इति। व्यक्तिविशेषविवक्षायां जातिपरत्वाभावादेकवद्भावो न कृतः। सप्तम्येकव-चनं वा। प्रत्ययसकारसहितस्य प्रथमस्यैकाचो द्विर्वचनादामिश्रत्वम्। सङीति। सन-सकारादारभ्य महिङो ङकारेण प्रत्याहारः। विभाषिता इति। विषय इत्यर्थः॥

दाश्वान् । षष्ठ मर्वपदइति चौरादिकस्याष्टषादेति विभाषितणिचः क्वसौ साह्वानि-

मीढ्वानिति किं निपात्यते। मिहेर्ढत्वं च यच्च पूर्वयोर्द्विर्वचनप्रतिषेधो दीर्घत्वं च। मीढ्वं स्तोकाय तनयाय मृड। यथेयमिन्द्रमीढ्वः। मह्यर्थो वै गम्यते। कः पुनर्मह्यर्थः। महिर्दानकर्मा। अतः किम्। इत्वमपि निपात्यम्। मह्यर्थ इति चेद् मिहेस्तदर्थत्वात्सिद्धम् *। मह्यर्थ इति चेन्मिहिरपि मह्यर्थे वर्तते। कथं मिहिर्मह्यर्थे वर्तते। कथं पुनरन्योनामान्यस्यार्थे वर्तेत। कथं मिहिर्मह्यर्थे वर्तेत। बह्वर्था अपि धातवो भवन्ति। अस्ति पुनरन्यत्रापि क्व चिन्मिहिर्मह्यर्थे वर्तते। अस्तीत्याह। मिहे-मेघः। मेघश्च कस्माद्भवति। अपो ददातीति। द्विर्वचनप्रकरणे कृञा-दीनां के *। द्विर्वचनप्रकरणे कृञादीनां क उपसंख्यानं कर्तव्यम्। चक्रम्। चिक्लिदम्। चक्नसमिति। कात्सिद्धिरिति वक्तव्यम्। इहापि यथा स्यात्। बभ्रुः ययुरिति। चरिचलिपतिवदीनामच्याक्चाभ्या-सस्य *। चरिचलिपतिवदीनामचि द्वे भवत इति वक्तव्यम्। आ-क्चाभ्यासस्य। चराचरः। चलाचलः। पतापतः। वदावदः। हन्ते-र्घत्वं च *। हन्तेर्घश्च वक्तव्यः। अचि द्वे भवत आक्चाभ्यासस्य। घना-घनः। पाटेर्णिलुक्च दीर्घश्चाभ्यासस्योक्च *। पाटयतेर्णिलुग् वक्त-व्यः। अचि द्वे भवत इति वक्तव्यम्। दीर्घश्चाभ्यासस्य ऊक्चागमः। पाटूपटः। द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकि-नोरुत्वेभ्यः *। यणयवायावादेशा आल्लोपोपधालोपणिलोपकिकिनोरु-त्वेभ्यो द्विर्वचनं भवति पूर्वविप्रतिषेधेन। द्विर्वचनस्यावकाशः। बि-भिदतुः। बिभिदुः। यणादेशस्यावकाशः। दध्यत्र। मध्वत्र। इहो-भयं प्राप्नोति चक्रतुः चक्रुरिति। अयवायावादेशानामवकाशः। च-यनम्। चायकः। लवनम्। लावकः। द्विर्वचनस्य स एव। इहो-भयं प्राप्नोति। चिचाय। चिचयिथ। लुलाव लुलविथ। आल्लोप-स्यावकाशः। गोदः। कम्बलदः। द्विर्वचनस्य स एव। इहोभयं प्रा-प्नोति। ययतुः। ययुः। तस्थतुः। तस्थुः। उपधालोपस्यावकाशः। श्लेष्मघ्नं मधु। पित्तघ्नं घृतम्। द्विर्वचनस्य स एव। इहोभयं प्राप्नो-

---

ति. रूपम्। चक्रमिति। घञर्थे कविधानमिति कः। ययुरिति यो द्वे चेत्यत्र द्वे चेति न वक्तव्यं भवतीति भावः। चराचर इति। अभ्यासस्यानचीति वचनाद्धलादिः शेषाभावः।

ति । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । णिलोपस्यावकाशः । कार-णा । हारणा । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति । आटिटत् । आशिशत् ॥ उत्वस्यावकाशः । निपूर्त्ताः पिण्डाः द्विर्वचनस्य स एव । इहोभयं प्राप्नोति । मित्रावरुणौ ततुरिः । दूरे ह्यध्वा जगुरिः । द्वि-र्वचनं भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति । द्विर्वचनात् प्रसारणात्वधात्वादिविकाररीत्वेत्वोत्वगुणवृद्धिविधायः*। द्विर्वचनात् प्रसारणात्वधात्वादिविकाररीत्वेत्वोत्वगुणवृद्धिविधयो भ-वन्ति विप्रतिषेधेन । द्विर्वचनस्यावकाशः । बिभिदतुः बिभिदुः । सं-प्रसारणस्यावकाशः । इष्टम् । उप्तम् । इहोभयं प्राप्नोति । ईजतुः । ईजुरिति । नैतदस्ति । असत्वत्र द्विर्वचनं द्विर्वचने कृते परस्य रूपस्य कितीति भविष्यति पूर्वस्य लिट्यभ्यासस्योभयेषामिति । इदं तर्हि सोषुप्यते । इदं चाप्युदाहरणम् । ईजतुः । ईजुः । ननु चोक्तमसत्वत्र द्विर्वचनम् द्विर्वचने कृते परस्य रूपस्य कितीति भविष्यति पूर्वस्य लि-ट्यभ्यासस्योभयेषामिति । न सिध्यति । न संप्रसारणे संप्रसारणमि-ति प्रतिषेधः प्राप्नोति । अकारेण व्यवहितत्वान्न भविष्यति । एका-देशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव । एवं तर्हि समानाङ्गग्रहणं तत्र चोदयि-ष्यति । आत्वस्यावकाशः । ग्लाता । म्लाता । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति । जग्ले । मम्ले । धात्वादिविकाराणामवकाशः । नमति । सिञ्चति । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति । ननाम । सिषेच । सस्नौ । रीत्वस्यावकाशः । मात्रीयति । पित्रीयति । द्वि-र्वचनस्य स एव । इहोभयं प्राप्नोति । चेक्रीयते । जेक्रीयते । ईत्व-स्यावकाशः । पीयते गीयते । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति । पेपीयते । मेमीयते । इत्वोत्वयोरवकाशः । आस्तीर्णं निपूर्तम् । द्वि-

---

सोषुप्यतइति । स्वपिस्यमिव्येञां यङीति संप्रसारणम् । जग्ल इति । भावे लकारः । अभितीति पर्युदासपक्षे विप्रतिषेधः । प्रसज्यप्रतिषेधे त्वनैमित्तिकत्वादात्वमन्त-रङ्गम् । एवं सत्वनत्वे अपि । चेक्रीयतइति । यङि रीङृत इति रीङादेशः ।

र्वचनस्य स एव। इहोभयं प्राप्नोति। आतेस्तीर्यते। निपोपूर्यते। गुणवृद्ध्योरवकाशः। चेता। गौः। द्विर्वचनस्य स एव। इहोभयं प्राप्नोति। चिचाय। चिचयिथ। लुलाव लुलविथ। नैतदस्ति प्रयोजनम्। अस्त्वत्र द्विर्वचनं द्विर्वचने कृते परस्य गुणवृद्धी भविष्यतः। इदं तर्हि प्रयोजनम्। इयाय। इययिथ। ननु चात्राप्यस्तु द्विर्वचनं द्विर्वचने कृते परस्य गुणवृद्धी भविष्यतः। न सिध्यति। अन्तरङ्गत्वात्सवर्णदीर्घत्वं प्राप्नोति। वार्णादाङ्गं बलीय इति गुणवृद्धी भविष्यतः। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। आचार्यप्रवृत्तिर्ज्ञापयति वार्णादाङ्गं बलीयो भवतीति यदयमभ्यासस्यासवर्ण इत्यसवर्णग्रहणं करोति। कथं कृत्वा ज्ञापकम्। नह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवति। नैतदस्ति ज्ञापकम्। अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्। इयृतः। इयृथः। उवोष। उवोषिथ। यत्तर्हि दीर्घ इणः कितीति दीर्घत्वं शास्ति। एतस्याप्यस्ति वचने प्रयोजनम्। किम्। सवर्णदीर्घबाधनार्थमेतत्स्यात्। स यथैव तर्हि सवर्णदीर्घत्वं बाधते एवं यणादेशमपि बाधेत। एवं तर्हि यणादेशे योगविभागः करिष्यते। इदमस्ति। इणो यण्भवति। तत एरनेकाचः। एश्चानेकाचः इणो यण् भवति। ततोऽसंयोगपूर्वस्य। एरनेकाच इत्येव। असवर्णग्रहणमेव तर्हि ज्ञापकम्। ननु चोक्तमस्त्यन्यदेतस्यादिति। नैकमुदाहरणमसवर्णग्रहणं प्रयोजयति। एवमपि स्थानिवद्भावादियङ् प्राप्नोति। अथ सत्यपि विप्रतिषेधे यावता स्थानिवद्भावः कथमिवैतत्सिध्यति। कस्मादेवात्र न भवति। योनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः। आदिष्टाच्चैषोऽचः पूर्व इति॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य प्रथमे पादे प्रथममाह्निकम्॥

---

उवोषेति। अमन्त्र इति प्रतिषेधादिजादेरित्याम्न भवति। नैकमुदाहरणमिति। अन्यथाऽभ्यासस्यार्तेरिति ब्रूयात्। उवोषेत्यादौ तु च्छान्दसत्वाद्यथाम्न दृश्यते। तत इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलमित्युवङ् भविष्यति। यथा सुवर्गो लोक इति भावः। एवमपीति। यदि पूर्वं द्विर्वचनं क्रियते। दृश्यादगुणवृद्धी इत्यर्थः॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठाध्यायस्य प्रथमे पादे प्रथममाह्निकम्॥

ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ १३ ॥ ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गः * । ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गो भवति । पुत्रपत्यादौ संप्रसारणं प्राप्नोति । कारीषगन्ध्यापुत्रकुलम् । कारीषगन्ध्यापतिकुलम् । वर्णग्रहणात्सिद्धम् * । वर्णग्रहणएतद्भवति यस्मिन्विधिस्तदादाविति न चेदं वर्णग्रहणम् । वर्णग्रहणादिति चेत्तदन्तस्य प्रतिषेधः * । वर्णग्रहणादिति चेत्तदन्तस्य प्रतिषेधो वक्तव्यः । पुत्रपत्यन्ते संप्रसारणं प्राप्नोति । कारीषगन्ध्यापरमपुत्रः । कारीषगन्ध्यापरमपतिः । कौमुदगन्ध्यापरमपुत्रः । कौमुदगन्ध्यापरमपतिः । किंकारणम् । यत्र हि तदादिविधिर्नास्ति तदन्तविधिना तत्र भवितव्यम् । सिद्धं तूत्तरपदवचनात् * । सिद्धमेतत् । कथम् । उत्तरपदवचनात् । पुत्रपत्योरुत्तरपदयोरिति वक्तव्यम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । पूर्वपदमुत्तरपदमिति संबन्धिशब्दावेतौ । सति पूर्वपदे उत्तरपदं भवति । सति चोत्तरपदे पूर्वपदमिति । न चात्र पुत्रपती उत्तरपदे । इहापि तर्हि न प्राप्नोति कारीषगन्धीपुत्रः कारीषगन्धीपतिरिति । किं कारणम् । पूर्वपदमित्यु-

---

ष्यङः संप्रसारणम् । कारीषगन्ध्यापुत्रकुलमिति । पुत्रस्य कुलं पुत्रकुलं कारीषगन्ध्यायाः पुत्रकुलं कारीषगन्ध्यापुत्रकुलम् । यद्यप्यत्र तदादिविधिर्नास्ति तथापि पुत्रपतिशब्दानानन्तर्याश्रयसंप्रसारणप्रसङ्गश्चोद्यते । यदा तु कारीषगन्धीपुत्रस्य कुलमिति विग्रहस्तदा कारीषगन्धीपुत्रकुलमिति भवत्येव । वर्णग्रहणादिति । वर्णग्रहणे तदादिविधिविज्ञानादिह च वर्णग्रहणात्सिद्धमित्यर्थः । न च तदादिविध्यभावेपि तदादौ पुत्रापत्यानन्तर्याश्रयसंप्रसारणप्रसङ्गो, यस्मात्तत्पुरुष इत्यनेनाधारः । ष्यङन्तस्य पुत्रपत्योश्चोपात्तस्तत्पुरुषः तत्पुरुषावयवत्वं पुत्रपत्योः ख्यापयति । यथा वृक्षे शाखेतिवृक्षः शाखायाः प्रत्यासत्त्या ऽवयवी प्रतीयते । यथा चवृक्षात्पर्णं पततीत्यपादानत्वेनाप्युपात्तो पर्णस्यावयवित्वेन प्रत्यासत्त्या गम्यते । यत्तु कारकसूत्रे भाष्यउक्तं न ज्ञायते कङ्कस्य वा कुररस्य वेति । तच्छब्दव्यापाराभिप्रायेण । इह च पुत्रपत्यादौ तत्पुरुषे यौ पुत्रपत्यादौ तत्पुरुषे यौ पुत्रपती तौ ष्यङन्तावयवस्य तत्पुरुषस्यावयवौ न भवत इति संप्रसारणाभावः । तदन्तप्रतिषेध इति । तदन्तविध्यपवादस्तदादिविधिरिति तदभावे तदन्तविधिना भाव्यम् । तत्पुरुषेण सन्निधापितमुत्तरपदं पुत्रपतिभ्यां विशेष्यतइत्यस्ति तदन्तविधिप्रसङ्गः । सिद्धं त्विति । तत्पुरुषे नियतसंनिधाने पूर्वपदोत्तरपदे । विशेषणविशेष्यभावे च कामचारा-

च्यते। नह्यत्र ष्यङ् पूर्वपदमस्ति। ष्यङन्तमेतत्पूर्वपदम्। कथम्। प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। यदि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्युच्यते। परमकारीषगन्धीपुत्त्रः परमकारीषगन्धीपतिरिति न सिध्यति। प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। तत्र वर्तते। एवमप्यनांसि मनांसीत्यत्रापि प्राप्नोति। सान्तसंयोगेग्रहणं भवत्यस्त्रीप्रत्ययेनेति। यद्यस्त्रीप्रत्ययेनेत्युच्यते। अतिक्रान्तः कारीषगन्ध्यामतिकारीषगन्ध्यः। तस्य पुत्त्रः। अतिकारीषगन्ध्यपुत्त्रः। अतिकारीषगन्ध्यपतिरित्यत्रापि प्राप्नोति। अस्त्रीप्रत्ययेनानुपसर्जनेन *। योऽह्युपसर्जनं स्त्रीप्रत्ययो भवत्येषा तत्र परिभाषा प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। ष्यङन्ते या वन्तीयणस्तेषां सर्वेषां संप्रसारणं प्राप्नोति। वाराहीपुत्त्रः। तार्णकर्णीपुत्त्रः। तत्राप्रत्ययस्य प्रतिषेधः *। तत्राप्रत्ययस्थस्य प्रतिषेधो वक्तव्यः। यथागृहीतस्यादेशवचनादप्रत्ययस्थे सिद्धम् *। निर्दिश्यमानस्यादेशा भवन्तीत्येवमप्रत्ययस्थस्य न भविष्यति। अनन्त्यविकारेऽन्त्यसदेशस्य वा। अथ वाऽनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीत्येषा परिभाषा कर्तव्या। कः पुनरत्र विशेषः। एषा वा परिभाषा क्रियेत। अप्रत्ययस्थस्य वा प्रतिषेध उच्येत। अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि। कानि। प्रयोजनं न संप्रसारणे संप्रसारणम्। न संप्रसारणे संप्रसारणमित्येतन्न वक्तव्यं भवति। कथं व्यधेर्विद्ध इति। अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति। नैतदस्ति प्रयोजनम्। क्रियत न्यास एव। सान्तमहतो दीर्घत्वे प्रयोजनम्। पयांसि। यशांसि। पय इत्यस्यापि प्राप्नोति। अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति। एतदपि नास्ति प्रोजनम्। नोपधाया इति तत्र वर्तते। एवमप्यनांसि मनांसीत्यत्रापि प्राप्नोति। सान्तसंयोगेनोपधां विशेषयिष्यामः। सान्तसंयोगस्य नोपधाया इति। एवमपि हंसशिरांसि ध्वंसशिरांसि अत्रापि प्राप्नोति। नैष दोषः। इह्मतदे-

---

दुत्तरपदेन पुत्त्रपती विशेष्येते। तत्रोत्तरपदान्तयोः पुत्त्रपत्योरसंभवादुत्तरपदे एव पुत्त्रपती गृह्येते। पुत्त्रपतिभ्यां तूत्तरपदं न विशेष्यतइति तदन्तविध्यभावः। ष्यङन्तामति। प्रत्ययग्रहणपरिभाषया तदन्तस्य कार्यित्वात्। हंसशिरांसीति। अनुस्वारस्यासिद्धत्वाद्-

सः । कः पुनराह हम्मतेर्हंस इति । किं तर्हि हन्तेर्हंसः । हन्त्यध्वानमिति । एवं तर्हि सर्वनामस्थानइति वर्तते । सर्वनामस्थानपरतया सान्तसंयोगं विशेषयिष्यामः। सान्तसंयोगेन नोपधां विशेषयिष्यामः। सर्वनामस्थानपरस्य सान्तसंयोगस्य नोपधाया इति । अन्कारान्तस्याल्लोपे प्रयोजनम् । तक्ष्णा । तक्ष्ण इति । त इत्यत्रापि प्राप्नोति । अनन्त्यविकारेन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । अनाकारं विशेषयिष्यामः । अनो यो ऽकार इति । एवमप्यनसानसि इत्यत्रापि प्राप्नोति। अन्कारेणाङ्गं विशेषयिष्यामः । अना अकारम् । अन्कारान्तस्यानो यो ऽकार इति । एवमप्यनस्तक्षाणस्तक्ष्ण इत्यत्रापि प्राप्नोति । एवं तर्हि कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । भस्येति तत्रोपस्थितमिदं भवति यचि भमिति । तत्र यजादिपरतया ऽन्कारं विशेषयिष्याम. । अना ऽकारम् । यजादिपरस्यानो यो ऽकार इति । मृजेर्वृद्धिविधौ प्रयोजनम् । न्यमार्ट् । अटोपि वृद्धिः प्राप्नोति । अनन्त्यविकारेन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । यथा परिभाषितमिको गुणवृद्धी इति इक एव वृद्धिर्भविष्यति । एवमपि मिमार्जिषतीत्यत्र प्राप्नोति । अस्त्वभ्यासनिर्ह्रासेन ह्रस्वो भविष्यति । वसोः संप्रसारणे । वसोः संप्रसारणे च प्रयोजनम् । विदुषः पश्य । विदिवकारस्यापि प्राप्नोति । अनन्त्यविकारे ऽन्त्यसदेशस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । न संप्रसारणे संप्रसारणमिति प्रतिषेधो भविष्यति इट्कारेण व्यवहितत्वान्न प्राप्नोति । एवं तर्हि निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यति । युवादीनां च संप्रसारणे प्रयोजनम् । यूनः पश्य । यूना । यूने । यकारस्यापि प्राप्नोति । अनन्त्यविकारेन्त्यसदेशस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । न संप्रसारणे संप्रसारणमिति न भविष्यति। उकारेण व्यवहितत्वान्न प्राप्नोति। एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव । एवं तर्हि समानाङ्गग्रहणं तत्र चोदयिष्यति । वौरुपधा-

ग्रहणं च । वौरुपधाग्रहणं न कर्तव्यं भवति । वौरुपधायादीर्घ इक इति । इह कस्मान्न भवति अविभर्भवान् । अनन्त्यविकारेन्त्यसदेशस्येति न दोषो भवति । एतदपि नास्ति प्रयोजनम् । क्रियते न्यास एव । आदित्यदादिविधिसंयोगादिलोपकुत्वढत्वभष्भावषत्वणत्वप्रतिप्रसङ्गः * । आदिविधावतिप्रसङ्गो भवति । धात्वादेः षः सः । णो नः । इहैव स्यात् नेता सोता । इह न स्यात् । नमति सिञ्चतीति । आदि । त्यदादिविधिः । इहैव स्यात् । तद् सः । त्यद् स्यः इत्यत्र न स्यात् । त्यदादिविधिः । संयोगादिलोपः । इहैव स्यात् । मङ्क्ता । मङ्क्तव्यमित्यत्र न स्यात् । संयोगादिलोपः । कुत्वम् । इहैव स्यात् । पक्ता । पक्तव्यमित्यत्र न स्यात् । ढत्वम् । इहैव स्यात् । लेढा । लेढव्यमित्यत्र न स्यात् । भष्भावः । इहैव स्यात् । अभुत्सि । अभुत्साताभित्यत्र न स्यात् । षत्वमिहैव स्यात् । द्रष्टा । द्रष्टव्यमित्यत्र न स्यात् । णत्वम् । इहैव स्यात् । माषवापेण । माषवापाणामित्यत्र न स्यात् । एते दोषाः समा भूयांसो वा । तस्मान्नार्थोऽनया परिभाषया । नहि दोषाः सन्तीति परिभाषा न वक्तव्या । लक्षणं वा न प्रणेयम् । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् । कुत एतत् । नहि दोषाणां लक्षणमस्ति । तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या । प्रतिविधेयं दोषेषु । इदं प्रतिविधीयते । उदात्तनिर्देशात् सिद्धम् । यत्रैषा परिभाषेष्यते तत्रोदात्तनिर्देशः कर्तव्यः । ततो वक्तव्यम् । अनन्त्यविकारेन्त्यसदेशस्य कार्यं भवत्युदात्तनिर्देश इति । स तर्ह्यु-

---

काराकारस्य दीर्घप्रसङ्गः । इन्तेरिति । वृतूवदिह नीतिलक्षणसद्भावात् । हन्तीति । गच्छतीत्यर्थः । यथा परिभाषितमिति । परिभाषितानतिक्रमेणेत्यर्थः । अविभरिति । डुभृञो लङ् तिप्सिपोरन्यतरः । श्नपः श्लुः । द्विर्वचनम् । भृञामिदितीत्त्वम् । सोतेति । धात्वन्त्यसदेशस्यैव सत्वनत्वप्रसङ्गः । स्य इत्यत्रेति । तदोः सः सावनन्त्ययोरिति सत्वं तकारस्यान्त्यसदेशत्वाभावान्न प्राप्नोति । मङ्क्तव्यमिति । पदान्त्यसदेशत्वाभावात् संयोगादिलोपाप्रसङ्गः । माषवापाणामिति । विभक्तिस्थस्य नकारस्य पदान्त्यसदेशत्वाभावाण्णत्वाप्रसङ्गः । उदात्तनिर्देशादिति । यथा स्वरितेनाधिकारः । एवमुदात्ते नैषा परिभाषेत्य-

दात्तनिर्देशः कर्तव्यः । न कर्तव्यः । यत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च युगपत्समवस्थितौ तत्रैषा परिभाषा भवति । दोषेषु चान्यत्रान्त्यसदेशः । अन्यत्रानन्त्यसदेशः । प्रयोजनेषु पुनस्तत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च । तथाजातीयकानि खल्वप्याचार्येण प्रयोजनानि पठितानि । यान्युभयवन्तिभवन्ति इदमेकं यथा दोषास्तथा वौरुपधाग्रहणमिति । अबिभर्भवान् । तत्रापि क्रियते न्यास एव । ष्यङः संप्रसारणम् ॥

बन्धुनि बहुव्रीहौ ॥ १४ ॥ मातच्मातृकमातृषु ष्यङ प्रसार्यो विभाषया ॥ मातच् । कारीषगन्ध्या मातास्य कारीषगन्धीमातः । कारीषगन्ध्यामातः । मातच् । मातृक । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । मातृ । कारीषगन्धीमाता । कारीषगन्ध्यामाता ॥

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ १६ ॥ वयिग्रहणं किमर्थम् । न वेञ् यजादिषु पठ्यते । वेञश्च वयिरादेशः क्रियते । तत्र यजादीनां कितीत्येव सिद्धम् । तत्रैतत्स्यात् ङिदर्थोयमारम्भ इति । तच्च न । लिटायमादेशः । लिट् च किदेव । अत उत्तरं पठति । वयिग्रहणं वेञः प्रतिषेधात् । * । वयिग्रहणं क्रियते । वेञः प्रतिषेधात् । वेञो लिटि प्रतिषेधं वक्ष्यति । स वयेर्मा भूदिति । यथैव हि वेञ्ग्रहणाद्विधिः प्राप्यते एवं प्रतिषेधोपि प्राप्नोति । न वा यकारप्रतिषेधो ज्ञापको ऽप्रतिषेधस्य * । न वा एष दोषः । किं कारणम् । यदयं लिटि वयो य इति वयेर्यकारस्य संप्रसारणस्य प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो न वेञ्ग्रहणाद्वयेः संप्रसारणप्रतिषेधो भवतीति । नैतदस्ति ज्ञापकम् । पि-

---

र्थः । न कर्तव्यइति । सर्वत्रापि परिभाषोपस्थाने दोषाभावात् । यत्रैवेति । विधिनिषेधयोरेकविषयत्वाश्रयणात् । इदमेकमिति । अबिभरित्यत्रान्त्यसदेशस्यैको ऽसंभवादनन्त्यसदेशस्यैकः प्राप्नोति दीर्घ उपधाग्रहणेन निवर्त्यते ॥

बन्धु । कारीषगन्ध्या मातास्येति बहुव्रीहौ कृते ऽस्मादेव वचनान्मातृशब्दस्य मातजादेशस्तत्र ककारः स्वरार्थ स्तेन पूर्वपदप्रकृतिस्वरत्वं बाधित्वा ऽन्तोदात्तत्वं न भवति। मातृमातृकशब्दयोश्च भेदेनोपादानादव्युत्पत्तश्चेति पक्षे समासान्ताभावः ।

ग्रहिज्या । विकृतिग्रहणमिति । कश्चिद्ब्रूयाद्वेञ इति सूत्रं मा कारि। वयिग्रहणेम-

त्यभ्यासार्थमेतत्स्यात्। वयेः पित्सु वचनेष्वभ्यासयकारस्य संप्रसारणं मा भूदिति। ननु च वेञ्ग्रहणादेव वयेः पित्स्वपि वचनेष्वभ्यासयकारस्य संप्रसारणप्रतिषेधः सिद्धः। न सिध्यति। किं कारणम्। क्तितीति तत्रानुवर्तते। एवमपि वयेः पित्सु वचनेष्वभ्यासस्य यकारस्य संप्रसारणं न प्राप्नोति। किं कारणम्। हलादिः शेषेण बाध्यते। नात्र हलादिः शेषः प्राप्नोति। किं कारणम्। वक्ष्यति ह्येतत् अभ्याससंप्रसारणं हलादिः शेषाद्विप्रतिषेधेनेति। स एष वयेर्यकारस्य संप्रसारणप्रतिषेधः पित्यभ्यासार्थो न ज्ञापकार्थो भवति। पित्यभ्यासार्थमिति चेन्नाविशिष्टत्वात्*। पित्यभ्यासार्थमिति चेत्। तन्न। किं कारणम्। अविशिष्टत्वात्। अविशेषेण प्रतिषेधः। निवृत्तं तत्र क्तितीति। आतश्चाविशेषेण। वेञोपि हि पित्सु वचनेष्वभ्यासस्य संप्रसारणं नेष्यते। ववौ ववियेति। विकृतिग्रहणं खल्वपि प्रतिषेधे क्रियते। न च विकृतिः प्रकृतिं गृह्णाति।

लिट्यभ्यासस्योभयेषाम्॥ १७॥ ग्रहिव्रश्चतिपृच्छतिभ्रस्जतीनामविशेषः यदुच्यते व्रश्चेरविशेष इति। तन्न। यद्यत्र रेफस्य संप्रसारणं न स्यात्। वकारस्य प्रसज्येत। रेफस्य पुनः संप्रसारणे सति उरदत्वस्य स्थानिवद्भावान्न संप्रसारणे संप्रसारणमिति प्रतिषेधः सिद्धो भवति। तस्माद्वक्तव्यमेतत्। ग्रहेरविशेषः पृच्छतिभ्रस्जत्योरविशेष इति। अथोभयेषां ग्रहणं किमर्थम्। उभयेषामभ्यासस्य संप्रसारणं

---

वेञो ग्रहणाल्लिटि संप्रसारणप्रतिषेधो भविष्यतीत्याशङ्क्योक्तं विकृतिग्रहणमिति। यद्यपि वयोयकारस्य प्रतिषेध उक्तो न च वेञो यकारोस्ति तथापि पुष्कलपरिहारं वक्तुमेतत्राश्रितम्। अथ वा लिटि वय इति योगविभागः करिष्यते। तत्र वयिग्रहणेन वेञो ग्रहणात्संप्रसारणप्रतिषेधो भविष्यति। ततो य इति द्वितीयो योगो नियमार्थो यस्य यकारस्यान्यस्यास्ति तस्या वयेर्यिकारस्यैवं निषेधो भवितीत्याशङ्क्योक्तं विकृतिग्रहणमिति। प्रकृत्याविकृतिर्गृह्यतेस्थानिवद्भावान्नतु विकृत्या प्रकृतिर्भिन्नरूपत्वादिति भावः। तदेव वयिग्रहणंप्रत्याख्यातम्।

लिट्यभ्या। ग्रहीति। असति सूत्रे यद्रूपं तदेव सतीत्यभिप्रायेणैतदुक्तम्। भाष्यकारस्तु रेफस्य संप्रसारणे सत्यसति वा विशेषो नास्तीति मत्वा वार्त्तिककारेणैतदुक्तं तन्नायुक्तमिति मन्यमान आह। यदुच्यत इति। इदं तर्हीति। उभयेषांग्रहणात् पुनः संप्र-

यथा स्यात् । वचिस्वपियजादीनाम् । ग्रहादीनां च नैतदस्ति प्रयोजनम् । प्रकृतमुभयेषां ग्रहणमनुवर्तते । यद्यनुवर्तते ग्रहिज्याव-यिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति चेति यजादीनां ङित्यपि प्राप्नोति । नैष दोषः । संबन्धमनुवर्तिष्यते । वचिस्वपियजादीनां किति । ग्रहादीनां ङिति च । वचिस्वपियजादीनां किति । ततो लिट्यभ्यासस्योभयेषाम् । किति ङितीति निवृत्तम् । अथ वा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः । अथ वैकयोगः करिष्यते । वचिस्वपियजादीनां किति, ग्रहादीनां ङिति चेति , ततो लिट्यभ्यासस्येति । न चैकयोगेऽनुवृत्तिर्भवति । अथ वोभयं निवृत्तम् । तदपेक्षिष्यामहे । इदं तर्हि उभयेषांग्रहणस्य प्रयोजनम् । उभयेषामभ्यासस्य संप्रसारणमेव यथा स्यात् । यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत् प्राप्नोति । हलादिःशेषः । अभ्यासस्य संप्रसारणं हलादिःशेषाद्विप्रतिषेधेनेति वक्ष्यति । स पूर्वविप्रतिषेधो न पठितव्यो भवति । अभ्याससंप्रसारणं हलादिःशेषाद्विप्रतिषेधेन * । अभ्यासस्य संप्रसारणं भवति हलादिःशेषाद्विप्रतिषेधेन । अभ्याससंप्रसारणस्यावकाशः । इयाज । उवाय हलादिःशेषस्यावकाशः । बिभिदतुः । बिभिदुः । इहोभयं प्राप्नोति विव्याध विव्यधिथ । अभ्याससंप्रसारणं भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वा संप्रसारणाश्रयबलीयस्त्वादन्यत्रापि *। न वा वक्तव्यः । किं कारणम् । संप्रसारणाश्रयस्य बलीयस्त्वादन्यत्रापि संप्रसारणं संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम् । अन्यत्रापि नावश्यमिहैव वक्तव्यम् । किं प्रयोजनम् । प्रयोजनं रमाल्लोपेयङ्यणः । रम् । भृष्टः । भृष्टवान् । संप्रसारणं च प्राप्नोति रम्भावश्च । परत्वाद्रम्भावः स्यात् । संप्रसारणं बलीयो भवतीति वक्तव्यम् । संप्रसारणं यथा स्यात् । आल्लोपः । जुहुवतुः । जुहुवुः । संप्रसारणं च प्राप्नोत्याकारलोपश्च । परत्वादाकारलोपः स्यात् । संप्रसारणं बलीयो भवतीति वक्तव्यम् । संप्रसारणं यथा स्यात् । संप्रसारणे कृते पूर्वत्वं च प्राप्नोत्याकारलोपश्च । परत्वादाकारलोपः

स्यात्। संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम्। पूर्वत्वं यथा स्यात्। इयङ्। शुशुवतुः। शुशुवः। संप्रसारणं च प्राप्नोति। इयङादेशश्च। परत्वादियङादेशः स्यात्। संप्रसारणं बलीयो भवतीति वक्तव्यम्। संप्रसारणं यथा स्यात्। यण्। संप्रसारणे कृते पूर्वत्वं च प्राप्नोति। यणादेशश्च। परत्वाद्यणादेशः स्यात्। संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम्। पूर्वत्वं यथा स्यात्। नैतानि सन्ति प्रयोजनानि। यत्तावदुच्यते रमिति। इदमिह संप्रधार्यम्। रम्भावः क्रियतां संप्रसारणमिति। किमत्र कर्तव्यम्। परत्वाद्रम्भावः। नित्यं संप्रसारणं कृतेपि रम्भावे प्राप्नोत्यकृतेपि। रम्भावोपि नित्यः कृतेपि संप्रसारणे प्राप्नोत्यकृतेपि। कथम्। योसावकारे रेफस्तस्य चोपधायाश्च प्राप्नोति। अनित्यो रम्भावः। नहि कृते संप्रसारणे प्राप्नोति। किं कारणम्। नहि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते। अथापि गृह्यन्ते, एवमप्यनित्यः। उपदेशइति वर्तते। तच्चावश्यमुपदेशग्रहणमनुवर्त्यं वरीभृज्यतइत्येवमर्थम्। आल्लोपियङ्यण इति। नित्यं संप्रसारणम्। अन्तरङ्गं पूर्वत्वम्। तदेतदनन्यार्थं संसारणं तदाश्रयं च बलीयो भवतीति वक्तव्यम्। पूर्वविप्रतिषेधो वक्तव्यः। उभयं न वक्तव्यम्। उक्तमुभयेषांग्रहणस्य प्रयोजनम्। उभयेषामभ्यावस्य संप्रसारणमेव यथा स्यात्। यदन्यत्प्राप्नोति तन्माभूदिति। व्यचेः कुटादित्वमनस्यणिति संप्रसारणार्थम्*। व्यचेः कुटादित्वमनसि वक्तव्यम्। किं प्रयोजनम्। अञ्णिति संप्रसारणार्थम्। अञ्णिति संप्रसारणं यथा स्यात्। उद्विचिता उद्विचितुम्। उद्विचितव्यम्। अनसीति किमर्थम्। उरुव्यचाः। कण्टकः॥

स्वापेश्चङि॥ १८॥ चङ्ग्रहणं शक्यमकर्तुम्। कथम्। ङिती-

---

सारणस्य विधिभवन् विध्यन्तरस्य बाधको भवति। आकारलोपश्चेति। सति चाकारलोपेतस्य निवृत्तावादुवङ् न स्यात्तस्य यणादेशः प्रसज्येत। यणादेशश्चेति। एरनेकाच इत्यनेन। उपदेशइति। तेनोपदेशेयोरेफस्तस्यरम्भावः। उरुव्यचाइति। उरु विचतीतिमिथुने ऽसिः पूर्ववच्चसर्वमित्यसिप्रत्ययः।

स्वापे। ङितीतिवर्ततइति। किंतीत्येतत्तु चानुकृष्टत्वादस्वरितत्वाद्वा नानुवर्तिष्यतइति भावः। तत्र ङिद्ग्रहणं लिटाभ्यासस्योभयेषामित्यत्र नानुवर्तते ऽलिटो ङितो ऽसंभवादिहैव त्वनुवर्तते। न चान्यइति। यङ्तावदनेकाच्त्वात् स्वापेर्नास्ति। अपित्सार्वधा-

ति वर्तते । न चान्यः स्वापेर्ङिदस्त्यन्यकृतश्चङः ।

न वशः ॥ २० ॥ वशेर्यङि प्रतिषेधः * । वशेर्यङि प्रतिषेधो वक्तव्यः संप्रसारणस्य । वावश्यते । क्व मा भूत् । उष्टः । उशन्ति इ-ति । स तर्हि तथा प्रतिषेधो वक्तव्यः । न वक्तव्यः । यङीति वर्तते । एवं तर्ह्यन्वाचष्टे यङीति वर्ततइति । नैतदन्वाख्येयमधिकारा अनु-वर्तन्तइति । एष एव न्याय्यो यदुत अधिकारा अनुवर्तेरन्निति ।

शृतं पाके ।'२७॥ किं निपात्यते । श्राश्रप्योः शृभावः* । श्राश्र-प्योः शृभावो निपात्यते । क्षीरहविषोरिति वक्तव्यम् । शृतं क्षीरं शृतं हविः । क्व मा भूत् । श्राणायवागूः । श्रपितायवागूरिति । श्रपेः शृतमन्यत्र हेतोः * । श्रपेः शृतमन्यत्र हेतोरिति वक्तव्यम् । इह मा भूत् । श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति ।

---

तुकं तु विकरणैर्व्यवहितमङादयः स्वापेर्न विहिताः ।

न वशः । वशेर्यङीति । यथा स्वापेश्चङीत्यत्र ङिद्ग्रहणानुवृत्त्या चङीति प्रत्याख्या-तं तथेहापि ङिद्ग्रहणानुवृत्त्या ङिन्मात्रे प्रतिषेधइत्याशङ्कानिवारणाय वार्त्तिककारो यङ्ग्रहणानुवृत्तिमन्वाचष्टे । नैतदन्वाख्येयमिति । स्वापेश्चङीत्यत्र चङ्ग्रहणं कृतमेव । ततश्च ङितीत्यस्यनाधिकाराद्यङेव संबध्यते । अनन्तरत्वात् ।

शृतं पाके । श्राश्रप्योरिति । श्रा पाक इत्यदादौ पठ्यते । श्रै पाक इति भ्वादौ । घ-टादिषु तु मित्वार्थं श्रा पाक इति पठ्यते । आतिश्च कर्मकर्तृविषयस्य पचेरर्थे पच्यमा-नकर्तृकव्यापारे वर्तते । ततः पक्तृव्यापारे णिजुत्पद्यते । ततश्च पचतीति योर्थः स एव श्रपयतीति गम्यते । तत्र यदा श्रातेः क्त उत्पद्यते । तदाऽकर्मकत्वात् कर्तरि भवति श्रपेस्तु कर्मणि । शृतं क्षीरं स्वयमेव । शृतं क्षीरं देवदत्तेन । श्रपेः शृतमन्यत्र हेतोरिति । हेतुशब्देन प्रयोजकस्य हेतोर्व्यापारः प्रेषणादिलक्षण उपचाराद्गृह्यते तेनपक्तुर्यःप्रयोजकस्त-दीये व्यापारे पचिप्रकृतिणिजवाच्ये श्रपयतेरुत्पन्नस्य णिचोभिधेये क्षीरहविषोरपि शृत-मिति न भवति किं तु श्रपितमिति । तत्रश्राश्रप्योरिति वचनादाद्यपक्तृलक्षणप्रयोजक-व्यापाराङ्गीकरणादन्यत्र हेतोरित्यनेन पाचयितृलक्षणप्रयोजकव्यापारनिषेधः सामर्थ्या-दवसीयते । एतच्च पाकग्रहणाल्लभ्यते । द्विविधोहि पाको विक्लित्तिलक्षणो विक्लेदनाल-क्षणश्च । पाचयितृव्यापारे तु णिचि कृते पाचनालक्षणोर्थः प्राधान्येनाभिधीयते न तु पाकलक्षण इति निपातनाभावः ।

प्यायः पी ॥ २८॥ आङ्पूर्वादन्धूधसोः *। आङ्पूर्वादन्धूधसोरिति वक्तव्यम्। आपीनोन्धः। आपीनमूधः। किं प्रयोजनम्। नियमार्थम्। आङ्पूर्वादन्धूधसोरेव। क्व मा भूत्। आप्यानश्चन्द्रमा इति। उभयतो नियमश्चायं द्रष्टव्यः। आङ्पूर्वादेवान्धूधसोः। अन्धूधसोरेवाङ्पूर्वादिति। क्व मा भूत्। प्रप्यानोन्धः। प्रप्यानमूधः। आङ्पूर्वाच्चैष नियमो द्रष्टव्यः। भवति हि पीनं मुखं पीनाः शंवटाः। अन्नापीनमुखी कन्येति॥

विभाषा श्वेः॥ ३०॥ श्वेर्लिटाभ्यासलक्षणप्रतिषेधः*। श्वेर्लिटाभ्यासलक्षणं संप्रसारणं नित्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। शिश्वियतुः। शिश्वियुः। किमुच्यतेऽभ्यासलक्षणस्येति। न पुनः किल्लक्षणस्यापि। किल्लक्षणमपि हि नित्यमत्र प्राप्नोति। किल्लक्षणं श्वयतिलक्षणं बाधिष्यते। यथैव तर्हि किल्लक्षणं श्वयतिलक्षणं बाधते एवमभ्यासलक्षणमपि बाधेत। नब्रूमोऽपवादत्वात् श्वयतिलक्षणं किल्लक्षणं बाधिष्यत इति। किं तर्हि, परत्वात्। श्वयतिलक्षणस्यावकाशः। पिति वचनानि। शुशाव। शुशविथ। शिश्वाय। शिश्वयिथ। किल्लक्षणस्यावकाशोऽन्ये कितः। शूनः। शूनवान्। इहोभयं प्राप्नोति शिश्वियतुः शिश्वियुरिति। श्वयतिलक्षणं भवति विप्रतिषेधेन *। अभ्यासलक्षणादपि तर्हि श्वयतिलक्षणं भविष्यति विप्रतिषेधेन। अभ्यासलक्षणस्यावकाशोऽन्ये यजादयः। इयाज। उवाय। श्वयतिलक्षणस्यावकाशः परंधातुरूपम्। शुशुवतुः। शुशुवुः।

---

प्यायः पी। आङ्पूर्वाच्चेति। आङाश्रयणेन नियमद्वयविधानात्केवलस्य सर्वत्रपीभावः। आङ्पूर्वादेवान्धूधसोरित्यनेन नियमेन तुल्यजातीयत्वादुपसर्गान्तरं निवार्यते न तु केवलः प्यायतिः।

विभाषा श्वेः। लिटः कित्त्वाकित्त्वभेदेन द्वैविध्यादुभयत्र विभाषेयम्। तत्र संप्रसारणपक्षे कृते संप्रसारणस्य द्विर्वचनान्नास्ति वक्तव्यं संप्रसारणाभावपक्षे लिट्यभ्यासस्योभयेषामिति संप्रसारणं प्राप्नोतीति मत्वाह। श्वेर्लिटीति। यथैवेति। किल्लक्षणं नित्यं संप्रसारणं परत्वादियं विभाषा बाधते यथा तथाभ्यासलक्षणमपीति भावः। अन्ये यजादय इति। केषुचिदवयवेषु कृतं शास्त्रं समुदाये प्रवृत्तं भवति।

शुशविथ । श्वयतेरभ्यासस्योभयं प्राप्नोति । शिश्वियुः । श्वयतिलक्षणं भविष्यति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । नहि श्वयतेरभ्यासस्यान्ये ऽयजादयो ऽवकाशः । श्वयतेर्यजादिषु यः पाठः सोऽनवकाशस्तस्यानवकाशत्वादयुक्तो विप्रतिषेधः । तस्मात्सुष्ठूच्यते श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध इति ॥

ह्व. संप्रसारणम् ॥ ३२ ॥ अभ्यस्तस्य च ॥३३ ॥ ह्वः संप्रसारणे योगविभागः * ह्वः संप्रसारणे योगविभागः कर्तव्यः । ह्वः संप्रसारणं भवति णौ च संश्चङोः । ततो ऽभ्यस्तस्य च संप्रसारणं भवतीति । किमर्थो योगविभागः । णौचसंश्चङ्विषयार्थः * णौचसंश्चङ्विषये ह्वः संप्रसारणं यथा स्यात् । जुहावयिषति । अजूहवत् । किं पुनः कारणं न सिध्यति । ह्वोऽभ्यस्तस्येत्युच्यते । न चैतद् ह्वोऽभ्यस्तम् । कस्य तर्हि, ह्वाययतेः । ह्व एतदभ्यस्तम् । कथम् । एकाचो द्वे प्रथमस्येति । एवं तर्हि ह्वयतेरभ्यस्तस्येत्युच्यते । न चात्र ह्वयतिरभ्यस्तम् । कस्तर्हि ह्वाययतिः । ह्वयतिरेवात्राभ्यस्तम् । कथम् । एकाचो द्वे प्रथम-

---

नहि श्वयतेरिति । यजादीनामिति व्यवस्था वाच्यादिशब्दोपादानाद् यथापाठं सर्वेषां चोदितत्वात् कार्येण भाव्यम् । सर्वकार्यार्थश्च गणपाठ इति किति संप्रसारणं यजादिषु श्वयतिपाठस्यावकाश इत्यपि न शक्यते वक्तुम् ॥

ह्वः सं । ह्वः संप्रसारणे योगविभाग इति । इहैकमनेकं वा कार्यं विधातुं कालविच्छेदाभावेन निर्देशएकयोगः । तत्रैकस्मिन् योगे पठ्यमाने ऽव्याप्तिरिति योगविभागः कर्तव्यः । ह्वो ऽभ्यस्तस्येत्युच्यतइत्यभिहिते एवं तर्हि ह्वयतेरभ्यस्तस्येत्यादिकमर्थभेदाभावात्पुनरुक्तमित्याहुः । तत्र पौनरुक्त्यं परिहरति । जिह्वायकीयिषतीत्यादौ संप्रसारणं मा प्रवर्तिष्टेति ह्वयतेरर्थाव्यतिरेको रूपाव्यतिरेको वाश्रयितव्यस्तत्र पूर्वग्रन्थो ऽर्थव्यतिरेकाश्रय उत्तरस्तु रूपव्यतिरेकाश्रयः । इह हूयतेरर्थो यत्र न व्यतिरिच्यते यथा जुहाव जुहविथेति । तत्र संप्रसारणेन भाव्यम् । न त्वर्थव्यतिरेके । ह्वाययतौ च स्वार्थस्य प्राधान्याद्व्यतिरिक्तार्थो ह्वयतिरिति पूर्वपक्षः । न चैतदिति । अव्यतिरिक्तार्थस्येतिभावः । अव्यतिरिक्तार्थे त्वाश्रीयमाणे जुहूषतीत्यत्र न प्राप्नोति। प्रत्ययार्थस्येच्छायाः प्राधान्यात् प्रकृत्यर्थस्य गुणभावादिति मत्वाह । ह्व एतदिति । णिचि तर्हि युकि कृते रूपस्य व्यतिरिक्तत्वात्संप्रसारणप्राप्तिरिति मत्वाह । । एवं तर्हि ह्वयतेरिति । युगागमस्य तद्भक्ततया नास्ति रूपव्यतिरेक इत्याह । ह्वयतिरिति प्रकारान्तरेण संश्चङ् परेणावप्राप्तिमाह ।

स्येति । एवमप्यभ्यस्तनिमित्तेऽनभ्यस्तसंप्रसारणार्थम्*। अभ्यस्तनिमित्त इति वक्तव्यम्। किं प्रयोजनम् । अनभ्यस्तस्य संप्रसारणार्थम् । अनभ्यस्तस्य संप्रसारणं यथा स्यात्। जुहोहूयते । अभ्यस्तप्रसारणे ह्यभ्यासप्रसारणाप्राप्तिः*। अभ्यस्तप्रसारणे हि अभ्याससंप्रसारणस्याप्राप्तिः स्यात् । न संप्रसारणे संप्रसारणमिति प्रतिषेधः प्रसज्येत। ननु च व्यवहितत्वान्न भविष्यति। समानाङ्गे प्रसारणप्रतिषेधात् प्रतिषेधः * । समानाङ्गे प्रसारणप्रतिषेधात्प्रतिषेधः प्राप्नोति। समानाङ्गग्रहणं तत्र चोदयिष्यति। कृदन्तप्रतिषेधार्थं वा*। अभ्यस्तनिमित्त इति वक्तव्यम्। किं प्रयोजनम्। ह्वायकमिच्छति ह्वायकीयति। ह्वायकीयतेःसन् जिह्वायकीयिषति। स तर्हि निमित्तशब्द उपादेयः। नह्यन्तरेण निमित्तशब्दं निमित्तार्थोऽवगम्यते। अन्तरेणापि निमित्तशब्दं निमित्तार्थोऽवगम्यते। तद्यथा। दधि त्रपुसं प्रत्यक्षो ज्वरः । ज्वरनिमित्तमिति गम्यते। नड्वलोदकं पादरोगः । पादरोगनिमित्तमिति गम्यते । आयुर्वै घृतम् । आयुषो निमित्तमिति गम्यते । अथ वाऽकारो मत्वर्थीयः । अभ्यस्तमस्यास्तीत्ययमभ्यस्तोऽभ्यस्तस्येति । अथ वाऽभ्यस्तस्येति नैषा ह्वयतिसमानाधिकरणा षष्ठी । का तर्हि संबन्धषष्ठी । अभ्यस्तस्य यो ह्वयतिः । किं चाभ्यस्तस्य ह्वयतिः । प्रकृतिः । ह्वोऽभ्यस्तस्य प्रकृतेरिति । योगविभागस्तु कर्तव्य एव । नात्र ह्वयतिरभ्यस्तप्रकृतिः । किं तर्हि ह्वाययतिः ॥

---

एवमपीति । अनभ्यस्तस्येति । अकृतद्विर्वचनस्येत्यर्थः। व्यवहितत्वादिति । अवर्णहकाराभ्यां पूर्वो यण् व्यवहित इति तस्य संप्रसारणप्रतिषेधो न भविष्यतीत्यर्थः। तद्यथेति। ननु दृष्टान्तेषु विरुद्धपदसामानाधिकरण्याद्गौणार्थत्वं प्रतीयते। इह तु मुख्यार्थसंभवे कथं गौणस्य ग्रहणम्। लक्ष्यसंस्कारार्थत्वाल्लक्षणस्य तत्सिद्धये गौणस्याप्यर्थस्येहाङ्गीकरणाददोषः। अथ वेति। यौगिकत्वान्निमित्ते ऽभ्यस्तशब्दस्य गौणार्थत्वाभावः। ह्वयतिरेणाभ्यस्तशब्देनोच्यते न तु सनादिः प्रत्यय इति षष्ठीनिर्देशो न चोदनीयः। अभ्यस्तमस्मिन्नस्तीत्यधिकरणत्वेन ह्वयतिरेव निर्दिष्टः। प्रत्ययाभिधाने वा सप्तम्या स्थानेषष्ठी कृता। व्यधिकरणे वा षष्ठी। अभ्यस्तस्य सनादेः प्रकृतिर्यो ह्वयतिस्तस्येत्यर्थः। अभ्यस्तस्य यो ह्वयतिरिति। एवं चोभयप्रसङ्गे परत्वात्संप्रसारणे कृते द्विर्वचनमित्यदोषः। जिह्वायकीयिषतीत्यत्र तु न भवत्यभ्यस्तेन प्रत्ययविशेषणाच्चेपादभ्यस्तनिमित्ते प्रत्यये ऽनन्तरस्य ह्वयतेः संप्रसारणाभावादत एव सन्चङ्परे णौ न प्राप्नोतीति योगविभागः कर्तव्यः॥

अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्त्ताः ॥ ३६ ॥ अपस्पृधेथामिति किं निपात्यते । स्पर्धेर्लङ्यात्मनेपदानां मध्यमपुरुषस्य द्विवचने आथामि द्विर्वचनं संप्रसारणमकारलोपश्च निपात्यते । इन्द्रश्च विष्णो यदपस्पृधेथाम् । अस्पर्धेथामिति भाषायाम् । अपर आह । अपपूर्वात्स्पर्धेर्लङ्यात्मनेपदानां मध्यमपुरुषस्य द्विवचने आथामि संप्रसारणमकारलोपश्च निपात्यते । इन्द्रश्च विष्णो यदपस्पृधेथाम् । अपास्पर्धेथामिति भाषायाम् । श्राताः श्रितमिति किं निपात्यते । श्रीणातेः क्ते श्राभावश्रिभावौ निपात्येते । क्व पुनः श्राभावः । क्व वा श्रिभावः । सोमे श्राभावः अन्यत्र श्रिभावः । न तर्हीदानीमिदं भवति । श्रितः सोम इति । बहुवचने श्राभावः । न तर्हीदानीमिदं भवति । श्रिता नो ग्रहा इति । सोमबहुत्वे श्राभावः । अन्यत्र श्रिभावः ॥

न संप्रसारणे संप्रसारणम् ॥ ३७ ॥ किमर्थमिदमुच्यते । वचिस्वपियजादीनां च ग्रहादीनां च संप्रसारणमुक्तम् । तत्र यावन्तो यणः सर्वेषां प्राप्नोति । इष्यते च परस्य यथा स्यान्न पूर्वस्येति । तच्चान्तरेण यत्नं न सिध्यतीति न संप्रसारणे संप्रसारणम् । एवमर्थमिदमुच्यते । किमन्येप्येवंविधयो भवन्ति । अतो दीर्घो यञि सुपि चेति । घटाभ्याम् । अकारमात्रस्य दीर्घत्वं कस्मान्न भवति । अस्त्यत्र विशेषः । इयमत्र परिभाषोपतिष्ठते अलोन्त्यस्येति । ननु चेदानीमेतया परिभाषयेहापि शक्यमुपस्थातुम् । नेत्याह । नहि वचिस्वपि-

---

अपस्पृ । कस्यां चिच्छाखायामपस्पृधेथामित्येकं पदमाद्युदात्तं पठ्यते । पदद्वयं चान्यस्याम् । तत्र द्वितीयमाद्युदात्तम् । तदुभयमप्यनेन संगृह्यते । एकश्रुत्या स्वरसर्वनाम्ना पाठात् । तत्रैकपद्ये तिङ्ङतिङ इति निघातः प्राप्तो यद्वृत्तान्नित्यमिति प्रतिषिद्धः । ततोऽट्स्वरेणाद्युदात्तं पदं भवति । यदा द्वे पदे तदा निपातैर्यद्यदीति निघाते प्रतिषिद्धेतास्यनुदात्तेदिति लसार्वधातुकानुदात्तत्वे धातुस्वरेण स्पृधेथामिति पदमाद्युदात्तम् । तिङि चोदात्तवतीत्यपशब्दस्य निघातः । सोमबहुत्वइति । सोमस्यैव बहुत्वे श्राभाव इति नियमाश्रयणात्सोमादन्यत्रैकत्वेपि श्राभावः क्वचिद् दृश्यते ॥

न संप्र । किं तर्हीति । संप्रसारणनिमित्तं पूर्वत्वं संप्रसारणशब्देनोपचारादुच्यते । इ-

यजादीनां ग्रहादीनां चान्त्यो यणस्ति । एवं यर्ह्यनन्त्यविकारेऽन्त्य-सदेशस्येति । अन्त्यसदेशो यो यण् तस्य कार्यं भविष्यति । नैतस्याः परिभाषायाः प्रयोजनानि । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न सर्वस्य यणः संप्रसारणं भवतीति । यदयं प्यायः पीभावं शास्ति । कथं कृत्वा ज्ञापकम् । पीभाव एतत्प्रयोजनम् । आपीनोऽन्धुः । आ.पीनमूधः । एतद् रूपं यथा स्यादिति । यदि चात्र सर्वस्य यणः संप्रसारणंस्यात् । पीभाववचनमनर्थकं स्यात् । संप्रसारणे कृते संप्रसारणपरपूर्वत्वेइयोरिकारयोरेकादेशे सिद्धं रूपं स्यात् । आपीनोऽन्धुः। आपीनमूध इति । पश्यति त्वाचार्यः । न सर्वस्य यणः संप्रसारणं भवतीति । ततः प्यायः पीभावं शास्ति । नैतदस्ति ज्ञापकम् । सिद्धे हि विधिरारभ्यमाणो ज्ञापको भवति । न च प्यायः संप्रसारणेन सिध्यति । संप्रसारणे हि सत्यन्त्यस्य प्रसज्येत । एवमपि ज्ञापकमेव । कथम् । प्याय इति नैषा स्थानषष्ठी । का तर्हि विशेषणषष्ठी । प्यायो यणिति । तदेतज्ज्ञापयत्याचार्यो न सर्वस्य यणः संप्रसारणं भवतीति। यदयं प्यायः पीभावं शास्ति। एवमप्यनैकान्तिकमेतत्। एतावज्ज्ञाप्यते न सर्वस्य यणः संप्रसारणं भवतीति। तत्र कुत एतत् परस्य भविष्यति न पूर्वस्येति । उच्यमानेऽप्येतस्मिन्सूत्रे कुत एतत्परस्य भविष्यति न पूर्वस्येति । एकयोगलक्षणं खल्वपि संप्रसारणं तद्यदि तावत्परमभिनिर्वृत्तं पूर्वमप्यभिनिर्वृत्तमेव । प्रसक्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुं नाभिनिर्वृत्तस्य। या हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यात् । अथापि पूर्वमनभिनिर्वृत्तम् । परमप्यनभिनिर्वृत्तमेव । तत्र निमित्तसंश्रयो ऽनुपपन्नः न संप्रसारणे संप्रसारणमिति । नैष दोषः । यत्तावदुच्यते उच्यमाने ऽप्य तस्मिन् कुत एतत्परस्य भविष्यति न पूर्वस्येति । इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते । एतदेव ज्ञापयति परस्य भविष्यति न पूर्वस्येति । यदयं न संप्रसारणे संप्रसारणेसंप्रसारणमिति प्रतिषेधं शास्ति। यदप्युच्यते। एकयोगलक्षणं खल्वपि संप्रसारणं तद्यदि तावत्परमभिनिर्वृत्तं पूर्वमप्यभिनिर्वृत्तमेव । प्र-

सतस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुमिति। अस्तूभयोरभिनिर्वृत्तिः। न च वयं पूर्वस्य प्रतिषेधं शिष्मः। किं तर्हि। संप्रसारणाश्रयं यत् प्राप्नोति यस्य प्रतिषेधम्। ततः पूर्वत्वे प्रतिषिद्धे यणादेशेन सिद्धम्। यदप्युच्यते। अथापि पूर्वमनभिनिर्वृत्तं परमप्यनभिनिर्वृत्तमेव तत्र निमित्तसंश्रयो ऽनुपपन्न इति। तादर्थ्यात्ताच्छब्द्यं भविष्यति। तद्यथा। इन्द्रार्था स्थूणा इन्द्र इति। एवमिहापि संप्रसारणार्थं संप्रसारणम्। तत्र यत्प्रसारणार्थं प्रसारणं तस्मिन् प्रतिषेधो भविष्यति। अथ संप्रसारणप्रकरणे वर्तमाने पुनः संप्रसारणग्रहणं किमर्थम्। संप्रसारणप्रकरणे पुनः संप्रसारणं ग्रहणमतो ऽन्यत्र प्रकरणप्रतिषेधार्थम् *। संप्रसारणमिति वर्तमाने पुनः संप्रसारणग्रहणे एतत् प्रयोजनं विदेशस्थमपि यत् संप्रसारणं तत्रापि प्रतिषेधो यथा स्यात्। व्ययो लिटि विव्यथे। नैतदस्ति प्रयोजनम्। हलादिः शेषापवादोऽत्र संप्रसारणम्। इदं तर्हि श्वयुवमघोनामतद्धिते। यूना। यूने। उच्यमानेऽप्येतस्मिन्न सिध्यति। किं कारणम्। उकारेण व्यवधानात्। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव। एवं तर्हि समानाङ्गग्रहणं च *। समानाङ्गग्रहणं च कर्तव्यम्। न संप्रसारणे संप्रसारणं समानाङ्ग इति वक्तव्यम्। तत्रोपोषुषि दोषः। तत्रोपोषुषि दोषो भवति। उपोषुषा। उपोषुषि। न वा यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन्। प्राप्तिप्रतिषेधात् *। न वा एष दोषः। किं कारणम्। यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन् द्वितीयाया प्राप्तिः सा प्रतिषिध्यते। अत्र च वसिः कसावङ्गम्। कसन्तं पुनर्विभक्तौ। अथ वा यस्याङ्गस्य प्रसारणप्राप्तिरित्यनेन किं क्रियते। यावद् ब्रूयात् प्र-

---

हलादिः शेषापवाद इति। उत्सर्गसदेशस्यापवादो भवतीति परस्यैव संप्रसारणं भवति न पूर्वस्य। एकादेशेऽकृते इति। परं प्रत्यादिवद्भावात्। उपोषुषेति। उपपूर्वाद्वसेर्भाषायां सदवसश्रुव इति क्वस्वादेशविधानाद्भूतसामान्ये लिडनुमीयते तस्य क्वसुर्वचिस्वपीति संप्रसारणम्। द्विर्वचनमकः सवर्णे दीर्घः। वस्वेकाजाद्घसामितीट्। शासिवसीति षत्वम्। तृतीयैकवचनम्। वसोः संप्रसारणमिति संप्रसारणम्। वलादित्वाभावादिडभावः। अथ

सक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुमिति। अत्र च यदा वसेर्न तदा क्वसोः। यदा च क्वसोरभिनिर्वृत्तं तदा वसेर्भवति। अथ वा यस्याङ्गस्य प्रसारणप्राप्तिरित्यनेन किं क्रियते यावद् ब्रूयादसिद्धं बहिरङ्गमन्तरङ्ग इति। असिद्धत्वाद्बहिरङ्गलक्षणस्य वसुसंप्रसारणस्यान्तरङ्गलक्षणः प्रतिषेधो न भविष्यति। ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि*। ऋचि त्रेः संप्रसारणं कर्तव्यम्। उत्तरपदादिलोपश्छन्दसि वक्तव्यः। तृचं सूक्तम्। तृतं साम। छन्दसीति किम्। त्र्यृचानि। रयेर्मतौ बहुलम्*। रयेर्मतौ संप्रसारणं बहुलं वक्तव्यम्। आरेवानेतु नो विशः। न च भवति रयिमान्पुष्टिवर्धनः। कक्ष्यायाः संज्ञायाम् *। कक्ष्यायाः संज्ञायां मतौ संप्रसारणं कर्तव्यम्। कक्षीवन्तं य औशिजः। काक्षः कक्षीवान्। संज्ञायामिति किमर्थम्। कक्ष्यावान् हस्ती॥

वस्वास्यान्यतरस्यां किति॥३७॥ वस्वास्यग्रहणं शक्यमकर्तुम्। अन्यतरस्यां किति वेञो न संप्रसारणं भवतीत्येव सिद्धम्। कथम्। प्रसारणे कृते उवङादेशे च द्विर्वचनम्। सवर्णदीर्घत्वम्। तेन सिद्धम्। ववतुः। ववुः। ऊवतुः। ऊवुः। वयेरपि नित्यं यकारस्य प्रतिषेधः संप्रसारणस्य। ऊयतुः। ऊयुः। चैशब्दश्चेह साध्यम्। तच्चैवं सति सिद्धं भवति। यद्येवं ववौ ववियेति न सिध्यति। स्यपि चेत्यनेन चकारेण लिड्प्यनुकृष्यते। तस्मिन्नित्येव संप्रसारणप्रतिषेधे प्राप्ते किति विभाषा आरभ्यते॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

---

समानाङ्गग्रहणाद्वचिस्वपीति संप्रसारणस्य निषेधप्रसङ्गः। तृचमिति। तिस्र ऋचो ऽस्मिन्निति समासः। ऋक्पूरब्धूरिति समासान्तः। कक्ष्याया इति। आसन्दीवदष्ठीवदित्यत्र कक्षीवच्छब्दस्य निपातनाद्वार्तिकं नारब्धव्यम्।

वस्वास्यान्यतरस्याम्। अन्यतरस्यां किति वेञ इति सूत्रं कर्तव्यम्। तत्र लिटीत्यनुवर्तनात्किति लिटि वेञः संप्रसारणविकल्पे सत्यकिति लिटिस्यपि चेति चकारेण लिटोनुकर्षणात् संप्रसारणनिषेधात् सर्वेष्टसिद्धिरिति भाष्यार्थः॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

आदेच उपदेशे ऽशिति ॥ ४५ ॥ कथमिदं विज्ञायते । एज्य उपदेश इति । आहो स्विदेजन्तं यदुपदेश इति । किं चातः । यदि विज्ञायते एज्य उपदेश इति । ढौकिता । त्रौकिता । अत्रापि प्राप्नोति । अथ विज्ञायते एजन्तं यदुपदेश इति न दोषो भवति । ननु चैजन्तं यदुपदेश इत्यपि विज्ञायमाने अत्रापि प्राप्नोति । एतदपि हि व्यपदेशिवद्भावेनैजन्तं भवत्युपदेशः । अर्थवता व्यपदेशिवद्भावः । ननु चैज्य उपदेश इत्यपि विज्ञायमाने न दोषो भवति । अशितीत्युच्यते । न चात्राशितं पश्यामः । ननु च ककार एवाशित् । न च ककारे भवितव्यम् । किं कारणम् । नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते । तथा ह्यर्थो गम्यते लोके । अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमानयति नासौ लोष्टमानीय कृती भवति । एवमिहापि शितिप्रतिषेधादन्यस्मिन्नशिति शित्सदृशे कार्यं विज्ञास्यते । किं चान्यदशिच्छित्सदृशम् । प्रत्ययः । इदं तर्हि । ग्लै ग्लानीयम् । वेञ् । वानीयम् । शो निशानीयम् । परत्वादायादयः प्राप्नुवन्ति । ननु चैजन्तं यदुपदेशइत्यपि विज्ञायमाने परत्वादायादयः प्राप्नुवन्ति । सन्तु । आयादिषु कृतेषु स्थानिवद्भावादेज्ग्रहणेन ग्रहणात्पुनरात्वं भ-

---

आदेच उपदेशे ऽशिति । कथमिदमिति । यदोपदेशशब्देन करणसाधनेन शास्त्रमुच्यते तदा विशेष्यस्यानुपादानादेव नास्ति तदन्तविधिरित्ययं पक्षो भवति एज्य उपदेश इति । यदा तु कर्मसाधन उपदेशशब्द उपदिश्यमानार्थवाची षष्ठ्यर्थे च सप्तमी तदा उपदेशस्यैव विशेषणात्तदन्तविधौ सत्ययं पक्षो भवति एजन्तं यदुपदेश इति । समुदायश्च ग्लैप्रभृति प्राधान्येनोपदिश्यते । धातुसंज्ञाद्यर्थो नान्तरीयकत्वेन त्ववयवः । एतदपीति। उपदेशोप्ययमौकारो भवति नान्तरीयकत्वादवयवानामुपदेशादित्युक्तत्वात् । अर्थवतीति। यः शब्दोर्थवांस्तदर्थोपादानपरित्यागाभ्यां व्यपदेशिवद्भावो भवति बुद्ध्या नानात्वकल्पनाद्यथैयायेतीण एकाज्व्यपदेशः । लोकेपि स्थूलशिरा राहुरिति शिरोमात्रस्य समुदायस्यार्थक्रियाकरणाद्भेदविवक्षया व्यपदेशो भवति । न त्वनर्थके छिन्ने देवदत्तशिरसि स्थूलशिरा अयं देवदत्त इति व्यपदेशः प्रवर्तते । आद्यन्तवदेकस्मिन्नित्यतिदेशोपि न प्रवर्तते ऽसहायत्वाभावादौकारस्य । इदं तर्हीति । एज्य उपदेश इत्यस्मिन् पक्षे दोषोद्भावनम् । परत्वादिति । पर्युदासपक्षे समानाश्रयत्वादात्वस्यायादीनां चानित्यत्वाच्च तेषां वि-

विष्यति। ननु चैज्य उपदेश इत्यपि विज्ञायमाने परत्वादायादिषु कृतेषु स्थानिवद्भावादेज्ग्रहणेन ग्रहणादात्वं भविष्यति। अनल्विधौ स्थानिवद्भावः। अल्विधिश्चायम्। एवं तर्हि एजन्तं यदुपदेश इत्यपि विज्ञायमाने कृतः हूतवानित्यत्रापि प्राप्नोति। भवत्येवात्रात्वम्। अथवा कस्मान्न भवति। पूर्वत्वमस्य भवति। न सिध्यति। इदमिह संप्रधार्यमात्वं क्रियतां पूर्वत्वमिति। किमत्र कर्तव्यम्। परत्वात्पूर्वत्वम्। एवं तर्हीदमिह संप्रधार्यमात्वं क्रियतां संप्रसारणमिति। किमत्र कर्तव्यम्। परत्वादात्वम्। नित्यं संप्रसारणम्। कृतेप्यात्वे प्राप्नोत्यकृतेपि। आत्वमपि नित्यम्। कृतेपि संप्रसारणे प्राप्नोत्यकृतेपि। अनित्यमात्वम्। नहि कृते संप्रसारणे प्राप्नोति। किं कारणम्। अन्तरङ्गं पूर्वत्वम्। तेन बाध्यते। यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्। न च संप्रसारणमेवात्वस्य निमित्तं विहन्ति। अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम्। उभयोर्नित्ययोः परत्वादात्वे कृते संप्रसारणम्। संप्रसारणे संप्रसारणपूर्वत्वं कार्यंकृतत्वात्पुनरात्वं न भविष्यति। अथापि कथं चिदात्वमनित्यं

---

प्रतिषेधोपपत्तिः। अल्विधिश्चायमिति। नन्वेजन्तं यदुपदेश इत्यत्रापि पक्षे आत्वमल्विधि रेव गुणभूतालाश्रयस्याप्यल्विधित्वेनाश्रयणात्तथा च प्रपठ्येत्यादाविडभावः। नैतदस्ति। एजन्तस्यात्वं भवतीत्येवं विज्ञायमाने स्यादात्वमल्विधिः। यदा त्वेवं व्याख्यायते उपदेशे यदेजन्तं दृष्टं तस्यात्वं भवतीति तदात्वस्याल्विधित्वाभावः। एज्यउपदेशे तस्यात्वमित्यत्र तु पक्षे एचः स्थानित्वेनोपादानादात्वस्याल्विधित्वादायादिषु कृतेषु स्थानिवत्त्वाभावादप्राप्तिः। नन्वायादिषु कृतेष्वलोन्त्यस्यात्वे कृते यद्यपि ग्लानीयमित्यादि सिध्यति। तथापि जग्लतुरित्यादि न सिध्यति। यकारस्यात्वे कृते पूर्वेण सहैकादेशश्च प्राप्नोति लोपश्च तत्र यद्यपि वर्णाश्रयत्वादेकादेशोन्तरङ्गस्तथापि वार्णादाङ्गं बलवदित्याकारलोप प्राप्नोति। यथा आह्वः प्रह्व इत्यादौ। तत्राकारलोपस्य स्थानिवद्भावादसिद्धवदत्राभादित्यसिद्धत्वाच्च पूर्वस्याकारस्य लोपो न प्राप्नोति। एवं तर्हि वार्णादाङ्गं बलवदित्यनाश्रित्येदमुक्तम्। अत एवात्र परिहारे ऽसमासाख्यासादश्नितीति ज्ञापकादायादय आत्वं न बाधन्त इति सिद्धान्तो भविष्यति। कृत इति। ह्वेञः संप्रसारणादिषु कृतेषूपदेशएजन्तत्वादुत्तरकालमसत्यप्येजन्तत्वेऽलोन्त्यस्येति वचनादूकारस्यात्वप्रसङ्गः। भवत्येवेति। प्रागेवसंप्रसारणादिति भावः। इतरस्तु पश्चादात्वमनेनोक्तमिति मत्वाह। अथवेति। अथापीति

स्यात् । एवमपि न दोषः । उपदेशग्रहणं न करिष्यते । यदि तन्न क्रियते चेता स्तीतेत्यत्रापि प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति । न परनिमित्तकस्यात्वं भवतीति । यदयं क्रीङ्जीनां णावित्यात्वं शास्ति । नैतदस्ति ज्ञापकम् । नियमार्थमेतत्स्यात् क्रीङ्जीनां णावेवेति । यत्तर्हि मीनातिमीनोतिदीङां ल्यपि चेत्यचैज्ग्रहणमनुवर्तयति । इह तर्हि, ग्लौ ग्लानीयम् । ग्ले । ग्लानीयम् । शो । निशानीयम् । परत्वादायादयः प्राप्नुवन्ति । अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति नायादय आत्वं बाधन्त इति यदयमशितीति प्रतिषेधं शास्ति । यदि हि बाधेरन् । शित्यपि बाधेरन् । तत्राशित्करणमनर्थकं स्यात् । अथ वा । पुनरस्तु एज्य उपदेश इति । ननु चोक्तं ग्लै ग्लानीयम् ग्लै ग्लानीयम् वेञ् वानीयम् शो निशानीयम् । परत्वादायादयः प्राप्नुवन्ति । अत्रापि शित्प्रतिषेधो ज्ञापकः नायादय आत्वं बाधन्त इति । आत्वएच्युपसंख्यानम् * । आत्वे एच्युपसंख्यानं कर्तव्यम् । जग्ले मम्ले । अशितीति प्रतिषेधः प्राप्नोति । नैष दोषः । नैवं विज्ञायते शकार इत् यस्य सोयं शित् न शित् अशिदशितीति । कथं तर्हि शकारः इत् शित् न शित् अशित् अशितीति । यद्येवम् स्तनंधयइत्यत्रापि प्राप्नोति । अत्रापि शब् शिद्भवति । किं पुनरयं पर्युदासो यदन्यच्छित इति । आहोस्वित् प्रसज्यायं प्रतिषेधः शिति नेति ।

---

यदि यस्य लक्षणान्तरेणेति नाश्रीयत इति भावः । उपदेशग्रहणमिति । उपदेशग्रहणात् संप्रसारणादिषु कृतेष्वात्वप्रसङ्गान्न कर्तव्यम् । अकृते च तस्मिन्नेजन्तस्यात्वं भवतीति सूत्रार्थाश्रयणादात्वस्याल्विधित्वात् स्थानिवत्त्वाभावात् संप्रसारणादिषु कृतेष्वप्रसङ्गः । शित्यपि बाधेरन्निति । ततश्च ग्लायतीत्यादीनां सिद्धत्वादशितीति प्रतिषेधोनर्थकः स्यात्तस्मात् पूर्वविप्रतिषेधेनात्वं भवतीति ज्ञायते । न त्वशितीत्यस्यान्यत् प्रयोजनमस्ति द्यतिस्यतीत्यादौ हलादावात्वं मा भूत् । नैतदस्ति । ओतः श्यनीत्योकारलोपविधानादात्वं श्यनि न भवतीति ज्ञायते । शकार इदिति । तत्रेता शकारेण प्रत्ययस्याक्षेपाद्यस्मिन्विधिस्तदादावल्ग्रहण इति परिभाषोपस्थानात् शिदादावात्वनिषेधादेश्यात्वं भवत्येव । यद्ययं स्तनंधय इति । विकरणोच्चरूपविशेषाभावात्प्रयोजनाभावान्न भवतीति मन्यते । अत्रापि शबिति । आत्वनिवृत्तिरेव शपः प्रयोजनम् । किं पुनरिति । तत्र

कस्माच्च विशेषः। अशित्येकादेशे प्रतिषेध आदिवत्त्वात् *। अशित्येकादेशे प्रतिषेधो वक्तव्यः। ग्लायन्ति। म्लायन्ति। किं कारणम्। आदिवत्त्वात्। शिदशितोरेकादेशो ऽशित आदिवत्स्यात्। अस्त्यन्यच्छित इति कृत्वा आत्वं प्राप्नोति। प्रत्ययविधिश्च न सिध्यति। सुग्लः। सुम्लः। आकारान्तलक्षणः प्रत्ययविधिर्न प्राप्नोति। अनिष्टे प्रत्यये ऽवस्थिते आत्वम्। अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत। अभ्यासरूपं च *। अभ्यासरूपं च न सिध्यति। जग्लौ। मम्लौ। इवर्णाभ्यासता प्राप्नोति। अयवायावां प्रतिषेधश्च *। अयादीनां च प्रतिषेधो वक्तव्यः। ग्लै ग्लानीयम्। म्लै म्लानीयम्। शो निशानीयम्। वेञ् वानीयम्। परत्वादायादयः प्राप्नुवन्ति। अस्तु तर्हि प्रसज्य प्रतिषेधः। शिति नेति। शिति प्रतिषेधे श्लुलुकोरुपसंख्यानम् * ररीध्वम्। शिशीते। वाध्वम्। शिति प्रतिषेधे श्लुलुकोरुपसंख्यानं कर्तव्यम्। दिवो नो वृष्टिं मरुतो ररीध्वमिति। वाध्वं नो देवा निजुरो वृकस्य। शिशीते शृङ्गे रक्षसे विनिक्षे। नैष दोषः। इह तावद्दिवो नो वृष्टिं मरुतो ररीध्वमिति। नैतद्रै इत्यस्य रूपम्।

---

पर्युदासे एकवाक्यत्वम् उत्तरपदार्थेन नञः संबन्धात् समर्थसमासः। उत्तरपदार्थसदृशं वस्त्वन्तरं समासार्थः। प्रसज्यप्रतिषेधे तु विधिनिषेधलक्षणार्थद्वयविधानाद्वाक्यभेदो नञः क्रियया संबन्धादसमर्थसमासः। स चाकर्त्तरि च कारक इति कारकग्रहणेन ज्ञापितः। ग्लायन्तीति। लावस्थायामेवकृतेषु तिबादिष्वात्वं न प्रवर्तते। ग्लैप्रभृतीनामेजन्तानामुपदेशसामर्थ्यादशितीति वचनसामर्थ्याद्वा। पाघ्राध्माधेट्दृशः श इत्येषो ऽशितीति वचनस्यावकाश इति चेन्नैकमुदाहरणमशिद्ग्रहणं प्रयोजयति। अन्यथा ऽश इति ब्रूयात्। अथ वा। नित्यत्वान्तरङ्गत्वाभ्यां पूर्वं तिबादयो भवन्ति। तेषु नित्यत्वाच्छब्भवति। ततो ऽकारयोः पररूपएकादेशे कृते तस्य परं प्रत्यादिवद्भावादात्वप्रसङ्गः। लग्ले इति। एशि परत आत्वं तस्य द्विर्वचने ऽचीति स्थानिवद्भावाद् ग्लैशब्दस्य द्विर्वचने कृते चा ऽभ्यासइवर्णान्तता स्यात्। ररीध्वमिति। रैशब्द इत्यस्मात् लोटो व्यत्ययेनात्मनेपदम्। ध्वंशपो बहुलं छन्दसीति श्लुः। तत्र प्रसज्यप्रतिषेधश्चात्वं न प्राप्नोति। शबाश्रयप्रतिषेधप्रसङ्गात्। पर्युदासे तु ध्वमाश्रयमात्वं भवति। श्लौ द्विर्वचनम्। ईहल्यघोरितीत्वम्। शिशीतइति। श्यतेर्लटो व्यत्ययेनात्मनेपदम्। शपस्य श्लुः। तस्य द्विर्वचनम्। अभ्यासस्य बहुलं छन्दसीतीत्वम्। ईहल्यघोरितीत्वम्। वाध्वमिति। वैङ् पालने। लो-

कस्य तर्हि, रातेर्दानकर्मणः । शिशीते शृङ्गे इति । नैतत् श्यतेरूप-
म् । कस्य तर्हि । शीङः । श्यत्यर्थो वै गम्यते । कः पुनः श्यतेरर्थः ।
श्यतिर्निशाने वर्तते । शीङपि श्यत्यर्थे वर्तते । कथं पुनरन्यो ना-
मान्यस्यार्थे वर्तते । बह्वर्था अपि धातवो भवन्ति । तद्यथा । वपिः
प्रकिरणे दृष्टः छेदने चापि वर्तते । केशान्वपतीति । ईडिः स्तुति-
चोदनायाच्ञासु दृष्टः । प्रेरणे चापि वर्तते । अग्निर्वा इतो वृष्टिमी-
ट्टे, मरुतो मुतश्च्यावयन्ति । करोतिरभूतप्रादुर्भावे दृष्टः । निर्मली-
करणे चापि वर्तते । पृष्ठं कुरु पादौ कुरु उन्मृदा नेति गम्यते ।
निःक्षेपणे चापि वर्तते घटे कुरु कटे कुरु अश्मानमितः कुरु स्था-
पयेति गम्यते । सर्वेषामेव परिहारः । शितीत्युच्यते । न चात्र शितं-
पश्यामः । प्रत्ययलक्षणेन । न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषे-
धः । चाध्वमिति । लुङेव व्यत्ययेन भविष्यति । अथ वा पुनरस्तु पर्युदासः ।
ननु चोक्तमशित्येकादेशे प्रतिषेधश्चादिवत्त्वादिति । नैष दोषः । एका-
देशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानम् । यदपि प्रत्य-
यविधिरिति । आचार्यप्रवृत्तिर्ज्ञापयति । भवत्येजन्तेभ्य आकारान्त-
लक्षणः प्रत्ययविधिरिति । यदयं ह्वावामश्चेत्यणं कबाधनार्थं शास्ति ।
यदप्यभ्यासरूपमिति । प्रत्याख्यायते स योगः । अथापि क्रियते । एव-
मपि नदोषः । कथम् । लिटीत्यनुवर्तते । द्विलकारकश्चायं निर्देशः लि-
टि लकारादाविति । एवं च कृत्वा सोप्यदोषो भवति । यदुक्तमात्वएशु-
पसंख्यानमिति । यदप्युक्तमयवायावां प्रतिषेधश्चेति । शिति प्रतिषे-
धो ज्ञापको नायादय आत्वं बाधन्त इति । प्रातिपदिकप्रतिषेधः* ।

---

ट् । ध्वम् । शपो बहुलं छन्दसीति लुक् । श्यत्यर्थं इति । वृषभः शृङ्गे तीक्ष्णीकरोति ।
रक्षसे रक्षोर्थं विनिक्षे विनिपातनायेत्यर्थः । चाध्वमिति । लोडर्थे व्यत्ययेन लुङ् ध्वं-
धिचेनि सलोपः । बहुलं छन्दस्यमाङ्योगेपीति अडभावः । यदयमिति । आत्वभाविन
एजन्तादाकारान्तनिमित्तकः । प्रत्ययो ज्ञाप्यते सर्वो ह्वावामश्चेत्यणा पुनः । प्रत्याख्या-
यते इति । द्विर्वचनेचीत्ययं योगः पूर्वविप्रतिषेधाश्रयेण प्रत्याख्यायते । तत्प्रत्याख्याना-
त् स्थानिवत्त्वाभावः । द्विलकार इति । लिटि वयो य इत्यत्र द्विलकारको निर्देशस्तत्र
च द्वितीयस्य लकारस्य प्रयोजनाभावादिहार्थत्वं विज्ञायते । लावस्थायामेव लिट्यात्वं न
त्वनादाविति स्थानिवत्त्वाभावाज्जग्लइत्यादि सिध्यति । प्रातिपदिकप्रतिषेध इति । उ-

प्रातिपदिकानां प्रतिषेधो वक्तव्यः। गोभ्याम्। गोभिः। नौभ्याम्। नौभिः। स तर्हि वक्तव्यः। न वा वक्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति न प्रातिपदिकानामात्वं भवतीति। यदयं रायो हलीत्यात्वं शास्ति। नैतदस्ति ज्ञापकम्। नियमार्थमेतत्स्यात्। रायो हल्येवेति। यत्तर्हि औतोम्शसोरित्यात्वं शास्ति। एतस्याप्यस्ति वचने प्रयोजनम्। अमि वृद्धिबाधनार्थमेतत्स्यात्। शसिप्रतिषेधार्थं च। तस्मात् प्रातिपदिकानां प्रतिषेधो वक्तव्यः। धात्वधिकारात् प्रातिपदिकस्याप्राप्तिः। धात्वधिकारात् प्रातिपदिकस्यात्वं न भविष्यति। धातोरिति प्रकृतम्। क्व प्रकृतम्। लिटि धातोरनभ्यासस्येति। अथापि निवृत्तम्। एवमप्यदोषः। उपदेश इत्युच्यते। उद्देशश्च प्रातिपदिकानां नोपदेशः॥

क्रीङ्जीनां णौ ॥ ४८ ॥ आत्वे णौ लीयतेरुपसंख्यानं प्रलम्भनशालीनीकरणयोः *। आत्वे णौ लीयतेरुपसंख्यानं कर्तव्यम्। प्रलम्भनशालीनीकरणयोः। किं प्रयोजनम्। प्रलम्भने चार्थे शालीनीकरणे च नित्यमात्वं यथा स्यात्। प्रलम्भने तावत्। जटाभिरालापयते। श्मश्रुभिरालापयते। शालीनीकरणे। श्येनो वर्तिकामुल्लापयते। रथी रथिनमपलापयते॥

---

णादीनां व्युत्पत्तिपक्षे गमेर्डोर्ग्लानुदिभ्यां डावित्यादावुपदेशे भवत्ययमैच्। एजन्तोवाऽर्थवत्त्वादुपदेशिवद्भावादिति भावः। अमि वृद्धिबाधनार्थमिति। गां पश्येत्यत्र गोतो णिदिति णित्वे वृद्धिप्रसङ्गात्। गाः पश्येत्यत्राशितीत्यात्वाप्रसङ्गः। उद्देशश्चेति। उणादयोव्युत्पन्नानि प्रातिपदिकानीति भावः। एतस्मात् कृकमिकंसेत्यत्र कंसशब्दस्य भेदेनोपादानाद्विज्ञायते। उणादयो बहुलमित्यस्य तु सूत्रस्योदाहरणप्रदर्शनायोणादिपाठ इत्युणादीनामुपदेशाभावः। ननु गवादिभ्यो यदित्यत्र गवादिगणे गो हविस् अष्टकीत गोशब्दस्यास्त्युपदेशः। तथा नौवयोधर्मेत्यत्र नौशब्दस्य। नैष दोषः। अर्थवदिति प्रातिपदिकसंज्ञाविधानाल्लब्धसाधिमानः। प्रत्ययविधानाय परार्था गवादय उपात्ताः। येषां तु स्वरूपज्ञानायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः॥

क्रीङ्जीनां णौ। आत्वे णाविति। विभाषा लीयत इति विकल्पे प्राप्ते नित्यार्थं वचनम्। संमानने तु विकल्प एव भवति। अन्ये त्वाहुः। प्रलम्भनशालीनीकरणग्रहणमात्मनेपदविषयोपलक्षणार्थमिति संमाननेऽपि नित्यमात्वं भवति।

सिध्यतेरपारलौकिके ॥ ४९॥ सिध्यतेरज्ञानार्थस्य *। सिध्यतेरज्ञानार्थस्येति वक्तव्यम्। इतरथा ह्यनिष्टप्रसङ्गः। अपारलौकिक इत्युच्यमानेऽनिष्टं प्रसज्येत। अन्नं साधयति। ब्राह्मणेभ्यो दास्यामीति। अस्ति पुनरयं सिध्यतिः क्व चिज् ज्ञानार्थे वर्तते। अस्तीत्याह। तपस्तापसं सेधयति। ज्ञानमस्य प्रकाशयतीत्यर्थः। स्वान्येवैनं कर्माणि सेधयन्ति। ज्ञानमस्य प्रकाशयन्तीत्यर्थः॥

मीनातिमिनोतिदीङां ल्यपि च॥ ५०॥ मीनात्यादीनामात्वे उपदेशवचनं प्रत्ययविध्यर्थम् *। मीनात्यादीनामात्वउपदेशिवद्भावो वक्तव्यः। उपदेशावस्थायामात्वं भवतीति वक्तव्यम्। किं प्रयोजनम्। प्रत्ययविध्यर्थम्। उपदेशावस्थायामात्वे कृते इष्टः प्रत्ययविधिर्यथा स्यात्। के पुनः प्रत्यया उपदेशिवद्भावं प्रयोजयन्ति। काः। कास्तावन्न प्रयोजयन्ति। किं कारणम्। एच इत्युच्यते। न च के-

---

सिध्यते। परलोकःप्रयोजनमस्येति पारलौकिकम्। प्रयोजनमितिठञ्। अनुशतिकादीनां चेत्युभयपदवृद्धिः। धात्वर्थोपाधिरयं न चेत्सिध्यतिरदृष्टफलेऽर्थे वर्तते तदा तस्यात्वं भवति। सिध्यतेरज्ञानार्थस्येति। सांकाश्ये सिद्ध इत्यादौ सिध्यतिर्ज्ञानार्थः प्रयुज्यते। सांकाश्ये ज्ञायतइत्यर्थावगमात्। इह तु ज्ञायमानकर्तृकार्थवृत्तिः सिध्यतिरिति प्रतिषेधो न भवति। राजकुले देवदत्तं साधयतीति। ज्ञातृव्यापारवृत्तेस्त्वात्वं निषिध्यते। तत्रैव ज्ञानस्य मुख्यत्वात् सिध्यति तापसः। आविर्भूतज्ञानलक्षणप्रकाशो भवतीत्यर्थः। तपः सेधयतीति। ज्ञानपूर्विकायां तु संपत्तौ यो वर्तते तत्र ज्ञानस्य गुणभावात् प्रतिषेधाभावो राजकुले देवदत्तं साधयतीति। अन्नं साधयतीति। ननु ब्राह्मणेभ्यो दास्यामीति वाक्यात् पारलौकिकत्वं गम्यते न तु पदात् धात्वर्थस्तन्निष्पत्तिमात्रम् अन्नं निष्पादयतीत्यर्थावगमादितिप्रतिषेधो न भविष्यति। नैतदस्ति। तपस्तापसं सेधयतीत्यत्रापि पदान्तरसंनिधानात्सिद्धार्थस्य पारलौकिकत्वं प्रतीयतइति सर्वत्र वाक्यगम्यत्वात् पारलौकिकत्वस्य प्रतिषेधप्रसङ्गः। वार्तिककारेण सूत्रार्थ एव व्याख्यात इत्याहुः। अन्नं साधयतीत्यत्र दृष्टमेवान्नलक्षणं फलं सिद्धार्थस्येति निषेधो न भवति हेयोपाधेयतत्त्वप्रत्ययस्वीकारलक्षणं तु ज्ञानं पारलौकिकमिति तत्रैव प्रतिषेधः प्रवर्तते॥

मीनाति। उपदेशवचनमिति। आद्युच्चारणे ऽनुत्पन्नएव प्रत्ययआत्वं कर्त्तव्यमित्यर्थः। भाष्यकारस्त्वेनमेवार्थमन्यथा व्याचष्टे। उपदेशिवद्भावो वक्तव्य इति। उपदेशिन आकारान्ता यावाप्रभृतय आकारान्ता निमित्तप्रत्ययप्रकृतित्वं यथा प्रतिपद्यन्ते। त-

च्येजस्ति। याघञ्युज्विधयस्तर्हि प्रयोजयन्ति। या अवदायः। आत इति याः सिद्धो भवति। घञ् अवदायो वर्तते। आत इति घञ् सिद्धो भवति। किं च भोः आत इति घञुच्यते। न खल्वप्यात इत्युच्यते। आतस्तु विज्ञायते। कथम्। अविशेषेण घञुत्सर्गः। तस्य इवर्णान्तादुवर्णान्ताच्चाजयावपवादौ। तत्रोपदेशावस्थायामात्वे कृते अपवादस्य निमित्तं नास्तीति कृत्वा उत्सर्गेण घञ् सिद्धो भवति। एवं च कृत्वा न च आत इत्युच्यते। आतस्तु विज्ञायते। युच्। ईषदवदानम्। स्ववदानम्। आत इति युच् सिद्धो भवति। इदं विप्रतिषिद्धम्। एच उपदेश इति। यद्येचः। नोपदेशे। अथोपदेशे। नैचः। एचश्चोपदेशे चेति विप्रतिषिद्धम्। नैतद्विप्रतिषिद्धम्। आहायमेच उपदेश इति यद्येचो नोपदेशेऽथोपदेशे नैचः। ते वयं विषयं विज्ञास्यामः। एज्विषय इति। तत्तर्हि उपदेशग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। आदेच उपदेशेऽशितीति। तद्वै प्रकृतिविशेषणम्। विषयविशेषणेन चेहार्थः। न चान्यार्थं प्रकृतमन्यार्थं भवति। न खल्वप्यन्यदनुवर्तनादन्यद्भवति। नहि गोधा सर्पन्ती सर्पणादहिर्भवति। यत्तावदुच्यते। न चान्यार्थं प्रकृतमन्यार्थं भवतीति। अन्यार्थमपि प्रकृतमन्यार्थं भवति। तद्यथा शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते उपस्पृश्य-

---

या मीनात्यादयोपीत्यर्थः। का इति। आतश्चोपसर्गइति कः। आतोनुपसर्गे इति कः। कौ च अङ्च काः आतश्चोपसर्गइत्यङत्र निर्दिष्टः। न च केष्विति। शकन्ध्वादित्वात्पररूपमन्यथा कास्विति स्यात्। क्ङिति चेति गुणप्रतिषेधात्तत्रैजभावः। अतस्तु विज्ञायतइति। सामर्थ्यात्। तथा हि। मीनात्यादीनामुपदेशएवात्वे कृते इवर्णान्तलक्षणोऽजपवादो न प्रवर्तत इति घञेव स्यात्। इदं विप्रतिषिद्धमिति। नहि मीनात्यादीनामुपदेशएजस्ति प्रत्ययनिमित्तत्वादेचः। ते वयं विषयमिति। स तु विषयः प्रत्ययो यस्मिन् प्रत्यये एचा भाव्यं तस्मिन्ननुत्पन्नएवात्वम्। अन्ये त्विवर्णमेज् विषयमाहुः। यस्येवर्णस्यैचाभाव्यं तस्यात्वम्। के चित्त्वेजेव विषय इत्याहुः। एचि भावित्वेन बुद्ध्याश्रिते आत्वं भवतीत्यर्थः। न चान्यार्थमिति। तस्यैव तदर्थस्यैवोत्तरत्रानुवर्तनादिति भावः। तत्रैतत्स्यादन्यदेव शब्दरूपं वाक्यान्तरेष्वनुमीयते इत्याशङ्क्याह। न खल्वपीति। अन्यार्थमपीति। स्वरितत्वप्रतिज्ञानाच्छब्दस्वरूपमात्रमुत्तरत्रानुवर्तते तस्य यदर्थस्योपयोगस्तद-

ते च शालयश्च भाव्यश्च भाव्यन्ते । यदप्युच्यते । न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति । नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति। भवेद् द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येनाभिसंबध्यते तस्य तस्य विशेषको भवति । तद्यथा । गौः शुक्लः अश्वश्च शुक्ल इति गम्यते । निमिमीलियां खलचोः प्रतिषेधः * । निमिमीलियां खलचोः प्रतिषेधो वक्तव्यः । ईषन्नियमः सुनियमः । नियमो वर्तते । नियमः । मी । ईषत्प्रमयः । सुप्रमयः । प्रमयो वर्तते । प्रमयः । लीः । ईषद्विलयः सुविलयः । विलयो वर्तते । विलयः ॥

विभाषा लीयतेः ॥ ५१ ॥ किमिदं लीयतेरिति । लिनातिलीयत्योर्यका निर्देशः ॥

बिभेतेर्हेतुभये ॥ ५६ ॥ हेतुभयइति किमर्थम् । कुञ्चिकयैनं भाययति । अहिनैनं भाययति । हेतुभयइत्युच्यमानेप्यत्र प्राप्नोति । एतदपि हेतुभयम् । हेतुभयइति नैवं विज्ञायते हेतोर्भयं हेतुभयं हेतुभयइति । कथं तर्हि हेतुरेवभयं हेतुभयं हेतुभय इति । यदि

---

र्थमेवावतिष्ठते । शब्दस्त्विति । स्वरितत्वप्रतिज्ञानात्सदृशं शब्दान्तरं वाक्यार्थानुगुणार्थमनुमीयते।सादृश्यात्तु तदेवेदमिति तत्त्वाध्यवसायो भिन्नेष्वपि शब्दरूपेषु भवति । तत्रोपदेशशब्देन प्रत्ययोभिधीयते । उपदिश्यते तस्मिन्नेजित्युपदेशः । विषयसप्तमी चेयम् । न चेयं परसप्तमी । तेनानुत्पन्नएव प्रत्ययआत्वम् । इवर्णो वोपदेशः । अथ वोपदेशनमुपदेशः एच्प्रतिपादनम् । तत्र पूर्वसूत्रउपदेशग्रहणं प्रकृत्याभिसंबन्धात्तद्विशेषणमिह तु विषयविशेषणमिति न कश्चिद्दोषः । खलचोरिति । पचाद्यच एरचश्च सामान्यग्रहणम् ।

विभाषा लोयतेः । यका निर्देशइति । श्यना निर्देशे लिनातेर्ग्रहणं न स्यात् इति सामान्यग्रहणाय यका निर्देश आश्रीयते । यक्च श्तिपः शित्करणसामर्थ्यादभावकर्मवाचित्वेपि प्रवर्तते । यथा शबादयो ऽकर्तृवाचित्वेपीति भावः ।

बिभेतेर्हेतुभये । हेतुभय इति किमर्थमिति । इह णाविति वर्तते प्रयोजकव्यापारे णिज् विधीयतइति सर्वत्र हेतुसंबन्धिभयसद्भावाद् व्यावर्त्याभावादनर्थकं हेतुभयग्रहणमिति मत्वा प्रश्नः । हेतुरेव भयमिति । अपादानसाधनो भयशब्दो न तु भावसाधनः । समानाधिकरणपदः समासो न षष्ठीसमासः । तेन यदा साक्षात् प्रयोजकोभयस्यापादानं तदैतदात्वम् । यदा तु कुञ्चिकादीनि भयस्यापादानं तदात्वाभावः । एतच्च हेतुभयग्रहणसामर्थ्यादाश्रीयते । भावसाधनत्वे षष्ठीसमासे च तदनर्थकं स्यात् । यद्यपि भाव-

स एव हेतुर्भयं भवतीति ॥

सृजिदृशो र्झल्यमकिति ॥ ५८ ॥ अमि सङ्ग्रहणम् *। अमि सङ्ग्रहणं कर्तव्यम्। किमिदं सङ्गिति। प्रत्याहारग्रहणम्। क्व सन्निविष्टानां प्रत्याहारः। सनः प्रभृत्यामहिङो ङकारात्। किं प्रयोजनम्। क्किप्प्रतिषेधार्थम्। क्विबन्तस्य मा भूत्। रज्जुसृड्भ्यां रज्जुसृड्भिः। देवदृग्भ्यां देवदृग्भिः। उक्तं वा *। किमुक्तम्। धातोः स्वरूपग्रहणे तत्प्रत्ययविज्ञानात्सिद्धमिति ॥

शीर्षं श्छन्दसि ॥ ६० ॥ शीर्षन् छन्दसि प्रकृत्यन्तरम् *। शीर्षन् छन्दसि प्रकृत्यन्तरं द्रष्टव्यम्। किं प्रयोजनम् आदेशप्रतिषेधार्थम्। आदेशो मा विज्ञायि प्रकृत्यन्तरं यथा विज्ञायेत। किं च स्यात्। अस्कारान्तस्य छन्दसि श्रवणं न स्यात्। शिरो मे शीर्यते मुखे। इदं ते शिरो मे भिनत्तीति। तद्वा अथर्वणः शिरः ॥

ये च तद्धिते ॥ ६१ ॥ ये च तद्धिते शिरस आदेशार्थम् *। ये च तद्धित इत्यत्र शिरसो ग्रहणं कर्तव्यम्। किं प्रयोजनम्। आदेशार्थम्। आदेशो यथा विज्ञायते। प्रकृत्यन्तरं मा विज्ञायि। किं च स्यात्। यकारादौ तद्धितेऽस्कारान्तस्य श्रवणं प्रसज्येत। शीर्षण्यो हि मुख्यो भवति। शीर्षण्यः स्वरः। वा केशेषु *। वा केशेषु शिरसः शीर्षन्भावो वक्तव्यः।

---

साधनपक्षेपि पञ्चमीसमासाश्रयणेनायमेवार्थो लभ्यते तथापि षष्ठीसमासनिराकरणपरत्वाद्भाष्यस्य हेतोरपादानत्वमवश्यमाश्रयितव्यमित्यत्र तात्पर्यात्पञ्चमीसमासो न निवार्यते॥

सृजिदृ। अकितीति यदि पर्युदासोऽथापि प्रसज्यप्रतिषेधो झल्यम् भवति किति झलि नेति सर्वथा रज्जुसृड्भ्यामित्यादौ प्राप्नोतीति मत्वाह। अमिसङ्ग्रहणमिति।

शीर्षन्। आदेशप्रतिषेधार्थमिति। यद्यपि शिरस इति स्थानीसाक्षान्न निर्दिष्टस्तथापि समानार्थत्वादादेशेनाक्षिप्यते। यथा शिवादिषु विश्रवणशब्देन विश्रवश्शब्द इति स्थानिनोऽत्यन्तमप्रयोगः स्यादिति स्थान्यादेशभावपरिहारेण प्रकृत्यन्तरत्वमाश्रयणीयमित्यर्थः। यद्यपि पूर्वसूत्रादन्यतरस्यांग्रहणानुवृत्त्येष्टसिद्धिर्भवति। तथाप्युत्तरत्र तदनुवृत्तिराशङ्क्येतेति तत्परित्यागेन प्रकृत्यन्तरपक्षो निर्दोष आश्रितः।

येच। वा केशेष्विति। तत्र शिरस्शब्दस्य केशविषयत्वाच्छिरस्शब्दादेव केशार्थावगमात्केशशब्दो न प्रयोक्तव्यः। शीर्षन्शब्दस्तु सामान्यवाचीति तत्प्रयोगे विशेषावगमाय

शीर्षण्यः केशः। शिरस्यः। अचि शीर्षः *। अचि परतः शिरसः शीर्षभावो वक्तव्यः। हास्तिशीर्षिः पैलुशीर्षिः। छन्दसि च *। शिरसः शीर्षभावो वक्तव्यः। द्व शीर्षे। इह हास्तिशीर्ष्यां पैलुशीर्ष्येति शिरसो ग्रहणेन ग्रहणात् शीर्षन्भावः प्राप्नोति। अस्तु, नस्तद्धित इति टिलोपो भविष्यति। न सिध्यति। ये चाभावकर्मणोरिति प्रकृतिभावः प्रसज्येत। यदि पुनर्येचि तद्धित इत्युच्येत। किं कृतं भवति। इञि शीर्षन्भावे कृते टिलोपेन सिद्धम्। नैवं शक्यम्। इह हि स्थूलशिरस इदं स्थौलशीर्षम्। अन्नणीति प्रकृतिभावः प्रसज्येत। तस्मान्नैवं शक्यम्। न चेदेवं शिरसो ग्रहणेन ग्रहणाच्छीर्षन्भावः प्राप्नोति। पाक्षिक एष दोषः। कतरस्मिन् पक्षे। ष्यङ्विधौ हैतं भवति। अणिञोरादेशः ष्यङ्। अणिञ्भ्यां वा पर इति। तद्यदा तावदणिञोरादेशः। तदैष दोषः। यदा ह्यणिञ्भ्यां परः। न तदा दोषो भवति। अणिञ्भ्यां व्यवहितत्वात्॥

पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु॥ ६३॥ शस्प्रभृतिष्वित्युच्यते। अशस्प्रभृतिष्वपि दृश्यते। शलादोषणी ककुद्दोषणी याचते महादेवः। पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् *। पदादिषु मांस्पृत्स्नूनामुपसंख्यानं कर्तव्यम्। यन्नीक्षणं मांस्पचन्याः। मांसपचन्यादिति। प्राप्ते। मांस्। पृत्। पृत्सुमर्त्यम्। पृतनासुमर्त्यमिति प्राप्ते। स्नु। नते दिवो न पृथिव्या अधिस्नुषु। अधिसानुष्विति प्राप्ते। नस्नासिकायायत्तस्क्षुद्रेषु*।

---

केशशब्दः प्रयुज्यतइत्याहुः। अचिशीर्ष इति। वार्तिकं दृष्ट्वा केश्चित्सूत्रेषु प्रक्षिप्तम्। हास्तिशीर्षिरिति। बाह्वादिषु शिरस्शब्दस्य पाठात्केवलस्यापत्येनायोगात्तदन्तविधिः। छन्दसि चेति। अतद्धितेप्यजादौ यथा स्यादिति वचनम्। यद्येवमजादौ छन्दसि शिरश्शब्दप्रयोगो न प्राप्नोति शीर्षादेशेन बाधात्। सति दर्शने सर्वे विधयः छन्दसि विकल्प्यन्तइति दोषाभावः। येचि तद्धित इति। यकारादावजादौ च तद्धिते शीर्षन् भवति। तत्रेञि प्रत्यये शीर्षन्भावे कृते टिलोपे च ष्यङादेशः करिष्यतइत्यर्थः।

पद्दन्नो। सर्वे विधयः छन्दसि विकल्प्यन्तइति पादादयोपि छन्दसि प्रयुज्यन्ते। दोषणी याचतइति। औटि दोः शब्दस्य दोषन्नादेशः। यत्तस्क्षुद्रेष्विति। यत्तसौ प्रत्ययौ। क्षुद्र-

अत्तस्त्थुद्रेषु परतो नासिकाया नस्भावो वक्तव्यः। यत्। नस्यम्। तस्। नस्तः। क्षुद्र। नःक्षुद्रः। अवर्णनगरयोरिति वक्तव्यम्। इह मा भूत्। नासिक्यो वर्णो नासिक्यं नगरम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। इह तावन्नासिक्यो वर्ण इति। परिमुखादिषु पाठः करिष्यते। नासिक्यं नगरमिति। संकाशादिषु पाठः करिष्यते॥

धात्वादेः षः सः॥ ६४॥ धातुग्रहणं किमर्थम्। इह मा भूत्। षोडन्। षण्ढः। षडिकः। आदिग्रहणं किमर्थम्। इह मा भूत्। पेष्टा पेष्टुम्। नैतदस्ति प्रयोजनम्। अस्त्वत्र सत्वम्। सत्वे कृते पुनरुत्तरस्यादेशसकारस्येति षत्वं भविष्यति। इदं तर्हि लषिता लषितुम्। इदं चाप्युदाहरणम्। पेष्टा। पेष्टुम्। ननु चोक्तमस्त्वत्र सत्वं सत्वे कृते पुन उत्तरस्य आदेशसकारस्येति षत्वं भविष्यतीति। नैवं शक्यम्। इह हि पेक्ष्यतीति षत्वस्यासिद्धत्वात् षढोः कः सीति कत्वं न स्यात्। सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः॥ सादेशे सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः। सुब्धातुः।

---

यष्ट उत्तरपदम्। नस्यमिति। नासिकायां भवा नासिकायै हितमिति वा शरीरावयवाद्यत्। नस्त इति। अपादाने चाहीयरुहोरिति तसिः। नःक्षुद्र इति। नासिकया क्षुद्रइति सुप्सुपेति समासः। अवर्णनगरयोरिति। यतएतद्विशेषणम्। परिमुखादिषु पाठ इति। तत्र ञ्ये कृते सिद्धं नासिक्यमिति। ननु तित्स्वरितमिति यति स्वरितत्वं भवति। ष्यञोस्त्वाद्युदात्तत्वान्नोदात्तत्वे भवत इति स्वरभेदप्रसङ्गः। राजन्यसाकाश्यकाम्पिल्यनासिक्यदार्वाघाटानामाद्दिर्नान्तो वेतिप्रतिपदं स्वरविधानादाद्युदात्तत्वान्तोदात्तत्वाभ्यां पर्यायेण भाव्यमितिनास्तिस्वरभेदः। यञ्प्रत्यये च सतयनासिक्यमित्यत्रायतोऽनावइत्युत्तरपदान्तोदात्तत्वं प्रसज्येत। अव्ययपूर्वपदप्रकृतिस्वरेण त्वाद्युदात्तत्वमिष्यतइति प्रत्याख्यानमेव युक्तम्॥

धात्वादेः। उपदेशग्रहणानुवृत्त्या प्रातिपदिकानां सत्वं न भविष्यतीति मत्वाह। धातुग्रहणं किमर्थमिति। इतरः पूर्वसूत्रेषु विच्छिन्न उपदेशाधिकार इत्याह। षोडन्निति। षड् दन्ता अस्येति बहुव्रीहिः। वयसि दन्तस्य दतृिति दत्रादेशः। षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं चेति उत्वष्टुत्वे। षण्ढ शब्दोऽव्युत्पन्नंप्रातिपदिकम्। षडिक इति। अनुकम्पितः षडङ्गुलिरिति बह्वचो मनुष्यनाम्नः ठज्वेति ठच्। ठाजादावूर्ध्वंमिति अङ्गुलिशब्दस्य लोपः। ठस्येक इतीकादेशः। यस्येति चेत्यकारलोपः। लषितेति। अकारो-

षोढीयति । षण्ढीयति । ष्ठिवु । ष्ठीवति । ष्वष्क । ष्वष्कते । सुब्धातूनां तावन्न वक्तव्यः । उपदेश इति वर्तते । उद्देशश्च प्रातिपदिकानां नोपदेशः । यद्येवं नार्थो धातुग्रहणेन । कस्मान्न भवति । षोडन् षण्ढः षडिक इति । उपदेश इति वर्तते । उद्देशश्च प्रातिपदिकानां नोपदेशः । ष्ठिवेरपि द्वितीयो वर्णष्ठकारः । यदि ठकारः । तेष्ठीयत इति न सिध्यति । एवं तर्हि थकारः । यदि थकारः । टुष्टूषति । तेष्ठीव्यत इति न सिध्यति । एवं तर्हि द्वाविमौ ष्ठिवू । एकस्य द्वितीयो वर्णष्ठकारः । अपरस्य थकारः । यस्य थकारस्तस्य सत्वं प्राप्नोति । एवं तर्हि द्वाविमौ द्विषकारकौ ष्ठिवुष्वष्कती । किं कृतं भवति । पूर्वस्य सत्वे कृते परस्य सन्निपाते ष्टुत्वं भविष्यति । नैवं शक्यमिह हि श्वलिट् ष्ठीवति । मधुलिट् ष्वष्कते । ष्टुत्वस्यासिद्धत्वात् डः सि धुडिति धुट् प्रसज्येत । एवं तर्हि थकारादी ष्ठिवुष्वष्कती । किं थकारो न श्रूयते । लुप्तनिर्दिष्टो थकारः । अथ किमर्थं षकारमुपदिश्य तस्य स आदेशः क्रियते । न सकार एवोपदिश्येत । लघ्वर्थमित्याह । कथम् । अविशेषेणायं षकारमुपदिश्य सकारमादेशमुक्त्वा लघुनोपायेन षत्वं निवर्तयति । आदेशप्रत्यययोरिति । इतरथा हि येषां षत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात् । के पुनः षोपदेशा धातवः, पठितव्याः । अथ कोऽत्र भवतः पुरुषकारः । यद्यन्तरेण पाठं किंचिच्छक्यते वक्तुं तदुच्यताम् । अन्तरेणापि पाठं किंचिच्छक्यते वक्तुम् । कथम् । अजदन्त्यपराः सादयः षो-

---

पदेशस्तु प्रतिष्वष्कतीत्यादौ शेषे विभाषा कखादावषान्त उपदेश इति नेर्णत्वप्रतिषेधार्थः स्यात् । षोडीयतीति । षोडन्तमाचष्टे इति णिचि टिलोपे पचाद्यचि कृते षोडमिच्छतीत्यात्मन इति क्यच् । क्यचि चेतीत्वम् । उद्देश इति । लक्षणेन प्रतिपादनं सुब्धातूनां न तु साक्षादुच्चारणमित्यर्थः । द्वितीयवर्णष्ठकार इति । तत्र षस्य सत्वे कृते ष्टुत्वं क्रियते । लुप्तनिर्दिष्ट इति । लोपो व्योर्वलीति लक्षणेन लुप्तः । तत उपदेशे धात्वादित्वाभावात्सत्वाभावः । तत्र यदा ष्ठिवुद्वितीयो वर्णस्थकारस्तदा पूर्वत्रासिद्धीयमद्विर्वचन इति श्चा- तष्टुत्वस्यापि द्विर्वचनेऽशपूर्वाः खय इति शरो लोपे कर्तव्ये पूर्वत्रासिद्धत्वात् ष्टुत्वनिवृत्तौ तेष्ठीव्यत इति भवति । के पुनरिति । पाठश्चासंभवादशक्यः । अजदन्त्यपरा इति । दन्त्य-

प्रदेशाः । ष्विङ्ष्वदिष्विदिष्वजिष्वपञ्च । सृपिसृजिस्तृस्त्यासेकृस्ववर्जम् ॥

णो नः ॥ ६५ ॥ अथ किमर्थं णकारमुपदिश्य नकार आदेशः क्रियते । न नकार एवोपदिश्येत । लघ्वर्थमित्याह । अविशेषेणायं णकारमुपदिश्य तस्य नकारमादेशमुक्त्वा तस्य लघुनोपायेन णत्वं निवर्तयति उपसर्गादसमासेऽपि णोपदेशस्येति । इतरथा हि येषां तत्र णत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात् । के पुनर्णोपदेशा धातवः, पठितव्याः । कोऽत्र भवतः पुरुषकारो यदन्तरेण पाठं किंचिच्छक्यते वक्तुं तदुच्यताम् । अन्तरेणापि पाठं किंचिच्छक्यते वक्तुम् । कथम्, सर्वे णादयो णोपदेशाः । नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनृवर्जम् ॥

लोपोव्योर्वलि ॥ ६६ । व्योर्लोपे क्वावुपसंख्यानम् * । व्योर्लोपे क्वावुपसंख्यानं कर्तव्यम् । इहापि यथा स्यात् । कण्डूयतेरप्रत्ययः कण्डूरिति । किं पुनः कारणं न सिध्यति । वलीत्युच्यते । न चात्र वलादिं पश्यामः । ननु चायं क्विबेव वलादिः । क्विब्लोपे वलाद्यभावान्न प्राप्नोति । एवं तर्हि इदमिह संप्रधार्यं क्विब्लोपः क्रिय-

ग्रहणेन वकारो गृह्यते इत्याशङ्का स्यादिति खिदादयो भेदेन निर्दिष्टाः ॥

लोपो व्योः । कण्डूयतेरप्रत्ययइति । ननु च कण्ड्वादिभ्यो यगित्यत्र नैतेभ्यः क्विप् दृश्यत इत्युक्तं तत्कथमप्रत्ययः । एवं तर्हि कण्डूमिच्छतीति क्यजन्तात् क्विप् क्रियते । द्विविधा हि कण्ड्वादयः । तत्र धातुभ्यो यग्विधानात् प्रातिपदिकेभ्यः क्यजादयो भवन्त्येव । तत्र क्यजन्तात्कण्डूयशब्दात् क्विपि कृते येरष्टक्षरेति लोपे अतो लोपेच वलः परस्याभावाद्यलोपो न पाप्नोतीति वचनम् । न चात्र वलादिमिति । यद्यपि विशेष्यासंनिधानात्तदादिविधेरभावस्तथापि संभवमाश्रित्यैतदुक्तम् । संभवति हि कूर्तमित्यादौ वलादिप्रत्ययः । ननु चायमिति । अतो लोपस्य चात्र यलोपविधिं प्रति स्थानिवत्त्वनिषेधः । अथ कण्डूयशब्दस्य धातुत्वाद्यलोपे कृते परिशिष्टस्य धातुसंज्ञासद्भावादतो लोपस्य स्थानिवद्भावादुवङ् कस्मान्न भवति । उच्यते । अतो लोपस्य स्थानिवद्भावादेव कण्डूशब्दस्य धातुत्वाभावादुवङो ऽप्रसङ्गः । तस्य हि स्थानिवत्त्वे पूर्वस्य धातुत्वं नास्ति । यणादेशस्तु यलोपस्य स्थानिवद्भावात् प्राप्नोति । भवतु तस्य, क्विबाश्रय ऊठ् करिष्यते । ऊठि च कर्तव्ये नास्ति स्थानिवद्भावः । णादिष्टादचः पूर्वत्वाद्वकारस्य । अत एव कण्डुवौ कण्डुव इत्यादावूठुवङि कर्तव्ये नाप्यल्लोपस्य स्थानिवद्भावः । यदा तु कण्डूशब्दात् प्रातिपदि-

तां यलोप इति । किमत्र कर्तव्यम् । परत्वात् क्विलोपः नित्यत्वाच्च। नित्यः खल्वपि क्विलोपः । कृतेऽपि यलोपे प्राप्नोत्यकृतेऽपि । नित्यत्वात्परत्वाच्च क्विलोपः । क्विलोपे कृते वलाद्यभावाद्यलोपो न प्राप्नोति । एवं तर्हि प्रत्ययलक्षणेन भविष्यति । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । यदि वा कानि चिद्वर्णाश्रयाणि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति । अथ वैवं वक्ष्यामि । लोपो व्योर्वलि ततो वेः व्यन्तयोश्च व्योर्लोपो भवति । ततो ऽपृक्तस्य । अपृक्तस्य च लोपो भवति । वेरित्येव । वलोपाप्रसिद्धिरूठ्भाववचनात् * । वलोपस्याप्रसिद्धिः । चाखमायं जीरदानुरिति । किं कारणम् । ऊठ्भाववचनात् । च्छ्वोः शूडनुनासिके चेत्यूठ् प्राप्नोति । अतिप्रसङ्गो व्रश्चादिषु * । व्रश्चादिषु चातिप्रसङ्गो भवति । इहापि प्राप्नोति । व्रश्चनः व्रीह्यः व्रण इति । उपदेशसामर्थ्यात्सिद्धम् * । उपदेशसामर्थ्याद्व्रश्चादिषु लोपो न भविष्यति । उपदेशसामर्थ्यात् सिद्धमिति चेत्संप्रसारणहलादिशेषेषु सामर्थ्यम्* । उपदेशसामर्थ्यात्सिद्धमिति चेदस्त्यन्यदुपदेशवचने प्रयोजनम् । संप्रसारणहलादिःशेषेषु वकारस्य श्रवणं यथा स्यात् । वृक्णः वृक्णवान् वृश्चति विव्रश्चिषतीति । न वा बहिरङ्गलक्षणत्वात् * । न वा एतत्प्रयोजनमस्ति । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गाः संप्रसारणा-

---

कादिभक्तिस्तदोवङ्भवति काक्छ्वो कछ्वु य इति । परत्वादिति । न चाकृतेऽतो लोपे यलोपस्याप्रसङ्गः तत्रालोपादन्तरङ्गत्वात् पूर्वं विलोपेन भाव्यमिति यलोपक्विब्लोपयोर्विप्रतिषेधाभावः । एवं तर्ह्यार्धधातुक इति विषयसप्तम्याश्रयणात् पूर्वमतो लोपः पश्चात् क्विबिति भवति विप्रतिषेधः । यदि वेति । यथाऽस्त्रवोऽस्त्येत्येवमागमः । ननु यत्र प्रत्ययत्वं निमित्तं वर्णस्तु प्रत्ययविशेषणत्वेनोपादीयते तद्वत् प्रत्ययलक्षणेन यथेमागमो हलादौ पिति सार्वधातुके विधीयमानः यलोपस्तु वर्णनिमित्तो न प्रत्ययनिमित्त इति कथं प्रत्ययलक्षणेन स्यादित्याशङ्क्य परिहारान्तरमाह । अथ वेति । वेरपृक्तस्येत्ययं योगो विभज्यते । वेरित्येको योगस्तत्र व्योरिति वर्तते । वेरिति च प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं तस्यैव व्योरिति विशेषणम् । तेन वकारयकारान्तस्य विप्रत्ययान्तस्य ऽलोन्त्यस्य लोपो भवति । प्रत्ययलक्षणेन च विप्रत्ययान्तत्वम् । जीरदानुरिति । ननु नाऽत्रोठ् प्राप्नोति । एवं तर्हि तुल्यप्रतिविधानत्वादुपक्षिप्तम् । वलोपावकाशप्रदर्शनेन चा-

हलादिः शेषाः। अन्तरङ्गो लोपः। असिद्धं बहिरङ्गमन्तरङ्गे। अनारम्भो वा *। अनारम्भो वा पुनर्वलोपस्य न्याय्यः। कथमस्रेमाणं जीरदानुरिति। अस्रेमाणं जीरदानुरिति वर्णलोपात्*। अस्रेमाणं जीरदानुरिति छान्दसाद्वर्णलोपात्सिद्धम्। यथा संस्फानो गयस्फानः। तद्यथा। संस्फायनः। संस्फानः। गयस्फायनः। गयस्फान इति॥

वेरपृक्तस्य॥ ६७॥ दर्विजागृव्योः प्रतिषेधः *। दर्विजागृव्योः प्रतिषेधो वक्तव्यः। दर्विः। जागृविः। किमुच्यते दर्विजागृव्योः प्रतिषेधो वक्तव्य इति। यदापृक्तस्येत्युच्यते। भवति वै किं चिदाचार्याः क्रियमाणमपि चोदयन्ति। तद्वा कर्त्तव्यम्। दर्विजागृव्योः प्रतिषेधो वा वक्तव्यः। वेर्लोपे दर्विजागृव्योरप्रतिषेधोऽननुनासिकपरत्वात् *। वेर्लोपे दर्विजागृव्योरप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः। लोपः कस्मान्न भवति। अननुनासिकपरत्वात्। अनुनासिकपरस्य विशब्दस्य ग्रहणम्। न चाननुनासिकपरो विशब्दः। शुद्धपरश्चात्र विशब्दः। यद्यननुनासिकपरस्य विशब्दस्य ग्रहणमित्युच्यते। घृतस्पृक् दलस्पृक् अत्र न प्राप्नोति। न ह्येतस्माद्विशब्दादनुनासिकपरं पश्यामः। अनुनासिकपरत्वादिति। नैवं विज्ञायते अनुनासिकः परो

---

स्रेमाणमित्यत्र वलोपासिद्धिः प्रदर्श्यते। अन्तरङ्गो लोप इति। ततश्चाकृतयोरेव संप्रसारणहलादिः शेषयोर्वलोपः प्राप्त उपदेशस्तासर्व्यात्र भवति। अनारम्भो वेति। वाग्रहणात् समाधानं वास्रेमाणमिल्लक्षणाश्रयणीयम्। छान्दसत्वादूठ् न भवतीत्युक्तं भवति। वलोपश्चात्र प्रत्याख्यायते न वलोपः। गौधेरः पचेरन्नित्यादौ तस्योपयोगात्॥

वेरपृक्तस्य। भवति वै किं चिदिति। यत्सूत्रे क्रियते वस्तु तदाचार्याश्चोदयन्ति। तदर्थं स्यान्यथासिद्धत्वप्रतिपादनाय तत्र भवति वै किं चिदित्येकं वाक्यम्। किं तदित्याहाचार्याः क्रियमाणमपि चोदयन्तीति। अथ वा चोदनक्रिया भवतिक्रियायाः कर्त्री भवतीत्येकमेव वाक्यम्। अप्रतिषेध इति। अपृक्तस्येति न वक्तव्यमित्यर्थः। अननुनासिकपरत्वादिति। परशब्दो विशिष्टदेशावयववाची। यस्य विशब्दस्य पर इकारोऽननुनासिकोऽत एवेत्संज्ञकः स एवानुक्तो लोपविधानाय न त्वननुनासिकपर इत्यर्थः। इतरः शब्दान्यर्थे बहुव्रीहिं मत्वा चोदयति। यदीति। क्विनो नकारस्य लुप्तत्वादननुनासिकपरत्वाभावात् मा भूल्लोपो घृतस्पृगित्यादावेव न प्राप्नोति क्विनो नकारस्य लुप्तत्वात्। नैवं विज्ञायत इति। एवं हि विज्ञायमाने प्रियदर्विं मन्य इत्यादौ स्वादिष्टे च विषये न

यस्मात्सोयमनुनासिकपरः अनुनासिकपरत्वादिति । कथं तर्हि । अनुनासिकः परो ऽस्मिन्सोयमनुनासिकपरः अनुनासिकपरत्वादिति । एवमपि प्रियदर्वि अत्रापि प्राप्नोति । असिद्धोत्रानुनासिकः । एवमपि धात्वन्तस्य प्रतिषेधः * । धात्वन्तस्य प्रतिषेधो वक्तव्यः । द्रुविद्दिविधिवि । धात्वन्तस्य चार्थवद्ग्रहणात् । अर्थवतो विशब्दस्य ग्रहणं न धात्वन्तोऽर्थवान् । वस्य चानुनासिकत्वात्सिद्धम् * । अथवा वकारस्यैवेदमनुनासिकस्य ग्रहणम् । सन्ति हि यणः सानुनासिकाः निरनुनासिकाश्च ॥

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥ ६८ ॥ यदि पुनरयमपृक्तलोपः संयोगान्तलोपो विज्ञायेत । किं कृतं भवति । द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं न कर्तव्यं भवति । हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावो यथापचन्निति * । हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावः । राजा तचा । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न प्राप्नोति । यथा पचन्निति । तद्यथा । पचन् यजन्नित्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न भवति । नैष दोषः । आचार्य्यप्रवृत्तिर्ज्ञापयति । सिद्धः । संयोगान्तलोपो नलोपइति । यदयं नङिसंबुद्ध्योरिति संबुद्धौ प्रतिषेधं शास्ति । इहापि तर्हि प्राप्नोति । पचन् । यजन् । तुल्यजातीयस्य ज्ञापकं भवति । कश्च तुल्यजातीयः ।

---

स्यात् । प्रियदर्वीति । अत्राणोप्रगृह्यस्यानुनासिक इत्यनुनासिकः । प्रिया दर्विर्यस्य तत्प्रियदर्वि । असिद्ध इति । पूर्वत्रासिद्धमिति वचनात् । अर्थवत इति । क्विबादयः कर्तरि क्विदिति प्रतिज्ञापितेनार्थे नार्थवन्तः । वस्येति । अनुनासिकवकारस्येदमनुकरणं वेरिति ॥

हल्ङ्याब्भ्यो । द्विहलपृक्तग्रहणमिति । ङ्यापोदीर्घात्स्योरित्येव वक्तव्यमित्यर्थः । राजेति । नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वान्नकारान्तं पदं न भवति । किं तर्हि सकारान्तम् । यदा तु स्वादिष्वसर्वनामस्थाने यचीति । अयचि सर्वनामस्थाने पूर्वं पदमिति व्याख्यानं तदा सावपिपरतः पदसंज्ञायां सत्यां नलोपः सिध्यति । कृते तु नलोपे संयोगान्तत्वाभावात् सुलोपो न प्राप्नोतीत्युभयथादोषप्रसङ्गः । पचन्निति । ननु चात्र मकारलोप एव न प्राप्नोति । सुलोपस्यासिद्धत्वात् । नैष दोषः । पूर्वत्र परस्यासिद्धत्वमुच्यते । ततश्च संयोगान्तलोपे संयोगान्तलोपस्य सिद्धत्वाद्भवत्येव तलोपः । तस्य त्वसिद्धत्वान्नलोपाभावः

यःसंबुद्धावनन्तरः । वस्वादिषु दत्वं संयोगादिलोपबलीयस्त्वात्*। वस्वादिषु दत्वं च न सिध्यति ॥ उखास्रत् । पर्णध्वत् । किं कारणम्। संयोगादिलोपबलीयस्त्वात् । संयोगान्तलोपात्संयोगादिलोपो बलीयानिति । यथा काष्ठतडिति । तद्यथा । कूटतट्काष्ठतडित्यत्र संयोगान्तलोपात्संयोगादिलोपो बलीयान् भवति । ननु च दत्वे कृते न भविष्यति । असिद्धं दत्वं तस्यासिद्धत्वात् प्राप्नोति । सिद्धकाण्डे पठितं वस्वादिषु दत्वं सौ दीर्घत्व इति । तत्र सौ दीर्घग्रहणं न करिष्यते । वस्वादिषु दत्वं सिद्धमित्येव । एवमप्यपदान्तत्वान्न प्राप्नोति । अथ सावपि पदं भवति । राजा तक्षा । नलोपे कृते विभक्तेः श्रवणं प्राप्नोति । सैषोभयतस्पाशा रज्जुर्भवति। रात्सलोपो नियमवचनात्*। रात्सस्य लोपो वक्तव्यः । अबिभर्भवान् । अजागर्भवान् । किं पुनः कारणं न सिध्यति । नियमवचनात्। रात्सस्येत्येतस्मान्नियमान्न प्राप्नोति । नैष दोषः । रात्सस्येत्यत्र तकारोऽपि निर्दिश्यते । यद्येवं कीर्तयतेरप्रत्ययः कीरिति प्राप्नोति । कीर्त् इति चेष्यते । यथालक्षणमप्रयुक्ते । रोरुत्वं च * । रोरुत्वं च वक्तव्यम् । अभिनोत्र । अच्छिनोत्र । संयोगान्तलोपस्यासिद्धत्वादतः अतीत्युत्वं न प्राप्नोति । न वा संयोगान्तलोपस्योत्वे सिद्धत्वात् * । न वा वक्तव्यम् । किं कारणम् ।

---

आद्यन्यासे वा रूपे सिद्धे दृष्टान्त उपात्तः । यः संबुद्धावनन्तर इति । पचन्नित्यत्र नकारस्तकारेण व्यवहितः । उखास्रदिति ।उखास्रस् स इति स्थिते संयोगान्तलोपमपवादत्वात् बाधित्वा संयोगादिलोपः प्राप्नोति । परोऽपि ह्यपवादो वचनप्रामाण्यादुत्सर्गे कर्तव्ये नासिद्धो भवति । संयोगादिलोपे च कृते संयोगाभावात् संयोगान्तलोपाभावः । ततो विभक्तिसकारः स्रंसतेरवयवो न भवतीति दत्वं न प्राप्नोति । काष्ठतड् इति । काष्ठं तक्षतीति क्विप् । संयोगादिलोपे कृते शस्य जश्त्वं डकारः दत्वे कृते इति । सावपि पदमिति दत्वभावः । उभयतस्पाशेति । स्पश बाधनस्पर्शनयोरिति भौवादिकस्य स्पश ग्रहणसंश्लेषणयोरिति चौरादिकस्य वा रूपमेतत् । रात्सस्येति । रेफात्परस्य तकारस्येत्यर्थः। तकारोऽपीति । रात्सस्येति द्वितकारको निर्देशः । यथालक्षणमिति । लोके प्रयुक्तानामिदमन्वाख्यानमित्यप्रयुक्ते लक्षणानामप्रवृत्तिलक्षणं लक्षणमित्यर्थः । तत्रास्य प्रयोगाभावान्न दोषो न प्रयोजनमित्युक्तं भवति अभिनोत्रेति । भिदेर्लङि सिपि श्नमि संयोगान्तलोपः । स परस्याद्धलस्य तत्र सिद्ध इति दत्वेति रुत्वम् । उत्वे तु संयोगान्तलोपस्य सिद्धत्वादत्व-

संयोगान्तलोपस्योत्वे सिद्धत्वात्। संयोगान्तलोप उत्वे सिद्धः। तद्यथा। हरिवो मेदिनमिति। तद्यथा। हरिवो मेदिनं त्वा इत्यत्र संयोगान्तलोप उत्वे सिद्धो भवति। स एव तर्हि दोषः उभयतस्पाशेति। तस्मादशक्यो हलपृक्तलोपः संयोगान्तलोपो विज्ञातुम्। न चेद्विज्ञायते। द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं कर्तव्यमेव॥

एङ्ह्रस्वात्संबुद्धेः॥ ६७॥ संबुद्धिलोपे डतरादिभ्यः प्रतिषेध *। संबुद्धिलोपे डतरादिभ्यः प्रतिषेधो वक्तव्यः। हे कतरत्। हे कतमत्। किमुच्यते डतरादिभ्यः प्रतिषेधो वक्तव्य इति। यदाऽपृक्तस्येत्यनुवर्तते। अपृक्ताधिकारस्य निवृत्तत्वात्। निवृत्तो ऽपृक्ताधिकारः। किं डतरादिभ्यः प्रतिषेधं वक्ष्यामीत्यतो ऽपृक्ताधिकारो निवर्तते। नेत्याह। तच्चामर्थम् *। स चावश्यमपृक्ताधिकारो निवर्त्यः। किमर्थम्। अमर्थम्। अमो लोपो यथा स्यात्। हे कुण्ड हे पीठ। निवृत्तेऽपि वै प्रपृक्ताधिकारे अमो लोपो न प्राप्नोति। किं कारणम्। नहि लोपः सर्वापहारी। मा भूत्सर्वस्य लोपः। अलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य लोपे कृते द्वयोरकारयोः पररूपे सिद्धं स्यात् हे कुण्ड हे पीठेति। यद्यतल्लभ्येत कृतं स्यात्। तत्तु न लभ्यम्। किं कारणम् अत्र हि तस्मादित्युत्तरस्यादेः परस्येत्यकारस्य लोपः। प्राप्नोति। अकारलोपे च सति मकारे ऽतो दीर्घो यञि सुपिचेति दीर्घत्वे हे कुण्डां हे पीठामित्येतद्रूपं प्रसज्येत। एवं तर्हि हलो लोपः संबुद्धेः। तद्ग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलिति। तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। नैष दोषः। एङ्ह्रस्वादित्येषा पञ्चमी हलित्यस्याः प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्ये-

---

थानाद्रुत्वं न प्राप्नोति। उत्वे सिद्ध इति। संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्य इत्यर्थः। वक्तव्यमित्यर्थः।

एङ्। हे कतरदिति। कतरम् इति स्थिते संबुद्धिलोपश्च प्राप्नोति अद्भावश्च। अद्भावात्परप्राप्तः संबुद्धिलोपोऽनित्यः। अद्भावस्तु कृते संबुद्धिलोपे न प्राप्नोतीत्यनित्यः। उभयोरनित्ययोः परत्वादद्भावे कृते पुनःप्रसङ्गविज्ञानात्संबुद्धिलोपप्रसङ्गः। अकारलोपइति।

ति। एवमपि प्रथमयोः पूर्वसवर्णदीर्घत्वे कृते हे कुण्डा हे पीठा इ-त्येतद्रूपं प्रसज्येत। असिपूर्वत्वमत्र बाधकं भविष्यति। अमीत्युच्यते। न चात्राम् पश्यामः। एकदेशविकृतमनन्यवद्भवतीति। अथ वे-दमिह संप्रधार्यं संबुद्धिलोपः क्रियतामेकादेश इति। किमत्र कर्तव्य-म्। परत्वादेकादेशः। एवमप्येकादेशे कृते व्यपवर्गाभावात्सम्बुद्धिलो-पो न प्राप्नोति। अन्तादिवद्भावेन व्यपवर्गो भविष्यति। उभयत आ-श्रयणे नान्तादिवत्। नोभयत आश्रयः करिष्यते। कथम्। नैवं वि-ज्ञायते। ह्रस्वादुत्तरस्याः संबुद्धेर्लोपो भवति। कथं तर्हि। ह्रस्वादु-त्तरस्य हलो लोपो भवतीति। स चेत्संबुद्धेरिति। डतरादिभ्यः स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। उक्तं वा*। किमुक्तम्। सि-द्धमनुनासिकोपधत्वादिति। एवमपिद्लोपः साधीयः प्राप्नोति। दु-क्करणाद्वा*। अथ वा दुक्डतरादीनामिति वक्ष्यामि। डित्करणा-द्वा*। अथ वा डिदच्छब्दः करिष्यते। स तर्हि डकारः कर्तव्यः। क्रियते न्यास एव। द्विडकारको निर्देशः। अद्ड्डतरादिभ्य इति। एवमपि लोपः प्राप्नोति। विहितविशेषणं ह्रस्वग्रहणम्। यस्माद् ह्रस्वात्संबुद्धिर्विहितेति। अपृक्तसम्बुद्धिलोपाभ्यां लुक्*। अपृक्तस-म्बुद्धिलोपाभ्यां लुग्भवति विप्रतिषेधेन। अपृक्तलोपस्यावकाशः। गो-मान्। यवमान्। लुकोऽवकाशः। त्रपु जतु। इहोभयं प्राप्नोति।

---

मकारलोपस्यापरनिमित्तत्वाद्दीर्घविधौ प्रतिषेधाद्वा स्थानिवत्त्वाभावः। एवमपीति। एकदेशविकृतस्यानन्यत्वादिति भावः। न चात्रामिति। मकारस्य लुप्तत्वात्। अथवेति। सत्यामेव हल्ग्रहणानुवृत्तावयं विचारः। व्यपवर्गाभावादिति। ह्रस्वात्संबुद्धेरित्युच्यमाने कृते चैकादेशे नास्ति ह्रस्वसंबुद्ध्योः पौर्वापर्यमित्यर्थः। ह्रस्वादुत्तरस्येति। पूर्वं प्रत्यन्तव-द्भावाद् ह्रस्वान्तमेतद्भवति। संबुद्ध्याच्चितं हि प्रकृतिरूपमेङ्ह्रस्वेन विशेष्यतइति तदन्त-विधिः। उक्तं वेति। वक्ष्यमाणपरिहारापेक्षो वाशब्दः। अनुनासिकोपधत्वादिति। आ-देशस्याकारोनुनासिक इत्संज्ञको लुप्त इति दकारोवशिष्यते। स च भेदाभावात्संबुद्ध्यवयवो न भवतीति न लुप्यतइति भावः। साधीय इति। व्यपदेशिवद्भावाद्यथा हे हविल्यादाविति भावः। दुक्करणादेति। दुकि कृते स्वमोर्नपुंसकादिति स्वमोर्लुक् क्रियते। एवमपीति। मकाराद् ह्रस्वात्परत्वाद्दकारस्येति भावः। विहितविशेषणमिति। प्रतिपादितत्वात्तदन्त-विधेर्ह्रस्वान्तात्परस्य संबुद्धिसंबन्धिनो हलो लोपो भवतीति सूत्रार्थः। ततश्च सामर्थ्यात् प-

तद्ब्राह्मणकुलम् । यद्ब्राह्मणकुलम् । संबुद्धिलोपस्यावकाशः । अग्ने वायो । लुकः स एव । इहोभयं प्राप्नोति । हे त्रपु । हे जतु । लुग् भवति विप्रतिषेधेन । स तर्हि विप्रतिषेधो वक्तव्यः । न वक्तव्यः। न वा लोपलुकोर्लुगवधारणाद्यथानडुह्यत इति * । न वार्थो विप्रतिषेधेन । किं कारणम् । लोपलुकोर्लुगवधारणात् । लोपलुकोर्हि लुगवधार्यते । लुग्लोपप्रत्ययवायावेकदेशिभ्यो यथानडुह्यतइति । तद्यथा । अनड्वानिवाचरति अनडुह्यतइत्यत्र लोपलुकोर्लुगवधार्यते॥

ओम्ङ्छन्दसि बहुलम् ॥ ७० ॥ अयं योगः शक्योऽवक्तुम् । कथमग्नेचीते वाजिना चीषधस्था । ताता पिण्डानामिति । पूर्वसवर्णेनाप्येतत्सिद्धम् । न सिध्यति । नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति । छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः । मधोर्गृह्णाति मधोस्तृप्माइवासतइत्येवमर्थम् । तत्रपुंवद्भावेन नुमो निवृत्तिः । नुमि निवृत्ते पूर्वसवर्णेन सिद्धम् । भवेत्सिद्धम् । अग्ने चीते वाजिना चीषधस्था । इदं तु न सिध्यति । ताता पिण्डानामिति । इदमपि सिद्धम् । कथम् । साप्तमिके पूर्वसवर्णे कृते पुनः षाष्ठिको भविष्यति । एवमपि जसि गुणः प्राप्नोति । वक्ष्यत्येतत् । जसादिषु छन्दो वावचनं प्राङ् णौ चङ्युपधायाः ॥

---

कृतिरूपावयवकृत्स्नग्रहणाद् यस्माद् ङ्स्वात्संबुद्धिर्विहितातस्मादेव परस्य ह्रस्वलोप इत्यर्थोवतिष्ठते । तेन कतरदित्यत्र टिलोपे कृते प्रकृतेर्ङ्स्वान्तत्वाभावाद्दकारलोपाभावः। हे त्रपुिति । लुकि कृते प्रत्ययलक्षणप्रतिषेधात् सम्बुद्धिगुणाभावः । इकोचि विभक्ताविरत्यत्र त्वज्ग्रहणस्य प्रयोजनं वक्ष्यते । इह किंचित् त्रपो इति ततो गुणेन भाव्यम् । न वक्तव्य इति । व्याख्यातव्यः । कस्मादित्याह । न चेति । अन्तरङ्गानपि विधीन् बाधमानो लुग् बलवानित्यतुल्यबलेन लोपेन स्पर्धां नार्हतीति विप्रतिषेधो नोपन्यसनीयः । अनडुह्यत इति । सुलोपे सति प्रत्ययलक्षणेन नुमामौ स्याताम् । लुकि प्रत्ययलक्षणप्रतिषेधान्न भवतः ॥

ओम्ङ्छ० । नुमो निवृत्तिरिति । अप्रवृत्तिरेव निवृत्तिः । ताता पिण्डानामिति । त इ इति स्थिते नादिचीति पूर्वसवर्णदीर्घप्रतिषेधाद् गुणः प्राप्नोति । साप्तमिक इति । सुपां सुलुगितीकारस्याकारे कृते षाष्ठिकः पूर्वसवर्णदीर्घः क्रियते । जसि गुण इति । अग्ने चीत इत्यत्रेति भावः ॥

ह्रस्वस्य पिति कृति तुक्॥ ११॥ तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च *। तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति। आराशस्त्रिच्छत्रम्। धानाशष्कुलिच्छत्रम्। कौशाम्बिच्छत्रम्। निर्वाराणसिच्छत्रम्। द्विगुस्वरः। पञ्चारत्निच्छत्रम्। दशारत्निच्छत्रम्। तुकि कृतेऽनजन्तत्वादेते विधयो न प्राप्नुवन्ति। न वा बहिरङ्गलक्षणत्वात्*। न वा एष दोषः। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षणस्तुक्। अन्तरङ्गा एते विधयः। असिद्धं बहिरङ्गमन्तरङ्गे। इह तर्हि ग्रामणिपुत्रः। सेनानिपुत्रः। ह्रस्वत्वे कृते तुक् प्राप्नोति। ग्रामणिपुत्रादिषु चाप्राप्तिः*। ग्रामणिपुत्रादिषु चाप्राप्तिर्भवति। किं कारणम्। बहिरङ्गलक्षणत्वादेव। अथ वा परादिः करिष्यते। परादौ संयोगादिरित्यतिप्रसङ्गः*। परादौ संयोगादिरित्यतिप्रसङ्गो भवति। अपच्छायात्। वान्यस्य संयोगादेरित्येत्वं प्रसज्येत। विलोपवचनं च *। वेश्च लोपो वक्तव्यः। अग्निचित्। सोमसुत्। अपृक्तस्येति वेर्लोपो न प्राप्नोति। नैष दोषः। अपृक्तग्रहणं न करिष्यते। यदि न क्रियते। दर्विः जागृविश्चापि प्राप्नोति। अनुनासिकपरस्य विशब्दस्य ग्रहणम्। शुद्धपरश्चात्र विशब्दः। एवमपि सतुक्कस्य लोपः प्राप्नोति। निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति। इट्प्रतिषेधश्च*। इट्प्रतिषेधश्च वक्तव्यः। परीतत्। सतुक्कस्य वलादिलक्षण इट् प्रसज्येत। एवं तर्ह्यभक्तः करिष्यते। अभक्ते स्वरः*। यद्यभक्तस्तर्हि स्वरभेदो भवति। दधिच्छादयति मधुच्छादयति तिङ्ङतिङ इति निघातो न प्राप्नोति। ननु च तुगेवातिङ्। न तुकः परस्य निघातः प्राप्नोति। किं कारणम्। नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः। नञ्युक्ते इवयुक्ते वाऽन्यस्मिन् तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते। तद्यथा। अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमेवानयति नासौ लोष्टमानीय कृती भवति। एवमिहाप्यतिङिति प्रतिषेधादन्यस्मिंस्तिङ्सदृशे कार्यं विज्ञास्यते। किं चान्यदतिङ् तिङ्सदृशम्। पदम्॥

---

ह्रस्वस्य। पूर्वान्तकरणे प्रेक्षापूर्वकारित्वप्रदर्शनायात्र विचारः। ग्रामणिपुत्र इति। अत्र तुगन्तरङ्गो ह्रस्वो बहिरङ्गः पूर्वत्र तुग् बहिरङ्गः स्वरह्रस्वावन्तरङ्गौ। परीतदिति। तनोतेः क्विपि वौ च गमादीनामित्यनुनासिकलोपः। तत्र तुटि परादौ क्रियमाण इट्प्रसङ्गः। नहिवृतीति दीर्घः॥

संहितायाम् ॥ ७२ ॥ अयं योगः शक्योऽवक्तुम् । कथम् । अधिकरणं नाम त्रिःप्रकारम् । व्यापकमौपश्लेषिकं वैषयिकमिति । शब्दस्य च शब्देन को ऽन्यो ऽभिसंबन्धो भवितुमर्हत्यन्यदत उपश्लेषात् । इकोयणचि अचि उपश्लिष्टस्येति । तत्रान्तरेण संहिताग्रहणं संहितायामेव भविष्यति ॥

आङ्माङोश्च ॥ ७४ ॥ अथ किमर्थमाङ्माङोः सानुबन्धकयोर्निर्देशः । आङ्माङोः सानुबन्धकयोर्निर्देशो गतिकर्मप्रवचनीयप्रतिषेधसंप्रत्ययार्थः*। आङ्माङोः सानुबन्धकयोर्निर्देशः क्रियते। आङो गतिकर्मप्रवचनीयसंप्रत्ययार्थः । माङः प्रतिषेधसंप्रत्ययार्थः।इह मा भूत् । आच्छायामानयति । प्रमाच्छन्दः ॥

दीर्घात् पदान्ताद्वा ॥८५॥७६॥ दीर्घात्पदान्ताद्वा विश्वजनादी-

---

संहितायाम् । परो यः सन्निकर्षो वर्णानां वर्णशून्येन कालेनाव्यवधानं सा संहिता ह्रादाविरामो वा । ह्रादशब्देन वर्णाभिव्यक्तिहेतवो नादा उच्यन्ते । तेनैकवर्णाभिव्यक्तिहेतुनादानन्तरमेव यदा नादान्तरं वर्णान्तराभिव्यक्तये उच्चार्यते तदा संहिता । सा च निरन्तरवर्णद्वयविषया । ततश्चाग्निचिदत्रेत्यादाविकाराकारयोस्तवर्गीयेण विच्छेदात् संहिताभावाद्यणोऽप्रसङ्गान्निर्दिष्टग्रहणमानन्तर्यार्थं न कर्तव्यमित्याहुः । त्रिप्रकारमिति । आद्यास्त्रयोभेदास्तद्भेदानान्त्वानन्त्यमित्याहुः । व्यापकमिति । यथा दध्नि सर्पिः तिलेषु तैलमिति । औपश्लेषिकमिति । यथा कटे तिष्ठति । मथुरायां वसतीति । सर्वावयवव्याप्त्यभावात् कटादेर्व्यापकत्वाभावः । वैषयिकमिति । यथा खे शकुनयः । गुरौ वसतीति । अन्यदत उपश्लेषादिति । ननु चार्द्धधातुक इत्यादौ विषयसप्तमीपक्षस्याश्रितत्वात् कथमिह संबन्धान्तराभावः । उच्यते। यदा सामान्यस्य प्राधान्यमाश्रीयते । तदा तेन पौर्वापर्याभावाद्विषयभाव आश्रीयते । विशेषस्य तु प्राधान्ये आश्रीयमाणे तेन पौर्वापर्यसंभवादुपश्लेषाश्रयणम् । तत्रैको यणचीत्यादौ विशेषः प्राधान्येनाश्रीयते । न तु सामान्यमिति न कश्चिद्दोषः । उपश्लेषे चाश्रिते निर्दिष्टग्रहणमपि न कर्तव्यम् । व्यवहितयोरुपश्लेषाभावात् । उपश्लेषनिमित्तकार्याप्रसङ्गात् । संहिताधिकारे च प्रत्याख्याते संहितासंज्ञापि प्रयोजनाभावात् प्रत्याख्यातैव ॥

आङ् । आङ्माङोरिति । कर्मप्रवचनीयग्रहणमुपलक्षणार्थम् । तेनेषदर्थस्याप्याङो ग्रहणम् । ईषच्छाया आछायेति । वाक्यस्मरणयोस्त्वाकारस्येह ग्रहणाभावाद्विकल्पो भवति । आच्छाया आछायेति ।

दीनां छन्दसि*। दीर्घात्पदान्ताद्वेत्यत्र विश्वजनादीनां छन्दस्युपसंख्यानं कर्तव्यम्। विश्वजनस्य छत्रं विश्वजनस्यच्छत्रम्। न छायां कुरवोपरां नच्छायां कुरवोपराम्॥

इको यणचि॥७७॥ इग्ग्रहणं किमर्थम्। इह मा भूत्। अग्निचिदत्र। सोमसुदत्र। नैतदस्ति प्रयोजनम्। जश्त्वमत्रबाधकं भविष्यति। जश्त्वं न सिद्धं यणमत्र पश्य॥ असिद्धमत्र जश्त्वं तस्यासिद्धत्वाद्यणादेशः प्राप्नोति। यश्चापदान्तो हलचस्य पूर्वः॥ यश्चापदान्तो हल् अचस्य पूर्वः तस्य प्राप्नोति। पचतीति। एवं तर्हि, दीर्घस्य यण्॥ दीर्घस्य यणादेशं वक्ष्यामि। तद्दीर्घग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। दीर्घात्पदान्ताद्वेति। तद्वै पञ्चमीनिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः। अचीत्येषा सप्तमी दीर्घादिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति। तस्मिन्निति निर्दिष्टे पूर्वस्येति। भवेत्सिद्धम्। कुमार्यत्र ब्रह्मबन्ध्वर्थमिति। इदं तु न सिध्यति दध्यत्र मध्वत्रेति। ह्रस्व इति प्रवृत्तम्। ह्रस्वग्रहणमपि प्रकृतमनुवर्तते। क्व प्रकृतम्। ह्रस्वस्य पितीति। यदि तदनुवर्तते। दीर्घात्पदान्ताद्वा ह्रस्वस्येति ह्रस्वादपि पदान्ताद्विकल्पेन प्राप्नोति। संबन्धवृत्त्या। संबन्धमनुवर्तिष्यते। ह्रस्वस्य पिति कृति तुक् संहितायाम्। ह्रस्वस्य पिति कृति तुक् छे च। ह्रस्वस्य पिति कृति तुक् आङ्माङोश्च। ह्रस्वस्य पिति कृति तुक् दीर्घात्पदान्ताद्वा। ह्रस्व-

---

इको यण्। इग्ग्रहणमिति। वक्ष्यमाणोभिप्रायः। जश्त्वमत्रेति। परत्वादिति भावः। उभयोरप्यनित्यत्वादस्ति विप्रतिषेधः। तत्र शब्दान्तरप्राप्त्या यणो नित्यत्वं जश्त्वस्य तु कृते यणप्राप्त्या। जश्त्वमिति। पूर्वत्रासिद्धमिति जश्त्वस्यासिद्धत्वात्। सिद्धासिद्धयोर्विप्रतिषेधाभावाद्यणादेशमेवात्र निषप्रतिद्वन्द्विनं प्राप्तं पश्य। यश्चेति। पदान्तस्य जश्त्वविधानादपदान्तहलोचि यण् स्यादेवेत्यर्थः। अचीत्येषेति। अकृतार्था सप्तमी दीर्घादिति पञ्चम्याः पूर्वत्र पौर्वापर्यकल्पने कृतार्थायाः षष्ठ्याः प्रकल्पिकेति भावः। पूर्वत्र तु छे इति सप्तम्याम्छे चेत्यत्र कृतार्थाया अपि दीर्घादिति पञ्चम्याः शाब्दासान्नित्यादेर्व्यापकात् षष्ठी न प्रकल्पिता। ह्रस्वादपीति। छे चेत्यस्य तु अपदान्तो ह्रस्वो ऽवकाशः इच्छति गच्छतीति। संबन्धमिति। यद्येवं छे चेत्यत्रापि दोषः। पितिकृतीतिसंबद्धस्य ह्रस्वस्य छेन संबन्धाभावप्रसङ्गात्। नैष दोषः। छे चेति समुच्चयस्य चशब्देन द्योतनाच्छे च पिति कृति च ह्रस्वस्य तुग् भवति। तदेवं ह्रस्वदीर्घयोर्विधानाः।

स्य पिति कृति तुक् इको यणचि । ह्रस्वस्येति वर्तते । पिति कृति तुगिति निवृत्तम् । इह तर्हि प्राप्नोति । चयनं चायको लवनं लावकः । अयादयो ऽत्र बाधका भविष्यन्ति । इह तर्हि प्राप्नोति । खट्वेन्द्रः । मालेन्द्रः । खट्वैलका । मालैलका । गुणवृद्धिबाध्यम् । गुणवृद्धी अत्र बाधिके भविष्यतः । इदं तर्हि प्रयोजनम् । इकः अचि यणेव यथा स्यात् । यदन्यत् प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति शाकलम् । सिन्नित्यसमासयोः शाकलप्रतिषेधं चोदयिष्यति स न वक्तव्यो भवति । यणादेशः प्लुतपूर्वस्य * । यणादेशः प्लुतपूर्वस्य चेति वक्तव्यम् । अग्ना३ इन्द्रम् । अग्ना३यिन्द्रम् । पटा३ उ उदकम् । पटा३वुदकम् । अग्ना३ इ आशा । अग्ना३याशा पटा३ उ आशा । पटा३वाशा । किं पुनः कारणं न सिध्यति । असिद्धः प्लुतः प्लुतविकाराविमौ । सिद्धः प्लुतः स्वरसन्धिषु । कथं ज्ञायते । यदयं प्लुतप्रगृह्या अचीति प्लुतस्य प्रकृतिभावं शास्ति । तज्ज्ञापयत्याचार्यः सिद्धः प्लुतः स्वरसन्धिष्विति । कथं कृत्वा ज्ञापकम् । सतो हि कार्यिणः कार्येण भवितव्यम् । इदं तर्हि प्रयोजनम् । दीर्घशाकलप्रतिषेधार्थम् । दीर्घत्वं शाकलं च मा भूदिति । एतदपि नास्ति प्रयोजनम् । आरभ्यते प्लुतपूर्वस्य यणादेशः । तयोर्य्वावचि संहितायामिति । तदेव दीर्घशाकलप्रतिषेधार्थं भविष्यति । तन्न वक्तव्यं भवति । ननु च तस्मिन्नप्युच्यमाने इदं न वक्तव्यं भवति । अवश्यमि-

---

प्लुतस्य प्रकृतिभावस्येष्टत्वान्नार्थ इग्ग्रहणेन हल्व्यावृत्त्यर्थेन । चयनमिति । व्यक्तौ पदार्थे प्रतिव्यक्तिलक्षणेन प्रवर्तितव्यमित्येकोपि यणादेशोयादयश्च पर्यायेण प्रवर्तेरन् । आयादयोत्रेति । द्रव्येपि पदार्थे उत्सर्गापवादभावः संदिग्धासंदिग्धाश्रयोरस्त्येव । न वक्तव्य इति । इग्ग्रहणमन्तरेणापि इको यणि सिद्धे पुनरिग्ग्रहणं शाकलयणादेशयोरेकविषयत्वाद्विकल्पितयोर्व्यवस्थितविभाषार्थं विज्ञायते । तेन सिन्नित्यसमासयोर्यणादेश एवान्यत्र तूभयम् । अग्ना ३ यिन्द्रमिति । अग्ने इन्द्र इति स्थिते एचोऽप्रगृह्यस्येति पूर्वस्यार्द्धस्य मात्राया आकार आदेशः । स च प्लुतः । उत्तरस्य त्वर्द्धस्य मात्राया इदुतावुदात्तत्वमाकारस्येदुतोश्च युगपद्भवति । प्लुतविकाराविति । प्लुतसन्निधौ विकारावित्यर्थः । यद्यपि स्वतोसिद्धत्वमिदुतोरस्ति तथापि प्लुतसिद्ध्या तयोः सिद्धत्वं प्रतिपादयितुं प्लुतासिद्ध्या तयोरसिद्धत्वमुच्यते । वार्तिकारम्भे तु आश्रयादिदुतोः सिद्धत्वम् । स्वरसन्धिष्विति । सन्धिः संहिता त-

दं वक्तव्यम् । यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थम् । भो३इ इन्द्र । भो३ यिन्द्र । भो३इ इह । भो३ यिहेति । यदि तर्ह्यस्य निबन्धनमस्ति । इदमेव वक्तव्यम् । तन्न वक्तव्यम् । तदप्यवश्यं स्वरार्थं वक्तव्यम् । अनेन हि सत्युदात्तस्वरितयोर्यण इत्येष स्वरः प्रसज्येत । तेन पुनः सत्यसिद्धत्वान्न भविष्यति । यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यम् । इदं न वक्तव्यम् । ननु चोक्तमिदमप्यवश्यं वक्तव्यम् । यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थम् । भो३यिन्द्र । भो३ यिहेति । छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति । यत्तर्हि न छान्दसम् । भो३यिन्द्र । भो३यिहेति साम गायति । एषोपि छन्दसि दृष्टानुप्रयोगः क्रियते । जश्त्वं न सिद्धं यणमच पश्य यशापदान्तो हलचश्च पूर्वः॥ दीर्घस्य यण् ह्रस्व इति प्रवृत्तं संबन्धवृत्त्या गुणवृद्धिबाध्यम्॥ १॥ नित्ये च यः शाकलभाक्समासे तदर्थमेतद्भगवांश्चकार॥ सामर्थ्ययोगान्नहि किं चिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात् ॥ २ ॥

वान्तो यि प्रत्यये ॥ ७९ ॥ वान्तादेशे स्थानिनिर्देशः * । वान्तादेशे स्थानिनिर्देशः कर्तव्यः । ओकारौकारयोरिति वक्तव्यम् । एकारैकारयोर्मा भूदिति । स तर्हि वक्तव्यः । न वक्तव्यः । वान्तग्रहणं

---

त्कार्येषु सिद्ध इत्यर्थः । यदयमिति । ननु च प्रकृतिभाव एव कर्तव्ये प्लुतस्याश्रयणात्सिद्धत्वं स्यादिति कथं ज्ञापकम् । नैष दोषः । अनेककल्पनासंभवेपीष्टसिद्ध्यर्थं सैयमेव कल्पनाश्रीयते । स्वरसन्धिकार्येषु सिद्धं प्लुतप्रकारयुक्तोरिदुतोरपि सिद्धत्वं भवति । दीर्घेति । अग्नायिन्द्रमित्यादावकः सवर्णे दीर्घ इति दीर्घः प्राप्नोति । अग्नायाग्नेत्यादौ त्विकोसवर्णे शाकल्यस्य ह्रस्वश्चेति प्रकृतिभावः । भो ३ यिन्द्रमिति । भोशब्दस्य वर्णव्यत्ययेन छान्दसः प्लुतः । इकारो निपातः तस्य निपात एकाजनाङिति प्रगृह्यसंज्ञाप्लुतप्रगृह्या अचीति प्रकृतिभावे प्राप्ते यण्विधानम् । अनेन हीति । स्वरे कर्तव्येऽस्य यणः सिद्धत्वात्तयोर्यु्विव्यनेन तु यणादेश उदात्तस्वरितयोर्यण इति स्वरेऽसिद्ध इति ततः परस्यानुदात्तस्य स्वरितत्वाभावः । दृष्टानुविधिरिति । सर्वे विधयश्छन्दसि विकल्प्यन्त इति प्रकृतिभावः सवर्णदीर्घत्वाभावे यण् भविष्यतीत्यर्थः । एषोपीति । छान्दसस्येदमनुकरणम् । साम्नो नामधेयत्वेन प्रसिद्धमित्यर्थः । गीतिरहितस्वरूपमात्रमनुक्रियते इति । अनुकरणे गीत्यभावः । सामर्थ्ययोगादिति । शास्त्रसामर्थ्यात् सूत्रार्थव्यवस्थापनान्न किञ्चित्पदमात्रमपोहानर्थकमित्यर्थः ॥

वान्तो यि । वान्तादेश इति । पूर्वत्र स्थानिविशेषलाभो यथासंख्यसंबन्धात् । इह तु

न करिष्यते । एचो यि प्रत्यये ऽयादयो भवन्तीत्येव सिद्धम् । यदि वान्तग्रहणं न क्रियते । चेयं जेयमित्यत्रापि प्राप्नोति । क्षय्यजय्यौ शक्यार्थे इत्येतन्नियमार्थं भविष्यति । क्षिज्योरेवैच इति । तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति । चेयंप।पम् । जेयो वृषल इति । उभयतो नियमो विज्ञास्यते । क्षिज्यो रेवैचस्तयोश्च शक्यार्थ एवेति । इहापि तर्हि नियमान्न प्राप्नोति । लव्यम् । पव्यम् । अवश्यलाव्यम् । अवश्यपाव्यम् । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यथाजातीयकः क्षिज्योरेच् । कथंजातीयकः क्षिज्योरेच् । एकारः । एवमपि रायमिच्छति रैयति । अत्रापि प्राप्नोति । रायिश्छान्दसः । दृष्टानुविधिश्छन्दसि भवति । गोर्यूतौ छन्दसि * । गोर्यूतौछन्दस्युपसंख्यानं कर्तव्यम् । आनो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । गोयुतमित्येवान्यत्र । अध्वपरिमाणे च * । अध्वपरिमाणेच गोर्यूतावुपसंख्यानं कर्तव्यम् । गव्यूतिमध्वानं गतः । गोयूतिमित्येवान्यत्र ॥

धातोस्तन्निमित्तस्यैव ॥ ८० ॥ एवकारः किमर्थः । नियमार्थः । नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति । इष्टतोवधारणार्थस्तर्हि । यथैवं विज्ञायेत धातोस्तन्निमित्तस्यैवेति । मैवं विज्ञायि धातोरेव तन्निमित्तस्येति । किं च स्यात् । अधातोस्तन्निमित्तस्य न स्यात् । शङ्कव्यं दारु । पिचव्यः कार्पास इति ॥

क्रय्यस्तदर्थे ॥ ८२ ॥ तदित्यनेन किं प्रतिनिर्दिश्यते । स एव

---

निमित्ताभावात्तल्लाभाभावः । उभयतो नियम इति । योगविभागाश्रयणादिति भावः । रायिश्छान्दस इति । एतद्भाष्यवशाद्भाषायां रैशब्दोऽसाधुरिति लक्ष्यते । अथ वा क्यच् पर एव रायिः छान्दस इति व्याख्यायते ॥

क्रय्यः । तदित्यनेनेति । प्रकृत्यर्थस्याप्राधान्यात्परामर्शो न युक्तः । प्रत्ययार्थपरामर्शेऽपि तदर्थग्रहणमयुक्तम् । तथा हि । यदि स एवार्थस्तदर्थ इति तत्पुरुष आश्रीयते तदावश्यमेव तस्मिन्नर्थे क्रय्यशब्दो वर्ततइति नार्थस्तदर्थग्रहणेन । अथ सोऽर्थोयस्यासौ तदर्थः शब्दः तदा शब्दे शब्दस्य वृत्त्यसंभवात्तदर्थग्रहणमनर्थकमिति मत्वा पृच्छति । स एवेति । प्रधानस्य परामर्शासंभवे गुणभूतस्य प्रकृत्यर्थस्य विनिमयलक्षणस्य परामर्शः तस्मै

क्रीणात्यर्थः । इह मा भूत् । क्रेयं नो धान्यं क्रेतव्यमित्यर्थः । न चास्ति क्रय्यमिति ॥

भय्यप्रवय्ये च च्छन्दसि ॥ ८३ ॥ भय्यादिप्रकरणे ह्रदय्या उपसंख्यानम् *। भय्यादिप्रकरणे ह्रदय्या उपसंख्यानं कर्तव्यम् । ह्रदय्या आपः । अव् शरस्य च * । अवादेशो भवतीति वक्तव्यम् । शरस्य च ह्रदस्य च वान्तोवादेशो वक्तव्यः। ह्रदव्या आपः । शरव्या वै तेजनम् । शरव्यस्य पशूनभिधातुकः स्यात् । शरुवृत्ताद्वा सिद्धम्* । शरुवृत्ताद्वा पुनः सिद्धमेतत् । ऋजन्ती शरुरित्यपि दृश्यते । ऋच्छती शरुरित्यपि शरुशब्दप्रवृत्तिर्दृश्यते । शरुहस्त इति च लोके शरहस्तमुपाचरन्ति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

---

एकः पूर्वपरयोः ॥ ८४ ॥ एकवचनं किमर्थम्। एकवचनं पृथगादेशप्रतिषेधार्थम् * । एकवचनं क्रियते ।एकश्चादेशो यथा स्यात् पृथगादेशो मा भूदिति । न वा द्रव्यवत्कर्मचोदनायां द्वयोरेकस्या-

---

क्रयाय यदापणे गवादिद्रव्यं व्यवस्थापितं तत्र क्रय्यशब्दो निपात्यते। क्रेयमिति । मूल्येनोपादातव्यमित्यर्थः । न चास्ति क्रय्यमिति। आपणे क्रयाय प्रसारितं धान्यं नास्तीत्यर्थः । केचित्तु क्रय्यशब्दे क्रीणातिर्विक्रये वर्ततइति व्याचक्षते । तेनापणे विक्रयार्थं यद् द्रव्यं न्यस्तं तत् क्रय्यमित्यर्थः ॥

भय्य। ह्रदय्या इति। ह्रदे भवाः । भवे छन्दसीति यत्प्रत्ययः । अकारस्यायादेशः । शरव्यस्येति । शरशब्दस्य यति परतोऽकारस्यावादेशः । शरुवृत्तादिति । शरुशब्दः शृस्वृस्निहीत्यौणादिकस्तस्माद्यति कृते ओर्गुण इति गुणे वान्तो यि प्रत्ययइति वान्तादेशे सिद्धः । शरव्य इति ॥ इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठाध्यायस्य प्रथमपादे तृतीयमाह्निकम् ॥

---

एकः पूर्वपरयोः। एकवचनमिति । आद्गुण इत्यादावेकस्यादेशस्य सूत्र उपादानात् संख्यायाश्च विवक्षितत्वाच्छब्दोपात्तसंख्यात्यागे कारणाभावाद् गुणभेदे प्रधानस्याभेदात् स्थानिभेदेऽप्येकस्यैवादेशस्य प्रवृत्तिः सिद्धेतिप्रश्नः । पृथगादेशप्रतिषेधार्थमिति । आदेशस्य विधेयत्वात्प्राधान्यात् प्रधाने च ग्रहं संमार्ष्टीत्यादौ संख्याया अविवक्षितत्वात् स्थानिभेदाद् द्वावादेशौ स्यातामित्येकग्रहणं कृतम्। नवेति। कर्मचोदना कर्मणः कारकस्य क्रियमाणत्वेन

भिनिर्वृत्तेः *। न वा एतत्प्रयोजनम्। किं कारणम्। द्रव्यवत्क-
र्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेरेक आदेशो भविष्यति। तद्यथा
द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति। अनयोः पूल-
योः कटं कुरु। अनयोर्मृत्पिण्डयोर्घटं कुर्विति। न चोच्यते एक-
मिति। एकं चासौ करोति। किं पुनः कारणं द्रव्येषु कर्मचोदनायां
द्वयोरेकस्याभिनिर्वृत्तिर्भवति। तच्चैकवाक्यभावात् *। एकवाक्य-
भावाद्। द्वयोरेकस्याभिनिर्वृत्तिर्भवति। आतश्चैकवाक्यभावाद्।
व्याकरणेपि ह्यन्यत्र द्वयोः स्थानिनोरेक आदेशो भवति। ज्वरत्वर-
स्रिव्यविमवामुपधायाश्च भ्रस्जोरोपधयोरमन्यतरस्यामिति। यत्ताव-
दुच्यते एकवाक्यभावादिति। तन्न। अर्थात् प्रकरणाद्वा लोके द्वयो-
रेकस्याभिनिर्वृत्तिर्भवति। अर्थी वास्यैकेन भवति प्रकरणं वा तत्र
भवति। इदमेकमेव कर्तव्यमिति। आतश्चार्थाद्वा प्रकरणाद्वा। व्या-
करणेपि ह्यन्यत्र द्वयोः स्थानिनोर्द्वावादेशौ भवतः। रदाभ्यां निष्ठा
तो नः पूर्वस्य च दः। उभौ साभ्यासस्येति। कथं यदुक्तं व्याकरणेपि
हि अन्यत्र द्वयोः स्थानिनोरेक आदेशो भवति। ज्वरत्वरस्रिव्यविम-
वामुपधायाश्च भ्रस्जोरोपधयोरमन्यतरस्यामिति। इह तावज्ज्वरत्वर-
स्रिव्यविमवामुपधायाश्चेति स्तां द्वावूठौ नास्ति दोषः। सवर्णदीर्घत्वेन
सिद्धम् इह भ्रस्जोरोपधयोरमन्यतरस्यामिति। वक्ष्यति ह्येतत्। भ्र-
स्जोरोपधयोर्लोप आगमो रम् विधीयतइति। यदुच्यते। अर्थाद्वाप्र-
करणाद्वेति। तन्न। किं कारणम्। एकवाक्यभावादेव लोके द्वयोरे-
कस्याभिनिर्वृत्तिर्भवति। आतश्चैकवाक्यभावात्। अङ्ग हि भवान्
ग्राम्यं पांसुलपादमप्रकरणज्ञमागतं ब्रवीतु। अनयोः पूलयोः कटं
कुरु। अनयोर्मृत्पिण्डयोर्घटं कुर्विति। एकमेवासौ करिष्यति। कथं
यदुक्तं व्याकरणेपि ह्यन्यत्र द्वयोः स्थानिनोर्द्वावादेशौ भवतः।
रदाभ्यां निष्ठा तो नः पूर्वस्य च द उभौ साभ्यासस्येति। इह ताव-
द् रदाभ्यां निष्ठा तो नः पूर्वस्य च द इति द्वे वाक्ये। कथम्। यो-

---

या चोदना तस्यामित्यर्थः। एकवाक्यभावादिति। यत्रोपात्त कारकान्विता क्रियैव सा-
ध्यमाना वाक्यार्थ इत्यर्थः। आगमो रमिति। तेन नासौ द्वयोः स्थाने विधीयते इत्य-

गविभागः करिष्यते। रदाभ्यां निष्ठा तो नः। ततः पूर्वस्य च द इ-ति इहापि उभौ साभ्यासस्येति। उभौग्रहणसामर्थ्याद् द्वावादेशौ भविष्यतः तत्रावयवे शास्त्रार्थसंप्रत्ययो यथा लोके *। तत्रावयवे शा-स्त्रार्थसंप्रत्ययः प्राप्नोति। यथा लोके। तद्यथा। लोके वसन्ते ब्रा-ह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति। गर्भाष्टमे ब्राह्मण उपनेय इति सकृदुपनीय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति। तथा चिर्हृदयंगमाभिर-द्भिरशब्दाभिरुपस्पृशेदिति सकृदुपस्पृश्य कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति। एवमिहापि खट्वेन्द्रे कृतः शास्त्रार्थ इति कृ-त्वा मालेन्द्रादिषु न स्यात्। सिद्धं तु धर्मोपदेशने ऽनवयविज्ञानाद् यथा लौकिकवैदिकेषु *। सिद्धमेतत्। कथम्। धर्मोपदेशनमिदं शास्त्रम्। धर्मोपदेशने ऽस्मिं च्छास्त्रे ऽनवयवेन शास्त्रार्थः संप्रतीयते। यथा लौकिकवैदिकेषु च कृतान्तेषु। लोके तावत्। ब्राह्मणो न हन्तव्यः सुरा न पेयेति। ब्राह्मणमात्रं न हन्यते सुरामात्रं न पी-यते। यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्। एकं च ब्राह्मणम-हत्वैकां च सुरामपीत्वा ऽन्यत्र कामचारः स्यात्। तथा पूर्ववया ब्राह्मणः प्रत्युत्थेय इति। पूर्ववयोमात्रं प्रत्युत्थीयते। यदि चावय-वेन शास्त्रार्थसंप्रत्ययः स्यात्। एकं पूर्ववयसं प्रत्युत्थायान्यत्र काम-चारः स्यात्। तथा वेदे खल्वपि वसन्ते ब्राह्मणो ऽग्निष्टोमादिभिः

---

नैको न भविष्यतीत्यर्थः। उभौग्रहणसामर्थ्यादिति। प्राणिणिषतीत्यादौ अनितेरित्यने-नोपसर्गादनन्तरस्य नकारस्य णत्वे सिद्धे साभ्यासस्येत्येतावतैव द्वयोर्नकारयोर्णत्वं सिद्ध-मित्युभौ ग्रहणमादेशनिर्देशार्थं विज्ञायते। साभ्यासस्यानितेरुभौ णकारौ भवत इति। तदेवमेकग्रहणं प्रत्याख्यातम्। आद्गुण इत्यादौ संख्यायाः शब्दोपात्ताया विवक्षणात्। य त्तु संख्या न विवक्ष्यते तत्र लक्ष्यसिद्धिरविवक्षितत्वे हेतुः। तत्रावयव इति। व्यक्ति-समुदायापेक्षया एका व्यक्तिरवयवस्तत्रैव शास्त्रीयं कार्यं प्राप्नोति। तावतैव शास्त्रार्थ-स्यानुष्ठानान्न तु सर्वासु व्यक्तिष्वित्यर्थः। सिद्धं त्विति। साधुभिर्भाषितव्यमिति धर्मनि-यमोऽनेन क्रियते इत्यर्थप्रतिपादनाय प्रयुज्यमानेषु सर्वेष्वेव शब्देष्विदं शास्त्रमन्वाख्या-नाय प्रवर्तते न तु कस्यां चिदेव शब्दव्यक्तावित्यर्थः। अवयवेनेति। साकल्येनेत्यर्थः। तथा पूर्ववया इति। न केवलं निषेधः सर्वविषयोऽनुष्ठीयते यावद्विधिरपि यथासंभवमि-

क्रतुभिर्यजेतेति। अग्न्याधाननिमित्तं वसन्ते वसन्ते इज्यते। यदि चात्रावयवेन शास्त्रार्थसंप्रत्ययः स्यात्। सकृदिष्ट्वा पुनरिज्यायां न प्रवर्तेत। उभयथेह लोके दृश्यते। अवयवेनापि शास्त्रार्थसंप्रत्ययो ऽनवयवेनापि। कथं पुनरिदमुभयं लभ्यते। लभ्यमित्याह। कथम्। इह तावद् वसन्ते ब्राह्मणो ऽग्नीनादधीतेत्यग्न्याधानं यज्ञमुखप्रतिपत्त्यर्थं सकृदाधाय कृतः शास्त्रार्थः प्रतिपन्नं यज्ञमुखमिति कृत्वा पुनः प्रवृत्तिर्न भवति। अतो ऽत्रावयवेन शास्त्रार्थं संप्रतीयते। यथा गर्भाष्टमे ब्राह्मण उपनेय इति उपनयनं संस्कारार्थं सकृच्चासावुपनीतः संस्कृतो भवति। अतो ऽत्राप्यवयवेन शास्त्रार्थः संप्रतीयते। तथा त्रिर्हृदयंगमाभिरद्भिरशब्दाभिरुपस्पृशेदित्युपस्पर्शनं शौचार्थम्। सकृच्चासावुपस्पृश्य शुचिर्भवत्यतो ऽत्राप्यवयवेन शास्त्रार्थः संप्रतीयते। इहेदानीं ब्राह्मणो न हन्तव्यः सुरा न पेयेति। ब्राह्मणवधे सुरापाने महादोष उक्तः। स ब्राह्मणवधमात्रे सुरापानमात्रे च प्रसक्तः। अतो ऽत्रानवयवेन शास्त्रार्थः संप्रतीयते। तथा पूर्ववया ब्राह्मणः प्रत्युत्थेय इति पूर्ववयसो ऽप्रत्युत्थाने दोष उक्तः। प्रत्युत्थाने च गुणः। कथम्। ऊर्ध्वं प्राणा व्युत्क्रामन्ति यून स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते॥१॥ इति॥ स च पूर्ववयोमात्रे प्रसक्तो ऽतो चाप्यनवयवेन शास्त्रार्थः संप्रतीयते। तथा वसन्ते ब्राह्मणो ऽग्निष्टोमादिभिः क्रतुभिर्यजेते। इज्यायाः किं स्वित्प्रयोजनमुक्तम्। किम्। स्वर्गे लोके अप्सरस एनं जाया भूत्वोपशेरते। तच्च द्वितीयस्याश्च तृतीयस्याश्चेज्यायाः फलं भवितुमर्हति। अतोऽत्राप्यनव-

---

ति दर्शयितुमुपन्यासः। अग्न्याधाननिमित्तमिति। अग्न्याधानं निमित्तमस्येति बहुव्रीहिः। सत्यग्न्याधानेऽग्निष्टोमादिष्वाधिकारात्। यज्ञमुखमिति। यज्ञद्वारं यज्ञोपायमित्यर्थः। ब्राह्मणवध इति। एकस्मिन्नपि ब्राह्मणे हते निषेधातिक्रमात्सर्वब्राह्मणविषयो हनननिषेधः प्रतीयते। ऊर्ध्वं प्राणा इति। अर्थवादोयं प्रत्युत्थानप्रशंसापरः। वसन्त इति। अङ्गभूयस्त्वात् फलभूयस्त्वमिति। काम्यानि कर्माणि पुनः पुनरधिकारिभिरनुष्ठीयन्ते। यस्य पुनः कामना नास्ति नासौ पुनरनुतिष्ठति। नैमित्तिकान्यपि कर्माणि यदा यदा निमित्तावगमस्तदा तदाऽवश्यानुष्ठेयानि नित्यानां तु नित्यत्वादेवाविच्छेदः।

येन शास्त्रार्थः संप्रतीयते। तथा शब्दस्यापि ज्ञाने प्रयोजनमुक्तम्। किम्। एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीति। यद्येकः शब्दः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति। किमर्थं द्वीतियस्तृतीयश्च प्रयुज्यते। नवै कामानां तृप्तिरस्ति। अथ पूर्वपरग्रहणं किमर्थम्। पूर्वपरग्रहणं परस्यादेशप्रतिषेधार्थम् *। पूर्वपरग्रहणं क्रियते। परस्यादेशप्रतिषेधार्थम्। परस्यादेशो मा भूत्। आद्गुण इति। कथं च प्राप्नोति। पञ्चमीनिर्दिष्टाद्धि परस्य *। पञ्चमीनिर्दिष्टाद्धि परस्यादेशः प्राप्नोति। तथा। द्यन्तरुपसर्गेभ्योऽप ईदिति। षष्ठीनिर्दिष्टार्थं तु *। षष्ठीनिर्देशार्थं तु पूर्वपरग्रहणं क्रियते। षष्ठीनिर्देशो यथा प्रकल्पेत। अनिर्दिष्टे हि षष्ठ्यर्थाप्रसिद्धिः *। अक्रियमाणे हि पूर्वपरग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात्। कस्य, स्थानेयोगत्वस्य। नैष दोषः। आदित्येषा पञ्चमी अचीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति। तथाऽचीत्येषा सप्तमी आदिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्येति। एवं तर्हि सिद्धे सति यत्पूर्वपरग्रहणं करोति तज्ज्ञापयत्याचार्यः। न उभे युगपत्प्रकल्पिके भवत इति। किमेतस्य ज्ञापने प्रयोजनम्। यदुक्तं सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्ग इति स न दोषो भवति॥

अन्तादिवच्च॥८५॥ किमर्थमिदमुच्यते। अन्तादिवद्वचनमामिश्रस्यादेशवचनात् *। अन्तादिवद्वचनं क्रियते। आमिश्रस्यादेशवचनात्। आमिश्रस्यायमादेश उच्यते। स नैव पूर्वग्रहणेन गृह्यते।

---

अथ पूर्वेति। आद्गुण इत्यादावादित्यादिका पञ्चमी अचीत्यादेः षष्ठीं प्रकल्पयिष्यति। अचीत्यादिका सप्तम्यादित्यादेरिति मत्वा प्रश्नः। पूर्वपरग्रहणमिति। परस्यैवादेशो मा भूत् पूर्वपरयोर्यथा स्यादित्यर्थः। षष्ठीनिर्दिष्टार्थं त्विति। निर्देशो निर्दिष्टम्। तुश्चशब्दार्थे। अनिष्टनिवृत्तिरिष्टसिद्धिश्च प्रयोजनमित्यर्थः। यदुक्तमिति। तस्मादित्युत्तरस्येत्यत्र। सप्तमीपञ्चम्योरेति। आनेमुगीदास इत्यादौ। न चोभयोः प्रकल्पनं विरुद्धं यतो विरोधाद्भवेत् सूत्रद्वयप्रमाणत्वाद् द्वे भवेतां प्रकल्पिके। षष्ठ्या विभक्ती तेनाच ज्ञापकार्थत्वमाश्रितम्॥

अन्ता। किमर्थमिति। स्थानिवद्भावेन कार्याणां सिद्धिं मत्वा प्रश्नः। आमिश्रस्येति।

नापि परग्रहणेन। तद्यथा। क्षीरोदके संपृक्ते आमिश्रत्वान्नैव क्षीरग्रहणेन गृह्यते नाप्युदकग्रहणेन। इष्यते च ग्रहणं स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीत्यन्तादिवद्वचनम्। एवमर्थमिदमुच्यते। अस्तिप्रयोजनमेतत्। किं तर्हीति। तत्र यस्यान्तादिवत्तन्निर्देशः*। तत्र यस्यान्तादिवद्भाव इष्यते तन्निर्देशः कर्तव्यः। अस्यान्तवद्भवति अस्यादिवद्भवतीति वक्तव्यम्। सिद्धं तु पूर्वपराधिकारात्*। सिद्धमेतत्। कथम्। पूर्वपराधिकारात्। पूर्वपरयोरिति वर्तते पूर्वस्यकार्यं प्रत्यन्तवद्भवति परस्य कार्यं प्रत्यादिवद्भवति। अथ यत्रोभयमाश्रीयते किं तत्र पूर्वस्यान्तवद्भवति आहो स्वित्परस्यादिवद्भवति। उभयत आश्रये नान्तादिवत् *। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। लौकिकोयं दृ-

---

समुदायस्येत्यर्थः। पूर्वपरसमुदायो ह्येकादेशस्य स्थानी न पूर्वपराविति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तमनेनातिदिश्यते। क्षीरोदके इति। नियतव्यक्तिविवक्षायां जातिप्राधान्याभावादेकवद्भावाभावः। यदि तर्हि समुदायः स्थानी नावयवः तत्कथमुक्तं यो ह्युभयोः स्थाने भवति लभते सावन्यतरतो व्यपदेशमिति खट्वर्श्य इत्यादौ परत्वं भवतीति समुदायिव्यतिरिक्तसमुदायाभावाद् वस्तुस्थित्याश्रयेणान्यतरतो व्यपदेशाविरोधः। स्थानिवद्भावे तु स्थानी साक्षान्निर्दिष्ट आश्रीयते। नन्वादेशग्रहणादानुमानिकस्याप्यादेशस्य स्थानिवद्भावात् स्थान्यप्यानुमानिक आश्रीयते। यथोदाहृतमिकः पचतु। अत्र ह्यौकारेणैकारान्तः स्थान्यनुमीयते। उकारेणाप्युकारान्त आदेशः तस्य स्थानिवद्भावात्तिङन्तं पदमिति पदसंज्ञा भवति। एवमेकादेशस्यानुमीयमानस्थानित्वपूर्वपरावयवाश्रयं कार्यं सिद्धमिति किमनेनातिदेशेन। एवं तर्ह्यनल्विधाविति स्थानिवद्भाव उक्तोऽल्विध्यर्थमिदम्। तथा च क्षीरपेणेत्यादावेकाजुत्तरपदे ण इति णत्वमल्विधिरप्यन्तवद्भावाद्भवति। यत्त्विह वार्त्तिकमन्तादिवद्वचनमामिश्रस्यादेशवचनादिति तदादेशग्रहणप्रयोजनापरामर्शेन। तत्रयस्येति। अन्तादिशब्दयोरवयवविशेषवाचित्वादवयविमात्रापेक्षेपि अवयवविशेषप्रतिपादनाय तन्निर्देशः कर्तव्य इत्यर्थः। पूर्वस्येति। क्व चिदादेशविधानात् प्राग्यौ पूर्वपरौ तौ गृह्येते यथा वृक्ष औ वृक्षावित्यत्र सुपमौकारं परं प्रत्यादिवद्भावादेकादेशस्य सुबन्तं पदमिति पदसंज्ञा भवति। क्व चित्तु कृतएकादेशे यौ पूर्वपरौ तौ गृह्येते। उभयत इति। यथा एतेर्लिङीति ह्रस्वत्वमुपसर्गात् परस्य विधीयमानमतीयात् परीयादित्यादौ न भवति। तथा ह्यन्तादिशब्दाववयवविशेषवाचिनौ तत्र यदि पूर्वं प्रत्यवयवबुद्ध्या एकादेश आश्रीयते तदा तस्यैव परं प्रति कथमादिवद्भावः स्यादेवं परं प्रत्यादिवत्त्वे पूर्वं प्रत्यन्त-

ष्टान्तः। तद्यथा। लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति यदा तमुभौ युगपत् प्रेषयतः नानादिक्षु च कार्ये भवतः तत्र यद्यसावविरोधार्थी भवति उभयोर्न करोति। किं पुनः कारणमुभयोर्न करोति। यौगपद्यासंभवात्। नास्ति यौगपद्येन संभवः। अथान्तवत्त्वे कानि प्रयोजनानि। अन्तवत्त्वे प्रयोजनम्। बह्वच्पूर्वपदाट्ठग्विधाने प्रयोजनम्। द्वादशान्यिकः। पूर्वपदोत्तरपदयोरेकादेशः पूर्वस्यान्तवद्भवति। यथा शक्यते कर्तुम्। बह्वच्पूर्वपदात् ठञ्भवतीति। क्व तर्हि स्यात्। यत्र कृतेप्येकादेशे बह्वच्पूर्वपदं भवति। त्रयोदशान्यिकः। प्रत्ययैकादेशः पूर्वविधौ। प्रत्ययैकादेशः पूर्वविधौ प्रयोजनम्। मधु पिबति। शिदशितोरेकादेशःशितोन्तवद्भवति। यथा शक्यते कर्तुम्। शितीति पिबादेशः। क्व तर्हि स्यात्। यत्रैकादेशो न भवति पिबति। वैभक्तस्य णत्वे। वैभक्तस्य णत्वे प्रयोजनम्। क्षीरपेण सुरापेण। उत्तरपदविभक्त्योरेकादेश उत्तरपदस्यान्तवद्भवति। यथा शक्यते कर्तुम्। एकाजुत्तरपदे णो भवतीति। क्व तर्हि स्यात्। यत्रैकादेशो न भवति। क्षीरपाणां सुरापाणाम्। अदस ईत्वोत्वे प्रयोजनम्। अमी अत्र अमीआसते। अमू अत्र अमू आसाते। अदस्विभक्त्योरेकादेशोऽदसोऽन्तवद्भवति। यथा शक्यते कर्तुम्। अदसोऽसेर्दादुदोमः। एतदीद्बहुवचनइति। क्व तर्हि स्यात्। यत्रैकादेशो न भवति। अमीभिः अमूभ्याम्। स्वरितत्वे प्रयोजनम्।

---

वद्भावो न स्यादेकस्योभयापेक्षया पारतन्त्र्याविरोधार्दिति भावः। द्वादशान्यिक इति। द्वादशान्यानि कर्माणि अध्ययने प्रवृत्तान्यस्येति तद्धितार्थसमासः। एकादेशस्यान्तवत्त्वाद्बह्वच्पूर्वपदं भवतीति ठञ् सिध्यति। अत्रोत्तरपदविशेषः शब्देन नाश्रित इत्युभयाश्रयाभावात् प्रतिषेधाभावः। क्व तर्हीति। वचनाद् भूतपूर्वगतिराश्रयिष्यतइति मन्यते। यत्रेति। सांप्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्यायुक्तत्वात्। पिबन्तीति। पा अ अन्ति इति स्थिते अन्तरङ्गत्वाच्चैकादेशे कृते पिबादेशो न प्राप्नोति शितं प्रत्यन्तवद्भावाद्भवति। वार्णादाङ्गमित्यनाश्रित्येदमुक्तम्। वैभक्तस्येति। विभक्तौ भवो वैभक्तः। अमी इति। अदसस्त्यदाद्यत्वमतो गुणइति पररूपे जसः शी आद्गुणः अदे इति स्थिते ईत्वमत्वे। अमू इति। अदौ इति स्थिते ऊत्वमत्वे। क्व तर्हीति। अदस इति पञ्चम्याऽऽश्रयिष्यते न षष्ठी। आनन्तर्यसंबन्धे वा षष्ठी विज्ञास्यतइति भावः। अमीभिरिति। पूर्वोक्तार्थाश्रयणे अत्र

कार्या ह्यार्या । तिदिति तीरेकादेशस्तितोऽन्तवद्भवति । यथा शक्यते कर्तुम् । तित्स्वरितमिति । क्व तर्हि स्यात् । यत्रैकादेशो न भवति कार्यौ ह्यार्यः । स्वरितत्वं विप्रतिषेधात् । स्वरितत्वं क्रियतामेकादेश इति । किमत्र कर्तव्यम् । परत्वात्स्वरितत्वं भविष्यति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । नित्य एकादेशः । कृतेऽपि स्वरितत्वे प्राप्नोत्यकृतेऽपि । अनित्य एकादेशः । अन्यथा स्वरस्य कृते स्वरितत्वे प्राप्नोत्यन्यथा स्वरस्याकृते स्वरितत्वे प्राप्नोति । स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति । अन्तरङ्गस्तर्ह्येकादेशः । कान्तरङ्गता । वर्णावाश्रित्यैकादेशः । पदस्य स्वरितत्वम् । स्वरितत्वमप्यन्तरङ्गम् । कथम् । उक्तमेतत् । पदग्रहणं परिमाणार्थमिति । उभयोरन्तरङ्गयोः परत्वात्स्वरितत्वम् । स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति । लिङ्गविशिष्टग्रहणाद्वा * । अथ वा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवमत्र स्वरितत्वं भविष्यति । पूर्वपदान्तोदात्तत्वं च प्रयोजनम् । गुडोदकं मथितोदकम् । पूर्वपदोत्तरपदयोरेकादेशः पूर्वपदस्यान्तवद्भवति । यथा शक्यते कर्तुम् । उदकं केवले पूर्वपदस्यान्त उदात्तो भवतीति । क्व तर्हि स्यात् । यत्रैकादेशो नास्ति । उदश्विदुदकम् । पूर्वपदान्तोदात्तत्वं च विप्रतिषेधात् । पूर्वपदान्तोदात्तत्वं क्रियतामेकादेश इति ।

---

न स्यातामीत्वोत्वे इत्यवयवावयविसंबन्धे षष्ठ्याऽऽश्रीयते । कार्येति । कार्य ष्मा इति विभज्यान्वाख्याने विचारः । यदा तु स्वार्थमभिधायेतिक्रम आश्रीयते तदा लब्धसंस्कारात् स्वरितान्तात् कार्यशब्दाट्टाबुत्पत्तौ प्रयोजनाभावः । नित्य एकादेशइति । स्वरितत्वं तु कृतएकादेशे ऽनच्कत्वान्न प्राप्नोतीत्यनित्यम् । आन्तर्यत इति । स्वरितेनुदात्तस्य सन्नावात् । लिङ्गविशिष्टेति । तित् स्वरितमित्यत्र तिदिति प्रत्ययग्रहणमिति वचनात् प्रत्ययग्रहणे यस्मात्स विहित इति तदन्तस्य ग्रहणात्तस्य च प्रातिपदिकत्वात् प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषोपस्थानात् । न चेयं स्वरूपविधावेव परिभाषोपतिष्ठते इति ङ्याप्प्रातिपदिकादित्यत्र प्रतिपादितम् । गुडोदकमिति । उभयाश्रयत्वादत्र निषेधो न भवति । एकदेशविकृतस्यानन्यत्वादुदकशब्दस्याप्युदकशब्देन ग्रहणात् पूर्वपदं प्रत्यन्तवत्त्वमेवोपयुज्यते । एतत् प्रयोजननिराकरणायाह । पूर्वपदान्तोदात्तत्वमिति । ननु वर्णाश्रयत्वादेकादेशोऽन्तरङ्गः पूर्वपदोत्तरपदाश्रयत्वात् स्वरो बहिरङ्ग इत्य-

किमत्र कर्तव्यम्। परत्वात्पूर्वपदान्तोदात्तत्वम्। पूर्वपदान्तोदात्तस्यावकाशः। उदश्विदुदकम्। एकादेशस्यावकाशः दण्डाग्रं क्षुपाग्रम्। इहोभयं प्राप्नोति। मथितोदकं गुडोदकम्। पूर्वपदान्तोदात्तत्वं भवति विप्रतिषेधेन। सचावश्यंविप्रतिषेध आश्रयितव्यः। एकादेशे हि स्वरितस्याप्रसिद्धिः स्यात्। यो हि मन्यतेऽस्त्वत्रैकादेशः। एकादेशे कृते पूर्वपदान्तोदात्तत्वं भविष्यतीति। स्वरितत्वं तस्य न सिध्यति। स्वरितो वानुदात्ते पदादाविति। गुडोदकं मथितोदकम्। कृदन्तप्रकृतिस्वरत्वं च प्रयोजनम्। प्राटिता प्राशिता। कृद्गत्योरेकादेशो गतेरन्तवद्भवति। यथा शक्यते कर्तुम्। गतिकारकोपपदात्कृदन्तमुत्तरपदं प्रकृतिस्वरं भवतीति। क्व तर्हि स्यात्। यत्र नैकादेशः। प्रकारकः प्रकरणम्। कृदन्तप्रकृतिस्वरत्वं विप्रतिषेधात्। कृदन्तप्रकृतिस्वरत्वं क्रियतामेकादेश इति। किमत्र कर्तव्यम्। कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन। कृदन्तप्रकृतिस्वरस्यावकाशः। प्रकारकः प्रकरणम्। एकादेशस्यावकाशः। दण्डाग्रं क्षुपाग्रम्। इहोभयं प्राप्नोति प्राटिता प्राशिता। कृदन्तप्रकृति स्वरत्वं भवति विप्रतिषेधेन। स चावश्यं विप्रतिषेध आश्रयितव्यः। एकादेशे ह्यप्रसिद्धिरुत्तरपदस्यापरत्वात्। योहि मन्यतेऽस्त्वत्रैकादेशः। एकादेशे कृते कृदन्तप्रकृतिस्वरत्वं भविष्यतीति। कृदन्तप्रकृतिस्वरत्वं तस्य न सिध्यति। किं कारणम्। उत्तरपदस्यापरत्वात्। नह्मीदानीमेकादेशे कृते उत्तरपदं परं भवति। ननु चान्ता-

---

युक्तोयं विप्रतिषेधः। नेदमपूर्वं चोद्यते। एकादेशप्रसङ्गस्त्वरङ्गबलीयस्त्वादिति वक्ष्यमाणत्वान्नेन्द्रस्य परस्येति ज्ञापकाश्रयेण परिहरिष्यते। स्वरितत्वं तस्य न सिध्यतीति। एकादेशस्योदात्तत्वमेव;पूर्वपदान्तोदात्तत्वेन स्यात्। पूर्वं तु पूर्वपदान्दोदात्तत्वे सत्यनुदात्तं पदमेकवर्जमित्युदकशब्दोनुदात्त इत्येकादेशः पश्चे स्वरितो भवति। प्राशितेति। क्तच्। क्तिनि तु तादौ च निति कृत्यताविति पूर्वपदप्रकृतिस्वरो भवति। नह्मीदानीमिति। एकादेशेन व्यवधानात्। न चैकदेशविकृतस्यानन्यत्वेनोत्तरपदं परं भविष्यति। एकादेशस्य तु पूर्वं प्रत्यन्तवद्भावेन स्वरः सेत्स्यतीति युक्तं कल्पयितुम्। प्राशनमित्यादौ दोषप्रसङ्गात्। तथाह्यशनशब्दो लित्स्वरेणाद्युदात्तस्तत्रैकादेशस्य पूर्वं प्रत्यन्तवत्त्वे प्रत्ययात् पूर्वं उदात्तभावो नास्तीति कथमुत्तरपदस्य स्वरः स्यात्। तस्मात् पूर्वं स्वरः कर्तव्यः। प-

दिवद्भावेन परम्। उभयत आश्रये नान्तादिवत्। उत्तरपदवृद्धिश्चै-
कादेशात् *। उत्तरपदवृद्धिश्चैकादेशाद्भवति विप्रतिषेधेन। उत्तर-
पदवृद्धेरवकाशः। पूर्वत्रैगर्तकः अपरत्रैगर्तकः। एकादेशस्यावका-
शः। दण्डाग्रं क्षुपाग्रम्। इहोभयं प्राप्नोति। पूर्वैषुकामशमः। अ-
परैषुकामशमः। उत्तरपदवृद्धिर्भवति विप्रतिषेधेन। एकादेशप्रसङ्ग-
स्त्वन्तरङ्गबलीयस्त्वात् *। एकादेशस्तु प्राप्नोति। किं कारणम्।
अन्तरङ्गबलीयस्त्वात्। अन्तरङ्गं बलीयो भवति। तत्र को दोषः।
तत्र वृद्धिविधानम् *। तत्र वृद्धिर्विधेया। नैष दोषः। आचार्यप्रवृ-
त्तिर्ज्ञापयति पूर्वोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति। यदयं
नेन्द्रस्य परस्य प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्। इन्द्रे द्वावचौ
तत्रैको यस्येतिलोपेन क्रियते ऽपर एकादेशेन। अनच्क इन्द्रः सं-
पन्नः तत्र को वृद्धिप्रसङ्गः। पश्यति त्वाचार्यः पूर्वपदोत्तरपदयोः ता-
वत्कार्यं भवति नैकादेश इति। ततो नेन्द्रस्य परस्येति प्रतिषेधं शा-
स्ति। अथादिवत्त्वे कानि प्रयोजनानि। आदिवत्त्वे प्रयोजनं प्रगृह्य-
संज्ञायाम् *। आदिवत्त्वे प्रयोजनं प्रगृह्यसंज्ञायां भवति। अग्नी इति
वायू इति। द्विवचनाद्विवचनयोरेकादेशो द्विवचनस्यादिवद्भवति।
यथा शक्येत कर्तुम्। ईदूदेद्द्विवचनं प्रगृह्यमिति। क्व तर्हि स्यात्।
यत्रैकादेशो न भवति। त्रपुणी इति जतुनी इति। सुप्तिङ्ङावि-
धिषु प्रयोजनम्। सुप्। वृक्ष तिष्ठति। प्लक्षतिष्ठति। सुबसुपोरेकादेशः। सुप
आदिवद्भवति। यथा शक्येत कर्तुम्। सुबन्तं पदमिति। क्व तर्हि स्या-
त्। यत्रैकादेशो न। वृक्षस्तिष्ठति प्लक्षस्तिष्ठति। सुप्। तिङ्। प-
चे यजे इति। तिङ्ङतिङोरेकादेशस्तिङ आदिवद्भवति यथा श-
क्येत कर्तुं तिङन्तं पदमिति क्व तर्हि स्यात्। यत्रैकादेशो न। प-
चति यजति। आप्। खट्वा। आबनापोरेकादेश आप आदिवद्भ-

आदेकादेशः। पूर्वत्रैगर्त्तक इति। पूर्वेषु त्रिगर्त्तेषु भव इति तद्धितार्थेसमासः। सुसर्वार्द्धा-
त् दिक्शब्देभ्यो जनपदस्येति तदन्तविधिना ऽवृद्धादपीति वुञ् प्रत्ययः। दिशोमद्राणा-
मित्युत्तरपदवृद्धिः। ननु प्राचां ग्रामनगराणामित्यस्या वृद्धेरवकाशो दर्शनीयः। एवं त-
र्हि प्रकरणाश्रयेणोक्तम्। इदं तूदाहरणं पूर्वकार्ष्णमृत्तिक इति। तत्र वृद्धिविधानमिति।

वति। यथा शक्येत कर्तुम् आवन्तात्सोर्लोपो भवतीति। क्व तर्हि स्यात्। यत्रैकादेशो न। क्रुञ्चा उष्णिहा देवविशा। आङ्ग्रहणे परविधौ प्रयोजनम्। अद्याहते। कदाहते। आङ्नाङोरेकादेश आदिवद्भवति। यथा शक्येत कर्तुमाङो यमहन इत्यात्मनेपदं भवतीति। क्व तर्हि स्यात्। यत्रैकादेशो न। आहते। आटश्चवृद्धिविधौ प्रयोजनम्। अद्यैहिष्ट कदैहिष्ट। आटोऽद्यशब्दस्य चैकादेश आट आदिवद्भवति। यथा शक्येत कर्तुम् आटश्च वृद्धिर्भवतीति। क्व तर्हि स्यात्। यत्रैकादेशो न ऐहिष्ट। कृदन्तप्रातिपदिकत्वे च प्रयोजनम्। धारयः सारयः। कृदकृतोरेकादेशः कृद्ग्रहणेन गृह्यते। यथा शक्येत कर्तुम् कृदन्तं प्रातिपदिकमिति। क्व तर्हि स्यात्। यत्रैकादेशो न। कार्यं हार्यम्। नाभ्यासादीनां ह्रस्वत्वे*। अभ्यासादीनां ह्रस्वत्वे नान्तादिवद्भवतीति वक्तव्यम्। के पुनरभ्यासादयः। अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि। अभ्यासह्रस्वत्वम्। उपेयाय उपेयाज। ऊहेर्ह्रस्वत्वम्। उपोह्यते प्रोह्यते। अम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि। अम्बाच। अक्काच। कुमारीदम्। किशोरीदम्। आराशस्त्रीदम्। धानाशष्कुलीदम्। निष्कौशाम्बीदं निर्वाराणसीदम्। अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनग्रहणेन ग्रहणाद्ध्रस्वत्वं प्राप्नोति। न वा बहिरङ्गलक्षणत्वात्*। न वा एतद्वक्तव्यम्। किं कारणम्। बहिरङ्गलक्षणत्वात् अन्तरङ्गं ह्रस्वत्वं बहिरङ्गा एते विधयः। असिद्धं बहिरङ्गमन्तरङ्गे। वर्णाश्रयविधौ च*। वर्णाश्रयविधौ च नान्तादिवद्भवतीति वक्तव्यम्। किं प्रयोजनम्। खट्वाभिर्जुहाव। अस्या अश्व इति। इह खट्वाभिः

---

एकादेशस्योभयाश्रयणादन्तादिवद्भावाभावादुवङेरप्रसङ्गात्। अद्याहत इति। वाक्यसंस्कारपक्षाश्रयाण्येतान्युदाहरणानि। धारय इति। धारयतीति धारयः। अनुपसर्गाल्लिम्पेति शः। कर्तरि शप्। उपेयाजेति। उप इयाज इति स्थिते आद्गुणस्तस्य परं प्रत्यादिवद्भावाद् ह्रस्वत्वप्रसङ्गः। प्रोह्यतइति। अण्ग्रहणानुवृत्तिमुभयत आश्रयणेनान्तादिवदित्यनपेक्ष्येदमुक्तम्। अम्बाचेति। अम्बार्थनद्योर्ह्रस्वत्वे कृते एकादेशे च तस्यान्तवद्भावाद् पुनर्ह्रस्वत्वप्रसङ्गः। निष्कौशाम्बीदमिति। नपुंसकह्रस्वात्परत्वादुपसर्जनह्रस्वः।

मालाभिः अतो भिस ऐस् भवतीत्यैस्भावः प्राप्नोति । नैष दोषः । तपरकरणसामर्थ्यान्न भविष्यति । अस्त्यन्यच्च तपरकरणे प्रयोजनम् । किम् । कीलालपाभिः शुभं याभिः । जुहाव । आत औ णल इत्यौत्वं प्राप्नोति । अस्या अश्व इति । एङः पदान्तादिति पूर्वत्वं प्राप्नोति । न वा ताद्रूप्यातिदेशात्*। न वा वक्तव्यम् । किं कारणम् । अताद्रूप्यातिदेशात् । नहि ताद्रूप्यमतिदिश्यते । रूपाश्रया एते विधयः । अताद्रूप्यान्न भविष्यन्ति ॥

षत्वतुकोरसिद्धः ॥ ८६ ॥ किमर्थमिदमुच्यते । षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च * । षत्वतुकोरसिद्धत्वमुच्यते । आदेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च । आदेशलक्षणप्रतिषेधार्थं तावत् । कोऽसिचत् । सोऽसिचत् । एकादेशे कृते इण इति षत्वं प्राप्नोति । असिद्धत्वान्न भवति । उत्सर्गलक्षणभावार्थं च । अधीत्य प्रेत्य । एकादेशे कृते ह्रस्वस्येति तुग् प्राप्नोति । असिद्धत्वाच्च भवति । अस्ति प्रयोजनमेतत् । किं तर्हीति । तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात् *। तत्रोत्सर्गलक्षणस्य कार्यस्याप्रसिद्धिः । अधीत्य प्रेत्य । किं कारणम् । उत्सर्गाभावात् । ह्रस्वस्येति उच्यते । न चात्र ह्रस्वं पश्यामः । ननु चात्राप्यसिद्धवचनात्सिद्धम् । असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः* । असिद्धवचनात्सिद्धमिति चेन्न । किं कारणम् । नान्यस्यासिद्धवचनादन्यस्य

---

जुहावेति । ह्वयतेर्लिटि तिपि णल्यभ्यस्तस्य चेति संप्रसारणाच्चेति पूर्वैकादेशस्तस्याकारं प्रत्यादिवद्भावाण्णल औत्वप्रसङ्गः । अस्या अश्व इति । इदमश्चतुर्थ्येकवचनम् । त्यदाद्यत्वं टाप् । सर्वनाम्नः स्याड् ह्रस्वश्चेति स्याट् ह्रस्वश्च । वृद्धिरेकादेशः । हलि लोप इति इद्रूपस्य लोपः । एचोयवायाव इत्यैकारस्यायादेशः । लोपः शाकल्यस्येति यलोपः । न वेति । कार्यमात्रमनेनातिदिश्यते न तु रूपम् । विशिष्टवर्णरूपाश्रयाश्चैते विधयो नातिदिश्यन्ते। तुकश्चासिद्धवचनं चास्यार्थस्य लिङ्गम् । यदि हि वर्णाश्रयो विधिरनेनातिदिश्येत तदाधीत्य प्रेत्येत्यादौ एकादेशस्य ह्रस्वत्वं प्रत्यादिवद्भावात्तुकः सिद्धत्वात्तुकश्चासिद्धत्वं न ब्रूयात् ॥

षत्वतु । उत्सर्गेति । उत्सर्गः स्थानी सामान्येनोत्सृष्टत्वात् । नान्यस्येति । कार्यासिद्धत्वाश्रयेणेदमुच्यते । आदेशेन स्थानिनो निवर्तितत्वात् सत्यप्यादेशस्यासिद्धत्वे स्था-

भावः। नह्यन्यस्यासिद्धवचनदन्यस्य प्रादुर्भावो भवति। नहि देव-दत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति। तस्मात्स्थानिवद्-वचनमसिद्धत्वं च *। तस्मात्स्थानिवद्भावो वक्तव्यः। असिद्धत्वं च। अधीत्य प्रेत्येति स्थानिवद्भावः। कोसिचत्सोसिचदित्यत्रासिद्धत्वम्। स्थानिवद्वचनानर्थक्यं शास्त्रसिद्धत्वात् *। स्थानविद्वचनमनर्थक-म्। किं कारणम्। शास्त्रासिद्धत्वात्। नानेन कार्यस्यासिद्धत्वं क्रियते। किं तर्हि शास्त्रासिद्धत्वमनेन क्रियते। एकादेश-शास्त्रं तुक् शास्त्रेऽसिद्धं भवतीति। संप्रसारणङीट्सु सिद्धः *। संप्रसारणङीट्सु सिद्ध एकादेश इति वक्तव्यम्। शकहूषु परिवीषु। संप्रसारण। ङि। वृचे छत्रं वृचेच्छत्रं म्लुचे छत्रं म्लुचेच्छत्रम्। ङि। डुट् अपचेछत्रमपचेच्छत्रम्। अयजेछत्रमयजेच्छत्रम्। संप्रसारणङीट्सु सिद्धः पदान्तपदाद्योरेकादेशस्यासिद्धवचनात् *। संप्रसारणङीट्सु सिद्ध एकादेशः। किं कारणम्। पदान्तपदाद्योरेकादेशस्यासिद्धवच-नात्। पदान्तपदाद्योरेकादेशोऽसिद्धो भवतीत्युच्यते। न चैष पदा-न्तपदाद्योरेकादेशः। यदि पदान्तपदाद्योरेकादेशोऽसिद्धः। सुसस्या ओषधीस्कधि। सुपिप्पला ओषधीस्कधि। अत्र षत्वं प्राप्नोति। तुग्वि-धिंप्रति पदान्तपदाद्योरेकादेशोऽसिद्धः। षत्वं प्रत्येकादेशमात्रमसि-द्धम्। यदि षत्वं प्रत्येकादेशमात्रमसिद्धम्। शकहूषु परिवीष्वत्र षत्वं न प्राप्नोति। अस्तु तर्ह्यविशेषेण। कथं सुसस्या ओषधीस्कधि सुपिप्प

---

निनः प्रत्यापत्त्यभावात्। असिद्धत्वं चेति। षत्वेऽसिद्धत्वं स्थानिवद्भावे तु स्वाश्रयस्यानिव-र्तनात् षत्वप्रसङ्गः। एकादेशशास्त्रमिति। ततश्च पूर्वं तुक्शास्त्रं प्रवर्तते पश्चादेकादेशशा-स्त्रमित्युक्तं भवति। शकहूष्विति। शकान् ह्वयतीति क्विप्। संप्रसारणम्। पूर्वैकादेशः। हल इति दीर्घत्वम्। तत्रैकादेशस्यासिद्धत्वादिण उत्तरस्य विधीयमानं षत्वं न स्यात्। वृचेछत्रमिति। एकादेशस्यासिद्धत्वान्नित्यो ह्रस्वाश्रयस्तुक् स्यात्। दीर्घात्पदान्ताद्वेति विकल्पेन त्विष्यते। पदान्तपदाद्योरिति। ननु तुल्ये वाचनिकत्वे को विशेषो येन संप्र-सारणङीट्सु सिद्ध इति प्रत्याख्यायते पदान्तपदाद्योरिति तु क्रियते। उच्यते। लाघवा-त्पदस्येत्येव वक्तव्यम्। अन्तादिग्रहणं च पूर्वसूत्रादनुवर्तते। तेन पदान्तपदाद्योरेकादेशो ऽसिद्धो भवतीत्यर्थो लभ्यते। ओषधीस्कधीति। ओषधिशब्दाद् द्वितीयाबहुवचनम्। ओ-षधेश्च विभक्तावप्रथमायामिति दीर्घः ततः पूर्वसवर्णदीर्घौ रुत्वविसर्जनीयौ। कः करत्-करतीति विसर्जनीयस्य सकारो विधीयते। इणः ष इत्यधिकारादिण उत्तरस्य षकार-

त्वा ओषधीस्त्वधि । नैष दोषः । भ्रातुष्पुत्त्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य । यदयं कस्कादिषु भ्रातुष्पुत्त्रग्रहणं करोति तज्ज्ञापयत्याचार्यो नैकादेशनिमित्तात् षत्वं भवतीति । यद्येतज् ज्ञाप्यते । शक्तहूषु परिवीषु अत्र षत्वं न प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । किं च तुल्यजातीयम् । यः कुप्वोः । यद्येवं, वेञोऽप्रत्यये परत उरिति प्राप्नोति । उदिति चेष्यते । यथा लक्षणमप्रयुक्ते । अथ वा नैवं विज्ञायते । पूर्वस्य च पदादेः परस्य च पदान्तस्येति । कथं तर्हि । परस्य च पदादेः पूर्वस्य पदान्तस्येति ॥

आद्गुणः॥८७॥ गुणग्रहणं किमर्थम् । न आदेको भवतीत्युच्येत । आदेकश्चेद्गुणः केन॥ आदेकश्चेद्गुणः केनेदानीं भविष्यति । खट्वेन्द्रो मालेन्द्रः । खट्वोदकम् मालोदकम् । स्थानेन्तरतमो हि सः॥ स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति । ऐदौतावपि तर्हि प्राप्नुतः ।

---

त्वेकादेशस्य पदान्तपदाद्योरिति वचनादसिद्धत्वाभावात् षत्वप्रसङ्गः । असिद्धत्वेत्वेकादेशस्य षत्वाप्रसङ्गात् साकारः सिध्यति । भ्रातुष्पुत्त्रग्रहणमिति । ऋतो विद्यायोनिसंबन्धेभ्य इत्यलुक् । ऋत उदित्युकार एकादेशो रपरत्वं रात्सस्येति सलोपो रेफस्य विसर्जनीयः । तत्रैकादेशस्य सिद्धत्वादिदुदुपधस्यचाप्रत्ययस्येति षत्वे सिद्धे कस्कादिषु षत्वार्थं भ्रातुष्पुत्त्रग्रहणं ज्ञापयति नैकादेशात्परस्य विसर्जनीयस्य षत्वं भवतीति । वेञ इति । वकारस्य संप्रसारणं प्रथमैकवचनं ततः सावपि पदमिति पदसंज्ञायां सत्यामुकारः पदादिराकारः पदान्त इति तयोरेकादेशस्यासिद्धत्वाभावाद् ह्रस्वान्तत्वाभावात्तुग्न प्राप्नोतीति भावः । यथालक्षणमिति । मा भूत्तुगागमः इत्यर्थः । अथ वेति । पूर्वपरयोरित्यनुवर्तते । अन्तादिग्रहणं च । तत्र यथासंख्यसंबन्धात् पूर्वस्य पदान्तस्य परस्य पदस्याऽऽदेश्चैकादेशो ऽसिद्ध इत्यर्थः संपद्यते । आकारस्यात्र पदादिर्न भवति नाप्युकारः पदान्त इत्यसिद्धत्वाभावात्तुग भवत्येवेत्यर्थः । किमर्थं षत्वतुकोरेकादेशस्यासिद्धत्वमुच्यते यावता द्विपदाश्रयत्वाद्बहिरङ्गत्वादेवैकादेशस्यासिद्धत्वं सिद्धम् । एवं तर्हि ज्ञापनार्थम् । एतज् ज्ञापयत्यचोरानन्तर्ये बहिरङ्गस्यापि नासिद्धत्वं भवति । तेनाचक्ष्यूरित्यत्रोठो ऽसिद्धत्वाभावाद्यणादेश उपपन्नो भवति ।

आद्गुणः । गुणग्रहणमिति । वक्ष्यमाणान्नियमादाद् गुण एव भविष्यतीति प्रश्नः । स्थानेन्तरतमो हि स इति । पूर्वपरयोः कण्ठतालव्ययोरन्तरतमः कण्ठतालव्य एकारः कण्ठोष्ठयोस्तु कण्ठोष्ठ्य ओकारः । ऐदौतावपीति । ऐकारस्यापि कण्ठतालव्यत्वादौ-

ऐदौतौ नैचि तावुक्तौ। एदौतौ न भविष्यतः। किं कारणम्। एचि ऐदौतावुच्येते। इह तर्हि खट्वर्श्यः मालर्श्यः ऋकारस्तर्हि प्राप्नोति। ऋकारो नोभयान्तरः॥ उभयोर्योन्तरतमस्तेन भवितव्यम्। न च ऋकार उभयोरन्तरतमः। आकारस्तर्हि प्राप्नोति। आकारो नर्तिधातौ सः॥ आकारोन भविष्यति। किं कारणम्। ऋतिधातावाकार उच्यते। तन्नियमार्थं भविष्यति। ऋकारादौ धातावेव नान्यत्रेति। प्लुतस्तर्हि प्राप्नोति। प्लुतस्य विषये स्मृतः॥ विषये प्लुत इत्युच्यते। यदा च स विषयो भवितव्यमेव तदा प्लुतेन। आन्तर्यात् त्रिचतुर्मात्राः॥ इदं तर्हि प्रयोजनम्। आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति। खट्वा इन्द्रः खट्वेन्द्रः। खट्वा उदकं खट्वोदकम्। खट्वा ईषा खट्वेषा। खट्वा ऊढा खट्वोढा- खट्वा एलका खट्वैलका। खट्वा ओदनः खट्वौदनः। खट्वा ऐतिकायनः खट्वैतिकायनः। खट्वा औपगवः खट्वौपगवः। अथ क्रियमाणेपि गुणग्रहणे कस्मादेवात्र त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति। तपरत्वान्न ते स्मृताः॥ तपरे गुणवृद्धी। ननु च तः परो यस्मात्सोयं तपरः। नेत्याह। तादपि परस्तपरः। यदि तादपि परस्तपरः ऋदोरबिति इहैव स्यात् यवःस्तवः। लवः पव इत्यत्र न स्यात्। नैष तकारः। कस्तर्हि दकारः। किं दकारे प्रयोजनम्। अथ किं तकारे। असंदेहार्थस्तकारः। यद्यसंदेहार्थस्तकारः। दकारोपि। यदि मुखसुखार्थस्तकारस्तदा दकारोपि। गुणे ङिग्शीटामुपसंख्यानं कर्तव्यम्। ङि। वृत्र इन्द्रः प्लक्ष इन्द्रः। ङिग्शी। यद्र-

---

कारस्य कण्ठौष्ठ्यत्वाच्चेति भावः। ऐदौतौ नैचोति। ऐदौतोरनेन सिद्धयोर्वृद्धिरेचीति नियमार्थं भविष्यति। एच्येव वृद्धिर्भवतीति। उभयतो नियमस्य व्याख्यास्यते। वृद्धिरेवैचोति। नोभयान्तर इति। अकारस्तु ग्रियमाण एव रपरो भवतीति स्थानत उभयान्तरः। प्लुतस्येति। प्लुतविधाने सति यस्मिन्विषये प्लुतो विहितस्तस्मिन्नप्यनेनैव भाव्यम्। अस्मिन् कर्तव्ये आष्टमिकस्य प्लुतस्यासिद्धत्वादिति पक्षे ऽनुवादप्रसङ्गात् प्लुतो न भविष्यति इत्यर्थः। त्रिचतुर्मात्रा इति। प्लुताप्लुतप्रसङ्गे प्लुतस्य विषये स्मृत इति न्यायो न तु प्लुतप्रसङ्ग इति त्रिमात्रप्रसङ्ग उच्यते। तपरत्वान्न ते स्मृता इति। स-

न्द्रं तद्रुन्द्रम्। शी। इट्। अपच इन्द्रमयज इन्द्रम्। इट्। किं प्रयोजनम्। दीर्घत्वबाधनार्थम्। सवर्णदीर्घत्वं मा भूदिति।। न वा बहिरङ्गलक्षणत्वात् *। न वा कर्तव्यम्। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षणं सवर्णदीर्घत्वमन्तरङ्गो गुणः। असिद्धं बहिरङ्गमन्तरङ्गे। आदेकस्त्वेद् गुणः केन स्थानेऽन्तरतमो हि सः। ऐदौतौ नैचि तावुक्तावकारो नोभयान्तरः॥ १॥ आकारो नर्तिघाती सः प्लुतश्च विषये स्मृतः। आन्तर्यात् त्रिचतुर्मात्रास्तपरत्वान्न ते स्मृताः॥ २॥

एत्येधत्यूठ्सु॥८९॥ किमिदमेत्येधत्योरूपग्रहणमाहोस्विद्धातुग्रहणम्। किं चातः। यदि रूपग्रहणं सिद्धमुपैति प्रैति। उपैषि उपैमि प्रैमीति न सिध्यति। अथ धातुग्रहणम्। सिद्धमेतद्भवति। किं तर्हीति। इणीकारादौ प्रतिषेधः *। इणीकारादौ वृद्धेः प्रतिषेधो वक्तव्यः। उपेतः प्रेत इति। योगविभागात्सिद्धम् *। योगविभागः करिष्यते। वृद्धिरेचि। तत एत्येधत्योः॥ एत्येधत्योश्चैचो वृद्धिर्भवति। तत ऊठि। ऊठि च वृद्धिर्भवतीति। एवमपि आ इत एतः प्रेत इत्यत्रापि प्राप्नोति। आङि पररूपमत्र बाधकं भविष्यति। न भविष्यति नाप्राप्ते पररूपे इयं वृद्धिरारभ्यते। सा यथा एङिपररूपं बाधते एवमाङिपररूपं बाधेत। नबाधते। किं कारणम्। येन नाप्राप्तिस्तस्य बाधनं भवति। न चाप्राप्ते एङि पररूपे इयं वृद्धिरारभ्य-

---

ति हि गुणेग्रहणे गुणसंज्ञाया विधौ तपरकरणात् त्रिमात्रचतुर्मात्राणां गुणसंज्ञाया सद्यवादप्रसङ्ग इत्यर्थः। वृच इन्द्र इति वृच इ इन्द्र इति स्थिते आद्गुण इत्याकारेकारयोर्गुणः प्राप्नोति इकारयोः सवर्णदीर्घत्वं च। तत्र शब्दपरविप्रतिषेधाद्दीर्घप्रसङ्गे गुण उच्यते न वेति। एकपदाश्रयत्वाद् गुणोऽन्तरङ्गः।

एत्ये। एत्ये धत्योरेङि पररूपमिति प्राप्ते ऊठ्यादगुणे च वृद्धिविधानम्। किमिदमिति। एतिरेवात्र विचार्यते। एधेस्त्वात्मनेपदित्वाद्रूपग्रहणाभावः। साहचर्यात्तु द्वयोर्निर्देशः। यद्येतीति तिङन्तानुकरणं ततो रूपग्रहणम्। अथेक्श्तिपाविति श्तिपा निर्देशः। ततो धातुग्रहणमिति संशयात्प्रश्नः। योगविभागादिति। एकस्मिन्योगे एचीत्यस्योठा संबन्धाभावाय विभागस्य कर्तुमशक्यत्वाद् योगविभागसंश्रयः। सा यथैवेति। बाध्यमात्रापेक्षायां सर्वस्य बाधाप्रसङ्ग इति भावः। येन नाप्राप्त इति। कार्यविशेषचिन्तायां

ते। आङि पररूपे पुनः प्राप्तेचाप्राप्ते च। अथ वा पुरस्तादपवादा अनन्तरान्विधीन्बाधन्तइतीयं वृद्धिरेङि पररूपं बाधिष्यते नाङि पररूपम्। अक्षादूहिन्याम्*। अक्षादूहिन्यां वृद्धिर्वक्तव्या। अक्षौहिणी। प्रादूहोढोढ्येषैष्येषु *। प्रात् ऊह ऊढ ऊढि एष एष्य इत्येतेषु वृद्धिर्वक्तव्या। प्रौहः प्रौढः प्रौढिः प्रैषः प्रैष्यः। स्वादीरेरिणोः*। स्वात् ईर ईरिन् इत्येतयोर्वृद्धिर्वक्तव्या। स्वैरं स्वैरी। ईरिन्ग्रहणं शक्यमकर्तुम्। कथं स्वैरीति। इनिनैतन्मत्वर्थीयेन सिद्धम्। स्वैरोऽस्यास्तीति स्वैरी। ऋते च तृतीयासमासे *। ऋते च तृतीयासमासे वृद्धिर्वक्तव्या। सुखार्तो दुःखार्तो। ऋत इति किम् सुखेतो दुःखेतः। तृतीयाग्रहणं किम्। परमर्तः। समास इति किम्। सुखेनर्तः। प्रवत्सतरकम्बलवसनानां च ऋणे *। प्रवत्सतरकम्बलवसनानांचऋणेवृद्धिर्वक्तव्या। प्रार्णम्। वत्सतरार्णम्। कम्बलार्णम्। वसनार्णम्। ऋणदशाभ्यां च * । ऋणदशाभ्यां च वृद्धिर्वक्तव्या। ऋणार्णं दशार्णम्॥

आटश्च॥ ९०॥ किमर्थश्चकारः। वृद्धेरनुकर्षणार्थः। नैतदस्ति प्रयोजनम्। प्रकृतावृद्धिरनुवर्तिष्यते। इदं तर्हि आटो ऽचि वृद्धिरेव यथा स्याद् यदन्यत् प्राप्नोति तन्मा भूदिति। किं चान्यत् प्राप्नोति। पररूपम्। उस्योमाङ्क्ष्वाटः पररूपप्रतिषेधं चोदयिष्यति स न वक्तव्यो भवति॥

उपसर्गादृति धातौ॥ ९१॥ धाताविति किमर्थम्। इह मा भूत्। प्रर्षभं वनम्। उपसर्गादृवृद्धिविधौ धातुग्रहणे उक्तम् *। किमु-

---

सर्वविषयव्यापिबाधस्यान्याय्यत्वात्। अथ वेति। अनन्तरे बाध्ये विज्ञाते तद्बाधया वचनस्य चरितार्थत्वादुत्तरेण सह स्पर्धायां परत्वादुत्तरं भवतीत्यर्थः। अक्षादिति। अक्षा- णूहतेवश्यमित्यावश्यके णिनिः। साधनं कृतेति समासः। प्रादिति। प्रेष्यशब्दस्त्वीष्यशब्दे भवति। प्रोढाशब्द आऊढा ओढा प्र ओढा इति स्थिते ओमाङोश्चेति पररूपं भवति। स्वैरीति। स्वेनात्मनेर्तुं गच्छत्यवश्यमिति णिनिः। इनिनेति। णिनिस्त्वनभिधनान्न भविष्यति स्वैरीति प्रयोगाभावादिति भावः। दशार्णशब्दो नदीविशेषस्य देशविशेषस्य च संज्ञा॥

उपसर्गा। प्रर्षभमिति। प्रगता ऋषभा अस्मादिति बहुव्रीहिः। उणादीनामव्युत्पत्तिपक्षे धातुर्ऋषभशब्देनास्ति। उपसर्गादिति। उपसर्गेणैव धातोराक्षेपाद्धातुग्रहणं न

क्तम्। गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रिया युक्ताः प्रादयस्तं प्रतीति वचनमिति। क्रियमाणेपि धातुग्रहणे प्रर्छक इति प्राप्नोति। यत्क्रियायुक्ताः प्रादयस्तं प्रतीति वचनान्न भवति। इदं तर्हि प्रयोजनम्। उपसर्गादृति धातोर्वृद्धिरेव यथा स्याद्यदन्यत् प्राप्नोति तन्मा भूदिति। किं चान्यत्प्राप्नोति। ऋस्वत्वमृत्यक इति। ऋति ऋस्वादुपसर्गाद् वृद्धिः पूर्वविप्रतिषेधेनेति चोदयिष्यति स न वक्तव्यो भवति। छे तुकः संबुद्धिगुणः *। छे तुग्भवतीत्येतस्मात्सम्बुद्धिगुणो भवति विप्रतिषेधेन। छे तुग्भवतीत्यस्यावकाशः। इच्छति गच्छति। सम्बुद्धिगुणस्यावकाशः। अग्ने वायो। इहोभयं प्राप्नोति। अग्नेच्छत्रं अग्नेछत्रं। वायोच्छत्रं वायोछत्रम्। संबुद्धिगुणो भवति विप्रतिषेधेन। स तर्हि विप्रतिषेधो वक्तव्यः। न वा बहिरङ्गलक्षणत्वात् *। न वा वक्तव्यः। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षणस्तुक्। अन्तरङ्गलक्षणः सम्बुद्धिगुणः। असिद्धं बहिरङ्गमन्तरङ्गे। अन्तरेणापि विप्रतिषेधमन्तरेणापि चैतां परिभाषां सिद्धम्। कथम्। इदमिह संप्रधार्यं संबुद्धिलोपः क्रियतां गुण इति। किमत्र कर्तव्यम्। परत्वाद् गुणः। नित्यः सम्बुद्धिलोपः। कृतेपि गुणे प्राप्नोत्यकृतेपि। गुणोपि नित्यः। कृतेपि सम्बुद्धिलोपे प्राप्नोत्यकृतेपि। अनित्यो गुणः। नहि सम्बुद्धिलोपे कृते प्राप्नोति। तावत्येव च्छेनानन्तर्यं तत्र तुका भवितव्यम्। तस्मात्सूक्तमुच्यते छे तुकः संबुद्धिगुणः न वा बहिरङ्गलक्षणत्वादिति। संप्रसारणदीर्घत्वयल्लोपाभ्यासगुणादयश्च तुको भवन्ति विप्रतिषेधेन। संप्रसारणदीर्घत्वस्यावकाशः। हूतः। जीनः। सं-

---

कर्त्तव्यम्। यत्रोपसर्गत्वं न संभवति तत्रोपसर्गग्रहणेन प्रादयो लक्ष्यन्ते। यथा नासिकाया नस्भावविधौ न तु भवत्युपसर्गत्वे। प्रर्छक इति। प्रगता ऋच्छका अस्मादिति बहुव्रीहिः। यदन्यदिति। सति धातुग्रहणे योगविभागेन पुनर्विधीयते इति शाकलं बाध्यते। अग्ने छत्रमिति। अग्नि स्छत्रमिति स्थिते एङ्ह्रस्वात्संबुद्धेरिति सुलोपे कृते यदि पूर्वं तुक्तदा ह्रस्वान्तत्वाभावाद् गुणो न स्यात्। पूर्वं तु गुणे ह्रस्वाभावात्तुग्न स्यादिति विप्रतिषेधोपन्यासः। बहिरङ्गलक्षणस्तुगिति। द्विपदाश्रयत्वात्। आचार्यदेशीयः पण्डितंमन्यत्वादाह अन्तरेणापीति। आचार्यस्त्वाह। अनित्यो गुण इति। तस्मादिति।

वीतः । शूनः । तुकोवकाशः । अग्निचित् । सोमसुत् । इहोभयं प्राप्नोति । परिवीषु शकहूषु । णिलोपस्यावकाशः । कारणा हारणा । तुकः स एव । इहोभयं प्राप्नोति । प्रकार्यगतः प्रहार्यगतः । अल्लोपस्यावका॰ । प्राचिकीर्षिता प्राजिहीर्षिता । तुकः स एव। इहोभयं प्राप्नोति प्रचिकीर्ष्यगतः । प्रजिहीर्ष्यगतः । अभ्यासगुणादयश्च तुको भवन्ति विप्रतिषेधेन । के पुनरभ्यासगुणादयः। ह्रस्वत्वात्वित्वगुणाः । ह्रस्वत्वस्यावकाशः । ययतुः । ययुः । तस्थतुः । तस्थुः । तुकः स एव । इहोभयं प्राप्नोति । अपचच्छतुः । अपचच्छुः । अत्वस्यावकाशः। चक्रतुः । चक्रुः । तुकः स एव । इहोभयं प्राप्नोति । अपचच्छृदतुः । अपचच्छृदुः । इत्वस्यावकाशः । यियक्षति पिपक्षति । तुकः स एव । इहोभयं प्राप्नोति । चिच्छादयिषति चिच्छर्दयिषति । गुणस्यावकाशः । लोलूयते बेभिद्यते । तुकः स एव । इहाभयं प्राप्नोति । चेच्छिद्यते चोच्छुप्यते । यणादेशादाद्गुणः॰। यणादेशादाद्गुणो भवति विप्रतिषेधेन । यणादेशस्यावकाशः । दध्यत्र मध्वत्र । आद्गुणस्यावकाशः । खट्वेन्द्रः। खट्वोदकम् । इहोभयं प्राप्नोति । वृक्षोत्र प्लक्षोत्र । इह गुणवृद्धिविधयश्च यणादेशाद्भवन्ति विप्रतिषेधेन । इह रोरवकाशः । आस्तीर्णं निपूर्त्ताः पिण्डाः । यणादेशस्यावकाशः । चक्रतुः चक्रुः । इहोभयं प्राप्नोति । दूरे ह्यध्वा जगुरिः । मित्रावरुणौ ततुरिः । किरति । गिरति । गुणवृद्ध्योरवकाशः । चेता गौः । यणादेशस्य स एव । इहोभयं प्राप्नोति । चयनं चायकः । लवनं लावकः । भलोपधातुप्रातिपदिकप्रत्ययसमासान्तोदात्तोदात्तनिवृ-

---

पूर्वोक्तार्थं निगमयति । शकहूष्विति । ह्वयतेः क्विपि संप्रसारणे पूर्वैकादेशे च कृते ह्रस्वस्य पिति कृतीति तुक् प्राप्नोति हल इति दीर्घत्वं च । प्रकार्येति । तुकि सति तेन व्यवधानाण्णिलोपाप्रसङ्गः । अपचच्छतुरिति । छो छेदने आत्वम् । अतुस् । आतो लोप इटि चेत्यालोपः । तस्य स्थानिवत्वाद्द्विर्वचनम् । छा छा इति स्थिते यदि दीर्घादिति पूर्वं तुक्स्यात्तदाजन्तत्वाभावाद् ह्रस्वो न स्यात् । अपचच्छृदतुरिति । उच्छृदिर्दीप्तिदेवनयोरित्यस्य द्विर्वचने कृते यदि पूर्वं तुल् स्यात् तत ऋकारान्तत्वाभावादुरदित्यत्वं न स्यात् । चिच्छर्दयिषतीति । छर्द वमने चुरादिः । वृक्षोत्रेति । वृक्ष से अत्रेति स्थिते ससजुषो रुः । अतो रोरित्युत्वम् । तत उकारस्याकाराश्रयो यण् प्राप्नोति पूर्वेण सहाद्गुणश्च । ततुरिरिति ।

त्तिस्वरा एकादेशाश्च यथादेशाश्च भवन्ति विप्रतिषेधेन। भलोपस्याकाशः। गार्ग्यः वात्स्यः। एकादेशयथादेशयोरवकाशः। दधीन्द्रः मधूदकं दध्यत्र मध्वत्र। इहोभयं प्राप्नोति। दाक्षी दाक्षायणः। प्लाची प्लाचायणः। अचिभलोप एकादेशाद्भवति विप्रतिषेधेन। अचिभलोपस्यावकाशः दाक्षी दाक्षायणः। प्लाक्षी प्लाक्षायणः। एकादेशस्यावकाशः। दण्डाग्रं क्षुपाग्रम्। इहोभयं प्राप्नोति। गाङ्गेयो गाङ्गः। धातुस्वरस्यावकाशः। पचति पठति। एकादेशयथादेशयोः स एव। इहोभयं प्राप्नोति। श्र्यर्थं श्रार्थम्। श्री ईषा श्रीषा। प्रातिपदिकस्वरस्यावकाशः। आम्रः। शालः। एकादेशयथादेशयोः स एव। इहोभयं प्राप्नोति अग्न्युदकम्। वृक्षार्थम्। प्रयस्वरस्यावकाशः। चिकीर्षुः। औपगवः। एकादेशयथादेशयोः स एव। इहोभयं प्राप्नोति। चिकीर्ष्वर्थम्। औपगवार्थम्। समासान्तोदात्तस्यावकाशः। राजपुरुषः। ब्रा-

---

ह्मणगमेति किकिनोरन्यतरः। वचनं बहुलं छन्दसीत्युत्वम्। रपरत्वं च। दाक्षीति। दक्षस्यापत्यं स्त्री अत इञ्। इतोमनुष्यजातेरिति ङीष्। सवर्णदीर्घत्वं बाधित्वा यस्येति लोपो भवति। दाक्षायण इति। दाक्षेरपत्यं युवा। यञिञोश्चेति फक्। फस्यायनादेशः। तत इकारस्य यण् च प्राप्नोति लोपश्च। गाङ्गेय इति। शुभ्रादिभ्यश्चेति ढक्। ढस्य एयादेशः। वृद्धिरेचीति वृद्धिर्लोपेन बाध्यते। गाङ्ग इति। शिवाद्यणा सवर्णदीर्घत्वं लोपेन बाध्यते। श्रार्थमिति। अर्थ इति पूर्वपदप्रकृतिस्वरेण धातुस्वरे सति यथादेशे उदात्तस्वरितयोर्यण इति स्वरितत्वं भवति। श्रीषेति। ईषेरिगुपधलक्षणः कः। श्रीरीषा यस्येति बहुव्रीहिः। बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरेण धातुस्वरः। तत एकादेशः स्वरितो वानुदात्ते पदादाविति स्वरित उदात्तो वा। अथ वा श्रियमिच्छतीति क्विप्। कृदुत्तरपदप्रकृतिस्वरेण धात्वन्तोदात्तत्वे सत्यन्तोदात्तादुत्तरपदादिति विभक्तेरुदात्तत्वं वा भवति। अग्न्युदकमिति। अग्निर्हितमुदकमग्न्युदकम्। समानाधिकरणाधिकारे कः। तृतीयापूर्वपदउत्तरपदलोपश्चेति समासः। उदके केवलइति पूर्वपदान्तोदात्तत्वम्। एवं तु व्याख्यायमाने प्रातिपदिकस्वरो न प्रदर्शितो भवति। तस्मादग्निरुदकमस्येत्युष्णत्वाद्वाष्पकत्वाच्चग्निरिति बहुव्रीहिः कर्तव्यः। तता बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरेण प्रातिपदिकस्वरे सति यथादेशे उदात्तस्वरितयोरिति स्वरितत्वं भवति। पूर्वं यणि सति न सिध्येत्। वृक्षार्थमिति। अर्थ इति पूर्वपदप्रकृतिस्वरे सति एकादेशे स्वरितो वानुदात्ते पदादाविति सिध्यति। पूर्वं त्वेकादेशे न सिध्येत्। चिकीर्ष्वर्थमिति। उदात्तस्वरितयोर्यण इति अकारस्य स्वरितत्वम्। औपगवार्थमिति। स्वरितो वानुदात्ते पदादावि-

ह्वायकस्वरः। एकादेशयणयोः स एव। इहोभयं प्राप्नोति। राजवै-
द्यर्थम्। राजवैदीह्नते। उदात्तनिवृत्तिस्वरस्यावकाशः। नदी कुमा-
री। एकादेशयणादेशयोः स एव। इहोभयं प्राप्नोति। कुमार्यर्थम्।
कुमारीह्नते। अल्लोपाल्लोपौ चार्धधातुके एकादेशाद्बलवतो विप्रतिषे-
धेन। अल्लोपस्यावकाशः। चिकीर्षिता। जिहीर्षिता। एकादेश-
स्यावकाशः। पचन्ति। पठन्ति। इहोभयं प्राप्नोति। चिकीर्षको
जिहीर्षकः। आल्लोपस्यावकाशः। पपिः सोमं ददिर्गाः। एकादेश-
स्यावकाशः। यान्ति। वान्ति। इहोभयं प्राप्नोति। ययतुः ययुः।
इयङुवङ्गुणवृद्धिटिल्किन्मित्पूर्वपदविकाराश्च एकादेशयणादेशाभ्यां
भवन्ति विप्रतिषेधेन। इयङुवङोरवकाशः। श्रियौ श्रियः। भुवौ भु-
वः। एकादेशयणादेशयोः स एव। इहोभयं प्राप्नोति। चिच्यियिव।
चिच्यियिम। लुलुवुः पुपुवुः। गुणवृद्ध्योरवकाशः। चेता। गौः। ए-
कादेशयणादेशयोः स एव। इहोभयं प्राप्नोति। साधुचायी। सुचा-
यी। नग्नंभावुकोऽध्वर्युः। शयिता शयितुम्। टितोऽवकाशः। षण्णां
सप्तानां पञ्चानाम्। एकादेशयणादेशयोः स एव। इहोभयं प्राप्नो-
ति। वृक्षाणाम्। कितोवकाशः। साधुदायी। सुष्ठुदायी। एकादे-
शयणादेशयोः स एव। इहोभयं प्राप्नोति। दायको धायकः। मि-
तोऽवकाशः। त्रपुणी। जतुनी। एकादेशयणादेशयोः स एव। इ-

---

ति वा स्वरितत्वम्। राजवैदीह्नत इति। राज्ञो वैदीति षष्ठीसमासः। ईह्नते इत्यस्य ति-
ङ्ङतिङ इति निघातः। लिङ्वद्भावाद्द्विचिच्यियिवेति। चिञ्चये लिट्। क्रादिनियमा-
दिट् सवर्णदीर्घत्वे प्राप्ते इयङ् येननाप्राप्तिन्यायेन यणोपवादावियङुवङौ सवर्णदीर्घस्य
तु परत्वाद्बाधकौ। साधुचिनोति। साधुचायी। साधुकारिणि चेति णिनिः। सुचिनो-
तीति तच्छीलः सुचायी। सुप्यजाताविति णिनिः। सुपीति वर्त्तमाने सुब्ग्रहणं सुम्मात्रे
यथा स्यादिति भाष्ये व्युक्तम्। अनग्नो नग्नो भवतीति नग्नं भावुकः। आढ्यसुभगेत्य-
नुवर्तमाने कर्तरि भुवः खिष्णु च् खुकञाविति खुकञ् प्रत्ययः। तत्र सवर्णदीर्घत्वे प्राप्ते
वृद्धिः। वृक्षाणामिति। नुडागममात्रमनपेक्षितलक्षणभेदमाश्रित्य विप्रतिषेधोपन्यासः।
नहि ह्रस्वलक्षणस्य नुटः पञ्चानामित्यादिरवकाशः। क चिदग्नीनामिति पाठः। तत्रायं
भावः। अधिकविषयव्यापिनो यण एवापवादो नुट् दीर्घस्य तु परत्वाद्बाधकः। दायक
इति। येन नाप्राप्तिन्यायेन युगागम आद्गुणं बाधते परत्वेन तु सवर्णदीर्घत्वमिति

द्वोभयं प्राप्नोति । अस्थीनि । दधीनि । अतिसखीनि ब्राह्मणकुलानि । पूर्वपदविकाराणामवकाशः । होतापोतारौ । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति । नेष्टोद्गातारौ । आग्नेन्द्रम् । उत्तरपदविकारश्चेति वक्तव्यम् । उत्तरपदविकाराणामवकाशः । समीपं दुरीपम् । एकादेशयणादेशयोः स एव । इहोभयं प्राप्नोति । नीपं वीपं प्रेपं परेपम् ॥

औतोऽम्शसोः ॥ ९३ ॥ ओतस्तिङि प्रतिषेधः * । ओतस्तिङि प्रतिषेधो वक्तव्यः । अचिनवम् । असुनवम् । स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । गोग्रहणं करिष्यते । आ गोत इति वक्तव्यम् । गोग्रहणे द्योरुपसंख्यानम् * । गोग्रहणे द्योरुपसंख्यानं कर्तव्यम् । द्यां गच्छ । समासाच्च प्रतिषेधः * । समासाच्च प्रतिषेधो वक्तव्यः । चित्रगुं पश्य । शबलगुं पश्य । ननु च ओत इत्युच्यमानेपि समासात्प्रतिषेधो वक्तव्यः । न वक्तव्यः । ह्रस्वे कृते न भविष्यति । इदमिह संप्रधार्यमात्वं क्रियतां ह्रस्वत्वमिति । किमत्र कर्तव्यम् । परत्वादात्वम् । न वा बहिरङ्गलक्षणत्वात् * । न वा वक्तव्यः । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणमात्वम् । अन्तरङ्गं ह्रस्वत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे । ननु च आ गोत इत्युच्यमानेपि समासात्प्रतिषेधो न वक्तव्यः । कथम् । ह्रस्वे कृते न भविष्यति । स्थानिवद्भावात्प्राप्नोति । ननु चौत इत्युच्यमानेपिस्थानिवद्भावात् प्राप्नोति । नेत्याह । अनल्विधौ स्थानिवद्भावः । आ गोत इत्युच्यमानेपि न

---

मत्वा विप्रतिषेधोपन्यासः । अस्थीनीति । येन नाप्राप्तिन्यायेन नुमागमो यणादेशं बाधते परत्वेन तु सवर्णदीर्घत्वम् । अतिसखीनीति बहुव्रीहिः । वीपमिति । अत्र यण् प्राप्तः । प्रेपमिति । सवर्णदीर्घत्वं चेत्वेन बाध्यते । ईत्वमनवर्णान्तादिति वक्तव्यमित्येकीयमतत्वान्नाश्रीयते ॥

औतो । ओतस्तिङीति । साहचर्यस्य व्यवस्थाहेतुत्वमनाश्रित्योच्यते । सुप एव हि शसोत्र संभवचीत्यधिकारात्तद्वितस्याग्रहणात् । अचिनवमिति । लङ् । मिप् । अमादेशः । विकरणस्य गुणे कृते आत्वप्रसङ्गः । न्यासान्तराश्रयणे ऽव्याप्तिरिति दर्शयन्नाह । गोग्रहण इति । अतिव्याप्तिरप्यत्रेति दर्शयति । समासाच्चेति । एकयोगे चेति । यस्य स्वरितत्वं

दोषः। प्रतिषिध्यतेऽत्र स्थानिवद्भावः। गोःपूर्वणित्त्वात्त्वस्वरेषु स्थानिवन्न भवतीति। स एव तर्हि दोषो गोग्रहणे द्योरुपसंख्यानमिति। सूत्रञ्च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तमोतस्त्विङि प्रतिषेध इति। सुबधिकारात्सिद्धम्। सुपीति प्रकृतं वर्तते। क्व प्रकृतम्। वा सुप्यापिशलेरिति। यद्यनुवर्तते, इहापि विभाषा प्राप्नोति। सुब्ग्रहणमनुवर्तते वाग्रहणं निवृत्तम्। कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोनुवर्तते एकदेशो न एकयोगे चैकदेशानुवृत्तिरन्यत्रापि नावश्यमिहैव *। एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति। अन्यत्रापि नावश्यमिहैव। क्वान्यत्र। अलुगधिकारः प्रागानङः। उत्तरपदाधिकारः प्रागङ्गाधिकारात्। एवमप्यस्युपसंख्यानंवृद्धिबलीयस्त्वात् *। अम्युपसंख्यानं कर्तव्यम्। गां पश्य। किं पुनः कारणं न सिध्यति। वृद्धिबलीयस्त्वात्। परत्वाद्धि वृद्धिः प्राप्नोति। न वानवकाशत्वात् *। न वा वक्तव्यम्। किं कारणम्। अनवकाशत्वात्। अनवकाशमात्वम्। वृद्धिंबाधिष्यते। सावकाशमात्वम्। कोवकाशः। द्यांगच्छ। द्योश्च सर्वनामस्थाने वृद्धिविधिः *। द्योश्च सर्वनामस्थाने वृद्धिर्विधेया। किं प्रयोजनम्। यद्याव इन्द्रेति दर्शनात्। यद्द्याव इन्द्र ते शतं शतं भूमीरुतस्युः। यावता चेदानीं द्योरपि सर्वनामस्थाने वृद्धिरुच्यते। अनवकाशमात्वं वृद्धिं बाधिष्यते॥

एङि पररूपम्॥ ९४॥ पररूपप्रकरणे तुन्वोर्विनिपात उपसंख्यानम् *। पररूपप्रकरणे तु नु इत्येतयोर्वकारादौ निपात उपसंख्यानं कर्तव्यम्। तु वै त्वै। नु वै न्वै। वकारादौ किमर्थम्। त्वावत्। न्वावत्। निपात इति किमर्थम्। तुवानि। नुवानि। न वा निपातैकत्वात् *। न वा कर्तव्यम्। किं कारणम्। निपातैकत्वात्। एक एवायं निपातः। त्वै न्वै। एवे चानियोगे *। पररूपं वक्तव्यम्।

---

प्रतिज्ञायते तदेवानुवर्तते नान्यदिति भावः। द्योश्चेति। ओतो णिदिति पठितव्यं गोत इत्योकारान्तोपलक्षणार्थं वा व्याख्येयम्। वर्णनिर्देशे हि तपरत्वं प्रसिद्धम्॥

एङि। तुन्वोरिति। सप्तमीनिर्देशात्तदादिविधिः। तु आवत् त्वावत्। नुवानीति। वातेर्लोडुत्तमैकवचने वानीति रूपम्। एक एवेति। अर्थभेदाभावादेको निपातः। एवेचानियोग इति। नियोगो ऽवश्यंभावो ऽवधारणं तस्मादन्यत्रार्थे पररूपं भवति। यथा

इह एव इहेव । अद्यइव अद्येव । अनियोगइति किमर्थम् । इहैव भव मा स्म गाः । अद्यैव त्वमिह वयं सुशिवाः । शकन्ध्वादिषु च * । शकन्ध्वादिषु पररूपं वक्तव्यम् । शक अन्धुः । शकन्धुः । कुल अटा । कुलटा । सीम अन्तः । सीमन्तः । केशेष्विति वक्तव्यम् । यो हि सीमान्तः सीमान्तः स भवति । ओत्वोष्ठयोः समासे वा * । पररूपं वक्तव्यम् । स्थूलोतुः स्थूलौतुः । बिम्बोष्ठी । बिम्बौष्ठी । एमन्नादिषु छन्दसि * । पररूपं वक्तव्यम् । अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयामि ॥

ओमाङोश्च ॥ ९५ ॥ किमर्थश्चकारः । एङीत्यनुकृष्यते । किं प्रयोजनम् । इह मा भूत् । आ ऋश्यात् । आर्श्यात् । अद्य अर्श्यात् । अद्यार्श्यात् । कदा अर्श्यात् । कदार्श्यात् । नैतदस्ति प्रयोजनम् । अद्यर्श्यादित्येव भवितव्यम् । एवं हि सौनागाः पठन्ति । चोऽनर्थकोऽनधिकारादेङः । उस्योमाङ्क्ष्वाटः प्रतिषेधः * । उसि पररूपे ओमाङोश्चाटः प्रतिषेधो वक्तव्यः । औस्रीयत् । औढयत् । औङ्कारीयत् । स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । उक्तमाटश्चेत्यत्र चकारस्य प्रयोजनम् । आटोचि वृद्धिरेव यथा स्यात् यदन्यत् प्राप्नोति तन्मा भूदिति ॥

उस्यपदान्तात् ॥ ९६ ॥ अपदान्तादिति किमर्थम् । का उस्रा कोस्रा । अपदान्तादिति शक्यमकर्तुम् । कस्मान्न भवति का उस्रा । अर्थवद्ग्रहणे नानर्थकस्येति । नैषा परिभाषेह शक्या वि-

---

क्तेव भोक्ष्यते । अत्रानवक्लृप्तावेवशब्दः । यदा त्ववधारणे वर्तते तदा वृद्धिः । शकन्धुरिति । अन्धुरुपानम् । कुलटेति । अटति इत्यटा पचाद्यच् । पश्चात् कुलेन सम्बन्धः । अन्यथा कर्मण्यणित्यणप्रसङ्गः । ओत्वोष्ठयोरिति । ओतुर्विडाल ॥

ओमा । अद्यर्श्यादिति । प्रतिपदविधित्वेन बलवत्त्वात्परोपि सवर्णदीर्घो बाध्यते । औढयदिति । वहेराङ्पूर्वस्य क्तप्रत्यये परे ओढमिति रूपं ततः क्यचि लङि रूपमेतत् ॥

उस्य । अर्थवद्ग्रहणमिति । अव्युत्पन्नं प्रातिपदिकमुस्रशब्द इत्युस आनर्थक्यम् । नैषेति । ननु न प्रयोजनानुवर्त्तिं प्रमाणमिति कथमनाश्रयणमुपपद्यते । अनित्यत्वादस्याः परिभाषायाः । तच्चानित्यत्वमसृन् वजिति ऋन्तृचोर्भेदेनोपादानेनार्वादेशवृन्निवृत्त्यर्थेन

ज्ञातुम्। इह हि दोषः स्यात्। भिन्द्युः। एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येव न भविष्यति। उत्तरार्थं तर्ह्यपदान्तग्रहणं कर्तव्यम्। अतो गुणे अपदान्ताद्यथा स्यादिति। इह मा भूत्। दण्डाग्रं क्षुपाग्रमिति॥

अव्यक्तानुकरणस्यात इतौ॥९८॥ इतावनेकाज्ग्रहणं श्रदर्थम्*। इतावनेकाज्ग्रहणं कर्तव्यम्। किं प्रयोजनम्। श्रदर्थम्। इह मा भूत्। श्रदिति॥

नाम्रेडितस्यान्त्यस्य तु वा॥९९॥ नित्यमाम्रेडिते डाचि पररूपं कर्तव्यम्। पटपटायति। अकारान्तानुकरणाद्वा *। अथ वा अकारान्तमेतदनुकरणम्। भवेत्सिद्धं यदा ऽकारान्तम्। यदा तु खलु अच्छब्दान्तं तदा न सिध्यति। विचित्रास्तद्धितवृत्तयः नातस्तद्धित उत्पद्यते॥

अकः सवर्णे दीर्घः॥१०१॥ सवर्णदीर्घत्वे ऋति ऋवावचनम्। सवर्णदीर्घत्वे ऋति ऋवा भवतीति वक्तव्यम्। होतृ ऋकारो होतृकारः। लृति लृवा *। लृति लृ वा भवतीति वक्तव्यम्। होतृ लृकारः। होत्लृकारः॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥

---

ज्ञापितम्। नित्यत्वे ह्यानर्थक्यादर्वादेशग्रहणाप्रसङ्गात्तन्निवृत्तेः सिद्धत्वात्। भिन्द्युरिति। अनागमकानां सागमका आदेशा इति न्यायाद्यासुडादेः प्रत्ययस्यार्थवत्त्वं न तु तदेकदेशस्य। यदा त्वर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यतइति न्यायस्तदार्थवत्त्वमेवेस। एवं तर्हीति। उस्रशब्दो वसेः स्फायितञ्चीतिरक्नि संप्रसारणे व्युत्पाद्यते। शासिवसीति षत्वं नरपरेति प्रतिषेधान्न भवति। एवमत्रोसिति लाक्षणिकं रूपम्॥

नाम्रेडि। नित्यमाम्रेडिते डाचीति वार्तिकदर्शनात् सूत्रे कैश्चित् प्रक्षिप्तम्। विचित्रा इति। प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावादप्रवृत्तिरिति भावः॥

अकः। ऋवेति। ऋ लृ इत्येतयोः संवृतत्वाद्विवृताभ्यामृकारलृकाराभ्यामसावर्ण्यादज्ग्रहणेनाग्रहणाद्दर्वतृतीयमात्रत्वाद्वा ऊकालत्वाभावाद्दीर्घसंज्ञाया अभावाद्वचनम्॥

इत्युपाध्यायजैय्यटपुत्त्र कैय्यटविरचिते भाष्यप्रदीपे षष्ठाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥

प्रथमयोः पूर्वसवर्णः ॥ १०२ ॥ प्रथमयोरित्युच्यते । कयोरिदं प्रथमयोर्ग्रहणम् । किं विभक्त्योराहोस्वित् प्रत्यययोः । विभक्त्योरित्याह । कथं ज्ञायते । अचीति वर्तते । न चाजादी प्रथमौ प्रत्ययौ स्तः । ननु चैवं विज्ञायते । अजादी यौ प्रथमौ । अजादीनां वा यौ प्रथमाविति । यत्तर्हि तस्माच्छसो नः पुंसीत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्

---

प्रथमयोः पूर्वसवर्णः । प्रथमशब्दः संनिवेशविशेषापेक्षोऽभिधेये वर्तते । तत्र विशेषानवधारणात् पृच्छति । कयोरिति । ननु धातुनिपातादीनामपि प्राथम्यसंभवाद्विशेषविषयः प्रश्नो नोपपद्यते । नैष दोषः । दीर्घाज्जसि चेति लिङ्गाद्धात्वादीनामग्रहणाद्विभक्त्योःप्रत्यययोर्वा ग्रहणे यतः प्रतिषेधउपपद्यते नतु धात्वादीना मन्यतमग्रहणात् । सामान्यग्रहणे प्रतिषेधोपपत्तौ लिङ्गत्वानुपपत्तिः । नैतदस्ति । प्रथमयोरिति कस्यचिदेव विशेषस्य ग्रहणं न तु यौगपद्येन सर्वेषां विशेषाणाम् । सर्वविशेषविषयस्य संनिवेशापेक्षस्य प्राथम्यस्य युगपद्व्यापेक्षितुमशक्यत्वात् । प्रतिनियतविशेषालम्बित्वात्प्राथम्यज्ञानस्य तत्र प्रसिद्धाश्रयेण विभक्तिग्रहणमाशङ्कितम् । प्रातिपदिकार्थत्वादौ विभक्तिग्रहणस्य प्रसिद्धत्वात् । अन्तरङ्गत्वात्तु प्रत्ययग्रहणमाशङ्कितम् । प्रत्ययस्य हि प्रथमत्वमन्तरङ्गं चिकस्य तु बहिरङ्गम् । तत्र प्रथमसाहचर्यात्प्राथम्यारोपणाद्द्वितीयस्यापि प्रथमशब्देनाभिधानम् । यथाऽर्धर्चाः पुंसि चेति गोमयादीनामर्धर्चशब्देन । तथा च बहुवचनं कृतम् । अन्ये त्वाहुः । द्वितीयस्य तु प्रथमापेक्षया द्वितीयत्वं नान्यथा । ततः प्रथमद्वितीययोरनपेक्षितपरस्परयोरपिपरापेक्षं प्राथम्यं मुख्यमेव । तत्र प्रथमयोरितिस्त्रीलिङ्गनिर्देशे विभक्तिग्रहणम् । पुंल्लिङ्गनिर्देशे तु प्रत्ययग्रहणम् । समानश्च निर्देश इति सन्देहः । न चाजादी इति । प्रथमयोरिति विशेष्यं तद्विशेषणमचीति तेनाजाद्योः प्रथमयोरिह ग्रहणं न च सुशब्दो ऽजादिर्भवतीति नासाविह प्रथमशब्देन गृह्यते विभक्त्योस्त्वजादित्वं संभवतीति तयोरेव ग्रहणम् । यद्यपि प्रथमे चिके सुशब्दस्याजादित्वासंभवस्तथाप्यवयवान्तरद्वारकस्त्विकस्याजादिव्यपदेश इति अजाद्योः प्रथमयोरिति संबन्धोपपत्तिः । प्रत्यययोस्तु ग्रहणे सुशब्दस्यानजादित्वादौजसोश्चाप्राथम्यात् प्रत्यययोरजाद्योरिति संबन्धायोगः । अजादी यौ प्रथमाविति । अजादी विशेष्यौ तद्विशेषणं प्रथमयोरिति । तेनायमर्थो भवत्यजादी यौ प्रत्ययौ अन्यापेक्षयालब्धप्रथमव्यपदेशौ तयोः परतः पूर्वसवर्णदीर्घ इत्येवमौजसोरेव ग्रहणं प्राप्नोतीति विभक्तिद्वयग्रहणस्याज्ग्रहणं न लिङ्गम् । अजादीनां वेति । अचीति वर्तते निर्धारणसप्तमी चेनाश्रीयते जातौ चैकवचनम् । तुल्यजातीयस्य च निर्धारणं भवतीत्यजादीनां प्रथमौ यावजादी अन्याजादिप्रत्ययापेक्षया लब्धप्रथमव्यपदेशौ तौ चौजसावेवेति विभक्तिग्रहणे लिङ्गाभावः ।

ज्ञापयत्याचार्यः विभक्त्योर्ग्रहणमिति। अथ वा सुपीति वर्तते। अथ किमर्थं पूर्वसवर्णदीर्घः अमि पूर्वत्वं चोच्यते। नप्रथमयोः पूर्वसवर्ण इत्येव सिद्धम्। न सिध्यति। प्रथमयोः पूर्वसवर्णदीर्घ इत्युच्यमाने अम्यपि दीर्घः प्राप्नोति। वृक्षम्। प्लक्षम्। नैष दोषः। यत्पूर्वस्मिन् योगे दीर्घग्रहणं तदुत्तरत्र निवृत्तम्। एवमपि इदमिह पूर्वसवर्णग्रहणं क्रियते तेनाम्यपिपूर्वसवर्णः प्रसज्येत। वृक्षम्। प्लक्षम्। द्विमात्रः प्राप्नोति। नैष दोषः। सवर्णग्रहणं न करिष्यते। यदि सवर्णग्रहणं न क्रियते। कुतोव्यवस्था। आन्तर्यतः। यद्येवमग्नी वायू त्रिमात्रः प्राप्नोति। वृक्षम्। प्लक्षम्। द्विमात्रः प्राप्नोति तस्मात्सवर्णग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे दीर्घग्रहणमनुवर्त्यम्। तस्मिन्ननुवर्तमानेऽमि पूर्वइत्यपिवक्तव्यम्। अथ किमर्थं पृथगुच्यते नेहैवोच्यते प्रथमयोः पूर्वसवर्णोऽमिचेति। यदि प्रथमयोःपूर्वसवर्णदीर्घो भवति अमि चेत्युच्यते तेनाम्यपि दीर्घः प्रसज्येत। वृक्षम्। प्लक्षम्। नैष दोषः। दीर्घग्रहणं निवर्तयिष्यते। एवमपि पूर्वसवर्णः प्रसज्येत। सवर्णग्रहणं न करिष्यते। यदि सवर्णग्रहणं न

---

अथ वेति। वा सुप्यापिशलेरित्यतः सुपीति वर्तते तत्र दीर्घाज्जसि चेति प्रतिषेधाल्लिङ्गात्सुपः परिग्रहे सिद्धे सुब्ग्रहणानुवृत्त्या सुपां प्रसिद्धो यो धर्मः स परिगृह्यते। सुपो विभक्तिश्चेत्यत्र चीणिचोणीत्यनुवृत्त्या त्रिकस्य विभक्तित्वं प्रसिद्धः सुब्धर्म इति विभक्तेर्ग्रहणं संपत्स्यते। अथ किमर्थमिति। खट्वां कुमारीमित्यादौ लक्षणयोः फलाभेदं दृष्ट्वा प्रश्नः। इतरो वृक्षमग्निमित्यादौ फलभेदं मत्वाह। न सिध्यतीति। यत्पूर्वस्मिन्निति। अकः सवर्णे इत्यतः दीर्घग्रहणं नानुवर्ततइत्यर्थः। एवमपीति। अग्निइत्यादिसिद्ध्यर्थं सवर्णग्रहणमवश्यं कर्तव्यम्। सवर्णग्रहणमिति। ततश्च वृक्षमग्निं कुमारीं कुमारीः पश्य वधूं वधूरित्यादि सर्वं सिध्यति। कुतो व्यवस्थेति। वृक्षमग्निं वायुमित्यादौ ह्रस्व एवाग्नी वायू वृक्षा इत्यादौ दीर्घ एवेति व्यवस्था न सिध्यति। तथा हि। यदि पूर्वा व्यक्तिराश्रीयते तदा ऽग्नी इत्यादावपि ह्रस्वप्रसङ्गः। अथ पूर्वाकृतिराश्रीयते तदाग्निमित्यादावपि दीर्घप्रसङ्ग इति भावः। आन्तर्यत इति। पूर्वाकृतिराश्रीयते प्लुतस्य विषयेस्मृत इति प्लुतो न भविष्यति दीर्घस्य भविष्यतीति मन्यते। त्रिमात्रः प्राप्नोतीति। प्लुताप्लुतप्रसङ्गे प्लुतस्य विषये स्मृत इत्युच्यते इह तु प्लुतस्यैव प्रसङ्ग इति भावः। तस्मादिति। यस्मात्पूर्वाकृतिपक्षे पूर्वव्यक्तिपक्षे च दोषस्तस्मादित्यर्थः। अमि चेति। पुनः पूर्वग्रहणं न कर्तव्यं भवतीति भावः। दीर्घग्रहणमिति। अमि चेत्यत्रेति भावः। एवमपीति। ततश्च कुमारीमि-

क्रियते। पूर्वस्मिन् योगे विप्रतिषिद्धम्। यदि पूर्वो न दीर्घः। अथ-दीर्घो न पूर्वः। पूर्वश्च दीर्घश्चेति विप्रतिषिद्धम्। तस्मादुभयमारब्धव्यम्। पृथक् च वक्तव्यम्। प्रथमयोरिति योगविभागः सवर्णदीर्घार्थः *। प्रथमयोरिति योगविभागः कर्तव्यः। प्रथमयोरकः सवर्णे दीर्घो भवति। ततः पूर्वसवर्णः। पूर्वसवर्णदीर्घो भवत्यकः प्रथमयोरिति। किमर्थो योगविभागः। सवर्णदीर्घार्थः। सवर्णदीर्घत्वं यथा स्यात्। वृक्षाः। प्लक्षाः। वृक्षान्। प्लक्षान्। एकयोगे हि जश्शसोः पररूपप्रसङ्गः *। एकयोगे हि जश्शसोः पररूपं प्रसज्येत। वृक्षाः। प्लक्षाः। वृक्षान् प्लक्षान्। ननु च पूर्वसवर्णदीर्घत्वं पररूपं बाधिष्यते। नोत्सहते बाधितुम्। किं कारणम्। आद्गुणयणादेशयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशास्तेषां पररूपं स्वरसन्धिषु *। आद्गुणयणादेशावुत्सर्गौ। तयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशाः। तेषां सर्वेषां पररूपमपवादस्तत्सर्वबाधकम्। सर्वबाधकत्वात् प्राप्नोति। अथ क्रियमाणेपि योगविभागे यावता पररूपमपवादः कस्मादेव न बाध्यते। योगविभागोन्यशास्त्रनिवृत्त्यर्थः *। योगविभागोऽन्यशास्त्रनिवृत्त्यर्थो विज्ञायते। योगविभागोन्यशास्त्रनिवृत्त्यर्थश्चेद् अस्यतिप्रसङ्गः *। यो-

---

त्वादौ त्रिमात्रप्रसङ्गः। पूर्वस्मिन् योग इति। पूर्वव्यक्त्याश्रये अग्नी इत्यादौ पूर्वव्यक्तिर्न दीर्घेति विप्रतिषिद्धं स्यात्। पूर्वो दीर्घ इत्याकृत्याश्रये तूक्तएवदोषः। प्रथमयोः पूर्व इत्यत्रानुवृत्त्या पूर्वाकृतिराश्रयिष्यते। अमिपेत्यत्र तु दीर्घग्रहणनिवृत्त्या व्यक्तिरिति दुर्लभमेतत्। तस्मादुभयमिति। अथोभयस्मिन् पृथक् कर्तव्ये प्रथमयोः पूर्वसवर्ण इत्यत्र सवर्णग्रहणं किमर्थं कृतम्। यावता दीर्घानुवृत्त्या पूर्वाकृतिराश्रयिष्यते। नैतदस्ति। व्यक्तिपक्षस्यापि संभवात् अग्नी इत्यादौ विरोधाभङ्गा स्यात्। वृक्षा इति। अचाद्गुणः प्राप्तः। ततो दीर्घः ततः परत्वात् पूर्वसवर्णदीर्घः। ततःपररूपप्रसङ्गः। आद्गुणेति। तत्र वृद्ध्यादयो द्वितीयकक्ष्याप्राप्ताः पररूपं तु तृतीयकक्ष्याप्राप्तमिति भावः। अथ क्रियमाणेपीति। यथा वृक्षा इत्यादौ योगविभागेन पररूपं पचन्तीत्यादौ सावकाशं बाध्यते तथा ऽग्निं वायुमित्यादौ सावकाशममि पूर्वत्वं वृक्षमित्यादौ बाध्येत। अथामि पूर्वत्वं न बाध्यते। पररूपमेव बाध्यत इत्युच्यते तदास्य विभागस्य कारणं वाच्यमिति भावः। अथ वा अयमभिप्रायो यदि पररूपं सवर्णदीर्घस्येव पूर्वसवर्णस्यापि बाधकं ततो योगविभागेपि क्रियमाणे बाधकं स्यादिति। योगविभाग इति। चतुर्थकक्ष्याप्राप्तत्वाद्योगविभागः पररूप-

गविभागो ऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्गो भवति। वृक्षम्। प्लक्षम्। यथैव हि योगविभागः पररूपं बाधते एवममिपूर्वत्वमपि बाधेत। नकाराभावश्च तस्मादित्यनन्तरनिर्देशात् *। नत्वस्य चाभावः। वृक्षान्। प्लक्षान्। किं कारणम्। तस्मादित्यनन्तरनिर्देशात्। तस्मादित्यनेनानन्तरो योगः प्रतिनिर्दिश्यते। प्रथमयोः पूर्वसवर्णः। तस्माच्छसो नः पुंसि। किं पुनः कारणं तस्मादित्यनन्तरो योगो निर्दिश्यते। इह मा भूत्। एतान् गाश्चतुरोऽनडुहः बलीवर्दान् पश्येति। अस्तु तर्ह्येकयोग एव। ननु चोक्तमेकयोगे हि जश्शसोः पररूपप्रसङ्ग इति। नैष दोषः। इज्ग्रहणं तु ज्ञापकं पररूपाभावस्य। यदयं नादिचीतीज्ग्रहणं करोति तज्ज्ञापयत्याचार्यः न जश्शसोः पररूपं भवतीति। कथं कृत्वा ज्ञापकम्। इज्ग्रहणस्यैतत्प्रयोजनम्। इह मा भूत्। वृक्षाः। प्लक्षाः। वृक्षान्। प्लक्षान्। यदि च जश्शसोः पररूपं स्याद् इज्ग्रहणमनर्थकं स्यात्। पश्यति त्वाचार्यो न जश्शसोः पररूपं भवतीति तत इज्ग्रहणं करोति। नैतदस्ति ज्ञापकम्। उत्तरार्थमेतत्स्यात् दीर्घाज्जसि चेति। यद्युत्तरार्थमेतत्स्यात्तत्रैवायमिज्ग्रहणं कुर्वीत। इहापि क्रियमाणं यद्युत्तरार्थं न ज्ञापकं भवति। एवं तर्हि यद्युत्तरार्थमेतत्स्याद् नैवायमिज्ग्रहणं कुर्वीत नापि ज-

---

स्य बाधक इत्यर्थः। नत्वस्येति। तस्माच्छसो नः पुंसीत्यत्र तच्छब्देनानन्तरस्य पूर्वसवर्ण इत्यनेन विहितस्य परामर्शाद् गिरीन् वायूनित्यादावेव नत्वं स्यात् नतु वृक्षानित्यादौ प्रथमयोरितियोगविभागेन दीर्घे विधीयमान इत्यर्थः। एतच्च भेदेन लक्षणयोरपेक्षामाश्रित्य चोदितम्। यत्रोच्यते अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति। यदा तु सूत्रद्वयसमुदायमेकया बुद्ध्यापेक्ष्य तस्मादिति परामर्शः क्रियते तदा नास्ति दोषः। यत्रोच्यते उभयं निवृत्तं तदपेक्षिष्यामह इति। एतान् गा इति। औतोम्शसोरित्याकार एकादेशः। इज्ग्रहणं त्विति। यदि जश्शसोः पररूपं स्यात्तदानादित्येव ब्रूयाद् इच्येव पूर्वसवर्णदीर्घप्रसङ्गात् प्राप्तिपूर्वकत्वाच्च प्रतिषेधस्येति भावः। उत्तरार्थमिति। कुमार्यौ वध्वावित्यादौ पूर्वसवर्णदीर्घप्रतिषेधार्थमित्यर्थः। यद्युत्तरार्थमिति। एवं सति पृथग्विभक्त्यनुच्चारणाच्चकाराकरणाच्च दीर्घादिज्जसोरिति लाघवं भवति। इहापीति। सर्वत्र लाघवं प्रत्यनादरादिहापि क्रियमाणस्य इज्ग्रहणस्योत्तरार्थतया प्रयोजनवत्त्वाद् ज्ञाप-

सूत्रग्रहणं कुर्वीत एतावदयं ब्रूयात् दीर्घाच्छसि पूर्वसवर्णो भवतीति तन्नियमार्थं भविष्यति। दीर्घाच्छस्येव नान्यत्रेति। सोऽयमेवं लघीयसा न्यासेन सिद्धे यदिज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो न जसिशसोः पररूपं भवतीति। अथ वा पुनरस्तु योगविभागः। ननु चोक्तं योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्ग इति। नैष दोषः। अस्यपि योगविभागः करिष्यते। अमि यदुक्तं तन्न भवतीति। ततः पूर्वः। पूर्वश्च भवत्यमिति। यदप्युच्यते नकाराभावश्च तस्मादित्यनन्तरनिर्देशादिति। कः पुनरर्हति तस्मादित्यनेनानन्तरं योगं निर्देष्टुम्। एवं किल प्रतिनिर्दिश्येत तस्मात्पूर्वसवर्णदीर्घादिति। तच्च न। एवं प्रतिनिर्दिश्यते तस्मादको दीर्घादिति। अथ वा तस्मात्प्रथमयोर्दीर्घादिति। अथ वा पुनरस्तु अस्येकयोगः। ननु चोक्तं योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्ग इति। नैष दोषः। मध्येपवादाः पूर्वान्विधीन्बाधन्ते इत्येवमयं योगविभागः पररूपं बाधिष्यते। अमिपूर्वत्वं न बाधिष्यते यद्येतदस्ति मध्येपवादाः पुरस्तादपवादा इति नार्थ एकेनापि योगविभागेन। पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इत्येवं पररूपमकः सवर्णदीर्घत्वं बाधिष्यते। प्रथमयोः पूर्वसवर्णदीर्घत्वं न बाधिष्यते। अथ वा सप्तमे योगविभागः करिष्यते। इदमस्ति। अतो दी--

---

त्वाभाव इत्यर्थः। दीर्घाच्छसीति। दीर्घादिज्जसोरित्यस्मादपि लघुतरोयं सूत्रन्यास इति भावः। तस्मादिज्ग्रहणं नोत्तरार्थमेव क्रियते किंत्विहार्थमपीति ज्ञापकमेवेत्यर्थः। अमियदुक्तमिति। प्रथमयोरिति योगविभागेन दीर्घत्वमित्यर्थः। तस्मादको दीर्घादिति। एकया बुद्ध्या अक्स्थानिकत्वविशिष्टो विहितो दीर्घः परामृश्यत इत्यर्थः। अकः सवर्णे दीर्घ इत्यनेन विहितस्य दीर्घस्यानर्थकः परामर्श इति मत्वाह। अथ वेति। प्रथमयोरित्येवं यो विहितो दीर्घः परामृश्यते इति सूत्रद्वयविषये नत्वं सिध्यति। मध्येपवादा इति। न्यायश्चायं न तु वचनम्। यद्वक्ष्यति यद्येतदस्तीति। नहि वचनस्यासत्तासंभावना न्यायस्तु क्वचित्कश्चिदाश्रीयत इति युज्यते वक्तुम्। यद्येतदस्तीति। यदा बाध्यानि लक्षणानि भेदेनापेक्ष्यन्ते तदा क्रमव्यतिक्रमे हेत्वभावात् पूर्वविज्ञातबाध्यविषयलाभाद्वा मध्येपवादा इति पुरस्तादपवादा इति चाश्रीयते। यदा तु लक्षणसमुदायो बाध्यत्वेनापेक्ष्यते तदा तस्यैकत्वाद्बाध्यत्वेनैव तन्मध्येपवादा इति पुरस्तादपवादा इति च। अथ वा सप्तम इति। इह अस इति स्थिते पूर्वस्य दीर्घविधानात्पररूपाभावाज्जस्यकः सवर्णे दीर्घ इति

र्घौ यञि सुपि चेति। ततो वक्ष्यामि बहु वचने। बहुवचने च अ-
तो दीर्घौ भवति। ततो झल्येत्। एकारश्च भवति बहुवचने झ-
लीति। इहापि तर्हि प्राप्नोति। त्रपुजतुनाम्। त्रपुजतुनाम्। तत्र को
दोषः। दीर्घत्वे कृते ह्रस्वाश्रयो नुण्न प्राप्नोति। इदमिह संप्रधार्यं
दीर्घत्वं क्रियतां नुडिति। किमत्र कर्त्तव्यम्। परत्वाद्दीर्घत्वम्। नि-
त्यं खल्वपि दीर्घत्वम्। कृतेपि नुटि प्राप्नोत्यकृतेपि। नित्यत्वात्प-
रत्वाच्च दीर्घत्वे कृते ह्रस्वाश्रयो नुण्न प्राप्नोति। एवं तर्ह्याद्ग्रहणमि-
हापि प्रकृतमनुवर्त्तते। क्व प्रकृतम्। आज्जसेरसुक्। तेन कृतेपि
दीर्घत्वे नुड् भविष्यति। इहापि तर्हि प्राप्नोति। कीलालपां शुभंया
म्। आतो लोपोऽत्र बाधको भविष्यति। इदमिह संप्रधार्यं लोपः
क्रियतां नुडिति। किमत्र कर्त्तव्यम्। परत्वान्नुट्। एवं तर्हि
ह्रस्वनद्यापो नुडित्यत्रातोधातोरित्यातो लोपः संबन्धमनुवर्त्ति-
ष्यते। इहापि तर्हि प्राप्नोति। कीलालपानां ब्राह्मणकुलानाम्।
नपुंसकस्यनेत्यप्यनुवर्त्तिष्यते।

तस्माच्छसो नः पुंसि॥ १९३॥ किमिदं नत्वं पुंसां बहुत्वे भ-
वत्याहोस्वित्पुंशब्दाद्बहुषु। कश्चात्र विशेषः। नत्वं पुंसां बहुत्वे
चेत्पुंशब्दादिष्यते स्त्रियाम्॥ तन्न सिध्यति। भ्रुकुंसान् पश्येति। न-
पुंसके तथैवेष्टम्॥ तच्च न सिध्यति। षण्ढान् पश्य षण्डकान् पश्येति।
स्त्रीशब्दाच्च प्रसज्यते। स्त्रीशब्दाच्च प्राप्नोति। चञ्चाः पश्य। वध्रिकाः

---

दीर्घः शसि तु प्रथमयोः पूर्वसवर्ण इति। एवं तर्हीति। अकारेण चाण्त्वादाकारो गृह्य-
ते। कीलालपानामिति। ह्रस्वो नपुंसक इति ह्रस्वत्वे बहुवचन इति दीर्घत्वे कृते आ
तोधातोरित्यधिकारादाकारलोपप्रसङ्गः। नपुंसकस्य नेति। ह्रस्वनद्यापोनुडित्यत्र सूत्रे
स्वमोर्नपुंसकादित्यतो नपुंसकग्रहणं नेतराच्छन्दसीत्यतो नेति चानुवर्तते। आतोधा-
तोर्लोप इति च ततो नपुंसकस्यातोधातोर्लोपाभावे नुडेव भविष्यतीत्यर्थः॥

तस्मात्। किमिदमिति। पुंसीति किं शसो विशेषणं पुंबहुत्वे यः शसुत्पन्न इति,
अथ प्रकृतेः पुंशब्दाद्यः शसिति प्रश्नः। भ्रुकुंसान् पश्येति। स्तनकेशसंबन्धात् स्त्रीप्र-
तिभासं भ्रुकुंसार्थं मन्यते। षण्ढानिति। षण्ढशब्देन प्रसवासमर्थस्य नपुंसकस्याभि-
धानम्। चञ्चा इति। चर्चेव चञ्चा। इवे प्रतिकृतौ संज्ञायामिति कन्। लुम्मनुष्य इति

पश्य । खरकुटीः पश्य । अस्तु तर्हि पुंशब्दाद् बहुषु । पुंशब्दादिति चेदिष्टं स्थूरापत्ये न सिध्यति । स्थूरान् पश्येति । कुण्डिन्याः अररकायाः अपत्ये च न सिध्यति । कुण्डिनान् पश्य । अररकान् पश्य । पुंस्प्राधान्यात् प्रसिध्यति ॥ पुंस्प्रधाना एते शब्दाः । ततो नत्वं भविष्यति । पुंस्प्राधान्ये ऽत एव स्युर्ये दोषाः पूर्वचोदिताः । भ्रुकुंसान् पश्य षण्ढान् पश्य चञ्चा पश्य वध्रिकाः पश्य खरकुटीः पश्येति । तस्माद्यस्मिन्पक्षेल्पीयांसो दोषाः तमास्थाय प्रतिविधेयं दोषेषु । नत्वं पुंसां बहुत्वे चेत्पुंशब्दादिष्यते स्त्रियाम् । नपुंसके तथैवेष्टं स्त्रीशब्दाच्च प्रसज्यते ॥ १ ॥ पुंशब्दादिति चेदिष्टं स्थूरापत्ये न सिध्यति ॥ कुण्डिन्याश्चररकायाः पुंस्प्राधान्यात् प्रसिध्यति ॥२॥ पुंस्प्राधान्ये त एवस्युर्येदोषाः पूर्वचोदिताः ॥ तस्मादर्थे भवेन्नत्वं वध्रिकादिषु युक्तवत् ॥३ ॥

अमिपूर्वः ॥ १०७ ॥ वा छन्दसीत्येव । शमीं च शम्यं च शमीं च शम्यं च । गौरीं च गौर्यं च किशोरीं च किशोर्यं च ॥

---

लुप् । चञ्चाशब्देन पुंसोभिधानान्नत्वप्रसङ्गः । स्थूरानिति । स्थूराया अपत्यानि । गर्गादिभ्यो यञ् । यञञोश्चेति लुक् । लुक्तद्धितलुकीति टापो लुक् । ततः स्थूरशब्दस्य स्त्रीलिङ्गत्वान्नत्वाप्रसङ्गः । कुण्डिनानिति । कुण्डिन्या अपत्यानि । गर्गादिभ्योयञ् । आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनजिति यञो लुक् । कुण्डिनीशब्दस्य कुण्डिनजादेशः स च स्त्रीलिङ्गादेशत्वात् स्त्रीशब्दः । अररकायाः पूर्ववद्यञादि । तस्माद्यस्मिन्निति । अर्थ पक्षं परत आश्रयिष्यति । द्वयोरपि तु पक्षयोर्दोषाभावः । तथा हि । पुंवाचो शब्दः पुंशब्द उच्यते । ततो भ्रुकुंसादयः शब्दाः पुमांसमाचक्षाणाः पुंशब्दा उच्यन्त इति नानयोः पक्षयोः फलभेदः । षण्ढपण्डकशब्दाभ्यामपि पुंस्त्वानुगत एव नपुंसकरूपोर्थ उच्यते । यथा नपुंसको भवदिति नपुंसकशब्देनास्त्रीसूत्रे हि न वैयाकरणैः शक्यं लौकिकलिङ्गमाख्यातुमित्यादिना विशिष्टमेव लिङ्गलक्षणं भाष्यकारेणाश्रितम् । स्थूरादयोपि प्रत्ययलुकि कृते पुंसि वर्तमानाः पुंशब्दा एव भवन्ति । वध्रिकादिषु युक्तवदिति । लुपियुक्तवद्व्यक्तिवचने इति पुंसः स्त्रीत्वातिदेशान्नत्वाभाव इत्यर्थः ॥

अमि । वाच्छन्दसीत्येवेति । एतच्च वाक्यभेदेन संबध्यते । अन्यथा भाषायां न स्यात् । शम्यं चेति । विकल्पविधानसामर्थ्यात्पूर्वत्वाभावे पूर्वसवर्णदीर्घोपि न भवति तयोरत्वविशेषाभावादिति यणादेश एव भवति ॥

संप्रसारणाच्च ॥ १०८ ॥ वाच्छन्दसीत्येव। मित्रावरुणौ यज्यमानः। मित्रावरुणौ हूज्यमानः। सप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणमसमानाङ्गप्रतिषेधार्थम् *। संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम्। किं प्रयोजनम्। असमानाङ्गप्रतिषेधार्थम्। असमानाङ्गस्य मा भूदिति। शकह्वर्थम्। परिव्यर्थम्। सिद्धमसंप्रसारणात् *। सिद्धमेतत्। कथम्। असंप्रसारणात्। कथमसंप्रसारणम्। वाक्यस्य संप्रसारणसंज्ञा न वर्णस्य। अथ वर्णस्य संप्रसारणसंज्ञायां दोष एव। वर्णस्य च संप्रसारणसंज्ञायां न दोषः। कथम्। अन्योयं संप्रसारणासंप्रसारणयोः स्थाने एक आदिश्यते। कार्यकृतत्वाद्वा *। अथ वा सकृत् कृतं पूर्वत्वमिति कृत्वा पुनर्न भविष्यति। तद्यथा। वसन्ते ब्राह्मणोग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति। विषम उपन्यासः। युक्त यत्तस्यैव पुनः प्रवृत्तिर्न भवति। यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम्। तद्यथा। वसन्ते ब्राह्मणोग्निष्टोमादिभिः क्रतुभिर्यजेतेति। अग्न्याधाननिमित्तं वसन्तेवसन्ते हूज्यते। तस्मात्पूर्वोक्त एव परिहारः सिद्ध-

---

संप्र। समानाङ्गग्रहणमिति। यदि संप्रसारणं तस्माच्च परोऽजेकस्मिन्नङ्गे भवतस्तदा पूर्वैकादेशो भवति नान्यथा। शकह्वर्थमिति। अन्यस्मिन्नङ्गे संप्रसारणमन्यस्मिन्नजिति पूर्वैकादेशाभावः। अचान्तवद्भावेनोकारस्य संप्रसारणत्वम्। सिद्धमिति। वाक्यस्य संप्रसारणसंज्ञायां वर्णस्य नास्ति संप्रसारणसंज्ञा। स तु संप्रसारणनिर्वर्तितत्वात्सं प्रसारणव्यपदेशमौपचारिकं लभते। शकह्वर्थमित्यादौ त्वेकादेशशास्त्रेण निर्वर्तित उकार इति नास्ति संप्रसारणव्यपदेशः। वर्णस्य चेति। यणः स्थाने यो वर्णः स संप्रसारणसंज्ञः एकादेशस्तु न यण्स्थानिकः। अन्तवद्भावोपि नास्ति वर्णविधावन्तवद्भावप्रतिषेधात्। अन्तरङ्गत्वाच्च हल इति संप्रसारणदीर्घे कृते उकारस्य संप्रसारणसंज्ञाभावात्पूर्वैकादेशाभावः। संप्रसारणदीर्घेतु वचनसामर्थ्यादेकादेशस्यान्तवद्भावात्संप्रसारणव्यपदेशआश्रीयते। कार्यकृतत्वाद्वेति। शास्त्रस्यास्मिन्विषये प्रवृत्तत्वात्पुनः प्रवृत्त्यभावः। युक्तं यत्तस्यैवेति। पराङ्गमग्न्याधानं यज्ञमुखप्रतिपत्त्यर्थमिति पुनः क्रियमाणं फलभेदाभावात्तदेवेत्युच्यते। तत्प्रयोजनाभावान्नानुष्ठीयते। यत्तु तदाश्रयमिति। यस्मात् फलावाप्तिस्तत् फलभेदाद्भिद्यमानमसकृदनुष्ठीयते इति भावः। अग्न्याधाननिमित्तमिति। अग्न्याधानं निमित्तं हेतुरस्येति बहुव्रीहिः। क्रियाविशेषणं चैतत्। एवमिहापि शास्त्रपूर्वके ज्ञाने प्रयोगे वा फल-

मसंप्रसारणादिति। यदि तर्हि नेदं संप्रसारणं, इत इति दीर्घत्वं न प्राप्नोति। दीर्घत्वं च वचनप्रामाण्यात् *। अनवकाशं दीर्घत्वं तद्वचनप्रामाण्याद्भविष्यति। अन्तत्वाद्वा * अथ वा पूर्वस्य कार्यं प्रत्यन्तवद्भवतीति दीर्घत्वं भविष्यति। आटो वृद्धेरियङ् *। आटो वृद्धिर्भवतीत्येतस्मादियङ् भवति विप्रतिषेधेन। आटो वृद्धिर्भवतीत्यस्यावकाशः। ऐक्षिष्ट। ऐहिष्ट। इयङोवकाशः। अधीयाते। अधीयते। इहोभयं प्राप्नोति। अध्यैयाताम्। अध्यैयत। इयङादेशो भवति विप्रतिषेधेन। नैष युक्तो विप्रतिषेधः। अन्तरङ्गा आटो वृद्धिः। कान्तरङ्गता। वर्णावाश्रित्याटो वृद्धिः। अङ्गस्येयङादेशः। एवं तर्हीदमिह संप्रधार्यमाट् क्रियतामियङादेश इति। किमत्र कर्तव्यम्। परत्वादियङ्। नित्य आडागमः। कृतेपीयङि प्राप्नोत्यकृते ऽपि। इयङपि नित्यः। कृतेप्याटि प्राप्नोत्यकृतेपि। अनित्य इयङ्। नहि कृते आटि प्राप्नोति। किं कारणम्। अन्तरङ्गा आटो वृद्धिः। यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्। न चाश्राडेवेयङोनिमित्तं विहन्ति। अवश्यं लक्षणान्तरमाटोवृद्धिः प्रतीक्ष्या। उभयोर्नित्ययोः परत्वादियङादेशः। आद्गुणात्सवर्णदीर्घत्वमाङभ्यासयोः *। आद्गुणात्सवर्णदीर्घत्वं भवति विप्रतिषेधेन। क्व। आङभ्यासयोः। आद्गुणस्यावकाशः। खट्वा इन्द्रः। खट्वेन्द्रः। खट्वा उदकम्। खट्वोदकम्। सवर्णदीर्घस्यावकाशः। दण्डाग्रम्। क्षुपाग्रम्। इहोभयं प्राप्नोति। अद्य आऊढा। अद्योढा। कदा आऊढा कदोढा।

---

मिति फलान्तरार्थी शब्दान्तरे लक्षणमावर्त्तयेदित्यपरिहारः कार्यकृतत्वादिति। अध्यैयातामिति। कृतेषु लादेशेष्वाट् क्रियते इति प्रक्रियामाश्रित्य विचार्यते। अन्तरङ्गेति। वर्णादाङ्गमित्यनाश्रित्येदमुच्यते। यस्य च लक्षणान्तरेणेति। एतत् क्व चिदाश्रीयते क्व चिन्न। यथोक्तंतद्ब्राह्मणकुलमित्यादौ त्यदादिभ्यो लुग्वक्तव्य इति। यस्य च लक्षणान्तरेणेति त्वाश्रीयमाणे नित्यत्वाल्लुक्सिद्धस्तस्य ह्यतोमिति लक्षणेन निमित्तं विहन्यते न पुनस्तदाद्यत्वेनेवेति न स्यादनित्यत्वं लुकः। तत्र यदा लक्षणयोरेव विचारः किं लक्षणं नित्यं किमनित्यमिति तदा च यस्य च लक्षणान्तरेणेति न्यायः। यदा तु कार्ययोर्विचारः कस्मिन् कार्ये प्रवृत्ते किं प्रवर्त्तते किं न प्रवर्त्ततइति तदा नास्त्येतद्यस्य च लक्षणा-

उप इ इजतुः। उपेजतुः। उप उ उपतुः। उपोपतुः। सवर्णदीर्घत्वं भवति विप्रतिषेधेन। अभ्यासार्थेन तावन्नार्थः। अस्त्वाचाद्गुणः। आद्गुणे कृते अयवौ च। हलादिःशेषः पुनराद्गुणो भविष्यति। भवेत्सिद्धं उपेजतुः उपेजुरिति। इदं तु न सिध्यति उपोपतुरुपोपुरिति। अत्र ह्याद्गुणे कृते ओदन्तो निपात इति प्रगृह्यसंज्ञा प्रगृह्यः प्रकृत्येति प्रगृह्याश्रयः प्रकृतिभावः प्राप्नोति। पदान्तप्रकरणे प्रकृतिभावः। न चैष पदान्तः। पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते। एवं तर्ह्येतदेवात्र नास्ति ओदन्तो निपात इति। किं कारणम्। लक्षणप्रतिपदोक्तयोः। प्रतिपदोक्तस्यैवेति। इहापि तर्हि अद्योढा कदोढेति भवेद्रूपं सिद्धं स्यात्। स्वरदोषस्तु। स्वरे तु दोषो भवति। अद्योढा एवं स्वरः प्रसज्येत। अद्योढा इति चेष्यते। आङि पररूपवचनं चेदामोमनर्थकं स्यात्। नानर्थकम। ज्ञापनार्थम्। किं ज्ञाप्यम्। आङि पररूपं तु ज्ञापकम् अन्तरङ्गबलीयस्त्वस्य। एतज्ज्ञापयत्याचार्योऽन्तरङ्गं बलीयो भवतीति। किं पुनरिहान्तरङ्गं किं बहिरङ्गम्। यावता द्वे पदे आश्रित्य सवर्णदीर्घत्वमपि भवत्याद्गुणोपि।

---

न्तरेणेति। उप इ इजतुरिति। पूर्वं सवर्णदीर्घत्वं भवति पश्चादाद्गुणः अन्तरङ्गत्वादप्येतत्सिध्यति। प्रकारान्तरेण तत्सिद्धिं प्रदर्शयितुमाह। अभ्यासेति। हलादिः शेष इति। अभ्यासानभ्यासयोरेकादेश एकारोऽभ्यासस्यादिवद्भावादभ्यासग्रहणेन गृह्यते ततस्थानिकोप्ययादेशः स्थानिवद्भावादभ्यास इति भावः। एकारस्य त्वभ्यासकृत्स्नो न भवति। ह्रस्वे कर्त्तव्ये नाभ्यासादिष्वित्यन्तादिवद्भावनिषेधात्। पदान्तभक्त इति। अन्तवद्भावात्पदान्तकार्यं लभतइत्यर्थः। इहापीति। विप्रतिषेधोपालम्भः। स्वरदोषस्त्विति। अद्यशब्दः प्रत्ययस्वरेणान्तोदात्तः। आङ् गतिरनन्तर इति पूर्वपदप्रकृतिस्वरेणोदात्तः। शिष्टमनुदात्तम्। तत्र यदि पूर्वं सवर्णदीर्घः स्यात् तदा द्वयोरुदात्तयोरेकादेश उदात्तस्तदाऽऽद्गुण एकादेश उदात्तेनोदात्तः स्वरितो वानुदात्ते पदादाविति पक्ष उदात्तः स्यात्पक्षे स्वरितः। यदा तु पूर्वमाद्गुणः पश्चादोमाङोश्चेति पररूपं तदा पूर्वत्रासिद्धमिति पररूपे कर्त्तव्ये एकादेशस्वरयोरुदात्तस्वरितयोरसिद्धत्वाच्छास्त्रदृष्ट्या अस्वरस्यैकादेशस्य पूर्वेणोदात्तेन सहैकादेश आन्तरतम्यादुदात्त एव भवति। आङि पररूपवचनं चेति। न केवलं स्वरदोषो यावदाचार्यवचनमपि त्वया न प्रमाणीकृतमित्यर्थः। विप्रतिषेधवाध्यानर्थक्यं परिहर्त्तुमाह। नानर्थकमिति। यदा पूर्वमाद्गुणः प्रवर्त्तते तदा ह्यद्यरचोति

धातूपसर्गयोर्यत्कार्यं तदन्तरङ्गम् । कुतएतत् । पूर्वंमुपसर्गस्य हि धातुना योगो भवति नाद्यशब्देन । किमर्थं तर्ह्याद्यशब्दः प्रयुज्यते । अद्यशब्दस्यापि समुदायेन योगो भवति । किमेतस्य ज्ञापने प्रयोजनम् । प्रयोजनं पूर्वसवर्णपूर्वत्वतद्धिलोपटेनङ्यर्यङिस्मिन्ङिलौत्वमन्तरङ्गं बहिरङ्गलक्षणाद्वर्णविकारात्* । पूर्वसवर्णः प्रयोजनम् । अग्नी अत्र । वायू अत्र । पूर्वसवर्णस्य प्राप्नोति बहिरङ्गलक्षणस्य वर्णविकार आवादेशः । पूर्वसवर्णदीर्घत्वं भवत्यन्तरङ्गतः । पूर्वसवर्ण । पूर्वत्व । शकन्ध्वर्थं परिव्यर्थं, पूर्वत्वं च प्राप्नोति बहिरङ्गलक्षणस्य वर्णविकारः सवर्णदीर्घत्वम् । पूर्वत्वं भवत्यन्तरङ्गतः । पूर्वत्व । तद्धिलोप । अकार्यत्र । अहार्यत्र । पचेदम् । तद्धिलोपौ च प्राप्नुतः । बहिरङ्गलक्षणस्य वर्णविकारः सवर्णदीर्घत्वम् । तद्धिलोपौ भवतोऽन्तरङ्गतः । तद्धिलोप । टेन । वृक्षेणात्र प्लक्षेणात्र । इनादेशस्य प्राप्नोति बहिरङ्गलक्षणस्य वर्णविकारः सवर्णदीर्घत्वम् । इनादेशो भवत्यन्तरङ्गतः । टेन । ङ्यर्य । वृक्षायात्र प्लक्षायात्र । ङ्यर्यादेशस्य प्राप्नोति बहिरङ्गलक्षणस्य वर्णविकार एङः पदान्तादतीति परपूर्वत्वम् । ङ्यर्यादेशो भवत्यन्तरङ्गतः । ङ्यर्य । ङिस्मिन् । यस्मिन्निदम् । तस्मिन्निदम् । स्मिन्भावस्य प्राप्नोति बहिरङ्गलक्षणस्य वर्णविकारः सवर्णदीर्घत्वम् । स्मिन्भावो भवत्यन्तरङ्गतः । ङिस्मिन् । ङिलौत्वम् । अग्नाविदम् । ययावत्र । ङिलौत्वं प्राप्नोति बहिरङ्गलक्षणस्य वर्णविकारः सवर्णदीर्घत्वम् । औत्वं भवत्यन्तरङ्गतः । नैतानि सन्ति प्रयोजनानि । विप्रतिषेधेनाप्येतानि सिद्धानि । इदं तर्हि प्रयोजनम् । वृक्षा अत्र । प्लक्षा अत्र ।

---

वृद्धिबाधनार्थं मोमाङोश्चेति वक्तव्यमित्यज्ञापकम् । विप्रतिषेधे त्वाश्रीयमाणे सवर्णदीर्घेण सिद्धे रूपे पररूपवचनं ज्ञापकं भवति । नाद्यशब्देनेति । अद्येत्यस्याधारार्थं स्याङासंबन्धो नास्ति क्रियासापेक्षत्वादाधारस्य । अडादिव्यवस्थार्थं तु धातूपसर्गौ पृथगुपदिष्टौ । परमार्थं तस्तु धातूपसर्गसमुदायः संग्रामयतिवत् क्रियाविशेषवाचीति भावः । अग्नी अत्रेति । अग्नि औ अत्रेति स्थिते विचारः । एवं शकन्धु आ अर्थम् । अकारि त अत्र । पच हि इदम् । वृक्षआ अत्र । वृक्ष ए अत्र । अस्मिन् इदम् । यया अ अत्र । वृक्षा अत्रेति । अनुदाहरणमेतदित्याहुः । वृक्ष अस् अ इति स्थिते कृते रुत्वे उत्वस्य प्राप्तिः । तच्च रुत्वं पूर्वत्रासिद्धमिति पूर्वसवर्णदीर्घे क्रियमाणे असिद्धमुत्वे त्वाश्रयात्सिद्धं वृक्षोत्रेति । ततश्च

पूर्वसवर्णश्च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः अतोरोरप्लुतादप्लुत-इत्युत्वम्। पूर्वसवर्णो भवत्यन्तरङ्गतः। न चावश्यमिदमेव प्रयोजनम्। आद्ये योगे बहूनि प्रयोजनानि सन्ति तदर्थमेषा परिभाषा कर्तव्या। प्रतिविधेयं दोषेषु॥

ख्यत्यात्परस्य॥ ११२॥ किमिदं ख्यत्यादिति। सखिपत्योर्विकृतग्रहणम्। किं पुनः कारणं विकृतयोः सखिपत्योर्ग्रहणं क्रियते न सखिपतिभ्यामित्येवोच्येत। नैवं शक्यम्। गरीयांश्चैव निर्देशः स्यात्। इह च प्रसज्येत। अतिसखेरागच्छति। अतिसखेः स्वम्। इह च न स्यात्। सखीयतेरप्रत्ययः। सख्युः। पत्युः। लूनीयतेरप्रत्ययः। लून्युः। पून्युः॥

अतोरोरप्लुतादप्लुते॥ ११३॥ किमर्थमप्लुतादप्लुतइत्युच्यते।

---

पूर्वसवर्णदीर्घेणैव पूर्वं भाव्यम्। तत्र कृते अतः परो रुर्न भवतीत्युत्वाभावः। प्रतिविधेयमिति। पूर्वोत्तरपदयोर्द्विस्वरावेकादेशादित्यादयो दोषा विप्रतिषेधसूत्रभक्ताः॥

ख्यत्यात्। किमिदमिति। किमकारान्तयोर्ग्रहणमथ कृतयणादेशयोः। आद्ये पक्षे मुख्यापत्यादीनां ग्रहणप्रसङ्ग इति मत्वा प्रश्नः। सखिपत्योरिति। सख्युर्यः पत्युर्न इति लिङ्गादकारान्तयोर्न ग्रहणमपि तु कृतयणादेशयोः। न सखिपतिभ्यामिति। विकारनिर्देशे क्लेशेन तयोः प्रतिपत्तिः। साक्षान्निर्देशे तु स्पष्टावगतिः। अतिसखेरिति। अकान्तः सखा येनेति बहुव्रीहिः। अथ वा शोभनः सखा अतिसखा न पूजनादिति समासान्त निषेधः। सखिपतिभ्यामुत्तरावत्र ङसिङसावित्युत्वप्रसङ्गः। अथ तु विहितविशेषणपक्ष आश्रीयते सखिपतिभ्यां यो विहितौ ङसिङसाविति तदात्रोत्वप्रसङ्गः। अव्याप्तिस्तु प्रसज्येत तदाह। इह चेति। अतिसखेरित्यत्रासखीति घीसंज्ञाप्रतिषेधो न भवति। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। केवलस्यैव सखिप्रतिषेधविज्ञानात्। सखीयतेरिति। विद्यमानं स्वमस्य सखः तमिच्छत्यात्मन इति क्यच् क्यचि चेतीत्वम्। लून्युरिति। लूनमिच्छतीति क्यच्। अत्र पूर्वत्रासिद्धमिति नत्वस्यासिद्धत्वात्तग्रशब्दो भवति। अत्र चोदयन्ति। सखीयादिभ्यः क्विपि कृते अल्लोपयलोपयोश्चाल्लोपस्यस्थानिवद्भावादिको यणचोति ईकारस्य यणाभाव्यम्। तत्र कृते यलोपे स्थानिवत्त्वनिषेधादादिष्टादचः पूर्वत्वात् स्थानिवत्त्वाप्रसङ्गाद्वा लोपोव्योर्वलीति यलोपप्रसङ्गः। ततश्च सख्युरित्यादि रूपाणि न सिध्यन्ति। नैतदस्ति। क्वौ लुप्तं न स्थानिवदिति स्थानिवत्त्वनिषेधात्।

अतो। किमर्थमिति। प्रकृतिभावविधानाद् ज्ञापकात् स्वरसन्धिप्रकरणे प्लुतस्य

प्लुतात्परस्य प्लुते वा परतो मा भूत् । प्लुतात्परस्य सुस्रोता ३ अत्र त्वमसि । प्लुते परतस्तिष्ठतु पय अ३ ग्निदत्त । अत: अतीत्युच्यते क: प्रसङ्ग: प्लुतात्परस्य प्लुते वा परत: स्यात् । असिद्ध: प्लुतस्तस्यासिद्धत्वात् प्राप्नोति । अथाप्लुतादप्लुत इत्युच्यमाने यावता असिद्ध: प्लुत: कस्मादेवात्र न प्राप्नोति । अप्लुतभाविन: अप्लुतभाविनीत्येवमेतद्विज्ञायते । नैतदस्ति प्रयोजनम् । सिद्ध: प्लुत: स्वरसंधिषु । कथं ज्ञायते । यदयं प्लुत: प्रकृत्येति प्लुतस्य प्रकृतिभावं शास्ति । सतो हि कार्यिण: कार्येण भवितव्यम् । अप्लुतादप्लुतवचने अकारहशो: समानपदे प्रतिषेध: * । अप्लुतादप्लुत इति वचने अकारहशो: समानपदे प्रतिषेधो वक्तव्य: । पयोऽ३ट् पयो३द । न वा बहिरङ्गलक्षणत्वात् * । न वा वक्तव्यम् । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्ग: प्लुतोऽन्तरङ्गमुत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे । इहापि तर्हि प्राप्नोति । सुस्रोता अत्र त्वमसि । अन्तरङ्गोऽत्र प्लुत: । बहिरङ्गमुत्वम् । क्व पुनरिहान्तरङ्ग: प्लुत: क्व वा बहिरङ्गमुत्वं प्लुतो वा बहिरङ्ग: वाक्यान्तस्य वाक्यादावन्तरङ्ग: प्लुत: । बहिरङ्गमुत्वम् । समानवाक्ये पदान्तस्य पदादावुत्वमन्तरङ्गम् । बहिरङ्ग: प्लुत: । किं पुन: कारणं

---

सिद्धत्वात्तपरकरणेनैव उत्वं निवारितमिति मत्वा प्रश्न: । असिद्ध इति । प्रकृतिभाव एव सिद्ध: प्लुत: । अप्लुतभाविन इति । प्लुतभावित्वादुपचारात् स्थान्येवाकार: प्लुतशब्देनोच्यते इत्यर्थ: । यद्यपि प्रतिषेधोपादानसामर्थ्यात् सिद्ध: प्लुत इति परिहारोऽस्ति तथापि परिहारान्तरसद्भावादेष परिहारो नाश्रित: यदयमिति । सामान्येन संहिताधिकारविहितकार्यापेक्षया ज्ञापकमाश्रीयते । अकारहशोरिति । उत्वप्रतिषेधस्य प्रतिषेध इत्यर्थ: । तत उत्वे कृते आद्गुण: एङ: पदान्तादतीति पूर्वैकादेश: । तत: प्लुत: पयो३डिति । पयो ऽटतीति क्विप् । तत: संबुद्धि: । दूराद्धूतेत्यकारस्य वाक्यस्य टे: प्लुतभावित्वादुत्वप्रतिषेधप्रसङ्ग: । पयोदेति । पयो ददातीति कप्रत्यय: । तत: संयोगपरस्याकारस्य गुरुत्वाद् गुरोरनृतदिति प्लुतभावित्वादप्लुतादिति निषेधाद्धशि चेत्युत्वं न प्राप्नोति । वाक्यान्ते ति । सुस्रोता ३ इत्यादौ पदान्तरानपेक्षणात् प्लुतोऽन्तरङ्ग: । वाक्यादाविति । वाक्यादौ परतो वाक्यान्तस्येत्यर्थ: । उत्वप्रसङ्गकथनार्थं चैतत् । उत्वं तु तत्र पदद्वयपेक्षत्वाद्बहिरङ्गम् । प्लुत इति । दूराद्धूताद्यर्थापेक्षत्वात् । किं पुन: कारणमिति । द्विविधे सिद्धत्वे ऽसंभवति कस्माद्बहिरङ्गासिद्धत्वमुच्यते । न तु पूर्वत्रासिद्धत्वमपि ।

बहिरङ्गत्वमुत्वे हेतुर्व्यपदिश्यते न पुनरसिद्धत्वमपि । यथैव ह्ययं बहिरङ्ग एवमसिद्धोपि । एवं मन्यते असिद्धः प्लुत आश्रयात्सिद्धो भवति । अथ वा यस्यां नाप्राप्तायां परिभाषायामुत्वमारभ्यते साश्रयात्सिद्धा स्यात् । कस्यां च नाप्राप्तायाम् । असिद्धपरिभाषायाम् । बहिरङ्गपरिभाषायां पुनः प्राप्तायां च

नान्तः पादम् ॥ ११५ ॥ कस्यायं प्रतिषेधः । नान्तः पादमिति सर्वप्रतिषेधः * । नान्तःपादमिति सर्वस्यायं प्रतिषेधः । कथम् । अचीति वर्तते । अचि यत्प्राप्नोति तस्य प्रतिषेधः । नान्तः पादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः * । नान्तःपादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गो भवति । इहापि प्राप्नोति । अन्वग्निरुषसामग्रमख्यत् । एवं तर्ह्यतीति वर्तते । अकाराश्रयं यत्प्राप्नोति तस्य प्रतिषेधः । अकाराश्रयमिति चेदुत्ववचनम् * । अकाराश्रयमिति चेदुत्वं वक्तव्यम् । कालो अश्वः शतधारोयं मणिः । अयवोःप्रतिषेधश्च * । अयवोश्च प्रतिषेधो वक्तव्यः । सुजाते अश्वसूनृते अध्वर्यो अद्रिभिः सुतम् । एङ्प्रकरणात्सिद्धम् । एङः अतीतिवर्तते । एङः अति यत्प्राप्नोति तस्य प्रतिषेधः । एङ्प्रकरणात्सिद्धमिति चेतुत्वप्रतिषेधः* । एङ्प्रकरणात्सिद्धमिति चेदुत्वस्य प्रतिषेधो वक्तव्यः । अग्नेरत्र वोयोरत्र

---

अर्थाश्रयात्सिद्धत्वेनासिद्धत्वं बाध्यते तथा बहिरङ्गासिद्धत्वमपि बाध्यतामिति मत्वा प्रश्नः । असिद्धइति । पूर्वत्रासिद्धमिति वचनात् । आश्रयादिति । अप्लुतादप्लुत इति प्रतिषेधाश्रयणसामर्थ्यात् पूर्वत्रासिद्धमित्येतदसिद्धत्वं प्रत्यासत्त्या बाध्यते न तु बहिरङ्गासिद्धत्वमौपसंख्यानिकं वाहऊडित्यत्र ज्ञापितं च विप्रकृष्टत्वात्पयोडित्यादौ तु बहिरङ्गपरिभाषया प्लुतस्यासिद्धत्वापादनात् पूर्वत्रासिद्धमित्यस्याप्रवृत्तावाश्रयात्सिद्धत्वाभावः । आश्रयात्सिद्धा स्यादिति । तद्विषयस्य प्लुतस्य सिद्धत्वात् सिद्धेत्युक्तम् । अनाश्रयणं तु तस्या अत्राऽभिमतम् ॥

नान्तः । कस्यायमिति । यद्येङः पदान्तादतीति पाठस्य पूर्वैकादेशस्य प्रतिषेधस्तदायवौ प्राप्नुत इति प्रश्नः । सर्वप्रतिषेध इति । शेषमनपेक्ष्य प्रतिषेधविधानात् । अन्वग्निरिति । यणादेशस्यात्र प्रतिषेधप्रसङ्गः । अकाराश्रयमिति । अकार एव निमित्तं यस्य तस्य प्रतिषेधो यणादेशस्त्वज्मात्रनिमित्तो नाकाराश्रय इति न प्रतिषिध्यते ।

अतीरोरप्लुतादप्लुते एङ्स्त्वित्युत्वं प्राप्नोति।पुनरेङ्ग्रहणात्सिद्धम्।पुनरेङ्ग्रहणं कर्तव्यम्।तत्तर्हि वक्तव्यम्।न न कर्तव्यम्। प्रकृतमनुवर्तते। ननु चोक्तमेङ्प्रकरणात्सिद्धमिति चेदुत्वप्रतिषेध इति। नैष दोषः। पदान्ताभिसंबद्धमेङ्ग्रहणमनुवर्तते। न चैङः पदान्तात्परोऽस्ति॥

अवङ्स्फोटायनस्य॥ १२३॥ गोरवचनं गवाग्रे स्वरसिद्ध्यर्थम् *। गोरवक्तव्यः। किं प्रयोजनम्। गवाग्रे स्वरसिद्ध्यर्थम् *। गवाग्रे स्वरसिद्धिर्यथा स्यात्। गवाग्रम्। अवङादेशे हि स्वरे दोषः *। अवङादेशे हि स्वरे दोषः स्यात्। अन्तोदात्तस्यान्तर्यतोऽन्तोदात्त आदेशः प्रसज्येत। कथं पुनरयमन्तोदात्तः यदा एकाच्। व्यपदेशिवद्भावेन।यथैव तर्हि व्यपदेशिवद्भावेनान्तोदात्त एवमाद्युदात्तोपि। तत्रान्तर्यत आद्युदात्तस्याद्युदात्त आदेशः प्रसज्येत। सत्यमेव तत्। नत्विदं लक्षणमस्ति प्रातिपदिकस्यादिरुदात्तो भवतीति। इदं पुनरस्ति प्रातिपदिकस्यान्त उदात्तो भवतीति। सोऽसौ लक्षणेनान्तोदात्तः तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशः प्रसज्येत। यदि पुनर्गमेर्डो विधीयते किं कृतं भवति। प्रत्ययाद्युदात्तत्वे कृते आन्तर्य्यत आद्युदात्तस्याद्युदात्त आदेशो भविष्यति। कथं पुनरयमाद्युदात्तो यदा एकाच्। व्यपदेशिवद्भावेन। यथैव तर्हि व्यपदेशिवद्भावेनाद्युदात्त एव मन्तोदात्तोपि। तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशः प्रसज्येत। सत्यमेव तत्। न त्विदं लक्षणमस्तिप्रत्ययस्यान्त उदात्तो भवतीति। इदं पुनरस्ति प्रत्ययस्यादिरुदात्तो भव-

---

यवोश्चेति। अयवौ ह्यज्मात्राश्रयौ नकाराश्रयौ। उत्वप्रतिषेध इति। एङ्ग्रहणमिहानुवर्तमानमतोरोरप्लुतादप्लुत इत्यत्रापि अनुवर्तेत इत्येङ्परस्य रोरुत्वप्रसङ्गः।

अवङ्। गोरवचनमिति। अव्युत्पत्तिपक्षे गोशब्दः फिषित्यन्तोदात्त इत्योकारस्यान्तोदात्तस्य स्थाने ऽवङ् भवन्नन्तोदात्तः प्राप्नोतीति अविधेयः। स चागमा अनुदात्ता इत्यनुदात्तः। तेन चौकारस्य पदान्ततायाविघातात् पूर्वैकादेशाभावे अवादेशो भवति। गवाग्रमिति। बहुव्रीहिः। तत्र पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं भवति। तत्पुरुषे तु समासान्तोदात्तत्वेन भाव्यम्। यदि पुनरिति। आद्युदात्तशास्त्रविधानप्रवृत्तये व्युत्पत्तिपक्ष

लीति। सोऽसौ लक्षणेनाद्युदात्तस्तचान्तर्यत आद्युदात्तस्याद्युदात्त आदेशो भविष्यति। एतदप्यादेशे नास्ति आदेशस्यादिरुदात्तो भवतीति। प्रकृतितोऽनेन स्वरो लभ्यः। प्रकृतिरस्य यथैवाद्युदात्ता एवमन्तोदात्तापि। एवं तर्ह्याद्युदात्तनिपातनं करिष्यते। स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति। एवमप्युपदेशिवद्भावो वक्तव्यः। यथैव निपातनस्वरः प्रकृतिस्वरस्य बाधक एवं समासस्वरस्यापि। गवाक्षि गवाक्षि॥

इन्द्रे च॥१२४॥ इन्द्रादाविति वक्तव्यम्। इहापि यथा स्यात्। गवेन्द्रयज्ञं वीहीति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। नैवं विज्ञायते इन्द्रेचीति। कथं तर्हि अचि भवति कतरस्मिन्निन्द्रेचीति॥

प्लुतप्रगृह्या अचि नित्यम्॥१२५॥ नित्यग्रहणं किमर्थम्। विभाषा मा भूदिति। नैतदस्ति प्रयोजनम्। पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम्। इदं तर्हि प्रयोजनम्। प्लुतप्रगृह्याणामचि प्रकृतिभाव एव यथा स्याद् यदन्यत्प्राप्नोति तन्मा भूदिति। किं चान्यत् प्राप्नोति। शाकलम्। अथाज्ग्रहणं किमर्थम्। अचि प्रकृतिभावो यथा स्यात्। प्लुतप्रगृह्येष्वज्ग्रहणमनर्थकमधिकारात्सिद्धम्*। प्लुतप्रगृह्येषु अज्ग्रहणमनर्थकम्। किं कारणम्। अधिकारादेव

---

श्रीयतइत्यर्थः। एतदपीति। आद्यन्तवदेकस्मिन्निति व्यपदेशातिदेशे त्वदुक्तं स्यात्। यदा त्वनेन कार्यमात्रमुदात्तत्वमसत्येवादित्वेऽन्तत्वे वातिदिश्यते तदौकारस्यादिव्यपदेशाभावः कुतस्तदादेशस्याद्युदात्तत्वं चानियतदेशं पर्यायेण स्यादिति पक्षेऽनिष्टस्वरप्रसङ्गः। स निपातनस्वरइति। एकश्रुत्या सूत्रपाठे यत्नेनाद्युदात्तोच्चारणमन्तोदात्तत्वबाधनार्थं विज्ञायते। एवमपीति। परत्वात् पूर्वं समासान्तोदात्तत्वे सत्यवङ्प्रसङ्ग इत्युपदेशिवद्भावात् पूर्वमवङि सतिशिष्टं समासान्तोदात्तत्वं भवति।

इन्द्रे। इन्द्रादाविति। इन्द्रशब्द आदिर्यस्य तस्मिन् परत इत्यर्थः। केवले चेन्द्रशब्दे व्यपदेशिवद्भावाद्भवति। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति तु निषेधः प्रत्ययविधिविषयः। इन्द्रे चीति। इन्द्रशब्दो विशेष्योऽचीतिविशेषणम्। सिद्धान्ते त्वज्विशेष्य इन्द्रशब्दो विशेषणम्। तदादावपि इन्द्रशब्दस्थोज् भवतीत्यवङ्सिद्धिः।

प्लुत। नित्यग्रहणमिति। इन्द्रे चेति ये सूत्रं पठन्ति प्लुतप्रगृह्या अचि नित्यमिति तु द्वितीयं तन्मते नैष प्रश्नः। पूर्वस्मिन्नेवेति। इन्द्रे चेत्यत्र। शाकलमिति। ह्रस्वत्वमि

सिद्धम् । अचीति प्रकृतमनुवर्त्तते । क्व प्रकृतम् । इकोयणचीति । तत्तु तस्मिन् प्रकृतिभावार्थम् * । तत्तु द्वितीयमज्ग्रहणं कर्तव्यम् । प्रकृतिभावार्थम् । तस्मिन्नचि पूर्वस्य प्रकृतिभावो यथा स्यात् । इह मा भूत् । जानु उ अस्य रुजति जानू अस्य रुजति जान्वस्य रुजतीति । अथ किमर्थं प्लुतस्य प्रकृतिभाव उच्यते ।स्वरसन्धिर्मा भूदिति । उच्यमानेप्येतस्मिन् स्वरसन्धिः प्राप्नोति । प्लुते कृते न भव्यति । असिद्धः प्लुतस्तस्यासिद्धत्वात् प्राप्नोति । प्लुतप्रकृतिभाववचनं तु ज्ञापकमेकादेशात् प्लुतो विप्रतिषेधेनेति * । यदयं प्लुतः प्रकृत्येति प्रकृतिभावं शास्ति तज्ज्ञापयत्याचार्य एकादेशात्प्लुतो भवति विप्रतिषेधेनेति । एकादेशात् प्लुतो विप्रतिषेधेनेति चेच्छालेन्द्रेऽतिप्रसङ्गः। एकादेशात् प्लुतो विप्रतिषेधेनेति चेत् शालेन्द्रेऽतिप्रसङ्गो भवति । शालायामिन्द्रः शालेन्द्रः । न वा बहिरङ्गलक्षणत्वात् * । नवातिप्रसङ्गः किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गः प्लुतः । अन्तरङ्ग एकादेशः । असिद्धं बहिरङ्गमन्तरङ्गे-

आङोनुनासिकश्छन्दसि ॥१२६॥ आङोनर्थकस्य * । आङोनर्थकस्येति वक्तव्यम् । इह मा भूत् । इन्द्रो बाहुभ्यामातरत् । त-

---

त्यर्थः । नित्यग्रहणादयमर्थो लभ्यते । प्लुतप्रगृह्यरूपा एव नित्यं प्रकृतिभावं प्रतिपद्यन्ते न रूपान्तरयुक्ता इति । अथ वा प्लुतप्रगृह्याणामयमेव प्रकृतिभावो नित्यं भवति न तु सूत्रान्तरेण कार्यान्तरसहितः । तत्तु तस्मिन्निति । यस्मिन्नचादेशो विधीयते तस्मिन्नेवाचि परतः प्लुतप्रगृह्याणां प्रकृतिभावो यथा स्यादित्यर्थः । जानु उ अस्येति । उञ् निपातः तस्य पूर्वेण सहैकादेशे कर्तव्ये अकारस्यनिमित्तत्वाभावात् प्रकृतिभावाभावादेकादेशो भवत्येव । तत्रादिवद्भावादेकादेशः प्रगृह्यः । तस्यैको यणादेशः प्रकृतिभावान्न भवति । मय उञो वोवेति पक्षे वकारः । अथ किमर्थमिति । पूर्वत्रासिद्धमिति प्लुतस्यासिद्धत्वादेकादेशः प्रागेव प्राप्नोतीत्यनर्थकः प्रकृतिभाव इति प्रश्नः । प्लुतप्रकृतिभाववचनमिति । ज्ञापकादस्मात् प्लुतः सिद्ध इति भावः । न वेति । शालेन्द्रे एकादेशोन्तरङ्गः प्लुतो दूराद्धूताद्यर्थापेक्षत्वाद्बहिरङ्गः । एवं तु सति देवदत्त अत्र न्वसीति सप्लुतैकादेशयोर्विप्रतिषेधो नोपपद्यते प्लुतस्यैकपदाश्रयत्वादन्तरङ्गत्वादेकादेशस्य तु पदद्वयाश्रयत्वाद्बहिरङ्गत्वादिति चिन्त्यमेतत् ।

आङो । आङोऽनर्थकस्येति । अभ्र आँ अप इत्यादौ सप्तम्यैव तदर्थस्योक्तत्वात्तदर्थ-

तर्हि वक्तव्यम्। न वक्तव्यम्। बहुलवचनान्न भविष्यति आङोऽनुनासिकश्छन्दसि बहुलम्॥

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च॥ १२७॥ किमर्थश्चकारः। प्रकृत्येत्येतदनुकृष्यते। किं प्रयोजनम्। स्वरसन्धिर्मा भूदिति। नैतदस्ति प्रयोजनम्। ह्रस्ववचनसामर्थ्यान्न भविष्यति। भवेद्दीर्घाणां ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न स्याद् ह्रस्वानां तु खलु स्वरसन्धिः प्राप्नोति। ह्रस्वानामपि ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न भविष्यति। न ह्रस्वानां ह्रस्वाः प्राप्नुवन्ति। नहि भुक्तवान् पुनर्भुङ्क्ते। न च कृतश्मश्रुः पुनः श्मश्रूणि कारयति। ननु च पुनः प्रवृत्तिरपि दृष्टा। भुक्तवानपि पुनर्भुङ्क्ते। कृतश्मश्रुरपि पुनः श्मश्रूणि कारयति। सामर्थ्यात्तत्र पुनः प्रवृत्तिर्भवति भोजनविशेषात् शिल्पिविशेषाद्वा। ह्रस्वानां पुनर्ह्रस्ववचने न किंचित् प्रयोजनमस्ति। अकृतकारि खल्वपि शास्त्रमग्निवत्। तद्यथा। अग्निर्यददग्धं तद्दहति। ह्रस्वानामपि ह्रस्ववचन एतत् प्रयोजनं स्वरसन्धिर्मा भूदिति। कृतकारि खल्वपि शास्त्रं पर्जन्यवत्। तद्यथा। पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति। इदं तर्हि प्रयोजनम्। प्लुतप्रगृह्या अनुकृष्यन्ते। इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च। प्लुतप्रगृह्याश्च प्रकृत्या। नित्यग्रहणस्याप्येतत्

---

वृत्तिरेवाङनर्थको ऽनर्थान्तरवाचित्वात्। यथा अधिपरी अनर्थकावित्युक्तम्। आतरदित्यत्र तु क्रियाविशेषणत्वादर्थवानाङ्।

इको। लुटि च क्लृप इत्यत्र व्याख्यानादधिकारस्य सिद्धत्वात्सर्वचकाराणां प्रत्याख्यानादधिकाराभिव्यक्तये क्रियमाणेष्वपि वा चकारेषु ह्रस्वविधानसामर्थ्यात् स्वरसंध्यभावस्य सिद्धत्वादनर्थकश्चकारइति मत्वाह। किमर्थ इति। भवेदिति। दीर्घा ह्रस्वाश्चेकःसन्ति। कुमारी अत्र दधि अत्रेति। ह्रस्वस्य दीर्घाणामारभ्यते न ह्रस्वानाम्।स्वत एव ह्रस्वरूपत्वात्। नहि भुक्तवानिति।भुजेस्तृप्तिफलत्वात्फलाभावात्पुनर्भोजनाप्रवृत्तिः।अनैकान्तिकमेतदित्याह।ननु चेति। सामर्थ्यादिति। फलविशेषसद्भावादित्यर्थः। प्रीत्यतिशयो भोजनविशेषस्य फलम्। इह तु फलाभावात्प्रवृत्तिर्नास्तीत्यर्थः।स्वरसन्धिर्मा भूदिति। यणादेशबाधनार्थं ह्रस्वस्य ह्रस्वविधानं स्वरूपप्रत्यापत्त्यर्थमित्यर्थः। अग्निर्दग्धं न दहति अयोग्यत्वादितिनासौ दृष्टान्त उपादेयः। इहापि पुनर्नदुर्लभो दृष्टान्त इत्याह। कृतकारीति।

प्रयोजनम् । अन्यतरच्छक्यमवक्तुम् । सिन्नित्यसमासयोः शाकलप्रतिषेधः * । सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः । अयं ते योनिर्ऋत्वियः । प्रजां विदाम ऋत्वियाम् । वैयाकरणः । सौवश्वः । नित्यग्रहणेन नार्थः । सित्समासयोः शाकलं न भवतीत्येव । इदमपि सिद्धं भवति । वाप्यामश्वो वाप्यश्वः । नद्यामातिर्नद्यातिः । ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रम् * । ईषाअक्षादिषु च छन्दसि प्रकृतिभावमात्रं द्रष्टव्यम् । ईषाअक्षा का ईमिरे पिशंगिला । यथा अङ्गदः ॥

ऋत्यकः ॥ १२८ ॥ किमर्थमिदमुच्यते । ऋत्यकः सवर्णार्थः । सवर्णार्थीयमारम्भः । होतृ ऋश्यः । अनिग्तार्थं च । खट्व ऋश्यः । माल ऋश्यः । ऋतिह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेन * । ऋति ह्रस्वो भवतीत्येतस्मादुपसर्गाद्वृद्धिर्भवति विप्रतिषेधेन । ऋतिह्रस्वो भवतीत्येतस्यावकाशः । खट्व ऋश्यः । माल ऋश्यः । उपसर्गाद्वृद्धेरवकाशः । विभाषा ह्रस्वत्वम् । यदा न ह्रस्वत्वं सोऽवकाशः । ह्रस्वप्रसङ्गे उभयं प्राप्नोति । प्रार्श्नोति उपार्श्नोति । उपसर्गाद्वृद्धिर्भवति विप्रतिषेधेन । सतर्हि विप्रतिषेधो वक्तव्यः । न वक्तव्यः । उक्तं तत्र धातुग्रहणस्य प्रयोजनम् । उपसर्गादृतिधातौ वृद्धिरेव यथा स्याद् यदन्यत्प्राप्नोति तन्मा भूदिति ॥

अप्लुतवदुपस्थिते ॥ १२९ ॥ उपस्थिते इत्युच्यते किमिदमुपस्थितं नाम । अनार्ष इति करणः । सुश्लोका इति । सुश्लोकेति । अथ वद्वचनं किमर्थम् । वद्वचनं प्लुतकार्यप्रतिषेधार्थम् * । वद्वचनं क्रियते । प्लुतकार्यप्रतिषेधार्थम् । प्लुतकार्यं प्रतिषिध्यते । चिमात्रता न प्रति-

---

सिन्नित्यसमासयोरिति । नित्याधिकारविहितः समासो नित्यसमासः । यो वाविग्रहाभावादस्वपदविग्रहत्वान्नित्यः समासःसोपि नित्यसमासः । वैयाकरणःसौवश्व इति । प्रदेशान्तरपाठाश्रयेणैवं पठितम्।व्याकरणं स्वश्व इत्येतावदप्यत्रोदाहरणं संभवति । वाप्यश्व इति । सुप् सुपेति समासः । संज्ञायामिति तु समासस्य नित्यत्वात् सिद्धः । प्रतिषेधः ॥

अप्लुत । अनार्ष इति । पदास्येयत्तापरिज्ञानाय स्वरूपे ऽवस्थापनार्थ इतिः प्रयुज्यत इत्यर्थः । अथेति । प्लुतस्य श्रवणेन न भाव्यमिति प्लुत एव निषिध्यतां किमतिदेशार्थेन

षिध्यते । किं चेदानीं त्रिमात्रताया अप्रतिषेधे प्रयोजनं यावता प्लुतकार्ये प्रतिषिद्धे स्वरसन्धिना भवितव्यम् । प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात् *। प्लुतप्रतिषेधे हि सति प्रगृह्यस्यापि प्लुतस्य त्रिमात्रतायाः प्रतिषेधः प्रसज्येत । अग्नी इति । वायू इति । किं चेदानीं तस्या अपि त्रिमात्रताया अप्रतिषेधे प्रयोजनं, यावता प्लुतकार्ये प्रतिषिद्धे स्वरसन्धिना भवितव्यम् । न भवितव्यम् । किं कारणम् । अन्येन विहितत्वात् । अन्येन हि लक्षणेन प्लुतप्रगृह्यस्य प्रकृतिभाव उच्यते । प्रगृह्यः प्रकृत्येति ॥

ई चाक्रवर्मणस्य ॥ १३० ॥ किमर्थमिदमुच्यते । ईचाक्रवर्मणस्येत्यनुपस्थितार्थम् । अनुपस्थितार्थोऽयमारम्भः । चिनुही३ इदम् । चिनुहीदम् । सुनुही३ इदम् । सुनुहीदम् । ईकारग्रहणेन नार्थः । अविशेषेण चाक्रवर्मणस्याचार्यस्य प्लुतवद्भवतीत्येव । इदमपि सिद्धं भवति । वशा३ इयं वशेयम् ॥

दिवउत् ॥ १३१॥ किमर्थस्तकारः । तपरस्तत्कालस्येति तत्कालो यथा स्यात् । नैतदस्ति प्रयोजनम् । आन्तर्यतोर्द्धमात्रिकस्य व्यञ्जनस्य मात्रिक उकारो भविष्यति । न सिध्यति । ऊठि कृते आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति तदर्थं तपरः कृतः । एवमर्थं तपरः क्रियते ॥

---

वद्वचनेनेति भावः । अग्नी इति । अत्र प्लुताश्रयोऽपि प्रकृतिभावः प्राप्नोति प्रगृह्याऽऽश्रयोपि । तत्र प्लुताश्रये प्रतिषिद्धेपि प्रगृह्याश्रयप्रकृतिभावात् प्लुतस्य श्रवणं सिध्यति । प्लुतस्य तु निषेधे क्रियमाणे श्रवणं न स्यात् ॥

ईचाक्र । ई३ इति त्रिमात्रस्य निर्देशः । किमर्थमिति । किमुपस्थितग्रहणानुवृत्त्या प्राप्तविभाषेयम् । अथ तन्निवृत्त्या पूर्वविप्रतिषेधाप्राप्तविभाषा । अथ परविप्रतिषेधादुभयतो विभाषेति प्रश्नः । अनुपस्थितार्थमिति । उभयत्र विभाषेयं परविप्रतिषेधस्य न्याय्यत्वात् ॥

दिव उत् । कृतइति । द्युभ्यामित्यादौ परत्वादूठि कृते पुनः प्रसङ्गविज्ञानादुत्वं क्रियते ऊड्विधौ तु क्ङितीति नानुवर्त्ततइति पक्षमाश्रित्येदमुक्तम् । ननु भाव्यमानत्वादुकारो भिन्नकालं न ग्रहीष्यतीति नार्थस्तकारेण । एवं तर्हि तपरत्वमेव ज्ञापकं भाव्यमानोप्युकारो भिन्नकालं सवर्णं गृह्णातीति । तेनामूभ्यामित्यादौ दीर्घस्य दीर्घो भवति ॥

सुट् कात्पूर्वः ॥ १३५ ॥ कात्पूर्वग्रहणं किमर्थम् । कात्पूर्वो यथा स्यात् । संस्कर्त्ता । संस्कर्त्तुम् । नैतदस्ति प्रयोजनम् । सुडित्यादिलिङ्गोयं क्रियते । करोतिश्च ककारादिः । तत्रान्तरेण कात्पूर्वग्रहणं कात्पूर्व एव भविष्यतीति । अत उत्तरं पठति । सुटि कात्पूर्ववचनमककारादौ कातपूर्वार्थम् * । सुटि कात्पूर्ववचनं क्रियते । अककारादौ करोतौ कात्पूर्वो यथा स्यात् । संचस्करतुः । संचस्करुः । सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि तत्सिद्धम् *। सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि कात्पूर्वग्रहणं सिद्धम् । कथम् । द्विर्वचनात्सुड्विप्रतिषेधेन । द्विर्वचनं क्रियतां सुडिति । सुड् भविष्यति विप्रतिषेधेन तत्र द्विर्वचनं भवतीत्यस्यावकाशः । बिभिदतुः । बिभिदुः । सुटोवकाशः । संस्कर्त्ता संस्कतुम् । इहोभयं प्राप्नोति । संचस्करतुः संचस्करुरिति । सुड् भवति विप्रतिषेधेन । द्विर्वचनात् सुड्विप्रतिषेधेनेति चेद् द्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्गः *। द्विर्वचनात्सुड्विप्रतिषेधेनेति चेद्द्विर्भूते शब्दान्तरस्याकृतः सुडिति पुनः सुट् स्यात् । द्विर्भूते शब्दान्तरभावात् पुनः प्रसङ्ग इति चेद् द्विर्वचनम् * । सुटि कृते शब्दान्तरस्याकृतं द्विर्वचनमिति पुनर्द्विर्वचनं प्राप्नोति । तथा चानवस्था । पुनः सुट् पुनर्द्विर्वचनमिति चक्रकमनवस्था च प्रसज्येत । नास्ति चक्रकप्रसङ्गः । नह्यनवस्थाकारिणा शास्त्रेण भवितव्यम् । शास्त्रतो हि नाम व्यव-

---

सुट्कात् । वक्ष्यमाणैः सूत्रैः ककादेरेवधातोः सुड्विधीयतइति पृच्छति । कात्पूर्वग्रहणमिति । अथ वा धातूपसर्गयोः कार्यमन्तरङ्गमित्यडभ्यासाभ्यां पूर्वमेव सुड् भविष्यति स च टित्वात्पूर्वं इति प्रश्नः । अथ वा वक्ष्यमाणानेकप्रयोजनसंभवे तद्विषज्ञानाय प्रश्नः। षादिलिङ्ग इति । आद्यादिलिङ्गमस्यास्तीत्यकारो मत्वर्थीयः। सुटि कात्पूर्वचनमिति। अडभ्यासयोरन्तरङ्गत्वं मन्यते । द्विर्वचनात्सुडिति । अन्तरङ्गबहिरङ्ग भावमनपेक्ष्य विप्रतिषेध उच्यते । तत्रसुटि कृते पुनः प्रसङ्गविज्ञानात् स्कसब्दस्य द्विवचने शर्पूर्वाः खय इति खयः शेषे सिद्धं रूपम् । शब्दान्तरस्येति । स्थानेद्विर्वचने शब्दान्तरत्वम् । व्यक्तौ पदार्थे चक्रकदोशानवतारः । सकृद् गतौ विप्रतिषेध इति सुटि कृते द्विर्वचनाप्रसङ्गात् । तस्मादाकृतिपक्षे पुनः प्रसङ्गविज्ञानात्सुटि कृते द्विर्वचनमिति व्यक्त्यन्तरेपि जातिसद्भावात्तद्द्वारेण पुनः कार्यप्रवृत्त्या चक्रकदोषापत्तिः । सकृत्प्रवृत्तैव लक्षणस्य चरि-

स्था। तत्र सुटि कृते द्विर्वचनं द्विर्वचनेनावस्थानं भविष्यति। अड्व्यवायउपसंख्यानम् *। अड्व्यवाये उपसंख्यानं कर्तव्यम्। समस्करोत्। समस्कार्षीत्। अभ्यासव्यवाये च *। अभ्यासव्यवाये चोपसंख्यानं कर्तव्यम्। संचस्करतुः। संचस्करुः। किमुच्यते अभ्यासव्यवाय इति। यदिदानीमेवोक्तं द्विर्वचनात्सुड्विप्रतिषेधेनेति। अविप्रतिषेधो वा बहिरङ्गलक्षणत्वात् सुटः *। अविप्रतिषेधो वा पुनः सुटः। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षणः सुट्। अन्तरङ्गं द्विर्वचनम्। असिद्धं बहिरङ्गमन्तरङ्गे। एवमर्थमेव तर्हि कात्पूर्वग्रहणं कर्तव्यम्। कात्पूर्वो यथा स्यात्। क्रियमाणेपि कात्पूर्वग्रहणे ऽत्र न सिध्यति। किं कारणम्। नह्ययं कात्पूर्वग्रहणेन शक्यो मध्ये प्रवेशयितुम्। किं कारणम्। आदिलिङ्गोयं क्रियते। करोतिश्च ककारादिः। दृष्टश्च पुनरातिदेशिकः करोतिरककारादिः। पाक्षिक एष दोषः। कतरस्मिन्पक्षे सुड्विधौ द्वैतं भवति। अविशेषेण वा विहितस्य सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थं-

---

तार्थत्वमाश्रित्य परिहारः। चक्रमिव विपरिवर्त्तनात् चक्रकम्। इवार्थे संज्ञायामिति कन्प्रत्ययः पुनर्द्विर्वचनप्रसङ्गश्च, नभ्यासस्येत्यस्य प्रत्याख्यानादुच्यते। अथ वा साभ्यासाद्यः प्रत्ययो विधीयते तत्रानभ्यासस्येति प्रतिषेधः। अड्व्यवाय इति। अडभ्यासव्यवायेपीति सूत्रस्यापाठे वार्त्तिकप्रवृत्तिः। परत्वाद्विकरणात्तस्याडागमे कृते तेन व्यवधानात्समोनन्तरः करोतिर्न भवतीति वचनम्। अभ्यासव्यवाये चेति। नाप्राप्तः सुडुपसंख्यायते अपि तु प्राप्त एव वचनेन देशविशेषेवस्थाप्यते। अविप्रतिषेध इति। पदद्वयाश्रयत्वात् सुड्बहिरङ्गः। एकपदाश्रयत्वात्तु। द्विर्वचनमन्तरङ्गमिति तुल्यबलत्वाभावाद्विप्रतिषेधाभावः। एवमर्थमिति। अन्तरङ्गत्वाद्विर्वचने कृते परत्वादन्तरङ्गत्वाद्वाडागमे मध्यानुप्रवेशार्थं सुटः कात्पूर्वग्रहणम्। कालावधारणार्थं वा। करोतेः कादित्वावस्थायामेव सुट् भवति। कृते सुटाड्द्विर्वचने भवतः। क्रियमाणेपीति। परत्वान्तरङ्गत्वाभ्यामड्द्विर्वचनयोः कृतयोष्टित्वात्सुटो मध्ये अनुप्रवेशाभावः। करोतिश्चेति। संस्कर्तेत्यादौ। ततश्चात्रैव स्यात्। अड्द्विर्वनयोस्तु कृतयोष्टित्त्वात्कात्पूर्वग्रहणाच्च विरुद्धदेशसमर्पणादप्रवृत्तिरेव सुटः स्यात्। दृष्टश्चेति। अडभ्यासवानित्यर्थः। स हि स्थानिवद्भावादातिदेशिकः। अनागमकानां सागमका आदेशा इत्यडागमयुक्तोप्यातिदेशिकस्ततश्च कात्पूर्वग्रहणात्ककारादेरेव स्यात् न त्वभ्यासवत इत्यर्थः। सुड्विधौ द्वैतमिति। कात्पूर्वग्रहणमडभ्यासव्यवायनिवृत्त्यर्थं वा स्यात् प्राप्त्यर्थं वेति पक्षद्वयसंभवः। अविशेषेणेति।

स्यात्। विशेषेण वा विधिरिति। द्विर्वचनविषये चापि द्वैतं भवति। स्थानेद्विर्वचनं स्याद् द्विःप्रयोगो वा द्विर्वचनमिति। तद्यदा द्विःप्रयोगो द्विर्वचनमविशेषेण विहितस्य सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थं तदैष दोषः। यदा हि स्थाने द्विर्वचनं तदा यद्यविशेषेण विहितस्य सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थम् अथापि विशेषविधिर्न तदा दोषो भवति। द्विः प्रयोगे चापि द्विर्वचने न दोषः। संपरिभ्यामिति नैषा पञ्चमी। का तर्हि। तृतीया। संपरिभ्यामुपसृष्टस्येति व्यवहितश्चाप्युपसृष्टो भवति। उपदेशिवद्वचनं च *। उपदेशिवद्भावश्च वक्तव्यः। किं प्रयोजनम्। लिटिगुणचङि दीर्घप्रतिषेधार्थम्। लिटि गुणार्थं तावत्। संचस्करतुः। संचस्करुः। चङि दीर्घप्रतिषेधार्थं च। समचिस्करत्। लिटि गुणार्थेन तावन्नार्थः। वक्ष्यत्येतत्संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थमिति। चङि दीर्घप्रतिषेधार्थेनापि नार्थः। पदमितीयं भगवतः कृचिमा संज्ञा।

---

कालविशेषानङ्गीकरणमविशेषः। तस्मिन् करोतौ सुड् भवति यच्च भवन् कात्पूर्वो भवतीत्यडभ्यासविषये निवृत्त्यर्थं कात्पूर्वग्रहणं भवति। विशेषेण वेति। यत्रानेकलक्षणसंनिपाताभावस्तत्रानर्थकं कात्पूर्वग्रहणं कालावधारणार्थं विज्ञायते कात्पूर्वः सुट्कर्तव्यः कार्यान्तराच्च प्राग् भवन् कात्पूर्वः कृतो भवति। तद्यदा द्विः प्रयोग इति। उच्चारणक्रियाभेदाच्छब्दो भिद्यत इत्यभ्यासेन परस्य ककारादेरूपस्य व्यवधानात्संपरिभ्यासुत्तरोनन्तरः करोतिः ककारादिर्न भवतीति सुटो ऽप्रसङ्गः। यदा तु कालावधारणार्थं कात्पूर्वग्रहणं तदा विशेषविधिर्भवतीत्यकृत एव द्विर्वचने सुट् क्रियत इति न दोषः। स्थाने द्विर्वचने स्थानिवद्भावादेक एव करोतिः स चाव्यवहित इति चकारात्पूर्वः सुट् प्राप्तः कात्पूर्वग्रहणेन ककारात्पूर्वः क्रियते इति दोषाभावः। विशेषविधाने तु पूर्वमेवसुट् क्रियते इति पक्षद्वयेपि दोषाभावः। उपसृष्ट इति। संबद्ध इत्यर्थः। द्विः प्रयोगे च द्विर्वचने द्वयोः साधारणोर्थ इति द्वावप्यर्थवन्तावितिति परस्य रूपस्यार्थद्वारक उपसर्गसंबन्धो न विहन्यते। समुदायस्य त्वर्थवत्तामाश्रित्य वक्ष्यते। विसुष्वापेति केन न अनर्थक इति। उपदेशिवद्वचनं चेति। अन्यथा पदद्वयाश्रयत्वात् सुटो बहिरङ्गत्वादसिद्धत्वाल्लिटि गुणो न स्यात्। चङि च दीर्घोलघोरिति दीर्घप्रसङ्गः। संयोगोपधग्रहणमिति। ततो वचनेनासिद्धत्वं बाध्यते। पदमिति। अनेन पदद्वयाश्रयत्वं सुटो निवार्यते। अनुत्पन्नेष्वेव तिङ्क्षु धातूपसर्गसंबन्धे सुटा भाव्यमित्यर्थः। करोतिना चेह तदादिविधिर्नास्ति। विशेषस्या-

युक्तमिह द्रष्टव्यं किमन्तरङ्गं किं बहिरङ्गमिति। धातूपसर्गयोः कार्यं यत्तदन्तरङ्गम्। कुत एतत्। पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति। नैतत्सारम्। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं हि क्रियां निर्वर्तयति। तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्। सत्यमेवमेतत्। यस्त्वसौ धातूपसर्गयोरभिसंबन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति। तस्यास्यते गुरुणेत्यकर्मकः। उपास्यते गुरुरिति केन सकर्मकः स्यात्। एवं च कृत्वा सुट् सर्वतोऽन्तरङ्गतरको भवति। कात्पूर्वग्रहणं चापि शक्यमकर्तुम्। यदि पुनरयं सुट् कात्पूर्वान्तः क्रियते। कात्पूर्वान्त इति चेद्रुविधिप्रतिषेधः*। कात्पूर्वान्त इति चेद् रुः कश्चिद्विधेयः। कश्चित्प्रतिषेध्यः। संस्कर्ता। समो विधेयः सुटः प्रतिषेध्यः। समस्तावन्न विधेयः। वक्ष्यत्येतत् संपुंकानां सत्वं रुत्वविधौ ह्यनिष्टप्रसङ्ग इति। सुटश्चापि न प्रतिषेध्यः। समः सुटीति द्विसकारको निर्देशः। सुटि सकारादाविति। अथ वा परादिः क्रियते। परदा-

---

संनिधानात्। अतः कृकमीत्यत्र समासाधिकारात्समासेनाच्छिन्नमुत्तरपदं कशब्देन विशेष्यतइति भवति तदादिविधिः। अनिगन्तोऽञ्चतौ वप्रत्ययइत्यत्र वप्रत्ययग्रहणेन ज्ञापितं धातुना विशेषणेन तदादिविधिर्भवतीति। युक्तमिति। यद्युक्तं तदेव दर्शनमर्हति तदेवाश्रयणीयमित्यर्थः। पूर्वं धातुरिति। विशिष्टक्रियासाधनेनार्थलाभाय संबध्यतइति पूर्वं विशेषणेन युज्यतइत्यर्थः। इतरो लब्धस्वरूपा क्रियाविशेषणमाकाङ्क्षतीति मत्वाह। नैतदिति। इतरो विशिष्टक्रिया साधनेन साध्यते न तु साधनाल्लब्धस्वरूपान्यतो विशेषं लभतेति मत्वा बुद्धिनिरूपितविशिष्टसाध्यभाविसाधनसंबन्धाश्रयेणाह। सत्यमिति। सर्वत इति। धातुसंज्ञाया अपीत्यर्थः। यस्माद्धातूपसर्गसमुदायेन विशिष्टा क्रिया प्रतिपाद्यते। अडादिव्यवस्थार्थं तु पृथग्धातूपसर्गप्रकल्पनम्। तत्र संक्षब्दे व्यवस्थित एव सुड् भवति पश्चात्समुदायावयवस्य तेनार्थेनार्थवतो धातुसंज्ञा। यदि पुनरिति। सुगिति ककारानुबन्धं कृत्वेत्यर्थः। संस्कर्तेति। समः सुकीत्युच्यमाने संभक्तत्वात्सुकः पौर्वापर्याभावान्मकारस्य रुत्वं न प्राप्नोति। सुकस्तु पदान्तत्वाद्रुत्वप्रसङ्गः। संपुंकानामिति। एतच्च यथान्यासेऽपि वक्तव्यमिति भावः। सुटि सकारादाविति। यथान्यासाश्रयेणैतदुच्यते। सुकि सकारादाविति तु वक्तव्यं तत्र स-

विड्गुणप्रसङ्गः* । यदि परादिः । इड्गुणौ प्राप्नुतः । संस्कृषीष्ट । ऋतश्च संयोगादेरितीट् प्राप्नोति । संस्क्रियते । गुणोर्तिसंयोगाद्यो-रिति गुणः प्राप्नोति । एवं तर्ह्यभक्तः करिष्यते । अभक्ते स्वरः* । य-द्यभक्तः । स्वरो न सिध्यति । संस्करोति । तिङ्ङतिङ इति निघा-तो न प्राप्नोति । ननु चात्र सुडेवातिङ् । न सुटः परस्य निघातेन भवितव्यम् । किं कारणम् । नञिवयुक्तमन्यसदृशाधिकरणे तथाह्य-र्थगतिः । नञ्युक्तमिवयुक्तं चान्यस्मिन् सदृशे कार्यं विज्ञायते । तथा ह्यर्थो गम्यते । तद्यथा । अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं क्षत्रिय-मानयति । नासौ लोष्टमानीय कृती भवति । एवमिहापि अतिङि-ति प्रतिषेधादन्यस्मादतिङस्तिङ्सदृशात्कार्यं विज्ञास्यते । किं चा-न्यदतिङ् तिङ्सदृशम् । पदम् ॥

अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ १४२ ॥ किरतेर्हर्षजीविकाकु-लायकरणेषु* । किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् । अ-पस्किरते वृषो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी ॥

अपरस्पराः क्रियासातत्ये ॥ १४४ ॥ किमिदं सातत्यमिति । सं-ततस्य भावः सातत्यम् । यद्येवं सांतत्ये इति भवितव्यम् । समो हि-

---

काराद्दित्वविशेषणान्यथानुपपत्त्या सुकोऽङ्गत्वाभावः । पौर्वापर्यं च श्रुतिकृतमाश्रयिष्यते । अभक्त इति । टकारोनुबन्धो न करिष्यते । स्वरो न सिध्यतीति । स्वरविधौ व्यञ्जनम-विद्यमानवदिति परिभाषा नास्ति कथं तर्हि हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति । तदेवमभक्तपक्षे स्वदोषप्रसङ्गात्परादिः सुट् क्रियते । इड्गुणयोस्तु प्रतिषेधो वक्तव्य एव । अथ वा एकाच उपदेशेनुदात्तादित्यत्रानुवर्तते । तेनोपदेशे संयोगादेरिड्विधानात्सुटिकृ-ते न भविष्यति । गुणोर्तिसंयोगाद्योरित्यत्रापि नित्यं छन्दसीत्यतो नित्यग्रहणानुवृत्त्या नित्यं यः संयोगादिस्तस्य गुणविधानात्सुटिकृते संयोगादेर्गुणाभावः ॥

अप । किरतेरिति । हर्षादयएवोपाधय उपादातव्या न चतुष्पाच्छकुनयः । तथा चात्मनेपदविधौ हर्षादय एवोपात्ता न चतुष्पाच्छकुनयः । न चातिप्रसङ्गो विशिष्टहर्षा-द्विविषयत्वात् सुडात्मनेपदयोः प्रयुक्तानां शब्दानां साधुत्वान्वाख्यानात् ।

अपस्पराः । किमिदमिति । मकारलोपलक्षणानुपलम्भान्निपातनाश्रयणेन बाधक-

ततयोर्वा लोपः * । समो हिततततयोर्वालोपो वक्तव्यः । संहितम्। सहितम् । संततम् । सततम् । समुतुमुनोः कामे लोपो वक्तव्यः *। सकामः । भक्तुकामः । मनसि च * । मनसि चेति वक्तव्यम् । समनाः । भोक्तुमनाः । अवश्यमः कृत्ये लोपो वक्तव्यः * अवश्यभाव्यम्॥

गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४५ ॥ इदमतिबहु क्रियते । सेवितासेवितप्रमाणइति । सेवितप्रमाणयोरित्येव सिद्धम् । कीन्दानीमसेविते भविष्यति । नञा सेवितप्रतिषेधे विज्ञास्यामः । नैवं शक्यम् । सेवितप्रसङ्ग एव स्यात् । असेविते न स्यात् । असेवितग्रहणे पुनःक्रियमाणे बहुव्रीहिरयं विज्ञास्यते । अविद्यमानसेविते असेवितइति । तस्मादसेवितग्रहणं कर्त्तव्यम् ॥

विष्किरः॥ १५०॥ विष्किरः शकुनौ विकिरो वेति वक्तव्यम्। शकुनौ वेत्युच्यमाने शकुनौ वा स्यादन्यत्रापि नित्यम् । तर्त्तर्हि वक्तव्यम् । न वक्तव्यम् । न वावचनेन शकुनिरभिसंबध्यते । किं तर्हि निपातनमभि-

---

त्वान्निपातनानां संततशब्दस्य बाधप्रसङ्गात् प्रश्नः । इतरो लक्षणान्तरं शब्दान्तरसिध्यर्थमवश्याश्रयितव्यमिति मन्यमान आह । समोहिततततयोर्वेति । अव्यविकन्यायाश्रयेणतु संततस्य भाव इति वाक्यमेव भवति न तु षञित स.तत्यमिति न भवति । संहितायां समासे चैषां सकारलोप इष्यते नान्यत्रेत्याहुः ॥

गोष्पदम् । सें वितप्रसङ्ग इति । यत्र सेवनं संभवति तत्रैव स्यात् । यत्र तु गवामत्यन्तमसंभवस्तत्र न स्यात् । असेवितग्रहणसामर्थ्यात्तु बहुव्रीहिराश्रीयते । तेन यत्र गवामत्यन्तसंभवस्तत्रैवा गोष्पदशब्दः प्रयोक्तव्यो न तु सेवितप्रसङ्गइति केचिदाहुः । अन्ये त्वविशेषेणागोष्पदशब्दप्रयोगमिच्छन्ति । असेविते गोष्पदशब्दस्यासंभवाद गोष्पदशब्दार्थमसेवितग्रहणम् । इह प्रमाणेगोष्पदशब्दो निपात्यते यदा वषादेः परिच्छेदः प्रतिपाद्यते गोष्पदपूरं वृष्टो देवः गोष्पदमात्रं क्षेत्रमिति नात्र गोष्पदं स्वार्थमुपादीयते। यथा चेलक्नोपं वृष्टो देवइत्यसत्यपि चेलक्नोपे प्रयुज्यते तथा गोष्पदपूरंवृष्टोदेवइत्यसत्यपिगोपादपूरणे॥

विष्किरः । विष्किरः शकुनौवेतिसूत्रपाठमाश्रित्य वार्तिकारम्भः । शकुनौ वा स्यादिति । इह सिद्धस्य शब्दस्य विकल्पेनाभिसंबन्धो नास्ति यथा मेध्यः पशुर्विभाषित इति । नात्र पशुत्वं विकल्प्यते किं तह्यालम्भनम् ततश्चाधिकरणविकल्पः प्राप्नोतीति भावः यदि तर्ह्यन्यत्रापि स्यात् किमर्थं शकुनिग्रहणमिति चेत् तत्तुल्यजातीयप्रतिपत्त्यर्थं स्यात् शकुनौ वा भवति तत्तुल्यजातीये चान्यस्मिन्नर्थ इति । नवावचनेनेति । स्फुटो भावो

संबध्यते । विष्किर इत्येतन्निपातनम् । शकुनौ वा निपात्यतइति ॥

आश्चर्यमनित्ये ॥ १४७ ॥ आश्चर्यमद्भुत इति वक्तव्यम् * । इहापि यथा स्यात् । आश्चर्य्यमुच्चता वृक्षस्य । आश्चर्य्यं नीला द्यौः । आश्चर्य्यमन्तरिक्षे अबन्धनानि नक्षत्राणि न पतन्तीति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अनित्य इत्येव सिद्धम् । इह तावदाश्चर्य्यमुच्चता वृक्षस्येत्याश्चर्यग्रहणेन न वृक्षोभिसंबध्यते । किं तर्हि । उच्चता । सा चानित्या । आश्चर्य्यं नीला द्यौरिति नाश्चर्यग्रहणेन द्यौरभिसंबध्यते । किं तर्हि नीलता । सा चानित्या । आश्चर्य्यमन्तरिक्षे ऽबन्धनानि नक्षत्राणि न पतन्तीति नाश्चर्य्यग्रहणेन नक्षत्राण्यभिसंबध्यन्ते । किं तर्हि । पतनक्रिया । सा चानित्या । तत्रानित्यइत्येव सिद्धम् ॥

मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ १५४ ॥ मस्करिग्रहणं शक्यमकर्त्तुम् । कथं मस्करीपरिव्राजकइति । इनिनैतन्मत्वर्थीयेन सिद्धम् । मस्करोस्यास्तीति मस्करी। न वै मस्करो यस्यास्तीति । मस्करी परिव्राजकः । किं तर्हि । माकृतकर्माणि शान्तिर्वः श्रेयसीत्याहातो मस्करीपरिव्राजकः ॥

पारस्करप्रभृतीनि च संज्ञायाम् ॥ १५७ ॥ अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः । पारस्करो देशः । कारस्करो वृक्षः । रथस्यानदी । किष्किन्धा गुहा । किष्कुः । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च वक्तव्यः । तस्करः बृहस्पतिः । प्रायस्य चित्तिचित्तयोः सुडस्कारो वा । प्रायश्चित्तिः । प्रायश्चित्तम् ॥

---

विकल्प्यतइत्यर्थः ॥

आश्चर्यम । आश्चर्यमद्भुतइति । अद्भुतं विस्मयहेतुः । अनित्यइत्येवेति । निपातमात्रानित्यविशेषे विस्मयहेतु र्लभ्यते । साचानित्येति । वृक्षान्तरे तथा विधाया अदर्शनात् । नीलतेति । सा च सदा दिवि न दृश्यते इत्यनित्यता । पतनक्रियेति । नञर्थ युक्तेति भावः । अबन्धनस्यान्यस्यापतनं न दृश्यतइत्यनित्यम् ॥

मस्कर । माकृतेति । अयं मा कृत अयं मा कृतेत्युपक्रम्य शान्तितः काम्यकर्मपरिहाणिर्युष्माकं श्रेयसीत्युपदेष्टा मस्करीत्युच्यते । माङ् पूर्वात् करोतेरिनिः । सुडागमो माङो ह्रस्वश्च निपात्यते ॥

पारस्कर । तत्करोतीति तस्करः । तच्छब्देन चोरकर्म प्रसिद्धं नित्यं परामृश्यते । अस्कारइति । अस्य स्थाने ऽस्कारोस्कारः । शकन्ध्वादित्वात् पररूपम् ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

अनुदात्तं पदमेकवर्जम् ॥ १५८ ॥ किमनुदात्तानि पदानि भवन्तिएकं पदं वर्जयित्वा। नेत्याह। पदे येषामुदात्तप्रसङ्गस्तेनुदात्ता भवन्ति एकमचं वर्जयित्वा। स तर्हि तथा निर्देशः कर्त्तव्यः अनुदात्ताः पदे अनुदात्ताः पदस्येति वा। न कर्त्तव्यः। अनुदात्तं पदमेकवर्जमित्येव सिद्धम्। कथम्। मतुब्लोपोत्र द्रष्टव्यः। तद्यथाः पुष्यका एषां ते पुष्यकाः। कालका एषां ते कालका इति। अथ वा

---

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

अनुदात्तं पदमेकवर्जम्। किमनुदात्तानीति। पदमिति जाताविकवचनं मन्यते। यथाग्रहं संमार्ष्टीति। ग्रहार्थस्य संस्कार्यत्वात् प्राधान्यात् संख्याया अविवक्षा तथा पदमित्यत्रापि पदस्य संस्कार्यत्वात्। अनुदात्तशब्दश्च लौकिकं मन्यते लोका ह्युदात्तं पदमनुदात्तं पदमिति व्यपदिशन्ति। अनुदात्तगुणयोगात्पदमनुदात्तम्। तत्राचामनुदात्तगुणयोगी व्यञ्जनमपि तत्साहचर्यात्तद्धर्मिंव्ह्यत इत्यज्झल्समुदायरूपं पदमनुदात्तगुणयोगादनुदात्तमिति सामानाधिकरण्येन निर्देश उपपद्यते। एकवर्जमित्यत्रैकशब्देन प्रत्यासत्त्यापदमेवोच्यते। तत्रायं सूत्रार्थो वाक्ये पदमेकं वर्जयित्वा पदान्तराण्यनुदात्तानि भवन्तीति पूर्वपक्षः। पदे येषामिति। यथा पशुना यजेतेति व्यक्तिगतमेकत्वं पशोर्गुणत्वाद्यागस्य प्राधान्याद्विवक्ष्यते। तथा पदमित्यत्रापि पदानुवादेनाचामनुदात्तविधानात्पदस्य गुणत्वाद् गुणे च संख्याया विवक्षितत्वात्। कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्यय इति च न्यायादनुदात्तशब्देनाच उच्यन्ते एकवर्जमित्यत्राप्येकशब्देनाजेव गृह्यते। यदि ह्येकशब्देन पदं गृह्येत ततो नियमकारणाभावात्सर्वेषां पदानां पर्यायेण वर्जनात् स्वरनियमो न स्यात्। अचस्तु ग्रहणे यस्याचः स्वरोबलवान् स वर्ज्य इत्यनियमाभावः। स तर्हीति। अज्झल् समुदायवाचिनः पदशब्दस्याज्मात्रवाचिनानुदात्तशब्देन सामानाधिकरण्यमनुपपन्नमिति भावः। मतुब्लोप इति। अवयवावयविनोरभेदोपचारादनुत्पत्तिरेवमतुब्लोपः। न तु गुणवचनेभ्यो लुगिति मतुब्लोपः। अनुदात्तशब्दस्याचिसंज्ञात्वेन विनियोगाद् गुणवचनत्वाभावात्। पुष्यका इति। त्रयो बिन्दव उच्यन्ते तद्योगार्द्बिडालाः पुष्पका इत्याहुः। अथ वेति। भेदसंबन्धाश्रयेण प्रतिपाद्यते। अर्श आदेराकृतिगण-

ऽकारो मत्वर्थीयः । यद्यथा । तुन्दो घाटइति । किमर्थं पुनरिदमुच्यते । आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च । पृथक् स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥ १ ॥ आमस्य । चतुरनडुहोरामुदात्तः । चत्वारः । अनड्वाहः । विकारस्य । अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । अस्थ्ना । दध्ना । प्रकृतेः । गोपायति । धूपायति । प्रत्ययस्य च । कर्तव्यम् । तैत्तिरीयः । एतेषां पदे युगपत्स्वरः प्राप्नोति इष्यते चैक एव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्यनुदात्तं पदमेकवर्जमेवमर्थमिदमुच्यते । नैतदस्ति प्रयोजनम् । यौगपद्यं तवै सिद्धम् । यदयं तवै चान्तश्च युगपदिति सिद्धे यौगपद्ये यौगपद्यं शास्ति तज्ज्ञापयत्याचार्यः । न युगपत्स्वरो भवतीति । पर्यायस्तर्हि प्राप्नोति । पर्यायो रिक्तशासनात् । यदयं रिक्ते विभाषेति सिद्धे पर्याये पर्यायं शास्ति तज् ज्ञापयत्याचार्यो न पर्यायो भवतीति । उदात्ते ज्ञापकं त्वेतत् । एतदुदात्ते ज्ञापकं स्यात् । स्वरितेन समाविशेत् ॥ स्वरितेन तु समावेशः प्राप्नोति । स्वरितेप्युदात्तोस्ति । तस्मान्नार्थो नेन योगे-

---

त्वादकारः । किमर्थमिति । पर्याययौगपद्ययोर्वक्ष्यमाणेन ज्ञापकेन निरासान्नार्थः सूत्रेणेति मत्वा प्रश्नः । चत्वार इति । चतेरुरन्निति चतुः शब्द आद्युदात्तः । आमुदात्तस्तत्र विरोधाभावादुदात्तद्वयप्रसङ्गः । अनड्वाह इति । अनो वहतीति अनसि वहेः क्विप् । डश्चानस इति क्विप् । अनः शब्दो ऽसुन्प्रत्ययान्त आद्युदात्तः । गतिकारकोपपदात्कृदिति उत्तरपदप्रकृतिस्वरेण धातुरन्तोदात्तः । अस्थ्नेति । असिसञ्जिभ्यां क्थिन्नित्याद्युदात्तो ऽस्थिशब्दः । दधिशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः । तवैचान्तश्च युगपदिति । अनेन गतेः पूर्वस्य पदस्य प्रकृतिस्वरो विधीयते । तवैप्रत्ययान्तस्य चान्तोदात्तत्वम् । तत्र युगपद्ग्रहणमन्तरेण विरोधाभावाद्यौगपद्येसिद्धे युगपद्ग्रहणमन्यत्र यौगपद्याभावस्य ज्ञापकम् । पर्यायस्तर्हीति । ज्ञापकेन यौगपद्ये निरस्ते पर्यायप्रसङ्गः । रिक्ते विभाषेति । अनेनाद्युदात्तत्वम् । पक्षे त्वन्तोदात्तत्वं तस्य प्रत्ययस्वरेण । तदेवं पर्याययौगपद्यनिरासे परनित्यत्वादियुक्तस्वरो भविष्यतीति नार्थः सूत्रेणास्वरितेनेति । उदात्तस्वरितयोरेकस्मिन्पदे समावेशप्रसङ्गः । स्वरितेपीति । उदात्ते पर्याययौगपद्यनिरासे ज्ञापकात्कृते स्वरितेप्युदात्तसद्भावादुदात्तस्वरितयोरपि पर्याययौगपद्यनिरासः सिद्ध इत्यर्थः । उदात्तश्रुतिमात्रविषयस्य ज्ञापकस्याश्रयणादेव लभ्यते । यत्तूदात्तश्रुत्या स्वरितस्याग्रहणमिह शास्त्रे तदयुक्तम् । मुख्यस्योदात्तस्याचः संगिनो ग्रहणस्यायुक्तत्वात्तथाचोदात्तस्वरितयोरित्यादौ

न॥ आरभ्यमाणेप्येतस्मिन् अनुदात्ते विप्रतिषेधानुपपत्तिरेकस्मिन्युगपत्संभवात्॥ । अनुदात्ते विप्रतिषेधो नोपपद्यते। पठिष्यतिह्याचार्यो विप्रतिषेधम् । जे दीर्घादबह्वच इति। स विप्रतिषेधो नोपपद्यते। किं कारणम्। एकस्मिन्युगपत्संभवात्। असति खलु संभवे विप्रतिषेधो भवति। अस्ति च संभवो यदुभयं स्यात्। कथं संभवः। यदानुदात्तं पद मेकवर्जमित्युच्यते। तदिह नास्ति। किं कारणम्। नानेनोदात्तत्वं प्रतिषिध्यते। किं तर्हि। अनुदात्तत्वमनेन क्रियते। अस्ति च संभवो यदुभयोस्योदात्तत्वं स्यात् अन्येषां चानुदात्तत्वम्। यदि पुनरयमधिकारो विज्ञायेत। किंकृ तंभवति। अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योग उपतिष्ठते। जेदीर्घान्तस्याद्युदात्तो भवति। उपस्थितमिदं भवति अनुदात्तं पदमेकवर्जमिति। अन्त्यात्पूर्वं बह्वचः। उपस्थितमिदं भवति अनुदात्तं पदमेकवर्जमिति। तत्र पूर्वेणास्तु वर्ज्यमानता परेण वेति परेण

---

भेदेन स्वरितोनिर्दिष्टः आरभ्यमाणेपीति। ज्ञापकादस्पष्टा संदिग्धा वा प्रतिपत्तिर्भवति साक्षाद्विधाने तु स्पष्टा असंदिग्धा चेति यदि योग आरभ्यते तदा आरभ्यमाणे दोषप्रसङ्गः। इदमेवानुदात्तस्य विधायकं लक्षणमिति मत्वा दोषोपन्यासः। एकमचं वर्जयित्वा शिष्टानामचामनेनानुदात्तत्वं क्रियते तत्र येषामचामुदात्तत्वं स्वरितत्वं वा साक्षान्न विधीयते ते ऽस्यावकाश इति येषां शास्त्रेणोदात्तत्वं स्वरितत्वं वा विधीयते तत्रैषां न निवर्तयेत्। यथामलकीज इत्यत्र चतुर्णामुदात्तत्वं शास्त्रेण विधीयते ङीषः प्रत्ययाद्युदात्तत्वम् गतिकारकोपपदात् कृदितिकृत्स्वरः। दीर्घकाशतुषभ्राष्ट्रवटंज इति पूर्वपदाद्युदात्तत्वम्। अन्त्यात्पूर्वं बह्वच इति लकारस्योदात्तत्वमिति विरोधाभावाद्युगपदुदात्तचतुष्टयं स्यात्। शिष्टस्य चानुदात्तत्वमेकवर्जमित्यस्माद्धि वचनाद्यस्य यस्योदात्तस्वरितविधानं सस वर्ज्यत इति विप्रतिषेधानुपपत्तिश्चोद्यते। तथा चान्तस्य तवै युगपदित्यादिषु पूर्वोक्तेन प्रकारेण द्वावपि वर्ज्येते। उदात्तादनुदात्तस्य स्वरित इति स्वरितत्वं न भवति। नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानामिति पक्षे प्रतिषेधात्।एकस्मिन्निति। पद इत्यर्थः। नानेनोदात्तत्वं प्रतिषिध्यत इति। यदि नोदात्तं पदमेकवर्जमिति सूत्रन्यासं कृत्वा उदात्तत्वं प्रतिषिध्येत न स्याद्दोषः। एकमचं वर्जयित्वा सर्वेषामुदात्तत्वनिषेधात्। क्वचित्पाठो नानेनोदात्तत्वं क्रियते इति।तत्रायमर्थो यद्युदात्तं पदमेकमिति सूत्रं कृत्वोदात्तमेकमेव पदं भवतीति नियमायोदात्तत्वं क्रियते तदा न स्याद्दोषः। आचार्यदेशीय आह। यदि पुनरिति। अस्य स्वातन्त्र्याभावादुत्तरैर्योगैरेकवाक्यत्वे सति यस्य स्वरो

भविष्यति परत्वात् । नैवं शक्यम् । आष्टिक एकः स्वरःसंगृहीतः स्यात् । येऽन्ये सप्ताध्याय्यां स्वरास्ते न संगृहीताःस्युः । समानोदरे शयित ओ चोदात्तः । अस्थिदधिसक्थ्यक्ष्णामनङुदात्तइति । सिद्धं त्वेकानानुदात्तत्वात् * । सिद्धमेतत् । कथम् । एकाननुदात्तं पदं भवतीति वक्तव्यम् । किमिदमेकाननुदात्तत्वादिति । न उदात्तः अनुदात्तः । न अनुदात्तः अननुदात्तः । एक अननुदात्तो ऽस्मिंस्तदिदमेकाननुदात्तम् । एकाननुदात्तत्वादिति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तमनुदात्ते विप्रतिषेधानुपपत्तिरेकस्मिन्युगपत्संभवादिति । नैष दोषः।परिभाषेयम् । किं कृतं भवति । कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम् । ञ्नित्यादिर्नित्यं दीर्घान्तस्यादिरुदात्तो भवतीत्युपस्थितमिदं भवति । अनुदात्तं पदमेकवर्जमिति । अन्त्यात्पूर्वं बह्वच इत्युपस्थितमिदं भवति । अनुदात्तं पदमेकवर्जमिति । तत्र पूर्वेणास्तु वर्ज्यमानता परेण वेति । परेण भविष्यति परत्वात्। अथ वा नेदं पारिभाषिकानुदात्तस्य ग्रहणम् । किं तर्ह्यन्वर्थग्रहणम् अविद्यमानोदात्तमिति । एकवर्जमिति चाप्रसिद्धिः संदेहात् * ।एकवर्जमिति चाप्रसि-

---

विधीयते तद्वर्जमन्येषामनुदात्तत्वं क्रियतइति द्वयोरपि योगयोरस्योपस्थाने क एकोनुदात्तत्वं वर्ज्यते एको न वर्ज्यत इत्युपपद्यते विप्रतिषेधः। नैवं शक्यमिति । अधिकार आश्रयितुमशक्यो ऽव्याप्तिप्रसङ्गात् । सिद्धं त्विति। एकाननुदात्तं पदमिति परिभाषा कर्तव्या यस्याचः स्वरो विधीयते स एवाविद्यमानोदात्तो न भवति शिष्टस्त्वविद्यमानोदात्त इति उदात्तनिषेधः संपद्यते । यत्र चैकस्य स्वरो विधीयते तत्रेदमुपतिष्ठते इति उभयोरस्योपस्थाने विप्रतिषेधोपपत्तिः । परिभाषेयमिति । न्यासान्तरे यदि परिभाषात्वमाश्रीयते तदा यथान्यासेपि न दोषः फले विशेषाभावात । स्वरविधिलिङ्गा चेयं परिभाषा एकशब्दः संख्येयवाची अनुदात्तश्रुत्युपादानात्तद्विरोधी स्वरित उदात्तश्च संख्येयो गृह्यते । ततश्चोदात्तस्वरितविधावस्यानुपस्थानाद् द्वयोर्लक्षणयोरस्याउपस्थाने विप्रतिषेधोपपत्तिः । अथ वेति । लक्षणमिदमुदात्तत्वप्रतिषेधार्थमेकवर्जमित्यनेन तु प्रतिषेधपर्युदासः क्रियत इति लक्षणद्वयस्यैकस्मिन्पदे संनिपाते को वर्ज्यतामित्युपपद्यते विप्रतिषेधः । स्वरितेप्युदात्तोऽस्तीति तस्यापि प्रतिषेधोनेन विधीयते। एकवर्जमिति चाप्रसिद्धिरिति । परनित्यान्तरङ्गत्वेन सर्वत्र व्यवस्था नाभिमतेति भावः ।

द्धिः। कुतः। संदेहात्। न ज्ञायते क एको वर्जयितव्य इति। *सिद्धं तु यस्मिन्ननुदात्त उदात्तवचानर्थक्यं तद्वर्जम्*। सिद्धमेतत्। कथम्। यस्मिन्ननुदात्ते उदावचनमनर्थकं स्यात्स एको वर्ज्यितव्यः *प्रकृतिप्रत्यययोः स्वरस्यसावकाशत्वादप्रसिद्धः*। प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धः स्यात्। प्रकृतिस्वरस्यावकाशः। यश्चानुदात्तः प्रत्ययः। पचति। पठति। प्रत्ययस्वरस्यावकाशः। यश्चानुदात्ता प्रकृतिः। समत्वम् सिमत्वम्। इहोभयं प्राप्नोति। कर्तव्यम्। तैत्तिरीयः। विप्रतिषेधात्प्रत्ययस्वरो भविष्यति। नैवं विप्रतिषेधे परमित्युच्यते। न परः प्रत्ययस्वरः। नैष दोषः। इष्टवाची परशब्दः। विप्रतिषेधे परं यदिष्टं तद्भवतीति। *विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्यायादिषुचित्करणम्*। विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्यादयश्चितः कर्त्तव्याः। पचकाम्यति। गोपायति। ऋतीयते। नैष दोषः। प्रकृतिस्वरोऽत्र बाधको भविष्यति। प्रकृतिस्वरे प्रत्ययस्वराभावः। कर्तव्यम्। तैत्तिरीयम्। *सिद्धं तुप्रकृतिस्वरबलीयस्त्वात्प्रत्ययस्वरभावः*। सिद्धमेतत्। कथम्। प्रकृतिस्वराद्बलीयस्त्वात् प्रत्ययस्वरस्य भावः। सिद्धः। कथम्। प्रकृतिस्वरात् प्रत्ययस्वरो बलवान् भवतीति वक्तव्यम्। सति शिष्टस्वरबलीयस्त्वं च वक्तव्यम्। तच्चानेकप्रत्ययसमासार्थम्। तच्चावश्यं सतिशिष्टस्वरबलीयस्त्वं वक्तव्यम्। किं प्रयोजनम्। अनेकप्रत्ययार्थमनेकसमासार्थं च। अनेकप्रत्ययार्थं तावत्। औपगवः। प्रकृतिस्वरमण्स्वरो बाधते। औपगवत्वम्। त्वस्वरोऽण्स्वरं बाधते। औपगवत्व-

---

सिद्धं त्विति। अनवकाशः स्वरो वर्ज्य इत्यर्थः। अनवकाशत्वेन सर्वत्र व्यवस्था नोपपद्यत इति मत्वाह। प्रकृतिप्रत्यययोरिति। विप्रतिषेधादिति। पूर्वविप्रतिषेधादित्यर्थः। काम्यायादय इति। काम्यचश्चित्करणं प्रत्याख्यातं तत्कर्तव्यमेव आयेयङोस्त्वपूर्वं चित्त्वं कर्तव्यमित्युभयोपादानम्। अन्यथा पूर्वविप्रतिषेधात् धातुस्वरं बाधित्वा प्रत्ययाद्युदात्तत्वं स्यात्। प्रकृतिस्वर इति। धातुस्वरः सतिसिष्टत्वाद्भविष्यतीति भावः। सिद्धमिति। प्रकृतिस्वराद्बलीयस्त्वमितिसुप्सुपेति समासः। सतिशिष्टबलीयस्त्वाद्धि कर्तव्यमित्यादौ प्रकृतिस्वरं बाधित्वा प्रत्ययस्वरो भवति। गोपायतीत्यादौ धातुस्वर एव सतिशिष्ट इति प्रत्ययस्वराभावः। कः पुनर्विशेषः काम्यादयश्चितः क्रियेरन् सतिशिष्टबलीयस्त्वं वोच्यतेत्याशङ्क्याह। तत्रेति। औपगवत्वमिति। एकयोगलक्षणोच स्वर इति. विप्रतिषेधेन व्यवस्थाया अ-

कम् । त्वरवरं कस्वरो बाधते । अनेकसमासार्थम् । राजपुरुषः । राजपुरुषपुत्रः राजपुरुषपुत्रपुरुषः । यदि सति शिष्टस्वरबलीयस्त्वमुच्यते । स्यादिस्वरः सार्वधातुकस्वरं बाधेत । सुनुतः धिनुतः । स्यादिस्वराप्रसङ्गश्च तासेः परस्यानुदात्तवचनात्* । स्यादिस्वरस्य चाप्रसङ्गः । कुतः । तासेः परस्यानुदात्तवचनात् । यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति । तज् ज्ञापयत्याचार्य्यःसतिशिष्टोपि विकरणस्वरो लसार्वधातुकस्वरं न बाधतइ ति । शास्त्रपरविप्रतिषेधानियमाद्वाशब्दपरविप्रतिषेधात्सिद्धम् । अथ वा शास्त्रपरविप्रतिषेधेन सर्वमिष्टं संगृहीतं भवतीति कृत्वा शब्दपरविप्रतिषेधो विज्ञास्यते । यदि शब्दपरविप्रतिषेधो भवति काम्यादयः चितः कर्तव्याः ।पुत्रकाम्यति । गोपायति ऋतीयते । शब्दपरविप्रतिषेधोनाम स भवति यत्रोभयोर्युगपत्प्रसङ्गः । न चकाम्यादिषु युगपत्प्रसङ्ग इति । विभक्तिस्वरान्नञ्स्वरो बलीयान् * । विभक्तिस्वरान्नञ्स्वरो बलीयान् भवतीति वक्तव्यम् । विभक्तिस्वरस्यावकाशः । तिस्रस्तिष्ठन्ति । नञ्स्वरस्यावकाशः । अब्राह्मणः । अवृषलः । इहोभयं प्राप्नोति । अतिस्रः । नञ्स्वरो

---

सिद्धत्वात् । स्यादिस्वर इति । विकरणस्वर इत्यर्थः । सार्वधातुके परतः स्यादीनां विधा नात् स्वरःसतिशिष्टः । तासेः परस्येति । परत्वाल्लादेशेषु कृतेषु तासिरिति प्रक्रियाश्रयेणाज्ञापकमुच्यते । लावस्थायां तु तासौ कृते सार्वधातुकोत्पत्तौ न ज्ञापकं भवति लसार्वधातुकस्वरस्य सतिशिष्टतया प्रसङ्गात् तद्बाधनार्थत्वादनुदात्तविधानस्य । शास्त्रपरेति । विप्रतिषेधे परं कार्यमित्यत्र नायं नियमो लक्षणयोर्विप्रतिषेधे परं भवतीति । किं तर्ह्येकलक्षणविहितयोरपि कार्ययोर्विप्रतिषेधे परशब्दविषयत्वात्परं कार्यं भवतीत्येषोप्यर्थ आश्रीयते । यदीति । पुत्रकाम्यतीत्यत्र काम्यप्रत्ययस्याद्युदात्तत्वं प्राप्नोति ।नह्यत्र शब्दपरविप्रतिषेधोपपत्तिःएकत्वात्प्रत्ययस्येति भावः । यत्रोभयोरिति । गोपायतीत्यादौ तु प्रत्ययाद्युदात्तत्वस्य धातुस्वरस्य चयुगपत्प्रसङ्गाभावः । कृते प्रत्ययस्वरे आयाद्यन्तस्य धातुत्वे सति धातुस्वरस्य प्रसङ्गात् । तस्मादत्र सतिशिष्टस्यैव बलीयस्त्वमाश्रयणीयम् । विभक्तिस्वरादिति । । सतिशिष्टत्वाद्विभक्तिस्वरे प्राप्ते वचनम् । तिस्र इति । तिसृभ्यो जस इति विभक्तेरुदात्तत्वम् । अतिस्र इति । तत्पुरुषे तुल्यार्थेति नञः प्रकृतिस्वरो भवति ।

भवति । विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम्*। विभक्तिनिमित्तस्वरस्यावकाशः । चत्वारः । अनड्वाहः । नञ्स्वरस्य स एव । इहोभयं प्राप्नोति । अचत्वारः अनड्वाहः । यच्चोपपदं कृति-नञ्तस्य च स्वरो बलीयानितिवक्तव्यम् * । अकरणिर्हन्त तं वृषल। सहनञ्निर्दिष्टस्य च * । नञ्स्वरो बलीयानिति वक्तव्यम् । अव्यथी

कर्षात्वतोघञोन्त उदात्तः ॥ १५९ ॥ किमर्थं कृषेर्विकृतस्य ग्रहणं क्रियते । न कृषात्वत इत्येवोच्येत । यस्य कृषेर्विकरण एतद्रूपं तस्य यथा स्यात् । इह माभूत् । हलस्यकर्ष इति । अथ किमर्थं मतुपा निर्देशः क्रियते न कर्षात इत्येवोच्येत । कर्षात इतीयत्युच्यमाने यत्रैवाकारादनन्तरो घञस्ति तत्रैव यथा स्यात् । दायः धायः। इह न स्यात् । पाकः । पाठः । न क्व चिदाकारान्तादनन्तरो घञस्ति । इहापि दायो धाय इति युकाव्यवधानम् । एवमपि विहितविशेषणमाकारग्रहणं विज्ञायेत । आकाराद्यो विहित इति । मतुब्ग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

अनुदात्तस्य च यत्रोदात्तलोपः ॥१६१॥ अनुदात्तस्येति किमर्थम्।

---

विभक्तिनिमित्तस्वरादिति।विभक्तिर्निमित्तं यस्य तस्य यः स्वरस्तस्मादित्यर्थः अकरणिरिति । आक्रोशे नञ्यनिरित्यनिः । गतिकारकोपपदात् कृदित्युत्तरपदप्रकृतिस्वरो नञ्स्वरेण बाध्यते । अव्यथीति । जिद्दक्षीतीनिप्रत्ययः । अत्राव्यथेति धातुना सहनिर्दिष्टोनञ् न पृथगिति प्रत्ययस्वरं बाधित्वा नञ्स्वरो भवति । नञः सप्तमीनिर्देशाभावादुपपदत्वभावात् पृथग्वचनमारब्धम् । तत्राव्यथेति निपातनान्नञो धातुना समासे लोपे च कृते प्रत्यय इति सतिशिष्टः प्रत्ययस्वरः प्राप्नोतीति वचनम् ।

कषात्व । यस्य कृषेरिति । विकरणान्तस्यानुकरणं कर्षेतिनिर्दिष्टमित्यर्थः । हलस्य कर्ष इति । अत्राद्युदात्तत्वमेव भवति । अथ किमर्थमिति । आकारात्परो न क्वचित् घञस्तीति सामर्थ्यात्तद्वतो गृहणं सिध्यतीति प्रश्नः । युका व्यवधानमिति । परत्वान्नित्यत्वाच्च युक् । तेन व्यवधानानन्तर्याभावः एवमपीति । घञा धातुराक्षिप्त आत इत्यनेन विशेष्यत इति तदन्तविधौ विज्ञायमान आनन्तर्यासंभवाद्विधानं विशेष्यतइति मतुन्निर्देशः सर्वसंग्रहार्थः क्रियते ॥

अनुदात्तस्य । अनुदात्तस्येति किमर्थमिति । यत्रोदात्तलोप इत्येवानुदात्ते लोपो भ-

प्रासङ्गं वहति प्रासङ्ग्यः । उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणानर्थक्यम् * । उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणमनर्थकम् । न हि कश्चिदुदात्तः उदात्ते स्वरिते वा लुप्यते सर्वोऽनुदात्त एव । ननु चायमुदात्तः स्वरिते लुप्यते । प्रासङ्गं वहति प्रासङ्ग्य इति । एषोऽपि निघाते ऽनुदात्त एव लुप्यते । इदमिह संप्रधार्यं निघातः क्रियतां लोप इति । किमत्र कर्त्तव्यम् । परत्वाल्लोपः । एवं तर्ह्ययमेव निघातस्वरः सर्वस्वराणामपवादः । न चापवादविषयउत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादाअभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयं ततउत्सर्गोऽभिनिविशते तन्न तावदत्र कदाचिदन्तोदात्तस्थाथादिस्वरो भवति । अपवादं निघातं प्रतीक्षते । तत्र निघातः क्रियतां लोप इति । यद्यपि परत्वाल्लोपः । सोऽसावविद्यमानोदात्तः अनुदात्ते लुप्यते । किं पुनरनुदात्तस्यान्त उदात्तो भवति । आद्यो स्वरादिः । कश्चात्र विशेषः । अन्त इति चेत् श्नम्क्सयुष्मदस्मदिदंकिम्लोपेषु स्वरो न सिध्यति । श्नम् । विन्दाते खिन्दाते । क्स । माहिधुक्षाताम् । माहिधुक्षाथाम् । युष्मदस्मद् । युष्मभ्यम् । अस्मभ्यम् । इदम्किम्लोपः । इ-

---

भ्यते नह्यन्यत्रोदात्तो लुप्यतइति प्रश्नः । प्रासङ्ग्य इति । प्रासज्यतइति प्रसङ्गः कर्मणि घञ् । थाथादिस्वरेणान्तोदात्तत्वम् । तद्वहतीति यत्प्रत्ययः । तित् स्वरित इति स्वरितः । सोऽसाविति अलब्धोदात्तगुणएवाकारो लुप्यतइत्यर्थः । तदेवमनुदात्तग्रहणं प्रत्याख्यातम् किं पुनरिति । यद्यन्तग्रहणमनुवर्त्तते ततोऽन्तस्य भवितव्यम् । अथनानुवर्तते तदा क्रमातुल्लङ्घनादादेर्भाव्यमिति पक्षद्वयसंभवः । विन्दातइति । विद विचारणे खिद दैन्यइत्यनयोरूपे । तास्यनुदात्तेदिति लसार्वधातुकस्यानुदात्तत्वम् । श्नमः प्रत्ययस्याद्युदात्तत्वं श्नसोरल्लोपः । तत्राकारस्योदात्तत्वमिष्यते । एकारस्य तु प्राप्नोति । नन्वागमा अनुदात्ता भवन्तीति श्नमोऽनुदात्तत्वं प्राप्नोति । एवं तर्हि तन्मध्यपतितस्तद्ग्रहणेन गृह्यतइति धातुस्वरः परत्वादागमानुदात्तत्वं बाधते । माहि धुक्षातामिति । दुहेर्माङि लुङ् । आत्मनेपदम् । च्लेः क्सः । अदुपदेशादिति लसार्वधातुकानुदात्तत्वम् । क्सः प्रत्ययस्वरेणान्तोदात्तः । क्सस्याचीत्यकारलोपः । माङ्प्रयोगोऽडागमनिवृत्त्यर्थः । अटि हि सति पदमाद्युदात्तं भवति । हिशब्दप्रयोगो हि चेति निघातप्रतिषेधार्थः । अभ्यमिति । भ्यसोऽभ्यमित्यभ्यमादेश । शेषे लोपष्टिलोप इति प्रक्रियाश्रयेण चोद्योद्भावनम् । यदा

थान्। कियान्। अस्तु तर्ह्यादिः। आदिरितिचेद् इन्धीतद्वयमित्यन्तः*। आदिरिति चेद् इन्धीतद्वयमित्यन्तोदात्तत्वं विधेयम्। इन्धीत। द्वयम्। त्रयम्। आदौ सिद्धम्। अस्तु तर्ह्यादिरुदात्तो भवतीति। ननु चोक्तमादिरिति चेदिन्धी तद्वयमित्यन्त इति। विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तप्रतिषेधाल्लिङि सिद्धम्*। विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं लिङि नेति वक्तव्यम्। लिङ्ग्रहणेन नार्थः अविशेषेण विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं नेत्येव। इदमपि सिद्धं भवति। विन्दाते खिन्दाते। अयचि कथम्। यचिचित्करणात्। अयचि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति॥

धातोः॥ १६२॥ किं धातोरन्त उदात्तो भवत्याहोस्विदादिरिति। कश्चात्र विशेषः। धातोरन्त इति चेदनुदात्ते च बग्रहणम्*। धातोरन्त इति चेदनुदात्ते च बग्रहणं कर्तव्यम्। अभ्यस्तानामादिरनुदात्ते चेति वक्तव्यम्। बग्रहणं च कर्तव्यम्। बान्तश्च पिबतिरा-

---

तुम्यमादेशः ग्रेषेलोपश्चान्त्यलोपस्तदादोषाभावः। इयानिति। किमिदंभ्यां वोघ इति वतुप्। स च पित्त्वादनुदात्तः। वकारस्य घः। घस्येयादेशः। इदं किमोरीश् की इति ईश्कीशब्दावादेशौ, यस्येतीकारलोपः। इन्धीतेति। इन्धे लिङ। तस्यानुदात्तेदित्यनुदात्तत्वम्। सीयुट तस्यागमत्वादनुदात्तत्वम्। श्नम्। श्नान्नलोपः। श्नसोरल्लोपत्यकारलोपे कृते ईकारस्योदात्तत्वप्रसङ्गः। द्वयमिति। द्वाववयवावस्य। संख्याया अवयवे तयप्। द्वित्रिभ्यां तयस्यायज्वेत्ययजादेशः। अनुदात्तस्थानिकत्वादनुदात्तः। यस्येति चेतीकारलोपे कृते आदेरुदात्तत्वप्रसङ्गोन्तस्य चेष्यते तदर्थं चित्वमयचः कर्तव्यम्। इह त्वन्तग्रहणानुवृत्तौ न कर्तव्यमिति मत्वोपन्यासः। विदीन्धिखिदिभ्य इति। लसार्वधातुकानुदात्तत्वे प्रतिषिद्धे प्रत्ययस्वरेण तशब्द उदात्तः। सीयुडागमत्वादनुदात्तः। अथ वा न विकरणस्वरो लसार्वधातुकस्वरं बाधते इति वर्ज्यमानस्वरेणश्नमनुदात्त इति न कश्चिद्दोषः। इदमपीति। अन्तग्रहणानुवृत्तावपि श्नमो लोपे दोषो नास्तीति भावः। अयचीति। चित्करणमेव ज्ञापकमन्त इति इह न संबध्यते। तत्संबन्धे चित्वेन नार्थः स्यात्॥

धातोः। किंधातोरिति। यद्यन्तग्रहणमभिसंबध्यते। ततोन्तस्योदात्तत्वेन भाव्यम्। अथ न संबध्यते तदा क्रमानुल्लङ्घनादादेरिति प्रश्नः। अनुदात्त इति। ददाति इति स्थिते धातोरित्यन्तोदात्तत्वे प्राप्ते आद्युदात्तार्थमनुदात्ते चेति वक्तव्यम्। पिबतीति। लघूपधगुणनिवृत्त्यर्थोऽदन्तः पिबिरादेशः। ततश्चान्तोदात्तत्वबाधनार्थमाद्युदात्तत्वं वक्तव्यम्।

द्युदात्तो भवतीति वक्तव्यम् । संश्च नित्कर्तव्यः । किं प्रयोजनम् । चिकीर्षति । जिहीर्षति । नितीत्याद्युदात्तत्वं यथा स्यात् । अस्तु तर्ह्यादिः । आदावूर्णु प्रत्ययधातुष्वन्तोदात्तत्वम् * । आदावूर्णु प्रत्ययधातुष्वन्तोदात्तत्वं न सिध्यति । ऊर्णोति । प्रत्ययधातु । गोपायति । धूपायति । ऋतीयते । अन्तोदात्तवचनात्सिद्धम् । अस्तु तर्ह्यन्तोदात्तो भवतीति । ननु चोक्तं धातोरन्त इति चेदनुदात्ते च बग्रहणं कर्तव्यमिति । यत्तावदुच्यते अनुदात्ते च बग्रहणं कर्तव्यमिति । क्रियते न्यास एव । अभ्यस्तानामादिरनुदात्ते चेति । बग्रहणं कर्तव्यमिति ॥ पिबो निपातनात् । पिबावाद्युदात्तनिपातनं क्रियते । स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । संश्च नित्कर्तव्य इति । अवश्यं सनो विशेषणार्थो नकारः कर्तव्यः । क्व विशेषणार्थेनार्थः । सन्यङोरिति । सयङोरितीयत्युच्यमाने हंसो वत्सः । अत्रापि प्राप्नोति । अर्थवद्ग्रहणेनानर्थकस्येत्येवं न भविष्यति । इहापि तर्हि न प्राप्नोति । जुगुप्सते मीमांसत इति । अर्थवानेषः । न वै कश्चिदर्थ आदिश्यते । यद्यपि कश्चिदर्थो नादिश्यते । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यन्ततः स्वार्थे भविष्यति । कश्चास्य स्वार्थः । प्रकृत्यर्थः । इहापि तर्हि प्राप्नोति । हंसो वत्स इति । उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि । स एषोऽनन्यार्थो नकारः कर्तव्यः । न कर्तव्यः क्रियते न्यास एव । अथ वा धातोरिति वर्तते । धातोः सशब्दन्तस्य द्वे भवत इति ॥

---

संश्चेति । धातुस्वरबाधनाय क्रियते न्यासएवेति । अनुदात्ते चेत्येतदेव ज्ञापकमिहान्तग्रहणाधिकारस्य । अर्थवद्ग्रहणमिति । अव्युत्पन्नत्वादुणादीनामानर्थक्यं मन्यते । जुगुप्सतइति । सनोर्थानिर्देशात्तसमुदायस्यैवार्थवत्त्वं मन्यते । अन्तत इति । यस्यार्थान्तरं न निर्दिश्यते स प्रत्यासन्ने स्वार्थे भवति । इहापीति । व्युत्पत्तिपक्षाश्रयेण चोद्यम् । पक्षान्तराश्रयेण परिहारः । उणादय इति । एतदनन्तरमथ वा धातोरिति वर्त्ततइति ग्रन्थेन भाव्यम् । लेखकप्रमादात्तु स्थानान्तरे न्यस्तः । पाठक्रमादार्थक्रमस्य बलीयस्त्वादत्र प्रदेशे संबध्यते । लिटिधातोरनभ्यासस्येत्यतो धातुग्रहणानुवर्त्तनात्सान्तस्य धातोर्द्विर्वचनविधानात् हंसोवत्स इत्यादौ द्विर्वचनाभावः सिद्ध इति स्वरार्थ एव संनो नकारः कर्त्तव्यः । स च कृत एव ॥

चितः ॥ १६३ ॥ चितः सप्रकृतेर्बह्वकजर्थम् * । चितः सप्रकृतेरिति वक्तव्यम् । किं प्रयोजनम् । बह्वकजर्थम् । बहुजर्थमकजर्थं च बहुजर्थं तावत् । बहुभुक्तम् । बहुकृतम् । अकजर्थम् । सर्वकैः । विश्वकैः । उच्चकैः । नीचकैः । सर्वके । विश्वके । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा । पुष्पका एषां ते पुष्पकाः । कालका एषां ते कालकाः । अथ वाऽकारो मत्वर्थीयः । तद्यथा । तुन्दो घाट इति । पूर्वसूत्रनिर्देशश्च चित इति ॥

तिसृभ्यो जसः ॥ १६६ ॥ जस इति किमर्थम् । तिसृका । तिसृभ्यो जस्ग्रहणानर्थक्यमन्यत्राभावात् * । तिसृभ्यो जस्ग्रहणानर्थक्यम् । किं कारणम् । अन्यत्राभावात् * । नह्यन्यत्र तिसृशब्दादन्तोदात्तत्वं प्रयोजयति । अन्यदतो जसः । किं कारणम् । बहुवचनविषय एव तिसृशब्दः । तेनैकवचनद्विवचने न स्तः । शसि भवितव्यम् । उदात्तयणो हल्पूर्वादिति । अन्याः सर्वा हलादयो विभक्तयः । तत्र षट्त्रिचतुर्भ्यो हलादिः झल्युपोत्तममित्यनेन स्वरेण भवितव्यम् । तत्रान्तरेण जसो ग्रहणं जस एव भविष्यति । ननु चेदानीमेवोदाहृतं तिसृकेति । नित्स्वरोऽत्र बाधको भविष्यति । नाप्राप्तेऽन्यस्वरे तिसृस्वर आरभ्यते । स यथैवानुदात्तौ सुप्पिताविल्येतं स्वरं बाधत एवं नित्स्वरमपि बाधेत । नैष दोषः । येन

---

चितः । अन्त इति वर्त्तते । घुरजादेः प्रत्ययस्य कुण्डिनजादेरप्रत्ययस्य चेह ग्रहणम् । बह्वकजर्थमिति । बहुजकचोरन्तोदात्तत्वे प्राप्ते चितः सप्रकृतेरिति वचनम् । मतुब्लोपइति । चिदवयवत्वात्समुदायश्चिदुच्यते । लक्ष्यानुरोधाच्च गौणोऽप्यर्थः क्वचिदाश्रीयते । अकचश्चित्त्वमस्यैवार्थस्य लिङ्गम् । अन्यथैकाच्त्वादकचश्चित्त्वं न कुर्यात् । अथवेति । मुख्य एव शब्दार्थ एवमाश्रितो भवति । नन्वेवं चितस्येति भाव्यमित्याह । पूर्वसूत्रनिर्देश इति । पूर्वव्याकरणे प्रथमया कार्यी निर्दिश्यते । तेन चित्त्वात्समुदायोऽन्तोदात्तत्वं प्रतिपद्यतइत्यर्थः । कुण्डिनजादयोऽपि व्यपदेशिवद्भावाच्चित्त्वन्त उच्यन्ते ॥

तिसृ । अर्थगतं बहुत्वं शब्दे आरोप्य बहुवचननिर्देशः । अन्तोदात्तस्य त्रिशब्दस्य स्थाने तिसृशब्द आदेशः । स्थानिवद्भावादन्तोदात्तः । ततः परस्य जसोनुदात्तत्वापवाद उदात्तत्वं विधीयते । उदात्तयणो हल्पूर्वादित्यत्रासर्वनामस्थानग्रहणानुवर्त्तनाज्जस उदात्तत्वं न प्राप्नोतीति वचनम् । तिसृकेति । स्वार्थे कन् प्रत्ययः । तिस्रभावे संज्ञायां

नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्तेऽनुदात्तौ सुप्पितावित्ये-तस्मिंस्तिसृस्वर आरभ्यते । नित्स्वरे पुनः प्राप्ते चाप्राप्ते च । अथवा मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवं तिसृस्वरोऽनुदात्तौ सुप्पिताविति स्वरं बाधिष्यते नित्स्वरं न बाधिष्यते। उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति । अतितिसृौ । अतितिसृः ॥

चतुरः शसि ॥ १६७ ॥ शसि स्त्रियां प्रतिषेधः* । शसि स्त्रियां प्रतिषेधो वक्तव्यः । चतस्रः पश्य। शसि चतुरः स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् *। चतुरः शसि स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । शसि स्वरः कस्मान्न भवति । आद्युदात्तनिपातनात् । आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः शसिस्वरस्य बाधको भविष्यति । एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव तर्हि निपातनस्वरः शसिस्वरं बाधते । एवं विभक्तिस्वरमपि बाधेत। चतसृणामिति । विभक्तिस्वरभावश्च हलादिग्रहणात् * । विभक्तिस्वरस्य च भावः सिद्धः । कुतः हलादिग्रहणात् । यदयं षट्त्रिचतुर्भ्यो हलादिरिति हलादिग्रहणं करोति । तज्ज्ञापयत्याचार्यो न निपातनस्वरो विभक्तिस्वरं बाधते । कथं कृत्वा ज्ञापकम् । आद्युदात्तनिपातने हलादिग्रहणानर्थक्यम * । आद्युदात्तनिपातने हि सति हलादिग्रहणमनर्थकं स्यात् । नह्यन्यद्धलादिग्रहणं प्रयोजयति । अन्यदतश्चतसृशब्दात् । षट्संज्ञास्तावन्न प्रयोजयन्ति । किं कारण-

---

क्न्युपसंख्यानमिति तिस्रादेशः । न चाप्राप्त इति । तिसृकेत्यत्रापि टापा सहैकादेशस्यादिवद्भावात्पित् स्वरः प्राप्नोतीति भावः । अथ वेति । पूर्वविज्ञातबाध्यविषये प्रवृत्त्या चरितार्थं विधिं विप्रतिषेधात्परो विधिर्बाधते । उपसमस्तार्थमिति । समासेऽपि तिसृशब्दात्परः सुबुत्पत्तिरित्यतितिसावित्यत्रातेरक्तत्यदद्दत्यत्रातेर्धातुलोपो इति वक्तव्यमिति वचनात्प्राप्तमन्तोदात्तत्वं बाधित्वा विभक्तेरुदात्तत्वं स्यात् । अत्र चोदात्तस्वरितयोर्यण इति स्वरितो भवति । अतितिस्र इत्यत्र लिष्यत एव जस उदात्तत्वमित्युदाहरणत्वेन भाष्यकृतोपन्यस्तम् ॥

चतुरः । स्त्रियामिति।स्थानिवद्भावेन प्राप्नोति ।आद्यु दात्तनिपातनमिति । स्थानिवद्भावादाद्युदात्तत्वे सिद्धे पुनराद्युदात्तनिपातनमस्यस्वरस्य बाधकमित्यर्थः।एवमपीति ।

स्। बहुवचनविषयत्वात्। तन द्विवचनैकवचने न स्तः। जसि शसि चार्तौ लुप्येते। अन्याः सर्वा हलादयो विभक्तयः। त्रिशब्दोपि न प्रयोजयति : किं कारणम्। बहुवचनविषयत्वात्। तेन द्विवचनैकवचनैकाचने न स्तः। असर्वनामस्थानमिति वचनाज्जसि न भविष्यति। शसि भवितव्यमेकादेश उदात्तेनोदात्तइति। अन्याः सर्वा हलादिविभक्तयः। तिसृशब्दोपि न प्रयोजयति। किं कारणम्। बहुवचनविषयत्वात्। तेन द्विवचनैकवचने न स्तः। असर्वनामस्थानमिति वचनाज्जसि न भवितव्यम्। शसि भवितव्यम्। उदात्तयणो हल्पूर्वादिति। अन्याः सर्वा हलादिविभक्तयः। चतुः शब्दस्यापि न प्रयोजयति। किं कारणम्। बहुवचनविषयत्वात्। तेन द्विवचनैकवचने न स्तः। असर्वनामस्थानमिति वचनाज्जसि न भवितव्यम्। शसि भवितव्यं चतुरः शसीति। अन्याः सर्वा हलादिविभक्तयः। तत्र चतसृशब्दादेकस्माच्छस् असर्वनामस्थानमजादिर्विभक्तिरस्ति। यदि चात्र निपातनस्वरः स्यात् हलादिग्रहणमनर्थकं स्यात्। नैव वा पुनरत्र शसिस्वरः प्राप्नोति। किं कारणम्। यणादेशे कृते शसः पूर्व उदात्तभावो नास्तीति कृत्वा। अवशिष्टस्य तर्हि प्राप्नोति। ऋकारेण व्यवहितत्वान्न भविष्यति। यणादेशे कृते नास्ति व्यवधानम्। स्थानिवद्भावाद्व्यवधानमेव। प्रतिषिध्यते तत्र स्थानिवद्भावः स्वरविधिं प्रति न स्थानिवद्भवतीति। नैषोस्ति प्रतिषेधः। उक्तमेतत्। प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति॥

---

उपदेशिवद्भावात्सतिशिष्टेन विभक्तिस्वरेण निपातनस्वरो बाध्यते। बहुवचनविषयत्वादिति। विहितविशेषणादुत्तरपदार्थस्योपसर्जनत्वाद्वा समासेन भाव्यमितिभावः। तत्र चतसृशब्दादिति। यदि निपातनस्वरेण विभक्तिस्वरो बाध्येत तदा हलादिग्रहणमनर्थकं स्यात्। चतस्रः पश्येत्यत्र निपातनस्वरेणैव बाधितत्वाद्विभक्तिस्वरस्याप्रसङ्गात् किं तन्निवृत्त्यर्थेन हलादिग्रहणेन तत् क्रियमाणं विभक्तिस्वरस्य बलीयस्त्वं ज्ञापयतीति चतसृणामित्यत्र विभक्तिस्वरसिद्धिः। नैव वेति। चतस्रः पश्येत्यत्र। ततश्चाद्युदात्तनिपातनमपि न कर्त्तव्यम्। यणादेशे कृत इति। अचिर ऋत इत्यनेन स्वरात् पूर्वं परत्वादिति भावः। अवशिष्टस्येति। तकाराकारस्येत्यर्थः। ऋकारेणेति। पूर्वविधौ रेफस्य स्थानिवद्भावात्।

सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६८ ॥ सावितिं किमिदं प्रथमैकवचनस्य ग्रहणमाहो स्वित्सप्तमीबहुवचनस्य । कुतः संदेहः । समानो निर्देशः । सप्तमीबहुवचनस्य ग्रहणम् । कथं ज्ञायते । यदयं न गोश्वन्निति गोश्वनोः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । यदि प्रथमैकवचनस्य ग्रहणं स्यात् गोश्वनोः प्रतिषेधवचनमनर्थकं स्यात् ननु चार्थसिद्धिरेवैषा । अनुगृहीताः स्मः । यैरस्माभिः प्रथमैकवचनमास्थाय गोश्वनोः प्रतिषेधो न वक्तव्यो भवति । भवेत्प्रतिषेधो न वक्तव्यः । दोषास्तु भवन्ति । तत्र को दोषः । स्विना स्विना । अन्तोदात्तत्वन्न प्राप्नोति। स्विस्विनौ न स्तः । उक्तमेतत् । एकाचरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ ॥ स्ववान् स्ववान्द्रूत्येव भवितव्यम् । इह तर्हि याञ्जां याञ्जिरिति न सिध्यति । तस्मात्सप्तमीबहुवचनस्य ग्रहणम् । सावेकाचस्त्वन्मदोरुदात्तत्वे प्रतिषेधः * । सावेका-

---

साविका । सावितिकिमिति । यदि शास्त्रीयं स्वरूपं गृह्यते तदा प्राथम्यात् प्रथमैकवचनस्य ग्रहणेन भाव्यम् । अथ प्रायोगिकम् । ततः सप्तमीबहुवचनस्य । तद्धि प्रयोगेसुरूपं श्रूयते । प्रथमैकवचनं तु विकृतं रूपं प्रयोगेन सुरूपमिति संशयानः पृच्छति । यदयमिति । गोशुस्वस्विति सप्तमीबहुवचनएकाच्त्वाद्गोभ्यां श्वभ्यामित्यादौ विभक्तेः प्राप्तमुदात्तत्वं प्रतिषिध्यते । प्रथमैकवचनग्रहणे तु प्राप्त्यभावात्प्रतिषेधोनर्थकः प्रथमैकवचने हि यदेकाच्छब्दरूपं गौरित्यौकारान्तं श्वेत्याकारान्तं न च तस्मात्तृतीयादिविभक्तिः परा संभवतीति प्राप्त्यभावात्किं प्रतिषेधेनेति भावः । प्रकृतिग्रहणे हि विकृतेर्ग्रहणं भवति स्थानिवद्भावान्न तु विकृतिग्रहणे प्रकृतेः । अनुगृहीता इति। प्रतिषेधमन्तरेणेष्टस्यार्थस्य सिद्धत्वात् । स्विनेति। प्रथमैकवचने स्वौति विकृतप्रयोगात्तृतीयादौ प्रकृतिरूपस्य श्रवणाद्विकृत्या प्रकृतेरग्रहणादित्यर्थः । सप्तमीबहुवचने स्विष्विति प्रकृतिरूपस्य प्रयोगात् स्वरविधौ नलोपस्यासिद्धत्वात्तस्यैव तृतीयादौ प्रयोगात्सिध्यत्यन्तोदात्तत्वम् । यश्भ्यामिति । सप्तमीबहुवचने यत्स्विति यदेकाच् तत एव तृतीयादिरिति सिध्यत्यन्तोदात्तत्वं प्रथमैकवचने तु यानिति यद्रूपं न तस्मात्तृतीयादिरित्याद्युदात्तत्वं न प्राप्नोतीत्यर्थः । नच तन्मध्यपतितत्वात्तुमो भेदकत्वाभावो विशिष्टरूपशब्दविषयत्वात्तन्मध्यपतितपरिभाषाया-स्तथा च नेदमदसोरकोरिति तथाभूतमेवास्या ज्ञापकम् । अन्ये त्वन्वादेशेऽश्मसुदाहरन्ति । एभ्य एभिरिति । सप्तमीबहुवचनएष्वित्यशादेशे कृते भवत्येकाच् । प्रथमैकवचने त्वयमित्येकाज्न भवतीति स्वराप्रसङ्गः । ऊडिदमित्यन्तोदात्ताधिकारादशादेशस्यानुदात्तत्वादनेन स्वरेण प्रयोजनम् । त्वन्मदोरिति । सौ यद्दृष्टं तस्मादेकाचः परा तृतीया

च उदात्तत्वं त्वन्मदोः प्रतिषेधो वक्तव्यः। त्वया। मया। सिद्धं तु यस्मात्तृतीयादिस्तस्याभावात्सौ *। सिद्धमेतत्। कथम्। यस्मादत्र तृतीयादिर्न तत्सावस्ति। यद्यपि तत् सौ नास्ति प्रकृतिस्तस्य सावस्ति। प्रकृतेस्त्वनेकाच्त्वात्। यद्यपि अस्य प्रकृतिरस्ति सावनेकाच् सा भवति॥

अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे॥ १६९॥ उत्तरपदग्रहणं किमर्थम्। यद्येकाज्ग्रहणमुत्तरपदविशेषणं विज्ञायेत। एकाजुत्तरपदादिति। अथाक्रियमाणउत्तरपदग्रहणे कस्यैकाज्ग्रहणं विशेषणं स्यात्। समासविशेषणम्। अस्ति चेदानीं कश्चिदेकाचसमासः यदर्थमेकाज्ग्रहणं स्यात्। अस्तीत्याह। शुनः ऊर्क् श्वोर्क्। श्वोर्जा श्वोर्जइति॥

ऊडिदं पदाद्यप्पुम्रैद्युभ्यः॥ १७१॥ पदादिषुनिश्पर्यन्तानि प्रयोजयन्ति। अन्यानि पदादीनि उदात्तनिवृत्तिस्वरेण सिद्धानि। ऊठ्युपधाग्रहणम् *। ऊठ्युपधाग्रहणं कर्तव्यम्। अन्त्यप्रतिषेधार्थम्। अन्त्यस्य मा भूदिति। अक्षद्युवे॥

---

दिरुदात्ता भवतीति सूत्रार्थाश्रयेण प्रतिषेध उच्यते। तृतीयादावेकाच्त्वमाश्रीयते न तु सावित्यर्थः। प्रकृतेश्चेति। सौ यदेकाच् तस्मात्परा तृतीयादिरुदात्तेति सूत्रार्थ आश्रीयत इत्यर्थः।

अन्तोदा। उत्तरपदग्रहणमिति। अनित्यसमास इत्याधरसप्तमी विज्ञास्यते। अनित्यसमासस्यान्तोदात्तादेकाचः परा तृतीयादिर्विभक्तिरन्यतरस्यामुदात्ता भवतीति सूत्रार्थं आश्रयिष्यत इति नार्थ उत्तरपदग्रहणेनेति भावः। समासविशेषणमिति। अनित्यसमास इति सतसप्तमी विज्ञायेत। ततश्च समासस्य श्रुतत्वात्तस्यैवैकाज्ग्रहणमन्तोदात्तत्वं च विशेषणं विज्ञायेत न त्वश्रुतस्योत्तरपदस्येत्यर्थः।

ऊडिदम्। पदादिष्विति। पद्दन्नोमासिति सूत्रनिर्दिष्टाः पदादयो गृह्यन्ते एकाज्ग्रहणं चेहानुवर्तत इति निश्‌ः परोऽनेकाच्त्वान्न गृह्यन्ते। यदाल्लोपे कृते एकाचो भवन्ति तदोदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं सिद्धम्। येष्वाद्युदात्तानां स्थाने विधीयन्ते आदेशास्तेऽन्तोदात्ता निपात्यन्त इति भाष्यकारवचनाद्विज्ञायते। ऊठ्युपधाग्रहणमिति। उपधारूपं ऊठ् गृह्यते न त्वन्य इत्यर्थः।

अष्टनो दीर्घात् ॥ १७२ ॥ दीर्घादिति किमर्थम्। अष्टसु प्रक्रमेषु ब्राह्मण आदधीत। दीर्घादिति शक्यमकर्तुम्। कस्मान्न भवति अष्टसु प्रक्रमेषु ब्राह्मण आदधीतेति। षट्स्वरोच बाधको भविष्यति। नाप्राप्ते षट्स्वरे अष्टनः स्वर आरभ्यते। स यथैव दीर्घाद्द् बाधते एवं ह्रस्वादपि बाधेत। न दीर्घात्षट्स्वरः प्राप्नोति। किं कारणम्। आत्वे कृते षट्संज्ञाभावात्। अत उत्तरं पठति। अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम्*। अष्टनो दीर्घग्रहणं क्रियते। ज्ञापकार्थम्। किं ज्ञाप्यम्। एतज्ज्ञापयत्याचार्यः भवत्यात्वे कृते षट्संज्ञेति। किमेतस्य ज्ञापने प्रयोजनम्। आकारान्तस्य नुडर्थम्। आकारान्तस्य नुट् सिद्धो भवति। अष्टानामिति। ननु च नित्यमात्वम्। एतदेव ज्ञापयति विभाषात्वमिति। यदयं दीर्घग्रहणं करोति। इतरथा हि अष्टन इत्येव ब्रूयात् ॥

शतुरनुमो नद्यजादी ॥ १७३ ॥ नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम् *। नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानं कर्तव्यम्। बृहती बृहता। महती महता ॥

उदात्तयणो हल्पूर्वात् ॥ १७४ ॥ हल्पूर्वादिति किमर्थम्। अग्नये। वायवे। उदात्तयणि हल्ग्रहणं नकारान्तार्थम्*। उदात्तयणि हल्ग्रहणं कर्तव्यम्। किं प्रयोजनम्। नकारान्तार्थम्। नकारान्ता-

---

अष्टनो दी। दीर्घादिति। अष्टन आ विभक्ताविति नित्यत्वादात्वविधेर्व्यभिचाराभावाद्विकल्पे चात्वस्य ह्रस्वान्तात्परत्वात् षट्स्वरेण भाव्यमिति प्रश्नः। अष्टस्विति। अस्मादेव दीर्घग्रहणादात्वं विकल्पितमिति भावः। अष्टनो दीर्घग्रहणमिति। न्यायसिद्धस्यैवार्थस्य दीर्घग्रहणं लिङ्गमात्वस्य बहिरङ्गायां षट्संज्ञायां कर्त्तव्यायामसिद्धत्वान्नान्तत्वादेव षट्संज्ञायाः सिद्धत्वात्। एतदेवेति। दीर्घग्रहणेनान्यथानुपपत्त्यायमर्थो ज्ञाप्यते।

शतु। बृहन्महतोरिति। शतृवद्भावादेव सिद्धत्वान्नियमार्थमेतत्। वृषदादिभ्यो मा भूदित्येवमर्थम्। ये तु गौरादिषु बृहन्महदिति पठन्ति तेषामनर्थकोसौ पाठो ऽनुपसर्जनाधिकाराच्चातिबृहत्यतिमहतीति गौरादिङीष् नास्तीति ङीबेवोगिल्लक्षणः कर्तव्यस्तस्यैवानेनोदात्तत्वम्। नन्वत्र तदन्तविध्यभावान्न प्राप्नोति। नैतदस्ति। तदन्ते बृहन्महद्भ्यां परे नद्यजादी भवतः॥

उदात्त। उदात्तयणीति। उदात्तयण इत्यपनीयोदात्तहल इति वक्तव्यमित्यर्थः। वा-

ऽपि यथा स्यात्। वाक्पत्नी। चित्पत्नी। हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वात् *। हल्पूर्वग्रहणं चानर्थकम्। किं कारणम्। स-समुदायादेशत्वात्। समुदायोऽत्रादेशः। स्वरितत्वे चा वचनात् *। स्वरितत्वे च हल्पूर्वग्रहणस्यावचनान् मन्यामहे हल्पूर्वग्रहणमनर्थ-कमिति। यत्तावदुच्यते। उदात्तस्य यणि हल्ग्रहणं नकारान्तार्थ-मिति। क्रियते न्यास एव। द्विनकारको निर्देशः। उदात्तयणो ह-ल्पूर्वान्नोङ्धात्वोरिति। यदप्युच्यते। हल्पूर्वग्रहणानर्थक्यं च समु-दायादेशत्वादिति। अयमस्ति केवल आदेशः। बहुतितवा। बहुति-तव इति॥

ह्रस्वनुड्भ्यां मतुप्॥ १७६॥ मतुबुदात्तत्वे रेग्रहणम् *। मतु-बुदात्तत्वे रेग्रहणं कर्तव्यम्। आरेवानेतु नो विशः। त्रिप्रतिषेधश्च *। त्रेश्च प्रतिषेधो वक्तव्यः। त्रिवतीर्याज्यानुवाक्या भवन्ति॥

नामन्यतरस्याम्॥ १७७॥ इह कस्मान्न भवति किशोरीणां कु-मारीणाम्। ह्रस्वादिति वर्तते। इहापि तर्हि न प्राप्नोति। अग्नी-

---

क्पत्नीति। तत्पुरुषः। न भूवाक् चिद्दिधिष्विति पूर्वपदप्रकृतिस्वरनिषेधात्समासान्तो-दात्तत्वम्। विभाषा सपूर्वस्येति नकारादेशः। हल्पूर्वग्रहणानर्थक्यमिति। यथोरण्रपर इत्यनेनाणनण्समुदायस्य सौधातकिरित्यादौ रपरत्वं न भवत्येवमग्नय इत्यादौ यणयण्-समुदाय उदात्तस्य स्थाने विधीयते न यणेव केवल इति स्वरो न प्रवर्तिष्यतइत्यर्थः। स्व-रितत्वे चेति। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यत्र समुदायादेशस्याश्रयणादेवा-ग्नय इत्यादौ स्वरितत्वनिवृत्त्यर्थं हल्पूर्वग्रहणं न कृतमित्यर्थः। द्विनकारक इति। तत्रै-को नकारो लुप्तपञ्चमीको निर्दिष्टस्तस्योदात्तग्रहणेन विशेषणादुदात्तनकारात्परस्यान-च्या उदात्तत्वं भवति। भाष्यकारेण भक्त्यतिशयः सूत्रकारं प्रति दर्शितो न त्वियं स्प-ष्टागतिः। बहुतितवेति। बहूनि तितउन्यस्या इति बहुव्रीहिः। बहोर्नञ्वदुत्तरपदभू-म्नीत्यतिदेशादन्तोदात्तत्वमत्र विभक्तेरुदात्तत्वनिवृत्तये हल्पूर्वग्रहणं कृतमुदात्तस्व-रितयोर्यण इत्यनेन तु स्वरितत्वं भवति॥

ह्रस्वनु। आरेवानिति। रयिरस्यास्तीति मतुप्। रयेर्मतौ बहुलमिति संप्रसारणं पू-र्वैकादेश आद्गुणस्ततो ह्रस्वाभावान् मतुप्स्वरो न प्राप्नोतीति वचनम्। त्रिवतीरिति। छन्दसीर इति वत्वम्। वा छन्दसीति पूर्वसवर्णदीर्घः॥

नाम। मतौ ह्रस्वान्तादिति। मतुपि ह्रस्वान्तं यद् दृष्टं तस्मात्परो नामन्यतरस्याम्

नां वायूनाम् । किं कारणम् । दीर्घत्वे कृते ह्रस्वाभावात् । इदमिह संप्रधार्यं दीर्घत्वं क्रियतां स्वर इति । किमत्र कर्तव्यम् । परत्वाद्दीर्घत्वम् । एवं तर्हि, नाम्स्वरे मतौ ह्रस्वग्रहणम् *। नाम्स्वरे मतौ ह्रस्वग्रहणं कर्तव्यम् । मतौ ह्रस्वान्तादिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । आहायं ह्रस्वान्तादिति । न च नामि ह्रस्वान्तोस्ति । तत्र भूतपूर्वगतिर्विज्ञास्यते । ह्रस्वान्तं भूतपूर्वमिति । सांप्रतिकाभावे भूतपूर्वगतिर्विज्ञायते । अयं चास्ति सांप्रतिकः । तिसृणामिति । नैतदस्ति । षट्त्रिचतुर्भ्यो हलादिरित्यनेनात्र भवितव्यम् । तस्मिन्नित्ये प्राप्ते इयं विभाषा आरभ्यते । एवं तर्हि योगविभागः करिष्यते । षट्त्रिचतुर्भ्यो नामुदात्तो भवति । ततो हलादिः । हलादिश्च विभक्तिरुदात्ता भवति । षट्त्रिचतुर्भ्य इति । इदं तर्हि त्वं नृणां नृपते जायसे शुचिः । ननु चात्रापि नृचान्यतरस्यामित्येष स्वरो बाधको भविष्यति । न सिध्यति । किं कारणम् । झल्ग्रहणं तत्रानुवर्तते । किं पुनः कारणं झल्ग्रहणं तत्रानुवर्तते । इह माभूत् नृन्ने ॥ उदात्तयणो हल्पूर्वादित्येष स्वरो बाधको भविष्यति । इदं तर्हि नरि । नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं स्यान्नामित्येव ब्रूयात् । तत्र वचनाद्भूतपूर्वगतिर्विज्ञास्यते ह्रस्वान्तं यद्भूतपूर्वमिति । अथ वा नैवं विज्ञायते । नाम्स्वरे मतौ ह्रस्वग्रहणं कर्तव्यमिति । कथं तर्हि, नाम्स्वरे मतौ ह्रस्वादिति वर्तत इति ॥

न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥ १८२ ॥ साविति किमि-

---

दात्तो भवतीत्यर्थः । भूतपूर्वगतिरिति । अकृते दीर्घे ह्रस्वान्तात्परो नामभूदिति दीर्घे कृते स्वरः प्रवर्तते । षट् त्रिचतुर्भ्यो नामिति । विकल्पे प्राप्ते नित्यार्थो योगविभग इति सांप्रतिकाभावाद्भूतपूर्वगतिराश्रीयते । नैकमुदाहरणमिति । ह्रस्वनुड्भ्यां मतुबित्यत्र ह्रस्वग्रहणस्य स्वरितत्वमिहार्थं,प्रतिज्ञातं तच्च सर्वह्रस्वसंग्रहार्थमिति विषयसंकोचो न युक्तोन्यथा लाघवाय नृचान्यतरस्यामित्यनन्तरं नामिति ब्रूयादित्यर्थः । मतौ ह्रस्वादिति वर्तत इति । मतुब्ग्रहणमिहानुवृत्तं सामर्थ्यात्सप्तम्यन्तं संपद्यते । ततो मतौ यद्ध्रस्वान्तं दृष्टं तस्मात्परो नामुदात्तो भवतीत्यर्थः संपद्यते ॥

न गोश्व । इहापीति । एकप्रकरणोपादानादिति भावः । ताभ्यामिति । सप्तमोब-

दं प्रथमैकवचनस्य ग्रहणमाहोस्वित्सप्तमीबहुवचनस्य। कुतः संदेहः। समानो निर्देशः। पुरस्तादेष निर्णयः सप्तमीबहुवचनस्य ग्रहणमिति। इहापि तदेवभवितुमर्हति। यदि सप्तमीबहुवचनस्य ग्रहणम्। ताभ्यां ब्राह्मणाभ्यां याभ्यां ब्राह्मणाभ्यामत्र न प्राप्नोति। विधिरप्यत्र न सिध्यति। किं कारणम्। नह्येतद्भवति यत्सौ भवति रूपम्। इदं तर्हि तेभ्यो ब्राह्मणेभ्यो येभ्यो ब्राह्मणेभ्यः। विधिश्च सिद्धो भवति। निषेधस्तु न प्राप्नोति। अस्ति पुनः सप्तमीबहुवचनस्य ग्रहणे किं चिदिष्टं संगृहीतं भवति आहोस्विद्दोषान्तमेव अस्तौ तयाह। इह याभ्यो ब्राह्मणीभ्यस्ताभ्यो ब्राह्मणीभ्य इति। विधिश्च सिद्धो भवति प्रतिषेधश्च। अस्तु तर्हि प्रथमैकवचनस्य ग्रहणम्। यदि प्रथमैकवचनस्य ग्रहणं, तेनेति स्वरः पुंसि न सिध्यति। न चावश्यं पुंस्येव स्त्रियां पुंसि नपुंसके च। तेन ब्राह्मणेन। तया ब्राह्मण्या। तेन कुण्डेनेति। सप्तमीबहुवचनस्यापि ग्रहण एष दोषः। तस्मादुभाभ्यामपि प्रतिषेधे यत्तदोश्च ग्रहणं कर्तव्यमिति। न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः यत्तदोश्चेति॥

तित्स्वरितम्॥१८५॥तितिप्रत्ययग्रहणम्*। तिति प्रत्ययग्रहणं कर्तव्यम्। इह मा भूत्। ऋत इद्धातोः। किरति। गिरति। तत्तर्हि वक्तव्यम्।

---

इवचने तेष्वित्यवर्णान्तत्वाभावात्प्रतिषेधो न प्राप्नोति। विधिरप्यत्रेति तेष्विति सप्तमीबहुवचने यदेकारान्तं रूपं न तस्मादत्र परा तृतीयादिः। ताभ्य इति। तास्विति सप्तमीबहुवचने ऽवर्णान्तत्वात्। तेनेति। स इति प्रथमैकवचने यदवर्णान्तं न तस्मात्परं तृतीयैकवचनं किं तर्हि रूपान्तरयुक्तात्। तयेति। सेति प्रथमैकवचने यदवर्णान्तं तस्मात्परा तृतीया। नपुंसके च तदिति सावववर्णान्तमेव न भवतीति तेन ब्राह्मणकुलेनेति प्रतिषेधाप्रसङ्गः। सप्तमीबहुवचनस्यापीति। तेष्विति पुंनपुंसकयोस्तावदवर्णान्तं न भवति। तास्विति। स्त्रियां यद्यप्यवर्णान्तं तथापि तयेत्यत्र रूपान्तरयुक्तात्परा तृतीयेति प्रतिषेधो न प्राप्नोति। तस्मादिति। प्रथमैकवचनस्य लिङ्ग्रहणमिति निर्णयस्तेन वृक्षवानित्यादावपि मतुप उदात्तत्वप्रतिषेधो भवति। सप्तमीबहुवचने त्ववर्णान्ता वृक्षादयो न भवन्तीति मतुप उदात्तत्वनिषेधो न स्यात्। तेनेति यदुपन्यस्तं प्राप्तस्तत्र कथं स्वरः। एकारान्तं यदेकाच् सौ तस्मादत्र परो न टा॥ न चादगुणे कृते प्राप्तिर्निषेधादुभयाश्रये। विधावन्तादिवत्त्वस्य चिन्त्यं तस्मादिदं बुधैः॥

तित्स्वरितम्। किरतीति। ता प्रत्यायितः संज्ञाधर्मेण संज्ञी कथ्यते इत्यास्ति ति-

नवक्तव्यम् । नैष तकारः । कस्तर्हि । दकारः । यदि दकारः । आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति । भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति । यदि भाव्यमानेनसवर्णानां ग्रहणं नेत्युच्यते । अदसोऽसेर्दादुदोमः अमूभ्यामित्यत्र न प्राप्नोति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति । भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहणमिति । यदयं दिव उदिति उकारं तपरं करोति । एवमर्थमेव तर्हि प्रत्ययग्रहणं कर्तव्यमत्र मा भूदिति । नैष तकारः । कस्तर्हि दकारः । यदि दकारो न ज्ञापकं भवति । एवं तर्हितपरस्तत्कालस्येति दकारोपि चर्त्वभूतो निर्दिश्यते । यद्येवं चर्त्वस्यासिद्धत्वाद्झशि चेत्युत्वं प्राप्नोति । सौत्रो निर्देशः । अथ वा असंहितया निर्देशः करिष्यते । अणुदित्सवर्णस्य चाप्रत्ययस्तपरस्तत्कालस्येति ॥

तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः॥१८६॥ अदुपदेशादिति कथमिदं विज्ञायते अकारो य उपदेश इति आहोस्विदकारान्तं यदुपदेश इति । किं चातः । यदि विज्ञायते अकारो यउपदेश इति । हतो हथ इत्यत्रापि प्राप्नोति । अथ विज्ञायते अ-

---

त्रापदेश आदेशस्य यथा ऽची यदिति प्रत्ययस्य । इत्संज्ञा प्रत्यायकएव व्यवस्थितस्य प्रवर्तते । लोपविधानद्वारेण च तस्यासत्वं प्रत्याय्ये प्रतिपाद्यते तथा चायमर्थो ऽजन्ताद्यातोर्यः प्रत्ययो भवति स च तित्कार्यं लभत इति अनेकप्रयोजनदर्शनाच्चानुबन्धानां तकारस्तत्कालग्रहणार्थश्च स्यात् स्वरितार्थश्च । प्रत्ययाप्रत्यययोः प्रत्ययेसंप्रत्यय इति परिभाषा तु भाष्यवार्तिककाराभ्यां न क्वचिदाश्रिता । एवमर्थमेवेति । उकारार्थमित्यर्थः । कस्तर्हि दकार इति । इत्संज्ञायां च कर्तव्यायां वावसान इति चर्त्वस्य पूर्वत्रासिद्धमित्यसिद्धत्वात्तित्वाभावात् स्वरितत्वाभावः । दकारोपीति । नन्वेवं सति तपरस्तत्कालस्येत्यत्र पञ्चमीसमासस्याश्रयणाद्दिवदोरवित्यत्रोकारस्य दपरत्वाद्भिन्नकालग्रहणाप्रसङ्गः। एवं तर्हि थकारस्य स्थाने जश्त्वं कृत्वानिर्देशः ऋदोरबिति करिष्यते । जश्त्वस्य पूर्वत्रासिद्धमित्यसिद्धत्वाद्दपरत्वाभावः । अन्यत्रापिभाष्ये यदुक्तं नैषतकारः कस्तर्हि दकार इति तस्यापि थस्य जश्त्वेन यो दकारः स विज्ञेयः ।

तास्यनुदात्ते । कथमिति । यदोपदेशोकारेण विशेष्यते तदा तदन्तविधिसद्भावाददकारान्तउपदेश इत्यर्थः संपद्यते । यदा तूपदेशेनाकारो विशेष्यते निपातनाच्च विशेषणस्य परनिपातस्तदाऽकार उपदेश इत्यर्थ इति पक्षद्वयसंभवाप्रश्नः । हत इति । इ-

कारान्तं यदुपदेश इति। न दोषो भवति। ननु चाकारान्तं यदुपदेश इत्यपि विज्ञायमानेऽत्रापि प्राप्नोति। एतदपि व्यपदेशिवद्भावेनाकारान्तं भवत्युपदेशः। अर्थवता व्यपदेशिवद्भावः। यदि तर्हि अकारान्तं यदुपदेश इति विज्ञायते। मा हि धुक्षातां मा हि धुक्षाथामत्रापि प्राप्नोति। अस्त्वनुदात्तत्वे कृते लोपः। उदात्तनिवृत्तिस्वरेण सिद्धम्। न सिध्यति। इदमिह संप्रधार्यम्। अनुदात्तत्वं क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वाल्लोपः। एवं तर्हि इदमद्य लसार्वधातुकानुदात्तत्वं प्रत्ययस्वरस्यापवादः। न चापवादविषय उत्सर्गोऽभिनिविशते। पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः, प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते। तन्न तावदत्र कदाचित्प्रत्ययस्वरो भवति अपवादविषयं लसार्वधातुकानुदात्तत्वं प्रतीक्षते। तत्रानुदात्तत्वं क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वाल्लोपः। यद्यपि परत्वाल्लोपः सोऽसावविद्यमानोदात्ते अनुदात्ते उदात्तो लुप्यते। तास्यादिभ्योनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्त सिजर्थः *। तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशः कर्तव्यः। सार्वधातुक इति वक्तव्यम्। किं प्रयोजनम्। अभ्यस्तसिजर्थः। अभ्यस्तानामादिरुदात्तो भवति लसार्वधातुके सिजन्तस्यादिरुदात्तो भवति लसार्वधातुके।

---

न्तेरकार उपदेशो भवति ततः परं लसार्वधातुकमिति स्वरप्रसङ्गः। हन्तिस्त्वकारान्त उपदेशे न भवतीत्यकारान्त उपदेश इति विज्ञायमाने न दोषः। तदपीति। अथ हकार एवादन्ततया कस्मान्नाश्रीयते। नैतदस्ति। समुदायपरत्वादुपदेशस्य नास्ति हकारस्योपदेशत्वम्। तथा हि। हन्तिर्नकारान्तो व्यवसित उपदेशे हकारस्तु कल्पितोकारान्तत्वेनेति नासाविह गृह्यते। अर्थवतेति। यः शब्दोर्थवान् सोर्थस्य त्यागोपादानाभ्यां भेदं प्रतिपद्यते। यथेयायेत्यत्रेणुधातुस्ततश्चैकाजिति व्यपदिश्यते। अनर्थकस्य तु भेदनिबन्धनाभावाद्व्यपदेशिवद्भावाभावः। मा हि धुक्षातामिति। लोपे कृते ऽकारादुपदेशात्परं लसार्वधातुकं भवतीति नास्त्यनुदात्तत्वप्रसङ्गः। उपदेशे यदकारान्तमित्यत्र तु पक्षे क्सस्योपदेशे ऽकारान्तत्वात् कृते लोप एकदेशविकृतस्यानन्यत्वात्तदुत्तरं लसार्वधातुकमिति स्वरप्रसङ्गः। तन्न तावदत्रेति। लसार्वधातुकस्य प्रत्ययाद्युदात्तत्वं न प्रवर्तत इत्यर्थः। सोसाविति। परत्वाल्लोपे कृते उदात्तनिवृत्तिस्वरः क्रियतां लसार्वधातुकानुदात्तत्वं चेति विचारे यद्यपि परत्वाल्लसार्वधातुकानुदात्तत्वं भवति तथापि पुनः प्रसङ्गविज्ञा-

लसार्वधातुकमित्युच्यमाने तस्यैवाद्युदात्तत्वं स्यात् । स यदि सप्तमी निर्देशः क्रियते लसार्वधातुके तास्यादीनामनुदात्तत्वं प्राप्नोति । नैष दोषः । तास्यादिभ्य इत्येषा पञ्चमी लसार्वधातुक इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । चित्स्वरात्तास्यादिभ्योनुदात्तत्वं विप्रतिषेधेन *। चित्स्वरात्तास्यादिभ्योनुदात्तत्वं भवति विप्रतिषेधेन । चित्स्वरस्यावकाशः। चलनः । चोपनः । तास्यादिभ्योनुदात्तत्वस्यावकाशः । आस्ते । शेते । इहोभयं प्राप्नोति । आसीनः । शयानः । तास्यादिभ्योनुदात्तत्वं भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । किं कारणम् । द्विकार्ययोगो हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः । आदेरनुदात्तत्वमन्तस्योदात्तत्वम् । नावश्यं द्विकार्ययोग एव विप्रतिषेधः । किं तर्ह्यसंभवोपि । ननु चात्रास्ति संभवो यदुभयं स्यात् । आदेरनुदात्तत्वमन्तस्य चोदात्तत्वमिति । अस्ति च संभवो यदुभयं स्यात् । नत्वोस्ति संभवः । आदेरनुदात्तत्वमन्त्यस्य चोदात्तत्वमिति । कथम् । वक्ष्यत्येतत् स्वरविधौ सङ्घातः कार्यी भवति । मुकश्चोपसंख्यानम् *। मुकश्चोपसंख्यानं कर्त्तव्यम् । पचमानो यजमानः । मुकाव्यवहितत्वाददुपदेशाल्लसार्वधातुकमनुदात्तं भवतीत्यनुदात्तत्वं न प्राप्नोति । ननु चायं मुगदुपदेशभक्तोदुपदेशग्रहणेन ग्रहीष्यते । न सिध्यति । अङ्गस्य मुगुच्यते । विकरणान्तं चाङ्गं सोऽसौ सङ्घातभक्तः । अशक्यो मुक् अदुपदेशग्रहणेन ग्रहीतुम् । अथायमतो भक्तः स्याद् गृह्येत यदुपदेशग्रहणेन । बाढं गृह्येत । अङ्गभक्तस्तर्हि भविष्यति । तत्कथम् । वक्ष्यत्येतस्य परिहारम् ।

---

-त्वादुदात्तनिवृत्तिस्वरो भवत्येव । तस्यैवाद्युदात्तत्वं स्यादिति । असति सप्तमीनिर्देशे अस्यस्तानामादिरुदात्तो लसार्वधातुकं चोदात्तमिति सूत्रार्थः स्यात् । वचनसामर्थ्याच्च यौगपद्यं स्यात् । यथान्तश्च तवै युगपदित्यत्र पर्यायो वा प्रसज्येत । न चैतच्छक्यते वक्तुं लसार्वधातुकमित्यप्युच्यमाने ऽर्थाद्विभक्तिविपरिणामो भविष्यतीति यथाश्रुतसंबन्धसंभवे विभक्तिविपरिणामस्यायोगात् । तास्यादिभ्य इत्येषेति । अकृतार्था हि पञ्चमी सप्तमीनिर्देशस्तत्र कृतार्थः । संघातः कार्यीति । ततश्चानस्य सर्वस्यानुदात्तत्वेन भाव्यं न त्वादेः परस्येति वचनादादेः । तत्रोदात्तानुदात्तयोरेकविषयत्वादस्ति विरोध इति परत्वात् चित्स्वरं बाधित्वा ऽनुदात्तत्वं भवतीत्यर्थः । वक्ष्यतीति । सप्तमेध्यायेङ्गस्य यो ऽका-

इतश्चोपसंख्यानम् *। इतश्चोपसंख्यानं कर्तव्यम्। इड्भिश्च व्यवहितत्वादनुदात्तत्वं न प्राप्नोति। पचतः। पठतः। इतश्चानेकान्तत्वात्। अनेकान्ता अनुबन्धाः। यद्यनेकान्ता अनुबन्धाः। अदिप्रभृतिजुहोत्यादिभ्यः प्रतिषेधो वक्तव्यः। अत्तः। जुहुत इति। अदुपदेशादित्यनुदात्तत्वं प्राप्नोति। तत्रादिप्रभृतिभ्यो जुहोत्यादिभ्योऽप्रतिषेधः स्थान्यादेशाभावात् *। तत्रादिप्रभृतिभ्यो जुहोत्यादिभ्योऽप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः। अनुदात्तत्वं कस्मान्न भवति। स्थान्यादेशाभावात्। नैवात्र स्थानिनं नैवादेशं पश्यामः। अनुदात्तङिद्ग्रहणाद्वा *। अथ वा यदयमनुदात्तङिद्ग्रहणं करोति तज्ज्ञापयत्याचार्यो न लुक्श्लुविकरणेभ्योनुदात्तत्वं भवतीति। नैतदस्ति ज्ञापकम्। श्नमर्थमेतत्स्यात्। विन्दाते खिन्दाते। यत्तर्हि ङिद्ग्रहणं करोति। न हि श्नम्विकरणो ङिदस्ति। ङितोनुदात्तत्वे विकरणेभ्यः ऽप्रतिषेधो वक्तव्यः। चिनुतः। लुनीतः। ङित इत्यनुदात्तत्वं प्राप्नोति। ङितोनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः सर्वस्योपदेशविशेषणत्वात् *। ङितो ऽनुदात्तत्वे विकरणेभ्यो ऽप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः। अनुदात्तत्वं कस्मान्न भवति। सर्वस्योपदेशविशेष-

---

रणस्य सुगिति सूत्रार्थव्यवस्थापनात् तच स्वावयवेन व्यवधानाभावादुपदेशग्रहणान्मुकि सत्यप्यर्द्धमात्रत्वेपि प्रवर्तते निघातः। आतो ङित इति यादेशस्याकारस्यात इति तपरकरणान्न भवति। स्वरविधौ व्यञ्जनमविद्यमानवदिति परिहारो नोक्तः। हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्येवं व्यवस्थापनात्। इतश्चेति। तुदत इत्यादौ सावकाशं वचनं पचत इत्यादौ न प्रवर्तेत। शप उपदेशे हलन्तत्वादकारान्तत्वाभावादिति वचनमिदंसंज्ञकादनुदात्तार्थम्। अनेकान्ता इति। यद्यपि तस्य लोप इत्यत्रैकान्तपक्षः स्थापितस्तथापि पक्षान्तराश्रयेणात्र परिहार उक्तः। एकान्तपक्षेप्युदीचां माङ इति कृतात्वस्य निर्देशात् ज्ञापकात्क्वचिदनुबन्धानामप्रतिबन्धकत्वमनुमीयते। अत्त इति। यथा पचाव इति कृतेपि दीर्घत्वउपदेशग्रहणान्निघातो भवत्येवं श्लुपिपि प्राप्नोतीति भावः। नैवात्रेति। आदेशस्यात्राभावरूपत्वाददुपदेशात्परं लसार्वधातुकं न भवति। न च स्थानिवद्भावोस्ति। अल्विधित्वात्। नापि प्रत्ययलक्षणम्। वर्णाश्रयत्वात्। पचाव इत्यत्र तु दीर्घीभूतोकारो विद्यतएवेति प्रवर्ततएव निघातः। अनुदात्तङिद्ग्रहणाद्वेति। श्रास्थेशेतइत्येवमाद्यर्थात्। विन्दातइति। विन्दीन्धिखिदिभ्यः प्रतिषेधमनाश्रित्येदमुक्तम्।

त्वात् । सर्वमुपदेशग्रहणेन विशेषयिष्यामः । उपदेशेऽनुदात्तेतः । उपदेशे ञितः । उपदेशेऽकारान्तादिति ॥

आदिः सिचोऽन्यतरस्याम् ॥ १८७ ॥ सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानम् * । सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानं कर्तव्यम् । मा हि कार्षम् । अनिट इति किमर्थम् । मा हि लाविषम् ॥

स्वपादिहिंसामच्यनिटि ॥१८८॥ स्वपादीनां वावचनादभ्यस्तस्वरो विप्रतिषेधेन * । स्वपादीनां वावचनादभ्यस्तस्वरो भवति विप्रतिषेधेन । स्वपादीनां वावचनस्यावकाशः । स्वपन्ति । श्वसन्ति । अभ्यस्तस्वरस्यावकाशः । ददति दधति । इहोभयं प्राप्नोति । जाग्रति । अभ्यस्तस्वरो भवति विप्रतिषेधेन ॥

अनुदात्ते च ॥ १९० ॥ अनुदात्ते चेति बहुव्रीहिनिर्देशो लोपयणादेशार्थः * । अनुदात्ते चेति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानोदात्ते ऽनुदात्त इति वक्तव्यम् । किं प्रयोजनम् । लोपयणादेशार्थम् । लोपयणादेशयोः कृतयोराद्युदात्तत्वं यथा स्यात् । मा हि स्म दधात् । दधात्यत्र ॥

सर्वस्य सुपि ॥ १९१ ॥ सर्वस्वरोऽनकच्कस्य * । सर्वस्वरोऽनकच्कस्येति वक्तव्यम् । इह मा भूत् । सर्वके ॥

---

विकरणेभ्य इति । सिद्धं तु पूर्वस्य कार्यातिदेशादित्यनपेक्ष्य चोद्यप्रतिसमाधाने उक्ते ॥

आदिः । अनिटः पित इति । अनिटः सिचः परः पित्पक्षउदात्तो भवति । पक्षे त्वनुदात्तः । तेन मा हि कार्षमिति तिङन्तं पक्षे आद्युदात्तं पक्षे त्वन्तोदात्तं भवति । अन्यथा धातुस्वरेण नित्यमाद्युदात्तं स्यात् । मा हि लाविषमिति पक्षआद्युदात्तं तिङन्तं पक्षे मध्योदात्तं सिचः स्वरेण न त्वन्तोदात्तम् ।

स्वपादि । अगणान्ताः स्वपादयः । स्वपन्तीति । पक्षे आद्युदात्तं पदं पक्षे प्रत्ययस्वरेण मध्योदात्तम् ।

अनुदात्ते । मा हि स्म दधादिति । शास्त्रीयेऽनुदात्ते गृह्यमाणे नित्यत्वादन्तरङ्गत्वादेकारलोपे कृतेऽचोनुदात्तस्य परस्याभावादाद्युदात्तं न स्यात् । बहुव्रीहिविज्ञाने तु भवति । दधात्यत्रेति । अत्र यणादेशस्य बहिरङ्गत्वादसिद्धत्वादपि स्वरः सिध्यति ।

सर्वस्य । सर्वशब्द उणादिष्वन्तोदात्तो निपातितः । सर्वस्य विकारः सार्व इत्यत्रानुदात्तादिलक्षणोऽञ् यथा स्यादिति । तस्य सुप्याद्युदात्तत्वं विधीयते । सर्वस्वरोऽनकच्कस्येति । तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति साकच्कस्याप्याद्युदात्तत्वे प्राप्ते वचनम् ।

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ॥ १९२ ॥
भ्यादिग्रहणं किमर्थम्। इह मा भूत्। ददाति। दधाति। नैतदस्ति प्रयोजनम्। अभ्यस्तस्वरोच बाधको भविष्यति। अन्तत उभयं स्यात्। अनवकाशाः खल्वपि विधयो बाधका भवन्ति। सावकाशश्चाभ्यस्तस्वरः। कोऽवकाशः। मिमीते। अथ प्रत्ययग्रहणं किमर्थम्। प्रत्ययात्पूर्वस्योदात्तत्वं यथा स्यात्। आटः पूर्वस्य मा भूदिति। विभक्त्यानि। न चैवास्ति विशेषः। प्रत्ययाद्वा पूर्वस्योदात्तत्वे सत्याटो वा। अपि च पिङ्क्तः पिद्ग्रहणेन ग्राहिष्यते। इदं तर्हि प्रयोजनं प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्। आट एव मा भूदिति। एतदपि नास्ति प्रयोजनम्। पिङ्क्तः पिद्ग्रहणेन ग्राहिष्यते। एवं तर्हि सिद्धे सति यत्प्रत्ययग्रहणं करोति तज्ज्ञापयत्याचार्यः स्वरविधौ सङ्घातः कार्यी भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। चित्स्वरात्ता-

---

भीह्री। अनुदात्ते चेत्याद्युदात्तत्वे प्राप्ते वचनम्। भ्यादिग्रहणमिति। अनुदात्ते चेत्यनेनाद्युदात्तत्वं विधीयते। अनेन च प्रत्ययात् पूर्वस्योदात्तत्वमिति विरोधाल्लक्ष्यस्य दर्शनवशाद् भ्यादीनामेव प्रत्ययात् पूर्वस्योदात्तत्वं भविष्यतीति प्रश्नः। ददातीति। वचनमन्तरेण विषयविभागो न लभ्यतइति भावः पूर्वोक्तेनाभिप्रायेण चोदक आह। अभ्यस्तस्वर इति। सिद्धान्तवाद्याह। अन्तत इति। विरोधात्समावेशाभावे पर्यायेणोभयं स्यादित्यर्थः। अथ वा सर्वेषामभ्यस्तानां पितो लसार्वधातुकात् पूर्वस्योदात्तत्वं स्यादिति प्रतिपादयितुमाह। अनवकाशा इति। मिमीत इति। ङित्वाल्लसार्वधातुकानुदात्तत्वे कृते अनुदात्ते चेत्याद्युदात्तत्वम्। अथ प्रत्ययग्रहणमिति। भ्यादिभ्यः परः प्रत्यय एव पित् संभवतीति प्रश्नः। आटः पूर्वस्येति। आडुत्तमस्य पिच्चेति पित्त्वमाट एव विधीयतइति पचाम्यत्रेदमुक्तम्। आट् चागमो न प्रत्ययः। प्रत्ययाद्वेति। अत्र हि यः प्रत्ययात् पूर्वः स एवाट इति विशेषाभावः। अपि चेति। पित्त्वं लोडुत्तमस्यैव विधीयते न त्वाट इत्याट्सहितो लोडुत्तमः पिद्भवति। ततश्च पूर्वस्योदात्तत्वं भवत्येवेत्यर्थः। आट एवेति। लोडादेशात्पितः पूर्वं आड् भवति प्रत्ययात्तु पूर्वो न भवत्याट्सहितस्य प्रत्ययत्वात्। पिङ्क्त इति। ततश्च स्वावयवेन पौर्वापर्याभावः। एवं तर्हीति। प्रत्ययग्रहणमन्तरेण माट्कात्पितः पूर्वस्योदात्तत्वे सिद्धे प्रत्ययग्रहणं प्रत्ययात् पूर्वस्याच उदात्तत्वं यथा स्यात् संघातस्य मा भूदित्येवमर्थम्। संघातस्य कार्यित्वे पर्यायेणोदात्तत्वप्रसङ्गः। यदि च स्वरविधौ संघातः कार्यी भवति ततस्तन्निवृत्त्यर्थमिह प्रत्ययग्रहणमर्थवद्भवतीत्यर्थः। चित्स्वरादिति। यतो लसार्वधातुकस्य सर्वस्यानुदात्तत्वं नत्वादेस्ततो विप्रति-

स्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेनेत्युक्तं तदुपपन्नं भवति। अथ पूर्वग्रहणं किमर्थम्। न तस्मिन्निति निर्दिष्टे पूर्वस्येति पूर्वस्य भविष्यति एवं तर्हि सिद्धे सति यत्पूर्वग्रहणं करोति तज्ज्ञापयत्याचार्यः स्वरविधौ सप्तम्यस्तदन्तसप्तम्यो भवन्ति। किमेतस्य ज्ञापने प्रयोजनम्। उपोत्तमं रिति, रिदन्तस्य। चङ्यन्यतरस्यां, चङन्तस्य। यद्येतज्ज्ञाप्यते। चतुरः शसि शसन्तस्यापि प्राप्नोति। शस्ग्रहणसामर्थ्यान्न भविष्यति। इतरथा हितनैवायं ब्रूयाद् झडिदं पदाद्यप्पुम्रैद्युभ्यः चतुर्भ्यश्चेति। अथ पिद्ग्रहणं किमर्थम्। इह माभूत्। जागृति। नैतदस्ति प्रयोजनम्। भवत्येवात्र पूर्वेण। इदं तर्हि प्रयोजनम्। दरिद्रति। आकारेण व्यवहितत्वान्न भविष्यति। लोपे कृते नास्ति व्यवधानम्। स्थानिवद्भावाद्व्यवधानमेव। प्रतिषिध्यते ऽत्र स्थानिवद्भावः। स्वरविधिं प्रति न स्थानिवद्भवतीति॥

अचः कर्तृयकि॥ १९५॥ यकि रपर उपसंख्यानम् *। यकि रपर उपसंख्यानं कर्तव्यम्। स्तीर्यते स्वयमेव। उपदेशवचनात्सिद्धम् *। उपदेश इति वक्तव्यम्। उपदेशवचने जनादीनाम् *। उ-

---

षेध उपपद्यते। एकस्मिन्विषये प्रसङ्गादुदात्तानुदात्तयोरित्यर्थः। पूर्वग्रहणमिति। प्रत्यये पितीति वक्तव्यमिति प्रश्नः। स्वरविधौ सप्तम्य इति। संघातस्य प्रत्ययान्तस्य कार्यनिवृत्त्यर्थं पूर्वग्रहणं स्वरविधौ तदन्तस्य कार्यित्वं ज्ञापयतीत्यर्थः। तदन्तपक्षे चायमर्थः स्यात्। भ्यादिविहितपिदन्तस्योदात्तत्वं भवतीति। उपोत्तमं रितीति। अत्र हि। रिति प्रत्यये परत उपोत्तमोदात्तप्रसङ्गो रित्प्रत्ययान्तस्य चोपोत्तमोदात्तत्वमिष्यते। चतुर्भ्यश्चेति। असर्वनामस्थानग्रहणानुवृत्त्या षड्त्रिचतुर्भ्यो हलादिरिति हलादेश्चोदात्तत्वविधानाच्छसेव भविष्यतीति भावः। भवत्येवात्र पूर्वेणेति। अभ्यस्तानामादिरित्यनेन। ननु च स्वरभेदो भवति। अनेन पूर्वस्य ऋकारस्योदात्तत्वं भवति। ततश्चोदात्तस्वरितयोर्यण इति स्वरितप्रसङ्गोऽभ्यस्तानामादिरित्यनेन तूदात्तत्वे पदमाद्युदात्तं भवति। एवं तर्हि नित्यत्वात् पूर्वं यणादेशे कृते नास्ति स्वरभेदः। ननु स्वरभिन्नस्य प्राप्नुवन् यणादेशोऽप्यनित्यः। एवं तर्हि स्पष्टोदाहरणान्तसद्भावान्न सुष्ठु भाष्यकारेणैतन्निरूपितम्। दरिद्रतीति। अनेकारस्योदात्तत्वं मा भूदाद्युदात्तत्वमेव यथा स्यादित्येवमर्थं पिद्ग्रहणमित्यर्थः। लोपे कृत इति। श्नाभ्यस्तयोरात इति परत्वाल्लोपः॥

अचः कर्तृ। जायते स्वयमेवेति। अन्तर्भावितण्यर्थत्वाज्जनिः कर्मकर्तृयग्विषयः।

पदेशवचने जनादीनां स्वरो न सिध्यति । जायते स्वयमेव । जायते स्वयमेव । योगविभागात्सिद्धम् । योगविभागः करिष्यते । अजन्तानां कर्तृयकि । वा आदिरुदात्तो भवति । चीयते स्वयमेव चीयते स्वयमेव जायते स्वयमेव जायते स्वयमेव । तत उपदेशे । उपदेशे ऽजन्तानां कर्तृयकि वा आदिरुदात्तो भवति । स्तीर्यते स्वयमेव स्तीर्यते स्वयमेव । तत्तर्ह्युपदेशग्रहणं कर्तव्यम् । न ह्यन्तरेणोपदेशग्रहणं योगाङ्गं जायते । न कर्तव्यं प्रकृतमनुवर्तते । क्व प्रकृतम् । तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोरिति । ननु चोक्तमपदेशे जनादीनामिति । नैष दोषः । नैवं विज्ञायते । उपदेशवचने जनादीनां स्वरो न सिध्यतीति । कथं तर्हि । जनादीनामप्यात्वे उपदेशवचनं कर्तव्यमिति । तत्तर्हि तत्रोपदेशग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङितीति ॥

थलि च सेटीडन्तो वा ॥ १९६ ॥ सेड्ग्रहणं किमर्थम् । न थलीडन्तो वेत्युच्येत । इडन्तो वेत्युच्यमाने इहापि प्रसज्येत । पपक्थ । नैतदस्ति प्रयोजनम् । अच इति वर्तते । इदं तर्हि प्रयोजनम् । ययाथेति ॥

संज्ञायामुपमानम् ॥ २०४ ॥ किमर्थमिदमुच्यते । न ञ्नित्या-

---

एवं द्वादशधा जज्ञइत्यादौ चान्तर्भावितण्यर्थस्य सकर्मकस्य दृश्यते प्रयोगः । न कर्तव्यमिति । योगविभागमन्तरेणोपदेशग्रहणानुवृत्त्यैव सिद्धत्वात् । तत्र ये विभाषेति यकारादिप्रत्ययविषयभाव उपदेशेजनादीनामात्वविधानादिह च तास्यादिसूत्रादुपदेशग्रहणानुवर्तनादुपदेशे ऽजन्तस्य कर्तृयक्याद्युदात्तस्य विधानात् सर्वत्रेष्टविषये स्वरः सिद्धः ॥

थलि । सेड्ग्रहणमिति । इड्ग्रहणादेव थल् सेड् गृहीष्यतइति प्रश्नः । पपक्थेति । थलीत्यनेन थलन्तस्य ग्रहणादत्राप्यन्तोदात्तत्वम् । पक्षे चाद्युदात्तत्वं स्याल्लित्स्वरेण मध्योदात्तत्वं चेष्यते । इड्ग्रहणं तु यदेडागमः क्रियते पेचिथेति तदोदात्तत्वार्थं स्यात् । अन्यथा च लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तत्वविधाने पपिथेत्यादौ चतुर्थाभावे ऽपि पर्यायेणोदात्तत्रयं भवत्येवमिडभावे ऽपि पपक्थेत्यत्र स्यात् ।

संज्ञायाम् । प्रत्ययलक्षणेनेति । चञ्चेव चञ्चा वध्रिकेव वध्रिकेत्यादौ संज्ञायामिति

दिर्नित्यमेव सिद्धम् । ञ्नितीत्युच्यते न चात्र ञ्नितं पश्यामः । प्रत्ययलक्षणेन । नलुमतातस्मिन्निति प्रत्ययलक्षणप्रतिषेधः । अङ्गाधिकारोक्तस्य स प्रतिषेधः । न लुमताङ्गस्येति अत उत्तरं पठति । उपमानस्याद्युदात्तवचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य * । उपमानस्याद्युदात्तवचनं ज्ञापकार्थं क्रियते । किं ज्ञाप्यम् । एतज्ज्ञापयत्याचार्यः । अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणे प्रत्ययलक्षणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । गर्गाः । वत्साः । विदाः । उर्वाः । उष्ट्रग्रीवा । वामरज्जुः । ञ्नितित्याद्युदात्तत्वं न भवति । इह वा चय इति तद्धितस्य कित इत्यन्तोदात्तत्वं न भवति । यद्यनुबन्धलक्षण इत्युच्यते पथिप्रियो मथिप्रिय इति पथिमथोः सर्वनामस्थान इत्याद्युदात्तत्वं प्राप्नोति । एवं तर्ह्याचार्यो ज्ञापयति स्वरे प्रत्ययलक्षणं न भवतीति । एवमपि सर्पिरागच्छ सप्तागच्छतेति । आमन्त्रितस्येत्याद्युदात्तत्वं न प्राप्नोति । इह च माहि दातां माहिधातामादिः सिचोन्यतरस्यामित्येष स्वरो न प्राप्नोति । एवं तर्हि ज्ञापयत्याचायः सप्तमीनिर्दिष्टेस्वरे प्रत्ययलक्षणं न भवतीति । एवमपि सर्वस्तोमः सर्वपृष्ठः । सर्वस्य सुपीत्याद्युदात्तत्वं न प्राप्नोति । एवं तर्ह्यनुबन्धलक्षण इत्येव । कथं पथिप्रियो मथिप्रियः । वक्तव्यमेवैतत् । पथिमथोः सर्वनामस्थाने लुकि लुमतालुप्ते प्रत्ययलक्षणं भवतीति ॥

---

विहितस्य कनो लुम्मनुष्य इति लुब्विधानात् अङ्गाधिकार इति । सौवर्यः सप्तस्य इति वचनान्नलुमता तस्मिन्निति न्यासे ऽपि नास्ति प्रत्ययलक्षण प्रतिषेध इत्यर्थः । अनुबन्धलक्षण इति । अनुबन्धमात्राश्रयस्वरविषयं ज्ञापकमित्यर्थः । उष्ट्रग्रीवेति । इवे प्रतिकृताविति विहितस्य कनो जीविकार्थे चापण्ये इति लुप् । पथिप्रिय इति । बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वर आद्युदात्तत्वंच प्राप्नोत्यन्तोदात्तत्वं चेष्यते । सर्वस्तोम इति । बहुव्रीहौ प्रकृत्याद्युदात्तत्वं सर्वशब्दस्येष्यते । अनुबन्धलक्षण इत्येवेति । एवं च कित् स्वरोपि प्रत्ययलक्षणेन भवति । सिच् सर्वामन्त्रितस्वरास्तु भवन्ति । अत्रय इत्यत्रेतश्चानिञ इति ढको ऽत्रिभृगुकुत्सेति लुक् । सर्पिरागच्छेत्यत्र स्वमोर्नपुंसकादिति सोर्लुक् । मा हि दातामित्यत्र गातिस्थाघ्विति सिचो लुक् ॥

निष्ठा च द्व्यजनात् ॥ २०५ ॥ निष्ठायां यञि दीर्घत्वे प्रतिषेधः*। निष्ठायां यञि दीर्घत्वे प्रतिषेधो वक्तव्यः। दत्ताभ्यां गुप्ताभ्याम्। न वा बहिरङ्गलक्षणत्वात्। न वा वक्तव्यः। किं कारणम्। बहिरङ्गलक्षणत्वात्*। बहिरङ्गोऽत्र दीर्घः। अन्तरङ्गः स्वरः। असिद्धं बहिरङ्गमन्तरङ्गे। अन्तरेण प्रतिषेधमन्तरेण चैतां परिभाषां सिद्धम्। कथम्। नैवं विज्ञायते। न चेदकारान्ता निष्ठेति। कथं तर्हि न चेदाकारात्परा निष्ठेति। यद्येवं निर्देशस्यैवं नोपपद्यते। नह्येषा आकारात्परा पञ्चमी युक्ता। इह च प्राप्नोति। आप्तो राज्ञ इति। एव तर्हि न चेदवर्णात्परा निष्ठेति। भवेन्निर्देश उपपन्न इह तु प्राप्नोति। आप्तो राज्ञ इति। इह च न प्राप्नोति यतः रत इति। एवं तर्हि विहितविशेषणमकारान्तग्रहणम्। न चेदकारान्ताद्विहिता निष्ठेति। एवमपि दत्तः। अत्र न प्राप्नोति। इह च प्राप्नोति। आप्तो राज्ञ इति। एवं तर्हि कार्यिविशेषणमाकारग्रहणम्। न चेदाकारः कार्यी भवतीति। एवमपि अद्याष्टः कदाष्टः। अत्र न प्राप्नोति। तस्मात्सुष्ठूच्यते। निष्ठायां यञि दीर्घत्वे प्रतिषेधो न वा बहिरङ्गलक्षणत्वादिति ॥

आशितः कर्ता ॥ २०७ ॥ किं निपात्यते। आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वं च*। आशित इति क्तः कर्तरि निपात्यते। आशितवान्। आशितः। उपधादीर्घमाद्युदात्तत्वं च नि-

---

निष्ठा च। निष्ठायां यञीति। अनाकारान्ता या निष्ठेत्याश्रित्य वार्तिकारम्भः। निर्देश इति। अनात इति भाष्यमित्यर्थः। इह च प्राप्नोतीति। विधिः। प्रतिषेधाभावात्। न चेदाकार इति। तेनाप्तो राज्ञ इत्यादावाकारस्योदात्तत्वाभावः। अद्याष्ट इति एकादेशे कृते आकारः कार्यीत्याद्युदात्तत्वं न प्राप्नोति। तस्मात्कार्यिविशेषणपक्षेऽप्ययः वश्याश्रयितव्या बहिरङ्गपरिभाषेत्याह। तस्मादिति। बहिरङ्गलक्षणत्वादिति सुष्ठूच्यते। अवश्याश्रयितव्यादस्याः परिभाषायास्ततश्चाद्याष्ट इत्यत्रैकादेशस्य बहिरङ्गत्वादसिद्धत्वादनादिति प्रतिषेधाभावः।

आशितः। सकर्मकत्वादशेः कर्तर्यप्राप्तः क्तो निपात्यते। नचाविवक्षितकर्मत्वादकर्मकव्यपदेशात्कर्तरि क्तो लभ्यते। पचिददात्यादीनामपि कर्मविशेषाविवक्षायां कर्तरि

पात्यते। आद्युदात्तत्वमनिपात्यमधिकारात् सिद्धम्। उपधादीर्घत्वमनिपात्यम्। आङ्पूर्वस्य प्रयोगः। यद्येवमवग्रहः प्राप्नोति। न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्। यथा लक्षणं पदं कर्तव्यम्॥

रिक्ते विभाषा॥ २०८॥ विभाषावेणुन्धानयोः॥ २१५॥ किमियं प्राप्ते विभाषा आहो स्विदप्राप्ते। कथं च प्राप्ते कथं चाऽप्राप्ते। यदि संज्ञायामुपमानं निष्ठा च द्व्याजनादिति च नित्ये प्राप्ते आरम्भः ततः प्राप्ते अन्यथा त्वप्राप्ते। वेणुरिक्तयोरप्राप्ते विभाषाप्राप्ते नित्यो विधिः। वेणुरिव वेणुः। रिक्तो नामकश्चित्॥

उपोत्तमं रिति॥ २१७॥ उपोत्तमग्रहणं किमर्थम्। न रिति पूर्वमित्येवोच्येत। तत्रायमर्थः। मतोः पूर्वमात्संज्ञायां स्त्रियामित्यत्र पूर्वग्रहणं न कर्तव्यं भवति। एवं तर्हि उपोत्तमग्रहणमुत्तरार्थम्। चङ्यन्यतरस्याम्। उपोत्तममित्येव। इह मा भूत्। माहि स्म दधत्॥

अन्तोवत्याः॥ २२०॥ ईवत्याः॥ २२१॥ किमर्थमिदमुभयमुच्यते न वत्या इत्येवोच्येत। वत्या इतीयत्युच्यमाने राजवती अत्रापि प्रसज्येत। अथावत्या इत्युच्यमाणे कस्मादेवात्र न भवति। असिद्धो नलोपस्तस्यासिद्धत्वान्नैषोऽवतीशब्दः। कस्तर्हि। अन्वतीशब्दः। यथैव तर्हि नलोपस्यासिद्धत्वान्नावतीशब्दः। एवं वत्वस्यासिद्धत्वान्न वतीशब्दः। आश्रयात्सिद्धत्वं स्यात्॥

चौ॥ २२२॥ चोरतद्धिते*। चुस्वरः अतद्धित इति वक्तव्यम्।

---

त्प्रसङ्गात्। तस्मादस्य न कदा चिदेकस्मिन्नेवार्थे द्रव्यकर्मणा संबन्धः सोऽकर्मको मान्यः। आङ्पूर्वस्येति। थाथादिस्वरापवाद आद्युदात्तत्वं विधीयते। न लक्षणेनेति। संहितैवापौरुषेयाणीति भावः॥

रिक्ते। वेणुरिक्तयोरिति। संज्ञायां पूर्वविप्रतिषेधान्नित्यो विधिः प्रवर्तत इति भावः।

उपोत्तमम्। न रितीति। रइदस्येत्यन्तोवर्णो रिच्छब्देनोच्यते। तस्मिन् पूर्वमुदात्तमिति विज्ञायमाने नार्थ उपोत्तमग्रहणेनेत्यर्थः। माहि स्म दधदिति। धेटो विभाषा धेट्श्व्योरिति चङ् श्वङादेशः। तत्र त्रिप्रभृतीनामभावादुपोत्तमं चङन्तस्य नास्तीति चङ एवोदात्तत्वं भवति। पूर्वग्रहणे क्रियमाणे चङः पूर्वस्य धातोः स्यात्॥

चौ। चोरतद्धित इति। चौ यः स्वरो विधीयते स चोः संबन्धी भवतीति षष्ठीनि-

इह मा भूत्। दाधीचो माधूच इति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। प्रत्ययस्वरोऽत्र बाधको भविष्यति। स्थानान्तरप्राप्तश्चुस्वरः प्रत्ययस्वरस्यापवादः। अनुदात्तौ सुप्पितावित्ति। अनुदात्तौ सुप्पितावेतस्योदात्तनिवृत्तिस्वरः। उदात्तनिवृत्तिस्वरस्य चुस्वरः। स यथैवोदात्तनिवृत्तिस्वरं बाधते। एवं प्रत्ययस्वरमपि बाधेत। नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति। किं कारणम्। न गोश्वन् सावव-र्णेति प्रतिषेधात्। नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः। कस्य तर्हि। तृतीयादिस्वरस्य। यत्र तर्हि तृतीयादिस्वरो नास्ति। दधीचः पश्येति। एवं तर्हि न तृतीयादिलक्षणस्य प्रतिषेधं शिष्मः। किं तर्हि येन केन चिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधम्। यदि विभक्तिस्वरस्य प्रतिषेधः। वृक्षवान् प्लक्षवान्। अत्र न प्राप्नोति। मतुब्ग्रहणमपि प्रकृतमनुवर्तते। क्व प्रकृतम्। ह्रस्वनुड्भ्यां मतुबिति। यदि तदनुवर्तते। वेतस्वानत्रापि प्राप्नोति। मतुब्ग्रहणमनुवर्तते। ड्मतुबेषः। यदि तर्हि मतुपो ग्रहणे ड्मतुपो ग्रहणं न भवति। वेतस्वानिति वत्वं न प्राप्नोति। सामान्यग्रहणं वत्वे। इह पुनर्विशि-

---

ष्टः कृतः। प्रत्ययस्वरोऽत्रेति। यत्रानुदात्तप्रत्ययः स चुस्वरस्यावकाशः। दधीचो दधीचेति भावः। स्थानान्तरप्राप्त इति। अपवादस्थानं प्राप्तो बलवानित्यर्थः। तदेवापवादत्वं दर्शयति। प्रत्ययस्वरस्येति। प्रत्ययस्वरस्यैवोदात्तनिवृत्तिस्वरेण प्रत्यापत्तिः क्रियत इति प्रत्ययस्वरापवादश्चुस्वरइत्यर्थः। कृत्स्वरेण चाञ्चतेरकार उदात्तः। न गोश्वन्निति। अञ्चतिर्धातुरेव तत्रोपात्तो न तु नाञ्चेः पूजायामिति प्रतिषिद्धनलोपः क्विन्नन्तः। तृतीयादिस्वरस्येति। न गोश्वन्नित्यत्र सावेकाच इत्यतस्तृतीयादिग्रहणमनुवर्तते। यत्र तर्हीति। तत्रोदात्तनिवृत्तिस्वरस्य बाधक एव च, स्वर इत्यर्थः। एवं तर्हीति। न गोश्वन्नित्यत्र विभक्तिग्रहणमेवानुवर्तते न तृतीयादिग्रहणमित्यर्थः। ततश्चुस्वरः प्रत्ययस्वरस्य न बाधक इति उपसंख्यानं नारब्धव्यम्। प्रत्ययस्वरेण सिद्धत्वात्। वृक्षवानिति। मतुपो विभक्तित्वाभावात्प्रतिषेधाभावे ह्रस्वनुड्भ्यां मतुप उदात्तत्वं प्राप्नोति। वेतस्वानिति। कुमुदनडवेतसेभ्यो ड्मतुप्प्रत्ययः। तत्र लक्षणविशेषानपेक्षे उदात्तत्वमात्रप्रतिषेधे विज्ञायमाने उदात्तनिवृत्तिस्वरस्यात्र निषेधः प्राप्नोतीत्यर्थः। ड्मतुप् चैष इति। तदनुबन्धकग्रहणे नातदनुबन्धकस्येति मतुब्ग्रहणेन ड्मतुपो ग्रहणं न भवति। वत्व-

ष्टस्य ग्रहणम्। यत्र तर्हि विभक्तिर्नास्ति दधीची इति। यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत। नैवं शक्यम्। इहापि प्रसज्येत। कुमारीति। सतिशिष्टः खल्वपि चुस्वरः। कथम्। चावित्युच्यते। यत्रास्यैतद्रूपम्। क्व चास्यैतद्रूपम्। यजादावसर्वनामस्थाने अभिनिर्वृत्ते नकारलोपे अकारलोपे च। तस्मात्सुष्ठूच्यते चोरतद्धित इति॥

समासस्य॥ २२३॥ समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानम् *। समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानं कर्तव्यम्। राजदृषत्। ब्राह्मणसमित्। हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्। अथ वा हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद् भवतीत्येषा परिभाषा कर्तव्या। किमर्थमिदमुभयमुच्यते। न हल्स्वरप्राप्तावविद्यमानवदित्येवोच्येत। स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीति वा। द्विर्बद्धं सुबद्धं भवतीति। यदि हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीत्युच्यते। उदधि। उदात्तादनुदात्तस्य स्वरित इति स्वरितत्वं न प्राप्नोति। उदात्ताच्च स्वरितविधौ व्यञ्जनमविद्यमानवद्भवतीत्येषा परिभाषा कर्तव्या। कान्येतस्याः परिभाषायाः प्रयोजनानि। प्रयोजनं लिदाद्युदात्तान्तोदात्तविधयः। लिति प्रत्ययात्पूर्वमुदात्तं भवतीति। इहैव स्यात्। भौरिकिविधम्। भौलिकिविधम्। चिकीर्षको जिहीर्षक

---

विधौ तु मतोरित्यपकारानुबन्धकनिर्देशात् परिभाषानुपस्थानाद्द्वयोरपि ग्रहणम्। यत्र तर्हीति। ततश्च स्थानान्तरप्राप्तत्वमस्त्येव चुस्वरस्येत्यर्थः। कुमारीति। कुमारशब्दः सावर्णान्त इति ईकारस्योदात्तनिवृत्तिस्वरप्रतिषेधप्रसङ्गः। तस्माद्दधीचीत्यत्र स्थानान्तरप्राप्त एव चुस्वर इति चोरतद्धित इति वक्तव्यमेव। सतिशिष्ट इति। दधि अच् अस् इति स्थिते अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते लुङ्निमित्तं चेति पूर्वतद्धितः पश्च दच इत्यल्लोपः। समासस्य। व्यञ्जनान्तेष्विति। उच्चैरुदात्त इत्यत्राच इत्यनुवर्तनादजन्तस्य समासस्यान्तोदात्तत्वविधानाद्धलन्तस्य न प्राप्नोतीति वचनम्। हल्स्वरप्राप्ताविति। हल एव प्रकृतत्वादविद्यमानत्वं प्रतिज्ञास्यते। स्वरप्राप्ताविति। प्रकृतत्वाद्व्यञ्जनस्यैव प्राप्तिः प्रत्येष्यते। द्विर्बद्धमिति। उभयोपादाने स्पष्टावगतिर्भवतीत्यर्थः। स्वरितत्वं न प्राप्नोतीति। हल्स्वरप्राप्त्यभावाद्धकारस्य व्यवधायकत्वात्। भौरिकिविधमिति। भौरकीणां विषयो देशः। भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलाविति विधल्प्रत्ययः। चिकीर्षक इति। दे-

इत्यत्र न स्यात्। ञ्नित्यादिरुदात्तो भवतीति। इहैव स्यात्। अहिचुम्बकायनिः। आग्निवेश्यः गार्ग्यः। कृतिरित्यत्र न स्यात्। धातोरन्तउदात्तो भवतीतीहैव स्यात्। ऊर्णोति। पचतीत्यत्र न स्यात्। इदं तावदयुक्तम्। यदुच्यते हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीति। कथं हि हलो नाम स्वरप्राप्तिः स्यात्। तच्चापि ब्रुवता उदात्ताच्च स्वरितविधाविति वक्तव्यम्। तथानुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोति। यदि पुनः स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्युच्येत। अथ स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्युच्यमाने ऽनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्किं सिद्धं भवति व्यञ्जनादेर्व्यञ्जनान्ताच्च। बाढं सिद्धम्। कथम्। स्वरविधिरिति सर्वविभक्त्यन्तः समासः। स्वरेण विधिः स्वरविधिः। स्वरस्य विधिः स्वरविधिः। स्वरतो विधिः स्वरविधिरिति। नैवं शक्यम्। इह हि दोषः स्यात्। उदश्वित्वान् घोषः। विद्युत्वान्बलाहक इति। ह्रस्वनुड्भ्यां मतुबित्येष स्वरः प्रसज्येत। अस्तु तर्हि हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीति। ननु चोक्तं कथं हि हलो नाम स्वरप्राप्तिः स्यादिति। उच्चैरुदात्तः। नीचैरनुदात्त इत्यत्र षष्ठीति निर्दिष्टमच्ग्रहणं निवृत्तम्। तस्मिन्निवृत्ते हलोपि स्वरप्राप्तिर्भवति। यदप्युच्यते उदात्ताच्च स्वरितविधाविति वक्तव्यमिति। न वक्तव्यम्। नेदं पारिभाषिकानुदात्तस्य ग्रहणम्। किं तर्हि अन्वर्थग्रहणम्। अविद्यमानोदात्तमनुदात्तं भवति। उदात्तादनुदात्तस्य स्वरित इति। यदप्युच्यते अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोति। आचार्यप्रवृत्तिर्ज्ञापयति। तत्र सिद्धं तद्भवति व्यञ्जनादेर्व्यञ्जनान्ताच्चेति। यदयं नोत्तरपदे ऽनुदात्तादावित्युक्त्वा अपृथिवीरुद्रपूषमन्थिष्विति प्रतिषेधं शास्ति। सा तर्ह्येषा परिभाषा कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति। यदयं यतो-

---

षकाराभ्यामोकारस्य व्यवधानात्। अहिचुम्बकायनिरिति। प्राचामवृद्धात् फिन्बहुलमिति फिन्। आग्निवेश्य इति। गर्गादित्वाद्यञ्। गार्ग्य इति। हलादित्वादच आदित्वाभावात्। कथं चेति। अज्धर्मत्वादुदात्तादीनाम्। सर्वविभक्त्यन्त इति सर्वविभक्त्य-

ऽनाव इति नावः प्रतिषेधं शास्ति ।

इति श्रीषष्ठस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

पादश्च प्रथमःसमाप्तः ॥

बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ १ ॥ किमर्थमिदमुच्यते । बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृदाचार्यः समासान्तोदात्तत्वे प्राप्ते बहुव्रीहिस्वरमपवादं शास्ति । नैतदस्ति प्रयोजनम् । नञ्सुभ्यां नियमार्थं तु * । नञ्सुभ्यामित्येतन्नियमार्थं भविष्यति । नञ्सुभ्यामेव बहुव्रीहेरन्त उदात्तो भवति नान्यत इति । एवमपि कुत एतत् पूर्वपदप्रकृतिस्वरत्वं भविष्यति । न पुनः परस्येति । परस्य शिति शासनात् * । शितेर्नित्याबह्वजित्येतन्नियमार्थं भविष्यति । शितेरेव नान्यत इति । यत्तावदुच्यते नञ्सुभ्यामिति नियमार्थमिति । चेपे विधिर्नञो सिद्धः । उदराश्वेषुषु चेप इत्येतस्मिन् प्राप्ते तत एतदुच्यते ॥ यदप्युच्यते परस्य शिति शासनादिति । परस्य नियमो भवेत् । परस्यैष नियमः स्यात् । शितेर्नित्याबह्वजेव नान्यदिति । यदि तर्हि

---

भवत्यन्तः । सर्वग्रहणमनेकोपलक्षणार्थम् । सर्वविभक्तीनामिष्टानुपयोगात् । अविद्यमानूरितः सिद्धः ॥

न्तावयवत्वात्सर्वविनोदात्तमिति । अज्झल्समुदायोनुदात्त उदात्तात्पर इति दधिशब्दे

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठाध्यायस्य प्रथमे

पादे षष्ठमाह्निकम् । पादश्च प्रथमः समाप्तः ॥

बहुव्रीहौप्रकृत्या पूर्वपदम् । किमर्थमिति । अन्तरेणैतत् सूत्रमिष्टस्यार्थस्य सिद्धिं मत्त्वा प्रश्नः । समासान्तविधेरिति । समासान्तस्योदात्तविधानात्तद्बाधनार्थमिदमित्यर्थः । सुकृदितिशोभनं लक्षणं कृतवानिति सुकर्मपापेति क्विप् । नञ्भ्यामिति । सिद्धे विधिरारभ्यमाणोनियमाय भवतीति न्यायात् । एवमपीति ।नासाखरपदप्राप्तौ समासान्तोदात्तत्वविधानान्नियमेन तद्व्यावृत्तौ द्वयोरपि पूर्वपदोत्तरपदयोः प्रकृतिस्वरप्रसङ्गः । परस्येति । उत्तरपदस्य नियमादसति प्रकृतिस्वरे पारिशेष्यात् पूर्वपदस्यैव प्रकृतिस्वरो भविष्यतीत्यर्थः । चेपे विधिरिति । अनुदरः सूदर इत्यादौ पूवपदान्तोदात्तत्वं चेप इति प्राप्तं तद्बाधनार्थं नञ्सुभ्यामिति स्याद् न तु नियमार्थम् । विधिनियमसंभवे विधेर्बलवत्त्वात् । नञ्ग्रहणमुपलक्षणम् । सोरपि चेपविषयत्वसंभवात् । शितेर्नित्याबह्वजेवेति । शिति ललाटादिषूत्तरपदप्रकृतिस्वरो नियमेन निवर्त्यते ग तु चित्रगुप्रभृतिष्वित्यर्थः । तदेवं सूत्रं

पूर्वपदप्रकृतिस्वरत्वं समासान्तोदात्तत्वं बाधेत चप्रियः वाप्रियः अ-
त्रापि बाधेत। अन्तश्च वाप्रिये सिद्धम्॥ अन्तोदात्तत्वं च वाप्रिये
सिद्धम्। कुतः। संभवात्। असत्यपि संभवे बाधनं भवति। अस्ति
च संभवो यदुभयं स्यात्। सत्यपि संभवे बाधनं भवति। तद्यथा दधि
ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति। सत्यपि संभवे दधिदान-
स्य तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपि संभवे पूर्वपदप्र-
कृतिस्वरत्वं समासान्तोदात्तत्वं बाधिष्यते। एवं तर्हि प्रकृताद्विधेः
बहुव्रीहौ प्रकृत्या पूर्वपदं प्रकृतिस्वरं भवतीति। किं च प्रकृतम्।
उदात्त इति वर्तते। एवमपि कार्यप्रियः हार्यप्रिय इत्यत्र न प्राप्नो-
ति। स्वरितेप्युदात्तोस्ति। अथ वा स्वरितग्रहणमपि प्रकृतमनुवर्तते।
क्व प्रकृतम्। तित्स्वरितमिति। बहुव्रीहाववते सिद्धम्। अन्तरेणापि
बहुव्रीहिग्रहणं सिद्धम्। तत्पुरुषे कस्मान्न भवति। तत्पुरुषे तुल्या-
र्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इत्येतन्नियमार्थं भविष्यति।
द्विगौ तर्हि कस्मान्न भवति। इगन्ते द्विगावित्येतन्नियमार्थं भविष्य-
ति। द्वन्द्वे तर्हि प्राप्नोति। राजन्यबहुवचनद्वन्द्वेन्धकवृष्णिष्विति नि-
यमार्थं भविष्यति। अव्ययीभावे तर्हि प्राप्नोति। परिप्रत्युपापावर्ज्य-

---

कर्त्तव्यत्वेन स्थापितम्। च प्रिय इति। चादयोनुदात्ता इति चवाशब्दावनुदात्तौ तयोः
प्रकृतिस्वरे सति समासान्तोदात्तत्वं न प्राप्नोति। अस्ति च संभव इति। उदात्तानुदात्त-
योर्भिन्नविषययोर्विरोधाभावात्। सत्यपीति। सामान्यविशेषविषयत्वनिबन्धनत्वाद् बा-
ध्यबाधकभावस्य। ननु चासत्यपि समासान्तोदात्तत्वे प्रियशब्दः प्रत्ययस्वरेणान्तोदात्त
एव भविष्यति। न च प्रत्ययस्वरस्य बाधकः पूर्वपदप्रकृतिस्वरः। एवं तर्ह्युदाहरणदिक्
भाष्यकारेण प्रदर्शिता। इदं तूदाहरणं समपादइति। समशब्दः सर्वानुदात्तः। पादश-
ब्दो वृषादित्वादाद्युदात्तस्तत्र पूर्वपदप्रकृतिस्वरेण समासान्तोदात्तत्वे बाधिते पादशब्द
आद्युदात्तः श्रूयते। प्रकृताद्विधेरिति। उदात्तस्य यत्प्रकृतं विधानं तस्मात्प्रकृतिभावद्वा-
रेणानुज्ञायमानाच्च प्रियादौ प्रकृतिस्वरो न भवतीत्यर्थः। स्वरितेऽपीति। नन्वच उदा-
त्तसंज्ञा विहिता वर्णैकदेशश्च वर्णग्रहणेन नगृह्यते। एवं तर्ह्युदात्तावयवत्वात् स्वरितोप्यु-
दात्तग्रहणेन गृह्यते। गौणमुख्यन्यायश्च लक्ष्यदर्शनवशान्नाश्रीयते। अत एवास्मिन् पक्षे
असमाश्वस्य पक्षान्तरमाह। अथ वेति। बहुव्रीहाविति। विनापि बहुव्रीहिग्रहणेनब-
हुव्रीहौ पूर्वपदप्रकृतिस्वरः सिद्ध इत्यर्थः। द्विगौ तर्हीति। यद्यपि द्विगुस्तत्पुरुषास्तथ-

मानाहोरात्रावयवेष्वित्येतन्नियमार्थं भविष्यति । एवमपि कुत एतत् एवं नियमो भविष्यति । एतेषामेव तत्पुरुषादिष्विति । न पुनरेवं नियमः स्यात् एतेषां तत्पुरुषादिष्वेवेति । इष्टतश्चावधारणम् । इष्टतश्चावधारणं भविष्यति । एतेषां तर्हि बहुव्रीहेश्च पर्यायः प्राप्नोति । द्विपाद्दिष्टिर्वितस्तेश्च पर्यायो न प्रकल्पते । यदयं द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ दिष्टिवितस्त्योश्चेति सिद्धे पर्याये पर्यायं शास्ति तज्ज्ञापयत्याचार्यः पर्यायो न भवतीति । उदात्ते ज्ञापकं त्वेतत् । उदात्त एतज्ज्ञापकं स्यात् । स्वरितेन समाविशेत् । स्वरितेन च समावेशः प्राप्नोति । स्वरितेष्वुदात्तोक्ति । बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् । नञ्सुभ्यां नियमार्थं तु परस्यॄशिति शासनात् ॥१॥ चपे विधिर्नञोसिद्धः परस्य नियमो भवेत् । अन्तश्च वा प्रिये सिद्धं संभवात् प्रकृताद्विधेः ॥ २ ॥ बहुव्रीहावृते सिद्धमिष्टतश्चावधारणम् । द्विपाद्दिष्टे वितस्तेश्च पर्यायो न प्रकल्पते ॥ ३ ॥ उदात्ते ज्ञापकं त्वेतत्स्वरितेन समाविशेत् ॥

तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः॥२॥
तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधः* । तत्पुरुषे वि-

---

पि तत्र नियमान्तरप्रतिपादनाय प्रश्नः । इष्टतश्चेति । प्रयुक्तानामन्वाख्यानान्नानिष्टार्था शास्त्रप्रवृत्तिः । एतेषामिति । तत्पुरुषादीनामित्यर्थः । असति बहुव्रीहिग्रहणे समासान्तोदात्तत्वस्य पूर्वपदप्रकृतिस्वरस्य चैकविषयत्वाद्विरोधाच्च पर्यायः प्राप्नोति । चित्रगुस्तुल्यश्वेतः पञ्चारत्निरित्यादौ । यस्मात्तत्पुरुषादिषु तुल्यार्थादीन्येव पूर्वपदप्रकृतिस्वराणि भवन्ति नान्यानीत्येवंरूपो नियमः कृतो न तु प्रकृतिस्वराण्येवेति नियमस्ततश्च पर्यायप्रसङ्गः । द्विपादिति । द्वौ पादावस्य द्विपादित्यादौ समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरौ पर्यायेण सिद्धाविति द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहावित्यन्तोदात्तविकल्पो न विधेयो विहितस्तु ज्ञापयति बहुव्रीहिरन्तोदात्तो न भवतीति । तथा दिष्टिवितस्त्योश्चेति ज्ञापकं येषामिह पूर्वपदप्रकृतिस्वरो नियम्यते तेषां समासान्तोदात्तत्वं पक्षे न भवतीति बहुव्रीहिग्रहणं प्रत्याख्यातम् । उदात्ते ज्ञापकमिति । इह्योदात्तग्रहणानुवृत्त्या द्वयोरुदात्तयोः पर्यायो मा भूत् ज्ञापकात् । कार्यप्रिय इत्यादौ तूदात्तस्वरितयोः समावेशः प्राप्नोत्येवेत्यर्थः । स्वरिते ऽपीति । एतत् पूर्वमेव व्याख्यातम् ।

तत्पुरुषे । कर्मधारये प्रतिषेध इति । विशेषणसमासो न प्रथमान्तानामेव भवत्य-

भक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधो वक्तव्यः। परमं कारकम्। परमकारकम्। परमेण कारकेण परमकारकेण। परमे कारके। परमकारके इति। सिद्धं तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् *। सिद्धमेतत्। कथम्। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यो द्वितीयातृतीयासप्तमीसमासस्तस्य ग्रहणम्। लक्षणोक्तश्चायम्। अव्यये परिगणनं कर्तव्यम्। अव्यये नञ्कुनिपातानाम् *। अव्यये नञ्कुनिपातानामिति वक्तव्यम्। नञ्। अब्राह्मणः अवृषलः। नञ्। कु। कुब्राह्मणः कुवृषलः। कु। निपात। निष्कौशाम्बिः निर्वाराणसिः। निपात। क्त्वा माभूत्। स्नात्वाकालकः पीत्वास्थिरकः क्त्वायां वा प्रतिषेधः। क्त्वायां वा प्रतिषेधो वक्तव्यः॥ स्नात्वाकालकः पीत्वास्थिरकः। उभयं न वक्तव्यम्। निपातनात् सिद्धम्। किं निपातनम्। अवश्यमत्र समासार्थं ल्यबभावार्थं च निपातनं कर्तव्यं तेनैव यत्नेनस्वरो न भविष्यति॥

सदृशप्रतिरूपयोः सादृश्ये॥११॥सदृशग्रहणमनर्थकं तृतीयासमासवचनात्*। सदृसग्रहणमनर्थकम्। किं कारणम्। तृतीयासमासवचनात् सदृशशब्देन तृतीयासमास उच्यते तत्र तृतीयापूर्वपदं प्रकृतिस्वरं भवतीत्येव सिद्धम्। षष्ठ्यर्थं तर्हीदं वक्तव्यं पितुः सदृशः पितृसदृश इति। षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम्*। षष्ठ्यर्थमिति

---

पि तु द्वितीयाद्यन्तानामपीति भावः। लक्षणोक्त इति। विभक्तिविशेषमनुपादाय सामान्यलक्षणेनायं समासो विहित इत्यर्थः। नञ्कुनिपातानामिति। निपातत्वादेव सिद्धे नञ्ग्रहणं विस्पष्टार्थम्। अकरणिरित्यादौ कृत्स्वरादिबाधनार्थं वा तेन यत्रोपपदं कृति नञ् तस्य च स्वरो बलीयावान् भवति सहनिर्दिष्टस्य च नञ्स्वरो बलीयावान् भवतीति न वक्तव्यं भवति। क्त्वायां वेति। परिगणनं वा कर्तव्यम्। क्त्वायां प्रतिषेधो वा वक्तव्य इत्यर्थः। ननु भिन्नफलत्वाद्विकल्पो ऽनुपपन्नः परिगणने सति सामिकृतं स्वयंधौतमित्यादिषु प्रकृतिस्वराभावः। क्त्वायां प्रतिषेधे तु प्रकृतिस्वरप्रसङ्ग इति चिन्त्यमेतत्। अवश्यमत्रेति। अनेकप्रयोजनसंपत्तिर्निपातनाद्भवतीत्यर्थः। तेनैवेति। अन्तोदात्तानां पाठेनेत्यर्थः॥

सदृश। अविरविकन्यायेनेति। अविरविक इति समुदायैकदेशानुकरणमिति सुप्लुगभावाल्लोपाभावः। अनेनैतद्दर्शयति अवैसमिति प्राप्तोपि तद्धितोऽनभिधानान्न भ-

चेत् तृतीयासमासवचनमनर्थकं स्यात् । किं कारणम् । इहास्माभिस्त्रैशब्द्यं साध्यम् । पित्रा सदृशः पितुः सदृशः पितृसदृश इति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः । अपरेण वृत्तिर्भविष्यति अविरविकन्यायेन । तद्यथा । अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति । आविकमिति । एवं पितुः सदृश इति विगृह्य पितृसदृश इति भविष्यति । पित्रा सदृश इति विगृह्य वाक्यमेव भविष्यति । अवश्यं तृतीयासमासो वक्तव्यः । यत्र षष्ठ्यर्थो नास्ति तदर्थं भोजनसदृशोऽध्ययनसदृश इति । यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यम् । इदं न वक्तव्यम् । इदमप्यवश्यं वक्तव्यम् । यत्र षष्ठी श्रूयते तदर्थं, दास्याः सदृशः वृषल्याः सदृश इति ॥

इगन्तकालकपालभगालशरावेषु द्विगौ ॥ २९ इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानम्*। इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानं कर्तव्यम् । पञ्चारत्न्योदशारत्न्यः। पञ्चारत्नयः। दशारत्नयः। यण्गुणयोः कृतयोरिगन्ते द्विगावित्येष स्वरो न प्राप्नोति । न वा बहिरङ्गलक्षणत्वात् * । न वा वक्तव्यम् । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गौ यण्गुणौ । अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु ॥ ३३ ॥ परिप्रत्युपापेभ्यो वनं समासे विप्रतिषेधेन*। परिप्रत्युपापेभ्यो वनं समास इत्येतद्भवति

---

वति । किं पुनः पित्रा सदृश इत्यत्राविहितस्तृतीयासमासो भविष्यति । भोजनसदृश इति । हेताविति भोजनादिभ्यस्तृतीया । अत्र षष्ठ्यभावात् षष्ठीसमासाभावः । दास्याः सदृश इति । षष्ठ्या आक्रोश इत्यलुक् । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वम् ।

इगन्त । यण्गुणयोरिति । पदस्य स्वरविधानात् सुप्युत्पन्ने नित्यत्वाद्यण्गुणयोः कृतयोरिगन्तत्वाभावात् प्रकृतिस्वरो न प्राप्नोतीति वचनम् । पञ्चरत्न्य इति । पञ्चारत्नयः प्रमाणमेषामिति तद्धितार्थे द्विगुः । प्रमाणे लो द्विगोर्नित्यमिति मात्रचो लुक्, जस् ङसि चेति गुणो जसादिषु छन्दो वावचनमिति वचनान्नभवति ततोऽयणादेशः । न वेति । पदग्रहणस्य परिमाणार्थत्वात्प्राक् सुबुत्पत्तेः स्वरो भवन्नन्तरङ्गः संपद्यते । यण्गुणौ तु सुबपेक्षत्वाद् बहिरङ्गत्वात् स्वरे कर्तव्ये असिद्धावित्यर्थः ॥

परिप्र । परिप्रत्युपापेभ्य इति । सर्वनिर्देशेऽप्यपपरी एव गृह्येते । तयोरेव वर्जनविषय-

विप्रतिषेधेन। परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेष्वित्यस्यावकाशः। परित्रिगर्तम्। परिसौवीरम्। वनं समासइत्यस्यावकाशः। प्रवणे यष्टव्यम्। इहोभयं प्राप्नोति। परिवनम्। अपवनम्। वनंसमासइत्येतद्भवति विप्रतिषेधेन। न वा वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् ॥ न वार्थो विप्रतिषेधेन। किं कारणम्। वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम्। सिद्धमत्रान्तोदात्तत्वमुत्सर्गेणैव। तस्य पुनर्वचनएतत् प्रयोजनं ये ऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम्। स यथैव तदपवादमव्ययस्वरं बाधते। एवमिममपि बाधिष्यते॥

आचार्योपसर्जनश्चान्तेवासी॥ ३६॥ आचार्योपसर्जनेनेकस्यापि पदस्य पूर्वपदत्वात्संदेहः ॥ आचार्योपसर्जनेऽनेकस्यापि पदस्यपूर्वपदत्वात् संदेहो भवति। आपिशलपाणिनीयव्याडीयगौतमीयाः। एकं पदं वर्जयित्वा सर्वाणि पूर्वपदानि। तत्र न ज्ञायते कस्य पूर्वपदस्य स्वरेण भवितव्यमिति। लोकविज्ञानात् सिद्धम्। तद्यथा। लोकेमीषां ब्राह्मणानां पूर्वमानयेति यः सर्वपूर्वः स आनीयते। एवमिहापि यत्सर्वपूर्वपदं तस्य प्रकृतिस्वरत्वं भविष्यति॥

महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु॥ ३८॥ किमर्थं महतः प्रवृद्धशब्दउत्तरपदे पूर्वपदप्रकृतिस्वरत्वमुच्यते। न कर्मधारये निष्ठेत्येव सिद्धम्। न सिध्यति। किं का-

---

त्वसंभवाद्वनशब्दस्य च वर्ज्यमानार्थत्वसंभवात्। प्रवण इति। तत्पुरुषः। वनं समास इत्येतत् सूत्रं क्रमापेक्षया प्राथम्याद् बहुव्रीहितत्पुरुषपूर्वपदप्रकृतिस्वरस्यापवादं मत्वा विप्रतिषेधोपन्यासः। अनेन तु सूत्रेण परिशेषयादव्ययीभावे स्वरविधिः। परिवनमिति। वनं वर्जयित्वेत्यर्थः। अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः। स यथैवेति। बाध्यसमुदायापेक्षायां विशेषाभावात्सर्वस्य प्रकृतिस्वरस्यासौ बाधकः।

आचार्यो। अनेकस्यापीति। द्वयोर्द्वन्द्वेऽस्य चरितार्थत्वाद् बहूनां द्वन्द्वे संदेहादप्रतिपत्तिः पर्यायो वा प्राप्नोति। लोकविज्ञानादिति। आद्यस्याव्यभिचारिपूर्वपदत्वं मध्यमस्य तु परापेक्षया पूर्वपदत्वम्। पूर्वापेक्षया तु न पूर्वपदत्वमिति तस्याग्रहणम्। सर्वपूर्व इति। सर्वेषां पूर्व इत्यवयवावयविसंबन्धे षष्ठीं विधाय समासो विधेयः॥

महान् व्रीहि। श्रेण्यादिसमास इति। लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रति-

रणम् । श्रेण्यादिसमास इत्येवं तत् । किं पुनः कारणं श्रेण्यादिसमास इत्येवं तत् । इह मा भूत् । महानिरष्टो दक्षिणा दीयते ॥

कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूःपण्यकम्बलोदासीभाराणांच ॥ ४२ ॥ कुरुवृज्योर्गार्हपते * । कुरुवृज्योर्गार्हपते इति वक्तव्यम् । कुरुगार्हपतम् । वृजिगार्हपतम् । कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूःपण्यकम्बलोदासीभारादीनामिति वक्तव्यम् । इहापि यथा स्यात् । देवहूतिः । देवनीतिः । वसुनीतिः । ओषधीचन्द्रमाः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । योगविभागः करिष्यते । कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूःपण्यकम्बल इति । ततः दासीभाराणां चेति । तत्र बहुवचननिर्देशाद् दासीभारादीनां चेति विज्ञास्यते । पण्यकम्बलः संज्ञायाम् * । पण्यकम्बलः संज्ञायामिति वक्तव्यम् । यो हि पणितव्यः कम्बलः पण्यकम्बल एवासौ स्यात् । अपर आह । पण्यकम्बल एव यथा स्यात् । इह मा भूत् । पण्यगवः । पण्यहस्ती ॥

---

पदोक्तो यः कर्मधारयस्तस्य ग्रहणमित्यर्थः ॥

कुरु । दासीभारादीनामिति वक्तव्यमिति । दासीभाराणामिति बहुवचनं द्वन्द्वसमासार्थमित्यं मत्वा वचनं विभक्त्यलोपस्तु सौत्रत्वान्निर्देशस्य स्यात् । योगविभाग इति । नायं द्वन्द्वः । किं तर्हि असमस्तान्येव पदानि निर्दिष्टानि । तथा च तैतिलकद्रूः पण्यकम्बल इति विभक्तिरुच्चारिता तत्र दासीभारशब्दसहचरितेषु तद्रूपारोपाद्बहुवचननिर्देशः । एवं च गणपाठः संगृहीतो भवति । पण्यकम्बलः संज्ञायामिति । कृत्यप्रत्ययान्तत्वात् पूर्वपदप्रकृतिस्वरे सिद्धे नियमार्थं वचनम् । संज्ञायामेव पण्यकम्बलः प्रकृतिस्वरपूर्वपदो भवति नान्यत्रेति । तत्र नियतप्रमाणो नियतमूल्यो व्यावहारिको यः कम्बलस्तस्य पण्यकम्बल इति संज्ञेत्याहुः । अपर आहेति । कम्बल एवोत्तरपदे पण्यशब्दः प्रकृतिस्वरो यथा स्यादन्यत्र मा भूदिति नियमः । पण्यगव इति । पण्यो गौरिति विशेषणसमासः । गोरतद्धितलुकीति टच् समासान्तः । अत्र तु चित्त्वादेवान्तोदात्तत्वं सिद्धमिति द्वितीयमुदाहरणमुक्तम् । पण्यहस्तीति । कृत्यतुल्याख्या अजात्येति एतत्तु गुणक्रियावाचिनो विशेषणविशेष्यभावस्यानियमात् पूर्वनिपातानियमप्रसङ्गे कृत्यान्तस्य पूर्वनिपातार्थं वचनं न तु जातिप्रतिषेधार्थम् । अजात्येति तु वचनं न्यायसिद्धार्थानुवाद एवेति भाष्यकारमतानुसारिण आहुः । तत्पुरुषे तुल्यार्थं त्यत् प्रतिपदोक्तपरिभाषा कृत्येषु यदा

अहीने द्वितीया ॥ ४७ ॥ अहीने इति किमर्थम्। कान्तारातीतः। योजनातीतः। अहीने द्वितीयानुपसर्गे * । अहीने द्वितीयानुपसर्ग इति वक्तव्यम्। इह माभूत्। सुखं प्राप्तः। सुखप्राप्तः। दुःखं प्राप्तो दुःखप्राप्त इति। तत्तर्हि वक्तव्यम्। यद्यप्येतदुच्यते। अथ वैतर्ह्यहीनग्रहणं न करिष्यते। इहापि कान्तारातीतो योजनातीत इत्यनुपसर्ग इत्येव सिद्धम् ॥

गतिरनन्तरः ॥ ४९ ॥ अनन्तर इति किमर्थम्। अभ्युद्धृतम्। उपसमाहृतम्। गतेरनन्तरग्रहणमनर्थकं गतिर्गताविति वचनात्*। गतेरनन्तरग्रहणमनर्थकम्। किं कारणम्। गतिर्गताविति वचनात्। गतौ परतो गतेरनुदात्तत्वमुच्यते। तद्बाधकं भविष्यति। तत्र यस्याप्रकृतिस्वरत्वं तस्मादन्तोदात्तत्वप्रसङ्गः * । तत्र यस्य गतेरप्रकृतिस्वरत्वं तस्मादन्तोदात्तत्वं प्राप्नोति। अन्तस्थाथघञ्क्ताजबित्र-

---

नाश्रीयते। तदा नियमार्थमुच्यते। तदाश्रयणे तु विध्यर्थत्वान्नियमानुपपत्तिः। नापि पञ्चगव इत्यादौ प्रकृतिस्वरप्रसङ्गः ॥

अहीने। थाथादिस्वरापवादो योगः। अहीन इति किमर्थमिति। प्रत्याख्यानाय प्रश्नः। कान्तारातीत इति। कान्तारं त्यक्तवानित्यर्थे द्वितीयाश्रितेति समासः। हीनवाचत्र द्वितीयान्तमिति थाथादिस्वरो भवति। सुखप्राप्त इति। अत्रापि थाथादिस्वरः। अनुपसर्गग्रहणे चेन क्रियमाणे प्रवृद्धादिषु खट्वारूढशब्दो न पठितव्य आरूढशब्दस्य सोपसर्गत्वादेतत्स्वराभावे थाथादिस्वरेणान्तोदात्तस्य सिद्धत्वात्।

गति। अनन्तर इति किमर्थमिति। किं व्यवहितगतिनिवृत्त्यर्थमथानन्तरस्यैवापूर्वपदस्यापि गतेस्थाथादिस्वरबाधनार्थं प्रकृतिस्वरविधानार्थमथकृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषाज्ञापनार्थमित्यनेकार्थसंभवात् प्रश्नः। अभ्युद्धृतमिति। कृद्ग्रहणपरिभाषया क्तान्तउद्धृतशब्दे परतोभिशब्दस्य प्रकृतिस्वरो मा भूदित्येवमर्थमनन्तरग्रहणम्। ननु च क्रियमाणे ऽप्यनन्तरग्रहणे प्राप्नोत्येव उद्धृतशब्दस्य क्तान्तस्यानन्तर एव गतिर्भवतीति। अनन्तरग्रहणसामर्थ्याद्धातोरनन्तरो गतिराश्रीयत इत्यदोषः। तद्बाधकमिति। परत्वादिति भावः। तस्माद्व्यवहितगतिनिवृत्त्यर्थमनन्तरग्रहणं न कर्त्तव्यम्। तत्र यस्येति। गतिर्गताविति निघाते कृते अभेः प्रकृतिस्वरो नास्ति। तस्मात्तु परस्योद्धृतशब्दस्य सतिशिष्टत्वात्थाथादिस्वरेणान्तो दात्तत्वं प्राप्नोति। तत्कथम्। उच्यते। उद्धृतशब्दे तावत्समासस्वराव्ययस्वरकृत्स्वरथाथादिस्वरेषु प्राप्तेषु गतिस्वरस्ततोभेः समा-

कायामिति । प्रकृतिस्वरवचनाच्चानन्तोदात्तत्वम् * । प्रकृतिस्वरवचनसामर्थ्यादन्तोदात्तत्वं न भविष्यति । यदि हि स्यात् । प्रकृतिस्वरवचनमिदानीं किमर्थं स्यात् । प्रकृतिस्वरवचनं किमर्थमिति चेद् एकगत्यर्थम् * । प्रकृतिस्वरवचनं किमर्थमिति चेदेकगत्यर्थम् । य एको गतिस्तदर्थमेतत् स्यात् । प्रकृतं प्रहृतम् । एवमर्थमेव तर्ह्यनन्तरग्रहणं कर्तव्यम् । अत्र यथा स्यात् । क्रियमाणेपि वै अनन्तरग्रहणे अत्र न सिध्यति । किं कारणम् । गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवतीत्युच्यते । यश्चात्र गतिरनन्तरः नासौ पूर्वपदम् । यच्च पूर्वपदं नासावनन्तरः । अपूर्वपदार्थं तर्हीदं वक्तव्यम् । अपूर्वपदस्यापि गतेः प्रकृतिस्वरत्वं यथा स्यात् । अपूर्वपदार्थमिति चेत् कारकेतिप्रसङ्गः * । अपूर्वपदार्थमिति चेत्कारकेऽतिप्रसङ्गो भवति । आगतः दूरात् । दूरादागतः । स यथैव गतिपूर्वस्य गतेरपूर्वपदस्य भवति । एवं कारकपूर्वपदस्यापि प्राप्नोति । सिद्धं तु गतेरन्तोदात्तता-

---

से कृते कच्यान्तरप्राप्तः थाथादिस्वरः प्राप्नोति । कृद्ग्रहणपरिभाषयोद्धृतशब्दस्य क्तान्तत्वात् । तथा हि । समासे कृते समासान्तोदात्तत्वं प्राप्नोति । ततस्तदपवादः कृत्स्वरेणोद् उदात्तत्वं प्राप्नोति । ततस्तदपवादस्थाथादिस्वरप्रसङ्गः । प्रकृतिस्वरवचनादिति । नाप्राप्ते थाथादिस्वरे गतिस्वर आरभ्यमाणस्तद्बाधकः । य एको गतिरिति । एकस्मिन्नेव गतावस्य बाधकत्वम् । अभ्युद्धृतादौ तु कच्यान्तरप्राप्तत्वात्थाथादिस्वर एव सतिशिष्टत्वाद्बलवत्त्वात् प्राप्नोति । एवमर्थमेवेति । कच्यान्तरप्राप्तस्यापि थाथादिस्वरस्य बाधनार्थमनन्तरग्रहणमित्यर्थः । यत्र ह्येक एव गतिस्तत्रानन्तरग्रहणस्य न प्रयोजनमित्यनेकगतिसंनिधावप्राप्तस्य गतिस्वरस्यानन्तरग्रहणेन पुनः श्रुत्या प्राप्तिः क्रियते । क्रियमाणेऽपीति । कुगतिप्रादय इत्यत्र सुपेति निवृत्तं सुबित्यनुवर्तत एव निष्कृतादिषु पदकार्यप्रसिद्ध्यर्थम् । तत्र युगपत् समुदायस्य सुबन्तत्वाभावात् समासस्याऽप्रसङ्गात् क्रमेणासौ विधेयस्ततोभिशब्दस्योद्धृतशब्देन समासे सत्यपिशब्द एव पूर्वपदं नोच्छब्द इति पूर्वपदस्य गतेः प्रकृतिस्वरो विधीयमानः सत्यप्यनन्तरग्रहणे पूर्वपदत्वादुदो न प्राप्नोतीत्यर्थः । अपूर्वपदार्थं तर्हीति । श्रुत्या प्रकरणं दुर्बलं बाध्यते । तत्र योगविभागः क्रियते । गतिः पूर्वपदं प्रकृतिस्वरो भवति । ततोनन्तरो गतिरपूर्वपदमपि प्रकृत्येति । इदानीमतिप्रसङ्गमाह । अपूर्वपदार्थमिति चेदिति । दूरादागत इति । अत्र कर्मणि क्तो विधेयः । तृतीया कर्मणीत्यतः कर्मग्रहणानुवर्तनात्कर्मवाचिनः क्तस्य ग्रहणम् । अत्र थाथादिस्वर इष्यते । गतिस्वरोनन्तरग्रहणात्प्राप्नोति । सिद्धं त्विति । थाथादिसूत्रे कारकोपपदग्रह-

प्रसङ्गात् *। सिद्धमेतत्। कथम् यत्तदन्तः थाथघञ्क्ताजबित्रकाणा-
मित्येतद्गतेर्न प्रसङ्क्तव्यम्। किं कृतं भवति। कृत्स्वरापवादोयं भ-
वति। तत्र गतिरनन्तर इत्यस्यावकाशः। प्रकृतम्। प्रहृतम्। अन्तः
थाथघञ्क्ताजबित्रकाणामित्यस्यावकाशः। दूराद् गतः दूराद् यातः।
इहोभयं प्राप्नोति। आगतः दूरात् दूरादागतः। अन्तः थाथघञ्क्ता-
जबित्रकाणामित्येतद्भवति विप्रतिषेधेन। अवश्यं गतेस्तत् प्रसङ्क्त-
व्यं भेदप्रभेद इत्येवमर्थम्। एवं तर्हि योगविभागः करिष्यते।
अन्तः थाथघञजबित्रकाणाम्। ततः क्तः। क्तान्तमुत्तरपदमन्तोदा-
त्तं भवति। अत्र कारकोपपदग्रहणमनुवर्त्तते। गतिग्रहणं निवृत्तम्।
अथ वोपरिष्टाद्योगविभागः करिष्यते। इदमस्ति सूपमानात् क्तः संज्ञा
यामनाचितादीनां प्रवृद्धादीनां चेति। ततो वक्ष्यामि कारकात्।
कारकाच्च क्तान्तमुत्तरपदमन्तोदात्तं भवतीति। ततः दत्तश्रुतयो-
रेवाशिषि। कारकादिति। एवं च कृत्वा नार्थोनन्तरग्रहणेन।

---

णमेवानुवर्तते। तेन गतिग्रहणमस्वरितत्वात्ततश्च गतिस्वरः कृत्स्वरस्यापवादो न थाथा-
दिस्वरस्य तत्र दूरादागते कृत्स्वरापवादयोर्गतिस्वरथाथादिस्वरयोः प्रसङ्गे परत्वात् था-
थादिस्वर एव प्रवर्त्तते। कृगत्स्वरग्रहणं त्वपूर्वपदार्थमभ्युद्धृतादावेव स्वरं संपादयति।
प्रकृतमिति। अवकाशप्रदर्शनमात्रमेवानेन कृतमनन्तर इत्यस्य त्वभ्युद्धृतादिरवकाशः
प्रदर्शयितव्यः। अवश्यं गतेरिति। थाथादिसूत्रे ऽवश्यानुवर्त्यं गतिग्रहणमन्यथा प्रभेद इ-
त्यत्र कृत्स्वरेण घञोञित्वाद्धातोरुदात्तत्वं स्यादन्तोदात्तत्वं चेष्यते। एवं तर्हीति। था-
थादिसूत्रात् क्तग्रहणमपनीय पृथक् कर्त्तव्यम्। गतिग्रहणं निवृत्तमिति। ननु विशुष्क
इत्यादौ कृत्स्वरेणोत्तरपदाद्युदात्तत्वं प्राप्नोति। शुष्कधृष्टावित्याद्युदात्तविधानादन्तो-
दात्तत्वं चेष्यते इत्याशङ्क्य योगविभागान्तरमाह। कारकादिति। तत्र दूराद्यात इत्या-
दौ थाथादिस्वरेणैवान्तोदात्तत्वस्य सिद्धत्वात्कारकादित्ययं योगो गतिरनन्तर इत्यस्य
बाधको विज्ञायते। एवं चेति। कारकादिति योगविभागे सति अनन्तरग्रहणं न कर्त्त-
व्यम्। कथमिति चेत्। उच्यते। आगत इत्यस्य गतिस्वरेणाद्युदात्तत्वे प्रवृत्ते दूरशब्दस्य
स्तोकान्तिकेति समासस्ततः कृदन्तरप्राप्त्या समासस्वरः प्राप्नोति। ततः कृत्स्वरस्ततः क्त-
स्वरः इत्येवं क्तस्वरे सिद्धे कारकादिति सूत्रं नियमार्थम्। तत्र च गतिग्रहणमनुवर्त्तते। तेना
यमर्थः कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति। तेनाभ्युद्धृत इत्यादौ परत्वाद्
गतिनिघाते उदात्तस्वरितानुवृत्त्या सर्वानुदात्तस्य प्रकृतिभावाभावे थाथादिस्वरे च नि-

कथमभ्युद्धृतम्। उद्धरति क्रियां विशिनष्टि। उद्धा विशिष्टामभिर्विशि-नष्टि। तत्र गतिरनन्तर इति च प्राप्नोति गतिर्गताविति च गति-रनन्तर इत्यस्यावकाशः। प्रकृतं प्रहृतम्। गतिर्गताविल्यस्यावकाशः। अभ्युद्धरति। उपसमादधाति। इहोभयं प्राप्नोति। अभ्युद्धृतम्। उ-पसंहृतम्। उपसमाहृतम्। गतिर्गताविल्येतद् भवति विप्रतिषेध-न। एवं तर्हि सिद्धे सति यदनन्तरग्रहणं करोति। तज् ज्ञापयत्या-चार्यः भवत्येषा परिभाषा कृद्ग्रहणे गतिकारकपूर्वस्यापीति। कि-मेतस्य ज्ञापने प्रयोजनम्। प्रतप्तं नकुलस्थितं त एतत्। उदके विशीर्णं त एतत्। सगतिकेन सनकुलेन च समासः सिद्धो भवति॥

तादौ च निति कृत्यतौ॥ ५०॥ कृद्ग्रहणं किमर्थम्। यथा तकारादिग्रहणं कृद्विशेषणं विज्ञायेत। तकारादौ निति कृतीति। अथाक्रियमाणे कृद्ग्रहणे तकारादिग्रहणं कस्य विशेषणं स्यात्। उ-त्तरपदविशेषणम्। तत्र को दोषः। इहैव स्यात्। प्रतरिता प्रतरि-तुम्। इह न स्यात्। प्रकर्त्ता प्रकर्त्तुम्। तादौनिति कृद्ग्रहणान-

---

यमेन निवर्त्तिते कृत्स्वरेण उद एवोदात्तत्वं भविष्यतीत्यर्थः। कथमिति। अपूर्वपद-त्वादुच्छब्दस्य गतिस्वरो न प्राप्नोतीति तदर्थमनन्तरग्रहणं स्यादिति मत्वा प्रश्नः। उद्ध-रतिक्रियामिति। अयमर्थः। उच्छब्देन हरतेः संबन्धादेक उद्धृतशब्दयोः समासस्त-त्रोच्छब्दस्य पूर्वपदत्वाद्भवति गतिस्वरः। पश्चादभिशब्दस्य समासे ऽभेर्गतिस्वरं बाधित्वा निघातेन भाव्यम्। तत्र कृदुत्तरपदप्रकृतिस्वरेण उद एव गतिस्वरो भविष्यति नार्थो-नन्तरग्रहणेन अथ वोद्धरतिक्रियामित्यादिनाभेर्गतित्वं प्रतिपाद्यते। एवं तर्हीति। प-रविप्रतिषेधमनपेक्ष्य व्यवहितगतिनिवृत्त्यर्थमनन्तरग्रहणं क्रियते। यदि च कृद्ग्रहणप-रिभाषा न स्यात्। तत कान्तउत्तरपदे गतेः स्वरो विधीयमानो व्यवहितस्य न प्राप्नो-तीति किं तन्निवृत्त्यर्थेनानन्तरग्रहणेन तत् कृतमेतां परिभाषां ज्ञापयति। परिभाषा-ज्ञापनार्थमेव च परप्रतिषेधो नापेक्ष्यते। ननु च कृद्ग्रहणे गतिपूर्वस्यापि ग्रहणं ज्ञा-प्यतां कारकपूर्वस्य कथं ज्ञाप्यते। उच्यते। पूर्वाचार्यैस्तावदेषा परिभाषा पठिता। इह त्वनन्तरग्रहणेन सैवाभ्यनुज्ञायते॥

तादौ। गतेः। स्वरविधानात् क्रियायोगी गतिसंज्ञाविधानात्तकारादिः। कृदेव संभ-वति नान्य इति मत्वाह। कृद्ग्रहणं किमर्थमिति। यथेति। नितीत्यनेन प्रत्ययग्रह-णपरिभाषया तदन्तस्योपस्थानात्तस्यैव तकारादित्वं विशेषणं स्यात्। कृद्ग्रहणे तु श्रु-तस्य तादित्वं विशेषणं विज्ञायते। तादौ नितीति। यथोतस्य प्रत्ययादस्संयोगपर्वादित्वत्र

र्थक्यम् *। तादौ निति कृद्ग्रहणमनर्थकम्। क्रियमाणेपि वै कृद्ग्रहणे ऽनिष्टं शक्यं विज्ञातुम्। तकारादौ उत्तरपदे निति कृतीति। अक्रियमाणेपि चेष्टं नियस्तकारादिस्तदन्त उत्तरपद इति। यावता क्रियमाणे चानिष्टं विज्ञायते। अक्रियमाणे चेष्टम्। अक्रियमाण एवेष्टं विज्ञास्यामः। कृदुपदेशे वा ताद्यर्थमिडर्थम् *। कृदुपदेशे वा ताद्यर्थमिडदेशे तर्हि ताद्यर्थं कृद्ग्रहणमिडर्थं कर्त्तव्यम्। कृदुपदेशे यस्तकारादिरित्येवं यथा विज्ञायेत। किं प्रयोजनम्। इडर्थम्। इडादावपि सिद्धं भवति। प्रलपिता प्रलपितुम्॥

अनिगन्तोञ्चतौ वप्रत्यये॥५२॥ अनिगन्तप्रकृतिस्वरत्वे यथादेशेप्रकृतिस्वरभावप्रसङ्गः *। अनिगन्तप्रकृतिस्वरत्वे यथादेशेप्रकृतिस्वरभावः प्राप्नोति। प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः। अनिगन्तवचनमिदानीं किमर्थं स्यात्। अनिगन्तवचनं किमर्थमिति चेदयथादिष्टार्थम् *। अयथादेशार्थमेतत् स्यात्। यदा यथादेशो न। कदा च यथादेशो न। यदा शाकलम्। उक्तं वा *। किमुक्तम्। समासे शाकलं न भवतीति। एवं तर्ह्यञ्चतेरकारो लुप्यते। प्रतीचः प्रतीचा। चुस्वरस्तत्र बाधको भविष्यति। अयमेवेष्यते। वक्ष्यत्येतत्। चौरनिगन्तोञ्चतौ वप्रत्यय इति। यत्तर्हि न्यध्योः प्रकृतिस्वरं शास्ति। एष हि यथादिष्टार्थमारम्भः। एतदप्ययथादिष्टार्थमेव। यदा यथादेशो न। कदा यथादेशो न। यदा शाकलम्। उक्तं वा *। किमुक्तम्। समासे शाकलं न भवतीति। यत्र तर्ह्यञ्चतेरकारो लुप्यते। अधीचः। अधीचा। चुस्वरस्तत्र बाधको भविष्यति। अयमेवेष्यते। वक्ष्यत्येतत्। चौरनिगन्तोञ्चतावप्रत्यय इति। यत्तर्हि नेरेव प्रकृतिस्वरं शास्ति। एष यथादिष्टार्थ आरम्भः। एतदप्ययथादिष्टार्थमेव। कथम्। अकृ-

---

विशेषणविशेष्यभावे कामचारादसंयोगपूर्वग्रहणेनोकारो विशेष्यते न तु प्रत्ययस्तथेहापि तादिग्रहणेन निर्विशेष्यते न तु तदन्तम्। कृदुपदेशेवेति। वाशब्दस्त्वर्थे कृतासुपदेशः शास्त्रं तत्र यस्तादिरिति प्रत्ययार्थं कृद्ग्रहणमित्यर्थः।

अनिगं। अनिगन्तेति। प्रतीचेत्यादावर्थवदनिगन्तग्रहणमिति। प्रत्यङित्यत्र यथादेशे कृते निगन्तत्वात् प्रकृतिस्वरप्रसङ्गः। अनिगन्तवचनमिति। प्रतीच इत्यादिषुक्ष

ते यणादेशे पूर्वपदप्रकृतिस्वरत्वे कृते उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येत्येष स्वरः सिद्धो भवति। न्यङ्। तस्मात्सुष्ठूच्यते अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरत्वप्रसङ्ग इति। चोरनिगन्तो ञ्चतावप्रत्यये*। चुस्वरादनिगन्तोऽञ्चतावप्रत्यय इत्येतद्भवति विप्रतिषेधेन। चुस्वरस्यावकाशः दधीचः पश्य। दधीचा। दधीचे। अनिगन्तोञ्चतावप्रत्ययइत्यस्यावकाशः। पराङ्। पराञ्चौ। पराञ्चः। इहोभयं प्राप्नोति। अवाचा। अवाचे। अनिगन्तोञ्चतावप्रत्यय इत्येतद्भवति विप्रतिषेधेन। न वा चुस्वरस्यपूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवादप्रसङ्गः*। न वा एतद्विप्रतिषेधेनापि सिध्यति। कथं तर्हि सिध्यति। चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधात्। चुस्वरः पूर्वपदप्रकृतिस्वरभाविनः प्रतिषेध्यः। इतरथा हि सर्वापवादश्चुस्वरः। अक्रियमाणे हि प्रतिषेधे सर्वापवादोयं चुस्वरः। कथम्। प्रत्ययस्वरस्यापवादोऽनुदात्तौ सुप्पितौ। अनुदात्तौ सुप्पितावित्यस्योदात्तनिवृत्तिस्वरः। उदात्तनिवृत्तिस्वरस्य चुस्वरः। स यथैवोदात्तनिवृत्तिस्वरं बाधते। एवमनिगन्तस्वरमपि बाधेत। यदि तावत्संख्यातः साम्यम्। अयमपि चतुर्थः। समासान्तोदात्तत्वस्यापवादोऽव्ययस्वरः। अव्ययस्वरय कृत्स्वरः कृत्स्वरस्यायम्। उभयोश्चतुर्थयोयुक्तो विप्रतिषेधः। सतिशिष्टस्तर्हि चुस्वरः। कथम्। चा-

---

तुस्वरेण भाव्यमिति अनवकाशमनिगन्तग्रहणं मन्यते। यत्तर्हि न्यध्योरिति। न्यध्योरेव कृते यणादेशे प्रकृतिस्वरो नान्यस्येति नियम आश्रीयते। यत्र तर्हीति। अधीचेत्यादाविव्यर्थः। यत्तर्हि नेरेवेति। निशब्दस्यैकाच्त्वान्नीचेत्यादौ चुस्वरस्य प्रकृतिस्वरस्य च विशेषो नास्ति। एष हि यणादिष्टार्थ इति। ननु नेर्यणादेशे कृते ऽनच्कत्वात्कस्य स्वरः। एवं मन्यते। यत्र यण् भविष्यति तस्मिन्विषयेऽन्तरङ्गमपि यणं बाधित्वा पूर्वं नेः स्वरो भवति। एवं प्रत्यङ्ङादिष्वनिगन्त इति प्रतिषेधो भविष्यति। पश्चाद्यणादेशः। एतदपीति। वचनसामर्थ्यादकृतएवान्तरङ्गे यणादेशे निशब्दस्वरो भवति। यणि कृते स्वरभाजो ऽभावात् प्रत्यङादिषु तु यणादेश एवान्तरङ्गत्वात् प्राप्नोति। तस्मादिति। न च यणादेशस्य स्थानिवद्भावोस्ति। पूर्वपदप्रकृतिस्वरविधानादपूर्वविधित्वात्। यदि तावदिति सर्वापवादत्वं चुस्वरस्य निवर्त्तयति। लक्षणगणनायां द्वयोरपि चतुर्थत्वमित्यर्थः। अव्ययस्वर इति। तत्पुरुषे तुल्यार्थेति प्रकृतिस्वरः। इह च गतिश्च इत्यमनुव-

र्विष्यते। यत्रास्यैतद्रूपं भवति। क्व चास्यैतद्रूपं भवति। यजादावसर्वनामस्थानेऽभिनिर्वृत्ते अकारलोपे नकारलोपे च कृते। तस्मात्सुष्ठूच्यते न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनिप्रतिषेधादितरथा हि सर्वापवाद इति। विभक्तीषत्स्वरात्कृत्स्वरः*। विभक्तीषत्स्वरात् कृत्ईषत्स्वराच्च कृत्स्वरो भवति विप्रतिषेधेन। विभक्तिस्वरस्यावकाशः। अच्चशौण्डः। स्त्रीशौण्डः। कृत्स्वरस्यावकाशः। इध्मव्रश्चनः। पलाशशातनः। इहोभयं प्राप्नोति। पूर्वाह्णे स्फोटकः। अपराह्णे स्फोटकः। कृत्स्वरो भवति विप्रतिषेधेन। ईषत्स्वरस्यावकाशः। ईषत्कडारः। ईषत्पिङ्गलः। कृत्स्वरस्य स एव। इहोभयं प्राप्नोति। ईषद्भेदः। कृत्स्वरो भवति विप्रतिषेधेन। चित्स्वराद्धारिस्वरः। चित्स्वराद्धारिस्वरो भवतिविप्रतिषेधेन। चित्स्वरस्यावकाशः। चलनः। चोपनः। हारिस्वरस्यावकाशः। याज्ञिकाश्वः। वैयाकरणहस्ती। इहोभयं प्राप्नोति। पितृगवः। मातृगवः। हारिस्वरो भवति विप्रतिषेधेन। कृत्स्वराच्च हारिस्वरो विप्रतिषेधेन। कृत्स्वरस्यावकाशः इध्मव्रश्चनः। पलाशशातनः। हारिस्वरस्य स एव। इहोभयं प्राप्नोति। अच्चहृतः बाडवहार्यः। हारिस्वरो भवति विप्रतिषेधेन। न वा हरणप्रतिषेधोज्ञापकः कृत्स्वराबाधकत्वस्य*। न वार्थो विप्रतिषेधेन। किं कारणम्। हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य। यदमहरण इति प्रतिषेधं शास्ति। तज्ज्ञापयत्याचार्यः न कृत्स्वरो हारिस्वरं बाधत इति। नैतदस्ति ज्ञापकम्। अनो भावकर्मवचन इत्येतस्मिन् प्राप्ते तत एतदुच्यतेयद्येवं साधीयोज्ञापकं कृत्स्वरस्यापवादोऽनोभावकर्मवचन इति बाधकं किलायं बाधते। किं पुनस्तं न बाधिष्यते। यु-

---

र्त्तते। सतिशिष्ट इति। ततः सर्वापवाद एव चुस्वरः। कृत्स्वरादिति। पूर्वविप्रतिषेधोत्र विवक्षितः। अच्चहृत इति। अनुदाहरणमेतदित्याहुः। अत्राहि तृतीयाकर्मणीत्यनेन कृत्स्वरापवादः पूर्वपदप्रकृतिस्वरत्वं प्राप्नोति। तत्परत्वादेव हारिस्वरो बाधते। न कृत्स्वरइति। परोपीत्यर्थः। अनोभावकर्मवचन इत्यनेनान्तोदात्तत्वं विधीयते। कर्मवाचो हरणशब्दो वाडवहरणमित्युदाहरणम्। किं पुनस्तमिति। कृत्स्वरमित्यर्थः। तस्मादहरण इति प्रतिषेधो येन केन चिल्लक्षणेन प्राप्तस्य स्वरस्य हारिस्वरो बाधक इति

क्तस्वरस्य कृत्स्वरो भवति विप्रतिषेधेन। युक्तस्वरस्यावकाशः। गोवल्लव.। अश्ववल्लवः। कृत्स्वरस्य स एव। इहोभयं प्राप्नोति। गोसंख्यः। पशुसंख्यः। अश्वसंख्यः। युक्तस्वरो भवति विप्रतिषेधेन॥

उपमानं शब्दार्थप्रकृतावेव॥ ८०॥ उपमानमिति किमर्थम्। शब्दार्थप्रकृतावेवेतीयत्युच्यमाने पूर्वयातिप्रसक्तमिति कृत्वा नियमोयं विज्ञायेत। तत्र को दोषः। इह न स्यात्। पुष्पहारी। फलहारी। उपमानग्रहणे पुनः क्रियमाणे न दोषो भवति। अथशब्दार्थग्रहणं किमर्थम्। उपमानं प्रकृतावेवेतीयत्युच्यमाने इहापि प्रसज्येत। वृकावञ्ची। वृकप्रेक्षी। शब्दार्थग्रहणे पुनः क्रियमाणे न दोषो भवति। अथ प्रकृतिग्रहणं किमर्थम्। शब्दार्थप्रकृतिरेव यो नित्यं तत्र यथा स्यात्। इह मा भूत्। कोकिलाभिव्याहारी। गर्दभोच्चारी। अथैवकारः किमर्थः। नियमार्थः। नैतदस्ति प्रयोजनम्। सिद्धे विधिरारभ्यमाणोन्तरेणैवकारं नियमार्थो भविष्यति। इष्टतोवधारणार्थस्तर्हि। यथैवं विज्ञायेत उपमानं शब्दार्थप्रकृतावेवेति। मैवं विज्ञायि उपमानमेव शब्दार्थप्रकृताविति। शब्दार्थप्रकृतौ ह्युपमानं चानुपमानं चाद्युदात्तमिष्यते। साध्वध्यायी। विलम्बिताध्यायी॥

---

ज्ञापयतीत्यर्थः। युक्तस्वरस्येति। पूर्वपदाद्युदात्तत्वमत्रापि पूर्वविप्रतिषेधो विवक्षितः। गोसंख्य इति। नन्वत्र थाथादिस्वरः प्राप्नोति न कृत्स्वरः। एवं तर्हि मूलप्राप्तिमाश्रित्योक्तमित्यदोषः॥

उपमानम्। उपमानमिति किमर्थमिति। संयोगविभागकरणसामर्थ्याच्छिष्टप्रयोगाच्चोपमानमेव नियस्यइति प्रश्नः। इतरः सत्यपि योगविभागे इष्टा व्यवस्था न लभ्यते। लक्ष्यानुसारणे च प्रतिपत्तिगौरवप्रसङ्ग इत्याह। शब्दार्थप्रकृतावेवेति। अथ शब्दार्थग्रहणमिति। प्रकृतिग्रहणादेव विशिष्टार्थप्रकृतिर्गृह्यतइतिप्रश्नः। इतरस्तु दुर्ज्ञानोविशेष इति मत्वाह। उपमानमिति। वृकवञ्चीति। कर्तर्युपमान इति णिनिः। कृत्स्वरएवात्र भवति। शब्दार्थप्रकृतिरेव योनित्यमिति। उपसर्गसंबन्धमन्तरेणैव यो धातुः शब्दं वर्त्तते स इह गृह्यते। यस्य तूपसर्गेण शब्दार्थत्वं द्योत्यते तस्य ग्रहणं न भवतीत्यर्थः।

दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ८२ ॥ जे दीर्घान्तस्यादिरुदात्तो भवतीत्येतस्मादन्त्यात्पूर्वं बह्वच इत्येतद्भवति विप्रतिषेधेन। जेदीर्घान्तस्यादिरुदात्तो भवतीत्यस्यावकाशः। कुटीजः शमीजः। अन्त्यात्पूर्वं बह्वच इत्यस्यावकाशः। उपसरजो मन्दुरजः। इहोभयं प्राप्नोति। आमलकीजः। वलभीजः। अन्त्यात्पूर्वं बह्वच इत्येतद्भवति विप्रतिषेधेन॥

नभूताधिकसञ्जीवमद्राश्मकज्जलम्॥९१॥ आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्*। आद्युदात्तप्रकरणेदिवोदासादीनांछन्दस्युपसंख्यानंकर्त्तव्यम्। दिवोदासाय गायते। वध्र्यश्वाय दाशुषे॥

अन्तः ॥ ९२ ॥ सर्वं गुणकार्त्स्न्ये ॥ ९३ ॥ सर्वग्रहणं किमर्थम्। गुणकार्त्स्न्यइतीयत्युच्यमाने इहापि प्रसज्येत। परमशुक्लः। परमकृष्ण इति। सर्वग्रहणे पुनः क्रियमाणे न दोषो भवति। अथ गुणग्रहणं किमर्थम्। सर्वं कार्त्स्न्यइतीयत्युच्यमाने इहापि प्रसज्येत। सर्वसौवर्णः। सर्वराजत इति। गुणग्रहणे पुनः क्रियमाणे न दोषो भवति। अथ कार्त्स्न्यग्रहणं किमर्थम्। सर्वं गुणइतीयत्युच्यमाने इहापि प्रसज्येत। सर्वेषां श्वेतः सर्वश्वेत इति। कथं चात्र समासः। षष्ठी सुबन्तेन समस्यते इति। गुणेन नेति प्रतिषेधः प्राप्नोति। एवं तर्हि गुणात्तरेण समासस्तरलोपश्च *। गुणात्तरेण समासो वक्तव्यः तरलोपश्च। सर्वेषां श्वेततरः सर्वश्वेतः॥

उत्तरपदवृद्धौ सर्वं च॥ १०५ ॥ अयुक्तोयं निर्देशः। नह्युत्तरपदं

---

न भूत। दिवोदासायेति। दिवश्च दासइति अलुक्॥

सर्वंगु। यत्र गुणान्तरस्याभावः तत्र गुणकार्त्स्न्यं भवति यथा सर्वशुक्ल इति शुक्लेन गुणेन सर्वावयवानां व्यापनात्। परमशुक्ल इति। आश्रयव्याप्त्या शुक्लस्य पारम्यमिति गुणकार्त्स्न्यमस्ति। सौवर्ण इति। विकारविषयमत्र कार्त्स्न्यं न गुणविषयम्। अथ कार्त्स्न्यग्रहणमिति। सर्वशब्दः कार्त्स्न्ये एव वर्तत इति प्रश्नः। सर्वेषां श्वेत इति। सर्वशब्दोत्र गुणिकार्त्स्न्ये वर्ततेन तु गुणकार्त्स्न्यसर्वेषां श्वेतो गुण इत्यर्थः। गुणात्तरेणेति। गुणात्परो यस्तरप् तदन्तेनेत्यर्थः। सर्वेषामिति गुणसंबन्धे षष्ठी। पटस्य शौक्ल्यमिति यथा। श्वेततर इति। गुणवाचिन एवाश्रितगुणान्तरप्रकर्षनिमित्तः प्रत्ययः। सर्वेषां पटानां द्रव्यान्तराधारश्वेद गुणापेक्षया सातिशयः श्वेतो गुण इत्यर्थः॥

उत्तर। वृद्धावित्येव वृद्धिमद् उत्तरपदमिति परिग्रहे सिद्धे उत्तरपदग्रहणं तदधिका-

नाम वृद्धिरस्ति । कथं तर्हि निर्देशः कर्त्तव्यः । वृद्धिमत्युत्तरपद इति । स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । नैवं विज्ञायते । उत्तरपदं वृद्धिः उत्तरपदवृद्धिः उत्तरपदवृद्धाविति । कथं तर्हि उत्तरपदस्य वृद्धिरस्मिन् सोयमुत्तरपदवृद्धिः उत्तरपदवृद्धाविति ॥

बहुव्रीहौ विश्वं संज्ञायाम् ॥१०६॥ बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्तः * । बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्त इत्येतद्भवति विप्रतिषेधेन । बहुव्रीहौ विश्वं संज्ञाया मित्यस्यावकाशः । विश्वदेवः । विश्वयशाः । मित्राजिनयोरन्त इत्यस्यावकाशः । कुलमित्रम् । कुलाजिनम् । इहोभयं प्राप्नोति । विश्वामित्रः । विश्वाजिनः । मित्राजिनयोरन्त इत्येतद्भवति विप्रतिषेधेन । अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसंख्यानम् * । अन्तोदात्तप्रकरणे मरुद्वृधादीनांछन्दस्युपसंख्यानंकर्त्तव्यम् । मरुद्वृधः सुवया उपतस्थे ॥

उदराश्वेषुषु ॥ १०७ ॥ क्षेपे ॥ १०८ ॥ उदरादिभ्यो नञ्सुभ्याम् * । उदराश्वेषुषुक्षेप इत्येतस्मान्नञ्सुभ्यामित्येतद्भवति विप्रतिषेधेन । उदराश्वेषुषु क्षेपे इत्यस्यावकाशः । कुण्डोदरो घटोदरः । नञ् सुभ्यामित्यस्यावकाशः । अयवः । अतिलः । अमाषः । सुयवः । सुतिलः । सुमाषः । इहोभयं प्राप्नोति । अनुदरः सूदरः नञ्सुभ्यामित्येतद्भवति विप्रतिषेधेन ॥

सोर्मनसी अलोमोषसी ॥ ११७ ॥ सोर्मनसोः कपि * । सोर्मनसी अलोमोषसी इत्येतस्मात्कपि पूर्वमित्येतद्भवति विप्रतिषेधेन । सोर्मनसी अलोमोषसी इत्येतस्यावकाशः । सुशर्माणमधिनावं रुहेम । सुशर्मासि सुप्रतिष्ठानः । सुस्रोताः । सुपयाः । सुवर्चाः । कपि पूर्वमित्यस्यावकाशः । अयवकः । अतिलकः । इहोभयं प्राप्नोति । सुशर्मकः । सुस्रोतस्कः । कपि पूर्वमित्येतद्भवति विप्रतिषेधेन ॥

कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ १२१ ॥ पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं भवति विप्रतिषेधेन । परिप्रत्युपापावर्ज्यमा-

---

रविहितवृद्धिपरिग्रहार्थम् ॥

उदरा । सूदर इति । प्रकरणादिवर्णादत्र क्षेपप्रतिपत्तिः ॥

नाहोरात्रावयवेष्वित्यस्यावकाशः। परित्रिगर्त्तम्। परिसौवीरम्। कूलादीनामाद्युदात्तत्वस्यावकाशः। अनुकूलम्। अतिकूलम्। इहोभयं प्राप्नोति। परिकूलम्। प्रतिकूलम्। कूलादीनामाद्युदात्तत्वं भवति विप्रतिषेधेन॥

चेलखेटकटुककाण्डंगर्हायाम्॥ १२९॥ अकर्मधारये राज्यम्॥ १३०॥ चेलराज्यादिभ्योऽव्ययम्*। चेलराज्यादिस्वरादव्ययस्वरो भवति विप्रतिषेधेन। चेलराज्यादिस्वरस्यावकाशः। भार्याचेलम्। पितृचेलम्। ब्राह्मणराज्यम्। अव्ययस्वरस्यावकाशः। निष्कौशाम्बिः। निर्वाराणसिः। इहोभयं प्राप्नोति। कुचेलम्। कुराज्यम्। अव्ययस्वरो भवति विप्रतिषेधेन। स तर्हि पूर्वविप्रतिषेधो वक्तव्यो, न वक्तव्यः। इष्टवाची परशब्दः। विप्रतिषेधे परं यदिष्टं तद्भवति। कुण्डं वनम्। कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम्*। कुण्डाद्युदात्तत्वे तत्समुदायग्रहणं कर्त्तव्यम्। वनसमुदायवाची चेत्सकुण्डशब्दो भवतीति वक्तव्यम्। इह मा भूत्। मृत्कुण्डम्। कुण्डं वनम्॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्॥

---

चेलखे। कुण्डमिति। कुण्डशब्दोऽस्ति भाजनविशेषवाची। अस्ति समुदायवाची। इक्षुखण्डभिक्षुसमुदाय इत्यर्थः। तत्र वनशब्देन भाजनविशेषवाची निवर्त्यते। वनशब्दस्तु समुदायवाच्यप्यस्ति आम्रवणमिति। जलपर्यायोप्यस्ति। ततश्च यथा तटाकादयो विशिष्टाधारजलवाचिन एवं कुण्डशब्दोपि यथा नीलं कुण्डमिति। ततश्च वनग्रहणेऽप्युपादीयमाने नास्त्यतिप्रसङ्गनिवृत्तिरित्याह। कुण्डाद्युदात्तत्व इति। तच्छब्देन पूर्वपरामर्शः। वनसमुदायवाचीति। वनमेव समुदायो वनसमुदायः वनशब्दवाच्यत्वाच्च वनं समुदाय उच्यते। समुदायवाची वनशब्दोऽत्राश्रयणीयो न तूदकवाचीत्यर्थः। अन्ये त्वाहुः। वनानां समुदायो वनसमुदाय इति। तेन शरवणसमुदायः शरकुण्डशब्देनोच्यते। मृत्कुण्डमिति। भाजनविशेषवाची विशिष्टसंस्थानाधारजलवाची वाच कुण्डशब्दः॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्॥

गतिकारकोपपदात्कृत् ॥ १३९ ॥ गतिकारकोपपदादिति किमर्थम् । इह मा भूत् । परमं कारकं परमकारकम् । गतिकारकोपपदादित्युच्यमाने ऽत्रापि प्राप्नोति । एतदपि हि कारकम् । इदं तर्हि देवदत्तस्य कारकं देवदत्तकारकम् । इदं चाप्युदाहरणम् । परमं कारकं परमकारकमिति । ननु चोक्तं गतिकारकोपपदादित्युच्यमाने ऽत्रापि प्राप्नोति । एतदपि हि कारकमिति । नैतत्कारकम् । कारकविशेषणमेतत् । यावद्ब्रूयात् प्रकृष्टं कारकं शोभनं कारकमिति तावदेव तत्परमकारकमिति । अथ कृद्ग्रहणं किमर्थम् । इह मा भूत् । निष्कौशाम्बिः । निर्वाराणसिरिति । गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यम् अन्यस्योत्तरपदस्याभावात् *। गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणमनर्थकम् । अन्यस्योत्तरपदस्याभावात् । न ह्यन्यद्गत्यादिभ्य उत्तरपदमस्ति । अन्यदतः कृतः । किं कारणम् । धातोर्हि द्वये प्रत्यया विधीयन्ते । तिङः कृतश्च । तत्र कृता सह समासो भवति । तिङा च न भवति । तत्रान्तरेण कृद्ग्रहणं कृत एव भविष्यति । ननु चेदानीमेवोदाहृतम् । निष्कौशाम्बिः निर्वाराणसिरिति । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भव-

---

गतिका । परमकारकमिति । विचार्यं किं चिदत्रास्तीत्यस्योपन्यासः । यथा संप्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति । तथा कारकशब्दोपि । तदुक्तम् । स्वशब्दैरविधाने तु सधर्मो नाभिधीयते । विभक्त्यादिभिरेवासावुपकारः प्रतीयत इति ॥ एवं च तद्विशेषणमपि परमशब्दः कारकवाची न भवतीति प्रत्युदाहरणम् । एतदपीति न ह्यकारकस्य कारकशब्देनाभिधानम् । ततश्च तद्विशेषणस्यापि कारकत्वमस्त्येव । यथा घटं करोति भीषणमित्यादौ । देवदत्तस्येति । शेषविवक्षायां षष्ठी तृजकाभ्यां कर्त्तरि कर्त्तरि चेति कारकषष्ठ्याः समासप्रतिषेधादिह षष्ठीसमासो भवत्येव । नैतत्कारकमिति । कृदन्ता हि क्रियायोग्यताऽऽविष्टद्रव्यवाचिनो न तद्भूतां कारकतां प्रतिपादयन्ति । परममित्ये तच्च न करोतिक्रियाविशेषणम् । यतः कर्मकारकमेतत्स्यादपि तु द्रव्यविशेषणं तथा च समानाधिकरणसमास उपपद्यते । अथ कृद्ग्रहणमिति । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो नान्यं प्रतीति प्रश्नः । निष्कौशाम्बिरिति । क्रमणक्रियापेक्षमस्ति निसो गतित्वमिति भावः । अन्यस्योत्तरपदस्याभावादिति । गतिकारकाभ्यां तावत्संबन्धात् क्रियावाचिकृदन्तमेवोत्तरपदमाक्षिप्तमुपपदमपि धात्वधिकारे सप्तमीनिर्दि-

तः। न च निसः कौशाम्बीशब्दं प्रति क्रियायोगः। कृत्प्रकृतौ वा गतित्वाद्धिकार्थं कृद्ग्रहणम् *। कृत्प्रकृतौ तर्हि गतित्वादधिकार्थं कृद्ग्रहणं कर्त्तव्यम्। कृत्प्रकृतिर्धातुः। धातुं च प्रति क्रियायोगः। तत्र यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति इहैव स्यात् प्रणीरुन्नीरिति। इह न स्यात्। प्रणायकः। उन्नायकः। एतदपि। नास्ति प्रयोजनम्। यत्क्रियायुक्ता इति नैवं विज्ञायते यस्य क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति। कथं तर्हि या क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति। न च कश्चिच्छब्दोऽस्ति केवलो यस्तस्यार्थस्य वाचकः स्यात्। केवलस्तस्यार्थस्य वाचको नास्तीति कृत्वा कृदधिकस्य भविष्यति। ननु चायं तस्यैवार्थस्य वाचकः प्रणीरुन्नीरिति। एषोऽपि हि कर्तृविशिष्टस्यैव। अयं तर्हि तस्यैवार्थस्य वाचकः। प्रभवनमिति। तस्मात्कृद्ग्रहणं कर्तव्यम्। यदि कृद्ग्रहणं क्रियते। आमन्त्रस्वरो न प्राप्नोति। प्रपचतितरां प्रपचतितमामिति। प्रजल्पतितरां प्रजल्पतितमामिति। असति

---

ष्टं प्रत्ययनिमित्तमुच्यते इति तेनापि कृदन्तमेवाच्छिन्नम्। कृत्प्रकृतौ वेति। वाशब्दस्त्वर्थे। धातुप्रत्ययसमुदायपरिग्रहार्थं कृद्ग्रहणमन्यथा धातावेवोत्तरपदे स्वरः स्यादित्यर्थः। प्रणीरिति। अव्ययस्वरापवादोऽत्र कृत्स्वरः। यस्य क्रियेति। अन्वयव्यतिरेकाभ्यां यस्य वाच्या क्रियेत्यर्थः। धातोरेव च क्रियावाचित्वेति तमेव प्रति गत्युपसर्गसंज्ञाप्रसङ्गः। या क्रियेति। क्रियालक्षणमर्थं प्रति गत्युपसर्गसंज्ञे भवतः केवलायाश्च क्रियाया व्यवहारानङ्गत्वाद्वस्त्वन्तरसंसृष्टक्रियावाचिकृदन्तपरिग्रहः सिद्ध इत्यर्थः। न च कश्चित् केवल इति। केवलक्रियावाचित्वात् केवल इत्युक्तम्। इतरस्तु शब्दकं वक्ष्यमनेनीकर्मित मत्वा चोदयति। ननु चायमिति। एषोपीति। तस्मात्कारकसहिताया एव क्रियायाः सर्वत्र प्रतिपादनात् प्रणीप्रयाणकादीनां न कश्चिद्भेदः। प्रभवनमिति। भावे ल्युड्विधानात्-कारकासंसृष्टैव क्रियाभिधीयते। प्रपचतितरामिति। प्रशब्दस्यामन्तेन समासः। गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरित्यस्य त्वयमर्थो यदा गत्यादीनां कृद्भिः सह समासो भवति तदा प्राक् सुबुत्पत्तेरिति न तु कृद्भिरेव समास इति। तेन तद्धितान्तेनापि सुप्युत्पन्ने समासः प्रवर्त्तते। नन्वसत्यपि कृद्ग्रहणेऽत्र स्वरो न सिध्यति संख्याकालसाधनोपग्रहविशिष्टायाः क्रियाया अभिधानान्न केवलाया इत्याह। असति पुनरिति। द्रव्यविशिष्टस्येति। धातुः साधुरूपतां प्रतिपादयति

पुनः कृद्ग्रहणे क्रियाप्रधानमाख्यातं तस्यातिशये तरबुत्पद्यते । तरबन्तात् स्वार्थे आम् । तत्र यत्क्रियायुक्ता इति भवत्येव संघातं प्रति क्रियायोगः । न च कश्चित् केवलः शब्दोऽस्ति यस्तस्यार्थस्य वाचकः स्यात् । केवलस्तस्यार्थस्य वाचको नास्तीति कृत्वाधिकस्य भविष्यति। ननु चायं तस्यार्थस्य वाचकः प्रभवनमिति। एषोऽपि हि द्रव्यविशिष्टस्य वाचकः । कथम् । कृदभिहितो भावो द्रव्यवद्भवति क्रियावदपीति ॥

अन्तः ॥ ९२ ॥ किं समासस्यान्त उदात्तो भवति आहो स्विदुत्तरपदस्य । कुतः संदेहः । उभयं प्रकृतम् । तत्रान्यतरच्छक्यं विशेषयितुम् । कश्चात्र विशेषः । अन्तोदात्तत्वं समासस्येति चेत्कप्युपसंख्यानम् * । अन्तोदात्तत्व समासस्येति चेत् कप्युपसंख्यानं कर्त्तव्यम् । इदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने कपि चेति वक्तव्यम् । इहापि यथा स्यात् । इदंप्रथमकाः । अस्तु तर्ह्युत्तरपदस्य । उत्तरपदान्तोदात्तत्व नञ्सुभ्यां समासान्तोदात्तत्वम् *। उत्तरपदस्यान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वं च वक्तव्यम् । अन्रचः । बह्वृचः । अपर आह । उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वम् । उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वं च वक्तव्यम् । अज्ञकः । अश्वकः । कपि पूर्वमित्यस्यापवादः ह्रस्वान्तेन्त्यात्पूर्वमिति ।

---

प्रत्ययस्तु द्रव्यधर्मलिङ्गसंख्यायुक्तमर्थमिति भावः । द्रव्यवदिति । प्रसिद्धघटादिद्रव्यापेक्षो वतिनिर्देशो यथा घटादिद्रव्यं घटादिभिः शब्दैर्लिङ्गसंख्याकर्मादिशक्तियुक्तमभिधीयते तथा पाकादिभिः शब्दैः पाकादिको भावः । क्रिया वदपीति । तेन भोक्तुं पाक इत्यादौ क्रियोपपदाश्रयः प्रत्ययस्तदेवमव्याप्तिप्रसङ्गात् प्रत्याख्यातं कृद्ग्रहणम् ।

अन्तः । उभयं प्रकृतमिति । समासस्येत्यपि प्रकृतमुत्तरपदादिरित्यत उत्तरपदग्रहणमपि । तत्रान्यतरदिति । अन्तोदात्तविधानेन विशेषेवस्थापयितुमित्यर्थः । अथ वा समासेनोत्तरपदमुत्तरपदेन वा समास इत्यर्थः । इदंप्रथमकाइति । मशब्दाकारस्यान्तोदात्तत्वमिष्यते कपस्तु समासान्तत्वात् प्राप्नोतीति कपि चेति वक्तव्यम् । तेन कपि परतः पूर्वस्योदात्तत्वं सिध्यति । अन्रच इति । अकारः समासस्यावयवो नोत्तरपदस्येति तस्योदात्तत्वं न प्राप्नोति । अपर आहेति । प्रकारान्तरसद्भावात् पूर्वस्माद्भेदः । अज्ञक इति । अत्र कप उदात्तत्वमिष्यते तच्च उत्तरपदस्य कार्यित्वेन सिध्यति । समासे तु कार्यभाक्त्वं सिध्यति । कपि पूर्वमित्यस्यापवाद इति । अज्ञकशब्दे नञः परस्य कपि पूर्वस्य एका-

तत्र ह्रस्वान्तेऽन्त्यात्पूर्वउदात्तभावो नास्तीति कृत्वोत्सर्गेणान्तोदात्तत्वं प्राप्नोति । न वा कपि पूर्ववचनं ज्ञापकमुत्तरपदान्तोदात्तत्वस्य ॥ न वा एष दोषः । किं कारणम् । यदयं कपि पूर्वमित्याह तज् ज्ञापयत्याचार्यः उत्तरपदस्यान्तोदात्तत्वं न भवतीति । एवमपि कुत एतत् समासस्यान्त उदात्तो भवतीति । प्रकरणाच्च समासान्तोदात्तत्वम् ॥ प्रकृतं समासग्रहणमनुवर्त्तते । क्व प्रकृतम् । चौ समासस्येति । ननु चौक्तमन्तोदात्तत्वं समासस्येति चेत् कपि उपसंख्यानमिति । नैष दोषः । उत्तरपदग्रहणमपि प्रकृतमनुवर्त्तते । क्व प्रकृतम् । उत्तरपदादिरिति । तत्रैवमभिसंबन्धः करिष्यते । नञ्सुभ्यां समासस्यान्त उदात्तो भवतीति । इदमेतत्तज्ज्ञः प्रथमपूरणयोः क्रियागणने उत्तरपदस्येति ॥

कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४८ ॥ कारकाद्दत्तश्रुतयोरनाशिषिप्रतिषेधः ॥ कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधो वक्तव्यः । अनाहतो नदति देवदत्तः । सिद्धं तूभयनियमात् ॥ सिद्धमेतत् ।

---

चत्वादन्त्यात् पूर्व उदात्तभावो नास्तीति नञ्सुभ्यामित्यनेन स्वरेण भाव्यम् । स च स्वरः कपो न सिध्यति । नन्वन्त्यात् पूर्वो यत्रोदात्तभाव्यस्ति अयवक इत्यादौ तत्र कपि पूर्वमित्येतद् बाध्यतामत्रकादौ तु कथं बाध्यते । नह्यपवादो ऽप्रवर्त्तमान एवोत्सर्गं बाधते । नैष दोष । यथा हलादिः शेष इत्यभ्यासजातेराश्रयणादाटतुरित्यादावप्यनादेर्हलो निवृत्तिर्भवति एवं ह्रस्वान्तेऽन्त्यात् पूर्वमित्यत्रापि ह्रस्वजातेराश्रयणात्तक्रकौण्डिन्यन्यायात्सर्वत्र ह्रस्वान्ते कपि पूर्वमित्यस्याप्रवृत्तिरथ वा ह्रस्वान्तेऽन्त्यादित्येव वक्तव्यम् । कपि पूर्वमित्यतः पूर्वग्रहणमनुवर्त्तिष्यते तत्र पूर्वग्रहणं नियमार्थम् । ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति न तु कपि पूर्वमिति । एवं पक्षद्वये दोषमभिधाय लिङ्गेन समासस्य कार्यित्वं प्रतिपादयितुमाह । नवेति । अकुमारीक इत्यादौ कपि पूर्वस्य उदात्तार्थं कपि पूर्वमित्युच्यते । यदि च नञ्सुभ्यामित्यनेनोत्तरपदस्यान्तोदात्तत्वं स्यात्ततस्तेनैव सिद्धत्वात् कपिपूर्वमिति न कर्त्तव्यं स्यात् । नञ् सुभ्यामिति । नञ् सुभ्यां यदुत्तरपदं तदन्तस्य समासस्येत्यर्थः ॥

कारकात् । संज्ञायामनाचितादीनामिति विहितमन्तोदात्तत्वमनेन नियम्यते तेन देवपालित इत्यादौ न भवति । तृतीयाकर्मणीत्यनेन तु पूर्वपदप्रकृतिस्वरो भवति । अनाहत इति । देवदत्तशब्दः शब्दविशेषस्य संज्ञा । तत्राशीरभावादन्तोदात्तत्वाभावः ।

कथम् । उभयनियमात् । उभयतो नियमः करिष्यते । कारकाद्द-त्तश्रुतयोरेवाशिषि । आशिष्येव कारकाद्दत्तश्रुतयोरिति ॥

संज्ञायाम् ॥ १५९ ॥ ऋषिप्रतिषेधो मित्रे * । ऋषिप्रतिषेधो मित्रे वक्तव्यः । विश्वामित्र ऋषिः ॥

बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥ किमर्थं बहोर्नञ्वदतिदेशः क्रियते । न नञ्सुबसुभ्य इत्येवोच्येत । नैवं शक्यम् । उत्तरपदभूम्नी-ति वक्ष्यति तद्बहोरेव यथा स्यात् नञ्सुभ्यां माभूदिति । नैतद-स्ति प्रयोजनम् । एकयोगेऽपि हि सति यस्योत्तरपदभूमास्ति तस्यभ-विष्यति । कस्य चास्ति, बहोरेव । इदं तर्हि प्रयोजनम् । नगुणादयो-वया इति वक्ष्यति तद्बहोरेव यथा स्यात् । नञ्सुभ्यां मा भूदिति । एतदपि नास्ति प्रयोजनम् । एकयोगेऽपि हि सति यस्य गुणादयो-वयवाः सन्ति तस्य भविष्यति । कस्य च सन्ति । बहोरेव । अत उ-त्तरं पठति । बहोर्नञ्वदुत्तरपदाद्युदात्तार्थम् * । बहोर्नञ्वद-तिदेशः क्रियते । उत्तरपदस्याद्युदातार्थम् । उत्तरपदस्याद्युदात्तत्वं यथा स्यात् । विदशस्थमपि यन्नञः कार्यं तदपि बहोर्यथा स्यात् । न-ञो जरमरमित्रमृताः । अजरः अमरः । अमित्रः । अमृतः । बहुजरः । बहुमित्रः । बहुमृतः ॥

उपसर्गात्स्वाङ्गंध्रुवमपर्शु ॥ १७७ ॥ मुखस्यान्तोदात्तत्वादुपसर्गा-त् स्वाङ्गं ध्रुवम् * । मुखस्यान्तोदात्तत्वादुपसर्गात् स्वाङ्गं ध्रुवं भवति विप्रतिषेधेन । मुखस्यान्तोदात्तत्वस्यावकाशः । गौरमुखः । श्लक्ष्ण-

---

सिद्धं त्विति । तन्त्रेण सूत्रद्वयस्योच्चारणादेकं सूत्रम् । आशिष्येवेति । भिन्नक्रमत्वादे-वकारस्येति भावः । संज्ञायाम् । विश्वामित्र इति । मित्रे चर्षाविति दीर्घः । परत्वादने-मान्तोदात्तत्वं प्राप्तं प्रतिषिध्यते । ततो बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदान्तोदात्त-त्वं भवति ।

बहोः । यस्य गुणादय इति । यस्य विशेष्या इत्यर्थः । ननु चागुणः सुगुण इत्यादौ नञ् सुभ्यामुत्तरे गुणादयः सन्त्येव । एवं तर्ह्युत्तरपदभूमग्रहणेन पूर्वपदस्य विशेषणात् बहोरेव परेषां गुणादीनां प्रतिषेधो भविष्यति यस्योत्तरपदभूम्नि वर्त्तमानस्येति हि भा-ष्यकाराभिप्रायः ॥

उपसर्गात् । नित्यं यदेकरूपं तदिह ध्रुवं गृह्यते । निर्गतं ललाटमस्य निर्ललाट इ-

मुखः । उपसर्गात् स्वाङ्गंध्रुवमित्यस्यावकाशः । प्रस्फिक । प्रोदरः । इहोभयं प्राप्नोति प्रमुखः । उपसर्गात् स्वाङ्गंध्रुवमित्येतद्भवति विप्रतिषेधेन । कः पुनरत्र विशेषः । तेन वा सत्यनेन वा । सापवादः स विधिः । अयं पुनर्निरपवादः । अव्ययात्तस्य प्रतिषेधोपवादः ॥

अभेर्मुखम् ॥ १८५ ॥ अपाच्च ॥ १७८ ॥ किमर्थमिदमुच्यते । न उपसर्गात् स्वाङ्गंध्रुवमित्येव सिद्धम् । अभेर्मुखमपाच्चाध्रुवार्थम् *। अध्रुवार्थोऽयमारम्भः । अबहुव्रीह्यर्थौ वा* । अथ वा बहुव्रीहिरिति वर्तते । अबहुव्रीह्यर्थोऽयमारम्भः ॥

स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनामनाम च॥ १८७ ॥ स्फिगपूतग्रहणं किमर्थम् । न उपसर्गात्स्वाङ्गं ध्रुवमित्येव सिद्धम् । स्फिगपूतग्रहणं च । किम् । अध्रुवार्थमबहुव्रीह्यर्थमेव वा ॥

अतेरकृत्पदे ॥ १९१ ॥ अतेर्धातुलोपे*। अतेर्धातुलोपइति वक्तव्यम् । अकृत्पद इति ह्युच्यमाने इह च प्रसज्येत । शोभनो गार्ग्यः अतिगार्ग्य इति । इह च न स्यात् । अतिकारकः । अतिपदा शक्करी ॥

द्विचिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ १९७ ॥ किमिदं द्विचिभ्यां मूर्धन्यकारान्तग्रहणमाहोस्विदकारान्तग्रहणम् । कश्चात्र विशेषः । द्विचिभ्यां मूर्धन्यकारान्तग्रहणं चेदकारान्तस्योपसंख्यानम् * । द्वि-

---

ति ललाटस्य नित्यं निर्गमनाद् ध्रुवत्वम् । इह तु न भवत्यन्तोदात्तत्वमुदबाहुः क्रोशतीति न हि बाहोर्नित्यमूर्ध्वं दिगवस्थानम् । प्रमुख इति । यस्य नित्यं प्रगतं मुखं स प्रमुखः । अत्राहुः । मुखं स्वाङ्गमिति प्राप्तिर्नाव्ययदिक्छब्देति प्रतिषिद्धा ततो विप्रतिषेधानुपपत्तिः । उच्यते । नाव्ययदिक्छब्देति प्रतिषेधो बाधकोऽस्त्वथोपसर्गादिति । तत्र परत्वात्प्रतिषेधं बाधित्वैतदन्तोदात्तत्वं बाधकं प्रवर्तते ॥

अतेर । अतिकारक इति कारकमतिक्रान्त इति समासः । अतिशब्दो वृत्तिविषये क्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एवात्र लोपः । स्वरव्यङ्ग्यस्तत्र धातुलोपः । यदा पूर्वपदप्रकृतिस्वरस्तदा शोभनः कारक इत्यतिकारकशब्दस्यार्थः ॥

द्विचि । पूर्वपदप्रकृतिस्वरापवादो योगः । किमिदमिति । ननु चाकारान्तनिर्देशे मूर्धस्विति भाव्यमिति द्वैतानुपपत्तिः । उच्यते । न शब्दाश्रयं द्वैतं किं तु कार्यभेदाश्रयम् । यदा समासस्यान्तोदात्तत्वं विधीयते नित्यश्च समासान्त इति पक्षस्तदाकारान्तग्रहणमेव सामर्थ्याद् भवति । यदा तूत्तरपदस्यान्तोदात्तत्वमिति पक्षस्तदा कृते पि समासान्तो

त्रिभ्यां मूर्द्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसंख्यानं कर्तव्यम्। द्विमूर्धा। त्रिमूर्धा। अस्तु तर्हि नकारान्तग्रहणम्। नकारान्तेऽकारान्तस्य *। नकारान्ते सत्यकारान्तस्योपसंख्यानं कर्तव्यम्। द्विमूर्धः। त्रिमूर्धः। उदात्तलोपात्सिद्धम्। अस्तु तर्हि नकारान्तग्रहणम्। अन्तोदात्तत्वे कृते लोपः। उदात्तनिवृत्तिस्वरेण सिद्धम्। इदमिह संप्रधार्यम्। अन्तोदात्तत्वं क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वाल्लोपः। एवं तर्हि इदमिह संप्रधार्यम्। अन्तोदात्तत्वं क्रियतां समासान्त इति। किमत्र कर्तव्यम्। परत्वादन्तोदात्तत्वम्। नित्यः समासान्तः। कृतेप्यन्तोदात्तत्वे प्राप्नोत्यकृतेपि प्राप्नोति। अन्तोदात्तत्वमपि नित्यम्। कृतेऽपि समासान्ते प्राप्नोत्यकृतेपि प्राप्नोति। अनित्यमन्तोदात्तत्वं नहि कृते समासान्ते प्राप्नोति। परत्वाल्लोपेन भवितव्यम्। भवत्येव लोपः। यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्। न च समासान्त एवान्तोदात्तत्वस्य निमित्तं विहन्ति। अवश्यं लक्षणान्तरं लोपः प्रतीक्ष्यः। उभयोर्नित्ययोः परत्वादन्तोदात्तत्वम्। अन्तोदात्तत्वे कृते समासान्तः। टिलोपः। टिलोपे कृते उदात्त निवृत्तिस्वरेण सिद्धम्। युक्तं पुनरिदं विचारयितुम्। नन्वनेनासंदिग्धेन नकारान्तग्रहणेन भवितव्यम्। यावता मूर्धस्विन्त्युच्यते। यद्यकारान्तग्रहणं स्यात् मूर्धेष्विति ब्रूयात्। सैषा स-

---

तस्योत्तरपदे अनन्तर्भावान्नकारान्तस्य स्वरविधिरिति पक्षोवतिष्ठते। नकारान्तस्योपसंख्यानमिति। समासश्चेत् कार्यी नित्यश्च समासान्तस्तदा नकारान्तस्य साधुत्वं स्वरस्योपसंख्येय इत्यर्थः। द्विमूर्ध इति। यदोत्तरपदस्य कार्यित्वं तदा कृते समासान्ते उत्तरपदस्यान्तोदात्तत्वं विधीयमानं प्रत्ययस्य न प्राप्नोति। उदात्तलोपादिति। उत्तरपदस्यान्तोदात्तत्वे सति शेषनिघातेन प्रत्ययोनुदात्तस्तत्रानुदात्तस्य च यत्रोदात्तलोप इति प्रत्ययस्योदात्तत्वं सिद्धमित्यर्थः। परत्वाल्लोप इति। ततश्चोदात्तलोपो न भवतीत्यर्थः। एवं तर्हि इदमिहेति। यदा कृते समासे समासान्तः क्रियत इति पक्षस्तदेयं संप्रधारणा। यदा तु समासार्थादुत्तरपदात्समासान्तः क्रियत इति पक्षस्तदा संप्रधारणैवात्र नास्ति। युक्तं पुनरिति। ननु कृतेऽपि समासान्ते नकारान्त एव मूर्धशब्द उत्तरपदं संभवतीति किमत्रायुक्तम्। एवं मन्यते तथा पाठादिति समासान्तनिर्देशः एवं मूर्धस्विति समासान्तनिर्देश एव न्याय्यः। एवं ह्यसंदिग्धं समासस्य कार्यित्वं विज्ञायते न च कृतम्। त-

मासान्तार्था विचारणा। एवं तर्हि ज्ञापयत्याचार्यो विभाषा समासान्तो भवतीति॥

पराद्श्छन्दसि बहुलम्॥ १९९॥ अल्पमिदमुच्यते परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृत:॥ १॥ अन्तोदात्तत्वप्रकरणे त्रिचक्रादीनां छन्दसि*। अन्तोदात्तत्वप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानं कर्त्तव्यम्। त्रिचक्रेण त्रिबन्धुरेण त्रिवृता रथेन॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्। पादश्च समाप्त:॥

---

अलुगुत्तरपदे॥ १॥ आ कुतोयमधिकार:। अलुगधिकार: प्रागानङ:। उत्तरपदाधिकार: प्रागङ्गाधिकारात्। कानि पुनरुत्तरपदा-

---

स्यादुत्तरपदस्यैव कार्यित्वेन भाव्यम्। सैषा समासान्तार्थेति। यदि नित्य: समासान्त: स्यात्तदा कार्यिविशेषसंदेहव्यावृत्तये प्रक्रमाभेदाय वा समासान्त एवोच्चार्येत। तदनुच्चारणात्तु समासान्तस्यानित्यत्वं ज्ञाप्यते। तत्र यदा समासान्तो नास्ति तदासमासस्योत्तरपदस्य वा कार्यित्वेविशेषाभावो यदा तु समासान्त: क्रियते तदा समासस्य कार्यित्वे सिद्धं समासान्तस्योदा[illegible]त्वम्। यदाप्युत्तरपदस्य कार्यित्वं तदा परत्वादन्तोदात्तत्वे कृते समासान्तस्तत्र टिलोप इति उदात्तनिवृत्तिस्वरेणापि सिद्धम्। ननु प्रत्ययस्वरेण समासान्तस्य भाव्यम्। नैतदस्ति। बहुव्रीहिस्वरेणतस्य बाधनात् बहुव्रीहिस्वरस्याप्यनेन।

परादि:। व्यत्ययोबहुलं स्मृत इति। बहुलग्रहणलभ्य: स्वरव्यत्यय इत्यर्थ:। त्रिचक्रेणेत्यादौ बहुव्रीहिस्वरे प्राप्ते ऽन्तोदात्तत्वं विधीयते।

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य द्वितीयेपादे द्वितीयमाह्निकम्। पादश्च द्वितीय: समाप्त:॥

---

अलुगुत्तरपदे। आकुतोऽयमिति। अन्येष्वधिकारेषु व्याख्यानादवधिनिर्णयोऽत्र तु सामर्थ्यादिति प्रतिपादयितुं चोद्यप्रतिसमाधानोपन्यास:। प्रागानङिति। उत्तरपदेऽनन्तरस्य ऋकारान्तस्यानङा भाव्यम्। अलुकि च सति विभक्त्या व्यवधानादृकारान्तयो: पूर्वपदोत्तरपदयोरानन्तर्यं नस्यादिति। सामर्थ्यात्प्रागानङोलुगधिकार:। अथवा कार्यान्तरं प्रकृतस्य विधेर्निवर्त्तकमित्यलुगधिकार: प्रागानङ:। प्रागङ्गाधिकारादिति। प्रत्यये परतोऽङ्गं भवति न तूत्तरपद इति सामर्थ्यादवधिपरिच्छेद:। कानीति। समास एव लुक् प्राप्त: प्रतिषिध्यत इति सामर्थ्यात् समासाधिकाराद्योत्तरपदं

धिकारस्य प्रयोजनानि । उत्तरपदाधिकारस्य प्रयोजनम् । स्तोकादिभ्योऽलुगानङ्कोङ्ह्रस्वनलोपाः * । पञ्चम्याः स्तोकादिभ्यः । स्तोकान्मुक्तः । अल्पान्मुक्तः । कतिपयान्मुक्तः । उत्तरपद इति किमर्थम् । निष्क्रान्तः स्तोकान्निः स्तोकः । आनङ्कोङ्ह्रस्वनलोपाः प्रयोजनम् । आनङ् । होतापोतारौ । उत्तरपद इति । किमर्थम् । होतापोतृभ्याम् । इको ह्रस्वो ऽङ्यो गालवस्य प्रयोजनम् । ग्रामणिकुलम् । सेनानिकुलम् । उत्तरपद इति किमर्थम् । ग्रामणीः । सेनानीः । नलोपः प्रयोजनम् । नलोपो नञः । अब्राह्मणः । अवृषलः । उत्तरपद इति किमर्थम् । परमन । नैषोऽस्ति प्रयोगः । इदं तर्हि नतरां गमनम् । एकवच्च * । एकवच्चालुग्भवतीति वक्तव्यम् * । किं प्रयोजनम् । स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति विगृह्य स्तोकान्मुक्त इत्येव यथा स्यात् । एकवद्वचनमनर्थकम् * । एकवद्भावस्यानर्थक्यः । द्विबह्वोरलुक्तस्मान्न भवति द्विबहुष्वसमासः । द्विवचनबहुवचनान्तानामसमासः । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । उक्तं वा * । किमुक्तम् । अनभिधानादिति । तस्याप्यनभिधानमा-

---

लभ्यते । कार्यान्तरविधावपि वनं समास इत्यतः समासग्रहणानुवृत्त्योत्तरपदलाभ इति प्रश्नः । निः स्तोक इति । यद्यप्यत्र स्तोकान्निकेति प्रतिपदोक्तसमासाश्रयणाल्लुङ् भवतीति शक्यते वक्तुं तथाप्यन्यार्थोवश्यं वक्तव्य उत्तरपदाधिकार इति लक्षणप्रतिपदोक्तपरिभाषा नाश्रिता । होतापोतृभ्यामिति । पोतृशब्दस्यानङ् न भवति । होतापोताराविरत्र तु परत्वाद् गुणेनानङ् बाध्यत इत्युदाहरणान्तरोपन्यासः । अथ विभक्त्यपेक्षत्वाद् गुणो बहिरङ्ग आनङ् तु तदनपेक्षत्वादन्तरङ्गस्तथा सति होतापोताराविरत्युदाहरणं भवति । ग्रामणिकुलमिति । षष्ठीसमासः । ग्रामणीरिति । समासाधिकारे ण्यत्रोत्तरपदस्य ह्रस्वप्रसङ्गः । परमनेति । यथा नतरामिति प्रतिषेधस्य प्रकर्ष एवं पारम्यमपीति भावः । नैषोस्ति प्रयोगइति । प्रयुक्तानामिदमन्वाख्यानं प्रवृत्तमिति भावः । नतरांगमनमिति । गनमस्यायुक्ततरस्य प्रतिपादनाय प्रतिषेधप्रकर्षाश्रयस्तरपः प्रयोगः । अत्र तु समासानुवृत्त्यापि नलोपः शक्यते पराकर्त्तुम् । एकवच्चेति । अर्थातिदेशोयं तेन द्वावर्थौ बहवश्चैकवत्समासे भवन्तीति स्तोकाभ्यांमुक्तः स्तोकेभ्यो मुक्त इति समासे स्तोकान्मुक्त इत्येव भवति । द्विबह्वोरिति । भावप्रत्ययमन्तरेणापि वृत्तिविषये द्विबहुशब्दौ द्वित्वबहुत्वयोर्वर्तेते । यथा द्व्येकयोरिति । अनभिधानादिति । समास उपसर्जनार्थस्य द्वित्वबहुत्वानव-

श्रयितव्यम्। एकवद्वचने हि गोषुचरे ऽतिप्रसङ्गः। एकवचने हि गोषुचरेऽतिप्रसङ्गः स्यात्। गोषुचरः। वर्षाभ्यश्च जे *। वर्षाभ्यश्च जे ऽतिप्रसङ्गो भवति। वर्षासुजः। अपो योनियन्मतिषु चोपसंख्यानम् *। अपो योनियन्मतिषु चोपसंख्यानं कर्त्तव्यम्। जे चरे च *। अतिप्रसङ्गो भवति। योनि। अप्सुयोनिः। योनि। यत्। अप्सव्यम्। यत्। मति। अप्सुमतिः। मति। जे। अप्सुजः। जे। चरे। अप्सुचरो गह्वरेष्ठा॥

पञ्चम्याः स्तोकादिभ्यः॥ २॥ पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम् *। पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानं कर्त्तव्यम्। ब्राह्मणाच्छंसी। अन्यार्थे च *। अन्यार्थे चैषा पञ्चमी द्रष्टव्या। ब्राह्मणानि शंसतीति ब्राह्मणाच्छंसी। अथ वा युक्त एवात्र पञ्चम्यर्थः। ब्राह्मणेभ्यो गृहीत्वाहृत्याहृत्य शंसतीति ब्राह्मणाच्छंसी॥

---

गमादभेदैकत्वसंख्याया एवोपजनादिविशेषपरित्यागात् संख्यासामान्यमभेदैकत्वसंख्योच्यते। यथा सन्तमसे रूपमात्रमवधार्यते न तु शुक्लकृष्णादिर्विशेषः। एवं राजपुरुष इत्यत्र संख्यावान् राजार्थो न त्वव्ययार्थवदसंख्य इत्येतावान् संप्रत्ययो भवति न तु संख्याविशेषप्रतिपत्तिः। अन्ये तु सर्वसंख्याविशेषाणामविभागोऽभेदैकत्वसंख्येत्याहुः। यथौषधिरसाः सर्वे मध्वन्यविभागेनावस्थिता एवमुपसर्जनार्थे संख्याविशेषः। तथा हि यथौषधिरसाः सर्वे मध्वन्याहित शक्तयः। अविभागेन वर्तन्ते संख्यां तां तादृशीं विदुरिति॥ क्वचित्तु वृत्तावपि संख्याविशेषावगमो यथा तावत्कीन इत्यादावादेशप्रयोगादेकत्वप्रतीतिः। मास जातः शौर्पिक इत्यादौ प्रातिपदिकस्यैव विशिष्टार्थाभिधायित्वादेकत्वावगमः। कुक्कुशो ददाति वलशः प्रविशतीत्यादौ प्रकरणादिवशादेकत्वावसायः। स्तोकाभ्यां मुक्त इत्यादावपि तर्ह्यलुग्विधानाद्द्वित्वबहुत्वावगमात्समासोऽस्तु। नैतदस्ति। प्रयुक्तानामन्वाख्यानान्न च स्तोकाभ्यां मुक्त इति समासो लोके प्रयुज्यते। तन्निबन्धनस्यैकार्थस्याभावात्। स्तोकाभ्यां मुक्त इत्यादावपादाने पञ्चमी। न तु करणे च स्तोकाल्पेत्यनेन। धर्ममात्रवाचित्वे द्वित्वबहुत्वयोर्दुर्लभत्वादित्याहुः। गोषुचर इति। गोशब्दो बहुवचनान्त एवापूशब्दवदुदकस्य वाचकस्तत्रैकवद्भावे सति गविचर इति प्राप्नोति। एवं वर्षासुज इति वर्षाशब्दो बहुवचनान्त एवर्त्तुविशेषवाची। न तु ऋतुप्रचयापेक्षमत्र बहुत्वम्। अप्सव्यमिति। अप्सुसाधुः तत्र साधुरिति यत्॥

पञ्चम्याः। अन्यार्थ इति। इतिविषये च द्वितीयार्थे पञ्चमी वक्तव्येत्यर्थः। युक्तएवेति। आहरणाङ्गे शंसने शंसिर्वर्त्ततइत्युपात्तविषयमेतदपादानम्। यथा बलाहकाद्विद्योतते विद्युदिति निस्सरणाङ्गे विद्योतने विद्युतिर्वर्त्तत इति बलाहकोपादानम्॥

ओजः सहोम्भस्तमसस्तृतीयायाः ॥ ३ ॥ तृतीयायामञ्जस उपसंख्यानम् * । तृतीयायामञ्जस उपसंख्यानं कर्त्तव्यम् । अञ्जसाकृतम् । पुंसानुजोजनुषान्धोविकृताक्ष इति च * । पुंसानुजोजनुषान्धोविकृताक्ष इतिचोपसंख्यानं कर्त्तव्यम् । पुंसानुजः । जनुषान्धः विकृताक्षः ॥

आज्ञायिनि च ॥ ५ ॥ आत्मनश्च पूरणे ॥ ६ ॥ आत्मनश्च पूरण उपसंख्यानं कर्त्तव्यम् । आत्मना पञ्चमः । आत्मना दशमः । अन्यार्थे च * । अन्यार्थे चैषा तृतीया द्रष्टव्या । आत्मा पञ्चमोस्य आत्मनापञ्चमः । आत्मनादशमः । अथ वा युक्त एवात्र तृतीयार्थः । आत्मनाकृतं तस्य तद् येनासौ पञ्चमः । कथं जनार्द्दनस्त्वात्मचतुर्थ एवेति । बहुव्रीहिरयम् । आत्मा चतुर्थोस्येति ॥

वैयाकरणाख्यायां चतुर्थ्याः ॥ ७ ॥ परस्य च ॥ ८ ॥ आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम् * । आत्मनेभाषपरस्मैभाषयोरुपसंख्यानं कर्त्तव्यम् । आत्मनेभाषः । परस्मैभाषः । तत्कथं कर्तव्यम् । यदि व्याकरणे भवा वैयाकरणी वैयाकरणी आख्या वैयाकरणाख्यायामिति । अथ हि वैयाकरणानामाख्या वैयाकरणाख्या वैयाकरणाख्यायामिति, नार्थ उपसंख्यानेन । यद्यपि व्याकरणे भवा वैयाकरणी वैयाकरणी आख्या वैयाकरणाख्या वैयाकरणाख्यायामिति । एवमपि

---

आज्ञायि । अन्यार्थ इति । आत्मा पञ्चमोस्येत्यन्यार्थे आत्मनापञ्चम इत्यादि प्रयुज्यत इत्यर्थः । अत्र च वेति वक्तव्यं तेनात्मपञ्चम इत्यपि भवति । आत्मना कृतमिति । वृत्तिविषये प्रतीयमाना करोतिक्रिया कारकत्वनिमित्तं भवति । हेतौ वा तृतीया कार्या । अथ वादध्योदनादौ उपसेकादिवत् करोतिक्रियाया अन्तर्भावात् करोतेरप्रयोगः आत्मनापञ्चमइत्युक्ते आत्मनास्य कृतं पञ्चमत्वमिति संप्रत्ययाव् । आत्माचतुर्थोस्येति । एकस्यैव वस्तुनो बुद्धिप्रकल्पितभेदस्य वर्त्तिपदार्थत्वमन्यपदार्थत्वं च न विरुध्यते ॥

वैयाकर । व्याकरणे भवेति । अणृगयनादिभ्य इत्यण् । अत्र पक्षे आख्याशब्दः संज्ञापर्यायः । आत्मनेभाषपरस्मैभाषशब्दौ च न केषुचिद्व्याकरणेषु संज्ञात्वेन विनियुक्ताविति अलुकोसप्रङ्गः । अथहीति । आख्याप्रतिपादनं व्यवहार इत्यर्थः । आत्मनेपदिनश्च धातवो वैयाकरणैरात्मभाषशब्देन व्यवह्रियन्ते परस्मैपदिनः परस्मैभाषशब्देनेत्यलुक्सिद्धः । यद्यपीति । आत्मनेपदपरस्मैपदशब्दयोर्निपातनादेवालुकः सिद्धत्वादाख्याशब्देन

नार्थं उपसंख्यानेन। वचनाद्भविष्यति। अस्ति वचने प्रयोजनम्। आत्मनेपदं परस्मैपदमिति। निपातनादेतत् सिद्धम्। किं निपातनम्। अनुदात्तङित आत्मनेपदं शेषात्कर्त्तरि परस्मैपदमिति॥

हलदन्तात्सप्तम्याः संज्ञायाम्॥ ९॥ हृद्द्युभ्यांङेरुपसंख्यानम्*। हृद्द्युभ्यां ङेरुपसंख्यानं कर्त्तव्यम्। हृदिस्पृक्। दिविस्पृक्। अन्यार्थे च *। अन्यर्थे चैषा सप्तमी द्रष्टव्या। हृदयं स्पृशतीति हृदिस्पृक्। दिवं स्पृशतीति दिविस्पृक्। हलदन्ताधिकारे गोरुपसंख्यानम् *। हलदन्ताधिकारे गोरुपसंख्यानं कर्त्तव्यम्। गविष्ठिरः। न कर्तव्यम्। लुकोऽवादेशो विप्रतिषेधेन *।लुक्क्रियतामवादेश इति। अवादेशो भविष्यति विप्रतिषेधेन। अवादेशे कृते हलदन्तादित्येव सिद्धम्। लुकोऽवादेशो विप्रतिषेधेनेति चेद् भूमिपाशे ऽतिप्रसङ्गः *। लुकोऽवादेशो विप्रतिषेधेनेति चेद् भूमिपाशे ऽतिप्रसङ्गो भवति। भूम्यां पाशो भूमिपाशः। अकोत इति वा तत्सन्ध्यक्षरार्थम्। एवं तर्हि अविशेषेण सप्तम्या अलुकमुक्त्वा ऽकोऽत इति वक्ष्यामि। तन्नियमार्थं भ-

संव्यवहारमात्रमुच्यमित्यर्थः॥

हलदन्तात्। हृदयं स्पृशतीति। स्पर्शनक्रियायां हृदयस्य कर्मत्वं नत्वधिकरणत्वमिति वृत्तिविषये द्वितीयार्थे सप्तमी वक्तव्येत्यर्थः। पद्दन्नोमास् हृन्निशसितिच्छान्दसोहृदयस्य हृदादेशः। दिविस्पृगित्येतत्तु भाषायामपि भवति। लुको ऽवादेश इति। ननु चावादेशोन्तरङ्गो लुक् बहिरङ्ग इति कुतो विप्रतिषेधः। अपि चान्तरङ्गानपि विधीन् बहिरङ्गोलुग् बाधत इत्यवादेशेन न भाव्यम्। एवं तर्ह्यन्तरङ्गाभावमनपेक्ष्य विप्रतिषेध उच्यते। कृतेचावादेशे ऽलुकाभाव्यमिति लुकः प्रवृत्तिः संदिग्धेति बाधकत्वमपि लुकः संदिग्धमिति विप्रतिषेधोपपत्तिः। अन्ये त्वाहुः। किं व्यक्तिपक्षाश्रये एतद्विषये लक्षणस्याचरितार्थत्वाद् भाविहलन्तत्वाश्रयेणालुक्ता लुको बाधनादेवादेशोऽस्त्वथ जातिपक्षे सांप्रतिकहलन्तेषु सावकाशो लुगत्रानुपजातनिमित्तो नालं लुकं बाधितुमिति लुक् प्रवर्ततामित्येवंविधो विप्रतिषेधः। जातौ पदार्थे दृषदिमाषकादिषु सांप्रतिकहलन्तेष्वलुक् सावकाशो भाविहलन्तत्वाश्रयणेन न शक्नोति लुकं बाधितुमन्तरङ्गाणां च विधीनां बाधको लुगिति मन्यमान आह। लुक इति। अत्रापि यणादेशे कृते हलन्तत्वादलुक्प्रसङ्गः। अक इति। सप्तम्याः संज्ञायामिति कृत्वाऽकोत इति नियमार्थं कर्तव्यमि-

विष्यति । अक्तोत एव भवति नान्यत इति । ततसंध्याचरार्थम् । तेन सन्ध्याचरार्थम् । तेन सन्ध्यक्षराणां सिद्धं भवति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं हलदन्ताधिकारे गोरुपसंख्यानमिति । नैष दोषः । निपातनात्सिद्धम् । किं निपातनम् । गविष्ठिरशब्दो बिदादिषु पठ्यते । असक्तत्खल्वपि निपातनं क्रियते गवियुधिभ्यां स्थिर इति ॥

कारनाम्नि च प्राचां हलादौ ॥ १० ॥ किमियं प्राप्ते विभाषा आहो स्विदप्राप्ते । कथं च प्राप्ते । कथं चाप्राप्ते । यदि संज्ञायामिति वर्तते ततः प्राप्ते । अथ निवृत्तं ततोऽप्राप्ते । कश्चात्र विशेषः । कारनाम्नि वावचनार्थं चेद्‌ज्जादावतिप्रसङ्गः* । कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गो भवति । इहापि प्राप्नोति अविकटे उरणो दातव्यः । अविकटोरणः । अस्तु तर्ह्यप्राप्ते । अप्राप्ते समासविधानम् * यद्यप्राप्ते समासो विधेयः । प्राप्ते पुनः सति संज्ञायामित्येव समासः सि-

---

त्यर्थः । ततसंध्यक्षरार्थमिति । संध्यक्षरान्तेभ्यो लुगर्थमित्यर्थः । असक्कदिति । नाज्विषयमेव निपातनमपि तु सर्वार्थमिति दर्शयति । गवियुधिभ्यां स्थिर इत्यनेन समासे गविशब्दात्परस्य स्थिरस्य सकारस्य षत्वं विदधत् गविष्ठिरशब्दे सप्तम्या अलुकमभ्यनुजानाति ।

कार । कारः स्वामिग्राह्यो भागः । यदि संज्ञायामिति । संज्ञाग्रहणानुवृत्तौ रूढो यः कारो नियतद्रव्यो नियतपरिमाणस्तस्य ग्रहणेन भाव्यम् । यस्तु सांप्रतिकः कारः केन चिदेवोत्पादितस्तस्य ग्रहणाभावस्तत्र पूर्वेण नित्यलुकि प्राप्ते विभाषेयं संपद्यते । अथ संज्ञाग्रहणं नानुवर्तते पूर्वविप्रतिषेधाच्च संज्ञायां नित्येनालुका भाव्यम् । तदा सांप्रतिककाराभिधायिन्यप्राप्ते विभाषालुग्विधीयतइति पक्षोवतिष्ठते । तस्मिंश्च पक्षे कारनाम्नीति नामशब्दो व्यपदेशमात्राभिधायी । अविकटो रण इति । अवीनां संघातोऽविकटः । संघाते कटच् । उरणो मेषः । कारविशेषस्य रूढिरियमिति पूर्वेणालुक् प्राप्नोतीत्यर्थः । प्राचामिति चैतदुभयथा व्याख्यायते । प्राचामाचार्याणां मतेन हलादावुत्तरपदेकारनाम्न्यलुक् भवति नान्येषामिति विकल्पः संपद्यते । व्यवस्थितविभाषा च विज्ञायते तेन प्राग्देशे कारनाम्नि हलादौ नित्यमलुक् भवति देशान्तरे तु कारनाम्नि लुगेव यथपशुरिति । अथ वा प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदेऽलुक् न तु देशान्तरे यूथपशुः इत्यादाविति सामर्थ्याद् देशभेदेन लुगलुकोर्व्यवस्थानाद्विकल्पः संपद्यते ।

ज्ञः। नैष दोषः। एतदेव ज्ञापयति भवत्यत्र समास इति। यदयं कारनाम्नि सप्तम्या अलुकं शास्ति। यद्यपि तावत् ज्ञापकात्समासः स्यात्स्वरस्तु न सिध्यति। यद्धि तत्सप्तमीपूर्वपदं प्रकृतिस्वरं भवतीति लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं तत्। नैवात्रानेन स्वरेण भवितव्यम्। किन्तु सप्तमीहारिणौ धर्म्येऽहरण इत्येतेनात्र स्वरेण भवितव्यम्। किं च भोः संज्ञा अपि शास्त्रे क्रियन्ते न लोकः संज्ञासु प्रमाणम्। लोके च कारनाम संज्ञा। ननु चोक्तं कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्ग इति। नैष दोषः। योगविभागात्सिद्धम् *। योगविभागः करिष्यते। कारनाम्नि च प्राचाम्। ततो हलादौ। हलादौ च कारनाम्नि सप्तम्या अलुक् भवति। इदमिदानीं किमर्थम्। नियमार्थम्। हलादावेव कारनाम्नि सप्तम्या अलुक् भवति नान्यत्र। क्व मा भूत्। अविकटे उरणो दातव्यः। अविकटोरणः॥

मध्याद्गुरौ॥ ११॥ गुरावन्ताच्च *। गुरावन्ताच्चेति वक्तव्यम्। अन्तेगुरुः॥

---

यूथपश्वादय उदग्देशे काराः। हलेद्विपदिकादयः प्राग्देशे अविटोरणादयः प्रागुदक् चेति। एतदेवेति। समासमन्तरेण लुक्प्रसङ्गाभावादलुग्विधानादत्र समासोनुमीयत इत्यर्थः। अस्मिं स्थाने अविकटोरणः सांप्रतिककार इत्यभ्युपगमः। यथैव स्तूपेशाणादयः। अत्र हलादिग्रहणादजादिनिवृत्त्यर्थादजादावपि समासानुमानम्। यद्यपीति। यथा परमे कारके परमकारके इत्यत्र पूर्वपदप्रकृतिस्वरो न भवति लाक्षणिकत्वात्सप्तमीसमासस्य एवं स्तूपेशाणादावपि पूर्वपदप्रकृतिस्वराप्राप्तिः। इतरो यद्यपि संज्ञायामिति प्रतिपदोक्तः सप्तमीसमासो विधीयते तथापि स्वरान्तरेणैवात्र भाव्यमित्याह। नैवात्रेति। पूर्वपदाद्युदात्तत्वेन भाव्यमित्यर्थः। एवं स्थिते निर्णेतुमाह। किं च भो इति। अयमर्थः। संज्ञाग्रहणानुवृत्तौ स्तूपेशाणादयो रूढाः। तन्निवृत्तौ न रूढाः। इत्येतन्न क्रियते। एकस्य रूढित्वारूढित्वविरोधात्। लोके चेति। रूढा एव स्तूपेशाणादयस्ते तु चिरन्तनाः सांप्रतिका वा भवन्तीत्यर्थः संज्ञाग्रहणानुवृत्त्यैव सिद्धेऽर्थे नामग्रहणं विस्पष्टार्थम्। एवं हि स्फुटाप्रासे विभाषाभवत्यन्यथा संज्ञाग्रहणानुवृत्तिः संदिह्येत। कारनाम्नि च प्राचामिति। प्राचामेव कारनाम्नीति नियमादुदीचां कारेऽविकटोरणे लुङ् निवर्त्यते प्राचामपि कारेऽविकटोरणे हलादावित्यनेन द्वितीयेन नियमेनालुग्निवृत्तिः॥

बन्धे च विभाषा ॥ १३ ॥ स्वाङ्गग्रहणमनुवर्तते । उताहो न । किं चातः । यद्यनुवर्तते, सिद्धं हस्तबन्धः हस्तबन्धः । चक्रे बन्धः चक्रबन्ध इति न सिध्यति । अथ निवृत्तं सिद्धं चक्रे बन्धः चक्रबन्धः । हस्ते बन्धः हस्तबन्ध इति न सिध्यति । किं कारणम् । नेन्सिद्धबध्नातिष्विति प्रतिषेधः प्राप्नोति । नैष दोषः । सर्वत्रैवोत्तरपदाधिकारे तत्पुरुषे कृतिबहुलमिति प्राप्ते नेन्सिद्धबध्नातिष्विति प्रतिषेध उच्यते तस्मिन्नित्ये प्राप्ते इयं विभाषा आरभ्यते । एवमपि न ज्ञायते कस्मिन्विषये विभाषा कस्मिन् विषये प्रतिषेध इति । घञन्तस्येदं बन्धशब्दस्य ग्रहणं प्रतिषेधेषु च धातुग्रहणम् । तेन घञन्ते विभाषा अन्यत्र प्रतिषेधः ॥

तत्पुरुषे कृतिबहुलम् ॥ १४ ॥ तत्पुरुषेकृतिबहुलमकर्मधारये*। तत्पुरुषेकृतिबहुलमित्यत्राकर्मधारय इति वक्तव्यम् । इह मा भूत् परमे कारके परमकारक इति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । बहुलवचनात् न भविष्यति । अथकिमर्थं लुगलुगनुक्रमणं क्रियते न तत्पुरुषे कृतिबहुलमित्येव सिद्धम् । लुगलुगनुक्रमणं बहुलवचनस्याकृत्स्नत्वात् *। लुगलुगनुक्रमणं क्रियते अकृत्स्नं बहुलवचनमिति । यद्यकृत्स्नं बहुलवचनं यदनेन कृतमकृतं तत् । एवं तर्हि न ब्रूमो-

---

बन्धे च । नेन्सिद्धेति निषेधस्यास्य च विकल्पस्य विषयविभागज्ञानायोपन्यस्यति। स्वाङ्गग्रहणमिति । स्वाङ्गग्रहणेऽनुवर्त्तमाने स्वाङ्गादुत्तरस्याः सप्तम्या अलुको विकल्पः । अन्यस्मात्तु तत्प्रतिषेध इति विषयविभागसिद्धिः अथ निवृत्तमिति । तदा विकल्पनिषेधयोर्विषयविभागाविज्ञानाद्यथेष्टसिद्ध्यभावः । सर्वत्रेति । चक्रबन्धनमित्यादौ सर्वत्र बध्नातिधात्वादावुत्तरपदे लुक्प्रतिषेधः । अत्र तु सूत्रे बन्धशब्दो घञन्त उपात्तो न धातुमात्रनिर्देश इत्यर्थः ॥

तत्पुरुषे । बहुलवचनादिति । प्रकृतत्वादलुगिति विज्ञेयम् । न्यायोप्यत्रास्ति । अन्तरङ्गात्कृदन्तवाच्यक्रियानिमित्ता सप्तमी गृह्यते इह तु क्रियान्तरनिमित्ता परमे कारके निधेहीति बहिरङ्गेति न गृह्यते । अकृत्स्नत्वादिति । अकृत्स्नकारित्वादित्यर्थः । नहि बहुलग्रहणमात्राल्लुगलुकोर्विषयविभागनिश्चयः । इतरस्त्वपरिपूर्णत्वमकृत्स्नत्वं मन्यमान आह । यद्यकृत्स्नमिति । कृत्स्नं चेति एतावत्युक्ते अवयवसाकल्यमपि कार्त्स्न्यं गम्यत

कृत्स्नमिति। कृत्स्नं च कारकं च साधकं च निर्वर्तकं च यदनेन कृतं सुकृतं तत्। किमर्थं तर्हि लुगलुगनुक्रमणं क्रियते। उदाहरणभूयस्त्वात्। ते वै खल्वपि विधयः सुपरिगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च केवलं लक्षणं केवलः प्रपञ्चो वा न तथा कारकं भवति। अवश्यं खल्वप्यस्माभिरिदं वक्तव्यं बहुलमन्यतरस्यामुभयथैकेषामिति। सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैकः पन्थाः शक्य आस्थातुम्॥

षष्ठ्या आक्रोशे॥ २१॥ षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानम् *। षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानं कर्तव्यम्। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः। आमुष्यायणामुष्यपुत्रिका*।आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानंकर्तव्यम्।आमुष्यायणः। अमुष्यपुत्रिका। अमुष्यकुलिकेति च वक्तव्यम्। अमुष्यकुलिका। देवानांप्रिय इति चोपसंख्यानम् *। देवानां प्रिय इति च उपसंख्यानं कर्तव्यम्। देवानांप्रियः। शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामुपसंख्यानम् *। शेपपुच्छलाङ्गूलेषुशुनः संज्ञायामुपसंख्यानं कर्तव्यम्। शुनः शेपः। शुन. पुच्छः। शुनोलाङ्गूलः। दिवश्चदासे*। दिवश्चदासे उपसंख्यानं कर्तव्यम्। दिवोदासायगायते॥

---

इत्याह। कारकं चेति। कृत्स्नकारित्वात् कृत्स्नमित्यर्थः। कारकमपि प्रारब्धस्यान्तागमनात्प्रतिबन्धसद्भावाद् अकृतस्नं स्यादित्याह। साधकंचेति। साधकमपि कदाचिदसामर्थ्यादकृतत्स्नं स्यादित्याह। निवर्तकं चेति। सर्वदासर्वं कार्यं निष्पादयतीत्यर्थः। उदाहरणभूयस्त्वादिति। भूयांस्युदाहरणानि प्रपञ्चेन ज्ञापयन्तइत्यर्थः। लक्षणमिति। सामान्यलक्षणं बहुलग्रहणादियुक्तम्। विषयविभागस्याप्रतिपादकत्वान्न तथा कारकम्। प्रपञ्चोप्यानन्त्यप्रसङ्गान्न कारक इति मध्यमावस्थाश्रीयतइत्यर्थ। अवश्यंखल्विति। प्रातिशाख्यसद्भावेपि सर्ववेदसाधारणेनानेन शब्दानां प्रतिपादनं क्रियते तत्र प्रतिपदपाठस्याशक्यत्वाद्बहुलादिग्रहणेन कर्तव्यमित्यर्थः। सर्ववेदपारिषदमिति। अध्येतृसंघः परिषत्। तत्र भवं पारिषदम्। सर्ववेदानां पारिषदमिति षष्ठीसमासनैः। क इति। वेदेषु वैचित्र्येण व्यवहारात्तदङ्गव्याकरणे पि तथैव बहुलादिशब्देन व्यवहारः। तेनैतन्न चोदनीयम्। वाग्रहणमेव क्रियतां व्यवस्थितविभाषा वाश्रीयतां किं बहुलग्रहणेनेति॥

षष्ठ्या आ। पश्यतोहर इति। षष्ठी चानादरइति षष्ठी पश्यन्तमनादृत्य हरतीत्यर्थः। शुनः शेप इति। ऋषिविशेषसंज्ञेयमकारान्ताप्यस्ति शेपशब्दो न केवलं सकारान्तः शुन इव शेपोस्येति बहुव्रीहिः॥

ऋतोविद्यायोनिसंबन्धेभ्यः ॥ २३ ॥ विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणम् * । विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणं कर्तव्यम् । विद्यासंबन्धेभ्यो विद्यासंबन्धेषु यथा स्यात् । योनिसंबन्धेभ्यो योनिसंबन्धेषु यथा स्यात् । व्यतिकरो मा भूत् । अथैषां व्यतिरेके न भवितव्यम् । बाढं भवितव्यम् । होतुःपुत्रः । पितुरन्तेवासी ॥

आनङ् ऋतोद्वन्द्वे ॥ २५ ॥ क्वायं नकारः श्रूयते । न क्व चिच्छ्रूयते । लोपोऽस्य भवति नलोपः प्रातिपदिकान्तस्येति । यदि न क्व चिच्छ्रूयते किमर्थमुच्चार्यते । रपरत्वं मा भूदिति । क्रियमाणेऽपि वै नकारे रपरत्वं प्राप्नोति । किं कारणम् । नलोपे कृते एषोऽपि हि उः स्थाने अण् शिष्यते । नैष दोषः । उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते न चायमुःस्थाने अणेव शिष्यते । किं तर्हि अण् चानण् च । कथं पुनरिदं विज्ञायते किमृकारान्तानां यो द्वन्द्व इति आहो स्विद् द्वन्द्व ऋकारान्तस्येति । कश्चात्र विशेषः । ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम् *। ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानं कर्तव्यम् । पितापुत्रौ । कार्यी चानिर्दिष्टः * । कार्यी चानिर्दिष्टो भवति । ऋकारान्तानां द्वन्द्व न ज्ञायते कस्यानङा भवितव्यमिति । अस्तु तर्हि द्वन्द्वे ऋकारान्तस्येति । अविशेषेण पितृपितामहादिष्वतिप्रसङ्गः * । अविशेषेण पितृपितामहादिष्वतिप्रसङ्गो भवति । पितृपितामहाविति । अस्तु तर्हि ऋकारान्तानां यो द्वन्द्व इति । ननु चोक्तमृकारान्तानां द्वन्द्वे पुत्रे उपसंख्यानमिति । नैष दोषः । पुत्रग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् । पुत्रेऽन्यतरस्यामिति । यदि तदनुवर्तते, विभाषा स्वसृपत्योः पुत्रे वेति पुत्रेऽपि विभाषा प्राप्नोति नैष दोषः । संबन्धमनुवर्तिष्यते । षष्ठ्या आक्रोशे 'पुत्रेऽन्यतरस्याम् ।

---

ऋतो । तत्पूर्वपदोत्तरपदग्रहणमिति । अन्यनिवृत्तिपरत्वादस्य व्यतिकरोपि कार्यप्रवृत्तिः ॥

आनङ् । क्वायमिति । कार्यार्थः श्रवणार्थो वा वर्णानामुपदेश इति मत्वा प्रश्नः । क्रियमाणेपीति । उः स्थाने यः क्वतोण् स रपर इति सूत्रार्थं मन्यते । इतरः स्थानग्रहणद्वयानुवृत्त्याश्रयेणाह । नैषदोषइति पुत्रेऽपीति । अनाक्रोशेपि भ्रातुःपुत्रादावित्यभिप्रायः।संबन्धमिति । आक्रोशग्रहणेनसंबन्धात् संबन्धान्तरेण पुत्रशब्दोनसंबन्धार्ह तन्नि-

षष्ठ्या आक्रोशे। ऋतोविद्यायोनिसम्बन्धेभ्यः। पुत्रेऽन्यतरस्याम्। षष्ठ्या आक्रोशे विभाषा स्वसृपत्योः। पुत्रेऽन्यतरस्याम्। षष्ठ्या आक्रोशे। आनङ् ऋतो द्वन्द्वे। पुत्रग्रहणमनुवर्तते। षष्ठ्या आक्रोश इति निवृत्तम्। यदप्युच्यते कार्यी चानिर्दिष्ट इति। कार्यी च निर्दिष्टः कथम्। उत्तरपद इति वर्तते। ङिच्चायं क्रियते। सोऽन्तरेणापि कार्यिनिर्देशमृकारान्तस्यैव भविष्यति। पुत्रे तर्हि कार्यी अनिर्दिष्टः। पुत्रे च कार्यी निर्दिष्टः। कथम्। ऋकारग्रहणमपि प्रकृतमनुवर्तते। क्व प्रकृतम्। ऋतो विद्ययोनिसंबन्धेभ्य इति। तद्वै पञ्चमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। पुत्र इत्येषा सप्तमी ऋत इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति। तस्मिन्निति निर्दिष्टे पूर्वस्येति॥

देवताद्वन्द्वे च॥ २६॥ देवताद्वन्द्वे उभयत्रवायोः प्रतिषेधः *। देवताद्वन्द्वे उभयत्र वायोः प्रतिषेधो वक्तव्यः। अग्निवायू। वाय्वग्नी। ब्रह्मप्रजापत्यादीनां च *। ब्रह्मप्रजापत्यादीनां च प्रतिषेधोवक्तव्यः। ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। स तर्हि वक्तव्यः। न वक्तव्यः। द्वन्द्व इति वर्तमाने पुनर्द्वन्द्वग्रहणस्यैतत्प्रयोजनम्। लोकवेदयोर्यो द्वन्द्वः तत्र यथा स्यात्। कश्च लोकवेदयोर्द्वन्द्वः। वेदे ये सहनिर्वापनिर्दिष्टाः। न चैते वेदे सह निर्वापनिर्दिष्टाः॥

इद्वृद्धौ॥ २८॥ इद्वृद्धौ विष्णोः प्रतिषेधः *। इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः। आग्नावैष्णवं चरुं निर्वपेत्॥

मातरपितरावुदीचाम्॥ ३२॥ पितरामातरा च च्छन्दसि॥३३ किं निपात्यते। पूर्वोत्तरपदयोर्ऋकारस्याकारस्यारारौ निपात्येते। मातरपितरौ भोजय। मातरपितरावानय। आ मा गन्तां पितरामातरा चामासोमो अमृतत्वाय गम्यात्॥

---

द्वत्तौ तु संबध्यत इत्यर्थः॥
देवता। उभयत्रेति। पूर्वपदत्वे उत्तरपदत्वे चेत्यर्थः। लोकवेदयोरिति। साहचर्येण यौ लोकवेदयोः प्रसिद्धौ द्वन्द्वसमासवाच्यौ तत्रानङित्यर्थः। सहनिर्वापः। सहदानम्॥

मातर। पूर्वोत्तरपदयोरिति। सप्तम्यन्तमेतत्तत्र मातरपितरावित्यत्र पूर्वपदस्यारशब्दोऽन्तादेशो निपात्यते उत्तरपदस्य तु ऋतोङिसर्वनामस्थानयोरिति गुणो रपरत्वं च। पितरामातरेत्यत्र पूर्वपदस्याराशब्दोन्तस्य निपात्यते समासात्तु परस्य प्रथमाद्विवचनस्य सुपांसुलुगित्यकारः पूर्ववत् गुणरपरत्वे॥

इति श्रीभगवत्पतञ्जलिप्रणीते महाभाष्ये षष्ठाध्यायस्य
तृतीये पादे प्रथममाह्निकम् ॥

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु॥ १ ॥ भाषितपुंस्कादिति कथमिदं विज्ञायते समानायामाकृतौ यद्भाषितपुंस्कमाहो स्वित् क्वचिद्यद्भाषितपुंस्कमिति । किं चातः । यदि विज्ञायते समानायामाकृतौ यद्भाषितपुंस्कमिति । गर्भिभार्यः । प्रसूतभार्यः । प्रजातभार्यः । अत्र न प्राप्नोति । अथ विज्ञायते क्व चिद्यद्भाषितपुंस्कमिति । द्रोणीभार्यः । कुटीभार्यः । अत्रापि प्राप्नोति । अस्तु तर्हि समानायामाकृतौ यद्भाषितपुंस्कमिति । कथं गर्भिभार्यः । प्रसूतभार्य इति । कर्तव्योऽत्र यत्नः । अथ किमर्थ-

इत्युपाध्यायजैय्यटपुत्त्रकैय्यटकृते भाष्यप्रदीपे षष्ठाध्यायस्य
तृतीये पादे प्रथममाह्निकम् ॥

स्त्रियाः पुंवत् । कथमिदमिति । भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्तलक्षणे सभाषितपुंस्क इति प्रवृत्तिनिमित्तस्यान्यपदार्थत्वाश्रयणे तद्योगाच्च शब्दस्यापि भाषितपुंस्कत्वविज्ञाने समानायामाकृतावित्यर्थो लभ्यते । प्रत्यासत्त्या च यस्य शब्दस्य पुंवद्भावो विधीयते तेनैव पुमान् भाषित इति गृह्यते । भाषितपुंस्कग्रहणसामर्थ्याच्च । शब्दान्तरेण सर्वस्यार्थस्य भाषितपुंस्कत्वादन्ततोऽर्थशब्देनापीति व्यवच्छेद्याभावादनर्थकं भाषितपुंस्कग्रहणं स्यात् । यदा तु भाषितः पुमान् येन शब्देन स भाषितपुंस्क इति शब्दोऽन्यपदार्थ आश्रीयते तदा समानायामाकृतावित्यस्य विशेषणस्य नास्ति लाभः । गर्भिभार्य इति । स्त्रियां वर्तमानस्य गर्भिशब्दस्यानवयवभूतगर्भसंबन्धः प्रवृत्तिनिमित्तम् । गर्भी व्रीहिरित्यादौ तु पुंसि वर्तमानस्यावयवभूतगर्भसंबन्ध इति समानाकृतित्वाभावः। प्रसूतप्रजातशब्दौ स्त्रियां वर्त्तमानौ गर्भविमोचनं प्रवृत्तिनिमित्तमाश्रयतः । पुंसि तु गर्भाधानमिति समानाकृतित्वाभावः । द्रोणीभार्य इति । द्रोणशब्दः परिमाणवृत्तिर्भाषितपुंस्कः स एव च साहश्यनिबन्धनप्रत्यभिज्ञानवशात्तत्वनिबन्धनप्रत्यभिज्ञानवशाद्वा अभेदेनावसीयमानो गवादन्यां वर्तत इति नास्ति समानाकृतित्वमेवं कुटशब्दो घटे भाषितपुंस्को गेहे स्त्रीलिङ्गः । पात्रशब्दोऽर्धर्चादित्वात्भाषितपुंस्को भाजनविशेषे स्त्रीलिङ्गः । कर्त्तव्योऽत्र यत्न इति । गर्भिशब्दस्य गर्भसंबन्धः प्रवृत्तिनिमित्तं पुंसि स्त्रिया च समानमवान्तरभेदस्त्वविवक्षितः । प्रसूतप्रजातशब्दयोरपत्यापत्यवत्संबन्धः समानं प्रवृत्ति-

सूङः पृथक् प्रतिषेध उच्यते न यत्रैवान्यः प्रतिषेधः तत्रैवायमप्युच्येत न कोपधाया इत्युक्त्वा तत ऊङ्श्चेत्येवोच्येत । तत्रायमप्यर्थः द्विः प्रतिषेधो न वक्तव्यो भवति । नैवं शक्यम् । पठिष्यति ह्याचार्यः पुंवत्कर्मधारये प्रतिषेधार्थमिति । स पुंवद्भावो यथेह भवति । कारिका वृन्दारिका कारकवृन्दारिका । एव मिहापि स्यात् । ब्रह्मबन्धूवृन्दारिका ब्रह्मबन्धूवृन्दारिकेति । अथ पृथक्प्रतिषेधेऽप्युच्यमाने यस्मादेव स प्रतिषिद्धार्थ आरम्भः कस्मादेवात्र न भवति । पृथक् प्रतिषेधवचनसामर्थ्यात् । अथ वा अनूङिति तत्रानुवर्त्तिष्यते । अथ वा नायं प्रसज्यप्रतिषेधः । किं तर्हि पर्युदासो ऽयं यदन्यदूङ इति । स च प्रतिषेधार्थ आरम्भः । किं पुनरिदं पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणमुत स्त्रीशब्दस्य ग्रहणमहो स्वित् स्वार्थस्य ग्रहणम् । कश्चात्र विशेषः । पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत् तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधविज्ञानम् * । पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत् तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधोयं विज्ञायेत । स्त्रीप्रत्ययस्य । किमुच्यते स्त्रीप्रत्ययस्य प्रतिषेध इति न पुनरन्यदपि किं चित् पुंसः प्रतिपदं कार्यमुच्यते यत्समानाधिकरण उत्तरपदे भाषितपुंस्कस्यातिदिश्येत । तत्र च अनारम्भात् पुंसि । न किं चित् पुंसः प्रतिपदं कार्यमुच्यते यत्समानाधिकरणे उत्तरपदे भाषितपुंस्कस्यातिदिश्येत । तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः स्त्रीप्रत्ययप्रतिषेधात् । कथं पु-

---

न्निमित्तमस्तीति दोषाभावः । पृथगिति । पृथक्प्रतिषेधः प्रतिषेधान्तराद्वैलक्षण्यं सूचयतीत्यर्थः अथ वा नायमिति । सत्यामेवानुवृत्तौ पर्युदास आश्रीयते न प्रसज्यप्रतिषेध इति पूर्वस्मात्पक्षादस्य भेदः । भाष्यकारेणात्रानूङ्ग्रहणस्यैवोत्तरत्रानुवृत्तिर्दर्शिता न त्व· पूरणीप्रियादिष्वित्यस्य । तेन महानवमी महाद्वादशीत्यादावपि पुंवद्भावो भवति । किं पुनरिति । यदा स्त्रीग्रहणं स्वर्यते तदा स्वरितेनाधिकारगतिर्भवतीति स्त्र्यधिकारविहितटाबादिग्रहणं भवति तेन भाषितपुंस्कात्परस्यानूङः स्त्रीप्रत्ययस्य पुंवद्भवतीति सूत्रार्थः संपद्यते । यदा तु स्त्र्यर्थवाची शब्दः स्त्रीशब्देनोच्यते तदा शब्दग्रहणं भवति । यदा तु स्त्रीत्वयुक्तवस्तु स्त्रीशब्देनोच्यते तदार्थग्रहणं भवति । तत्रार्थग्रहणे स्त्रीशब्दो मुख्यः अर्थस्य तूत्तरपदेन पौर्वापर्यानुपपत्तिः । शब्दग्रहणे तु स्त्रीशब्दो गौणः उत्तरपदेन तु शब्दस्य पौर्वापर्योपपत्तिः । कथं पुनरिति । पुंवदित्यनेन प्रतिषेधो न प्रत्या-

नः पुंवदित्यनेनस्त्रीप्रत्ययस्य प्रतिषेधः शक्यो विज्ञातुम् । वतिनिर्देशोयम् । कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा । उशीनरवन्मद्रेषु यवाः सन्ति न सन्तीति । मातृवदस्याः कलाः सन्ति न सन्तीति । एवमिहापि पुंवन्न भवति इत्येवं वाक्यशेषं समर्थयिष्यामहे । यथा पुंसः स्त्रीप्रत्ययो न भवति एवं समानाधिकरणे उत्तरपदे भाषितपुंस्कस्यापि न संभवतीति । प्रातिपदिकस्य च प्रत्यापत्तिः*' प्रातिपदिकस्य च प्रत्यापत्तिर्वक्तव्या । एनी भार्या अस्य एतभार्यः । श्येनी भार्या अस्य श्येतभार्यः । पुंवद्भावेन किं क्रियते । स्त्रीप्रत्ययस्य निवृत्तिः । अर्थो ऽनिवृत्तः स्त्रीत्वम् । तस्यानिवृत्तत्वात् केन नशब्दो न श्रूयेत । स्त्रियामित्युच्यमानः प्राप्नोति । स्थानिवत्प्रसङ्गश्च*। स्थानिवद्भावश्च प्राप्नोति । पट्वी भार्या अस्य पटुभार्यः । पुंवद्भावेन किं क्रियते । स्त्रीप्रत्ययस्य निवृतिः । तस्य स्थानिवद्भावाद्यणादेशः प्राप्नोति । किमर्थमिदमुभयमुच्यते । न प्रातिपदिकस्य प्रत्यापत्तिरित्येव स्थानिवद्भावोपि चोदितः स्यात् । पुरस्तादिदमाचार्येण दृष्टं स्थानिवत्प्रसङ्गश्चेति तत्पठितम् । तत उत्तरका-

---

ध्यतइति मत्वा प्रश्नः । वतिनिर्देशोयमिति । उपमानोपमेयभावविषयो वतिस्तत्रोपमाने सत्तासत्ता वा प्रसिद्धोपमेये प्रतिपाद्यत इति यथासंभवं वाक्यशेषपरिकल्पने कामचार इत्यर्थः । पुंसि च स्त्रीप्रत्ययस्याभावात् स्त्रियामभावोऽतिदिश्यते इति न भवतीति वाक्यशेषः कल्प्यते । अस्मिन् पक्षे यद्वक्तव्यं तदाह । प्रातिपदिकस्य चेति । चशब्दो वक्ष्यमाणापेक्षः । एनीभार्येति । एतशब्दाद्वर्णादनुदात्तात्तोपधात्तो न इति ङीप्नकारस्य च नकारस्तत्रैकदेशविकृतमनन्यवदिति भाषितपुंस्कादेतशब्दात् पर ईकार इति तन्निवृत्तावर्थस्यानिवृत्तत्वान्नकारश्रवणप्रसङ्गः । ननु च सन्नियोगशिष्टत्वादीकारनिवृत्तौ नकारस्यापि निवृत्तिर्भविष्यति । एवं तर्हि स्थानिवद्भावात् पुनर्नकारस्योन्मज्जनं न मन्यते उत्तरपदनिमित्तत्वाच्च स्त्रीप्रत्ययनिवृत्तेः स्थानिवद्भावः । स्थानिवद्भावोपि चोदितः स्यादिति । ननु च प्रातिपदिकस्य च प्रत्यापत्तिरिति परिहारः स्थानिवत्प्रसङ्गश्चेति तु चोद्यं तत्रैवं वक्तव्यं स्थानिवद्भावोपि परिहृतः स्यादिति । नैष दोषः । अयं हि भाष्यार्थो यथा दोषसद्भावात् प्रत्यापत्तिवचनं परिहारस्तथा स्थानिवद्भावोपि चोदितः परिहृतश्च भवति । पुरस्तादिदमिति । यद्यपि पश्चात्पठितं तथाप्यर्थक्रमात् पाठक्रमो बलवानिति पूर्वं दृष्टमित्युच्यते । पूर्वं प्रोद्यदर्शनं पश्चात्समाधानमिति न्यायात् । तत्पठितमिति । पुरस्तादपि

त्वमिदं दृष्टं प्रातिपदिकस्य प्रत्यापत्तिरिति। तदपि पठितम्। न चे-दानीमाचार्याः सूत्राणि कृत्वा निवर्त्तयन्ति। वतण्डादिषु पुंवद्वचनम्*। वतण्डादिषु पुंवद्भावो वक्तव्यः। के पुनर्वतण्डादयः। लुगलुगस्त्रौ विषयस्थिस्त्रीप्रत्ययाः। लुक्, गार्ग्यौ वृन्दारिकाः। गर्गवृन्दारिकाः। पुंवद्भावेन किं क्रियते। स्त्रीप्रत्ययस्य निवृत्तिः। अर्थोऽनिवृत्तः स्त्रीत्वं तस्यानिवृत्तत्वात् केन यशब्दो न श्रूयेत। अस्त्रियामिति हि लुगुच्यते। लुक्। अलुक्। वतण्डी वृन्दारिका वातण्ड्यवृन्दारिका। पुंवद्भावेन किं क्रियते। स्त्रीप्रत्ययस्य निवृत्तिः। अर्थोऽनिवृत्तः स्त्रीत्व तस्यानिवृत्तत्वाल्लुक्स्त्रियां वतण्डाच्चेति यकारस्य लुक् प्राप्नोति। यदि पुनरयमीकार एव लुगुच्येत। तदीकारग्रहणं कर्त्तव्यम् नकर्तव्यम्। क्रियते न्यास एव। प्रश्लिष्टनिर्देशोऽयम्। स्त्री ई स्त्री स्त्रियामिति। ईकारविधावप्रत्ययकस्य पाठः क्रियते वतण्डेति। शार्ङ्गरवादौ वै सप्रत्ययकस्य पाठः करिष्यते। स वै तत्र सप्रत्ययकस्य पाठः कर्त्तव्यः। अन्तरङ्गत्वाच्च लुक् प्राप्नो-

---

दृष्टं पश्चात्पठितमित्यर्थः। प्रत्यापत्तिवचनमेव व्याप्यमुपगम्यतां स्थानिवत्प्रसङ्गश्चेत्येतत्तु परित्यज्यतामित्याशङ्क्याह। न चेदानीमिति। सूत्रव्याख्यानार्थत्वाद्वाक्यानां विस्पष्टार्थमुभयोरुपादानमित्यर्थः। तत्रैतभार्ये यद्यपि स्थानिवद्भावाश्रयो दोषस्तथापि सन्नियोगशिष्टत्वात् संभावितनिवृत्तेर्नकारस्य स्थानिवद्भावाश्रयं पुनरुपस्थानं न त्वीकारो नकारस्य निमित्तमीकारनकारयोः सह विधानाद्यणादेशस्य तु निमित्तमीकार इत्येतावता भेदेनैतभार्यश्येतभार्ययोः पृथगुपन्यासः। लुगलुगिति। लुगलुकौ यथायोगमिष्यमाणौ न सिध्यत इति पुंस्त्वलक्षणार्थातिदेशः कर्त्तव्य इत्यर्थः। यदि पुनरिति। लुक्स्त्रियामित्यनेन चेदीकारे परतो लुग्विधीयते तदेकारे पुंवद्भावेन निवर्त्तिते यकारनिवृत्तौ कर्त्तव्यायां स्थानिवत्प्रसङ्गश्चेति स्थानिवद्भावे प्रतिषिद्धे वातण्ड्यवृन्दारिकेति सिध्यतीति भावः। स्त्री ई इति। स्त्रियां य ईकारस्तस्मिन् परत इत्यर्थः। एकादेशस्य पूर्वान्तवद्भावात् स्त्रिया इति इयङादेशः। ईकारविधाविति। शार्ङ्गरवादिगणे वतण्डशब्दः कृतयङ्लुक् पठ्यते ततश्चाकृते लुकीकारो नास्त्यकृते चेकारे लुकोऽप्रसङ्ग इतीतरेतराश्रयदोषप्रसङ्गः। अन्तरङ्गत्वाच्चेति। उत्तरपदमनपेक्ष्य लुग्विधीयमानोऽन्तरङ्गत्वात् प्रागेव स्त्रीप्रत्ययनिवृत्तेः प्राप्नोति। तत्रैतत् स्यान्निमित्ताभावाल्लुक् निवर्त्तिष्यत इति। एतच्च नास्ति। न ह्येषा परिभाषा सर्वत्राश्रीयते इयानित्यादौ निवृत्तायामपि प्रकृतौ प्रत्यय स्यानिवर्त्तना-

ति। अलुक्। अस्त्रीविषय। कौण्डी वृसी वृन्दारिका कौण्डी वृ-
स्यवृन्दारिका। पुंवद्भावेन किं क्रियते। स्त्रीप्रत्ययस्य निवृत्तिः। अ-
र्थोऽनिवृत्तः स्त्रीत्वं तस्यानिवृत्तत्वात् केन यशब्दः श्रूयेत। अस्त्रि-
यामिति हि ञ्यो विधीयते। अस्त्रीविषय। द्विस्त्रीप्रत्यय। गार्ग्या-
यणी वृन्दारिका गार्ग्यवृन्दारिका इत्यत्र पुंवद्भावो न प्राप्नोति। किं
कारणम्। भाषितपुंस्कादनूङः समानाधिकरणे उत्तरपदे पुंवद्भावो
भवतीत्युच्यते। यच्चात्र भाषितपुंस्कात् परं नैतदुत्तरपदे यच्चोत्तरप-
दे न तद्भाषितपुंस्कात् परमिति। अस्तु तर्हि स्त्रीशब्दग्रहणम्। स्त्री-
शब्दस्य पुंशब्दातिदेश इति चेत् सर्वप्रसङ्गोऽविशेषात् *। स्त्रीशब्दस्य
पुंशब्दातिदेश इति चेत् सर्वस्य स्त्रीशब्दस्य पुंशब्दातिदेशः प्राप्नोति।
अस्यापि प्राप्नोति। अङ्गारका नाम शकुनयः। तेषां कालिकाः
स्त्रियः। कालिकावृन्दारिकाः अङ्गारकवृन्दारिकाः प्राप्नुवन्ति। क्षेम-
वृद्धयः क्षत्रियाः। तेषां तनुकेश्यः स्त्रियः। तनुकेश्यो वृन्दारिका
क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति। हंसस्य वरटा। कच्छपस्य दुली।
ऋश्यस्य रोहित्। अश्वस्य वडवा। पुरुषस्य योषित्। किं कारणम्।
अविशेषात्। न हि कश्चित् विशेष उपादीयते एवंजातीयकस्य स्त्री-
शब्दस्य पुंशब्दातिदेशो भवतीति। अनुपादीयमाने हि विशेषे सर्व-
प्रसङ्गः। कथं च नाम नोपादीयते यावता भाषितपुंस्कादित्युच्यते।
भाषितपुंस्कानुपपत्तिश्च। ह्यर्थे चायं चः पठितः। सर्वो हि शब्दो

---

दसिद्धं बहिरङ्गमन्तरङ्ग इतीकारनिवृत्तेरसिद्धत्वाच्च। कौण्डीवृस्यवृन्दारिकेति। स्त्रीत्व-
स्यानिवर्त्तनात् व्रातच्फञोरस्त्रियामिति ञ्यो न प्राप्नोति। गार्ग्यायणीति। षफस्योत्त-
पदेनानन्तर्याभावात् पुंवद्भावेन निवृत्तिर्न प्राप्नोति। ङीषस्त्वभाषितपुंस्काद् विधानात्
श्रवणप्रसङ्ग इत्यर्थः। सर्वप्रसङ्ग इति। यथा प्रत्ययपक्षे भाषितपुंस्कात्परः स्त्रीप्रत्यय इ-
ति शक्यते विशेषयितुं नैवं स्त्र्यर्थाभिधायी शब्दो भाषितपुंस्कात्पर इति शक्यते वि-
शेषयितुम्। शुक्लचूडादौ पुंवद्भावस्याप्रसङ्गात्। नह्यत्र शुक्लाशब्दो भाषितपुंस्कात्परः।
अङ्गारका इति। अङ्गारकशब्देन न कदाचित् स्त्रिया अभिधानं कालिकाशब्देन च प-
क्षिजातौ तस्याः स्त्रिया एवाभिधानमिति। पुवत्कर्मधारयेत्यनेनार्थ त आन्तर्यादङ्गार-
कशब्दादेशप्रसङ्गः। शक्यन्ते हि कालिका अङ्गारकशब्देन साहचर्यादभिधातुमेवमन्यत्रा-
पि योज्यम्। सर्वो हि शब्द इति। एताः कालिका वृन्दारिका इति भवत्येतच्छब्दात्

भाषितपुंस्कात्परः शक्यः कर्त्तुम्। अस्तु तर्हि अर्थग्रहणम्। अर्थाति-
देशे विप्रतिषेधानुपपत्तिः *। अर्थातिदेशे विप्रतिषेधो नोपपद्यते।
पठिष्यति ह्याचार्यों विप्रतिषेधं पुंवद्भावाद्ध्रस्वत्वं खिद्घादिकेष्विति
स विप्रतिषेधो नोपपद्यते। किं कारणम्। द्विकार्ययोगो हि नाम
विप्रतिषेधः। न चात्रैको द्विकार्ययुक्तः। शब्दस्य ह्रस्वत्वमर्थस्य पुं-
वद्भावः। किं च सर्वप्रसङ्गोऽविशेषादिति सर्वस्य अर्थस्य पुंवदर्थः
प्राप्नोति। अस्यापि प्राप्नोति। अङ्गारका नाम शकुनयः तेषां कलि-
काः स्त्रियः। कालिकावृन्दारिकाः। अङ्गारकवृन्दारिकाः प्राप्नुवन्ति।
क्षेमवृद्धयः क्षत्रियाः। तेषां तनुकेश्यः स्त्रियः। तनुकेश्यो वृन्दारिकाः
क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति। हंसस्य वरटा। कच्छपस्य दुली।
ऋश्यस्य रोहित्। अश्वस्य वडवा। पुरुषस्य योषित्। किं कारणम्।
अविशेषात्। न हि कश्चित् विशेष उपादीयते एवंजातीयकस्यार्थस्य
पुंवदर्थो भवतीति। अनुपादीयमाने हि विशेषे सर्वप्रसङ्गः। कथं
नाम नोपादीयते यावता भाषितपुंस्कादित्युच्यते। भाषितपुंस्का-
नुपपत्तिश्च भवति। न ह्यर्थेन पौर्वापर्यमस्ति। अयं तावददोषः।
यदुच्यते अर्थातिदेशे विप्रतिषेधानुपपत्तिरिति। नावश्यं द्विकार्ययो-
गएव विप्रतिषेधः किं तर्ह्यसंभवेपि। स चात्रास्त्यसंभवः। कोसाव-
संभवः। पुंवद्भावो ऽभिनिर्वर्त्तमानो ह्रस्वत्वस्य निमित्तं विहन्ति।
ह्रस्वत्वमभिनिर्वर्त्तमानं पुंवद्भावं बाधते एषो ऽसंभवः। सत्यसंभवे
युक्तो विप्रतिषेधः। अयं तर्हि दोषः। सर्वप्रसङ्गो ऽविशेषादिति।
तस्मादस्तु स एव मध्यमः पक्षः। ननु चोक्तं स्त्रीशब्दस्य पुंशब्दाति-

---

भाषितपुंस्कात्परः कालिकाशब्द इति पुंवत्प्रसङ्गः। अर्थातिदेश इति। स्त्र्यर्थस्य पुम-
र्थो भवतीत्यर्थे ऽतिदिष्टे तद्वाची शब्दः प्रवर्त्तते। भिन्नविषयत्वात्तु विप्रतिषेधानुपपत्ति-
रचो ह्रस्वो ऽर्थस्य पुंवद्भावः। पुवद्भावो ऽभिनिर्वर्त्तमान इति। स्त्रीप्रत्ययस्य निवृत्तौ
दीर्घान्तत्वाभावाद् ह्रस्वस्याप्रवृत्तिरित्यर्थः। ह्रस्वत्वमिति। ननु ह्रस्वे प्रवृत्तेप्यर्थस्या-
निवृत्तत्वात् कथं पुंवद्भावो ह्रस्वेन बाध्यते। उच्यते। यदि कृतं ह्रस्वत्वं प्रयोगे श्रूयते
एवं तत् कृतं भवति यदि तु कृतमपि पुंवद्भावेन निवर्त्येत तदा ऽकृतमेवैतत्स्यादिति
परत्वात्प्रवर्त्तमानं ह्रस्वत्वं पुंवद्भावं बाधते। तस्मादस्ति नि। शब्दपक्षे साक्षादुत्तरपदेन

देशइति चेत्सर्वप्रसङ्गो ऽविशेषादिति। नैष दोषः। समासनिर्देशो ऽयं भाषितपुंस्कादनूङ् यस्मिन्सो ऽयं भाषितपुंस्कादनूङिति। यद्येवं लुक् प्राप्नोति। निपातनान्न भविष्यति। अथ वा अलुक् प्रकृतः सो ऽनुवर्त्तिष्यते। कथं पुनरनूङित्यनेन स्त्रीप्रत्ययस्य ग्रहणं शक्यं विज्ञातुम्। नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः। नञ्युक्तम् इवयुक्तमन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते। तद्यथा अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश आनीयते नासो लोष्टमानीय कृती भवति। एवमिहाप्यनूङित्युक्ते ऊङ्प्रतिषेधादन्यस्मिन् ऊङ्सदृशे कार्यं विज्ञास्यते। किं चान्यत्। अनूङ् ऊङ्सदृशं स्त्रीप्रत्यय इति। एवमपि इडबिडवृन्दारिका ऐडबिडवृन्दारिका। पृथुवृन्दारिका पार्थवृन्दारिका। उशिक्वृन्दारिका औशिजवृन्दारिका। दरद्वृन्दारिका दारदवृन्दारिका। अत्र पुंवद्भावो न प्राप्नोति। कर्तव्योऽत्र प्रयत्नः। अथेह कथं भवितव्यं पट्वी मृद्वी भार्ये अस्य पट्वीमृदुभार्यः। आहो स्वित् पटुमृदुभार्यः। पट्वीमृदुभार्य इति भवितव्यम्। पुंवद्भावः कस्मान्न भवति। भाषितपुंस्कादित्युच्यते। ननु च भोः पटुशब्दो

---

पौर्वापर्यसंभवात्। भाषितपुंस्कादनूङ् यस्मिन्निति समुदायः समासार्थो ऽवयवेन विग्रहः। निपातनादिति। नन्वलौकिकत्वादस्य कथं निपातनादिति परिहारः। लुक्कापि तर्ह्यलौकिकत्वान्न भाव्यम्। अथ लुक्प्रसङ्गो ऽध्यवसीयते ऽलुगप्यध्यवसीयतामित्यदोषः। अथ वेति। ननु च परार्थत्वात् कथं लक्षणयोः संबन्धः। उच्यते। अलुगधिकारसामर्थ्याल्लक्षणाङ्गमपि लक्षणं भविष्यति संज्ञापरिभाषवत्। इडबिडिति। इडबिडो ऽपत्यं पृथोरपत्यं जनपदशब्दादित्यञ्। उशिग्दरद्भ्यां द्व्यञ्मगधेत्यण्। उभयोरतस्चेति स्त्रियां लुक्। कर्त्तव्योऽत्र प्रयत्न इति। नेह टाबादीनामिव ग्रहणं किं तर्हि प्रत्ययमात्रस्य। लुकि च स्थानिवद्भावात्प्रत्ययो भवत्येव। यदा तु भाषितपुंस्कादूङ् यस्मिन्नकृतः स भाषितपुंस्कादनूङिति प्रसज्यप्रतिषेध आश्रीयते तदा दोषस्याप्रसङ्ग एव। पट्वीमृदुभार्य इति पट्वीशब्दस्योत्तरपदेनानन्तर्याभावात् पुंवद्भावाभावो मृद्वीशब्दस्यानन्तर्यात् पुंवद्भावः। इतरो यथाक्रमप्रतिपद्याह। पुंवद्भावः कस्मान्न भवतीति। भाषितपुंस्कादिति। एकदेशेन समस्तं सूत्रं लक्ष्यते तत्रोत्तरपदेनानन्तर्याभावात् पट्वीशब्दस्य पुंवद्भावाभावः। इतरस्तु भाषितपुंस्कत्वमत्र नास्तीत्यनेनोक्तमिति मत्वाह। ननु चेति। इतरः शिष्यबुद्धि-

मृदुशब्दश्च पुंसि भाष्येते। समानायामाकृतौ यद्भाषितपुंस्कम्। आकृत्यन्तरे चैतौ भाषितपुंस्कौ। समानायामाकृतावपि भाषितपुंस्कौ। कथम्। आरभ्यतेऽत्र मतुब्लोपः। एवं तर्हि भाषितपुंस्कादनूङः समानाधिकरण उत्तरपदे पुंवद्भवतीत्युच्यते। यश्चात्र भाषितपुंस्कादनूङ् समानाधिकरण उत्तरपदे कृतस्तस्य पुंवद्भावः। यस्य चाकृतो नासौ भाषितपुंस्कादनूङ् समानाधिकरण उत्तरपदे। पूरण्यां प्रधानपूरणी ग्रहणम् *। पूरण्यां प्रधानपूरणीग्रहणं कर्तव्यम्। प्रधानं या पूरणी तत्रेति वक्तव्यम्। इह माभूत्। कल्याणी पञ्चमी अस्य पक्षस्य कल्याणपञ्चमीकः पक्ष इति। अथेह कथं भवितव्यम्। कल्याणी पञ्चमी आसां रात्रीणामिति कल्याणी पञ्चमा रात्रय इति भवितव्यम्। रात्रयोऽत्र प्रधानम्॥

तसिलादिष्वाकृत्वसुचः॥ ३५॥ इह केचित् तसिलादयः आकृत्वसुचः पठ्यन्ते येषु पुंवद्भावो नेष्यते। केचिच्चान्यत्र पठ्यन्ते। येषु पुंवद्भाव इष्यते। तत्र किं न्याय्यम्। परिगणनं कर्तव्यम्। तसिलादौ त्रतसौ। त्रतसौ तसिलादी द्रष्टव्यौ। तस्यां शालायां वसति। तत्र वसति। तस्याः ततः। यस्याः यतः। तरप्तमपौ। तरप्तमपौ तसिलादी द्रष्टव्यौ। दर्शनीयतरा। दर्शनीयतमा। चरट्जातीयरौ। चरट्जातीयरौ तसिलादी द्रष्टव्यौ। पटुचरी। पटुजातीया।

---

परीक्षार्थमाह। समानायामिति। आकृत्यन्तर इति। पटुर्गुणो मृदुर्गुण इति गुणे भाषितपुंस्कौ भार्यादौ तु स्त्रीलिङ्गाविति भावः। आरभ्यतइति। ततश्च पाटवे मार्दवे च समानप्रवृत्तिनिमित्ते पटुमृदुशब्दौ पुंसि स्त्रियां च वर्त्तेते। इदानीमाचार्यः स्वाभिप्रायं प्रकाशयति। एवं तर्हीति कल्याणपञ्चमीक इति। पक्षेऽन्यपदार्थेऽवयवानामत्यन्ततिरोधानान्नास्ति पूरण्याः प्राधान्यम्। अप्पूरणीप्रमाण्योरिति समासान्तोपि प्राधानपूरण्या एव विहित इत्यत्र न भवतीति नद्यृतश्चेति कब् भवति। इतरस्तु सर्वत्र बहुव्रीहौ वर्त्तिपदार्थस्याप्राधान्यं मत्वा पृच्छति। अथेह कथमिति। रात्रयोऽत्रेति। उद्भूतावयवा रात्रयोऽत्र प्रधानं तत्र यथैव प्रथमाद्या रात्रयः समासाभिधेया एवं पञ्चम्यपीति वर्त्तिपदार्थस्यान्यपदार्थेऽनुप्रवेशात् प्राधान्यमित्यर्थः। प्रधाने कार्यसंप्रत्ययात् प्रधानपूरणीग्रहणमित्याहुः।

तसिला। पटुकल्पेत्यपपाठः। घरूपकल्पेति परत्वात् ह्रस्वस्य भावात्। तस्मादृर्श-

कल्पब्देशीयरौ तसिलादीद्रष्टव्यौ । दर्शनीयकल्पा । दर्शनीयदेशीया। रूपप्पाशपौ । रूपप्पाशपौ तसिलादीद्रष्टव्यौ । दर्शनीयरूपा दर्शनीयपाशा । थम् थालौ । तसिलादीद्रष्टव्यौ । कया प्रकृत्या । कथम्। यया प्रकृत्या यथा । दार्हिलौ । दार्हिलौ तसिलादी द्रष्टव्यौ । तस्यां वेलायां तदा । तस्यां वेलायां तर्हि । तिल्थ्यनौ । तिल्थ्यनौ तसिलादी द्रष्टव्यौ । वृकी । वृकतिः । अजथ्या यूथिः शसिबह्वल्पार्थस्य*। बह्वल्पार्थस्य शसि पुंवद्भावो वक्तव्यः । बह्वीभ्यो देहि बहुशो देहि । अल्पशो देहि । त्वतलोर्गुणवचनस्य *। त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । पट्वीभावः पटुत्वम् । मृद्वीभावः मृदुत्वम् । पटुता । मृदुता। गुणवचनस्येति किमर्थम्। कठीभावः । कठीत्वम् । कठीता । भस्याढे तद्धिते * । पुंवद्भावो वक्तव्यः । हस्तिनीनां समूहो हास्तिकम्। अढ इति किमर्थम् । श्यैनेयो रौहिणेयः । यद्यढ इत्युच्यते। अग्नायी देवता अस्य स्थालीपाकस्य आग्नेयः स्थालीपाकः अत्र न प्राप्नोति । इहच प्राप्नोति । कौण्डिन्यः। सापत्न इति । यदि पुनरनपत्यइत्युच्यते । नैवं शक्यम् । इह हि न स्यात् । गार्ग्यायण्या अपत्यं माणवकः । गार्गी जाल्मः । अस्तु तर्हि अढ इत्येव। कथं कौण्डिन्यः सापत्न इति । कौण्डिन्ये निपातनात् सिद्धम् । किं नि-

---

नीयकल्पेति पाठः । वृकतिरिति । लिङ्गविशिष्टपरिभाषया वृकीशब्दाद् वृकज्येष्ठाभ्यामिति तिल्प्रत्ययः । परिगणनसामर्थ्याच्च जातेश्चेति पुंवद्भावप्रतिषेधाभावः । अजथ्येति । पूर्ववदजाशब्दादजविभ्यां थ्यन्निति थ्यन् प्रत्ययः। हास्तिकमिति। यद्यत्र पुंवद्भावो न स्यात्। तदा हस्तिनीशब्दस्य यस्येति चेति लोपे कृते तस्य स्थानिवत्वादसिद्धत्वाच्च नस्तद्धित इति टिलोपो न स्यादिति पुंवद्भावो विधीयते। ठक्छसोश्चेत्यनेनाच पुंवद्भावो न भवति कृसा सहचरितस्य ठको ग्रहणात् श्येनेय इति । श्येतरोहिताभ्यां वर्णादिति ङीप्नकारौ। पुंवद्भावे श्येतेयो रौहितेय इति स्यात्। आग्नायीति। अग्ने ढंगिति वा सर्वत्राग्निकलिभ्यां ढग्वक्तव्य इति वा ढक् । तत्र पुंवद्भावप्रतिषेधादाग्नायेय इति प्राप्नोति । कौण्डिन्य इति । कुण्डिन्या अपत्यं गर्गादित्वाद् यञ् तत्र पुंवद्भावे सतिकौण्ड्य इति प्राप्नोति। सपत्नीशब्दादपि सापत इति प्राप्नोति। यदि पुनरिति अढे इत्यपनोयानपत्य इति उच्यमाने आग्नेय इत्यनपत्यत्वात् सिध्यति। श्यैतेयरौहिणेयकौण्डिन्यसापत्नाश्चापत्यप्रत्ययान्तत्वात् सिध्यन्ति। गार्ग्यायण्या इति। गोत्रस्त्रियाः कुत्सने ण चेति णे अ·

पातनम्। आगस्त्यकौण्डिन्ययोरिति। सापत्नः प्रकृत्यन्तर त्वात् सपत्नशब्दः प्रकृत्यन्तरमस्ति। कथमग्नायी देवता अस्य स्थालीपाकस्य आग्नेयः स्थालीपाक इति। अस्तु तर्ह्यनपत्यइत्येव। कथं गार्गी जाल्मः। गार्गाग्नेयौ न संवदेते। कर्त्तव्यो ऽत्र यत्नः। ठक्छसोश्च*। ठक्छसोश्च पुंवद्भावो वक्तव्यः। भवत्याः छात्राः भावत्काः भवदीयाः। ठक्ग्रहणं किमर्थम्। न इके कृते अजादावित्येव सिद्धम्। नैवं शक्यम्। अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः*। अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत। तद्यथा। मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशो न भवति। एवमिहापि न स्यात्। तसिलादि॥

क्यङ् मानिनोश्च॥३६॥ मानिन्ग्रहणं किमर्थम्। मानिन्ग्रहणमस्वार्थमसमानाधिकरणार्थं च*। मानिन् ग्रहणं क्रियते। अस्वार्थमसमानाधिकरणार्थं च। अस्वार्थं तावत्। दर्शनीयां मन्यते देवदत्तो यज्ञदत्तां दर्शनीयमानी अयमस्याः। असमानाधिकरणार्थम्। दर्शनीयां मन्यते देवदत्तां यज्ञदत्ता दर्शनीयमानिनीइयमस्याः॥

न कोपधायाः॥३७॥ किमिदमेवमाद्यनुक्रमणं आद्यस्य योगस्य विषये। आहोस्वित् पुंवद्भावमात्रस्य। किं चातः। यद्याद्यस्ययोगस्य

---

पत्यप्रत्यये पुंवद्भावो न प्राप्नोति। सपत्नशब्द इति। व्यनृसपत्न इति निर्देशो ऽत्र लिङ्गं तस्मादेव शार्ङ्गरवादिषु दृष्टान् ङीनि कृते सपत्न्या अपत्यमिति शिवाद्यणि पुंवद्भावे सपत्नः सिध्यति। कर्त्तव्यो ऽत्रेति। स्त्रियं यो ढो विहितः स्त्रीभ्यो ढगित्यनेन तत्र पुंवद्भावप्रतिषेधो न त्वन्ये ढगित्यस्मिन्निति व्याख्येयम्। ठक्छसोरिति। छसः सित्वात् तत्र सिति चेति पदसंज्ञाविधानाद् भत्वाभावाद्वचनम्। तन्तादिति कादेशो न भवतीति। ठस्येति वर्णमात्रस्य स्थानित्वे ऽल्विधित्वात् स्थानिवत्त्वाभावात्। संघातस्य तु स्थानित्वे संनिपातपरिभाषोपस्थानात्।

क्यङ्मा। मानिन्ग्रहणमिति। स्त्रीलिङ्गे समानाधिकरणे उत्तरपदे पूर्वेण सिद्धत्वात् यथा दर्शनीयामात्मानं मन्यते दर्शनीयमानिनी देवदत्तेति। अत्र ह्येकस्या एव कर्मत्वात् कर्त्तृत्वाच्चास्ति सामानाधिकरण्यम्।

नकोप। आद्यस्येति। पाणिनिपठितसूत्रत्रयस्येत्यर्थः। पुंवद्भावमात्रस्येति। औप-

विषये। माध्यमिकीयः। शालूकिकीयः। अत्र न प्राप्नोति। विधिरप्यत्र न सिध्यति। किं कारणम्। भाषितपुंस्कादानूङित्युच्यते न चैतद्भाषितपुंस्कादनूङ्। इह तर्हि विलेपिकाया धर्म्यं वैलेपि किं विधिश्च सिद्धो भवति प्रतिषेधश्च न प्राप्नोति। अथ पुंवद्भावमात्रस्य विषये हस्तिनीनां समूहो हास्तिकं जातिलक्षणः पुंवद्भावप्रतिषेधः प्राप्नोति। एवं तर्हि न कोपधाया इत्ययं योगः पुंवद्भावमात्रस्य विषये। तत उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषये। कोपधप्रतिषेधे तद्धितवुग्रहणम् *। कोपधप्रतिषेधे तद्धितस्य यः ककारोवोऽस्वयः तस्य ग्रहणं कर्त्तव्यम्। इह मा भूत्। पाकभार्यो भेकभार्यः॥

स्वाङ्गाच्चेतः॥४०॥स्वाङ्गाच्चेतोऽमानिनि*। स्वाङ्गाच्चेतोऽमानिनीति वक्तव्यम्। इहापि यथा स्यात्। दीर्घमुखमानी। श्लक्ष्णमुखमानी। यद्यमानिनीत्युच्यते। दीर्घमुखमानिनी श्लक्ष्णमुखमानिनीति न सिध्यति। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापिग्रहणं भवतीत्येवं भविष्यति॥

पुंवत्कर्मधारयजातीयदेशीयेषु॥ ४२॥ कर्मधारयजातीयदेशीये किमर्थमिदमुच्यते न सामान्येन सिद्धम्। पुंवत्कर्मधारये प्रतिषिद्धार्थम् *। प्रतिषिद्धार्थोयमारम्भः। न कोपधाया इत्युक्तम्। तत्रापि पुंवद्भावो भवति। कारिका वृन्दारिका कारिकवृन्दारिका।

---

संख्यानिकस्यापीति यावत्। माध्यमिकीय इति। मध्यमिकायां भव इति वेणुकादिभ्यश्छण् वक्तव्य इति छण्प्रत्ययः। तत्र भस्याढइति पुंवद्भावप्रसङ्गः। शालूकिकीय इति शालूकानि विद्यन्तेऽस्यामिति वुञ्छण्केति कः। शालूकिकायां भव इति वृद्धादकेकान्तखोपधादिति छः। विधिरपीति। नगर्यां ग्रामे चाभाषितपुंस्कत्वात्। वैलेपिकमिति। अणमहिष्यादिभ्य इत्यण्। एवं तर्हीति। प्रयोगमूलाद्व्याख्यानाद्यथेष्ट विषयविभागलाभः। पाकभार्य इति। पाकशब्दः प्रथमवयोवाची ततो ङीबपवादोजादित्वाट्टाप्। भेकभार्य इति। भेकशब्दःक्रियाशब्दो मण्डूकजातिवाचित्वे तु भेकीभार्य इति भाष्यम्। जातेश्चेति पुंवद्भावनिषेधात्।

स्वाङ्गाच्चेतः। स्वाङ्गाच्चेत इत्येतावत्सूत्रमिति मत्वा वार्त्तिकारम्भः॥

पुंवत्। किमर्थमिति। कर्मधारये स्त्रियाः पुंवदिति सिद्धः पुंवद्भावो जातीयदेशीययोरपि तसिलादिष्विति मत्वा प्रश्नः। प्रतिषिद्धार्थमिति। प्रतिषिद्धोपि पुंवद्भावो यथा

कारकजातीया कारकदेशीया । संज्ञापूरण्यो श्चेत्युक्तम् । तत्रापि पुंवद्भवति दत्ताबृन्दारिका दत्तवृन्दारिका । दत्तजातीया । दत्तदेशीया । पञ्चमीबृन्दारिका पञ्चमवृन्दारिका । पञ्चमजातीया । पञ्चमदेशीया । वृद्धिनिमित्तस्येत्युक्तम् । तत्रापिपुंवद्भावो भवति । स्रौघ्नीबृन्दारिका स्रौघ्नवृन्दारिका । स्रौघ्नजातीया । स्रौघ्नदेशीया स्वाङ्गाच्चेतोऽमानिनीत्युक्तम् । तत्रापिपुंवद्भावो भवति । श्लक्ष्णमुखी वृन्दारिका । श्लक्ष्णमुखवृन्दारिका । श्लक्ष्णमुखजातीया । श्लक्ष्णमुखदेशीया । जातेश्चेत्युक्तम् तत्रापि पुंवद्भवति । कठीबृन्दारिका । कठवृन्दारिका कठजातीया । कठदेशीया । कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम् * । कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः । कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । काक्याः शावः काकशावः । नवास्त्रीपूर्वपदविवक्षितत्वात् * । न वा वक्तव्यम् । किं कारणम् । अस्त्रीपूर्वपदविवक्षितत्वात् । नात्र स्त्रीपूर्वपदं किं तर्हि अस्त्रीपूर्वपदं विवक्षितम् । उभयोरण्डमुभयोः पदमुभयोः शावः । यद्यपि तावदत्रैतच्छक्यते वक्तुम् । इह तु कथं मृग्याः क्षीरं मृगक्षीरम् । अत्रापि न वास्त्रीपूर्वपदविवक्षितत्वादित्येव । कथं पुनः सतो नामाविवक्षा स्यात् । सतोऽविवक्षा भवति । तद्यथा । अलोमिका एडका अनुदरा कन्या । असतश्च विवक्षा भवति । तद्यथा । समुद्रः कुण्डिका । विन्ध्यो वर्द्धितकमिति । अग्नेरीत्वाद्वरुणस्य वृद्धिर्विप्रतिषेधेन * । अग्नेरीत्वाद्वरुणस्य वृद्धिर्भवति विप्रतिषेधेन । अग्नेरीत्वस्यावकाशः । अग्नीषोमौ । वरुणस्य वृद्धेरवकाशः । वायुवारुणम् । इहोभयं प्राप्नोति । अग्निवा-

---

स्यादित्येवमर्थम् । नवेति । पुमान् वृत्तिवाक्यविषयः । स्त्रियां तु वाक्यमेव भवति वृत्तिस्त्वनभिधानान्न भवति । इह तु कथमिति । नहि पुंसा क्षीरस्य संबन्धसंभवः । अत्रापीति । जात्यन्तरनिवृत्तिपरायां चोदनायां स्त्रीत्वमनुपकारित्वादविवक्षितमित्यर्थः । यत्र तु लिङ्गविशेष उपकारकस्तत्रासौ विवक्ष्यतएव यथा ऽजामूत्रेणपर्युक्षितं दातव्यमिति । असतश्चेति । विवक्षाया एव बलीयस्त्वमित्यनेन प्रतिपद्यते । समुद्रः कुण्डिकेति । असदेव समुद्रत्वं कुण्डिकायामसत् कुण्डिकात्वं समुद्रेवारोप्य शब्दप्रयोगः । वायुवारुणमिति । उभयत्र वायोः प्रतिषेधो वक्तव्य इत्यानङ् न भवति । वायुवरुणौ देवतास्य सास्य-

रुणीमनड्वाहीमालभेत । वरुणस्य वृद्धिर्भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । द्विकार्ययोगो हि विप्रतिषेधः नाचैको द्विकार्ययुक्तः। कथम् । अग्नेरीत्वं वरुणस्य वृद्धिरिति । नावश्यं द्विकार्ययोग एव विप्रतिषेधः किं तर्ह्यसंभवोपि । स चात्रास्त्यसंभवः । कोऽसावसंभवः । अग्नेरीत्वमभिनिर्वर्तमानं वरुणस्य वृद्धिं बाधते । वरुणस्य वृद्धिरभिनिर्वर्तमाना अग्नेरीत्वं बाधते । एषोऽसंभवः । सत्यसंभवे युक्तो विप्रतिषेधः । पुंवद्भावाद् ह्रस्वत्वं खिद्घादिकेषु* । पुंवद्भावाद् ह्रस्वत्वं भवति विप्रतिषेधेन । पुंवद्भावस्यावकाशः । पटुभार्यः । मृदुभार्यः । खिति ह्रस्वत्वं भवतीत्यस्यावकाशः । कालिंमन्यः हरिणिंमन्यः । इहोभयं प्राप्नोति । कालिंमन्या । हरिणिंमन्या । ह्रस्वोभवति विप्रतिषेधेन । घादिषुनद्या ह्रस्वो भवतीत्यस्यावकाशःनर्तकितरा नर्तकितमा । पंवुद्भावस्यावकाशः । दर्शनीयतरा । दर्शनीयतमा। इहोभयं प्राप्नोति ।पट्वितरा। पट्वितमा । ह्रस्वोभवति विप्रतिषेधेन । केह्रस्वोभवतीत्यस्यावकाशः । नर्तकिका । पुंवद्भावस्यावकाशः । दारदिका ।इहोभयं प्राप्नोति । पट्विका । मृद्विका । ह्रस्वत्वं भवति विप्रतिषेधेन । अथ दानीं ह्रस्वत्वे कृते पुनःप्रसङ्गविज्ञानात्पुंवद्भावः कस्मान्न भवति। सकृद्गतौ विप्रतिषेधे यद् बाधितं तद्बाधितमेवेति॥

घरूपकल्पचेलड्ब्रूवगोत्रमतहतेषु ङ्यो ऽनेकाचो ह्रस्वः ॥ ४३

ङीग्रहणं किमर्थम् । अनेकाचो ह्रस्व इतीयत्युच्यमाने खट्वातरा

---

देवतेत्यण् देवताद्वन्द्वे चेत्युभयपदवृद्धिः । आग्निवारुणीमिति । नन्वीत्वमन्तरङ्गं बहिरङ्गा तूत्तरपदवृद्धिस्तद्धितापेक्षणादित्ययुक्तो विप्रतिषेधः । नैतदस्ति । इद्वृद्धाविति त्वस्यापवाद इत्वं विधीयते ततोपवादविषयापेक्षणान्नास्त्यन्तरङ्गत्वमीत्वस्यात्र विषये । वरुणस्य वृद्धिमिति । दीर्घाच्च वरुणस्येतिनिषेधात् । इत्वं बाधतइति । इद्वृद्धाविति वचनात् । कालिंमन्य इति । कालीमात्मानं मन्यते काल्येवाहमिति मन्यतइत्यर्थः । नर्त्तकितरेति । अत्र नकोपधाया इति पुंवद्भावः प्रतिषिद्धः । दारदिकेति । दरदो ऽपत्यं स्त्री । द्व्यञ् मगधेत्यण् । तस्यातस्चेति लुक् । ततः प्रागिवात्क इति कः । तसिलादिष्विति पुंवद्भावः । ननु परिगणितास्त्रत्रसिलादयो न च कप्रत्ययः परिगणितः । एवं तर्हि विप्रतिषेधाभिधानात् कप्रत्ययोऽपि तत्राभ्युपगत इत्यनुमीयते तेन नासौ परिगणितः ॥

घरूप । ईत इति वर्त्ततइति । स्वाङ्गाच्चेत इत्यतः। स्त्रियाः स्त्रियामिति वर्त्ततइति।

मालातरा अत्रापि प्रसज्येत। नैतदस्ति प्रयोजनम्। भाषितपुंस्कादित्युच्यते। एवमपि दत्तातरा गुप्तातरा अत्रापि प्राप्नोति ईत इतिवर्त्तते। क्व प्रकृतम्। स्वाङ्गाच्चेतो ऽमानिनीति। एवमपि ग्रामणीतरः सेनानीतरः अत्रापि प्राप्नोति। स्त्रियामिति वर्त्तते। एवमपि ग्रामणीतरा सेनानीतरा अत्रापि प्राप्नोति। स्त्रियाः स्त्रियामिति वर्त्तते। शेषप्रकॢप्त्यर्थं तर्हि ङीग्रहणं कर्त्तव्यम्। नद्याः शेषस्यान्यतरस्यामिति। कश्च शेषः। अङी च या नदी ङ्यन्तं च यदेकाच्। अन्तरेणापि ङीग्रहणं प्रकॢप्तः शेषः। कथम्। ईत इति वर्त्तते। अनीच्च या नदी ईदन्तं चापि यदेकाच्। शेषग्रहणं चापि कर्त्तुमशक्यम्। कथम्। अविशेषेण घादिषु नद्या अन्यतरस्यां ह्रस्वत्वमुत्सर्गस्तस्यानेकाच् इति नित्यं ह्रस्वत्वमपवाद। तस्मिन्नित्ये प्राप्ते उगितो विभाषेयमारभ्यते। यद्येवं लक्ष्मितरा तन्त्रितरा इति न सिध्यति। लक्ष्मीतरा तन्त्रीतरा इति प्राप्नोति। इष्टमेवैतत्संगृहीतं लक्ष्मीतरा तन्त्रीतरा इत्येव भवितव्यम्। एवं हि सौनागाः पठन्ति घादिषु नद्या ह्रस्वत्वे कृन्नद्याः प्रतिषेध इति॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
षष्ठस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्॥

---

तेनस्त्रीवाचिन ईकारस्य ह्रस्वो विधीयमानो ग्रामणीशब्दस्य न भविष्यत्यनर्थकत्वादीकारस्य। शेषप्रकॢप्त्यर्थमिति। विशिष्टस्य शेषस्य प्रकॢप्त्यर्थमित्यर्थः। अनीच्च या नदीति। ब्रह्मबन्धुतरा ब्रह्मबन्धूतरेति। ईदन्तं चेति। स्त्रितरा स्त्रीतरेति। अविशेषेणेति। ईतो ऽनेकाच इति विशेषानाश्रयात्। यद्येवमिति। यदीत इत्यनुवृत्त्या ङीग्रहणं शेषग्रहणं च प्रत्याख्याय स्त्रिया इत्यनेनेकारो विशेष्यते तदा लक्ष्मीतन्त्र्योरीकारः स्त्रियां न विहित इति नित्यह्रस्वत्वं नास्ति। नद्या अन्यतरस्यामित्यत्रापि स्त्रिया इत्यनुवर्त्तनात् विकल्पेन ह्रस्वत्वं नास्ति। सति त्विह ङीग्रहणे स्त्रिया इत्यस्य प्रयोजनाभावादनुवृत्त्यभावान्नद्याः शेषस्येत्यनेन ह्रस्वः सिध्यतीति भावः। इष्टमिति। सति इह ङीग्रहणे नद्याः शेषस्येतिविकल्पेन प्राप्तं ह्रस्वत्वं वचनप्रतिषेध्यमसति तु ङीग्रहणे स्त्रिया इत्यस्य योगद्वयेऽप्यनुवृत्त्या ह्रस्वस्याप्रसङ्गः कृत्स्त्रिया इति नास्तिलक्ष्यभेद इति सिद्धं सर्वमिष्टम्॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य तृतीये
पादे द्वितीयमाह्निकम्

आन्महतः समानाधिकरणजातीययोः ॥४६॥ इह कस्मान्न भवति । अमहान् महान्संपन्नो महन्भूतश्चन्द्रमा इति । अन्यप्रकृतिरमहान् भूतप्रकृतौ महान्महत्येव । अन्यो महान् । अन्यः अमहान् भूतप्रकृतौ वर्त्तते । महान्महत्येव । तस्मादात्वं न स्यात् । तस्मादात्वं न भविष्यति । पुंवत्तु कथं भवेदिह । पुंवद्भावो ऽपि तर्हि न प्राप्नोति । अमहतीसंपन्ना महद्भूता ब्राह्मणी । एवं तर्हि अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् । अमहति हि महत्शब्दो वर्त्तते तद्वाची भूतशब्दोयं प्रयुज्यते । किंवाची । महद्वाची ।

---

आन्महतः समानाधिकरणजातीययोः । महद्भूतइति । महच्छब्दो भूतशब्दश्चैकस्मिन्नर्थे चन्द्रादौ वर्त्तते इति सामानाधिकरण्यादात्वं प्राप्नोति । अन्यप्रकृतिरिति । अन्यस्य महतः प्रकृतिः कारणमन्यप्रकृतिरमहान् । भूतप्रकृताविति । भूतशब्दस्य प्रकृतिः कारणमर्थोर्थप्रतिपादनाय शब्दोच्चारणाच्छब्दस्यार्थः कारणमुच्यते । तदयमर्थो भूतशब्दार्थं महान् वर्त्तते । अमहतो भूतेन सामानाधिकरण्यं न तु महत इत्यर्थः । महान्महत्येवेति । महच्छब्दो महत्येव वर्त्ततेन तु भूतार्थे च्विविषये हि प्रकृतिः कर्त्री न विकृतिः । तथा हि । संघीभवन्ति ब्राह्मणाः पटीभवन्ति । तन्तव इति प्रकृतिसंख्याश्रयं वचनं दृश्यते नविकृतिसंख्याश्रयम् । तथा अत्वं त्वं संपद्यते त्वद्भावतीति प्रकृत्याश्रयः प्रथमपुरुषो भवति । न विकृत्याश्रयो मध्यमपुरुषः । ततश्च भूत इति निष्ठाप्रत्ययो भवनक्रियायाः कर्तर्यमहत्युत्पन्नो न तु विकारे महति । पुंवत्त्विति । वैयधिकरण्यादात्ववत्पुंवद्भावो ऽपि न प्राप्नोति । यथा च प्रकृतेः कर्तृत्वं दृश्यते तथा विकृतेरपि। सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत इति विकारसंख्याश्रयद्विवचनदर्शनात्तथा क्लृपि संपद्यमाने चतुर्थीति विकाराच्चतुर्थी दृश्यते न प्रकृतेः । मूत्राय संपद्यते यवागूः उच्चारय कल्पते यवान्नमिति । तथा असंघो वाह्मणाः संघः संपद्यते अपटस्तन्तवः पटः संपद्यते इति विकारसंख्याश्रयं वचनं दृश्यते । तत्रयदिमहद्भूतेत्यत्र सामानाधिकरण्यमाश्रित्य पुंवद्भावो विधीयते तदा गोमतीभूतेत्यत्रापि प्राप्नोति । आत्वप्रसङ्गश्च । तत्र पुंवद्भावं तावत्साधयितुमाह । एवं तर्हीति । अमहत्यर्थे महच्छब्दो वर्तत इति भूतशब्दसामानाधिकरण्ये पुंवद्भावो भवतीत्यर्थः । महद्वाचीति । अयं भावः । च्व्यन्तोत्र महच्छब्दः । च्विप्रत्ययश्च यदा प्रकृतिर्विकाररूपतामापद्यमाना विवक्ष्यते तदोत्पद्यते । परिणामविषयत्वात् च्विप्रत्ययस्य । यदा चैकोर्थः प्रकृतिविकारात्मकतया आश्रीयते तदा परिणामव्यवहारो भवति । यथोक्तम् । जहद्धर्मान्तरं पूर्वमुपादत्ते यदा परम् । तत्वादप्र-

तस्मात् सिध्यति पुंवत्। तस्मात् सिध्यति पुंवद्भावः। यद्येवमात्व-मपि प्राप्नोति। महद्भूतश्चन्द्रमा इति। निवर्त्यमात्वन्तु मन्यन्त। आत्वमपि प्राप्नोति। नैष दोषः। कथम्। यस्तु महतः प्रतिपदं स-मास उक्तः तदाश्रयं ह्यात्वम्॥ कर्त्तव्यं मन्यन्ते न लक्षणेन लक्षणो-क्तस्यायम्। एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रति-पदं यः समासो विहितः तस्य ग्रहणम्। कर्त्तव्यं मन्यन्ते न लक्षणे-न लक्षणोक्तस्यायम्। इहापि तर्हि न प्राप्नोति महान् बाहुरस्य म-हाबाहुरिति। शेषवचनात्तु योऽसौ प्रत्यारम्भात्स्वतो बहुव्रीहिः। त-स्मात्सिध्यति तस्मिन्। यस्माच्छेषो बहुव्रीहिरिति सिद्धऽनेकमन्य-

---

च्युतो धर्मी परिणामः स उच्यते इति। यदा तूत्तरावस्था पूर्वावस्था वा नाश्रीयते तदा चूरभावस्तन्तवो भवन्ति पटो भवतीति। उक्तं च हरिणा। पूर्वावस्थामविजहत्संस्पृश-न्धर्ममुत्तरम्। संमूर्छित इवार्थात्मा जायमानोऽभिधीयते इति। तत्र विकारस्य कर्तृत्वा-द्भूतशब्देन सामानाधिकरण्यात् सिद्धः पुंवद्भावः। निवर्त्यमिति। पुंवद्भाववदात्वस्या-पि प्रसङ्गात्। तदत्र क्वचित्सामानाधिकरण्यं क्वचिद्वैयधिकरण्यमाश्रित्य प्रयोगाः सम-र्थ्यन्ते महद्भूतेत्यत्र विकारभागः कर्तृत्वेनाश्रीयते। गोमतीभूतेत्यत्र तु प्रकृतिभागो मह-द्भूतश्चन्द्रमा इत्यत्रापि प्रकृतिभावः। संघीभवन्ति ब्राह्मणा इत्यादौ तु प्रकृतेरेव कर्तृ-त्वम्। च्व्यन्तस्य गतित्वाद् गतीनां च क्रियाविशेषकत्वात् संघीभवनलक्षणायां विशि-ष्टायां क्रियायां ब्राह्मणानां कर्तृत्वात्। संघः संपद्यत इत्यादौ तु वाक्ये जन्ममात्रस्य संघः कर्त्ता। यथा व्याकरणस्य सूत्रं करोतीति करोतिमात्रस्य सूत्रं कर्म। व्याकरणं सू-त्रयतीत्यत्र सूत्रविशिष्टस्य करोतेर्व्याकरणमेवमिहापि प्रकृतिविकृत्योर्भिन्नक्रियाविषयं कर्तृत्वम्। तेन वृत्तौ प्रकृतिसंख्याश्रयं वचनमेव महद्भूतशब्दः प्रकृतेरेव कर्तृत्व-मवगमयितुं शक्तो महद्भूतेत्ययं तु विकृतेरिति दोषाभावः। तत्र तु विकृतेः कर्तृत्वे प्रकृ-तिरानुमानिकी। महती संपन्ना केति सामर्थ्यादेषासहतीति गम्यते। प्रकृतेस्तु कर्तृत्वे सामर्थ्याद्विकारावस्था प्रतीयते। अमहान् संपन्नः केन धर्मेणेति महत्वेनेति ग-म्यते। अत्वं त्वं संपद्यते त्वद्भवतीत्यत्र तु वृत्तौ वाक्ये च प्रकृतेरेव कर्तृत्वमिति। त-दाश्रयः पुरुषो भवति। मध्यमे तु क्रियमाणेयुष्मदर्थस्य प्रकृत्वं प्रतीयेत त्वमन्यो भव-सीति सर्वत्र चात्र शब्दशक्तिः प्रयोगानुसारिणी प्रमाणमेष तु न्यायोमहद्भवत इत्यत्र परि-हारान्तरसंभवाद् महद्भूतेत्यत्र च पुंवद्भाववदात्वप्रसङ्गाद्भाष्यकृता नोक्तस्तद्दर्शयति यस्तु महत इति। सन्महदिति प्रतिपदोक्तसमासस्येह ग्रहणम्। महद्भूत इत्यत्र तु कुगतिप्रा

पदार्थे इत्याह तेन प्रतिदाक्तं तत्र भवति । प्रधानतो वा यतो वृत्तिः। अथ वा गौणमुख्ययोर्मुख्ये संप्रत्ययः । यथा गौरनुबन्ध्योऽजोऽग्नीषोमीय इति न वाहीको नुबध्यते । कथं तर्हि वाहीके वृध्य त्वं भवतः । गौस्तिष्ठति गामानयेति । अर्थाश्रयएतदेवं भवति । यद्धि श ब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्धात्वे । महदात्वे । म-

---

दय इति लाक्षणिक समास इत्यात्वाभावः । शेषवचनादिति । शेषग्रहणमन्यपदार्थग्रहणं वा कर्त्तव्यमन्यतरेणेष्टस्य लाभादुभयोपादानन्तु पुनर्विधाधानार्थं पुनर्विधानाच्च प्रतिपदोक्तवद्बहुव्रीहिर्भवतीत्यर्थः संपद्यते । प्रधानतो वेति । यस्मात् प्रधानस्यवृत्तिरस्ति तस्माद् गौणस्यात्वं न भवतीत्यर्थः । गुणादागतो गौणः । मुखमिव मुख्यप्रधानमित्यर्थः । शाखादिभ्यो य इति यप्रत्ययः । लोके हि शब्दे उच्चारिते गौणमुख्यार्थसंभवे मुख्यएवार्थे कार्याणि क्रियन्ते । व्याकरणेपि स्वं रूपमित्यत्र रूपग्रहणेन ज्ञापितं रूपवदर्थोऽप्यङ्गीक्रियतइति तत्रापि मुख्यस्यैवार्थस्य कार्येष्वङ्गीकरणम् । कथं पुनरत्र गौणता महदर्थस्य । उच्यते । यस्यानुपचरितं महत्त्वं स मुख्योऽर्थः वृद्धत्वेन तु पूर्वावस्थ उपचरितोत्तरावस्थो ऽर्थात्माभिधीयतइति महत्त्वमसहत्युपचरितमिति गौणार्थाभिधायी महच्छब्दो यथा गौर्वाहीक इति वाहीके गोशब्दः । पुंवद्भावे तु शब्दविशेषस्यानाश्रयणाद्गौण मुख्यन्यायानवतारान्महद्भूतेति पुंवद्भावः सिद्धः । कथं तर्ह्यौदित्यत्र शब्दविशेषानाश्रये ऽपि गोभवदित्यत्र गौणमुख्यन्यायाश्रयेण प्रगृह्यसंज्ञा परिहृता । एवं तर्हि महद्भूतेत्यत्र स्त्रीत्वमर्थस्य मुख्यस्यैव तदाश्रयश्च पुंवद्भावो गोमतीभूतत्यत्र तु प्रकृतेः कर्तृत्वाश्रयणाद्वैयधिकरण्यात् पुंवद्भावाभावः । गोभवदित्यत्र त्वोदन्तस्य निपातस्य गौणार्थत्वात्प्रगृह्यसंज्ञाभावः । शब्दाश्रये च वृद्धात्वे इति । प्रातिपदिकस्य सर्वनामस्थाने अम्शसोश्च वृद्धात्वविधानात्प्रातिपदिकस्य चान्वयव्यतिरेकाभ्यां कल्पिताभ्यामर्थवृत्ताकल्पनात्तस्यामवस्थायां नास्ति गौणार्थत्वम् । पदान्तरसंबन्धे हि पदस्य गौणार्थत्वाभिव्यक्तिः । अथ वा शब्दा न कदाचित् स्वार्थपरित्यागिनार्थान्तरमभिदधात्यनित्यत्व.सङ्गात् शब्दार्थसंबन्धस्य । गोत्वं तु क्व चिदारोपितं गोशब्दप्रयोजकं गौर्वाहीक इति । क्वचित्तु मुख्यम् । यथा रज्जुं सर्पत्वेनाध्यवसाय सर्पशब्दः प्रयुज्यमानो न स्वार्थं जहात्यर्थस्तु विपर्यस्तः । तत्र पदस्य पदान्तरसंबन्धे ऽर्थविपर्याससंभवात् पदकार्येष्वेव गौणमुख्यन्यायो न प्रातिपदिककार्येष्वित्यविपर्यस्त एव चार्थे वृद्धात्वे ऽनुसूय गोशब्दो वाहीके समारोपितगोत्वे प्रवर्त्तते । अग्निसोमौ माणवकावित्यत्राग्नेस्तुत्स्तोमसोमा इति षत्वं न भवति । गौणत्वादग्निसोमशब्दार्थयोः प्रसिद्धप्रसिद्धिकतत्वात्मुख्यगोणव्यवस्थायाः । महदात्व इति । केचिदन्वाच ये च शब्दंमन्यमाना मघतो वाहो

हदात्वे घासकारविशिष्टेषूपसंख्यानं पुंवद्वचनं चासमानाधिकरणार्थम् * । महदात्वे घासकारविशिष्टेषूपसंख्यानं कर्त्तव्यम् । पुंवद्भावश्चासमानाधिकरणार्थो द्रष्टव्यः । महत्या घासो महाघासः । महत्याः कारो महाकारः । महत्या विशिष्टो महाविशिष्टः । अष्टनः कपाले हविषि * । अष्टनः कपाले हविषि उपसंख्यानं कर्त्तव्यम् । अष्टाकपालः । हविषीति किमर्थम् । अष्टकपालं ब्राह्मणस्य । गवि च युक्ते * । गवि च युक्तउपसंख्यानं कर्त्तव्यम् । अष्टागवेन शकटेन । युक्तइति किमर्थम् । अष्टगवं ब्राह्मणस्य । अन्यप्रकृतिरमहान् भूतप्रकृतौ महान्महतयेव॥ तस्मादात्वं न स्यात्पुंवत्तु कथं भवेत्तच ॥ १ ॥ अमहति महान् वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् ॥ तस्मात्सिध्यति पुंवन्निवृत्त्यमात्वं तु मन्यन्ते ॥ २ ॥ यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्वम् ॥ कर्त्तव्यं मन्यन्ते न लक्षणेन लक्षणोक्तश्चायम् ॥ ३ ॥ शेषवचनात्तु योसौ प्रत्यारम्भात्कृतो बहुव्रीहिः ॥ तस्मात् सिध्यति तस्मिन् प्रधानतो वा यतो वृत्तिः ॥ ४ ॥

द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४६ ॥ प्राक्शतादिति वक्तव्यम् * । इह मा भूत् । द्विशतम् । अष्टशतम् । द्विसहस्रम् अष्टसहस्रम् ॥

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ५० ॥ सर्वेषांग्रहणं किमर्थम् । चत्वारिंशत्प्रभृतौ सर्वेषांग्रहणं सर्वेषां विभाषा यथा स्यात् द्व्यष्टनः त्रेश्च । नैतदस्ति प्रयोजनम् । प्रकृतं द्व्यष्टनोर्ग्रहणमनुवर्ति-

---

महाघास इत्यत्राप्यात्वं वर्णयन्ति । यथा तु भाष्यं तथा समुच्चयेचशब्द इति पुंवद्भावसन्नियोगेनात्वं विधीयमानमन्यत्र न भवतीति लक्ष्यते । अष्टाकपाल इति । अष्टसु कपालेषु संस्कृत इति तद्धितार्थे समासः । संस्कृतं भक्षा इत्यण् तस्य द्विगोर्लुगिति लुक् । अष्टकपालमिति । समाहारे द्विगुः पात्रादिभ्यः प्रतिषेध इति स्त्रीत्वाभावः । अष्टागवेनेति । अष्टौ गावो युक्ता अस्मिन्निति त्रिपदे बहुव्रीहौ द्वयोर्द्विगुर्गोरतद्धितलुकीति टच् समासान्तस्तत्र दीर्घत्वेन युक्तार्थसंप्रत्ययाद् गतार्थत्वाद्युक्तशब्दस्य निवृत्तिरथ वा समाहारे द्विगुस्तत्र साहचर्यादभेदोपचारादष्टगवेन युक्तं शकटमष्टागवमुच्यते ॥

विभाषा । मण्डूकगतय इति । द्व्यष्टन्शब्दार्थं त्रयआदेशो न शक्नोति वक्तुमिति च-

ष्यते। यदि तदनुवर्तते। त्रेस्त्रयस् द्व्यष्टनोरपि त्रय आदेशः प्राप्नोति। नैष दोषः। मण्डूकगतयोऽधिकाराः। तद्यथा। मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः। अथ वा एकयोगः करिष्यते। द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः त्रेस्त्रयः। ततो विभाषा चत्वारिंशत्प्रभृतौ सर्वेषामिति। नैकयोगेऽनुवृत्तिर्भवति। अथ वा उभयं निवृत्तं तदपेक्षिष्यामहे॥

हृदयस्यहृल्लेखयदण्लासेषु॥ ५॥ यदण्ग्रहणमिदं प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणे यस्मात्स विहितः तदादेर्ग्रहणं भवतीति यदणन्ते प्राप्नोति। यदण्ग्रहणे रूपग्रहणं लेखग्रहणात्*। यदण्ग्रहणे रूपग्रहणं द्रष्टव्यम्। कुतः। लेखग्रहणात्। लेखग्रहणं करोति तज्ज्ञापयत्याचार्यो न यदणन्ते भवतीति। अपर आह। अल्पल्पमिदं ज्ञाप्यते। सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे रूपग्रहणं द्रष्टव्यम्। कुतः। लेखग्रहणादेव। किं प्रयोजनम्। कुमारीगौरितरा। घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत। यद्येतज्ज्ञाप्यते खित्यनव्ययस्येति खित्येवानन्तरस्यानव्ययस्य ह्रस्वत्व प्राप्नोति। खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा खिदन्ते उत्तरपदे भविष्यति। ननु चायमस्ति स्तनंध-

---

यआदेशेन संबन्धाभावादिहैव द्व्यष्टनोरभिसंबन्धः। अथ वेति। एका भवति क्रिया आत्वत्रय आदेशकर्तृकोपादीयते। ततो यस्मिन् काले द्व्यष्टनोरात्वं तस्मिन्नेव त्रिशब्दस्य त्रयआदेश इत्यर्थः। अथ वोभयमिति। समुदायोऽपेक्ष्यते स तु एक एवेत्यनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्यपि नास्ति॥

हृदय। रूपग्रहणमिति स्वरूपस्य ग्रहणं न तु तदन्तस्येत्यर्थः। लेखग्रहणादिति। एतद्वचनान्यथानुपपत्त्या च लेखशब्दोऽणन्तो गृह्यते न तु घञन्त इति घञि हृदयलेख इत्येव भवति। सर्वत्रैवेति। प्रकरणापेक्षं ज्ञापकमाश्रीयते न त्वेतद्योगापेक्षमेवेत्यर्थः। कुमारीगौरितरेति। उदाहरणदिगियं समासस्तूदाहार्यः कुमारगौरितरेति। अत्र हि घान्तउत्तरपदे पुंवद्भावं बाधित्वा ह्रस्वः स्यात्। संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधिः प्रतिषेध उत्तरपदाधिकारे तूत्तरपदस्य घेन विशेषणात्स्यादेव तदन्तविधिः। संज्ञाविधौ तदन्तविधिनिषेधस्य तु फलं दृष्टत्तीर्ण इत्यत्र धातुतकारस्य नत्वंनिवारणम्। विशेष्यानिर्देशात्वेनिष्ठया तदन्तविध्यभावात् क्तान्तवतुतकारस्यैव नत्वं प्रवर्त्तते। ननु चायमिति।

य इति। अत्रापि शपा व्यवधानम्। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव। अथ वैतज् ज्ञापयत्याचार्यः खिल्यनन्तरस्य न भवतीति यदयमनव्ययस्येति प्रतिषेधं शास्ति। नहि खिल्यनन्तरमव्ययमस्ति॥

पादस्यपदाऽज्यातिगोपहतेषु॥ ५२॥ पदादेशेऽन्तोदात्तनिपातनम् *। पदादेशेऽन्तोदात्तनिपातनं कर्तव्यम्। किं प्रयोजनम्। पदोपहतार्थम्। पादेनोपहतं पदोपहतम्। तृतीयाकर्मणीति पूर्वपदान्तोदात्तत्वं यथा स्यात्। उपदेशिवद्वचनं च स्वरसिद्ध्यर्थम्*। उपदेशिवद्भावश्च वक्तव्यः। किं प्रयोजनम्। स्वरसिद्ध्यर्थम्। उपदेशावस्थायामन्तोदात्तनिपातने कृते समासकृते समासस्वरेण बाधनं यथा स्यात्। पदाजिः। पदातिः।

पद्यत्यतदर्थेषु॥ ५३॥ पद्भावे इके चरतावुपसंख्यानम् *। पद्भावे इके चरतावुपसंख्यानं कर्तव्यम्। पादेन चरति पदिकः॥

वा घोषमिश्रशब्देषु॥ ५६॥ निष्के चोपसंख्यानम् *। निष्के चोपसंख्यानं कर्तव्यम्। पन्निष्केण। पदनिष्केण॥

उदकस्योदः संज्ञायाम्॥५७॥संज्ञायामुत्तरपदस्य च *। संज्ञायामुत्तरपदस्यचेतिवक्तव्यम्। इहापि यथा स्यात्। लोहितोदः चीरोद इति॥

---

खश्चैव कर्तुरभिधानाच्छपो ऽप्रवृत्तिं मन्यते। अत्रापीति। यथा पचतीत्यत्र लेनाभिहिते कर्त्तरि शप् भवति एवमत्रापीति भावः। एकादेशे कृतइति। अयादेशात् परत्वादेकादेश इति भावः। स्थानिवद्भावादिति। श्रुतेर्लिङ्गं दुर्बलमिति स्थानिवद्भावो न बाध्यते। अथ वेति। नह्यव्ययात्परः खित्प्रत्ययः संभवति॥

पादस्य। पादशब्दो वृषादित्वात् स्वाङ्गशिटामदन्तानामिति वाद्युदात्तस्तदादेश आन्तर्यादाद्युदात्त एव प्राप्नोतीत्याह। पादादेश इति। पदोपहतमिति। अत्र तृतीया कर्मणीत्यनेन पूर्वपदप्रकृतिस्वरो ऽन्तोदात्तत्वं भवति। तत एकादेशः स्वरितो वानुदात्ते पदादाविति पक्षे स्वरितः पक्षेतूदात्तः। उपदेशिवद्वचनमिति। यथोपदेशिनः सतिशिष्टेन स्वरेण बाध्यते तथास्यापीत्यर्थः। समासस्वरेणेति। समासाश्रयेण कृत्स्वरेणेत्यर्थः।

पद्य। पदिक इति। पर्पादिभ्यः ष्ठन्निति ष्ठन् प्रत्ययः॥

उदक। उदकशब्दसमानार्थ उदशब्दो विद्यते तथा चाप्रसन्नः प्रसन्नोदमित्यसंज्ञायामप्युदशब्दः प्रयुज्यते। संज्ञायां तूदकशब्दप्रयोगनिवृत्त्यर्थमुदादेशविधानमित्याहुः। एतदन्ये न सृष्यन्ति। एवमभ्युपगमे वक्ष्यमाणो विकल्पो ऽनर्थकः स्यात्॥

एकहलादौ पूरयितव्येऽन्यतरस्याम्॥५९॥ एकहलादाविति कि-मर्थम्। उदकस्थानम्। उच्यमानेऽप्येतस्मिन् वचनेऽत्रापि प्राप्नोति। एतदप्येकहलादि। किं कारणम्। एकैकवर्णवर्तित्वाद्वाचः। उच्चरि-तप्रध्वंसित्वाच्च वर्णानाम्। एकैकवर्णवर्तिनी वाक् न द्वौ युगपदुच्च-रति। तद्यथा। गौरित्युक्ते यावद्गकारे वाक् प्रवर्तते न तावदौकारे न विसर्जनीये। यावदौकारे न तावद् गकारे न विसर्जनीये। या-वद्विसर्ज्जनीये न तावद् गकारे नापि औकारे। उच्चरितप्रध्वंसित्वाच्च वर्णानाम्। उच्चरितो वर्णः प्रध्वस्त इति। अथापरः प्रयुज्यते न वर्णो वर्णान्तरस्य सहायः। एवं तर्हि एकहलादावित्युच्यते सर्वस्यैवैकह-लादिः। तत्र प्रकर्षगतिर्विज्ञास्यते। साधीयो य एक हलादिरिति। कश्च साधीयः। यत्रैकं हलमुच्चार्याजुच्यते॥

इको ह्रस्वोऽङ्यो गालवस्य॥६१॥ इको ह्रस्वत्वमुत्तरपदमात्रे*। इकोह्रस्वत्वमुत्तरपदमात्रे वक्तव्यम्। इहापि यथा स्यात्। अलाबुकर्क-न्धुदृन्भु फलमिति। किं पुनः कारणं न सिध्यति। सर्वान्ते लोकविज्ञान-म्*। लोकविज्ञानाद्धि यदेतत् सर्वान्तं पदं तस्मिन् पूर्वपदस्य ह्रस्वत्वं स्यात्। अथवा एवं विग्रहः करिष्यते। अलाबूश्च कर्कन्धूश्च अलाबुकर्कन्ध्वौ अलाबुकर्कन्ध्वौ च दृन्भूश्च अलाबुकर्कन्धु दृन्भ्वः अलाबुकर्कन्धुदृन्भूनां फलमलाबुकर्कन्धुदृन्भुफलमिति। यद्येवं दृन्भ्वाः पूर्वनिपातः प्राप्नो-

---

एक। एकहलादाविति किमर्थमिति। अतिप्रसङ्गनिवारणासामर्थ्यादनर्थकमिति भावः। एतदपीति। सकारस्यैवादित्वात्। एकैकवर्णवृत्तित्वादिति। यद्यनेकस्य वर्णस्य युगपदुच्चारणं स्यात्तदा स्थानशब्द एकहलादिर्न स्यात्। क्रमोच्चारिता अपि वर्णा यद्य-वतिष्ठेरन् घटादिवत्तदा स्थानशब्दे युगपद्द्वयोरुपलम्भादादित्वं स्याद्यतस्तु नोच्चारणेनाप्यु-पलब्धौ वर्णानां यौगपद्यन्तस्मादेकस्यैव हल आदित्वमिति नार्थ एकग्रहणेन हलादा-वित्येवाजादिनिवृत्त्यर्थं वक्तव्यमिति भावः। तत्र प्रकर्षगतिरिति। असहायवाची कश-ब्द आश्रीयते। समानजातीयस्य सहायत्वेन प्रसिद्धतर इति स एव निवर्त्यते तत्र यद्य-प्युच्चारण उपलब्धौ वा वर्णो वर्णस्य न सहायस्तथापि बुद्धौ कृत्वा सर्वाश्चेष्टा इत्यनेन न्या-येन यस्यानन्तरं द्वितीयो हल् नोच्चार्यते सोऽसहायो हलादिरस्येत्याश्रीयते॥

इको। उत्तरपदमात्र इति। यस्यान्यापेक्षया व्यभिचार्युत्तरपदत्वं तस्मिन्नपीत्यर्थः। अलाबुकर्कन्धू।विति। जातिपरत्वाभावादेकवद्भावो न कृतः। यद्येवमिति। अल्पाच्तर-

ति। राजदन्तादिषु पाठः करिष्यते। अथ वा एवं विग्रहः करिष्यते। हस्त्याः फलं हस्तिफलं कर्कन्ध्वाश्च हस्तिफलं च कर्कन्धुहस्तिफलमलाबूश्च कर्कन्धुहस्तिफलं च अलाबुकर्कन्धुहस्तिफलमिति। एवमपि फलेनाकृतोऽभिसंबन्धो भवति। नैष दोषः। प्रत्येकं फलशब्दः परिसमाप्यते। इयङुवङव्ययप्रतिषेधः *। इयङुवङ्भाविनामव्ययानां च प्रतिषेधो वक्तव्यः। श्रीकुलम्। भ्रूकुलम्। काण्डीभूतम्। कुड्यीभूतं वृषलकुलम्। अभ्रुकुंसादीनामिति वक्तव्यम्। भ्रुकुंसः। भ्रूकुंसः। भ्रुकुटिः। भ्रूकुटिः। अपर आह। अकारो भ्रूकुंसादीनामिति वक्तव्यम्। भ्रकुंसः। भ्रकुटिः॥

एक तद्धिते च॥ ६२॥ एकतद्धिते किमुदाहरणम्। एकत्वमेकतेति। नैतदस्ति प्रयोजनम्। पुंवद्भावेनाप्येतत् सिद्धम्। कथम्। तसिलादिष्वाकृत्वसुच इति। इदं तर्हि प्रयोजनम्। एकस्या आगतमेकरूप्यमेकमयम्। इदं चाप्युदाहरणमेकत्वमेकता। ननु चोक्तं पुंवद्भावेनाप्येतत्सिद्धमिति। न सिद्ध्यति। उक्तमेतत् त्वतलोर्गुणवचनस्येति। अथोत्तरपदे किमुदाहरणम्। एकशाटी। नैतदस्ति। पुंवद्भावेनाप्येतत्सिद्धम्। कथं पुंवद्भावः। समानाधिकरणलक्षणः पुंवद्भावः इदं तर्हि एकस्याः क्षीरमेकक्षीरम्। इदं चाप्युदाहरणम्। एकशाटी। ननु चोक्तं पुंवद्भावेनाप्येतत्सिद्धमिति। न सिध्यति। न कोपधाया इति प्रतिषेधः प्राप्नोति। नैषोऽस्ति प्रतिषेधः। उक्तमेतत्। कोपधप्रतिषेधे तद्धितवुग्रहणमिति॥

---

मित्यनेन। त्रयाणां तु द्वन्द्वे तन्त्रे तरप्निर्देशे ऽल्पाच्तरत्वाभावात् पूर्वनिपाताप्रसङ्गः। प्रत्येकमिति। ओरञित्यत्र फले लुकि कृते नपुंसकाश्रयं ह्रस्वत्वमिति प्रकारान्तरेणोक्तं भवति।

एक। त्वतलोर्गुणवचनस्येति। एकशब्दो यदा संख्यावाची तदा गुणवचनः यदा असहायवाची तदा गुणवचनो न भवति। उक्तमेतदिति। नकोपधाया इति प्रतिषेधाभावे स्त्रियाः पुंवदित्यनेनात्र पुंवद्भावो न तु पुंवत्कर्मधारयलक्षणेन। तस्य प्रतिषिद्धार्थत्वात्। अथोच्येत। परत्वात्कर्मधारयलक्षणेन पुंवद्भावेन भाव्यमिति। नैतदस्ति। परत्वाश्रयणे कृत्स्नत्वेनैवानेन परत्वाद्भाव्यम्। भाष्यकारस्तु तत्पार्येणोदाहरणत्वमस्य निराकृतवान् रूपस्यान्यथासिद्धत्वात्।

खित्यनव्ययस्य ॥६६॥ खितिह्रस्वप्रसिद्धिरनजन्तत्वात् । खिति-ह्रस्वस्याप्रसिद्धिः । कालिंमन्या । हरिणिंमन्या । किं कारणम् । अ-नजन्तत्वात् । मुमि कृते ऽनजन्तत्वाद् ह्रस्वत्वं न प्राप्नोति । सिद्धं तु ह्रस्वान्तस्य मुम्वचनात् * । सिद्धमेतत् । कथम् । ह्रस्वान्तस्य मुम्भव-तीति वक्तव्यम् । सन्नियोगाद्वा * । अथ वा सन्नियोगः करिष्यते । क एष यत्नश्चोद्यते सन्नियोगो नाम । चकारः कर्तव्यो मुम् च । किंच । यच्चान्यत्प्राप्नोति । किं चान्यत्प्राप्नोति । ह्रस्वत्वम् । सिध्य-ति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं खिति ह्र-स्वाप्रसिद्धिरनजन्तत्वादिति । परिहृतमेतत् । सिद्धन्तु ह्रस्वान्तस्य मुम्व-चनादिति । तत्तर्हि ह्रस्वग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । प्रकृतम-नुवर्त्तते । क्व प्रकृतम् । इको ह्रस्वो ऽङ्यो गालवस्येति । तद्वै प्रथमा-निर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । खितीत्येषा सप्तमी ह्रस्व इति प्रथ-मायाः षष्ठीं प्रकल्पयिष्यति तस्मिन्नितिनिर्दिष्टे पूर्वस्येति । अथ वा खिति ह्रस्वोभवतीत्युच्यते। खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा भूतपूर्वगतिर्विज्ञास्यते। अजन्तं यद् भूतपूर्वमिति । अथ वा कार्यका-लं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यं खिति ह्रस्वो भवतीत्यु-पस्थितमिद भवति अच इति । तत्र वचनादनजन्तस्यापि भविष्य-ति । इहापि तर्हि वचनात्प्राप्नोति । वाङ्मन्य इति । नैतदस्ति ।

---

खित्य । खितिह्रस्वप्रसिद्धिरिति । इह ह्रस्वश्रुत्याच्युपस्थापिते ऽचापूर्वपदस्य विशेष-णादजन्तस्य ह्रस्वेन भाव्यं पूर्वपदेन त्वचि विशेष्यमाणे वाङ्मन्यादिष्वपि ह्रस्वप्रसङ्ग-स्तत्र मुमि कृते ऽनजन्तत्वाद् ह्रस्वाप्रसङ्गः । अथ स्तनंधयादिषु सावकाशो मुमागमःका-लिंमन्यादिषु ह्रस्वेन बाध्यते तथापि मुम्न प्राप्नोतीति मुमर्थो यत्नः कर्त्तव्यः । अत्रोत्त-रमाह । सिद्धं त्विति । सन्नियोगाद्वेति । सन्नियोगो यौगपद्यमित्यर्थः । खितीत्येषास-प्तमीति । इह सूत्रे ह्रस्वस्य विधीयमानत्वात् खितीति सप्तम्या षष्ठीप्रकल्पनं नास्ति । उत्तरसूत्रे तु खितीत्यनुवृत्ता सप्तमी ह्रस्व इति प्रथमायाः षष्ठीं प्रकल्पयति । तत्र का-लिंमन्यादिषु च पर्जन्यवल्लक्षणप्रवृत्त्या कृते ह्रस्वान्तस्य मुमागम इति ह्रस्वमुमागमयो-र्निमित्तनिमित्तिभावादुत्सर्गापवादाभावाभावः । अथ वेति । पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्व-स्यापि ह्रस्वेन भाव्यमित्येकविषयत्वाद् ह्रस्वमुमागमयोरुत्सर्गापवादभावात् । विरो-धाभावाच्च मुमि कृते भूतपूर्वाजन्तत्वाश्रयेण ह्रस्वः प्रवर्तते । तत्र वचनादिति । पूर्वपदे

इकइति वर्तते। एवमपि खट्वंमन्यः, अत्र न प्राप्नोति। नैष दोषः। आब्ग्रहणमपि प्रकृतमनुवर्तते। क्व प्रकृतम्। ङ्यापोःसंज्ञाछन्दसोर्बहुलमिति। एवमपि कीलालपंमन्यः। शुभंयंमन्यः। अत्र न प्राप्नोति। तस्मात् पूर्वोक्तावेव परिहारौ॥

सूच एकाचोम्प्रत्ययवच्च॥६८॥ अमः प्रत्ययवदनुदेशे किं प्रयोजनम् अमः प्रत्ययवदनुदेशे प्रयोजनमात्वपूर्वसवर्णगुणेयङुवङादेशाः*। अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णगुणेयङुवङादेशाः प्रयोजनम्। आत्वं प्रयोजनम्। गांमन्यः। पूर्वसवर्णः प्रयोजनम्। स्त्रींमन्यः। गुणः प्रयोजनम्। नरंमन्यः। इयङुवङौ प्रयोजनम्। श्रियंमन्यः। भुवंमन्यः। अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णाप्रसिद्धिरप्रथमात्वात् *। अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णयोरप्रसिद्धिः। किं कारणम्। अप्रथमात्वात्। प्रथमयोरित्युच्यते। न चात्र प्रथमां पश्यामः। किं च भो आत्वं प्रथमयोरित्युच्यते न खलु प्रथमयोरित्युच्यते प्रथमयोरिति विज्ञायते। कथम्। अम्शसोरित्युच्यते त एवं विज्ञास्यामः शस्सहचरितो योऽम्शब्दः। कश्च शस्सहचरितः। प्रथमैव। ननु च प्रत्ययवदनुदेशात्सिद्ध्यति। न सिध्यति। किं कारणम्। सामान्यातिदेशे हि विशेषानतिदेशः। सामान्ये ह्यतिदिश्यमाने विशेषोनतिदिष्टो भवति। तद्यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति सामान्यं यद् ब्राह्मणकार्यं तत् क्षत्रियेऽतिदिश्यते। यद्विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते। एवमिहापि सामान्यं यत्प्रत्ययकार्यं तदतिदिश्यते यद्विशिष्टं द्वितीयैकवचने भवति प्रथमयोरिति न तदतिदिश्यते।

---

णाद्विशेष्यते खितीत्यनेन च। तत्र येन नाव्यवधानमिति न्यायेन सुमि कृते एकहल्व्यवहितस्याचो ह्रस्वप्रवृत्तिः।

सूच। शसा सहचरित इति। साहचर्यं विशेषस्मृतिहेतुर्भवति यथा रामलक्ष्मणाविति तथा औतोऽम्शसोरित्यत्र शस्सहचरितस्यामो ग्रहणादन्यस्य ग्रहणाभावः। सामान्यातिदेश इति। सामान्यस्य शब्दार्थत्वाद्विशेषाणां त्वशब्दार्थत्वात् सामान्यशब्दोपादानेनातिदेशः क्रियमाणः सामान्यनिबन्धनमेव कार्यं प्रापयति न तु विशेषनिबन्धनम्। विशेषशब्दाश्रयेण त्वतिदेशे क्रियमाणे तस्मिन् विशेषे यत्कार्यं सामान्यनिबन्धनं विशेषनिबन्धनं च तत्सर्वमतिदिश्यते। अत्वपूर्वसवर्णवत् गुणस्याप्यसिद्धिर्वक्तव्या।

सिद्धं तु द्वितीयैकवचनवद्वचनात् *। सिद्धमेतत्। कथम्। द्वितीयैकवचनवद्वचनात्*। द्वितीयैकवचनवद्भवतीति वक्तव्यम्। एकशेषनिर्देशाद्वा*। अथ वैकशेषनिर्देशोयम्। अम् च अम् च अम्। इच एकाचः अम् भवति अम् प्रत्ययवच्चास्मिन् कार्यं भवति। यथेह कथं भवितव्यम्। श्रियमात्मानं मन्यते ब्राह्मणकुलम्। श्रियंमन्यं ब्राह्मणकुलम्। आहो स्विच्छ्रिमन्यमिति। श्रियं मन्यमिति भवितव्यम्। स्वमोर्नपुंसकादिति लुक्कस्मान्न भवति। नाप्राप्ते लुक्यमारभ्यते। स यथैव सुपो धातुप्रातिपदिकयोरित्येवं बाधते एवं स्वमोर्नपुंसकादित्येतमपि लुकं बाधेत। नबाध्यते। किं कारणम्। येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते सुपो धातुप्रातिपदिकयोरित्यतस्मिन्नेतदारभ्यते स्वमोर्नपुंसकादित्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च। अथवा मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते इत्येवमयममागमः सुपो धातुप्रातिपदिकयोरित्येतं बाधते स्वमोर्नपुंसकादित्येतन्न बाधते। एवं तर्ह्यसिद्धं बहिरङ्गमन्तरङ्ग इत्यसिद्धत्वाद्बहिरङ्गलक्षणस्यामोऽन्तरङ्गलक्षणो लुक् न भविष्यति। नैषा परिभाषेहोत्तरपदाधिकारे शक्या विज्ञातुम्। इह हि दोषः स्यात्। द्विषन्तपः परन्तप इति। संयोगान्तलोपो न स्यात्। तस्माच्छ्रिमन्यमित्येव भवितव्यम्॥

कारसत्यागदस्य॥ ७०॥ अस्तुसत्यागदस्य कारउपसंख्यानम्*।

---

एकशेषनिर्देशाद्वेति। यद्यपि सहविवक्षायामेकशेषोऽत्र च तस्या असंभवोऽमागमस्य विधेयत्वादपरस्यामः प्रत्ययविशेषणत्वात्तथापि जातिपक्षाश्रयेण इक्षाद्यर्थः प्रत्याख्यात एकशेषः सहविवक्षाया अभावेऽपि संज्ञापरिभाषवल्लक्षणाङ्गं विज्ञायते। अथेति। अत्र विषये श्रीशब्दो ब्राह्मणकुले स्वलिङ्गपरित्यागेन वर्तते यथा प्रष्टादयः पुंयोगात् स्त्रियां वर्तमानाः स्वलिङ्गमपहाय स्त्रीलिङ्गमुपाददते। नाप्राप्ते लुकीति। अमागमाऽम्प्रत्ययवदित्यतिदेशात् कार्यास्यात्मविनाशं वर्जयित्वा प्रतिपद्यते। विधानसामर्थ्यान्नि लुकं न प्रतिपद्यते। यथा परिधियूपो भवतीति यूपकार्याणि तक्षणं विहाय परिधौ क्रियन्तेऽतष्टाः परिधयो भवन्तीति वचनात्तक्षणं परिधित्वहानिप्रसङ्गात्। द्विषन्तप इति। संयोगान्तलोपो न स्यादिति केचिदाहुः। एतत्तु द्वयोरेकस्य वा तकारस्य श्रुतौ विशेषानवधारणादन्ये ऽसाधुमन्यमाना अनुस्वाराप्राप्तिलक्षणं दोषमाहुः। एवं च परन्तप इत्यपि समर्थितं भवति॥

कारो। अस्तुं कार इति। अभ्युपगमकरणमच्यते। सत्यंकारः। शपथकरणम्। अग-

अस्तुसत्यागदस्य कारउपसंख्यानं कर्त्तव्यम। अस्तुंकारः। सत्यंकारः। अगदंकारः। भक्षस्यच्छन्दसि *। भक्षस्य छन्दस्युपसंख्यानं कर्त्तव्यम्। तस्य ते भक्षंकारस्य। छन्दसीति किमर्थम्। भक्षकारस्य तन्मतमिति। धेनोर्भव्यायाम् *। धेनोर्भव्यायामुपसंख्यानं कर्तव्यम्। धेनुंभव्या। लोकस्य पृणे *। लोकस्य पृणउपसंख्यानं कर्त्तव्यम्। लोकं पृणस्य धन्विनः। इत्येऽनभ्याशस्य *। इत्येऽनभ्याशस्योपसंख्यानं कर्तव्यम्। अनभ्याशमित्यम्। भ्राष्ट्राग्न्योरिन्धे *। भ्राष्ट्राग्न्योरिन्ध उपसंख्यानं कर्त्तव्यम्। भ्राष्ट्रमिन्धः। अग्निमिन्धः। गिलेऽगिलस्य *। गिलेगिलस्योपसंख्यानं कर्तव्यम्। तिमिंगिलः। अगिलस्येति किमर्थम्। गिलगिलः। गिलगिले च *। गिलेऽगिले चेति वक्तव्यम्। तिमिंगिलगिलः। उष्णभद्रयोः करणे *। उष्णभद्रयोः करणउपसंख्यानं कर्त्तव्यम्। उष्णंकरणम्। भद्रंकरणम्। सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा *। सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रट्वा भवतीति वक्तव्यम्। सूतपुत्री। सूतदुहिता। सूत। उग्रपुत्री। उग्रदुहिता। उग्र। राजपुत्री। राजदुहिता। राज। भोजपुत्री भोजदुहिता। भोज। कुलपुत्री कुलदुहिता। कुल। मेरुपुत्री। मेरुदुहिता। मेरु॥

रात्रेः कृति विभाषा ॥७२॥ किमियं प्राप्ते विभाषा आहोस्विदप्राप्ते। कथं च प्राप्ते कथं चाऽप्राप्ते। यदि खितीत्यनुवर्त्तते ततो नित्यं प्राप्ते। अथ नानुवर्तते तदाऽप्राप्ते। रात्रेरप्राप्ते विभाषा प्राप्ते नित्यो विधिः। रात्रिंमन्यः। अप्राप्ते विभाषा। रात्र्यटः। रात्रिमटः॥

---

यथेऽपि डाचं परत्वात् बाधित्वा कारशब्दे मुम् भवति। अगदंकारो विषप्रतिपक्षद्रव्यकरणम्। भक्षंकारस्येति। यागशेषद्रव्यभक्षणस्य कर्तुरित्यर्थः। धेनुंभव्याशब्देन भविष्यन्ती धेनुरुच्यते। भव्यगेयेति कर्तरि कृत्यो धेनुर्भव्येति विशेषणसमासः। लोकं पृणस्येति। पृणतिः पूरणार्थः। लोकस्य पूरकस्येत्यर्थः। इत्य इति। अनभ्याशं दूरमित्यमस्येति समासः। दूरात्परिहर्त्तव्य इत्यर्थः। तिमिंगिलगिल इति। तिमिंगिलगिल इति-समासः। तिमिंगिलं गिलतीति व्युत्पत्तौ नार्थ उपसंख्यानेन॥

रात्रेः। प्राप्ते नित्य इति। पूर्वविप्रतिषेधेनेति भावः॥

नलोपो नञः ॥ ७३ ॥ किमर्थं नञः सानुबन्धकस्य ग्रहणं क्रियते । न नस्येत्येवोच्येत । नस्येतीयत्युच्यमाने कर्णपुत्त्रः पर्णपुत्त्रः इत्यत्रापि प्रसज्येत । नैष दोषः । अर्थवद्ग्रहणे नानर्थकस्येत्येवमत्र न भविष्यति । एवमपि प्रश्नपुत्त्रो विश्नपुत्त्र इत्यत्रापि प्राप्नोति । नैष दोषः । अननुबन्धकग्रहणे न सानुबन्धकस्येत्येवमस्य न भविष्यति। एवमपि वामनपुत्त्रः प्रामानपुत्त्र इत्यत्रापि प्राप्नोति । तस्मात् सानुबन्धकग्रहणं कर्त्तव्यम् । नञो नलोपे अवक्षेपे तिङ्युपसंख्यानम्*। नञो नलोपेऽवक्षेपे तिङ्युपसंख्यानं कर्तव्यम्। अपचसि वै त्वं जाल्म । अपकरोषि वै त्वं जाल्म ॥

तस्मान्नुडचि ॥ ७४ ॥ किमर्थं तस्मादित्युच्यते । न नुडचीत्येवोच्येत नुडचीतीयत्युच्यमाने नञ एव नुट् प्रसज्येत । एवं तर्हि पूर्वान्तः करिष्यते तत्रायमप्यर्थः । तदोः सः सावनन्त्ययोरिति तदोग्रहणं न कर्त्तव्यं भवति तत्र हि तवर्गानिर्देशे एतत्प्रयोजनमिह मा भूत् अनेषः करोतीति । यावता पूर्वान्तोयं न दोषो भवति । नैवं शक्यम् । इह हि अनुषा इति नलोपः प्रातिपदिकान्तस्येति नलोपः प्रसज्येत । नुड्वचनान्न भविष्यति । ङमुट् तर्हि प्राप्नोति । तस्मात्परादिः कर्त्तव्यः । परादौ च क्रियमाणे तस्मादिति च वक्तव्यम् ॥

---

नलो । किमर्थमिति । चादिष्वननुबन्धक एव पठ्यतां स एव चेहानुक्रियतामिति भावः । अर्थवद्ग्रहण इति । उणादीनामव्युत्पन्नत्वान्नस्यानर्थकमव्युत्पत्तिपक्षाश्रयणे च नकारोपि न भवति किं तर्हि णकारः । व्युत्पत्तिपक्षे हि णत्वस्य पूर्वत्रासिद्धत्वान्नकारो भवति । तस्मादिति । अथ क्रियमाणे ऽपि सानुबन्धकग्रहणे स्त्रैणपुत्त्र इत्यत्र कस्मान्न भवति प्रत्ययञित्वस्य वृद्धिस्वरयोश्चरितार्थत्वान्निपातञित्वस्य त्वनन्यार्थत्वात् । अवक्षेपे तिङीति । अवक्षेपो निन्दा ।

तस्मा । नञ एवेति । तस्मिन्निति निर्दिष्टे पूर्वस्येति वचनात्तस्मादिति तूच्यमाने पञ्चमीनिर्देशसामर्थ्यात्तस्मादित्युत्तरस्येति परिभाषोपस्थानादजादेरुत्तरस्य पदस्य नुड् भवति । सप्तमीनिर्देशोऽप्यागमसंबन्धे युज्यते । अवयवत्वादागमस्यावयविन आधारत्वात्संबन्ध विवक्षायान्तु षष्ठी भवतीति । तवर्गादिनिर्देश इति । तदोरित्यपनीय तोरिति वसनिर्देश इत्यर्थः । अनेषःकरोतीति । परादावपि नुटि बहिरङ्गत्वात्तस्यासिद्धत्वात्तोः सः सावित्यपि क्रियमाणे सत्वं न भविष्यतीति चिन्त्यमेतत् ॥

एकादिश्चैकस्य चादुक् ॥ ७६ ॥ किमर्थमादुगुच्यते न अदुगेवो-च्येत का रूपसिद्धिः। एकान्नविंशतिः। एकान्नत्रिंशत्। सवर्णदीर्घत्वेन सिद्धम्। न सिध्यति। अतो गुणे इति पररूपत्वं प्राप्नोति। एवं तर्ह्यदुट् करिष्यते। अदुट् चाशक्यः कर्तुम्। आनुनासिक्यं हि न स्यात्। यद्वि तद्यरोनुनासिकेनुनासिको वेति। पदान्तस्येत्येवं तत्। किं पुनः कारणम्। पदान्तस्येत्येवं तदिति। इह मा भूत् ब्रध्नः बुध्नातिरभ्णातीति। एवन्तर्ह्यनुट्करिष्यते। अनुट् चाशक्यः कर्तुम्। विभाषया ह्यानुनासिक्यम्। तेनेदमेव रूपं स्यात् एकान्नविंशतिरिति। इदं न स्यादेकात् न विंशतिरिति। अस्तु तर्ह्यदुगेव। ननु चोक्तमतो गुणइति पररूपत्व प्राप्नोतीति। नैष दोषः। अकारोच्चारणसामर्थ्यान्न भविष्यति। यदि तर्हि प्राप्नुवन् विधिरकारोच्चारणसामर्थ्याद् बाध्यते। सवर्णदीर्घत्वमपि तर्हि न प्राप्नोति। यं विधिं प्रत्यकारोच्चारणमनर्थकं भवति स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते पररूपं च प्रत्याकारोच्चारणमनर्थकं सवर्णदीर्घत्वस्य पुनर्निमित्तमेव ॥

सहस्य सः संज्ञायाम् ॥ ७८ ॥ सहस्य हलोपवचनम् *। सहस्य हलोपो वक्तव्यः। सादेशे हि सति स्वरे दोषः। आन्तर्यत उदात्तानुदात्तयोः स्थाने स्वरित आदेशः प्रसज्येत। सपुत्त्रः। सभार्यः। स तर्हि लोपो वक्तव्यः। न वक्तव्यः। आद्युदात्तनिपातनं करिष्यते। स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति। एवमप्युपदेशिवद्भावो वक्तव्यः। स यथैव निपातनस्वरः प्रकृतिस्वरं बाधते। एवं समासस्वरमपि बाधेत सेष्टि सपशुबन्धमिति ॥

---

एकादि। तुल्यायामपि संहितायां प्रतिपत्तिलाघवाय वृत्तिकारैरादुगाश्रितो भाष्यकारेण तु न्यायाददुगेव स्थापितः। एवं तर्हीति। अदुटिक्रियमाणे एकस्येति न वक्तव्यं नञः प्रकृतत्वादागमित्वादकारस्य च पदान्तत्वात्पररूपाप्रसङ्गः।

सह। निपाता आद्युदात्ता इति सहशब्द आद्युदात्तः। प्रकृतिस्वरस्येति। आन्तर्यतः प्राप्तस्य स्वरितस्येत्यर्थः। एवमपीति। तेनैतदाद्युदात्तत्वं सपुत्त्र इत्यादौ बहुव्रीहौ पूर्वपदप्रकृतिस्वरविधौ श्रूयते। अव्ययीभावे तु समासान्तोदात्तत्वमेव भवति।

ग्रन्थान्ताधिके च ॥ ७९ ॥ ग्रन्थान्ते वचनानर्थक्यमव्ययीभावेन कृतत्वात् * । अव्ययीभावे चाकाल इत्येव सिद्धम् । यस्तर्हि कालोत्तरपदो ग्रन्थान्तस्तदर्थमिदं वक्तव्यम् । सकाष्ठं ज्योतिषमधीते । सकलं समुहूर्त्तम् ॥

वोपसर्जनस्य ॥ ८२ ॥ उपसर्जनस्य वावचने सर्वप्रसङ्गोऽविशेषात् * । उपसर्जनस्य वावचने सर्वप्रसङ्गः सर्वस्योपसर्जनस्य सादेशः प्राप्नोति। अस्यापि प्राप्नोति सहयुध्वा सहकृत्वा । किं कारणम्। अविशेषात् । न हि कश्चिद्विशेष उपादीयते एवं जातीयकस्य सहशब्दस्योपसर्जनस्य सादेशो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः । सिद्धन्तु बहुव्रीहिनिर्देशात् * । सिद्धमेतत् । कथम्; बहुव्रीहिनिर्देशात् । बहुव्रीहिनिर्देशः कर्तव्यः । एवमपि सहयुध्वप्रियः सहकृत्वप्रियः अत्र प्राप्नोति । बहुव्रीहौ यदुत्तरपदमित्येवं विज्ञास्यते। नन्वेतदपि बहुव्रीहावुत्तरपदम् । एवन्तर्हि बहुव्रीहौ यदुपसर्जनमित्येवं विज्ञास्यते । नन्वेतदपि बहुव्रीहावुपसर्जनम् । एवं तर्हि नैवं विज्ञायते । बहुव्रीहौ यदुपसर्जनमिति । किं तर्हि बहुव्रीहौ च यदुपसर्जनम् । बहुव्रीहिं प्रति च यदुपसर्जनम् । स तर्हि बहुव्रीहिनिर्देशः कर्त्तव्यः । न कर्त्तव्यः । इह कश्चित्प्रधानानामेव समासः कश्चिदुपसर्जनानामेव कश्चित्प्रधानोपसर्जनानामेव । तद्य उपसर्जनानामेव समासः तदुपसर्जनंतस्येदं ग्रहणम् । अथ वाऽकारो मत्वर्थीयः । तद्यथा । तुन्दो घाट इति। अथवा मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा। पुष्यका येषांत इमे पुष्यकाः कालकाः येषां त इमे कालका इति॥

---

ग्रन्थान्त । यस्तर्हीति । बहुव्रीहौ परत्वाद्विकल्पेन भाव्यमित्यव्ययीभाव एवोदाहरणम् । सकाष्ठमिति । काष्ठादयः शब्दाः कालविशेषवाचिनः उपचारात्तदर्थे ग्रन्थे वर्त्तन्ते तदान्तवचने ऽव्ययीभावः ।

वोपस । नन्वेतदपीति । ननु बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवति व्यवधानायुद्धकृत्वशब्दयोश्च बहुव्रीहावनुत्तरपदत्वात् एवं तर्हि बहुव्रीहिग्रहणस्य कर्त्तव्यत्वेनाश्रिततान्नैतद्विचारितम् । तद्य उपसर्जनानामिति । सहशब्दस्य तावदसत्ववाचित्वाद्द्वन्द्वाभावोऽन्यस्मिंस्तु समासे सहशब्द उपसर्जनमेवेत्युपसर्जन ग्रहणसामर्थ्यात्सर्वोपसर्जनावयवः समासः उपर्जनशब्देन मत्वर्थीयाकारान्तेन वोच्यते ।

प्रकृत्याशिषि ॥८३॥ प्रकृत्याशिष्यगवादिषु*। प्रकृत्याशिष्यगवादिष्विति वक्तव्यम्। इह मा भूत्। स्वस्ति भवते सगवे सवत्साय सहलायेति ॥

चरणे ब्रह्मचारिणि ॥ ८६ ॥ अत्र किं निपात्यते। ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्च *। ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिः प्रत्ययो व्रतलोपश्च निपात्यते। समाने ब्रह्मणि व्रतचारी सब्रह्मचारी ॥

दृग्दृशवतुषु ॥ ८९ ॥ दृग्दृशवतुषु दृक्ष उपसंख्यानम् *। दृग्दृशवतुषु दृक्ष उपसंख्यानं कर्त्तव्यम्। सदृक्षासः प्रतिसदृक्षासः ॥

समः समि: ॥ ९३ ॥ न ह्विवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ११६ ॥ किमर्थमञ्चतिनह्यादिषु क्विब्ग्रहणं क्रियते। इह मा भूत्। समञ्चनम्। उपनहनम्। नैतदस्ति प्रयोजनम्। उत्तरपद इति वर्त्तते। नचान्तरेण क्विपमञ्चतिनह्यादय उत्तरपदानि भवन्ति। तत्रान्तरेण क्विब्ग्रहणंक्विबन्तएवंभविष्यति। तदादिविधिना प्राप्नोति। अत उत्तरं पठति। अञ्चतिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिन्विधिस्तदादावल्ग्रहणे *। अञ्चतिनह्यादिषु क्विब्ग्रहणमनर्थकम्। किं कारणम्। यस्मिन्विधिस्तदादावल्ग्रहणे। अल्ग्रहणे ह्येतद्भवति। न चेदमल्ग्रहणम्। एवं तर्हि सिद्धेसति यदञ्चतिनह्या-

---

प्रकृत्या। अगोवत्सहलेष्विति भाष्यवार्त्तिकदर्शनात्सूत्रे केन चिन्नच्छिन्नम्।

चरणे। सब्रह्मचारिशब्देन चरणेन तुल्य उच्यते अत एव चरणे सभावो विधीयते तत्र ब्रह्मणो ग्रन्थत्वाच्चर्यमाणता न संभवतीति निपातनमाश्रयितव्यमिति मत्वा प्रश्नः। अत्रेति। ब्राह्मणण्युपपद इति। अवयवनिपातनद्वारेण विशिष्टेऽर्थे समुदायस्यैव साधुत्वमन्वाख्येयमिति मत्वा समुदायमेव निपात्यत्वेनोपन्यस्यति। समाने साधारणे ब्रह्मणि वेदे यो व्रतं चरति स सब्रह्मचारीत्यर्थः। व्रतलोपश्चेति। गतार्थत्वादप्रयोग एव व्रतशब्दस्य लोपः ब्रह्मशब्देन हि तादर्थ्याद् व्रतमुच्यते। ब्रह्मणश्च समानत्वात् समानो ब्रह्मचारी सब्रह्मचारीत्युच्यते ॥

दृग्दृश। सदृक्षास इति। दृशेः क्सो वक्तव्यः जस आज्जसेरसुगित्यसुगागमः।

समः। विचारस्य समानत्वान्नत्वान्नह्यादिग्रहणं कृतम्। तदादिविधिनेति। अतः कृकमीत्यादौ धातुग्रहणे दृष्टस्तदादिविधिरिति भावः। एवं तर्हीति। अनल्ग्रहणेऽपि-

दिषु क्विब्ग्रहणं करोति तज्ज्ञापयत्याचार्योऽन्यत्र धातुग्रहणे तदादिविधिर्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्येत्यत्रायस्कृत् अयस्कार इत्यपि सिद्धं भवति ॥

विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ॥ ९२ ॥ सहस्य सध्रिः ॥ ९५ ॥ अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम् * । अद्रिसध्र्योरन्तोदात्तत्वं वक्तव्यम् । किं प्रयोजनम् । कृत्स्वरनिवृत्त्यर्थम् । कृत्स्वरो मा भूदिति । विष्वद्र्यङ् विष्वद्र्यञ्चौ विष्वद्र्यञ्चः । सध्र्यङ् सध्र्यञ्चौ सध्र्यञ्चः । तत्र छन्दसि स्त्रियां प्रतिषेधः * । तत्र छन्दसि स्त्रियां प्रतिषेधो वक्तव्यः । विश्वाची घृताची । यदि छन्दसि स्त्रियां प्रतिषेध उच्यते । कथं सा कद्रीची । एवन्तर्हि छन्दसि स्त्रियां बहुलमिति वक्तव्यम् ॥

द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९७ ॥ समाप ईत्वप्रतिषेधः * । समाप ईत्वस्य प्रतिषेधो वक्तव्यः । समापं नाम देवयजनम् । अपर आह । ईत्वमनवर्णादिति वक्तव्यम् । समीपमन्तरीपम् । इह मा भूत् । प्रापं परापम् ॥

ऊदनोर्देशे ॥ ९८ ॥ दीर्घोच्चारणं किमर्थम् । न उदनोर्देश इत्येवोच्येत । का रूपसिद्धिः । अनूपम् । सवर्णदीर्घत्वेन सिद्धम् । न सिध्यति । अवग्रहे दोषः स्यात् ॥

अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥ ९९ ॥ अषष्ठ्यतृतीयास्थस्येत्युच्यते । तत्रेदं न सिध्यति । अन्यस्येदमन्यदीयम् । अन्यस्य कारकोऽन्यत्कारक इति ।

---

धातुग्रहणे तदादिविधिर्भवतीति ज्ञाप्यते स च तदन्तविधिवत् विशेषणविशेष्यभावसंनिपाते भवति तत्रातः कृकमीत्यत्र समासानुवृत्त्या समासाच्चिस्मुत्तरपदं करोतिना विशेष्यत इति भवति तदादिविधिः । सुड्विधौ तु विशेष्यासंनिधानात्तदादिविध्यभावेऽन्तरङ्गत्वं धातूपसर्गाश्रयत्वात्सुट उच्यते । अयस्कृदयस्कार इत्यपीति । उभयमपीत्यर्थोऽन्यथायस्कादित्यत्रैव स्यात् ।

विष्वग्देव । विष्वद्र्यङिति । उदात्तस्वरितयोरिति स्वरितोऽत्यकारो भवति ।

ऊद । अवग्रहे दोषः स्यादिति । न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्ष-

एवं तर्ह्यविशेषेणान्यस्य दुक्छकारकयोरित्युक्त्वा ततो वक्ष्यामि । अषष्ठ्यतृतीयास्थस्याशीराशास्थास्थितोत्सुकोतिरागेच्छिति ॥

कोः कत्तत्पुरुषे चि ॥ १०१ ॥ कद्भावे त्रावुपसंख्यानम् * । कद्भावे त्रावुपसंख्यानं कर्त्तव्यम् । कत्त्रयः । किमिदं कत्त्रय इति । कुत्सितास्त्रयः कत्त्रयः । के वा त्रयो न बिभृयुः कत्त्रय इति

पृषोदरादीनि यथोपदिष्टम् ॥ १०९ ॥ पृषोदरादीनीत्युच्यते । कानि पृषोदरादीनि । पृषोदरप्रकाराणि । कानि पुनः पृषोदरप्रकाराणि । येषु लोपागमवर्णविकाराः श्रूयन्ते न चोच्यन्ते । अथ यथेति किमिदम् । प्रकारवचने थाल् । अथ किमिदमुपदिष्टानीति । उच्चारितानि । कुत एतत् । दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह । उपदिष्टा इमे वर्णा इति । कैः पुनरुपदिष्टाः । शिष्टैः । के पुनः शिष्टाः । वैयाकरणाः । कुत एतत् । शास्त्रपूर्विका हि शिष्टिः वैयाकरणाश्च शास्त्रज्ञाः । यदि तर्हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रम् । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । एवं तर्हि निवासतश्चाचारतश्च । स चाचार आर्यावर्त्त एव । कः पुनरार्यावर्तः । प्रागादर्शात्प्रत्यक्कालकवनात् । दक्षिणेन हिमवन्तमुत्तरेण पारियात्रमेतस्मिन्नार्यावर्त्ते निवासिये ब्राह्मणाः कुम्भीधान्या

---

षमनुवर्त्त्यं यथालक्षणं पदं कर्त्तव्यमिति प्रदेशान्तरोक्तेनैतत् विरुध्यते ।

कोः कत् । के वा त्रय इति । किंशब्दस्याक्षेपार्थस्य कद्भावः ।

पृषोद । कानीति । किमादिशब्दः प्रकारेऽथ व्यवस्थायामिति संदेहात्प्रश्नः । पृषोदरप्रकाराणीति । प्रकार आदिशब्दो व्यवस्थार्थे ह्यादिशब्दे यथोपदिष्टग्रहणमनर्थकं स्यात् । प्रकारवचने थालिति । येन प्रकारेणोपदिष्टानि तेन साधूनि भवन्तीत्यर्थः । यथेति । उपदेशः शास्त्रेण भवति स चैषां नास्ति सद्भावे वा किं निपातनेनेति प्रश्नः । प्रागादर्शादिति । आदर्शादयः पर्वतविशेषाः । प्राचि देशे प्राक् दिक्छब्देभ्य इत्यस्तातिप्रत्ययस्याञ्चेर्लुगिति लुक् । अञ्चूत्तरपदलक्षणा पञ्चमी । दक्षिणेनेति । दक्षिणस्मिन्देश इत्येनबन्यतरस्यामित्येनप् । एनपा द्वितीयेति द्वितीया । आचारमाह । कुम्भीधान्या इति । कुम्भ्यामेव येषां धान्यं ते कुम्भीधान्याः । दम्भार्थं कुम्भीधान्यं स्यादित्याह । यथो-

अलोलुपा अगृह्यमाणकारणाः किं चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गताः तत्रभवन्तः शिष्टाः यदि तर्हि शिष्टाः शब्देषु प्रमाणम् । किमष्टाध्याय्या क्रियते । शिष्टपरिज्ञानार्थाष्टाध्यायी । कथं पुनरष्टाध्याय्या शिष्टाः शक्या विज्ञातुम् । अष्टाध्यायीमधीयानोऽन्यं पश्यत्यनधीयानं ये ऽत्र विहिताः शब्दाः तान् प्रयुञ्जानं स पश्यति । नूनमस्य दैवानुग्रहः । स्वभावो वा योयं न चाष्टाध्यायीमधीते । ये चास्यां विहिताः शब्दाः तांश्च प्रयुङ्क्ते । नूनमयमन्यानपिजानातीति । एवमेषा शिष्टज्ञानार्थाष्टाध्यायीति । दिक्शब्देभ्यस्तीरस्य तारभावो वा* । दिक्शब्देभ्यस्तीरस्य तारभावो वा वक्तव्यः । दक्षिणतीरम् । दक्षिणतारम् । उत्तरतीरम् । उत्तरतारम् । वाचो वादे डत्वं वल्भावश्चोत्तरपदस्येञि * । वाचो वादे डत्वं वक्तव्यं वल्भावश्चोतरपदस्य इञि वक्तव्यः । वाग्वादस्यापत्यं वाड्वलिः । षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च * । षष उत्वं वक्तव्यमुत्तरपदादेःष्टुत्वं च बक्तव्यम् । षोडन् । षोडश । धासु वा धासु वेति वक्तव्यम् । उत्तरपदादेः ष्टुत्वं च वक्तव्यम् । षोढा । षड्ढो कुरु । अथ किमर्थं बहुवचननिर्देशः क्रियते न पुनर्धायामित्येवोच्येत । नानाधिकरणवाची यो धाशब्दः तस्य ग्रहणं यथा विज्ञायत । इह मा भूत् । षट्दधातीति षड्धेति । दुरोदाशनाशदभध्येषु उत्वं वक्तव्यम् । उत्तरपदादेश्च ष्टुत्वम् । दूडाशः । दूणाशः । दूडभः । दूढ्यः ।

---

लुपा इति । अगृह्यमाणकारणा इति । दृष्टकारणमन्तरेणैव सदाचारानुवर्त्तिन इत्यर्थः । किं चिदन्तरेणेति । विनैवाभियोगादिना सर्वविद्यापारगाः ते हि साधुत्वपरिज्ञाने प्रमाणम् । तदुक्तम् । आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् । अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥ अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा । येभावान् वचनं तेषां नानुमानेन बाध्यते । इति । दक्षिणतीरमिति । विशेषणसमासः । षोडन्निति । षड् दन्ता अस्येति बहुव्रीहिः । वयसि दन्तस्य दतृिति दत्रादेशः । धासु वेति । उत्वं विकल्प्यते तेन ष्टुत्वं नित्यमेव भवति उत्तरपदशब्देनात्र भाष्ये धाप्रत्ययोभिधीयते । पद्यतेनेनार्थं इति पदं प्रत्यय उच्यते । उत्तरं पदमिति विशेषणसमासः । नानाधिकरणवाचीति । अर्थगतं बहुत्वं शब्दे समारोप्य धास्विति बहुवचननिर्देश इत्यर्थः । तेनाधिकरणविचाले चेति विहितस्य धाप्रत्ययस्य ग्रहणम् । षड्धेति । न पदान्ताट्टोरनामिति ष्टुत्वप्रतिषेधः । दूडाश इति दुःखेन दाश्यते नाश्यते दभ्यते इति खल् । दभे र्नलोपोऽत एव निपात-

स्वरो रोहतौ छन्दस्युत्वम् *। स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम्। एहि त्वं जाये स्वो रोहावेति। पीवोपवसनादीनां छन्दसि लोपः*। पीवोपवसनादीनां छन्दसि लोपो वक्तव्यः। पीवोपवसनानाम्। पयोपवसनानाम्। श्रियेदम्॥

ढ्लोपे पूर्वस्य दीर्घोऽणः॥ १११॥ पूर्वग्रहणं किमर्थम्। न तस्मिन्निति निर्दिष्टे पूर्वस्येति पूर्वस्य भविष्यति। न सिध्यति। नहि ढ्लोपे नानान्तर्यमस्ति। अथेह कस्मान्न भवति करणीयं हरणीयमिति। नैष दोषः। नैवं विज्ञायते। ढ्रोर्लोपो ढ्लोपः। ढ्लोप इति। कथं तर्हि ढ्रोर्लोपोऽस्मिन् सोऽयं ढ्लोप इति। यद्येवं, नार्थः पूर्वग्रहणेन। भवति ढ्लोपे नानन्तर्यम्। इदं तर्हि प्रयोजनम्। उत्तरपद इति वर्त्तते तेनानन्तयमात्रे यथा स्यात्। औदुम्बरी राजा धूमाकी रथेन। पुना रूपाणि प्रकल्पयन्॥

सहिवहोरोदवर्णस्य॥ ११२॥ वर्णग्रहणं किमर्थम्। न हि सहिवहोरोदस्येत्येवोच्येत। वृद्धावपि कृतायामोत्वं यथा स्यात्। उदवोढामुदवोढमुदवोढेति। अथावर्णग्रहणं किमर्थम्। इह मा भूत्। ऊढ ऊढवानिति। नैतदस्ति प्रयोजनम्। भवत्येवात्रौत्वम्। श्रवणं कस्मान्न भवति। पूर्वत्वमस्य भविष्यति। इदमिह संप्रधार्यम्। ओत्वं क्रियतां पूर्वत्वमिति। किमत्र कर्त्तव्यम्। परत्वादोत्वमन्तरङ्गं पूर्वत्वम्। एवं तर्हीदमिह संप्रधार्यमोत्वं क्रियतां संप्रसारणमिति। किमत्र कर्तव्यम्। परत्वादोत्वम्। नित्यं संप्रसारणम्। कृते ऽप्योत्वे प्राप्नोत्यकृतेपि

---

नात्। दुष्टं ध्यायतीत्यातश्चोपसर्गे इति कः। रोहावेति। लोडुत्तमद्विवचनम्। पीवोपवसनानामिति। पीवस्पयस् इत्येतयोः सलोपः। श्रियेदमिति। श्रिये इदमिति स्थिते इकारलोपः।

ढ्लोपे। न हि ढ्लोपेनेति। आचार्यदेशीयस्तत्पुरुषं मत्वा परिहरति। निर्दिष्टग्रहणस्य प्रयोजनमुक्तं शब्दे सप्तमीनिर्दिष्टे परिभाषोपस्थानं यथा स्याद् अर्थे मा भूच्छब्दो हि शब्दाद् बहिर्भूतः। अर्थस्त्वबहिर्भूतो निः शब्दो हि बहिर्भाववाच्याश्रीयते॥

सहि। उदवोढामिति। वहेर्लुङि तामादिषु सिचि वृद्धौ सलोपे ढत्वधत्वष्टुत्वढलोपेष्वोत्वे च रूपम्। यत्रासति वर्णग्रहणे तादपि परस्तपर इत्यकारस्य तपरत्वान्नित्वकालस्य ग्रहणं न स्याद्दार्थग्रहणात्त्ववर्णमात्रस्य भवति। परत्वादोत्वमिति। ननु ढलोपनि-

ओत्वमपि नित्यम् । कथम् । कृते ऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि । अनित्यमोत्वम् । न हि कृते संप्रसारणे प्राप्नोति । किं कारणमन्तरङ्गं पूर्वत्वम् । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवौत्वस्य निमित्तं विहन्ति अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादोत्वम् । ओत्वे कृते संप्रसारणे कृते संप्रसारणपरपूर्वत्वम् । तत्र कार्यकृतत्वात् पुनरोत्वं न भविष्यति ॥

इकोवहेऽपीलोः ॥ १२१ ॥ अपील्वादीनामिति वक्तव्यम् । इह मा भूत् । रुचिवहम् । चारुवहम् ॥

उपसर्गस्य घञ्यमनुष्येबहुलम् ॥ १२२ ॥ अमनुष्यादिष्विति वक्तव्यम् *। इह मा भूत् । प्रसेवः । प्रसारः । प्रहारः । सादकारयोः कृत्रिमे *। सादकारयोः कृत्रिम इति वक्तव्यम् । इहैव यथा स्यात् । एषोऽस्य प्रसादः । एषोस्य प्राकारः । कृत्रिम इति किमर्थम् । एषोस्य प्रकारः । एषोऽस्य प्रसाद इति । प्रतिवेशादीनां विभाषा *। प्रतिवेशादीनां विभाषा दीर्घत्वं वक्तव्यम् । प्रतिवेशः प्रतीवेशः । प्रतिकारः । प्रतीकारः ॥

दस्ति ॥ १२४ ॥ कथमिदं विज्ञायते दा इत्येतस्मिंस्तकारादाविति आहो स्वित्तकारान्त इति । किं चातः । यदि विज्ञायते त-

---

मित्तमोत्वं तत्र पूर्वत्रासिद्धमिति ढत्वादीनामसिद्धत्वात् पूर्वं संप्रसारणेन भाव्यमिति युगपत्प्राप्त्यभावाद्विप्रतिषेधानुपपत्तिः । अत्राहुः । वर्णमात्रापेक्षत्वाद् ढत्वादीनामन्तरङ्गत्वात्प्रकृतिप्रत्ययविशेषाश्रयत्वात् संप्रसारणस्य बहिरङ्गत्वादसिद्धत्वात् पूर्वत्रासिद्धमित्यस्यानुपस्थानाद् ढत्वादिषु कृतेषु युगपत्प्राप्तिसद्भावाद्युक्तो विप्रतिषेधः । केचित्तु वर्णयन्ति । ढ्रलोपस्यौत्वदीर्घत्वविधौ निमित्तत्वेनाश्रयणादत्र विषये ढत्वादीनां सिद्धत्वमनुमीयत इति भाष्यकारस्याभिप्रायः । ओत्वे कृते इति । ओत्वस्य पुनः प्रवृत्त्यभावे निमित्तसद्भावाद्दीर्घत्वं प्रवर्त्तिष्यते ॥

दस्ति । कथमिदमिति उत्तरपदमिह सन्निहितं तत्र विशेषणविशेष्यभावे कामचारात्तोत्यनेन पूर्वं यदोत्तरपदं विशेष्यते तदा यस्मिन् विधिस्तदादावल्ग्रहण इति तकारादावुत्तरपद इति विज्ञायते पश्चाद्दइत्यनेन तकारो विशेष्यते दः संबन्धीयस्तकारस्तदादावित्यर्थः संपद्यते । अथ तु द इत्यनेन पूर्वं तकारो विशेष्यते तदा यो दाशब्दसंबन्धित्वे-

कारादाविति । नीत्ता । वीत्ता । अत्र न प्राप्नोति । अथ विज्ञायते तकारान्त इति । सुदत्तं प्रतिदत्तमत्रापि प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावत्तकारादाविति । कथं नीत्ता वीत्ता । चर्त्वे कृते भविष्यति । असिद्धं चर्त्वं तस्यासिद्धत्वान्न प्राप्नोति । आश्रयात्सिद्धत्वं भविष्यति । अथ वा पुनरस्तु तकारान्त इति । कथं सुदत्तं प्रतिदत्तम् ॥ नैतत्तकारान्तं किं तर्हि थकारान्तमेतत् ॥

चौ ॥ १३८ ॥ इहान्ये आचार्याः चौप्रत्यङ्गस्य प्रतिषेधमाहुः । तदिहापि साध्यम् । न दोषः । एतदेव ज्ञापयत्याचार्यः न चौप्रत्यङ्गं भवतीति यदयं चौ दीर्घत्वं शास्ति ॥

संप्रसारणस्य ॥ १३९ ॥ इकोह्रस्वात्संप्रसारणदीर्घत्वं विप्रतिषेधेन * । इकोह्रस्वात्संप्रसारणदीर्घत्व भवति विप्रतिषेधेन । इको ह्रस्वस्यावकाशः । ग्रामणिकुलम् । सेनानिकुलम् । संप्रसारणदीर्घत्वस्यावकाशः विभाषाह्रस्वत्वं यदा न ह्रस्वत्वं सोऽवकाशः । ह्रस्वप्रसङ्ग उभयं प्राप्नोति । कारीषगन्धीपुत्त्रः । कौमुदगन्धीपुत्त्रः । संप्रसारणदीर्घत्वं भवति विप्रतिषेधेन । अथेदानीं दीर्घत्वे कृते पुनः प्रसङ्गाद् ह्रस्वत्वं कस्मान्न भवति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये

षष्ठस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ॥

॥ पादश्च समाप्तः ॥

---

न सिद्धस्तकारः सोऽनूद्यते । चर्त्वस्य चासिद्धत्वादादिभूतो नास्तीति सामर्थ्यादन्तभूतस्य ग्रहणमिति तकारान्त इत्येष पक्षोऽवतिष्ठते । तत्र निर्णयाय प्रश्नप्रतिवचनोपन्यासः । नीत्तेति । दाशब्दस्य निष्ठायामच उपसर्गात्त इत्यन्तस्य तादेशे दकारस्य चर्त्वे टापि च कृते रूपम् । थकारान्तमिति । तत्र चर्त्वस्यासिद्धत्वात्तकारान्तत्वाभावः । क्व चित्प्रदत्तमिति पाठः सोऽयुक्त इक इत्यधिकाराद्दीर्घाप्रसङ्गात् ॥

चौ । प्राचा दधीचेत्यादौ अन्तरङ्गत्वादेकादेशयणादेशयोः कृतयोरनजन्तत्वाद्दीर्घो न प्राप्नोतीत्याह । इहान्य इति ॥

इत्युपाध्यायजैयटपुत्त्रकैयटकृते महाभाष्यप्रदीपे षष्ठस्याध्यायस्य

तृतीये पादे तृतीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥

ॐ परब्रह्मणे नमः ॥ अङ्गस्य ॥ १ ॥ आकुतोयमधिकारः। आसप्तमा-ध्यायपरिसमाप्तेरङ्गाधिकारः । यदि तर्हि आसप्तमाध्यायपरिसमाप्ते-रङ्गाधिकारः । गुणो यङ्लुकोरिति यङ्लुग्ग्रहणं कर्तव्यम् । प्राग-भ्यासविकारेभ्यः पुनरङ्गाधिकारे सति प्रत्ययलक्षणेन सिद्धम् । अस्तु तर्हि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः । यदि प्रागभ्यासविकारेभ्योऽ-ङ्गाधिकारः । वव्रश्च । वकारस्य संप्रसारणं प्राप्नोति । आसप्तमाध्या-यपरिसमाप्तेः पुनरङ्गाधिकारे सति उरदत्वस्य स्थानिवद्भावान्न सं-प्रसारणे संप्रसारणमिति प्रतिषेधःसिद्धोभवति । सचेदानीमपरिहा-रो भवति यत्तदुक्तमङ्गान्यत्वाच्च सिद्धमिति । अस्तु तर्ह्यासप्तमाध्या-यपरिसमाप्तेरङ्गाधिकारः । ननु चोक्तमिदानीं गुणोयङ्लुकोरिति यङ्लुग्ग्रहणं कर्तव्यमिति । क्रियते न्यास एव । किं पुनरियं स्थान-

---

ओं नमः परमात्मने ॥ अङ्गस्य ।आ कुत इति । अवधिविशेषनिश्चये प्रमाणमदृष्ट्वा पृ-च्छति ॥ इतरो वव्रश्चेत्यादिसिद्धिं प्रयोजनमभिसन्धायाह । आसप्तमाध्यायपरिसमाप्ते-रिति । इतरो ऽस्मिन् पक्षे गौरवमुद्भावयितुमाह । यदि तर्हीति । न लुमताङ्गस्येत्यनेना-ङ्गाधिकारविहिते कार्ये प्रतिषिध्यमान इति भावः । न लुमता तस्मिन्निति पाठे तूभय-था दोषप्रसङ्गाल्लुग्ग्रहणं कर्तव्यमेव । उरदत्वस्येति । व्रश्चेर्लिटि द्विर्वचने कृते रेफस्य सं-प्रसारणं च प्राप्नोति । हलादिः शेषेण निवृत्तिश्च । तत्र हलादिः शेषात् संप्रसारणं वि-प्रतिषेधेनेति पूर्वविप्रतिषेधादुभयेषां ग्रहणाद्वा संप्रसारणमुरदत्वम् । तस्याङ्गाधिकारे विधीयमानस्याङ्गेन प्रत्ययस्याक्षेपात्परनिमित्तत्वात्तस्य स्थानिवद्भावान्न संप्रसारणे संप्र-सारणमिति वकारस्य संप्रसारणनिषेधः सिध्यति । प्रागभ्यासविकारेभ्यस्त्वङ्गाधिकारे उरदत्वस्यापरनिमित्तत्वात् स्थानिवद्भावाप्रसङ्गः । तत्र यदा प्रतिषेधवचनात्परस्य ताव-द्यणः संप्रसारणं क्रियते पूर्वस्य तु प्राप्तं संप्रसारणं संप्रसारणे परतः प्रतिषिध्यते तदेत-दुदाहरणम् । यदा तु संप्रसारणभाविनि यणि परतः पूर्वस्य संप्रसारणप्रतिषेध इति प-क्षः समाश्रीयते तदा वव्रश्चेति सिद्धमेवेत्यप्रयोजनमुरदत्वेऽङ्गाधिकारस्य । अङ्गान्यत्वाच्च सिद्धमिति । सन्वल्लघुनि चङ्परेनग्लोप इत्यत्रामीमयदित्यादौ सन्वद्भावादभ्यासलोपः प्रा-प्नोतीति चोदिते परिहारो ऽङ्गान्यत्वाच्च सिद्धमिति । सन्यङ्गानां मीमादीनामभ्यासलो-प इत्युच्यते । एतान्यङ्गान्तराणीत्यभ्यासलोपाभावः । सति चाभ्यासविकारेऽङ्गाधिकारेऽयं परिहार उपपद्यते नान्यथा । एष तु परिहारस्तत्रैव दूषयिष्यते । इह तु सिद्धवदुपन्यस्तः । किं पुनरिति । यदाङ्गस्येति शब्दस्वरूपमनपेक्षितार्थविशेषमधिक्रियते तदा षष्ठीस्थाने-

षष्ठी अङ्गस्य स्थान इति। एवं भवितुमर्हति। अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः*। अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः कर्तव्यः। अङ्गादित्यपि वक्तव्यम्। अनुच्यमानेह्यताभिस ऐस् भवतीति। अत इति पञ्चमी अङ्गस्येति स्थानषष्ठी तत्राशक्यं विभक्तिकादत इति पञ्चम्या अङ्गं विशेषयितुम्। तत्र को दोषः। अतोभिस ऐसिति अकारात्परस्य भिसः ऐस्भावो भवतीति। इहापि प्रसज्येत। ब्राह्मणभिस्सा। ओदनभिस्सटा इति। अवयवषष्ठ्यादीनां चाप्रतिपत्तिः*। अवयवषष्ठ्यादयश्च न सिध्यन्ति। तत्र को दोषः। शास इदङ्हलोरिति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च। ऊदुपधाया गोह इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च। सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावात्*। सिद्धमेतत्। कथम्। यत्परस्परं प्रत्यङ्गप्रत्ययसंज्ञे भवतः। अङ्गसंज्ञां प्रति प्रत्ययसंज्ञा प्रत्ययसंज्ञां प्रत्य-

---

योगेत्यस्याः परिभाषाया उपस्थानं नास्ति। अनेकसंबन्धसंभवे संबन्धविशेषप्रतिपादकत्वात्तस्याः परिभाषायाः। यदा त्वर्थाधिकारपक्षस्तदा परिभाषोपस्थानमिति द्वैतसंभवात्प्रश्नः। आचार्यदेशीयः परिभाषाश्रयेणाह। एवं भवितुमर्हतीति। चोदक आह। अङ्गस्येति स्थानषष्ठीति चेदिति। चशब्दात् षष्ठ्यन्तस्य चेति विज्ञेयम्। तत्राशक्यं विविभक्तिकत्वादिति। ननु चात इति संबन्धादङ्गस्येत्यस्य विभक्तिविपरिणामो भविष्यति। यथोच्चानि देवदत्तस्य गृहाण्यामन्त्रयस्वैनमिति। उच्यते। सर्वनामपरामर्शादत्र विपरिणामः। इह तु नान्तरीयकमुत्तरार्थत्वादङ्गस्येत्यस्योपस्थानं स्यादिति कुतो विभक्तिविपरिणामः। यद्येवं विशेष्यस्यासंनिधानादकारान्तादिति कथं तदन्तविधिः। नेदमदसोरकोरिति प्रतिषेधात्सप्तभोभ्यश्चेत्यादेर्ज्ञापकात्तदन्तविधिर्भविष्यति। क्वचिदकारात् परस्येति पाठः। भिस्साभिस्सटाशब्दावोदनतद्विकारयोर्वाचकौ। अवयवषष्ठ्यादीनामिति। आदिशब्दो निमित्तषष्ठीपरिग्रहार्थः। ठस्येक इत्यत्राङ्गस्य निमित्तं यष्ठस्तस्येक इत्याश्रीयते। ननु च षष्ठीस्थाने योगेत्यत्रैव विचारितं तत्किमर्थं पुनर्विचार्यते। उच्यते। ऊदुपधाया गोह इत्यत्र गोह इत्येषा षष्ठी स्यादित्येवं तत्र विचारितमिह त्वङ्गस्येत्यस्यां स्थानषष्ठ्यां विज्ञायमानायां तत्सामानाधिकरण्याद् गोह इत्यपि स्थानषष्ठी स्यादिति विचार्यते। ततश्च स्थानषष्ठ्या अन्त्येऽलुपसंहारादुपधाग्रहणाच्च गोहोऽन्त्यस्योत्वमुच्येत उपधामात्रस्य च। आद्यन्तावत्रोद्यं परिहर्तुमाह। सिद्धं त्विति। प्रत्ययोत्पत्तौ प्रकृतेर्निमित्तत्वेनाश्रयणात् प्रकृतिमन्तरेण प्रत्ययो नास्ति। प्रत्यये परतो ऽङ्गसंज्ञावि-

ङ्गसंज्ञा किमतो यत्परस्परंप्रत्ययसंज्ञेभवतः । संबन्धषष्ठीनिर्देशश्च *। संबन्धषष्ठीनिर्देशश्चायं कृतो भवति । अङ्गस्य यो भिस्शब्द इति। किंचा ङ्गस्य भिस्शब्दः । निमित्तम् । यस्मिन्नङ्गमित्येतद्भवति । कस्मिंश्चैतद्भवति। प्रत्यये। एवमप्यवयवषष्ठ्यादयो ऽविशेषिताः भवन्ति । अवयवषष्ठ्याद- योपि संबन्धएव ; एवमपि स्थानमविशेषितं भवति । स्थानमपि संबन्ध एव। एवमपि न ज्ञायते क्व स्थानषष्ठी क्व विशेषणषष्ठीति । यत्र षष्ठी अ- न्ययोगं नापेक्षते सा स्थानषष्ठी। यत्र त्वन्ययोगमपेक्षते सा विशेषण- षष्ठी। कानि पुनरङ्गाधिकारस्य प्रयोजनानि । अङ्गाधिकारस्य प्रयोजनं संप्रसारणदीर्घत्वे । हल उत्तरस्य संप्रसारणस्यदीर्घत्वं भवति। हृतः ।

---

धानात् प्रत्ययानपेक्षमङ्गं नास्ति । तत्रान्यतरत्नुपादीयमाने ऽव्यभिचारादितरस्याक्षेप इत्यर्थः। इतरस्तु सत्यपि परस्पराक्षेपे स्थानषष्ठ्यां सत्यां संबन्धान्तरस्य विनाशं मत्वा ऽऽह । किमत इति । संबन्धषष्ठीनिर्देशश्चेति । तत्रायं भावः । प्रतिसूत्रमङ्गस्येत्यस्य श- ब्दरूपस्योपस्थाने यत्र विशिष्टसंबन्धो निमित्तनिमित्तिभावादिकः संभवति तत्र परिभा- षाया उपस्थानाभावः । यत्रानेकसंबन्धसंभवस्तत्र संबन्धान्तरव्यवच्छेदफलायाः परिभा- षाया उपस्थानम् । तत्र सबन्धसामान्ये ऽनाश्रितविशेषे ऽङ्गस्येति षष्ठी न तु स्थान्यादेश- संबन्ध एवेत्ययमर्थः । संबन्धषष्ठीनिर्देशश्चेति । अस्याधिकारस्यपारार्थ्याद्वक्ष्यमाणानेक- संबन्धानुग्रहाय संबन्धसामान्यमुपादाय प्रवृत्ता षष्ठी प्रतियोगमुपतिष्ठमाना यथासंभवं संबन्धविशेषफलोपतिष्ठते । इह तु प्रतियोग्यनुपादानादपर्याप्ता विशेषमवगमयितुम् । त- तोयथा देवदत्तस्य संबन्धमात्राश्रयेणोपात्ता षष्ठी पुत्त्रःपाणिःकम्बल इत्येवमादिभिर्विजा- तीयैः संबन्धिभिः संबध्यमाना विशेषावगतिनिमित्ततां यात्येवमङ्गस्येत्यपि । तत्र शब्द- स्वरूपं वाधिक्रियतामर्थो वा संबन्धमात्रलक्षणः । उभयथा दोषाभावात् । तत्राङ्गस्य भिसा संबन्धान्तरं न संभवतीति भिसा निमित्तनिमित्तिभावः समाश्रीयतइति ब्राह्म- णभिस्सादावतिप्रसङ्गाभावः । इतरो यथोक्तमर्थमप्रतिपद्य निमित्तनिमित्तिभाव एव सं- बन्धे ऽङ्गस्येति षष्ठीत्यनेनोक्तमिति मत्वा पृच्छति । एवमपीति । इतरः पूर्वोक्तेनाभिप्रा- येणाह । अवयवषष्ठ्यादय इति । स्थानसंबन्धः सर्वथा परित्यक्त इति मत्वा ऽऽह । एव- मपीति । स्थानमपि संबन्ध एवेति । संबन्धनिमित्तत्वात्संबन्ध इत्यर्थः । यत्र षष्ठीति । सामर्थ्याद्विषयविभागो ऽवतिष्ठतइत्यर्थः । ऊदुपधाया गोह इत्यवयवस्य उपादानादङ्ग- स्य गोह इत्युपधापेक्षा अवयवषष्ठी संपद्यते । अतो भिस ऐस् इत्यादौ तु निमित्तषष्ठी । संबन्धविशेषावधारणहेत्वभावे तु स्थानषष्ठीत्यर्थः । कानि पुनरिति । अर्थवद्ग्रहणप्र- त्ययग्रहणाभ्यां सर्वस्येष्टस्य सिद्धिं मत्वा प्रश्नः । संप्रसारणदीर्घत्वे इति । हल इत्यत्राङ्ग-

ज्ञीनः। संवीतः। शूनः। अङ्गस्येति किम्। निरुतम्। दुरुतम्। नामसनोर्दीर्घत्वे प्रयोजनम्। नामिदीर्घो भवति। अग्नीनाम्। इदूनाम्। अङ्गस्येति किम्। क्रिमिणां पश्य। पामनां पश्य। सनि दीर्घो भवति। चिचीषति। तुष्टूषति। अङ्गस्येति किमर्थम्। दधि सिनोति। मधुसिनोति। लिङ्यत्वे प्रयोजनम्। ग्लेयात्। म्लेयात्। अङ्गस्येति किम्। निर्वायात्। निर्यायात्। अतो भिस ऐस्त्वे प्रयोजनम्। वृक्षैः। प्लक्षैः। अङ्गस्येति किम्। ब्राह्मणभिस्सा। ओदनभिस्सटा। लुङादिष्वडाटौ प्रयोजनम्। अकार्षीत्। ऐहिष्ट। अङ्गस्येति किम्। प्राकरोत्। अपेहिष्ट। इयङुवङ्युष्मदस्मत्तातङामिनुडानेमुक्क्स्वयिदर्घभितत्वानि। इयङुवङौ च प्रयोजनम्। श्रियौ श्रियः। भुवौ। भुवः। अङ्गस्येति किम्। श्र्यर्थं भ्र्वर्थम्। युष्मदस्मदोः प्रयोजनम्। सामआकम्। युष्माकम्। अस्माकम्। अङ्गस्येति किम्। युष्मत्साम। अस्मत्साम। तातङ्प्रयोजनम्। जीवतु। जीवताद् भवान्। अङ्गस्येति किम्। पचहि तावत्त्वं पचतु तावत्त्वम्। जल्पहि तावत्त्वम्। जल्पतु तावत्त्वम्। आमि नुट् प्रयोजनम्। किशोरीणाम्। कुमारीणाम्। अङ्गस्येति किमर्थम्। कुमारी आमित्याह। किशोरी आमित्याह। आने मुक् प्रयोजनम्। यजमानः। पचमानः।

---

ङ्गस्येत्यस्यानुवृत्तस्यावृत्त्या ऽङ्गस्येत्यनेन हल् विशेष्यते। संप्रसारणेन चाङ्गं विशेष्यतइति तदन्तविधिर्भवतीत्ययमर्थो भवति। अङ्गावयवाद्धलो यदुत्तरं संप्रसारणं तदन्तस्याङ्गस्य दीर्घो भवतीति। हूत इति। ह्वेञ् क्तः। जीन इति। ज्या वयोहानौ क्तः। ग्रहिज्येति सूत्रेण संप्रसारणं ल्वादिभ्य इति निष्ठातकारस्य नत्वम्। संवीत इति। व्येञ् संवरणे क्तः। यजादित्वात्संप्रसारणम्। संप्रसारणान्ताङ्गग्रहणाद्विह इत्यादौ दीर्घाभावः। निरुतमिति। वेञो निरुपसृष्टस्य निष्ठायां संप्रसारणम्। क्रिमिणामिति। क्रिमयोस्यां सन्तीति पामादित्वान्नप्रत्ययः। टाप् प्रत्ययः द्वितीयैकवचनम्। लाक्षणिकत्वादस्य न भवतीति चेन्न। प्रतिपदोक्तस्य नामो ऽभावात्। षष्ठीबहुवचनस्यापि नुटि कृते लाक्षणिकमेव नामिति रूपम्। दधि सनोतीति। साधुबन्धोयं धातुरिति चेत् प्रत्ययोपि नकारत्संज्ञकत्वात्सानुबन्धकः। धातोश्चाव्यभिचारी नकार इति तस्यैव ग्रहणप्रसङ्गः। पचहीति। हितू निपातौ। तत्राशिषि लोटो हेरन्यतरस्यां तातङ्विधानात्पक्षे तदभावादतोहेरिति हेर्लुकि कृते निपातयोरपि तुह्योः प्रतिव्यक्ति लक्षणप्रवृत्तावभावोपक्रमेपि तातङ्प्रसङ्गः। तथा चोच्यते।

अङ्गस्येति किमर्थम् । प्राणः । कीङ्गस्वः प्रयोजनम् । कुमारिका । किशोरिका । अङ्गस्येति किमर्थम् । कुमारीं कायति कुमारीकः । यि दीर्घः । प्रयोजनम् चीयते । स्तूयते । अङ्गस्येति किमर्थम् । । दधियानम् । मधुयानम् । भितत्वं प्रयोजनम् । अद्भिः । अद्भ्यः । अङ्गस्येति किमर्थम् । अब्भारः । अब्भक्षः । नैतानि सन्ति प्रयोजनानि । कथम् । अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम् *। अथ वद्ग्रहणप्रत्ययग्रहणाभ्यामेवैतानि सिद्धानि। क्वचिदर्थवद्ग्रहणेनानर्थकस्येत्येवं न भविष्यति । क्वचित्प्रत्ययग्रहणे ऽप्रत्ययस्य नेति । अथ वा प्रत्यय इति प्रकृत्याङ्गकार्यमध्येष्ये । यदि प्रत्यय इति प्रकृत्याङ्गकार्यमधीषे । प्राकरोत् । उपैहिष्ट । उपसर्गात्पूर्वमडाटौ प्राप्नुतः। सिद्धं तु प्रत्ययग्रहणे यस्मात्सविहितस्तदादितदन्तविज्ञानात्*। सिद्धमेतत् । कथम् । प्र-

---

विभाषिताः प्रयोजयन्ति द्रोग्धादोग्धा द्रोढाद्रोढेति । प्राण इति । प्रपूर्वस्यानितेर्घञि हृद्वौ च कृतायां प्र आन इतिस्थिते मुक्प्रसङ्गः सार्वधातुकाधिकारे ऽनपेक्षमाणे । ननु धातूपसर्गयोरेकादेशेनान्तरङ्गत्वाद्भाव्यं न तु हृद्वा । नैतदस्ति । वार्णादाङ्गस्य बलीयस्त्वात् । तथा च प्रत्यय इत्यादौ सवर्णदीर्घत्वाभावः । अत्र तु लाक्षणिकत्वेनापि मुको निरासो वक्तुं शक्यते । कुमारिकेति । अल्पादावर्थे प्रागिवात्कः । कुमारीक इति । अत्रापि लाक्षणिकत्वात्कस्य ह्रस्वाभावः सिध्यति । क्वचिदर्थवद्ग्रहण इति । अयं परिहारो निरुतं विद्व इत्यादौ संप्रसारणदीर्घत्वे न संभवति । तर्क्रामिणामित्यत्र नाम्न प्रत्ययो नाप्यर्थवान् । प्रत्ययत्रयार्थस्यपरस्परानन्वयादितिदीर्घाप्रसङ्गः । दधिसिनोतीति सनोऽप्रत्ययत्वाद्दीर्घाभावः । निर्यायादित्यादौसंयोगादेरानर्थक्यादेत्वाभावः । अडाटौस्तु नायं परिहारः । ब्राह्मणभिस्सेत्यादौभिसो ऽप्रत्ययत्वादानर्थक्याच्चऐसोप्रसङ्गः । इयङुवङोस्तु नायं परिहारः । वर्णग्रहणेषुपरिभाषाद्वयस्यानुपस्थानाद्यथेकोयणचीतिदध्याश्रयतीत्यादावप्रत्ययेप्यनर्थकेप्यचियणादेशोभवत्येवंश्र्यर्थं स्नूर्थमित्यादावियङुवङ्प्रसङ्गः। युष्मत्सामेतिसाम्नो ऽप्रत्ययत्वादानर्थक्याच्चाकमोप्रसङ्गः ।तुह्योर्निपातयोरप्रत्ययत्वात्तातङो ऽप्रसङ्गः । एवमामो ऽप्रत्ययस्यानुकरणस्यनुडभावः । प्राणइत्यत्रानस्याप्रत्ययत्वान् मुगभावः । भितत्वेयंपरिहारो नोपपद्यते वर्णग्रहणात् । अत एवाव्यापकत्वमस्य परिहारस्य मत्वाह । अथवेति । सिद्धं त्विति । यत्र प्रत्ययो निमित्तत्वेनोपादीयते तत्र पूर्वः कार्यित्वेन गृह्यमाणो यस्मात्सविहितस्तदादिर्गृह्यते । एतच्चाङ्गसंज्ञासूत्रे योगविभागेन साधितम् । यत्र तु प्रत्यय एव कार्यित्वेनोपादीयते तत्रतदन्तग्रहणमिति द्वे एते परिभाषे । अङ्गाधिकारप्रत्याख्यानाय प्रत्ययाधिकारे क्रियमाणे न किं चित्प्रयोजनं दृश्यते । अतो भिस ऐ-

त्ययग्रहणे यस्मात्सविहितस्तदादितदन्तस्य ग्रहणं भवतीति। एवमुपसर्गात्पूर्वमडाटौ न भविष्यतः॥

हलः॥ २॥ इह कस्मान्न भवति। तृतीयः : अण्प्रकरणात् ऋकारस्याप्राप्तिः *। अण्प्रकरणादृकारस्य दीर्घत्वं न भविष्यति। अण इति वर्तते। क्व प्रकृतम्। ढ्रलोपे पूर्वस्य दीर्घोऽण इति। तद्वै इकः काशिइत्यनेनेग्ग्रहणेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम्। इग्ग्रहणस्य चाण्विशेषणत्वात्। अणिशेषणमिग्ग्रहणमण इक इति। यदि तर्ह्यण्विशेषणमिग्ग्रहणम्। चौदीर्घो भवतीति। इह नप्राप्नोति। अवाचा। अवाचे। नैष दोषः। अण्ग्रहणमनुवर्तते। इग्ग्रहणं निवृत्तम्। एवमपिकर्तृचः कर्तृचा कर्तृचे अत्र न प्राप्नोति। यथालक्षणमप्रयुक्ते। अथवोभयं निवृत्तम्। कस्मान्न भवति तृतीय इति। निपातनात्। किं निपातनम्। द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्यामिति॥

नामि॥ ३॥ किमर्थमामः सनकारस्य ग्रहणं क्रियते। न आमि दीर्घ इत्येवोच्येत। केनेदानीं सनकारस्य भविष्यति। नुडयमाम्भक्त आम्ग्रहणेन ग्राहिष्यते। अत उत्तरं पठति। नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड् भवेत्। नामि दीर्घ आमिचेत्स्यात्कृते

---

सित्यादिषु विविभक्तिकत्वाद् भिसादीनां प्रत्ययेन संबन्धो दुरुपपादः। हल इति संप्रसारणदीर्घत्वं च निरुतं दुरुतमित्यादौ न परिहृतं भवति॥

हलः। अण्ग्रहणमिग्ग्रहणेन विच्छिन्नमिति मत्वाह। इहकस्मादिति। अणिशेषणमिति। प्रकाशइत्यादावकारस्यदीर्घनिवृत्त्यर्थमिकाण् विशेष्यत इत्यर्थः। अवाचेति। चावित्यत्रेग्ग्रहणानुवर्तनादकारस्य दीर्घप्रसङ्गः। यथेकः काश इत्यत्र विरोधाभावादणिकोः संबन्ध एवं योगान्तरेपीति भावः लक्ष्यनिबन्धनापेक्षावशादधिकाराणां निवृत्त्यनुवृत्ती इति मत्वाह। नैष दोष इति। एवमपीति। केवलाण्ग्रहणानुवृत्तावपि दोष इत्यर्थः। तन्निवृत्तौ त्वत्र परिभाषोपस्थानादृकारस्यापि दीर्घःसिध्यति यथालक्षणमिति। माभूदत्रदीर्घत्वमित्यर्थः। अथानन्त्यात् प्रयोगविषयस्य कर्तृचेत्यादिप्रयोगः स्यादित्युच्यते तत्रापि ब्रूमः। अथवेति। चावित्यत्रोभयाननुवर्तनात्कर्तृच इत्यादिसिद्धिः।

नामि। नुट्दीर्घयोरेकविषयत्वादुभयानुग्रहाय पूर्वं नुटि कृतेऽव्यवधायकत्वादागमानां दीर्घो भविष्यत्यन्तरेण सनकारकनिर्देशमिति मत्वाह। किमर्थमिति। इतरश्चोदकबुद्धिपरीक्षार्थमाह। केनेदानीमिति। चोदकः स्वाभिप्रायमाह। आमिति। नामिदीर्घइति।

दीर्घे न नुट् स्यात् । अग्नीनाम् । इन्दूनाम् । इदमिह संप्रधार्यम् । दीर्घत्वं क्रियतां नुडिति । किमत्र कर्तव्यम् । परत्वान्नुट् । नित्यं दीर्घत्वम् । कृतेपि नुटि प्राप्नोत्यकृतेपि । नित्यत्वाद्दीर्घे कृते ह्रस्वाश्रयोनुड्न प्राप्नोति । एवं तर्ह्याहायं ह्रस्वान्तान्नुडिति । न च ह्रस्वान्तोस्ति । तत्र वचनाद्भविष्यति । वचनाद्यत्र तन्नास्ति । नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । यत्र दीर्घत्वं प्रतिषिध्यते । तिसृणां चतसृणामिति । नैतदस्ति प्रयोजनम् । इह तावच्चतसृणामिति षट्चतुर्भ्यश्चेत्येवं भविष्यति । तिसृणामिति त्रिग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् । त्रेस्त्रय इति । इदं तर्हि । त्वं नृणां नृपते जायसे शुचिः । नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । तत्र वचनाद्भूतपूर्वगतिर्विज्ञास्यते । ह्रस्वान्तो यो भूतपूर्व इति । उत्तरार्थं तर्हि सनकारग्रहणं कर्तव्यम् । नोपधायाश्च चर्मणाम् । नोपधाया नामि यथा स्यात् । इह मा भूत् । चर्मणाम् । नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड् भवेत् । वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्मणाम् ॥१॥

---

योयं नामिदीर्घ उच्यते स यद्यामीति सूत्रन्यासेनामि स्यात्तदा नित्यत्वान्नुटं बाधित्वा दीर्घेप्रवृत्ते ह्रस्वान्तत्वाभावादग्नीनामित्यादौ नुड् न स्यादित्यर्थः । इतरस्त्वनवकाशत्वादग्नयोनुट् बाधितुमिति मत्वाह । इदमिहेति । नन्वनवकाशत्वाद्विप्रतिषेधानुपपत्तौ कथमुच्यते परत्वान्नुडिति एवंमन्यते द्वावपि नुट्दीर्घावनवकाशौ । तत्राङ्गप्रत्यययोर्युगपन्निमित्तनिमित्तिभावाभावादवश्याश्रयितव्ये क्रमे विप्रतिषेधोपपत्तिः । वाक्यकारेण तु संभवमात्रमाश्रित्योक्तम् । द्वौ प्रसङ्गावन्यार्थावेकस्मिन् युगपत्प्राप्नुतः सविप्रतिषेध इति । तत्रानवकाशत्वात् पुनः प्रसङ्गविज्ञानाद्दीर्घत्वम् । नित्यं दीर्घत्वमिति । तिसृणां चतसृणां नृणामित्यत्र सावकाशो नुट् अग्नीनामित्यत्र नित्यत्वाद् दीर्घेण बाध्यते । तत्र वचनादिति । भूतपूर्वगत्यैवेति भावः । वचनादिति । वचनात्स्यादिति चेद्यत्र दीर्घत्वं नास्ति तत्र वचनस्य चरितार्थत्वात्सांप्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्यायुक्तत्वादग्नीनामित्यादौ कृते दीर्घे नुण् न स्यादित्यर्थः । तिसृणामित्यादौ नुटोन्यथासिद्धत्वाद् ह्रस्वलक्षणो नुडनवकाश एवेति दर्शयन्नाह । नैकमुदाहरणमिति । अन्यथा नृनद्यापो नुडिति ब्रूयात् । तदेवं वचनसामर्थ्याद् भूतपूर्वगत्या नुटः सिद्धत्वात्सार्थः सनकारकनिर्देशेनेति स्थिते प्रयोजनान्तरोपन्यासः उत्तरार्थमिति । नोपधायाश्चेति । चशब्दस्तदर्थः ।

इन्हन्पूषार्यम्णां शौ ॥१२॥ सौ च ॥१३॥ हनः क्वावुपधादीर्घत्वप्रसङ्गः * । हनः क्वावुपधालक्षणं दीर्घत्वं प्राप्नोति । अनुनासिकस्य क्विझलोः क्ङितीति तस्य प्रतिषेधो वक्तव्यः । वृत्रहणौ वृत्रहण इति । नियमवचनात्सिद्धम् । इन्हन्पूषार्यम्णां शौ सौ चेत्येतस्मान्नियमवचनाद्दीर्घत्वं न भविष्यति । नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्रानियमः * । नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्र नियमो न प्राप्नोति । क्वान्यत्र । ब्रह्महणि । भ्रूणहनि । एवं तर्हि दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् । दीर्घविधिर्य इहेन्प्रभृतीनां तं सर्वनामस्थाने विनियम्य ॥ इन्हन्पूषार्यम्णां सर्वनामस्थाने दीर्घो भवति । किमर्थमिदम् । नियमार्थम् । इन्हन्पूषार्यम्णां सर्वनामस्थान एव नान्यत्र । शौ नियमं पुनरेव विदध्यात् । ततः शौ । शावेव सर्वनामस्थाने नान्यत्र । ततः सौ । सावेव सर्वनामस्थाने नान्यत्र । भ्रूणहनीति तथास्य न दुष्येत् । तथास्य भ्रूणहनीति न दोषो भवति शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं

---

इन्हन् । हनः क्वाविति । वृत्रं हतवान् ब्रह्मभ्रूणेति क्विप् । तत्र अनुनासिकस्य क्विझलोरिति दीर्घत्वं सर्वत्र प्राप्नोति । सर्वनामस्थाने तु नोपधाया सर्वनामस्थाने चासम्बुद्धाविति प्राप्नोति तत्र सर्वनामस्थाने वृत्रहणावित्यादौ नियमविधानसामर्थ्याद्व्यप्युभयोर्दीर्घनिवृत्तिः सिध्यति । तथापि सर्वनामस्थानप्रकरणात्सर्वनामस्थान एव दीर्घस्य नियमेन निवृत्त्या भाव्यं नान्यत्रेति वृत्रहणीति सप्तम्येकवचने विभाषा ङिश्योरित्यल्लोपाभावपक्षे ऽनुनासिकलक्षणदीर्घप्रसङ्गः सर्वत्र च हनः क्वौ दीर्घत्वप्रसङ्गान्न क्व चिदल्लोपः स्यात् । इतरस्तु यथोक्तमभिप्रायमप्रतिपद्य दूषणार्थं सर्वनामस्थानमुपन्यस्यति । वृत्रहणाविति । अत्र चेद्दीर्घत्वं मन्यसे तन्न । यतो नियमवचनात्सिद्धमिति नियमविधानसामर्थ्यात्सर्वस्य दीर्घस्य व्यावर्तनमित्यर्थः । इदानीं चोदकः स्वाभिप्रायं प्रकाशयन्नाह । नियमवचनात्सिद्धमिति चेदिति । एवं तर्हीति । अत्र तु योगविभागः क्रियते । तत्राद्येन नियमेनान्तरङ्गोप्यनुनासिकलक्षणो दीर्घो निवर्त्यते । द्वितीयेन वृत्रहणावित्यादौ सर्वनामस्थानलक्षणः । सुड्ग्रहणं सर्वनामस्थानोपलक्षणमिति प्रसादेशोपि शिष्टैर्दृश्यते । इतिशब्दो हेतौ । स च भिन्नक्रमः । न दुष्येदित्यनेन च संबध्यते । शावेवेति । अस्मिन्नियमे स्थिते सौ चेति सूत्रं विध्यर्थं सौ संपद्यते । यदा च शौ चेति योगपद्येन अपेक्ष्यते

कुरु वाप्यसमीक्ष्य। अथ वा निवृत्ते सर्वनामस्थानप्रकरणे अविशेषेण शौ नियमं वक्ष्यामि दून्हन्पूषार्यम्णां शावेव। ततः सौ। सावेव। दून्हन्ति लदिनियमान्न प्राप्नोति। दून्हौ दून्हायते। दीर्घविधेरुपधानियमान्मेहन्ति यि दीर्घविधौ च न दोषः। उपधालक्षणदीर्घस्य नियमः। नचैतदुपधालक्षणं दीर्घत्वम्। सुप्यपि वा प्रकृतेनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे। अथ वानुवर्त्तमाने सर्वनामस्थानप्रकरणेऽनवकाशः शौ नियमः अप्रकृतस्यापि दीर्घत्वस्य नियामको भविष्यति। कथम्। यस्य हि शौ नियमः सुटि नैतत्तेन नतत्र भवेद्विनियम्यम्। यस्य हि शिः सर्वनामस्थानं न तस्य सुट्। यस्य च सुट् सर्वनामस्थानं न च तस्य शिः। तत्र सर्वनामस्थानप्रकरणे नियम्यं नास्तीति कृत्वाऽविशेषेण शौ नियमो विज्ञास्यते। दीर्घविधिर्य इन्हन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान्। शौ नियमं पुनरेव विदध्याद् भ्रूणहनीति तथास्य न दुष्येत्॥ १॥ शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य। दीर्घविधेरुपधानियमान्मे-

---

तदा प्रत्ययद्वयाश्रयो नियमः क्रियते। भाष्यकारस्तु यौगपद्याश्रयं नियमक्रममाश्रित्य व्याचष्टे। ततः साविति। एवं योगविभागेन चोद्यं परिहृत्यैकस्मिन्नपि योगे परिहर्तुमाह। शास्मीति। शास्मि उपदिशामि तं प्रकारं येनैकयोगे ऽपि दोषाभावः पूर्ववत् सुटीत्येकदेशेन सर्वनामस्थानं लक्ष्यते। सर्वनामस्थानग्रहणं निवर्त्य अनाश्रितसर्वनामस्थानत्वविशेषे प्रत्ययत्वमात्राश्रयेण शौ नियमं कुरु। असत्यपि शास्त्रीयेऽधिकारे ऽपेक्षाकृतः संबन्धः स्याद् इति तन्निवृत्त्यर्थमाह। असमीक्ष्येति। सर्वनामस्थानं विशेषमनपेक्ष्य शौ नियमः क्रियमाणः प्रत्ययत्वेन तुल्यजातीये सर्वत्र प्रत्ययान्तरे दीर्घनिवृत्तिं करोतीत्यर्थः। दूहापीति। विशेषानाश्रयणात्। वृत्रहेवाचरतीति क्यङ्। अकृत्सार्वधातुकयोरिति दीर्घः। दीर्घविधेरिति। इह यदि येननाप्राप्ते इत्याश्रीयते तदाऽनुनासिकलक्षणस्यैव दीर्घस्य नियमेन व्यावृत्तिः स्यात्। अथ मध्ये ऽपवादा इत्याश्रीयते तथापि सर्वनामस्थाने चासंबुद्धावित्यस्यैव व्यावृत्तिप्रसङ्ग इत्यनपेक्षितविशेषं दीर्घत्वमात्रं निवर्त्यते। तत्रोपधाग्रहणानुवृत्त्याऽजन्तलक्षणदीर्घत्वस्याकृत्सार्वधातुकयोरिति प्राप्तस्य नियमेनाव्यावर्तनाद्दोषाभावः। हन्तेर्यः हन्तियस्तस्मिन् यो दीर्घविधिस्तत्र न दोषः। क्व चित्तु हन्तेति निपातोभिमुखीकरणार्थः पठ्यते। यिग्रहणस्य चोपलक्षणार्थत्वाद्दण्डीभूत इत्यादौ न्यावृत्ति

ह्नि यदि दीर्घविधौ च न दोषः॥ २॥ सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे। यस्य हि शौ नियमः सुटि नैतत्तेन तत्र भवेद्विनियम्यम् *॥ ३॥

अत्वसन्तस्य चाधातोः॥ १४॥ अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम् *। अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानं कर्तव्यम्। गोमान्। यवमान्। किं पुनः कारणं न सिध्यति। अननुबन्धकग्रहणेन सानुबन्धकस्य ग्रहणम्। अननुबन्धकस्य ग्रहणे सानुबन्धकग्रहणं नेत्येवं पितो न प्राप्नोति। अननुबन्धकग्रहणे इत्युच्यते। सानुबन्धकस्येदं ग्रहणम्। एवं तर्हि तदनुबन्धकस्य ग्रहणे अतदनुबन्धकस्य ग्रहणं नेत्येवं पितोऽपि न प्राप्नोति। तत्तर्हि उपसंख्यानं कर्तव्यम्।

---

न दोषः। एकस्मिन्नपि योगे सर्वनामस्थानानुवृत्तावपि दोषं परिहर्तुमाह। सुट्यपिवेति। अपिशब्दो भिन्नक्रमः अप्रकृतप्रतिषेध इत्यनेन संबध्यते। इह हि द्विविधं सर्वनामस्थानं शिः सुट् च। शिर्नपुंसकसंबन्धी। सुट् स्त्रीपुंसयोः। सुडनपुंसकस्येति वचनात्। तत्र तुल्यजातीयापेक्षे नियम आश्रीयमाणे व्यवच्छेद्याभावादनर्थक एव नियमः स्यादिति नियमविधिसामर्थ्यात्सर्वस्य दीर्घस्य नियमेन व्यावृत्तिरित्यर्थः। यस्य हीति। यस्य नपुंसकस्य संबन्धिनि शौ नियमः क्रियते सुटि सर्वनामस्थानसंज्ञके एतन्नपुंसकं नास्त्यनपुंसकस्येति वचनात्। तेन कारणेन तत्र सर्वनामस्थाने सुटि नियन्तव्यं दीर्घत्वं न संभवतीति सामर्थ्यादविशेषेण नियम आश्रीयते। एतदुक्तं भवति। यदि तुल्यजातीयापेक्षो नियम आश्रीयते तदा शेर्नपुंसकलिङ्गसंबन्धित्वं सर्वनामस्थानत्वं चास्तीति तदाश्रये नियमे विज्ञायमाने ऽयमर्थः स्यात्। इन्हन्पूषार्यम्णां नपुंसकानां शावेव सर्वनामस्थाने दीर्घो भवति न सर्वनामस्थानान्तरे इति। न च तेषां नपुंसकानामन्यत्सर्वनामस्थानमस्तीति नियमविधानसामर्थ्यात् प्रकरणापन्नं सर्वनामस्थानत्वं सामर्थ्यप्रापितसंनिधानं च नपुंसकत्वमुभयमप्यविशेषादनपेक्ष्य प्रत्ययभावे स्त्रीपुंनपुंसकसंबन्धिनि दीर्घत्वव्यावृत्तिः क्रियत इति सर्वमिष्टं सिद्धम्॥

अत्वसन्तस्य चाधातोः। अत्वसन्तस्येति। सूत्रन्यासप्रदर्शनपरमिदम्। अत्वन्तविषयं तु वचनम्। अननुबन्धकग्रहणे इति। उकारस्यानुबन्धस्य सूत्रोपात्तत्वात्तद्व्यतिरिक्तानुबन्धाभावेनाननुबन्धकत्वमवसेयम्। भाष्यकारस्त्वनुबन्धमात्राभावे ऽननुबन्धकव्यपदेशो मतः। इह चानुबन्ध उकारोस्तीति मत्वाह। अननुबन्धकग्रहण इत्युच्यत इति। परिभाषान्तरमाश्रित्याह। एवं तर्हीति। स एवानुबन्धो यस्यासौ तदनुबन्धकः। सचान्यश्चानु-

न कर्तव्यम् । पकारलोपे कृते न अतुबन्तं भवति । अत्वन्तमेव । यथैव तर्हि पकारलोपे कृते नातुबन्तमेवमुकारलोपे कृते नात्वन्तम् । ननु च भूतपूर्वगत्या भविष्यति अत्वन्तम् । यथैव तर्हि भूतपूर्वगत्यात्वन्तमेवमतुबन्तमपि । एवं तर्हि आश्रीयमाणे भूतपूर्वगतिः । अत्वन्तं चाश्रीयते नातुबन्तम् । न सिध्यति । इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते । यत्रास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते । कोऽसौ । उपदेशः । उपदेशे चैतदतुबन्तं नात्वन्तम् यदि पुनरच्छब्दं गृहीत्वा दीर्घत्वमुच्यते । नैवं शक्यम् । इहापि प्रसज्येत । जगत् । जनगत् । अर्थवद्ग्रहणे नानर्थकस्येत्येवमेतस्य न भविष्यति । इहापि तर्हि न प्राप्नोति । कृतवान् भुक्तवानिति । क्व तर्हि स्यात् । पचन् । यजन् । न वै अचेष्य-

---

बन्धो यस्य सोऽतदनुबन्धकः । यद्येवं क्तक्तवतोरपि ककारानुबन्धसद्भावाद् ग्रहणं न प्राप्नोति । उच्यते । आनन्तर्यलक्षणेऽनुबन्धानुबन्धवतोः संबन्धे तवतुशब्दस्य ककारोऽनुबन्धो नत्वतुशब्दस्य । मतुपि तु पकारोऽतुप्शब्दस्यानन्तर इति तेनासावनुबन्धवानिति तत्रैव दोषः । पकारलोप इति । अयमत्रार्थः । पकारोऽनुबन्धः प्रत्ययस्य न तु तदेकदेशस्य । ततश्च प्रत्ययैकदेशग्रहणादव्यापार एव पूर्वोक्तयोः परिभाषयोः । श्रूयमाणश्च वर्णो रूपं भिन्द्यात् न च पकारः श्रूयते । इतरस्तु श्रूयमाणस्यैव भेदकत्वे उकारोऽपि लोपान्न भेदकः स्यादिति मत्वाह । यथैवेति । इतरस्तु भेदकत्वेनाश्रितस्य लुप्तस्यापि भूतपूर्वगत्यास्त्युपारूढस्य भेदकत्वं युक्तं मत्वाह । भूतपूर्वगत्येति । इतरस्तूभयोस्तुल्यं भूतपूर्वत्वं मत्वाह । यथैवेति । इतरो भेदकत्वेनाश्रीयमाणे भूतपूर्वगतिर्युक्ता नान्यत्रेति मत्वाह । एवं तर्हीति । इतरस्तु यथोपलब्धिस्मरणं न्याय्यं न च मतुपः क्वचिदप्यत्वन्तत्वमुपलब्धमिति मत्वाह । न सिध्यतीति । सानुबन्धकप्रस्तावात् सानुबन्धकेष्वित्युक्तम् । रूपनिर्ग्रहश्चेति । रूपनिश्चय इत्यर्थः । नान्तरेण लौकिकमिति । अव्यभिचाराल्लौकिकस्य प्रयोगस्य प्राधान्येनोपादानम् । तदसंभवे तु शास्त्रीयप्रसङ्गाश्रय इत्याह । तस्मिंश्चेति । उपदेशे चैतदिति । पकारे सत्यत्वन्तत्वाभावात् । अतस्त्वेकदेशं यतमाश्रित्य ययतोश्चातदर्थ इत्यत्र ग्रहणे प्राप्ते तदनुबन्धकपरिभाषया निवृत्तिः क्रियते । यदि पुनरिति । सूत्रे उकारमनुच्चार्येत्यर्थः । तत्राच्छब्दस्य केवलस्य शास्त्रेऽभावात्प्रत्ययैकदेशग्रहणं भविष्यतीति नार्थः पित उपसंख्यानेन । जगदिति । द्युतिगमिजुहोतीनां द्वे चेति क्विप् । गमः क्वाविति

ते। अनिष्टं च प्राप्नोति। इष्टं च नसिध्यति। तस्मादुपसंख्यानं कर्त्तव्यम्॥

अज्झनगमांसनि॥ १६॥ गमेर्दीर्घत्वे इङ्ग्रहणम्*। गमेर्दीर्घत्वे इङ्ग्रहणं कर्तव्यम्। इङो गमेरिति वक्तव्यम्। इह मा भूत्। संजिगंसते वत्सो मात्रेति। अग्रहणे ह्यनादेशस्यापि दीर्घप्रसङ्गः*। अक्रियमाणे हीङ्ग्रहणे ऽनादेशस्यापि दीर्घत्वं प्रसज्येत। संजिगंसते वत्सो मात्रेति। न वा छन्दस्यनादेशेऽपि दीर्घत्वदर्शनादिङ्ग्रहणानर्थक्यम्। न वा इङ्ग्रहणं कर्त्तव्यम्। किं कारणम्। छन्दस्यनादेशस्यापि दीर्घत्वदर्शनात्। छन्दस्यनादेशस्यापि गमेर्दीर्घत्वं दृश्यते। स्वर्गं लोकं संजिगांसत्। छन्दस्यनादेशस्यापि गमेर्दीर्घत्वदर्शनादिङ्ग्रहणमनर्थकम्। यथैव तर्हि छन्दस्यनादेशस्यापि गमेर्दीर्घत्वं भवति। एवं भाषायामपि प्राप्नोति। तस्मादिङ्ग्रहणं कर्त्तव्यम्। न कर्तव्यम्। योगविभागः करिष्यते। अचः सनि। अजन्तानां सनि दीर्घो भवति। ततो हनिगम्योः। हनिगम्योश्च स-

---

मल्लोपः। जनं गच्छतीति क्विप्चेति क्विप्। पचन्निति। अच्छब्दो ऽचार्थवानित्यत्रैव दीर्घप्रसङ्गः। तस्मादव्याप्त्यतिव्याप्तिलक्षणदोषद्वयप्रसङ्गादच्छब्दं गृहीत्वा दीर्घो विधातुमशक्य इति पित उपसंख्यानं कर्तव्यमेव। अन्ये त्वसैवान्तशब्दसंबन्धो न त्वतुनैवेति व्याचक्षाणा मतुपो ग्रहणं साधयन्ति। अपरे त्वन्तग्रहणात्सामर्थ्ये लब्धे तदन्तविधावभिकत्वाद् यथाकथं चित्तदन्तताश्रीयत इति मन्यमाना मतुपो ग्रहणं व्याचक्षते॥

अज्झनगमां सनि। इह बहवो गमयः। गम्लृ गताविति धातुः। णौगमिरबोधने सनि चेतोणादेशो गमिः। इण्वदिक इति वक्तव्यमिति इकादेशः। इङश्चेति इङादेशश्च। तत्राविशेषात्सर्वप्रसङ्गे सत्याह। गमेर्दीर्घत्व इति। इक इण इचश्च गमिरिक एवादेश इङोपलक्ष्यते। तथा च भाष्यकृत्परतो वक्ष्यति। अचः स्थाने यौ हनिगमी इति एवं चेणिगादेशस्यापि गमेरात्मनेपद इडभावे दीर्घत्वेन भाव्यमित्याहुः। संजिगांसदिति। संपूर्वाद् गमेः सन्। छान्दसत्वादिडभावः। लङ्। सकर्मकत्वात्परस्मैपदम्। बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः। तस्मादिङ्ग्रहणमिति। भाषायामनादेशस्य गमेर्दीर्घनिवृत्त्यर्थमित्यर्थः। छन्दसि तु वर्णव्यत्ययेन ह्रस्वस्य दीर्घः। ये तु इङ्ग्रहणमुपलक्षणार्थमिच्छन्ति तन्मते न इणादेशस्य गमेश्छन्दसि प्रयोगः। योगविभाग इति। अचः सनीत्येको योगः। तत्र दीर्घश्रुत्याच्परिभाषोपस्थानादजन्तस्य दीर्घे सिद्धे अज्ग्रहणमुत्तरार्थं वि-

नि दीर्घो भवति । अच इत्येव । अचः स्थाने यौ हनिगमी । अथो-पधाग्रहणमनुवर्तते उताहो न । किं चातः । सनिदीर्घ उपधाधि-कारश्चेद् व्यञ्जनप्रतिषेधः * । सनि दीर्घ उपधाधिकारश्चेद् व्यञ्जन-स्य प्रतिषेधो वक्तव्यः । चिचीषति तुष्टूषतीत्येवमर्थम् । एवं तर्हि निवृत्तम् । अनधिकारे उक्तम् * । किमुक्तम् । हनिगमिदीर्घत्वे ऽ-ज्ग्रहणमिति । नैष दोषः । उक्तमेतत् । ह्रस्वो दीर्घः प्लुत इति य-त्र ब्रूयात् अच इत्येतत्तत्रोपस्थितं द्रष्टव्यम् ॥

च्छ्वोः शूडनुनासिके च ॥ १९ ॥ अथ ऊडादिः कस्मान्न भवति। आदिष्टिद् भवतीत्यादिः प्राप्नोति । कस्य पुनरादिः । वकारस्य । अस्तु वकारस्य, का प्रतिपत्तिः । लोपो व्योर्वलीति लोपो भविष्यति। नैवं शक्यम् । ज्वरत्वरस्रिव्यविमवामुपधायाश्चेति द्वावूठौ स्याताम्। एवं तर्हि नैष टित् । कस्तर्हि ठित् । यदि तर्हि ठित् । धौतः पट इति । एत्येधत्यूठ्स्विति वृद्धिर्न प्राप्नोति । सर्वे कृते भविष्यति ।

---

न्यायते । अचः स्थाने इति । संभवाद् गमिरेवात्र विशेष्यते न तु हनि' सहनिर्देशात्तूभ-योपादानम् । चिचीषतीति । अत्र चकारस्य दीर्घः प्राप्नोति । उपधाधिकारादजन्तस्य या उपधा तस्या दीर्घ इति सूत्रार्थव्यवस्थापना । हनिगमिदीर्घत्वेजिति अचश्चेत्यत्र तच्छेषपक्षे आश्रीयमाणे द्वाज्ग्रहणं हनिगमस्यर्थं कर्तव्यमित्यर्थः । उक्तमेतदिति । न तच्छेषो नापि तदपवादः । किं तर्हि । द्वितीया षष्ठीप्रदेशेषु प्रादुर्भाव्यते । तत्र विशेष-णविशेष्यभावस्य यथेष्टत्वाद्धनिगमिस्थामज्विशेष्यते इति सिद्धम् ।

च्छ्वोःशूडनुनासिके च । अथेति । च्छ्वोरिति एकापि षष्ठीह ग्रहणकवाक्ये श्रुता प्र-क्रियावाक्ये संबन्धिभेदाद्भिद्यते । क्व चित् स्थानषष्ठी । क्व चिदवयवषष्ठी । यथा फलि-पाटिनमिकनिजनां गुक्पटिनाकिधतश्चेति भावः । अस्त्विति । रूपभेदाभावादङ्गस्य यो वकारस्तस्यानुनासिकादौ प्रत्यये परे क्वौ झलादौ च परतः ऊठिति सूत्रार्थाश्रय-णाद्वकारस्यादिरूड् भवति । लोपो भविष्यतीति । ननु नाप्राप्ते लोप आरभ्यमाण ऊड् लोपस्य बाधकः प्राप्नोति । अत्र केचिदाहुः । भिन्नजातीयत्वादागमेनादेशो न बाध्यते यथा दधि ब्राह्मणेभ्यो दीयतां कम्बलः कौण्डिन्यायेति दध्नः कम्बलो न बाधकः । अ-न्ये त्वाहुः । व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणप्रवर्तनाद् ऊठि कृते यद्वलोपलक्षणं तदक्ष-तार्थम् । न च तस्मिन् प्राप्ते ऊडारभ्यते इति तत् प्रवर्तत एव । अकृते ऊठि यद्वलोप-शास्त्रं तदेव बाध्यते । संसर्गिभेदाद्धि वकारो भिद्यते । द्वावूठाविति । आगमिभेदादेको वकारात् पर्व ऊठ् स्यात् । अपर उपधाया इति दोषः । वृद्धिर्न प्राप्नोतीति । टितस्त्वत्र

असिद्धं चत्वं तस्यासिद्धत्वान्न प्राप्नोति। आश्रयात्सिद्धत्वं भविष्यति। असत्यन्यस्मिन्नाश्रयात्सिद्धत्वं स्यात्। अस्ति चान्यो वाह ऊठिति। एषोपि ठित्करिष्यते। तत्रोभयोश्चर्त्वे कृते आश्रयात्सिद्धत्वं भविष्यति। अथ क्ङिद्ग्रहणमनुवर्त्तते। उताहो न। किं चातः। शूट्त्वे क्ङिदधिकारश्चेत् छः षत्वम् *। शूट्त्व क्ङिदधिकारश्चे च्छः षत्वं वक्तव्यम्। प्रष्टा प्रष्टुं प्रष्टव्यम्। तुक्प्रसङ्गश्च *। तुक् च प्रसज्येत। निवृत्तेपि वै क्ङिद्ग्रहण ऽवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः। अन्तरङ्गत्वाद्धि तुक् प्राप्नोति। छ्वोरिति तुका सह संनिपातग्रहणं विज्ञायते। ननु चैवमपि अन्त्यस्य प्राप्नोति। संनिपातग्रहणसामर्थ्यात्सर्वस्य भविष्यति। एवमप्यङ्गस्य प्राप्नोति। निर्दिश्यमानस्यादेशा भवन्तीति एव-

---

निर्देशादस्य च ठित्वात्। चर्त्वं ऊत इति। धीत इत्यत्र वकारस्योठिकृते ठकारस्य खरिचेति॥ चर्त्वं क्रियते कृते च चर्त्वे एत्येधत्यूठ्स्वित्यत्रानुकृत इति भावः। असिद्ध चर्त्वमिति। पूर्व त्रा सिद्धमिति। ऊकारान्तानुकरणे चर्त्वमसिद्धमित्येत्येधत्यूठ्स्वित्यत्र वाह ऊठित्यस्योठो ग्रहणम्। आश्रयादिति। एत्येधत्यूठ्स्वित्यत्रोठ एव कृतचर्त्वस्यानुकरणनिर्देशस्तत्र चर्त्वस्याश्रयात्सिद्धत्वमित्यर्थः। अस्ति चान्य इति। ततस्तस्यैव सूत्रे निर्देशो युक्तः। तत्रो भयोरिति। धीत इत्यादावूठि कृते चर्त्वे च यट्ठकारान्तं रूपं यच्च वाह ऊठित्यत्रठकारस्य जश्त्वेवावसान इति चर्त्वं तयोः सामान्येनैत्येधत्यूट्स्वित्यत्र निर्देश इति मन्यते। उभयोस्तुठित्वे ठकारस्यैव जश्त्वे चर्त्वे च कृते एत्येधत्यूठ्स्विति निर्देशोपपादनान्न किं चिच्चर्त्वस्याश्रयासिद्धत्वे प्रयोजनं दृश्यत इति चिन्त्यमेतत्। अथेति। स्वरितत्वप्रतिज्ञानस्य व्याख्यानाधीनत्वादनुवृत्तौ छ्शां ष इति छ्ग्रहणस्य। लिङ्गस्य दर्शनान्निवृत्तौ दिव उदिति तपरकरणलिङ्गदर्शनाच्च प्रश्नः। शूट्त्वेइति। इह क्ङिदधिकारे क्ङिति व्रजादौ शकाराभावात् षत्वे छग्रहणं कर्तव्यम्। क्ङितस्त्वननुवृत्तौ क्ङिति चाक्ङिति चानेन शकारो विधीयत इति षत्वविधौ छग्रहणं पृथङ्न कर्तव्यं भवति। तुक्प्रसङ्गश्चेति। क्रियमाणे ऽपि षत्वविधौ छग्रहणे पूर्वत्रासिद्धमिति षत्वस्यासिद्धत्वात्तुकि सति प्रष्टेति प्राप्नोतीत्यर्थः। अस्य तु शकारस्य सिद्धत्वात्तुग्न भवति। निवृत्तेपीति। परमपि शत्वं बाधित्वा वर्णाश्रयत्वादन्तरङ्गत्वात्तुक् प्राप्नोति। वार्णादाङ्गं बलीयइत्येतत्त्वाङ्गवार्णयोर्युगपत् प्राप्तावुपतिष्ठते इति तुको ऽश्रवणाय सतुक् निर्देशः कर्तव्यइत्यर्थः। ननु चैवमपीति। नानर्थकेऽलोन्त्यविधिरिति परिभाषा प्रयोजनाभावान्नाहृता। सतुक्केन वा छकारेणाङ्गविशेषणात्तदन्तविधौ सत्यङ्गस्यार्थवत्त्वादलोन्त्यस्य प्रसङ्गः। संनिपातग्रहणमसामर्थ्यादिति। अलोन्त्यविधौ सति सतुग्निर्देशोनर्थकः स्यात्। वाञ्छतिनि-

मङ्गस्य न भविष्यति। यद्येवमुत्पुच्छयतेरप्रत्ययः उत्पुडिति प्राप्नोति उत्पुदिति चेष्यते। तथा वाञ्छतेरप्रत्ययः। वान् वांशौ वांश इति नसिध्यति। यथालक्षणमप्रयुक्ते। तत्र त्वेतावान्विशेषः। अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यम्। तत्र चापि सन्निपातग्रहणं विज्ञेयम्। निवृत्ते दिव ऊड्भावः *। अथ निवृत्तं, दिव ऊड्भावः प्राप्नोति। द्युभ्यां द्युभिः। अस्तु। कथं द्युभ्यां द्युभिरिति। ऊठि कृते दिव उदित्युत्वं भविष्यति। न भविष्यति। आन्तर्यतो दीर्घः प्राप्नोति। तदर्थं तपरः क्रियते। क्व पुनः क्ङिद्ग्रहणं प्रकृतम्। अनुनासिकस्य क्विझलोः क्ङितीति। यदि तदनुवर्तते। अज्झनगमां सनि क्विझलोश्चेति क्विझलोरपि दीर्घत्वं प्राप्नोति। झलि तावद् न दोषः। सनमत्र झल्ग्रहणेन विशेषयिष्यामः. सनि झलादाविति।

---

वृत्त्यर्थत्वान्नानर्थक इति चेद् वक्ष्यत एतत् यथालक्षणमप्रयुक्तइति। उत्पुच्छयतेरिति। पुतं छादयतीति पुच्छन्। कर्मण्यण्। पृष्टोदरादित्वाद्धातूपपदयोष्टिलोपः। पुच्छमुदस्यतीति णिङ्। क्विप्। सतकारस्यच्छकारस्य शकारे कृते षत्वे जशत्वे च उत्पुडिति भवति। यदा तु केवलः छः स्थानी तदा झस्य शकारे कृते तस्य च संयोगान्तत्वाद् लोपे तकारस्य श्रवणं सिध्यति। तथेति। तकारसहितस्य च्छस्य स्थानिनो निर्देशेन केवलस्य शकारो न प्राप्नोति। यथालक्षणमिति। उत्पुडिति वाञ्छाविति चास्त्वित्यर्थः। अथ वा ऽप्रयुक्ते न किं चिल्लक्षणं प्रवर्तते। प्रयुक्तानामन्वाख्यानारम्भात्। दिवऊड्भावः प्राप्नोतीति। ऊठोऽवकाशः। स्यूतः स्यूतवानिति। उत्वस्यावकाशः विमलद्यु अहरिति। द्युभ्यामित्यादौ तु परत्वादूठ्प्रसङ्गः। उत्वं भविष्यतीति। पुनः प्रसङ्गविज्ञानादेकदेशविकृतस्यानन्यत्वात्। दीर्घः प्राप्नोतीति भाव्यमानोप्युकारः सवर्णान् गृह्णातीति ऋत उदिति तपरत्वेन ज्ञापनात्। तदर्थमिति। दीर्घस्यापि मात्रिको यथा स्यादिति तपरत्वं कृतम्। किमुच्यते एतावान् विशेष इति। यावता दिवादीनां यङ्लुगन्तानां तिबादिषु भेदो भवति। ऊठि सति देद्योतीति भवति। असति तु देदेतीति। नैष दोषः। छान्दसो यङ् लुक्। नचैते प्रयोगाश्छन्दसि दृश्यन्ते। भाषायां तु हुश्नुवोः सार्वधातुक इति अत्र हुश्नुग्रहणाज् ज्ञापकात् क्व चिदेव यङ् लुग् भवति न सर्वत्र। अन्यथा यङो ऽचिचेत्यत्र च्छन्दोग्रहणानुवृत्तिरनर्थिकैवस्यादिति भाष्यकारस्य दर्शनम्। क्वपुनरिति। क्ङिद्ग्रहणानुवृत्तावन्यस्यापि तद्योगनिर्दिष्टस्यानुवृत्तिप्रसङ्गं मत्वा पृच्छति। सनि झलादाविति। तेनेङ्गिगादेशस्य गमेरजादौ सनि दीर्घो न भवति जिगमिषतीति अधि-

क्त्वावप्याचार्यप्रवृत्तिर्ज्ञापयति। नानेन क्त्वौ दीर्घो भवतीति। यदयं क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं चेति दीर्घत्वं शास्ति। इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे प्रथममाह्निकम्॥

असिद्धवदत्राभात् ॥ २२ ॥ असिद्धवचनं किमर्थम्। असिद्धवचने उक्तम् *। किमुक्तम्। तत्र तावदुक्तम्। षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चेति। इहाप्यसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च। तत्रादेशलक्षणप्रतिषेधार्थं तावत्। आगहि। जहि। गतं गतवानिति। अनुनासिकलोपे जभावे च कृते अतो लोपः अतो हेरिति च प्राप्नोति।

---

जिगमिषन्तीति। यदयमिति। वाक्यकारो वच्यादिष्वजन्तानां दीर्घत्वं शास्ति। तेन ज्ञापयति मण्डूकप्लुत्यादिभिर्न्यायैरिहैव क्विङ्ग्रहणं संबध्यते न पूर्वत्रेत्यर्थः।
इति कैय्यटकृते भाष्यप्रदीपे षष्ठाध्यायस्य चतुर्थे पादे प्रथममाह्निकम्।

असिद्धवत्। इह क्वचिदुपमानोपमेययोरभेदं विवक्षित्वा सामानाधिकरण्येन निर्देशः क्रियतेऽयं ब्रह्मदत्त इति। शास्त्रेऽपि षत्वतुकोरसिद्धः। लिट् कित्। गोतो णिदिति च। तत्र सामर्थ्यादतिदेशप्रतिपत्तिः। क्वचित्तु प्रतिपत्तिलाघवाय भेदोपक्रमे वतिना निर्देशः क्रियते ब्रह्मदत्तवदयमिति। इहापि असिद्धवदत्राभादिति। अन्ये त्वाहुः। स्वाश्रयमपि यथा स्यादित्येवमर्थं वत्करणम्। तेन देभतुरित्यत्र स्वाश्रयैकहल्मध्यगताश्रयावेत्वाभ्यासलोपौ भवत इति। एतदपरे न सृष्यन्ति। सत्यसति वा वतावतिदेशेष्वातिदेशिकाविरुद्धस्वाश्रयकार्यानिवृत्तिः सिद्धत्वासिद्धत्वयोर्विरोधात्कथं वतिना सिद्धत्वस्य प्रापणम्। कथं वा सिद्धत्वासिद्धत्वयोर्विषयविभागो लभ्यते। स्थानिवदित्यादौ तु वति मन्तरेण संज्ञा स्यादिति वत्करणमतिदेशं गमयत् स्वाश्रयप्राप्त्यर्थौ विज्ञायते श्नसोरल्लोप इति तपरकरणात् क्वचित्सिद्धत्वं शक्यमनुमातुम्। अन्यथा आस्तामासन्नित्यादावाटोसिद्धत्वाल्लोपाप्रसङ्गात् किं तपरत्वेन। असिद्धवचनं किमर्थमिति। इह शास्त्रस्य कार्यार्थत्वात्कार्यस्य प्राधान्यादसिद्धत्वेन भाव्यम्। तदसद्भावेपि स्थानिनो निवृत्तत्वात्तल्लक्षणं कार्यं न प्राप्नोतीत्यव्याप्तिं मत्वा प्रश्नः। इतरो व्यापकत्वाच्छास्त्रासिद्धत्वं प्रदेशान्तरे एवं स्थापितं मन्यमान आह। असिद्धवचने उक्तमिति। उत्सर्गशब्देन सामान्यविषयत्वसाधर्म्यात् स्थान्यभिधीयते। आगहीति। शपो बहुलं छन्दसीति लुक्। जहीति। हन्तेर्जः। गतमिति। अवयवलोपिनामतो लोपो नास्तीत्येतत्परिभाषार्थं सुपदेशग्रहणानुवृत्त्या भाष्यकारः सं-

असिद्धत्वान्न भवति । उत्सर्गलक्षणभावार्थं च । एधि शाधीति । अस्तिशास्त्योरेत्वशाभावयोः कृतयोः झल्लक्षणं धित्वं न प्राप्नोति । असिद्धत्वाद्भवति । अथात्रग्रहणं किमर्थम् । अत्रग्रहणं विषयार्थम् *। विषयः प्रतिनिर्दिश्यते । अत्रैतस्मिन्नाभाच्छास्त्रे आभाच्छास्त्रमसिद्धं यथा स्यात् । इह मा भूत् । अभाजि रागः उपबर्हणमिति । कानि पुनरस्य योगस्य प्रयोजनानि । प्रयोजनं शैत्वं धित्वे *। शाभाव एत्वं च धित्वे प्रयोजनम् । एधि शाधीति । अस्तिशास्त्योरेत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति । असिद्धत्वाद्भवति । शभावस्तावन्न प्रयोजयति । एवं वक्ष्यामि । शास् हौ शाहाविति । यत्वभूतः सकारः तत्र सात् धित्वं धिचेति सकारस्य लोपः । अथ वा आहाविति वक्ष्यामि एवमपि सकारस्य प्राप्नोति । उपधाया इति वर्तते । तत्रोपधाया आत्वे कृते सात् धित्वं धि चेति सकारलोपः । अथ वा नहाविति वक्ष्यामि । यत्रैत्वप्रतिषेधे सात् धित्वं धिचेति सकारलोपः । एत्वमपि लोपापवादो विज्ञास्यते । न च सकारस्य लोपः

---

पादयिष्यति । एधीति । परत्वान्नित्यत्वाच्च पूर्वमेत्वम् । शाधीत्यत्रापि नित्यत्वात् पूर्वं शाभावो ऽल्विधित्वाच्च धित्वे नास्ति स्थानिवद्भावः । अथात्रग्रहणमिति । यथाङ्गस्येत्यादयो धिकारा अवध्युपादानमन्तरेणापि व्याख्यानाद्विशिष्टावधयो विज्ञायन्ते तथासिद्धवदधिकारोप्याभाद्विज्ञायते । तत्राभाद्ग्रहणस्य विषयावधारणार्थत्वादत्रग्रहणं न कर्तव्यमित्यर्थः । अत्रग्रहणं विषयार्थमिति । विशिष्टो यो विषयः समानलक्षणस्तन्निर्देशार्थम् । तेन समानाश्रयमसिद्धम् । व्याश्रयं तु सिद्धमित्येषोर्थो वार्तिककारस्याभिमतः । भाष्यकारो ऽप्यमुमेवार्थमत्रग्रहणस्य परस्तात् स्थापयिष्यति । संप्रति त्वाभाद्ग्रहणमधिकारस्य प्रतिपत्तिलाघवायावध्युपादानार्थं मत्वासिद्धवद्भावस्याभाच्छास्त्रमेव विषयो ऽत्रग्रहणेन निर्दिश्यतइति व्याचष्टे । अभाजि राग इति । भञ्जेश्च चिणि । रञ्जेश्च । घञि च भावकरणयोरिति नलोपो ऽत उपधाया इति वृद्धौ कर्तव्यायां नासिद्धो भवति । उपबर्हणमिति । बृहिहृद्धावित्यस्य बृंहेरच्यनिटीति नलोपो गुणे सिद्धो भवति । कानि पुनरिति । अन्यथा सिद्धिंमत्वा पृच्छति । शास्हाविति । इहेत्वबाधनाय शासिरेवादेशः शासो विधीयते । ततो झलन्तत्वात्सिद्धं धित्वमित्यर्थः । धिचेति सकारस्य लोप इति । धि सकारे सिचो लोप इति आश्रीयते । चकाधीत्येवं भवतीति निर्णेष्यते । एत्वमपीति । असोरल्लोप इत्यस्य लोपस्यापवादो ऽकारस्य स्थाने एत्वं विधीयते । असोरल्लोप इत्यस्य

प्राप्नोति। करोतेर्हिलोप उत्त्वे प्रयोजनम् *। कुर्वित्यत्र हिलोपे कृते सार्वधातुके परे उकार इत्युत्वं न प्राप्नोति। असिद्धत्वाद्भवति। एतदपि नास्ति प्रयोजनम्। वक्ष्यति तत्र सार्वधातुकग्रहणस्य प्रयोजनम्। सार्वधातुके भूतपूर्वमात्रे यथा स्यादुत्वम्। तास्तिलोपेण्यणादेशा अडाड्विधौ *। तलोपोऽस्तिलोप इणश्च यणादेशोऽडाड्विधौ प्रयोजनम् *। अकारि ऐहि इति। तलोपे कृते लुङीति अडाटौ न प्राप्नुतः। असिद्धत्वाद्भवतः। अस्तिलोप इणश्च यणादेशः प्रयोजनम्। आसन्। आयन्। इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वादाड् न प्राप्नोति। असिद्धत्वाद्भवति। अस्तिलोपस्तावन्न प्रयोजयति। आचार्यप्रवृत्तिर्ज्ञापयति लोपादाड् बलीयानिति। यदयं श्नसो रल्लोप इति तपरकरणं करोति। इण्यणादेशश्चापि न प्रयोजयति। यणादेशे योगविभागः करिष्यते। इणो यण् भवतीति। ततः एरनेकाचः। इणो यण् भवतीति। ततः। असंयोगपूर्वस्य। असंयोगपूर्वस्य यण् भवति। एरनेकाच इत्येव। सर्वेषामेष परिहारः उपदेश इति वर्तते। तत्रोपदेशावस्थायामेवाडाटौ भवतः। अथवार्द्धधातुक इति वर्तते। अथ वा लुङ्लङ्लृङ्क्ष्वडिति द्विलकारको निर्देशः। लुङादिषु लकारादिष्विति। सर्वथा ऐज्यत औप्यत इति न सिध्यति।

---

विषयार्थं स्यानुवर्तनात्तेन लोपविषय एत्वं भवतीत्यर्थः संपद्यते तदाह। न च सकारस्येति। कुर्विति। कृ उ हि इति स्थिते हिलुकः परत्वात् प्राग् गुणः उत्वाच्च प्राङ्नित्यत्वाद्धि लुक् तत उत्वं न प्राप्नोति। असिद्धत्वात्तु हिलुको भवति। तलोपे कृते इति। नित्यत्वात्। यदयमिति। तपरकरणस्य प्रयोजनमास्तामासन्नित्यादावाटि कृते वार्णादाङ्गं बलीय इत्येकादेशं बाधित्वा मा भूदाकारस्य लोप इति। यदि प्राग्लोपः स्यात्ततो ऽनजादित्वादाटो भावात्तल्लोपनिवृत्तये तपरत्वं न कर्तव्यं स्यादित्यर्थः। एरनेकाच इति। आटमन्तरेणानेकाजिण् भवतीति पूर्वमाड् भवतीत्यनुमीयते। ईयतुरित्यादौ योगविभागमन्तरेण यणः सिद्धत्वादाड्विध्यर्थमेव योगविभागो विज्ञायते तेन नित्योपि यणादेशो ऽकृत आटि न भवति। तत्रोपदेशावस्थायामिति। अन्तरङ्गानपि विधीन् बाधित्वा लुङाद्युपदेश एवाडाटौ भवत इत्यर्थः। अथवेति। आर्द्धधातुकग्रहणानुवृत्तिसामर्थ्यादकृतेषु लुङादेशेषु लावस्थायां लब्धार्द्धधातुकसंज्ञायामडाटौ भवत इत्यर्थः। सर्वथेति। त्रिष्वपि परिहारेषु यजादीनां लावस्थायां संप्रसारणाभावादनजादित्वादाटोऽभा-

वच्यत्येतदजादीतामटा सिद्धमिति । अनुनासिकलोपो हिलोपाऽल्लोपयोर्जभावस्य * । अनुनासिकलोपो हिलोपाल्लोपयोर्जभावस्य प्रयोजनम् । आ गहि । जहि । गतः । गतवानिति । अनुनासिकलोपे कृते जभावे च कृते अतोहेरतो लोप इति च लोपः प्राप्नोति । असिद्धत्वान्न भवति । अनुनासिकलोपस्तावन्न प्रयोजयति । अल्लोपे उपदेशइति वर्तते । यद्युपदेश इति वर्तते । धिनुतः । कृणुत. । अत्र न प्राप्नोति । नैष दोषः । नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते । किं तर्हि आर्द्धधातुकमभिसंबध्यते । आर्द्धधातुकोपदेशकालेयदकारान्तमिति । जभावश्चापि न प्रयोजयति। हिलोपे योगविभागः करिष्यते । अतो हेः । तत उतश्चेति । हेर्लुग्भवतीति । ततः प्रत्ययात् । प्रत्ययादित्युभयोः शेषः । अथ किमर्थमनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्चेत्युच्यते । न अनुनासिकलोपजभावौ अलोपहिलोपयोरित्येवोच्येत।संख्यातानुदेशोमाभूदिति।अनुनासिकलोपोहिलोपोपि प्रयोजयति। मण्डूकिताभिरागहि। रोहिदश्व इहागहि । मरुद्भिरग्न आगहि । संप्रसारणमवर्णलोपे प्रयोजनम् * । मघोनः पश्य ।

---

वादट् प्राप्नोतीत्यर्थः । अटासिद्धमिति । आटश्चेति यत् सूत्रं तदटश्चेति क्रियते । अचीत्यधिकाराच्च हलि वृद्ध्यभावः कथमायन्नासन्निति । यावतेणस्तु गोर्यण्लोपयोः कृतयोर्वृद्धिर्नास्ति । तन्त्रङ्गत्वाद्वृद्धिर्भविष्यतीत्यदोषः । नानाश्रयत्वाच्च वार्णादाङ्गं बलीय इति नास्ति । कृतायां वृद्धावासन्निति तपरकरणादाकारलोपाभावः । इणोपि वृद्धेरैकारस्य यण् न भविष्यतीति इणो यण् एरिति योगविभागात् इकारान्तस्येणो यखिधानात्तदभावाच्च यादेशे कृते आयन्निति भविष्यति । आर्द्धधातुकोपदेश इति । आर्द्धधातुकोपदेशकाले यदकारान्तमङ्गं तस्यार्द्धधातुके परतो लोप इति सूत्रार्थः । तत्र धिन्विकृण्व्योरचेति उप्रत्ययसंन्नियोगेनाकारस्य विधानादकारान्तत्वं धिन्विकृण्व्योरार्द्धधातुकोपदेशं भवतीति सिध्यत्यल्लोपस्तस्य च परनिमित्तत्वात् स्थानिवद्भावाद्धिनुत इत्यादौ गुणाभावः । प्रत्ययादित्युभयोः शेष इति । समुदायापेक्षणात् । असंयोगपूर्वादित्यत्र तु भेदेनापेक्षणादानन्तर्यादुत इति संबध्यते नत्वत इति । संख्यातानुदेशो मा भूदिति । यद्यपि प्रयोजनाख्यानपरत्वाद्वाक्यस्य यथा संख्याभावस्तथापि क्रमस्यान्यत्र व्यवस्थाहेतुत्वदर्शनादिहापि तदाशङ्का स्यादिति तन्निराकरणायैवं निर्देशः कृतः । आगहीति । अत्रापि प्रत्ययादित्यस्योभयोः शेषत्वाद्धेर्लुगभावः सिध्यति । मघोन इति । मघमस्यास्तीति क-

मघोना मघोने। संप्रसारणे कृते यस्येति लोपः प्राप्नोति। असिद्धत्वान्न भवति। नैतदस्ति प्रयोजनम्। वक्ष्यत्येतत्। मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति। रेभावे आल्लोपे प्रयोजनम् *। किं स्विद् गर्भं प्रथमं दध्र आपः। रेभावे कृते आतो लोप इटि चेत्याकारलोपो न प्राप्नोति। असिद्धत्वाद्भवति। एतदपि नास्ति प्रयोजनम्। छान्दसो रेभाव इति। लिट् च च्छन्दसि सार्वधातुकमपि भवति। तत्र सार्वधातुकमपिद् ङिद्भवति इति ङित्त्वं श्नाभ्यस्तयोरात इत्याकारलोपो भवति। यदि तर्हि अयं योगो नास्ति। उत्तु कृञः कथमोर्विनिवृत्तौ। इह कुर्वः। कुर्मः। कुर्यादिति। उकारलोपे कृते सार्वधातुके परे उकारे इति उत्वं न प्राप्नोति। णेरपि चेटि कथं हि निवृत्तिः। इह च कारयतेः कारिष्यते। णेरनिटीति णिलोपो न प्रा-

---

न्दसीवनिपौ चेति वनिप्। असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया संप्रसारणस्यासिद्धत्वं नास्ति। एषा हि परिभाषा वाह ऊडित्यत्र ज्ञापितत्वादाभाच्छास्त्रीया। तस्या प्रवर्तमानाया मकारलोपसंप्रसारणयोरसिद्धत्वादन्तरङ्गबहिरङ्गयोर्युगपदनुपस्थानान्नाजानन्तर्य इति प्रतिषेधाद्वा। अव्युत्पन्नमिति। ततश्च तद्धिते विधीयमानोकारलोपो न भवति। व्याश्रयत्वादसिद्धत्वमपि न स्यादित्यव्युत्पत्तिपक्ष एवाश्रयणीयः। रेभावे कृते इति। नित्यत्वात्। लिट्चेति। सार्वधातुके श्नप्श्नौ द्विर्वचनेऽघोरिति इत्वनिषेधादाकारलोपः। वार्तिककारोक्तेषु प्रयोजनेषु प्रत्याख्यातेषु श्लोकवार्तिककारोक्तप्रयोजनोपक्षेपः। उत्तु कृञ इति। सार्वधातुके परइति। अथसार्वधातुके एव परतः कस्मादुत्वं न क्रियते। नैवं शक्यम्। उकारलोप एव सत्युत्वं स्यात्। कुरुत इत्यादौ तु विकरणेन व्यवधानान्न स्यात्। कुर्व इत्यादावपि स्थानिवद्भावाद् व्यवधानमिति चेन्न। वचनादीदृशं व्यवधानमाश्रीयते। ननु च सार्वधातुकपर उकारइत्याश्रीयमाणे नित्यत्वात् कृतेप्युकारलोपे तल्लोपस्य स्थानिवद्भावादुत्वं भविष्यति। अत्र हि परत्वाद् गुणे कृते उकारलोपः। ततश्चानादिष्टादचः पूर्वस्य विधावस्तोऽव स्थानिवद्भावः। प्रत्ययलक्षणं तु वर्णाश्रयत्वान् मा भूत्। एवं तर्हि परिहारान्तरस्य वक्ष्यमाणत्वात् स्थानिवत्त्वं भाष्यकारेण नाश्रितम्। अथ वा नित्यत्वात् पूर्वमुकारलोपः पश्चाद् गुणः कृते ह्युकारलोपे प्रत्ययलक्षणमिति गुणेन भाव्यम्। ततो लक्षणान्तरेण प्राप्नुवन्विधिरनित्य इति गुणस्यानित्यत्वम्। ततश्चादिष्टादचः पूर्वोकार इति तद्विधौ नास्ति स्थानिवद्भावः। ननु व्याश्रयत्वादुकारलोपस्यासिद्धत्वं न प्राप्नोति। म्वोरुकारलोपविधानात्। सार्वधातुके परत उत्वविधानात्। नैतदस्ति मकारवकारादौ प्रत्यये उकारलोपविधानादस्त्येव समानाश्रयत्वम्। कारिष्यत इति।

ण्णोति । अब्रुवतस्तवयोगमिमं स्यात् लुक् च चिणो नु कथं न तरस्य । इहचाकारितराम् अहारितरामिति चिणउत्तरस्य तरस्य लुक् कथं न स्यात् । चं भगवान् कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः । इह स्यसिच्सीयुट्तासिषुभावकर्मणोरुपदेशेऽज्झनग्रहदृशां वाचिण्व-दिट् च । किं च, णिलोपश्च । ण्वोरपि ये च तथाप्यनुवृत्तौ । इहापि कुर्वः । कुर्मः । कुर्यादिति । ण्वोर्ये चेति । एतदप्यनुवर्तिष्यते । चि-ण् लुकि च क्ङितएव हि लुक् स्यात् । चिण्लुक्यपि हि प्रकृतं क्-ङिद्ग्रहणमनुवर्तते । क्व प्रकृतम् । गमहनजनखनघसां लोपः क्ङि-त्यनङीति । तद्वै सप्तमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । चिण इ-त्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादि-त्युत्तरस्येति । उत्तु कृञः कथमोर्विनिवृत्तौ णेरपि चेटि कथं वि-निवृत्तिः । अब्रूवतस्तव योगमिमं स्याल्लुक् च चिणो नु कथं न तर-स्य ॥ १ ॥ चं भगवान् कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः । ण्वोरपि ये च तथाप्यनुवृत्तौ चिण्लुकि च क्ङित एव हि लुक् स्या-त् * ॥ २ ॥ आरभ्यमाणेप्येतस्मिन् योगे सिद्धं वसुसंप्रसारणमज्विधौ* । आरभ्यमाणेप्येतस्मिन् योगे वसोः संप्रसारणमज्विधौ सिद्धं वक्तव्यम् । किं प्रयोजनम् । पपुषः पश्य । तस्थुषः पश्य । निन्युषः पश्य ।

---

प्रकृतिप्रत्ययाश्रयत्वादिण्णिलोपयोः समानाश्रयत्वम् । चं भगवानित्यादिना प्रयोज-ननिराकरणम् । इट् चेति । चकारेण णिलोपो विधीयते इत्यर्थः । ण्वोरिति । अत उ-त् सार्वधातुके इत्यत्र ण्वोर्ये चेत्यनुवर्तनात् कृते उकारलोपे अत उत्वं भविष्यतीत्यर्थः । मकारादिभिश्च वाक्यभेदेन सार्वधातुकस्य विशेषणात् कुर्म इत्यादावुत्वाभावः । आरभ्य-माणेपीति । अनेकपरिहाराश्रयणे प्रतिपत्तिगौरवं माभूदित्येवममर्थमारभ्यमाणे इत्य-र्थः । पपुष इति । ननु चान्तरङ्गत्वादिटा भाव्यम् । न च संप्रसारणे कृतेपीटोनिवृत्तिः । निमित्तापाये नैमित्तिकस्याप्यपाय इत्यस्याः परिभाषाया भाष्यकारेणानाश्रयणात्तथा च चाविल्यत्रोक्तमिहान्यं चौ प्रत्यङ्गस्य प्रतिषेधमारभन्ते । तदिहापि साध्यमित्यकारस्य निवृत्तावपि यणाद्यादेशानिवर्तनाच्चैतदुक्तम् । तथाच क्वोरित्यत्रोक्तमवश्यमत्र तुगभावा-र्थो यत्नः कर्तव्योन्तरङ्गत्वाद्धि तुक् प्राप्तिरिति । कृतेपि शकारे कृतस्य तुको निवृत्तिं म-त्वा चैतदुक्तम् । एवं तर्हि नित्यशब्ददर्शने प्रविभज्यावयवेषु कल्प्यमानेष्वन्तरङ्गबहिर-ङ्गभावो नास्तीति पपा वस् अस् इति स्थिते नित्यत्वादिटं बाधित्वा संप्रसारणं भवत्य-

चिच्युषः पश्य। लुलुवुषः पश्य। युयुवुषः पश्य इति। वसोः संप्रसारणे कृते अचीत्याकारलोपादीनि यथा स्युरिति। किं पुनःकारणं न सिध्यन्ति। बहिरङ्गलक्षणत्वादसिद्धत्वाच्च। बहिरङ्गलक्षणं चैव हि वसुसंप्रारणमसिद्धं च। आत्वं यलोपाल्लोपयोः पथुषो न वाजान् चाखायिता। चाखायितुम्।* आत्वं यलोपाल्लोपयोः सिद्धं वक्तव्यम्। किं प्रयोजनम्। पथुषो न वाजान्। पथुष इत्यात्वस्यासिद्धत्वाद् आतो धातो रित्याकारलोपो न प्राप्नोति। चाखायिता चाखायितुमिति। आत्वस्यासिद्धत्वाद् यस्य हल इति यलोपः प्राप्नोति। समानाश्रयत्वात्सिद्धम्। समानाश्रयमसिद्धं भवति। व्याश्रयं चैतत्, इह तावत्। पपुषः पश्य। तस्थुषः पश्य। निन्युषः पश्य। चिच्युषः पश्य। युयुवुषः पश्य। लुलुवुषः पश्येति। वसावाकारलोपादीनि वस्वन्तस्य विभक्तौ संप्रसारणम्। पथुष इति। विटि आत्वं विडन्तस्य विभक्तावकारलोपः। चाखायिता चाखायितुमिति। यङ्यात्वं यङन्तस्य चार्द्धधातुके लोप इति। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। अत्र ग्रहणसामर्थ्यात्। ननु चान्यदत्रग्रहणस्य प्रयोजनमुक्तम्। किमुक्तम्। अत्रग्रहणं विषयार्थमिति। अधिकारादप्येतत्सिद्धमिति। इहपपुषः। चिच्युषः। लुलुवुषः। द्वौ हेतू व्यपदिष्टौ। बहिरङ्गलक्षणमसिद्धत्वं चेति। तत्र भवेदसिद्धत्वं प्रत्युक्तम्। बहिरङ्गलक्षणं तु नैव प्रत्युक्तम्। नैष दोषः। बहिरङ्गमन्तरङ्गमिति च प्रतिद्वन्द्विभाविनावेतावर्थौ। कथ-

---

ल्विधित्वाच्च स्थानिवत्वाभावादिटो प्रसङ्गः। अथ वा संप्रसारणं तदाश्रयं च बलीयो भवतीति अत्र विषये पूर्वमिड् न प्रवर्तते। पथुष इति। पथुं सनोतीति जनसनेति विट्। विड्वनोरित्यात्वं तस्यासिद्धत्वादातोधातोरित्याकारलोपाप्रसङ्गः। लक्षणप्रतिपदोक्तपरिभाषा त्वाल्लोपेनाश्रीयते। अव्याप्तिप्रसङ्गात्। चाखायितेति। खनतेर्यङि द्विर्वचनात्परत्वाद्ये विभाषेत्यात्वे द्विर्वचने च कृचिरूपम्। अधिकारादपीति। ततश्चाभादग्रहणं विषयार्थं मत्रग्रहणं तु समानाश्रयत्वप्रतिपत्तिसिद्ध्यर्थं संपद्यते। असिद्धत्वं प्रयुक्तमिति। समानाश्रयत्वपरिग्रहात्। बहिरङ्गलक्षणं त्विति। यद्यपि नाजानन्तर्यं इत्ययमत्र निषेधोऽवतरति तथापि परिभाषायाः कारणाभावात्प्रसङ्ग एव नास्तीति प्रतिपादयितुमुपन्यासः। प्रतिद्वन्द्विभाविनाविति। नहि वस्त्वन्तरानपेक्षमन्तरङ्गं बहिरङ्गं वा स्वभावसिद्धं किंचिदस्ति। अपरापेक्षया युगपत्प्राप्तौ तयोरवस्थानात् यथा स्योन इत्यत्र यण्गुणयोः। पपुष इत्या-

म् । सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गे ऽन्तरङ्गम् । न चान्तरङ्गबहिरङ्गयोर्युगपत्समवस्थानमस्ति । नानभिनिर्वृत्ते बहिरङ्गे ऽन्तरङ्गं प्राप्नोति । तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य क्त्वस्यलोपाल्लोपास्थायादेशे ल्यपि सिद्धा वक्तव्याः । प्रशमय्य गतः । प्रतमय्य गतः । प्रबेभिदय्य गतः । प्रचेच्छिदय्य गतः । प्रस्तनय्य गतः । क्त्वस्यलोपाल्लोपानामसिद्धत्वात् ल्यपि लघुपूर्वादित्ययादेशो न प्राप्नोति । अत्राप्येष परिहारः । समानाश्रयवचनात्सिद्धमिति । कथम् । यावेते विधयः । ल्यप्ययादेशः । वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ *। बभूवतुः । बभूवुः । वुको ऽसिद्धत्वादुवङादेशः प्राप्नोति । उपदिदीये । उपदिदीयाते । युटो ऽसिद्धत्वाद्यणादेशः प्राप्नोति । वुकस्तावन्न वक्तव्यम् । वुकं न वक्ष्यामि । एवं वक्ष्यामि । भुवो लुङ्लिटोरुदुपधाया इति । अत्रोवङादेशे कृते या उपधा तस्या उत्वं भविष्यति । एवमपि कुतो नु खल्वेतत् । उवङादेशे कृते या उपधा तस्या उत्वं भविष्यति । न पुनः सांप्रतिकी योपधा तस्याः स्याद् भकारस्येति । नैष दोषः । औरिति

दौ तु युगपत्प्राप्तिर्नास्ति । संप्रसारणप्राप्तिकाले आल्लोपादीनां निमित्ताभावादप्रसङ्गः । आल्लोपप्राप्तिकाले च निर्वृत्तं संप्रसारणं ततश्च निमित्त मेवाल्लोपादीनां संप्रसारणमिति नास्ति परिभाषोपस्थानमित्यर्थः । तथैवं पचावेदमित्यादावपि नाकृते आद्गुणे एतऐ इत्वेत्वं प्राप्नोतीति निमित्तनिमित्तिभावात्परिभाषाया अनुपस्थानप्रसङ्गः । एवं तर्ह्यन्यथा व्याख्यायते । असिद्धं बहिरङ्गमन्तरङ्ग इत्येषा परिभाषा वाह ऊडित्यत्र ज्ञापितेत्याभाच्छास्त्रीया । अथ वा विप्रतिषेधे परं कार्यमित्यत्रोपसंख्यातापि संज्ञापरिभाषाणां कार्यकालत्वादसुसंप्रसारणदेशत्वादाभाच्छास्त्रीया । आभाच्छास्त्रीयेष्वाल्लोपादिषु कर्त्तव्येषु असिद्धेति न प्रवर्त्तते । तदप्रवृत्तौ चाल्लोपादीनि भवन्तीति वाक्यार्थः । पदान्यस्मिन्नर्थे योज्यन्ते । सत्यन्तरङ्ग इति । बुद्धयापेक्षित इत्यर्थः । तत्र निमित्तमेवेति । परिभाषाया असिद्धत्वादप्रवृत्ताविति भावः । वसुसंप्रसारणं चैकं परिभाषाया आल्लोपादीनां चाश्रय इति समानाश्रयत्वाद्भवत्यसिद्धत्वं परिभाषायाः । प्रशमय्य गत इति । क्त्वस्यासिद्धत्वाल्लघुपूर्वो मकारो न भवतीत्ययादेशो न प्राप्नोति । प्रबेभिदय्येति । भिदेर्यङन्तात् णिच् तत्र यलोपस्यासिद्धत्वाल्लघु पूर्वादुत्तरो णिज् न भवति यकारेण व्यवधानादित्ययादेशाप्रसङ्गः । प्रस्तनय्येति । अदन्ताधिकारे स्तनगदी देवशब्द इति पठते । तत्राल्लोपस्यासिद्धत्वादकारेण व्यवधानादयादेशाप्राप्तिः । बभूवतुरिति । भू अतुस् वुक् तस्यासिद्धत्वादुवङ् प्राप्नोति । ननु च नाप्राप्ते छ-

वर्त्तते। तेनोवर्णस्य भविष्यति। भवेत्सिद्धं बभूवतुः बभूवुः। इदं तु न सिध्यति। बभूव बभूविथेति। किं कारणम्। गुणवृद्ध्योः कृतयोरुवर्णाभावात्। नात्र गुणवृद्धी प्राप्नुतः। किं कारणम्। क्ङिति चेति प्रतिषेधात्। कथं कित्त्वम्। इन्धिभवतिभ्यां चेति। तद्वै कित्त्वं वयं प्रत्याचक्ष्महे वुका। इह तु कित्त्वेन वुक् प्रत्याख्यायते। किं पुनरत्र न्याय्यम्। वुग्वचनमेव न्याय्यम्। सति हि कित्त्वे स्यातामेवात्र गुणवृद्धी। किं कारणम्। इग्लक्षणयोर्गुणवृद्ध्योः स प्रतिषेधः। न चैषा इग्लक्षणा वृद्धिः। एवं तर्हि नार्थो वुका नापि कित्त्वेन। स्तामत्र गुणवृद्धी। गुणवृद्ध्योः कृतयोः अवावोश्च कृतयोः या उपधा तस्या उत्वं भविष्यति। कथम्। ओरित्यत्रावर्णमपि प्रतिनिर्दिश्यते। इहापि तर्हि प्राप्नोति। कीलालपः पश्य। शुभंयः पश्येति। लोपोऽत्र बाधको भविष्यति। इह तर्हि प्राप्नोति। कीलालपौ कीलालप इति। एवं तर्हि व्योरिति वर्तते। तेनोवर्णे विशे-

---

षङि वुगारभ्यमाणस्तस्यापवादो भवति। सत्यपि संभवे बाधनं भवतीत्येष न्यायः। नैतदस्ति। बाधकप्रवृत्त्यवस्थायां यद्विद्यते तत् बाधकेन निवर्त्तितं न प्रवर्त्तते। उवङ् तु निरवकाशत्वात् प्रवर्त्तमाने वुकि असिद्धत्वादात्मानमदर्शयन्न शक्यो बाधितुमिति वुकि कृते तस्यासिद्धत्वात् प्रवर्त्तते। तेनोवर्णस्येति। उवर्णस्योपधाया उद्भवति इत्येवमाश्रयणादुवङि च कृते उवर्णं उपधा भवति नान्यथा। इन्धिभवतिभ्यां चेति कित्वं प्रत्याख्यातमिति मत्वाह। भवेत्सिद्धमिति। तद्वै कित्वं वयमिति। भुवो वुको नित्यत्वादिति न्यायात्। इह तु कित्वेनेति। क्ङिति चेति गुणवृद्धिनिषेधादुवङि च कृते उवर्णस्योत्वविधानात्। स्यातामेवेति। गुणग्रहणं प्रसङ्गोच्चारितम्। सिगुणस्येग्लक्षणत्वात्सिध्यति हि प्रतिषेधः। न चैषेति। अचोञ्णितीत्यत्रेक इत्यनुपस्थानादिग्लक्षणत्वाभावः। ओरित्यत्रावर्णमिति। अकारोकारयोराद्गुणे कृते ङसिङसोश्चेति पूर्वैकादेशेन निर्देशात्। इहापीति। ओःसुपीत्यत्रावर्णस्यापि निर्देशाद् यण्प्रसङ्गः। लोपोऽत्रेति। परत्वादिति भावः। आतोधातोरिति लोपस्यावकाशः संयोगपूर्वाकारान्तोधातुः। अकारप्रश्लेषस्योत्तरत्रावकाशः बभूव बभूविथेति। कीलालप इत्यत्र भय सङ्गे परत्वादाकारलोपः। विप्रतिषिद्धे चासिद्धत्वं न भवतीति ज्ञापयिष्यते। कीलालपाविति। असवनमास्थान इत्यनुवर्तनाद्भसंज्ञाया अभावादाकारलोपाप्रसङ्गात्। एवं तर्हि व्योरिति। यदेव योरिति प्रकृतं तदेवेवर्णक्रमव्यत्ययेन व्योरित्युक्तम्। तत्राकारोकारसमुदायनिर्दे-

षयिष्यामः । व्योरोरिति । इहेदानीमोरित्यनुवर्तते । व्योरिति नि-
वृत्तम् । युटश्चापि न वक्तव्यम् । युड्वचनसामर्थ्यान्न भविष्यति ।
अस्त्यन्यद् युड्वचने प्रयोजनम् । किम् । द्वयोर्यकारयोः श्रवणं यथा
स्यात् । न व्यञ्जनपरस्यानेकस्यैकस्य वा यकारस्य श्रवणं प्रति विशे-
षोस्ति । किं पुनः प्राग्भादसिद्धमाहोस्वित्सह तेन । कुतः पुनरयं
संदेहः । आङयं निर्देशः क्रियते आङ् च पुनः संदेहं जनयति । त-
द्यथा आपाटलिपुत्राद् वृष्टो देव इति संदेहः किं प्राक् पाटलिपुत्रा-
त्सह तेनेति । एवमिहापि संदेहः प्राग्भात्सह तेनेति । कश्चात्र
विशेषः । प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानम् * । प्रा-
ग्भादिति । चेच्छुनामघोनाभूगुणेषूपसंख्यानं कर्तव्यम् । शुनः पश्य ।
शुना । शुने । संप्रसारणे कृतेऽल्लोपोऽन इति प्राप्नोति । यस्य पुनः सह
तेनासिद्धत्वम् । असिद्धत्वात्तस्य न संयोगाद्वमन्तादिति प्रतिषेधो भ-
विष्यति । यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः । कथम् ।
नास्त्यत्र विशेषः । अल्लोपेन वा निवृत्तौ सत्यां पूर्वत्वेन वा निवृत्तौ
सत्याम् । अयमस्ति विशेषः । अल्लोपेन निवृत्तौ सत्यामुदात्तनिवृ-
त्तिस्वरः प्रसज्येत । नाचोदात्तनिवृत्तिस्वरः प्राप्नोति । किं कारणम् ।
नगोश्वन्त्सावर्वणेति प्रतिषेधात् । नैष उदात्तनिवृत्तिस्वरस्य प्रतिषे-
धः । कस्य तर्हि । तृतीयादिस्वरस्य । यत्र तर्हि तृतीयादिस्वरो ना-

---

शेऽपि व्योरित्यनेन विशेषणादुकारस्यैव यण् भवति न त्ववर्णस्येति । इहेति । भुवोवुग्
लुङ्लिटोरूदुपधाया इत्यत्र न व्यञ्जनपरस्येति । व्यञ्जनात्परस्येति सुप्सुपेति समासः ।
श्रुतिभेदपक्षेपि यणोमय इति द्विर्वचनविधानाद्धलोयमां यमिलोप इति पक्षे लोपविधाना-
त् पक्षेयकारद्वयं भवत्येवेति नार्थो युटेति तद्विधानसामर्थ्याद्यण् न भवति। शुन इति श्वन्
सस् इति स्थिते संप्रसारणं वार्णादाङ्गस्य बलीयस्त्वात् पूर्वैकादेशं बाधित्वाऽल्लोपः प्राप्नोति।
उपसंख्यानवादी विशेषं प्रतिपादयितुमाह । अयमस्तीति । अनुदात्तनिमित्तत्वादुदात्त-
लोपस्य । एकादेशे तु सत्येकादेश उदात्तेनोदात्त इत्याद्युदात्तं पदं भवति ।श्वशब्दाका-
रस्य प्रत्ययस्वरेणान्तोदात्तत्वात् । प्रत्याख्यानवाद्याह । नाचेति । उपसंख्यानवाद्याह ।
नैषेति। तृतीयादिस्वरस्येति। सावेकाच इति प्राप्तस्य। तत्र प्रतिषिद्धेपि तृतीयादिस्वरे लो-
पे सत्युदात्तनिवृत्तिस्वरप्रसङ्ग इति विशेषोस्ति न गोश्वन्नित्यस्य तु निषेधस्य फलं श्वभ्यां
श्वभिरिति हलादौ विभक्तावास्ते। स एवाह यत्र तर्हीति । चार्थे तर्हिशब्दः । न केवलं

स्ति। शुनः पश्येति। एवं तर्हि न वयं लक्षणस्य प्रतिषेधं शिष्मः। किं तर्हि येन केन चिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्यायं प्रतिषेधः। यत्र तर्हि विभक्तिस्वरो नास्ति बहुशुनीति। यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत। नैवं शक्यम्। इहापि प्रसज्येत। कुमारीति। एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति। नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति। यदयं श्वन्शब्दं गौरादिषु पठति। अन्तोदात्तार्थं यत्नं करोति। सिद्धं हि स्यात् ङीपैव। मघोनः पश्य। मघोना। मघोने। संप्रसारणे कृते यस्येति लोपः प्राप्नोति। यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात्तस्य न भविष्यति। यस्यापि हि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः। कथम्। वक्ष्यत्येतत्। मघवन्शब्दो ऽव्युत्पन्नं प्रातिपदिकमिति। भूगुणः। भूयान्। भूभावे कृते ओर्गुणः प्राप्नोति। यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात्तस्य न भ-

---

शुना शुने इत्यत्र तृतीयादिस्वरे प्रतिसिद्धे ऽस्तुदात्तनिवृत्तिप्रसङ्गोऽपि तु यत्र तृतीयाद्यभावः शुनः पश्येति तत्राप्युदात्तनिवृत्तिस्वरप्रसङ्ग इत्यर्थः। नहि अत्रैतदपि शक्यते वक्तुं येन केन चिदपि लक्षणेन प्राप्तस्य तृतीयादिस्वरस्य प्रतिषेध इति। प्रत्याख्यानवाद्याह। एवं तर्हीति। न सावेकाच इत्यस्यैव लक्षणस्यायं निषेधः किं तर्हि विभक्तेः प्राप्तस्योदात्तमात्रस्येत्यर्थः। विभक्तिस्वरस्येति वचनाद्विभक्तिग्रहणानुवृत्तिरनेनाभ्युपगतेति। अत्रोपसंख्यानवाद्याह। यत्र तर्हीति। बहवः श्वानो यस्यामिति बहुव्रीहिः। तत्रोल्लोपवादिमतेनान उपधालोपिन इति ङीप्। बहोर्नञ्वदुत्तरपदभूम्नीत्यन्तोदात्तत्वादुदात्तनिवृत्तिस्वरप्रसङ्गः। प्रत्याख्यानवाद्याह। यदि पुनरिति। विभक्तिग्रहणं नानुवर्ततइति भावः। उपसंख्यानवाद्याह। नैवं शक्यमिति। प्रत्याख्यानवाद्याह। एवं तर्हीति। न गोश्वन्नित्यनेनानिषिध्यमानोप्युदात्तनिवृत्तिस्वरः शुनिज्ञापकान्नावतरतीत्यर्थः। एवं प्रत्याख्यानवादिना विशेषाभावः प्रतिपादितः। विद्यते तु विशेषः। अल्लोपे सत्युपधालोपित्वाद् ङीपा भाव्यं बहुशुनीति। तदभावे तु बहुश्वेति भवति। गौरादिङीषोप्यनुपसर्जनाधिकारादत्राप्रसङ्गः। सह तेनासिद्धमित्येतच्चान्ते स्थापयिष्यते। तत्र सुपर्वादिवद्बहुश्वेत्येव भाव्यम्। स्वरविशेषनिराकरणपरत्वात्तु ग्रन्थस्य नैतदत्र भाष्ये सुष्ठु निरूपितम्। डाबुभाभ्यामित्यत्र तु बहुश्वेत्येव भवितव्यमिति व्यवस्थापितम्। क्व चित्तु पाठः नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः। कस्य तर्हि। तृतीयादिस्वरस्य। एवं तर्हि येन केन चिप्राप्तस्य तृतीयादिस्वरस्य। यत्र तर्हि तृतीयादिर्नास्ति शुनः पश्येति। अत्र पाठे तर्हिशब्दस्यार्थौ व्याख्यातव्यो भिन्नकर्तृकत्वात्। यस्य पुनरिति। ननु च भूभावस्यासिद्धत्वा-

विष्यति । यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः । कथम् । दीर्घोच्चारणसामर्थ्यान्न भविष्यति । अस्त्यन्यद्दीर्घोच्चारणस्य प्रयोजनम् । किम् । भूमेति । निपातनादेतत्सिद्धम् । किं निपातनम् । बहोर्नञ्वदुत्तरपदभूम्नीति । अथ वा पुनरस्तु सह तेनेति । आभादिति चेद्वसुसंप्रसारणयलोपप्रस्थादीनां प्रतिषेधः * । आभादिति चेद्वसुसंप्रसारणयलोपप्रस्थादीनां प्रतिषेधो वक्तव्यः । पपुषः पश्य । तस्थुषः । निन्युषः । लुलुवुषः । युयुवुष इति । वसुसंप्रसारणे कृते तस्यासिद्धत्वादचीत्याकारलोपादीनि न सिध्यन्ति । नैष दोषः । उक्तमेतत् । समानाश्रयवचनात्सिद्धमिति । कथम् । वसावाकारलोपादीति वस्वन्तस्य विभक्तौ संप्रसारणमिति । यलोपः । सौरी बलाका । योसावण्यकारो लुप्यते तस्यासिद्धत्वात् इति यकारलोपो न प्राप्नोति । अत्राप्येष परिहारः । समानाश्रयवचनात्सिद्धमिति । कथम् । अणि अकारलोपः । अणन्तस्येतियलोपः । प्रस्थादिषु । प्रेयान् । स्थेयान् । प्रस्थादीनामसिद्धत्वात् प्रकृत्यैकाजिति प्रकृतिभावो न प्राप्नोति । नैष दोषः । यथैव प्रस्थादीनामसिद्धत्वात् प्रकृतिभावो न प्राप्नोति । एवं टिलोपोपि न भविष्यति ॥

---

दबहुशब्द एवायमिति स्यादेव गुणः । नैष दोषः । गुणे कर्तव्ये भूभावस्यासिद्धत्वात् पूर्वं गुणे कृते भूभावः । न च गुणभूभावयोश्चक्रकापत्तिर्दोषश्चक्रके इष्टतो व्यवस्थाश्रयणात् । भूमेति । भलाभावादत्र गुणाभावः । निपातनादिति । इस्वान्तेप्यादेशे क्रियमाणे भूमेत्यत्र निपातनाद्दीर्घो भविष्यतीत्यर्थः । आभादिति चेदिति । प्राग्भादित्यस्य पक्षस्य प्रतिपक्षभावेनोपादीयमानादभिविधावाकारो बोद्धव्यः । पपुष इत्यादीनां परिहृतानामपि पुनरुपादानमस्मिन् पक्षे दोषः प्रागुद्भावित इति प्रदर्शनार्थम् । सौरीति सूर्येणैकदिगित्यण् । यस्येति लोपस्ततो ङीप् पुनर्यस्येति लोपः । तत्रद्वयोरल्लोपयोरसिद्धत्वाद्यकार उपधा न भवतीति यलोपाप्रसङ्गः । ननु च प्राग्भादसिद्धत्वे लोपद्वयस्य सिद्धत्वादुपधायकारो न भवतीति लोपस्याप्रसङ्ग एव । स्थानिवद्भावेपि यलोपविधौ प्रतिषिद्धः भूतपूर्वगत्योपधाश्रयणाददोषः । वचनसामर्थ्याद्वा पूर्वं यलोपः पश्चादकारलोप इति क्रम आश्रयिष्यते नित्यत्वेप्यकारलोपस्य । टिलोपोपीति । नन्वादेशलक्षणः प्राकृतिभावोसिद्धत्वान्न भवतीति वक्तुं युक्तम् । टिलोपः पुनरुत्सर्गलक्षणः प्राप्नोति । नैष दोषः । आदेशेन निरवकाशत्वात् प्रवृत्तेन स्थानिनो निवर्तितत्वा-

श्नान्नलोपः ॥ २३ ॥ अथ किमर्थं श्नमः शकारस्य ग्रहणं क्रियते नान्नलोप इत्येवोच्येत। नान्नलोप इतीयत्युच्यमाने नन्दिता नन्दक इत्यत्रापि प्रसज्येत। एवं तर्हि एवं वक्ष्यामि नान्नलोपोनिदिताम्। ततो हल उपधायाः क्ङितीति। अनिदितामिति। नैवं शक्यम्। इह हि न स्यात् हिनस्ति। तस्मान्नैवं शक्यम्। न चेदेवं नन्दिता नन्दक इत्यत्रापि प्रसज्येत। एवं तर्हि क्ङितीति वर्तते। एवमपि हिनस्तीत्यत्र न प्राप्नोति। नैषा परसप्तमी। का तर्हि। सत्सप्तमी क्ङिति सति। एवमपि नन्दमान इत्यत्रापि प्राप्नोति। एवं तर्हि नशब्द एवात्र क्ङित्त्वेन विशेष्यते क्ङिच्चेन्नशब्दो भवतीति। एवमपि यज्ञानां यत्नानामित्यत्र प्राप्नोति। दीर्घत्वमत्र बाधकं भविष्यति। इदमत्र संप्रधार्यं दीर्घत्वं क्रियतां नलोप इति। किमत्र कर्तव्यम्। परत्वान्नलोपः। तस्मात् शकारस्य ग्रहणं कर्त्तव्यम्। अथ

---

इसतः कुतष्टिलोपः। तत्र यद्यपि प्रादीनामसिद्धत्वात् प्राक् टिलोपः क्रियते तथाप्यादेशेषु कृतेषु तेषामसिद्धत्वान्न तल्लक्षणष्टिलोपो नाप्युत्सर्गलक्षणः। उत्सर्गेषु प्रागेव प्रवृत्तत्वात्। अनवकाशत्वाच्च प्रादीनां चक्रकदोषोपि नास्ति।

श्नान्नलोपः। किमर्थमिति। यथान्तरेण मकारनिर्देशं श्नादिति श्नमेव गृह्यते अन्यस्यासंभवात्तथापि विनापि शिन्निर्देशेन श्नमेव ग्राहिष्यते इति भावः। नन्दितेति। इदित्त्वमस्य किमर्थं स्यादिति चेद् उपदेशावस्थायां नुमि सत्यप्रत्ययादित्यकारार्थं तथा ननन्दतुरित्यादौ कृतेऽपि नलोपे तस्यासिद्धत्वादेत्वाभ्यासलोपाप्रवृत्त्यर्थं स्यात्। क्ङिति सतीति। श्नमेव ङिदस्ति इति हिनस्तीत्यादौ नलोपः सिद्धः। कथं पुनः संभवत्यां परसप्तम्यां सत्सप्तमी शक्या विज्ञातुम्। यथेष्टं वाक्यशेषाध्याहाराददोषः। क्ङिति सतीत्येव हि विज्ञायमाने पौर्वापर्यानाश्रयणान्नास्ति तस्मिन्नितीत्यस्याः परिभाषाया उपस्थानम्। यदा त्वौपश्लेषिके ऽधिकरणे सप्तमी तदा किं पूर्वस्य कार्यमथ परस्येति अनियमप्रसङ्गे नियमाय परिभाषोपस्थानम्। नन्दमान इति। ताच्छील्यादिषु चानशि कृते शपि च चानशि व्यवहितस्यापि ङितोभावान्नलोपप्रसङ्गः। क्व चिन्नन्द्यमान इति पाठः। तत्र यगाश्रयो नलोपप्रसङ्गः। अर्थवत्परिभाषा तु विकरणानामानर्थक्यान्नोपन्यस्ता। नशब्द एवेति। अर्थवशाद्विभक्तिविपरिणामो भवतीति सप्तमीपरित्यागेन पञ्चम्याश्रयणात्। प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय इत्यत्र परिहारः संभवति। यज्ञानामिति। पूर्वत्रासिद्धमिति सुत्वस्यासिद्धत्वान्नशब्दादुत्तरो नकारः। परत्वान्नलोप इति। अन्नोना-

क्रियमाणेऽपि शकारग्रहणे इह कस्मान्न भवति विश्नानां प्रश्नानामिति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं न भविष्यति॥

अनिदितां हल उपधायाः क्ङिति॥ २४॥ अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम्*। अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानं कर्त्तव्यम्। विलगितः विकपितः। उपतापशरीरविकारयोरिति किमर्थम्। विलङ्गितः। विकम्पितः। बृंहेरच्यनिटि*। बृंहेरच्यनिटि उपसंख्यानं कर्तव्यम्। निबर्हयति। निबर्हकः। अचीति किमर्थम्। निबृंह्यते। अनिटीति किमर्थम्। निबृंहिता। निबृंहितुम्। तत्तर्हि उपसंख्यानं कर्त्तव्यम्। न कर्त्तव्यम्। बृहिः प्रकृत्यन्तरम्। कथं ज्ञायते। अचीति लोप उच्यते अनजादावपि दृश्यते। निबृह्यते। अनिटीत्युच्यते। इडादावपि दृश्यते। निबर्हिता। निबर्हितुम्। अजादावपि न दृश्यते। निबृंहकः। रञ्जेर्णौ मृगरमणे*। रञ्जेर्णौ मृगरमणे उपसंख्यानं कर्त्तव्यम्। रजयति मृगान्। मृगरमणइति किमर्थम्। रञ्जयति वस्त्राणि। घिनुणि च*। घिनुणि चोपसंख्यानं कर्तव्यम्। रागी। घिनुणि निपातनात्सिद्धम्*। किं निपातनम्। त्यजरजेति। अशक्यं धातुनिर्देशे निपातनत्वमा-

---

मित्यादौ नामीति दीर्घत्वं सावकाशं नलोपो हिनस्तीत्यादौ सावकाशो यज्ञानामित्यादावुभयप्रसङ्गे परत्वान्नलोपप्रसङ्गः। यत्तु सुपि चेति दीर्घत्वं तत्सन्निपातलक्षणपरिभाषाबलान्न भवति। लक्षणप्रतिपदोक्तयोरिति। लाक्षणिकस्यानुमेयरूपत्वादितरस्य तु प्रत्यक्षत्वात्। यदा तु विकरणानामपि स्वार्थेनार्थवत्ताश्रीयते तदार्थवद्ग्रहणपरिभाषया विश्नानां प्रश्नानामिति नलोपव्यावृत्तिसिद्धिः।

अनिदितां हल। विलगितइति। गत्यर्थत्वात्कर्त्तरि क्तः। कृच्छ्रप्राप्तिरत्रोपतापो गृह्यते न तु रोगी इत्योपतापगर्ह्यादिति यथा। अन्यथा शरीरविकारग्रहणं कैवलं कुर्यात्। विकपित इति। गत्यर्थाकर्मकेति गत्यर्थत्वात्कर्त्तरि क्तः। शरीरविकारोऽत्र व्याधिरुच्यते। न तु स्थौल्यादिः कम्पेरतद्विषयत्वात्। बृंहेरिति। बृहि वृद्धावित्यस्य। बृहिः प्रकृत्यन्तरमिति। बृहबृहिबृद्धाविति पाठात्। अजादावपि न दृश्यतइति। ततश्च दोषायैवोपसंख्यानं स्याद् न धातुलोपइति गुणनिषेधनिवारणाय यत्नश्च कर्त्तव्यः स्यादित्यनारम्भणीयमेवोपसंख्यानम्। रजयतीति। नलोपे वृद्धौ च जनी-

श्रयितुम् । इह हि दोषः स्यात् । दशनहः करणे । दंष्ट्रा । नैतद्धातुनिपातनम् । किं तर्हि प्रत्ययान्तस्यैतद्रूपम् । तस्मिंश्च प्रत्यये लोपो भवति । दंशसञ्जस्वञ्जां शपीति । रजकरजनरजःसूपसंख्यानम् * । रजकरजनरजःसूपसंख्यानं कर्त्तव्यम् । रजकः । रजनं । रज इति । रजकरजनरजःसु कित्वात्सिद्धम् * । कित एवैते औणादिकाः । लद्यथा । रजकः । भुवनं शिर इति ॥

शास इदङ्हलोः ॥ ३४ ॥ शास इत्वे आशासः क्वावुपसंख्यानम् * । शास इत्वे आशासः क्वावुपसंख्यानं कर्त्तव्यम् । आशीरिति । किं पुनरिदं नियमार्थम् । आहोस्विद्विध्यर्थम् । कथं नियमार्थं स्यात्कथं वा विध्यर्थम् । यदि तावच्छासिमात्रस्य ग्रहणं ततो नियमार्थम् । अथ हि यस्माच्छासेरङ्विहितस्तस्य ग्रहणं ततो विध्यर्थम् । यद्यपि शासिमात्रग्रहणमेवमपि विध्यर्थमेव । कथम् । अङ्हलोरित्युच्यते । न चात्र हलादिं पश्यामः । ननु च क्विबेव हलादिः । क्वि-

---

नृष् कसुरञ्जोमन्तास्येतिमित्वाद् ह्रस्वः । प्रत्ययान्तस्येति । शबन्तस्येत्यर्थः । यङ्लुङ्निवृत्त्यर्थस्य तत्रशब्निर्देशः । घिनुण् तु ताच्छील्येविधीयते रूढिशब्दप्रकाराश्च ताच्छीलिका इति यङ् लुगन्ताद्रञ्जेर्न भवति । औणादिका इति । रजक इत्यत्र क्वन्शिल्पिसंज्ञयोरिति क्वुन्प्रत्ययः । रजकीति पुंयोगादाख्यायामिति ङीष् । अपुंयोगे तु ङीषा न भाव्यमितिभाष्यकाराभिप्रायः । रजनमित्यत्र रञ्जेः क्युन्प्रत्ययः । स च बाहुलकात् टित् द्रष्टव्यः । तेन रजनीति ङीष् भवति । रज इत्यत्र भूरञ्जिभ्यां किदित्यसुन् प्रत्ययः किद्भवति।

शास इदङ्हलोः । शासिमात्रस्येति । शासु अनुशिष्टावित्यस्य आङः शासु इच्छायामित्यस्य चेत्यर्थः । नियमार्थमिति । क्वावेव शास इत्वं यथा स्यादाशास्त इत्यादौ माभूदित्यर्थः । यस्माच्छासेरिति । शासु अनुशिष्टावित्यस्मादङ्विहितः सर्तिशास्त्यर्तिभ्यश्चेत्यत्र परस्मैपदाधिकारात्तत्राङः संसर्गाद्विशिष्टस्य शासो ग्रहणं संसर्गस्य विशिष्टस्मृतिहेतुत्वात् । यथा सकिशोरा धेनुरानीयतां सवत्सा सकरभेति विशिष्टा धेनुः प्रतीयते । यद्येवं, शासिमात्रग्रहणं कथमाशङ्कितम् । अथ हलोप्युपादानात्तस्य च शासिमात्रेण संबन्धसंभवादित्युच्यते । तन्न । साधारणासाधारणसन्निपातेति असाधारणसंबन्धिग्रहणं दृश्यते । यथा वृद्धानां किशोरीणां च मध्ये धेनवो बध्यन्तामित्युक्ते वडवा एव बध्यन्ते न तु गवादयः । एवं तर्ह्येकशेषाद्व्याश्रयणाच्छासिमात्रग्रहणपक्षसंभवः । यद्यपीति । आचार्यदेशीयस्येदं वचनम् । विध्यर्थे चाशास्त इत्यादावित्वमनिवारितं स्यात् । आर्यशीरित्य-

पो लोपे कृते हलाद्यभावान्न प्राप्नोति । इदमिह संप्रधार्यम् । क्विपो लोपः क्रियतामङ्हलोरित्वमिति । किमत्र कर्त्तव्यम् । परत्वादङ्हलोरित्वम् । नित्यः क्विब्लोपः। कृतेप्यङ्लोरित्वे प्राप्नोत्यकृतेपि। नित्यत्वात् क्विपो लोपे कृते हलाद्यभावान्न प्राप्नोति । एवं तर्हि प्रत्ययलक्षणेन भविष्यति । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । यदि वा कानि चिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति तथा चेदमपि भविष्यति । अथवैवं वक्ष्यामि । शास इदङ्हलोः । ततः क्वौ । क्वौ च शास इद्भवति । आर्यशीः । मित्रशीः । तत आङः । आङ्पूर्वाच्च क्वौ शास इद्भवति । आशीरिति । इदमिदानीं किमर्थम् । नियमार्थम्। आङ्पूर्वाच्छासेः क्वावेव । क्व मा भूत् । आशास्ते आशास्यते आशास्यमानइति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अविशेषेण शासइद्भवतीत्युक्त्वा ततोऽङीति वक्ष्यामि । तन्नियमार्थं भविष्यति । अङ्येवाजादौ नान्यस्मिन्नजादौ । इहापि तर्हि नियमादित्वं प्राप्नोति । आशास्त आशास्यते । आशास्यमानइति । यस्माच्छासेरङ्विहितस्तस्य ग्रहणम् । न चैतस्माच्छासेरङ्विहितः । कथमाशीरिति । निपातनात्सिद्धम् । किं निपातनम् । क्षियाशीः प्रैषेषु तिङाकाङ्क्षमिति

---

त्र च न प्राप्नोति । यदि वेति । यथैवेत्यर्थः । तथा चेति । तथैवेत्यर्थः । यत्र कार्ये वर्णरूपमेव निमित्तत्वेनोपादीयते तत्प्रत्ययलक्षणेन न भवति यथा रायः कुलं रैकुलमित्यायादेशः । यत्तु वर्णविशिष्टप्रत्ययनिमित्तं तद्भवत्येव । यथा ऽदृणेडिति हलादौ पिति सार्वधातुके विधानात् प्रत्ययनिमित्तत्वादिमागमः । इत्वमपि हलादौ प्रत्यये क्ङिति विधीयमानं प्रत्ययनिमित्तत्वात् प्रत्ययलोपेपि भवति । अथ वेति । वर्णाश्रयत्वात्प्रत्ययलक्षणेन प्राप्तमित्वं क्वावित्यनेन विधीयते । अविशेषेणेति । प्रत्ययमात्रे क्ङितीत्यर्थः । अङ्येवाजादाविति । तेन शासति शशासुरित्यादावित्वाभावः । हलादौ क्ङिति क्वौ च नियमाभावादित्वं भवत्येव । तुल्यजातीयापेक्षत्वान्नियमस्याजादिरेव व्यावर्त्यते । इहापीति । शासिमात्रस्य ग्रहणं मत्वा चोदयति । यस्माच्छासेरिति । वाक्यान्तरे ऽपि श्रुतः संसर्गो विशेषावगतिहेतुर्भवति । यथा धेनवो मुच्यन्तां किशोरा बध्यन्तामिति वडवा एव प्रतीयन्ते । निपातनादिति यथान्यासे तु पूर्वोक्तेन न्यायेन प्रत्ययलक्षणसद्भावादार्यशीरित्यत्रेत्वं भवति । आशीरित्यत्र तु निपातनादेव ।

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ३७ ॥ अनुदात्तोपदेशे ऽनुनासिकलोपो ल्यपि च * । अनुदात्तोपदेशेनुनासिकलोपो ल्यपि चेति वक्तव्यम् । प्रमत्य । प्रतत्य । ततो वामः * । वा अम इति वक्तव्यम् । प्रगत्य प्रगम्य । प्रयत्य । प्रयम्य । प्ररत्य । प्ररम्य । प्रणत्य । प्रणम्य ॥

गमः क्वौ ॥ ४० ॥ गमादीनामिति वक्तव्यम् । इहापि यथा स्यात् । परीतत्सह कुण्डिकया । संयत् । सुनदिति । ऊङ् च * । ऊङ् च गमादीनामिति वक्तव्यम् । लोपश्च । अग्रेगूः । अग्रेभूः ॥

जनसनखनां सन्झलोः ॥ ४२ ॥ अथ किमर्थं समुच्चयः सनि च झलादौ चेति आहोस्वित् सन्विशेषणं झल्ग्रहणं सनि झलादाविति । किं चातः । यदि समुच्चयः । सन्यझलादावपि प्राप्नोति । सिसनिषति । जिजनिषते । चिखनिषति । अथ सन्विशेषणं झल्ग्रहणम् । जातः जातवानित्यत्र न प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावत्समुच्चयः । ननु चोक्तं सन्यझलादावपि प्राप्नोति । नैष दोषः । प्रकृतं झल्ग्रहणमनुवर्तते तेन सनं विशेषयिष्यामः सनि झलादाविति । अथ वा पुनरस्तु सन्विशेषणम् । कथं जातो जातवानिति । प्रकृतं झलि क्ङितीत्यनुवर्तते । यद्येवं नार्थो झल्ग्रहणेन । योगविभागः करिष्यते । जनसनखनामनुनासिकस्याकारो भवति

---

अनुदात्तो । वाल्यपीति सूत्रन्यासे ऽविशेषेण विकल्पः प्राप्नोतीति वार्त्तिकारम्भः । तेनामन्तानां गमियमिरमिनमीनां ल्यपि विकल्पोन्येषां तु अनुदात्तोपदेशवनतितनोत्यादीनां नित्यं लोपः ॥

गमः क्वौ । परीतदिति । तनोतेः क्विपि नलोपे कृते तुकि नहिवृतीति पूर्वपदस्य दीर्घः । संयदिति । यमेः क्विप् । ऊङ् चेति । अनुनासिकलोपो ऽकारस्योङ् च विनापि ङित्त्वेनान्त्यस्य सिध्यत्यूकार इति नार्थो ङिद्ग्रहणेन । अग्रेगूरिति । ओः सुपीति यणादेशो धातुत्वान्नवत्यग्रे ग्वाविति । भूरिति । अचिश्नुधातुभ्रुवामित्यत्र भ्रूग्रहणं न कर्तव्यं धातुत्वादुवङः सिद्धत्वात् ॥

जन । अथ किमयमिति । यदि द्वन्द्वनिर्देशस्ततः समुच्चयः । अथ सौत्रनिर्देशस्ततो विशेषणविशेष्यभाव इति पक्षद्वयसंभवः। सिसनिषतीति। सनीवन्तर्धेति पक्षे इडागमः।

झलि क्ङितिं । ततः सनि च । सनि च जनसनखनामनुनासिक-
स्याकारो भवति झलीत्येव । तस्मान्नार्थो झल्ग्रहणेन । सनोतेरनु-
नासिकलोपादात्वं विप्रतिषेधेन * । सनोतेरनुनासिकलोपादात्वं
भवति विप्रतिषेधेन । सनोतेरनुनासिकलोपस्यावकाशः अन्ये तनो-
त्यादयः । आत्वस्यावकाशः । अन्ये जनादयः । सनोतेरनुनासिक-
स्योभयं प्राप्नोति सातः सातवानिति । अत्वं भवति विप्रतिषेधेन ।
नैष युक्तो विप्रतिषेधः । नहि सनोतेरनुनासिकलोपस्यान्ये तनोत्या-
दयोवकाशः । सनोतेर्यस्तनोत्यादिषु पाठः सोनवकाशः । न खल्व-
प्यात्वस्यान्ये जनादयोवकाशः । सनोतेर्यदात्वे ग्रहणं तदनवकाशम् ।
तस्यानवकाशत्वादयुक्तो विप्रतिषेधः । एवं तर्हि तनोत्यादिषु पाठः
सावकाशः । कोवकाशः । अन्यानि तनोत्यादिकार्याणि । तनादि-
भ्यस्तथासोरिति । आत्वेपि ग्रहणं सावकाशम् । कोवकाशः । सनि
च । ये विभाषा च । उभयोः सावकाशयोयुक्तो विप्रतिषेधः । एव-
मप्ययुक्तो विप्रतिषेधः । पठिष्यति ह्याचार्यः पूर्वत्रासिद्धे नास्ति वि-
प्रतिषेधोऽभावादुत्तरस्येति । एकस्य हि नामाभावेपि विप्रतिषेधो न
स्यात् । किंपुनर्यत्रोभयं नास्ति । नैष दोषः । भवति इह विप्रतिषे-
धः । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । आचार्यप्र-
वृत्तिर्ज्ञापयति भवतीह विप्रतिषेध इति । यदयं घुमास्थागापाजहा-
तिसां हलीति हल्ग्रहणं करोति । कथं कृत्वा ज्ञापकम् । हल्ग्रहण-

---

ततः सनि चेति । अक्ङिदर्थमेतत् । जन्तुरित्यादावात्वाप्रसङ्गार्था हि पूर्वत्र क्ङिद्ग्र-
हणानुवृत्तिः । सनोतेरनुनासिकलोपस्येति । सनोतेरनुनासिकलोपः प्राप्नोति तनोत्यादि-
त्वात्तस्यान्ये तनोत्यादयोवकाशा इत्यर्थः । सनोतेस्तु तनोत्यादिषु पाठः तनादिकृञ्भ्य-
उस्तथासोरित्येवमर्थः । अन्ये जनादय इति । समुदायस्य कार्यं विधीयमानमवयवानां
प्रवर्तते तत्र कस्य चिदवयवस्य कृतं समुदायस्य कृतं भवतीति भावः । जनादय इति ब-
हुवचननिर्देशः प्रयोगभेदादारोपितबहुत्वजनखनापेक्षः । आत्वं भवतीति । सातः सात-
वानित्यादौ । सन्ग्रहणं तु सनोत्यर्थमेव सिषासतीति । जनखनाभ्यां तु सनः सुट्त्वाद्
झलादित्वाभावः । भवतीह विप्रतिषेध इति । विप्रतिषेधेन व्यवस्थायां क्रियमाणायाम-
सिद्धत्वं न भवतीत्यर्थः । गोद इत्यादावसति हल्ग्रहणे परत्वादीत्वं स्यादिति हल्ग्र-
हणं क्रियते । असति हि विप्रतिषेधे द्वयोः परस्परस्मिन्नसिद्धत्वात् कृते पोत्वं आल्लोपेन

स्यैतत्प्रयोजनं हलादावीत्वं यथा स्यात्। इह मा भूत् गोदः कम्बलद इति। यदि चात्र विप्रतिषेधो न स्यादिह हल्ग्रहणमनर्थकं स्यात्। असत्यच ईत्वम्। ईत्वस्यासिद्धत्वाल्लोपोभविष्यति। पश्यति त्वाचार्यो भवतीह विप्रतिषेधः। ततो हल्ग्रहणं करोति। नैतदस्ति ज्ञापकम्। व्यवस्थार्थमेतत्स्यात्। हलादावीत्वं यथा स्यादजादौ मा भूदिति। किं च स्यात्। यद्यजादावपीत्वं स्याद् इयङादेशः प्रसज्येत। ननु चासिद्धत्वादेवेयङादेशो न भविष्यति। न शक्यमीत्वमियङादेशे ऽसिद्धं विज्ञातुम्। इह हि दोषः स्यात्। धियौ धियः पियौ पिय इति। नैतदीत्वम्। किं तर्हि ध्याप्योः संप्रसारणमेतत्। समानाश्रयं खल्वप्यसिद्धं भवति। व्याश्रयं चैतत्। कथम्। क्वावीत्वम्। क्विबन्तस्य विभक्तावियङादेशः। व्यवस्थार्थमेव तर्हि हल्ग्रहणं कर्त्तव्यम्। कुतो ह्येतत्। ईत्वस्यासिद्धत्वाल्लोपः। न पुनर्लोपस्यासिद्धत्वादीत्वमिति। लोपे तु चक्रकमव्यवस्था प्रसज्येत। नास्ति चक्रकप्रसङ्गः। नह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम्। शास्त्रतो नाम व्यवस्था। तत्र ईत्वस्यासिद्धत्वाल्लोपः। लोपेनावस्थानं भविष्यति। न खल्वपि तस्मिंस्तदेवासिद्धं भवति। व्यवस्थार्थमेव तर्हि

---

गोदादेः सिद्धत्वादनर्थकं हल्ग्रहणं स्यात्। नैतदस्तीति। हल्ग्रहणस्य ज्ञापकत्वं विघटयति। असत्यपि विप्रतिषेधे गोद इत्यादि न सिध्यति कृते ईत्वे इयङादेशप्रसङ्गादिति तन्निवारणार्थं हल्ग्रहणं न ज्ञापकमित्यर्थः। ज्ञापकवादी चाह। ननु चासिद्धत्वादिति। ज्ञापकभङ्गवाद्याह। न शक्यमिति। धियाविति। दधातेः पिबतेश्च क्विपि लुप्तेऽपि प्रत्ययलक्षणेनेत्वं भवति। तस्यासिद्धत्वे आश्रीयमाणे इयङ् प्राप्नोतीतीयङि अवश्याश्रयितव्यमीत्वस्य सिद्धत्वमित्यर्थः। ज्ञापकवाद्याह। नैतदीत्वमिति। अभ्युपगम्यापीत्वमाह। समानाश्रयमिति। धियावित्यादावीत्वं व्याश्रयं गोद इत्यादौ तु समानाश्रयत्वादियङ्यसिद्धमेवेति ज्ञापकमेव हल्ग्रहणं स्थितम्। पुनर्ज्ञापकभङ्गवाद्याह। व्यवस्थार्थमिति। ज्ञापकवाद्याह। नास्ति चक्रकप्रसङ्ग इति। द्वयोरपि शास्त्रयोः प्रवृत्तौ सत्यां पुनः प्रवृत्तिकारणाभावादित्यर्थः। लोपेनावस्थानमिति। अथ विपरीतक्रमः कस्मान्न भवति पूर्वमाल्लोपस्तस्यासिद्धत्वादीत्वमिति। उच्यते। अस्मिन्नपि क्रमे ईत्वस्यासिद्धत्वात् पुनराल्लोपो भविष्यति लक्ष्यसंस्कारार्थत्वाच्छास्त्रप्रवृत्तेः। न खल्वपीति। आल्लोपे कर्त्तव्ये ईत्वस्यासिद्धत्वं न त्वीत्वे कर्त्तव्ये। अस्मिन्निदमसिद्धमिति भेदेनिबन्धनत्वाद्विष-

हल्ग्रहणं कर्त्तव्यम् । हलादावीत्वं यथा स्याद् अजादौ मा भूदिति । कुतो ह्येतत् । ईत्वस्यासिद्धत्वाल्लोपः लोपेनावस्थानं भविष्यति । न पुनर्लोपस्यासिद्धत्वादीत्वमीत्वेनाव्यवस्थानं स्यात् । तदेव खल्वपि तस्मिन्न सिद्धं भवति । कथम् । पठिष्यति ह्याचार्यः । चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात् तलोपस्य चासिद्धत्वादिति । चिणोलुक् चिणो लुक्येवासिद्धो भवति । एवं तर्हि यदि व्यवस्थार्थमेतत्स्यात् । नैवायं हल्ग्रहणं कुर्यात् । अविशेषेणायमीत्वमुक्त्वातस्याजादौ त्वाल्लोपमपवादं विदधीत । तदेतत्कथम् । इदमस्ति । आतो लोप इटि चेति । ततः । घुमास्थागापाजहातिसां लोपो भवति । इटि च अजादौ क्ङितीति । किमर्थं पुनरिदम् । ईत्वं वक्ष्यामि तद्बाधनार्थम् । तत ईत् । ईच्च भवति घ्वादीनाम् । तत एर्लिङि । वान्यस्य संयोगादेः । न ल्यपि । मयतेरिदन्यतरस्याम् । ततः । यति । यति च ईद्भवति । सोयमेवं लघीयसा न्यासेन सिद्धे सति यत्हल्ग्रहणं करोति गरीयांसं यत्नमारभते तज्ज्ञापयत्या चार्यो भवतीह विप्रतिषेध इति ॥

सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥ इहान्यतरस्यांग्रहणं शक्यमकर्तुम् । कथम् । सनः क्तिचि लोपश्च आत्वं च विभाषेति । अपर आह । सर्व एवायं योगः शक्योवक्तुम् । कथम् । इह लोपोपि प्रकृतः । आत्वमपि प्रकृतम् । विभाषाग्रहणमपि प्रकृतम् । त-

---

यविषयिभावस्य । ततश्चाल्लोपो भविष्यति न पुनः पुनरीत्वमिति ज्ञापकमेव हल्ग्रहणमित्यर्थः । पुनर्ज्ञापकभङ्गवाद्याह । व्यवस्थार्थमिति । नहि शास्त्रचक्षुरन्तरेण वचनमिदमिष्टमिदमनिष्टमिति मन्यते । तदेवेति । व्यक्तिपदार्थपक्षे प्रतिलक्ष्यं लक्षणभेदाद्विषयविषयिविभागोपपत्तावीत्वशास्त्रमीत्वशास्त्रे एवासिद्धमिति पुनः पुनरीत्वप्रवर्त्तनाद्पि चक्रकप्रसङ्ग इत्यर्थः । ज्ञापकवाद्याह । एवं तर्हीति । ईच्च भवतीति । अत्र क्ङितीत्यपेक्ष्यते ॥

सनः क्तिचि । इह रूपत्रयं साध्यं सातिः सतिः सन्तिरिति । तच्च सनः क्तिचि लोपश्चेत्येतावति सूत्रे ये विभाषेत्यतो विभाषाग्रहणानुवृत्तौ सिध्यतीति मत्वाह । इहेति । सर्व एवायमिति । सनः क्तिचीत्येव लोपस्य प्रकरणात्सिद्धत्वात् लोपश्चेत्यपि न

च केवलमभिसंबन्धमात्रं कर्त्तव्यम्। सनः क्तिचि लोपश्च आत्वं च विभाषेति॥

आर्द्धधातुके॥ ४४॥ कानि पुनरार्द्धधातुकाधिकारस्यप्रयोजनानि। अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम्। आल्लोप ईत्वमेत्वं च चिण्वद्भावश्च सीयुटि॥ १॥ अतो लोपः चिकीर्षिता चिकीर्षितुम्। आर्द्धधातुकइति किमर्थम्। चिकीर्षति। नैतदस्ति प्रयोजनम्। अस्त्वत्र सनोकारलोपः। शपो ऽकारस्य श्रवणं भविष्यति। शप एव तर्हि मा भूदिति। एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति। नानेन शबकारलोपो भवतीति। यदयमदिप्रभृतिभ्यः शपो लुकं शास्ति। नैतदस्ति ज्ञापकम्। कार्यार्थमेतत्स्यात्। विक्तो मृष्ट इति। यत्तर्हि आकारान्तेभ्यो लुकं शास्ति। याति।

---

वक्तव्यमित्यर्थः। बहूनां पदानां प्रत्याख्यानाच्च सर्व एवायं योग इत्युच्यते।

आर्द्धधातुके। अथ द्वितीयाध्यायविहिता आर्द्धधातुकनिमित्ता आदेशा इहैव कस्मान्नोक्ता एवं हि द्विरार्द्धधातुकग्रहणं न कर्तव्यं भवति। नैवं शक्यम्। आभाच्छास्त्रीये कार्ये कर्तव्ये तेषामसिद्धत्वप्रसङ्गात्। ततश्चाख्यादेशस्य भुवो वुग् न स्यादनादेशस्यैव तु स्यात्। तथा चख्यतुरित्यादौ ख्याञोसिद्धत्वादाल्लोपाप्रसङ्गः। कानि पुनरिति। कानि चिदन्यथापि सिध्यन्तीति प्रश्नः। चिकीर्षतीति। अकारोच्चारणं तु सनः प्रतीषिषतीत्यादौ द्विर्वचनार्थं स्यात्। शप एव तर्हीति। शब्विधानं तु प्रत्ययलक्षणेन गुणाद्यर्थं स्यात्। अतो दीर्घो यञीति अस्य सर्वत्राकारलोपे कोवकाश इति चेत्। वचनादतो लोपं बाधित्वा पचाव इत्यादौ प्रवर्तेत तत्र च कृतार्थमदुपदेशाल्लसार्वधातुकमनुदात्तत्वमज्ञापकं सार्वधातुके अतोलोपाभावस्य कार्यार्थमेव तत्स्यादिति। प्रत्ययलक्षणप्रतिषेधार्थमित्यर्थः। यत्तर्हीति। यदि शपोतोलोपः स्याद् यावाप्रभृतय आकारान्ता भूवादिष्वेव पठेरन् न त्वदादिषु। लुग्लोपयोस्तत्र विशेषाभावात्। ननु शिंशपा चोद्यमिदं पाठस्यावश्यकर्त्तव्यत्वात्। नैष दोषः। विशेषकार्यार्थत्वाद्विशिष्टगणपाठस्य। न तु यातीब्राह्मणी यान्तीब्राह्मणीत्यादौ शप्श्यनोर्नित्यमिति प्रत्ययलक्षणेन नित्यो नुम् माभूदित्येवमर्थं लुग्विधानं स्यात्। नैतदस्ति। लुमता लुप्ते यदङ्गं तस्य कार्ये प्रत्ययलक्षणप्रतिषेधो न च नुमागमस्तस्याङ्गस्य कार्यमिति लुक्यपि क्रियमाणे प्रत्ययलक्षणप्रसङ्गः। सर्वत्र च शपोतोलोपे विज्ञायमाने शप्श्यनोर्नित्यमित्यत्र प्रत्ययलक्षणं भूतपूर्वविज्ञानं वाश्रयणीयमिति नास्त्येव लुग्लोपयोर्विशेष इति ज्ञापक एवाकारान्तानाम-

वाति । अस्तेश्च । अस्तेश्च शपो लुकं शास्ति । अस्ति । इदं तर्हि प्रयोजनम् । वृत्तस्य । अतो लोपः प्राप्नोति । यलोपोपि प्रयोजनम् । बेभिदिता । चेच्छिदिता । आर्द्धधातुकइति किमर्थम् । बेभिद्यते । चेच्छिद्यते । णिलोपः प्रयोजनम् । पाच्यते । याज्यते । कारणा । हारणा । आर्द्धधातुकइति किमर्थम् । पाचयति याजयति कारयति हारयति । आल्लोपः पपतुः पपुः ववतुः ववुः आर्द्धधातुक इति किमर्थम् । यान्ति वान्ति । ईत्वम् । धीयते । दीयते । आर्द्धधातुकइति किम् । अदाताम् । अधाताम् । एत्वं ग्लेयात् । म्लेयात् । आर्द्धधातुकइति किमर्थम् । स्नामात् । स्नायाताम् । चिण्वद्भावश्च सीयुटि । चिण्वद्भावे सीयुटि किमुदाहरणम् । कारिषीष्ट हारिषीष्ट । आर्द्धधातुकइति किम् । क्रियेत । ह्रियेत । नैतदुदाहरणम् । यका व्यवहितत्वान्न भविष्यति । इदं तर्ह्युदाहरणम् । प्रस्तुवीत । इदं चाप्युदाहरणम् । क्रियेत । ह्रियेत । ननु चोक्तं यका व्यवहितत्वान्न भविष्यतीति । यक एव तर्हि मा भूदिति । किं च स्यात् । वृद्धिः, वृ-

---

न्येषां चागुणवृद्धिभाजामदहनास्नादीनामदादिषु पाठः सार्वधातुके अतोलोपाभावस्य । कथं तर्हि यातो कुले इत्यादौ प्रत्ययलक्षणेन नुम् न भवति । शपाकारस्य विशेषणात् । शपो योकारस्तदन्तादङ्गादुत्तरस्य शतुर्नुम् भवतीति । न च शपि लुप्ते शपोकारः संभवति । वृत्तस्येति । प्रागेव च स्यादतो लोपः । भूतपूर्वगत्या तु स्यादेशः । ननु परत्वात् स्यादेशो भविष्यति इति तन्न कृते सन्निपातपरिभाषयातोल्लोपो न भविष्यति । उच्यते । पाकष्टायेति निर्देशेनानित्यत्वज्ञापनादनुपस्थानादस्याः परिभाषाया स्यादेवाल्लोपः । पाचयतीति । णिज्विधानं तु प्रत्ययलक्षणार्थं स्यादिडाद्यर्थं च पाचयितेति । यान्तीति । ननु आभ्यस्तयोरेवातः सार्वधातुकेनान्यस्येति एवं नियमादत्र न भविष्यति । विपरीतोपि नियमः किं न स्यात् सार्वधातुके एव आभ्यस्तयोरिति । ययतुरित्यादौ न स्यात् आग्रहणमुत्तरार्थं स्यात् । अदातामिति । लुङ् ताम् गातिस्थेति सिचो लुक् । प्रस्तुवीतेति । कर्मकर्तरीदमुदाहरणम् । तत्र यकः प्रतिषेधात् । कर्मणि तु प्रस्तूयेतेति भाष्यम् । ननु चिणोपि प्रतिषेधात्कथं चिण्वद्भावः । एवं तर्हि भावकर्मणोश्चिण्दर्शनादत्र चिण्वद्भावप्रसङ्ग इत्याशयः । असमाधानस्योदाहरणान्तरमाह । इदं चापीति । येभ्यो धातुभ्यः कर्मकर्तरि चिण् प्रतिषिध्यते तेषां चिण्वद्भावस्यापि निषेधः । वृद्धिरिति । एतच्च यथोपाधित्याद्यनपेक्ष्योक्तम् । अत्र हि चिण्वद्भावादतो लोपोपि प्राप्तो वृद्धिश्च । यावादिभ्यो

द्धौ कृतायां युक् प्रसज्येत ॥

भ्रस्जोरोपधयोरमन्यतरस्याम् ॥ ४७ ॥ अयं रम् रेफस्य स्थाने कस्मान्न भवति। मिदचोन्त्यात्पर इत्यनेनाचामन्त्यात्परः क्रियते। रेफस्य तर्हि श्रवणं कस्मान्न भवति। षष्ठ्युच्चारणसामर्थ्यात्। भारद्वाजीयाः पठन्ति। भ्रस्जोरोपधयोर्लोप आगमो रम् विधीयत इति। भ्रस्जादेशात् संप्रसारणं विप्रतिषेधेन *। भ्रस्जादेशात्संप्रसारणं विप्रतिषेधेन भवति। भ्रस्जादेशस्यावकाशः। भर्ष्टा भर्ष्टुम्। संप्रसारणस्यावकाशः। भृज्जति। इहोभयं प्राप्नोति। भृष्टः भृष्टवानिति। संप्रसारणं भवति पूर्वविप्रतिषेधेन। स तर्हि पूर्वविप्रतिषेधो वक्तव्यः। न वक्तव्यः। रसोर्वैर्वचनात्सिद्धम्। रसोर्वा ऋ भवतीति वक्ष्यामि। रसोर्वैर्वचने सिचिवृद्धे भ्रस्जादेशः*। रसोर्वैर्वचने सिचि वृद्धे भ्रस्जादेशो वक्तव्यः। वृद्धौ कृतायामिदमेव रूपं स्यात्। अ-

---

पि शपो लुग्विधानेन सार्वधातुके अतो लोपाभावोपि ज्ञापित इति स्वाश्रयोऽतोलोपो मा भूत्। चिणृद्धावाश्विपि तस्य दर्शनात् स्यादेव भाष्यकारेण तु प्राप्तिमात्रं वृद्धेराश्रित्योक्तम्। अथ वा दोषोऽशलक्षणं वृद्धिरतोलोपेपि रूपासिद्धिप्रसङ्गात्। वृद्धौ कृतायामाद्गुणस्य प्राप्नोति युकच। तत्र वार्णादाङ्गं बलीय इति युक्प्रसङ्गः। इट्प्रसङ्गस्तु विशेषाभावान्नोक्तः॥

भ्रस्जोरी। आदेशान्तराणां स्थानितुल्यदेशानां दर्शनात् पृच्छति। अयं रमिति। रेफग्रहणस्योपलक्षणार्थत्वादुपधाय। अपीति बोद्धव्यम्। रेफस्य तर्हीति। स्थानान्तरेप्रवृत्तेन रमाऽनिवर्तितत्वात्। षष्ठ्युच्चारणसामर्थ्यादिति। रोपधयोरिति स्थानषष्ठ्यातयोरन्नविषये ऽप्रयोगः प्रतिपाद्यते। रोपधयोः प्रसङ्गे रम् प्रयुज्यते रोपधे न प्रयुज्येते इत्यर्थः रम्प्रयुज्यमानो मित्त्वादचोन्त्यात्परो भवतीति वाक्यार्थः संपद्यते। यस्य तु देशान्तरे नास्ति विधानं स स्थानिदेश एव भवति। तत्प्रसङ्गे तस्य विधानाद्विशिष्टदेशस्य स्थानिनः प्रसङ्ग इति तद्देशेनैवादेशेन भाव्यम्। भारद्वाजीया इति। तेहि सनः क्तिचिलोप इत्यतो लोपग्रहणमनुवर्त्य रोपधयोर्लोपे रमागमं चान्यतरस्यां विदधति। भृज्जतीति। आर्द्धधातुकाधिकारादत्र रमोप्रसङ्गः। रसोरिति। साच्कस्य रेफस्य सकारस्य च ऋशब्दो वा आदेशः। तत्रकृते क्ङिति गुणः प्रवर्तते भर्ष्टेति। ऋकाराभावपक्षे तु भ्रष्टेति। क्ङिति तु ऋशब्दे भृष्टमिति भवति। तदभावपक्षेपि संप्रसारणे सति भृष्टमिति नार्थः पूर्वविप्रतिषेधेनेति। इतरोत्रापि पूर्वविप्रतिषेधो वक्तव्य इति तुल्यतां प्रतिपादयन्नाह। रसोरिति। भ्रस्जेः सिचि ऋभावं विकल्पितं बाधित्वा परत्वान्नित्यं हलन्तलक्षणा

भाक्षीत् । इदं न स्यात् । अभाक्षीत् इति । सर्वथा वयं पूर्वविप्रतिषेधान्न मुच्यामहे । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं भ्रस्जादेशात्संप्रसारणं पूर्वविप्रतिषेधेनेति । इदमिह संप्रधार्यम् । भ्रस्जादेशः क्रियतां संप्रसारणमिति । किमत्र कर्त्तव्यम् । परत्वात् भ्रस्जादेशः । नित्यत्वात्संप्रसारणम् । कृतेपि भ्रस्जादेशे प्राप्नोत्यकृतेपि । भ्रस्जादेशोपि नित्यः । कृतेपि संप्रसारणे प्राप्नोति अकृतेपि । कथम् । यो सावृकारे रेफस्तस्य चोपधायाश्च कृतेपि प्राप्नोति । अनित्यो भ्रस्जादेशः । नहि कृते संप्रसारणे प्राप्नोति । किं कारणम् । नहि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते । अथापि कथं चिद् गृह्यन्ते । एवमप्यनित्यः । कथम् । उपदेशइति वर्तते । तच्चावश्यमुपदेशग्रहणमनुवर्त्यं बरीभृज्ज्यतइत्येवमर्थम् ॥

अतो लोपः ॥ ४८ ॥ णिलोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धम् * । णिलोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन भवतः । णिलोपस्यावकाशः । कार्यते हार्यते । इयङादेशस्यावकाशः । श्रियौ श्रियः । इहोभयं प्राप्नोति । आटिटत् । आशिशत् ।

---

वृद्धिः प्राप्नोतीति ऋभावार्थः पूर्वविप्रतिषेधो वक्तव्य एव । तेन रूपद्वयं सिध्यति अभ्राक्षीदभार्क्षीदिति । ननु ऋभावो नित्यः कृतायामपि वृद्धावेकदेशविकृतस्यानन्यत्वात् प्रसङ्गात् । वृद्धिस्तुशब्दान्तरस्य प्रसङ्गादनित्या । अजाकृतेरेकत्वान्नास्ति वृद्धेः शब्दान्तरस्य प्राप्तयानित्यत्वमिति द्वयोर्नित्ययोः परत्वाद्वृद्धिप्रसङ्गः । अन्तरङ्ग ऋ भाव इति चेति । न सिद्ध्यन्तरङ्गमस्तीति ज्ञापयिष्यते । रम्भावे तु क्रियमाणे परत्वाद्वृद्धौ कृतायां पुनः प्रसङ्गविज्ञानाद् रमि सति सिद्धमभार्क्षीदिति । योसावृकारे रेफ इति । ननु च ऋकारावयवस्य रेफस्य रम् क्रियमाणः कथमन्त्यादचः परः स्यात् । मा भूदन्त्यादचः परः । तत्र विषये आदेशो भविष्यति । मित्वन्तु भर्ष्टेत्यादौ सावकाशम् । उपदेश इति वर्ततइति । भ्रस्जेरुपदेशे यो रेफस्तत्स्थाने रम् भवति । न च ऋकारावयव उपदेशे भ्रस्जेरेफो भवति । बरीभृज्ज्यत इति । तन्मध्यपतितस्तद्ग्रहणे न गृह्यत इति रीकोरेफो भ्रस्जेर्भवतीति रम्प्रसङ्गः । भ्रस्जेरुपदेशे तु नासौ रेफ इति रमभावः । अनन्त्यविकारे इत्येतत्तु प्रयोजनाभावान्नाश्रितम् ॥

अतो लोपः । यणादेशेनेति । एरनेकाच इत्यनेन । ततश्च यणां बाधनादियङः सं-

ननु चात्र यणादेशेन भवितव्यम्। इदं तर्हि। अततक्षत्। अररक्षत्। यणादेशस्यावकाशः। निन्यतुः निन्युः। णिलोपस्य स एव। इहोभयं प्राप्नोति। आटिटत्। आशिशत्। वृद्धेरवकाशः। सखायौ। सखायः। णिलोपस्यावकाशः स एव। इहोभयं प्राप्नोति। कारयतेः कारकः हारयतेः हारकः। गुणस्यावकाशः। चेता। स्तोता। णिलोपस्यावकाशः। आटिटत्। आशिशत्। इहोभयं प्राप्नोति। कारणा हारणा। दीर्घत्वस्यावकाशः। धीयते। स्तूयते। णिलोपस्य स एव। इहोभयं प्राप्नोति। कार्यते। हार्यते। णिलोपो भवति विप्रतिषेधे न। स तर्हि पूर्वविप्रतिषेधो वक्तव्यः। न वक्तव्यः। सन्वः। चैतेविधयःएतेषु विधिषु कृतेषु स्थानिवद्भावाण्णिग्रहणाल्लोपो भविष्यति। नैवं शक्यम्। इयङादेशे हि दोषः स्यात्। किम्। अन्त्यलोपः प्रसज्येत। अल्लोपस्येयङ्यणोश्च नास्ति संप्रधारणा। वृद्धेरवकाशः। प्रियमाचष्टे। प्रापयति। अल्लोपस्यावकाशः चिकीर्षिता। चिकीर्षितुम्। इहोभयं प्राप्नोति। चिकीर्षको जिहीर्षकः। गुणस्याल्लोपस्य च नास्ति संप्रधारणा। दीर्घत्वस्यावकाशः। अपि काकः श्येनायते। अल्लोपस्य स एव। इहोभयं प्राप्नोति। चिकीर्ष्यते जिहीर्ष्यते। अल्लोपो भवति विप्रतिषेधेन। स तर्हि विप्रतिषेधो वक्तव्यः। न वक्तव्यः। इष्टवाची परशब्दः। विप्रतिषेधे यत्परमिष्टं तद्भवति॥

यस्य हलः॥ ४९॥ किमिदं यलोपे वर्णग्रहणमाहोस्वित्संघात-

---

प्रधारणगोचरत्वाभावः। सखाया वति। सख्युरसम्बुद्धाविति शास्त्रातिदेशपक्षे वृद्धेरयमवकाशो न तु कार्यातिदेशपक्षे इत्यवसेयम्। णिलोपस्यावकाश आटिटद् इति। यणो णिलोपेन बाधितत्वादिति भावः। कारणेति। ननु चाऽत्रापि इयङोपवाद एरनेकाच इति यण् प्राप्नोति परत्वात्तस्य गुणेन बाधनात् गुणस्यापि पूर्वविप्रतिषेधाण्णिलोपेनेत्यदोषः। एकैकेन सह णिलोपस्य विचारादियङादीनामन्यतमविषयेपि णिलोपस्यावकाश उपन्यस्यते। सन्वच्चैत इति। ननु कारणाकारक इत्यत्र गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयाऽऽयोः कृतयोरन्त्यस्य णिलोपः प्राप्नोति वार्णादाङ्गं बलीय इत्यययायौ बाधित्वा णिलोपो भविष्यतीत्यदोषः। प्रापयतीति। प्रियस्य प्रादेशे वृद्धौ च पुगागमः। अनार्धधातुकत्वाच्च धातोरविधानादतोलोपस्यात्राप्रसङ्गः॥

यस्यहलः। किमिदमिति। यद्यागन्तुनाकारेण निर्देशस्ततो वर्णमात्रग्रहणमन्यथा

ग्रहणम् । कस्माच्च विशेषः । यलोपे वर्णग्रहणं चेद्वाल्वन्तस्य प्रतिषेधो वक्तव्यः । शुच्यिता । मव्यिता । अस्तु तर्हि संघातग्रहणम् । यदि संघातग्रहणमन्त्यस्य लोपः प्राप्नोति । सिद्धोऽन्त्यस्य पूर्वेणैव । तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति । एवमपि तेनातिप्रसक्तमिति कृत्वा नियमो विज्ञास्यते यस्य हल एव नान्यतः । क्व मा भूत् । लोलूयिता । योयूयिता । कैमर्थक्यान्नियमो भवति । विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् । अन्त्यस्य लोपः प्राप्तः सर्वस्य विधेयः । तत्रापूर्वो विधिरस्तु नियमो वेति । अपूर्व एव विधिर्भविष्यति न नियमः । एवमप्यन्त्यस्य प्राप्नोति । किं कारणम् । नहि लोपः सर्वापहारी । ननु च संघातग्रहणसामर्थ्यात्सर्वस्य भविष्यति । संघातग्रहणं चेत् क्यस्य विभाषायां दोषः *। संघातग्रहणं चेत् क्यस्य विभाषायां दोषो भवति । समिधिता । समिध्यिता । यदा लोपस्तदा

---

तु संघातग्रहणमिति पक्षद्वयसंभवः । अन्त्यस्येति । अलोऽन्त्यस्येति वचनात् । कैमर्थक्यादिति । कोऽर्थो यस्य तत्किमर्थकं तस्यभावः कैमर्थक्यम् । प्रश्नविषययोः संबन्धोत्र भावप्रत्ययवाच्यः । अपूर्व एव विधिरिति । नियमे हि श्रुतार्थत्यागेनाश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्च प्राप्नोति । एवमप्यन्त्यस्येति । अलोऽन्त्यपरिभाषोपस्थानादपूर्वस्य विधेरसंभवाद्विधिनियमसंभवे च विधिरेव ज्यायानिति अस्य न्यायस्यायमविषय इत्यर्थः । संघातग्रहणसामर्थ्यादिति । किं यस्य हल इत्यस्य विधिरूपत्वं बाध्यतामुतालोऽन्त्यस्येति परिभाषेति । पारार्थ्यादप्रधानायाः परिभाषायाः परित्यागो युक्तो न तु प्रधानस्य विधिरूपत्वबाधनम् । समिधितेति । समिधमिच्छत्यात्मन इति क्यच् । ततस्तृच् इट् । इह वर्णग्रहणे क्यस्य विभाषेत्यत्र क्यंन यकारो विशेष्यते क्यस्य यो यकारो हलः परस्तस्य विभाषा लोपो भवत्यकारस्य त्वतो लोपं इति नित्यो लोप इति यथेष्टं रूपद्वयं सिध्यति । संघातग्रहणे तु यस्य हल इत्यनेन येननाप्राप्तिन्यायेनातोलोपो बाध्यो यलोपोपि क्यस्य विभाषेति विकल्पेन न बाध्यस्ततश्च पक्षे संघातस्यैव श्रवणं प्राप्नोति । नित्ययलोपवदल्लोपस्यापि विकल्पेन बाधनात् एतच्च नधातुलोप इत्यस्य प्रत्याख्यानाय यस्येति योगविभागो व्याख्यातस्तमनाश्रित्योक्तम् । तदाश्रयेऽल्लोपस्य सिद्धत्वात् । क्यस्येति कखादियकोपि ग्रहणं केचिदिच्छन्ति । कितो यशब्दस्य ग्रहणे तात्पर्यात् ककारस्यानुबन्धस्यादित्वमविवक्षितमिति वदन्तः । एतदपरे नेच्छन्ति । आदिभूतककारानुबन्धनिर्देशे सत्यादित्वाविवक्षायां प्रमा-

सर्वस्य लोपः। यदा ऽलोपस्तदा सर्वस्यालोपः प्राप्नोति। आदेः परवचनात्सिद्धम्। हल इति पञ्चमी तस्मादित्युत्तरस्यादेः परस्येति यकारस्यैव भविष्यति। अथ वा पुनरस्तु वर्णग्रहणम्। ननु चोक्तं यलोपे वर्णग्रहणं चेत् धात्वन्तस्य प्रतिषेध इति। नैष दोषः। अङ्गादिति हि वर्त्तते। न वै अङ्गादिति पञ्चम्यस्ति। एवं तर्ह्यङ्गस्येति सम्बन्धषष्ठी विज्ञास्यते। अङ्गस्य यो यकारः। किं चाङ्गस्य यकारः। यस्मिन्नङ्गमित्येतद्भवति। कस्मिंश्चैतद्भवति। प्रत्यये॥

णेरनिटि॥ ५१॥ अनिटीति किमर्थम्। कारयिता। कारयितुम्। अनिटीति शक्यमवक्तुम्। कस्मान्न भवति कारयिता कारयितुम्। निष्ठायां सेटीत्येतन्नियमार्थं भविष्यति। निष्ठायामेव सेटि णेर्लोपो भवति नान्यत्रेति। क्व मा भूत्। कारयिता कारयितुम्। अथ वा उपरिष्टाद्योगविभागः करिष्यते। इदमस्ति। निष्ठायां सेटि जनितामन्त्रे शमिता यज्ञे। ततः अय्। अयादेशो भवति णेः सेटि। ततः आमन्ताल्वाय्येत्निष्णुषु। अय् भवतीत्येव॥

निष्ठायां सेटि॥ ५२॥ अथ सेड्ग्रहणं किमर्थम्। निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थम् *। निष्ठायां सेड्ग्रहणं क्रियते अनिटीति प्रतिषेधो यथा स्यादिति। संज्ञपितः पशुरिति। निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेत्तत्सिद्धम् *। निष्ठायां

---

णाभावाल्लक्ष्यस्य च तथा शिष्टैरप्रदर्शनात्। आदेरिति। ततश्च क्यस्य विभाषेति यकारस्यैव लोपेविकल्पेनाकारस्य तु नित्यमिति सिद्धमिष्टम्। अङ्गादिति वर्ततइति। अङ्गस्येति निमित्तनिमित्तिभावसंबन्धाश्रयणे पञ्चम्यर्थलाभात् फलाभेदात्पञ्चमीनिर्देशः कृतः। इतरो यथोक्तमभिप्रायमप्रतिपद्याह। नवै अङ्गादिति। संबन्धषष्ठीति। अनेकसंबन्धसंभवेप्यन्तरङ्गत्वान्निमित्तनिमित्तिभावलक्षणसंबन्धः परिगृह्यते। प्रत्ययइति। प्रत्ययहेतुकत्वादङ्गव्यपदेशस्य। ननु च समुदायः प्रत्ययोङ्गस्य निमित्तं न तु यकारमात्रमाकारे लुप्ते यकारमात्रस्य प्रत्ययत्वाददोषः॥

णेरनिटि। निष्ठायामेव सेटीति। सेट्येव निष्ठायामिति नियमो न भवति अनिटो निष्ठाया अभावात्। अयादेशो भवतीति। लोपापवाद इत्यर्थः॥

निष्ठायाम्। संज्ञपित इति। सनीवन्तर्धेति सनि विकल्पविधानाद्यस्यविभाषेतीट्प्रतिषेधः। सेड्ग्रहणसामर्थ्यात् च पूर्वेणापि न भवति। वादान्तशान्तेत्यत्र ज्ञपेर्निपात-

सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेदन्तरेणापि सेड्ग्रहणं तत्सिद्धम्। कथम्। अनिडभावात्। ननु च यस्यविभाषेति ज्ञपेरिट्प्रतिषेधः। एकाचो हि प्रतिषेधः *। एकाचो हि स प्रतिषेधः। ज्ञपिश्चानेकाच्। इड्भावार्थं तु तन्निमित्तत्वाल्लोपस्य। इड्भावार्थं तर्हि सेड्ग्रहणं क्रियते। कथं पुनः सेटीत्यनेनेट्शक्यो भावयितुम्। तन्निमित्तत्वाल्लोपस्य। नात्र कृते इटि णिलोपेन भवितव्यम्। किं कारणम्। सेटीत्युच्यते। अवचने हि णिलोपइट्प्रतिषेधप्रसङ्गः। अक्रियमाणे हि सेड्ग्रहणे णिलोपेकृते एकाच इतीट्प्रतिषेधः प्रसज्येत। कारितं हारितम्। एवं तर्हि नार्थः सेड्ग्रहणेन नापि सूत्रेण। कथम्। सप्तमे योगविभागः करिष्यते। इदमस्ति। निष्ठायां नेड् भवति। ततः। णेः। ण्यन्तस्य निष्ठायां नेड् भवति। कारितम्। हारितम्। ततो वृत्तम्। वृत्तमिति च निपात्यते। किं निपात्यते। णेर्निष्ठायां लोपो निपात्यते। किं प्रयोजनम्। नियमार्थम्। अत्रैव निष्ठायां णिर्लोपो भवति नान्यत्र। क्व मा भूत्। कारितम्। हारितम्। इहापि तर्हि प्राप्नोति। वर्तितमन्नं वर्तिता भिक्षेति। ततः। अध्ययने अध्ययने चेद् वृतिर्वर्तते। वृधिरमिशृधीनामुपसंख्यानं सार्वधातुकत्वात् *। वृधिरमिशृधीनामुपसंख्यानं कर्त्तव्यम्। किं कारणम्। सार्वधातुकत्वात्। वर्द्धन्तु त्वा सुष्टुतयो गिरो मे। वर्द्धयन्त्विति प्रा-

---

नमाश्रीयते ज्ञप्तो ज्ञपित इति। एकाचो हीति। यस्यविभाषेत्यत्र एकाजित्यधिकारात्। इड्भावार्थं त्विति। इटि कृते णिलोपो यथा स्यादकृते मा भूदिति कालावधारणार्थं सेड्ग्रहणमित्यर्थः। अक्रियमाणे सेड्ग्रहणे कारित इति स्थिते णिलोपश्च प्राप्नोति इट् च। नित्यत्वाण्णिलोपः प्राप्नोति। तत्र कृते एकाजितीट्प्रतिषेधः प्राप्नोति। एकदेशविकृतस्यानन्यत्वात्स एव करोतिर्भवतीति। यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमित्येतच्च कार्यगतभावाभावापेक्षायां नाश्रीयतइत्यनित्य एवेडागमः। इटि तु णिलोपे क्रियमाणे न प्रवर्त्तते इट्प्रतिषेधः निर्वृत्तस्य प्रतिषेद्धुमशक्यत्वात्। एतच्च प्रयोजनं पूर्वस्मादपि विधौ स्थानिवत्त्वमित्यनाश्रित्योक्तम्। सप्तमे योगविभागइति। णेरध्ययने वृत्तमिति योग विभज्य योगत्रयं क्रियते क्रमविपर्ययश्चाश्रीयते। णेरित्येको योगः। तत्र निष्ठायां नेटीति वर्त्तते। ततो वृत्तमिति द्वितीयो योगो णिलोपनियमार्थो गुणप्रतिषेधार्थश्चानेकप्रयोजनत्वान्निपातनानाम्। अथ वा वृत्तमित्येकशेषाश्रयणादेकस्य नि-

दते। बृहस्पतिष्ट्वा सुम्नेरम्णातु। रमयत्विति प्राप्ते। अग्नेशर्धमहते सौभगाय। शर्द्धयेति प्राप्ते। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। वृधि-रमिगृधोनामार्द्धधातुकत्वात्सिद्धम्। कथमार्द्धधातुकत्वम्। अन्येपि हि धातुप्रत्ययाः उभयथा छन्दसि दृश्यन्ते॥

अयामन्ताल्वाय्येत्न्विष्णुषु॥ ५५॥ किं पुनरयं क्नुः। आहो स्वि-दितुः। कश्चात्र विशेषः। क्नाविटि णेर्गुणवचनम्*। क्नौ स-ति इटि णेर्गुणो वक्तव्यः। गदयित्नुः स्तनयित्नुः। अस्तु तर्हि इत्नुः। इत्नौ प्रत्ययान्तरकरणम्*। यदि इत्नुः प्रत्ययान्तरं कर्त्तव्यम्। अ-यादेशे चोपसंख्यानम्*। अयादेशे चोपसंख्यानं कर्त्तव्यम्। उभ-यं क्रियते न्यासे एव॥

ल्यपि लघुपूर्वात्॥ ५६॥ ल्यपि लघुपूर्वस्येति चेद् व्यञ्जनान्ते-षूपसंख्यानम्*। ल्यपिलघुपूर्वस्येति चेद् व्यञ्जनान्तेषूपसंख्यानं कर्त्त-व्यम्। प्रशमय्य गतः। प्रतमय्य गतः। अल्लोपे गुरुपूर्वात्प्रतिषेधो व-

---

यमार्थत्वमपरस्य गुणनिषेधार्थत्वं भविष्यति। ततोध्ययनइति तृतीयो योगो हन्तशब्द-स्यार्थविशेषनियमार्थः। रम्णात्विति। व्यत्ययेन श्नाप्रत्ययः।

अया। किं पुनरिति। यद्यपि क्नावयामन्ताल्वाय्येत्विष्णुषु इति निर्देशानुपपत्तिः। तथापि युक्ता युक्तत्वापेक्षया विचारः कः प्रत्यय आश्रयितुं युक्तः को न युक्त इति। अथ वा किं कृतेडागमः क्नुरिह निर्दिष्टो ऽथ प्रत्यय एवेत्नुरिति विचारः। क्नावि-टीति। स्तनिहृषीत्यत्र यदि क्नुर्विधीयते तदा तस्येटि कृते अनिटीति वचनाण्णिलोपो नास्ति। किं तर्हि क्त्वात्तु गुणप्रतिषेधे प्राप्ते गुणो विधेयः। इत्नाविति। स्तनिहृ-षीत्यत्र इत्नुर्विधेयः। क्षहनिभ्यां क्नुर्विधेयः। यदा तु स्तनादिभ्यः क्नुर्विधीयते स एवोत्तरत्रानुवर्तते तदा प्रत्ययान्तरं न विधेयम्। स्वरेपि भेदो नास्ति उभयथा म-ध्योदात्तत्वात्। अयादेशे चेति। णिलोपस्य प्रसङ्गादुपसंख्यानशब्देनात्र सूत्रे पाठ उच्यते नत्वपूर्वं वचनम्। भाष्यकारो गुरुलाघवमनादृत्य यथान्यासंसमर्थयितुमाह। उभयमिति। यद्यत्र क्नुग्रहणमयादेशार्थं क्रियते स्तन्यादिभ्यश्च क्नुर्विधीयते तदा स्यादेव लाघवम्।

ल्यपि लघु। केचिदाचार्येण ल्यपि लघुपूर्वस्येति षष्ठ्यन्तमध्यापिताः। अन्ये तु लघुपूर्वादिति पञ्चम्यन्तम्। तत्र षष्ठीमाश्रित्याह। ल्यपीति। प्रशमय्येति। शमेर्णिचि इद्वौ मितां ह्रस्वश्च योः पर्वं व्यञ्जनंलघ्विति अयादेशो न प्राप्नोति। न चात्र व्यवहि-

क्तव्यः । प्रतिचिकीर्ष्य गतः । ल्यपिलघुपूर्वादिति वचनात् सिद्धम् *। ल्यपि लघुपूर्वादिति वक्तव्यम् । एवमपि ह्रस्वयलोपाल्लोपानामसिद्धत्वात् ल्यपिलघुपूर्वादित्ययादेशो न प्राप्नोति । प्रशमय्य गतः । प्रतमय्य गतः प्रचेच्छिदय्य गतः ।प्रबेभिदय्य गतः । प्रगदय्य गतः । प्रस्तनय्य गतः । ह्रस्वादिषु चोक्तम् * । किमुक्तम् । समानाश्रयवचनात् सिद्धम् । कथम् । णाविति विधयः । णेर्ल्यप्ययादेशः ॥

विभाषापः ॥ ५७ ॥ ईङादेशस्य प्रतिषेधो वक्तव्यः । अध्याप्यगतः । आपः सानुबन्धकनिर्देशादिङि सिद्धम् *। आपः सानुबन्धकनिर्देशः करिष्यते आप् लृ इति तेन ईङादेशस्य न भविष्यति । स तर्हि सानुबन्धकनिर्देशः कर्त्तव्यः । न कर्तव्यः । कथमध्याप्य गतः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति ।

इति श्रीपतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम् ॥

---

तेपि पूर्वशब्दो वर्ततेइति शक्यमाश्रयितुम् । चकास्त्दरिद्रादीनामपिण्यन्तानामयादेशप्रसङ्गात् प्रचकास्य गत इति । नचाव्यवहिते संभवति व्यवहितपूर्वमाश्रयितुं शक्यम् । ततश्च प्रगणय्यप्रस्तनय्येत्यादावेव स्यादत्र ह्यल्लोपस्यासिद्धत्वाद् लघुपूर्वो णिर्भवति ।अथापि व्याश्रयत्वादल्लोपस्यासिद्धत्वं न स्यात् । एवमपि भूतपूर्वगत्या लघुपूर्वाश्रयोऽयादेशः स्यात् । अल्लोपेचेति। अल्लोपे कृते यो गुरुपूर्वः तस्मात्परस्य णेर्भूतपूर्वां लघुपूर्वतामाश्रित्यायादेशः प्राप्नोति । लघुपूर्वादिति वचनादिति।लघुपूर्वादिति पञ्चम्यन्तं पठितव्यमित्यर्थः। लघुः पूर्वो यस्मादिति लघुपूर्वःतस्मात्परस्यणेरयादेशः। एवमपीति । क्व तर्हि स्यात् ।मृदमाचष्ट इति णिच प्रकृत्यैकाजिति प्रकृतिभावाट्टिलोपप्रतिषेधःप्रमृदय्यगत इत्यादौ स्यात्।

विभाषापः । अध्याप्येति । क्रीङ्जीनां णावित्यात्वमर्तिह्रीत्यादिना पुगागमः । सानुबन्धकनिर्देशादिति। आपुलिति पठितव्यमित्यर्थः । आप्लृशब्दात्पञ्चम्येकवचने ऋत्लृकारयोः सवर्णविधिरिति ऋत उदित्युत्वम् । उरण्रपर इत्यत्र प्रत्याहारग्रहणात्परत्वम् । भाष्यकारस्त्वसंदेहार्थमविभक्तिकमाश्रित्याह । आप्लृ इति । लक्षणप्रतिपदोक्तयोरिति । लाक्षणिकस्यानुमेयरूपत्वाद्विलम्बप्रतीतिगोचरत्वात् प्रतिपदोक्तस्य तु प्रत्यक्षत्वादविलम्बितप्रतीतिविषयत्वादाकृतौ च पदार्थे इयं परिभाषा न व्यक्तौ । तत्र हि सर्वस्यां व्यक्तौ लक्षणेन प्रवर्तितव्यम् । इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे षष्ठाध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम् ।

स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट्च ॥६२॥ कथमिदं विज्ञायते भावकर्मणोर्ये स्यादय इति। आहो स्विद्भावकर्मवाचिनि परतो ये स्यादय इति। किं चातः। यदि विज्ञायते भावकर्मणोर्ये स्यादय इति सीयुड्विशेषितः। स्यसिच्तासयो ऽविशेषिताः। अथ विज्ञायते भावकर्मवाचिनि परतो ये स्यादय इति स्यसिच्तासयो विशेषिताः। सीयुडविशेषितः। उभयथा च चिण्वद्भावो ऽविशेषितः। यथेच्छसि तथास्तु। अस्तु तर्हि भावकर्मणोर्ये स्यादय इति। ननु चोक्तं सीयुड् विशेषितः स्यसिच्तासयो ऽविशेषिता इति। स्यसिच्तासयश्च विशेषिताः। कथम्। भावकर्मणोर्यग्भवतीत्यत्र स्यादयोप्यनुवर्त्तिष्यन्ते। अथ वा पुनरस्तु भावकर्मवाचिनि परतो ये स्यादय इति। ननु चोक्तं स्यसिच्तासयो विशेषिताः सीयुडविशेषित इति। सीयुट् च विशेषितः। कथम्। भावकर्मवाचिनि परतः सीयुड् नास्तीति कृत्वा भावकर्मवाचिनि

---

स्यसिच् सीयुट्। कथमिति। किं भावकर्मणोरित्यभिधेयनिर्देशो भावकर्मणोर्वर्तन्ते ये स्यादय इति। अथ भावकर्माभिधायो प्रत्ययो भावकर्मभ्यामभिधीयते भावकर्मवाचिनि प्रत्यये परतो ये स्यादय इति। तत्राद्यपक्षे भावकर्मशब्दस्य मुख्यार्थं वृत्तित्वं द्वितीये गौणार्थता। युगपत्तु गौणमुख्यार्थवृत्तित्वासंभव इति प्रश्नः। इति विज्ञायतइति। यदि प्रसिद्ध्यनुरोधेन मुख्यार्थपरिग्रहः। सीयुड्विशेषित इति। आर्द्धधातुक इति वर्तते। न च सीयुट् आगममात्रस्यार्द्धधातुकसंज्ञास्तीति सामर्थ्यात्सीयुडाद्यार्द्धधातुकं गृह्यते। तस्य चसंभवति भावकर्माभिधायित्वमित्यर्थः।स्यसिच्तासय इति। भावकर्त्तृकर्मणां लादेशार्थत्वेन शास्त्रे व्यवस्थापितत्वाद् विकरणानामतदर्थत्वात्। अथेति। भूयसामनुग्रहाय यदि गौणार्थसंश्रयणमिति भावः। सीयुडविशेषित इति। तत्र सीयुटः प्रत्ययैकदेशत्वात्समुदायावयवयोः। पौर्वापर्याभावादागमे ह्युपजाते सागमकस्य प्रत्ययादयः संज्ञा अर्थाभिसंबन्धश्च न तदवयवस्येति सीयुटो भावकर्मवाचिप्रत्ययपरत्वासंभवः सत्यप्यवयवयोः पौर्वापर्ये। अतोनन्तरं क्वचित्पाठः। उभयथापि चिण्वद्भावो विशेषित इति। तत्र न दोषान्तरोपन्यासः। किं तर्हि पक्षद्वये दोषोपसंहारः। अन्यतरपक्षपरिग्रहे सर्वविषयाव्यापनादविशेषितश्चिण्वद्भाव इत्यर्थः। स्यादयोपीति। स्याद्यनुवृत्तेरिदमेव प्रयोजनं भावकर्मणो स्यादीनामप्यभिधेये यथा स्यातामिति। यथा च द्वन्द्वपदानि प्रत्येकं समुदायार्थवाचीनि तथा स्यादयो लादेशाश्च भावकर्मणो अभिदधतीति न कश्चिद्दोषः। भावकर्मवाचिनि सीयुटोति। तन्त्रादिन्यायाश्रयणादेकं भावकर्मग्रहणं भिन्नेन रूपेण

सीयुटि कार्यं विज्ञास्यते। अथ इट् चेत्युच्यते कस्यायमिड् भवति। अङ्गस्येति वर्त्तते। यद्येव, मङ्गस्यादित इट् प्राप्नोति। अडाड्वत्। तद्यथा। अडाटौ टित्त्वादादितो भवतः। एवं तर्हि स्यादीनां भविष्यति। एवमपि षष्ठ्यभावान्न प्राप्नोति। ननु च भावकर्मणोरित्येषा षष्ठी। नैषा षष्ठी। किं तर्हि। अर्थनिर्देश एषा सप्तमी। भावे चार्थे कर्मणि चेति। एवं तर्हि भावकर्मणोरित्येषा सप्तमी स्यादिष्विति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्येति। एवमपि न सिध्यति। किं कारणम्। नह्यर्थेन पौर्वापर्यमस्ति। अर्थेऽसंभवाद्भावकर्मवाचिनि शब्दे कार्यं विज्ञास्यते। एवमपि सीयुटो न प्राप्नोति। एवं तर्हि सप्तमे योगविभागः करिष्यते। आर्द्धधातुकस्येट्। यावानिण् नाम स सर्व आर्द्धधातुकस्य भवतीतिवि-

---

यथा संभवं स्यादिभिः संबध्यते। अथ वा विषयसप्तम्येषाश्रीयते। भावकर्मविषयेषु स्यादिषु चिण्वत्कार्यं भवतीति नास्ति दोषावकाशः। कस्यायमिति। स्यादीनामागमसंबन्धे षष्ठ्यनिर्देशात् प्रश्नः। स एवाह। अङ्गस्येति वर्ततइति। प्रकरणस्य नियोजकत्वं चेदाश्रीयते तदानिष्टप्रसङ्ग इत्यर्थः। अथ वा अङ्गस्येति वर्ततइति सिद्धान्तवादिवचनम्। अङ्गस्य निमित्तं यत्तस्येडागम इत्यर्थः। इतरस्त्वङ्गमेवानेनागमित्वेनोक्तमिति मत्वाह। यद्येवमिति। षष्ठ्यभावादिति। इच्छामात्रेण स्यादीनामागमित्वमलभ्यमित्यर्थः। ननु च भावकर्मणोरित्येषा षष्ठीति। षष्ठीनिमित्तत्वात् षष्ठीत्युच्यते। यथा नड्वलोदकं पादरोगः। इह भावकर्मवाचिनि परतो ये स्यादय इति शब्देन शब्दस्य पौर्वापर्यसंभवात्तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपतिष्ठत इत्यस्ति भावकर्मणोरित्यस्य षष्ठीप्रकृतौ निमित्तभावः। इतरस्तु भावकर्मणोरित्यभिधेयसप्तमीं मत्वाह। नैषा षष्ठीति। इतरस्तु स्वाभिप्रायं प्रकाशयितुमाह। एवं तर्हीति। भावकर्मवाची प्रत्यय उपचाराद् भावकर्मशब्दवाच्यः परत्वेन सप्तम्या प्रतिपादितइति सप्तमी स्यसिच्सीयुट्तासिष्विति सप्तम्याः कार्यातिदेशे चरितार्थायाः षष्ठीं प्रकल्पयति। चोदको यथोक्तमभिप्रायमप्रतिपद्याह। न सिध्यतीति। तत्र हि निः शब्दस्य प्रयोजनं शब्दे सप्तमीनिर्दिष्टे परिभाषोपस्थानं यथा स्यादर्थे मा भूत। शब्दस्य शब्दाद् बहिर्भूतोर्थ स्त्वबहिर्भूतः। निश्शब्दो बहिर्भाववाची। पूर्वोक्तेनाभिप्रायेणाह। अर्थेऽसंभवादिति। एवमपीति। नहि सीयुटो भावकर्मवाचिना प्रत्ययेन पौर्वापर्यमस्ति सीयुटस्तदवयवत्वात्। आर्द्धधातुकस्येडिति। परिभाषेयं क्रियते। यत्रेड् विधीयते तत्रार्द्धधातुकस्येत्युपतिष्ठते। तेन स्यादीनामिवास्त्यामपि

ज्ञ यम्। ततोबलादे:।ततो वलादेरार्द्धधातुकस्येड् भवतीति। यद्येवं, स्यसिच्सीयुट्तासिष्विड् भवति। चिण्वद्भावश्चाविशेषितो भवति।तत्र को दोष:।स्यसिच्सीयुट्तासिष्विड् भवति। अज्झनग्रहदृशां वा चिण्वदिति क्व चिदेव चिण्वद्भाव: स्यात् एवं तर्हि स्यादीनेवात्रापेक्षिष्यामहे। स्यसिच्सीयुट्तासिष्विड् भवति अज्झनग्रहदृशां वा चिण्वत्स्यादिष्विति। के पुनरिममिटं प्रयोजयन्ति। येऽनुदात्ता:। अथ ये उदात्तास्तेषां कथम्। सिद्धं तेनैव परत्वात्। उदात्तेभ्योपि अनेनैवेडेषितव्य:। किं प्रयोजनम्। कारयते: कारिष्यते। हारिष्यते। इटोसिद्धत्वात्तेरनिटीति णिलोपो यथा स्यात्। कथं पुनरिच्छता भवता उदात्तेभ्योनेनैवेड् लभ्य:। न पुनरनेनास्तु तेन वेति। तेनैव स्याद्विप्रतिषेधेन। नित्योयम्। कृतेपि तस्मिन् प्राप्नोत्यकृतेपि। न त्वस्मिन्कृते स प्राप्नोति। किं कारणम्। अवलादित्वात्। तस्मादनेने-

---

षष्ठीप्रकृ्त्याविड् भविष्यति। रुदादिभ्य: सार्वधातुक इत्यत्र विरोधादार्द्धधातुकस्येति नोपतिष्ठते। यद्येवमिति। स्यादीनामागमविधावुपयोगात् पुन: श्रुत्यभावादविशेषितश्चिण्वद्भाव:। आर्द्धधातुकग्रहणे ह्युपतिष्ठमाने तेन स्यादीनां विशेषणादागमसंबन्धयोग्यषष्ठ्युपादानादयमर्थ: स्यात्। अज्हन्ग्रहदृशां वाचिण्वद्भवति यत्र क्वचि, यत्रतु स्यादय: सन्ति तेषामिडिति। यथा कृतु: क्यङ् सलोपश्चेत्यत्रेति भाव:। स्यादीनेवेति। तेषामेव श्रुतत्वात्तत्परित्यागेनाश्रुतकल्पनाया अयुक्तत्वात् प्रत्ययापेक्षत्वादङ्गस्येति। सप्तमीनिर्देशसामर्थ्याद्वा चिण्वद्भावे पूर्वमुपयुक्तानां स्यादीनामार्द्धधातुकोपस्थानसामर्थ्यात्यस्यादिटा संबन्ध:।के पुनरिति। सर्वेभ्य इष्यते न च प्राप्नोतीति मत्वा प्रश्न:। सएव पराभिप्रायमाशङ्कते। ये अनुदात्ता अथ ये उदात्तास्तेषां कथं सिद्धं तेनैव परत्वादिति। किमेवं भवान्मन्यते इत्यर्थ:। तत: सिद्धान्तवाद्याह। उदात्तेभ्योपीति। अथ वा शिष्याचार्यदेशीययो: के पुनरित्यादिके प्रश्नप्रतिवचने परत्वादित्यन्ते आचार्य आह। उदात्तेभ्योपीति। उदात्तग्रहणं चोपलक्षणम्। ऋद्धनो: स्ये इत्यनुदात्तेभ्योपि इड्विधानात्तुल्यत्वान् न्यायस्य तेभ्योप्यनेनेड्विधि:। इटोसिद्धत्वादिति। ततश्चानिटीति प्रतिषेधाभावात् सिध्यति णिलोप:। अपि चेट्संनियोगेन विधीयमानश्चिण्वद्भावोपि भवति। अन्यथैतदभावे चिण्वद्भावो न स्यात् संनियोगशिष्टानामन्यतराभावे द्वितीयाभावात्। अन्वाचये तु विज्ञायमाने स्याच्चिण्वद्भाव:। यथा कर्तु: क्यङ् सलोपाभावेपि। नित्योयमिति। वलादित्वानपेक्षणात्। आकृतिपक्षे च शब्दान्तरप्राप्त्यापिनास्यानित्यत्वम्। कर्मार्थापेक्ष-

वेडेषितव्यः । कानि पुनरस्य योगस्य प्रयोजनानि । वृद्धिश्चिण्वद्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ॥ वृद्धिः प्रयोजनम् । चेष्यते चायिष्यते । युक् प्रयोजनम् । ग्लास्यते ग्लायिष्यते । हन्तेश्च घत्वं प्रयोजनम् । हनिष्यते घानिष्यते । दीर्घश्चोक्तो यो मितां वा चिणीति । स च प्रयोजनम् । शमिष्यते । शामिष्यते । तमिष्यते । तामिष्यते । इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ॥ इटोऽसिद्धत्वाण् णेरनिटीति णिलोपो यथा स्यात् । कथमयं नित्यः । कृताकृतप्रसङ्गित्वात् । कृताकृतप्रसङ्गी ह्ययम् । कृतेपि तस्मिन्निटि साप्तमिके आर्द्धधातुकस्येड्वलादेरिति पुनरनेनायं भवति । अस्मिंस्तु विहिते वलादित्वस्य निमित्तस्य विहतत्वात् साप्तमिको न भवति । निमित्तं विहतं भवति । अयं तस्य निमित्तं विहन्ति । तस्मादयं नित्यः । स त्वस्य निमित्तं न विहन्ति । अथोपदेशग्रहणं किमर्थम् । चिण्वद्भावउपदेशवचनमृकारगुणबलीयस्त्वात् * । चिण्वद्भावे उपदेशवचनं क्रियते ऋकारगुणस्य बलीयस्त्वात् । कारिष्यते । परत्वाद् गुणे रपरत्वे चानजन्तत्वात् चिण्वद्भावो न प्राप्नोति । उपदेशग्रहणाद्भवति । वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन * । वधिभावात्सीयुटि चिण्वद्भावो भवति विप्रतिषेधेन । वधिभावस्यावकाशः । वध्यात् । वध्यास्ताम् । वध्यासुः । चिण्वद्भावस्यावकाशः । घा-

---

णादस्य बहिरङ्गत्वमिति चेत्तस्यापि वलादित्वापेक्षत्वात्तत्रान्तरङ्गत्वमित्यदोषः । कानि पुनरिति । प्रकरणाद्व्यवस्थाश्रयणादाङ्गान्येव कार्याणि प्रयोजनान्यथाविशेषेणेति प्रश्नः । इतर आङ्गान्येवोदाहरति । वृद्धिरिति । विघातीति । अस्मिन्निटि सति वलादिलक्षणस्येटो वलादित्वाभावादप्रवृत्तिलक्षणो विघातस्तस्यानित्यत्वमित्यर्थः । अथ वा वल्निमित्त इडविघाती अस्येटोऽप्रतिबन्धक इत्यर्थः । ऋकारगुणस्येति । अन्येषां तु गुणोऽक्त्वं न विहन्तीति नित्यत्वाच्चिण्वद्भावः सिध्यति । चायिष्यते लाविषयत इति भावः । परत्वादिति । द्वयोरप्यनित्यत्वात् । वधिभावादिति । ननु चार्द्धधातुक इति विषयसप्तम्याश्रयणादन्तरङ्गो वधिभावः । नैतदस्ति । लिङीति विशेषनिर्देशात्परसप्तमी तद्विशेषणत्वादार्द्धधातुक इत्यपि परसप्तमी । यत्र तु विशेषनिर्देशाभावो ऽस्तेर्भूरित्यादौ तत्रैव विषयसप्तमीविज्ञानं भव्यादिसिद्ध्यर्थम् । एकाच उपदेशेनुदात्तादित्यत्र तु

न्दिष्यते। अवानिष्यत। इहोभयं प्राप्नोति। घानिषीष्ट। घानिषी-
यास्ताम्। चिण्वद्भावो भवति विप्रतिषेधेन। अथेदानीं चिण्वद्भावे कृ-
ते पुनः प्रसङ्गविज्ञानाद्वधिभावः कस्मान्न भवति। सकृद्गतौ विप्र-
तिषेधे यद्बाधितं तद्बाधितमेवेति कृत्वा। हनि णिङादेशप्रतिषे-
धश्च *। हनि णिङादेशानां प्रतिषेधो वक्तव्यः। हनिष्यते। घानि-
ष्यते। एष्यते। आयिष्यते। अध्येष्यते। अध्यायिष्यते। लुङीति
हनि णिङादेशाः प्राप्नुवन्ति। अङ्गस्येति तु प्रकरणादाङ्गशास्त्राति-
देशात्सिद्धम्। अङ्गस्येति यत्कार्यं तत्प्रतिनिर्दिश्यते। न च हनिणि-
ङादेशाः आङ्गा भवन्ति॥

आतो लोप इटि च॥ ६४॥ इड्ग्रहणं किमर्थम्। इट्ग्रहण-

---

वच्यति भाष्यकारः। वधिषीष्टेत्यत्र निपातनस्वरं प्रत्ययस्वरो बाधिष्यते आर्द्धधातुकी-
याः सामान्येन भवन्तीत्येवं ब्रुवता लिङीति विषयसप्तम्येवाभ्युपगता ततश्चान्तरङ्गत्वा-
द्वधिभावः प्राप्नोति। प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भावो भवति। हनिणिङादेशप्रतिषे-
धश्चेति। लुङ्परे आर्द्धधातुके विधीयमाना हनिणिङादेशाश्चिण्निमित्ता भवन्तीति चि-
ण्वद्भावात् प्राप्नुवन्ति। इह यस्य चिण् साक्षान्निमित्तं निर्दिष्टं तदप्यतिदिश्यते यथा यु-
गागमः। यस्यापि प्रकारान्तरेणापि चिण्निमित्तं तदपि यथा वृद्धिरिति हनि णिङादे-
शप्रसङ्गः। अङ्गस्येति तु प्रकरणादिति। अङ्गस्येति तु प्रकृत्य यत्कार्यं विहितं तदतिदि-
श्यते तस्यैव प्राकरणिकत्वात्। न च हनिणिङादेशा अङ्गस्येति प्रकृत्य विहिता इति
तेषामप्रसङ्गः॥

आतो। इड्ग्रहणं किमर्थमिति। इहाचि क्ङित्यार्द्धधातुक इति त्रयाणां प्रकृत-
त्वाद्विशेषेण विशेष्यभावे च कामचारात् तेषामन्यतमेनाननुभूतविशेषणेनानुभूतविशेष-
णेन वा इटः समुच्चयसंभवादनेकपक्षसंभवः। तत्र यदि तावद्विशेषणसंबन्धात् प्रागेवेट्
समुच्चीयते अङ्गाधिकाराच्चिसप्रत्ययविशेषणाच्चाजादौ प्रत्यय इति विज्ञायते। तत इड्ग्र-
हणमनजाद्यर्थं विज्ञायते। अजादेरिटोजादिना प्रत्ययेन समुच्चयाभावात्। तदा क्-
ङिदार्द्धधातुके अजादेरेव विशेषणे व्यवतिष्ठेते नेटः हलादेरिटः क्ङित्वासंभवादार्द्ध-
धातुकत्वाव्यभिचाराभावाच्च। ततश्च दासीयेत्यादावाल्लोपप्रसङ्गः। अथाजादेः प्रत्ययस्य क्-
ङिदार्द्धधातुकाभ्यां विशेषणाभ्यां प्राक्संबन्धः पश्चादिटा समुच्चयस्तदायमर्थः। अजा-
दौ क्ङित्यार्द्धधातुके इटि चाकारलोप इति तदेड्ग्रहणमनजाद्यर्थमक्ङिदर्थमना-
र्द्धधातुकार्थं च भवतीति दासीय पपिथ व्यतरइति सर्वत्रेट्याल्लोपः प्राप्नोति। अथ क्-

मक्ङिदर्थम्*। इट्ग्रहणं क्रियते अक्ङिति लोपो यथा स्यात् । पपिथ । तस्थिथेति। सार्वधातुके चादीत्यार्द्धधातुकाधिकारादुपसंख्यानम्*। सार्वधातुके चादीत्यार्द्धधातुकाधिकारादुपसंख्यानं कर्त्तव्यम् । इषमूर्जमहमित आदीति । ननु च यथैव क्ङितीति वर्तमाने इट्ग्रहणमक्ङिदर्थमेवमार्द्धधातुकइत्यपि वर्तमाने इट्ग्रहणं सार्वधातुकार्थं भविष्यति । न सिध्यति । किं कारणम् । नहि क्ङिता अज् विशिष्यते अचि भवति कतरस्मिन् क्ङितीति । किं तर्हि। अचा क्ङिद्विशिष्यते क्ङिति भवति कतरस्मिन्नचीति । किं पुनः कारणम् अचा क्ङिद्विशिष्यते । यथा इडप्यजग्रहणेन विशिष्यते । अस्ति चेदानीं क्व चिदिडनजादिः यदर्थो विधिः स्यात् । अस्तीत्याह । दासीय धासीयेत्यादि । तत्तर्हि उपसंख्यानं कर्तव्यम् । न कर्तव्यम् । आर्द्धधातुकत्वात् सिद्धम् । कथमार्द्धधातुकत्वम् । उभयथा छन्दसीति वचनात् । अन्येपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ॥

---

ङितानानुभूतविशेषणेनेट् समुच्चीयते तदाप्यार्द्धधातुकइति विशेषणद्वयमविशेषाद्द्वावपि क्ङिदिटावुपनिपततीति अक्ङिदर्थमेवेड्ग्रहणं विज्ञायते । तेन पपिथेत्यादावाल्लोपो भवति दासीय व्यत्यरइत्यनजादौ सार्वधातुके च न भवति । अनुभूतविशेषणद्वयसंबन्धे तु क्ङितेटः समुच्चये पूर्ववत्सर्वत्रेटयाल्लोपप्रसङ्गः । अथ त्वार्द्धधातुकेनाननुभूतविशेषणेनेटः समुच्चयः आर्द्धधातुके चेति । तदा सार्वधातुकार्थमिड्ग्रहणं विज्ञायतइति व्यत्यरइत्यादावाल्लोपप्रसङ्गः । तदाचिक्ङितीति विशेषणद्वयमार्द्धधातुकस्यैव स्याद् न लिटः सार्वधातुकस्येटो जित्त्वाजादित्वाव्यभिचारात् । अनुभूतविशेषणेनार्द्धधातुकेनेटः समुच्चये सर्वत्रेटयाल्लोपप्रसङ्गः । तदेवमनेकपक्षसंभवात् प्रश्नः । इतरः क्ङितानानुभूतविशेषणेनेटः समुच्चयं पश्चाद् द्वयोरपि विशेषणद्वयसंबन्धमाश्रित्याह । इट्ग्रहणमक्ङिदर्थमिति। आदीति । दाञः केवलादाङ्पूर्वाद्वाछन्दसि लुङ्लङ्लिट इति लुङ्लङोरन्यतरः । केचिदत्र पदकारा आअदीत्यवग्रहन्ति । केचिच्चैकपद्यं मन्यन्ते तेषामाडागम इति पक्षः। तत्र लुङि च्लेर्मन्त्रे घसेति लुक् । लङि तु छान्दसत्वाच्छपो लुक् । श्नावसति द्विर्वचनप्रकरणे छन्दसि चेति वक्तव्यमिति द्विवचनाभावः । सिद्धान्ते त्वार्द्धधातुकत्वाच्छबभावः । दासीयेति । इटः सीयुटि तस्य तन्त्रत्वादजादित्वाभावः ॥

घुमास्थागापाजहातिसां हलि ॥ ६६ ॥ ईत्वे वकारप्रतिषेधो घृतं घृतपावान इति दर्शनात् * । ईत्वे वकारप्रतिषेधो वक्तव्यः। किं प्रयोजनम्। घृतं घृतपावान इति दर्शनात्। इह मा भूत्। घृतं घृतपावानः पिबत वसां वसपावानः पिबतेति। यदि तर्हि वकारप्रतिषेध उच्यते। कथं धीवरी पीवरी। धीवरीति चोक्तम् * । किमुक्तम्। नैतदीत्वम्। किं तर्हि। ध्याप्योरेतत्संप्रसारणमिति। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। वनिबेष भविष्यति न क्वनिबिति

न माङ्योगे ॥ ७४ ॥ कस्यायं प्रतिषेधः। आटः प्राप्नोति। अटोऽपि लिष्यते। तत्रार्धाटो ग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। लुङ्लङ्लृङ्क्ष्वडुदात्त इति। यदि तदनुवर्तते। आडजादीनामट् चेत्यडपि प्राप्नोति। अस्त्वटि कृते पुनराड् भविष्यति। इहाप्यटि कृते पुनराट् प्राप्नोति। अकार्षीत्। अहार्षी-

---

घुमा। ईत्व इति वकारस्य निमित्तभावेन प्रतिषेधो वकारप्रतिषेधः। वकारादावीत्वं न भवतीत्यर्थः। घृतपावान इति। आतो मनिनिति क्वनिप्। वसपावान इति। ङ्यापोः संज्ञाछन्दसोर्बहुलमिति वसाशब्दस्य ह्रस्वः। धीवरीति चोक्तमिति। जनसनखनां सन्झलोरित्यत्रोक्तम्। वनिबेष इति। क्वनिप्तु छन्दसि दृष्टानुविधानान्न भविष्यति। भाषायामपि अन्येभ्योपि दृश्यन्त इति दृशिग्रहणात् प्रयोगानुसरणार्थात् प्रयोगाभावात्त्यादिभ्यो नास्ति क्वनिबिति भाष्यकारस्याभिप्रायः। तत्र वार्तिककारश्चोद्यायानित्याहुः। स्थः कचेति चात् क्विपि संस्था इत्यत्रेत्वस्यादर्शनात्। भाष्यकारमतेन त्वीत्वं प्राप्नोति प्रत्ययलक्षणेन यथाह्वर्णेडित्यत्रेडागमः॥

नमाङ्। कस्यायमिति। यदि द्वयोरडाटोरिहानुवृत्त्या प्रतिषेधस्ततोजादीनामडपि प्राप्नोति। अथानन्तर्यादाटः प्रतिषेधस्तथा सति माङ्योगेऽनिष्यमाणोपि अट् प्राप्नोतीति मत्वा प्रश्नः। स एवानन्तर्यमाश्रित्याह। आटः प्राप्नोतीति। इतरः समुदायापेक्षायां दोषाभावेपि स्वरितत्वादधिकारेपि दोषप्रतिविधानसंभवादाह। न कर्तव्यमिति। अडपि प्राप्नोतीति। अडाटोर्युगपदेकागमस्यपेक्षयामादित्वं न संभवतीति पर्यायप्रसङ्गो यथा लेटोऽडाटौ। ततः पश्चेऽटि सति ऐक्षिष्टेत्यादि न सिध्यति। एक्षिष्टेत्याद्यनिष्टं प्राप्नोति। इतरस्तु विकल्पेनाप्यडटः प्रवृत्तौ द्रव्ये पदार्थे कृतेप्यटि शब्दान्तरत्वान्निमित्तसद्भावादाटा भवितव्यमिति मत्वाहाड्विति। इतरो यद्येकस्मिन्नागमे कृते परस्य प्रवृत्तिस्ततो हलादीनामप्यटि कृते आट्प्रसङ्ग इति मत्वाह। इहापीति। ननु चाटि कर्तव्येऽटो-

त् । अड्वचनान्न भविष्यति । इहापि तर्हि अड्वचनान्न स्यात् । ऐहि-ष्ट । ऐक्षिष्ट । आड्वचनाद्भविष्यति । इहापि तर्हि आड्वचनात् प्राप्नोति । अकार्षीत् । अहार्षीत् । अकृते ऽटि यो ऽजादिरित्येवमेतद्विज्ञास्यते । किं वक्तव्यमेतत् । नहि । कथमनुच्यमानं गंस्यते । अड्वचनसामर्थ्यात् । यदि हि कृते ऽटि योजादिस्तत्र स्यादड् अड्वचनमनर्थकं स्यात् । अथ वोपदेश इति वर्तते । अथ वा आर्द्धधातुक इति वर्तते । अथ वा लुङ्लङिति द्विलकारको निर्देशः । लुङादिषु लकारादिषु योजादिरिति । सर्वथा ऐज्यत औप्यत इति न सिध्यति । एवं तर्हि । अजादीनामटा सिद्धमिति । अजादीनामटा सिद्धं नार्थ आटा । एवं तर्हि वृद्ध्यर्थमाट् वक्तव्यः । वृद्ध्यर्थमिति चेदटः * । अटो वृद्धिर्वच्यते । यदि तर्ह्यटो वृद्धिरित्युच्यते । अस्रपो हसतीत्यत्र वृद्धिः प्राप्नोति रोरुत्वे कृते । धातौ वृद्धिमटः स्मरेत् । धातावटो वृ-

---

सिद्धत्वादजादित्वाभावः । यद्यपि शास्त्रापेक्षया ऽसिद्धत्वं तथापि प्रयोगरूपमाश्रित्य चोद्यते । यथोक्तं मार्थादीदाद्यर्थानामिति । परिहारान्तरसद्भावाद्वाऽसिद्धत्वं नोक्तम् । अड्वचनादिति । यदि हलादीनामप्यटि कृते आट्स्यात्तदा लुङ्लङ्लृङ्क्ष्वपि आडागमं विदध्यात् । इहापि तर्हीति । यद्यटि कृते आड् भवति ततोऽपि न स्यात् । आड्वचनादिति । यद्याण् स्यात्तद्विधानमनर्थकं स्यादित्यर्थः । ननु विकल्पितत्वादडाटोः अडभावे आट् कर्तव्य इति अटि सति न प्राप्नोति । नैष दोषः । उत्तरार्थेन नान्तरीयकोपस्थानेन प्रवृत्तेनाप्यटा बाधितुमाटो ऽशक्यत्वात् । अथ वा संदिग्धप्रवृत्तिरडागमो ऽसंदिग्धप्रवृत्तिना ऽऽटा बाध्यत इत्येष वाक्यार्थः । यथा ऽन्यत्रोक्तम् ॥ अन्यवचनाच्चकाराकरणात् प्रकृतस्याप्यपवादो यथोत्सर्गेण प्रसक्तस्येति । इतरस्त्वगृहीताभिप्रायो विशेषाभावं मत्वाह । इहापि तर्हीति । अकृते ऽटीति । अजादिग्रहणसामर्थ्यात् कृते ह्यटि सर्वस्याजादित्वादडाटोश्च भेदेन विधानसामर्थ्याद्विषयविभागावसायो हलादीनामडेवाजादीनां कृते ऽकृते वा ऽटि आडिति । अथ वेति । उपदेशे यान्यजादीनि तेषामाट् भवति । न च करोतिरुपदेशे ऽजादिरिति आडभावः । अथ वा आर्द्धधातुक इति वर्ततइति । तेनार्द्धधातुकसंज्ञकलकारोत्पत्तिकाले योजादिस्तस्याड् भवति । सर्वथेति । करोतीत्यादिवदजादीनामटि सत्याडभावादित्यर्थः । असिद्धवदत्राभादित्यत्रासिद्धत्वप्रत्याख्यानाय सर्वएवामी प्रकारा उक्ता इह तु स्थित एवासिद्धत्व एषामुपन्यासः । अस्रप इति । स्रपेर्लङ् सिप् । अड् गार्ग्यगालवयोरित्यट् । शप् । लुक् । सकारस्य रु

द्धिं वक्ष्यामि। तत्तर्हि धातुग्रहणं कर्तव्यम्। न कर्तव्यम्। योगविभागः करिष्यते। अटः। अचि वृद्धिर्भवति। तत उपसर्गादृति वृद्धिर्भवति। ततो धाताविल्युभयोः शेषः। एवं तर्हि। आटीत्। आशीत्। अतो गुण इति पररूपं प्राप्नोति। पररूपं गुणेनाटः। आटो नेति वक्ष्यामि। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। ओमाङोरुसि तत्समम्। यद्यप्येतदुच्यते। अथ वै तर्हि उस्योमाङ्क्ष्वाटः प्रतिषेधश्चोदितः स न वक्तव्यो भवति। छन्दोर्थं तर्ह्याड्वक्तव्यः। आरैगु क्रमा। चितएनमायुनक्। ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। छन्दोर्थं बहुलं दीर्घः। छन्दसि दीर्घो बहुलं दृश्यते। तद्यथा पूरुषो नारकइति। एवं तर्हि। आयन्। आसन्। इणस्त्योर्यणलोपयोः कृतयोरनजादित्वाद् वृद्धिर्न प्राप्नोति। इणस्त्योरन्तरङ्गतः। अन्तरङ्गत्वाद् वृद्धिर्भविष्यति। तस्मान्नार्थ आड्ग्रहणेन। अजादीनामटा सिद्धं वृध्यर्थमिति चेदटः। अस्वपो हसतीत्यत्र धातौ वृद्धिमटः स्मरेत्॥ १॥ पररूपं गुणेनाट ओमाङोरुसि तत्समम्। छन्दोर्थं बहुल दीर्घ इणस्त्योरन्तरङ्गतः॥ २॥

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ॥ ७६॥ इयङादिप्रकरणे

---

त्वं इच्छि चेत्युत्वं तचाद्गुणं बाधित्वा वृद्धिः प्राप्नोति। आटोदिति। नैटीति वृद्धौ प्रतिषिद्धायां परत्वाद्वृद्धिं बाधित्वा पररूपं प्राप्नोति। पररूपं गुणेनाट इति। अट उत्तरे गुणे रूपं नेति वक्तव्यमित्यर्थः। अमाङोरुसितत्सममिति। औकारीयदौढीयदौस्त्रीयदित्यत्र वृद्धिं बाधित्वापरत्वादोमाङोश्चोस्य पदान्तादिति पररूपं प्राप्नोति तस्य प्रतिषेधो वक्तव्य इत्युक्तम्। यदा ते पररूपविधौ नाटइत्युच्यते। तदोस्योमाङ्क्ष्वाटः पररूपप्रतिषेधो न वक्तव्य इति तुल्यमेतद्भवति नतु गौरवप्रसङ्गः। अन्तरङ्गत्वादिति। यण्लोपौ बहिरङ्गौ। वृद्धौ कृतायामिणो यण्। एरिति योगविभागाश्रयणाद् यणोभावः। रूपाश्रयणादन्तादिवद्भावो नास्ति। ताद्रूप्यानतिदेशात्। श्नसोरल्लोप इति। तपरकरणाल्लोपाभावः। एतच्च वार्णादाङ्गं बलीय इत्यनाश्रित्योक्तम्। तदाश्रये वृद्धिं बाधित्वा यण्लोपौ स्याताम्। अटासिद्धे आड्वचनमेव ज्ञापकमन्ये वर्णयन्ति। भवत्येषा परिभाषा वार्णादाङ्गं बलीय इति। तस्यां सत्यां यण्लोपयोर्वृद्धिं बाधित्वा प्रवृत्तयोरायन्नासन्निति न स्यादित्याड्विधीयते॥

अचिश्नु। तन्वमिति। वा छन्दसीत्यधिकारादमि पूर्वत्वाभावाद् यणादेशः। तनुव-

तन्वादीनां छन्दसि बहुलम् *। इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलमुपसङ्ख्यानं कर्तव्यम् । तन्वं पुषेम । तनुवं पुषेम । विष्वं पश्य । विषुवं पश्य । स्वर्गं लोकम् । सुवर्गं लोकम् । त्र्यम्बकं यजामहे । त्रियम्बकं यजामहे ॥

एरनेकाचो ऽसंयोगपूर्वस्य ॥ ८२ ॥ इह कस्मान्न भवति ब्राह्मणस्य नियौ ब्राह्मणस्य निय इति । अङ्गाधिकारादङ्गस्येति वर्तते । एवमपि परमनियौ परमनिय इत्यत्रापि प्राप्नोति । गतिकारकपूर्वस्यैवेष्यते । यणादेशः स्वरपदपूर्वोपधस्य च *। यणादेशः स्वरपूर्वोपधस्य पदपूर्वोपधस्येति वक्तव्यम् । स्वरपूर्वा च यस्योपधा । पदपूर्वा च । स्वरपूर्वा । निन्यतुः । पदपूर्वा । उन्न्यौ । उन्न्यः । उद्यौ । उद्यः । उभयपूर्वा । ग्रामण्यौ । ग्रामण्यः । सेनान्यौ । सेनान्य इति । असंयोगपूर्वे ह्यनिष्टप्रसङ्गः *। असंयोगपूर्वस्येत्युच्यमाने ह्यनिष्टं प्रसज्येत । उन्न्यौ । उन्न्यः । उद्यौ । उद्यः । असंयोगपूर्वस्येति प्रतिषेधः प्रसज्येत । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । धातोरिति वर्तते । धातुना संयोगं विशेषयिष्यामः । धातोर्यः संयोगस्तत्पूर्वस्य नेति । उपसर्जनं वै संयोगः । न चोपसर्जनस्य विशेषणमस्ति । धातोरित्यनुवर्तनसामर्थ्यादुपसर्जनस्यापि विशेषणं भविष्यति । अस्त्यन्यद् धातो-

---

मिति । अधातुत्वादप्राप्त उवङ् विधीयते । विषुवमिति । विसृते इति सत्सूद्विषेति क्विप् । अत्र नित्यमोः सुपीति यणि प्राप्ते पक्षे उवङ् विधीयते । सुवर्गमिति । अधातुत्वादनङ्गत्वाच्चाप्राप्त उवङ्विधीयते ।

एरनेकाचः । ब्राह्मणस्य नियाविति । अन्येभ्योपि दृश्यत इतिताच्छील्यादिषु निरुपपदाद् नियः क्विप् । ततः कर्मणा संबन्धः । सत्यपि वा पूर्वकर्मणासंबन्धे परत्वात्सोपपदं सत्सूद्विषेति क्विपं बाधित्वा ताच्छीलिकः क्विब् भवति । गतिकारकपूर्वस्येति परमशब्दोऽत्र न गतिर्न च कारकम् । किं तर्हि । उत्तरपदार्थस्य समानाधिकरणं विशेषणम् । उद्याविति । भावेकर्तरिचात्र क्विप् । इकारः संयोगपूर्वः । धातोरिति । अविद्यमानधात्ववयवसंयोगपूर्वस्ययणित्यर्थः । उपसर्जनमिति । अन्यपदार्थं प्रति । नचोपसर्जनस्येति । संबन्धिशब्दादन्यदुपसर्जनं पदं पदान्तरवाच्येनार्थेन सम्बन्धनोपैतीत्यर्थः । अस्त्यन्यदिति । गुणप्रधानसंनिधौ प्रधानस्य सत्यर्थित्वे विशेषणसंबन्धं न भाव्यमनर्थित्वे प्रधानस्य

रित्यनुवृत्तौ प्रयोजनम् । किम् । इवर्णं विशेष्यते । नैतदस्ति प्रयोजनम् । यद्यधातोरिवर्णं भवितव्यमेव तस्य यणादेशेन इकोयणचीति ॥

वर्षाभ्वश्च ॥ ८४ ॥ वर्षाभू पुनर्भ्वंश्च *। वर्षाभूरित्यत्र पुनर्भ्वश्चेति वक्तव्यम् । पुनर्भ्वौ पुनर्भ्व इति । अत्यल्पमिदमुच्यते । वर्षादृन्कारपुनःपूर्वस्य भुव इति वक्तव्यम् । वर्षाभ्वः । दृन्भ्वौदृन्भ्वः । कारभ्वौ । कारभ्वः । पुनर्भ्वौ । पुनर्भ्वः ॥

हुश्नुवोः सार्वधातुके ॥ ८७ ॥ हुश्नुग्रहणानर्थक्यमन्यस्याभावात् *। हुश्नुग्रहणमनर्थकम् । किं कारणम् । अन्यस्याभावात् । नह्यन्यत्सार्वधातुके अस्ति यस्य यणादेशः स्यात् । ननु चायमस्ति याति वातीति । क्ङितीत्यनुवर्तते । इदं तर्हि । यातः वात इति । अचीति वर्तते । इह तर्हि यान्ति वान्तीति । य्वोरिति वर्तते । एवमपि धियन्ति पियन्ति अत्र प्राप्नोति । ओरिति वर्तते । एवमपि सुवन्ति रुवन्तीत्यत्र प्राप्नोति । अनेकाजिति वर्तते । एवमप्ययुवन् अरुवन् इत्यत्रापि प्राप्नोति । एतदप्यटोसिद्धत्वादेकाज्भवति । एवमपि प्रोणुवन्तीत्यत्र प्राप्नोति । असंयोगपूर्वस्येत्यनुवर्तते । यङ्लुगर्थं तर्हि हुश्नुग्रहणं कर्तव्यम् । यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्ति तदर्थमिदम् युवं यो युवतीनाम् । वृषभं भवतु रोरुवतीनाम् । यङ्लुगर्थमिति चेत् । तन्न । किंकारणम् । आर्द्धधातुकत्वात्सिद्धम् । कथमार्द्धधातुकत्वम् । उभयथा छन्दसीति वचनात् । अन्येपि हि धातुप्रत्ययाश्छन्दस्युभयथा दृश्यन्तइति । एवं तर्हि सिद्धे सति यत् हुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामपि यङ्लुग् भवतीति ।

---

गुणो विशेषणे न संबध्यते । यद्यधातोरिति । यथा कुमार्याविति । ननु घमणीइत्यादावधातोः पूर्वसवर्णदीर्घबाधनार्थो यण् मा भूदिति धातुनेवर्णस्य विशेषणे प्रयोजनमस्ति। एवं तर्हि इयङ्बाधनार्थत्वाद्यणादेशस्याधातोरियङोप्रसङ्गादधातुनिवृत्त्यर्थाधातुग्रहणस्यानुवृत्तिर्न भवति ।

वर्षाभ्वश्च । वर्षासु भवति वर्षावाभवते प्राप्नोतीति वर्षाभूरोषधिविशेषः। दृन्भूशब्दोऽन्दृ दृन्भूइतिनिपातितः । अत्रभूशब्दस्यानर्थक्यान्नभूसुधियोरित्यत्र ग्रहणाभावाद्यणादेशः सिद्धः ॥

हुश्नुवोः । अधिकारानुवृत्तिसामर्थ्यादतिप्रसङ्गाभावं मत्वाह । हुश्नुग्रहणानर्थक्यमि-

किमेतस्य ज्ञापने प्रयोजनम् । बेभिदीति चेच्छिदीत्येतत्सिद्धं भवति भाषायामपीति ॥

ऊदुपधाया गोहः ॥ ८९ ॥ किमर्थं गुहेर्विकृतस्य ग्रहणं क्रियते । न गुह इत्येवोच्येत । गोहिग्रहणं विषयार्थम् * । गोहिग्रहणं क्रियते विषयार्थम् । विषयः प्रतिनिर्दिश्यते यत्रास्यैतद्रूपं तत्र यथा स्यादिह मा भूत् । निजुगुहतुः । निजुगुहुरिति । अयादेशप्रतिषेधार्थं च * । अयादेशप्रतिषेधार्थं च विकृतग्रहणं क्रियते । ह्रस्वादेशे ह्ययादेशप्रसङ्ग उत्वस्यासिद्धत्वात् * । ह्रस्वादेशे हि सति अयादेशः प्रसज्येत । प्रतिगूह्य गतः उपगूह्य गत इति । किं कारणम् । ऊत्वस्यासिद्धत्वात् । असिद्धमूत्वं तस्यासिद्धत्वात् ल्यपि लघुपूर्वादित्ययादेशः प्रसज्येत । विषयार्थेन तावन्नार्थो गोहिग्रहणेन । प्रश्लिष्टनिर्देशात्सिद्धम् * । प्रश्लिष्टनिर्देशोयम् । उ ऊत् ऊदिति । तत्र ह्रस्वस्यावकाशः । निजुगुहतुः । निजुगुहुः । गुणस्यावकाशः । निगोढा । निगोढुम् । इहोभयं प्राप्नोति । निगूहयति निगूहति । निगूहकः । साधु निगूही । परत्वाद्गुणे कृते आन्तर्यतो दीर्घस्य दीर्घो भवति । अयादेशप्रतिषेधेन चापि नार्थः । समानाश्रयवचनात्सिद्धम् * । समानाश्रयवचनात्सिद्धं भवति । व्याश्रयं चैतत् । णावूत्वं णो ल्यप्ययादेश इति ॥

---

ति । भाषायामपीति । ततो यङ्लुङ्निवृत्त्यर्थं इश्नुग्रहणमर्थवत् ॥

ऊदुप । किमर्थमिति । लघुं विहाय निर्देशं कस्माद् गौरवमाश्रितमिति प्रश्नः । गोहिग्रहणमिति । कृतगुणस्योत्वं यथा स्यादकृतगुणस्य मा भूदित्येवमर्थमित्यर्थः । अयादेशप्रतिषेधार्थमिति । गुणे कृते तस्य स्थाने ऊत्वे कृते सत्यूत्वस्यासिद्धत्वे गुरुपूर्वादुत्तरो णिर्भवति न तु लघुपूर्वादिति ल्यप्ययादेशो न भवति । गुह इति निर्देशे क्रियमाणे नित्यत्वाद् बाधित्वा गुणमुकारस्थाने ऊकारः प्राप्नोति । तस्य चासिद्धत्वाद् लघुपूर्वादुत्तरो णिर्भवतीति अयादेशः स्यात् । उ ऊत् ऊदिति । ह्रस्वदीर्घावादेशौ सूत्रे निर्दिश्येते तत्र स्थानेन्तरतमपरिभाषावशाद् ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः । निजुगुहतुरिति । अत्र कित्त्वाद् गुणप्रतिषेधादुकारस्यादेश उकारः । निगोढेति । अचीत्यधिकारादूकारस्याप्रसङ्गः । निगूहयतीति । उकारस्य गुणश्च प्राप्नोति उकारश्च । तत्र परत्वाद् गुणे कृते एकादेशविकृतस्यानन्यत्वादूकारादेश इति नार्थो विकृतनिर्देशेन । दोषो णाविलक्षणं तु लक्ष्यदर्शनवशादूकारोपेक्ष्यते न तु ह्रस्व इति तत्रापि न दोषः ॥

दीपो णौ ॥ ९० ॥ किमर्थं दुषेर्विकृतस्य ग्रहणं क्रियते । न दुष इत्येवोच्येत । दीपिग्रहणे च * । किम् । अयादेशप्रतिषेधार्थं विकृतग्रहणं क्रियते । ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्वस्यासिद्धत्वात् * । ह्रस्वादेशे हि सति अयादेशःप्रसज्येत । प्रदूष्य गतः । उपदूष्य गतः । किं कारणम् । ऊत्वस्यासिद्धत्वात् । असिद्धमूत्वं तस्यासिद्धत्वात्ल्यपि लघुपूर्वा दित्यादेशः प्रसज्येत । समानाश्रयवचनात्सिद्धमित्येव । समानाश्रयमसिद्धम् । व्याश्रयं चैतत् । णावुत्वं णेर्ल्यप्ययादेश इति ॥

चिस्फुरोर्णौन्यतरस्याम् ॥ ९३ ॥ चिस्फुरोर्णिज्व्यवेतानां यङ्लोपे च * । चिस्फुरोर्णिज्व्यवेतानां यङ्लोपे चोपसंख्यानं कर्तव्यम् । शमयन्तं प्रयोजितवान् । अशशमि अशशामि । शमंशमम् । शामंशामम् । शंशमयतेः । अशंशमि । अशंशामि । शंशमंशंशमम् । शंशामंशंशामम् । किं पुनः कारणं न सिध्यति । चिस्फुरपरे णौ मितामङ्गानां दीर्घो भवतीत्युच्यते । यस्माच्च णिस्त्रिस्फुरपरो न तस्मिन् मिदङ्गम् । यस्मिंश्च मिदङ्गं नासौ चिस्फुरपर इति । लोपे कृते चिस्फुरपरो भवति । स्थानिवद्भावान्न चिस्फुरपरः । ननु च प्रतिषिध्यते तत्र स्थानिवद्भावः । दीर्घविधिं प्रति न स्थानिवदिति । एवमप्यसिद्धत्वान्न प्राप्नोति । एवं तर्हि चिस्फुरोर्णिज्व्यवेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्सिद्धम् । किमिदमन्तरङ्गलक्षणत्वादिति ।

---

चिस्फुरोर्णौन्यतरस्याम् । णिज्व्यवेतानामिति । चिस्फुरपरेणौमितामङ्गानां वा दीर्घ उच्यते । तत्र यदाण्यन्ताद्यङन्ताच्च णिज्विधीयते तदा पूर्वेण णिचायङाकारेण च व्यवधानाद्दीर्घो न प्राप्नोतीतिवचनम् । प्रयोजितवानिति । यद्यपि णिचिषयं कर्म प्रदर्शनीयं तथापिणिजुत्पत्तये हेतुव्यापारप्रदर्शनार्थं कर्तुरुपादानं नत्वत्र कर्ता विवक्षितः । शंशमयतेरिति । शमर्यङ्गिनुगतोनुनासिकान्तस्येति नुकि कृते शंशम्यशब्दाण्णिचि अल्लोपयलोपौ । लोपे कृतइति । यद्यपि परस्यापि णिचो लोपस्तथापि प्रत्ययलक्षणेन भूतपूर्वगत्यावाचिस्फुरपरोणिः । दीर्घविधिं प्रति नेति । एतदेव हि दीर्घग्रहणस्य प्रयोजनं स्थानिवत्त्वप्रतिषेधो यथा स्यात् । यदि तु प्रकृतो ह्रस्वो विकल्पेत तदा णौ णिलोपस्य स्थानिवत्त्वाद्विकल्पो ह्रस्वस्य न स्यात् । यङकारलोपस्य स्थानिवद्भावान्नित्यं ह्रस्वः श्रूयेत । हेडवेष्टन इत्यस्य च ह्रस्वाभावपक्षे अहेडीति स्यात् । दीर्घे तु ह्रस्वस्य कृते अहीडीति सिध्यति । अन्तरङ्गलक्षणत्वादिति । णियङोर्लोपोणिमात्रापेक्षत्वादन्त-

यावत् ब्रूयात्समानाश्रयवचनात्सिद्धमिति । व्याश्रयं चैतत् । कथम् । णौ णिलोपः । णौ चिण्णमुल्परे मितामङ्गानां दीर्घत्वम् । तस्मान्नार्थ उपसंख्यानेनेति ॥

छादेर्घेऽद्व्युपसर्गस्य ॥९६॥ अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । इहापि यथा स्यात् । समुपाभिच्छादः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । यत्र त्रिप्रभृतयः सन्ति द्वावपि तत्र स्तः । तत्राद्व्युपसर्गस्येत्येव सिद्धम् । न वै एष लोके संप्रत्ययः । न हि द्विपुत्र आनीयतामित्युक्ते त्रिपुत्र आनीयते । तस्माददद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ॥

घसिभसोर्हलि ॥ १०० ॥ हल्ग्रहणानर्थक्यमन्यत्रापि दर्शनात्*। हल्ग्रहणमनर्थकम् । किं कारणम् । अन्यत्रापि दर्शनात् । अन्यत्रापि हि लोपो दृश्यते । अग्निर्वनानि बप्सति । शरावे बप्सतीति ॥

हुझल्भ्यो हेर्धिः ॥ १०१ ॥ इटः प्रतिषेधो वक्तव्यः । रुदिहि । स्वपिहि । झल इति धित्वं प्राप्नोति । हेर्धित्वे हलधिकारादिटोप्र-

---

रङ्गः । दीर्घस्तु चिण्णमुल्परणपेक्षत्वाद् बहिरङ्ग इति समानाश्रयत्वाभावादसिद्धत्वाभाव इत्यर्थः ॥

छादेः । अद्विप्रभृत्युपसर्गस्येति वक्तव्यमिति । इह संख्यान्तरोपजने आश्रयाविनाशेऽपि पूर्वसंख्याविनाशात्तद्वाचिशब्दाप्रवृत्तिरिति भावः । यत्र त्रिप्रभृतय इति । वस्तुसद्भावमाश्रित्य परिहारः । अद्व्युपसर्गस्येति च प्रसज्यप्रतिषेधो वाक्यभेदेनाश्रीयते । पर्युदासाश्रयणे ह्यनुपसर्गस्य ह्रस्वो न स्यात् । न वै एष इति । संख्याशब्दानामेष स्वभावो यत्संख्यान्तरस्योत्तरस्य गौणस्य मुख्यस्य वा विषये न प्रवर्तन्ते । यथा चोक्तमेकाजनेकाज्ग्रहणेषु आवृत्तिसंख्यानात्सिद्धमिति । नैधेय इति च पूर्वविधिग्रहणस्य प्रत्युदाहरणमुपन्यस्तं स्थानिवद्भावे सति त्र्यच्त्वाद् द्व्यच्त्वाभावात्तदाश्रयो ढक् न स्यादिति ॥

घसिभ । अचीत्यधिकाराद्धलि न प्राप्नोतीति हल्ग्रहणं क्रियते । तदुपादानेचाचि न प्राप्नोतीति चकारोच्संबन्धार्थः क्रियते तत्राज्ग्रहणस्येहानधिकारादेव सर्वत्र लोपः सिध्यतीति हलिचेति न वक्तव्यम् । अन्यत्रापीति । वचनाद्वार्तिककारश्चकारं न पपाठेति लक्ष्यते । बप्सतीति । एकवचने प्राप्ते व्यत्ययेन श्लिः श्लौ द्विर्वचनम् । अदभ्यस्तादित्यदादेशः उपधालोपः खरि चेति चर्त्वम् । अत्रान्तरङ्गत्वादुपधालोपात् पूर्वं द्विर्वचनं यदि तु भाव्येव पूर्वं लोपः स्यात्ततो द्विर्वचनं न स्यात् ॥

हुझल् । रुदिहीति । शब्दान्तरप्राप्त्या द्वयोरप्यनित्यत्वात्परत्वादिटि कृते पुनः प्र-

तिषेधः ॥ । हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः । अनर्थकः प्रतिषेधो ऽप्रतिषेधः । धित्वं कस्मान्न भवति । हलधिकारात् । प्रकृतं हल्ग्रहणमनुवर्तते । क्व प्रकृतम् । घसिभसोर्हलीति । तद्वै सप्तमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । तद्वै तत्र प्रत्याख्यायते । प्रत्याख्यातं सद्यया विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमिहानुवर्तते । अथ वा हुझल्भ्य इत्येषा पञ्चमी हलीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । अथ वा निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति । इटा व्यवहितत्वात् । यद्येवं भिन्धकि छिन्धकीत्यत्र धित्वं न प्राप्नोति । एवं तर्हि धित्वे कृते ऽकज्भविष्यति । इदमिह संप्रधार्यं धित्वं क्रियतामकजिति । किमत्र कर्तव्यम् । परत्वाद्धित्वं नित्योऽकच् । कृते ऽपि धित्वे प्राप्नोत्यकृते ऽपि । अकजप्यनित्यः । अन्यस्य कृते धित्वे प्राप्नोति अन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवतीति । उभयोरनित्ययोः परत्वाद्धित्वं धित्वे कृते ऽकज्भविष्यति । अथ वा हकारस्यैवैतद्धशक्तिजेनेकारेण ग्रहणमिति ॥

---

सङ्गविज्ञानाद्धित्वप्रसङ्गः । अथ वेति । यद्यपि सप्तम्यचरितार्था तथापि हुझल्भ्य इत्यनया पञ्चम्या अचरितार्थया हेरित्येतदनुगुणा षष्ठी प्रकल्प्यते । ननु षष्ठीप्रकॢप्तौ तदादिविधेरसंभवः । यस्मिन्विधिस्तदादा वल्ग्रहण इति ह्युच्यते । नैष दोषः । हल्ग्रहणानुवृत्तिसामर्थ्यात् हलन्तत्वासंभवाच्च तदादिविधिर्विज्ञास्यते । अथ वेति । यत् षष्ठ्या निर्दिश्यते तस्यैवादेशः सागमकत्वागमानामव्यभिचाराच्छब्दान्तरे श्रूयमाणे प्रतीयते । तस्यादेशाभावः । यस्तर्हीति । आगमं विहाय हिशब्दस्यादेशो भवत्वित्यर्थः । इटेति । न तूच्चार्यतइति तस्यादेशाभावः । यस्तर्हीति । आगमंविहाय हिशब्दस्यादेशो भवत्वित्यर्थः । इटेति । तस्मादित्युत्तरस्येति वचनादनन्तरस्यैव षष्ठ्या कार्येण च भाव्यम् । तत्र योनिर्दिष्टोनासावनन्तरो यश्चानन्तरः सागमको नासौ निर्दिष्ट इति धित्वाभावः । यद्येवमिति । यदि निर्दिश्यमानस्यादेशस्तर्ह्यकचि कृते शब्दान्तरत्वाप्रसङ्गः । धित्वेकृतेऽकजिति । पुनः प्रसङ्गविज्ञा नाश्रयणात् नह्यन्यथा ज्ञाताद्यर्थावगतिर्भवति । अथ वाऽज्ञातार्थपेक्षत्वाद् बहिरङ्गोकजिति पूर्वं धित्वं पश्चादकच् । अथ वेति । इकारेणागन्तुनाहेरिति निर्देशः । हकारमात्रन्तु स्थानित्वेन निर्दिश्यते । एवं धिरिति धकारमात्रमादेशः । इकारस्तूच्चारणार्थो व्यञ्जनस्य स्वररहितस्योच्चारयितुमशक्यत्वात् । ततश्च दादहीत्यत्र हका-

चिणो लुक् ॥ १०४ ॥ चिणो लुकि तग्रहणम् *। चिणो लुकि तग्रहणं कर्तव्यम् । इह मा भूत् । अकारितराम् । अहारितराम् इति । चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात् *। चिणो लुकि तग्रहणमनर्थकम् । संघातस्य लुक् कस्मान्न भवति । संघातस्याप्रत्ययत्वात् । प्रत्ययस्य लुक्श्लुलुपो भवन्तीत्युच्यते । न च संघातः प्रत्ययः । तलोऽपि तर्हि कृते परस्य प्राप्नोति । तलोपस्य चासिद्धत्वात् । असिद्धस्तलोपस्तस्यासिद्धत्वान्न भविष्यति । कार्यकृतत्वाद्वा * । अथ वा कृतश्चिणो लुगिति कृत्वा पुनर्न भविष्यति । तद्यथा । वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति । विषम उपन्यासः । युक्तं यत्तस्यैव पुनःप्रवृत्तिर्न स्यात् । यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम् । तद्यथा । वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेतेति । अग्न्याधाननिमित्तं वसन्ते वसन्तइज्यते । तस्मात्पूर्वोक्तावेव परिहारौ । अथ वा क्ङितीति वर्तते । क्व प्रकृतम् । गमहनजनखनघसांलोपः क्ङित्यनङीति । तद्वतत्सप्तमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । चिण इत्येषा पञ्च-

---

रस्येटा व्यवधानाद्धकाराभावः । सहि समुदायभक्तत्वात्तमेव न व्यवदध्यात् । अवयवं तु व्यवदधात्येव । तथा भिन्धकीत्यत्र सत्यपि पूर्वमकचि हकारस्य धकारे कृते रूपं सिध्यति॥

चिणो । तग्रहणमिति । इदमस्मिन्नसिद्धमिति भेदनिबन्धनत्वाद्विषयविषयिभावस्य चिणो लुगित्यस्य लक्षणस्यभेदाभावादकारितरामित्यत्रलोपस्यासिद्धत्वाभावात्तरपोपि लुक् प्राप्नोति । एवं सति प्रत्ययत्रयात्मकस्य समुदायस्य लुक्प्रसङ्गः इतरस्तु युगपत्प्रत्ययत्रयस्य लुक् प्रसङ्गोऽनेनोक्त इति मत्वाह । चिणो लुकीति । इतरः स्वाभिप्रायं प्रकाशयति । तलोप इति । तलोपस्यासिद्धत्वादिति । प्रतिलक्ष्यं लक्षणभेदादस्ति विषयविषयिभावः। अभेदपक्षमाश्रित्याह । कार्यकृतत्वाद्वेति । एकस्मिन्विषये सकृत्प्रवृत्त्यालक्षणस्य चरितार्थत्वात् पुनः प्रवृत्त्यभावः । तद्यथेति । यथ कस्मिन्वसन्ते अग्न्याधानं कृत्वा वसन्तान्तरे ब्राह्मणो ऽग्न्याधानं न कुरुते शास्त्रस्यानुष्ठितत्वात्तथ वस्य प्रत्ययस्य लुकि कृते प्रत्ययान्तरस्य तरबादेर्लुग्न प्रवर्तते । युक्तं यत्तस्यैवेति । इहाभिन्नरूपमपि फलभेदाद्भिन्नमुच्यते । अग्न्याधानं तु कर्मान्तरेषु कर्तुर्योग्यतोत्पादनार्थमिति फलभेदाभावात् पुनर्न क्रियते । काम्यानां तु कर्मणां फलभेदात् पुनरनुष्ठानं भवति । तथेहापि तस्य लुकि कृते तरबादेर्लुक्प्रसङ्गः । अग्न्याधानं निमित्तमस्येति बहुव्रीहिः । क्रियाविशेषणं चैतत्

मी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति॥

उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥ कथमिदं विज्ञायते उकारात् प्रत्ययादिति आहो स्विदुकारान्तात् प्रत्ययादिति। किं चातः। यदि विज्ञायते उकारात्प्रत्ययादिति सिद्धं तनु कुरु। चिनु सुनु इति न सिध्यति। अथ विज्ञायते उकारान्तात्प्रत्ययादिति। सिद्धं चिनु सुनु। तनु कुर्विति न सिध्यति। तथा। असंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात्। अक्ष्णुहि। तक्ष्णुहि। आप्नुहि। शक्नुहीत्यत्र न स्यात्। यथेच्छसि तथास्तु। अस्तु तावदुकारात्प्रत्ययादिति। कथं चिनु सुन्विति। तदन्तविधिना भविष्यति। अथ वा पुनरस्तूकारान्तात्प्रत्ययादिति। कथं तनु कुरु। व्यपदेशिवद्भावेन भविष्यति। यदप्युच्यते। यथा ऽसंयोगपूर्वग्रहणेनहैव पर्युदासः स्याद् अक्ष्णुहि तक्ष्णुहि। आप्नुहि शक्नुहीत्यत्र न स्यादिति। नास्माभिरसंयोगपूर्वग्रहणेनोकारान्तं विशेष्यते। किं तर्हि। उकारो विशेष्यते। उकारो यो ऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति। उतश्च प्रत्ययात् छन्दो वावचनम् *। उतश्च प्रत्ययादित्यत्र छन्दसि वेति वक्तव्यम्। अवस्थिरा तनुहि यातु जूनाम्। धिनुहियज्ञं धिनुहि यज्ञपतिम् तेन मा

---

अनाहिताग्नेरनधिकारादग्न्याधाननिमित्तत्वं यागस्योच्यते।

उतश्च। कथमिति। उतः प्रत्ययादित्यनयोर्विशेषणविशेष्यभावे कामचाराद्यदीकारः प्रत्ययेन विशेष्यते तदा तदन्तविधेरभावादुकारात् प्रत्ययादिति पक्षोवतिष्ठते। उकारस्य विशेष्यत्वात् तेन नास्ति तदन्तता। न संभवति चोकारः प्रत्ययान्तो यदा पुनः। विशेष्यते उकारेण प्रत्ययो ऽतस्तदन्तता। आश्रीयते प्रत्ययस्य तस्मात्पक्षद्वयोद्भवः। पक्षद्वयेपि दोषदर्शनात् प्रश्नः। तथेति। तदन्तपक्षेयं दोषः। आद्ये तु पक्षे उकारस्याप्रत्ययत्वात् लुक्प्रसङ्ग एव नास्तीत्यत्र दोषाभावः। ननूकारात् प्रत्ययादिति विज्ञायमान उकारस्य प्रत्ययस्य संयोगपूर्वत्वासंभवादसंयोगपूर्वग्रहणं किमर्थं स्यात्। उच्यते। अङ्गविशेषणं स्यात्। तथा च क्षिणु इत्यत्र न स्यादित्ययमपि दोषो वक्तव्यः। तदन्तविधिनेति। ननूकारस्य विशेष्यत्वात्कथं तदन्तविधिः। विशेषणत्वात्तु तदन्तविधौ वक्ष्यमाणात्पक्षादस्य भेदो न प्राप्नोति। एवं तर्हि तन्त्रेण सूत्रद्वयमभ्युपगम्यैतदुच्यते। तत्रैकस्मिन् सूत्रे प्रत्ययेनोकारो विशेष्यते। द्वितीये तूकारेण प्रत्यय इति दोषाभावः। व्यपदेशिवद्भावेनेति। आद्यन्तवदेकस्मिन्नित्यनेनेत्यर्थः। किं तर्हि उकारो विशेष्यते इति। ननूकारस्य संभा-

भागिनं क्रियुहि । उत्तरार्थं च । के चित्तावदाहुःछन्दग्रहणं कर्तव्यमिति । अपर आहुः । वावचनं कर्तव्यमिति । लोपश्चास्यान्यतरस्यामित्यचान्यतरस्यांग्रहणं न कर्तव्यं भवति

अत उत् सार्वधातुके ॥ ११० ॥ सार्वधातुक इति किमर्थम् । इह मा भूत् । संचस्करतुः संचस्करुरिति । स्यान्तस्य प्रतिषेधो वक्तव्यः॥ करिष्यति । करिष्यते । कृञ उत्वे उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः॥ कृञ उत्वे उकारान्तस्य निर्देशात्स्यान्तस्याप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । उत्वं कस्मान्न भवति । उकारान्तनिर्देशात् । अशक्यः करोतावुकारान्तनिर्देशस्तत्राश्रयितुम् । इह संपरिभ्यां भूषणसमवाययोःकरोताविति । इहैव स्यात् संस्करोति । संस्कर्ता संस्कर्तुमित्यत्र न स्यात् । न ब्रूमोऽस्मादुकारान्तनिर्देशाद्योयं करोतेरिति । किं तर्हि । उकारान्तप्रकरणादुकारान्तमङ्गं संबध्यते । उत इति वर्तते । यद्येवं नार्थः सार्वधातुकग्रहणेन । कस्मान्न भवति संचस्करतुः संचस्करुरिति । उत इति वर्तते । उत्तरार्थं तर्हि सार्वधातुकग्रहणं कर्तव्यम् । श्नसोरल्लोप इति । श्नः सार्वधातुक एवास्त्येरप्यार्धधातुके भूभावेन भवितव्यम् । उत्तरार्थमेव तर्हि श्नाभ्यस्तयोरात इति । श्ना सार्वधातुक एव । अभ्यस्तमप्याकारान्तमार्धधातुके ना-

---

त्वात् संज्ञिपरतन्त्रत्वादप्रधानस्य कथं विशेषणेन संबन्धः । नैष दोषः । यावदस्य विशेषणत्वं न विहतं तावत् संज्ञात्वं नास्तीत्यप्राधान्याभावः । तत्रासंयोगपूर्व उकारः प्रत्ययस्य विशेषणमिति विशेषणेन संबन्धमनुभूय संज्ञात्वमुकारो लभते । छन्दोग्रहणमिति । नित्यं करोतेरित्यत्र वाक्यभेदेन छन्दसि वेति संबध्यते ।

अत उत् । सार्वधातुकइति किमर्थमिति । सत्यपि सार्वधातुकग्रहणे स्यान्तस्य निवृत्त्यर्थोऽयत्नः कर्तव्यो यत्न इति तेनैव यत्नेनार्धधातुके न भविष्यतीति भावः । स्यान्तस्येति । इह सार्वधातुके विकरणे कृते तेन व्यवधानात्सार्वधातुकपरतः करोतेरित्यस्यार्थस्यासंभवात्सार्वधातुकेपरतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम् । एवं च स्यान्तस्यापि प्राप्नोति । स्यग्रहणमुपलक्षणं तास्यन्तस्यापि प्रसङ्गात् । कृञ उत्व इति । उत इत्यनुवर्तनादिति भावः । इतरस्तु करोतेरित्युकारनिर्देशमाश्रयेणोक्तमिति मत्वाहाशक्य इति । उत इति वर्तत इति । तेनोकारान्तस्याङ्गस्यावयवस्य करोतेरत उत् सार्वधातुके क्ङिति भवतीति सूत्रार्थः संपद्यते । अभ्यस्तमपीति । यत्र नेष्यते लोप इति भावः ।

स्ति। ननु चेदमस्ति। अप्सु यायावरः प्रवपेत पिण्डानिति। नैत-
दाकारान्तम्। किं तर्हि। यकारान्तमेतत् उत्तरार्थमेव तर्हि ईह-
ल्यघोरिति। तत्रापि श्नाभ्यस्तयोरित्येव। अतोऽप्युत्तरार्थमेव तर्हि
इद्दरिद्रस्येति। वक्ष्यत्येतद्दरिद्रातेरार्द्धधातुके लोपः सिद्धश्च प्रत्ययवि-
धाविति। अतोऽप्युत्तरार्थं भियोऽन्यतरस्याम्। अभ्यस्तस्येत्येव। अ-
तोऽप्युत्तरार्थमेव तर्हि जहातेश्च। अभ्यस्तस्येत्येव। अतोऽप्युत्तरार्थमा-
च हौ। हाविन्युच्यते अभ्यस्तस्येत्येव। अतोऽप्युत्तरार्थमेव लोपोऽयि।
अभ्यस्तस्येत्येव अतोऽप्युत्तरार्थमेव घ्वसोरेद्धावभ्यासलोपश्च। हावित्यु-
च्यते। तदेव तर्हि प्रयोजनं श्नसोरल्लोप इति। ननु चोक्तं श्नः सार्व-
धातुक एव अस्तेरप्यार्द्धधातुके भूभावेन भवितव्यमिति। अनुप्रयो-
गे तु भुवास्त्यबाधनं स्मरन्ति कर्त्तुर्वचनान्मनीषिणः॥ अनुप्रगे तु भू-
भावे नास्तेरबाधनमिष्यते। ईहामासतुः। ईहामासुः। किं च स्या-
द्यद्यत्र लोपः स्यात्। लोपे द्विर्वचनासिद्धिः *। लोपे कृते न चक्रत्वा-
द्द्विर्वचनं न स्यात्। स्थानिवद्भावाद्भविष्यति। स्थानिवदिति चेत्कृते
भवेद् द्वित्वे॥ स्थानिवदिति चेत् कृते द्वित्वे लोपः प्राप्नोति। अस्तु तर्हि

---

यत्र त्वस्ति तत्र भवत्येव लोपः ययतुर्ययुरिति। यायावर इति। ननु चातो लोपस्य स्था-
निवद्भावात् प्राप्त आकारलोपे वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यते। यदि चात्र श्नाभ्य-
स्तयोरात इत्यालोपः स्यात् स्थानित्वनिषेधोऽनर्थकः स्यात्। ईहल्यघोरितीत्वमत्र प्रा-
प्नोतीति चेद्वक्ष्यमाणाद्धेदाभावः। एवं तर्हि भाष्यकार आलोपप्राप्तिमभ्युपेत्य परिहारा-
न्तरमाह। नैतदाकारान्तमिति। याय् इति स्थिते सन्यङन्तस्य प्रथमैकाचो द्विर्वचनं त-
तो या याय् इत्यस्य द्विर्वचनं ततो यायाय् इत्यभ्यस्तमाकारान्तं न भवति। ननु या या-
य्शब्दस्याभ्यस्तसंज्ञायां यलोपे कृते भवत्येवावशिष्टस्याभ्यस्तसंज्ञा। एवं तर्हि उपदेश-
ग्रहणानुवृत्त्याउपदेशे यदकारान्तमभ्यस्तं तस्याल्लोपो न तु कृते यलोप इति मत्वा परि-
हार उक्तः। अभ्यस्तस्येत्येवेति। ननु च बिभीवानित्यत्रापि प्राप्नोति। एवं तर्हि छान्द-
सः कसुरिति भाष्यकारस्य दर्शनं छन्दसि च दृष्टमनुविधीयते। कृते द्वित्वे लोपः प्राप्नो-
तीति। ननु च नियनकालत्वात् स्थानिवद्भावस्य कृते द्वित्वे लक्षणप्रवृत्तिमन्तरेण स्वत
एवादेशरूपमवतिष्ठते इति कथं लोपप्राप्तिः, उच्यते। पुनः प्रवृत्तिर्लक्षणस्येति स्थानि-
वद्भावप्रकरणे प्रतिपादितम्। अस्तु तर्हीति। अनन्त्यविकारेऽन्त्यसदेशस्येति वचनात्।
अथ वा क्ङित्यनन्तरस्याकारस्य लोपः तत्र येन नाव्यवधानमित्येकवर्णव्यवहितस्य लो-

परस्य लोपः । अभ्यासस्य योकारस्तस्य दीर्घत्वं भविष्यति । नैवं सिध्यति । कस्मात् । प्रत्यङ्गत्वाङ्गवेङ्गि पररूपम्॥ न चैवं सिध्यति । कस्मात् । प्रत्यङ्गत्वात्पररूपं प्राप्नोति । तस्मिंश्च कृते लोपः ॥ पररूपे च कृते लोपः प्राप्नोति । दीर्घत्व बाधकं भवेत् ॥ तचात आदेरिति दीर्घत्व बाधकं भविष्यति । इदं तर्हि प्रयोजनं सार्वधातुके भूतपूर्वमात्रेपि यथा स्यात् कुरु इति ॥

श्नसोरल्लोपः॥ १११ ॥ अथात्र तपरकरणं किमर्थम् । इह माभूत् । आस्ताम् । आसन् । नैतदस्ति प्रयोजनम् । आटोसिद्धत्वान्न भविष्यति ॥

इद्दरिद्रस्य ॥ ११३ ॥ दरिद्रातेरार्द्धधातुके लोपः * । दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः । सिद्धश्च प्रत्ययविधौ * । स च सिद्धः प्रत्ययविधौ । किं प्रयोजनम् । दरिद्राति । दरिद्रः । आकारान्तलक्षणः प्रत्ययविधिर्मा भूदिति । न दरिद्रायके लोपो दरिद्राणे च नेष्यते । दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥१॥ अद्यतन्यां वा * । अद्यतन्यां वेति वक्तव्यम् । अदरिद्रासीत् अदरिद्रीत् ॥

---

पः । दीर्घत्वमिति । अतआदेरित्यनेन । प्रत्यङ्गत्वादिति । वर्णाश्रयत्वात्पररूपमन्तरङ्गं तत्र कृते अल्लोपे च सतुः सुरिति प्राप्नोति । दीर्घत्वमिति । येननाप्राप्तिन्यायेन पररूपं बाधित्वा दीर्घत्वं भविष्यतीत्यर्थः । कुर्विति । अत्र न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधादुत्वं न स्यादिति भूतपूर्वगत्या सार्वधातुकग्रहणाद्भवति ॥

श्नसोरल्लोपः । आस्तामिति । लङ् ताम् । अल्लोपे च कृते तस्यासिद्धत्वादाट् । नैतदस्तीति । अत्र प्रत्याख्यातं तपरकरणं परस्तात्तु ज्ञापकत्वमस्य वक्ष्यते । श्नसोरत्वे तकारेण ज्ञाप्यते त्वेत्वशासनमिति ॥

इद्दरिद्रस्य । सिद्धश्चेति । आर्द्धधातुकइति विषयसप्तमीत्यर्थः । अकारान्तलक्षण इति यद्यार्द्धधातुक इति परसप्तमी स्यात्तदा दरिद्रातीति । दरिद्र इति श्याद्व्यधेति णे कृते द्वयोरनित्ययोः परत्वाद्युच् स्यात् । लोपस्य च शब्दान्तरप्राप्त्याऽनित्यत्वम् । युकस्तु लोपे कृते ऽप्राप्त्याऽनित्यत्वम् । अथाप्याकृतिपक्षे नित्यत्वादाल्लोपस्तथाप्यदरिद्र इत्यत्राच्कावशक्ताविल्यन्तोदात्तत्वं न स्यात् । ईषद्दरिद्रमित्यातोयुजिति युच् प्रसज्येत । दिदरिद्रासतीति । तन्निपतितदरिद्राणामुपसंख्यानमिति व्यवस्थितविभाषाविज्ञानाल्लोपपक्ष इडागमः । लोपाभावपक्षे त्विडभावः । अदरिद्रासीदिति । यमरमेत्यत्रैकाच इत्यधिकारादेकाचः सगिटावित्येकीयमतमित्यनेकाचोपि भवतः । चिणि अदरिद्रि अदरिद्रायीति भवति ॥

अत एक हल्मध्येनादेशादेर्लिटि ॥ १२० ॥ णकारषकारादेरेत्ववचनं लिटि * । णकारषकारादेरेत्वं लिटि वक्तव्यम् । नेमतुः । नेमुः । सेहे । सेहाते । सेहिरे किं पुनः कारणं न सिध्यति । अनादेशादेरिति प्रतिषेधः प्राप्नोति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । लिटादेशादिं विशेषयिष्यामः । लिठि यः आदेशादिस्तदादेर्नेति । अस्त्यन्यल्लिड्ग्रहणस्य प्रयोजनम् । किम् । इह मा भूत् । पक्ता । पक्तुम् । नैतदस्ति प्रयोजनम् । क्ङितीति वर्तते । एवमपि पक्वः पक्ववानित्यत्र प्राप्नोति । अभ्यासलोपसन्नियोगेनैत्वमुच्यते न चात्राभ्यासलोपं पश्यामः । एवमपि पापच्यते अत्र प्राप्नोति । दीर्घत्वमत्र बाधकं भविष्यति । नाप्राप्ते ऽभ्यासविकारएत्वमारभ्यते । तद्यथा । अन्यानभ्यासविकारानसौ बाधते । एवं दीर्घत्वमपि बाधेत । सत्यमेवैतत् । अभ्यासविकारेष्वपि तु ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति । तत्र ह्रस्वहलादिः शेषादुत्सर्गौ तयोर्दीर्घत्वमपवादः । एत्वं च । अपवादविप्रतिषेधाद्दीर्घत्वं भविष्यति । इहापि तर्हि बभणतुः बभणुरित्यभ्यासादेशस्यासिद्धत्वादेत्वं प्राप्नोति । फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशसिद्धत्वस्य । यदयं फलिभज्योर्ग्रहणं करोति तज्ज्ञापयत्याचार्यः अभ्यासादेशः सिद्ध एत्व इति । यद्येवं प्रथमतृतीयादीनामादेशादित्वादेत्वाभावः । प्रथमतृतीयादीनामपि तर्ह्यादेशादित्वादेत्वं न प्राप्नोति । पेचतुः पेचुः । देभतुः । देभुः । न वा श-

---

अतएक । लिटि य आदेशादिरिति । नत्वसत्वयोरनैमित्तिकत्वाल्लिण्निमित्तकत्वाभावः । अभ्यासलोपसंनियोगेनेति । अभ्यासलोपश्चेति चशब्दः समुच्चये न त्वन्वाचये दीर्घत्वमत्रेति । अभ्यासविकारेषु बाधका न बाधन्तइत्येतत्तु यत्र सर्वेषां प्रवृत्तिस्तत्राश्रीयते । यद्यपि कृते दीर्घत्वे एत्वाभ्यासलोपप्रसङ्गस्तथाप्येत्वाभ्यासलोपयोः कृतयोर्दीर्घत्वाप्रसङ्ग इति विरुद्धत्वाच्च बाधकत्वाभावः । नाप्राप्त इति । क चित् ह्रस्वः क चिद्धलादिः शेषस्य प्राप्नोति । ज्यैष्टमध्यमकनीयांस इति । मध्यमापेक्षयोत्सर्गस्य प्रकर्षसद्भावात् कनीयानुत्सर्गोल्पतर इत्यर्थः । मध्यमो यः कस्य चिद्बाधकः कस्य चिद् बाध्यः। ज्येष्टो यो बाधकस्यापि बाधकः । असिद्धत्वादिति । पूर्वत्रासिद्धमिति लक्षणेन । चकणतुरित्यादावेव तु प्रतिषेधः स्यात् । पेचतुरिति । प्रकृतिचरां प्रकृतिचराः प्रकृतिजशां प्रकृतिजश इत्यादेशादित्वम् । वचनं तु रेणतुर्येमतुरित्यादौ चरितार्थम् । अभ्यासे चर्चे-

सिद्व्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्वविज्ञानस्य * । न वा एष दोषः । किं कारणम् । शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्वविज्ञानस्य । यदयं शसिदद्योः प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः । रूपाभेदेन ये आदेशादयो न तेभ्यः प्रतिषेधो भवतीति । दम्भ एत्वम् * । दम्भ एत्वं वक्तव्यम् । देभतुः देभुः । किं पुनः कारणं न सिध्यति । नलोपस्यासिद्धत्वात् । असिद्धो नलोपस्तस्यासिद्धत्वादेत्वं न प्राप्नोति । नशिमन्योरलिट्येत्वम् । नशिमन्योरलिटि एत्वं वक्तव्यम् । छन्दस्यमिपचोरपि ॥ छन्दसि अमिपचोरपीति वक्तव्यम् । किं प्रयोजनम् । अनेशं मे नकेत्येतद् व्येमानं लिङ्गि पेचिरन् ॥ यजायेजि वपावेपि ॥ यज । आयेजि । वप । आवेपि । दम्भ एत्वमलक्षणम् ॥ असिद्धत्वान्नलोपस्य दम्भ एत्वं न सिध्यति । श्नसोरत्व तकारेण ज्ञायते त्वित्वशासनम् ॥१॥ अनित्योयं विधिरिति ॥

थलि च सेटि ॥ १२१ ॥ थल्ग्रहणं किमर्थम् । थल्ग्रहणमक्ङिदर्थम् *। थल्ग्रहणं क्रियतेऽक्ङिदर्थम् । अक्ङित्येत्वं यथा स्यात् । पेचिथ । शेकिथ । नैतदस्ति प्रयोजनम् । सेड्ग्रहणमेवाचाऽक्ङिदर्थं भविष्यति । इदं तर्हि प्रयोजनं समुच्चयो यथा स्यात् । थलि च सेटि क्ङिति च सेटीति । किं प्रयोजनम् । पेचिव । पेचिम ।

---

ति जश्त्वरोः प्राप्तयोः स्थानेन्तरतम इति परिभाषाया व्यापारदर्शनमिदं प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश इति । अनेशमिति । लुङ् मिपोम्भावः । पुषादित्वादङादेशः छन्दसीति पूर्वेणापि संबन्धाद्भाषायामेत्वाभावः । एवं तु मेनकेत्यपि भाषायां न प्राप्नोति । यदि त्विष्यते पृषोदरादित्वाद्भविष्यति । मनेराशिषि चेति वुन्प्रत्ययः । न यासयोरित्यत्राशिषि चोपसंख्यानमितीत्वाभावः । व्येमानमिति । विपूर्वादमतेस्ताच्छील्यादिषु चानश्छान्दसः शपो लुक् । पेचिरन्निति पचेरन्निति प्राप्ते छान्दसे एत्वकृत्वे क्रियेते । आयेजि इति । लङ् इट् शप् छन्दस्यपि दृश्यतइति आट् । दम्भ एत्वमलक्षणमिति । लक्षणेन न प्राप्नोति नलोपस्यासिद्धत्वादित्यर्थः । श्नसोरत्व इति । असिद्धत्वस्यानित्यत्वज्ञापनाय तकारः कृतः । नित्ये त्वसिद्धत्वे आसन्नित्यादावटोऽसिद्धत्वाल्लोपो न भविष्यतीति किं तन्निवृत्त्यर्थेन तकारेण । तेन सिद्धत्वाभावाद् दम्भ एत्वं सिध्यतीत्यर्थः ॥

थलि च । थल्ग्रहणमिति । क्ङिति सेटि एत्वस्य सिद्धत्वात्सेट्ग्रहणमेवाक्ङिदर्थं भविष्यति थल् एव च सेडक्ङिद् इति प्रश्नः।क्ङितिचसेटीति । यथा पेचिवपेचिमेति ।

तत्र पचादिभ्य इड्वचनमिति वक्ष्यति तन्न वक्तव्यं भवति। इह क-
स्मान्न भवति लुलविथ। गुणस्य नेति प्रतिषेधात्। इहापि तर्हि न
प्राप्नोति। पेचिथ। शेकिथ। गुणस्य यो ऽकार इत्येवमेतद्विज्ञास्य-
ते। एवमपि शशरिथेत्यत्र न प्राप्नोति। गुणस्यैवैषोऽकारः। कथम्।
वृद्धिर्भवति गुणो भवति इति रेफशिरा गुणवृद्धिसंज्ञको ऽभिनिर्वर्तते।
अथ वा आचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामेत्वं भवतीति य-
दयं तॄ फलभजत्रपश्चेति तॄग्रहणं करोति॥

राधो हिंसायाम्॥ १२३॥ राधादिषु स्थानिनिर्देशः*। राधा-
दिषु स्थानिनिर्देशः कर्तव्यः। न कर्तव्यः। एकहल्मध्य इति वर्त-
ते। यद्येवं रेसतुः रेसुः रशब्दस्यैत्वं प्राप्नोति। अस्तु। अलोन्त्यस्य
विधयो भवन्तीति अकारस्य भविष्यति। अनर्थके ऽलोन्त्यविधिर्ने-
त्येवं न प्राप्नोति। नैतस्याःसन्ति परिभाषायाः प्रयोजनानि। अथ
वा ऽत इति वर्तते। एवमपि राधेर्न प्राप्नोति। आकारग्रहणमपि प्र-

---

इदं वचनं न नियमार्थं सेटेव कङितीति नियमे हि पेचतुरित्यादौ न स्यात्।
किं तर्हि। एत्वस्य कालावधारणं क्रियते यथा निष्ठायां सेटीत्यत्र। तेन पेचिवेत्यादाविटि
कृते एत्वाभ्यासलोपौ भवतः। अन्यथा कातीटप्रतिषेधः प्रसज्येत। यदोपदेशग्रहण-
मनुदात्तविशेषणं नैकाज्विशेषणं तदाश्रूयमाणादेकाच इतीट्प्रतिषेधेन भाव्यमिति क्र-
स्य इति सूत्रं विध्यर्थं भवति न तु नियमार्थम्। तत्र पचेरेत्वाभ्यासलोपयोः कृतयो-
रेकाच्त्वादिट्प्रतिषेधप्रसङ्गे पचादिभ्य इड्वचनमिति वक्ष्यते। कङीति च सेटीति
तु कालावधारणार्थे सति पूर्वमिट् ततो एत्वाभ्यासलोपावित्यानुपूर्व्यासिद्धं भवतीति
मार्थो वचनेन। लुलविथेति। अवादेशे कृते एकहल्मध्यगतो ऽकार इत्येत्वोप्रसङ्गः।
समुदायग्रहणे च लक्षणप्रतिपदोक्तपरिभाषोपतिष्ठते न वर्णमात्रग्रहणे। न चायमकारो
गुणशब्दाभिनिर्वृत्त इति न शसददेति प्रतिषेधोपि नास्तीति मत्वा प्रश्नः। गुणस्य यो-
कार इति। वैयधिकरण्येन संबन्ध आश्रीयते। लुलविथेत्यादावीकारस्यावादेशविधानाद्
गुणस्याकार इति प्रतिषेधः प्रवर्तते। पेचिथेत्यादौ तु गुणएवाकारो न तु गुणस्येतिप्रतिषे-
धाभावः। एवमपीति। गुण एवात्राकारो न तु गुणस्येति प्रतिषेधाऽप्रसङ्गः। गुणस्येति।
अवयव इत्यर्थः। उः स्थानेण् प्रसज्यमान एव रपरो भवति पूर्वभक्तस्य रेफ इत्ययं गुणः॥

राधो राधादिष्विति। अलोन्त्यस्येति वचनादेत्वमन्त्यस्य प्राप्नातीत्युपधाया इति
वक्तव्यमित्यर्थः। अथ वात इति। ततो भ्रमादीनामेवैत्वमाकारस्य भवति। अकारेऽसे-

कृतमनुवर्तते। क्व प्रकृतम्। श्नाभ्यस्तयोरात इति। अथ वा श्नसोरल्लोप इत्यत्र तपरकरणं प्रत्याख्यायते । तत्प्रकृतमिहानुवर्तिष्यते । यदि तदनुवर्तते। अत एकहल्मध्ये नादेशादेर्लिटि। अस्य चेति । अवर्णमात्रस्यैवं प्राप्नोति। बबाधे ।अकारेण तपरेणाऽवर्णं विशेषयिष्यामः । अस्याऽत इति । इहेदानीमस्येत्यनुवर्तते अत इति निवृत्तम् ॥

अर्वणस्त्रसावनञः ॥ १२७ ॥ मघवा बहुलम् ॥ १२८ ॥ अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् । अर्वणस्तृ मघोनश्च न शिष्यम् । किं कारणम् । छान्दसं हि तत् ॥ दृष्टानुविधिश्छन्दसि भवतीति । मतुब्वन्योर्विधानाच्च । मतुब्वनौ खल्वपि छन्दसि विधीयेते । छन्दस्युभयदर्शनात् ॥ उभयं खल्वपि छन्दसि दृश्यते । इमाअथर्वणः पदानि अनर्वाणं वृषभं मन्द्रजिह्वम् ॥

इति श्रीमहाभाष्ये षष्ठाध्यायस्य चतुर्थे
पादे तृतीयमाह्निकम् ॥

पादः पत् ॥१३०॥ पादउपधाङ्गस्वत्वम् * । पादउपधायाङ्गस्वत्वं वक्तव्यम् । द्विपदःपश्य । आदेशे हि सर्वादेशप्रसङ्गः * । आदेशे हि सर्वादेशः प्रसज्येत । सर्वस्य द्विपाच्छब्दस्य त्रिपाच्छब्दस्य च पच्छब्द आदेशः प्रसज्येत । येनविधिस्तदन्तस्येति । तत्तर्हि वक्तव्यम् ।

---

ति। समुच्चयेऽत इत्यनर्थकं स्यादिति विशेषणविशेष्यभावाश्रयः ॥

अर्वणः । छान्दसमिति । छन्दसीवनिपावति वनिबस्ति मतुप् चेति प्रत्ययद्वयेन रूपद्वयसिद्धत्वान्नार्थः सूत्रद्वयेन । तत्रैतत्स्यात्सर्वत्र रूपद्वयप्रसङ्गो ऽत आह । दृष्टानुविधिरिति। भाषाशब्दा अपि नियतविषयाः । किं पुनश्छान्दसाः । तत्र ऋ इत्यस्य विच्चिगुणे अरिति रूपं तस्मान्मतुप्यर्वन्तावित्यादि भवति । वनिप्यर्नण इत्यादि भवति । मघशब्दादपि प्रत्ययद्वये यथाविषयं रूपद्वयं सिद्धम् । एवं चार्वन्मघवन्शब्दस्य भाषायां नास्ति प्रयोग इत्युक्तं भवति ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठाध्यायस्य
चतुर्थे पादे तृतीयमाह्निकम् ॥

पादः पत् । आदेशे हीति। पादन्तस्याङ्गस्य पदादेशो विधीयमानो ऽनेकाल्त्वा-

न वा निर्दिश्यमानस्यादेशत्वात्*। न वा वक्तव्यम्। किं कारणम्। निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा कर्तव्या। कः पुनरत्र विशेषः। एषा वा परिभाषा क्रियेत उपधाङ्गस्येत्व वोच्यते। अवश्यमेषा परिभाषा कर्तव्या बहून्येतस्याः परिभाषायाः प्रयोजनानि। कानि पुनस्तानि प्रयोजनानि। प्रयोजनं सुप्तिङादेशेषु ॥ सुप्। कुमार्याम् किशोर्याम्। खट्वायाम्। मालायाम्। तस्याम्। यस्याम्। आड्याट्स्याट्सु कृतेषु आड्याट्स्याट्कस्याम्प्राप्नोति। निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति। इदमिह संप्रधार्यम्। आड्याट्स्याटः क्रियन्ताम्आमिति। किमत्र कर्तव्यम्। परत्वादाम्। नित्या आड्याट्स्याटः। कृतेप्यामि प्राप्नुवन्त्यकृतेपि। अनित्या आड्याट्स्याटः। कथम्। अन्यस्य कृते आमि प्राप्नुवन्त्यन्यस्याकृते। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। उभयोरनित्ययोः परत्वादाम्। इदं तर्हि यस्यै तस्यै स्याटि कृते सस्याट् कस्य स्यैभावः प्राप्नोति। निर्दिश्यमानस्यादेशाभवन्तीति नदोषो भवति। यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति। स्याटा व्यवहितत्वात्। सुप्। तिङ्। अरुदिताम्। अरुदितम्। अरुदितेति इटि कृतेसेट्कस्य तांतंतामादेशाः प्राप्नुवन्ति। निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति। इदमिह संप्रधा-

---

त् सर्वादेशः प्राप्नोति। नवेति। यद्यपि पाच्छब्देन तदन्तः समुदायः प्रत्याय्यते तथापि यो निर्दिश्यते यतः षष्ठी श्रूयते तस्यैव षष्ठी स्थानेयोगेति वचनादादेशो न तु प्रतीयमानस्य। यद्यप्युच्चार्यमाणस्यानुकरणस्यादेशेन संबन्धाभावस्तथाप्यनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादेवमुक्तम्। तत्र यथालोन्त्यस्येति वचनाद्दुहः प इत्युक्ते र्गाह हकारस्य पकारो भवति। एवं पाच्छब्दप्रत्यायिततदन्तसमुदायावयवस्य पाच्छब्दस्य पदादेशः। न दोषो भवतीति। अत्रैवं वक्तव्यम्। यो निर्दिश्यते तस्यागमैर्व्यवधानादाम्न प्राप्नोति। अत एव परत्वाश्रयेणाव्यवधानं कर्तुमाह। इदमिहेति। आडादीनामवकाशः। खट्वायाः। कुमार्याः। सर्वस्या इत्यामो ऽवकाशः। कृतेष्वाडादिषु वचनाद्व्यवधानेपि प्रवर्तनात्। यदि तु नाप्राप्तेष्वडादिष्वादेश आरभ्यते इत्युच्यते। ततोपवादत्वादामा तेषां बाधः प्राप्नोति इत्यागमानामादेशस्य चात्र समावेश एष्टव्यः। सेट्कस्येति। प्राग्लादेशेभ्यो धात्वधिकार इत्यस्मिन् पक्षे ऽत्रप्यनुपादानाद्व्यवधानात्तामादीनामप्रसङ्ग इति

र्यताम् । इट् क्रियतां तांतंताम इति । किमत्र कर्तव्यम् । परत्वादिडागमः अन्तरङ्गास्तांतंतामः । इदं तर्हि क्रियास्ताम् । क्रियास्तम् । क्रियास्त । क्रियासम् । यासुटि कृते सयासुट्कस्य तांतंतामः प्राप्नुवन्ति । निर्दिश्यमानस्यादेशा भवन्तीति दोषो भवतीति । ल्यब्भावे च ॥ ल्यब्भावे च प्रयोजनम् । प्रकृत्य । प्रहृत्य । क्त्वान्तस्य ल्यप् प्राप्नोति । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु प्रयोजनम् ॥ अतितिस्रः । अतिचतस्रः । त्रिचतुरन्तस्य तिसृचतसृभावः प्राप्नोति । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । युष्मद् अस्मद् अतियूयम् । अतिवयम् । युष्मदस्मदन्तस्य यूयवयौ प्राप्नुतः । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । त्यदादिविकारः। अतिस्यः । उत्तमस्यः। अत्यसौ । उत्तमासौ । त्यदाद्यन्तस्य त्यदादिविकाराः प्राप्नुवन्ति । किमन्तस्य कादेशः प्राप्नोति । अतिकः । परमकः । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । उदस्थास्तम्भोः पूर्वत्वे प्रयोजनम् । उदस्थात् । उदस्थाताम् । अटि कृते साट्कस्य पूर्वसवर्णः प्राप्नोति उदः स्थास्तम्भोरिति । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति । अटा व्यवहितत्वात् । सा तर्ह्येषा परिभाषा कर्तव्या । न कर्तव्या । उक्तं षष्ठी स्थाने योगेत्यस्य वचने प्रयोजनम् । षष्ठ्यन्तं स्थानेन युज्यते । य-

---

नोच्यते । अन्तरङ्गा इति । प्राग्लादेशेभ्यो धात्वधिकारात्तामादयोन्तरङ्गाः । क्रियास्तामिति । परत्वादन्तरङ्गत्वाद्वा यासुटि कृते तामादयः । क्त्वान्तस्येति । प्रत्ययग्रहणपरिभाषया धातुप्रत्ययसमुदायस्य ल्यपः प्रसङ्गः । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमित्येषा तु परिभाषा ऽनञ्पूर्व इति वचनान्नोपतिष्ठते । सामान्यशब्दस्यापि ल्यपः प्रकरणाद्यपेक्षस्य विशेषावसायहेतुत्वं स्यात् । अतिस्य इति । शोभनः स्य इत्युत्तरपदार्थप्रधानस्तत्पुरुषो द्रष्टव्यः । उपसर्जने तु त्यदाद्यत्वाभावः । अत्र पदाङ्गाधिकार इति वचनात्तदन्तस्य समुदायस्यातिशब्दतकारस्यापि तदोः सः सावनन्त्ययोरिति सत्वप्रसङ्गः । अत्वं त्वलोन्त्यस्येति वचनादन्त्यस्यैव भवति इति तत्र विशेषाभावः । परमक इति । अनेकाल्त्वात्सर्वादेशः कः प्राप्नोति । ननु सत्वविधौ त्यदादीनामिति न स्थानषष्ठी । का तर्हि तदोरित्येषेति । कथं सत्वमतिशब्दतकारस्य परिक्रियते । एवं तर्हि त्यदादीनां गणप्रवि-

तः षष्ठी उच्चारितेति ॥

वाह ऊठ् ॥ १३२ ॥ ऊडादिः कस्मान्न भवति । आदिष्टिन्नवतीत्यादिः प्राप्नोति । संप्रसारणमित्यनेन यणः स्थाने क्रियते । यद्येवं, वाह ऊड्वचनानर्थक्यं संप्रसारणेन कृतत्वात् *। वाह ऊड्वचनमनर्थकम् । किं कारणम् । संप्रसारणेन कृतत्वात् । संप्रसारणेनैव सिद्धम् । का रूपसिद्धिः । प्रष्ठौहः पश्य । गुणः प्रत्ययलक्षणत्वात्*। प्रत्ययलक्षणत्वाद् गुणो भविष्यति । एज्ग्रहणाद् वृद्धिः * । एज्ग्रहणाद् वृद्धिर्भविष्यति । एवं तर्हि सिद्धे सति यद्वाह ऊठं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । किमेतस्य ज्ञापने प्रयोजनम् । पचावेदम् । पचामेदम् । असिद्धत्वाद्बहिरङ्गलक्षणस्याद्गुणस्यान्तरङ्गलक्षणमैत्वं न भवति ॥

श्वयुवमघोनामतद्धिते ॥ १३३ ॥ श्वादीनां संप्रसारणे नकाराविष्टानां यौ निर्दिश्येते तकारदकारौ तयोः सत्वविधानादतिप्रसङ्गाभावः ॥

---

वाह ऊठ् । ऊडादिरिति । यद्यपि च्छ्वोः शूडित्यत्रास्य ठित्वं प्रतिपादितं तथापि यथाश्रुतं गृहीत्वा प्रश्नः । संप्रसारणमित्यनेनेति । वाक्यस्य भाविवर्णस्य वा संप्रसारणसंज्ञायां विज्ञायमानायां यणः स्थाने ऊड् भवति । अथ यण आदिरूठ् कस्मान्न भवति। संप्रसारणाप्रदेशान्तरेषु यण इति स्थानषष्ठ्याश्रयणादिहापि श्रुतषष्ठ्येव युक्ता । यथोक्तं सप्तदशादेशाः स्थानेयोगत्वं प्रयोजयन्तीति । किन्करणन्तु वृद्ध्यर्थम् । यद्येवमिति । प्रष्ठवाह अस् इति स्थिते वकारस्य संप्रसारणे पूर्वैकादेशे कृते गुणो ओकारो रिक्षप्रत्ययाश्रयः । तथा वृद्धिरेचीति वृद्धौ कृतायां प्रष्ठौह इत्यादि सिध्यति । अनकारान्ते चोपपदे छन्दसि ण्विर्न दृश्यत इति शाल्यूह इत्यादिसिद्ध्यर्थमप्यूड्विधानं नोपपद्यते । सत्यपि वा प्रयोगे वह्यर्थे प्रवर्त्तमानस्योहतेः क्विपि शाल्यूह इत्यादि भविष्यति । उपसर्गेप्युपपदे वहेर्ण्विः छन्दसि नास्ति । यतो वृद्धिबाधकं पररूपं प्रसज्येतेत्यूठ् विधानं सार्थकं स्यात् । एवं तर्हीति । संप्रसारणं यजादिप्रत्ययनिमित्तभसंज्ञाश्रयत्वाद्बहिरङ्गमन्तरङ्गे व्याश्रये गुणे कर्तव्ये ऽसिद्धमिति गुणो न स्यात्तदभावे रूपं न सिध्येदित्यूठ् विधानमसिद्धपरिभाषां ज्ञापयति । ननु नैतज्ज्ञापकसाध्यं लोकतः सिद्धत्वात् । प्रत्यङ्गवर्ती हि लोकः। नैतदस्ति । यत्र युगपदन्तरङ्गबहिरङ्गयोः प्राप्तिस्तत्र लौकिकन्यायाश्रयणाद्भवत्वन्तरङ्गम् । इह तु बहिरङ्गनिमित्तमन्तरङ्गमिति लौकिकन्यायानवतारः ॥

श्वयुव । श्वादीनामिति । मघवा बहुलमिति त्रादेशे कृते एकदेशविकृतस्यानन्य-

न्तग्रहणमनकारान्तप्रतिषेधार्थम् * । श्वादीनां संप्रसारणे नकारान्तग्रहणं कर्तव्यम् । किं प्रयोजनम् । अनकारान्तस्य मा भूत् । मघवता । मघवते । तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति यूनः पश्येति । एवं युवतीः पश्येत्यत्रापि स्यादिति । यत्तावदुच्यते नकारान्तग्रहणं कर्तव्यमिति । न कर्तव्यम् । उक्तं वा * । किमुक्तम् । उक्तमेतदर्वणस्तृमघोनश्च न शिष्यं छान्दसं हि तद् इति । यदप्युच्यते । तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति यूनः पश्येति एवं युवतीः पश्येत्यत्रापि स्यादिति। लिङ्गविशिष्टग्रहणे चोक्तम्। न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति । अथवोपरिष्टाद्योगविभागः करिष्यते । श्वयुवमघोनामतद्धिते । अल्लोपः । अकारस्य च लोपो भवति । ततोऽनद्इत्युभयोः शेषः । श्वयुव ॥

षपूर्वहन्धृतराज्ञामणि॥ १२५॥ अथ किमिदं षपूर्वादीनां पुनर्वचनमल्लोपार्थमाहो स्विन्नियमार्थम्। कथं वा अल्लोपार्थं कथं वा नियमार्थम् । यद्यविशेषेणाल्लोपटिलोपयोः प्रकृतिभावस्ततो विध्यर्थम्। अथ हि अणिटिलोपस्यैव प्रकृतिभावस्ततोनियमार्थम्*। अत उत्तरं पठति। षपूर्वादीनां पुनर्वचनमल्लोपार्थम् । षपूर्वादीनां पुनर्वचनं क्रियते अल्लोपार्थम् । अविशेषेणाल्लोपटिलोपयोः स प्रकृतिभावः । अवधारणे ह्यन्यत्र प्रकृतिभावे उपधालोपप्रसङ्गः * । अवधारणे हि सति अ-

---

त्वान्मघवतेत्यादौ संप्रसारणप्रसङ्गः । अर्वणस्त्रिति । मघवच्छब्दो मतुबन्त इत्यर्थः । न वा विभक्ताविति । यद्यपि विभक्तिमाश्रित्य संप्रसारणं विधीयते तथापि विभक्तौ विधीयतइति लिङ्गविशिष्टपरिभाषानुपस्थानम् ।अन इत्युभयोः शेष इति । समुदायापेक्षणात्। न च ङ्यादेशे कृते सन्नन्तत्वमस्ति । एकदेशविकृतस्यानन्यत्वेनाप्यन्नन्तत्वं नास्ति। सामान्यातिदेशे विशेषानतिदेशात् । युवतिशब्दोप्यन्नन्तो न भवतीति तस्यापि संप्रसारणाभावः ॥

षपूर्व । अथेति । किमिदं विध्यर्थमथ नियमार्थमिति प्रश्नः । यद्यविशेषेणेति । प्रकृत्यैकाजित्यादिः प्रकृतिभावः प्राकरणिकविध्यपेक्षो न तु वृद्धिगुणापेक्षः । तत्राकरणिकानि कार्याणि भेदेनापेक्षेरन् अभेदेन वेति पक्षद्वयोपपत्तिः । अविशेषेणेति । अल्लो-

न्यत्र प्रकृतिभावे उपधालोपः प्रसज्येत। कथम्। यदि तावदेवं नियमः स्यात् षपूर्वादीनामेवाणीति। एवमपि भवेदिह नियमान्न स्यात्। सामनो वैमन इति। ताक्षण्य इति च प्राप्नोति। अथाप्येवं नियमः स्यात्। षपूर्वादीनामण्येवेति। एवमपि भवेदिह नियमान्न स्यात् ताक्षण्य इति। सामनो वैमन इत्यत्र तु प्राप्नोति। अथाप्युभयतो नियमः स्यात् षपूर्वादीनामेवाणि अण्येव षपूर्वादीनामिति। एवमपि सामन्यो वैमन्य इति प्राप्नोति। तस्मात्सुष्ठूच्यते षपूर्वादीनां पूर्ववचनमल्लोपार्थमवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्ग इति॥

आतो धातोः॥ १४०॥ आतोनापः *। अतोऽनाप इति वक्तव्यम्। इहापि यथा स्यात्। समासे नञ्पूर्वे क्त्वो ल्यबिति। अनाप इति किम्। खट्वायाम्। मालायाम्। यद्यनाप इत्युच्यते कथं क्त्वायामिति। निपातनात्सिद्धम्। किं निपातनम्। क्त्वायां च प्रतिषेध इति। यद्येवं, नार्थोऽनाप इत्यनेन। कथम्। समासेऽनञ्पूर्वे क्त्वो ल्यबिति निपातनादेतत्सिद्धम्। कथम्। हलः श्नः शानज्झाविति। एतदपि निपातनात्सिद्धम्। अथ वा योगविभागः करिष्यते। आतः। आकारलोपो भवति। ततो धातोः। धातोश्चाकारस्य लोपो भवतीति॥

मन्त्रेष्वाङ्यादेरात्मनः॥ १४१॥ मन्त्रेष्वात्मनः प्रत्ययमात्रे *।

---

पटिलोपसमुदायमपेक्ष्य प्रकृतिभावो विधीयते। ताक्षण्य इति। तक्ष्णोपत्यमिति सेनान्तलक्षणेति ण्यः। ये चाभावकर्मणोरिति प्रकृतिभावाट्टिलोपाभावः। अस्मान्नियमादल्लोपाभावः। सामन इति। सास्यदेवतेत्यण्। अन्नान्निति प्रकृतिभावाट्टिलोपाभावे ऽल्लोपप्रसङ्गः। अथापीति। तन्त्रस्यावृत्तेर्वाश्रयणात्। सामन्य इति। तत्रसाधुरिति यत्॥

आतो। समास इति। ननु सौत्रोयं निर्देश इति किं तदर्थेन योगविभागेन। एवं तर्हि यदा वैयाकरणा अनुकरणशब्दैर्व्यवहारमिच्छन्ति तदर्थोयोगविभागः। ते हि साधुभिर्व्यवहरमाणा अभ्युदयभाजो भवन्ति। क्त्वायामिति। निपातनाल्लोपाभावो याडागमश्च। सामान्यापेक्षं च निपातनं सप्तम्यपेक्षम्। क्त्वाया इत्यपि भवति। ततो धातोरिति। इदं नित्यार्थं सत्पूर्वेण विकल्पं ज्ञापयति। सा च व्यवस्थितविभाषेत्याबन्तस्याल्लोपाभावो ऽन्यस्य यथाप्रयोगं विकल्पः। क्व चित् स्त्रीलिङ्ग पुल्लिङ्गाश्रयं क्त्वाया क्त्व इत्यादिरूपद्वयं व्याचक्षते॥

मन्त्रे। आङिति पूर्वाचार्यप्रक्रिययैकवचनग्रहणादव्याप्तिं मत्वाह। मन्त्रेष्विति।

मन्त्रेष्वात्मनः प्रत्ययमात्रे लोपः प्रसङ्क्तव्यः । इहापि तथा स्यात् । त्मन्या समञ्जन् । त्मनोरन्तरस्य इति । यदि प्रत्ययमात्रे लोप उच्यते । कथमात्मन एव निर्मिमीष्वेति । तस्मान्नार्थः प्रत्ययमात्रे लोपेन । कथं त्मन्या समञ्जन् । त्मनोरन्तरस्य इति । छान्दसत्वात्सिद्धम् । दृष्टानुविधिश्छन्दसि भवति । आदिग्रहणानर्थक्यमाकारप्रकरणात् *। आदिग्रहणं चानर्थकम् । किं कारणम् । अकारप्रकरणात् । आत इति वर्तते । मन्त्रेष्वाङ्यादेरात्मनः ॥

ति विंशतेर्डिति ॥ १४२ ॥ तिग्रहणं किमर्थम् । न विंशतेर्डिति लोप इत्येवोच्येत । नैवं शक्यम् । विंशतेर्डिति लोप इतीयत्युच्यमानेऽन्त्यस्य प्रसज्येत । सिद्धोऽन्त्यस्य यस्येति लोपेनैव । तत्रारम्भसामर्थ्यात्तिशब्दस्य भविष्यति । कुतो नु खल्वेतत् । अनन्त्यार्थ आरम्भे तिशब्दस्य भविष्यति न पुनरङ्गस्येति । तस्मात्तिग्रहणं कर्तव्यम् । अथ क्रियमाणेपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति । निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यति ॥

टेः ॥ १४३ ॥ अभस्योपसंख्यानम् * । अभस्योपसंख्यानं कर्तव्यम् । इहापि यथा स्यात् । उपसरजोमन्दुरज इति । तत्तर्हि वक्तव्यम् । नवक्तव्यम् । कथमुपसरजो मन्दुरज इति । डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् * । अभस्याप्यनुबन्धकरणसामर्थ्याद्भविष्यति ॥

---

त्मन्येति । सप्तम्येकवचनस्य स्थाने याशब्द आदेशः । छान्दसत्वादिति । यथा शिवाश्वद्रस्येति प्राप्ते शिवारुद्रस्येति रेफलोपः । एवमिहाकारलोपः । एवं च ब्रुवता सूत्रमेव प्रत्याख्यातम् । सति त्वारम्भे नार्थं आदिग्रहणेन । आतो धातोरित्यत आत इत्यनुवर्तनात् ॥

ति विं । कुतो नु खल्विति । वचनसामर्थ्यादलोन्त्यपरिभाषाया अनुपस्थानात्समुदायस्यैव षष्ठीनिर्देशाल्लोपः प्रसज्येत न त्वसंशब्दितस्य तिशब्दस्य । तिग्रहणे तु सति तेर्लोपो भवति । निर्दिश्यमानस्यादेशा भवन्तीति । नानेन परिभाषाया व्यापारः कथ्यते । नह्वि निर्दिश्यमानपरिभाषा अलोन्त्यस्यादेः परस्येत्येतयोर्बाधिका । एतयोर्निर्विषयत्वप्रसङ्गात् । तस्मात्तिग्रहणसामर्थ्यादलोन्त्यस्यानुपस्थाने सर्वस्य लोपो भवतीत्ययमस्य भाष्यस्यार्थः ॥

टेः । डित्यभस्यापीति । चुटू इति वचनादित्संज्ञा तावड्डकारस्य प्रवर्तते । दीर्घं काश्युपभाष्ट्रवटंजे इति निर्देशात् । ततश्चानुबन्धकरणसामर्थ्याद् भस्येति प्रकरणमिह बाध्यते ॥

नस्तद्धिते ॥ १४४ ॥ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् *। नकारान्तस्य टिलोपे सब्रह्मचारिन्पीठसर्पिन्कलापिन्कौथुमिन्तैतिलिन्जाजलिन्लाङ्गलिन्शिलालिन्शिखण्डिन्सूकरसद्मन्सुपर्वन् इत्येतेषामुपसंख्यानं कर्तव्यम्। सब्रह्मचारिन्। सब्रह्मचारिण इमे साब्रह्मचाराः। सब्रह्मचारिन्। पीठसर्पिन्। पैठसर्पाः। पीठसर्पिन्। कलापिन्। कालापाः। कलापिन्। कौथुमिन्। कौथुमाः। कौथुमिन्। तैतिलिन्। तैतिलाः। तैतिलिन्। जाजलिन्। जाजलाः। जाजलिन्। लाङ्गलिन्। लाङ्गलाः। लाङ्गलिन्। शिलालिन्। शैलालाः। शिलालिन्। शिखण्डिन्। शैखण्डाः। शिखण्डिन्। सूकरसद्मन्। सौकरसद्माः। सूकरसद्मन्। सुपर्वन्। सौपर्वाः। सुपर्वन्। चर्मणः कोशे *। चर्मणः कोश उपसंख्यानं कर्तव्यम्। चार्मः कोशः। अश्मनो विकार उपसंख्यानम् *। अश्मनो विकार उपसंख्यानं कर्त्तव्यम्। अश्मनो विकार आश्मः। शुनः संकोचे *। शौवः संकोचः। अव्ययानां च सायंप्रातिकाद्यर्थम् *। अव्ययानां च सायंप्रातिकाद्यर्थमुपसंख्यानं कर्त्तव्यम्। किं प्रयोजनम्। सायंप्रातिकाद्यर्थम्। सायंप्रातिकः। पौनः पुनिकः। शाश्व-

---

नस्तद्धिते। नकारान्तस्येति। इनण्यनपत्ये अन्विति च प्रकृतिभावे प्राप्ते वचनम्। सब्रह्मचारिण इति। तस्येदमित्यण्। पीठेन सर्पतीति पीठसर्पी पूर्ववदण्। कलापिना प्रोक्तमधीयते कालापाः। कलापिनोणित्यण्। ततोध्येतृवेदितृप्रत्ययस्य प्रोक्ताल्लुगिति लुक्। कौथुमिना प्रोक्तमधीयते कौथुमाः। तेन प्रोक्तमित्यण्। पूर्ववत् द्वितीयस्याणो लुक्। तैतिलिजाजलिलाङ्गलिप्रोक्तमध्ययनं साहचर्यात्तैतिल्यादिशब्दैरुच्यते। तेभ्यस्तदधीते तद्वेदेत्यण् प्रत्ययः। तेन प्रोक्तमित्यत्र तु शैषिकेर्थे वृद्धाच्छ इति छः प्रसज्येत। केचित्तु तितितिलशब्दमत्राधीयते। चार्म इति। तस्य विकार इत्यण्। शौव इति। तस्येदमित्यण् स्तो ग्रामजनपदमनुष्येभ्य इत्येतत्तु प्रत्याख्यातम्। अत्र परत्वाद्वृद्धौ प्राप्तायां द्वारादीनामेव तत्प्रतिषेधे ऐजागमे च कृते टिलोपः क्रियते। संकोचादन्यत्रशौवन इति। विकारावयवयोः प्राण्यणि प्रकृतिभावाच्छौव इत्येव भवति। सायंप्रातिक इति। सायंप्रातः शब्दाद् इन्द्वाट्ठजितिठच्प्रत्ययः। यथाकथंचित्कालशब्दादपि ठञ् भवतीति कालसमुदायवाचिनोपि ठञ्भवति। पौनः पुनिक इति। पूर्ववट्ठञ्। आदिशब्दः प्रकारे टिलो-

तिके प्रतिषेधो वक्तव्यः * । न वक्तव्यः । निपातनादेतत्सिद्धम् । किं निपातनम् । येषां च विरोधः शाश्वतिक इति । एवं तर्हि शाश्वते प्रतिषेधो वक्तव्यः । शाश्वतम् । नस्तद्धिते ॥

यस्येति च ॥ १४८ ॥ इवर्णस्येति किमुदाहरणम् । हे दाक्षि । दाक्ष्या । दाक्षेयः । हे दाक्षि इति । यदि लोपो न स्यात्परस्य ह्रस्वत्वे कृते सवर्णदीर्घत्वं प्रसज्येत । दाक्ष्या इति । यदि लोपो न स्यात्परस्य यणादेशे कृते पूर्वस्य श्रवणं प्रसज्येत । दाक्षेय इति । यदि लोपो न स्यात् परस्य लोपे कृते पूर्वस्य श्रवणं प्रसज्येत । नैतानि सन्ति प्रयोजनानि । सवर्णदीर्घत्वेनाप्येतानि सिद्धानि । इदं तर्हि अतिसखेरागच्छति । अतिसखिः स्वम् । यदि लोपो न स्याद् उपसर्जनह्रस्वत्वे कृते असखीति प्रतिषेधः प्रसज्येत । यस्येत्यादौ श्यां प्रतिषेधः*। यस्येत्यादौ श्यां प्रतिषेधो वक्तव्यः । काण्डे सौर्येनाम हि-

---

पदर्शनेन च साहश्यमाश्रीयत इति आरातीयः शाश्वतिक इत्यत्र टिलोपाभावः । निपातनादिति । अत एव निपातनात्तान्तादिति कादेशाभावः । शाश्वतमिति । भाष्यकारवचनप्रामाण्यादण्प्रत्ययः ॥

यस्येति च । सवर्णदीर्घत्वे लोपे वा नास्ति विशेष इति मत्वा पृच्छति । इवर्णस्येति हेदाक्षीति । दाक्षिशब्दादितोमनुष्यजातेरिति ङीषि कृते तस्य सम्बुद्धौ ह्रस्वे कृते सवर्णदीर्घस्य श्रवणप्रसङ्गः ननु चान्तरङ्गत्वात्सवर्णदीर्घत्वे कृते ह्रस्वो भविष्यति । एवं तर्हि वार्णादाङ्गं बलीय इति ह्रस्वत्वं मन्यते । दाक्षि ई आ इति स्थिते शब्दविप्रतिषेधात्परस्य यणादेशे कृते पूर्वस्य यणादेशप्रसङ्गः। सवर्णदीर्घस्यापूर्वविधित्वात्तत्र कर्तव्ये यणादेशस्य नास्ति स्थानिवत्त्वम् । यणादेशे पि कर्तव्ये वर ई इतिइकाकारप्रश्लेषाद्दीर्घ विधिं प्रति स्थानित्वनिषेधः दाक्षी ई इति स्थिते स्त्रीभ्यो ढगिति ढकि कृते परस्य लोपे कृते पूर्वस्य श्रवणप्रसङ्गः । परलोपस्य स्थानिवद्भावात्तद्धितनिमित्तस्य लोपस्याप्रसङ्गात् । नैतानीति । यत्राङ्गवार्णयोर्युगपत्प्रसङ्गस्तत्र वार्णादाङ्गं बलीयो भवतीति भावः । यण्ढकौ त्वाङ्गौ न भवतः । इदं तर्हीति । सखिशब्दात्सख्यशिश्वीति भाषायामिति ङीषि कृते सखीमतिक्रान्त इति प्रादिसमासे कृते लिङ्गविशिष्टपरिभाषाया अनित्यत्वादसति टचि गोस्त्रियोरिति ह्रस्वः । तत्रासतीकारलोपे एकादेशस्य पूर्वान्तवद्भावाद् घिसंज्ञाप्रतिषेधःस्यात् । प्रसज्यप्रतिषेधे चायं दोषो न तु पर्युदासे तदन्तस्य सखिशब्दादन्यत्वाद् घिसंज्ञायाः सिद्धत्वात् । ङीषि तु लोपे कृते ह्रस्वत्वे च कृते लाक्षणिकत्वात् सखिरूपस्य घिसंज्ञायाः प्रतिषेधाभावः । काण्डे इति । यचि भमिति भत्वाल्लोपः प्राप्नोति । सौर्ये इति । सू-

भवतः शृङ्गे । स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । इह श्यामित्यपि प्रकृतं नेत्यपि । तत्राभिसंबन्धमात्रं कर्तव्यम् । यस्येत्यादौ लोपो भवति श्यां न । इयङुवङ्भ्यां लोपो विप्रतिषेधेन*। इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन । इयङुवङोरवकाशः । श्रियौ । श्रियः । भ्रुवौ । भ्रुवः । लोपस्यावकाशः । कामण्डलेयः । माद्रबाहेयः । इहोभयं प्राप्नोति । वात्सप्रेयो लैखाभ्रेयः । लोपो भवति विप्रतिषेधेन । गुणवृद्धी च * । गुणवृद्धी चेयङुवङ्भ्यां भवतो विप्रतिषेधेन । गुणवृद्ध्योरवकाशः । चेता । गौः । इयङुवङोः स एव । इहोभयं प्राप्नोति । चयनम् । चायकः । गुणवृद्धी भवतो विप्रतिषेधेन । नवेयङुवङादेशस्यान्यविषयवचनात् *। न वार्थो विप्रतिषेधेन किं कारणम् । इयङवङादेशस्यान्यविषये वचनात् । इयङुवङादेशः अन्यविषये आरभ्यते । किं विषये । यणादेशविषये । यथैव यणादेशं बाधते । एवं गुणवृद्धी अपि बाधेत । तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधः । तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधो वक्तव्यः । न वक्तव्यः । मध्ये ऽपवादाः पूर्वान्विधीन्बाधन्तइत्येवमियङुवङादेशो यणादेशं बाधिष्यते । गुणवृद्धी न बाधिष्यते । यस्येति च ॥

सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ १४९ ॥ सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् * । सूर्यादीनामणन्ते ऽप्रसिद्धिः । सौरी बलाका । किं कारणम् । अङ्गान्यत्वात् । अणन्तमेतदङ्गमन्यदङ्गं भवति ।

---

येणैकादिति तेनैकदिगित्यण् । तत्र यस्येति चेत्यकारलोपः प्राप्नोति सूर्यतिष्येति यलोपश्च । यथा तु वक्ष्यते सूर्यमत्स्ययोर्ङ्यामिति तथात्र यलोपस्याप्रसङ्गः इह श्यामिति । विभाषा ङिश्योरित्यतः श्योग्रहणं न संयोगाद्वमन्तादित्यतो नेति चानुवर्त्तते । तेन वाक्यभेदेन श्यां कथं प्रतिषिध्यते । कामण्डलेय इति चतुष्पाद्भ्यो ढञिति ढञ् । एवं वात्सप्रेय इति लैखाभ्रेय इति । शुभ्रादिभ्यश्चेति ढक् । इयङुवङोरादेश इति । षष्ठीसमासः । यथेहेयङुवङौ सर्वत्र ान्यपूर्वकौ नैवं गुणवृद्धी इति विप्रतिषेधानुपपत्तिरित्यर्थः ।

सूर्य । सौरीति । तेनैकदिगित्यण् । तदन्तान्ङीप् । इकारे परतोत्र सूर्यशब्दोङ्गं न भवति । किं तर्हि अणन्तमिति यकारलोपाप्रसङ्गः। पुंयोगविवक्षायां तु देवतायां चाविधानादन्यत्र ङीषि कृते सूर्यशब्दोङ्गमीकारे भवतीति तत्रैव लोपः स्यात् सूरीति । अङ्गान्यत्वादिति । राजदन्तादित्वात्परनिपातः । यलोपविधिमिति । उपधाविधिं प्रति नेति तु

लोपे कृते नाङ्गान्यत्वम्। स्थानिवद्भावादङ्गान्यत्वं भवति। सिद्धं तु स्थानिवद्भावप्रतिषेधात् *। सिद्धमेतत्। कथम्? स्थानिवत्प्रतिषेधात्। प्रतिषिध्यतेऽत्र स्थानिवद्भावः। यलोपविधिं प्रति न स्थानिवद्भवतीति। एवमपि न सिध्यति। किं कारणम्। अङ्गान्यत्वात्। अन्यो हि सूर्यशब्दः। अन्यः सौर्यशब्दः। नैष दोषः। एकदेशविकृतमनन्यवद्भवतीत्येवं भविष्यति। उपधाग्रहणानर्थक्यं च *। स्थानिवद्भावे चेदानीं प्रतिषिद्धे उपधाग्रहणमनर्थकम्। किं कारणम्। अन्त्य एव हि सूर्यादीनां यकारः। किंयातमेतद्भवति। सुष्ठु यातम्। साधु च यातम्। यदि प्राग्भादसिद्धत्वम्। अथ सह तेनासिद्धत्वम्। असिद्धत्वाल्लोपस्यानन्त्यो यकारो भवति। यद्यपि सह तेनासिद्धत्वम्। एवमपि न दोषः। नैवं विज्ञायते सूर्यादीनामङ्गानां यकारलोप इति। कथं तर्हि। अङ्गस्य यलोपो भवति स चेत्सूर्यादीनां यकार इति। एवमपि सूर्यचरी। अत्र प्राप्नोति। तस्मादुपधाग्रहणं कर्तव्यम्। विषयपरिगणनं च *। विषयपरिगणनं च कर्तव्यम्। सूर्यमत्स्ययोर्ङ्याम् *। सूर्यमत्स्ययोर्ङ्यामिति वक्तव्यम्। सौरी। मत्सी। सूर्यागस्त्ययोश्छे च ङ्यां चेति वक्तव्यम् *। सौरी। सौरीयः। आगस्ती। आगस्तीयः। तिष्यपुष्ययोर्नक्षत्राणि *। तिष्यपुष्ययोर्न-

---

प्रतिषेधः प्रत्ययविधावेव। स्थानिवत्त्वनिषेधे चावशिष्टस्याङ्गसंज्ञायामेकदेशविकृतस्यानन्यत्वाद् यलोपः सिध्यति। अन्त्यएवेति। अकारद्वयलोपे सति यकारस्यान्त्यत्वात्। तत्र यान्तानां सूर्यादीनां लोपो भवतीत्युच्यमाने अलोन्त्यस्येति यकारस्यैव भविष्यति। यग्रहणं तु न प्रत्याख्यायते। तदन्तरेण यान्तत्वाभावादुत्तरार्थत्वाच्च यग्रहणस्य। यातमिति। गतं ज्ञातं सिद्धमित्यर्थः। साधु च यातमिति। अनेन सिद्धे दार्ढ्यं प्रतिपाद्यते। यदि प्रागिति। अकारद्वयलोपस्य सिद्धत्वादन्त्यो यकारो भवति। अथेति। ईतिअकारलोपस्य समानाश्रयस्यासिद्धत्वाद्यान्तत्वाभावः। ततश्चोपधाग्रहणं कर्तव्यम्। यद्यपीति। न चोपधाग्रहणं क्रियते नापि सूर्यादीन्यङ्गत्वेन विशेष्यन्त इत्यर्थः। ईति तद्धिते च यदङ्गमनाश्रितरूपविशेषं तस्य यकारस्य लोपः स चेद्यकारः सूर्याद्यवयवो भवतीति सूत्रार्थः। सूर्यचरीति। सूर्यस्य स्त्री सूरी सा भूतपूर्वेति चरट्प्रत्ययः। तसिलादिष्विति पुंवद्भावः। सूर्यमत्स्ययोरिति। मत्स्यस्य ङ्याम्। सूर्यागस्त्ययोश्छे चेत्येवं सिद्धेऽर्थप्रदर्शनपरत्वाल्लाघवेऽनादरः कृतः। सौरीय इति। सौर्यस्यायमिति वृद्धाच्छः। अगस्त्यस्यापत्यमिति

क्षत्राणि यलोपो वक्तव्यः । तैषम् । पौषम् । अन्तिकस्य तसिकादिलोपश्चाद्युदात्तत्वं च *। अन्तिकस्य तसि कादिलोपो वक्तव्यः आद्युदात्तत्वं च वक्तव्यम् । अन्तितो न दूरात् । तमे तादेश्च * । तमे तादेश्च कादेश्च लोपो वक्तव्यः । अग्ने त्वं नो अन्तमः अन्तितमे अवरोहति । तसीत्येष न वक्तव्यो दृष्टो दाशतये पिहि । घोलोपोन्तिषदित्यत्र । अन्तिषत् । यथा ऽद्यौ येन्व्यथर्वसु ॥ १ ॥ अन्ति ये च दूरके । सूर्यं तिष्य ॥

बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥ छग्रहणं शक्यमकर्तुम् । इह कस्मान्न भवति बिल्वकेभ्यः । भस्येति वर्तते । एवमपि बिल्वकायेत्यत्र प्राप्नोति । तद्धितस्येति वर्तते । एवमपि बिल्वकस्य विकारः अवयवो वा बैल्वकः । अत्र प्राप्नोति । तद्धिते तद्धितस्येति वर्तते । एवमपि बिल्वकीयायां भवो बैल्वकः । बैल्वकस्य किं चिद् बैल्वकीयम् । अत्र

---

क्षत्रण् तदन्तान्ङीप् छस्य। नक्षत्राणीति। नक्षत्रसंबन्धिन्यणीत्यर्थः। तिष्यपुष्ययोरित्युभयोपादानाल्लिङ्गशब्दस्य यलोपाभावः। अन्तित इति । अपादानेचाहीयरुहोरिति तसिः। तादेश्चेति। चकारात्कादेश्च। यदा तादेस्तदान्तमः कादिलोपे त्वन्तितमः। तसीत्येष इति। कादिलोपश्च बहुलमित्येव विषयमनुपादाय पठितव्यमित्यर्थः। दाशतय इति। दशावयवा अस्य दशतयस्तत्र भवो दाशतयः। चतुः षष्ट्याख्यो ग्रन्थः। घोलोप इति। घुशब्देनोत्तरपदं पूर्वाचार्यप्रसिद्ध्योच्यते। अन्तिके सीदतीति सत्सूद्विषेति क्विप्। पूर्वपदादिति षत्वम्। अद्याविति। अनुत्तरपद इत्यर्थः। यो यत्प्रत्यये परतोन्तीति छत कादिलोपोन्तिकशब्दो गृह्यते अथर्ववेदे। अन्तिके भव इति भवेछन्दसीति यति कृते अन्तिय इति भवति। कादिलोपस्यासिद्धवदत्राभादित्यसिद्धत्वाद्यस्येति लोपो न भवति॥

बिल्व। छग्रहणमिति। कृतकुगागमस्य निर्देशाच्छ एव ग्रहीष्यतइति भावः। बिल्वकेभ्य इति। बिल्वशब्दादल्पादावर्थेकप्रत्यये सति छग्रहणे कुगागमनिर्देश एव न निषेधेतेति कप्रत्ययान्तादपि परस्य भ्यसो लुक्प्रसङ्गः। भस्येति वर्तत इति। तत्रार्थाद्विभक्तिविपरिणामे सति भसंज्ञकेभ्यः परस्य लुग् भवति। बैल्वक इति। अनुदात्तादेश्चेत्यञ्। तद्धित इति। नस्तद्धित इत्यतस्तद्धित इति वर्तते। बिल्वकादिभ्यो भसंज्ञकेभ्यः परस्य तद्धितस्य तद्धितपरे लुग्भवतीति सूत्रार्थः संपद्यते। एवमपीति। बिल्वाविद्यन्तेस्यामिति उत्करादिभ्यश्छः। नडादीनां कुक् चेति छः कुगागमश्च। ततस्तत्र भव इत्यण्। तस्मिन्परतश्छस्य लुक्। ततो वृद्धाच्छः। असति छग्रहणे छे परतो ऽणो लुक् प्रसङ्गः।

प्राप्नोति । न सबिल्वकात् ॥ बिल्वकादिभ्यो यो विहित इत्युच्यते । न चासौ बिल्वकशब्दाद्विहितः । किं तर्हि । बिल्वकीयशब्दात् । एवं तर्हि सिद्धे सति यच्छग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा । सन्नियोगशिष्टानामन्यतराभावे उभयोरप्यभाव इति । तस्माच्छग्रहणं कर्तव्यम् । छस्यैव लुग् यथा स्यात् कुको मा भूदिति ॥

तुरिष्ठेमेयःसु ॥ १५४ ॥ तुः सर्वस्य लोपो वक्तव्यः अन्त्यस्य मा भूदिति । स तर्हि वक्तव्यः । न वक्तव्यः । सर्वलोपस्य विज्ञानमन्त्यस्य वचनानर्थक्यात् * । तुः सर्वलोपो विज्ञायते । कुतः । अन्त्यस्य वचनानर्थक्यात् । अन्त्यस्य लोपवचने प्रयोजनं नास्तीति कृत्वा सर्वस्य भविष्यति । अथ वा लुक् प्रकृतः सोनुवर्तिष्यते । अशक्योलुगनुवर्तयितुम् । किं कारणम् । विजयिष्ठकरिष्ठयोर्गुणादर्शनात् * । विजयिष्ठकरिष्ठयोर्गुणो दृश्यते । विजयिष्ठः । आसुतिंकरिष्ठः ॥

---

ततश्च न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद्वृद्ध्यभावे रूपं न सिध्येत् । न स बिल्वकादिति । विहित इति शेषः । बिल्वकादिभ्यो यो विहित इति बिल्वकादिभ्य इत्यागन्तुनाकारेण कृतकुगागमनिर्देशः । तेनायमर्थः । भाविकुगागमेभ्यो बिल्वकादिभ्यो यो विहितः प्रत्ययस्तस्य तद्धिते लुग् भवति । न च छादन्यो भाविकुगागमेभ्यो बिल्वादिभ्यः प्रत्ययो विधीयते इति नार्थश्छग्रहणेन । एवं तर्हीति । छग्रहणं छमात्रस्य लुग्यथा स्यात् कुगागमो मा भूदनिष्टं तदित्येवमर्थं क्रियते । यदि चैषा परिभाषा न स्यात्तदा कुको नैव निवृत्तिः प्राप्नोतीति कि तदभावार्थेन छग्रहणेन । क्व चित्त्वेषा परिभाषा नाश्रीयते । यथा श्यैनेय इत्यादौ यस्येति लोपेन निवृत्तोऽपी कारे तत्संनियुक्तो नकारो न निवर्तते । तथा च स्त्रियाः पुंवदित्यत्रोक्तम् । एतभार्य इत्यत्र पुंवद्भावेन स्त्रीप्रत्ययमात्रस्य निवृत्तिः क्रियते । अर्थस्य त्वनिवृत्तत्वान्नकारस्य श्रवणं प्रसज्ज्येतेति । तथा च श्रोत्रियस्य यलोपश्चेति घे विनिवृत्तेपि श्रोत्रभावो न निवर्तते इति । तत्रानित्यापरिभाषेति प्रतिविधेयम् ॥

तुरि । तुः सर्वस्येति । सर्वस्य तृशब्दस्य लोपो नत्वन्त्यस्येत्यर्थः । अन्त्यस्य लोप इति । टेरित्येवान्त्यलोपस्य सिद्धत्वात् । विजयिष्ठेति । 'विजेतृशब्दात्तुश्छन्दसीतीष्ठन् प्रत्ययः । तस्य लुकि सति न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद् गुणो न स्यात् पूर्वं तु गुणो न प्रवर्तते । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति वचनात् । करिष्ठ इति । तृन्नन्तादिष्ठन् प्रत्ययः

टेः ॥ १५५ ॥ णाविष्ठवत्प्रातिपदिकस्य * । णौ प्रातिपदिकस्येष्ठवद्भावो वक्तव्यः । किं प्रयोजनम् । पुंवद्भावरभावटिलोपयणादिपरार्थम् । पुंवद्भावार्थम् । एनीमाचष्टे एतयति । श्येतयति । रभावार्थम् । पृथुमाचष्टे प्रथयति म्रदयति । टिलोपः । पटमाचष्टे पटयति । यणादिपरार्थम् । दूरमाचष्टे दवयति । किं पुनरिदं परिगणनमाहो स्विदुदाहरणमात्रम् । उदाहरणमात्रमित्याह । प्रादयोपि दृश्यन्ते । प्रियमाचष्टे प्रापयतीति । भारद्वाजीयाः पठन्ति । णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोलुक्कन्विध्यर्थमिति ॥

इष्ठस्य यिट् च ॥ १५९ ॥ किमयं यिशब्द आहोस्विद्यकारः । किं चातः । यदि लोपोप्यनुवर्तते ततो यिशब्दः । अथ निवृत्तं ततो यकारः ॥

ज्यादादीयसः ॥ १६० ॥ किमर्थं ज्यात्परस्येयस आत्वमुच्यते । न लोपः प्रकृतः सोनुवर्तते । का रूपसिद्धिः । ज्यायान् । अकृत्यकार इति दीर्घत्वं भविष्यति । एवं तर्हि सिद्धे सति यत् ज्यात्परस्येयस

---

टेः । णाविति । प्रातिपदिकग्रहणं प्रत्ययकार्याणामतिदेशो मा भूदित्येवमर्थम् । तेनवद्भ्याचष्टे भावयतीति णिचोपि यिण्न भवति । तदभावे भूभावेनापि न भवितव्यं सन्नियोगशिष्टत्वादिति बहयतीति भवितव्यमिति के चित् । एतयतीति । तसिलादिष्वादिष्टे पुंवद्भावो विहित इति णावपि भवति । टिलोपेनैव संनियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्वचनं सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थं तेन श्यैनेय इत्यादि सिद्धं भवति विन्मतोरिति । स्रग्विणमाचष्टे स्रजयति । अङ्गवृत्त इति वृद्धिरत्र न भवति । यत्र त्वनिष्ठितमङ्गं तत्र वृद्धिर्भवत्येव प्रापयति । युवानमाचष्टेऽल्पमाचष्टे कनयति ।

इष्ठस्य । कियमिति । किमिकारान्तः समुदाय आगमोऽथयकारमात्रमिकारस्तूच्चारणार्थ इति प्रश्नः । किं चात इति । उभयथा दोषाभाव इत्यर्थः । तत्प्रतिपादयति यदीति ।

ज्यादादीयसः ज्यात् परस्येयसआदेः परस्येत्याकारः क्रियते तत्रोच्यते । किमर्थमिति । अकृद्यकार इति । क्ङितीति तत्र नानुवर्तते इति भावः । उरय्येत्यादौ छान्दसत्वाद्दीर्घाभावः अङ्गवृत्त इति । अङ्गे वृत्तं निष्पन्नं यत्कार्यं तस्मिन् सति पुनरन्यस्याङ्गकार्यस्य प्रवृत्तावविधानं भवति । म्राजनोर्जेत्यत्रापीयं परिभाषा ज्ञापिता । तत्रास्मि-

आत्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा अङ्गवृत्ते पुनर्वृत्तावविधिरिति । किमेतस्य ज्ञापने प्रयोजनम् । पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति । अथ किमर्थं ज्यात् परस्येयसो दीर्घ उच्यते । न अकार एवोच्येत । का रूपसिद्धिः । ज्यायान् । आन्तर्यतो दीर्घस्य दीर्घो भविष्यति । एवं तर्हि सिद्धे सति यद्दीर्घग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति ॥

र ऋतो हलादेर्लघोः ॥ १६१ ॥ कथमिदं विज्ञायते हलादेरङ्गस्येति आहो स्विद्धलादेर्ऋकारस्येति । युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेनाङ्गविशेषणेन भवितव्यम् । कथम् । ऋकारस्य नाम हलादिः स्यात् । अन्यस्याव्यः । अयमादिशब्दोऽस्त्येवावयववाची । तद्यथा । ऋगादिः अर्धर्चादिः श्लोकादिरिति । अस्ति सामीप्ये वर्तते । तद्यथा । दधिभोजनमर्थ सिद्धेरादिः । दधिभोजनसमीपे । घृतभोजनमारोग्यस्यादिः । घृतभोजनसमीपे । यावता सामीप्ये ऽपि वर्तते । जायते विचारणा । हल्समीपस्य ऋकारस्येति । अथ वा हलादेरङ्गस्येति । किं चातः । यदि विज्ञायते हलादेरङ्गस्येति । अप्रथीयान् अम्रदीयान् । अत्र न प्राप्नोति । अथ विज्ञायते हलादेर्ऋकारस्येति । अनृचीयान् । आत्रापि प्राप्नोति । उभयथा

---

न् स्थिते ज्ञापके जा इत्यादेशविधानं दीर्घश्रवणार्थम् । तस्मिंश्च ज्ञापके सति ज्यायानिति सिद्ध्यर्थमाद्वचनम् । अन्यथाऽऽदिल्लोपे कृते परिभाषावशाद्दीर्घो न स्यात् । पिबेरिति । पाघ्रादिसूत्रेण यदा पिबादेशो हलन्तः क्रियते तदा गुणप्रसङ्गः । यदात्वदन्तस्तदा गुणप्राप्त्यभावः ।

रऋ । कथमिदमिति । इहाङ्गस्येति प्रकृतम् । ऋत इति च श्रुतम् । तत्र विशेषणविशेष्यभावे कामचारात्प्रश्नः । युक्तं पुनरिति । धात्वादेरित्यादाववयववाचिन आदिशब्दस्य दर्शनादवयव्यपेक्षत्वाच्चावयवस्यावयवान्तरेण संबन्धाभावादिति भावः । अन्यस्यान्य इति । अत्यन्तभेदादसंबन्धं परस्परस्यावयवयोर्दर्शयति । यत्र भेदाभेदविवक्षा । वृक्षाणां वनं वृक्षा वनमिति तत्रावयवावयविभावो नान्यत्रेत्यर्थः । दधिभोजनमिति । इन्द्रोपनीतं दधिभोजनं कार्यसिद्धेः सूचकत्वात्समीपमित्यर्थः अप्रथीयानिति अपृथुशब्दात् पृथुसङ्ग्रगुणवचनादीयसुन्प्रत्ययः । अनृचीयानिति । न सन्त्यृचो येषां तेऽनृचा माणवकास्ते स-

स्रुचीयानित्यत्र प्राप्नोति। यथेच्छसि तथास्तु। अस्तु तावद्धलादेरङ्गस्येति। कथमप्रथीयानिति। तद्धितान्तेन समासो भविष्यति। न प्रथीयान् अप्रथीयानिति। भवेत्सिद्धं यदि तद्धितान्तेन समासः। यदा खलु समासात्तद्धितोत्पत्तिस्तदा न सिध्यति। न वै समासात्तद्धितोत्पत्त्या भवितव्यम्। किं कारणम्। बहुव्रीहिणोक्तार्थत्वान्मत्वर्थस्य। भवे द्यदि बहुव्रीहिस्तदा न स्यात्। यदा तु तत्पुरुषस्तदा प्राप्नोति न पृथुः अपृथुः अयमपृथुः अयमप्यपृथुरयमनयोरतिशयेनापृथुरप्रथीयानिति। नसमासादजादिभ्यां भवितव्यम्। किं कारणम्। गुणवचनादित्युच्यते। न च समासो गुणवचन इति। यदा तर्हि समासाद्विन्मतुपौ विन्मतुबन्तादजादी तदा प्राप्नुतः। अविद्यमानाः पृथवोऽपृथवः अपृथवोऽस्य सन्त्यपृथुमान्। अयमपृथुमान् अयमप्यपृथुमान्। अयमनयोरतिशयेनापृथुमान् अप्रथीयानिति। नैष दोषः। अपृथव एव न सन्ति कुतो यस्यापृथव इति।

---

त्वियस्मिन्देशे सोऽन्त्यचवान् तत ईयसुन् विन्मतोरिति मतुब्लुक् तत्राङ्गं हलादि न भवति। ऋकारस्तत्र हलादिरिति रादेशप्रसङ्गः। स्रुचीयानिति। स्रुग्वच्छब्दादीयसुन् विन्मतोरिति मतुब्लुक्। यथेच्छसीति। वक्ष्यमाणपरिगणनादतिप्रसङ्गनिरासादिति भावः। न वै समासादिति। प्रकृताभिप्रायेणेदमुच्यते। ईदृशात्समासादीदृशस्तद्धितो नोत्पद्यते। तथाहि। अपृथुशब्दस्तत्पुरुषो बहुव्रीहिर्वा गुणवचनो न भवतीति तत ईयसुन्न भवत्येव। अथ मत्वन्तादीयसुन उत्पत्तिस्तन्न, बहुव्रीहिणोक्तत्वान्मतुपोऽभावात्। नापि तत्पुरुषान्मतुबुत्पत्तिर्लाघवाद्बहुव्रीहेर्न्याय्यत्वात्। भवेद्यदेति। स ह्यन्यपदार्थप्रधानत्वाद् गुणवचनो न भवति। यदात्विति। यथा अब्राह्मण इति ब्राह्मणसदृशः क्षत्रियादिरुच्यते। तथा अपृथुरिति पृथुत्वसदृशगुणान्तरयुक्तोऽभिधीयते। न च समास इति। गुणसुक्तवान् गुणवचनः यः शब्दो गुणमभिधाय गुणोपसर्जने द्रव्ये वर्तते तस्मादजादिभ्यां भाव्यम्। न च समासः केवले गुणे कदाचित्प्रयुज्यते नित्यं द्रव्यवाचित्वात्। अथ वाऽपृथुशब्दः पृथुसदृशगुणवाचित्वेऽपि विशिष्टगुणवचनो न भवति पृथुशब्दवत्। अपृथव एव न सन्तीति। मतुपः प्रकृतय इति शेषः। समानेऽर्थे बहुव्रीहिणा भाव्यं न तु मत्वर्थीयार्थे न तत्पुरुषेण। भिन्नार्थत्वे तु भाव्यमेव। गौरखरवदरण्यं कृष्णसर्पवानवल्मीक इति। अत्र हि जातिविशेषेण तद्वत्ता प्रतिपिपादयिषिता नान्तरेण तत्पुरुषं मत्वर्थीयार्थं बहुव्रीहिमात्रेण प्रतिपादयितुं शक्यते। अन्येत्वाहुः। अविद्यमाना ये पृ-

इह कस्मान्न भवति । मातयति । लोपोऽत्र बाधको भविष्यति । इदमिह संप्रधार्यम् । लोपः क्रियतां रभाव इति । किमत्र कर्तव्यम् । परत्वाद्रभावः । यदि पुनरवशिष्टस्य रभाव उच्यते । नैवं शक्यम् । इहापि प्रसज्येत । कृतमाचष्टे कृतयति । एवं तर्हि परिगणनं क्रियते । पृथुमृदुभृशकृशदृढपरिवृढानामिति वक्तव्यम् ॥

प्रकृत्यैकाच् ॥ १६३ ॥ प्रकृत्यैकाजिति किमिष्ठेमेयस्सु चाहो स्विदविशेषेण । किं चातः । यद्यविशेषेण स्रौ । स्रौ । शौवम् । अधुना । अत्रापि प्राप्नोति । स्विन्नावेव नस्तः । कथमुक्तमेतदेकाचरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ । स्रवान् । स्रवानित्येव भवितव्यम् । शौवमिति परत्वादैजागमे कृते टिलोपेन भवितव्यम् । अधुना इति स प्रकृतिकस्य सप्रत्ययकस्य स्थाने निपातनं क्रियते । इह तर्हि

---

यवस्ते सन्तीति विरोधादस्तुग्रपाधिकत्वाभावान्मतुब्न भवतीति । एतदपरे न चमन्ते । पृथुत्वगुणरहिताः स्वरूपेण विद्यमाना पृथव एवापृथव उच्यन्त इति कथं सत्तोपाधिकत्वं न स्यात् । ननु च यथान्टचोयानित्यत्र बहुव्रीह्यर्थे न तद्वत्ताविवक्षायां मत्वन्तादीयसुन् भवति तथा पृथुशब्दादपि मतुपातदन्ताच्च ईयसुना भाव्यम् । एवं तर्ह्यनभिधानाद्बहुव्रीहेः कुतश्चिन्मतुपान भवितव्यमिति मन्यते तदेवमप्रीथीयानिति तद्धितान्तेनसमास इतिस्थितम् । स्वचोयानित्येतस्यापि परिहाराय चोद्यमुपन्यस्यति । इह कस्मादिति । मातयतीति । उणादयो ऽव्युत्पन्नानि प्रातिपदिकानीति पचाश्रयणात्तुरिष्ठेमेयस्सु इति इष्ठवद्भावात्तृशब्दस्य लोपाभावः । यदि पुनरिति । टिलोपोप्यनुवर्तते ततश्चान्त्यस्य ऋशब्दस्य टिलोपो ऽनन्त्यस्य तु रभाव इति मातयतीत्यादौ रादेशाभावः । कृतयतीति । अत्रानन्त्यऋकारोस्तीतिरभावप्रसङ्गः । एवं स्वचोयानित्यत्रापि । एवं तर्हीति । परिगणने च सति हलादेर्लघोरिति न कर्तव्यम् ॥

प्रकृत्यैकाच् । किमिष्ठेमेयः स्विति । किं प्रत्यासत्त्याश्रयेणेष्ठेमेयस्सोपेच्यन्ते । अथ वा व्याप्त्याश्रयेण तद्धित इति प्रश्नः । स्रौति । स्रग्शब्दादिनि कृते प्रकृतिभावाद्यस्येति लोपो न प्राप्नोति । शौवमिति । शुनो विकारावयवयोः प्राण्यञि कृते नस्तद्धित इति टिलोपो न प्राप्नोति । अधुनेति । इदमोऽधुनाप्रत्यये परत इशादेशस्तस्य यस्येति लोपो न प्राप्नोति । शौवमिति । टिलोपं बाधित्वा परत्वाद्वृद्धिः प्राप्ता द्वारादीनां चेति प्रतिषिध्यते । ऐनागमश्च क्रियते । तत्रानेकाचत्वाट्टिलोपाभावः । अधुनेति । इदम इश् भावोऽधुनाप्रत्ययश्च

प्राप्नोति द्रव्यम्। यस्येत्यादौ प्रकृतिभावः। यस्येऽपि यस्य लोपप्राप्तिस्तस्य प्रकृतिभावः। न चैतानि यस्येत्यादौ। एवमपि श्रियै हितः श्रीयः। ज्ञा देवतास्य स्थालीपाकस्य ज्ञः स्थालीपाक इत्यत्र प्राप्नोति। तस्मादिष्ठेमेयस्सु प्रकृतिभावः। अथेष्ठेमेयस्सु प्रकृतिभावे किमुदाहरणम्। प्रेयान्। प्रेष्ठः। नैतदस्ति। प्रादीनामसिद्धत्वान्न भविष्यति। इदं तर्हि श्रेयान्। श्रेष्ठः। प्रकृत्यैकाजिष्ठेमेयस्सु चेदेकाच उच्चारणसामर्थ्यादवचनात् प्रकृतिभावः*। प्रकृत्यैकाजिष्ठेमेयःसु चेत्तन्न। किं कारणम्। एकाच उच्चारणसामर्थ्यात्। तन्तरेणापि वचनं प्रकृतिभावो भविष्यति। विन्मतोर्लुगर्थं प्रकृतिभावो वक्तव्यः। स्रग्वितरः। स्रजीयान्॥ स्रग्वितमः। स्रजिष्ठः। स्रग्वत्तरः। स्रग्वत्तमः। स्रचीयान्। स्रचिष्ठः। ननु विन्मतोर्लुक् टिलोपं बाधिष्यते। कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्। असति खल्वपि संभवे बाधकं भवति। अस्ति च सभवो यदुभयं स्यात्। यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधते। एवं नस्तद्धित इत्येतमपि बाधेत। यन्तरो नौ ब्रह्मीयान् ब्रह्मवत्तर इति। यत्तावदुच्यते कथमन्यस्योच्य-

---

निपात्यते। द्रव्यमिति। द्रोर्विकारो द्रोश्चेति यत्प्रत्ययः। ओर्गुण इति। गुणोऽत्र न प्राप्नोति। यस्येत्यादीनि कार्याणि अपेक्ष्य प्रकृतिभावो विधीयते। ओर्गुणस्तु तेभ्यः पूर्व इति प्रकृतिभावाभावः। श्रियै हित इति। प्राक्क्रीताच्छ इति छः। तत्र यस्येति लोपो न प्राप्नोतीयङः प्रसङ्गः। प्रादीनामिति। असिद्धत्वादेवैकाच्त्वाभावात् प्रकृतिभावोऽप्यत्र नास्ति नापि टिलोपः। स्थान्याश्रयष्टिलोपः प्राप्नोतीति चेत्। विप्रतिषिद्धे तावदसिद्धत्वाभावस्य ज्ञापितत्वात्परत्वादिषु तेषामसिद्धत्वेनाविद्यमानत्वान्न स्वाश्रयो नापि पराश्रयष्टिलोपः प्राप्नोति। श्रेयानिति अविद्याधिकाराद्वृद्धिः आदिविधानादसिद्धत्वाभावः। एकाच उच्चारणसामर्थ्यादिति। अकार उच्चारणार्थो न प्रतिज्ञातोऽपि तु श्रवणार्थः। विन्मतोस्तु लुगर्थमिति। लुकयर्थो यस्य तल्लुगर्थम्। लुकि कृते टिलोपाभावार्थमित्यर्थः। कथमन्यस्येति। विन्मतुबन्तस्य यष्टिलोपस्तं लुग् बाधतां तस्मिन् कृते यष्टिलोपः प्राप्नोति तं कथं बाधते न हि तस्मिन् प्राप्ते लुगारभ्यत इत्यर्थः। यथैवेति। लुको बाधकत्वाभ्युपगमेऽतिप्रसङ्ग इत्यर्थः। ब्रह्मीयानिति। अतिशयेन ब्रह्मवानिति ईयसुनि मतुब्लुकि च नस्तद्धित इति टिलोपः। नाप्राप्त इति यद्यपि वषयभेदेन टिलोपो भिन्नस्तथाप्यनपेक्षितविषयभेदं टिलोपशास्त्रं येन नाप्राप्तिन्यायेन लुका बाध्यते। तेन स्रजीया-

मानमन्यस्य बाधकं स्यादिति । इदं तावदयं प्रष्टव्यः । यदि तर्हि विन्मतोर्लुग्नोच्येत किमिह स्यादिति । टिलोप इत्याह । टिलोपश्चेन्नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते स बाधको भविष्यति । यदप्युच्यते ऽसति खल्वपि संभवे बाधनं भवति । अस्ति च संभवो यदुभयं स्यादिति । सत्यपि संभवे बाधनं भवति । तद्यथा । ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । सत्यपि संभवे दधिदानं तक्रदानस्य निवर्तकं भवति । तद्यथा । एवमिहापि सत्यपि संभवे विन्मतोर्लुक् टिलोपं बाधिष्यते । यदप्युच्यते । यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधते । एवं नस्तद्धितइत्येतमपि बाधेत । न बाधेत । किं कारणम् । येन नाप्राप्ते तस्य बाधनम् । नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते । नस्तद्धितइत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च । अथ वा पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानित्येवं विन्मतोर्लुक् टिलोपं बाधिष्यते । नस्तद्धितइत्येतन्न बाधिष्यते। यदि तर्हि विन्मतोर्लुक् टिलोपं बाधते पयिष्ठ इति न सिध्यति ।

---

नित्येतस्मिन्नङ्गे सांप्रतिकी भाविनी च टिलोपप्राप्तिः पटिष्ठादौसावकाशा लुका बाध्यते । तत्र विन्नन्तस्य नान्तत्वान्नस्तद्धित इत्ययमपि टिलोपो लुका बाध्यते । मतोस्तु लुकानस्तद्धित इति टिलोपो न बाध्यते । ननु किमुच्यते नस्तद्धित इत्यस्मिन् पुनः प्राप्ते चाप्राप्ते चेति । यावता मतोर्नान्तत्वाभावादप्राप्त एव नस्तद्धित इति टिलोपः । नैष दोषः । मतुप्प्रत्ययो नकारान्तादनकारान्ताच्च विधीयते । तत्र यद्यप्यकृते मतुब्लुकि नस्तद्धित इति टिलोपो न प्राप्नोति तथापि कृते मतुब्लुकि प्राप्नोति। एकदेशविकृतं चानन्यवदितियदेवाङ्गं ब्रह्मवदिति तदेव ब्रह्मन्निति । तदेवमभेदाश्रयेणेदमुक्तं प्राप्ते चाप्राप्ते चेति ।अथवेति। ननु विन्मतोर्लुगित्येतस्य नस्तद्धित इत्ययमेव योगोनन्तरः।टेरित्ययं तु व्यवहितः । तत्र केचिदाहुः । पाठक्रमादर्थक्रमो बलीयानिति टेरित्येष योगः सर्वविषयस्य व्यापनादनन्तरो भवति । यद्येवं पूर्वमेवायमर्थ उक्तो येननाप्राप्त इति किमर्थं पुनरुच्यते । पूर्वमुत्सर्गापवादन्याय उक्त इदानीं त्वर्थक्रमप्रतिपत्त्याश्रयणेनोच्यते । येन हि सर्वो विषयो व्याप्तः स एव बाधितुं युक्तः । यस्तु विषयविशेषे प्रवर्तते न तस्य बाधा युक्ता । समान्ये हि पूर्वं प्रतिपत्तिरुदेति पश्चाद्विशेषेषु । अन्ये तु न्यासभेदाश्रयेण व्याचक्षते । टेरित्यस्य पश्चान्नस्तद्धित इति पठितव्यम् । पयिष्ठइति । पयस्विन् इष्ठ इतिस्थिते विन्मो लुकि कृते अस्य लोपो न प्राप्नोति । यथालक्षणमिति न भवति टिलोप इत्यर्थः।

पयसिष्ठ इति प्राप्नोति। यथालक्षणमप्रयुक्तइति। प्रकृत्याके राजन्यमनुष्ययुवानः*। राजन्यमनुष्ययुवानः अके प्रकृत्या भवन्तीति वक्तव्यम्। राजन्यकम्। मानुष्यकम्। यौवनिका॥

न मपूर्वोपत्ये ऽवर्मणः॥ १७०॥ मपूर्वात्प्रतिषेधे वाहितनाम्नः*। मपूर्वात्प्रतिषेधे वाहितनाम्न इति वक्तव्यम्। हैतनामः। हैतनामनः। अरोहितो वै हैतनामः। समानो हैतनामः समानो हैतनामन इति॥

ब्राह्मोजातो॥ १७१॥ अथ किमिदं ब्राह्मस्याजातौ अनोलोपार्थं वचनमाहोस्विन्नियमार्थम्। कथं चानोलोपार्थं स्यात्कथं च नियमार्थम्। यदि तावदपत्यइति वर्तते ततो नियमार्थमथ निवृत्तं ततो लोपार्थम्। अत उत्तरं पठति। ब्राह्मस्याजातौ लोपार्थं वचनं क्रियते। अपत्यइति निवृत्तम्। तत्राप्राप्तविधाने प्राप्तप्रतिषेधः तत्राप्राप्तस्य टिलोपस्य विधाने प्राप्तस्य प्रतिषेधो वक्तव्यः। ब्राह्मणः।

---

ततश्च रजस्विनमाचष्टे रजसयति। आयुष्मन्तमाचष्टआयुषयतीति भवितव्यम्। राजन्यकमिति। समूहेर्थे गोत्रोक्षोष्ट्रेति वुञ्। आपत्यस्य च तद्धितेनातीति यलोपाभावार्थं प्रकृतिभावविधानम्। यस्येति लोपे सत्यसति वा विशेषाभावान्न तदर्थः प्रकृतिभावः। यौवनिकेति। यूनो भाव इति मनोज्ञादित्वाद्वुञ्। तत्र नस्तद्धित इति टिलोपः प्राप्तः प्रकृति भावान्न भवति॥

न मपूर्वो। हैतनामन इति। हितनाम्नोपत्यमित्यण्। अन्निति प्रकृतिभावात्पक्षे टिलोपाभावः।

ब्राह्मो। ब्राह्मशब्दोऽपत्येऽनपत्ये चेष्यते। ब्राह्मो मुहूर्त्तो ब्राह्मो नारदः ब्राह्मः स्यालोपाकइति। जातौत्वपत्येब्राह्मण इतीष्यते। अनपत्ये तु जातौ ब्राह्मी ओषधिरि त टिलोप इष्यते। एतच्च यथाभिधानं न सिध्यतीति मत्वा पृच्छति। अथकिमिदमिति। यदितावदिति। ब्रह्मणोपत्यमित्यण्। अल्लोपोन इत्यकारलोपः प्राप्तो नसंयोगाद्वमन्तादितिनिषिद्धः। नस्तद्धितइतिटिलोपे प्राप्ते अन्नितिप्रकृतिभावः प्राप्तो नमपूर्वोपत्ये ऽवर्मण इति प्रतिषिद्धः। ततष्टिलोपे प्राप्ते नियमार्थमिदम्। अजातावेवापत्ये टिलोपो भवति ब्राह्मो नारद इति। जातौ त्वपत्ये न भवति ब्राह्मण इति। एवमपत्ये सिध्यति व्यवस्था। अनपत्ये त्वन्निति प्रकृतिभावाद्ब्राह्मशब्दो न सिध्यति। अथ निवृत्तमिति। अपत्यग्रहणे निवृत्ते विधिनियमसंभवे विधिरेव न्यायानिति अनपत्ये अन्निति प्रकृति-

न वा पर्युदाससामर्थ्यात् *। न वा वक्तव्यः । किं कारणम् । पर्युदाससामर्थ्यात् । पर्युदासोऽत्र भविष्यति । अस्त्यन्यत्पर्युदासे प्रयोजनम् । किम् । या जातिश्च नापत्यं ब्राह्मी ओषधिरिति । न वै चान्विष्यते । अनिष्टं च प्राप्नोति इष्टं च न सिध्यति । एवं तर्ह्यनुवर्तते ऽपत्यइति । । नाचापत्यइत्यनेन निपातनमभिसंबध्यते । ब्राह्मइति निपात्यते अपत्ये ऽजाताविति । किं तर्हि । प्रतिषेधो ऽभिसंबध्यते । ब्राह्म इति निपात्यते अपत्ये जातौ नेति ॥

कार्मस्ताच्छील्ये ॥ १७२ ॥ किमर्थमिदमुच्यते । नस्तद्धिते इत्येव सिद्धम् । न सिध्यति । अन्नणीति प्रकृतिभावः प्रसज्येत । अणीत्युच्यते । णश्चायम् । एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यः । ताच्छीलिके ऽणिकृतानि भवन्तीति । किमेतस्य ज्ञापने प्रयोजनम् । चौरी । तापसी । अणन्तादीतीकारः सिद्धो भवति ॥

---

भावे प्राप्ते जातौ टिलोपार्थं निपातनं भवति । तत्र ब्राह्मो मुहूर्त्तो ब्राह्मः स्थालीपाक इति सिध्यति । ब्राह्मी ओषधिरिति न सिध्यति अजाताविति प्रतिषेधात् । ब्राह्मणी ओषधिरिति तु प्राप्नोति । अपत्ये जातौ ब्राह्मण इति न सिध्यति । नमपूर्वोपत्येवर्मण इति प्रकृतिभावप्रतिषेधाट्टिलोपप्रसङ्गात् । नवेति । वक्ष्यमाणोभिप्रायः । नत्वपत्यइत्यनेन । इतरस्त्वोतमभिप्रायनबुध्वाह । अस्त्वन्यदिति । ब्राह्मो ओषधिरित्यत्र कृतार्थः पर्युदासो ब्राह्मण इत्यत्र पूर्वसूत्रविहितप्रकृतिभावप्रतिषेधप्राप्तं टिलोपेन निवर्तयेत् । न वै अन्वेष्यतइति । अजादाविति पर्युदासः ।न चानिष्टार्थं शास्त्रप्रवृत्तिरिति पर्युदाससामर्थ्याद् ब्राह्मणइत्यत्र टिलोपो न भविष्यतीत्यर्थः । इतरस्तु लक्षणमुपालभ्य माहानिष्टं च प्राप्नोतीति । ब्राह्मणी ओषधिरिति प्राप्नोत्यजाताविति पर्युदासात् । इष्टञ्च न सिध्यति ब्राह्मण इति । एवं तर्हीति । योगविभागः क्रियतइति भावः । तत्र ब्राह्म इत्यत्र सामर्थ्यादपत्य इति न संबध्यते अपत्ये टिलोपस्य सिद्धत्वात् । तेनानपत्ये । सर्वत्रजातावजातौच ब्राह्म इति निपात्यते । अपत्येपि ब्राह्मो नारद इत्यत्र परत्वाद्ब्राह्म इत्यनेनैव टिलोपा भवति । ततः अजाताविति । अत्रापत्यइत्यनुवर्तते तेनायमर्थो भवति । अपत्यजाता ब्राह्मणशब्दे टिलोपो न भवति । अजाताविति प्रसज्यप्रतिषेधो भवति नाञः सबन्धादिति सर्वेष्टसिद्धिः ॥

कार्मः । किमर्थमिति । कर्मशीलमस्य छत्रादिभ्यो ण इति णे कृते सिद्धष्टिलोप इति भावः ताच्छीलिकइति । एवं च छत्रादिभ्योणिति लाघवाय कर्त्तव्यं णवचने प्रयोजनाभावात् प्रज्ञा श्रद्धेति ज्वलितिकसन्तेभ्य इति तदस्याप्रहरणमिति ङीबभावः प्रयोजनम् ।

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥ अत्र भ्रौणहत्येति किं निपात्यते। यकारादौ तद्धिते तत्वं निपात्यते। भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात्*। भ्रौणहत्ये तत्वनिपातनमनर्थकम्। किं कारणम्। समान्येन कृतत्वात्। सामान्येनैवात्र तत्वं भविष्यति। हनस्तोचिण्णलोरिति। ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य*। एवं तर्हि ज्ञापयत्याचार्यस्तद्धिते तत्वं न भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। भ्रौणघ्नो वार्त्रघ्न इत्यत्र तत्वं न भवति। ऐक्ष्वाकस्य स्वरे भेदान्निपातनं पृथक्त्वेन*। ऐक्ष्वाकस्य स्वरे भेदान्निपातनं पृथक्त्वेन कर्तव्यम्। ऐक्ष्वाकः। ऐक्ष्वाकः। एकश्रुतिनिर्देशात् सिद्धम्*। एकश्रुतिः स्वरसर्वनाम। यथा नपुंसकं लिङ्गसर्वनाम। अथ मैत्रेये किं निपात्यते। मैत्रेये ढञि यादिलोपनिपातनम्। मैत्रेये ढञि यादिलोपो निपात्यते। इदं मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते। गृष्ट्यादिषु प्रत्ययविध्यर्थं पाठः क्रिय-

---

दाण्डिनायन। यकारादाविति। भ्रूणघ्नो भाव इति ब्राह्मणादित्वात् ष्यञ्। ज्ञापकं त्विति। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्यनपेक्ष्य ज्ञापकमुक्तं तदपेक्षायां तत्वस्याप्रसङ्गात्। ननु टिलोपाभावार्थं निपातनं स्यादिति सति प्रयोजने ज्ञापकत्वमनुपपन्नम्। नैष दोषः।उभयोरनित्ययोः परत्वाट्टिलोपं बाधित्वा तत्वं भविष्यति। अनेकप्रयोजनत्वाद्वा निपातनानाम्। अत एव कुत्वप्रतिषेधार्थमपि निपातनम्। ऐक्ष्वाक इति। इक्ष्वाकोरपत्यमिति जनपदशब्दादित्यञ्। उकारलोपो निपात्यते। ञित्त्वादाद्युदात्तत्वम्। इक्ष्वाकुषु जात इत्यपि प्राप्ते ओर्देशे ठञिति ठञि प्राप्ते तं परत्वाद्बाधित्वा जनपदतदवध्योश्चाद्वृद्धादपि बहुवचनविषयादिति वुञि प्राप्ते कोपधादित्यण्। तत्रान्तोदात्तत्वम्। तत्र भिन्नस्वरयोरेकस्मिन्निपात्यमानेऽपरस्यासंग्रहादुभयमपि निपात्यम्। एकश्रुतिनिर्देशादिति। स्वरभेदप्रत्यस्तमयेन निपातनं सर्वस्वरलौकिकप्रयोगसंग्रहार्थमित्यर्थः।यथा नपुंसकमिति सामान्यस्थितावाविर्भावतिरोभावस्थितिविशेषाणामन्तर्भावात् मैत्रेय इति। मित्रयोरपत्यमिति गृष्ट्यादिभ्यश्चेति ढञ्। मित्रयु एय इति स्थिते ओर्गुण इति गुणापवादे ढेलोपकद्रा इति लोपे प्राप्ते केकयमित्रयुर्विति यादेरियादेशे प्राप्ते लोपो निपात्यते। तल्लोपस्यासिद्धत्वाद्यस्येति लोपाभावदतोगुण इति पररूपमेकारः।

ते । द्वितीये ऽध्याये यस्कादिषु लुगर्थं क्रियते । सप्तमेऽध्याये ढूयादेशार्थम् । इदं चतुर्थं यादिलोपार्थम् । द्विर्ग्रहणं शक्यमकर्तुम् । बिदादिष्वञ्प्रत्ययविध्यर्थं पाठः कर्तव्यः । तत्र नैवार्थो लुका नापि यादिलोपन । ढूयादेशेनैव सिद्धम् । नैवं शक्यमिह हि मैत्रेयकः संघ इति संघाङ्कलक्षणेष्वञ्यञिञामणित्यण् प्रसज्येत । हिरण्मये किं निपात्यते । हिरण्मये यलोपवचनम् । हिरण्मये यलोपो निपात्यते । हिरण्मयं कलशं बिभर्षि ॥

ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ॥ १६५ ॥ अथ-हिरण्यये किं निपात्यते । हिरण्यये छन्दसि मलोपवचनात् सिद्धम्*। हिरण्यये छन्दसि मलोपो निपात्यते । हिरण्ययी नौरभवत् । हिरण्ययाः पन्थान आसन् । हिरण्ययमासनम् ॥

इति श्रीमहाभाष्ये षष्ठस्याध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥

पादोऽध्यायश्च षष्ठः समाप्तः ॥

---

द्वितीय इति । मित्रयव इति बह्वषु लुगर्थः पाठः। सप्तम इति । ढकोऽन्यत्रेयादेशः मित्रयोरिदं मैत्रेयमिति । मैत्रेयक इति । मित्रयूनां संघ इति गोत्रेलुगचीति लुकि प्रतिषिद्धे इजन्तादगोत्रचरणाद्वुञिति वुञ् । यदि तु संघाङ्केत्यत्र न मैत्रेयादित्युच्यते तदा त्रीणि ग्रहणानि स्युरिति इह निपातनं न कर्त्तव्यं स्यादिष्टस्य सिद्धत्वात् ।

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे षष्ठाध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥ इतिषष्ठोऽध्यायः समाप्तः ॥

सप्तमोऽध्यायः

# महाभाष्यम्

## महर्षिपतञ्जलिप्रणीतम्

कैय्यटकृतव्याख्यासंहितम् ।

पण्डितकृपारामशर्म्मणा स्वकीयतिमिरनाशकयन्त्रालये

काशिकराजकीयप्रधानपाठशालायां
व्याकरणशास्त्रे लब्धप्रतिष्ठेन
त्रिपाठिपं॰भगवत्प्रसादशर्म्मणा
संशोधयित्वा
प्रकाशितम् ।

काश्याम्

सम्वत् १९४६

यह पुस्तक पण्डित कृपाराम शर्मा की दूकान पर मिलैगी ।

प्रथम वार १०००

ॐ परब्रह्मणे नमः॥ युवोरनाकौ ॥१॥ युवोरनाकावित्युच्यते। कयोर्युवोरनाकौ भवतः। प्रत्यययोः। कथं पुनरङ्गस्येति वर्तमाने प्रत्यययोः स्याताम्। युशब्दवुशब्दान्तमेतद्विभक्तावङ्गं भवति। यदि युशब्दवुशब्दान्तस्याङ्गस्यानाकौ भवतः। सर्वादेशौ प्राप्नुतः। निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यतः। यत्र तर्हि विभक्तिर्नास्ति नन्दना कारिकेति। अत्रापि प्रत्ययलक्षणेन विभक्तिः। यत्र तर्हि प्रत्ययलक्षणं नास्ति नन्दनप्रियः कारकप्रिय इति। मा भूतां यासौ सामासिकी विभक्तिस्तस्याम्। यासौ समासाद्विभक्तिस्तस्यां भविष्यतः। न चैतस्यां युशब्दवुशब्दान्तमङ्गं भवति। भवेद्यो युशब्दवुशब्दाभ्यामङ्गं विशेषयेत्। तस्यानन्त्ययोर्न स्याताम्। वयं खल्वङ्गेन युशब्दवुशब्दौ विशेषयिष्यामः। अङ्गस्य युवोरनाकौ भवतो यत्रतत्रस्थयोरि-

---

ॐ नमः परमात्मने॥ युवोरनाकौ। युवोरिति। समाहारद्वन्द्वे युवुन इति प्राप्नोति। इतरेतरयोगे तु युव्वोरिति। तत्र सौत्रत्वान्निर्देशस्य नुममकृत्वोकारलोपं वा कृत्वा निर्देश इति न दोषः। केचित्तु कर्मधारयं व्याचक्षते। अवयवधर्मेण समुदायस्य व्यपदेशा-यथा समं चूर्णं कृष्णेत इति। एवं युश्चासौ समुदायो युवुलक्षणोवुश्चासाविति। तत्रसमुदायस्याङ्गनिमित्तत्वासंभवादवयवयोर्यथासंख्यं कार्यविज्ञानम्। यथा च भाष्यम्। कयोर्युवोरिति तथेतरेतरयोगे द्वन्द्व इति निर्णयः। अतिप्रसङ्गं मत्वा पृच्छति। कयोरिति। प्रत्यययोरिति। अङ्गाधिकारादङ्गस्य निमित्ते यौ युवू तयोरनाकाविति सूत्रार्थाश्रयणात्। कथं पुनरिति। अङ्गाधिकारादङ्गस्यैव कार्यत्वं युक्तमिति भावः। सिद्धान्तवादिना तु वैयधिकरण्येन संबन्धो दर्शयितव्यः। संप्रति तु सामानाधिकरण्येन संबन्धमाश्रित्य समाधीयते। युशब्दवुशब्दान्तमिति। कृत्तद्धितान्तत्वाद्युवुशब्दान्तस्यप्रातिपदिकत्वाद्विभक्तावुत्पन्नायांसत्यङ्गत्वेनाकौ क्रियेतेइत्यर्थः। यत्र तर्हि विभक्तिर्नास्ति. नन्दना कारिकेति। लौकिके प्रयोगे अत्यन्तमत्र विभक्तेरभावः। अत्राहुः। विभक्तावुत्पन्नायामनाकयोः कृतयोरकारान्तलक्षणेन टापा भाव्यम्। ततो हल्ङ्यादिलोपेनैत्यानुपूर्व्यासिद्धमेतत् यथा यासेति। ततश्चाशक्योयमिति। नन्दनकारकेति पाठो युक्तः। नन्दयुस् इति स्थिते संबुद्धिगुणे कृते ऽकृते वा नित्यत्वादेङ्ह्रस्वात्संबुद्धेरिति लोपे कृते अङ्गत्वाभावादनाकाप्रसङ्गः। नन्दनप्रिय इति। अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधतइति लुकि कृते नलुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधादनाकयोरप्रसङ्गः। भवेदिति। विशेषणविशेष्यभावे कामचारादङ्गेन युवू विशेष्येते। न च तावङ्गान्तौ संभवतः। न च विशेषणेन

ति। यत्र तर्हि समासाद्विभक्तिर्नास्ति नन्दनदधि। कारकदधि। एवं तर्हि न वा परं निमित्तं संज्ञा च प्रत्ययलक्षणेन। न चेह परं निमित्तमाश्रीयते अस्मिन् परतो युवोरनाकौ भवत इति। किं तर्हि। अङ्गस्य युवोरनाकौ भवत इति। अङ्गसंज्ञा भवति प्रत्ययलक्षणेन। अथ वा तयोरेव यदङ्गं तन्निमित्तत्वेनाश्रयिष्यामः। कथम्। अङ्गस्येति संबन्धसामान्ये षष्ठी विज्ञास्यते। अङ्गस्य यौ युवू। किं चाङ्गस्य युवू। निमित्तम्। ययोर्युवोरङ्गमित्येतद्भवति। कयोश्चैतद्भवति। प्रत्ययोः। युवोरनाकाविति चेद्धातुप्रतिषेधः॥। युवोरनाकाविति चेद्धातुप्रतिषेधो वक्तव्यः। युत्वा। युतः। युवान्। भुज्य्वादीनां च प्र-

---

तदन्तविधिर्भवतीति युवुभ्यां तदन्तविध्यभावाद्यत्र तत्रस्थितयोरङ्गावयवयोर्युरनाकौ भवत इति। नन्दनदधीति। स्वमोर्नपुंसकादिति लुकि नित्यत्वात् कृते नलुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधादादेशाप्राप्तिः। नवापरमिति। नह्येह विभक्तिः प्रत्ययान्तरं वा परं निमित्तत्वेनोपात्तमिति प्रत्ययलक्षणत्वमनाकयोर्नास्तीति नलुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधस्यामविषयः। केवलमङ्गस्य युवोरनाकौ भवत इत्युच्यते। अस्ति हि प्रत्ययलक्षणेनाङ्गसंज्ञा। नहि तस्यां विधीयमानायां नलुमताङ्गस्येति निषेधः प्रवर्तते लब्धाङ्गसंज्ञस्य कार्यान्तरे विधातव्ये स प्रतिषेधः प्रवर्तते। न चाङ्गसंज्ञाङ्गस्य कार्यमिति प्रतिषेधाभावः। ननु चाङ्गस्येत्यत्रासप्तमाध्यायपरिसमाप्तेरङ्गाधिकारेवन्नस्येत्यचोरदलस्य परनिमित्तकत्वात् स्थानिवद्भावे सति न संप्रसारणे संप्रसारणमिति वकारस्य संप्रसारणप्रतिषेध उक्तः स इहत्येन नवापरंनिमित्तमित्यनेन ग्रन्थेन विरुध्यते। नास्ति विरोधी लक्षणभेदात् यथोद्देशं संज्ञापरिभाषमिति पक्षमाश्रित्य न वा अपरं निमित्तमित्याद्युक्तम्। कार्यकालं संज्ञापरिभाषमाश्रित्य वन्नस्येत्युक्तम्। तत्र हि पक्षे उरदित्यत्राङ्गसंज्ञासूत्रोपस्थानात् संनिहितः प्रत्ययो निमित्तत्वेनाश्रीयतइति परनिमित्तत्वं भवति। अथ वेति। भवतु कार्यकालपक्षस्तत्रापि न दोष इति भावः। निमित्तत्वेनेति। अनाकादेशविधाने। संबन्धसामान्ये षष्ठीति। निमित्तनिमित्तिभावलक्षणसंबन्धेनाङ्गत्वादाश्रीयते। प्रत्ययनिमित्तत्वाच्चाङ्गव्यपदेशस्य प्रत्यययोरेव ग्रहणं विज्ञायते। धातुप्रतिषेध इति। नन्वधुनैवोक्तं प्रत्यययोर्ग्रहणमिति। सत्यमुक्तं न तु लभ्यते। सामानाधिकरण्येन संबन्धसंभवे वैयधिकरण्यपक्षाश्रयणस्यायुक्तत्वाद्भेदे हि निमित्तनिमित्तिभावो भवति। अभेदे च संभवति कथं भेद आश्रीयते। अथ वा भाष्यकारेण पूर्वं स्वातन्त्र्येणोक्तमिदानीं वार्तिकमवतारितमित्यदोषः। भुजय्वादीनामिति। भुजय्वादीनां संबन्धिनः प्रत्यय-

तिषेधो वक्तव्यः । भुज्युः । किंयुः । शंयुः । अनुनासिकपरत्वात् सिद्धम् । अनुनासिकपरयोर्युवोर्ग्रहणम् । न चैतावनुनासिकपरौ । यद्यनुनासिकपरयोर्ग्रहणम् । नन्दनः । कारकः । अत्र न प्राप्नुतः । नह्येताभ्यां युशब्दवुशब्दाभ्यामनुनासिकं परं पश्यामः । अनुनासिकपरत्वादिति । नैवं विज्ञायते ऽनुनासिकः पर आभ्यां ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति । कथं तर्हि । अनुनासिकः परोनयोस्ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति । यद्यनुनासिकपरयोर्ग्रहणमित्संज्ञा प्राप्नोति । तत्र को दोषः । तत्र ङीन्नुमोः प्रतिषेधः । ङीन्नुमोः प्रतिषेधो वक्तव्यः । नन्दनः कारकः । नन्दना कारिका । उगिल्लक्षणौ ङीन्नुमौ प्राप्नुतः । धात्वन्तस्य च प्रतिषेधः॥ धात्वन्तस्य च प्रतिषेधो वक्तव्यः । दिवु सिवु । षिट्टिल्करणं तु ज्ञापकमुगित्कार्याभावस्य । यदयं युशब्दवुशब्दौ षिट्टितौ करोति । शिल्पिनिष्वुन् ल्युट्युलौ तुट् चेति । तज्ज्ञापयत्याचार्यो न युवोरुगित्कार्यं भवतीति । कथं कृत्वा ज्ञापकम् । षिट्टित्करणे एतत्प्रयोजनम् । षिट्टित ईकारो यथा स्यात् । यदि चोगित्कार्यं स्यात् । षिट्टित्करणमनर्थकं स्यात् । पश्यति । त्वाचार्यो न युवोरुगि-

---

णयेत्यर्थः । सत्यपि वैयधिकरण्ये न संबन्धेऽतिप्रसङ्गः । भुज्युरिति । भुजिमृङ्भ्यां युक्त्युकौ चेति युक्प्रत्ययः । मृत्युरित्यत्र त्युप्रत्ययो न युरिति मत्वा भाष्यकारेण मृत्युरिति नोदाहृतम् । कंयुरिति । कंशंभ्यां बभयुस्तितुतयस इति युस्प्रत्ययः । ननु सित्करणं पदत्वे सति हल्यनुस्वारार्थमिति तत एवादेशो न भविष्यति । नैतदस्ति । अवग्रहाय सित्वं स्यात् । अहलादावप्यनुस्वारार्थं वा । नह्येताभ्यामिति । अजः क्वुन्वुन्वुञ्ष्वुन् इत्यादीनामेव प्रसङ्गः । अनुनासिकः परो ऽनयोरिति । अवयवान्तरापेक्षया लब्धपरव्यपदेशोवयव एवानुनासिक आश्रीयते नान्यः । न च भुज्युरित्यादावुकारस्य सानुनासिकत्वं प्रतिज्ञातमिति दोषाभावः । इत्संज्ञा प्राप्नोतीति । लोपस्तु भवतु मा वाभूदिति न विचार्यते कृते ऽपि उकारलोपे ऽवशिष्टस्यादेशविधानेन रूपनिष्पादनात् । धात्वन्तस्येति । दिवु इत्ययमपि अनुनासिकपर इत्यादेशप्रसङ्गः । न वा षित्करणमिति । ङीपि सतीकारोनुदात्तो भवति ङीषि तूदात्त इति सति प्रयोजने न ज्ञापकं षित्करणम् । टित्करणमिति । टिड्ढेत्यत्रानुपसर्जनादिति वर्तते अतोगिल्लक्षणे ङीप्यविशेषेण प्राप्ते अनुपसर्जनादेव यथा स्यादिति नियमार्थं टित्करणं स्यादित्यज्ञापकमुगित्का-

त्कार्यं भवतीति । ततो युशब्दवुशब्दौ षिट्तितौ करोति । न वा षित्करणं ङीष्विधानार्थम् । नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् । षित्करणं क्रियते ङीष्विधानार्थम् । षित इति ङीष् यथा स्यात् । टित्करणमनुपसर्जनार्थम् । टित्करणेऽप्येतत्प्रयोजनमस्ति । अनुपसर्जनाट्टित इति ईकारो यथा स्यात् । टितोनुपसर्जनाद्भवति । उगित उपसर्जनाच्चानुपसर्जनाच्च । एवं तर्हि विप्रतिषेधाट्टापो बलीयस्त्वम् * । विप्रतिषेधाट्टापो बलीयस्त्वं भविष्यति । टापो ऽवकाशः । खट्वा । माला । ङीपोवकाशः । गोमती । यवमती । इहोभयं प्राप्नोति । नन्दना । कारिका । टाब् भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । विप्रतिषेधे परमित्युच्यते । पूर्वश्च टाप् । परो ङीप् । ङीपः परष्टाप् करिष्यते । सूत्रविपर्यासः कृतो भवति । एवं तर्हि उगितो ङीब् भवतीत्यत्रापि अतष्टाबित्यनुवर्तिष्यते । एवमप्यकारान्तादुगित इहैव स्यात् । नन्दना। कारिका । गोमती । यवमतीत्यत्र न स्यात् एवं तर्हि संबन्धानुवृत्तिः करिष्यते । अजाद्यतष्टाप् । ऋन्नेभ्यो ङीप् अतष्टाप् । उगितश्च ङीब् भवति अतष्टाप् । वनो रच । वनो ङीब्भवति उगितः अतष्टाप् । पादोन्यतरस्यां ङीब्भवति उगितः अतष्टाप् । तत ऋचि । ऋचि च टाब्भवति उगितो ऽत इति निवृत्तम् । तत्रायमप्यर्थः । द्विष्टाब्ग्रहणं

---

र्थभावस्य । विप्रतिषेधादिति । पूर्वविप्रतिषेधोऽत्र विविच्चितः । एवं तर्हीति । यदोष्टवाची परशब्दो न गृह्यते तदानुवृत्तिर्वाक्यभेदश्चाश्रीयतइत्यर्थः । एवमपीति । एकवाक्यताश्रयणेन पर्यनुयुङ्क्ते तत्रादन्तादुगितः पर्यायेण टाप्ङीपोः प्रसङ्गः । एवं तर्हि संबन्धानुवृत्तिरिति । यद्यपि वाक्यभेदेन संबन्धे दोषाभावः । उगितो ङीब् भवति । अदन्तादुगितष्टाब् भवति । तथापि परिहारान्तरसद्भावप्रतिपादनायेदमुक्तम् । उगितश्च ङीब् भवतीति । अतष्टाबित्युत्तरार्थमत्रानुवर्तते । वनोरचेत्यत्रात उगिष्टाबिति वर्तते तत्र वन्नन्तस्यानुगित्वाददन्तत्वासंभवाच्च वाक्यभेद आश्रीयते । वन्नन्तस्य ङीब्रौ भवतः । उगितो ऽदन्तान्ङीबपवादष्टाबित्यस्योत्तरत्रोपस्थानाय प्रतिसूत्रमनुवृत्तिं दर्शयति । टाबृचीत्यत्र टाब्ग्रहणं न कर्तव्यं भवतीति । यद्युत्तरत्रानुवृत्तिरुपयुज्यते टापः स्वातन्त्र्यानिराकरणायात उगित इत्येताभ्यां संबन्धः । उगितोऽत इति निवृत्तमिति । उगित इत्यस्य निवृत्तिराख्यायते । अत इत्येतत् सर्वत्रप्रकरणेऽनुव-

न कर्तव्यं भवति । प्रकृतमनुवर्तते । सिध्यत्येवम् । यत्त्विदं वार्तिककारः पठति विप्रतिषेधाट्टापो बलीयस्त्वमिति । एतदसंगृहीतं भवति । एतच्च संगृहीतं भवति । कथम् । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति । धात्वन्तस्य चार्थवद्ग्रहणात् * । अर्थवतोर्युवोर्ग्रहणम् । न च धात्वन्तोऽर्थवान् । नुम्विधौ झल्ग्रहणम् * । नुम्विधौ झल्ग्रहणं कर्तव्यम् । झलन्तस्य उगित इष्यते । उगिदचां सर्वनामस्थानेऽधातोर्झल इति । तच्चावश्यं कर्तव्यम् । लिङ्गविशिष्टप्रतिषेधार्थम् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति । यथेह भवति । गोमान् यवमान् । एवं गोमती यवमतीत्यत्रापि स्यात् । न वा विभक्तौ लिङ्गविशिष्टाग्रहणम् * । न वा वक्तव्यम् । किं कारणम् । विभक्तौ लिङ्गविशिष्टग्रहणं नेत्येषा परिभाषा कर्तव्या । कः पुनरत्र विशेषः । एषा वा परिभाषा क्रियते झल्ग्रहणं वेति । अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि । प्रयोजनं शुनः स्वरे । यथेह भवति । शुना शुने । शुन्या इत्यत्रापि स्यात् । यूनः संप्रसारणे प्रयोजनम् । यथेह भवति यूनः पश्येति । एवं युवतीः पश्येत्यत्रापि स्यात् । उगिदचां नुम्विधौ प्रयोजनम् । यथेह भवति गोमान् यवमान् । एवं गोमती यवमतीत्यत्रापि स्यात् । अनडुह आम्विधौ प्रयोजनम् । यथेह भवति अनड्वानिति ।

---

र्तते । शितिब्रह्मणोति ङीन्नकारौ मा भूतामिति । क्रकवाकुरित्यत्र जातिलक्षणो ङीष् मा भूदित्येवमर्थम् । धात्वन्तस्य चार्थवद्ग्रहणादिति । वर्णसमुदाय ग्रहणमिह न वर्णग्रहणमित्यर्थवद्ग्रहणपरिभाषोपतिष्ठते । प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय इत्ययमप्यत्र परिहारः संभवति । एवं गोमतीति । ईकारात्परो नुम् प्राप्तः झलन्तत्वान्न भवति एवं नन्दनः कारक इत्यत्राझलन्तत्वान्नुमभावः । न वा विभक्ताविति । विभक्तौ यत्कार्यं विधीयते लिङ्गविशिष्टस्य तन्न भवतीत्यर्थः । शुनेति । सावेकाच इति प्राप्तं विभक्त्युदात्तत्वं न गोश्वन्निति प्रतिषिध्यते । शुन्येति । गौरादित्वात् ङीषि कृते उदात्तयणो हल्पूर्वादित्यस्य विभक्तिस्वरस्य प्रतिषेधप्रसङ्गः । ननु विभक्तेरेतत्कार्यं न तु विभक्तौ परतः पूर्वस्येति कथं लिङ्गविशिष्टपरिभाषायाः प्रतिषेधः । नैष दोषः । विभक्तेर्यत्कार्यं यच्च विभक्तौ परतः कार्यं तत्सर्वं विभक्तौ कार्यमिति सर्वत्र प्रतिषेधप्रवृत्तिः । एवं युवतीरिति । एवमर्थमन इत्युभयोः शेष इति नाश्रयितव्यं भवति । पथीति । समासैकदेश उदाहृतः । इतर एतावदेवो-

एवमनडुहीत्यत्रापि स्यात् । न वा भवत्यनड्वाहीति । भवत्यन्येन यत्नेन आमनडुहः स्त्रियां वेति लिङ्गविशिष्टग्रहणादीकारान्तस्य प्राप्नोति । पथिमथोरात्वे प्रयोजनम् । यथेह भवति । पन्थाः । मन्थाः एवं पथी मथं त्यत्रापि प्राप्नोति । न केवलं पथीमथिशब्दौ स्त्रियां वर्तेते । उपसमस्तौ तर्हि वर्तेते । सुपथी । सुमथी । पुंसोऽसुङ्विधौ प्रयोजनम् । यथेह भवति । पुमान् । एवं पुंसीत्यत्रापि स्यात् । न केवलः पुंशब्दः स्त्रियां वर्तते । उपसमस्तस्तर्हि वर्तते । सुपुंसीति । सख्युर्णित्वानङौ प्रयोजनम् । यथेह भवति । सखायौ । सखायः । एवं सखी सख्यौ सख्य इत्यत्रापि प्राप्नोति । भवद्भगवदघवतामोत्त्वे प्रयोजनम् । यथेह भवति भोः भगोः अघोरिति । एवं भवती भगवती अघवतीत्यत्रापि स्यात् । एतान्यस्याः परिभाषायाः प्रयोजनानि । यदर्थमेषा परिभाषा कर्तव्या । एतस्यां च सत्यां नार्थो झल्ग्रहणेन । तदेतदनन्यार्थं झल्ग्रहणं कर्तव्यं नुम्प्रतिषेधो वा वक्तव्यः । उभयं न वक्तव्यम् । उपरिष्टात् झल्ग्रहणं क्रियते । तत्पुरस्तादपकृष्यते । एवमपि सूत्रविपर्यासः कृतो भवति । एवं तर्हि योगविभागः करिष्यते । उगिदचां सर्वनामस्थाने ऽधातोः । युजेरसमासे । ततो नपुंसकस्य । नपुंसकस्य नुम् भवति । झल इत्युभयोः शेषः । ततो ऽचः अजन्तस्य च न-

---

दाहृतमिति मत्वाह । न केवल इति । सुपथीति । शोभनः पन्था अस्यामिति बहुव्रीहिः नपूजनादिति समासान्तप्रतिषेधः । ऋन्नेभ्योङीबिति ङीप् । भस्यटेर्लोप इति टिलोपः । सुपुंसीति । शोभनाः पुमांसोऽस्यामिति बहुव्रीहिः । उरः प्रभृतिषु पुमानिति । विभक्त्यन्तपाठस्य प्रयोजनमुक्तम् । एकवचनान्तस्यैव नित्यः कप् यथा स्यादिति । तेनात्र शेषाद्विभाषेति विकल्पो भवति । पातेर्डुम्सुन्निति प्रत्ययस्यो गित्वादुगितश्चेति ङीप् । सखीसख्याविति । सख्यशिश्वीति भाषायामिति ङीष् । अनङ्णित्वे अत्र प्राप्नुतः । ङीब्विधानं तु सखीभ्यामित्याद्यर्थं स्यात् । भवद्भगवदिति । यदा संबुद्धा भवदादयो विशेष्यन्ते तदात्वादीनामपि प्रसङ्गः । यदात्ववशब्दो विशेष्यते तदा येन नाव्यवधानमित्ये कवर्णव्यवधाने ओत्वं प्रवर्तते । भवत्यादौ तु वर्णद्वयव्यवधानादोत्वाभावः । तदभावात्तत्संनियोगविहितस्य रुत्वस्याप्यभाव इति केचिदाहुः । नार्थो झल्ग्रहणेनेति । गोमत्याद्यर्थं नेत्यर्थः । पुरस्तादिति । उगिदचांसर्वनामस्थानेधातोर्झल इति । ततो युजेरसमासे नपुंसकस्य च इति । अत्र झल इति वर्तते । उभयोः शेष इति ।

पुंसकस्य नुम्भवति। यद्यपि तावदेतदुगित्कार्यं परिहृतम्। इदमपरं प्राप्नोति। शातनितरा। पातनितरा। उगितो नद्याघादिषु ह्रस्वो भवतीत्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत। नित्यं चेष्यते। उगितो या नदी एवमेतद्विज्ञायते। उगित एषा नदी। उगितो या परा। अत्र चैव दोषो भवति। उगितो ह्येषा परा नदी। ऐषुमतितरायां च प्राप्नोति। उगितः परा या विहिता। उगित एषा विहिता। उगित इत्येवं या विहिता। एवमपि भोगवतितरायां दोषो भवति। भगवतितरा। भोगवतीतरा। तस्मादुगितो या नदी। उगितो या विहितेत्येवमेतद्विज्ञास्यते। एवं विज्ञायमाने शातनितरायां दोष एव। सिद्धं तु युवोरनुनासिकत्वात्*। सिद्धमेतत्। कथम्। यकारवकारयोरेवेदमनुनासिकयोरिह ग्रहणम्। सन्ति हि यवाः सानुनासिका निरनुनासिकाश्च॥

आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्॥ २॥ आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थम् *। आयन्नादिषूपदेशिवद्भावो वक्तव्यः। उपदेशावस्थायामायन्नादयो भवन्तीति वक्तव्यम्। किं प्रयोज-

---

युजेर्झन्तत्वाव्यभिचारादाद्यन्तावेव योगावपेक्ष्येते। झलिति लुप्तषष्ठीकं पदमाश्रीयते। शातनितरेति। शातिपातिभ्यां करणे ल्युटि कृते गौरादिषु शातनपातनेति पाठान् ङीष्। उगितोयानदीति। उगिच्छब्दोच्चारणेनेति भावः। इतरो ऽन्यहोताभिप्राय आह। उगित एषेति। पूर्वेणैवाभिप्रायेणाह। उगितो या परेति। उगिच्छब्दव्यापारेण विहितोगितः परेत्यर्थः। इतर आह। अत्र चैवेति। इषवोस्य सन्तीतीषुमान्। तस्येदमित्यण् ङीप्। यस्येति लोपे कृते उगितः परा नदीति विकल्पेन ह्रस्वत्वं प्राप्नोति नित्यं चेष्यते। पूर्वोक्तेनाभिप्रायेणाह। उगितो या पराविहितेति। ऐषुमतितरायां चाणन्तान्नदीविहिता नतूगितः। इतरस्तु शातनितरामाश्रित्याह। उगित एषेति। भोगवतितरेति। शार्ङ्गरवादिदिषु भोगवद्गौरिमतोः संज्ञायामिति पाठात् ङीन् प्रत्ययः उगित इत्येवं न विहित इति विकल्पेन ह्रस्वत्वं न प्राप्नोति। उगितस्तु विहित इति विधानाश्रयणाद्विकल्पः सिध्यति। शातनितरायां तु विकल्पः प्राप्नोति। सिद्धं त्विति। भाष्यकारीयमिदं वाक्यमित्याहुः। अन्ये त्वनुनासिकपरत्वादिति वाक्यमेवानेन व्याख्यातमित्याहुः। अनुनासिकप्रधानत्वादिति हि तस्यार्थः। अनुनासिकयणौ युवू इहानुकृतौ इत्यतिप्रसङ्गाभावः। उकारस्तु निरनुनासिक एवेत्युगित्कार्याभावः।

आयने। आयन्नादिष्विति। अङ्गाधिकारे विधानात्प्रकृतिप्रत्ययापेक्षा बहिरङ्गा आ-

नम्। स्वरसिद्ध्यर्थम्। उपदेशावस्थायामायन्नादिषु इष्टः स्वरो यथा स्यादिति। शिलेयम्। तैत्तिरीयः। अक्रियमाणे ह्युपदेशिवद्भावे प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृते आन्तर्यत आदेशा अस्वरका अस्वरकाः स्युः। न वा क्व चिच्चित्करणात् *। न वा वक्तव्यम्। किं कारणम्। क्व चिच्चित्करणात्। यदयं क्व चिद् घादींश्चितः करोति। अयादत्। घच्छौ च। तज्ज्ञापयत्याचार्यः उपदेशावस्थायामायन्नादयो भवन्तीति। कथं कृत्वा ज्ञापकम्। चित्करणे एतत्प्रयोजनम्। चित इत्यन्तोदात्तत्वं यथा स्यात्। यदि चोपदेशावस्थायामायन्नादयो भवन्तीति ततश्चित्करणमर्थवद्भवति। तत्रेणादिप्रतिषेधः *। तत्रेणादीनां प्रतिषेधो वक्तव्यः। शङ्खः। षण्ढः। धातोर्वेयङ्वचनात् *। अथ वा यदयमृतेरीयङिति धातोरीयङं शास्ति यज्ज्ञापयत्याचार्यो न धातुप्रत्ययानामायन्नादयो भवन्तीति। यदि हि स्युः ऋतेश्छङित्येव ब्रूयात्। सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति। न च ऋतेश्छङा सिध्यति। छङि सति वलादिलक्षण इट् प्रसज्येत। इटि कृतेऽनादित्वादादेशो न स्यात्। इदमिह संप्रधार्यम्। इट् क्रियतामादेश इति। किमत्र कर्तव्यम्। परत्वादिडागमः। नित्य आदेशः।

---

यन्नादयः। प्रत्ययाद्युदात्तत्वं तु प्रकृतिनिरपेक्षत्वादन्तरङ्गमिति तदेव पूर्वं प्राप्नोतीत्युपदेशिवद्वचनं कर्तव्यम्। शिलेयमिति। शिलेव शिलेयम्। शिलाया ढः। तित्तिरिणा प्रोक्तमधीते तित्तिरिवरतन्तुखण्डिकोखाच्छण्। अस्वरकाः स्युरिति। प्रवृत्तिकालापेक्षयेदमुच्यते। प्रयोगे तु स्वररहितस्याच उच्चारणाभावात्। अनुदात्तं पदमेकवर्जमिति वचनाद्वानिष्टस्वराः प्राप्नुवन्ति। के चित्त्वान्तर्यत इत्यन्यथा व्याचक्षते। यथानुदात्तोच्चारणे गात्राणां स्रंसनं स्वरस्य स्निग्धता कण्ठविवरस्य महत्त्वं च भवति। एवं व्यञ्जनोच्चारणेऽप्ययोग्यत्वादनुदात्तधर्मोपजननो व्यञ्जनेषु नास्ति तदेवमस्वरकाणामुदात्तत्वरहितानामस्वरका इष्टोदात्तत्वरहितत्वादनुदात्ता एव स्युरित्यर्थः। नवेति। सत्यप्यङ्गाधिकारेऽङ्गत्वमनपेक्ष्य प्रत्ययोत्पत्तिकाल एवायन्नादयो भवन्तीति चित्करणेन ज्ञाप्यते। तत्राङ्गानपेक्षत्वादसति बहिरङ्गत्वे परत्वान्नित्यत्वाच्च कृतेष्वायन्नादिषु प्रत्ययाद्युदात्तत्वं भवतीतीष्टस्वरसिद्धिः। तत्रेणादिनिषेध इति। ये त्वनुणादयः खल्घञादयस्तेषु खघञोरित्संज्ञया भाव्यम्। खित्यनव्ययस्य चजोः कुघिण्यतोरिति लिङ्गात्। तद्धितेषु सावकाशत्वनादेशविधानेनेत्संज्ञा न बाध्यते। नित्य आदेश इति। उपदेशे यः प्रत्ययादि-

कृतेपीटि प्राप्नोत्यकृतेपि । अनित्य आदेशः । नहि कृतइटि प्राप्नोति । किं कारणम् । अनादित्वात् । अन्तरङ्गस्तर्ह्यादेशः । कान्तरङ्गता । इदानीमेवाक्तमायन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति । तदेतद्वतीयद्वचनं ज्ञापकमेव न धातुप्रत्ययानामायन्नादयो भवन्तीति । प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् * । प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम् । उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि ॥

झोन्तः ॥ ३ ॥ झादेशे धात्वन्तप्रतिषेधः * । झादेशे धात्वन्तस्य प्रतिषेधो वक्तव्यः । उज्झिता उज्झितुमिति । प्रत्ययाधिकारात्सिद्धम् * । प्रत्ययग्रहणं प्रकृतमनुवर्तते । क्व प्रकृतम् । आयनेयीनीयियः फढखच्छघां प्रत्ययादीनामिति । प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशवचनम् * । प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशो वक्तव्यः । अपि नः श्वो वा विजनिष्यमाणाः पतिभिः सह शयान्तै । एवं तर्हि प्रत्ययग्रहणमनुवर्तते आदिग्रहणं निवृत्तम् । कथंपुनः समासनिर्दिष्टानामेकदेशोनुवर्तते एकदेशो वा निवर्तते । असमासनिर्देशात्सिद्धम् * । असमासनिर्देशः करिष्यते प्रत्ययस्यादीनामिति । स तर्ह्यसमासनिर्देशः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव । कथम् । अविभक्तिको निर्देशः । प्रत्यय आदीनामिति । त-

---

स्यादेश इति कृतेपीटि प्राप्नोति । अनादित्वादिति । सांप्रतिकं प्रत्ययादित्वमाश्रित्यादेशो विधीयते । प्रातिपदिकविज्ञानादिति । पक्षान्तरैरपि परिहाराः संभवन्तीत्यव्युत्पत्तिपक्षाश्रयः ।

झोन्तः । इह प्रत्ययग्रहणे ऽनुवर्तमाने एकसमासनिर्दिष्टमादिग्रहणमप्यनुवर्तते । तथा च शयान्तै इत्यत्रानादित्वात् झस्यान्तादेशो न स्यादिति प्रत्ययग्रहणं नानुवर्त्यमिति मत्वाह । झादेश इति । झकारोपदेशस्तु प्रत्यय इव लाघवार्थः स्यात् । शयान्ता इति शीङ् उपसंवादाशङ्कयोश्चेति लेट् । तस्य झः । लेटोडाटावित्याडागमे टेरेत्वं वैतोन्यत्रेत्यैत्वं झोन्तादेशः शबलुक् शीङः सार्वधातुके गुण इति गुणः । कथं पुनरिति । यदार्थाधिकारपक्ष उपात्तार्थशब्दाधिकारपक्षो वा तदायं पर्यनुयोगः । वर्तिपदार्थस्य समुदायेर्थेन्तर्भावात्पृथगनुवृत्त्यसंभवात् । यदा त्वनाश्रितार्थं शब्दमात्रं वतिज्ञातस्वरितत्वमनुवर्तत इति पक्षस्तदा नास्ति चोद्यावकाशः । संख्याव्ययादेर्ङीबित्यतो दामहायना-

अ शयान्ता इत्यनकारान्तत्वादङ्गस्याङ्भावप्रतिषेधः * । तच्चैतस्मिन्प्र-त्ययग्रहणे अनुवर्तमाने आदिग्रहणनिवृत्तेशयान्ते इत्यनकारान्तत्वा-दङ्गस्याङ्भावः प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । सिद्धमनानन्तर्यादन-कारान्तेनाङ्भावनिवृत्तिः * । सिद्धमेतत् । कथम् । अनानन्तर्यादनका-रान्तेनाङ्भावो न भविष्यति । कथं कृत्वा चोदितं कथं कृत्वा च परि-हारः । अनकारान्तग्रहणं प्रत्ययविशेषणमिति कृत्वा चोदितं झका-रविशेषणमिति कृत्वा परिहारः। यद्यनकारान्तग्रहणं झकारविशेषणं, शेरते अत्र न प्राप्नोति । तत्र रुटि संनियोगवचनात्सिद्धम् * । तत्र रुटि संनियोगः करिष्यते । क एष यत्नश्चोद्यते संनियोगो नाम । च-कारः कर्तव्यः । रुट् च । किं च । यच्चान्यत् प्राप्नोति । किंचान्यत् प्राप्नो-ति । अङ्भावः । स तर्हि चकारः कर्तव्यः । न कर्तव्यः । योगविभागः करि-ष्यते । शीङः । शीङ उत्तरस्य झस्याङ्भावो भवति । ततो रुट् । रुट् च भ-वति शीङ इति । एवमपि पर्यायः प्रसज्यत । एवं तर्हि अच्छब्दस्य रुटं व-क्ष्यामि । तदच्छब्दग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । अदभ्यस्तादिति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चे-हार्थः । शीङ इत्येषा पञ्चमी अदिति प्रथमायाः षष्ठीं प्रकल्पयिष्य-ति तस्मादित्युत्तरस्येति ॥

---

न्ताच्चेतयत्राव्ययग्रहणाननुवृत्तावपि संख्याग्रहणानुवृत्तिदर्शनात् । तच्चेति । अन्तरङ्गत्वा-दाटिकृतेन्तादेशापवादो ऽदादेशः प्राप्नोति । अनकारान्तादङ्गात्प्रत्ययस्य परत्वात् सिद्ध-मिति । अनकारान्तेनाङ्गेन प्राधान्याद् झकारएव विशेष्यते । तत्र व्यवधानाददादेशा-भावः । अन्तादेशस्त्ववधिमनुपादायविधीयमानो व्यवधानेपि भवति । शेरतइति । प्रति-पदविधेर्बलवत्वाद्रुटि कृते व्यवधानाददादेशो न प्राप्नोति । निर्दिश्यमानस्यादेशा भव-न्तीति वचनाज्झकारमात्रस्यादौ विधीयते । तच्च रुटा व्यवधीयते । रुटि संनियोगवच-नादिति । आगमादेशयोः सहविधानादागमेन स्थानिनो व्यवधानाभावः । एवमपि प-र्याय इति । अङ्भावे कृते रुट् न प्राप्नोति झस्य रुड्विधानादल्विधित्वात् स्थानिवत्त्वाभा-वाद्रुटि कृतेऽङ्भावो न प्राप्नोति व्यवधानात् ततो विरोधात्तुल्यबलवत्वाच्च पर्यायप्रसङ्गः । एवं तर्हीति। अच्छब्दस्य रुटि सत्यवयवावयवोपि समुदायावयवो भवतीति रुटा व्यवधा-नाभावाद् गुणः शीङः प्रवर्तते ।

शीङो रुट् ॥ ६ ॥ रुटि दृशिगुणप्रतिषेधः * । रुटि दृशिगुणः प्राप्नोति । अदृश्रन्नस्य कितव इति तस्य प्रतिषेधो वक्तव्यः । न वक्तव्यः । परस्मिन्निमित्ते क्ङिति चेति निषेधो भविष्यति । एवमदृश्रमस्य कितव इत्यत्रापि प्राप्नोति । एवं तर्हि पूर्वान्तः करिष्यते । पूर्वान्ते शीङो गुणविधिः * । पूर्वान्ते शीङो गुणो विधेयः । शेरते । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं रुटि दृशिगुणप्रतिषेध इति । पूर्वान्तेप्येष दोषः । कथम् । अयं दृशिगुणः प्रतिषेधविषयआरभ्यते स यथा क्ङिति चेत्येतं प्रतिषेधं बाधते एवमनुपधाया अपि प्रसज्येत । तस्मादुभाभ्यामेव दृशेरङ्प्रत्ययान्तरं वक्तव्यम् । पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम् । झादेशादाट् लेटि * । झादेशादाट् लेटि भवति विप्रतिषेधेन । झादेशस्यावकाशः । लुनते लुनता अलुनत । आटोवकाशः । पताति दिद्युत् । उदधिं च्यावयति । इहोभयं प्राप्नोति अपि नः श्वो वा विजनिष्यमाणाः पतिभिः सह शयान्तै । आट् लेटि भवति विप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वा नित्यत्वादाटः * । न वा वक्तव्यः । किं कारणम् । नित्यत्वादाटः । नित्य आडागमः । कथं नित्यः । यद्यनकारान्तग्रहणं झकारविशेषणम् । अथ हि प्रत्ययविशेषणम् । झादेशोपि नित्यः ।

---

शीङो रुट् । अदृश्रन्निति । दृशेर्लुङि झेरन्तादेशे इरितोवेत्यङि तत्रान्तरङ्गत्वाद् गुणात्पूर्वं रुटि कृते ऋदृशोङि गुण इति गुणप्रसङ्गः । परस्मिन्निति । यदा क्ङिति चेत्यत्र निमित्तसप्तमोपचस्त्यक्तः परसप्तमोपच आश्रितस्तदैतदुच्यते । वार्णादाङ्गं बलवदित्यनपेक्षिते वर्णाश्रयत्वादन्तरङ्गे एकादेशे कृते तस्य परं प्रत्यादिवद्भावात् ङित्सार्वधातुकं परमाश्रित्य क्ङिति चेति गुणप्रतिषेधः प्रवर्तते । येन नाप्राप्तिन्यायेन अङ्निमित्त एव प्रतिषेधो गुणेन बाध्यते न तु ङित्सार्वधातुकनिमित्तः । प्रतिषेधाश्च बलीयांसो भवन्तीत्युभय प्रसङ्गे प्रतिषेधः प्रवर्तते । अदृश्रमिति । मिबादेशस्यामः पित्त्वान्ङित्त्वाभावान्नास्ति गुणप्रतिषेधः । एवं तर्हीति । पूर्वान्ते रुटि अलघूपधत्वाद् गुणाभावः । लघूपधगुणस्यैव हि ऋदृशोङि न गुण इति गुणप्रत्यापत्तिः क्रियते । अथ वा गुणस्तु रयेक इत्युपस्थानात्तस्यैवाङ्गा विशेषणाद् येननाव्यवधानमित्येकवर्णव्यवहितस्य गुणो भवति रुटि कृते न भवति । शेरतइति । रुकि सत्यनिगन्तत्वाद् गुणप्रसङ्गः । पूर्वान्ते-पोति । क्ङितिचेति गुणे प्रतिषिद्धे अपूर्वं ऋदृशोङि गुण इति गुणो विधीयते । स य-

अन्तरङ्गलक्षणत्वाच्च । अन्तरङ्गः खल्वपि आडागमः । कथमन्तरङ्गः य-दि प्राग्लादेशाड्डात्वधिकारः । अथ हि लादेशे धात्वधिकारोनुवर्त्त-ते । उभयं समानाश्रयम् । । यद्येवमनकारान्तग्रहणं प्रत्ययविशेषणा-म् । अथापि लादेशे धात्वधिकारोनुवर्त्तते । उभयथापि पूर्वविप्रति-षेधेन नार्थः । कथम् । बहुलं छन्दसीत्येवमत्र शपो लुङ्न भविष्यति। तत्रानत इति प्रतिषेधो भविष्यति ॥

वेत्तेर्विभाषा ॥ ७ ॥ बहुलं छन्दसि ॥ ८ ॥ इदं बहुलं छन्दसी-ति द्विः क्रियते । एकं शक्यमकर्तुम् । कथम् । यदि तावत्पूर्वं क्रि-यते परं न करिष्यते अतो भिस ऐसित्यत्र बहुलं छन्दसीत्येतदनुव-र्तिष्यते । अथ परं क्रियते न पूर्वं करिष्यते । बहुलं छन्दसीत्यत्र रु-डप्यनुवर्त्तिष्यते । अपर आह । उभे बहुलग्रहणे एकं छन्दोग्रहणं श-क्यमकर्तुम् । कथम् । इदमस्ति । वेत्तेर्विभाषा । ततः । छन्दसि च विभाषा । ततोतो भिस ऐस् भवति । छन्दसि विभाषेति ॥

अतो भिस ऐस् ॥ ९ ॥ इह वृक्षैः प्लक्षैरिति परत्वादेत्वं प्राप्नोति। एत्वे कृते विहतनिमित्तत्वादैस्त्वं न भविष्यति । भित्वं एसिपरत्वा-

---

थैव प्रतिषेधविषये प्रवर्त्तते तथैवानुपधाया अपि इकः प्रवर्तेत । अङ्ग्रहणं च श्रुतत्वाद् दृशेरेव विशेषणं नेकः । दृशेरक्प्रत्ययान्तरमिति । यश्च लिख्याशिष्यङ् । यश्चेरितोवेस्य-ङ् । तत्प्रसङ्गे छन्दसिदृशेरग्वक्तव्यः । अथ भाषायामदर्शन्नित्यत्र ङित्सार्वधातुकनिमि-त्तः प्रतिषेधः कस्मान्न भवति । ङ्कितीतिनिमित्तसप्तमीविज्ञानाद्वार्णादाङ्गं बलीय इत्ये-कादेशात्पूर्वमेव गुणविधानाद्वा स्थानिवद्भावाद्वा । एकादेदेशस्य व्यवधानात्कृताथं स्य वा प्रतिषेधस्य परत्वाद्गुणेन बाधनात् । ऋादेशोपि नित्य इति । द्वयोश्च नित्यत्वेन चानित्यत्वादाट इति न शक्यते वक्तुम् । ऋविशेषणपक्षेप्यभेदाश्रयेणाटो नित्यत्वम् । शि-द्दर्शने तु शब्दान्तरप्राप्त्याडप्यनित्यः । यति प्राग्लादेशादिति । तदा प्रत्ययमात्रापे-क्षत्वादाडन्तरङ्गः ।

वेत्तेर्विभाषा बहुलं छन्दसि । अतोभिस ऐस् इत्यत्रेति । वाक्यभेदेन संबन्धाद्भाषाया-मपि ऐस् भवति । छन्दसि च विभाषेति । प्रत्ययमात्रस्य छन्दसि रुड्विधीयते विभाषा । व्यवस्थितविभाषाविज्ञानाच्च यथाप्रयोगं रुड्विधिः ॥

अतोभिसऐस् । परत्वादिति । एत्वस्यावकाशो वृक्षेष्विति । ऐसोवकाशः कृत एत्वे प्रागेत्वादुभयप्रसङ्गे परत्वादेत्वप्रसङ्गः । मुख्यशब्दार्थाश्रयणेनानवकाशं मत्वा पृच्छति ।

श्चेदत ऐस् क्व भविष्यति ॥ ऐस्भाव इदानीं क्व भविष्यति। कृते एत्वे भौतपूर्व्यात् ॥ कृते एत्वे भूतपूर्वमकारान्तमिति ऐस् भविष्यति। ऐस्तु नित्यस्तथासति ॥ एवं सति नित्य ऐस्भावः कृतेप्येत्वे प्राप्नोत्यकृतेपि। नित्यत्वादैस्त्वे कृते विहतनिमित्तत्वादेत्वं न भविष्यति। एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति ॥ कृते एत्वेभौतपूर्व्यादैस्तु नित्यस्तथासति ॥ १ ॥

नेदमदसोरकोः ॥ ११ ॥ इमौ द्वौ प्रतिषेधावुच्येते उभौ शक्यावक्तुम्। कथम्। एवं वक्ष्यामि इदमदसोः कादिति। तन्नियमार्थं भविष्यति इदमदसोः कादेव नान्यत इति ॥

टाङसिङसामिनात्स्याः ॥ १२ ॥ किमर्थमिनादेश उच्यते। न नादेश एवोच्येत। कारूपसिद्धिः। वृक्षेण। प्लक्षेण। एत्वे योगविभागः करिष्यते। कथम्। इदमस्ति बहुवचने झल्येत्। ओसि च। ततः आङि च। आङि च परतो ऽत एत्वं भवति। वृक्षेण प्लक्षेण। तत आपः संबुद्धौ च। आपः आङि च ओसि चेति। नैवं शक्यम्। इह हि अनेनेति इद्रूपलोपः प्रसज्येत। झलि लोपः करिष्यते। न शक्यो झलि लोपः कर्तुम्। इह हि दोषः स्यात्। अयाविष्टेति। एवं तर्हि अन्लोपापवादो विज्ञास्यते। कथम्। एवं वक्ष्यामि। अन् ने च आपि चेति। तन्नकारग्रहणं कर्तव्यम्। न कर्तव्यम्। क्रियते न्यास एव। लुप्तनिर्दिष्टो नकारः। यद्येवं नोपधा-

---

ऐस्भाव इदानीमिति। कृत एत्वे इति। सांप्रतिकाभावे भूतपूर्वगतिराश्रीयते। ननु नाप्राप्ते एत्वे ऐसारभ्यमाणस्तस्यापवादो युक्तः। उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः। एवं तर्हि पूर्वपक्षवादिनोत्सर्गापवादमनाश्रित्य चोदितमिति तदनुसारेणैव सिद्धान्तवादी परिहरति। ऐस्तु नित्य इति ॥

टाङसिङसाम्। आङि चेति। स्थानिवद्भावान्नादेशे एत्वं विज्ञायते। अनेनेति। तस्य हलादित्वाल्लोपे सत्येनेति प्राप्नोति। झलि लोप इति। हलिलोप इत्यपनीय झलि लोप इति सूत्रं कर्तव्यम्। नकारस्तु झल्न भवतीति लोपाभावः। अयेति। इदमश्चतुर्थ्येकवचनस्य सुपांसुलुगिति याादेशः। तस्य झलादित्वादिड्रूपलोपाप्रसङ्गाद्धलिलोप इति वक्तव्यं तथा चानेनेति न सिध्यति। एवं तर्हीति। नच आप् च नाप् तस्मिन्परत इदमोनादेश इति सूत्रार्थं आश्रीयते। लुप्तनिर्दिष्ट इति। निर्दिश्य

या इति दीर्घत्वं प्राप्नोति । सौत्रो निर्देशः । अथ वा नपुंसकनिर्देशः करिष्यते । अथ किमर्थमादित्युच्यते । न अदेवोच्येत । का रूपसिद्धिः । वृक्षात् । प्लक्षात् । सवर्णदीर्घत्वेन सिद्धम् । न सिध्यति । अतो गुणे पररूपत्वं प्राप्नोति । अकारोच्चारणसामर्थ्यान्न भविष्यति । यदि प्राप्नुवन्विधिरुच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति । यं विधिं प्रत्यकारोच्चारणमनर्थकं स विधिर्बाध्यते । यस्य तु विधे र्निमित्तमेव नासौ बाध्यते । पररूपं प्रत्यकारोच्चारणमनर्थकं सवर्णदीर्घस्य पुनर्निमित्तमेव ॥

ङेर्यः ॥ १३ ॥ किमिदं चतुर्थ्येकवचनस्य ग्रहणमाहोस्वित् सप्तम्येकवचनस्य । कुतः संदेहः । समानो निर्देशः । चतुर्थ्येकवचनस्य ग्रहणम् । कथं ज्ञायते । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । इहापि तर्हि चतुर्थ्येकवचनस्य ग्रहणं स्यात् । ङेराम्नद्याम्नीभ्यः । एवं तर्हि व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणमिति । इह चतुर्थ्येकवचनस्य ग्रहणं व्याख्यास्यामस्तत्र सप्तम्येकवचनस्येति ॥

---

लुप्त इत्यर्थः । यद्येवं नलोपस्यासिद्धत्वाद्दीर्घत्वं प्राप्नोति यथा राजेति । नैष दोषः । छन्दोवत्सूत्राणि भवन्ति सुपांसुलुगिति लुकि कृते नलुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद् दीर्घत्वाभावः । सौत्र इति । सूत्रे कृतः सौत्रः कृतलब्धेत्यण् ।[अकारोच्चारणसामर्थ्यादिति । अन्यथा तकार एव विधीयेत । आदेः परस्येत्यादेस्तकारे विहिते संयोगान्तलोपे च वृक्षदिति सिध्यति । तदेवं भाष्यकारेण नादेशोऽदादेशस्य व्यवस्थापितः । अन्ये त्वतिजरसिनाऽतिजरसादिति सिद्धये इन आच्च विहितावित्याहुः सन्निपातपरिभाषाया अनित्यत्वाज्जरसादेशं वदन्तः । भाष्यकारस्तु सन्निपातपरिभाषामाश्रित्य जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाव्यमिति मत्वा गौरवमुद्भावितवान् ॥

ङेर्यः । कुतः संदेह इति । प्रयोगे वृक्षायेत्यादौ चतुर्थ्यर्थावगमादयुक्तः संदेह इति भावः । इतरो लक्षणमात्रश्रवणे भूत्वाह । समानोनिर्देश इति । लक्षणप्रतिपदोक्तयोऽिति । चतुर्थ्येकवचनस्य ङे इति रूपं प्रतिपदोक्तम् । सप्तम्येकवचनस्यतुघेर्ङितीतिगुणेकृतेलाक्षणिकंरूपम् । इहापितर्हीति । ङेरितिषष्ठ्यन्तंरूपमुपात्तंतच्चोभयोरपिलाक्षणिकमितिपरिभाषायाअयमविषयः । अथप्रत्ययात्पूर्वस्यभागस्यलाक्षणिकत्वप्रतिपदोक्तत्वसंभवापेक्षापरिभाषाप्रवृत्तिस्तदाऽन्यत्रापि प्रवर्तेत । एवं तर्हीति । लिङ्गदर्शनंचास्ति । तस्मैप्रभवतिसंतापादिभ्यः । तदस्यांप्रहरणमितिक्रीडायांणइति ॥

सर्वनाम्नः स्मै॥१४॥अथ एकादिष्टत्वात्स्मायादीनामुपसंख्यानम्*। अथ एकादिष्टत्वात्स्मायादीनामुपसंख्यानं कर्तव्यम्। अथो अचास्मै-अथो अचास्मात्। अथो अचास्मिन्। एकादेशे कृते अत इति स्मायादयो न प्राप्नुवन्ति। किं पुनः कारणम्। एकादेशस्तावद्भवति न पुनः स्मायादयः। न परत्वात्स्मायादिभिर्भवितव्यम्। न भवितव्यम्। किं कारणम्। नित्यत्वादेकादेशः। नित्य एकादेशः। कृतेष्वपि स्मायादिषु प्राप्नोत्यकृतेष्वपि। नित्यत्वादेकादेशे कृते ऽतइति स्मायादयो न प्राप्नुवन्ति। किमुच्यते अथ इति। न। इहापि कर्तव्यम्। अचास्मै। अचास्मात्। अचास्मिन्निति। एकादेशे कृते ऽत इति स्मायादयो न प्राप्नुवन्ति। आनुपूर्व्यात्सिद्धमेतत्। नाचाकृतेषु स्मायादिषु हलादिर्विभक्तिरस्ति हलादौ च इदृपलोपः। नचाकृते इदृपलोपे एकादेशः प्राप्नोति तदानुपूर्व्यात्सिद्धम्। तत्तर्ह्युपसंख्यानं कर्तव्यम्। न वा बहिरङ्गलक्षणत्वात्*। न वा कर्तव्यम्। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षण एकादेशः। अन्तरङ्गाः स्मायादयः। असिद्धं बहिरङ्गमन्तरङ्गे॥

जसः शी॥१७॥ जश्शसोः शिः॥२०॥ किमर्थं शीभावः शिभावश्चोच्यते। न शिभाव एवोच्येत। का रूपसिद्धिः। ते। ये। के। आद्गुणेन सिद्धम्। नैवं शक्यम्। इह हि त्रपुणी। जतुनी। दीर्घश्रवणं न स्यात्। एवं तर्हि शीभाव एवोच्येत। नैवं शक्यम्। इह हि कुण्डानि वनानीति ह्रस्वस्य श्रवणं न प्रसज्येत। तस्माच्छीभावः। शिभावश्च॥

---

सर्वनाम्नः स्मै। अथएकादिष्टत्वादिति। लोके ऽर्थप्रतिपादनाय वाक्यमुच्चार्यते तदेव व्याकरणेपि विभज्यान्वाख्यायते। ततश्च अच अए इति स्थिते त्यित्वादेकादेशः प्राप्नोति तस्मिन् कृते ऽदन्तत्वाभावाद्वर्णविधावन्तादिवद्भावाभावात्तद्रूप्यानतिदेशात् स्मायाद्यसिद्धिरिति भावः। आनुपूर्व्येति। अच इदम् ए इति स्थिते त्यदाद्यत्वे कृते स्मायादयः। ततो नित्यत्वादाद्गुणं बाधित्वा इदृपलोपे कृते सवर्णदीर्घत्वेन रूपं सिध्यतीत्यर्थः। नवेति। पदद्वयाश्रयत्वादेकादेशो बहिरङ्गः। एकपदाश्रयत्वात् स्मायादयोन्तरङ्गाः॥

जसःशो। शीभावशिभावयोः क्वचिद्रूपाभेदं दृष्ट्वा प्रश्नः। किमर्थमिति॥

औङ आपः ॥ १८ ॥ किमर्थो ङकारः । सामान्यग्रहणार्थः । औ इत्युच्यमाने प्रथमाद्विवचनस्यैव स्यात् । अथापि औङित्युच्यते । एवमपि द्वितीयाद्विवचनस्यैव स्यात् । अस्ति प्रयोजनमेतत् । किं तर्हीति । ङित्कार्यं तु प्राप्नोति । खट्वे । माले । याडाप इति याट् प्राप्नोति । नैष दोषः । नैवं विज्ञायते ङकार इद् यस्य सोयं ङित् ङितीति । कथं तर्हि । ङकार एव इत् ङित् ङितीति । एवं तर्हि वर्णग्रहणमिदं भवति । वर्णग्रहणेषु चैतद्भवति यस्मिन्विधिस्तदादावल्ग्रहणइति न दोषो भवति । अथ वा वर्णग्रहणमिदं भवति । नचैतद्वर्णग्रहणेषु भवति । अननुबन्धकग्रहणे न सानुबन्धकस्येति । अथ वा पूर्वसूत्रनिर्देशोयम् । पूर्वसूत्रेषु च येऽनुबन्धा नतैरिहेत्कार्याणि क्रियन्ते । औकारोयं शीविधौ ङिद्ग्रहितो ङिच्चास्माकं नास्ति कोयं प्रकारः । सामान्यार्थस्तस्य चासञ्जने स्मिन्ङित्कार्यं ते श्यां प्रसक्तं स दोषः ॥१॥ ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ । वर्णस्यायं तेन ङित्वे न दोषो निर्देशोयं पूर्वसूत्रेण वा स्यात् ॥ १ ॥

---

औङ आपः । किमर्थ इति । औङ इति भूतानुवादः । न क्वचिदौङिति रूपं विज्ञातमभूत्तस्य च भूतवदुपादाने किं प्रयोजनमिति प्रश्नः औ इत्युच्यमान इति । निरनुबन्धकपरिभाषयेति भावः । यद्यपि टकारः प्रत्याहारार्थत्वात्समुदायानुबन्धस्तथाप्यनेकान्ता अनुबन्धा इति दर्शने एकान्ता इति दर्शने वा अवयवावयवस्यापि समुदायावयवत्वदर्शनात् प्रत्ययस्याप्यनुबन्धः स्यात् । प्रयोजनाभावात्प्रत्ययानुबन्धो न भविष्यतीति चेदिह तस्य ग्रहणं मा भूदिति प्रयोजनं स्यात् । यद्येवमौङ इत्युच्यमाने तदनुबन्धकग्रहणेनातदनुबन्धकस्येति द्वितीयाद्विवचनग्रहणं न प्राप्नोति । ङकारोच्चारणसामर्थ्याद्भविष्यतीत्यदोषः । ङित्कार्यं त्विति । औङ इति वचनात् प्रथमा द्वितीयाद्विवचनयोरौङोर्विधायकं वाक्यमनुमीयतइत्युपदेशेन्त्यत्वान्ङकारस्येत्संज्ञायां सत्यां ङित्कार्यप्रसङ्गः । अथ वेति । औङ इति वर्णमात्रं निर्दिश्यते ङकारस्त्वसंदेहार्थो नानुबन्धार्थः । यदोरविति यथा दकारः । अङ्गाच्चिमस्य प्रत्यय औकारेण विशेष्यतइति औकारान्तस्य शीभावो विधीयमानोन्तवद्भावात् केवलस्याप्यौकारस्य प्रवर्तते । प्रत्ययस्य चानुबन्धभावाभावाभ्यां निरनुबन्धकपरिभाषाव्यवस्थां करोति न वर्णस्य । अथ वेति । पूर्वाचार्यैर्ह आप द्विवचनं ङितो पठिते । न चेह क्वचिदप्यौङ्प्रत्ययोस्ति । सामान्यग्रहणार्थं च पूर्वसूत्रनिर्देशस्तेन यः पूर्वं सूत्रे औङ् तस्य ग्रहणं भवतीति प्रथमाद्वितीयाद्विवचनयोर्ग्रहणसिद्धिः । वर्णस्यायमिति । औकारो वर्ण एव निर्दिष्टो न प्रत्यय इत्यर्थः । तेन ङित्वेन दोष इति । ङित्त्वे सति यो दोषः स नास्ति ङित्त्वस्यैवाभावादित्यर्थः ॥

अष्टाभ्य औश् ॥ २१ ॥ औशद्यौ * । अशद्याविति वक्तव्यम् । किमिदमद्याविति । अनुत्तरपद इति । किं प्रयोजनम् । इह मा भूत् । अष्टपुत्रः अष्टभार्यः । अस्तु लुक्तत्र । अस्त्वत्रौश्त्वं लुग्भविष्यति । षड्भ्योऽप्येवं प्रसज्यते । इहापि तर्हि प्राप्नोति । अष्टौ तिष्ठन्ति । अष्टौ पश्येति । अपवादः ॥ अपवादत्वादत्रौश्त्वं लुकं बाधिष्यते । इहापि तर्हि बाधेत । अष्टपुत्रः । अष्टभार्यः । यस्य विषये ॥ यस्य लुको विषये औश्त्वं तस्यापवादः । यो वा तस्मादनन्तरः ॥ अथ वा ऽनन्तरस्य लुको बाधकं भविष्यति । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । अथेह कस्मान्न भवत्यौश्त्वम् । अष्ट तिष्ठन्ति अष्ट पश्येति । आत्वं तु यत्र तत्रौश्त्वम् ॥ यत्रैवात्वं तत्रैवौश्त्वन

---

अष्टाभ्य औश् । औशद्याविति · औशादेशो नाप्राप्ते लुक्यारभ्यमाणो विशेषाभावात्सर्वस्य लुको बाधकः प्राप्नोतीति भावः । इतरो येन नाप्राप्तिन्यायेन षड्भ्यो लुगित्यस्यैवायमपवाद न सुपो धातुप्रातिपदिकयोरित्यस्यापीति मत्वाहास्त्विति । भवत्वौशादेशस्तस्य लुग्भविष्यतीत्यर्थः । एतच्चौशादेशप्रवृत्तिमभ्युपगम्योच्यते । नित्यत्वात् पूर्वमेव लुका भाव्यम् । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति वा । इतरो लुको विशेषमपश्यन्नप्यपवादे प्रवृत्ते उत्सर्गः प्रवर्तते तदातिप्रसङ्ग इत्याह । षड्भ्य इति । सूत्रैकदेशानुकरणमेतत् । षड्भ्यो लुगित्ययमप्यौशो लुक् प्राप्नोति । अथ विधानसामर्थ्यान्न भवति तदाष्टपुत्र इत्यत्रापि न प्राप्नोतीत्यर्थः । इतरो येन नाप्राप्ते तस्य बाधनमित्याश्रयाद्दापवादइति । षड्भ्यो लुगिति सर्वत्र प्राप्नोतीति स एवौशा बाध्यते सुपो धातुप्रातिपदिकयोरित्ययं तु क्वचित् प्राप्नोतीति तं प्रत्यस्य बाधकत्वायोगादन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति पूर्वमेव लुक् प्रवर्तते । यो वा तस्मादिति । औशः षड्भ्यो लुगित्ययमनन्तरः । द्वितीयाध्यायविहितस्तु व्यवहितः । ननु मध्येपवादा इति द्वितीयाध्यायविहितस्यैव लुको बाधः प्राप्नोति । नैष दोषः । यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहितसंस्कारोपजनितस्मृत्युपारूढस्य पूर्वस्य युक्तो बाधः । इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायव्यवहितो लुङ् महता यत्नेन स्मरणीयोनन्तरस्त्वनुभवनीय इति स एव बाध्यते अथ वा सत्यामसत्यां चोपलब्धौ प्रत्यासत्त्या ऽनन्तरस्यैव बाधेन भाव्यम् । एतच्च लुकः स्वमकच्छत्वमभ्युपगम्योक्तम् । भिन्नकक्ष्यौ त्वेतौ लुकौ । एकस्य सर्वत्र प्राप्त्या ऽपरस्य क्वचित् प्राप्त्या । अथेहेति । अष्टाभ्य इति विभक्तौ लक्षणवशादाकारो निर्दिष्टो ऽयमत्र औशं विषयविशेषे व्यवस्थापयितुम् । आत्वं तु यत्रेति । कृताकारस्यानुक-

भवितव्यम् । कुत एतत् । तथा ह्यस्य ग्रहः कृतः ॥ तथा ह्यस्यात्वभूतस्य ग्रहणं क्रियते अष्टाभ्य इति । ननु च नित्यमात्वम् । एतदेव ज्ञापयत्याचार्यः । विभाषा आत्वमिति । यदयमात्वभूतस्य ग्रहणं करोति अष्टाभ्य इति । इतरथा अष्टन इत्येव ब्रूयात् । औशश्चावश्च लुतत्र षड्भ्योप्येवं प्रसज्यते । अपवादो यस्य विषये यो वा तस्मादनन्तरः ॥ १ ॥ आत्वं हि यत्र तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः ॥ त्यमोर्लुक् च त्यदादीनां कृतेऽत्वे न लुग्भवेत् ॥ २ ॥

त्यमोर्नपुं सकात् ॥ २३ ॥ त्यमोर्लुक् त्यदादिभ्यश्चेति वक्तव्यम् । इहापि यथा स्यात् । तद् ब्राह्मणकुलमिति । किं पुनः कारणं न सिध्यति । कृते ह्यत्वे न लुग्भवेत् । अत्वे कृते लुङ्न प्राप्नोति । इदमिह संप्रधार्यमत्वं क्रियतां लुगिति । किमत्र कर्तव्यम् । परत्वादत्वम् । नित्यो लुक् । कृतेप्यत्वे प्राप्नोत्यकृते ऽपि । अनित्यो लुक् ।

---

रणमष्टाशब्दः । ननु चेति । लक्षणवशाद्विभक्तावात्वं विधाय निर्देशः कृत इति चोदकाशयः । एतदेवेति । लाघवार्थमष्टन इति वक्तव्ये कृतात्वस्येदमनुकरणम् । तस्य चैतत् प्रयोजनं कृतात्वाद्यथा स्यादकृतात्वान्मा भूदिति । यदि च नित्यमात्वं स्यात्तदा व्यवच्छेद्याभावात् कृतात्वानुकरणमनर्थकं स्यात्तस्मात् कृतात्वानुकरणनिर्देश आत्वविकल्पस्य ज्ञापकः ॥

त्यमोरिति । उत्तरसूत्रोपस्थाप्यमानार्थसंग्रहः । त्यमोर्नपुंसकात् । तदिति । तदोः सः साविति सत्वमप्यत्र प्राप्नोति । नित्यो लुगिति । अत्वं तु लुकि कृते न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद्विभक्त्यभावान्न प्राप्नोतीत्यनित्यम् । अनित्यो लुगिति । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमित्येतत्तु पाक्षिकम् । यदा द्वयोर्लक्षणयोः संप्रधारणं क्रियते तदा यल्लक्षणप्रवृत्तावपि यस्य द्वितीयस्य लक्षणस्य प्रवृत्तिव्याघातो नास्ति तत्प्रति न तस्य द[illegible] लक्षणान्तरेण चैतत्प्रवृत्ति निवारणात् । यथा वालिसुग्रीवयोर्युद्धे भगवता रामेण वालिनो वधेपि न सुग्रीवापेक्षं दौर्बल्यमभिदधति शूरमानिनः । एतद्दर्शनसंश्रयेणोच्यते यस्य च लक्षणान्तरेणेति । यदा त्वेष न्याय आश्रीयते लक्षणान्तरप्र[illegible]निनिमित्तमुपसंहरत् लक्षणं बलवद्भवति इतरत्तु तदुपसंहृतनिमित्तलक्षणान्तरोपपादितप्रवृत्तिविघातं दुर्बलमेव । यथा च भगवद्वासुदेवसहायत्वात्पाण्डवा बलिनो दुर्बलान्धार्तराष्ट्रान् विजिग्यिरे तदा नास्त्येव यस्य च लक्षणान्तरेणेति । केचित्तु अन्तरङ्गान् अपि विधीन्बहिरङ्गो लुग् बाधत इत्यत्रापिग्रहणान्नित्यानां च परेषां च लुका बाधनमिच्छन्ति

नहि कृते अत्वे प्राप्नोति । अतोमित्यभावेन भवितव्यम् । तस्मादस्थ्यादिभ्यश्चेति वक्तव्यम् । इदं विचार्यते । शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं वा स्यादर्थग्रहणं वेति । कश्चात्र विशेषः । शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः*। शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधो वक्तव्यः । बहुत्रपुः। बहुत्रपू । बहुत्रपव इति । अस्तु तर्ह्यर्थग्रहणम् । यद्यर्थग्रहणं प्रियसक्था ब्राह्मणेनेत्यत्रानङ् प्राप्नोति। अस्तु तर्हि शब्दग्रहणमेव । ननु चोक्तं शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेध इति।सिद्धं तु प्रकृतार्थविशेषणत्वात्*। सिद्धमेतत् ।कथम् । प्रकृतस्यार्थो विशेष्यते । किं च प्रकृतम् अङ्गम् । अङ्गस्य शिशीलुङ्नुमो भवन्ति नपुंसके वर्तमानस्य । कथं प्रियसक्था ब्राह्मणेन । अस्थ्यादिषु शब्दग्रहणम् * । अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम् । युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेनार्थग्रहणेन भवितव्यम् । नहि नपुंसकं नाम शब्दोस्ति ।

---

त्यदाद्यत्वं लुका बाध्यतइत्याहुः । तथा चोच्यते । सर्वविधिभ्यो लुग्विधिर्बलवानिति । शिशीति । अङ्गस्येत्यनुवर्तनादङ्गस्य य औङ्नपुंसकात्परस्तस्यशीतिविज्ञायमाने शब्दग्रहणं भवति यदाप्यङ्गादितिविभक्तिविपरिणाम आश्रीयते नपुंसकेनचाङ्गं विशेष्यते नपुंसकान्तादङ्गात्परस्येति तदापिशब्दग्रहणम् । यदा तु नपुंसकाद्यो विहित इत्याश्रीयतेप्रधानं वा नपुंसकमङ्गेन विशेष्यते नपुंसकादङ्गात्परस्येति तदार्थग्रहणं शब्दाद्यारकं पार्थेन पौर्वापर्यादिकमाश्रीयते। प्रियसक्थ्नेति । नपुंसकस्यझलचइत्यतोनपुंसकग्रहणमस्थ्यादिसूत्रेनपुंसकसंज्ञाशब्दनिवृत्त्यर्थमनुवर्तते । यद्यपि अभिव्यक्तपदार्थायेस्वतन्त्रालोकविश्रुताः । शास्त्रार्थस्तेषुकर्तव्यः शब्देषु नतदुक्तिष्वितिसंज्ञाशब्दानामप्रसङ्गः । तथापिन्यायानुसरणेगौरवप्रसङ्गाद् नपुंसकानुवृत्तिराश्रीयते । उत्तरार्थं च । ईचद्विवचनइत्यत्र नपुंसकस्येति पुंवदितिचानुवर्तते न छन्दसि न पुंसकस्यपुंवद्भावान्मधोर्म्नातीत्यादौ नुमभावसिद्धिः । सिद्धं त्विति । विषयविभागाश्रयेणाभिमतार्थसिद्धिः । शिशोलुङ्नुम्विधिष्वर्थग्रहणमस्थ्यादिषु शब्दग्रहणमित्यर्थः । अस्थ्यादिष्विति । विशेषणविशेष्यभावेकामचारात् नपुंसकलिङ्गविशिष्टै रस्थ्यादिभिरङ्गं विशेष्यत इति नपुंसकास्थ्याद्यन्तस्याङ्गस्या नपुंसकस्याप्यनङ् भवति । पदाङ्गाधिकारेतस्य च ग्रहणं तदुत्तरपदस्य चेति वचनात्केवलानामप्यस्थ्यादीनामनङ् भवति ।इदानींभाष्यकारोविचारमेव पूर्वोक्तमाक्षिप्यसाध आह । युक्तं पुनरिति । अर्थमनपेक्ष्य शब्दग्रहणपक्षासंभव

किं तर्ह्युच्यतेऽस्थ्यादिषु शब्दग्रहणमिति। अत्राप्यर्थग्रहणमेव। सत्येतावान् संदेहः। क्व प्रकृतस्यार्थो विशेष्यते क्व गृह्यमाणस्येति। शिःशीलुङ्नुम्विधिषु प्रकृतस्यार्थो विशेष्यते अस्थ्यादिषु गृह्यमाणस्य॥

अड्डतरादिभ्यः पञ्चभ्यः॥ २५॥ अड्भावे पूर्वसवर्णप्रतिषेधः*। अड्भावे पूर्वसवर्णस्य प्रतिषेधो वक्तव्यः। कतरत्तिष्ठति। कतरत्पश्यति। सिद्धं त्वननुनासिकोपधात्*। सिद्धमेतत्। कथम्। अननुनासिकोपधोऽच्छब्दः करिष्यते। दुक्करणाद्वा*। दुक् डतरादीनामिति वक्ष्यामि। डित्करणाद्वा*। अथ वा डिदच्छब्दः करिष्यते। स तर्हि डकारः कर्तव्यः। न कर्तव्यः। क्रियते न्यास एव। द्विडकारको निर्देशः। अड्डतरादिभ्यः पञ्चभ्यः॥

नेतराच्छन्दसि॥ २६॥ इतराच्छन्दसि प्रतिषेधे एकतरात्सर्वत्र*। इतराच्छन्दसि प्रतिषेधे एकतरात्सर्वत्रेति वक्तव्यम्। एकतरं तिष्ठति। एकतरं पश्य। नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन*। नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन नपुंसकादेशानामवकाशः। त्रपु त्रपुणी त्रपूणि। युष्मदस्मदोर्विभक्त्यादेशानामवकाशः। त्वं ब्राह्मणः। अहं ब्राह्मणः।

---

इति भावः। किं तर्ह्युच्यतइति। नैवेदं वक्तव्यमित्यर्थः। कस्मादिदानीं न वक्तव्यमित्यात्ह। अत्रापीति। अर्थधर्मत्वाल्लिङ्गस्य नपुंसकार्थाभिधायित्वादस्थ्यादयो नपुंसकशब्देनाभिधीयन्तइत्यर्थग्रहणमेव भवति। तस्माद्विशेषणविशेष्यभावविचार एव युक्तः। नं तु यथेष्टसिद्धानङ्गत्वादसंभवादेकतरपक्षग्रहणविचारः॥

अड्डतरादिभ्यः पञ्चभ्यः। अड्भाव इति। सुस्थानिकेऽदादेशेऽयं दोषः। अमादेशे त्वदि स्थानिवद्भावादमिपूर्वरूपं सिद्धमिति। सिद्धं त्विति। अनुनासिकत्वेन निवृत्तिरिष्यते तेनोच्चारणार्थो ऽकारो दकारमात्रं त्वादेशः। आदेः परस्येत्यम आदेर्भवति। मकारस्य तु संयोगान्तलोपः। उच्चारणार्थानां त्वनुनासिकत्वप्रतिज्ञायां ब्रुवो वचिरिति वादीनां नुमप्रसङ्गः। एतस्मिन् पक्षे हे कतरदित्यत्र सम्बुद्धिलोपप्रसङ्ग मत्वाह दुक्करणाद्वेति। कार्यिभेदाच्च दुका लुङ् बाध्यते। द्विडकारक इति। दकारस्य ष्टुत्वं स्वरूपविनाशप्रसङ्गान्न कृतं नापि डकारस्य संयोगान्तलोपः।

नेतरा। नपुंसकादेशेभ्य इति। अलिङ्गे युष्मदस्मदी इत्यनाश्रित्यायं विचारः। शेषसमां लुक शीभय: परत्वादमं बाध्यत इत्यर्थः।

युवां ब्राह्मणौ। आवां ब्राह्मणौ। यूयं ब्राह्मणाः। वयं ब्राह्मणाः। इहोभयं प्राप्नोति। त्वं ब्राह्मणकुलम्। अहं ब्राह्मणकुलम्। युवां ब्राह्मणकुले। आवां ब्राह्मणकुले। यूयं ब्राह्मणकुलानि। वयं ब्राह्मणकुलानि। युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन। अथेदानीं युष्मदस्मदोर्विभक्त्यादेशेषु पुनःप्रसङ्गात् शिशीलुङ्लुम्विधयः कस्मान्न भवन्ति। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव॥

युष्मदस्मद्भ्यां ङसोश्॥ २७॥ किमर्थः शकारः। सर्वादेशार्थः। शित्सर्वस्येति सर्वादेशो यथा स्यात्। नैतदस्ति प्रयोजनम्। अक्रियमाणेपि शकारे ऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्याकारे कृते तयाणामकाराणामतोगुणेपररूपत्वे सिद्धं रूपं स्यात्। तव स्वम्। मम स्वम्। यद्येतल्लभ्येत कृतं स्यात्। तत्तु न लभ्यम्। किं कारणम्। अत्र हि तस्मादित्युत्तरस्य आदेः परस्येत्यकारस्य प्रसज्येत। अत उत्तरं पठति। ङस आदेशे शित्करणानर्थक्यमकारवचनानर्थक्यात् *। ङस आदेशे शित्करणमनर्थकम्। किं कारणम्। अकारस्याकारवचनानर्थक्यात्। अकारस्याकारवचने प्रयोजनं नास्तीति कृत्वा ऽन्तरेणापि शकारं सर्वादेशो भविष्यति। अर्थवत्त्वादेशे लोपार्थम् *। अर्थवत्त्वाकारस्याकारवचनम्। कोर्थः। आदेशे लोपार्थम्। यः स शेषे लोपः आदेशे स विज्ञायते। ननु चादेशो या विभक्तिरित्येवमेतद्विज्ञायते। आदेशएषा विभक्तिः। कथम्। सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते॥ तस्मा-

युष्मदस्मद्भ्यां ङसोश्। किमर्थ इति। अकारस्याकारवचने प्रयोजनाभावादादेः परस्येत्यस्यानुपस्थानादलोन्त्यस्येति सकारस्याकारः। अतो गुणइतिपररूपेण सिद्धमिति भावः। इतरस्त्वस्त्वकारस्याकारवचने प्रयोजनमिति मत्वाह। शित्सर्वस्येति। अन्तरेणापि शकारं सर्वादेशो भविष्यतीति। आद्यानुसंहाराभावे अन्त्यानुसंहाराद् द्वयोरकारयोः पररूपमित्यर्थात्सर्वादेशः संपद्यते। यः स शेषे लोप इति। आत्वयत्वविधानादादेशः शेषः। ननु चेति। शेषे लोप इत्यत्र विभक्तावित्यनुवर्ततेतद्विशेषणं च शेषग्रहणमित्यादेशो या विभक्तिरिति विज्ञायते नहि तदादिविधिरस्ति यत आदेशादाविति विज्ञायेत। तस्मात्सत्यप्यादेशादित्वे विभक्तेरनादेशत्वान्नैवायं शेषः ततो नास्त्यकारस्या-

च्छित्करणम् * । तस्माच्छकारः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव । कथम् । प्रश्लिष्टनिर्देशोयम् । अ अ इति । सोऽनेकाल् शित्सर्वस्येति सर्वस्य भविष्यति ॥

ङेप्रथमयोरम् ॥ २८ ॥ प्रथमयोरित्युच्यते । कयोरिदं प्रथमयोर्ग्रहणम् । किं विभक्त्योराहो स्वित्प्रत्यययोः । विभक्त्योरित्याह । कथं ज्ञायते । अन्यत्रापि हि प्रथमयोर्ग्रहणे विभक्त्योर्ग्रहणं विज्ञायते न प्रत्यययोः । क्वान्यत्र । प्रथमयोः पूर्वसवर्ण इति । अस्ति कारणं येन तत्र विभक्त्योर्ग्रहणं विज्ञायते । किं कारणम् । अचीति वर्तते । न चाजादी प्रथमौ प्रत्ययौ स्तः । ननु चैवं विज्ञायते । अजादी यौ प्रथमौ

---

कारवचने प्रयोजनम् । सर्वे सर्वपदादेशा इत्यादि विकारद्वारेण विभक्तेरेवादेशा विधीयत्त्व इति विभक्तिरेवादेशः स्यादिति शित्वं सर्वादेशार्थं क्रियते । सर्वपदादेशा इत्यत्र पदशब्देन न सुप्तिङन्तमुच्यते । किं तर्हि पद्यते प्रतीयते ऽर्थोनेनेति अन्वयव्यतिरेकाभ्यां कल्पिताभ्यां यस्य कल्पितार्थवत्ता तदभिधीयते तत्रानन्यार्थादकारविधानादेकादेशद्वारेण विभक्तिरेवादेशः । प्रश्लिष्टनिर्देश इति । ततश्चाकारद्वयलक्षणः समुदायो ऽनेकाल्त्वात्सर्वादेशः प्रवर्तते । तस्मिन्प्रवृत्तेऽतो गुण इति पररूपमिति सिद्धमिष्टम्।

ङेप्रथमयोरम् । प्राधान्यलक्षणस्य प्रथमार्थस्येहासंभवात्सन्निवेशापेक्षयाद्यस्य तावद् ग्रहणं विज्ञायते विशेषज्ञानाय पृच्छति । कयोरिति । यदि स्त्रीलिङ्गनिर्देशस्ततो विभक्त्योर्ग्रहणेन भाव्यम् । पुंलिङ्गेन निर्देशे तु प्रत्यययोः तत्र यद्यन्तरङ्गं प्राथम्यमाश्रीयते ततः पुंलिङ्गेन निर्देशात् प्रत्ययग्रहणम् । वर्गस्यासमाप्तावेव प्रत्यययोः प्राथम्यसंप्रत्ययात् । अथतु सपूर्वायाः प्रथमाया विभाषा प्रथमायाश्च द्विवचने इत्यत्र शास्त्रे प्रसिद्धिराश्रीयते ततः स्त्रीलिङ्गनिर्देशाद्विभक्तिग्रहणम् । प्रत्ययग्रहणपक्षे च युष्मदस्मदोः प्रातिपदिकत्वात्प्रातिपदिकप्रत्यययोः सुः औ इत्यनयोर्ग्रहणेन भाव्यम् । ननु द्वयोः कथं प्राथम्यं यावताद्यापेक्षया परस्य द्वितीयत्वम् । नैष दोषः । राश्यपेक्षया द्वयात्मकस्य समुदायस्य प्राथम्याविरोधात् । प्रथमसाहचर्याद्वा द्वितीयस्यापि प्रथमव्यपदेशः यथार्धर्चाः पुंसि चेति गोमयादीनामर्धर्चव्यपदेशः । अन्यत्रापीति । प्रसिद्धिमाह । अस्ति कारणमिति । यस्मात्कारणात्तत्र विभक्तिग्रहणं तदिह नास्ति । न चाजादी इति प्रथमयोर्विशेषत्व मचीत्यस्य विशेषणभावः । न चाजादित्वं सोः संभवतीति सामर्थ्यात्तत्र विभक्तिग्रहणं विज्ञायते । अजादी यौ प्रथमाविति । अजादी विशेषौ प्राथम्यं विशेषणं तेन चाजादित्वाभावात् सुः परिहृतः औजसोः प्राथम्यं न विहन्ति । यथा ब्राह्मणधन्त्ती ब्राह्मणौ प्रथमावानयेत्युक्ते अब्राह्मणः प्रथमोपि चोदनायामनन्तर्भावाद् ब्राह्मणयोर्न प्रथ-

अजादीनां वा यौ प्रथमाविति । यत्तर्हि तस्माच्छसो नः पुंसी-त्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यो विभक्त्योर्ग्र-हणमिति । इहाप्याचार्यप्रवृत्तिर्ज्ञापयति विभक्त्योर्ग्रहणमिति । यदयं शसो नेति प्रतिषेधं शास्ति । नैष प्रतिषेधः । नत्वमेतद्विधीयते । सिद्धमत्र नत्वं तस्माच्छसो नः पुंसीति । यत्र तेन न सिध्यति तद-र्थम् । क्व च तेन न सिध्यति । स्त्रियां नपुंसके च । युष्मान् ब्राह्मणीः पश्य । अस्मान् ब्राह्मणीः पश्य । युष्मान् ब्राह्मणकुलानि पश्य । अस्मा-न् ब्राह्मणकुलानि पश्येति । यत्तर्हि युष्मदस्मदोरनादेशे द्वितीयायां चेत्याह । तज्ज्ञापयत्याचार्यो विभक्त्योर्ग्रहणमिति ॥

भ्यसोऽभ्यम् ॥ ३० ॥ किमयं भ्यम्शब्द आहो स्विदभ्यम्शब्दः । कुतः संदेहः । समानो निर्देशः । किं चातः । यदि तावद् भ्यम्शब्दः शेषे लोपस्यान्त्यस्य एत्वं प्राप्नोति । अथाभ्यम् शब्दः शेषे लोपस्य टि-

मव्यपदेशविघातहेतुः । अजादीनां वेति । अचीत्यनुवृत्तं निर्धारणसप्तम्यन्तं विज्ञायते । यदयं शसो नेति । ङेप्रथमयोरित्यमावस्य प्राप्तस्य शसो नेति प्रतिषेधः क्रियते । ततो योऽचीति यत्वे प्राप्ते द्वितीयायां चेत्यात्वे कृते प्रथमयोरितिपूर्वसवर्णे तस्माच्छसोनः पुं-सीति नत्वे युष्मानस्मानिति रूपं सिध्यति । इतरः प्रतिषेध आश्रीयमाणे पुंस्येव नत्वं स्यात् न स्त्रीनपुंसकयोरिति मत्वाह । नैष प्रतिषेध इति । आदेः परस्येत्यादेर्नकारे कृते सकारस्य संयोगान्तत्वाल्लोपः । एतच्चाभ्युपगम्य लिङ्गवत्त्वमुक्तम् । यत्तर्हीति । यदि प्रत्य-ययोरिदं ग्रहणं स्यात्ततो द्वितीयाया अनादेशत्वात्तस्यामात्वं सिद्धमेवेति द्वितीयायां चे-त्यात्वविधानमनर्थकं स्यात् । ननु च योऽचीति यत्वे प्राप्ते तद्बाधनार्थमात्वविधानं स्या-दिति कथं ज्ञापकम् । उच्यते । यद्येतावद् प्रयोजनं स्याद्योऽच्यनमोटोरिति ब्रूयात् । यत्वे प्रतिषिद्धे आत्वस्य भावात् । युष्मानस्मानित्यत्रापि शसो नकारे कृते शेषे लोपे सुपि चे-ति दीर्घत्वं भविष्यति ॥

भ्यसोऽभ्यम् । किमयमिति । संहितायां निर्देशस्य साम्याद्विचारः । चत्वारोऽत्र पक्षाः संभवन्ति भ्यमादेशः शेषेलोपोऽन्त्यलोपः । भ्यमादेशः शेषे लोपष्टिलोपः । अभ्य-मादेशः शेषेलोपोऽन्त्यलोपः । अभ्यमादेशः शेषेलोप इति । तत्र यदा भ्यमादेशः तदा शेषे लोपोऽन्त्यलोप एवाश्रयितव्यः टिलोपे रूपासिद्धिप्रसङ्गात् । अभ्यमादेशे शेषे लोपेऽन्त्यलोपे च द्वयोरकारयोः पररूपमेकादेश उदात्तेनोदात्त इत्युदात्तत्वं भवति । युष्मदस्मदोः प्रातिपदिकस्वरेण प्रत्ययस्वरेण वान्तोदात्तत्वात् । टिलोपपक्षे चाकारोच्चा-रणमर्थवत् अन्त्यलोपेऽप्येत्वनिवृत्त्यर्थमिति अकारोच्चारणसामर्थ्यात्सवर्णदीर्घत्वेन भा-

लोपः । उदात्तनिवृत्तिस्वरः प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावद् अयम्शब्दः शेषे लोपश्चान्त्यस्य । ननु चोक्तमेत्वं प्राप्नोतीति । नैष दोषः । अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति । अथ वा पुनरस्तु अय्यम्शब्दः शेषे लोपष्टिलोपः । ननु चोक्तमुदात्तनिवृत्तिस्वरः प्राप्नोतीति । नैष दोषः । उक्तमेतदादौ सिद्धमिति ॥

साम आकम् ॥ ३३ ॥ किमर्थं सामः ससकारस्य ग्रहणं क्रियते । न आम आकमित्येवोच्येत । केनेदानीं ससकारस्य भविष्यति । आमोयं भक्त आम्ग्रहणेन ग्राहिष्यते । अत उत्तरं पठति । सा(सु)ग्रहणं यथा गृहीतस्यादेशवचनात् * । साम्ग्रहणं क्रियते । निर्दिश्यमानस्यादेशा भवन्तीति ससकारस्य न प्राप्नोति । इष्यते च स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति सामआक सेत्यमर्थमिदमुच्यते । न वा द्विपर्यन्तानामकारवचनादामि सकाराभावः * । न वैतत्प्रयोजनमस्ति । किं कारणम् । द्विपर्यन्तानामकारवचनात् । द्वि-

---

व्यमिति न चोदनीयम् । तदेवं द्वितीयपक्षोऽत्यन्तदुष्टस्तृतीयस्तु निर्दोष इति तत्परिहारेण पक्षद्वयाश्रयो भाष्ये विचारः । उदात्तनिवृत्तिस्वर इति । कर्षात्वतो घञोन्त उदात्त इत्यतोन्तग्रहणमनुदात्तस्य च यत्रोदात्तलोप इत्यत्रानुवर्तते ततश्चान्तोदात्तत्वं प्राप्नोति मध्योदात्तत्वं चेष्यते । अङ्गवृत्त इति । एत्ववत् सुपि चेति दीर्घत्वमपि न भवति । आदौ सिद्धमिति । अन्तग्रहणं नानुवर्तते । उच्चारणक्रमप्रत्यासत्त्या चादेरेवोदात्तत्वम् ।

साम आकम् । किमर्थमिति । सुपष्ट आमिति स्थिते आदेशेनात्र भाव्यमिति यत्वं न प्रवर्तते । आदेहस्य शेष इति अकृत आदेशे शेषत्वाभावाल्लोपाप्रसङ्गः । त्यदाद्यत्वमपि नास्ति द्विपर्यन्तानां विधानात्तत्रानकारान्तत्वाभावादेशप्रवृत्तिकाले सुडास्तीति नार्थः ससकारनिर्देशेन।कृते ऽप्याकमादेशे शेषे लोपे टिलोपे च तथैव सुण्नास्तीति भावः।इतरः कृत आदेशे शेषेलोपेन्त्यलोपेच सुट् प्राप्नोतीति भाविनः सुटो निवृत्त्यर्थं ससुट्कोपादानं कर्तव्यमिति । मत्वाह । केनेदानीमिति । स एव परमतमासज्यते । आमो यमिति । सुडप्ययमाम्भक्त इति यदि त्वं मन्यसे तत इदमुच्यते । साम्ग्रहणमिति । निर्दिश्यमानस्येति । यदि ससकारको न निर्दिश्येत तदादेशविधानकाले संनिहितिः पश्चादन्त्यलोपे कृते प्राप्नुवन् सुट् केन निवर्त्येत । इष्यते च तन्निवृत्तिरित्येवमर्थं ससकारग्रहणम्।अथ वा त्यदाद्यत्वे कृते सुटि च निर्दिश्यमानस्यादेशा इति सुट्सहितस्य न प्राप्नोति । यस्तु निर्दिश्यते तस्य वचनसामर्थ्यान्निर्दिष्टग्रहणपरिभाषानुपस्था

पर्यन्तानां हित्यदादीनामत्वमुच्यते। तस्मादामि सकारो न भविष्यति। सुट्प्रतिषेधस्त्वादेशे लोपविज्ञानात् *। सुट्प्रतिषेधस्तु वक्तव्यः। किं कारणम्। आदेशे लोपविज्ञानात्। यः स शेषे लोपः आदेशे स विज्ञायते। न वा टिलोपवचनादादेशे टाप्प्रतिषेधार्थम् *। न वा सुट्प्रतिषेधो वक्तव्यः। किं कारणम्। टिलोपवचनात्। आदेशे यः स शेषे लोपः सटिलोपो वक्तव्यः। किं प्रयोजनम्। टाप्प्रतिषेधार्थम्। टाप् मा भूदिति। स तर्हि टेर्लोपो वक्तव्यः। न वक्तव्यः। न वा लिङ्गाभावाट्टिलोपवचनानर्थक्यम् *। न वा वक्तव्यम्। किं कारणम्। लिङ्गाभावात्। अलिङ्गे युष्मदस्मदी। किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। नह्यस्ति विशेषो युष्मदस्मदोः स्त्रियां पुंसि नपुंसके वा। अस्ति कारणं येनैतदेवं भवति। किं कारणम्। योसौ विशेषवाची शब्दः स्त्रीप्रत्ययष्टाप्शब्दस्तदसांनिध्यात्। अङ्ग हि भवांस्तं समुच्चारयतु गंस्यते स विशेषः। ननु च नैतेनैवं भवितव्यम्। न हि शब्दनिमित्तकेन नामार्थेन भवितव्यम्।

---

नाद् व्यवहितस्यायमादेशः प्राप्नोति। ससुट्कनिर्देशात्ससुट्कस्य भवति। अत्र पक्षे आमोऽयं भक्त आम्ग्रहणेन ग्रहीष्यत इति चोदकस्यैव ग्रन्थः। इतरस्तु पूर्वां व्याख्यामबुध्वोत्तरां च दोषवतीमवगम्याह। नवेति। टिलोप इति। वक्ष्यमाणमर्यन्तस्यान्यपेक्षया शेषे विज्ञायमाने टिरेव शेष इति तस्यैवलोपो विज्ञायते शेष इति स्थानी विषयसप्तम्या निर्दिष्टः। लोपस्य चास्मिन् पक्षे उत्सर्गत्वादनादेशे आत्वयत्वविधानादादेश एव विभक्तावव्यवस्थितः। टाप्प्रतिषेधार्थमिति। टापोनुत्पत्त्यर्थमित्यर्थः। युष्मदस्मदोर्द्रव्यवाचित्वाद् द्रव्यस्य च लिङ्गसंख्यासंबन्धादन्त्यलोपे सत्यकारान्तत्वाट्टाप् प्राप्नोति। संनिपातपरिभाषायाश्च दोषः पठितस्त्यदाद्यकारष्टाब्विधेरिति टापि सा नाश्रीयते। अलिङ्गे इति। अभिधेयस्यालिङ्गत्वादलिङ्गे। शब्दशक्तिस्वाभाव्याल्लिङ्गरहित एव ताभ्यामर्थोभिधीयते इति तन्निवृत्तये टिलोपो नाश्रयितव्यः। योसौ विशेषवाचीति। ननु द्योतकाष्टाबादयस्तदुक्तम्। सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादय इति। नैष दोषः। इदमप्युक्तम्। अथ वा पुनरस्तु स्त्रियामभिधेयायामिति। अथ वा वाचिर्द्योतने वर्तते। वाचकेन खल्वप्युत्पत्तव्यम्। वाचकश्चेत् प्रयोक्तव्यो वाचकश्चेत् प्रयुज्यतामित्यत्र वाचिर्द्योतने प्रयुक्तः। न हि शब्दनिमित्तकेनेति। ननु शब्दनिमित्त एवार्थस्तथा चैकरूपोप्यर्थोभिन्नशब्दोच्चारणान्नानारूपः प्रतिभाति। यथा पचति पाकं करोति पाकक्रियाया

किं तर्हि । अर्थनिमित्तकेन नामशब्देन भवितव्यम् । तदेतदेवं दृश्यतामर्थरूपमेवैतदेवंजातीयकं येनात्र विशेषो न गम्यत इति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते योऽसौ विशेषवाची शब्दः स्त्रीप्रत्ययष्टाप्शब्दस्तदसांनिध्यात्तत्र विशेषो न गम्यत इति । इहापि तस्य विशेषो न गम्येत दृषत्समिदिति । तस्मात्सुट्प्रतिषेधः । तस्मात्सुट्प्रतिषेधो वक्तव्यः । ससकारग्रहणं वा कर्तव्यम् । अथ क्रियमाणेऽपि ससकारग्रहणे कस्मादेवात्र सुट् न भवति । ससकारग्रहणसामर्थ्याद्भाविनः सुट आदेशो विज्ञायते ॥

आत औ णलः ॥ ३४ ॥ इह पपौ तस्थाविति । त्रीणि कार्याणि युगपत् प्राप्नुवन्ति । द्विर्वचनमेकादेश औत्वमिति । तद्यदि सर्वत

---

निर्वृत्तिं करोतीति । तथा च बलाहकाद्विद्योतते बलाहके विद्योतत इति । कंसादीनां च साधनत्वं शब्दोपहितरूपाणां बुद्धिविषयाणां हेतुमति चेत्यत्र प्रतिपादितम् । एवं तर्हि यः शब्दो लोकेऽत्यन्तमदृष्टप्रयोगस्तन्निमित्तोऽर्थो न भवतीत्युच्यते । शब्दं प्रयुयुक्षमाणेन लोकस्यानुसरणात् । स्वसामर्थ्ये न हि शब्दोऽर्थं प्रत्याययति तच्च सामर्थ्यं लौकिकप्रयोगादवधार्यम् । अर्थरूपमिति । सत्यपि वस्तुनो लिङ्गवत्त्वे युष्मदस्मद्भ्यां न तत्प्रत्याययितुं शक्यतइत्यर्थः । युष्मदस्मदभिधेयं चार्थरूपशब्दे नोच्यते । न वस्तुरूपम् । तस्यैव वस्तुनो ब्राह्मणादिशब्दैर्लिङ्गयुक्तस्य प्रतिपादनात् । न चायं नियमः सत्त्वभूतोऽर्थोऽवश्यं लिङ्गयुक्तः प्रतीयत इति पञ्च सप्तेति लिङ्गानवगमात् । तथा च षट्संज्ञकेभ्यः स्त्रीप्रत्ययप्रतिषेधः प्रत्याख्यायते । केचिल्लिङ्गविशेषनिषेधं मन्यमाना लिङ्गसर्वनामनपुंसकयोगं युष्मदस्मदोरिच्छन्ति । तथा च शिश्लोलुङ्नुमां युष्मदस्मद्विभक्त्यादेशानां च विप्रतिषेध उक्तः । अन्ये तु दर्शनभेदेन शिश्लोलुङ्नुमां विप्रतिषेधः पुंसि नत्वं च लिङ्गवत्त्वाभ्युपगमेन प्रदर्शितम् । सत्वभूतस्यार्थस्यावश्यं लिङ्गसंख्यायोगः । तथा च षट्संज्ञेभ्यः स्त्रीप्रत्ययनिषेधः कृतः । इह त्वलिङ्गत्वेन टाप्परिहृत इति विरोधं परिहरन्ति । तस्मादिति । टाबभावे टिलोपानाश्रयणादन्त्यलोपे सति सुटः प्राप्तस्य प्रतिषेधो विधेयः लाघवात्सकारग्रहणं वा कर्तव्यम् । अथेति । आदेशप्रवृत्तिकाले संनिहित आदेशेन निवर्त्यो नान्यः । ससकारग्रहणसामर्थ्यादिति । न हि सत आदेशेन निवृत्तिः क्रियते । किं तर्हि अन्यत्राभावस्तस्मिन्विषये तस्यानेनोपायेनाख्यायते । शास्त्रेण तु प्रसङ्गवतो निवृत्तिराख्यायतइति भाविनः सुटो निवृत्तिः ससुट्कनिर्देशेन प्रतिपाद्यते ॥

आत औ णलः । त्रीणि कार्याणीति । कित्त्वस्तु प्रयोजनाभावादनुपन्यस्तः । सर्व-

औत्वं लभ्येत कृतं स्यात्। अथापि द्विर्वचनं लभ्येत एवमपि कृतं स्यात्। तत्तु न लभ्यम्। किं कारणम्। अत्र हि परत्वादेकादेशो द्विर्वचनं बाधते। परत्वादौत्वम्। नित्य एकादेशः औत्वं बाधेत। कां पुनर्भवान् औत्वस्यावकाशं मत्वाह नित्य एकादेश इति। अनवकाशमौत्वमेकादेशं बाधिष्यते। औत्वे कृते द्विर्वचनमेकादेश इति। यद्यपि परत्वादेकादेशः। स्थानिवद्भावाद् द्विर्वचनं भविष्यति

विदेः शतुर्वसुः ॥ ३६ ॥ विदेर्वसोः कित्त्वम् *। विदेर्वसोः कित्त्वं वक्तव्यम्। वसुग्रहणेषु लिडादेशस्यापि ग्रहणं यथा स्यात्। किं कारणं न स्यात्। अननुबन्धकग्रहणे हि सानुबन्धकस्य ग्रहणं नेत्येवं

---

थान्तोदात्तत्वस्य सिद्धत्वात्। औत्वं लभ्येत कृतं स्यादिति। एकादेशे कृते औत्वाप्राप्तिदोषस्तावत्परिहृत इत्यभिसंधाय द्विर्वचनासिद्धावपि कृतमित्युक्तम्। द्विर्वचनं लभ्येतेति। एकादेशे कृते व्यपवर्गाभावाद्या द्विर्वचनाप्राप्तिः सा परिहृता भवतीत्येतावता द्विर्वचनसिद्ध्या कृतमित्युक्तम्। परत्वादेकादेश इति। वर्णाश्रयत्वादन्तरङ्गत्वादपीति द्रष्टव्यम्। नित्य एकादेश इति। यद्यप्यकृते औत्वे सवर्णदीर्घत्वं प्राप्नोति कृते तु वृद्धिः तथापि व्यक्तिभेदमनाश्रित्यैकादेशसामान्याश्रयं नित्यत्वमुच्यते। औत्वं तु कृते एकादेशे नैव प्राप्नोतीत्यनित्यम्। अनवकाशमौत्वमिति। सावकाशस्य सवर्णदीर्घस्य बाधकमित्यर्थः। यद्यपीति। वार्णादाङ्गं बलीय इति पूर्वं द्विर्वचनं भवति। तथाप्यङ्गाधिकारविहितमाङ्गमुच्यते तथापि न दोष इति भावः। स्थानिवद्भावादिति। द्विर्वचननिमित्तेऽचि परतोऽजादेशः स्थानिवद्भवतीति सूत्रार्थमाश्रित्यैकादेशे कृतेऽचः परत्वाभावात् स्थानिवद्भावाभाव आशङ्कितः। अचि यो विहितोऽजादेशः स स्थानिवदिति सूत्रार्थाश्रयणे न तु स्थानिवद्भावः उक्तः। न हि स्थानिवद्भावस्य परभूतोऽच् निमित्तभूत आश्रीयते। किं तर्हि। आदेशस्य। यदि तर्हि स्थानिवद्भावाद् द्विर्वचनं ततो नित्यं तदिति पूर्वमेव तेन प्रवर्त्यम्। नैतदस्ति। एकादेशोपि नित्योन्तरङ्गश्चेति स एव पूर्वं प्रवर्तते। क्रमप्रतिपत्त्यर्थं चानवकाशत्वमौत्वस्याश्रितम्। इह लक्षणं चैकादेशमौत्वं न बाधते न हि तस्मिन्नाप्राप्ते औत्वमारभ्यते ॥

विदेः शतुर्वसुः। वसोः कित्त्वमिति। लिडादेशस्य कित्त्वमस्तीति तदनुरोधेनास्य कित्वमुच्यते। अनुबन्धान्तरेणापि तस्य सानुबन्धकत्वं संपद्यते। अननुबन्धकग्रहण इति। स्थानिवद्भावादुगित्कार्यस्य सिद्धत्वाद् उकार उच्चारणार्थो नानुबन्ध इति मन्यते। सत्यपि वास्य सानुबन्धत्वे तदनुबन्धकपरिभाषया क्वसोरग्रहणप्रसङ्गः। परिभाषोपादानं त्वग्रह-

लिडादेशस्य न प्राप्नोति । सानुबन्धको हि स क्रियते । किं पुनः कारणं सानुबन्धकः क्रियते । अयमृकारान्तानां लिटि गुणः प्रतिषेधविषय आरभ्यते स पुनः किल्करणाद् बाध्यते । आतितीर्वान् । निपुपूर्वानिति । स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव । द्विसकारको निर्देशः । विदेः शतुर्वसुस्ससासेऽनञ्पूर्वे क्त्वो ल्यप् ॥

समासे ऽनञ्पूर्वे क्त्वो ल्यप् ॥ ३७ ॥ ल्यबादेश उपदेशवचनम्* । ल्यबादेशे उपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायां ल्यब् भवतीति वक्तव्यम् । किं प्रयोजनम् । अनादिष्टार्थम् । अकृतेष्वादेशेषु ल्यब् यथा स्यात् ।

---

थोपलक्षणम् । किं पुनः कारणमिति । असंयोगाल्लिट्किदिति किस्त्वस्य सिद्धत्वाद्वसुरेव लिटो विधीयताम् । अयमिति । यथा तेरतुरित्यादौ गुणो भवति तथा वसावपि स्यादिति तद्बाधनार्थं किस्त्वं क्रियते । एतच्च प्रयोजनोपलक्षणमिति संयोगान्तार्थमपि किस्त्वमित्याहुः । तेनाजिवानित्यस्ते: रेधिवानिति रधं नुमि सिद्धं भवति । ननु संयोगान्तार्थत्वे किस्त्वस्य कथं प्रतिषेधविषय आरभ्यमाणो गुणो बाध्यः । उच्यते । ऋकारान्तेभ्यः परस्य वसोरोपदेशिकातिदेशिककित्त्वद्वयसामर्थ्यात् क्ङितिचेति गुणनिषेधो द्विरुपतिष्ठते । तच्चपुनरुपस्थानं प्रतिषेधविषये गुणनिषेधं विधास्यति । के चिदाहुः । छान्दसःक्वसुः ततश्छन्दस्युभयथेति सार्वधातुकत्वान् ङित्त्वान्नलोपस्य सिद्धत्वात्संयोगान्तार्थं किस्त्वं नोपयुज्यते । द्विसकारक इति । सस्सुरित्यादेशो निर्दिष्टः । तत्र सकारस्य रुत्वविसर्जनीयौ कृतौ ततः सकारेणसानुबन्धकत्वं वसोः संपद्यत इति वसुप्रदेशेषूभयोरविशेषेण ग्रहणं सिध्यति ॥

समासेनञ् पूर्वे । ल्यबादेश इति । अनेकपदाश्रयसमासनिमित्तो ल्यबादेशो बहिरङ्गो हित्वादयस्त्वेकपदविषयप्रकृतिप्रत्ययापेक्षा अन्तरङ्गा इति ते पूर्वं प्राप्नुवन्तीति भावः । तत्रोपदेशे समास इति विरोधात्समासो विषयत्वे नाश्रीयते । समासे विषये ऽकृत एव तस्मिन् क्त्व उपदेशावस्थायामेव ल्यप् भवति तस्मिन् कृतेऽनल्विधाविति स्थानिवत्त्वनिषेधाद्धित्वाद्यभावः । पूर्वोक्तविरोधपरिहाराय भाष्यकारोतिदेशं व्याचष्टे । उपदेशिवद्भावोवक्तव्यइति । उपदेशावस्थायामिति । अत्राप्युपमानोपमेयसंबन्धो द्रष्टव्यः । कृतेऽपि समासे ल्यब् भवदुपदेशिवद्भवति । अकृतेषु हित्वादिषु भवतीत्यर्थः । अथ वा समास इति विषयप्रसप्तम्याश्रयमेव भाष्यमुपदेशावस्थायां ल्यब्भवतीत्युपदेशिवद्भावो वक्तव्य इत्येतत्तु वस्तुव्याख्यानम् । उपदेशावस्थायां ल्यब्भवदन्यैरुपदेशिभिस्तुल्यं भवतीत्यर्थः । अनादिष्टार्थमिति । आदेश आदिष्टं तस्याभावानादिष्टमित्यव्ययीभावः । प्रक-

श्या स्यात् । के पुनरादेशा उपदेशिवद्वचनं प्रयोजयन्ति । हित्वदत्वाख्त्वित्वदीर्घत्वशूडिटः । हित्वम् । हित्वा । प्रधाय । हित्वम् । दत्वम् । दत्वा । प्रदाय । दत्वम् । खात्त्वम् । खात्त्वा । प्रखन्य । श्रात्वम् । इत्वम् । स्थित्वा । प्रस्थाय । इत्वम् । ईत्वम् । पीत्वा । प्रपाय । ईत्वम् । दीर्घत्वम् । शान्त्वा । प्रशम्यादीर्घत्वम् । शत्वम् । पृष्ट्वा । आपृच्छ्य । शत्वम् । ऊठ् । द्यूत्वा । प्रदीव्य । ऊठ् । इट् । देवित्वा । प्रदीव्य । इट् । किं पुनः कारणमादेशास्तावद्भवन्ति न पुनर्ल्यप् । न परत्वाल्ल्यपा भवितव्यम् । सन्ति चैवात्र के चित्परे आदेशाः । अपि च बहिरङ्गलक्षणत्वात् । बहिरङ्गो ल्यप् । अन्तरङ्गा आदेशाः । असिद्धं बहिरङ्गमन्तरङ्गे । स तर्ह्युपदेशिवद्भावो वक्तव्यः । न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति अन्तरङ्गानपि विधीन् । बहिरङ्गो ल्यब्बाधत इति । यदयमदो जग्धिर्ल्यप्ति किति ति किती-त्येव सिद्धे ल्यब्ग्रहणं करोति । स्नात्वाकालकादिषु प्रतिषेधः * । स्नात्वाकालकादिषु च प्रतिषेधो वक्तव्यः । स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वा सुहितक इति । तदन्तनिर्देशात्सिद्धम् * । तद-

---

न्येति । ये विभाषेति विकल्पेनात्वमिष्यते । जनसनखनां सञ्झलोरित्यनेन तु ल्यबादेशात्पूर्वं नित्यं प्राप्नोति । प्रदीव्येति । पूर्वमिटि कृते निर्दिश्यमानस्यादेशा भवन्तीति केवलस्य क्त्वो ल्यपि सति इटः श्रवणं प्राप्नोति । अथापि कथं चित्सेट्कस्य ल्यप्स्यात्तथापि स्थानिवद्भावान्न क्त्वा सेडिति कित्त्वप्रतिषेधाद् गुणः प्रसज्येत दीर्घत्वस्यासिद्धत्वात् । परत्वादिति । इष्टत्वादित्यर्थः । इतरथा त्विष्टानिष्टत्वविभागो न ज्ञायत इति व्यवस्थाशब्द एवानेन परशब्दः प्रयुक्त इति मत्वाह । सन्ति चेति । बहिरङ्गलक्षणत्वादिति । समासापेक्षया बहिरङ्गशास्त्रमस्येति समासः । अथ वा बहिरङ्गः समासो लक्षणं निमित्तमस्येत्यर्थः । यदयमिति । ति कितीत्येव जग्धिभावस्य ल्यबादेशात्प्रागेव सिद्धत्वात् । ल्यब्ग्रहणं यथोक्तमर्थं ज्ञापयति । स्थानिवत्सूत्रे युष्मदस्मदोरनादेश इत्यनादेशग्रहणं तत्स्थानापत्त्या तद्धर्मलाभस्य स्वरूपविधिना निरस्तस्य ज्ञापकमुक्तम् । ल्यब्ग्रहणं त्वलाश्रयेषु कार्येषु तद्धर्मलाभाभावस्य । यमर्थमन्तरेण यस्यानुपपत्तिस्तस्य सर्वस्य ज्ञापकं तद्भवतीत्यनेकोऽप्यर्थो ल्यब्ग्रहणेन ज्ञाप्यत इति विरोधाभावः । स्नात्वा कालकादिष्विति । मयूरव्यंसकादिषु समासप्रकरणात्समासार्थ एवैषां पाठः । अत्र समासे नञ्पूर्वं यो व्यवस्थितः क्त्वाप्रत्ययस्तस्य ल्यब्विधीयमानो ऽत्रापि प्राप्नोति । तदन्तनिर्देशादिति । क्त्वान्ताः स-

न्तनिर्देशात्सिद्धमेतत्। क्त्वान्तस्य ल्यपा भवितव्यम्। न चैतत् क्त्वान्तम्। समासनिपातनाद्वा। अथ वावश्यमत्र समासार्थं निपातनं कर्तव्यम्। तेनैव यत्नेन ल्यबपि न भविष्यति। अनञोवापरस्य। अथ वा अनञः परस्य ल्यपा भवितव्यम्। न चात्रानञं पश्यामः। ननु च धातुरेवानञ्। न धातोः परस्य भवितव्यम्। किं कारणम्। नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः। नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते। कुत एतत्। तथा ह्यर्थो गम्यते। तद्यथा। अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति नासौ लोष्ठमानीय कृती भवति। एवमिहाप्यनञिति नञ् प्रतिषेधादन्यस्मादनञः नञ्सदृशात्कार्यं विज्ञास्यते। किं चान्यदनञ् नञ्सदृशम्। पदमित्याह। अथ वा प्रत्ययग्रहणे यस्मात्सतदादेर्ग्रहणं भवतीति। एवं धातुरपि क्त्वाग्रहणेन ग्राहिष्यते। ननु चेयमपि परिभाषास्ति। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति। सापीष्टी-

---

मास इह निर्दिश्यत इत्यर्थः। समासे इति। निर्धारणे सप्तमीसामान्यापेक्षं चैकवचनम्। अथ वा छान्दसं बहुवचनस्य स्थाने निर्धारणञ्च समानजातीयस्य भवतीति क्त्वान्तः समासो गृह्यते निर्धार्यमाणस्य क्त्वाग्रहणेन विशेषणात्तदन्तविधौ सत्ययमर्थो भवति समासेष्वनञ्पूर्वेषु क्त्वान्तस्य समासस्य ल्यप् भवति स च निर्दिश्यमानस्यादेशा भवन्तीति क्त्व एव भवति। समासनिपातनाद्वेति। समुदायानां साधुत्वमभ्यनुज्ञायते। प्राकरणिकाप्राकरणिककार्यभावाभावविधानद्वारेणेत्यर्थः। येषु चात्र स्नात्वाकालकादिषूत्तरपदानुपात्तक्रियापेक्षः क्त्वाप्रत्ययः तेषां सापेक्षत्वेऽपि निपातनात्समासः। अनञो वा परस्येति। अनञ् चासौ पूर्वश्चेति समासो निपातनात्पूर्वशब्दस्य परनिपातः। विशेष्यत्वेन विवक्षितत्वाद्वा। अनञिति वा लुप्तसप्तमीकं पृथक्पदम्। सत्सप्तमी चेयम्। अनञि पूर्वे सति क्त्वो ल्यप् भवति। अर्थादनञः परस्येत्यर्थोऽवतिष्ठते। तदन्तविधिश्चात्र नाश्रीयते क्त्वाप्रत्ययस्य प्राधान्येन प्रक्रमाद् विशेषणत्वाभावाद्येनविधिस्तदन्तस्येति। प्रत्ययग्रहणपरिभाषाश्रयस्तु तदन्तविधिः परस्ताद्वक्ष्यते। येन नाव्यवधानमिति च धातुना व्यवधानमाश्रीयते। ननु चेति। असत्त्वभूतार्थवाचित्वादिना धर्मेण धातुरपि नञ्सदृशो भवति। न धातोः परस्येति। पदत्वनिबन्धनं सादृश्यमाश्रीयते न तु धर्मान्तरनिबन्धनम्। नास्त्यत्र प्रमाणमित्याशङ्क्याह। अथ वेति। क्त्वाग्रहणेन धातुप्रत्ययसमुदायस्य परिग्रहात्तदवयवत्वाद्धातोः स्वावयवेन पौर्वापर्यासंभवाद्धातुरनञ्ग्रहणेन न गृह्यते।

प्रतिष्ठते। तत्र को दोषः। इह न स्यात्। प्रकृत्य। प्रहृत्य। इह तर्हि स्यात्। परमकृत्वा। न वा अनिष्यते। अनिष्टं च प्राप्नोति इष्टं च च न सिध्यति। गतिकारकपूर्वस्यैव इष्यते। कुतो नु खल्वेतत्। हयोः परिभाषयोः सावकाशयोः समवस्थितयोः प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवति। कृद्ग्रहणे गतिकारकपूर्वस्येति। इयमिह परिभाषा भवति प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। इयं न भवति। कृद्ग्रहणे गतिकारकपूर्वस्यापीति। आचार्यप्रवृत्तिर्ज्ञापयति। इयमिह परिभाषा भवति प्रत्ययग्रहण इति। इयं न भवति कृद्ग्रहण इति। यदयमनञिति प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्। अयं हि नञ् न गतिर्न च कारकम्। तत्र कः प्रसङ्गो यन्नञ्पूर्वस्य स्यात्। पश्यति त्वाचार्य इयमिह परिभाषा भवति प्रत्ययग्रहण इति। इयं न भवति कृद्ग्रहण इति। ततोनञि-

---

प्रकृत्येति। गतेः क्त्वान्ते समुदाये ऽनुप्रवेशात्पौर्वापर्याभावात्तद्व्यतिरिक्तनञ्सदृशशब्दान्तराभावात् ल्यपोप्राप्तिः। परमकृत्वेति। परमशब्दो न गतिर्न च कारकमिति क्त्वान्ते अनन्तर्भूतः पूर्व इति ततः परस्य क्त्वान्तस्य ल्यप्प्रसङ्गः। गतिकारकपूर्वस्यापीत्यपिशब्दात्केवलस्यापि कृत्वेत्यादेः क्त्वान्तस्य ग्रहणात्। आचार्य आह। न वा अनेष्यत इति। तस्मात् कृद्ग्रहणपरिभाषात्र नाश्रीयते। चोदक आह। अनिष्टं चेति। आचार्य आह। गतिकारकपूर्वस्यैवेष्यत इति। प्रकृत्य पाश्वंतः कृत्येत्यादौ ल्यबादेश इष्यते। कृद्ग्रहणपरिभाषोपस्थाने च न सिध्यति इति नासौ परिभाषाश्रीयते। चोदक आह। कुतो न्विति। प्रत्ययग्रहणपरिभाषाया अवकाशः उपगोरपत्यमौपगव इत्यत्र तद्धितान्तस्य प्रातिपदिकत्वात्सुब्लुक् भवति। कृद्ग्रहणपरिभाषाया अवकाशः व्यावलेखी व्यावचर्चीति णचः स्त्रियामञिति गतिपूर्वस्य णजन्तत्वादञि सति वृद्धिस्वरौ भवतः। अत्र हि प्रत्ययग्रहणपरिभाषायाः स्त्री प्रत्ययेचानुपसर्जनेनेति प्रतिषेधात्तदुपस्थानाभावः। एवं सावकाशयोः परिभाषयोर्भिन्नफलयोर्विरोधात्पर्यायोऽप्रतिपत्तिर्वा प्राप्नोति। प्रत्ययग्रहणपरिभाषायामाश्रीयमाणायां प्रकृत्येति गतेः क्त्वान्ते ऽनन्तर्भावात्पौर्वापर्योपपत्तौ ल्यप् सिध्यति। न तु कृद्ग्रहणपरिभाषाश्रयेण इति फलभेदः। कार्यकालं संज्ञापरिभाषमित्यत्र दर्शने समानदेशत्वात्परिभाषयोः परत्वेनापि व्यवस्था नास्ति। सांकुटिनेत्वेवमव्यवस्थाप्रसङ्गाद् यथोद्देशपक्ष आश्रयितव्यः। तत्र हि परत्वेन व्यवस्थासिद्धिः। प्रत्ययग्रहणपरिभाषाङ्गसंज्ञासूत्रे योगविभागेन व्यवस्थापिता। कृद्ग्रहणपरिभाषा तु गतिरनन्तर इत्यत्र अनन्तरग्रहणेन ज्ञापनात्परा भवति। यदयमिति। कथं पु-

ति प्रतिषेधं शास्ति । किं नञः प्रतिषेधेन न गतिर्न च कारकम् । यावता नञ्पूर्वे तु ल्यबभावो न भविष्यति ॥ १ ॥ प्रतिषेधात्तु जानीमः स्तत्पूर्वं नेह गृह्यते । प्रत्ययग्रहणे यावत्तावद्भवितुमर्हति ॥ २ ॥

सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ३९ ॥ सुपां च सुपो भवन्तीति वक्तव्यम् * । युक्ता मातासीद् धुरि दक्षिणायाः । दक्षिणायामिति प्राप्ते । तिङां च तिङो भवन्तीति वक्तव्यम् * । चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । लुकि किमुदाहरणम् । आर्द्रेचर्मन् । लोहिते चर्मन् । नैतदस्ति । पूर्वसवर्णेनाप्येतत्सिद्धम् । इदं तर्हि । यत्सुवीयस आवसन्नुत सप्त ऋषयः सप्तसाकम् । ननु चैतदपि पूर्वसवर्णेनैव सिद्धम् । न सिध्यति । यद्यत्र पूर्वसवर्णः स्यात् । त्यदाद्यत्वं प्रसज्येत । इदं चापि उदाहरणम् । आर्द्रे चर्मन् ।

---

नरितञ् ज्ञापकं यावता सत्यामपि कृद्ग्रहणपरिभाषायामपिशब्दात्केवलस्यापि क्त्वान्तस्य ग्रहणादकृत्वेत्यादौ नञोगतित्वादकारकत्वाच्च क्त्वान्ते ऽनन्तर्भावादसत्यनञ्ग्रहणे ल्यप्प्रसङ्गः । अप्रकृत्येत्यादौ च प्रतिषेधार्थमनञ्पूर्वस्य ग्रहणं स्यात् । उच्यते । अपिग्रहणेन प्रत्ययग्रहणपरिभाषा समुच्चीयते न त्वन्यपूर्वम् । तत्र समास इति वचनात् केवलस्य क्त्वादेर्ग्रहणाभावादपिशब्दमसुचे तव्यस्याभावाद् गतिकारकपूर्वस्यैव समासस्य ग्रहणं भविष्यति इति किमनञ्पूर्व इत्यनेन तत् क्रियमाणं कृद्ग्रहणपरिभाषाया अनुपस्थानं ज्ञापयति । तदुपस्थाने तु तूष्णींभूय नानाभूय द्विधाभूयेत्यादौ ल्यब् स्यात् । तदेवं कृद्ग्रहणपरिभाषानुपस्थाने नञ् सदृशाद्व्ययात्पदात्प्रत्यासत्तिन्यायात्समासावयवात्परस्यधात्वादेः क्त्वान्तस्य समासे क्त्वो ल्यब्विधीयमानः स्नात्वाकालकः परमकृत्वेत्यादौ न भवति । परमकृत्वतिसन्महदिति समासः । परमत्वस्य क्रियाविशेषणत्वात्सामानाधिकरण्यात् । तत्पूर्वमिति । गतिकारकपूर्वमित्यर्थः । प्रत्ययग्रहणइति । प्रत्ययग्रहणपरिभाषया यावद् ग्राह्यंतावद्गृह्यते ॥

सुपां सुलुक्पूर्वसवर्ण । सुशब्दे आदेश उच्यमानेऽन्ये सुपो न प्राप्नुवन्तीत्याह । सुपां चेति । एतच्च सर्वं व्यत्ययोबहुलमिति व्यत्ययेन सिध्यति । पूर्वसवर्णेनापीति चर्मन् इति स्थिते इकारस्य पूर्वसवर्णो नकारः । तस्मिन् पूर्वस्य नकारस्य स्वादिष्विति पदसंज्ञायां सत्यां लोपः । एवं च नङिसंबुद्ध्योरित्यत्र ङिग्रहणमपि न कर्तव्यं भवति । प्रातिपदिकान्तत्वाभावाद्विभक्तिनकारस्य नलोपाप्रसङ्गात् । पूर्वस्य च नकारस्य लोपस्त्वेष्टत्वात् । यदिति । यच्छब्दात्परस्य सुपो लुक् । प्रत्ययलक्षणनिषेधात्त्यदाद्यत्वाभावः । येष्विति प्राप्ते । त्यदाद्यत्वमिति । सुशब्दस्य पूर्वसवर्णो भवन्नन्त्यस्येत्युकारस्यदकारः प्राः

लोहिते चर्मन्। ननु चोक्तं पूर्वसवर्णेनाप्येतत्सिद्धम् । नसिध्यति। यद्यत्र पूर्वसवर्णः स्याद् आन्तर्यतो दकारः प्रसज्येत। अस्तु। संयोगान्तलोपेन सिद्धम्। इयाडियाजीकाराणामुपसंख्यानं कर्तव्यम् *। दार्वियापरित्मन्। इया। डियाच्। सुक्षेत्रिया। सुगात्रिया। ई-कार। दृतिं न शुष्कं सरसीशयानम्। आङ्याजयारां चोपसंख्यानं कर्तव्यम् *। आङ्। प्रबाहवा। अयाच्। स्वप्नया वावसेचनम्। अयाच्। अयार्। सनः सिन्धुमिव नावया॥

अमो मश्॥ ४०॥ किमर्थः शकारः। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारे ऽलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत। अत उत्तरं पठति। अमो मश् न मकारस्य। मकारस्य मकारवचने प्रयोजनं नास्तीति कृत्वा तत्रान्तरेण शकारं सर्वादेशो भविष्यति। वचनादन्यबाधनम्॥ अस्त्यन्यन्मकारस्य मकारवचने प्रयोजनम्। ये ऽन्ये मकारादेशाः प्राप्नुवन्ति तद्बाधनार्थम्। तद्यथा। मो राजि समः क्वाविति। मकारस्य मकारवचनसामर्थ्या-

---

प्नोति ततस्तदाद्यत्वे बहुवचने झल्येदित्येत्वे स्कोः संयोगाद्योरिति सकारलोपे च येदिति स्यात्। अथाप्येकवचनस्य स्थाने पूर्वसवर्णो दकारः क्रियते तथापि स्थानिवद्भावात् स्मिन्भावः प्राप्नोति। आन्तर्यतइति। निरनुनासिकस्येकारस्य सदृशो दकारः। संयोगान्तलोपेनेति। न ङिसंबुद्ध्योरिति नलोपप्रतिषेधात्संयोगान्तलोपः। अन्यथा नलोपे कर्तव्ये संयोगान्तलोपोऽसिद्धः स्यात्। एवं च नलोपप्रतिषेधे ङिग्रहणं कर्तव्यमेवेति प्रक्रियालाघवाय चर्मन्नित्यत्र लुगेव विधेय इत्याहुः॥दार्वियेति। दारुशब्दादियादेशः। सुक्षेत्रियेति। सुक्षेत्रेणेति प्राप्ते।। सरसी इति। सरः शब्दात्परस्य ङिशब्दस्येकारः। प्रबाहवेति। प्रबाहुशब्दात्परस्य टाप्रत्ययस्याङादेशः घेर्ङितीति गुणः। ननु ङित्त्वे विद्यात् वर्णनिर्देशमात्रं वर्णे यस्मात्तत्र विद्यात्तदादावित्युक्तम्। ततश्च गुणो न प्राप्नोति। ङित्करणसामर्थ्याद्भविष्यतीत्यदोषः। अथ वा ङितीति बहुव्रीहिराश्रीयते। तत्र परिहारान्तरमाश्रयणीयम्। वर्णस्यायमनेन ङित्त्वेन दोषो निर्देशोयं पूर्वसूत्रेण वा स्यादिति। स्वप्नयेति। अयाचोऽकारोच्चारणं सुपि चेति दीर्घनिवृत्त्यर्थम्। नावयेति। उपोत्तमं रितीति मध्योदात्तं पदं भवति।

अमो मश्। अमो मश् न मकारस्येति। मकारस्य मकारः प्रयोजनाभावान्न भविष्यति इति शकारो न वक्तव्य इत्यर्थः। वचनादिति। वधीं वृत्रमित्यादौ मकारस्यानु-

दनुस्वारादयो बाध्यन्ते। एवं तर्हि द्विमकारको निर्देशः करिष्यते। द्विमकार ईडपृक्ते। यदि द्विमकारकः। अपृक्ताश्रय ईड् न प्राप्नोति। वधीं वृत्रं मरुत इन्द्रियेण। यकारादौ न दुष्यति॥ किं यकारो न श्रूयते। लुप्तनिर्दिष्टो यकारः। अमो मश् न मकारस्य वचनादन्यबाधनम्। द्विमकार ईडपृक्ते यकारादौ न दुष्यति॥ १॥

आज्जसेरसुक्॥ ५०॥ इह, ये पूर्वासोय उपरासः। आज्जसेरसुगितिअसुकि कृते जसोग्रहणेन ग्रहणाद्द् शीभावः प्राप्नोति। एवं तर्हि जसि पूर्वान्तः करिष्यते। यदि पूर्वान्तः क्रियते। का रूपसिद्धिः। ब्राह्मणासः पितरः सोम्यासः। सवर्णदीर्घत्वेन सिद्धम्। न सिध्यति। अतो गुण इति पररूपं प्राप्नोति। अकारोच्चारणसामर्थ्याद्भविष्यति। न भविष्यति। यदि तर्हि प्राप्नुवन्विधिरुच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति। नैष दोषः। यं विधिं प्रत्युपदेशोनर्थकः स विधिर्बाध्यते। यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। पररूपं च प्रत्यकारोच्चारणमनर्थकं सवर्णदीर्घत्वस्य पुनर्निमित्तमेव। अथ वा असुट् करिष्यते। एवमपि ये पूर्वासोय उपरास इति असुटि कृते जसो ग्रहणेन ग्रहणाच्छीभावः प्राप्नोति। नैष दोषः। निर्दिश्यमानस्यादेशा भवन्तीत्येवमस्य न भविष्यति। यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति। असुटा व्यवहितत्वात्। सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं ये पूर्वासो यउपरासः। असुकि कृते जसोग्रहणेन ग्रहणाच्छीभावः प्राप्नोति। नैष दोषः।

---

स्वारनिवृत्त्यर्थोमकारः स्यादित्यर्थः। द्विमकारक इति। अमोम्मिति करिष्यते भिन्नजातीयवर्णद्वयोच्चारणे प्रयत्नस्य गौरवं भवति समानजातीयवर्णद्वये तु लाघवं तत्रैकस्य मकारस्य संयोगान्तलोपः करिष्यते। ईण् न प्राप्नोति। ईटि कर्तव्ये संयोगान्तलोपस्यासिद्धत्वादपृक्तत्वाभावात्। यकारादाविति। अमोय्मिति सूत्रं कर्तव्यं तत्र यकारस्य लुप्तनिर्दिष्टत्वादनेकाल्त्वात्सर्वादेशोयं मो भविष्यतीति प्रत्याख्यातं शित्वम्।

आज्जसेरसुक्। जसोग्रहणेनेति। तद्गतस्तद्ग्रहणेन गृह्यत इति सागमकस्य शीभावप्रसङ्गः। पूर्वान्त इति। अस्य जस्य सुगिति सूत्रन्यासेन पूर्वान्ते सुक्यकारान्तात्परो जस् न भवतीति शीभावाप्रसङ्गः। अथ वा ऽसुडिति। असुक्यकारोच्चारणादध्यस्ती·

इहस्मिह संप्रधार्यं शीभावः क्रियतामसुगिति। किमत्र कर्तव्यम्। परत्वादसुक्। अथेदानीमसुकि कृते पुनः प्रसङ्गविज्ञानाच्छीभावः कस्मान्न भवति। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति॥

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि॥५१॥ अश्ववृषयोर्मैथुनेच्छायाम्*। अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम्। अश्वस्यति वडवा। वृषस्यति गौः। मैथुनेच्छायामिति किमर्थम्। अश्वीयति वृषीयति। क्षीरलवणयोर्लालसायाम्*। क्षीरलवणयोर्लालसायामिति वक्तव्यम्। क्षीरस्यति माणवकः लवणस्यत्युष्ट्र इति। अपर आह। सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्यं दध्यस्यति मध्वस्यतीत्येवमर्थम्। अपर आह। सुग्वक्तव्यो दधिस्यति मधुस्यतीत्येवमर्थम्॥

आमि सर्वनाम्नः सुट्॥५२॥ त्रेस्त्रयः॥५३॥ ह्रस्वनद्यापो नुट्॥५४॥ इमे बहव आम्शब्दाः पठ्यन्ते। कास्प्रत्ययादाममन्त्रे लिटि। ङस्ङोस्आम्। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे। ङेराम्नद्याम्नीभ्य इति। कस्येदं ग्रहणम्। षष्ठीबहुवचनस्य ग्रहणम्। अथास्य कस्मान्न भवति। कास्प्रत्ययादाममन्त्रे लिटीति। अननुबन्धकग्रहणे हि न सानुबन्धकस्येति स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्यः। इहास्य ग्रहणं मा भूदिति। ननु चावश्यं मकारस्येत्संज्ञापरित्राणार्थो-

---

त्वाद्यर्थमिति पररूपं स्यादिति पक्षान्तरोपन्यासः। असुटि प्रथमयोः पूर्वसवर्ण इति दीर्घः सिध्यति। परत्वादिति। असुकोऽवकाशः ब्राह्मणास इति। शीभावस्य भाषाविषयोऽवकाशः॥

अश्वक्षीर। अश्वस्यतीति। मैथुनेच्छाप्रतिपादनपरत्वाद्योगस्याश्ववृषोपादानमतन्त्रमिति मनुष्यादावपि कवयः प्रयुञ्जते। लालसा अतिशयेनाभ्यवजिहीर्षा। यस्तु लवणमैश्वर्यार्थमिच्छति तत्र लवणीयतीत्येव भवति॥

आमि सर्वनाम्न। कस्येदमिति। किमिदं सर्वेषामामां ग्रहणमपि कस्य चिदेवेति प्रश्नः। ननु च सर्वनाम्न इत्युपादानाद् घादामो लिटाामश्च ग्रहणशङ्कैव न युक्ता। उच्यते। इह तयोरसंभवेऽपि ह्रस्वनद्यापो नुडित्यत्र ह्रस्वात्परयोः संभवादिह विचारः क्रियते। तत्र हि सामान्यग्रहणे सति यथासंभवं प्रकरणे कार्यं प्रतिपत्तिः। अथ वा पूर्वोपात्तसट्शब्दान्तःअनुमानपक्षे उत्तरसूत्रे तयोः संभवादिह विचारः। ननूत्तरसूत्रेऽपि यस्यैवाम्नदीभ्यां परस्य संभवः स एव तस्मादपि परस्तत्साहचर्याद् ग्रहीष्यते। नेतदस्ति।

नुबन्धः कर्तव्यः । नार्थ इत्संज्ञापरित्राणार्थेन । इत्कार्याभावादत्रे-
त्संज्ञा न भविष्यति । इदमस्तीत्कार्यं मिदचोन्त्यात्पर इति । अचा-
मन्त्यात्परो यथा स्यात् । प्रत्ययान्तादयं विधीयते । तत्र नास्ति वि-
शेषः । मिदचोन्त्यात्पर इति वा परत्वे प्रत्ययः पर इति वा परत्वे ।
यस्तर्हि न प्रत्ययान्तादिजादेश्च गुरुमतोनृच्छ इति । अत्रापि आस्का-
सोराम्वचनं ज्ञापकं नायमन्त्यात्परो भवतीति । कथं कृत्वा ज्ञा-
पकम् । न ह्यस्ति विशेषः । आम्यचामन्त्यात्परे सत्यसति वा । अ-
यमस्ति विशेषोसति आमि द्विर्वचनेन भवितव्यम् । सति न भवि-
तव्यम् । सत्यपि भवितव्यम् । कथम् । आमस्तन्मध्यपतितत्वाद्धातुग्रह-
णेन ग्रहणात् । तदेतत्कासासोराम्वचनं ज्ञापकमेव नायमचामन्त्यात्प-
रो भवतीति । अथापि कथं चिदित्कार्यं स्यात् । एवमपि न दोषः । क्रि-
यते न्यास एव । आममन्त्र इति । यद्येवमामामन्त्र इति प्राप्नोति । श-
क्यमुन्यायेन निर्देशः । अथ वाऽस्त्वस्य ग्रहणं को दोषः । इह कारयां-
चकार । हारयांचकार । चिकीर्षांचकार । जिहीर्षांचकार । इन्धन-
श्रापो नुडिति नुट् प्रसज्येत । लोपायादेशयोः कृतयोर्न भविष्यति ।
इदमिह संप्रधार्यं लोपायादेशौ क्रियेतां नुडिति । किमत्र कर्तव्य-
म् । परत्वान्नुट् । नित्यौ लोपायादेशौ । कृतेपि नुटि प्राप्नुतः अकृ-
तेपि । तत्र नित्यत्वाल्लोपायादेशयोः कृतयोर्विहतनिमित्तत्वान्नुट् न
भविष्यति । अथास्य कस्मान्न भवति । किमेत्तिङव्ययघादाम्वद्रव्य-

---

व्याप्तिन्यायाश्रयेण सर्वस्य ग्रहणप्रसङ्गात् । प्रत्ययान्तादिति । ते चाजन्ताः । ननु हल-
न्तेभ्य आचारक्विबन्तेभ्य आमस्त्येव । नैतदस्ति । एकीयमतमेतत् । तत्रापि हलन्तेभ्यो-
नभिधानादाचारक्विबभावः । यस्तर्हीति । ईहेरूहेश्च मध्ये आमि कृते यणादेशप्रसङ्गः ।
आस्कासोरिति । अन्त्यादचः परे आमि सवर्णदीर्घत्वे सति विशेषाभावः । सति न भ-
वितव्यमिति । रूपान्तराद्धातुत्वाभावात् । आम इति । अकृतएकादेशे इदमुच्यते कृते
त्वेकादेशे रूपान्तराभावः । अथापीति । प्रतिधातुभेदादामो यत्रेत्कार्यं न संभवति तत्र
मा भूदितसंज्ञा । आसिकासिचकासिषु प्रत्ययान्तेषु च धातुषु । ईहादीत्विक्का-
र्यसंभवात् स्यादेवेत्संज्ञा । अथ वा आसादिषु विधानसामर्थ्यात्सवर्णदीर्घत्वं नस्यादि-
त्संज्ञा तु स्यादेव । व्यञ्जनान्तेषु चाचारक्विवन्तेषु इत्कार्यसंभवादित्संज्ञा प्राप्नोति । न-
हि व्यञ्जनान्तेभ्य आचारे क्विब् भवतीत्यत्र किं चित्प्रमाणमस्ति । कारयांचकारेति । नु-

प्रकर्षं इति । अननुबन्धकग्रहणे हि न सानुबन्धकस्येति । स तर्ह्येव-
मर्थोनुबन्धः कर्तव्यः । ननु चावश्यमुगित्कार्यार्थोनुबन्धः कर्तव्यः ।
नार्थ उगित्कार्यार्थेनानुबन्धेन । लिङ्गविभक्तिप्रकरणे सर्वमुगित्का-
र्यम् । न चामी लिङ्गविभक्ती स्तः । अव्ययमेषः । मकारस्य तर्ही-
त्संज्ञापरित्राणार्थोनुबन्धः कर्तव्यः । इत्कार्याभावादत्रेत्संज्ञा न भ-
विष्यति । इदमस्तीत्कार्यं मिदचोन्त्यात्पर इति अचामन्त्यात्परो य-
था स्यात् । नैतदस्ति । घान्तादयं विधीयते । तत्र नास्ति विशेषः ।
मिदचोन्त्यात्पर इति परत्वे प्रत्ययः पर इति वा परत्वे । अथापि क-
थं चिदित्कार्यं स्यादेवमपि न दोषः । क्रियते न्यास एव । अथ वा-
ऽस्त्वस्य ग्रहणं को दोषः । इह पचतितराम् । जल्पतितराम् । ह्र-
स्वनद्यापो नुडिति नुट् प्रसज्येत । लोपे कृते न भविष्यति । इदमि-
ह संप्रधार्यं लोपः क्रियतां नुडिति । किमत्र कर्तव्यम् । परत्वान्नुट् ।
एवं तर्हि ह्रस्वनद्यापो नुडित्यत्र यस्येति लोपोनुवर्तिष्यते । अथास्य
कस्मान्न भवति । ङेराम्नद्याम्नीभ्य इति । किं च स्यात् । कुमार्याम् ।
किशोर्याम् । खट्वायाम् । मालायाम् । तस्याम् । यस्यामिति ह्रस्व-
नद्यापो नुडिति नुट् प्रसज्येत । आड्याट्स्याटोत्र बाधका भविष्य-
न्ति । इदमिह संप्रधार्यम् । आड्याट्स्याटः क्रियन्तां नुडिति किम-
त्र कर्तव्यम् । परत्वादाड्याट्स्याटः । अथेदानीमाड्याट्स्याट्सु कृ-
तेषु पुनः प्रसङ्गान्नुट् कस्मान्न भवति । सकृद्गतौ विप्रतिषेधे यद्बा-
धितं तद्बाधितमेवेति ॥

---

नुटि कृते ऽयादेशप्रसङ्गः । अव्ययमेष इति । अव्ययत्वात् स्त्रीत्वेन योगाभावादुगितश्चेति
ङीन्नास्ति । तदभावादुगितश्चेतिघादिषु ह्रस्वविकल्पोपि नास्ति । विभक्तेर्लुकि प्रत्यय-
लक्षणप्रतिषेधान्नुमागम उगित्कार्यं नास्ति । इत्संज्ञापरित्राणार्थ इति । इत्संज्ञायाः प-
रित्राणमिति साधनं कृतेति पञ्चमीसमासः । समुदायविशेषणं च मकार इति सापेक्ष-
त्वात्समासाभावो न चोदनीयः । परित्राणं वा प्रधानं मकारमपेक्षते । भवति च प्रधा-
नस्य सापेक्षस्यापि समासः । अथापीति । मित्वमेव ज्ञापकं स्यादन्यतोप्ययं भवतीति ।
ततश्च स्यादेवेत्संज्ञा । एवं तर्हीति । उभयोरनित्ययोः परत्वान्नुटि प्राप्ते ह्रस्वनद्यापोनु-
डित्यत्र यस्य लोपस्तद्धितइति चानुवर्तते तेन तद्धितआमिह्रस्वस्य लोपो भवति पचति-
तरामिति । अन्यस्य चामा नुट भवति वृक्षाणामिति ॥

श्रीग्रामण्योश्छन्दसि ॥ ५६ ॥ अयं योगः शक्योऽवक्तुम् । कथम् । श्रीणामुदारो धरुणो रयीणाम् । अपि तत्र सूतग्रामणीनाम् । इह तावत् श्रीणामुदारो धरुणोरयीणाम् । विभाषा आमि नदीसंज्ञा सा छन्दसि व्यवस्थितविभाषा भविष्यति । अपि तत्र सूतग्रामणीनामिति । सूताश्च ग्रामण्यश्च सूतग्रामणि । तत्र ह्रस्वनद्यापो नुडित्येव सिद्धम् ॥

इति श्रीभगवत्पतञ्जलिविरचिते महाभाष्ये सप्तमाध्यायस्य
प्रथमपादे प्रथममाह्निकम् ॥

इदितो नुम् धातोः ॥ ५८ । अथ धातोरिति किमर्थम् । अभैत्सीत् । अच्छैत्सीत् । नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थम् * । नुम्विधावुपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायां नुम् भवतीति वक्तव्यम् । किं प्रयोजनम् । प्रत्ययविध्यर्थम् । उपदेशावस्थायां नुमि कृते इष्टः प्रत्ययविधिर्यथा स्यात् । कुण्डा हुण्डेति । इतरथा ह्यनकारे प्रत्ययः * । अक्रियमाणे हि उपदेशिवद्भावे ऽनकारे यः प्रत्ययः

श्रीग्रामण्योः । विभाषेति । वामोत्यनेने । तत्र दृष्टानुविधिश्छन्दसीति श्रीणामित्येव छन्दसि भविष्यति न तु श्रियामिति । सूताश्च ग्रामण्यश्च सूतग्रामणीति । समाहारद्वन्द्वं कृत्वैकशेषः क्रियतइति बोद्धव्यं न त्वेकशेषे कृते समाहारद्वन्द्वः क्रियते । एवं हि बहुवचनं स्यात् । भाष्ये त्वचोभयं कार्यमित्येतावत्प्रदर्शितम् । क्रमस्तु स्वयमभ्यूह्य इष्टस्यार्थस्य सिद्धये ॥ १ ॥

इत्युपाध्यायजैय्यटपुत्त्रकैय्यटकृते महाभाष्यप्रदीपे सप्तमस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ॥

इदितो नुम् धातोः । धातोरिति किमर्थमिति । किमधातुनिवृत्त्यर्थं धातुग्रहणमथधातुसंज्ञाप्रवृत्त्यवस्थायामेव प्राक् प्रत्ययोत्पत्तेर्नुम्विधानार्थमिति प्रश्नः । आचार्यदेशीयस्त्वधातुनिवृत्त्यर्थं धातुग्रहणं मत्वाह । अभैत्सीदिति । सिच इदितो नुम् न भवति । उपदेशिवद्भाव इति । यथोन्द्यादीनामुपदेशावस्थायां नकारः प्रत्ययविधिकाले संनिहितस्तथा नुमपीत्यर्थः । किं प्रयोजनमिति । नन्दिता नन्दक इत्यादि प्रत्यये परतो नुमि क्रियमाणे ऽपि सिध्यतीति मत्वा प्रश्नः । प्रत्ययविध्यर्थमिति । इष्टप्रत्ययविध्यर्थमित्यर्थः । अनकार इति । असति नकारे यः प्रत्ययः प्राप्नोति स स्यादित्यर्थः । सांप्रतिकेषु भिक्षादिषु गुरुमत्सु संभवत्सु भाविगुरुमत्ताश्रयेण प्रत्ययविधानस्यायुक्तत्वात् ।

प्राप्नोति। स तावत्स्यात् तस्मिन्नवस्थिते नुम्। तत्र को दोषः। तत्रायथेष्टप्रसङ्गः *। तत्रायथेष्टं प्रसज्येत। अनिष्टे प्रत्ययेऽवस्थिते नुम्। अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत। धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम् *। धातुग्रहणसामर्थ्याद्वा तदुपदेशे धातूपदेशे नुम्भविष्यति। ननु च अन्यद्धातुग्रहणस्य प्रयोजनमुक्तम्। किं तत्। अभैत्सीत्। अच्छैत्सीत्। नैतदस्ति प्रयोजनम्। प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात्। यच्चात्रेकारेण क्रियते अकारेणापि तच्छक्यं कर्तुम्॥

श्ने मुचादीनाम्॥ ५९॥ श्ने तृम्फादीनाम् *। श्ने तृम्फादीनामुपसंख्यानं कर्तव्यम्। तृम्पति। तृम्फति। किमर्थमिदम्। न नु-

---

तत्र को दोष इति। नुमि कृतेऽपवादः प्रवर्तमान उत्सर्गं निवर्तयिष्यतीति भावः। तत्रायथेष्टप्रसङ्ग इति। उत्पन्न उत्सर्गे नुमि कृते सत्यामपि गुरुसंज्ञायामुत्सर्गेणैव प्रत्ययार्थस्य प्रत्ययोत्पत्तिनिमित्तस्याभिधानान्निमित्तवैकल्यादपवादाप्रवृत्तावुत्सर्गस्यैव श्रवणप्रसङ्गः। धातुग्रहणेति। अधातोरिदितोऽसंभवाद्धातुग्रहणं न भवतीति धातुसंज्ञा प्रवृत्त्यवस्थोपलक्षणार्थं विज्ञायते तेन सत्यप्यङ्गाधिकारे भाव्यङ्गत्वाश्रयः पूर्वमेव नुम् भवति ततः प्रत्यय इत्यर्थः संपद्यते। प्रयोजनं नामेति। नियमेनावश्यंभावेन यदन्यथा साधयितुमशक्यं तत्प्रयोजनम्। सिचश्च नुमागमो धातुग्रहणमन्तरेणापि शक्यो निराकर्तुमित्यर्थः। यच्चात्रेति। सकारस्योच्चारणार्थ इकारः क्रियते इत्यकारेणापि सजित्येवं सकारः शक्य उच्चारयितुम्। तदेतदुक्तं भवति। निरनुनासिक उच्चारणार्थः सिच इकार इतीदित्वाभावान्नुमभावः। अमंस्तेत्यादौ हनः सिजिति नलोपार्थात् किस्त्वविधानाज्ज्ञापकादसत्यपीदित्वेन लोपाप्रसङ्गः। नन्वन्यत्किस्त्वविधानस्य प्रयोजनमस्ति विजाश्रयो नलोपो यथा स्यात्सार्वधातुकाश्रयो मा भूत्। सिजाश्रयो हि नलोपो ऽतोलोपे ऽसिद्धे न सार्वधातुकाश्रयः। समानाश्रयं ह्यसिद्धं न तु व्याश्रयम्। नैतदस्ति। असिद्धं बहिरङ्गमन्तरङ्ग इति सार्वधातुकाश्रयस्य नलोपस्य बहिरङ्गस्यान्तरङ्गे अतो लोपे कर्तव्ये ऽसिद्धत्वादतोलोपाप्रसङ्गादुपदेशग्रहणानुवृत्त्या आर्द्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानाद्वा। तासेरपीकार उच्चारणार्थ इति नुमो ऽप्रसङ्गः। मन्ता आहन्ता इत्यादौ असिद्धवदत्राभादिति टिलोपस्यासिद्धत्वादनिदित्वे ऽपि नलोपाप्रसङ्गः॥

श्ने मुचादीनाम्। श्ने तृम्फादीनामिति। आदिशब्दः प्रकारे। तेन नोपधा गृह्यन्ते तेषां नलोपे कृते नुमागमः। तस्य विधानसामर्थ्यादसिद्धवदत्राभापिति वा नलोपस्यासिद्धत्वादुपधात्वाभावान्नलोपाभावः। किमर्थमिति। य एवोपदेशे नकारः पठ्यते तस्यैव

मनुषक्ताएवेति पठ्यन्ते। लुप्तनकारत्वात्। लुप्यते ऽत्र नकारः। अनिदितां हल उपधायाः क्ङितीति। यदि पुनरिमे इदितः पठ्येरन्। न एवं शक्यम्। इह हि लोपो न स्यात् त्रपितो त्रपित इति। यदि पुनरिमे मुचादिष्वेव पठ्येरन्न दोषः स्यात्। अथ वा नैवं विज्ञायते। इदितो नुम्धातोरिति। कथं तर्हि। इदितो नुम्। ततो धातोरिति॥

नेट्यलिटि रधेः॥ ६२॥ इमौ प्रतिषेधावुच्येते। उभौ शक्यावक्तुम्। कथम्। एवं वक्ष्यामि। इटि लिटि रधेर्नुम् भवतीति। तन्नियमार्थं भविष्यति। लिट्येवेडादौ नान्यस्मिन्निडादाविति॥

आङो यि॥ ६५॥ इह कस्मान्न भवत्यालभ्यते। अस्तु। अनिदितां हल उपधायाः क्ङितीति लोपो भविष्यति। इह तर्ह्यालम्भ्या गौः। पोरदुपधादितियत्व्यवस्थिते नुम्। तत्र को दोषः। आलम्भ्या इत्येष स्वरः प्रसज्येत। आलम्भ्या इति चेष्यते। नैष दोषः। उक्त-

---

श्रवणं भविष्यतीति प्रश्नः। न नुमनुषक्ता इति। नुम्ग्रहणं नकारोपलक्षणार्थम् यदीति। इदित्त्वेन नुमः सिद्धिर्न च लोपः प्रसज्यते। यदि पुनरिति। नोपधानां मुचादिषु पाठान्न मः सिद्धिरित्यर्थः। अद्वेति। मुचादिषु तावन्न पठिताः गौरवप्रसङ्गश्च। नोपधानां मुचादिषु पाठे ऽर्थनिर्देशः कर्तव्यः। अनोपधानामन्यत्र पाठेर्थो निर्देष्टव्य इति मत्वा परिहारान्तरोपन्यासः। इदितो नुमिति। नन्वेवं धातूपदेशावस्थायां नुम्न लभ्यते नैष दोषः। धिन्विकृण्व्योरचेति ज्ञापकाद्धातूपदेशावस्थायामेव नुम यथा स्यादिति। यदि धातोरिति योगविभागः क्रियते तदा सर्वत्र नुम्प्रसङ्गः। नैष दोषः। शे मुचादीनामिति शेग्रहणस्य धातोरित्यत्र सिंहावलोकितन्यायेनापेक्षणाद् योगविभागस्येष्टसिद्धत्वाद्वा। अन्ये तु भाष्ये योगविभागो दिक्प्रदर्शनमित्याहुः। तेन शे मुचादीनामित्यत्र शे इति योगविभागः क्रियते। तत्र च धातोरिति वर्तते। ततो मुचादीनामिति। पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थम्। तेनेष्टविषये नुमः सिद्धिः॥

नेट्यलिटि रधेः। लिट्येवेति। इट्येव लिटोत्येव तु नियमो न भविष्यति। शास्त्रस्येष्टसिद्ध्यर्थत्वात्। कसौ रधिवानिति भवति। द्विर्वचने एत्वाभ्यासलोपयोः कृतयोरिटि नुमागमस्तस्यौपदेशिककित्त्वाश्रयो लोपः। ये तु कसुं छान्दसमेव मन्यन्ते तेषां विचार एवायं नास्ति छन्दसि दृष्टानुविधानात्।

आङो यि। यत्त्यवस्थित इति। यकारादेः प्रत्ययस्य निमित्तत्वेनोपादानात् पूर्वमेव तस्योत्पत्तव्यमिति भावः। एष स्वर इति। कृदुत्तरप्रकृतिस्वरेण यतो नाव इत्याद्युदात्त-

मेतद्धातुग्रहणसामर्थ्यादुपदेशे नुम्विधानमिति ॥

नसुदुर्भ्यां केवलाभ्याम् ॥ ६८ ॥ अथ केवलग्रहणं किमर्थम्। न सुदुर्भ्यामित्येवोच्येत। सुदुरोः केवलग्रहणमन्योपसर्गप्रतिषेधार्थम् *। सुदुरोः केवलग्रहणं क्रियते। अन्योपसृष्टान्मा भूदिति। प्रसुलम्भम्। नैषोस्ति प्रयोगः। इदं तर्हि सुप्रलम्भम्। प्रेण व्यवहितत्वान्न भविष्यति। इदं तर्हि। अतिसुलम्भम्। कर्मप्रवचनीयसंज्ञात्र बाधिका भविष्यति। सुः पूजायामतिरतिक्रमणे चेति। यदा तर्हि नातिक्रमणं न पूजा। इदं चाप्युदाहरणम्। सुप्रलम्भम्। ननु चोक्तं प्रेण व्यवहितत्वान्न भविष्यतीति। नैष दोषः। सुदुर्भ्यामिति नैषा पञ्चमी। का तर्हि तृतीया। सुदुर्भ्यामुपसृष्टस्येति। व्यवहितस्या-

---

त्वप्रसङ्गः। अन्तस्वरितत्वं चेष्यतइत्यर्थः। धातुग्रहणसामर्थ्यादिति। यीतिविषयसप्तमी तेन धातूपदेशावस्थायामेव यकारादौ प्रत्यये विषयभूते नुमागमस्ततोऽदुपधत्वस्य विघातात् यत्प्रत्यये सतीष्टस्वरः सिध्यति।

नसुदुर्भ्यां केवलाभ्याम्। उपसर्गात् खल्घञोरिति प्राप्तो नुम् प्रतिषिध्यते। केवलग्रहणमिति। इह केवलग्रहणात्समानजातीय उपसर्ग एव निवर्तयितव्य इष्यते। स च सुदुर्भ्यां पूर्वो नास्त्यनभिधानात् प्रत्ययाभावात्सुदुर्भ्यां परे तु तस्मिन्पञ्चमीनिर्देशादेव व्यवधाने प्रतिषेधो न भविष्यतीति प्रश्नः। नैषोस्ति प्रयोग इति। प्रयुक्तानामिदमन्वाख्यानं न त्वनेनापूर्वः शब्दोपजनः क्रियते। अपि च प्रारम्भादिविशिष्टायाः क्रियायाः सुकरत्वं दुष्करत्वं च प्रतिपाद्यमिति पूर्वं प्रेण धातोः संबन्धः पश्चात्तद्विशिष्टस्य सुदुर्भ्याम्। अतिसुलम्भमिति। सौकर्यादिविशिष्टधात्वर्थस्य अतिर्विशेषणमिति पूर्वं सुदुर्भ्यां संबन्धः पश्चादतिना। इतरस्तु पूजाया अतिक्रमणस्य वा द्योतकोऽतिशब्द इति मत्वाह। कर्मप्रवचनीयसंज्ञेति। ततश्चोपसर्गत्वाभावादतः केवलावेवात्र सुदुराविति नुम्प्रतिषेधेन भाव्यम्। न हि विजातीयः केवलत्वं विहन्ति। यथा देवदत्तयज्ञदत्ताभ्यां केवलाभ्यां प्रवेष्टव्यमित्युक्ते पुरुषान्तरस्य प्रतिषिध्यते प्रवेशः। न तु शुकादेरेवं सुदुरौ परस्परसहितौ विजातीयसहितावेकाकिनौ च केवलावेव भवतः। सुदुर्लभमतिसुलभं सुलभमतिदुर्लभमिति। कृच्छ्राकृच्छ्रार्थौ च सुदुरौ क्रियाया विशेषकत्वादुपसर्गावेव खल्निमित्ततां प्रतिपद्येते। यदा तर्हीति। पूजातिक्रमणयोरतः कर्मप्रवचनीयसंज्ञाविधानादन्यत्रोपसर्गत्वात्तत्सहितयोः सुदुरोः केवलत्वाभावान्नुम् भवत्येव। का तर्हीति। पञ्चमीपक्षेऽपि केवलग्रहणमतिसुलभमित्येवमर्थं कर्तव्यमिति क्रमानुल्लङ्घनाय तृतीयैवाश्रयि-

प्युपसृष्टो भवति ॥

विभाषा चिण्णमुलोः ॥ ६९ ॥ चिण्णमुलोरनुपसर्गस्य * । चिण्णमुलोरनुपसर्गस्येति वक्तव्यम्। इह मा भूत्। प्रालम्भि। प्रलम्भं प्रलम्भम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। इहोपसर्गादित्यपि प्रकृतं नेत्यपि। तत्राभिसंबन्धमात्रं कर्तव्यम्। विभाषा चिण्णमुलोः उपसर्गान्नेति ॥

उगिदचां सर्वनामस्थानेधातोः ॥ ७० ॥ अधातोरिति किमर्थम्। उखास्रत्। पर्णध्वत् अधातोरिति शक्यमवक्तुम्। कस्मान्न भवति उखास्रत् पर्णध्वत्। उगित्यञ्चतिग्रहणात्सिद्धमधातोः * । उगित्यञ्चतिग्रहणादधातोः सिद्धम्। अञ्चतिग्रहणं नियमार्थं भविष्यति। अञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातोरिति। इदं तर्हि प्रयोजनम्। अधातुभूतपूर्वादपि यथा स्यात्। गोमन्तमिच्छति गोमत्यति-गोमत्यतेरप्रत्ययः गोमान् ॥

नपुंसकस्य झलचः ॥ ७२ ॥ झलचोर्नुम्विधावुगित्प्रतिषेधः *।

---

तव्येति भावः। वाक्यकारेण पठितं सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेष्विति अतस्तन्मतेनातिसुलभमिति सोरुपसर्गत्वाभावान्नुम् न प्राप्नोति। भाष्यकारेण च अत्र नुमागमोभ्युपगतस्तस्माद्वाक्यकारस्यापि केवलसुदुः शब्दविषय एव नुम्विधावुपसर्गसंज्ञानिषेधोभिमतः षत्वे पि पूजायामेव । तथा च सुषिक्तं नाम किं तवात्रेति षत्वं च क्षेपे भवत्येव ॥

विभाषा चिण्णमुलोः। लभेश्चेति नित्ये नुमि प्राप्ते विभाषा आरभ्यते खिमुलोरिति। सोपसर्गस्य तु नित्यमेव नुम्भवति। उपसर्गान्नेति। वाक्यभेदेन विकल्प एव प्रतिषिध्यतइति नित्यमेव नुम् भवति।

उगिदचाम्। अधातोरिति किमर्थमिति । अञ्चतिग्रहणानियमार्थत्वाद्धातोर्निवृत्तिः सिद्धेति भावः। गोमानिति। क्विबन्ता धातुत्वं न जहतीति धातुरयमित्यञ्चतिग्रहणान्नियमार्थान्न स्यात्। अधातुग्रहणात्तु भवति। तस्य ह्येतत्प्रयोजनमवस्थान्तरे ऽपि यस्याधातुत्वं दृष्टं तस्य संप्रति धातुत्वे ऽपि नुम् यथा स्यादिति।अथात्रकथं दीर्घत्वं यावतात्वसन्तस्य चाधातोरित्यधातोस्तद्विधीयते। उच्यते। अधातोरिति तत्र योगविभागं क्रियते। तत्र चासन्तस्येत्यनुवृत्त्या ऽत्वन्तस्य पर्युदासाभावः ॥

नपुंसकस्य। गोमन्तीति। परत्वाज्झल्लक्षणे नुमि कृते पुनः प्रसङ्गविज्ञानादुगि-

झलचोर्नुम्विधावुगिल्लक्षणस्य प्रतिषेधो वक्तव्यः । गोमन्ति ब्राह्मणकुलानि श्रेयांसि भूयांसि । ननु च झल्लक्षण उगिल्लक्षणं बाधिष्यते । कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् । असति खल्वपि संभवे बाधकं भवति । अस्ति च संभवो यदुभयं स्यात् । किं च स्यात् ! यद्यप्युगिल्लक्षणोपि स्याद् द्वयोर्नकारयोःश्रवणं प्रसज्येत । न व्यञ्जनपरस्यानेकस्यैकस्य वा श्रवणं प्रतिविशेषोस्ति । ननु च प्रतिज्ञाभेदो भवति । श्रुतिभेदे ऽसति किं प्रतिज्ञाभेदः करिष्यति । श्रुतिकृतोपि भेदो ऽस्ति । इह तावत् । श्रेयांसि भूयांसि । परस्यानुस्वारे कृते पूर्वस्य श्रवणं प्राप्नोति । तथा कुर्वन्ति कृषन्तीति परस्यानुस्वारपरसवर्णयोः कृतयोः पूर्वस्य णत्वं प्राप्नोति । अथैकस्मिन्नपि नुमि णत्वं कस्मान्न भवति । अनुस्वारीभूतो णत्वमतिक्रामति । कृते तर्हि परसवर्णे कस्मा

---

क्षणः प्राप्नोतीति तस्य प्रतिषेधो वक्तव्यः । ननु चेति । व्यक्तौ पदार्थे सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति भावः । इतर आकृतिपक्षमाश्रित्याह । कथमन्यस्येति उभयोर्नुमोः प्रसङ्गे परस्परप्रतिबन्धादप्रतिपत्तौ प्राप्तायां विप्रतिषेधे परं कार्यमिति वचनेन परो नुम्विधीयमान उत्तरकालप्रसननिमित्तवत्त्वं पूर्वनुमं नैव शक्नोति बाधितुम् । तथा चोक्तं पुनः प्रसङ्गविज्ञानात्सिद्धमिति।अन्यस्येति। अनुमः। अन्यस्येति। सनुम इत्यर्थः। स्यादेतत् ।अन्यस्याप्युच्यमानं कार्यमन्यस्य बाधकं भवति यथोक्तमग्ने पीत्वादित्यस्य वृद्धिविंप्रतिषेधेनेत्यत आह । असति खल्वपीति। क्रमेण च नुमो विधानादन्त्यादचः परत्वं संभवति यथा पचतीति धात्वपेक्षं लट्शपोः । प्रतिज्ञाभेद इति । एकस्य प्रतिज्ञा एको नकार इति । अपरस्य द्वौ नकाराविति । श्रुतिभेदे ऽसतीति । कथं पुनः श्रुतिभेदाभावो यावतानेकहलुच्चारणेनाधिकः कालो व्याप्यते एकहलुच्चारणे त्वल्पः । उच्यते । अच्कालव्यतिरेकेण व्यञ्जनानि कालान्तरं नाक्षिपन्तीति दर्शनाश्रयेणैतदुक्तम् । यत्तु शास्त्रे व्यञ्जनानां कालः परिगण्यते तद् गुरुलाघवनिरूपणायानेकोच्चारणे हि प्रयत्नस्य गौरवं भवति लौकिके तु प्रयोगे गुरुलाघवानादरात् श्रुत्यभेद उच्यते । अन्ये तु व्यञ्जनानां कालभेदमिच्छन्त्येव । परस्यानुस्वार इति । अयोगवाहानामट्सूपदेशाज्झल्त्वाभावात्पूर्वस्य नकारस्यानुस्वारो नास्ति । ननु च वर्णग्रहणे जातिग्रहणाद् द्वयोर्नकारयोरेकोनुस्वार आदेशो विधास्यते । नैतदस्ति । स्थानिभेदादनुस्वारादेशद्वयप्रसङ्गात् । न इति वा गुणत्वादेकत्वसंख्याया विवक्षितत्वादेकस्यैव नकारस्यानुस्वारः स्यान्न तु द्वयोः । णत्वमतिक्रामतीति । न प्राप्नोतीत्यर्थः । अनुस्वारे कर्तव्ये पर्वत्रासिद्धमिति णत्वस्यासिद्ध-

न्न भवति। असिद्धे च परसवर्णः। विप्रतिषेधात्सिद्धम् *। विप्रतिषेधात्सिद्धमेतत्। झल्लक्षणः क्रियतामुगिल्लक्षण इति। झल्लक्षणो भविष्यति विप्रतिषेधेन। झल्लक्षणस्यावकाशः। सर्पींषि। धनूंषि। उगिल्लक्षणस्यावकाशः। गोमान् यवमान्। इहोभयं प्राप्नोति। गोमन्ति ब्राह्मणकुलानि यवमन्ति ब्राह्मणकुलानि। श्रेयांसि भूयांसि। झल्लक्षणो भविष्यति विप्रतिषेधेन। ननु च पुनः प्रसङ्गविज्ञानादुगिल्लक्षणः प्राप्नोति। पुनः प्रसङ्ग इति चेदमादिभिस्तुल्यम् *। पुनः प्रसङ्गादिति चेद् अमादिभिस्तुल्यमेतद्भवति। तद्यथा। युष्मदस्मदोरमादिषु कृतेषु पुनः प्रसङ्गाच्छिशीलुङ्नुमो न भवन्ति। एवं झल्लक्षणे कृते पुनः प्रसङ्गादुगिल्लक्षणो न भविष्यति। यदप्युच्यते ऽसति खल्वपि संभवे बाधनं भवति। अस्ति च संभवो यदुभयं स्यादिति। सत्यपि संभवे बाधनं भवति। तद्यथा। दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपिसंभवेझल्लक्षणउगिल्लक्षणं बाधिष्यते। अथवास्त्वत्र उगिल्लक्षणोपि। ननुचोक्तं द्वयोर्नकारयोः श्रवणंप्रसज्येतेति। परिहृतमेतद् न व्यञ्जनपरस्यैकस्यानेकस्य वा श्रवणं प्रति विशेषोस्तीति। ननु चोक्तं प्रतिज्ञाभेदो भवतीति। श्रुतिभेदेऽसति प्रतिज्ञाभेदः किं करिष्यति। ननु च श्रुतिकृतोपि भेद उक्तः। इह तावत् श्रेयांसि भूयांसीति। परस्यानुस्वारे कृते पूर्वस्य श्रवणं प्रसज्येत। कुर्वन्ति कृषन्तीति। परस्यानुस्वारसवर्णयोः कृतयोः पूर्वस्य णत्वं प्राप्नोतीति। नैष दोषः। योगवाहाना-

---

त्वादनुस्वारो नकारस्य भवति न तु णत्वं णत्वे च कर्तव्ये सिद्ध एवानुस्वार इति णत्वाभावः। असिद्धे च परसवर्णइति। असिद्धप्रकरणे परसवर्णस्य विधानाद् णत्वे कर्तव्ये तस्यासिद्धत्वाण्णत्वाभावः। विप्रतिषेधादिति। व्यक्तिपदार्थाश्रयसहितात्। तद्यथा दधीति। यद्यपि दृष्टान्ते सामान्यविशेषभावो बाधकहेतुर्दार्ष्टान्तिके तु विप्रतिषेधे परमेवेति नियमस्तथापि विनापि विरोधे न दृष्टं बाधकत्वमिति प्रदर्शनाय दृष्टान्तोपन्यासः। परस्येति। अयोगवाहानामविशेषेणोपदेशाश्रयणादनुस्वारस्य झल्त्वात्पूर्वस्याप्यनुस्वारो भवति ततो द्वयोरनुस्वारयोः श्रुतिं प्रति विशेषाभावः। कुर्वन्तीत्यत्रापि पूर्वस्य नकारस्य

अविशेषेणोपदेशश्चोदितः । तत्रेह तावत् । श्रेयांसि भूयांसीति । परस्यानुस्वारे कृते तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारो भविष्यति। कुर्वन्ति कृषन्तीति । परस्यानुस्वारे परसवर्णे च कृते तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारपरसवर्णौ भविष्यतः । नैव वा पुनरचोगिल्लक्षणः प्राप्नोति। किं कारणम् ।मिदचोऽन्त्यात्पर इत्युच्यते। न च द्वयोर्मितोरचामन्त्यात्परत्वे संभवोस्ति । कथं तर्हि । इमौ द्वौ मितौ अचामन्त्यात्परौ स्तः । दध्निनड्वांहि ब्राह्मणकुलानीति । विनिमित्तावेतौ तत्र बहूर्जि प्रतिषेधः * । तत्र बहूर्जि प्रतिषेधो वक्तव्यः । बहूर्जि ब्राह्मणकुलानि । अन्त्यात्पूर्वं नुममके॥ अन्त्यात्पूर्वं नुममके इच्छन्ति । किमविशेषेण आहो स्विद्बहूर्जाविव। किं चातः । यद्यविशेषेण, काष्ठतक्षीति भवितव्यम् । अथ बहूर्जाविव काष्ठतङ्क्षीति भवितव्यम् । एवं तर्हि बहूर्जाविव । बहूर्ज्जि, स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । अच इत्येषा पञ्चमी । अच उत्तरो यो झल् तदन्तस्य नपुंसकस्य नुमा भवितव्यम् । यश्चात्र अच उत्तरो नासौ झल् नापि तदन्तं नपुंसकम् । यदन्तं च नपुंसकं नासावच उत्तरः । इहापि तर्हि न प्राप्नाति । काष्ठतङ्क्षीति । अत्र यः अच उत्तरो झल् न तदन्तं नपुंसकं यदन्तं च नपुंसकं नासावच उत्तरः । नैतदस्ति। झल्जातिः प्रतिनिर्दिश्यते । अच उत्तरा या झल्जातिरिति। यदि पञ्चमी, कुण्डानि वनानि इत्यत्र न प्राप्नोति । एवं तर्हि इकोचि

---

अनुस्वारपरसवर्णयोः कृतयोः परसवर्णस्यासिद्धत्वाण्णत्वस्यातिक्रमः । न च द्वयोरिति । ननु च यद्यपि प्रयोगे पूर्वेण नुमा परस्य नुमोन्त्याजपेक्षमानन्तर्यं विहन्यते तथापि क्रमेण विधाने द्वयोः संभवत्येव परत्वमित्युक्तम् । नैष दोषः । प्रयोगाश्रयेणैतदुक्तम् । प्राधान्यात्प्रयोगस्यान्त्यादचः परो मित्प्रयोक्तव्य इत्यानन्तर्यमेवात्र संश्रितम् । न च द्वयोर्नुमोरेकाजपेक्षमानन्तर्यं संभवति । पचतीत्यत्र तु सार्वधातुके परतः शब्विधानाद्विकरणव्यवधानमाश्रितमेव । विनिमित्ताविति । भिन्ननिमित्तावित्यर्थः । उकारात्पर आम् आमः परो नुम् । तत्रेति । झलच इति द्वन्द्वाश्रयणे दोषः । बह्व ऊर्जो येषामिति बहुव्रीहिः । यद्यविशेषेणेति । काष्ठं तक्ष्णुवन्तीति क्विपि कृते जसः शिभावे ककारषकारयोर्मध्ये नुम्प्राप्नोति तस्य झल्परत्वादनुस्वारप्रसङ्गः । अच इत्येषेति । झलच इतिन द्वन्द्वः किं तर्हि झलिति लुप्तषष्ठीकं पदम् । अच इति तु पञ्चम्यन्तम् । कुण्डानीति । इ·

विभक्ताविल्यत्राचः सर्वनामस्थाने इत्येतदनुवर्तिष्यते। एवमपि ष-ष्ठ्यभावान्न प्राप्नोति। सर्वनामस्थाने इत्येषा सप्तमी अच इति पञ्च-म्याः षष्ठीं प्रकल्पयिष्यति। तस्मिन्निति निर्दिष्टे पूर्वस्येति॥

इकोचि विभक्तौ॥ ७२॥ अज्ग्रहणं किमर्थम्। इकोचि व्य-ञ्जने मा भूत्॥ इकः अचीत्युच्यते व्यञ्जनादौ मा भूत्। त्रपुभ्यां त्र-पुभिः। अस्तु लोपः॥ अस्त्वत्र नुम्। न लोपः प्रातिपदिकान्तस्येति नलोपो भविष्यति। स्वरः कथम्॥ पञ्चत्रपुभ्याम्। पञ्चत्रपुभ्यः। इ-गन्ते द्विगाविति एष स्वरो न प्राप्नोति। स्वरो वै श्रूयमाणे ऽपि॥ श्रूयमाणे पि नुमि स्वरो भवति। पञ्चत्रपुणा पञ्चत्रपुणे इति। लुप्ते किं न भविष्यति॥ लुप्ते इदानीं किं न भविष्यति। किं पुनः का-रणं श्रूयमाणे ऽपि नुमि स्वरो भवति। संघातभक्तोसौ नोत्सहते ऽवयवस्येगन्ततां विहन्तुमिति कृत्वा। ततः श्रूयमाणे ऽपि नुमि स्वरो भवति। इदं तर्हि अतिराभ्याम्। अतिराभिः। नुमि कृते रायो हलीत्या-त्वं न प्राप्नोति। इदमिह संप्रधार्यं नुम् क्रियतामात्वमिति। किमत्र क-र्तव्यम्। परत्वादात्वम्। इह तर्हि प्रियतिसृभ्याम् प्रियतिसृभिः। नुमि कृते तिस्रभावो न प्राप्नोति। इदमिह संप्रधार्यं नुम् क्रियतां तिसृ-

---

गन्तस्योत्तरसूत्रेण सिध्यतीत्यकारान्तस्यैव नुमोप्राप्तिरुच्यते। एवं तर्हीति। वाक्यभेदेना-जन्तस्य सर्वनामस्थाने नुम् विधीयते सर्वनामस्थाने इत्येषेति। ननु पञ्चमीसप्तम्योर्द्वयो-रपि सावकाशत्वात्परत्वात्पञ्चम्यैव प्रकल्पिकया भाव्यम्। एवं तर्हीष्टवाची परशब्दः ष-तः सप्तम्यपि क्व चित्प्रकल्पिका भवतीत्यदोषः॥

इकोचि। अज्ग्रहणमिति। हलादौ नुमो लोपविधानात्तन्निवृत्त्यर्थमज्ग्रहणं नो-पयुज्यते इति प्रश्नः। स्वरो न प्राप्नोतीति। नुम्नेगन्तताया विघातात्। लुप्ते किमि-ति। स्वरे कर्तव्ये नलोपस्य शास्त्रे एवासिद्धत्वं प्रतिपाद्यते न तु प्रयोगे नकारस्य सद्भा-वः। ततश्च नुमः सद्भावेपि यत्र स्वरो भवति तत्रासद्भावे कथं न स्यादित्यर्थः। संघात-भक्त इति। अङ्गस्य विधानाद्बहिरङ्गत्वाच्च नुमोन्तरङ्गः स्वरः पूर्वमेव प्रवर्त्तते। अतिराभ्या-मिति। अति रिभ्यां इति स्थिते नुमि कृते तेन व्यवधानाद्रैशब्दस्यात्वं न प्राप्नोति। सुब्-विधौ न लोपस्यासिद्धत्वात्। यद्यपि पदाङ्गाधिकारे तस्य च ग्रहणं भवति तदुत्तरपदस्य चेति रैशब्दान्तस्याङ्गस्यात्वं विधीयत इति नास्ति नुमाङ्गस्य व्यवधानं तथापि नकार-स्यात्वं प्राप्नोति तस्मिन्नपूर्वस्य यणि सति अतिर्याभ्यामिति प्राप्नोति। परत्वादात्वमिति।

भाव इति । किमत्र कर्तव्यम् । परत्वात्तिसृभावः । अथेदानीं तिसृभावे कृते पुनः प्रसङ्गविज्ञानान्नुम् । कस्मान्न भवति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । अत्त उत्तरं पठति । इकोचि विभक्तावजग्रहणं नुम्नुटोर्विप्रतिषेधार्थम् * । इकोचि विभक्तौ अजग्रहणं क्रियते नुमो नुट् विप्रतिषेधेन यथा स्यात् । त्रपूणां जतूनाम् । इतरथा हि नुमो नित्यनिमित्तत्वान्नुडभावः * । अक्रियमाणे ह्यज्ग्रहणे नित्यनिमित्तो नुम् कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि । नित्यनिमित्तत्वान्नुमि कृते नुटोभावः स्यात् । एतदपि नास्ति प्रयोजनम् । अक्रियमाणे ऽपि वै अज्ग्रहणे ऽवश्यमत्र नुडर्थो यत्नः कर्तव्यः । पूर्वविप्रतिषेधो वक्तव्यः । इदं तर्हि प्रयोजनम् । नुटि कृते नुम्मा भूदिति । किं च स्यात् । त्रपूणां जतूनां नामीति दीर्घत्वं न स्यात् । मा भूदेवं नोपधाया इत्येवं भविष्यति । इह तर्हि शुचीनाम् । इन्हन्पूषार्यम्णां शौ । सौ चेत्यस्मान्नियमान्न प्राप्नोति दीर्घत्वम् । अर्थवद्ग्रहणे नानर्थकस्येत्येवं न भविष्यति । नैषा परिभाषा इह शक्या विज्ञातुम् । इह हि दोषः स्याद्वाग्मीति । एवं तर्हि लक्षणप्रतिपदो-

---

आत्वमनित्यं नुमि कृते तेन व्यवधानादप्रसङ्गादथ वा शब्दान्तरप्राप्त्या नुमि कृते नकारस्य प्रसङ्गात् । अकृते त्विकारस्य । नुमप्यनित्यः । कृते आत्वे प्राप्त्यभावात् । परत्वात्तिसृभाव इति । शब्दान्तरप्राप्त्या नुमनित्यः । तिसृभावस्तु नुमि कृते तेन व्यवधानान्न प्राप्नोतीत्यनित्यः । स हि यद्यपि त्रिशब्दान्तस्याङ्गस्य विधीयते तद्भक्तत्वाच्च नुमव्यवधायकस्तथापि निर्दिश्यमानस्यादेशा भवन्तीति त्रेरेव तिसृभावेन भाव्यं स च नुमा व्यवहित इति तिसृभावस्याप्राप्तिस्तदेवमुभयोरनित्ययोः परत्वात्तिसृभावः । त्रपूणामिति । सत्यज्ग्रहणे द्वयोरपि नुम्नुटोरनित्यत्वाद्विप्रतिषेधे सति नुमचिरह्रस्वनद्यावेभ्यो नुडिति पूर्वविप्रतिषेधान्नुट् भवति । तस्मिंश्च नामीति दीर्घत्वम् । असति त्वज्ग्रहणे कृताकृतप्रसङ्गित्वान्नित्यत्वान्नुमेव स्यात् । नुडर्थो यत्न इति । अज्ग्रहणं च कर्त्तव्यं पूर्वविप्रतिषेधश्च वक्तव्य इति यत्नद्वयमाश्रयणीयं तत्राज्ग्रहणमकृत्वैव एक एव नुडर्थो यत्नः कर्तव्य इत्यर्थः । नुटि कृते इति । यत्नान्तरेण नुटि कृते नुम् प्राप्नोतीत्यर्थः । किं च स्यादिति । नलोपे कृते दोषाभावं मन्यते । नामीति । नलोपस्य सुब्विधावसिद्धत्वादजन्तत्वाभावात् । इह तर्हीति । इन्हन्निति नियमः सर्वस्योपधालक्षणस्य दीर्घत्वस्येति व्याख्यातम् । नैषेति । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेनेति वचनात् । तथा च वा-

क्तयोः प्रतिपदोक्तस्यैवेति । उत्तरार्थं च * । उत्तरार्थं तर्ह्यज्ग्रहणं कर्तव्यम् । अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । अजादौ यथा स्यात् । इह मा भूत् । अस्थिभ्यामस्थिभिः । यद्युत्तरार्थं स्यात्तत्रैवायमज्ग्रहणं कुर्वीत । इह हि क्रियमाणे यदि किं चित्प्रयोजनमस्ति तदुच्यताम् । इहापि क्रियमाणे प्रयोजनमस्ति । किम् । अजादौ यथा स्यात् । इह मा भूत् । त्रपु जतु । एतदपि नास्ति प्रयोजनम् । विभक्तावित्युच्यते । न चात्र विभक्तिं पश्यामः । प्रत्ययलक्षणेन । न लुमताङ्गस्येति प्रत्ययलक्षणस्य प्रतिषेधः । एवं तर्हि सिद्धे सति यदज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामेति । किमेतस्य ज्ञापने प्रयोजनम् । हे त्रपु । हे त्रपो । अत्र गुणः सिद्धो भवति । इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् । स्वरो वै श्रूयमाणोऽपि लुप्ते किं न भविष्यति ॥१॥ रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि । नुड्वाच्य उत्तरार्थं तु इह किं चित् त्रपो इति ॥२॥

तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ॥७३॥ किमिह पुंवद्भावेनातिदिश्यते । नुम्प्रतिषेधः । कथं पुनः पुंवदित्यनेन नुम्प्रतिषेधः शक्यो विज्ञातुम् । वतिनिर्देशोऽयम् । कामचारश्च वतिनिर्देशे

---

ग्मिन इत्यादावपि नियमाद्दीर्घाभाव. । तत्रैवायमिति । एवं हि स्वरितत्वं न प्रतिज्ञेयं भवति । प्रत्यक्षश्रुतिसंभवे चानुमानं नाश्रयितव्यं भवति । हे त्रपु हे त्रपो इति । हे त्र पु इति प्राप्ते हे त्रपो इति भवतीत्यर्थः । केचित्तु रूपद्वयमिष्यत इत्याहुः । क्व चित्प्रत्ययलक्षणं लुमता लुप्तायामपि संबुद्धौ भवतीत्येतदज्ग्रहणेन ज्ञाप्यते न तु सर्वत्रेति ते वदन्ति ॥

तृतीयादिषु । किमिहेति । अन्यत्र पराश्रयाणि कार्याणि अतिदिश्यन्ते न तु स्वाश्रयकार्याभावः । इह तु विपर्ययो दृश्यतइति मत्वा प्रश्नः । कथं पुनरिति । पुंवदित्यनेन नुम्प्रतिषेधो ऽशक्योतिदेष्टुं न हि पुंसि नुम्प्रतिषेधो विहितः । कामचारश्चेति । यत्र क्रियाशब्देन नोपात्ता तत्र कामचारः न तु ब्राह्मणवत् क्षत्रिये वर्तितव्यमित्यादावुपात्तक्रियेतिदेशे प्रतिपत्ता चोपमाने भावाभावयोरन्यतरमवगत्य वाक्यशेषं कल्पयति । तत्र पुंसि नुमभावदर्शनान्नपुंसके पुंवदतिदेशान्नुमभावः प्रतीयते । तथेह शास्त्रे यथालक्ष्यं क्वचिद्भवतीत्यस्याध्याहारः । क्वचिन्न भवतीत्यस्य । क्वचिदुभयस्य । यथा स्थानिवदतिदेशे ।

वाक्यशेषं समर्थयितुम्। तद्यथा। उशीनरवन्मद्रेषु यवाः सन्ति न सन्तीति। मातृवदस्याः कलाः सन्ति न सन्तीति। एवमिहापि पुंवद्भवति पुंवन्न भवतीति वाक्यशेषं समर्थयिष्यामहे। यथा पुंसो न नुम्भवति एवं तृतीयादिषु भाषितपुंस्कस्यापि न भवतीति। किमुच्यत नुम् प्रतिषेध इति। न पुनरन्यदपि पुंसः प्रतिपदं कार्यमुच्यते यत्तृतीयादिष्वजादिषु विभक्तिषु भाषितपुंस्कस्यातिदिश्येत। अनारम्भात्पुंसि। न हि किं चित्पुंसि प्रतिपदं कार्यमुच्यते यत्तृतीयादिष्वजादिषु विभक्तिषुभाषितपुंस्कस्यातिदिश्येत। नुम्प्रकृतस्तच किमन्यच्छक्यं विज्ञातुम्। अन्यदतो नुम्प्रतिषेधात्। पुंवदिति नुम्प्रतिषेध श्चेद् गुणनाभावनुडौत्वप्रतिषेधः*। पुंवदिति नुम्प्रतिषेधश्चे द् गुण नाभावनुडौत्वानां प्रतिषेधो वक्तव्यः। गुणः। ग्रामण्ये ब्राह्मणकुलाय। गुणः। नाभाव। ग्रामण्या ब्राह्मणकुलेन। नाभावः। नुट्। ग्रामण्यां ब्राह्मणकुलानाम्। नुट्। औत्वम्। ग्रामण्यां ब्राह्मणकुले। ह्रस्वत्वमप्रतिषिद्धम्। ह्रस्वाश्रयाश्चैत विधयः प्राप्नुवन्ति। ह्रस्वाभावार्थं च। किं च। नुम्प्रतिषेधार्थं च। कथं पुनरत्राप्रकृतस्य असंशब्दितस्य ह्रस्वत्वस्य प्रतिषेधः शक्यो विज्ञातुम्। अर्थातिदेशात्सिद्धम्। नैत्रं विज्ञायते। भाष्यते पुमाननेन सोयं भाषितपुंस्कः भाषितपुंस्कस्य। शब्दस्य पुंशब्दो भवतीति। कथं तर्हि भाष्यते पुमानस्मिन्नर्थे सोयं

---

तथा च वायुोरित्यादौ स्थान्याश्रयलोपाभावः। नह्वि किंचिदिति। तस्माच्छसोनः पुंसीति नत्वातिदेशस्तृतीयादिषु पुंवद्भावातिदेशात् पूर्वसवर्णदीर्घाभावाच्चेह न संभवति। नुम्प्रकृत इति। अनेन प्रत्यासत्तिमाश्रयति। ह्रस्वत्वमप्रतिषिद्धमिति। तस्याप्रकृतत्वात्। अर्थातिदेशात्सिद्धमिति। यद्यपि प्रकरणमनपेक्ष्य व्याख्याश्रयेणापि ह्रस्वाभावः सिध्यति तथापि संभवात्परिहारान्तरमाश्रितम्। यदि कार्यातिदेशः स्यात्तदा प्रकृतत्वाप्रकृतत्वलक्षणो भेदः स्यादर्थे त्वतिदिश्यमाने नास्त्ययंभेदः। नैवं विज्ञायतइति। यदा शब्दे ऽन्यपदार्थे कार्यातिदेशः स्यात्तदा प्रकृतस्यैव नुमः प्रतिषेधः स्यान्न ह्रस्वस्य। भाष्यते पुमानस्मिन्नर्थे इति। अर्थोन्यपदार्थ आश्रीयते स चार्थो नपुंसकलक्षणो विरोधान्नाश्रीयते। न हि नपुंसके ऽर्थे पुंसो भाषणमुपपद्यते। तस्माच्छब्दप्रवृत्तिनिमित्तलक्षणोर्थोन्यपदार्थत्वेनाश्रीयते। तद्योगाच्चाभिधेयं नपुंसकं तदपि भाषितपुंस्कमुच्यते तस्यार्थस्य पुंस्त्वातिदेशाद् द्वावपि नुम्ह्रस्वौ न भवतः। पुंसि इ-

भाषितपुंस्कः भाषितपुंस्कस्यार्थस्य पुंवदर्थो भवतीति। तद्धितलुक्प्रतिषेधश्च*। तद्धितलुकश्च प्रतिषेधो वक्तव्यः। पीलुर्वृक्षः। पीलुफलम्। पीलुना पीलुने इति। न वा समानायामाकृतौ भाषितपुंस्कविज्ञानात्*। न वा वक्तव्यम्। किं कारणम्। समानायामाकृतौ भाषितपुंस्कविज्ञानात्। समानायामाकृतौ यद्भाषितपुंस्कम्। आकृत्यन्तरे चैतद्भाषितपुंस्कम्। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। एतदप्यर्थनिर्देशात्सिद्धम्॥

ई च द्विवचने॥ ७७॥ किमुदाहरणम्। अक्षी ते इन्द्र पिङ्गले। नैतदस्ति। पूर्वसवर्णेनाप्येतत्सिद्धम्। इदं तर्हि अक्षीभ्यां ते नासिकाभ्याम्। इदं चाप्युदाहरणम्। अक्षी ते इन्द्रपिङ्गले। ननु चोक्तं पूर्वसवर्णेनाप्येतत्सिद्धमिति। नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति। छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः। मधोर्गृभ्णामि मधोस्तृप्ता इवासते इत्येवमर्थम्। पुंवद्भावेन नुमो निवृत्तिः। नुमि निवृत्ते पूर्वसवर्णेनैव सिद्धम्। स्वरार्थस्तर्हीकारो वक्तव्यः। उदात्तस्वरो

---

योरप्यभावात्। अर्थस्य चापौरुषेयत्वादतिदेशासंभवात्तदतिदेशद्वारेणानेककार्यातिदेश एवायं संपद्यते। तत्र यद्यप्यन्तरङ्गो ह्रस्वस्तथाप्यपवादविषयं प्रकल्प्योत्सर्गाणां प्रवर्तनात्र प्रवर्तते। ह्रस्वाभावाच्च गुणादीनां निमित्ताभावादप्रवृत्तिः सिद्धा। तद्धितलुगिति। अर्थातिदेशस्यैव प्रयोजनान्तरं चोद्यमुखेनोपन्यस्यते। फले लुगित्योरञो लुकि कृते पीलुशब्दो वृक्षाकृतौ पुंल्लिङ्गः। फलाकृतौ नपुंसकलिङ्ग इति पुवद्भावान्नुमोऽप्रसङ्गः। न वेति। नन्वाकृतिरेवान्यपदार्थत्वेनाश्रिता। भाषितपुंस्कशब्दस्य तु भाषितपुंस्कशब्दव्यपदेशो नैवाश्रितः। सत्यम्। साक्षाच्छब्दस्य भाषितपुंस्कव्यपदेशो नास्त्यभिधेयद्वारकस्तु केन निवार्यते। तत्र पीलुशब्दो वृक्षाकृतौ पुंल्लिङ्गः फलाकृतौ नपुंसकलिङ्ग इति पुंभावाप्रसङ्गः॥

ई च द्विवचने। पूर्वसवर्णेनेति। अक्षि औ इति स्थिते छान्दसात् पुंवद्भावात्क्लीभावे नुमि चासति प्रथमयोः पूर्वसवर्ण इत्यनेन। नुमा व्यवहितत्वादिति। प्रथमयोः पूर्वसवर्ण इत्यत्राक इति वर्तते। तेनागचोः स्थाने पूर्वसवर्णदीर्घ उच्यमानो नुम्व्यवधाने नास्तीत्यच्चिणो इति प्राप्नोति। परत्वाच्च नुम् प्राप्नोति। ईकारस्तु विधीयमानः परत्वान्नुमं बाधते तेन क्लीभावे कृते पूर्वसवर्णो नाचो इति सिध्यति। नुमि निवृत्ते इति। अप्रवृत्तिरेव निवृत्तिः क्लीभावोपि पुंवद्भावान्न भवति। स्वरार्थ इति। उदात्तग्रहणानुवर्तनं

यथा स्यात् । नपुंसकस्वरो मा भूत् । ननु च पुंवद्भावातिदेशादेव स्वरो भविष्यति । अशक्यः पुंवद्भावातिदेशस्तत्राश्रयितुम् । इह हि दोषः स्यात् मध्वस्मिन्नस्ति । मधुर्मास इति । स तर्हि पुंवद्भावो वक्तव्यः । न वक्तव्यः । प्रकृतं पुंवदिति वर्तते ॥

नाभ्यस्ताच्छतुः ॥ ७८ ॥ कस्यायं प्रतिषेधः । नुम इत्याह । तन्नुमो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । इदितो नुम्धातोरिति । तद्वै अनेकग्रहणेन व्यवच्छिन्नमशक्यमनुवर्तयितुम् । एवं तर्हि सर्वनामस्थान इति वर्तते । सर्वनामस्थाने यत्प्राप्नोति तस्य प्रतिषेधः । तद्वै बहुतरकेण ग्रहणेन व्यवच्छिन्नमशक्यमनुवर्तयितुम् । अथेदानीं व्यवहितमपि शक्यते ऽनुवर्तयितुम् । नुमेवानुवर्त्य इहार्थमुत्तरार्थं च । इह चैव प्रतिषेधः सिद्धो भवति । इह च आच्छीनद्योर्नुमिति नुम्ग्रहणं न कर्त्तव्यं भवति ॥

आच्छीनद्योर्नुम् ॥ ८० ॥ इह कस्मान्न भवति । अदती घ्नती लु-

---

दीकार उदात्तः । नपुंसक स्वर इति । नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वम् । ननु चेति । अव्युत्पत्तिपक्षे चोद्यते । व्युत्पत्तिपक्षे त्वशेर्निदिति निरवादाद्युदात्तत्वेन भाव्यम् । मधुर्मास इति । मत्वर्थे मासतन्वोर्मधोर्ञ चेति यत उत्पन्नस्य लुगकारेकाररेफाश्च वक्तव्या इति लुकि कृते मासि पुंसि मधुशब्दो वर्तते इत्याद्युदात्तत्वं न स्यात् । तस्माद्यस्यान्यत्र नपुंसकत्वं दृष्टं तस्यासत्यपि नपुंसकत्वआद्युदात्तत्वमिष्यत इति पुंवद्भावे ऽपि स्वरानिवर्तनात्स्वरार्थ ईकारो विधेयः । स तर्हीति । मधोर्ञ्च भृणातीत्येवमाद्यर्थः । प्रकृतमिति । वाक्यभेदेन संबन्धः क्रियते । छन्दसि नपुंसकं पुंवदित्येकं वाक्यम् । अस्थ्यादीनां छन्दसि द्विवचनईकारो भवतीति द्वितीयं वाक्यम् ॥

नाभ्यस्ताच्छतुः । कस्यायमिति । आच्छीनद्योर्नुमिति नुम्ग्रहणाद्व्यवहितस्यानुवृत्तिर्नाश्रिता नचानन्तरः प्रतिषेधार्ह इति प्रश्नः । एवं तर्हीति । उगिदचां सर्वनामस्थानेधातोरित्यतः सर्वनामस्थानं निषेध्य लक्षणार्थं विज्ञायते । सर्वनामस्थाने यत्प्राप्नोति तदभ्यस्ताच्छतुर्न भवति इति नुम एव प्रतिषेधः संपद्यते । बहुतरकेणेति । नुमागमस्तुभिर्योगैर्विच्छिन्नः । सर्वनामस्थानं तु पञ्चभिरिति प्रकर्षप्रत्ययनिर्देशः ॥

आच्छीनद्योर्नुम् । इह कस्मादिति । सर्वत्र एवावर्णस्य निवृत्त्या भाव्यम् । क्व चित्सुका क्व चित् स्नुना । क्व चिदेकादेशेन । क्वचित्तु श्नाभ्यस्तयोरात इति लोपेन । तत्रावश्यंभूतपूर्वगतिराश्रयितव्या । अवर्णनिवृत्तिशास्त्रस्य वानुमागमविधानात्पूर्वं प्रतिबन्धा-

नती पुनतीति । लोपे कृते ऽवर्णाभावात् । किं तर्ह्यस्मिन्योगे उदाहरणम् । याती यान्ती । अत्राप्येकादेशे व्यपवर्गाभावान्न प्राप्नोति । अन्तादिवद्भावेन व्यपवर्गः । उभयत आश्रये नान्तादिवद्भावः । नोभयत आश्रयः करिष्यते । नैवं विज्ञायते अवर्णान्ताच्छतुर्नुम् भवतीति । कथं तर्हि आवर्णान्नुम् भवति । तच्चेदवर्णं शतुरनन्तरमिति ॥

शप्श्यनोर्नित्यम् ॥ ८१ ॥ नित्यग्रहणं किमर्थम् । विभाषा मो भूत् । नैतदस्ति प्रयोजनम् । सिद्धोऽत्र पूर्वेणैव । तत्रारम्भसामर्थ्यान्नित्यो विधिर्भविष्यति । तदेतन्नित्यग्रहणं सान्त्यासिद्धं तिष्ठतु तावत् ॥

सावनडुहः ॥ ८२ ॥ अनडुहः सावामप्रतिषेधो नुमो ऽनवकाशत्वात् * । अनडुहः सावाम्प्रतिषेधः प्राप्नोति । किं कारणम् । नुमोऽनवकाशत्वात् । अनवकाशो नुम् आमं बाधते । न वावर्णोपधस्य नुम्वचनात् * । न वा एष दोषः । किं कारणम् । अवर्णोपधस्य नुम्वचनात् । अवर्णोपधस्य नुमं वक्ष्यामि । तदवर्णग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । आच्छीनद्योर्नुमिति । यदि तदनुवर्तते । अनडुहि यावन्त्यवर्णानि सर्वेभ्यः परो नुम् प्रा-

---

दप्रवृत्तिस्ततश्चापि प्रसङ्ग इति भावः । लोपे कृते इति । नित्यत्वादन्तरङ्गत्वाच्च । पूर्वोक्तेनैवाभिप्रायेण चोदयति । किं तर्हीति । इतर सांप्रतिकमवर्णान्तं दर्शयितुमाह । यान्तीति । नैवं विज्ञायत इति । एवं विज्ञायमाने ऽवर्णं शता चोभयमाश्रितं स्यात् । अवर्णान्नुम् भवतीति । अवर्णात्पर इत्यर्थः । शबवयवव्यतिरिक्त आवर्णो गृह्यते । आदित्युपादानसामर्थ्यात् । तच्चेदवर्णमिति । शबवयवस्तकारः शतृशब्देनोच्यते । नह्यन्यथा एकादेशे कृते शतुरनन्तरमवर्णं भवति । उभयत आश्रयणे च नान्तादिवदित्युक्तम् । तस्माच्छबवयवस्तकारः शतृशब्देनोच्यते शबवयवाकारव्यतिरिक्तं चावर्णमेकादेशात्मकमाश्रीयते इति न कश्चिद्दोषः ।

सावनडुहः । आमागमः सर्वनामस्थानमात्रे विधीयमानः सोरन्यत्र सावकाशो निरवकाशेन नुमा बाध्येतेति मत्वाह । अनडुहः साविति । अवर्णोपधस्येति । नचामा विनावर्णोपधत्वसंभवः इति निमित्तमेव नुमं आमिति बाध्यबाधकभावाभावः । अनडुहि यावन्तीति । अनडुहोकारान्तत्वासंभावदनडुह्यवर्णों विशेष्यते नत्ववर्णेनानडुच्छब्दस्ततः सर्वावर्णानां नुम्प्रसङ्गः । यद्येवं सत्यामप्यादित्यस्यानुवृत्तौ यदेव सन्निहितमवर्णं तस्यैव नुम् स्यात्तथा च नुमा आम् बाध्येत । नैष दोषः आगमिभेदात् । आमनडुहो

प्नोति। मिदचोऽन्त्यात्पर इत्यनेन यत्सर्वान्त्यमवर्णं तस्मात्परो भविष्यति। पुनःप्रसङ्गः विज्ञानाद्वा सिद्धम् *। अथ वा पुनः प्रसङ्गात् नुमि कृते आम्भविष्यति। यथा आत्त्वादिषु द्विर्वचनम्। तद्यथा। जग्ले मम्ले ईजतुरीजुरिति। आत्वादिषु कृतेषु पुनः प्रसङ्गाद् द्विर्वचनं भवति, एवमत्रापि नुमि कृते आम्भविष्यति॥ नैष युक्तः परिहारः। विप्रतिषेधे पुनः प्रसङ्गः। विप्रतिषेधश्च द्वयोः सावकाशयोर्भवति। इह पुनरनवकाशो नुमामं बाधते। एवं तर्हि वृत्तान्तादेष परिहारः प्रस्थितः। कस्माद् वृत्तान्तात्। इदमयं चोद्यो भवति। अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वादिति। तस्य परिहारो न वावर्णोपधस्य नुम्वचनादितिततोऽयं चोद्योभवति। यत्र तर्ह्यवर्णप्रकरणं नास्ति तत्र ते आमा नुमो बाधनं प्राप्नोति। बह्वनड्वांहि ब्राह्मणकुलानि। तत उत्तरकालमिदं पठितं पुनः प्रसङ्गविज्ञानाद्वा सिद्धमिति॥

दिव औत्॥ ८४॥ दिव औत्त्वे धातोः प्रतिषेधः *। दिव औत्वे धातोः प्रतिषेधो वक्तव्यः। अक्षद्यूरिति। अधात्वधिकारात्सिद्धम् *। अधातोरिति वर्तते। क्व प्रकृतम्। उगिदचां सर्वनामस्थानेऽधातोरिति। अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषः *। अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषो भवति। काष्ठतङ्क्षि कूटतङ्क्षि।

---

नुम् त्ववर्णस्य तस्मात्सर्वावर्णानां नुम्प्रसङ्ग एव दोषः। मिदचोऽन्त्यादिति। मित्वलिङ्गाच्च मित्परिभाषोपतिष्ठतेतदुपस्थानादुकारात्परो नुम्प्रसक्तश्चादित्यधिकारादवर्णादन्त्यात्परः क्रियते। न चास्यकृते वर्णोऽन्त्यो भवतीति सामर्थ्यादामि कृते नुम्विधीयते। अथ वोकारात्पर एव विधीयते। तत्रादित्यधिकारादयमर्थो भवति यथावर्णात्परो नुम् भवति तथा कर्तव्यमेवं चावर्णात्परो भवति। यदि कृते नुम्याम् क्रियते। एवं च सत्यादित्यधिकारोनुगृहीतो भवति। परिभाषा च न त्यक्ता भवति। पुनः प्रसङ्गविज्ञानाद्वेति। वाशब्दोऽशब्दः। बह्वनड्वांहीति। परत्वादामि कृते पुनः प्रसङ्गविज्ञानान्नपुंसकस्य झलच इति नुम् क्रियते इति वाक्यार्थः। भाष्यकारस्तु न्यायव्युत्पादनार्थं विकल्पार्थं वाशब्दं व्याख्याय दूषयित्वा समुच्चयार्थमेव व्याचष्टे। वृत्तान्तादिति। प्रसङ्गो वृत्तान्तश्चोद्यप्रसङ्गादित्यर्थः। अथ वा वृत्तोऽतिक्रान्तो यः प्रबन्धश्चोद्यसमाधानलक्षणः। तदन्ते व्यवस्थितं यच्चोद्यं तदुपचाराद्वृत्तान्तशब्दवाच्यं तस्मादित्यर्थः॥

दिव औत्। दिव औत्त्वइति। विशेषानुपादानाद्धातोरपि प्राप्नोति। अक्षद्यूरिति।

नपुंसकस्य झलचः अधातोरिति प्रतिषेधः प्राप्नोति । उक्तं वा *। किमुक्तम् । चनानुबन्धकग्रहणे हि न सानुबन्धकस्येति । अथ वा संबन्धमनुवर्तिष्यते ॥

इतोत्सर्वनामस्थाने ॥ ८५ ॥ इतोद्वचनमनर्थकमाकारप्रकरणात् *। इतोद्वचनमनर्थकम् । किं कारणम् । आकारप्रकरणात् । आदिति वर्तते । षपूर्वार्थं तु *। षपूर्वार्थं तर्ह्यद्वक्तव्यः । ऋभुक्षणमिन्द्रम् । ऋभुक्षाणमिन्द्रम् ॥

पुंसोसुङ् ॥ ८९ ॥ असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात् *। पुंसोऽसुङ्युपदेशिवद्भावो वक्तव्यः ॥ उपदेशावस्थायामेवासुङ् भवतीति वक्तव्यम् । किं प्रयोजनम् । स्वरसिद्ध्यर्थम् । उपदेशावस्थायासुङि कृते इष्टः स्वरो यथा स्यात् । परमपुमानिति । अक्रियमाणे ह्युपदेशिवद्भावे समासान्तोदात्तत्वेऽसुङ् आन्तर्यतः अस्वरकस्यास्वरकः स्यात् । किं पुनः कारणं समासान्तोदात्तत्वं तावद्भवति । न पुनरसुङ् । न परत्वादसुङा भवितव्यम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणोसुङ्

---

ऊठि कृते एकदेशविकृतस्यानन्यत्वादौत्वप्रसङ्गः । अननुबन्धकग्रहण इति । अव्युत्पन्नं दिविति प्रातिपदिकमननुबन्धकम् । व्युत्पत्तिपक्षे प्यवयवानां प्रत्ययादीनां सानुबन्धकत्वं न प्रातिपदिकस्य । संबन्धमिति । उगिदचामित्यनेन । दिव औदित्यत्र त्वधातोरिति वर्तते । उगिदचामिति । निवृत्तम् ॥

इतो ऽत्सर्वनामस्थाने । इतोद्वचनमिति । क्व चिदेकादेशविधानात्क्व चिद्दीर्घविधानाच्च ह्रस्वस्य श्रवणेन न भाव्यमित्याकार एव प्रकृत इतो विधय इत्यर्थः । षपूर्वार्थमिति । वा षपूर्वस्य निगम इति दीर्घविकल्पेन रूपद्वयसिद्धिराकारविधौ त्वेकमेव रूपं स्याद् दीर्घविकल्पस्तु तक्षं तक्षाणमित्याद्यर्थं स्यात् ॥

पुंसोसुङ् । असुङीति । पातेर्डुम्सुन्नित्याद्युदात्तस्य पुंसः सकारस्याविद्यमानोदात्तत्वादनुदात्तस्य स्थानेऽसुङि क्रियमाणे आन्तरतम्यादनुदात्तं पदमेकवर्जमिति वचनाद्वा अनुदात्त एव भवतीति पुमानित्यादौ दोषाभावः । परमपुमानित्यत्र त्वन्तरङ्गत्वात्समासान्तोदात्तत्वे कृते सर्वनामस्थाने उत्पन्ने ऽसुङ् क्रियमाणोनुदात्तः प्राप्नोति उदात्तस्थ्यते । ननु चोकारस्य कृतमपि समासान्तोदात्तत्वमसुङि कृते ऽनन्यत्वान्न व्यवतिष्ठते । नैतदस्ति । अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वान्निवृत्तस्य वा निवर्तनादुपदेशिवद्वचनात्तु पूर्वमसुङ् भवति । पश्चात्समासान्तोदात्तत्वम् । अस्वरकः स्यादिति । प्रष्ट-

अन्तरङ्गः स्वरः। असिद्धं बहिरङ्गमन्तरङ्गे। स तर्हि उपदेशिवद्भावो वक्तव्यो न वक्तव्यः। असुङ आद्युदात्तनिपातनं करिष्यते। स निपातनः स्वरः समासस्वरस्य बाधको भविष्यति। एवमप्युपदेशिवद्भावो वक्तव्यः। यथैव हि निपातनस्वरः समासस्वरं बाधते। एवं प्रकृतिस्वरमपि बाधेत। पुमान्। तस्मात्सुष्ठूच्यते। असुङि उपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादिति॥

गोतो णित्॥ ९०॥ किमिदं गोतः परस्य सर्वनामस्थानस्य णित्त्वमुच्यते। आहो स्वित्सर्वनामस्थाने परतो णित्कार्यमतिदिश्यते। कश्चात्र विशेषः। गोतः सर्वनामस्थाने णित्कार्यातिदेशः *। गोतः सर्वनामस्थाने णित्कार्यमतिदिश्यते। सर्वनामस्थाने णिद्वचने ह्यसंप्रत्ययः *। षष्ठ्यनिर्देशात्सर्वनामस्थानस्य णिद्वचने ह्यसंप्रत्ययः स्यात्। किं कारणम्। षष्ठ्यनिर्देशात्षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते। न चात्र षष्ठीं पश्यामः। एवं तर्हि वतिनिर्देशोयं गोतो णिद्भवतीति। स तर्हि वतिनिर्देशः कर्तव्यः नह्यन्तरेण वतिमतिदेशो गम्यते। अन्तरेणापि वतिमतिदेशो गम्यते। तद्यथा। एष ब्रह्मदत्तः अब्रह्मदत्तं ब्रह्मदत्त इत्याह। तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यणितं णिदित्याह णिद्वदिति गम्यते। अथ वा पुनरस्तु गोतः परस्य सर्वनामस्थानस्य णित्वम्। ननु चोक्तं सर्वनामस्थाने णिद्वचने

---

त्रिकाले स्वरविशेषस्यापादानादनभिमतानुदात्तत्वप्रसङ्गाच्चास्वरक इत्युच्यते। न त्वस्वरकस्योच्चारणं संभवति। अथ वोदात्तत्वाभावादस्वरकइत्युच्यते। एवमपीति। यस्मादुदात्तनिपातने दोषस्तस्मात्तत्परित्यागेनेत्यर्थः। प्रकृतिस्वरमिति। पुमानित्यादौ आद्युदात्तत्वमित्यर्थः। प्रकृतिस्वरस्य कोवकाश इतिचेत्पर्यायः स्यात्।

गोतो णित्। गाङ्कुटादिसूत्रे यावन्तः पक्षा उक्तास्ते सर्वे इह संभवन्ति। तत्र णकारस्येतः सर्वनामस्थाने अभावाद्भावे वा तदनुवादे प्रयोजनाभावाण्णित्वव्यपदेशाभावः। संज्ञाकरणेऽपि ञ्णिदग्रहणे संज्ञिभोऽसंप्रत्ययः शब्दभेदाद्भावनापक्षे णकार आदेशः प्राप्नोति। खुलादि वाप्रसिद्धणित्वं प्राप्नोति। तद्वदतिदेशस्तु निर्दोषत्वादाश्रीयते। भाष्ये तु भावनापक्ष एवाशङ्क्य निराकृतः परस्तात् स्थापितश्च। किमिदमिति। ण् इत्यस्य तस्मिन् तस्य भावो णित्त्वम्। तेनायमर्थः। अणितः सर्वनामस्थानस्य स्थाने णित्सर्वनामस्थानमादेशो भवति. खुलादयस्तु तदाभिधाने ऽसमर्थ-

त्ययसंप्रत्ययः षष्ठीनिर्देशादिति नैष दोषः । गोत इत्येषा पञ्चमी सर्वनामस्थान इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । अथ तपरकरणं किमर्थम् । इह मा भूत् । चित्रगुः शबलगुरिति । नैतदस्ति । ह्रस्वत्वे कृते न भविष्यति । स्थानिवद्भावात्प्राप्नोति । अत उत्तरं पठति । तपरकरणमनर्थकं स्थानिवत्प्रतिषेधात् *। तपरकरणमनर्थकम् । किं कारणम् । स्थानिवत्प्रतिषेधात् । प्रतिषिध्यते ऽत्र स्थानिवद्भावः । गोः पूर्वत्वणित्वात्वस्वरेषु स्थानिवन्न भवतीति । स चावश्यं प्रतिषेध आश्रयितव्यः । इतरथा हि संबुद्धिजसोः प्रतिषेधः । यो हि मन्यते तपरकरणसामर्थ्यादत्र न भविष्यतीति संबुद्धिजसोस्तेन प्रतिषेधो वक्तव्यः स्यात् । हे चित्रगो चित्रगव इति । अथेदानीं सत्यपि स्थानिवत्प्रतिषेधे गुणे कृते कस्मादेवात्र न भविष्यति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ननु चेदानींसत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमुपस्थातुम् । नेत्याह । नहीदानीं क्वचिदपि स्थानिवत्स्यात् ॥

तृज्वत्क्रोष्टुः ॥ ९५ ॥ स्त्रियां च ॥ ९६ ॥ अथात्र विभक्तावित्यनुवर्तते उताहो न । किं चातः तृज्वत् स्त्रियां विभक्तौ चेत्क्रोष्ट्री भक्ति-

---

त्वान्न भवन्ति । एतन्न्यायाश्रये गाङ्कुटादिसूत्रेपि भावनापक्षे तु न कश्चिद्दोषः । गोतइत्येषेति । भवनापक्षे गोत इति पञ्चमी । तद्वदतिदेशपक्षे तु षष्ठी । तपरकरणमिति । स्थानिवत्त्वनिषेधादानर्थक्यमिति प्रश्नः । चित्रगुरिति । तपरस्तत्कालस्येत्यचाणिति नानुवर्तते इति अणोपि तत्कालस्य ग्रहणम् । इतरथा हीति । यदि स्थानिवत्त्वनिषेधो नाश्रीयते तदासत्यपि तपरकरणे संबुद्धौ जसि च गुणे कृते स्थानिवत्त्वात्तत्कालत्वाच्च णित्त्वं स्यादित्यर्थः । प्रतिषिद्धे तु स्थानिवत्त्वे गुणे कृते गोरूपस्य लाक्षणिकत्वाण्णित्वाप्रसङ्गः । अव्युत्पत्तिपक्षाश्रयेणैतदुच्यते । व्युत्पत्तिपक्षे तु सर्व एव लाक्षणिकः । न हीदानीमिति । स्वाश्रया या प्राप्तिः सा लक्षणप्रतिपदोक्तपरिभाषावशान्मा भूत् । स्थानिवत्त्वनिमित्तातु स्यादेव प्राप्तिः । न हि सा पूर्वोक्तया परिभाषया निवार्यते । स्थानिवत्त्वस्य निर्विषयत्वप्रसङ्गात् ॥

तृज्वत्क्रो । तृज्वत्क्रोष्टुरित्यत्र सर्वनामस्थानाधिकाराद्विभक्त्यधिकारस्य न दोषो न प्रयोजनम् । विभाषा तृतीयादिष्वचीत्यत्राप्यादिशब्दस्य व्यवस्थावाचित्वाद्विभक्तय एव गृह्यन्तइति तत्रापि न विचार इति स्त्रियां चेत्यत्रैवायं विचारः क्रियते इष्टतोऽधिकाराणां प्रवृत्तिनिवृत्तिभावात् । क्रोष्ट्री भक्तिरिति । क्रोष्ट्री भक्तिरस्येति बहुव्रीहिः ।

नं सिध्यति ॥ हृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्री भक्तिरिति न सिध्यति । एवं तर्हीकार एव हृज्वद्भावं वक्ष्यामि । तदीकारग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव । प्रश्लिष्टनिर्देशोयं स्त्री ईस्त्रीस्त्रियामिति । ईकारे तन्निमित्तः सः । ईकारे चेत् । तन्न । किं कारणम् । तन्निमित्तः सः ॥ हृज्वद्भावनिमित्तः स ईकारः । नाकृते हृज्वद्भावे ईकारः प्राप्नोति । किं कारणम् । ऋन्नेभ्यो ङीबित्युच्यते । ईकारे च हृज्वद्भावः । तदितरेतराश्रयं भवति इतरेतराश्रयाणि च कार्य्याणि न प्रकल्पन्ते । एवं तर्हि गौरादिषु पाठादीकारो भविष्यति । गौरादिषु न पठ्यते । नहि किं चिदृन्नन्तं गौरादिषु पठ्यते । एवं तर्ह्येतज् ज्ञापयत्याचार्यः भवत्यत्र ईकार इति । यदयमीकारे हृज्वद्भावं शास्ति । तेनैव भावनं चेत् स्यादनिष्टोपि प्रसज्यते । यद्यपि नास्ति विशेषो ङीपो ङीषो वा ङीनपि तु प्राप्नोति । इह च न प्राप्नोति । पञ्चभिः क्रोष्ट्रीभिः क्रीतैरथैः पञ्चक्रोष्टृभीरथैरिति । एवं तर्हि

---

भक्तिशब्दस्य प्रियादिषु पाठात्पुंवद्भावाभावः । अत्रान्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधत इति लुकि कृते विभक्त्यभावान्नलुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाच्च हृज्वद्भावो न प्राप्नोति तदभावादृकारान्तत्वनिमित्तोङीबपि न प्राप्नोति । एवं तर्हीति । विभक्तिनिमित्तत्वेन नाश्रीयते किं तर्हि ईकारः । स्त्री ई स्त्रीति । स्त्रिया ई स्त्रीत्वस्य द्योतक ईकार इत्यर्थः । षष्ठीसमासः । अर्थगतं च स्त्रीत्वं ईकारे आरोप्यनदीसंज्ञानिमित्तावाङाटौ क्रियेते । गौरादिपाठादिति । पृथिवी क्रोष्टुपिप्पल्यादयश्चेति च्छेदाध्यायिनः पठन्ति । नहि किं चिदिति । तंहिताध्यायिनो न पठन्ति । सर्वात्मना पाठं प्रतिपादयितुमेतदुच्यते । ङीपो ङीषो वेति । उदात्तयणो हल्पूर्वादिति ङीप उदात्तत्वविधानात् । ङीनपीति । तत आद्युदात्तत्वप्रसङ्गः । ननु ईकारे हृज्वद्भावविधानात्सति शिष्टस्वरो नित्स्वरं बाधिष्यते ततश्चोदात्तयणो हल्पूर्वादित्युदात्तविधानान्नास्ति विशेषः । नैतदस्ति । क्रोष्टुशब्द आद्युदात्त एव । तत्र ङीनि कृते प्रयोजनाभावादकृते हृज्वद्भावे नित्स्वरो न प्रवर्तत इति पूर्वं हृज्वद्भावः परत्वाद्वा तत्र कृते नित्स्वरः सति शिष्टः चित्स्वरं बाधेत । यदि तु ज्ञापकेन पिप्पल्याद्यन्तर्भावः क्रोष्टुशब्दस्यानुमनुमीयते तदा न कश्चिद्दोषः । अपूर्वस्य स्त्रीकारस्यानुमानमाश्रित्यश्लोकवार्तिककारेण दोष उपात्तः शार्ङ्गरवाद्यन्तर्भावानुमानमपि स्यादिति तदाशयः । पञ्चभिरिति । तद्धितार्थेति समासः आर्हादिति ठक उत्पन्नस्याध्यर्द्धपूर्वेति लुक् । लुक् तद्धितलुकीति स्त्रीप्रत्ययस्य लुकि कृते न लुमताङ्गस्येति प्र-

नचापरं निमित्तं सञ्ज्ञा च प्रत्ययलक्षणा*। न चापरं निमित्तमाश्रीयते अस्मिन्परतः क्रोष्टुस्तृज्वद्भवति । किं तर्हि अङ्गस्य क्रोष्टुस्तृज्वद्भवति । अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन । किं पुनः अयं शास्त्रातिदेशः तृचो यच्छास्त्रं तदतिदिश्यते आहो स्विद्रूपातिदेशः तृचो यद्रूपं तदतिदिश्यते इति। कश्चात्र विशेषः। तृज्वदिति शास्त्रातिदेशश्चेद् यथाचिण्णि*। तृज्वदिति शास्त्रातिदेशश्चेद् यथा चिण्णि तद्वत्प्राप्नोति। कथं चिण्णि। उक्तं तत्राङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धमिति। आङ्गं यत्कार्यं तदतिदिश्यते । एवमिहाप्यनङ्गुणदीर्घत्वान्यतिदिष्टानि । रपरत्वमनतिदिष्टम् । तत्र को दोषः । तत्र रपरवचनम्*। तत्र रपरत्वं न सिध्यति तद्वक्तव्यम् । नैष दोषः । गुणेतिदिष्टे रपरत्वमपि अतिदिष्टं भवति । कथम् । कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम् । ऋतो ङिसर्वनामस्थानयोर्गुणो भवति उपस्थितमिदं भवति

---

त्ययलक्षणप्रतिषेधादीकारदिमित्तस्तृज्वद्भावो न प्राप्नोति अन्तरङ्गाणां च विधीनां लुका बाधनात्पूर्वमेव तृज्वद्भावो न लभ्यते तत्राद्येन सर्वनामस्थाने तृज्वद्भावोऽन्येन तृजादिषु तृतीयादिषु विकल्पेनेति हलादौ मध्यमेनाप्राप्तिरुच्यते । पञ्चक्रोष्टुभिरिति । केचिदाहुः । भस्याढ इति ठक्चसोश्चेति वा प्राप्तः पुंवद्भावो जातेश्चेति निषिध्यते । तदयुक्तम् । भत्वाभावाच्छसहचरितस्य ठको ग्रहणाप्राप्तिरेव पुंवद्भावस्य नास्ति । जातेश्चेति प्रतिषेधः औपसंख्यानिकस्य पुंवद्भावस्य नास्त्येव । यथा हस्तिनीनां समूहो हास्तिकमिति । अङ्गसंज्ञा चेति । लब्धाङ्गसंज्ञकस्य यत्कार्यं प्रत्ययलक्षणं तन्नलुमताङ्गस्येत्यनेन निषिध्यते । न चाङ्गसंज्ञा अङ्गस्य कार्यमिति प्रत्ययलक्षणेन भवत्येव । तत्र स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य लब्धाङ्गसंज्ञकस्य तृज्वद्भावे सति ङीष्प्रत्ययः कार्यः कार्यकालत्वे तु संज्ञापरिभाषस्याङ्गे आश्रिते प्रत्ययोप्याश्रितो भवति यथा वव्रश्चेति तदाङ्गस्येत्येतदत्र नापेक्ष्यम् । किं पुनरिति । शास्त्रस्य शास्त्रं प्रत्यासन्नमिति प्रत्यासत्त्या शास्त्रातिदेशः प्राप्नोति । प्राधान्यात्तु रूपातिदेशप्रसङ्गः रूपार्थत्वात् शास्त्रप्रवृत्तेः । कार्यातिदेशस्तु शास्त्रातिदेशादभिन्नत्वात् पृथक् नोपन्यस्तः । तृज्वदित्यादौ रूपे ऽतिदिश्यमाने सूत्रसन्निवेशस्यानपेक्षणात् प्रकरणकृतव्यवस्थाभावः । शास्त्रातिदेशे तु प्रत्यासत्त्याङ्गप्रकरणात्सन्निकृष्टस्यैव शास्त्रस्यातिदेशः स्यात् । न विप्रकृष्टस्य यथा चिण्वद्भावेन वृद्ध्यादीन्येव भवन्ति न हनिणिङादेशाः । रपरत्वमिति । यथोद्देशपक्षे प्रकरणान्तरे संनिवेशादिति भावः । कार्यकालमिति । प्रधानदेशत्वादगुणानामङ्गाधिकारएव रपरपरिभाषा-

उरण्परं इति । एवं तर्हि अयमन्यो दोषो जायते । आहत्य तृचो यच्छास्त्रं तदतिदिश्यते । अनाहत्य वेति । किं चातः । यद्याहत्य दीर्घत्वमतिदिष्टम् । अनङ्गुणरपरत्वान्यनतिदिष्टानि । अथानाहत्यानङ्गुणरपरत्वान्यतिदिष्टानि । दीर्घत्वमनतिदिष्टम् । अस्त्वाहत्य । ननु चोक्तं दीर्घत्वमतिदिष्टमनङ्गुणरपरत्वान्यनतिदिष्टानीति । नैष दोषः । दीर्घत्वेऽतिदिष्टेऽनङ्गुणरपरत्वान्यप्यतिदिष्टानि भवन्ति । कथम् । उपधाया इति वर्तते । । न चाकृतेष्वेतेषु दीर्घत्वभाविन्युपधा भवति । कुतो नु खल्वेतत् । एतेषु विधिषु कृतेषु या उपधा तस्याः उपधायाः दीर्घत्वं भविष्यति । न पुनः क्रोष्टुर्यौन्तरतमो गुणस्तस्मिन्कृतेऽवादेशे च या उपधा तस्याः दीर्घत्वं भविष्यति । नैकमुदाहर-

---

याः सन्निधानमित्यर्थः । आहत्येति । उच्चार्योद्बोध्येत्यर्थः । शास्त्रशब्दे या शासनक्रिया शास्त्रकरणिका तदपेक्ष्यपौर्वकाल्याश्रयः क्त्वाप्रत्ययः तत्र यदि तृच्छब्दवच्छास्त्रमतिदिश्यते तदाहत्य यच्छास्त्रमिति पक्षो ऽथ तु ऋकार एव तृच्छब्दे विवक्ष्यते, चकारः स्वरार्थस्त्वप्रसिद्धशंकानिवृत्त्यर्थः । ऋज्वदित्युच्यमाने ऽप्रसिद्धातिदेशः संभाव्येत ऋच्छब्दनिबन्धनसमासान्तशास्त्रातिदेशविषयः संदेहोऽपि वा स्यात् । तस्मादृकारमात्रप्रतिबद्धशास्त्रातिदेशेनाहत्येत्येष पक्ष उद्भवति । अनङ्गुणरपरत्वानीति । ऋदुशनस्पुरुदंसोनेहसां चेत्यनङ् । ऋतो ङिसर्वनामस्थानयोरिति गुणः उरणिति रपरत्वम् । दीर्घत्वमनतिदिष्टमिति । नहि तद्वत इत्युच्यते किं तर्हि अप्तृन्तृच् इति तृच्छब्दोच्चारणेन । न चावयवसमुदाययोर्युगपद्विवक्षा । अतस्तृच्प्रतिबद्धमृकारप्रतिबद्धं च शास्त्रमतिदिश्येत । न चाकृतेष्विति । अचो दीर्घेण भाव्यम् न च क्रोष्टुशब्दस्योकारान्तस्याजुपधा संभवति तत्र क्रोष्टेत्यत्रानङि कृते ऽजुपधा भवति । क्रोष्टारौ इत्यादौ तु गुणरपरत्वयोः कृतयोः । न पुनरिति । क्रोष्टु शब्दस्य जसि चेत्युकारस्य गुणेऽस्त्येव तस्यावादेशे कृतेऽकारस्य दीर्घः स्यात् । ततश्च क्रोष्टाव इति स्यात् । नैकमिति । अन्यथा दीर्घविधावेव क्रोष्टुशब्दं निर्दिशेत् । ननु दीर्घविधौ क्रोष्टुशब्दे उपादीयमाने स्त्रियां च विभाषातृतीयादिष्वचीत्येवमर्थं तृज्वत्क्रोष्टुरिति वक्तव्यमिति गौरवं स्यात् । नैष दोषः । अचि र ऋत इति रादेशे प्रकृते क्रोष्टोः स्त्रियां च विभाषातृतीयादिष्वचीत्येवं रादेशविधानाद्गौरवाभावात् । ननु रादेशे क्रोष्टुः क्रोष्ट्रीति न सिध्यति । नाप्युदात्तयणो हल्पूर्वादिति स्वरः । एवं तर्हि द्विः क्रोष्टुग्रहणं योगविभागश्च लघु । तदुक्तम् । अक्षराधिक्यादपि योगविभागो गरीयानिति । तदेवं तृज्वद्भावविधानसामर्थ्याद्यादृशी तृच उपधा यादृशान्यनिमित्ता तादृश्या एव तादृशान्यनिमित्तायाः क्रोष्टुशब्दस्योपधाया दीर्घो भवतीत्यनङ्गुणरपरत्वे-

त्वं योगारम्भं प्रयोजयति । तत्र तृज्वद्वचनसामर्थ्यादेतेषु विधिषु कृ-
तेषु या उपधा तस्या दीर्घत्वं भविष्यति । अथ वा किं न एतेनाहृ-
त्यानाहृत्येवेति । आहृत्य अनाहृत्य च तृचो यच्छास्त्रं तदतिदिश्य-
त । अथ वा पुनरस्तु रूपातिदेशः । अथैतस्मिन् रूपातिदेशे सति किं
प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते । आहो स्वित् कृतेष्वादेशेषु । किं
चातः । यदि प्रागादेशेभ्यो यद् रूपं तदतिदिश्यते ऋकार एवोति-
दिष्टः । अनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानि । अथ कृतेष्वादेशेषु
ऋकारोऽनतिदिष्टः । अनङ्गुणरपरत्वदीर्घत्वान्यतिदिष्टानि । उभयथा
च स्वरोऽनतिदिष्टः । किं कारणम् । नहि स्वरो रूपवान् । अस्तु प्रा-
गादेशेभ्यो यद् रूपं तदतिदिश्यते । ननु चोक्तम् ऋकारोऽतिदिष्टः ।

---

षु कृतेषु दीर्घो भवति । अस्मिन् परिहारे पूर्वोक्तगौरवप्रसङ्गात् असमाश्वसन् परिहारा-
न्तरमाह । अथ वेति । तृज्वदिति समुदाय एवाश्रीयते तत्र व्याप्तिन्यायाश्रयाद्यत्कि-
ञ्चित्तृचो दृष्टं शास्त्रं तत्सर्वमतिदिश्यते । एवं भूयो लक्ष्यं लक्षणं चानुगृहीतं भवति ।
नन्वङ्गप्रकरणोपात्त एव शास्त्रेऽतिदिश्यमाने क्रोष्ट्रीति यणादेशशास्त्रस्यानाङ्गत्वादतिदेशो
न स्यात् । एवं तर्हि स्त्रियां आङ्गशास्त्रातिदेशासंभवादनाङ्गस्याप्यतिदेशः । विभाषातृ-
तीयादिष्वचीत्यत्र तर्हि क्रोष्टरीत्यत्र गुणविधावतिदेशस्य चरितार्थत्वात् क्रोष्ट्रा क्रोष्ट्रो-
रिति यणादेशाप्रसङ्गः । क्रोष्टुरित्यत्र ऋत उदिति शास्त्रं न प्रवर्तेत । तत्रापि तृतीया-
दिग्रहणसामर्थ्यादनाङ्गस्याप्यतिदेशोऽन्यथा विभाषाङावित्येव ब्रूयात् । स्यादेतत् । अभा-
वातिदेशार्थं तृतीयादिग्रहणं स्यात् । ततश्च विलक्षणौ गुणनाभावौ न स्यातां क्रोष्टवे
क्रोष्टुनेति तत्र वक्तुरधीने वाक्यशेषे भावातिदेशस्यैवाश्रयणात् । एवं तर्हि क्रोष्ट्रीति
स्त्रियामीकारो न प्राप्नोति । अनाङ्गमपि ईकारशास्त्रमतिदेशसामर्थ्यादतिदेक्ष्यत इति
एषोऽप्यदोषः । अथ वोत्तरयोर्योगयोरारम्भसामर्थ्याद् रूपातिदेश एव आश्रीयते पूर्वसूत्रे
तु पक्षभेदविचारः । अथ वेति । सूत्रत्रये एकरस प्रवृत्तिर्भवति सर्वरूपसंग्रहश्चेति भाव. ।
प्रागादेशेभ्य इति । क्रोष्टृ इत्येतदृकारान्तम् । कृतेष्विति । क्रोष्टाराविति रेफान्तम् । त-
त्र प्रागादेशेभ्यो यद्रूपं तत्प्रत्यक्षं तृज्वदित्युच्चारणाद् व्यापकं लघु च तस्मिन्नतिदिष्टे त-
न्निमित्तानां अनङादीनां सर्वेषां स्वशास्त्रेण प्रवर्त्तनात् कृतेषु चादेशेषु यद्रूपं लौकिकं त-
धानं तदर्थत्वादितरस्य प्रक्रियालाघवं च भवतीति पक्षद्वयसंभवः । ऋकार एव इति ।
तदतिदेशसामर्थ्याच्च कार्यान्तराणामप्रसङ्गः स्याद् इति मन्यते । ऋकारोऽनतिदिष्ट इति ।
किं पुनः ऋकारातिदेशस्य प्रयोजनं प्रयोगसमवायिरूपातिदेशेन गतत्वात् । अत्र

अनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानीति। नैष दोषः। ऋकारे अतिदिष्टे स्वाश्रया अत्र एत विधयो भविष्यन्ति। यदप्युच्यते। उभयथा स्वरोऽनतिदिष्टः। नहि स्वरो रूपवानिति। स चकारग्रहणसामर्थ्यात्स्वरो भविष्यति। रूपातिदेश इति चेत्सर्वादेशप्रसङ्गः*। रूपातिदेश इति चेत्सर्वादेशः प्राप्नोति। सर्वस्य तृन्नन्तस्य तृशब्द आदेशः प्राप्नोति। सिद्धं तु रूपातिदेशात्*। सिद्धमेतत्। कथम्। रूपातिदेशात्। रूपातिदेशोयम्। ननु चैवमेवक्त्वाचोद्यते रूपातिदेश इति चेत्सर्वादेशप्रसङ्ग इति। सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तवि-

के चिदाहुः। यत्र ऋकारस्य विकाराभावः पञ्चक्रोष्टुभीरथैरिति तत्र ऋकारोनतिदिष्टः स्याद् इति। तदयुक्तम्। नहीदं वचनं क्वतेष्वादेशेषु इति लौकिकप्रयोगरूपोपलक्षणत्वे-तद्यथा च क्व चित्क्वतेष्वादेशेषु लौकिकं रूपं तथा च क्व चिदक्वतेष्विति नास्ति विशेषः। अत्रोच्यते। यदि ऋकारमनतिदिश्य क्वतेष्वादेशेषु यद्रूपंतदतिदिश्यते तदा क्रोष्ट्रे त्यादावुदात्तयणोहल्पूर्वादिति स्वरो न स्याद् उदात्तयणोऽभावात्। सति हि ऋकारातिदेशे तत्स्थानिकस्य यण उदात्तत्वात् स्वरः सिध्यति। ननु स्वरदोषमनन्तरमेव वक्ष्यति तत्किमर्थमत्राभिधीयते अत्रैकतरपक्षाश्रयेण स्वरदोष उच्यते परस्तात्तुपक्षद्वयेऽपिवक्ष्यते। नहिस्वरो रूपवानिति। ननु शब्दस्य श्रोत्रेन्द्रियग्राह्य स्वभावो रूपम्। स्वरोपि श्रोत्रेन्द्रियग्राह्यत्वाद्रूपमेवाथास्य व्यतिरिक्तं रूपं नास्तीति नहि स्वरोरूपवानित्युच्यते तदा तृज्वद्रूपस्यापि रूपं नास्तीति तदपि न रूपवदिति नातिदिश्येत। रूपातिदेशश्च प्रक्रान्तो न रूपवदतिदेशः। अत्रोच्यते। प्रागादेशेभ्यो यद्रूपमित्यत्र तावत्पक्षे स्वरो ऽशक्यो ऽतिदेष्टुं तद्धि रूपं शास्त्रीयम्। न च स्वरो रूपत्वेनाश्रितः शास्त्रे खलु लृचावित्यस्मिन्नुच्चारणं स्वरस्य भेदहेतुत्वेनानाश्रयणात्। लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यादौ उदात्तादिग्रहणात्। यापि चितोन्त उदात्त इति स्वरप्रतिपत्तिरसावप्यनुमानान्न तूच्चारणात्क्वतेष्वादेशेष्वित्यत्र तु पक्षे यद्यप्युच्चारणे उदात्तादिगुणानामभेदकत्वं ज्ञापितं तथापि यथाऽऽन्तरतम्यात् स्वर आश्रीयमाणो भेदकः। तथातिदेशादपि किं तूदात्तयण्व्यपदेशाभावात् स्वरासिद्धिः। यद्येवं रूपवानिति किमुच्यते। रूपमिति हि वक्तव्यम्। तत्र के चिदाहुः। भाष्यकारवचनात् स्वार्थिको मतुप्। अथ वा स्वरवानेव स्वरः अर्शआदित्वादच्। नहि स्वरवानृकार उदात्तादिना रूपेण रूपवान् शास्त्र आश्रीयते तस्याभेदकत्वात्। ऋकारे ऽतिदिष्टे इति। तदर्थत्वादृकारातिदेशस्येति भावः। स्वाश्रय इति। स्वं निमित्तं शास्त्रं वा आश्रयो येषामिति समासः। सचकारेति। अन्यथा तृवदिति ब्रूयात्। न च तृन्तृज्भ्यामन्योर्थवान् तृच्छब्दोस्ति यस्य ग्रहणे दोषः स्यात् तस्मादनुमेयोपि स्वर उच्चारणे ऽनाश्रीयमाणोपि चकारोच्चारणाद्भवति। सर्वादेशप्रसङ्ग इति।

स्थानात् * । सिद्धमेतत् । कथम् । प्रत्ययग्रहणे यस्मात्स विहितस्त-दादेस्तदन्तस्य ग्रहणं भवतीत्येवं तुन्नन्तस्य तृजन्त आदेशो भविष्य-ति । एवमपि किं चिदेव तृजन्तं प्राप्नोति इदमपि प्राप्नोति पक्तेति । आन्तरतम्यात्तु सिद्धम् । क्रोष्टुर्यदन्तरतमं तद्भविष्यति । किं पुनस्त-त् । क्रुशर्यस्तृज्विहितस्तदन्तम् । तृज्वद्वचनमनर्थकं तृज्विषये तृचो मृ-गवाचित्वात् * । तृज्विषये एतत्तुजन्तं मृगवाचि । तुनोनिवृत्त्यर्थं त-र्हीदं वक्तव्यम् । तुनः सर्वनामस्थाने निवृत्तिर्यथा स्यात् । तुनो नि-वृत्त्यर्थमिति चेत्तत्सिद्धं यथान्यत्रापि * । तुनोनिवृत्त्यर्थमिति चेत्तदन्त-रेण वचनात् सिद्धं यथान्यत्राप्यविशेषविहिताः शब्दाः नियतविषया दृश्यन्ते । क्वान्यत्र । तद्यथा । घरतिरस्मायविशेषेणोपदिष्टः स घृतं घृणा घर्म इत्येवं विषयः । रशिरस्मायविशेषेणोपदिष्टः स राशिः रश्मिः रशना इत्येवं विषयः । लुशिरस्मायविशेषेणोपदिष्टः स लोष्ट इत्येवंविषयः । इदं तर्हि प्रयोजनम् । विभाषां वक्ष्यामीति । विभा-षा तृतीयादिष्वचीति । वावचनानर्थक्यं च स्वभावसिद्धत्वात् * । वावचनं चानर्थकम् । किं कारणम् । स्वभावसिद्धत्वात् । स्वभाव ए-वतृतीयादिषु अजादिषु विभक्तिषु तृजन्तं तुन्नन्तं च मृगवाचि इ-ति । गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषिद्धम् * । गुणवृद्ध्यौत्व-तृज्वद्भावेभ्यो नुम् भवति पूर्वविप्रतिषेधेन । तत्र गुणस्यावकाशः । अग्न-येवायवे । नुमोवकाशः । त्रपुणी । जतुनी । इहोभयं प्राप्नोति । त्रपुणे । जतुने । वृद्धेरवकाशः । सखायौ सखायः । नुमः सएव । इहोभयं प्रा-प्नोति । अतिसखीनि ब्राह्मणकुलानीति । औत्वस्यावकाशः । अग्नौ

---

रूपातिदेशशब्दात् स्थान्यादेशभावोभ्युपगतो भवतीत्यनेकाल्त्वात्सर्वादेशः तृशब्दः प्रा-प्नोति । सिद्धमिति । तृजन्तरूपातिदेशादित्यर्थः । आन्तरतम्यादिति । अर्थेन स्वरूपेण चेत्यर्थः । तृज्विषय इति । तृज्वद्भावविषय इत्यर्थः । घरतिरिति । घृ क्षरणदीप्त्योः .. इति भौवा-दिकः । जिघर्तीत्येतत्तु घृक्षरणदीप्त्योरित्यस्य बहुलं छन्दसीत्यभ्यासस्येत्वे कृते रूपम् । रशिलुशीअपठितावपि भाष्यकारवचनाद्धातू बोद्धव्यौ प्रयुक्तानामिदमन्वाख्यानं न त्व-स्मादपूर्वशब्दप्रतिपत्तिरिति नियतविषयत्वमुच्यते । अनेनैव न्यायेन अस्तेर्भूरित्यादी-न्यपि प्रत्याख्येयानि । अबुधबोधनार्थं तु किं चिद्वचनेन प्रतिपाद्यते । न्यायव्युत्पादना-र्थं च आचार्यः किं चित्प्रत्याचष्टे न ह्यत्रैकः पन्थाः समाश्रीयते । अतिसखीनीति । अ-

वायौ। नुमः स एव। इहोभयं प्राप्नोति। त्रपुणि जतुनीति। तृज्वद्भावस्यावकाशः। क्रोष्टा। क्रोष्टुना नुमः स एव। इहोभयं प्राप्नोति। क्रुशक्रोष्टुने अरण्याय। हितक्रोष्टुने वृषलकुलाय। नुम् भवति पूर्वविप्रतिषेधेन। स तर्हि पूर्वविप्रतिषेधो वक्तव्यो न वक्तव्यः। इष्टवाची परशब्दो विप्रतिषेधे परं यदिष्टं तद्भवतीति। नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन *। नुमचिरतृज्वद्भावेभ्यो नुट्पूर्वविप्रतिषेधेनेति वक्तव्यः। नुमोवकाशः। त्रपूणि। जतूनि। नुटोवकाशः। अग्नीनां वायूनाम्। इहोभयं प्राप्नोति। त्रपूणां जतूनाम्। अचिरादेशस्यावकाशः। तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्ति। नुटः स एव। इहोभयं प्राप्नोति। तिसृणां चतसृणाम्। तृज्वद्भावस्यावकाशः। क्रोष्टा। क्रोष्टुना। नुटः स एव। इहोभयं प्राप्नोति। क्रोष्टूनां। नुड्भवति पूर्वविप्रतिषेधेन। सतर्हि पूर्वविप्रतिषेधो वक्तव्यः न वक्तव्यः। न वा नुड्विषये रप्रतिषेधात् *। न वैतद्विप्रतिषेधेनापि सिध्यति तिसृणां चतसृणामिति। कथं तर्हि सिध्यति नड्विषये,रप्रतिषेधात्। नुड्विषये रप्रतिषेधो वक्तव्यः। इतरथा हि सर्वापवादः। इतरथा हि सर्वापवादोरादेशः स यथैव गुणपूर्वसवर्णौ बाधते एवं नुटमपि बाधेत। तस्मान्नुड्विषये रप्रतिषेधः *। तस्मान्नुड्विषये रादेशस्य प्रतिषेधो वक्तव्यः। न वक्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति न रादेशो नुटं बाधत इति। यदयं न तिसृचतसृ इति प्रतिषेधं शास्ति नामि दीर्घत्वस्य॥

चतुरनडुहोरामुदात्तः॥९८॥ आमनडुहः स्त्रियां वा *। आ-

---

तिक्रान्तः सखायैरिति बहुव्रीहिः। क्रुशक्रोष्टुने इति। क्रोष्टुशब्दः स्त्रीपुंलिङ्ग इत्यन्यपदार्थस्य नपुंसकत्वं प्रदर्श्यते। क्रोष्टूनामिति। तृज्वद्भावः कृते नुट्यनजादित्वान्न प्राप्नोतीत्यनित्यो नुडागमोपि कृते तृज्वद्भावे सन्निपातपरिभाषया न प्राप्नोतीत्यनित्यः। नवेति। नुड्रेफयोर्विप्रतिषेध उक्तस्तन्नेत्यर्थः। यथैवेति। मध्ये पवादा इत्येतदनाश्रित्यैतदुक्तं तत्र ह्याश्रीयमाणे गुणं न बाधेत गुणेपूर्वसवर्णग्रहणमुपलक्षणम्। ऋतउदित्युत्वस्यापि बाधनात्प्रियतिस्रः स्वमित्यादौ। यदयमिति। न हि रादेशे कृते दीर्घस्य प्राप्तिः। अनजन्तत्वान्नुडभावाच्च। एवं च विप्रतिषेधो पि न वक्तव्यः। ज्ञापकादेव नुडभावात्॥

चतुरनडुहोरामुदात्तः। गौरादिष्वनडुहो अनड्वाहीति पाठोऽपौराणिकः। अन-

मनडुहः स्त्रियांवेति वक्तव्यम् । अनडुही । अनड्वाही ॥

ऋत इद्धातोः ॥ १०० ॥ उपधायाश्च ॥ १०१ ॥ उदोष्ठ्यपूर्वस्य ॥ १०२ ॥ इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन * । इत्वोत्वयोरवकाशः आस्तीर्णं निपूर्ताः पिण्डाः । गुणवृद्ध्योरवकाशः । चयनं चायकः । लवनं लावकः । इहोभयं प्राप्नोति । आस्तरणमास्तारकः । निपरणं निपारकः गुणवृद्धी भवतो विप्रतिषेधेन। अयुक्तोयं विप्रतिषेधः । योयं गुणस्येत्वोत्वयोश्च । कथम् । नित्योगुणः ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये सप्तमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

---

सिचि वृद्धिः परस्मैपदेषु ॥ १ ॥ सिचि वृद्धावोकारप्रतिषेधः * । सिचिवृद्धौ ओकारस्य प्रतिषेधो वक्तव्यः । उदवोढाम् । उदवोढम् ।

---

डुट्शब्द एव ङीपर्थः पठित इति मत्वा वार्तिकमारब्धमनडुहः । स्त्रियां वेति ।

ऋत इद्धातोः । नित्यो गुण इति । कृताकृतप्रसङ्गित्वाल्लक्षणान्तरेण प्राप्नुवन्विधिरनित्य इत्यनाश्रित्य कार्यप्राप्तिमात्रमङ्गीकृत्येदमुक्तम् । लक्षणभेदापेक्षायां तु लक्षणान्तरस्य प्रवृत्तावपि विप्रतिषेधविषयस्य लक्षणस्याप्रवृत्त्या अनित्यत्वमेव ।

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे सप्तमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ॥

---

सिचि वृद्धिः परस्मैपदेषु । सिचि वृद्धाविति । इद्धानिर्दिष्टस्थानिकत्वात् इक्परिभाषोपस्थानादोकारस्य नास्ति प्राप्तिः । वदव्रजेत्यत्र त्वच इति स्थानिनिर्देशादिक्परिभाषानुपस्थानादोकारस्य वृद्धिप्रसङ्गे वचनम् । तत्र सिचि वृद्धावित्यनेन प्रकरणं प्रदर्श्यते । अथ वा सिचि या वृद्धिर्वदव्रजहलन्तस्याच इत्यनेन तस्यामित्यर्थः। ननु च वृद्धौ कर्तव्यायां पूर्वत्रासिद्धमिति सिज्लोपादीनामसिद्धत्वात्पूर्वं वृद्ध्या भाव्यम् । ततः इट्लोपेन ततो ढत्वधत्वष्टुत्वढलोपेषु कृतेष्वोत्वेनेति वृद्धिविधानकाले ओकारस्याभावादर्थः प्रतिषेधेन । उच्यते । वृद्धिरङ्गापेक्षत्वात्प्रत्ययविशेषापेक्षत्वाच्च बहिरङ्गा सिज्लोपादयस्तु वर्णनिमित्तत्वादन्तरङ्गा इत्यसिद्धं बहिरङ्गमन्तरङ्ग इति वृद्धेरसिद्धत्वात्पूर्वत्र तिनिर्दिष्टस्यासिद्धविषयस्याभावात् सलोपादीनामसिद्धत्वं नास्ति । पूर्वत्रासिद्धमित्यनेन सलोपादीनामसिद्धत्वादन्तरङ्गलक्षणस्य विषयभावात्तदपेक्षबहिरङ्गत्वस्याधिक

उदवोढेति। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। ओकाराद्वृद्धिर्विप्रतिषेधेन *। ओत्वं क्रियतां वृद्धिरिति। वृद्धिर्भविष्यति विप्रतिषेधेन। ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्वाभावः *। ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्वस्याभावः। उदवोढामुदवोढमुदवोढेति। नैष दोषः। उक्तं तत्र वर्णग्रहणस्य प्रयोजनं वृद्धावपि कृतायामोत्वं यथा स्यात्। पुनः प्रसङ्गविज्ञानाद्वा सिद्धम् *। अथ वा पुनः प्रसङ्गादत्र वृद्धौ कृतायामोत्वं भविष्यति। यथा प्रसारणादिषु द्विर्वचनम्। तद्यथा। जग्ले। मम्ले। ईजतुः। ईजुरिति। प्रसारणादिषु पुनः प्रसङ्गविज्ञानाद् द्विर्वचनं भवति। इहापि तर्हि पुनः प्रसङ्गविज्ञानादोत्वं स्यात्। सौढामित्रिरिति। सौढामित्रौ बहिरङ्गलक्षणत्वात्सिद्धम् *। बहिरङ्गलक्षणा वृद्धिरन्तरङ्गमोत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे॥

अतो ल्रान्तस्य॥ २॥ अन्तग्रहणं किमर्थम्। न अतो ल्र इत्येवोच्येत। केनेदानीं तदन्तस्य भविष्यति। तदन्तविधिना। इदं तर्हि प्रयोजनम्। अयमन्तशब्दोऽस्त्येवावयववाची। तद्यथा। वस्त्रान्तो वसनान्तः। अस्ति सामीप्ये वर्तते। तद्यथा। उदकान्तं गतः। उदकसमीपं गत इति गम्यते। तद्यः सामीप्ये वर्तते तस्येदं ग्रहणं यथा

---

हिरङ्गस्याभावादसिद्धं बहिरङ्गमन्तरङ्ग इत्येषा परिभाषा न प्रवर्तते। तदेवं परस्परप्रतिबद्धस्य परिभाषाद्वयस्याप्रवृत्तौ परत्वात्सलोपादीन् कृत्वा अन्तरङ्गत्वात् पूर्वमोत्वप्रवृत्तिमभ्युपगम्य चोदयति। वदव्रजेत्यत्र चान्तरङ्गे णान्तग्रहणं तदन्तविधौ सिद्धेऽन्तग्रहणमौपदेशिकहलन्तप्रतिपत्त्यर्थं मन्यते। प्रत्ययलक्षणेन च सिच्परत्वम्। ओकारादिति। न च अन्तरङ्ग ओकारः बह्वपेक्षत्वात्। उक्तं तत्रेति। ओदस्येत्युच्यमाने तादपि परस्तपर इत्यकारस्य तपरत्वाद्भिन्नकालस्य ग्रहणं न स्यादिति तस्यापि ग्रहणार्थं वर्णग्रहणं कृतमिति तत्सामर्थ्यात्कृतायामपि वृद्धावोत्वं प्रवर्तते। प्रवृत्तत्वाच्च लक्षणस्य पुनर्वृद्धेः प्रवृत्तिर्न भवति। सौढामित्रिरिति। सोढा अमित्रो येनेति बहुव्रीहिः। विभक्त्यान्वाख्याने सढ अमित्र इति स्थिते परत्वाद्वृद्धिं मन्यते। बहिरङ्गलक्षणत्वादिति। यत्र विप्रतिषेधस्तत्र पुनः प्रसङ्गविज्ञानम्। इह तु वृद्धिनिमित्ते तद्धितेऽनुपजाते एव अन्तरङ्गमोत्वं प्रवर्तते ततोऽर्थान्तराश्रयतद्धितनिमित्ता वृद्धिः।

अतो। अन्तग्रहणमिति। अवयववचनोऽन्तशब्दस्तदन्तविधिनैव च तदर्थो लब्ध इति मत्वा प्रश्नः। तद्यः सामीप्य इति। अन्तशब्दोपादानादेव सामीप्यार्थस्य ग्रहणम्। अ-

विज्ञायेत । अङ्गान्तौ यौ रेफलकारौ तयोः समीपे योकारस्तस्य यथा स्यात् । इह माभूत् । अभ्रब्लीत् । अवभ्रीत् ॥

वदव्रजहलन्तस्याचः ॥ हल्ग्रहणं किमर्थम् । समुच्चयो यथा विज्ञायेत । वदिव्रज्योर्हलन्तस्य चाच इति । नैतदस्ति प्रयोजनम् । अज्ग्रहणादेवाच समुच्चयो भविष्यति । वदिव्रज्योश्चाचश्चेति । अस्त्यन्यदज्ग्रहणे प्रयोजनम् । वदिव्रजिविशेषणं यथा विज्ञायेत । वदिव्रज्योरच इति । यद्येतावत् प्रयोजनं स्यात् । वदिव्रज्योरत इत्येव ब्रूयात् । अथ वा एतदपि न ब्रूयात् । अत इति वर्तते । इदं तर्हि प्रयोजनम् । हलन्तस्य यथा स्यात् । अजन्तस्य मा भूत् । कस्य पुनरजन्तस्य प्राप्नोति । अकारस्य अचिकीर्षीत् । लोपोऽच बाधको भविष्यति । आकारस्य तर्हि प्राप्नोति । अयासीदवासीत् । नास्त्यत्र विशेषः । सत्यां वा वृद्धावसत्यां वा । संध्यक्षरस्य तर्हि प्राप्नोति । नवै संध्यक्षरमन्त्यमस्ति । ननु चेदमस्ति ढलोपे कृते उदवोढामुदवोढमुद-

---

ङ्गान्ताविति । लश्च रश्च ल्रन्ततः सुपां सुलुगिति लुक् । तत्र ल्रौ याङ्गस्य विशेषणात्तदन्तविधौल्रान्तस्याङ्गस्ययोकारस्तस्यवृद्धिर्भवति । ततोन्तस्येत्यकारो विशेष्यते । सन्निधानाच्चल्रपेचंसामीप्यमकारस्य विज्ञायत इति स।मर्थ्यादङ्गान्तरेफलकारसमीपस्थाकारस्य वृद्धिरित्यर्थः संपद्यते । अभ्रब्लीदवभ्रीदिति । अत्राङ्गान्त्ययोरेफलकारयोः समीपे अकारोनेत्यनेन वृद्धिर्न भवति । हलन्तलक्षणा नेटीति प्रतिषिद्धा ॥

वदव्रजहलन्तस्याचः । हल्ग्रहणं किमर्थमिति । अज्ग्रहणादेव हलन्तस्य सिद्धा वृद्धिरिति प्रश्नः । अङ्गेन चाचो विशेषणाच्च तत्र स्थितस्याचोवृद्धिर्विधीयमाना हलन्तस्य प्रवर्तते । अजन्तस्य मा भूदिति । असति हल्ग्रहणेऽचाङ्गस्य तदन्तविधिर्विज्ञायेत । ततश्चाल्लोपादीन्बाधित्वा वृद्धिः स्याद् । लोपोऽचेति । विशेषणविशेष्यभावे कामचाराद-ङ्गेन अज्विशेष्यते । तत्रापाचीदित्यादौ सावकाशा वृद्धिरतो लोपेन पूर्वविप्रतिषेधेन बाध्यते ऽल्लोपावियङ्गणगुणवृद्धिदीर्घेभ्य इति । अचा तु अङ्गे विशेष्यमाणे वृद्धिरनवकाशा ऽतो लोपं बाधेत । आकारस्य तर्हीति । स्थानेऽन्तरतमपरिभाषाया अत्राप्रवृत्तिं मन्यते । तत्प्रवृत्तौ हि प्रधानं वृद्धिविधानं विफलत्वादुपरुध्येत । नास्त्यत्र विशेष इति । विशिष्टविषयव्यवस्थापनं प्रधानस्य गुणेन कर्तव्यमिति प्रवृत्त्यप्रवृत्त्योर्द्वैविध्येविशेषाभावेऽपि नास्ति प्रधानोपरोध इति प्रवर्तत एवान्तरतमपरिभाषेति भावः । संध्यक्षरस्येति । ओकारस्य-

वोढेति। असिद्धो ढलोपः। तस्यासिद्धत्वान्नैतदन्त्यं भवति। अत उत्तरं पठति। हल्ग्रहणमिटि प्रतिषेधार्थम् * : हल्ग्रहणं क्रियते। इटि प्रतिषेधार्थम्। नेटीति प्रतिषेधं वक्ष्यति स हलन्तस्य यथा स्यात्। अजन्तस्य मा भूत्। अलावीदपावीत्। न वानन्तरप्रतिषेधात्*। न वैतत्प्रयोजनमस्ति। किं कारणम्। अनन्तरस्य प्रतिषेधात्। अनन्तरं यद्वृद्धिविधानं तत्प्रतिषिध्यते। कुत एतत्। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति। तच्चानन्त्यार्थम्*। तच्चानन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते। कथं पुनर्ज्ञायते ऽनन्तरं वृद्धिविधानमनन्त्यार्थमिति। अन्त्यस्य वचनानर्थक्यात्। अन्त्यस्य वृद्धिविधाने प्रयोजनं नास्तीति कृत्वानन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते। अतो विभाषार्थं तर्हीदं वक्तव्यम्। अतो हलादेर्लघोरिति विभाषा वृद्धिं वक्ष्यति सा हलन्तस्य यथा स्यादजन्तस्य माभूत्। अचिकीर्षीदजिहीर्षीदिति। अतो विभाषार्थमिति चेत्तत्सिद्धं वृद्धेर्लोपबलीयस्त्वात् *। अतो विभाषार्थमिति चेत्तदन्तरेणापि हल्ग्रहणं सिद्धम्। कथम्। वृद्धेर्लोपबलीयस्त्वात् वृद्धेर्लोपो बलीयान्भवतीति। इदमिह संप्रधार्यं वृद्धिः क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वाद् वृद्धिः। नित्यो लोपः। कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि। अनित्यो लो-

---

औकारः प्राप्नोतीत्यस्ति विशेषः। तस्यासिद्धत्वान्नैतदन्त्यमिति। ननु मा भूदन्त्यमनन्त्यस्याप्यविशेषविधानात्प्राप्नोति। एवं तर्हि पराभ्युपगमनिवृत्तिपरमेतत्। परेण संध्यक्षरस्यान्त्यत्वमभ्युपगतं निवार्यते अनन्त्यत्वेत्वोकारस्य यथा वृद्धिर्न भवति तथाद्य सूत्रे प्रतिपादितम्। हल्ग्रहणमिति। असतीह हल्ग्रहणेनेटीत्यत्राज्ग्रहणानुवृत्तावपि या काचिदचो वृद्धिः प्रतिषिध्येत। यदि त्वज्ग्रहणानुवृत्तिसामर्थ्यादच इत्येवं विहिता या वृद्धिस्तस्याः प्रतिषेधो विज्ञायेत तदा न स्याद्दोषः। परिहारान्तरसद्भावात्तु नेदमुक्तं तदाह। न वेति। अन्त्यस्यवचनानर्थक्यादिति। क्व चिदन्त्यो विधिभाग् न संभवति। अयासीदित्यादौ तु विशेषाभावः। तदेवमिहार्थो हल्ग्रहणस्य नास्तीति मत्वाह। अतो विभाषार्थमिति। असति हल्ग्रहणेऽकणीदकाणीदित्यादौ सावकाशा वृद्धिरचिकीर्षीदित्यादौ परत्वाल्लोपं बाधेत। अथ वा अतोऽङ्गस्य विशेषणात्तदन्तस्यैव स्यात्त्वकाणीदित्यादौ। कृतायामपीति। अतो लोप इटि चेत्यनेनेति भावः। अन्यशब्दान्तरप्राप्तिलक्षणान्तरप्राप्तिश्च नाश्रिता। कृताकृतप्रसङ्गित्वात्तु लोपाख्यस्य कार्यस्यानाश्रितोपाधि-

पः। न हि कृतायां वृद्धौ प्राप्नोति। परत्वात्सगिड्भ्या भवितव्यम्। नात्र सगिटौ प्राप्नुतः। किं कारणम्। एकाचस्तौ वलीति वा। एकाचः सगिटावुच्येते। अथ वा वलीति तत्रानुवर्तते। किं पुनः कारणमेकाचस्तौ वलीति वा। दरिद्रातेर्मा भूदिति। दरिद्रातेर्न सगिड्भ्यां भवितव्यम्। उक्तमेतत्। दरिद्रातेरार्द्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति। यश्चेदानीं प्रत्ययविधौ सिद्धः सिद्धोऽसौ सगिड्विधौ। एवमर्थमेव तर्ह्येकाज्ग्रहणमनुवर्त्यमत्र सगिटौ मा भूतामिति। स एष नित्यो लोपः वृद्धिं बाधिष्यते। कं पुनर्भवान् वृद्धेरवकाशं मत्वाह नित्यो लोप इति। अनवकाशा वृद्धिर्लोपं बाधिष्यते। सावकाशा वृद्धिः। कोवकाशः। अनन्त्यः। अकार्षीद् अकार्षीत्। कथं पुनः सत्यन्त्येऽनन्त्यस्य वृद्धिः स्यात्। भवेद्योताङ्गं विशेषयेत्। तस्यानन्त्यस्य न स्यात्। वयं तु खल्वङ्गेनाकारं विशेषयिष्यामः। तत्रानन्त्यो वृद्धेरवकाशः। अन्त्यस्य लोपो बाधको भविष्यति। एवं वृद्धेर्लोपबलीयस्त्वम्। एवं वृद्धेर्लोपो बलीयान्। अथ वा आरभ्यते पूर्वविप्रतिषेधः। णयल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धमिति। सा तर्ह्ये-

---

भेदस्य नित्यत्वमाश्रितम्। परत्वत्वादिति। यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति नाश्रितम्। लोपेनात्र वृद्धौ कृतायां न भाव्यमिति तस्यानित्यत्वमित्येतावदाश्रित्योच्यते। वृद्धिरेवापवादनिमित्ततामुपयान्तो लोपं विहन्तीति तदपेक्षया भवत्येव लोपस्यानित्यत्वम्। एकाचस्तौ वलीति। एकीयमतमेतत्। तथा च वाचाद्यतन्यामिति यदाकारलोपोदरिद्रातेर्नास्ति तदा दरिद्रासीदिति सगिटावुदाहृतावेव। सिद्धश्चेति। आर्द्धधातुके विषयभूत एव लोपविज्ञानात्। एवमर्थमिति। अचिकीर्षीदित्यादौ वृद्धौ कृतायां सगिटौ मा भूतामतो लोपस्य नित्यत्वं यथा स्यादित्येवमर्थम्। तत्र नित्यत्वाल्लोपे कृते पारिशेष्याद्धलन्त एव वृद्धेरवस्थानान्नार्थो हल्ग्रहणेन। अताङ्गस्य तदन्तविधिं मत्वाह। कं पुनरिति। नित्यादप्यनवकाशं बलवदिति लोपं बाधित्वा वृद्धिः स्याद् इत्यजन्तनिवृत्त्यर्थं हल्ग्रहणं कर्तव्यम्। इतरस्त्विष्टसिद्धये विशेषणविशेष्यभावे कामचाराल्लघुग्रहणसामर्थ्याच्चाङ्गेनाज्विशेष्यत इति प्रतिपादयितुमाह। भवेदिति। अदरिद्रासीदित्यादिसिद्धये सगिड्विधावेकाच इति यदा नानुवर्त्यते तदा उभयोरनित्ययोः पूर्वविप्रतिषेधेन लोपे कृते हलन्त एव वृद्धिरवतिष्ठते। अथ वा लक्षणभेदाच्छब्दान्तरप्राप्त्या वा लोपस्यानित्यत्वं यो मन्यते तं प्रत्युच्यते। अथ वारभ्यत इति।

था ऽनन्त्यार्था वृद्धिर्हलन्तस्य यथा स्यादजन्तस्य मा भूत् । अपिपठिषीत् । एतदपि नास्ति प्रयोजनम् । कथम् । हलादेरिति नैषा बहुव्रीहिः षष्ठी हल् आदिर्यस्य सोयं हलादिः हलादेरिति । का तर्हीयं कर्मधारयात्पञ्चमी हल् आदिर्हलादिः हलादेः परस्येति । यदि कर्मधारयात्पञ्चमी । अचकासीदत्र प्राप्नोति । सिचा आनन्तर्यं विशेषयिष्यामः । हलादेः परस्य सिच्यनन्तरस्येति । यदि सिचा आनन्तर्यं विशेष्यते । अकणीदकाणीदत्र न प्राप्नोति । वचनाद्भविष्यति । इहापि तर्हि वचनात्प्राप्नोति । अचकासीत् । येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यात् । केन च नाव्यवधानम् । वर्णेनैकेन । संघातेन पुनर्व्यवधानं भवति, न च भवति । यदि सिचा आनन्तर्यं विशेष्यते । अस्तु बहुव्रीहिः षष्ठी । कस्मान्न भवति । अपिपठिषीदिति । व्यवहितत्वात् । एवं तर्हि अतिदूरमेवेदं हल्ग्र-

---

अपिपठिषीदिति । अल्लोपस्य स्थानिवद्भावादजन्तमेतदङ्गं तत्र यशब्दाकारस्य वृद्धिः प्राप्नोति । हल् ग्रहणान्न भवति । अचकासीदिति । चकाराद्धल् आदेः परोकारो भवतीति वृद्धिप्रसङ्गः । बहुव्रीहावप्ययं दोषः । ननु चाटिकृते हल आदित्वन्नास्ति । नैषदोषः । सिजन्तस्याङ्गस्याडागमः क्रियमाणस्तस्यैव हलादित्वं निवर्तयति । न तु सिचि यदङ्गं तस्य । येननाव्यवधानमिति । ननुवचनादतो लोपो बाध्येत सिचाह्यानन्तर्यं आश्रिते ऽनन्त्यो नैव वृद्धेरवकाशः स्यात् । नैतदस्ति । लघुग्रहणमेवमनर्थकं स्याद् व्यवच्छेद्याभावात् । ततश्चानन्त्यस्य वृद्ध्यवकाशत्वादन्त्यस्य नित्यत्वपूर्वविप्रतिषेधाभ्यां लोपाद्व्यवधान एव वृद्ध्याभाव्यमिति निर्दिष्टग्रहणादधिकव्यवधाननिवृत्त्यर्थाद्येननाव्यवधानमित्याश्रीयते । तदेवमुत्तरार्थं हल् ग्रहणं न कर्तव्यमिति स्थिते इदमुच्यते । एवं तर्हीति । प्रसक्तानुप्रसक्त्या प्रयोजनकथनप्रसङ्गेन हल् ग्रहणमतिसृतं दूरमपगतमित्यर्थः । क्वचिदनुसृतमिति पाठः । तत्रायमर्थो दूरं यातं सदनुसृतं न परित्यक्तम् । एतदुक्तं भवति । अत्रैव सूत्रे हल् ग्रहणस्य प्रयोजनमस्ति तद्दर्शयति । हल् ग्रहणमनन्त्यार्थमिति । केचिदाहुः । सति हल् ग्रहणे भवति । अगवीदिति । केचिदुक्तं इड्धातोरित्यतो धातुग्रहणानुवृत्त्या अगवीदित्यत्र अतो हलादेर्लघोरिति वृद्धिर्न भवतीत्याहुः । सिचा धातावाच्छिन्ने पुनर्धातुग्रहणाद्यस्यानित्यं धातुत्वं स गृह्यते । तस्मादयमर्थो येननाव्यवधानमित्येकेन हलाव्यवधाने सिजचोर्वृद्धिः स्यात् । न तु संयोगेनाराङ्क्षीदित्यादौ । हल् ग्रहणे तु सति वर्णग्रहणे जातिग्रहणात् संयोगान्तस्यापि हल् ग्रहणसामर्थ्याद्भवति । अनन्त्यार्थमित्य-

हल्ग्रहणमनन्त्यार्थम् । अज्ग्रहणमनिगर्थम् ॥

हणमनुसृतम् । हल्ग्रहणमनन्त्यार्थम् । अज्ग्रहणमनिगर्थम् ॥

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्॥५॥ किमर्थं जागर्तेर्वृद्धिप्रतिषे-

ध उच्यते । सिचिवृद्धिर्मा भूदिति । नैतदस्ति प्रयोजनम् । जागर्तेर्गुण

उच्यते । वृद्धिविषये प्रतिषेधविषये च स बाधको भविष्यति । गुणे

तर्हि कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति । नेटीति तस्याः प्र-

तिषेधो भविष्यति । इयं तर्हि प्रतिषेधोत्तरकाला वृद्धिरारभ्यते अतो-

ल्रान्तस्येति । अपर आह । कक्ष्यया कक्ष्या निमातव्या सिचिवृद्धि-

---

स्यायमर्थोऽनन्त्योऽपि हल् कथं नाम गृह्येत । अन्तग्रहणन्तु विस्पष्टार्थम् । तदन्तरेणा-

पि तदन्तविधिलाभात् । किन्तु हलोऽच इत्युच्यमानेजन्तस्याङ्गस्य हलः स्थाने वृद्धि-

रित्ययमप्यर्थ आशङ्क्येत । अज्ग्रहणमनिगर्थमिति । अन्यथेक्परिभाषोपस्थानादभैत्सी-

दित्यादावेव स्यान्नत्वपाचीदित्यादौ ।

ह्म्यन्त । किमर्थमिति । गुणेन बाधिता वृद्धिर्न प्राप्नोतीति मन्यते सिचि वृद्धि-

र्मा भूदिति । अतोल्रान्तस्येत्यनेनेति भावः । इतरस्तु सिचि वृद्धिरिति प्राप्तिरनेनो-

क्ता सा चायुक्तेति मत्वाह । नैतदस्तीति । वृद्धिप्रतिषेधविषयादन्यत्र सामान्यलक्षणेन

गुणस्य सिद्धत्वाज्जागृोविचिण्णल्ङित्स्विति गुणविधानं वृद्धिप्रतिषेधविषयार्थं संपद्यते ।

गुणे तर्हीति । अङ्गवृत इत्येतत्तु निष्ठितत्वदुर्ज्ञानत्वादनाश्रितम् । यदि तर्हि गुणे रपर-

त्वे च कृते लक्षणान्तरेण वृद्धिर्भवति तदा जागरकइत्यादावजन्तलक्षणां वृद्धिं बाधि-

त्वा गुणे प्रवृत्ते रपरत्वे चात उपधाया इति वृद्धिः प्राप्नोति । नैष दोषः । चिण्णलोर्गुण-

प्रतिषेधाल्लिङ्गादुपधालक्षणा वृद्धिर्न भवतीत्यवसीयते । अन्यथा चिण्णलोर्गुणरपरत्वयोः

कृतयोरुपधालक्षणया वृद्ध्या सिध्यति रूपमिति प्रतिषेधं न विदध्यात् । यदि च गुणे

कृते वृद्धिमात्राप्रवृत्ते लिङ्गं चिण्णलोः प्रतिषेध आश्रीयते तदा जागृग्रहणं शक्यमकर्तु-

म् । इयं तर्हीति । आर्थोऽयमुत्सर्गापवादयोः क्रमः नेटीति प्रतिषेधे प्राप्ते ऽतोल्रान्तस्ये-

ति वृद्धेरारम्भात् प्रतिषेधोत्तरकालेत्युच्यते । प्राठक्रमेण पूर्वकालापि । अपर आहेति ।

पूर्वोक्त एवार्थो वाचा युक्त्यन्तरेणोच्यते । कक्ष्ययेति । कक्ष्यां विशिष्टदेशस्थं तुलासूत्रं व-

णिजो व्यवहरन्ति । अत्र तु कक्ष्येव कक्ष्या । यथा कक्ष्या द्रव्याणां गुरुत्वं परिच्छिनत्ति

तथा शास्त्रं कार्याणां सामान्यविशेषावस्थाभावेन बलाबलं व्यवस्थापयति । हर्म्यावस्था-

वचनो वा कक्ष्याशब्दउपचारादिहावस्थावचनस्तत्र किं कार्यं सामान्यावस्थं किं विशे-

षावस्थमित्येवं कक्ष्यया नमातव्येत्यर्थः । बलं वा कक्ष्या यथा तुल्यकक्ष्याविति । तत्र जा-

गृ इस् ईत् इति स्थिते वार्णादाङ्गो विधिर्बलीयानिति यणादेशं बाधित्वासार्वधातुका-

र्द्धधातुकयोरिति गुणः ... सिचि वृद्धिरिति वृद्धिः प्राप्ता तामप-

स्य प्राप्नोति गुणश्च। गुणो भवति। गुणे कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति। नेटीति च तस्याः प्रतिषेधोत्तरकालमतोहलादेर्लघोरिति विभाषा वृद्धिः प्राप्नोति। न च किं चित्। अतोल्रान्तस्येति च वृद्धिः प्राप्नोति। न च किं चित्॥

नेड् वशि कृति॥ ८॥ किमर्थं पुरस्तात्प्रतिषेध उच्यते। न विध्युत्तरकालः प्रतिषेधः क्रियते। तद्यथा। अन्यत्रापि विध्युत्तरकालाः प्रतिषेधा भवन्ति। क्वान्यत्र। कर्तरिकर्मव्यतिहारे न गतिहिंसार्थेभ्य इति। देवताद्वन्द्वे च नेन्द्रस्य परस्य। तत्रायमप्यर्थः। द्विरिड्ग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते नैवं शक्यमिडर्थं सार्वधातुकग्रहणे लिङः सलोपे संनिहितं तद्विच्छिद्येत। यदि पुनर्नेड्वश्यस्तुभ्य इत्यत्रैवोच्येत। किं कृतं भवति। विध्युत्तरकालश्चैव प्रतिषेधः कृतो भवति द्विश्चेड् ग्रहणं न कर्तव्यम्। इडर्थं च सार्वधातुकग्रहणं लिङः सलोपे सन्निहितं भवति। तत्रायमप्यर्थः। द्विः प्रतिषेधो न कर्तव्यो भवति। नैवं शक्यमिह हि तुष्टोथ दुद्रोथेति।

---

वादत्वाद् बाधित्वा जाग्र इति गुणः प्राप्नोति। भाष्यकारस्तु दुर्बलत्वादुत्सर्गं परिहृत्यवृद्धेरारभ्य गणयति। न च किं चिदिति। तस्याः पाक्षिक्यावृद्धेरपवादभूतं न किंचिद्गुणविधानमस्ति यतो जागृग्रहणमकर्तव्यं स्यात्। गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्। पुनर्वृद्धिनिषेधश्च यण्पूर्वाः प्राप्तयो न वेति संग्रहः श्लोकः॥

नेड्वशि। प्राप्तिपूर्वकत्वात्प्रतिषेधस्यार्थात् पूर्वं विधिप्रकरणं पठितव्यं पश्चात्प्रतिषेधप्रकरणंक्रमव्यतिक्रमेप्रयोजनाभावादितिमत्वापृच्छति। किमर्थमिति। तत्रायमप्यर्थ इति। न्याय्यक्रमाश्रयणादुपचयोऽप्यस्तीत्यर्थः। इडर्थमिति। रुदादिभ्यः सार्वधातुक इत्यत्र यत्सार्वधातुकग्रहणमिड्विधावुपात्तं तदानन्तर्यात् लिङः सलोपोनन्त्यस्येत्यत्र शक्यते अनुवर्तयितुम्। यदि त्विड्विधेः परस्तादीडजनोर्ध्वे चेत्यस्यानन्तरं नेड्वशिकृतीत्यादि प्रतिषेधप्रकरणं क्रियेत तदा तेन विच्छिन्नत्वात्सार्वधातुकग्रहणं सलोपविधौ नानुवर्तेत। तुष्टोथेति। यथा पपिथ ययिथेत्यादौ आर्धधातुकस्येतीट् प्राप्त एकाच इति प्रतिषिद्धः क्रादिनियमात्पुनः प्राप्तो ऽचस्तास्वत्थलीति प्रतिषिद्धस्तत्र ऋत एव भारद्वाजस्य प्रतिषेधो नान्येभ्य इति नियमात् पक्षे इड् भवति। एवं स्तुद्रुस्रुश्रुभ्योपि प्राप्नोतीत्यर्थः। तथाहि। क्रादिनियमस्य बाधकमचस्तास्वदिति प्रतिषेधस्ततोभारद्वाजस्येति नियमो बाधते स कथं क्रादिप्रतिषेधं न बाधेत। ननु च मध्येपवादाइति न्यायेन

ऋतो भारद्वाजस्येत्येतस्मान्नियमादिट् प्रसज्येत । कृसृभृवृस्तुद्रुस्रुश्रु-
वोलिटीत्येष योगः प्रतिषेधार्थो भविष्यति । यद्येष योगः प्रतिषे-
धार्थः । य एतस्माद्योगादिट् परिप्राप्यते नियमात्स न सिध्यति । पे-
चिव पेचिम । शेकिव । शेकिम । एवं तर्हि कृसृभृ इत्येषां ग्रहणं
नियमार्थं भविष्यति । स्तुद्रुस्रुश्रुवां प्रतिषेधार्थम् । वृङ्वृञोर्ज्ञापका-
र्थम् । एवमपि सामान्यविहितस्यैवेटः प्रतिषेधो विज्ञायेत । विशेष-
विहितस्यायं थलीति । पुरस्तात्पुनःप्रतिषेधे सति अनारभ्यापवादोयं
भवति । तेन यावानिण् नाम तस्य सर्वस्य प्रतिषेधः सिद्धो भवति ।
यदि खल्वप्येषो ऽभिप्रायस्तन्न क्रियत इति । पुरस्तादपि प्रतिषेधे स-
ति तन्न करिष्यते । कथम् इदमस्ति नेड्वशिकृतीति । ततो वक्ष्यामि
आर्धधातुकस्य वलादेरिति । इडित्यनुवर्तते नेति निवृत्तम् । अथ
नेड्ग्रहणं किमर्थम् । इह मा भूत् । बिभिदिव बिभिदिमेति । नै-
तदस्ति प्रयोजनम् । कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्येतस्मान्नियमाच्चेड् भ-

भारद्वाजनियमो ऽचस्तास्वदितिप्रतिषेधं बाधिष्यते न तु क्रादिप्रतिषेधम् । नैतदस्ति ।
पाक्षिक एष परिहारो भेदेन लक्षणापेक्षायाम् । कार्यमात्रे तु बाध्यत्वेनापेक्षिते नैष परि-
हारः । किं च नहुङ्गस्यतुर्थ्यं इत्यस्मादूर्ध्वमिदं प्रकरणं पठितव्यमिति प्रक्रान्तं न तु ऋ-
तोभारद्वाजस्येत्यस्मात्परमिति । ततो भारद्वाजनियमात् पूर्वमिदं न तु परमिति कुतो
मध्येपवादा इति न्यायावतारः । व्याप्तिन्यायाश्रये च सर्वप्रतिषेधबाधेन भाव्यम् । यद्ये-
ष इति । थलि भारद्वाजनियमादिटः प्राप्तस्य प्रतिषेधे विधेये संभवति सति नियमा-
र्थत्वस्यानुपपत्तिः । एवं तर्हीति । योगैकदेशः पूर्वं योगशब्देनोक्तश्चोदकेन तु समस्त ए-
व योगः प्रतिषेधार्थो ऽनेनोक्त इति मत्वा चोदितं यद्येष इति । तत्र क्रादीनामृकारान्त-
त्वान्नास्ति भारद्वाजनियमादिट्प्राप्तिरिति तेषां नियमार्थं ग्रहणम् । स्तुद्रुस्रुश्रुवां तु भा-
रद्वाजनियमात् क्रादिनियमाच्च प्राप्तस्येटः प्रतिषेधार्थम् । वृङ्वृञोरिति । एकयोगस्था-
अपि नावश्यमेकधर्माणः तत्र प्रत्ययाश्रयो ऽपीट्प्रतिषेधो नियम्यत इति वृङ्वृञ्ग्रहणे-
न ज्ञाप्यते । एवमपीति । स्तुद्रुस्रुस्रुभ्यः प्रतिषेधो येननाप्राप्तिन्यायेन क्रादिनियमप्राप्त-
स्यैवेटं निवर्तयेत् न तु भारद्वाजनियमप्राप्तमित्यर्थः । स हि थल्येव प्राप्तः तत्रचा-
सौ स्यादेव । पुरस्तादिति । इड्मात्रमनाश्रितविषयविशेषमनारभ्याधीतेन प्रतिषेधेन
बाध्यतइत्यर्थः । यदि तु भारद्वाजनियमात्परः प्रतिषेधः क्रियेत । मध्येपवादा इति चा-
श्रीयेत । तदा विप्रतिषेधेन सिध्येदेव प्रतिषेधः । अथ नेड्ग्रहणमिति । अकृतिक्रादि

विष्यति । नात्र परिप्रापणं प्राप्नोति । किं कारणं प्रकृतिलक्षणस्य प्रतिषेधस्य स प्रत्यारम्भः । प्रत्ययलक्षणश्चायं प्रतिषेधः । उभयोः स प्रत्यारम्भः । कथं ज्ञायते । वृङ्वृञोर्ग्रहणात् । कथं कृत्वा ज्ञापकम् । इमौ वृङ्वृञौ उदात्तौ तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति । पश्यति त्वाचार्य उभयोः स प्रत्यारम्भ इति ततो वृङ्वृञोर्ग्रहणं करोति । किं च । न खल्वपि कश्चिदुभयवान्प्रतिषेधः प्रकृतिलक्षणः प्रत्ययलक्षणश्च । ततः किम् । तुल्यजातीये असति यथैव प्रकृतिलक्षणस्य नियामको भवत्येवं प्रत्ययलक्षणस्यापि नियामको भविष्यति । इदं तर्हि प्रयोजनम् । इड् मा भूत् । रुदिवः । रुदिम । एतदपि नास्ति प्रयोजनम् । उपरिष्टाद्योगविभागः करिष्यते । आर्द्धधातुकस्य । यदनुक्रान्तं तदार्द्धधातुकस्य द्रष्टव्यम् । ततइड्वलादेरिति । तत्र त्वेताव-

---

नियमात् इट् भविष्यतीति मत्वाप्रश्नः । नात्रेति । भिन्नजातीयत्वादिति भावः । क्रादिनियमो हि प्रकृत्याश्रयप्रतिषेधविषयमेवेटं प्रापयेत् । बिभिदिथेति । नेड्वशि कृतीति तु प्रत्ययाश्रयः प्रतिषेधः तद्विषये क्रादिनियमाभावात् इड् न भवेत् । बिभिदिवेति कृद्ग्रहणमकृतिप्रतिषेधनिवृत्त्यर्थम् । वृङ्वृञोर्ग्रहणादिति । सामान्यग्रहणं विशेषनिष्ठं संपद्यतइति प्रदर्शनार्थं वृङ् वृञोरिति भेदेनोपादानम् । वृग्रहणस्य प्रयोजनं ववृवहे इत्यादाविड् माभूदिति । यदि च क्रादिनियमः प्रकृत्याश्रयमेव प्रतिषेधं बाधेत न प्रत्ययाश्रयं तदा नेड्वशि स्रुवकः कितीति योगद्वयेन यथायोगं सिद्धत्वात्प्रतिषेधस्य नार्थो वृग्रहणेन तत् क्रियमाणं प्रत्ययाश्रयस्यापि प्रतिषेधस्य निवृत्तिं ज्ञापयति । ननु थलर्थं वृग्रहणं स्यात् तस्य ह्यकित्त्वादवशादित्वाच्चेट् प्रतिषेधाप्राप्तिः । नैतदस्ति । ववर्थेति निगम इति निपातनं क्रियमाणं भाषायां ववरिथेति इटमभ्यनुजानाति । स्यादेतत् । तुल्यजातीय एव प्रतिषेधो नियमेन बाध्यताम् । एकाश्रयस्तु कथं बाध्येतइत्याशङ्क्याह न खल्वपीति । कृसृभृभ्यो लिटि प्रकृत्याश्रय एव एकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः प्राप्नोति । केवलायाः प्रकृते शब्देनोपादानात् । अथोच्येत चकृषे इत्यादौ स्रुवकः कितीतीट्प्रतिषेधः प्राप्नोति स चोभयवान्प्रकृतिप्रत्ययविशेषाश्रयत्वादिति । तन्न । अत्राप्यन्तरङ्गत्वात्प्रकृत्याश्रय एव प्रतिषेधः । तस्यैव नियमे विज्ञायमाने वृग्रहणमनर्थकं स्यात्तस्मात्प्रत्ययाश्रयोपि प्रतिषेधो नियम्यतइत्यत्र वृग्रहणं लिङ्गम् । प्रकृतत्वकृस्टभ्रपेक्षया च न खल्वपीत्युच्यते न तूभयवान्नास्ति प्रतिषेधः । रुदिवः रुदिम इति । असति कृद्ग्रहणे रुदादिभ्यः सार्वधातुकइत्यस्येटोऽत्र प्रतिषेधः स्यात्तस्य त्ववशादिरवकाशो रोदितीत्यादौ । यदेतदिति । प्रतिषेधप्रकरणमित्यर्थः । ततः सार्वधातुकइ-

दृ द्रष्टम् । यदि किंचित्तत्रान्यदपि आर्द्धधातुकग्रहणस्य प्रयोजनमस्ति । अथ न किंचिद् । इह वा कृद्ग्रहणं क्रियते तत्र वार्द्धधातुकग्रहणम् । कोन्वत्र विशेषः । नेड्वशि कृति * । वरमनादौ कृति इट्प्रतिषेधं प्रयोजयति। व । ईशिता ईशितुम् । ईश्वरः । व । र । दीपिता दीपितुम् । दीप्रम् । र । म । भसिता भसितुम् । भस्म । न । यतिता यतितुम् । यत्नः । न । अथान्ये ये वशादयः तत्र कथ,मुणादयो ऽव्युत्पन्नानि प्रातिपदिकानि ॥

तितुत्रतथसिसुसरकसेषु च ॥ ९ ॥ तितुत्रेष्वग्रहादीनामिति वक्तव्यम् । इह मा भूत् । निगृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिरिति ॥

एकाच उपदेशेनुदात्तात्॥ १०॥ एकाज्ग्रहणं किमर्थम् । एकाज्ग्रहणं जागर्त्यर्थम्।एकाज्ग्रहणं क्रियते।जागर्तेरिट्प्रतिषेधो मा भूत्। जागरिता जागरितुम् । नैतदस्ति प्रयोजनम् । उपदेशे ऽनुदात्तादित्युच्यते।जागर्तिश्चोपदेशे उदात्तः।न ब्रूमः इहार्थं जागर्त्यर्थमेकाज्ग्रहणं कर्तव्यमिति । किंतर्ह्युत्तरार्थम्। श्र्युकः कितीतीट्प्रतिषेधं वक्ष्यति स जागर्तेर्मा भूदिति । जागरितः जागरितवानिति । एतदपि नास्ति प्रयोजनम् । जागर्तेर्गुण इत्युच्यते । वृद्धिविषये प्रतिषेधविषये च स बाधको भविष्यति । तत्र गुणे कृते रपरत्वे ऽनुगन्तत्वादिट्प्रतिषेधो

---

ट्प्रतिषेधाभावः । यद्यन्यार्थमार्द्धधातुकग्रहणं कर्त्तव्यं तदा योगविभागेनेष्टं साध्यते । यदा त्वस्यान्यप्रयोजनाभावः । तदा लाघवार्थं कृद्ग्रहणमेव कर्तव्यम् । प्रत्याख्यास्यते च तत्रार्द्धधातुकग्रहणम् । भस्मेति । नन्वत्रैव वक्ष्यत्युणादय इति । ततश्चाव्युत्पत्त्याश्रयणादेवेड् न भविष्यति । अन्येभ्योपि दृश्यतइत्यनेनात्र मनिन्प्रत्यय इत्यदोषः ॥

तितुत्र । निकुचितिरिति । कुचे क्तिन्नावादिभ्य इति क्तिन् । कुचशब्दे तारइत्यस्मादा स्त्रियां क्तिन् ।

एकाच उप । एकाज्ग्रहणमिति । एकाचामेवानुदात्तत्वप्रतिज्ञानादनुदात्तग्रहणेनेवातिप्रसङ्गनिवारणात्प्रश्नः । इतर उत्तरार्थत्वमभिप्रेत्याह । एकाज्ग्रहणं जागर्त्यर्थमिति । स जागर्तेर्मा भूदिति । जागर्तिरेवोगन्तो ऽनेकाच् संभवतीति तन्निवृत्त्यर्थमेकाज्ग्रहणम् । ऊर्णोतिस्तु नुवद्भावात्प्रतिषेधो भवत्येव । चोदकः प्रतिषेधाप्राप्तिकारणमन्यद्दर्शयति। एतदपीति । स बाधक इति । इट्प्रतिषेधस्येत्यर्थः । उपदेशाधिकारा-

न भविष्यति । ननु चउपदेशाधिकारात्प्राप्नोति । उपदेशग्रहणं निवर्तयिष्यते । यदि निवर्तते । स्तीर्त्वा पूर्त्वा इत्वोत्वयोः कृतयोः रपत्वे त्वे चानुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति । नैष दोषः । आनुपूर्व्यात्सिद्धमेतत् ॥ नाचाकृतइट्प्रतिषेधे इत्वोत्वे प्राप्नुतः । किं कारणम् । नक्त्वासेडिति कित्त्वप्रतिषेधात् । इदं तर्हि आतिस्तीर्षति । निपुपूर्षति । इत्त्वोत्त्वयोः कृतयोरपरत्वे चानुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति । माभूदेवं श्र्युकः कितीतीट्सनिवेत्येवं भविष्यति । इदं तर्हि

---

दिति । अन्यार्थं सुपदेशग्रहणमनुवर्त्यसुपदेशे च जागर्तिरुगन्तो भवतीति प्रतिषेधप्रसङ्गः । इतर उपदेशाधिकारस्य प्रयोजनान्तरमपश्यन्नाह । उपदेशग्रहणं निवर्त्स्यतइति । स्तीर्त्वा पूर्त्वेति । इत्वादिषु कृतेष्वनुगन्तत्वात् लूत्वेत्यादौ च सांप्रतिकोगन्तसंभवे भूतपूर्वगत्याश्रयणस्यायुक्तत्वादिट्प्रतिषेधो न स्यादुपदेशाधिकारात्तूपदेशउगन्तत्वात्संप्रत्यनुगन्तत्वे अपि प्रतिषेधः प्रवर्तते । आनुपूर्व्येति । स्तृत्वा इति स्थिते कित्त्वनिषेधाश्रय इडिडाश्रयस्य कित्त्वनिषेध इति प्रागेव संनिहितं कित्त्वमाश्रित्येट्प्रतिषेधः प्रवर्तते तत इत्वादीनीत्यर्थः । अत्र चोद्यते । कृतेष्वित्वादिषु प्रतिषेधनिमित्तोगन्तत्वोपगमात्पुनरिट् प्राप्नोति तस्मिंश्च सति नक्त्वासेडिति कित्त्वप्रतिषेधाद्गुणे सति स्तरित्वेति प्राप्नोति । नैष दोषः । पूर्वमेव प्रसक्तस्येड्लक्षणप्रतिषेधेन बाधितत्वाल्लक्ष्यस्यसंस्कृतत्वाद्भ्रष्टावसरत्वात्पुनः प्रवृत्त्यभावात् । आतिस्तीर्षतीति । श्र्युकः कितीत्यत्र विशिष्टानुबन्धोपलक्षितः प्रत्यय आश्रितः सनिग्रहगुहोश्चेत्यत्र तु साक्षादिति । विशेषमाश्रित्यास्योपन्यासः अत्रेत्वरपरत्वयोः कृतयोरनुगन्तत्वादिट्प्रतिषेधो न स्यादुपदेशाधिकारात्त्वनुगन्तावस्थायामपि भवति । सनिग्रहगुहोश्चेत्यत्र चशब्देनोगनुकृष्यते श्र्युकः कितीत्यनेन त्वत्र प्रतिषेधो नास्ति । इट्प्रतिषेधाश्रयत्वाज्झलादित्वस्यझलादित्वाश्रयत्वात्कित्त्वस्य कित्त्वाश्रयत्वादिट्प्रतिषेधस्येति इतरेतराश्रयप्रसङ्गात् । इट्सनिवेति । स्तृ सइतिस्थिते ऋकारान्तावस्थायामेवपक्षइडभावः । तथाहि इड्विकल्पस्यनिरवकाशत्वात्सांप्रतिकाभावेभूतपूर्वगत्याश्रयणादनित्यत्वाद्दानतावद्गुणस्यप्रवृत्तिः । तत्रइट्पक्षेवृतोवेतिदीर्घविकल्पे रूपद्वयम् । आतिस्तरीषतीति इडभावपक्षेतुआतिस्तीर्षतीति । अत्रचोद्यते । इडभावपक्षेकित्त्वाद्गुणेनिषिद्धे इत्वरपरत्वयोः कृतयोःपुनरिट्प्राप्नोति । न चेट्सनिवेतिविकल्पविधानमनर्थकम् । ऋकारान्तावस्थायांपक्षेइडभावेकित्त्वेसतिइत्वरपरत्वेः कृततयोरिटिसतिगुणेचसतिआतिस्तरिषतीतिरूपसंपादनार्थत्वाद्विकल्पस्य । अत्रसमाधिः । नित्यमिटिप्राप्तेविकल्पस्य विधानाद्भ्रष्टावसरत्वाल्लक्ष्यस्यसिद्धत्वात्पुनरिड्लक्षणंनप्रवर्तते ।

प्रयोजनम् । आस्तीर्णं निपूर्ताः पिण्डाः । इत्वोत्वयोः रपरत्वे चानुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति । मा भूदेवम् । इट्सनिवेति सनि विभाषायस्यविभाषेतिप्रतिषेधो भविष्यति । इहार्थमेव तर्हि वध्यर्थमेकाज्ग्रहणम् । वध इट्प्रतिषेधो मा भूत् । वधिषीष्टेति । एतदपि नास्ति प्रयोजनम् । क्रियमाणेपि वै एकाज्ग्रहणे वध इट्प्रतिषेधः प्राप्नोति वधिषीष्टेति । किं कारणं वध इट्प्रतिषेधः । सन्निपात एकाच्त्वात्प्रकृतेश्चानुदात्तत्वात् । संनिपाते चैव हि वधिरेकाच् श्रूयते स्वाश्चानुदात्ता । किं पुनः कारणमेवं विज्ञायते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादिति । यङ्लोपार्थम् । यङ्लोपे मा भूदिति । बेभिदिता । बेभिदितुम् । चेच्छिदिता । चेच्छिदितुम् । एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्कृआदिभ्यो लिटिनिय-

---

आस्तीर्णमिति । कृतेऽकृते चेटि किदेवनिष्ठेत्यनेनविशेषेणास्योपन्यासः । यस्यविभाषेति । ननुऋकारान्तस्यसनिविकल्पविधानान्नित्यत्वादित्वोत्वयोः कृतयोरनृकारान्तत्वाद्यस्यविभाषेतिप्रतिषेधाप्रसङ्गः । नैषदोषः । सनिविकल्पविधानेऋकारान्तत्वस्यापेक्षणेऽपि यस्यविभाषेत्यत्रयस्यकचिदिड्विकल्पोदृष्टः सधातुराश्रीयतेनतुविकल्पकारणमृकारान्तत्वम् । भवतिचेत्वोत्वयोः कृतयोरपिसएवधातुरितिप्रवर्त्ततेप्रतिषेधः । तदेवमुपदेशग्रहणस्य उत्तरत्रानुपयोगादननुवर्तनाज्जागरितइत्यत्र गुणरपरत्वयोः कृतयोरनुगन्तत्वाच्छ्र्युकः कितीतिप्रतिषेधाभावादुत्तरार्थमेकाज्ग्रहणंनकर्तव्यम् । वध्यर्थमिति । वधशब्दोऽकारान्तोऽनेकाजादेशः । इतरउपदेशग्रहणमनुदात्तस्यैवविशेषणंनत्वेकाचइतिमन्यमानआह । एतदपीति । वधिषीष्टेति । आशिषिलिङ् । कर्मण्यात्मनेपदमतोलोपइत्यकारलोपेकृते, वधिरेकाजकारोच्चारणंत्ववधीदित्यादौ हलन्तलक्षणवृद्धिनिवृत्त्यर्थं स्यात् । प्रकृतेश्चानुदात्तत्वादिति । यस्मात्प्रकृतिर्हन्तिरनुदात्ता तस्याश्चोपदेशावस्था गृह्यते । सैव चानेन रूपेणावस्थितेति संप्रत्ययस्ततः प्रतिषेधः प्राप्नोति । ततश्चकृतमप्येकाज्ग्रहणमनर्थकम् । किं पुनरिति । उभयविशेषणमुपदेशग्रहणमस्तु । ततो वधेरुपदेशे ऽनेकाच्त्वात्प्रतिषेधाप्रसङ्गः । बेभिदितेति । द्विः प्रयोगे द्विर्वचने भवति भिदिरुपदेशे ऽनुदात्त उपदेशे एकाजित्यतो लोपे कृते संप्रत्यनेकाच्त्वेऽपि प्रतिषेधप्रसङ्गः । श्रूयमाणे त्वेकाच्याश्रीयमाणे आवृत्तिसंख्ययैकत्वसंख्याया बाधनात्प्रतिषेधाभावः । समुदायस्य चैकाङ्गसंज्ञा न तु प्रत्येकमित्यकाचोङ्गादित्याश्रयणात्परभिन्नरूपाश्रयोऽपि प्रतिषेधो न भवति । अनुदात्तविशेषणं चेदिति । उभयविशेषणेपि । अनुदात्तविशेषणं भवतीति सामर्थ्यादनुदात्तस्यैव यदि वि-

मानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य*। एकाच उपदेशे ऽनुदात्तादितिउ-पदेशवचनमनुदात्तविशेषणं चेत्क्रादिभ्यो लिटि नियमानुपपत्तिः। किं कारणम्। अप्राप्तत्वात्प्रतिषेधस्य। द्विर्वचने कृते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति। असतीट्प्रतिषेधे नियमो नोपपद्यते। असति नियमे को दोषः। तत्र पचादिभ्य इड्वचनम् *। तत्र पचादिभ्य इड्वक्तव्यः। पेचिव। शेकिम। सनश्चेट्प्रतिषेधः *। सनश्चेट्प्रतिषेधो वक्तव्यः। बिभित्सति। चिच्छित्सति। द्विर्वचनेकृते उपदेशे ऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति। इह च नीतः। तत्वे ऽनच्कत्वादिट्प्रतिषेधो न प्राप्नोति। नैष दोषः। आनुपूर्व्यात् सिद्धमेतत्। नात्राकृते इट्प्रतिषेधे तत्वं प्राप्नोति। किं कारणम्। तिकितीत्युच्यते। यदप्युच्यते एकाच उपदेशे ऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्क्रादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्येति। माभून्नियमः। ननु चोक्तं तत्र पचादिभ्य इड्वचनमिति। नैष दोषः। उक्तं तत्र थल्ग्रहणस्य प्रयोजनम्। समुच्चयो यथा विज्ञायेत। थलि च सेटि क्ङिति च सेटीति। यदप्युच्यते सनश्चेट्प्रतिषेध इति। उभयविशेषणत्वात्सिद्धम्। उभयमुपदेशग्रहणेन विशेषयिष्यामः। उपदेशे ऽनुदात्तादुपदेशे एकाच इति। यङ्लोपे कथम्। यङ्लोपे च तदन्तवि-

---

शेषणमित्यवधारणं द्रष्टव्यम्। असति नियम इति। क्रादिसूत्रं प्रतिषेधार्थमस्तु। एवमपि चक्षम इत्यादि सिध्यति विभिदिवेत्यादौच एकाच्त्वाभावात्प्रतिषेधाभावादिट् सिध्यतीति भावः। चेपिवेति। एत्वाभ्यासलोपयोः कृतयोरेकाचः श्रूयमाणादितीट्प्रतिषेधप्रसङ्गः। नीत्त इति। ददातेः क्तप्रत्ययेऽच उपसर्गात्त इति तत्वे कृतेऽनच्कत्वादेकाच्त्वाभावादिट्प्रतिषेधाप्रसङ्गः। तत्वस्य द्विपदाश्रयत्वाद् बहिरङ्गत्वादन्तरङ्ग इट्प्रतिषेधे ऽसिद्धत्वादिति परिहारान्तरस्य सद्भावान्नाश्रितः। तदेव दर्शयति। आनुपूर्व्यासिद्धमिति। थल्ग्रहणस्येति। आरम्भसामर्थ्यादत एकहल्मध्येऽनादेशादेर्लिटीत्यनुवर्तमानेऽन्तरेणापि थल्ग्रहणं थल्येवसेट्येत्वाभ्यासलोपयोः सिद्धत्वात्थल्ग्रहणं क्ङिता समुच्चयार्थम्। ततश्चेटि कृते एत्वाभ्यासलोपयोर्विधाने पेचिवेत्यादीनि रूपाणि सिध्यन्तीति भावः: क्रादिनियमेन। उभयविशेषणत्वादिति। एवं सत्युभयं विशेषणत्वेन संसर्गादनुपक्षीतं भवति। एतदर्थं चोपदेश इति मध्येपठितम्। उभयविशेषणे च क्रादिनियमा-

र्वचनात् । सन्यङन्तस्य स्थाने द्विर्वचनं तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स भवति यः स एकाच् उपदेशे अनुदात्तः । अथापि द्विःप्रयोगो द्विर्वचनमेवमपि न दोषः । न ह्यस्य भिद्युपदेश उपदेशः । किं तर्हि बेभिद्युपदेश उपदेशः । अथापि भिद्युपदेश उपदेश एवमपि न दोषः । अकारेण व्यवहितत्वान्न भविष्यति । ननु च लोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद् व्यवधानमेव । न सिध्यति । पूर्वविधौ स्थानिवद्भावः । न चायं पूर्वविधिः । पूर्वस्मादपि विधिः पूर्वविधिः । कः पुनरुपदेशोन्याय्यः । यः कृत्स्नः । कश्च कृत्स्नः । य उभयोः । यदि तर्हि य उभयोः सकृत्स्नः स च न्याय्यः । वध इट्प्रतिषेधः प्राप्नोति

---

त्यचादिभ्य इटः सिद्धत्वात्थलि च सेटीत्यत्र थल्ग्रहणं विस्पष्टार्थम् । सन्यङन्तस्येति । सन्यङोरिति षष्ठी । तत्र भिद्यशब्दस्य प्रकृतिप्रत्ययसमुदायस्य सर्वे सर्वपदादेशा इति शब्दान्तर आदेशे कृते ऽयं धातुरयं प्रत्यय इति विभागाभावादिट्प्रतिषेधाभावः । नन्वेवं विभित्सतीत्यत्रापि प्रतिषेधाप्रसङ्गः । इडप्यस्मिन्पक्षे न प्राप्नोतीत्यदोषः । अथ वाक्यसमाख्यासात्पक्षान्तराश्रयेणाह । अथापीति । न ह्यस्येति । आचार्यस्य । भिद्युपदेशाश्रये ह्येकाच्त्वादनुदात्तत्वाच्चेट्प्रतिषेधः स्यात् । यङन्तस्य तूपदेशे गृह्यमाणे तस्यानेकाच्त्वादुदात्तत्वाच्च प्रतिषेधाप्रसङ्गः । ननु च प्रत्यक्षमाख्यानमुपदेश इत्युक्तम् । यङादीनां च प्रत्ययानामुपदेशोऽस्ति न तु तदन्तानां शब्दानामनुमेयरूपाणाम् । नैष दोषः । संकीर्णबुद्धेशोपदेशावित्यपि तत्रोक्तमत एव चेत्संज्ञायां करणसाधन उपदेशशब्दः शास्त्रवाच्याश्रितः । इह तु भावसाधन आश्रीयते । तेन प्रतिपादनमात्रं गुणैर्वा प्रत्यक्षेण वोपदेश उच्यते । यङ्विधानद्वारेण च बेभिद्य इत्यस्य समुदायस्य क्रियाविशेषवचनस्याद्य प्रतिपत्तिरस्तीति बेभिद्युपदेश इत्युक्तम् । बेभिद्यशब्दादिक्श्तिपाविति इक्प्रत्यये ऽल्लोपयलोपयोर्बेभिदि इति भवति । अथ चेत्संज्ञाविधावुच्चारणवचन उपदिश्यर्ग्रह्यते तदुक्तमुद्देशस्य प्रातिपदिकानां नोपदेश इति । इह तु प्रतिपादनवचन इति विरोधाभावः । अथापि भिद्युपदेश इति । उच्चारणवचनेप्युपदिशौ गृह्यमाणे प्रत्यक्षमाख्यानवचने वा न दोष इत्यर्थः । द्विः प्रकार उपदेश उक्ते पृच्छति । कः पुनरिति । किं भिद्युपदेशो ऽथ बेभिद्युपदेश इत्यर्थः । यः कृत्स्न इति । कृत्स्नकार्यित्वात् कृत्स्नः स च भिद्युपदेश एव । स हि सर्वसाधारणो भक्त बेभिद्यते इत्येवमादीनां प्रतिपत्तिहेतुत्वात् । उभयोरिति । केवलस्य भिदेर्बेभिद्यादेश्च तदवयवसमुदायस्य धातोर्ग्राहक इत्यर्थः । एतदुक्तं भवति । भिदादीनामिवोपदेशोऽस्ति न तु सनाद्यन्तानामवयवसमुदायानामुपदेशशब्दस्य प्रत्यक्षप्रतिपत्तिहेतुशास्त्रवाचिन आश्रयणात् । वध इट्प्रतिषेध इति ।

वधिषीष्टेति। नैष दोषः। आद्युदात्तनिपातनं करिष्यते। स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति। एवमपि उपदेशिवद्भावो वक्तव्यः। यथैव हि स निपातनस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरमपि बाधेत। आवधिषीष्टेति। नैष दोषः। आर्द्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु। तत्रार्द्धधातुकसामान्ये वधिभावे कृते सतिशिष्टत्वात्प्रत्ययस्वरो भविष्यति। अथ के पुनरनुदात्ताः। आदन्ताः। अदरिद्राः। इवर्णान्ताश्चाश्रिश्विडीशीदीधीवेवीङः। उकारान्ताः। युरुणुक्षुक्ष्णुस्नूर्णुवर्जम्। ऋदन्ताश्चाजागृवृङ्वृञः। शकिः कवर्गान्तानाम्। पचिवचिसिचिमुचिरिचिविचिप्रच्छियजिभजिसृजित्यजिभुजिभ्रस्जिमस्जिरुजियुजिणिजिविजिसञ्जिस्वञ्जयश्च चवर्गान्तानाम्। सदिशदिहदिछिदितुदिनुदिस्विदिभिदिस्कन्दिक्षुदिखिद्यतिविन्दतिविन्तिविद्यतिराधियुधिबुधिशुधिक्रुधिरुधिसाधिसाधिव्यधिबन्धिसिध्यतिहनिमन्यतयस्तवर्गान्तानाम्। तिपितपिवपिशपिक्षुपिक्षिपिलिपिस्वप्यापिच्छिविसृपिल्टपिदृपियभिरभिलभियमिरमिनमिगमयः पवर्गान्तानाम्। क्रुशिरिशिदिशिविशिलिशिस्पृशिदृशिक्रुशिमृशिदंशिन्विषिमृषिकृषिश्लिषिविषिपिषितुषिदुषिद्विषिघसिवसिदहिदिहिवहिदुहिनहिरुहिवहिलिहिमिहयश्चोष्मान्तानाम्। वसिः प्रसारणी॥

क्रसृभृवृस्तुद्रुस्रुश्रुवो लिटि॥ १३॥ कृञो ऽसुटः *। कृञो ऽसु-

---

थुपदेशस्थानीयो हन्त्युपदेशस्तत्रहन्तिरेकाजनुदात्तश्चेति सत्यपि वधेरुपदेशे ऽनेकाच्त्वे हन्त्युपदेशधर्माश्रय इट्प्रतिषेधप्रसङ्गः। न चाकारलोपस्य यङन्त इवात्रापि स्थानिवद्भावेन व्यवधानम्। सत्यपि स्थानिवत्त्वे प्रकृतिप्रत्यययोरानन्तर्याद्यङन्ते तु स्थानिवात्त्वदकारेण भिदिप्रत्यययोरानन्तर्यविच्छेदात्। आद्युदात्तनिपातनमिति। तत्सामर्थ्यादुपदेशविषयानुदात्तत्वाश्रय इट्प्रतिषेधो न भवति। नह्येतदाद्युदात्तत्वं प्रयोगसमवायि प्रत्ययस्वरेण तस्य बाधनात्। आर्द्धधातुकीया इति। आर्द्धधातुके भवा इति वृद्धाच्छः। यदि तर्ह्यार्द्धधातुकविशेषनिमित्ता अप्यनवस्थितेषु प्रत्ययेषु भवन्ति। तदा यदुक्तं वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेनेति तद्विरुध्यते। अन्तरङ्गत्वाद्वधेर्बहिरङ्गत्वाच्चिण्वद्भावस्य विप्रतिषेधायोगादिति चिन्त्योऽत्र समाधिः॥

कृसृभृ०। कृञोऽसुट इति। कृतेपि सुटि करोतिर्भवत्येवेति प्रतिषेधप्रसङ्गः। गुणे

ट इति वक्तव्यम् । इह माभूत् । संचस्करिव । संचस्करिम । तत्तर्हि वक्तव्यम् । न वक्तव्यम।गुणे कृते रपरत्वेचानुगन्तत्वादिट्प्रतिषेधोन भविष्यति।एवमप्युपदेशाधिकारात्प्राप्नोति । तस्मादसुट इति वक्तव्यम्॥

श्वीदितोनिष्ठायाम् ॥ १४ ॥ श्विग्रहणं किमर्थम् । न प्रसारणे कृते प्रसारणपूर्वत्वं च उगन्तादितयेव सिद्धम् । अत उत्तरं पठति । श्विग्रहणमिदन्तत्वादुपदेशस्य * । श्विग्रहणं क्रियते इदन्तत्वादुपदेशस्य । उपदेश उगन्तादित्युच्यते । श्वयतिश्च उपदेशे इदन्तः ॥

---

कृते इति । ऋतश्च संयोगादेर्गुणइत्यत्र संयोगादेर्गुण विधाने संयोगोपधग्रहणं कर्तव्यमिति वचनेन । अनुग न्तत्वादिति । श्र्युकः कितीत्यत उग्ग्रहणमिहानुवर्ततइति मन्यते । एवमपोति । यद्यपि संप्रति नोगन्तस्तथाप्युपदेश उगन्त इति स्यात्प्रतिषेधः । किमर्थमुपदेश इत्युनुवर्तत इति चेत् तुष्टोथेत्यादौ कृते ऽपि गुणे इट्प्रतिषेधार्थम् । यद्यसुक इत्यपि नानुवर्त्यम्।एवं तर्हि तदनेनोक्तं भवति । सत्यसति वोगधिकारे कृञो ऽसुट इत्यवश्यं वाच्यमिति नार्थ उगधिकारेण॥

श्वोदितोनिष्ठायाम् । स्तोर्त्वास्तीर्णमित्यादीनामुपदेशग्रहणानुवृत्तिमन्तरेण सिद्धेरभिधानादुपदेशाधिकारोऽत्र नास्तीतिमत्वाह । श्विग्रहणं किमर्थमिति । ननु च श्वित इति श्विते संप्रसारणात्परत्वादिट् प्राप्नोति । नित्यत्वात् संप्रसारणं भविष्यतोति मन्यते । यस्य लक्षणान्तरेणेति क चिन्नाश्रीयत इति पूर्वमेवोक्तम् । संप्रसारणनिमित्तत्वादिडभावस्य तस्मिन् कृते इटो ऽप्रवर्तनादनित्यत्वम् । संप्रसारणस्य तु कृताकृतप्रसङ्गित्वान्नित्यत्वम् । श्विग्रहणमिदन्तत्वादिति । एकाजग्रहणोत्तरार्थताप्रत्याख्यानायानुपूर्व्याश्रिवमित्यादि तत्रोक्तम् । तत्त्वेकाज्ग्रहणमन्यार्थं स्थितं सदुत्तरत्रापि प्रतिपत्तिगौरवपरिहारायानुवर्त्यम् । ततश्च जागरित इत्यत्र श्र्युकः कितीतीट्प्रतिषेधो न भवति । ननु वध्यर्थमप्येकाज्ग्रहणं प्रत्याख्यातमेवाद्युदात्त निपातनाश्रयेण हन्त्युपदेशे गृह्यमाणे तदुक्तम् । वध्युपदेशे त्वाश्रीयमाणे एकाज्ग्रहणेनैव वधेरिट् साध्यते । आद्युदात्तनिपातने त्वाश्रीयमाणे वधिषीष्टेत्याद्युदात्तत्वप्रसङ्गनिवारणाय लिङीति विषयसप्तम्याश्रयणीया। तथा च घानिषीष्टेति विप्रतिषेधाच्चिण्वद्भावानुपपत्तिरन्तरङ्गत्वाद्वधिभावप्रसङ्गात् । यङ्लुङ्निवृत्त्यर्थं चैकाज्ग्रहणं कर्तव्यम् । तस्मिन् हि क्रियमाणे यत्रैकाज्ग्रहणं किंचित्पश्चैतानि न यङ्लुकोति वचनाद् बेभिदितेत्यादावपीट् सिध्यति । उपदेशग्रहणमपि श्र्युकः कितीत्यत्रानुवर्त्यम् । अन्यथा स्तोर्त्वेत्यादिसिद्धये ऽनन्तप्रकारपरिहाराश्रयणे प्रतिपत्तिगौरवानुषङ्गः । इदमेव श्विग्रहणमुपदेशाधिकारस्य तत्र ज्ञापकम् । अन्येत्विह श्विग्रहणं सर्वविधिभ्य इड्विधिर्बलवानित्यस्य ज्ञापकमाहुः॥

यस्य विभाषा ॥ १५ ॥ यस्य विभाषाऽविदेः * । यस्यविभाषाऽविदेरिति वक्तव्यम् । इह मा भूत् । विदितः। विदितवानिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम्। यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः। शब्विकरणस्य विभाषा लुग्विकरणस्यायम् ॥

आदितश्च ॥ १६ ॥ विभाषाभावादिकर्मणोः ॥ १७ ॥ किमर्थो योगविभागः । न आदितो विभाषा भावादिकर्मणोरित्येवोच्येत । केनेदानीं कर्तरि प्रतिषेधो भविष्यति । यस्य विभाषेत्यनेन । एवं तर्हि सिद्धे सति यद्योगविभागं करोति तज् ज्ञापयत्याचार्यः । यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति । किमेतस्य ज्ञापने प्रयोजनम् । यस्य विभाषा अविदेरित्युक्तं तन्न वक्तव्यं भवति ॥

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु ॥१८॥ क्षुब्धं मन्थाभिधाने इति वक्त-

---

यस्य वि । विभाषागमहनविदविशामिति क्वसौ विकल्पविधानाद्वेत्तेर्निष्ठायां प्रतिषेधः प्राप्नोतीति मत्वाह । यस्य विभाषा ऽविदेरिति । वेत्तिश्च विवक्षितः विद्लृलाभे इत्यस्य तु प्रतिषेधो भवत्येव विन्न इति । विद्यतिविनत्त्योस्त्वनुदात्तत्वादिट्प्रतिषेधः । यदुपाधेरिति । उपाधिरभिधेयादिर्भेदकः । शब्विकरणस्य विभाषेति । विशिनातौदादिकेन साहचर्यात्तौदादिकस्यैव लाभार्थं स्य विभाषेति ज्ञानार्थं स्य सत्यपि विदिरूपत्वे अर्थ स्य भेदकत्वेन रूपवदाश्रयणात्प्रतिषेधाभावः । यद्यपि हन्तिना साहचर्यं विदेरस्ति तथापि शब्दपरविप्रतिषेधाद्विशिर्व्यवस्थाहेतुर्न हन्तिः ॥

आदितश्च। एवं तर्हीति। रूपाभेदेपि यद्युपाधीनां भेदकत्वं न स्याद् योगविभागोनर्थकः स्यात् । भेदकत्वे तु तेषांवादिकर्मणोर्विकल्पविधानात्कर्तरि निष्ठायां प्रतिषेधो न स्याद्भावादिकर्मणोरपि विकल्पप्रतिषधयोर्विरोधात्प्रतिषेधो न स्यादिति कर्तृकर्मनिष्ठार्थो योगविभागः। यदि तर्ह्युपाधिर्भेदकस्तत उदितो वेति तु क्त्वाप्रत्यये भाववाचिनि विकल्पविधानाद्भाववाचिन्यामेव निष्ठायां प्रतिषेधः स्यान्न कर्तृकर्मवाचिन्याम् । नैष दोषः । तेन निवृत्तं निर्वृत्तेचद्यूतादिभ्य इति लिङ्गात् प्रत्ययार्थोभेदकत्वेन नाश्रीयते ।

क्षुब्ध। क्षुब्धमिति। यदि धात्वर्थोपाधित्वेन मन्थादय आश्रीयेरन्मन्थादिसाधनधात्वर्थे क्षुब्धादयो निपात्यन्ते इति तदा क्षुभितं मन्थेनेत्यत्रापि भावे क्त्वेट्प्रतिषेधः स्यादिति समुदायानामभिधेयभावेन मन्थादय इहोपात्ता इति प्रदर्श्यते । द्रवद्रव्यसंपृ-

व्यम् । क्षुभितं मन्थेनेत्येवान्यच्च । क्षुब्ध । स्वान्तं मनोभिधान इति वक्तव्यम् । स्वनितं मनसेत्येवान्यच्च । स्वान्त। ध्वान्तं तमोविधान इति वक्तव्यम् । ध्वनितं तमसेत्येवान्यच्च ॥

धृषिशसी वैयात्ये ॥ १९ ॥ किमिदं वैयात्यमिति । वियातभावो वैयात्यम् ॥

दृढः स्थूलबलयोः ॥ २० ॥ दृढनिपातनं किमर्थम् । न दृहेर्नेड् भवतीत्येवोच्येत । दृढनिपातनं नकारहकारलोपार्थं परस्य च ढत्वार्थम् * । दृढनिपातनं क्रियते नकारहकारलोपार्थम् । नकारहकारलोपो यथा स्यात् । परस्य च ढत्वं यथा स्यात् । अनिड्वचने हि रभावाप्रसिद्धिरलघुत्वात् * । अनिड्वचने हि रभावस्याप्रसिद्धिः । द्रढीयान् । किं कारणम् । अलघुत्वात् । नलोपवचनं च * । नलोपश्च वक्तव्यः । इह च परिद्रढय्य गतः । ल्यपि लघुपूर्वस्येत्ययादेशो न स्यात् । इह च पारिदृढी कन्या इति गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत ॥

---

क्ताः सक्तवो मन्थः । क्षुब्धां गिरिनदीमित्यादयस्तु प्रयोगा असाधव इत्याहुः । अन्ये तूपमानमाश्रित्य समर्थयन्ते । स्वान्तशब्देन बाह्येषु विषयेष्वविक्षिप्तमनाकुलं मन उच्यते॥

धृषिशसी । वियातभाव इति । विरूपं यातं गमनं चेष्टनं यस्य स वियातोऽविनीतः ॥

दृढःस्थूल । न दृहेरिति । दृह दृहि बृह बृहि वृद्धाविति धातुषु पठ्यते तत्र दृहः स्थूलबलयोरिति इट एव प्रतिषेधो विधेय इति मत्वा प्रश्नः। दृढनिपातनमिति । दादेर्धातोर्घ इति घत्वस्य च प्रतिषेधो वक्तव्यः स्यात् । अनिड्वचने हीति । यदीटो घत्वस्य च प्रतिषेधो विज्ञायेत ततो ढत्वष्टुत्वढ़लोपेषु यद्यपि दृढ इति रूपं सिध्यति तथापि पूर्वत्रासिद्धमिति ढलोपस्यासिद्धत्वात्संयोगे गुर्विति गुरुसंज्ञायां तन्निबन्धनकार्यप्रसङ्गो लघुसंज्ञाहेतुकार्याप्रसङ्गश्च । द्रढीयानिति । रविधौ पृथुमृद्वित्यादिपरिगणनमनपेक्ष्योच्यते । परिगणने हि विशेषणानां प्रत्याख्यानाद्रभावः सिध्यति । नलोपवचनं चेति । दृहेरिदित्वान्नलोपो न प्राप्नोति । दृहेस्तु स्थूलबलयोरपि दृंहितमितीष्यते दृहि बृहि वृद्धावितिद्वावेव धातू पठ्येते इति वार्तिककाराभिप्रायं केचिदाहुः । तथा च बृंहेरच्यनिटीति नलोपमुक्तवान् । भाष्यकारस्त्वे तद्वचनप्रत्याख्यानाद्धातुचतुष्टयमियेष । पारिदृढति । इतो मनुष्यजातेरिति ङीष् ॥

प्रभौ परिवृढः ॥ २१ ॥ परिवृढ इति किमर्थं निपात्यते। न प-रिपूर्वाद्वृहे नेड्भवतीत्यत्रोच्यते। परिवृढनिपातनं च। किम्। न-कारहकारलोपार्थम्। परस्य च ढत्वार्थम्। अनिड्वचने हि रभावा-प्रसिद्धिरलघुत्वात्। नलोपवचनं चेत्येव। परिवृढीयानिति। रऋतो हलादेर्लघोरिति रभावो न स्यात्। इह च परिव्रढय्य गत इति ल्य-पि लघुपूर्वस्येत्ययादेशो न स्यात्। इह च पारिवृढीकन्येति गुरूपो-त्तमलक्षणः ष्यङ् प्रसज्येत ॥

घुषिरविशब्दने ॥ २३ ॥ किमर्थमविशब्दन इत्युच्यते। न वि-शब्दने चुरादिणिचा भवितव्यम्। एवं तर्हि सिद्धे सति यदविशब्दने इत्याह तज्ज्ञापयत्याचार्यो विशब्दने घुषेर्विभाषा णिज् भवती-ति। किमेतस्य ज्ञापनेप्रयोजनम्। महीपालवचः श्रुत्वा जुघुषुः पु-ष्यमाणवाः। एष प्रयोग उपपन्नो भवति ॥

णेरध्ययने वृत्तम् ॥ २६ ॥ किं पुनरिदमध्ययनाभिधायिकायां निष्ठायां निपातनं क्रियते आहोस्विदध्ययने चेद्वृतिर्वर्त्तत इति। किं

---

प्रभौ परि। परिव्रढ्य्येति। कथं पुनरत्र ल्यबादेशो यावता परिवृढमाचष्टइति णि-चि कृते क्त्वाप्रत्यये च क्त्वान्तस्य कृदन्तत्वात्तेनैव परेरन्तर्भावात्समासाभावः। नैष दोषः संग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमात्परिशब्दं पृथक् कृत्वा वृढ-शब्दादेव णिच् क्रियते ततो व्रढिशब्दस्य धातुत्वात् क्त्वाप्रत्यये कृते परेः क्त्वान्तेन समास इति सिद्धो ल्यबादेशः। णाविष्टवद्भावाद्रभावः ॥

घुषिरवि। किमर्थमिति। घुषिरविशब्दार्थ इति भूवादौ पठ्यते सविशब्दने नैव वर्तते। यस्तु घु षिर्विशब्दने इति चुरादौ पठ्यते तस्माण्णिचाभवितव्यम्। केवलश्चेह घु-षिरुपात्त इति नार्थो विशब्दनप्रतिषेधेन। विशब्दनं स्वाभिप्रायस्य शब्देन प्रकाशनमु-च्यते। एवं तर्हीति। अविशब्दनएवेडभावे सिद्धे इत्यर्थः। किमेतस्येति। किन्निष्ठाया-मेव घुषितं घोषितमिति रूपद्वयविधिः प्रयोजनमथान्यदपीति प्रश्नः। जुघुषुरिति। घो-षयांचक्रुरित्यपि भवति। अन्येत्वनित्यण्यन्ताश्चुरादय इति सामान्येन ज्ञाप्यतइत्याहुः। के चिच्चिति स्मृत्यामिति इदित्वं चुरादिणिचोऽनित्यत्वस्य ज्ञापकमाहुः। इदित्त्वेन नु-म्विधाने प्रयोजनं चिन्ति इत्यादौ नलोपाभावः। यदि च चुरादिणिच् नित्यः स्यात् तदा चिन्त स्मृत्यामित्येव पठ्येत णिचि सति नलोपाप्रसङ्गात् ॥

णेर। किं पुनरिति। किमभिधेयत्वेन क्तान्तस्याध्ययनमाश्रीयते अथ धात्वर्थसा-धनत्वेनेति प्रश्नः। अध्ययने चेदिति। अध्ययनविषये धात्वर्थ इत्यर्थः। वृत्तो गुण इति।

वा-तः। यद्यध्ययनाभिधायिकायां निष्ठायां निपातनं क्रियते। सिद्धं वृत्तोगुणः वृत्तं पारायणम्। वृत्तं गुणस्य वृत्तं पारायणस्येति न सिध्यति। अथ विज्ञायते अध्ययने चेद् वृतिर्वर्त्ततइति न दोषो भवति। यथा न दोषस्तथास्तु। अध्ययने चेद्वृतिर्वर्त्तत इत्यपि वै विज्ञायमाने न सिध्यति। किं कारणम्। वृत्तिरयमकर्मकः अकर्मकाश्चापिण्यन्ताः। सकर्मका भवन्ति। अकर्मकश्चात्र वृतिः। कथं पुनर्ज्ञायते अकर्मकोऽत्र वृत्तिरिति। अकर्मकाणां भावे क्तो भवतीत्येवमत्र भावे क्तो भवति। तत्र उदितः क्त्वि विभाषा यस्य विभाषेति इट्प्रतिषेधो भवति। अथ णिग्रहणं किमर्थम्। वृत्तनिपातने णिग्रहणमण्यन्तस्यावधारणप्रतिषेधार्थम् *। वृत्तनिपातने णिग्रहणं क्रियते। अण्यन्तस्यावधारणं माभूदिति। कैमर्थ्क्यान्नियमो भवति, विधेयं नास्तीति कृत्वा। इह चास्ति विधेयं ण्यधिकाद् वृतेरिट्प्रतिषेधो विधेयः। तत्रापूर्वोविधिरस्तुनियमोस्त्विति। अपूर्व एव विधिर्भविष्यति। ननियमः। कुतो नु खल्वेतदधिकार्थं आरम्भे सतिण्यधिकस्यभविष्यतिन पुनः सनधिकस्य वा स्याद् यङधिकस्य वेति। तस्माण्णिग्रहणं कर्तव्यम्। अथ किमर्थं निपातनं क्रियते। निपातनं णिलोपेड्गुणप्रतिषेधार्थम्*।

---

अध्ययनसामान्यं वृत्तशब्दस्याभिधेयं न तु तद्विशेष इति विशेषवाचिशब्दप्रयोगाविरोधः। गुणः पदक्रमसंहितारूपोध्ययनविशेषः वृत्तो निष्पादित इत्यर्थः। वृत्तं गुणस्येति। भावे निष्ठा तस्या अध्ययनं नाभिधेयमिति वृत्तशब्दप्रयोगाप्रसङ्गः। न सिध्यतीति। ण्यन्तस्येति भावः। ण्यन्तस्य सकर्मकत्वाद् वृत्तं गुणस्येति भावे निष्ठाया अप्रसङ्गात्तयोरेव कृत्यक्तखलर्था इत्यत्र भावेऽकर्मकेभ्य इत्यनुवर्तनात्। वृत्तिरयमिति। केवलस्य सकर्मकत्वाशङ्कां निराकृत्य ण्यन्तस्य सकर्मकत्वं प्रतिपादयति। प्रयोज्यमन्तरेण णिचो भावात्तेनास्य सकर्मकत्वम्। तत्रैतत्स्याद्भवतु सकर्मकत्वं कर्मण्येवात्र निष्ठा भवत्वित्याह। अकर्मकश्चात्रेति। वृत्तं गुणस्येत्यादावित्यर्थः। अकर्मकाणामिति। भावे क्तविधानादकर्मकत्वं प्रतीयतइत्यर्थः। कर्मणि क्ते वृत्तो गुण इति सामानाधिकरण्येन भाव्यं भावे तु क्ते शेषविवक्षायां षष्ठी भवति। तस्मान्नैतद् ण्यन्तस्य वृत्तेरूपमपि तु केवलस्य तस्य च यस्य विभाषेतीट्प्रतिषेधोस्त्येव। एवं चाध्ययनमभिधेयं भवतु विषयो वेति न कश्चिद्दोषः। अत्राहुः। वृत्तं गुणस्येति सकर्मकादपि ण्यन्तान्नपुंसके भावे क्त इति भावे क्तोस्त्येव। यस्तु निष्ठेति भूते क्तः स एवाकर्मकेभ्यो भावे भवति वृत्तं गुणस्येत्यत्र

निपातनं क्रियते णिलोपार्थमिड्गुणप्रतिषेधार्थं च ॥

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥२७॥ दान्तशान्तयोः किं निपात्यते । दान्तशान्तयो रुपधादीर्घत्वं च । किं च । णिलोपेट्प्रतिषेधौ च । उपधादीर्घत्वमनिपात्यं वृद्ध्या सिद्धम् । न सिध्यति । मितां ह्रस्व इति ह्रस्वत्वेन भवितव्यम् । एवं तर्ह्यनुनासिकस्य क्विझलोः क्ङितीत्येवात्र दीर्घत्वं भविष्यति । न सिध्यति । किं कारणम् । णिचा व्यवहितत्वात् । णिलोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव । प्रतिषिध्यतेऽत्र स्थानिवद्भावो दीर्घविधिं प्रति न स्थानिवदिति । अथ स्पृष्टच्छन्नयोः किं निपात्यते । स्पृष्टच्छन्नयोरुपधाह्रस्वत्वं च । किं च । णिलोपेट्प्रतिषेधौ च ॥

रुष्यमत्वरसंघुषास्वनाम् ॥ २८ ॥ घुषिस्वनोर्वावचनमिट्प्रतिषेधाद्विप्रतिषेधेन * । घुषिस्वनोर्वावचनमिट्प्रतिषेधाद्भवति विप्रतिषेधेन । घुषेरिट् प्रतिषेधस्यावकाशः । असंपूर्वादविशब्दनम् । घुष्टा रज्जुः । घुष्टो मार्गः । वावचनस्यावकाशः । संपूर्वाद्विशब्दनम् । सं-

---

ष वर्तमानत्वं प्रतीयते न भूतत्वम् । अत्रोच्यते । नपुंसके भावे क्त इत्ययमपि क्तः सकर्मकेभ्यो न भवति तयोरेव कृत्यक्तखलर्था इत्यत्र क्तमात्रस्य ग्रहणात्तत्र च भावे चाकर्मकेभ्य इत्यनुवर्तनादवश्यं चैतद् बोद्धव्यमन्यथा नपुंसके भाव उपसंख्यानमित्यस्मिन्नशेषविज्ञानात्सिद्धमिति प्रत्याख्याते सकर्मकाद्भावे क्ते विधीयमाने कर्मणो द्वितीया प्रसज्येत । ग्रामं गतमोदनं भुक्तमिति । अथ णिग्रहणमिति । केवलस्य यस्य विभाषेति प्रतिषेधस्य सिद्धत्वात् सामर्थ्याद् ण्यन्तस्य निपातनं विज्ञास्यते । वृत्तनिपातन इति । असति णिग्रहणे ण्यन्तस्यैवेदं निपातनं न तु सनन्तस्य यङन्तस्य वेति निश्चयाभावाद्विधिरशक्योऽभ्युपगन्तुमिति नियमो विज्ञायेत । णिलोपार्थमिति । निष्ठायां सेटीति वचनादनिटि निष्ठायां णिलोपो न प्राप्नोति । णेरनिटीत्यनेनापि तक्रकौण्डिन्यन्यायेन सेटि निष्ठायां विधीयमानेन णिलोपेनानिटि निष्ठायां णिलोपस्य बाधनात् प्रत्ययलक्षणेन प्राप्तस्य गुणस्येटश्चाभावो निपात्यते ॥

वा दान्त । उपधादीर्घत्वमिति । पूर्वत्रासिद्धे न स्थानिवदिति वक्तव्यम् । तस्मिंश्चोच्यमाने द्विर्वचनादीनि वरेयलोपस्वरवर्जं न वक्तव्यानीति दीर्घविधौ स्थानिवत्त्वनिषेधाभावादनुनासिकस्य क्विझलोः क्ङितीति दीर्घत्वाप्रसङ्गः । सूत्रारम्भाश्रयेण तु दीर्घसिद्धिं भाष्यकृन्मन्यते ।

घुष्टं वाक्यं संघुषितं वाक्यम्। संपूर्वादविशब्दने उभयं प्राप्नोति सं-घुष्टा रज्जुः। संघुषिता रज्जुः। वावचनं भवति विप्रतिषेधेन। स्वन इट्प्रतिषेधस्यावकाशः। अनाङ्पूर्वान्मनोऽभिधानम्। स्वान्तंमनः। वावचनस्यावकाशः। आङ्पूर्वादमनोभिधानम्। आस्वान्तो देवदत्तः आस्वनितो देवदत्तः। आङ्पूर्वान्मनोभिधान उभयं प्राप्नोति। आ-स्वान्तं मनः आस्वनितं मनः। वावचनं भवति विप्रतिषेधेन॥

हृषेर्लोमसु॥ २९॥ हृषेर्लोमकेशकर्तृकस्येति वक्तव्यम्*। हृष्टानि लोमानि। हृषितानि लोमानि। हृष्टं लोमभिः। हृषितं लो-मभिः। हृष्टाः केशाः। हृषिताः केशाः। हृष्टं केशैः। हृषितं केशैः। विस्मितप्रतिघातयोरिति वक्तव्यम्*। हृष्टो देवदत्तः। हृषितो देव-दत्तः हृष्टा दन्ताः। हृषिता दन्ताः॥

अपचितश्च॥ ३०॥ अपचित इति किं निपात्यते। चायश्चिभावो निपात्यते। अपचितः। क्तिनि नित्यमिति वक्तव्यम्*। अपचितिः॥

आर्द्धधातुकस्येड् वलादेः॥३५॥ आर्द्धधातुकग्रहणं किमर्थम्। वलादिग्रहणमार्द्धधातुकविशेषणं यथा विज्ञायेत। वलादेरार्द्धधातु-कस्येति। अथाक्रियमाणे आर्द्धधातुकग्रहणे कस्य वलादिग्रहणं वि-शेषणं स्यात्। अङ्गस्येति वर्तते। अङ्गविशेषणम्। तत्र को दोषः। अङ्गस्य वलादेरादित इट् प्रसज्येत। अडाड्वत्। तद्यथा। अडाटा-वङ्गस्यादितोभवतस्तद्वत्। क्रियमाणेऽपिआर्द्धधातुकग्रहणे ऽनिष्टःश-क्योविज्ञातुम्। वलादेरार्द्धधातुकस्ययदङ्गमिति। अक्रियमाणे चेष्ट-मङ्गस्ययोवलादिरिति। किं चाङ्गस्यवलादिर्निमित्तम्। यस्मिन्नङ्ग-मित्येतद्भवति। कस्मिंश्चैतद्भवति प्रत्यये। यावता क्रियमाणेपि चानि-

---

हृषेर्लोमसु। सूत्रकारो लोमशब्दं सामान्यशब्दंमत्वा केशग्रहणं न कृतवान्। तथा च लोमनखंस्पृष्ट्वा शौचं कर्तव्यमित्युक्ते केशस्पर्शेऽपि शौचं क्रियते।वार्तिककारस्तु मूर्ध्वजाः केशाः। अङ्गान्तरेजातानि लोमानीति भेदं मत्वा आह। हृषेर्लोमकेशकर्तृकस्येति।

अपचित। चिभाव इति। एतच्चोपलक्षणमिट् प्रतिषेधस्यापि निपातनात्। क्ति-नीति। क्तिन्नावादिभ्य इति क्तिन्प्रत्ययोयमन्यथा गुरोश्च हल इत्यकारः स्यात्।

आर्द्धधातु। रुदादिभ्य एवेति। सार्वधातुक एवेति नियमो रुदविदेति क्वासनोः

ष्टं विज्ञायते अक्रियमाणे चेष्टं तत्राक्रियमाणे एवेष्टं विज्ञास्यामः। इदं तर्हि प्रयोजनम्। इह मा भूत्। आस्ते शेते। एतदपि नास्ति प्रयोजनम्। रुदादिभ्यः सार्वधातुक इत्येतन्नियमार्थं भविष्यति। रुदादिभ्यः एव सार्वधातुक इट् भवति नान्येभ्य इति। एवमपि वृश्चत्वं वृश्चता। अत्र प्राप्नोति। धातोरिति वर्तते। एवमपि लूभ्यां पूभ्यामत्र प्राप्नोति। एवं तर्हि विहितविशेषणं धातुग्रहणम्। धातोर्यो विहितः। ननु च धातोरेवायं विहितः। न चायं धातोरित्येवं विहितः। क्व पुनर्धातुग्रहणं प्रकृतम्। ऋत इद्धातोरिति। तद्वै षष्ठीनिर्दिष्टं पञ्चमीनिर्दिष्टेन चेह विहितं शक्यते विशेषयितुम्। अथेदानीं षष्ठीनिर्दिष्टे नापि विहितं शक्यते विशेषयितुम्। शक्यमार्द्धधातुकग्रहणमकर्तुमिति। इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमाध्यायस्य द्वितीये पादे प्रथममाह्निकम्॥

स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ३६ ॥ स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसंख्यानम् * । स्नुक्रमोरनात्मनेपदनिमित्तेचेत्कृत्युप-

---

कित्त्वविधानाच्च भविष्यत्यनिटः सनो रुदादेश्चलन्ताच्चेति कित्वस्य सिद्धत्वात् कोप्यनिट औपदेशिककित्त्वसद्भावात्। लूभ्यामिति। क्विबन्ता धातुत्वं न जहति रूपार्थाविकल्यान्। विहितविशेषणमिति। यद्यपि ऋत इद्धातोरित्यत्र धातुशब्दोर्थ पदार्थ कस्तथापि सदृशशब्दान्तानुमानादिह धातोरित्ये तत् स्वरूपदार्थकमाश्रीयते। धातोरित्येवं विहितस्येति। पञ्चमीनिर्दिष्टेति। पञ्चम्यन्तानुकरणे धातोरित्यस्मिन् धातोरित्येवं विहितस्येति लभ्यते नान्यथा। अथेदानीमिति। धातुशब्दोत्र धातुशब्दस्यानुकरणं तेन धातुशब्दस्य यः संबन्धी प्रत्ययस्तस्येड् भवति। यश्च धातुशब्दव्यापारोत्पन्नः स तत्संबन्धी भवतीत्यर्थः॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे सप्तमाध्यायस्य द्वितीये पादे प्रथममाह्निकम्॥

स्नुक्रमोरना। स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थं वचनमनात्मनेपदनिमित्तत्वे एवेड् यथा स्यात्। आत्मनेपदनिमित्तत्वे मा भूत्। किति सनि च प्रस्नुतः प्रसुस्नूषतीति क्रमेस्तु निष्ठायां क्रान्त इति श्र्युकः किति सनि ग्रहगुहोश्च यस्य विभाषेति प्रतिषेध एव भवति। पुरस्तात्प्रतिषेधस्य ह्येतदेव प्रयोजनमिड्मात्रस्य प्रतिषेधो यथा स्यादिति।

संख्यानं कर्तव्यम् । प्रस्नविता । प्रस्नवितुम् प्रस्नवितव्यम् । प्रक्रमिता । प्रक्रमितुम् । प्रक्रमितव्यम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अविशेषेण स्नुक्रमोरिडागममुक्त्वा आत्मनेपदपरे नेति वक्ष्यामि । आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधः * । आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधो वक्तव्यः । तत्परपरे तावत् । प्रसुस्नूषिष्यते । प्रचिक्रंसिष्यते । सीयुटि । प्रस्नोषीष्ट प्रक्रंसीष्ट । एकादेशे । प्रस्नोष्यन्ते । प्रक्रंस्यन्ते । एकादेशे कृते व्यपवर्गाभावान्न प्राप्नोति । अन्तादिवद्भावे न व्यपवर्गः । उभयत आश्रये नान्तादिवत् । एवं तर्ह्येकादेशः पूर्वविधिं प्रति स्थानिवद्भ-

---

तेन प्रतिषेधबाधनार्थमेतन्न भवति । अथ वा आर्धधातुकस्येड्वलादेरित्यस्यानुवर्तनादयमर्थो भवति यत्र पूर्वेण इड्विहितस्तत्रैवानेन भवति । पूर्वसूत्रेण च प्रतिषेधविषयपरिहारेण इड्विधानात्तत्रैवायं विधिः प्रवर्तमानो नियमाय संपद्यते । अथ वा आत्मनेपदनिमित्तत्वेन भवतीति प्रसज्य प्रतिषेध आश्रीयतइति कृदादौ न दोषः । प्रस्नवितेति । य एवात्मनेपदविषयः स्नौतिः स एवात्रापि योग्यताश्रयणेन निमित्तव्यवहारदर्शनादात्मनेपदनिमित्तं भवतीति इण्न प्राप्नोतीति वचनम् । कर्मकर्तृविषयत्वाच्च स्नौतिरिति कर्मकर्तर्यात्मनेपददर्शनाद्भवति तद्योग्यः । एवं प्रस्नवितुं प्रस्नवितव्यमिति भावकर्मविषयत्वाद्भावकर्मणोरात्मनेपदोपलम्भादात्मनेपदनिमित्त स्नौतिः । प्रक्रमितेति । आदिकर्मणोन्यत्र प्रशब्दो विज्ञेयः । आदिकर्मणि तु कर्तरि चात्मनेपदविषयात् क्रमतीति प्रतिषेधेन भाव्यम् । प्रक्रमितुं प्रक्रमितव्यमिति । भावकर्मविषयत्वात्प्रारम्भविषयत्वाद्वा आत्मनेपदनिमित्तत्वम् । प्रसुस्नूयिष्यत इति । आत्मनेपदपरः स्यस्तत्परः सन्निति स्येन व्यवधानात्सन इट्प्रतिषेधो न प्राप्नोति । ननु च व्यवहितेऽपि परशब्दस्य वर्तनात्प्रतिषेधो भविष्यति । नैतदस्ति । आत्मनेपदपरे नेति न सूत्रन्यासः किं तर्ह्यर्थप्रदर्शनपरमेतत् । स्नुक्रमोर्नात्मनेपदइति तु सूत्रन्यासः तत्र तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्व्यवहितस्य प्रतिषेधाप्रसङ्गः । ननु च सनिग्रहगुहोश्चेति प्रतिषेधो भविष्यति । नह्ययमिड्विधिः पूर्वप्रतिषेधविषय इति प्रागेवोक्तम् । यद्यप्युक्तमविशेषेणेति तस्यायमर्थः । पूर्वसूत्रेण यः स्नुक्रमोरविशेषेणेड्भ्रस्तमनद्यात्मनेपदपरे प्रतिषेधो विधेयः एवं तर्हि प्रचिक्रंसिष्यतइत्येतदेवात्रोदाहरणं स्नौतिस्तु साहचर्यादुदाहृतः । प्रस्नोषीष्टेति । आत्मनेपदमेवात्र सीयुडार्धधातुकं सीयुटस्तदङ्गत्वात्र त्वात्मनेपदपरमिति प्रतिषेधाप्रसङ्गः । प्रस्नोष्यन्तइति । अन्तरङ्गत्वान्नित्यत्वाच्च पूर्वमेकादेशेन भाव्यमिट्प्रतिषेधस्तु बहिरङ्गोऽनित्यश्च । वार्णादाङ्गं बलीयइत्यनेन त्वेकनिमित्ताप्रवृत्तिर्वार्णस्य

वतीति स्थानिवद्भावाद्द्व्यपवर्गः। तत्परपरसीयुटोस्तर्हि प्रतिषेधो वक्तव्यः। सिद्धंतु स्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् *। सिद्धमेतत्। कथम्। स्नोरात्मनेपदेनसमानपदस्थस्य नेड् भवतीति वक्तव्यम्। यदि स्नोरात्मनेपदेनसमानपदस्थस्य इड् न भवतीत्युच्यते प्रस्नवितेवाचरति प्रस्नविचीयतेऽत्र न प्राप्नोति। बहिरङ्गत्वाच्च। बहिरङ्गलक्षणमत्रात्मनेपदम्। क्रमेश्च *। क्रमेश्चात्मनेपदेन समानपदस्थस्येड् न भवतीति वक्तव्यम्। अथ किमर्थं क्रमेः पृथग् ग्रहणं क्रियते। व स्नुक्रमिभ्यामित्येवोच्येत। कर्तरि चात्मनेपदविषयात् कृति नेतिवक्ष्यति तत् क्रमेरेव यथा स्यात्। स्नोर्मा भूत्। व्यतिप्रस्नविता। व्यतिप्रस्नवितारौ। व्यतिप्रस्नवितारः। कर्तरि चात्मनपदविषयात् कृति प्रतिषेधः *। कर्तरि चात्मनेपदविषयात् कृति प्रतिषेधो वक्तव्यः। प्रक्रन्ता। उपक्रन्ता। तत्तर्हि इदं बहु वक्तव्यम्। स्नोरात्मनेपदेनसमानपदस्थस्येड् न भवतीति वक्तव्यम्। क्रमश्चेति वक्तव्यम्। कर्तरि चात्मनेपदविषयात्। कृतीति वक्तव्यम्। सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं स्नुक्रमोरनात्मनेपदनिमित्ते चेत् कृत्युपसंख्यानमिति। नैष दोषः। स्नुक्रमी एवात्मनेपदनिमित्तत्वेन विशेषयिष्यामः। न चेत् स्नुक्रमी आ-

---

प्रतिषिध्यते न तु भिन्ननिमित्तेति स्यादेवेडागमः। अत एवेटापि कर्तव्ये वार्णादाङ्गमित्यस्यानुपस्थानम्। एकादेशः पूर्वविधाविति। ननु चार्धधातुकस्येट्प्रतिषेध उच्यते। न चार्धधातुकमेकादेशात्पूर्वं व्यपवर्गाभावात्। अत्राहुः। पूर्वस्मादपि विधिः पूर्वविधिरिति समासाश्रयणाददोषः। प्रस्नविचीयत इति। तृजन्तात् क्यङ् रीङ् ऋत इति रीङादेशः। बहिरङ्गलक्षणमिति। तृजन्तादाचारलक्षणे क्रियान्तरे क्यङ्। तत आत्मनेपदमिडागमस्तु पूर्वमेव तृजन्तावस्थायामुत्पन्नो न शक्यो निवर्तयितुमित्यर्थः। यद्येवं प्रचिक्रंसिष्यतइत्यत्राप्यात्मनेपदस्य बहिरङ्गत्वात्प्रतिषेधो न प्राप्नोति। नैष दोषः। समानपदस्थस्येति वचनादिडागमेन पदावस्थापेक्षणीया। तत्र तृचि विभक्तावुत्पन्नायां लब्धेऽपि पदत्वे आत्मनेपदस्यासन्निधानादिडागमः प्रवर्तते। प्रचिक्रंसिष्यतइत्यत्र तु वटस्य पदावस्थायामेवात्मनेपदसंनिधानात्प्रतिषेधप्रवृत्तिः। आत्मनेपदविषयादिति। तद्योग्यादित्यर्थः। प्रक्रन्तेति। प्रारम्भविषयत्वात् क्रमेः प्रापाभ्यां समर्थाभ्यामित्यात्मनेपदविषयत्वम्। स्नुक्रमी एवेति। आत्मनेपदनिमित्ते इति प्रथमाद्विवचनं न सप्तमी।

त्मनेपदस्य निमित्ते इति। कथं पुनर्धातुर्नामात्मनेपदस्य निमित्तं स्यात्। धातुरेव निमित्तम्। आह हि भगवाननुदात्तङित आत्मनेपदम्। शेषात्कर्त्तरिपरस्मैपदमिति। यत्र तर्हि धातुर्नाश्रीयते भावकर्मणोरिति। अत्रापि धातुरेवाश्रीयते। भावकर्मवृत्ताद्धातोरिति। कथं प्रक्रमितव्यम्। सत्यात्मनेपदे निमित्तशब्दो वर्तते। कथं प्रक्रन्ता। उपक्रन्ता। तस्मादसत्यपि। कथं प्रक्रमितव्यम्। उपक्रमितव्यम्। तस्मात् सत्येव। कथं प्रक्रन्ता उपक्रन्ता। वक्तव्यमेवैतत्। कर्त्तरि चात्मने पदविषयात्कृतीति। अथ वा कृतीति वर्तते॥

ग्रहोऽलिटि दीर्घः॥ ३७॥ ग्रहेर्दीर्घत्वे इड्ग्रहणम् *। ग्रहेर्दीर्घत्वे इड्ग्रहणं कर्तव्यम्। इटो दीर्घ इति वक्तव्यम्। न वक्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। आर्द्धधातुकस्येड्वलादेरिति। एवमपि कर्त्तव्यमेव। अकरणे ह्यसंप्रत्ययः षष्ठ्यभावात्*। अक्रियमाणे हि इड्ग्रहणे असंप्रत्ययः स्यात्। किं कारणम्॥ षष्ठ्यभावा-

---

सप्तम्यां हि भावादेरात्मनेपदनिमित्तस्याश्रयणात्प्रस्नवितव्यमित्यादावपि प्रतिषेधः स्यात्। कथं पुनरिति। वृत्यादिरर्थ आत्मनेपदस्य निमित्तं न धातुरिति भावः। धातुरेवेति। वृत्याद्यर्थविशिष्टः। भावकर्मवृत्तादिति। भावकर्मणो धातोरेव विषयभावेन विशेषणे इत्यर्थः। सत्यात्मनेपदे इति। न योग्यतामात्राश्रयमिह निमित्तत्वमाश्रीयते किं तु कार्यं कुर्वतः। यद्येवमर्थेऽपि निमित्तत्वेनाश्रीयमाणे दोषाभावात् कस्मात् सुक्रमी एवेत्युक्तम्। उच्यते। अर्थे निमित्तत्वेनाश्रीयमाणे ऽनुपसर्गाद्वेत्यात्मनेपदमर्थनिरपेक्षत्वादसंगृहीतं स्यादिति धातुरेव निमित्तत्वेनाश्रितः। यदि सति कार्येनिमित्तमाश्रीयते तदा निमित्तग्रहणं न कर्तव्यमनात्मनेपद इति सप्तम्याश्रयणात्। नैतदस्ति। तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषायां सत्यां सत्सप्तम्याश्रयणस्याप्रकृतत्वात्। अथ वा कृतीति वर्ततइति। तत्र कृद्ग्रहणं वाक्यभेदेन क्रमिणैव संबध्यते न स्नौतिना। अनात्मनेपदनिमित्त इति च प्रसज्यप्रतिषेधस्तेनायमर्थो यदाप्यात्मनेपदयोग्यः क्रमिस्तदा ततः परस्य कृत इड् न भवति॥

ग्रहोलि। इड्ग्रहणमिति। आदेशस्य स्थानिनिर्देशार्थमिड्ग्रहणं कर्तव्यम्। एवमपीति। सत्येव प्रथमान्तइड्ग्रहणे षष्ठ्यन्तमन्यत्कर्तव्यमित्यर्थः। अक्रियमाणे हीति। प्रथमान्तमिड्ग्रहणमयोग्यत्वान्न संबध्यते अच्परिभाषोपस्थानाच्चाज्मात्रस्य ग्रहेः परस्य दीर्घप्रसङ्गः। असंप्रत्यय इति। ग्रहेः परस्य इटो दीर्घ इत्ययमिष्टः संप्रत्ययो न स्यात्।

त्। षष्ठीनिर्दिष्टस्य आदेशा उच्यन्ते। न चात्र षष्ठीं पश्यामः। क्रियमाणे चापीड्ग्रहणे चिखदिटः प्रतिषेधो वक्तव्यः। ग्राहिष्यते। यङ्लोपे च प्रतिषेधो वक्तव्यः। जरीगृहिता जरीगृहितुम्। जरीगृहितव्यम्। यदि पुनरिड्दीर्घ आगमान्तरं विज्ञायेत। इड्दीर्घ इति चेद्विप्रतिषिद्धम् *। इड्दीर्घ इति चेद्विप्रतिषिद्धं भवति। यदि इण्न दीर्घः। अथ दीर्घो नेट्। इड्दीर्घस्येति विप्रतिषिद्धम्। प्रतिषिद्धस्य च पुनर्विधाने दीर्घत्वस्याभावः *। प्रतिषिद्धस्य पुनर्विधाने दीर्घत्वस्याभावः। वुबूर्षते। विवरिषते। विवरीषते। अत्रापीड् दीर्घ इत्यनुवर्तिष्यते। यत्तर्हि विदेशस्थं प्रतिषिध्य पुनर्विधानं तन्न सिध्यति। जॄव्रश्च्योः क्त्वि श्र्युकः कितीत्यनेन प्रतिषिद्धे दीर्घत्वं न प्राप्नोति। जरीत्वा। ईटो विधिरिटः प्रतिषेधो यथा प्राप्त इड्दी-

---

क्रियमाणइति। प्राकरणिकमिटमनपेक्ष्येट इत्युच्यमाने सर्वस्येटो विशेषाभावाद्दीर्घप्रसङ्गाच्चिखदिटो दीर्घः प्रतिषेध्यः। जरीगृहीतेति। जरीगृह्यशब्दात् तृच इट्। अल्लोपयलोपयोः कृतयोर्हि प्रयोगे द्विर्वचने स एव ग्रहिरिति इटो दीर्घप्रसङ्गः। दीर्घविधौ स्थानिवत्त्वनिषेधादकारेण व्यवधानाभावः। यदि पुनरिति। इडिति वर्तते दीर्घ इति च निर्दिश्यते तत्र दीर्घ इड् भवतीति सामर्थ्याद्व्यक्तिपरित्यागेनेकारजातिराश्रीयते दीर्घग्रहणाच्च दीर्घव्यक्तिसमवेता सा विधीयते टकारो देशविध्यर्थ इति सामर्थ्यादीडागमविधिः। एवं च षष्ठीनिर्दिष्टमिड्ग्रहणं न कर्तव्यम्। चिखदिट्चास्यापवाद इति तत्र दोषाभावः न च कस्य चित्स्थानिनो दीर्घत्वं विधीयतइति स्थानिवत्त्वानिषेधात्पूर्वस्मादपि विधौ स्थानिवत्त्वादकारेण व्यवधानाच्च यङ्लोपे इटो प्रसङ्गः। अथ त्वागमान्तरेऽपि दीर्घत्वमस्तीत्येवायं दीर्घविधिस्तदा यङ्लोपे दोषो न परिहृतः। इतरो व्यक्तिपदार्थाश्रयेणाह। इड्दीर्घ इति चेदिति। विवरीषतइति। सनीटि प्राप्ते वृतोवेत्यनेन पक्षे ईटि च प्रसक्ते सनिग्रहगुहोश्चेत्यनेनोभयस्मिन्नपि प्रतिषिद्धे इट्सनिवेति पक्षे इट् विधीयते ततः पुनरीटो विधानाभावाद्दीर्घ ईकारः पक्षे न श्रूयते। इटस्तु पक्षे दीर्घविधौ दोषाभावः। अत्रापीति। इट्सनिवेत्यत्र दीर्घ इति वृत इति सिद्धं त्रैरूप्यम्। विदेशस्थमिति। दीर्घग्रहणानुवृत्तेरत्रासंभवः। जरीत्वेति। उदात्तत्वादिट् प्राप्तो वृतोवेत्यनेन पक्षे ईट् च श्र्युकः कितीति प्रतिषिद्धः। इकारजात्याश्रयणादीटोऽपि प्रतिषेधः प्रवर्तते। ततो जॄव्रश्च्योक्त्वीत्यनेनेटि विधीयमाने पक्षे दीर्घो न स्यात्। एतत्परिहरति। ईटो विधिरिटः प्रतिषेध इति। वृतो वेत्यनेन पक्षे ईडागमो विधीयते। श्र्युकः

र्घो भविष्यति । यदि तर्हीटो ग्रहणे ईटो ग्रहणं न भवति । जरीत्वा । न त्वा सेडिति कित्त्वप्रतिषेधो न प्राप्नोति । इह चाग्रहीदिति इट ईटीति सिज्लोपो न प्राप्नोति । इह चाग्रहीत् । नेटीति वृद्धिप्रतिषेधो न प्राप्नोति । मा भूदेवं ह्म्यन्तानामित्येवं भविष्यति । अत्रापि नेटीत्येवानुवर्तते । तच्चावश्यमिड्ग्रहणमनुवर्त्यमधाक्षीदित्येवमर्थम् । तथा ऽग्रहीध्वमग्रहीढं विभाषेट इति मूर्धन्यो न प्राप्नोति । तस्मान्नैयच्छक्यंवक्तु मिटो ग्रहणे ईटो ग्रहणं न भवतीति । भवति चेत्प्रतिषिद्धस्य पुनर्विधाने दीर्घाभाव इत्येव । तस्मादशक्य इड् दीर्घ आगमान्तरं विज्ञातुम् । न चेदिविज्ञायते इटो ग्रहणं कर्तव्यम् । न कर्तव्यम् । आर्द्धधातुकस्येति वर्तते । ग्रह: परस्यार्द्धधातुकस्य दीर्घत्वं वक्ष्यामि । इहापि तर्हि प्राप्नोति । ग्रहणम् । ग्रहणीयम् । वलादेरिति वर्तते । एवमपि ग्रहीता ग्रहीतुमत्र न प्राप्नोति । भूतपूर्वगत्या भविष्यति । एवमपि ग्राहकः । अत्र प्राप्नोति । किं च इट्प्रतिघातेन खल्वपि दीर्घत्वमुच्यमानमिट वाधेत । तस्मादिटो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । आर्द्धधातुकस्येड्वलादेरिति । ननु चोक्तमेवमपि कर्तव्यमग्रहणे ह्यसंप्रत्ययः षष्ठ्यनिर्देशादिति । नैष दोषः । ग्रह इत्येषा पञ्चमी इडिति प्रथमायाः

---

कितीत्यनेनेडित्यधिकाराद्व्यक्तिपक्षाश्रयणाच्च निषेधं इटो न त्वीटः पाठान्तरं तु प्रकृतेर्थे दुर्योजत्वादस्माभिर्नोपन्यस्तम् । सन्मार्गसम्भवे को हि विमार्गं मतिमान् भजेत् । यदि तर्हीति । इट् प्रतिषेध ईटो यथा न भवत्येवं कार्यान्तरस्याप्यप्रसङ्गः । तस्मान्नैतदिति । इड् ग्रहणे इकाराकृतिराश्रयणीया न तु व्यक्तिः । भवति चदिति । जॄव्रश्च्योः क्त्वीतीड्विधौ दोष एवेत्यर्थः । नन्वनुवादइव विधावपि इकाराकृत्याश्रयणाज्जरित्वा जरीत्वेति रूपद्वयं भविष्यति । नैतदस्ति । विजौ जात्याश्रये लविलेत्यादावपि दीर्घः स्यात् । तस्माद्विहितस्य दीर्घस्येड्ग्रहणेन ग्रहणं न तु विधेयस्य । ग्रह इति । इडागमे कृते तदादेरार्द्धधातुकस्यादेः परस्येतीट एव दीर्घः । वलादेरिति । वलादि यद् दृष्टमित्याश्रीयते । इतरः सांप्रतिकं वलादित्वमाश्रितमिति मत्वाह । एवमपीति । भूतपूर्वगत्येति । सांप्रतिकाभावादलिटीतिनिषेधाच्च । इट् प्रतिघातेनेति । येननाप्राप्तिन्यायेनेटं वाधित्वा ऽकृतेट् कस्यैवार्द्धधातुकस्य दीर्घत्वमच् परिभाषोपस्थानाद्यच तत्र स्थितस्याचः स्या

षष्ठीं प्रकल्पयिष्यति । तस्मादित्युत्तरस्येति । एवं च कृत्वा भाष्य-दोषो भवति यदुक्तं चिण्वदिटः प्रतिषेध इति । कथम् । प्रकृतस्येट इदं दीर्घत्वम् । न च चिण्वदिट् प्रकृतः । यङ्लोपे कथम् । यङ्लोपे चोक्तमिटि सर्वत्र । क्व सर्वत्र । यद्येवं प्रकृतस्येटो दीर्घत्वमथापीड् दीर्घ आगमान्तरं विज्ञायते । यङ्लोपे चोक्तम् । किमुक्तम् । तदन्तद्विर्वचनादिति ॥

स्वरतिसूतिसूयतिधूञूदितोवा॥४४॥ अथ वेति वर्तमाने पुनर्वावचनं किमर्थम्। पुनर्वावचनं लिङ्सिचोर्निवृत्त्यर्थम् । पुनर्वावचनं क्रियते । लिङ्सिचोर्निवृत्त्यर्थम् । अथ किमर्थं सूतिसूयत्योः पृथग्ग्रहणं क्रियते । सुवतेर्मा भूत् । अथ किमर्थं धूञः सानुबन्धकस्य ग्रहणं क्रियते । धुवतेर्मा भूदिति । किं पुनरियं प्राप्ते विभाषा आहो स्विद-

---

त । नवेति । जॄव्रश्चोः क्त्वीत्यनेन तु वलादिलक्षण एवेट् प्रतिप्रसूयतइति अप्राकरणिकत्वाभावाद्दीर्घः सिध्यति । यङ्लोपे चेति । अन्यङन्तस्य स्थाने द्विर्वचनमित्यत्र पक्षे प्रकृतिप्रत्ययसम्मोहान्नष्टः स यङिः । ननु च द्विः प्रयोगो द्विर्वचनमिति पक्षस्तत्रस्थितस्तत्कथमस्थितपक्षाश्रयेण परिहारः । अत्राहुः । यङ्लोपे चोक्तमित्यत्राप्ययमभिप्रायो वार्तिककारस्य द्विः प्रयोगेद्विर्वचने पूर्वस्मादपि विधावल्लोपस्य स्थानिवत्त्वादकारेण व्यवधानाद्दीर्घाभावः । नपदान्तेत्यत्र पूर्वत्रासिद्धे न स्थानिवदिति वक्तव्यम् । तस्मिन्नुच्यमाने पदान्तवरेयलोपस्वरवर्ज्जंद्विर्वचनादीनि न वक्तव्यानीति साप्तमिके दीर्घविधौ स्थानिवत्त्वं भवत्येव । सूत्रकारमते ऽपि ग्रहेर्विहितस्येत्येवं विहितविशेषणाश्रयणाद्यङ्लोपे दीर्घाभावसिद्धिः । भाष्यकारेण त्वस्थितमपि पक्षमाश्रित्य तदन्तद्विर्वचनादिति निहतम् । अन्यभाष्यस्य दोषस्य सम्यक्परिहाराभिधानादनादरात् ॥

स्वर । अथ वेति । इट्सनिवेत्यतः । लिङ्सिचोर्निवृत्त्यर्थमिति । ननु स्वरतिग्रहणान्लिङ्सिचोरनुवृत्तिर्न भविष्यति ऋतश्च संयोगादेरितीड्विकल्पस्य सिद्धत्वात् । नैतदस्ति। नित्यार्थं स्वरतिग्रहणमित्यज्ज्ञापकं लिङ्सिन्निवृत्तेः । अथ किमर्थमिति । सूग्रहणमेव क्रियतामिति भावः । सुवतेरिति । अननुबन्धकग्रहणे न सानुबन्धकस्येति सुवतेरेव ग्रहणं स्यात् सूङ्ग्रहणे तु क्रियमाणे लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति सूयतेरेव ग्रहणं स्यात् । अस्याश्च परिभाषायाः सूङ्ग्रहणे कर्तव्ये सूतिसूयतीति भेदेनोपादानमेव ज्ञापकम् । धूञ इति । धूञ्कम्पनइति स्वादिषु क्र्यादिषु च पठ्यतइति द्वयोरपि सामान्येन ग्रहणम् । धूविधूननइत्यस्मात्तु नित्यमिड् भवति । किं पुनरिति । स्वरत्युद्देशेनायं विचारोन्येषां तूदात्तत्वात्प्राप्तवि-

प्राप्ते । कथं च प्राप्ते कथं चाप्राप्ते । यदि स्वरतिरुदात्तस्ततः प्राप्ते । अथानुदात्तस्ततोऽप्राप्ते । स्वरतिरुदात्तः पठ्यते । किमर्थं तर्हि वावचनम् । वावचनं निवृत्त्यर्थम् । वावचनं क्रियते निवृत्त्यर्थम् । अनुदात्ते हि किति वा प्रसङ्गः प्रतिषिध्य पुनर्विधानात् । अनुदात्ते हि सति किति विभाषा प्रसज्येत । स्वृत्वा । किं कारणम् । प्रतिषिध्य पुनर्विधानात् । प्रतिषिध्य किलायं पुनर्विधीयते । स यथैवैकाज्लक्षणं बाधते एवं श्र्युकः कितीत्येतमपि बाधेत । यदि तर्ह्युदात्तः । पठिष्यति विप्रतिषेधं स्वरतेर्वेट्त्वाद्धतः स्ये विप्रतिषेधेनेति तन्नोपपद्यते । किं कारणम् । स विधिरयं प्रतिषेधः । विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः । सोपि विधिर्न मृदूनामिव कार्पासानां कृतः प्रतिषेधविषय आरभ्यते । स यथैवैकाज्लक्षणं प्रतिषेधं बाधते एवमिममपि बाधिष्यते । अथ वा येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते वलादिलक्षणे इयं विभाषा आरभ्यते स्यलक्षणे पुनः प्रा-

---

भाषाया निश्चयाद्दोषाभावाच्च । स्वरतेस्तूदात्तानुदात्तप्रतिज्ञाने दोषदर्शनाद्विचारः । ऋतां च वृङ्वृञाविति परिगणनादस्योदात्तत्वं न प्रतिज्ञातम् । तत्र किमुदात्तत्वप्रतिज्ञाने न दोषः परिह्रियते अथानुदात्तत्वप्रतिज्ञाने न्यायेनेति प्रश्नः । यदि स्वरतिरुदात्त इति । ननु किति प्रत्यये श्र्युकः कितीति प्रतिषेधात्तत्राप्राप्तविभाषेयं स्यात् । नैतदस्ति । अल्पविषयत्वप्रसङ्गात् स्वरतेः प्राप्तविभाषायां तु महाविषयत्वं भवति । किमर्थमिति । यदि पक्ष इण्निवृत्त्यर्थं तदा ऋद्धनोः स्ये इतीममपीटं पक्षे निवर्तयेदिति प्रश्नः । निवृत्त्यर्थमिति । निवृत्तिः किंचिदेव विधिं बाधते न सर्वमिति भावः । सर्वविधिरिति । ऋद्धनोः स्य इत्येषः । अयं प्रतिषेध इति । प्राप्तविभाषापक्षे यथा वलादिलक्षण इट् प्रतिषिध्यते तथास्यलक्षणोऽपि प्रतिषिध्येत । अनुदात्तप्रतिज्ञाने तु द्वयोरपि विधित्वाद्विप्रतिषेधोपपत्तिः । सोऽपीति । वैधर्म्येण दृष्टान्तो यथा मृदुकार्पासकृतो रज्ज्वादिर्दुर्बलोनैवं ऋद्धनोः स्य इत्ययं विधिः । सयथैवेति । करिष्यतीत्यादौ । एवमिममपीति । न च स्वरतेरुदात्तत्वे येन नाप्राप्तिन्यायो ऽस्ति येनैकाज्लक्षणमेव प्रतिषेधं बाधेत न स्वरतिलक्षणम् । यद्येवं विप्रतिषेधानुपपत्तिः स्यलक्षणस्य विधेरपवादत्वात् । अन्यथापीष्टस्य सिद्धत्वाद् नोपपादि विप्रतिषेधः । अथ वा सविधिरयं प्रतिषेध इति विधेर्दुर्बलत्वं यदुक्तं तदनेन निराकृतम् । तत्र द्वयोस्तुल्यबलत्वादुपपद्यते विप्रतिषेधः । अथ वेति । [illegible] वापनीते द्वयोर्विप्रतिषेधोपप-

प्ते चाप्राप्ते च । अथ वा मध्येपवादाः पूर्वान्विधीन्बाधन्ते इत्येवमियं विभाषा वलादिलक्षणमिटं बाधिष्यते श्र्युलक्षणं न बाधिष्यते । अथ वा पुनरस्त्वनुदात्तः । ननु चोक्तमनुदात्ते हि किति वा प्रसङ्गः प्रतिषिध्यपुनर्विधानादिति । नैष दोषः । येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते एकाज्लक्षणे प्रतिषेधे इयं विभाषा आरभ्यते । श्र्युकः कितीत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च । अथ वा श्र्युकः कितीत्येष योग उदात्तार्थश्च येभ्यश्चानुदात्तेभ्य इट् प्राप्यते तद्बाधनार्थश्च । अथ वा श्र्युकः कितीतीहानुवर्तिष्यते । अथ वा आचार्यप्रवृत्तिर्ज्ञापयति । नेयं विभाषा उगन्तलक्षणस्य प्रतिषेधस्य विषये भवतीति । यदयं सनीवन्तर्द्धभ्रस्जदम्भुश्रिस्वयूर्णुभरज्ञपिसनामिति स्वग्रहणं करोति ॥

इणिनष्ठायाम् ॥ ४७ ॥ इडिति वर्तमाने पुनरिड्ग्रहणं किमर्थम् । नित्यार्थोयमारम्भः । नैतदस्ति प्रयोजनम् । सिद्धाच विभाषा पूर्वेणैव । तत्रारम्भसामर्थ्यान्नित्यो विधिर्भविष्यति । नात्र पूर्वेण विभाषा प्राप्नोति । किं कारणम् । यस्य विभाषेति प्रतिषेधात् । तत्रारम्भसामर्थ्याद्विभाषा लभ्येत पुनरिड्ग्रहणादिडेवेति ॥

तीषसहलुभरुषरिषः ॥ ४८ ॥ इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः* ।

---

त्तौ परत्वेन व्यवस्था । उदात्तत्वे दोषं प्रतिविधाया ऽनुदात्तत्वे प्रतिविधत्ते । अथ वेति । न चाप्राप्त एकाज्लक्षण इति । अयमेव पाठो युक्तः । केचित्तु वलादिलक्षण इति पठन्ति । वलादिमात्रविषयत्वाद्वलादिलक्षणमिति व्याचक्षते । श्र्युकः कितीत्येतस्मिन्निति । तत्र स्वत्वेत्यनेनोभयप्रसङ्गे पूर्वविप्रतिषेधो भवतीति वक्तव्यम् । येभ्यश्चानुदात्तेभ्य इति । प्रतिषेधकाण्डस्य पुरस्तात्करणस्य सर्वेट्प्रतिषेधार्थत्वात् । यदयमिति । यद्युगलक्षणं प्रतिषेधमयं विकल्पो बाधेत ततः सनिग्रहगुहोश्चेत्यस्य प्रतिषेधस्याभावादनेनैव सनि विकल्पस्य सिद्धत्वात् पुनस्तत्र विदध्यात् ॥

इणि । सिद्धेति । निरः कुष इत्यनेन ।

तीष । इषु इच्छायामिति केचित्तीदादिकमुदितमधीयते । अन्येतूदित्त्वस्य प्रयोजनमपश्यन्त इष इच्छायामिति पठन्ति । येत्विह तीषु सहेति पठन्ति तन्मतेनेह विशेषणार्थ उकारस्तत्र वार्तिककारमतेन त्रयोऽपीषयोऽननुबन्धका इह च तीषसहेति पाठसद्भाव । इषेरिति । इष आभीक्ष्ण्ये इत्यस्य क्र्यादिकस्य तु विकल्पमिच्छति वार्तिक-

इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधो वक्तव्यः । इह मा भूत् । प्रेषिता । प्रेषितुम् । प्रेषितव्यम् ॥

वसतिक्षुधोरिट् ॥ ५२ ॥ इडिति वर्तमाने पुनरिड्ग्रहणं किमर्थम् । पुनरिड्ग्रहणं नित्यार्थम् * । इडिति वर्तमाने पुनरिड्ग्रहणं क्रियते नित्यार्थम् । नित्यार्थोयमारम्भः ॥

गमेरिट् परस्मैपदेषु ॥ ५८ ॥ गमेरिट् परस्मैपदेषु चेत् कृत्युपसंख्यानम् * । गमेरिट् परस्मैपदेषु चेत् कृत्युपसंख्यानं कर्तव्यम् । जिगमिषिता । जिगमिषितुम् । जिगमिषितव्यम् । तत्तर्ह्युपसंख्यानं कर्तव्यम् । न कर्तव्यम् । अविशेषेण गमे रिडागमसमुक्त्वा आत्मनेपदपरे नेति वक्ष्यामि । आत्मनेपदपरप्रतिषेधे उक्तम् * । किमुक्तम् । आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेध इति । इहाप्यात्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधो वक्तव्यः । तत्परपरे तावत् । संजिगंसिष्यते । सीयुटि संगंसीष्ट । एकादेशे । संगंस्यन्ते । एकादेशे कृते व्यपवर्गाभावान्न प्राप्नोति । सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् * । सिद्धमेतत् । कथम् । गमेरात्मनेपदेन समानपदस्थस्य इड् न भवतीति वक्तव्यम् ॥

न वृद्भ्यश्चतुर्भ्यः ॥ ५९ ॥ वृतादिप्रतिषेधे च * । किम् । कृत्युपसंख्यानं कर्तव्यम् । विवृत्सिता । विवृत्सितुम् । विवृत्सितव्यम् । तत्तर्ह्युपसंख्यानं कर्तव्यम् । न कर्तव्यम् । अविशेषेण वृतादिभ्य इ-

---

कारः । तीदादिकस्य तु उदित्वेऽभ्युपगम्यमाने तीषसहेति पाठेऽ ननुबन्धकपरिभाषया क्रैयादिकस्यैव ग्रहणं स्यात् । इह मा भूदिति । विकल्पः । तेन इषगतावित्यस्मात्तकारादौ नित्यमिड् भवति ।

गमेः । सिद्धं त्विति । इह तु जिगमिषितेवाचरति जिगमिषिष्यीयत इति बहिरङ्गत्वादात्मनेपदस्य प्रतिषेधाभावः । केचित्तु योगविभागेनेष्टसिद्धिमाहुः । गमेः सकारादाविड् भवतीत्येको योगः ततः परस्मैपदेष्विति द्वितीयो योगो नियमार्थः । तुल्यजातीयापेक्षत्वाच्च नियमस्यात्मनेपदविषय एवेण्निवर्त्यत इति कृति परस्मैपदलुकि चेड् भवत्येव । जिगमिषितुम् । जिगमिषितव्यम् । जिगमिष त्वमिति ।

न वृद्भ्यः । सिद्धं त्विति । तेन परस्मैपदलुक्यपि प्रतिषेधो भवति । विवृत्स त्वमिति । अन्यथा न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधः स्यात् । विवृत्सिष्यीयतइत्यत्र तु पूर्ववदात्मने-

ट्प्रतिषेधमुक्त्वा आत्मनेपदपरइड्भवतीति वक्ष्यामि। आत्मनेपदपरवचने तत्परपरसीयुडेकादेशेषु डुड्वचनम् *। आत्मनेपदपरइड्वचने तत्परपरसीयुडेकादेशेष्विड्वक्तव्यः । तत्परपरे तावत्। विवर्तिषिष्यते। सीयुटि । वर्तिषीष्ट । एकादेशे । वर्तिष्यन्ते । सिद्धं तु वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनात् * । सिद्धमेतत् । कथम् । वृतादीनामात्मनेपदेन समानपदस्थस्येड् भवतीति वक्तव्यम् । चतुर्ग्रहणं तासि क्लृपिग्रहणानर्थक्यं च * । चतुर्ग्रहणं चानर्थकम् । सर्वेभ्यो वृतादिभ्यः प्रतिषेध इष्यते । तासिग्रहणं चानर्थकम् । किं कारणम् । निवृत्तत्वात्सकारस्य । निवृत्तं सकारादाविति । तास्ग्रहणं चेदानीमक्रियमाणे क्लृपिग्रहणेनापि नार्थः । एषोऽपि हि वृतादिः पञ्चमः । भवेत् क्लृपिग्रहणं न कर्तव्यम् । तास्ग्रहणं तु कर्तव्यम् । यद्धि तत्सकारादाविति न तच्छक्यं निवर्तयितुम् । टच्यपि हि प्रसज्येत । वर्तिता वर्धिता । तास्ग्रहणे चेदानीं क्रियमाणे क्लृपिग्रहणमपि कर्तव्यम् । अन्येभ्योपि वृतादिभ्यस्तासौ मा भूदिति । भवेत्तासिग्रहणं कर्तव्यम् । क्लृपिग्रहणं तु नैवकर्तव्यम् । अन्येभ्योपि वृतादिभ्यः तासौ कस्मान्न भवति । परस्मैपदेष्विति वर्तते । क्लृपेरेव च तास्परस्मैपदपरः नान्येभ्यो वृतादिभ्यः । यद्येवं, तास्ग्रहणेनापि नार्थः । टचि कस्मान्न भवति । परस्मैपदेष्विति वर्तते ॥

उपदेशे ऽत्वतः ॥ ६२ ॥ तासावत्वत्प्रतिषेधे घसेः प्रतिषेधप्रस-

---

पदस्य बहिरङ्गत्वादिडभावः । चतुर्ग्रहणं चेति । क्लृपूसामर्थ्ये इत्यस्यानन्तरं वृत्करणं पठ्यते तद् द्युतादीनां वृतादीनां च समाप्त्यर्थं भविष्यति । एकस्यानेकप्रयोजनाविरोधात् । सर्वेभ्य इति । सकल्पतीत्यादौ क्लृपेरपीत्यर्थः । भवेत्तासिग्रहणमिति । क्लृपिग्रहणाकरणपरमेतन्न तु तासिग्रहणकरणपरम् । तथा चास्यापि प्रत्याख्यानं करिष्यते । परस्मैपदेष्विति वर्तत इति । वृतादीनामनुदात्तेत्वात्स्यसनौ विहाय क्लृपेस्तासिं चार्धधातुकं वलादिपरस्मैपदं परं नास्ति । एतच्च यथान्यासाश्रयेणोच्यते । यदा त्वात्मनेपदेन समानपदस्थस्येड् भवतीत्युच्यते तदा परस्मैपदेष्विति नानुवर्त्यमिति । स इत्येतदवश्यमनुवर्त्यं तस्मिन्ननुवर्तमाने तासि चेत्यपि कर्तव्यम । क्लृप इत्येतत्तु न कर्तव्यं क्लृपेरन्येभ्यो वृतादिभ्यस्तासेरात्मनेपदपरत्वादिटोभावात् ॥

उपदे । तासाविति । तासाविडभावेसत्यत्वतस्थलि प्रतिषेधो विधीयमान इत्यर्थः ।

ङ्गो ऽकारवत्त्वात् *। तासावत्वत्प्रतिषेधे घसेः प्रतिषेधः प्राप्नोति । जघसिथ । किं कारणम् । अकारवत्त्वात् । सोऽपि ह्यकारवान् । सिद्धं तु हलादिग्रहणात् *। सिद्धमेतत् । कथम् । हलादिग्रहणं कर्तव्यम् । तच्चावश्यं कर्तव्यम् । अद्यशी प्रयोजयतः । अद्यशी तावन्न प्रयोजयतः । किं कारणम् । तासावनिडित्युच्यते । सेटौचेमौ तासौ । अञ्ज्वशू तर्हि प्रयोजयतः । अञ्ज्वशू चापि न प्रयोजयतः । तासौनित्यानिटइत्युच्यते । विभाषितेटावेतौ । अदिस्तर्हि प्रयोजयति । आदिथ । क्रियमाणे ऽपि वै हलादिग्रहणे अत्र प्राप्नोति । जघसिथ । एषोपि हलादिस्तस्य चाभावात्तसौ । तासावनिट इत्युच्यते । न च घसिस्तासावस्ति । ननु च यस्तासौ नास्तौ । अनिडप्यसौ तासौ भवति । नैवं विज्ञायते यस्तासावनिडिति । कथं तर्हि । यस्तासावस्ति अनिट् चेति । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । सप्तम्यर्थे ऽपि वै वतिर्भवति । तद्यथा । मथुरायामिव मथुरावत् । पाटलिपुत्र इव पाटलिपुत्रवत् । एवं तासाविव तास्वत् ॥

ऋतो भारद्वाजस्य ॥ ६३ ॥ किमर्थमिदमुच्यते । न अचस्तास्व-

---

सिद्धं त्विति । उपदेशग्रहणेनहर्थंसंबध्यते । उपदेशेयो ऽत्वान्हलादिश्चेति । न च घसिरादुपदेशे हलादिः । अञ्ज्वशू तर्हीति । अशूव्यासावित्यस्यानुदात्तेत्वात्थलभावादुपन्यासो ऽयुक्तः । क्रियमाणे ऽपीति । यद्यपि स्थान्युपदेशे घसिर्हलादिर्न भवति तथापि स्वोपदेशे हलादिरेव । तस्य चाभावादिति । उपमाने दृष्टानां धर्माणामुपमेये भूतानां भाविनां वा संप्रत्ययः । अत्र तास्वत्थलि नेट् भवतीत्युच्यमाने यदि घसिस्तासौ स्यात्तदाथलि निषेधो ऽतिदिश्येत । यतस्तु नासौ नास्ति ततोस्य तासावनिट्त्वमशक्यं प्रतिपत्तुमिति थल्यतिदेशो न प्रवर्तते । अनिडप्यसाविति । असत्त्वादेवेडभावात् । सप्तम्यर्थ इति । तासाविव तास्वदित्यौपश्लेषिकमधिकरणमाश्रीयते । तासौ परतः पूर्वस्य यथेण् भवति तथा थल्यपीत्यर्थः । ननु चात्रस्थान्यदिस्तासावस्ति स चानिट् चेति तदादेशस्यापि स्थानिवद्भावात्सत्वानिट्त्वे स्याताम् । नैतदस्ति । स्थानिवद्भावः शास्त्रीयेष्वेव कार्येषु प्रवर्तते । न च तासौ सत्वं शास्त्रीयं कार्यम् । अत एव वयेरुवयिथेति प्रतिषेधाभावः । क्रमेरपि च क्रमिथेति भाव्यम् । न हि तासौ नित्यानिट् क्रमिः । आत्मनेपद इडभावात् परस्मैपदे सेट्त्वात् ।

ऋतो । गुणे कृत इति । जहर्थेत्यादौ न ह्ययमजन्तो नाप्युपदेशेऽत्वान् । असति

त्थल्यनिटो नित्यमित्येव सिद्धम् । । एवं तर्हि नियमार्थोऽयमारम्भः । अत एव भारद्वाजस्य नान्यतो भारद्वाजस्येति । क्व मा भूत् । पपिथ पविथेति । कृतो भारद्वाजस्येति नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य * । कृतो भारद्वाजस्येति नियमानुपपत्तिः । किं कारणम् । अप्राप्तत्वात्प्रतिषेधस्य । गुणे कृते रपरत्वे चानजन्तत्वात्प्रतिषेधो न प्राप्नोति । असति नियमे को दोषः । तत्र पचादिभ्य इड्वचनम् । तत्र पचादिभ्य इड्वक्तव्यः । पेचिथ शेकिथेति । यदि पुनरेवं भारद्वाजः पुरस्तादपकृष्येत अचस्तास्वत्थल्यनिटो नित्यं भारद्वाजस्य । उपदेशे ऽत्वतः । भारद्वाजस्येति निवृत्तम् । सिध्यत्येवमयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो भवति । एवं तर्हि, योगविभागात्सिद्धम् * । योगविभागः करिष्यते । अचस्तास्वत्थल्यनिटो नित्यमुपदेशे । ततः अत्वतः । अत्वतश्चोपदेश इति ॥

बभूथाततन्थजगृभ्मववर्थेति निगमे ॥ ६४ ॥ वग्रहणं किमर्थम् ।

---

नियम इति । जहर्थेत्यादावित्प्रतिषेधार्थ एव योगो ऽस्त्विति भावः । तत्र पचादिभ्य इति । पूर्वयोगाभ्यां पचादिभ्यस्थलि नित्ये प्रतिषेधे प्राप्ते पक्षे इड्विधेय । जहर्थेत्यादौ च नित्यः प्रतिषेध इष्यते । तत्र भारद्वाजस्येति वचनात् स्मृत्यन्तरानुसन्धानाद्विकल्पः प्राप्नोति । नियमफलमन्यथोपपादयितुमाह । यदि पुनरिति । पूर्वयोगे भारद्वाजग्रहणं कृत्वा तदेव द्वितीये योगे ऽनुवर्त्यते । स्वस्मान्मतादिति । भारद्वाजस्य मतं पेचिथ पपिथेति इट् भवत्येव । अन्येषां तु मतम्, पपक्थ पपाथेतीडभावः । न्यासविपर्यये तु मतविपर्ययः प्रदर्शितः स्यात् । ननु च नित्येषु शब्देषु विकल्पिते विधौ विकल्पमात्रं प्रदर्शयितव्यम् । तत्र कस्य किं मतं यत्प्रच्यावितं स्यात् । उच्यते । विकल्पप्रतिपादनाय वाग्रहणे एव कर्तव्ये पूजार्थमाचार्या उपादीयन्ते । सा चैवं पूजा भवति । यदि येनाचार्येण यः शब्दः स्मृतः स तेनैव स्मृतत्वेनोपदिश्यते । एवं हि तस्य स्मर्तृत्वेन प्रमाणत्वेन स्तुतिः कृता भवत्येवं चाङ्गार्ग्यगालवयोरित्यादावनेकाचार्योपादानमर्थवद्भवति । विकल्पस्येकाचार्योपादानेनापि सिद्धत्वात् योगविभाग इति । ततश्च हरत्यादीनां गुणरपरत्वयोरनजन्तत्वे ऽप्युपदेशे ऽजन्तत्वात् सिद्धे प्रतिषेधे अस्य नियमार्थत्वोपपत्तिः । आदेशोपदेशो ऽप्याश्रीयते न तु स्थान्युपदेश एवेति अजत्यादेशस्य वीशब्दस्य चक्षिङादेशस्य च ख्यो विकल्पस्थलि भवति । विवेथ विवयिथ । आचख्याथ आचख्यिथ ।

बभू । वग्रहणमिति । एकदेशाक्षेपद्वारेण ववर्थशब्दसमुदाय एवाक्षिप्यते ।

न क्रसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्येव सिद्धम्। एवं तर्हि नियमार्थोऽयमारम्भः। निगमएव यथा स्यात्। क्व मा भूत्। ववरिथ॥

वस्वेकाजाद्घसाम्॥ ६७॥ किमर्थमिदमुच्यते। वस्वेकाजाद्घसां वचनं नियमार्थम् *। नियमार्थोऽयमारम्भः। वसौ एकाजाद्घसामेव। क्व मा भूत्। बिभिद्वान्। किमुच्यते नियमार्थमिति। न पुनर्विध्यर्थमपि स्यात्। प्रतिषेधोऽपि ह्यत्र प्राप्नोति नेड्वशिकृतीति। कृञ्चैवायं वशादिः। एवं तर्हि क्रसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्येतस्मान्नियमादत्रेड् भविष्यति। नात्र तेन परिप्रापणं प्राप्नोति। किं कारणम्। प्रकृतिलक्षणस्य प्रतिषेधस्य सप्रत्यारम्भः प्रत्ययलक्षणश्चायं प्रतिषेधः। उभयोः स प्रत्यारम्भः। कथं ज्ञायते। वृङ्वृञोर्ग्रहणात्। कथं कृत्वा ज्ञापकम्। इमौ इङ्वृञौ उदात्तौ। तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति। पश्यति त्वाचार्य उभयोः स प्रत्यारम्भ इति। ततो वृङ्वृञोर्ग्रहणं करोति। न खल्वपि कश्चिदुभयवान्प्रतिषेधः। प्रकृतिलक्षणः प्रत्ययलक्षणश्च। तुल्यजातीये असति यथैव प्रकृतिलक्षणस्य नियामको भवति एवं प्रत्ययलक्षणस्यापि नियामको भविष्यति। अथ यावता वसावेकाजाद्घसिभ्य इटा भवितव्यम्। कोन्वत्र विशेषः। नियमार्थे वा सति विध्यर्थे वा। न खलु कश्चिद्विशेषः। आहोपुरुषिकामात्रं तु भवानाह विध्यर्थमिति। वयं तु ब्रूमो नियमार्थमि-

---

वस्वे। किमर्थमिति। यदि क्रादिनियमः प्रकृत्याश्रयस्य प्रत्ययाश्रयस्य च प्रतिषेधस्य निवर्तकः तत इदं नियमार्थम्। अथ प्रकृत्याश्रयस्यैव ततो नेड्वशिकृतीति प्रतिषेधे प्राप्ते विध्यर्थमित्युभयसंभवात्प्रश्नः। न खलु कश्चिदिति। उभयथैकाजाद्घसिभ्य इटा वसोर्भाव्यं नान्येभ्यो बिभिद्वानित्यादावित्यर्थः। आहोपुरुषिकामात्रमिति। अहोऽहंपुरुष इति यस्याभिमानः सोऽहोपुरुष उच्यते। यथा यवाणास्तर्वाणो नामर्षयो बभूवुरित्युक्तम्। तस्य भावो मनोज्ञादित्वाद्वुञ्। कस्त्वभिप्रायेणैतदुच्यते न खलु कश्चिद्विशेष इति। अन्यत्र विशेषोऽस्त्येव। यदि क्रादिनियमः प्रकृत्याश्रयस्य प्रतिषेधस्य स्यात्। ततो युयुविवेत्यादौ श्र्युकः कितीति प्रतिषेधः स्यात् वृग्रहणं च क्रादिसूत्रेऽनर्थकं स्यादिति प्रत्ययाश्रयोऽपि प्रतिषेधः क्रादिनियमेन निवर्त्यत इति सूत्रमिदं नियमार्थमेव।

ति। अथ काज्ग्रहणं किमर्थम्। इह मा भूत् बिभिद्वान्। चिच्छिद्वानिति। क्रियमाणे ऽपि वै एकाज्ग्रहणे अत्र प्राप्नोत्यत्रोपिद्येकाच्। एवं तर्हि कृते द्विर्वचने य एकाच्। किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। एकाज्ग्रहणसामर्थ्यात्। नहि कश्चिदकृते द्विर्वचने अनेकाजस्ति। यदर्थमेकाज्ग्रहणं क्रियते। ननु चायमस्ति जागर्ति। जागृवांसोऽनुगमन्। यत्तर्ह्याकारग्रहणं करोति। न हि कश्चिदकृते द्विर्वचने आकारान्तोनेकाजस्ति। ननु चायमस्ति दरिद्राति:। न दरिद्रातेरिटा भवितव्यम्। किं कारणम्। उक्तमेतत्। दरिद्रातेरार्द्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति। यश्चेदानीं प्रत्ययविधौ सिद्धः सिद्धोसाविड्विधौ। एवमपि भूतपूर्वगतिर्विज्ञायेत। आकारान्तो यो भूतपूर्व इति। एकाज्ग्रहणमेव तर्हि ज्ञापकम्। ननु चोक्तं जागर्त्यर्थमेतत्स्यात् नैकमुदाहरणमे-

---

अथैकाज्ग्रहणमिति। क्रियमाणमप्येकाज्ग्रहणमनिष्टनिवृत्तये नालमिति मत्वा प्रश्नः। बिभिद्वानिति। कृतद्विर्वचनानामनेकाचां निवृत्त्यर्थमित्यभिप्रायः।एकाज्ग्रहणसामर्थ्यादिति। यद्यपि नित्यत्वाद् द्विर्वचने कृते ऽनेकाच्त्वादिण् न भवतीतिपरिहारोऽस्ति तथापि परिहारान्तरसद्भावान्नोक्तः। तथा हि। द्विर्वचनस्यावकाशः। पपावेति। इटोऽवकाशो यत्र कृते द्विर्वचने एकाच्त्वं पेचिवानादिवानिति। बिभिद्वानित्यादौ तु नित्यत्वाद् द्विर्वचनं पूर्वम्। जागर्तिरिति। उषविदजागृभ्योन्यतरस्यामिति विकल्पितत्वादामो जागर्तेः परः क्वसुः। चिरिजिरिचकास्यादिभ्यस्तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति आमा भाव्यमिति क्वसोः परस्यासंभवः। जागृवांस इति। द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति द्विर्वचनाभावः। न दरिद्रातेरिति। दरिद्रातेरनित्य आमित्यात औणल इति औकारे विधातव्ये औकारविधानेन ज्ञापितमोकारस्य प्रश्लिष्टावर्णत्वादुच्चारणे लाघवं भवत्यौकारस्य तु विश्लिष्टावर्णत्वादोकारादिहततरत्वाच्च गौरवमित्योकार एव विधेयः। तत्र वृद्धिरेचीति वृद्धौ कृतायां ययावित्यादि सिध्यति ददरिद्राविति त्वाकारलोपेन सिध्यति। तदर्थमौकारविधानमनित्यमस्मादामो ज्ञापयति। सिद्धोऽसाविड्विधाविति। क्वचित्तु सिद्धसिद्ध इति पाठः। सिद्धश्चासौ सिद्ध इति विशेषणसमासोत्यन्तसिद्ध इत्यर्थः। एकेन सिद्धशब्देन सामान्यसिद्धिः प्रतिपाद्यते द्वितीयेन तु विशेषसिद्धिः। एवमपीति। सांप्रतिकस्याकृतद्विर्वचनस्यानेकाच आकारान्तस्याभावाद् दरिद्रायकर्मे कर्तव्ये लाघवार्थमाद्ग्रहणं स्यादिति नैकमुदाहरणमाद्ग्रहणं प्रयोजयतीति भावः।

आद्ग्रहणं प्रयोजयति यद्येतावत्प्रयोजनं स्याज्जागर्तेर्नेत्येव ब्रूयात्। अथ घसिग्रहणं किमर्थम् । न एकाच् इत्येव सिद्धम्। घसिग्रहणमनच्कत्वात् । घसिग्रहणं क्रियते । लोपे कृते ऽनच्कत्वादिण्न प्राप्नोति । इदमिह संप्रधार्यमिट् क्रियतां लोप इति। किमत्र कर्तव्यम् । परत्वादिडागमः । नित्यो लोपः ।कृतेऽपीटि प्राप्नोत्यकृते ऽपि । इडपि नित्यः । कृते ऽपि लोपे प्राप्नोत्यकृतेऽपि । अनित्य इट् । न हि कृते लोपे प्राप्नोति । किं कारणम् । अनच्कत्वात् । एवं तर्हि द्विर्वचने कृते अभ्यासे योऽकारस्तदाश्रय इड् भविष्यति। न सिध्यति। किं कारणम् । द्वित्वाल्लोपस्य परत्वाद्द्विर्वचनं क्रियतां लोप इति । किमत्र कर्तव्यम । परत्वाल्लोपः। लोपे कृतेऽनच्कत्वाद्द्विर्वचनं न प्राप्नोति । घसिसग्रहणे पुनः क्रियमाणे न दोषो भवति । कथम् । वचनादिड्भविष्यति । इटि कृते द्विर्वचनं क्रियतां लोप इति ।

---

नैकमुदाहरणमिति । ऊर्णोतेर्णुवद्भावादेकाच्त्वादेकाज्ग्रहणेनानिवृत्तिः । जागर्तेर्नेति। सूत्रमिदं नियमार्थम् । तत्र यद्यस्य जागर्तिरेव निवर्त्यः स्यात्तस्यैव साक्षात्प्रतिषेधं कुर्यात् । लघीयसी हि साक्षात् प्रतिपत्तिः । न च दरिद्रातिर्द्वितीयो निवर्त्योऽस्यां व्यवस्थायामाद्ग्रहणस्याकृतद्विर्वचनानेकाजकारान्तार्थत्वाद् भूतपूर्वाकारान्ताश्रयात्स्यादेव तत इडागमः । यदा त्वेकाज्ग्रहणेन कृतद्विर्वचना एकाचो गृह्यन्ते तदाद्ग्रहणं कृतद्विर्वचनानेकाजाकारान्तार्थं पपिवानिति। सांप्रतिकाकारान्तसद्भावे भूतपूर्वगतिरयुक्ताश्रयितुम् । अथ घसिग्रहणमिति द्विर्वचने चेति स्थानिवद्भावः पूर्वविप्रतिषेधाश्रयेण प्रत्याख्यायते । द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य इति। तत्र घस्वस्इति स्थिते घसिभसोर्हलि चेति परमप्युपधालोपं पूर्वविप्रतिषेधेन बाधित्वा द्विर्वचनं भवति। तत्र कृते पुनः प्रसङ्गविज्ञानादुपधालोपस्ततः कृतद्विर्वचन एकाज्भवतीति सिद्ध इडागम इति मत्वा प्रश्नः। इतरस्तु स्थानिवद्भावारम्भात्पूर्वविप्रतिषेधो नाश्रितस्ततः परत्वान्नित्यत्वाद्वोपधालोपे कृत एकाच्त्वाभावान्न द्विर्वचनं स्यान्नापीडागम इति मत्वाह। घसिग्रहणमनच्कत्वादिति । नित्यो लोप इति । हल्यचि च विधानादिट् तु लोपे कृते ऽनच्कत्वान्न प्राप्नोतीत्यनित्यः । पूर्वविप्रतिषेधवाद्याह । इडपि नित्य इति । कृते द्विर्वचने उपधालोपे चाभ्यासाकाराश्रये णैकाच्त्वात् । स्थानिवद्भाववाद्याह । अनित्य इडिति । पूर्वविप्रतिषेधवाद्याह । एवं तर्हीति । पूर्वस्मादपि विधौ स्थानिवदिति सर्वत्र नाश्रीयत इति स्थानिवद्भावादनेकाच्त्वमिति न चोदनीयम् । स्थानिवद्भाववाद्याह । न सिध्यतीति । परत्वादिति । नित्यत्वादित्यपि बोद्धव्यम्। वचनादिति । अ-

यद्यपि परत्वाल्लोपः। स्थानिवद्भावाद् द्विर्वचनं भविष्यति॥

विभाषा गमहनविदविशाम् ॥६८॥ दृशेश्चेति वक्तव्यम्*। ददृश्वान्। ददृशिवान्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। दृशेरितिवर्तते॥

ऋद्धनोः स्ये॥७०॥ स्वरतेर्वेट्त्वादृतः स्ये विप्रतिषेधेन*। स्वरतिलक्षणाद्धावचनाद् ऋतस्य इडित्येतद्भवति विप्रतिषेधेन। स्वरतिलक्षणस्य वावचनस्यावकाशः। स्वर्ता स्वरिता। ऋतः स्य इटस्यावकाशः। करिष्यते। हरिष्यते। इहोभयं प्राप्नोति। अस्वरिष्यत्। ऋतः स्ये इडित्येतद्भवति विप्रतिषेधेन॥

यमरमनमातां सक् च॥७३॥ किमुदाहरणम्। अयंसीत्। व्यरंसीत्। अनंसीत्। अयासीत्। अवासीत्। नैतदस्ति। नास्त्यत्र विशेषः सति वा इटासति वा। इदं तर्ह्ययंसिष्टामयंसिषुः व्यरंसिष्टांव्यरंसिषुः। अनंसिष्टामनंसिषुः। अयासिष्टामयासिषुः। अवासिष्टामवासिषुः। इदं चाप्युदाहरणम्। अयंसीत्। व्यरंसीत्। अनंसीत्। अयासीत्। अवासीत्। ननु चोक्तं नास्त्यत्र विशेषः। सति वा इटासति वेति। अयमस्ति विशेषः। यद्यन्तरेण न स्याद्वृद्धिः प्रसज्येत। इटि पुनः सति नेटीति प्रतिषेधः सिद्धो भवति। मा भूदेवं ह्यान्तानामित्येवं भविष्यति। अत्रापि नेटीत्यनुवर्तते। तच्चावश्यमिड्ग्रहणमनुवर्त्यम् अधाक्षीदित्येवमर्थम्। आकारान्तस्यापि पदपूर्वं

---

पवादत्वादिति न बोद्धव्यम्। सत्यपि संभवे बाधनं भवतीति लोपद्विर्वचनयोरिटा बाधप्रसङ्गात्। किं तु क्रमः प्रदर्श्यते वसिग्रहणे क्रियमाणे कृताकृतप्रसङ्गित्वादिडागमो नित्यः कृतयोरपि लोपद्विर्वचनयोः। प्रवर्तनात्सावकाशश्च। लोपोपि नित्यः तत्र परत्वादिडागमः ततो लोपः ततो द्विर्वचनमिति सिद्धं जक्षिवानिति॥

विभाषा। दृशेरिति वर्तत इति। विभाषा सृधिदृशोरित्यतः। इडत्यर्तिव्ययतीनामिति योगं प्रयोजनाभावादुल्लङ्घ्यवस्वेकाजाद्घसामित्यत्र विभाषाग्रहणसंबद्धं दृशिग्रहणमनुवर्तते।

यमरमनमातां सक्च। किमुदाहरणमिति। वृत्तिकारैरेकवचनान्तान्युदाहरणान्युपन्यस्तानि। तत्र विशेषं सगिटोरबुध्वा पृच्छति। इतरस्तु इडभावे सरे च विशेषं मत्वैकवचनमेवोदाहरति। अयं सीदिति। अयंसिष्टामिति। नकेवलमत्र इड-

एकवचनेउदाहरणम् । मा हि यासीत् । यद्यनेन स्यादनुदात्तस्य इटः श्रवणं प्रसज्येत । इटि पुनः सत्युक्तमेतत् अर्थवत्तु सिचश्चित्करणसामर्थ्यादिटं उदात्तत्वमिति । तत्रैकादेश उदात्तेनोदात्त इत्युदात्तत्वं सिद्धं भवति ॥

ईशः से ॥ ७७ ॥ ईडजनोर्ध्वे च ॥ ७८ ॥ किमर्थो योगविभागः । न ईशीडजनां स्ध्वे इत्येवोच्येत । ईशो ध्वे मा भूदिति । इष्यते ईशिध्वे इति । ईडजनोस्तर्हि से मा भूदिति । इष्यते । ईडिषे । जनिषे । ईशेस्तर्हि स्वे मा भूदिति । इष्यते । ईशिष्वेति । से तर्हि यः स्वशब्दः तत्र यथा स्यात् क्रियासमभिहारे यः स्वशब्दः तत्र मा

---

भावो विशेषोयावत्सगिटोः श्रवणमपि । माहियासीदिति । अयासीदित्यत्राट्स्वरोभवतीति तन्निवृत्त्यर्थो माङ्प्रयोगः हिशब्दप्रयोगो हि चेति निघातप्रतिषेधार्थः । इट् यस्त्याद्युदात्तं पदं स्यात् । सति तु तस्य सिज्भक्तत्वादुदात्तत्वादेकादेश उदात्तेनोदात्त इत्यन्तोदात्तं पदं भवति तत्रादिः सिचोन्यतरस्यामिति पक्ष आद्युदात्तं पदं पक्षे अन्तोदात्तम् । एतस्मानिटः पित उपसंख्यानमित्युपसंख्यानमनपेक्ष्य प्रयोजनमुक्तम् । तेन यथा मा हि कार्षमित्यत्र पर्यायेणाद्यन्तयोरुदात्तत्वं भवत्येवं माहि यासीदित्यत्रासत्यपोटि भविष्यतीतोटोभावाभावयोः स्वरे भेदाभावः ॥

ईशः से । इष्यत ईशिध्वे इति । एतदर्थमेव च कारेणेशिरनुकृष्यते । ईडजनोस्तर्हीति । कथं पुनरीडजनोस्ध्वे चेति सूत्रपाठे योगविभागेनेडजनोः से शब्दे इट् शक्यते निवर्तयितुम् । उच्यते । चकारेणेशेरनुकर्षणात्सकारादौ सेशब्द इति इटि सिद्धे ईशः स इति नियमार्थं विज्ञायते । ईशेरेव सेशब्द इण् न त्वीडजनोरिति । स इति । षाष्ठः स इत्यस्यानुकरणं सुपां सुलुगिति सप्तमी लुका निर्दिष्टम् । इष्यत इति । न चानिष्टार्थो योगविभागः । जनिष इति । व्यत्ययेन शप् तस्य बहुलं छन्दसीति लुक् छान्दसत्वादुपधालोपाभावः । जायम इत्यत्र तु नित्यत्वाद्विकरणे कृते तेन व्यवधानादिडभावः । ईशेस्तर्हि स्वे मा भदिति । चकारेणेशेरनुकर्षणात् । सकारादौ ध्वशब्दे चेटः सिद्धे ईशः स इति नियमः क्रियते । ईशः सेशब्द एव सकारादाविण्नान्यस्मिन् सकारादाविति । यद्यप्येकदेशविकृतमनन्यवदिति स्वशब्दः सेशब्द एव भवति तथाप्यन्यस्य सकारादेर्व्यावर्त्यस्याभावादन्यत्वमाश्रित्य स्वशब्दो व्यावर्त्यते । से तर्हीति । ईडजनोस्ध्वे चेत्यनेन सर्वसकारादेरिटि विहिते ईशः स इत्यनेन नियमः क्रियते सेशब्द एव सकारादाविति तेनेह[illegible] भवति । ईशिष्वेत्यत्रापि स्थानिवद्भावा-

भूदिति । अत्रापीष्यते स भवानीशिष्वेशिष्वेत्येवामीष्टइति । आतश्चेष्यते । एवं त्वाह सिद्धं तु लोयमध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनादिति ॥

अतोयेयः ॥८०॥ किं सार्वधातुकग्रहणमनुवर्तत उताहो न । किं चार्थोनुवृत्त्या । बाढमर्थः । यद्यकारात्परो याशब्दः आर्द्धधातुकमस्ति । ननु चायमस्ति चिकीर्ष्यात्जिहीर्ष्यात् । लोपोत्रबाधको भविष्यति । किं तर्ह्यस्मिन्योग उदाहरणम् । पचेत् । यजेत् । अत्राप्यतो दीर्घो यञीतिदीर्घत्वं प्राप्नोति । स यथैवेयादेशो दीर्घत्वं बाधते एवं लोपमपि बाधेत । तस्मात्सार्वधातुकग्रहणमनुवर्त्यम् ॥

आने मुक् ॥ ८२ ॥ मुक्स्वरे दोषः * । मुकि सति स्वरे दोषो भवति । पचमानो यजमानः । मुकाव्यवहितत्वादनुदात्तत्व न प्रा-

---

व्यस्तु लोट एव स्थाने स्वशब्दो नासौ सेशब्द इति व्यावर्त्यते । अत्रापीति । लोट्धर्माणौ हिस्वौ लोटो भवत इत्युक्तम् । तेन यथान्यलोडादेशस्य स्वशब्दस्य सेग्रहणेन ग्रहणादिट् भवत्येवं क्रियासमभिहारे समुच्चये च लोडादेशस्य स्वस्य । अथवाथ वार्तिककारवचनं साधित्वेनाह । आतश्चेष्यत इति तदेवं दोषवान् गुरुश्च योगविभाग इत्येक एव योगः कर्तव्यः ईडीशिजनीनां सेध्वयोरिति ॥

अतो । केषांचिदतो या इति सकारान्तानुकरणत्वात्पाठोऽन्येषां तु सौत्रत्वान्निर्देशस्य यलोपस्याभिद्धत्वानाश्रयणादतोयेय इति । किं चार्थ इति । आचार्यदेशीय आह । प्रयोजनाधीना ह्यधिकारानुवृत्तिरिति मन्यते । आचार्य आह । बाढमर्थ इति । चोदक आह । यद्यकारादिति । किं तु नास्तीति भावः । चिकीर्ष्यादिति । लिङाशिषीत्यार्द्धधातुकसंज्ञा । लोपोत्रेति । कृताकृतप्रसङ्गित्वान्नित्यो लोपः इयादेशस्तु लोपे कृतेऽनकारान्तत्वान्न प्राप्नोतीत्यनित्यः इतरांस्त्वियादेशस्य सावकाशत्वेलोपस्य नित्यत्वं वक्तुं शक्यं नान्यथेति मत्वाह । किं तर्ह्यस्मिन्निति । स यथैवेति । न च येननाप्राप्तिन्यायेन दीर्घस्यैव बाधक इति शक्यं वक्तुम् । यस्मात्स सार्वधातुके विधीयत इति सिद्धान्तः । तथा च ज्ञाजनोर्जा इत्यत्र वक्ष्यते । जानातीत्यत्राप्यतो दीर्घो यञीत्येव दीर्घो भविष्यतीति । यदि तिङि दीर्घो विधीयेत कथं जानातीत्यत्र स्यात् । यत्तु वक्ष्यते तिङीत्यवं तर्हीति नासौ सिद्धान्तः मध्ये ऽपवादा इत्यनाश्रित्यैतदुक्तं तस्मिन्नाश्रीयमाणे लोपमेवेयादेशो बाधेत न दीर्घम् । दीर्घस्तु परत्वात्स्यादिति सर्वथा सार्वधातुकानुवृत्तिः सप्रयोजना ।

आने । मुकीति । पूर्वान्तकरणे दोष इत्यर्थः । अदुपदेशादिति स्वरो न सिध्यति ।

प्नोति । ननु चायं मुग् अदुपदेशभक्तः अदुपदेशग्रहणेन ग्राहिष्यते । न सिध्यत्यङ्गस्य मुग् उच्यते विकरणान्तं चाङ्गम् । सोयं संघातभक्तो ऽशक्यो ऽदुपदेशग्रहणेन ग्रहीतुम् । एवं तर्ह्यभक्तः करिष्यते । अभक्ते च किं, स्वरे दोषो भवति । पचमानो यजमानः । मुका व्यवहितत्वादनुदात्तत्वं न प्राप्नोति । एवं तर्हि परादिः करिष्यते । परादौ दीर्घप्रसङ्गः * । यदि परादिः क्रियते अतो दीर्घो यञीति दीर्घत्वं प्राप्नोति । नैष दोषः । तिङीत्येवं तत् । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं मुकि स्वरे दोष इति । परिहृतमेतत् । तदुपदेशभक्तः अदुपदेशग्रहणेन ग्राहिष्यते । ननु चोक्तमङ्गस्य मुगुच्यते विकरणान्तं चाङ्गं सोयं संघातभक्तः अशक्यः अदुपदेशग्रहणेन ग्रहीतुमिति । अथायमद्भक्तः स्याद् गृह्यत अदुपदेशग्रहणेन । बाढं गृह्यत । अङ्गक्तस्तर्हि भविष्यति । तत्कथम् । अतो येय इत्यत्र अकारग्रहणं पञ्चमीनिर्दिष्टं अङ्गस्येति च षष्ठीनिर्दिष्टं तत्राशक्यं विविभक्तित्वादत इति पञ्चम्या अङ्गं विशेषयितुं तत्प्रकृतमिहानुवर्तिष्यते । एवमपि षष्ठ्यभावान्न प्राप्नोति । आने इत्येषा सप्तम्यत

---

अग्निचित्वानित्यादौ ह्रस्वनुड्भ्यां मतुबित्याद्युदात्तत्वं प्राप्नोतीति स्वरविधौ व्यञ्जनमविद्यमानवदिति दूषयित्वाह हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति परिभाषा भाष्यकारेण व्यवस्थापितेति व्यवधातैव मुमागमः । ननु चायमिति । अकार उपदेश इत्याश्रीयते न त्वाकारान्त उपदेश इति मुक्चाकारमात्रभक्त इति व्यवधानाभावः । अङ्गस्येति । अङ्गाधिकारादङ्गस्य मुग्विधीयमानो ऽङ्गमेव न व्यवदधाति अवयवान्तरन्तु व्यवदधात्येव । एवं तर्हीति । ककारमनुबन्धमकृत्वा विकरणवदकारान्तादङ्गात्पर आने परतो मध्ये मः करिष्यते । मुकेति । यथान्यासाश्रयेणोक्तमभक्तत्वात्तु मकारेणेति युक्तं वक्तुम् । एवं तर्हीति । आनस्य मुडिति सूत्रन्यासेन । तिङि इत्येवं तदिति । मुटि क्रियमाणे सार्वधातुकमननुवर्त्यं तिङीत्यनुवर्त्यमेवेति भावः । पञ्चमीनिर्दिष्टमिति । पूर्वसूत्र एवात इत्यनेनाङ्गं न विशेषितमिति तदन्तविध्यभाव इत्युक्तं भवति । तेनाङ्गस्यायोकारस्तस्मात्परस्य यास इय् इत्यङ्गं यथा पूर्वसूत्रे विशेषणं तथेहापीत्यङ्गस्यावयवस्याते मुग् भवति । तत्प्रकृतमिति । विशेष्यं सत्प्रधानमिवेत्यर्थः । आनइत्येषेति । अकृतार्था सप्तमी पूर्वत्र कृतार्थायाः पञ्चम्याः षष्ठीं प्रकल्पयति न तु पञ्चमी सप्तम्याः । यद्येवमङ्गस्यात इति समानविभक्तित्वात्तदन्तविधिप्रसङ्गः । नैष दोषः । विशेषणविशेष्य-

इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्येति ॥

अष्टन आ विभक्तौ ॥ ८३ ॥ अष्टन्जनादिपथिमथ्यात्त्वेष्वान्तरतम्यादनुनासिकप्रसङ्गः* । अष्टन्जनादिपथिमथ्यात्त्वेषु आन्तरतम्यादनुनासिकः प्राप्नोति । अष्टाभिः अष्टाभ्यः जातः जातवान् पन्थाः मन्थाः । सिद्धमनण्त्वात् * । सिद्धमेतत् । कथम् । अनण्त्वात् । कथमनण्त्वम् । अण्सवर्णान्गृह्णातीत्युच्यते न च आकारः अण् । उच्चारणसामर्थ्याद्वा । अथ वा शुद्धोच्चारणसामर्थ्याद्भविष्यति । नैतौ स्तः परिहारौ यत्तावदुच्यतेऽनण्त्वादिति न ब्रूमः अण्सवर्णान् गृह्णातीति । कथं तर्हि तपरस्तत्कालस्येति । यदप्युच्यते । उच्चारणसामर्थ्याद्वेति । अस्त्यन्यदुच्चारणे प्रयोजनम् । किम् । उत्तरार्थं रायो

---

भावे क्रामचारादङ्गेनातो विशेषणात्ततो मुगकारमात्रभक्तत्वान्न व्यवधायकः । यद्यपि सुकि कृते ऽध्यर्द्धमात्रोकारस्तथाप्युपदेशग्रहणादुपदेशे मात्रिकत्वाश्रयः स्वरः प्रवर्तते । तथा च पचावहत्यादौ दीर्घे ऽपि कृते भवति पचमान इत्यादौ त्वातो ङित इति इयादेशाभावोऽत इति तपरकरणात् ॥

अष्टन । सौत्रत्वान्निर्देशस्यान्लोपोऽन इत्यकारलोपो न कृतः । समानविचारत्वात्प्रकरणान्तरविहितमपि अनुनासिकस्थानिकमाकारमिहैवोपन्यस्यति । अष्टन्निति । यत्र तपरत्वमस्ति तत्र तपरस्तत्कालस्येति वचनाद्गुणान्तरयुक्तस्य तत्कालस्य ग्रहणात् स्थानेऽन्तरतम इति वचनाच्चानुनासिकस्थाने ऽनुनासिक एवाकारः प्राप्नोति । यत्रापि तपरत्वाभावः तत्राप्याकृतिनिर्देशाद्दीर्घोच्चारणसामर्थ्याच्च ह्रस्वप्लुतग्रहणात्सर्वदीर्घव्यक्तिप्रसङ्गे ऽन्तरतमपरिभाषोपस्थानादनुनासिकप्रसङ्गः । सिद्धमनण्त्वादिति । अणुदित्सवर्णस्येत्यत्राण्ग्रहणेन प्रत्याहारसन्निविष्टा अकारादयो गृह्यन्ते न त्वाकारादयोऽसन्निविष्टत्वान्न च प्रत्याहारे ऽकारादिभिराकारादयो गृह्यन्ते । नाप्यणुदित्सूत्रेऽङ्गेषु स्वात्मनि च ग्रहणकशास्त्रस्यानभिनिर्वर्तनात् स्वात्मनि क्रियाविरोधाच्च ग्रहणकशास्त्रान्तराभावाच्च । कथमनण्त्वमिति । अकारेण गृह्यमाण आकारोऽण् भवतीति मत्वा प्रश्नः । पूर्वोक्तेनाभिप्रायेणाह । अण् सवर्णानिति । अनण्त्वादेव भाव्यमानोऽण् सवर्णान् न गृह्णातीति परिहारो नोक्तः ग्राह्यासद्भावाच्चान्तरतमपरिभाषा नोपतिष्ठते । उच्चारणसामर्थ्याद्वेति । यद्यनुनासिको ऽभविष्यत्स एवोदचारयिष्यत इति निरनुनासिक एवोच्चारणसामर्थ्यात्प्रवर्तते । तत्र पूर्वः परिहारो ऽष्टन्शब्दाकाराभिप्रायेणोक्तः उत्तरस्तु जनाद्याकाराभिप्रायेण । चोदकस्तु विषयविभागमबुध्वाह । नैतौ स्त इति । कथं तर्हीति । अकारेति च तत्रनानुवर्तते । उत्तरार्थमिति । इहानुनासिक उच्चार्यमाणे ऽनुनासिक उत्त-

हलीति । एवं तर्हि नेमौ पृथक् परिहारौ । एकपरिहारः । एकप-रिहारोयं सिद्धमनण्त्वाद् उच्चारणसामर्थ्याद्वेति । इह तावदष्टाभिः अष्टाभ्य इति । अनण्त्वात्सिद्धम् । जातः जातवान् । पन्थाः मन्थाः उच्चारणसामर्थ्यात्सिद्धम् । यद्यवं पृथक्परिहारयोरपि न दोषः । यो यत्र परिहारः स तत्र भविष्यति ॥

युष्मदस्मदोरनादेशे ॥ ८६ ॥ अनादेशग्रहणं शक्यमकर्तुम् । कथम् । हलीत्यनुवर्तते । न चादेशो हलादिरस्ति । तदेतदनादेशग्रहणं तिष्ठतु तावत्सान्यासिकम् ॥

योऽचि ॥ ८९ ॥ अज्ग्रहणं शक्यमकर्तुम् । कथम् । अविशेषेण यत्वमुत्सर्गस्तस्य हलादावात्वमपवादः ॥

शेषे लोपः ॥ ९० ॥ शेषग्रहणं शक्यमकर्तुम् । कथमविशेषेण लोपः उत्सर्गस्तस्य अजादौ यत्वमपवादः हलादावात्वम् ॥

---

त्र कर्तव्य इति लाघवायाननुनासिकोच्चारणं स्यादित्यर्थः । इतरः स्वाभिप्रायमाह । एवं तर्हीति । अष्टन आत्वे न द्वौ परिहारौ नापि जनाद्यात्वे किं तु विषयविभागेन । एक इति । यद्यपि द्वावेतौ परिहारौ वाशब्दस्य समुच्चयार्थत्वात्तथापि समुदायापेक्षया संभवापेक्षया चैवमुक्तम् । अथ वैकोसहायः क्वचित्कश्चिदन्यनिरपेक्षः परिहार इत्यर्थः । स एवाह । यद्येवमिति । यदि भवान् संमन्यते परिहारसमुदाये यथासंभवमवयवी परिहारत्वेनं तदा समुदायकल्पनया नार्थः पृथगेवैतौ परिहारौ यथाविषयमवतिष्ठेते ॥

युष्म । हलीति वर्तत इति । रायो हलीत्यतः । न चादेशो हलादिरिति । भ्यसो भ्यमित्यभ्यमादेशो न तुभ्यमिति भावः तदेतदिति उत्तरत्रोपयुज्यते । योचीऽति यत्वमादेशेऽजादौ मा भूत् त्वमहमित्यादौ शेषे लोप इति शेषव्यवस्थार्थं च ॥

योऽचि । यत्वमुत्सर्ग इति । अनादिष्टायां विभक्तौ विधीयमानं यत्वमुत्सर्गो हलादौ त्वात्वमपवाद आदेशे तु लोप इत्यसंकरेणात्वयत्वलोपाः सिध्यन्ति अज्ग्रहणे क्रियमाणेऽप्यनादेशग्रहणं यत्वलोपयोर्विषयविभागार्थं कर्तव्यमित्यनादेशग्रहणाश्रयेणाज्ग्रहणमुत्तरत्र च शेषग्रहणं प्रत्याख्यातम् ।

शेषे । अविशेषेणेति । विभक्तावित्यधिकाराद्विभक्तिमात्रे लोपो विधीयमान उत्सर्गो भवति । तस्यानादेशे विभक्तौ यत्वमपवादो यत्वस्यापि हलादावात्वमिति शेषग्रहणं पूर्वत्र चाज्ग्रहणमन्तरेण विषयविभागेन कार्यत्रयसिद्धिः । तस्याजादाविति । हलादावात्वविधानात्सामर्थ्यलभ्यमेतत् ॥

सपर्यन्तस्य ॥ ९१ ॥ परिग्रहणं शक्यमकर्तुं मान्तस्येत्येव सिद्धम्। न सिध्यति। किं कारणम्। अन्तशब्दस्योभयार्थत्वात्। कथम्। अयमन्तशब्दः अस्त्येव सह तेन वर्तते। तद्यथा मर्यादान्तं देवदत्तस्य क्षेत्रं सह मर्यादयेति गम्यते। अस्ति प्राक् तस्माद्वर्तते। तद्यथा नद्यन्तं देवदत्तस्य क्षेत्रमिति प्राग् नद्या इति गम्यते। तद्यः सह तेन वर्तते तस्येदं ग्रहणं यथा विज्ञायेत। नैतदस्ति प्रयोजनम्। सर्वत्रैवान्तशब्दः सह तेन वर्तते। अथ कथं नद्यन्तं देवदत्तस्य क्षेत्रमिति। नद्याः क्षेत्रत्वे संभवो नास्तीति कृत्वा प्राङ्नद्या इति गम्यते। अवधिद्योतनार्थं तर्हि परिग्रहणं कर्तव्यं मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः। क्व च मान्ते युष्मदस्मदी।

---

सप। अयमन्तशब्द इति। अन्यपदार्थविषयस्यान्तशब्दस्येदं व्याख्यानम्। क्व चिदन्तर्भूतान्तार्थो ऽन्यपदार्थो बहुव्रीहेरभिधेयः। क्व चिदनन्तर्भूतान्तार्थ इत्यर्थः। मर्यादान्तमिति। मर्यादायाः क्षेत्रावयवत्वात्क्षेत्रे ऽन्यपदार्थे ऽनुप्रवेशः। नद्यन्तमिति। नद्याः क्षेत्रानवयवत्वादन्यपदार्थे ऽनुप्रवेशाभावः पर्यन्तशब्दस्त्वन्यपदार्थविषयः सह तेन वर्तत इति परिग्रहणं कृतं तेन युष् अस्म् इत्येतयोरादेशा भवन्ति। न युष् अस् इत्येतयोः। सर्वत्रेति। अन्तशब्दोऽवयववाचीत्यवयवेन विग्रहः समुदायः समासार्थ इत्यवयवस्यावश्यमपदार्थेन्तर्भावः। नद्यन्तं क्षेत्रमित्यत्र त्वन्तशब्दः सामीप्यवाचीत्यन्यपदार्थे नद्या अनन्तर्भावः। यत्तूच्यते सर्वत्रैवान्तशब्दः सह तेनेति वर्तत इति तत्संभवापेक्षम्। यस्यावयवत्वं सामीप्यं च संभवति तस्यावयवत्वमेवाश्रीयते। अन्तशब्दस्यावयववाचित्वेन प्रसिद्धतरत्वाद्यस्य त्ववयवत्वासंभवस्तस्य सामीप्यमेवान्तशब्देन प्रतिपाद्यते यथा नद्यन्तं क्षेत्रमिति। अन्येत्वाहुः। सर्वत्रैवान्तशब्दोऽवयववाची कस्य चिन्मुख्यमवयवत्वं कस्य चित्सामीप्यादुपचरितमित्यभिप्रायेणेदंभाष्यम्। ततश्चान्तशब्दस्यावयववाचित्वान्मपर्यन्तस्यादेशलाभानार्थः परिग्रहणेन। अवधिद्योतनार्थमिति। यदियुष्मदस्मदी मान्ते अथामान्ते सर्वथा आदेशा यथा स्युरेवमर्थं परिग्रहणम्। यत्रैवेति। सामानाधिकरण्येन विशेषणविशेष्यभावः स्यात्। अथापि वैयधिकरण्यमाश्रीयते युष्मदस्मदोरवयवस्य मान्तस्येति तथापियत्रमान्ते युष्मदस्मदीतत्रभेदाभावादादेशानस्युः।न च व्यपदेशिवद्भावो ऽस्त्यप्रातिपदिकेनेति निषेधात्परिग्रहणे तु तदुपादानसामर्थ्याद्युष्मदस्मदवयवे ऽपि युष्मदस्मच्छब्दौ वर्तेते इति सर्वत्रैवादेशसिद्धिर्वैयधिकरण्येन वा संबन्धे परिग्रहणोपादानसामर्थ्यादप्रातिपदिकेनेति प्रतिषेधाप्रहृत्त्या मान्तयोरपि युष्मदस्मदोरादेशसि-

युष्मानाचष्टे अस्मानाचष्टे इति । णिचि युष्मयते अस्मयते अप्रत्यये ॥

प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥ किमर्थमिदमुच्यते । न त्वमावेकवचन इत्येव सिद्धम् । न सिध्यति । किं कारणम् । एकवचनाभावात् । एकवचन इत्युच्यते न चानेकवचनं पश्यामः । प्रत्ययलक्षणेन । न लुमताङ्गस्येति प्रत्ययलक्षणस्य प्रतिषेधः । एवं तर्हि इदमिह संप्रधार्यं लुक् क्रियतामादेशा इति । किमत्र कर्तव्यम् । परत्वादादेशाः । नित्यो लुक् कृतेष्वादेशेषु प्राप्नोत्यकृतेष्वपि । अन्तरङ्गा आदेशाः । एवं तर्हि सिद्धे सति यत्प्रत्ययोत्तरपदयोस्त्वमौ शास्ति तज्ज्ञापयत्याचार्यः । अन्तरङ्गानपि विधीन् बाधित्वा बहिरङ्गो लुग् भवतीति । किमेतस्य ज्ञापने प्रयोजनं, गोमान् प्रियो यस्य गोमत्प्रियः । यवमत्प्रियः । गोमानिवाचरति गोमत्यते यवमत्यते अन्तरङ्गानपि नुमादीन् बहिरङ्गो लुग् बाधत इति । नैतदस्ति ज्ञापक-

---

ह्वि: । युष्मयतेरिति । प्रत्ययोत्तरपदयोश्चेत्यत्रैकवचनाधिकारात्त्वमौ न भवतः । इष्टवद्भावाट्टिलोपः क्विपिणि लोपः क्वौ लुप्तं न स्थानिवदिति मान्ते युष्मदस्मदी ततः कृदन्तत्वात् स्वादयः । एकदेशविकृतस्यानन्यत्वाद् युष्मदस्मदाश्रयकार्यप्रवृत्तिः । तत्र सौत्वमहमिति भवति द्विवचने प्रथमायाश्च द्विवचने भाषायामिति मकारस्यात्वे प्राप्ते परत्वाद्युवावयोः कृतयोः पुनः प्रसङ्गविज्ञानादात्वे कृते युवामावामिति । तृतीयाद्विवचने युवाभ्यामावाभ्यामिति । भिसि युष्माभिरस्माभिरिति ङेप्रत्यये तुभ्यं मह्यम् । भ्यसि युष्भ्यमस्भ्यमिति शेषे लोप इति लोपः।पञ्चमीभ्यसि युष्मदस्मदिति मपर्यन्तापेक्षे तु शेषे आश्रीयमाणे मात्परस्यान्यस्याभावाद् लोपाभावाद् युष्मदस्मदिति भवति । इह त्वामाचष्टे मामाचष्टे इति णिचि प्रत्ययोत्तरपदयोरिति त्वमयोः प्रकृत्यैकाजिति प्रकृतिभावादणिति टिलोपे अत उपधाया इति वृद्ध्या भाव्यम् । अथ त्वङ्वृत्त इत्याश्रीयते तदा वृद्ध्यभावः। तत्र त्वद् स् मद् स् इति स्थिते मपर्यन्ताभावात्त्वाहौ सावित्यस्याप्रवर्तनाद्वृद्धिपक्षे त्वादम् मादमिति भवति तदभावे त्वदं मदमिति । केचितु मान्तयोर्युष्मदस्मदोरादेशान्नेच्छन्ति । मपर्यन्तग्रहणं हि यत्र परिशिष्टसद्भावस्तत्रादेशार्थमिति परिशिष्टाभावेन भाव्यमादेशैरिति ब्रुवन्ति ॥

प्रत्ययोत्तरपदयोश्च । अन्तरङ्गानिति । नित्यादप्यन्तरङ्गो बलीयांस्तथा चोक्तम् । परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति । गोमत्प्रिय इति । अत्रान्तरङ्गा एकपदाश्रयत्वात् सुलोपादयः स्युः । पदद्वयाश्रयत्वाद्बहिरङ्गो लुगिति गोमान् प्रिय इति स्यात् । अस्मिंस्तु ज्ञापके सत्यन्तरङ्गाण्यपि

म्। अवश्यमन्यदेतस्य वचने प्रयोजनम्। किम्। येऽन्ये एकवचनादेशाः प्राप्नुवन्ति तद्बाधनार्थमेतत्स्यात्। तद्यथा तव पुत्त्रः त्वत्पुत्त्रः मम पुत्त्रो मत्पुत्त्रः। तुभ्यं हितं त्वद्धितं मह्यं हितं मद्धितमिति। यत्तर्हीमपर्यन्तग्रहणमनुवर्तयति। यद्यत्रान्य एकवचनादेशाः स्युः। मपर्यन्तानुवृत्तिरनर्थिका स्यात्। त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम् *। त्रिचतुर्युष्मदस्मद्ग्रहणेषु अर्थग्रहणं शब्दविशेषणं द्रष्टव्यम्। त्रिचतुरोः स्त्रियां तिसृचतसृ। यद्यपि समासः पुंसि नपुंसके वा वर्तते त्रिचतुरौ च स्त्रियां वर्तेते भवत्येव तिसृचतस्रभावः। प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा प्रियतिस्रौ प्रियतिस्रः।

---

कार्याणि बाधित्वा लुग् भवति। ततो न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधान्नुम् दीर्घाभावे गोमत्प्रिय इति सिध्यति। सुपो धातुप्रातिपदिकयोरित्यस्यैव बाधकत्वमनेन ज्ञाप्यते तस्यैवेह संभवात्। केचित्तु सामान्यापेक्षया ज्ञापकत्वाश्रयाल्लुङ्मात्रस्य बलवत्त्वाश्रयेण व्यवहारदर्शनाल्लुङ्मात्रं बाधकं ज्ञाप्यत इत्याहुः। येऽन्य इति। एकवचनाधिकारादेकवचननिमित्तानामादेशान्तराणां त्वमौ बाधकौ स्यातां न तु ज्ञापकावित्यर्थः। यत्तर्हीति। कश्चिद्व्याचष्टे। यद्यादेशान्तराणां त्वमौ बाधकौ स्यातां तदा मपर्यन्तग्रहणानुवृत्तिमन्तरेणोत्सर्गसमानदेशत्वादपवादानां मपर्यन्तस्य त्वमौ सिद्धाविति किं तदनुवृत्त्या। अनुवृत्त्या तु ज्ञाप्यते प्रागेव लुकि कृते विभक्त्यभावादसत्स्वादेशान्तरेषु त्वमौ विधीयेते इति। एतच्चायुक्तम्। नायं नियोग उत्सर्गसमानदेशोऽपवाद इति। अम्बहुलकचां भिन्नदेशानामप्यपवादत्वदर्शनात्। ततश्चासत्यां मपर्यन्तानुवृत्तौ आदेशान्तराणामपि बाधकौ त्वमौ सर्वादेशौ स्याताम्। अनेकाल्त्वादिति। सप्रयोजनामपर्यन्तानुवृत्तिः तस्मादन्यथा व्याख्यायते। तवममादय आदेशाः स्थानिप्रकृत्यर्थमिहानुवर्तन्ते। तत्र तवादीनां प्रसङ्गे सिद्धयोस्त्वमयोर्मपर्यन्तानुवृत्तिस्त्वया कृतं त्वत्कृतमित्याद्यर्था भवन्ती लुको बाधकत्वं ज्ञापयति। ततश्च तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्ज्ञापनाय भवति। केवला हि मपर्यन्तानुवृत्तिर्लाघवाय स्यात्। गरीयसी हि तवाद्यनुवृत्त्या स्थानिप्रतीतिः। ततो ज्ञापनाय न प्रभवेत् तस्मात्तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्यथोक्तार्थज्ञापनायालम्। त्रिचतुरिति। स्त्रियां द्विवचन एकवचन इति ये ऽर्थनिर्दिष्टास्तेऽश्रयमाणानामेव शब्दानां विशेषं न लक्षयन्तीत्यर्थः। प्राप्तविशेषणसंबन्धैस्त्रिचतुर्युष्मदस्मच्छब्दैस्तदन्तं विशेष्यते। तत्र पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य ग्रहणं भवतीति केवलानां तदन्तस्य चादेशप्रवृत्तिर्द्विवचनैकवचने च पारिभाषिकेन गृह्यते किं तर्हि द्वयोर्वचनमभिधानं द्विवचनमेकस्य वचनमेकवचनमित्यर्थनिर्देशः। प्रियतिसेति। अन्तरङ्गानपि वि-

प्रियचतसा प्रियचतस्रौ प्रियचतस्रः । प्रियास्तिस्रः ब्राह्मण्योऽस्य ब्राह्मणकुलस्य प्रियतिसृ प्रियतिसृणी प्रियतिसृणि । प्रियचतसृप्रियचतसृणी प्रियचतसृणि । यदा हि समासः स्त्रियां वर्तते त्रिचतुरौ च पुंसि नपुंसके वा तदा मा भूतामिति । प्रियास्त्रयो ब्राह्मणा अस्याः ब्राह्मण्याः प्रियत्रिः । प्रियत्री प्रियत्रयः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियाणि त्रीणि ब्राह्मणकुलानि अस्या ब्राह्मण्याः प्रियत्रिः प्रियत्री प्रियत्रयः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । युवावौ द्विवचने । यद्यपि समासः । एकार्थो वा भवति बह्वर्थो वा भवति द्व्यर्थे च युष्मदस्मदी भवत एव युवावौ । किमविशेषेण । नेत्याह । यूयवयौ जसि त्वाहौ सौ तुभ्यमह्यौ ङयि तवममौ ङसि । इत्येतान् वर्जयित्वा अतिक्रान्तो युवामतित्वमत्यहम् । अतिक्रान्तौ युवामतियुवामत्यावाम् । अतिक्रान्ता युवामतियूयमतिवयम् । अतिक्रान्तं युवामतियुवामत्यावाम् । अतिक्रान्तौ युवामतियुवामत्यावम् । अतिक्रान्तान्युवामतियुवान् अत्यावान् । अतियुवयाऽत्यावया । अतियुवाभ्यामत्यावाभ्याम् अतियुवाभिरत्यावाभिः । अतितुभ्यमतिमह्यम् । अतियुवाभ्यामत्यावाभ्याम् । अतियुवभ्यमत्यावभ्यम् । अतियुवदत्यावत् । अतियुवाभ्यामत्यावाभ्याम् । अतियुवदत्यावत् । अतितव अतिमम । अतियुवयोरत्यावयोः । अतियुवाकमत्यावाकम् । अतियुवयि अत्यावयि । अतियुवयोरत्यावयोः । अतियुवास्वत्यावासु । त्वमावेकवचने । यद्यपि समासः द्व्यर्थो भवति बह्वर्थो वा एकार्थे च युष्मदस्मदी, भवत एव त्वमौ । किमविशेषेण । नेत्याह । तानेव विधीन्वर्जयित्वा । अतिक्रान्तस्त्वामतित्वमत्यहम् । अतिक्रा-

---

धीन्बहिरङ्गो लुग्बाधत इत्यक्त एव तिसृभावे लुकि कृते समासाद्या विभक्तिस्तस्यां तिसृभावः । स च निर्दिश्यमानस्यादेशा भवन्तीति त्रिशब्दस्यैव भवति । प्रियतिस्रावि- ति । अचिरकृत इति रादेशः । प्रियतिसृ इति । कथं पुनरत्र तिसृभावो यावता नि- त्यत्वात्स्वमोर्नपुंसकादिति लुकि कृते न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधेन भाव्यम् । उच्यते । इकोऽचि विभक्तावित्यत्राज्ग्रहणं ज्ञापकं क्व चिल्लुमता लुप्तेऽपि प्रत्ययलक्ष- णस्य । तथा च हे त्रपो इति संबुद्धिगुणो भवति क्व चित्प्रियत्रीति पाठः । स प्रत्ययलक्षणप्रतिषेधाश्रयः । इतीति । एते विधयः परत्वाद्युवावयोर्बाधकाः ।

न्तौ त्वामतित्वामतिमाम्। अतिक्रान्तास्त्वामतियूयमतिवयम्। अतिक्रान्तं त्वामतित्वामतिमाम्। अतिक्रान्तौ त्वामतित्वामतिमाम्। अतिक्रान्तान् त्वामतित्वान् अतिमान्। अतित्वयाऽतिमया। अतित्वाभ्यामतिमाभ्याम्। अतित्वाभिरतिमाभिः। अतितुभ्यमतिमह्यम्। अतित्वाभ्यामतिमाभ्याम्। अतित्वभ्यमतिमभ्यम्। अतित्वदतिमत्। अतित्वाभ्यामतिमाभ्याम्। अतित्वदतिमत्। अतितवातिमम। अतित्वयोरतिमयोः। अतित्वाकमतिमाकम्। अतित्वयि अतिमयि। अतित्वयोरतिमयोः। अतित्वास्वतिमासु। यद्येवं यूयवयौ जसि त्वाहौ सौ तुभ्यमह्यौ ङयि तवममौ ङसीत्येतेभ्यो विधिभ्यः परत्वात्त्वमावेकवचन इति प्राप्नोति। सावकाशा ह्येते विधय इदानीं भवन्ति। कोऽवकाशः। अनेकार्थे युष्मदस्मदी। त्वमावेकवचन इत्यस्यावकाशः। अन्यानि वचनानि। एकार्थयोर्युष्मदस्मदोः। एतेषु वचनेषूभयं प्राप्नोति। परत्वात्त्वमावेकवचन इति प्राप्नोति। नैष दोषः। शेष इति वर्तते। कश्शेषः। जसादिभिरव्याप्तं यदेकवचनं तस्मिन् शेषेऽशेषत्वान्न भविष्यति। अथ वा त्वमावेकवन इत्यत्र यूयवयौ जसि त्वाहौ सौ तुभ्यमह्यौ ङयि तवममौ ङसि इत्येतदनुवर्तिष्यते

त्रिचतुरोः स्त्रियां तिसृचतसृ॥ ९९॥ तिसृभावे संज्ञायां कन्युपसंख्यानम् *। तिसृभावे संज्ञायां कनि उपसंख्यानं कर्तव्यम्। तिसृका नाम ग्रामः। चतसर्याद्युदात्तनिपातनं च *। चतसर्याद्यु-

---

शेष इति वर्तत इति। अन्यथा अतिक्रान्तो युष्मानतित्वमत्यहम्। अतिक्रान्ताय युष्मानतितुभ्यमतिमह्यम्। अतिक्रान्तस्य युष्मानतितवातिममेत्यनेकार्थत्वे युष्मदस्मदोः समासे सावकाशास्त्वाहादयो ऽसमासे समासे ऽपि युष्मदस्मदोरेकार्थत्वे परत्वात्त्वमाभ्यां बाधनान्न प्राप्नुवन्ति। त्वमहं तुभ्यं मह्यं तवममेति। शेषग्रहणानुवृत्तौ तु यत्र यूयादयो न वितारस्तत्र त्वमौ भवतो नतु यूयादिविषये। तत्र शेषग्रहणं लोपग्रहणसंबन्धानुवृत्त्या यूयादिभिर्न संबध्यते त्वमावेकवचन इत्यत्र तु लोपग्रहणं निवृत्तं शेषग्रहणमनुवर्तत इति न कश्चिद्दोषः। अथ वेति। वाक्यभेदेन त्वमयोर्विषये यूयादयो विधीयन्ते॥

त्रिच। तिसृकेति। तिस्र एव तिसृका स्वार्थे कन्प्रत्ययः। ह्रस्वत्वे कुत्सितत्वे वा विवक्षिते संज्ञायां कनिति कन् वा। तत्र विभक्तौ लुकि कृते विभक्तौ विधीयमानस्ति-

दात्तनिपातनं कर्तव्यम् । किं प्रयोजनम् । चतस्रः पश्य । असित्य-री मा भूदिति । किं चान्यद् उपदेशिवद्वचनं च * । उपदेशिवद्भाव-श्च वक्तव्यः । किं प्रयोजनम् । स्वरसिद्ध्यर्थम् । उपदेशावस्थायामेवा-द्युदात्तनिपातने कृते विभक्तिस्वरेण बाधनं यथा स्याच्चतसृणामि-ति । स तर्ह्युपदेशिवद्भावो वक्तव्यः । न वक्तव्यः । उक्तं वा * किमुक्त-म् । विभक्तिस्वरभावश्च हलादिग्रहणात् । आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यमिति ॥

अचि र ऋतः ॥१००॥ अचिरादेशे जस्युपसंख्यानं गुणपरत्वात्*। अचिरादेशे जस्युपसंख्यानं कर्तव्यम्। तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्ति किं पुनः कारणं न सिध्यति । गुणपरत्वात् । परत्वाद् गुणः प्राप्नोति ।

---

सृभावो न प्राप्नोतीति वचनम् । तत्र केचिद्बहुवचनान्तः तिसृकाशब्दः संज्ञेत्याहुः । अपरे त्वेकवचनान्त इति । आमस्य ह्येकस्य तिसृकेति संज्ञेति नास्ति बहुवचनप्रसङ्गः। चतस्र इति । चतुरः शसीत्यनेन स्थानिवद्भावाद् अन्तोदात्तत्वं प्राप्नोति । तत उदात्तय-णो हल्पूर्वादिति शस उदात्तत्वप्रसङ्गः । चतसृणामिति । उपदेशावस्थायामाद्युदात्ते चतस्रादेशे कृते षट्त्रिचतुर्भ्यो हलादिरिति सति शिष्टस्वरः प्रवर्तते । यद्येवं चतस्रः प-श्येत्यत्रापि चतुरः शसीति सतिशिष्टत्वात्प्राप्नोति । नैष दोषः । आन्तरतम्यादाद्युदात्त-त्वे सिद्धे पुनराद्युदात्तत्वं निपात्यमानं चतुरः शसीत्यनेन विधीयमानंस्थानिवद्भावात्प्रा-प्तमन्तोदात्तत्वं बाधते । तत्र बाधितत्वात्पुनः प्रसङ्गाभावात्कुतः सतिशिष्टत्वम् । उक्त-मिति । चतुरः शसीत्यत्र । हलादिग्रहणं चतस्रः पश्येत्येतद्व्यावृत्त्यर्थमेव क्रियते । य-दि च निपातनस्वरेण विभक्तिस्वरो बाध्येत तदा हलादिग्रहणमन्तरेणापि विभक्तेः स्वरो न भविष्यतीति किं हलादिग्रहणेन तत्क्रियमाणं निपातनस्वरस्य विभक्तिस्वरो बाधक इति ज्ञापयति । अथ वा हलादिग्रहणेनाद्युदात्तनिपातनमेव न कर्तव्यमिति प्रतिपा-द्यते । यदि चतस्रः पश्येत्यत्र चतुरः शसीत्यनेनान्तोदात्तत्वं स्यात् तत उदात्तयणो ह-ल्पूर्वादिति स्यादेव विभक्तेराद्युदात्तत्वमिति तद्व्यावृत्तये हलादिग्रहणमनर्थकं स्यात्तस्मा-द्धलादिग्रहणाच्चतस्रः पश्येत्यत्र चतुरः शसीत्यस्याप्रवृत्तिरध्यवसीयते । ततश्चाद्युदात्तस्य चतुः शब्दस्याद्युदात्त एवान्तर्याच्चतस्रादेशो भवति । चतुः शब्दो न्रः संख्याया इति वा चतेरुरन्निति नित्वादाद्युदात्तः । चतसृणामित्यत्र तु षट्त्रिचतुर्भ्य इति विभक्तेरुदात्तत्वं भवति ॥

अचि र ऋतः । अचि रादेश इति । मध्येऽपवादा इति पूर्वसवर्णदीर्घस्य ऋत उ-दित्यत्वस्य च बाधकः प्राप्नोति न तु जसि च ऋतो ङिसर्वनामस्थानयोरिति गुणस्येति

तर्हि कर्तव्यम् । न वानवकाशत्वाद्रस्य । न वा कर्तव्यम् । किं कारणम् । अनवकाशत्वाद्रस्य । अनवकाशो रादेशः। गुणं वा धिष्यते । सावकाशोरादेशः । कोवकाशः । तिस्रः पश्य चतस्रः पश्य । नैषोस्त्यवकाशः । अत्रापि पूर्वसवर्णदीर्घःप्राप्नोति। स यथैव पूर्वसवर्णं बाधते एवं गुणमपि बाधिष्यते। गुणोप्यनवकाशः।सवकाशो गुणः। कोवकाशः । हे कर्तः। नैष सर्वनामस्थाने गुणः। कस्तर्हि संबुद्धिगुणः। अयं तर्हि हे मातः। एषोऽपि संबुद्धिगुण एव। नात्र संबुद्धिगुणः प्राप्नोति । किंकारणम्। अम्बार्थ नद्योर्ह्रस्व इति ह्रस्वत्वेनभवितव्यम्। भवेद्दीर्घाणां ह्रस्ववचनसामर्थ्यान्न स्यात्। ह्रस्वानां तु खलु ह्रस्वत्वं क्रियतां संबुद्धिगुण इति । परत्वात्संबुद्धिगुणेन भवितव्यम्। अथापि कथं चित्सावकाशो गुणः स्यात्। एवमपि न दोषः।पुरस्तादपवादा अनन्तरा-

---

भावः । न वेति। मध्ये अपवादा इति परिभाषानाश्रयेणोच्यते। विध्यन्तरपूर्वकत्वादस्य सर्वापवादत्वमित्यर्थः। गुणोऽप्यनवकाश इति। सोऽपिविध्यन्तरपूर्वकः कर्तारावित्यत्र पूर्वसवर्णदीर्घः प्राप्नोति कर्तार इत्यत्र जसि चेति गुणः सिद्धः। कर्तारमित्यत्रापि अमि पूर्व इति प्राप्नोति। तत्र द्वयोर्विध्यन्तरापवादयोरपवादविप्रतिषेधात्परत्वाद् गुणप्रसङ्गः। इतरो ऽन्यविधिपूर्वकत्वाभावं गुणस्य दर्शयति। सावकाश इति। हे कर्तरिति। संबुद्धौ ह्रस्वस्य गुण इति गुणं परत्वादृतो ङीति गुणो बाधत इति मन्यते तत्र कर्तारावित्यादौ यद्यपि परत्वात्पूर्वसवर्णादिकं बाधित्वा गुणो भवति तथापि विध्यन्तरपूर्वकेण रादेशेन बलीयसा न स्पृश्यत इति भावः। नैष इति। एतदर्थो गुणस्य नारम्भो लक्षणान्तरेण सिद्धत्वादित्यर्थः। हेमातरिति। संबुद्धिनिमित्तो गुणोत्र नास्ति। अम्बार्थनद्योर्ह्रस्व इति ह्रस्वेन बाधनात्। एषोपीति। गुणो ह्रस्वत्वं परत्वाद्बाधत इति भावः। अम्बार्थेति । अस्मिंश्च सति ऋतो ङीति गुणः प्रवर्तते। भवेद्दीर्घाणामिति।ननु दीर्घाणां ह्रस्वविधानं ह्रस्वस्य गुण इति गुणविधानार्थमेव स्यात्। ह्रस्वानां तु ह्रस्वविधानं गुणबाधनार्थं स्यात्। नैतदस्ति। एवं हि दीर्घाणामेव गुणं विदध्यात्। नदीह्रस्वयोर्गुण इति प्रक्रियागौरवमेवं परिहृतं भवति । परत्वात्संबुद्धिगुणेनेति। गुणस्यावकाशः अग्ने वायो। ह्रस्वस्यावकाशः। अम्ब अक्क। हे मातरिति परत्वाद् गुणः। एवं च सर्वनामस्थानगुणः पूर्वसवर्णापवाद एवेति अपवादविप्रतिषेधात्तिसृस्तिष्ठन्तीति परत्वाद्गुणप्रसङ्गः स च न जसिचेत्यनेन। किं तर्हि ऋतो ङीत्यनेन। जसि चेत्यस्मात्परत्वात् । अथापीति।

न् विधीन् बाधन्त इति। एवमयं रादेशः जसि गुणं बाधते। सर्वनामस्थानगुणं न बाधिष्यते। तस्मात्सुष्ठूच्यते अचि रादेशे जस्युपसंख्यानं गुणपरत्वादिति॥

जराया जरसन्यतरस्याम्॥ १०१॥ नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन *। नुमोवकाशः। त्रपुणी जतुनी तुम्बुरुणी। अनङोवकाशः। प्रियसक्थ्ना ब्राह्मणेन। इहोभयं प्राप्नोति। अतिजरांसि ब्राह्मणकुलानि। अनङ्जरसौ नुमो विप्रतिषेधेन। अथेह लुक्कस्मान्न भवति। अतिजरसं पश्येति। किं पुनः कारणं द्वितीयैकवचनमेवोदाह्रियते न पुनः प्रथमैकवचनमपि। अतिजरसं तिष्ठतीति। अ-

---

ऋस्वस्य गुण इति यदि योगविभागः क्रियते। अम्बार्थस्य ऋस्वान्तस्य ऋस्वो भवति। ततो गुण इति। ततश्च हे मातरित्यत्र ऋस्वे कृते सर्वनामस्थानगुणः क्रियते। एतच्चाभ्युपगमस्योच्यते न तु योगविभागस्य किं चिदस्ति प्रयोजनम्। सर्वनामस्थानगुणमिति। यद्यप्यबाधिते सर्वनामस्थानगुणे जसि गुणः फलतो न बाधितस्तथापि लक्षणव्यवस्थानुसारेणैतदुच्यते। न ह्ययं रादेशोनवकाशो यतः ऋतो ङिसर्वनामस्थानयोरित्येतं गुणं बाधेत। जसि चेति गुणबाधनेन ऋत उदित्युत्वबाधनेन शसिपूर्वसवर्णबाधनेन च सावकाशत्वात्। तस्मादिति। जसिग्रहणं ङिसर्वनामस्थानोपलक्षणमित्याहुः। तथा च प्रियतिस्राविति रादेशो भाष्य उदाहृतः। तेन प्रियतिस्रि निधेहि इत्यत्रापि रादेशो भवति। के चित्त्वाहुः चतसर्याद्युदात्तनिपातनमित्यत्र वार्तिके रादेशस्य ङावकरणाज्जसो ऽन्यत्र गुणविषये रादेशं वार्तिककारो नेच्छतीति नोपलक्षणं जसग्रहणम्॥

जराया। प्रियसक्थ्नेति। नपुंसकेनाङ्गस्य विशेषणान्नुमो ऽप्राप्तिरनङ्विधौ त्वस्थ्यादीनां विशेषणं नपुंसकमित्यनङ् भवति। अतिजरांसीति। अतिजर अस् इति स्थिते यदि पूर्वं नुमागमः स्यात् स च पूर्वाङ्गभक्तोऽङ्गमेव न व्यवदध्यात्। अवयवस्य तु जराशब्दस्य व्यवधायक इति निर्दिश्यमानस्यादेशो विधीयमानो न प्राप्नोति। अथापि स्यात्तथापि सकारात्परस्य नुमः श्रवणं स्यात्। तस्मात्परत्वात्पूर्वं जरसभाव एष्टव्यः। तत्र कृते झलन्तलक्षणो नुमागमः। अतिजरसं पश्येति। अतिजर अम् इति स्थिते एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य जरसि कृते स्वमोर्नपुंसकादिति स्वमोर्लुक् प्राप्नोति। ननु चातिजरशब्दस्यादन्तत्वादतोमित्यम्भावेन लुग्बाधितः कथं प्राप्नोति। नैतदस्ति। मात्राम्भावः प्रवृत्तः। परत्वान्नित्यत्वाद्वा जरसादेशेन बाधितत्वाज्जरसादेशे कृते ऽनकारान्तत्वादम्भावाप्रसङ्गाल्लुक्प्राप्तिश्चोद्यते। न पुनरिति। सोऽपि हि लुक् नेष्यते।

इत्यत्र विशेषः। नाचाकृते ऽजादौ जरसभावः प्राप्नोति। किं कारणम्। अचीत्युच्यते। यदा च जरसभावः कृतस्तदा लुग् न भविष्यति। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति। यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति। अतिजरमतिजरैरिति भवितव्यम्। गोनर्दीय आह। इष्टमेवैतत्संगृहीतं भवति। अतिजरमतिजरैरिति भवितव्यम्। सत्यामेव तस्यां परिभाषायां सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति॥

त्यदादीनामः॥ १०२॥ त्यदादीनां द्विपर्यन्तानामकारवचनम् *। त्यदादीनां द्विपर्यन्तानामत्वं वक्तव्यम्। किं प्रयोजनम्। युष्मदस्मदन्तानां भवदन्तानां वा मा भूदिति। तत्तर्हि वक्तव्यम्। त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः शेषे लोपस्य लोपेन ज्ञायते प्राक् ततोऽदिति। यदयं त्यदादीनामत्वेन सिद्धे युष्मदस्मदोः शेषे लोपं शास्ति तज्ज्ञापयत्याचार्यः प्राक् ततः अत्वं भवतीति न सर्वेषा-

---

यदा चजरस्भाव इति। या पूर्वं लुक्प्राप्तिःसाऽपवादेनबाध्यते। कृतेतुजरस्भावे सन्निपातपरिभाषया अजादिसन्निपातेन जरस्भावो निवृत्तो नोत्सहते अजाद्यानन्तर्यं विहन्तुम्। यद्येवमिति। सोर्भिसश्चाकारान्तसन्निपातेनाजादिरादेशो ऽकारान्तविघातिनं जरसादेशमनिमित्तं स्यात्। इष्टमिति। सन्निपातपरिभाषावशाद् अतिजरसं पश्येत्यत्र तु नाकारान्तसन्निपातकृतमजादित्वं भवतीति भवत्येव जरसादेशः। स त्वनादिसन्निपातनिमित्तत्वादजादेर्लुकं प्रत्यनिमित्तमिति लुगभावः॥

त्यदादीनामः। युष्मदस्मदन्तानामिति। युष्मद् भवतु अस्मद् इति येषां गणपाठः तदपेक्षयैतदुक्तम्। यद्यप्ययंस्यच्छब्द एवान्तस्तथाप्यत्यन्तसाहचर्याच्छास्त्रे युष्मदस्मदोर्युष्मच्छब्दो निर्दिष्टः। भवदन्तानां वेति। युष्मद् अस्मद भवत्विति पाठापेक्षमेतत्। किंशब्दस्य तु कादेशेन भवितव्यमिति त्यदादीनामन्तेऽपि किमः पाठे किमन्तानामिति नोक्तम्। के चित्तु द्विशब्दात्पूर्वं किंशब्दमधीयते। तेन किं सर्वनामबहुभ्यो ऽद्व्यादिभ्य इति किमो भेदेन ग्रहणं न कर्तव्यं भवति। तत्र भवच्छब्दस्यात्वापत्तिर्दोषो युष्मदस्मदोस्त्वात्वयत्वलोपैरत्वं बाध्यत इति दोषाभावः। शेषे लोपस्य लोपेनेति। यः शेषे लोपः प्रसिद्धस्तत्संबन्धिना लोपशास्त्रेणेत्यर्थः। क्व चित्तु शेषे रूपस्य लोपोनेति पाठः। तत्रायमर्थः। शेषे विषये रूपस्य लोपो विधीयते येन तेन। ततोऽदिति। इत्तपूरणार्थ-

मिति । अपि चोपसमस्तार्थमत्वाभावारक्कतं भवेत् । नैतदस्ति ज्ञापकम् । उपसमस्तार्थमेतत्स्यात् । अतियूयमतिवयम् । उपसमस्तानां हि त्यदादीनामत्वं नेष्यते । अतितत् अतितदौ अतितदः । टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम् ॥ यस्तु शेषे लोपष्टिलोपः स वक्तव्यः । किं प्रयोजनम् । टाबप्रतिषेधार्थम् । टाब् मा भूदिति । स तर्हि टिलोपो वक्तव्यः । न वक्तव्यः । अथ वा शेषसम्बन्ध्या शेषे लोपो विधीयते । इह युष्मदस्मदोर्लोप इति । इयता ह्यन्त्यस्य लोपः सिद्धः सोयमेवं सिद्धे सति यच्छेषग्रहणं करोति तस्यैतत्प्रयोजनमवशिष्टस्य लोपो यथा स्यादिति । लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न सर्वेषां त्यदादीनामत्त्वं भवतीति । यदयं किमः क इति कादेशं शास्ति । इतरथा हि कि-

---

त्परनिर्देशः । सूत्रे त्वतपर एवाकारो निर्दिष्टः । अपि चेति । ज्ञापकत्वं विघटयति । उपसर्जनानां त्यदाद्यत्वाभावादुपसर्जनयुष्मदस्मदर्थो लोपः स्यात् । अतियूयमिति । त्वामतिक्रान्ता इति प्रादिसमासः । टिलोप इति । अत्वे सति टाप्प्रसङ्गात्तदभावार्थः शेषे लोपष्टिलोपः सति प्रयोजने न ज्ञापकम् । अलिङ्गे युष्मदस्मदी इत्यनभ्युपगम्यैतदुच्यते । एकपदवाच्यस्याप्यर्थस्य शब्दान्तराभिव्यङ्ग्यत्वं दृश्यते । अब्रह्मत्वं ग्राममिति लिङ्गवत्त्वं केश्चित्तयोरभ्युपगतम् । अतएव नपुंसकादेशेभ्यो युस्मदस्मदोर्विभक्त्यादेशा इति विप्रतिषेधः पठितो न षट्स्वस्रादिभ्य इति च स्त्रीप्रत्ययनिषेधः षड्भ्यः कृतः । स तर्हीति । नन्वत्वेन सिद्धत्वाद्वचनाट्टिलोपो भविष्यति । नैतदस्ति । सर्वादेशः स्यादुपसर्जनस्य चात्वासिद्धिरुक्ता । अथ वेति । उक्तमेतल्लोपमुत्सर्गं विधायानादेशे हलादावात्वमजादौ तु यत्वमपवादो विधास्यत इति शेषग्रहणं विभक्तिविशेषणार्थमनर्थकम् । तत्क्रियते लोपस्य विषयार्थमपर्यन्ताद्योन्यः स शेषः स च टिरेव तस्य लोपस्थानी विषयसमस्या निर्दिष्टः । नन्वेवं तव ममेत्यादावादेशेषु मपर्यन्ताभावात्तदपेक्षया अच्छब्दस्य शेषव्यपदेशाभावाल्लोपाभावप्रसङ्गः । नैष दोषः । प्रागादेशविधानादच्छब्दः शेषत्वेन परिच्छिन्न इति परिच्छेदायोपादानादतन्त्वत्वं मपर्यन्तस्य । लुप्तशिष्टे हीति । लुप्ते यः शिष्टस्तस्मिन् कार्यस्य टाबभावस्य सिद्धिः । तवममादिषु चादेशेष्वकार उच्चारणार्थो हलन्ता एव त्वादेशा इति न क्वचिट्टाप्प्रसङ्गः । यदयमिति । किं सर्वनामबहुभ्य इति किम्शब्दस्य भेदेनोपादानाद्द्विशब्दात्परः किम् शब्दो गणे पठ्यत इति निर्णयः । यदि च द्विशब्दात्परेषामत्वं स्यात्किमः कं न विदध्यात्किम इत्येव ब्रूयात् । पूर्वसूत्रादकारस्यानुवृत्त्या

मः अद् भवतीत्येव ब्रूयात् । सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति न च किमोऽत्वे न सिध्यति । अत्वे हि सति अन्त्यस्य प्रसज्येत । सिद्धमन्त्यस्य पूर्वेणैव । तत्रारम्भसामर्थ्यादिकारस्य भविष्यति । कुतो नु खल्वेतत् । अनन्त्यार्थ आरम्भे सति इकारस्य भविष्यति । न पुनः ककारस्य स्यात् । यत्तर्हि किमो ग्रहणं करोति । इतरथा हि कादद् अद् भवतीत्येव ब्रूयात् । एवमपि ककारमात्रात्परस्य प्राप्नोति । त्यदादीनामिति वर्तते । न चान्यत्किमस्त्यदादिषु ककारवदस्ति । एवमप्यनैकान्तिकं ज्ञापकम् । एतावत्तु ज्ञाप्यते न सर्वेषां त्यदादीनामत्वं भवतीति । तत्र कुत एतद् द्विपर्यन्तानां भविष्यति । न पुनर्युष्मदस्मदन्तानां वा स्याद् भवदन्तानां वा । किं च । अवश्यं खल्वप्युत्तरार्थं किमो ग्रहणं कर्तव्यम् । कु तिहोः क्वातीति । कादेशः खल्वप्यवश्यं साकच्कार्थो वक्तव्यः । कः कौ के इत्येवमर्थम् । तस्माद्द्विपर्यन्तानामत्व वक्तव्यम् । त्यदादीनामकारेण सिद्धत्वाद् युष्मदस्मदोः ॥ शेषे लोपस्य लोपेन ज्ञायते प्राक् ततोदिति ॥ १ ॥ अपि चोपसमस्तार्थमत्वाभावात्कृतं भवेत् । टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम् ॥ २ ॥ अथ वा शेषसप्तम्या शेषे लोपो विधीयते ॥ लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥ ३ ॥

---

पूर्वेणान्त्यस्यात्वे कृते इकारस्य तु किम इत्यनेन द्वयोरकारयोः पररूपेण क इत्यादेः सिद्धत्वात् । न पुनः ककारस्येति । अनन्त्यस्य विकारे ऽन्त्यसदेशस्येति तु परिभाषा प्रयोजनाभावात् प्रत्याख्याता । कादद् भवतीति । ककारेकार उच्चारणार्थः । कादित्येतावत् सूत्रं क्रियते । अकारस्तु पूर्वसूत्रादनुवर्तते । स चादेः परस्येति इकारस्य भवति । मकारस्य तु पूर्वेण । ककारमात्रादिति । ज्ञकवाकुरित्यादावपि । न चान्यदिति । यद्यपि सर्वाणि त्यदादीन्यकचा ककारवन्ति तथापि तेषां कात्परोऽकार एवेति नास्ति विशेषः । इकिशब्दस्य त्यदाद्यत्वं भवत्येव । एवमपीति । विशेषस्य निश्चेतुमशक्यत्वात्प्रमाणाभावात् । साकच्कार्थ इति । सर्वस्य साकच्कस्य कादेशो यथा स्यादित्येवमर्थं किमः क इति कर्तव्यम् । तेनाज्ञातार्थविवक्षायां क इत्येव भवति न तु कक इति भवति । ननु निर्दिश्यमानस्यादेशा भवन्तीति साकच्कस्य कादेशो न प्राप्नोति । न च शक्यं वक्तुं किमः क इति वचनसामर्थ्याद्भवतीति । किम इति स्थानिनिर्देशस्योत्तरार्थत्वात् । एवं तर्हि तन्मध्यपतितत्वात्साकच् क स्यापि भवतीत्यदोषः ।

क्वा ति॥१०५॥ किमर्थं क्वादेश उच्यते। न कुतिहाल्लिल्येवोच्येत । कारूपसिद्धिः। क्व। यणादेशेन सिद्धम्। न सिध्यति। ओगुणः प्रसज्येत ॥

तदोः सः सावनन्त्ययोः॥१०६॥ किमर्थमनन्त्ययोरित्युच्यते। अन्त्ययोर्सा भूदिति। नैतदस्ति प्रयोजनम्। अत्वमन्त्ययोर्बाधकं भविष्यति अनवकाशा विधयो बाधका भवन्ति। सावकाशं चात्वम्। कोवकाशः। द्विशब्दः। सत्वमपि सावकाशम्। कोवकाशः। अनन्त्यम्। कथं पुनः सत्यन्त्ये अनन्त्यस्य सत्वं स्यात्। भवेद्यत्तकारदकाराभ्यामङ्गं विशेषयेत्। तस्यानन्त्ययोर्न स्यात्। वयं तु खल्वङ्गेन तकारदकारौ विशेषयामः। एवमप्युभयोः सावकाशयोः परत्वात्सत्वं प्राप्नोति। किं च स्यात्। यद्यन्त्ययोः सत्वं स्याद् इह हे स इति एङ्ह्रस्वादिति संबुद्धिलोपो न स्यात्। इह च या सा अत इति टाब्

---

क्वाति। किमर्थमिति। कुभावे कृते अङ्गवृत्त इति वचनादोर्गुणो न भवति। यणादेशस्त्वनाङ्गत्वाद्भविष्यतीति भावः। न सिध्यतीति। निष्ठितस्य दुर्ज्ञानत्वात्।

तदोः। किमर्थमिति। विशेषणविशेष्यभावे कामचारात्त्यदादीनां च द्विपर्यन्तानां मध्ये तकारान्तस्य कस्य चिदसंभवात्त्यदादिभिर्विशेषितयोस्तदोः सत्वं विधीयमानमनन्त्ययोः सावकाशमन्त्ययोरत्वेन बाधिष्यत इति प्रश्नः। अन्त्ययोरिति। परत्वात्प्राप्नोति, तकारस्यान्त्यस्यासंभवेऽपि सूत्रे द्वयोरुपादानादन्त्ययोरित्युक्तम्। नैतदस्तीति। पूर्वविप्रतिषेधमाश्रित्य चोदयति। द्विशब्द इति। उदाहरणमात्रमेतत्। अन्यच्च सोः सर्व एव त्यदादयोवकाशाः। सत्वमपीति। उभयोः सावकाशयोः परत्वात्सत्वप्रसङ्गः। कथं पुनरिति। आचार्यदेशीयः शिष्यबुद्धिपरिज्ञानाय पृच्छति। समुदायावयवसंबन्धौ उभयोरनुग्रहायावयवेन समुदायो विशिष्यते। एवं हि समुदायस्यापि कार्येण संबन्धः प्रतिपादितो भवति। अलोन्त्यस्येति वचनादवयवस्यापि। भवेदिति। व्याप्तिन्यायाश्रयणात्तकारान्तासंभवाच्च त्यदादिभिस्तदौ विशेष्येते। एवमपोति। सिद्धान्तवादी। अथ वा सत्वमपीति चोदकस्य ग्रन्थः। स च पूर्वविप्रतिषेधं मन्यते। कथं पुनरिति। चोदकमाचार्यो बुद्धिपरीक्षार्थं पर्यनुयुङ्क्ते, भवेदिति चोदक। एवमपोत्याचार्यः। अथ वा कथं पुनरित्यस्यायमर्थः। अनन्त्यस्यैव कथं सत्वं लभ्यते यावता अन्त्यस्यापि परत्वात्प्राप्नोति। चोदकस्त्वगृहीताभिप्राय आह। भवेदिति। आचार्यः स्वाभिप्रायमाह। एवमपोति। किं च स्यादिति। अन्त्यस्यापि दस्य सत्वे हल्ङ्यादिलोपेन सिध्यतीति मत्वा प्रश्नः। लोपो न स्यादिति। सत्वे सति ह्रस्वा-

न स्यात्। तस्मादनन्त्ययोरिति वक्तव्यम्। न वक्तव्यम्। एवं वक्ष्यामि। तदोः स सौ। ततोऽदसः। अदसश्च दकारस्य सो भवतीति। इदमिदानीं किमर्थम्। नियमार्थम्। अदस एव दकारस्य नान्यस्य दकारस्येति। यदि नियमः क्रियते। द्यतेरप्रत्ययः। द्य इति प्राप्नोति। स्य इति चेष्यते। यथालक्षणमप्रयुक्ते।

अदस औ सुलोपश्च ॥ १०७ ॥ अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ॥ अदस एव सोर्भवेदौत्वं किमर्थं सुलोपो विधीयते। ह्रस्वाल्लुप्येत संबुद्धिः ॥ इह हे असाविति एङ्ह्रस्वात्संबुद्धेरिति लोपः प्रसज्येत ॥ न हलः। हलो लोपः संबुद्धिलोपः। तद्धल्ग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतं हि तत्। प्रकृतं हल्ग्रहणम्। क्व प्रकृतम्। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलिति। तद्वै प्रथमानिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः। ह्रस्वादित्येषा पञ्चमी हलिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति। तस्मादित्युत्तरस्येति। आप एत्वं भवेत्तस्मिन् ॥ इह हे असौ ब्राह्मणि। आङि चापः संबुद्धौ चेति एत्वं प्रसज्येत। न झलीत्यनुवर्तनात् ॥ झलीति तत्रानुवर्तते। क्व प्रकृतम्। सुपि च बहुवचने झल्येदिति। प्रत्ययस्थाच्च कादित्वम्। इह

---

न्तत्वाभावात्। ननु त्यदाद्यत्वेऽपि कृते सन्निपातपरिभाषया संबुद्धिलोपाप्रसङ्गः। अनित्यत्वादस्याः परिभाषाया नायं दोषः। इह चेति। न यासयोरिति लिङ्गं आश्रीयमाणे अनेकार्थः कल्पनीयः स्यात्। ततोऽदस इति। तत्र तदोः सः साविति वर्तते। तकारो ऽसंभवात् त्यज्यते। द्यतेरिति। द्यामिच्छतीति द्यीयति। ततः क्विप्। अकारयकारयोर्लोपास्ततः सावीकारस्य त्यदाद्यत्वे सति स इति भवति। तदभावे तु द्य इति प्राप्नोति। यथालक्षणमिति। उपसर्जनत्वान्नात्र त्यदादिकार्येण भाव्यमिति द्योरित्येव भवति। अथ वा प्रयुक्तानामन्वाख्यानारम्भाद् दिवशब्दस्य च क्यजन्तस्य क्विपि प्रयोगाभावान्न केन चिल्लक्षणेन प्रवर्तितव्यम्।

अदसः। अदस इति। अदसः परस्य सोरेवौत्वं विधीयताम्। तत्र त्यदाद्यत्वे वृद्धिरेचीति वृद्धौ चासाविति सिध्यति। ह्रस्वादिति। यदि त्यदाद्यत्वं क्रियते तदा ह्रस्वान्तत्वात् संबुद्धिलोपप्रसङ्गः। तस्मादौत्वसुलोपौ विधीयेते। न हल इति। नायं दोषो यस्मादसौ हलो लोपो विधीयते। तेनौकारस्य न भविष्यति। हे असाविति। अत्वे टापि च सति वार्णादाङ्गं बलीय इति वृद्धिरेचीति वृद्धिमेवादेशं बाधित्वा आङि चाप इत्येवं प्राप्नोति। प्रश्लिष्टनिर्देशो

च असकौ ब्राह्मणीति प्रत्ययस्थात्कात्पूर्वस्येति इत्वं प्रसज्येत । नैष दोषः । प्रश्लिष्टनिर्देशोयम् । आ आप् आबिति । इहापि तर्हि न प्राप्नोति । कारिके हे हारिके इति । शीभावश्च प्रसज्यते । इह च शीभावश्च प्राप्नोति । असौ ब्राह्मणी । आप उत्तरस्य औङः शी भवतीति शीभावः प्राप्नोति । तस्मात्सोर्लोपो वक्तव्यः । सौ औत्वप्रतिषेधः साकच्काद्वा सादुत्वं च * । सौ औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः । साच्चपरस्य उत्वं वक्तव्यम् । असकौ असुकः । उत्तरपदभूतानामादेश उपदेशिवद्वचनम् * । उत्तरपदभूतानां त्यदादीनामादेशउपदेशिवद्भावो वक्तव्यः। परमाहं परमायं परमानेन । किं प्रयोजनम् । अनादिष्टार्थम् । अकृते एकादेशे आदेशा यथा स्युरिति । किं पुनः कारणम् एकादेशस्तावद्भवति । न पुनरादेशाः । न परत्वादादेशैर्भवितव्यम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गा आदेशाः । अन्तरङ्ग एकादेशः । असिद्धं बहिरङ्गमन्तरङ्गे । स तर्ह्युपदेशिवद्भावो वक्तव्यो,न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति । यदयं नेन्द्रस्य परस्येति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् । इन्द्रे द्वावचौ । तत्रैको यस्येति लोपेनापह्रियते ।

---

यमिति । अकाररूपो यः श्रूयते आप् तत्रेत्वं भवति । इह तु वृद्धौ कृतायामौकाररूपम् । कारिकेति । औङ आप इति शीभाव आद्गुणे च कृते एकारः श्रूयत इति इत्वम प्राप्नोति । संबुद्धौ वा कारिके इति रूपम् । ननु चात्रान्तरङ्गत्वात् प्राक् सुबुत्पत्तेरित्वं भविष्यति । असकावित्यत्र तु प्राक् सुबुत्पत्तेष्टाब्नास्ति । एवं तर्हि टापि कृत एकादेशात् पूर्वं वार्णादाङ्गं बलीय इति इत्वं प्राप्नोतीत्याकाररूप एवाबिति किं प्रश्लिष्टनिर्देशेन तस्मात् सामर्थ्याद्यथा वार्णादाङ्गमिति बाधित्वा एकादेशो भवत्येवं कारिके इत्यत्रापि अन्तरङ्गत्वात् पूर्वं विभक्तितन्निमित्तकार्यप्रसङ्गः । शीभावश्चेति । औङ इति वचनादौकारस्य यदा ङिदादेशानुमानं वर्णमात्रनिर्देशोवाङकारस्तूच्चारणार्थस्तदा शीभावप्रसङ्गः । यदा तु पूर्वसूत्रेण निर्देशस्तदा प्रथमाद्वितीयाद्विवचनयोरेव शीभावेन भाव्यमिति दोषाभावः । इत्वमपि प्रश्लेषनिर्देशेन शक्यं परिहर्तुम् । न च कारिके इत्यत्र दोषः । समानकालप्राप्तिकमेव ह्येकादेशमित्वं प्रतीयते न तु भिन्नकालप्राप्तिकम् । साकच्कादिति । साकच्काद्यः सुर्विहितः तस्मिन्नित्यर्थः । प्रतिषेधसन्नियोगेन सात्परस्याकारस्योत्वं भवति । बहिरङ्गा आदेशा इति । समासाद्या विभक्ति-

अपर एकादेशेन। अनच्क इन्द्रः संवृत्तस्तत्र को वृद्धेः प्रसङ्गः। पश्यति त्वाचार्यः पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति। ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति। अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते। हस्वाल्लुप्येत संबुद्धिर्न हलः प्रकृतं हि तत् ॥१॥ आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात्। प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ॥ २ ॥

मृजेर्वृद्धिः ॥ ११४ ॥ मृजेर्वृद्धिविधौ क्विप्रतिषेधः *। मृजेर्वृद्धिविधौ क्वान्तस्य प्रतिषेधो वक्तव्यः। कंसपरिमृड्भ्यां कंसपरिमृड्भिः। धातोः स्वरूपग्रहणे वा तत्प्रत्ययविज्ञानात्सिद्धम् *। अथ वा धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धम्। धातुप्रत्यये कार्यं भवतीति एषा परिभाषा कर्तव्या। कान्येतस्याः परिभाषायाः प्रयोजनानि। प्रयोजनं सृजिदृशिमस्जिनशिहन्तिगिरत्यर्थम् *। सृजि। रज्जुसृड्भ्याम्। रज्जुसृड्भिः। सृजि। दृशि। देवदृग्भ्याम्। देवदृग्भिः। दृशि। मस्जि। उदकमग्भ्याम् उदकमग्भिः। मस्जि। नशि। प्रणड्भ्यां प्रणड्भिः। नशि। हन्ति। वार्त्रघ्नः भौणघ्नः। हन्ति। गिरि। देवगिरौ देवगिरः। गिरि। यदि स्वरूपग्रहण इत्युच्यते प्रसृड्भ्यां प्रसृड्भिः। अनुदात्तस्य चर्दुपधस्यान्यतरस्यामिति अम् प्राप्नोति। एवं तर्हीयं परिभाषा कर्तव्या धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति। सा तर्ह्येषा परिभाषा कर्तव्या। न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषा यदयं भौणहत्ये तत्त्वं शास्ति।

---

त्पद्यते तदपेक्षत्वात्ततोऽन्तरङ्गत्वादेकादेशे कृते तस्यादिवद्भावादादेशेषु क्रियमाणेषु परमहं परमयमित्यादिरनिष्टप्रसङ्गः।

मृजे। कंसपरिमृड्भ्यामिति। विभक्तिमाश्रित्य वृद्धिः प्राप्नोति क्ङिति चेति प्रतिषेधः क्ङिन्निमित्ताया एव वृद्धेरित्यत्र न प्रवर्तते। रज्जुसृड्भ्यामिति। प्रत्ययो झलादिरकिद्भवतीत्यमागमप्रसङ्गः। प्रणड्भ्यामिति। नशेर्वेति कुत्वमप्यत्र न भवतीति केचिदाहुस्तदयुक्तम्। पदत्वनिबन्धनत्वादस्य प्रत्ययानपेक्षणात् मस्जिनशोर्झलीति नुमागमस्तु प्रत्ययापेक्षत्वादधातुप्रत्यये न भवति। वार्त्रघ्न इति। हनस्तोऽचिण्णलोरिति तत्वं न भवति। कुमिति चेति णत्वं कुव्यवाये हादेशेषु प्रतिषेध इति न भवति। देवगिराविति अचि विभाषेति लत्वं न भवति। अम् प्राप्नोतीति तद्विधौ धातोः स्वरूपेणानुपादानात्।

अचो ञ्णिति ॥ ११५ ॥ अज्ग्रहणं किमर्थम् । वृद्धावज्ग्रहणं गोर्थम् * । वृद्धावज्ग्रहणं क्रियते । गोतो वृद्धिर्यथा स्यात् । गौरिति । नैतदस्ति प्रयोजनम् । णित्करणसामर्थ्यादेवात्र वृद्धिर्भविष्यति । अस्त्यन्यस्मिन्णित्करणस्य प्रयोजनम् । किम् । गावौ । गावः इत्यत्रात उपधाया इति वृद्धिर्यथा स्यात् । अथ योगविभागः किमर्थः न ञ्णित्यत उपधाया इत्येवोच्येत । का रूपसिद्धिः चायको लावकः कारकः । गुणे कृतेऽयवोरपरत्वे चात उपधायाः इत्येव सिद्धम् । योगविभागः सख्यिव्यञ्जनाद्यर्थः । योगविभागः क्रियते सख्यर्थो व्यञ्जनाद्यर्थश्च । सख्यर्थस्तावत् सखायौ सखायः । व्यञ्जनाद्यर्थः । जैत्रं यौत्रं च्यौत्नम् । योगविभागे चेदानीं सख्यिव्यञ्जनाद्यर्थे क्रियमाणेऽज्ग्रहणमपि कर्तव्यं भवति । किं प्रयोजनम् । गोर्थम् ननु चोक्तं णित्करणसामर्थ्यादेवात्र वृद्धिर्भविष्यति । अस्त्यन्यस्मिन्णित्करणे प्रयोजनम् । किं गावौ गावः । अवादेशे कृतेऽत उपधाया इति वृद्धिर्यथा स्यात् । यत्तु सोर्णित्करणं तदनवकाशं तस्यानवकाशत्वादेव वृद्धिर्भविष्यति । यत्रैव खल्वपि णित्करणसामर्थ्यादनिको वृद्धिः प्राप्यते एव तत्वमपि प्राप्नोति । तत्वमपि हि ञ्णितीत्युच्यते । तस्मादज्ग्रहणं कर्तव्यम् ॥

तद्धितेष्वचामादेः ॥ ११७ ॥ अज्ग्रहणं कर्तव्यम् । ननु च क्रिय-

---

अचो ञ्णितीति । अज्ग्रहणमिति । अन्तरेणाज्ग्रहणमिक्परिभाषोपस्थानादिगन्तस्य वृद्धिः सिध्यति । अकारस्य तु चिकीर्षक इत्यादवतोलोप इति लोपेन भाव्यम् । आकारस्य तु विशेषो नास्ति सन्ध्यक्षराणामात्वेन भाव्यमिति प्रश्नः । गोर्थमिति । असत्यज्ग्रहण इक्परिभाषोपस्थानाद् गौरित्यत्र वृद्धिर्न स्यात् अथ योगविभागइति । यद्यपि गौरित्युक्तेनोदाहरणेन योगविभागस्य प्रयोजनं ज्ञाप्यते तथाप्यनेकप्रयोजनोपन्यासाय प्रश्नप्रतिवचने । सखायाविति । सखि औ इति स्थिते वृद्धेरप्रसङ्गः णित्वं तु सखाय इत्यत्र जसि गुणे ऽयादेशे च कृते ऽत उपधाया वृद्ध्यर्थं स्यात् सखाय इत्येतत्तु प्रसङ्गेनोदाहृतम् । णित्त्वावकाशप्रदर्शनार्थं वा । व्यञ्जनाद्यर्थं इति । व्यञ्जनादिर्यः प्रत्ययः तत्र वृद्ध्यर्थः । जैत्रमिति । जियुभ्याम् औणादिकष्ट्रण् । च्यौत्नमिति । जनिदाच्युद्धितिभ्यः । तत्वमिति । इनस्तोऽचिचक्लोरिति इष्टेरुच्यमानं गोरपि स्यात् । नैष दोषः । प्रापदित्यज्ग्रहणं क्रियते ।

नवि । अज्ग्रहणं कर्तव्यमिति । अचामित्यनेन निर्धारणषष्ठ्यन्तेन सामानाधिकर-

त एव । द्वितीयं कर्तव्यम् । यथाचामादिग्रहणमज्विशेषणं विज्ञायेत अचामादेरच इति । अर्थाऽक्रियमाणेज्ग्रहणे कस्याचामादिग्रहणं विशेषणं स्यात् । इग्विशेषणमित्याह । अचामादेरिक इति तत्र को दोषः । इहैव स्यात् । ऐतिकायनः । औपगवः । इह न स्यात् । गार्ग्यो वात्स्य इति । तत्तर्ह्यज्ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । अचोञ्णितीति । यदि तदनुवर्ततेऽत उपधाया अचश्चेति अज्मात्रस्य उपधाया वृद्धिः प्रसज्येत भेदकर्म्छेदक इति । अकारेण तपरेणाचं विशेषयिष्यामः अचः अत इति । इहेदानीमच इत्यनुवर्तते अत इति निवृत्तम् । अथ वा मण्डूकगतयोधिकाराः । तद्यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः । अथवैकयोगः करिष्यते अचोञ्णित्यत उपधायाः । ततस्तद्धितेष्वचामादेरिति । नचैकयोगेऽनुवृत्तिर्भवति । तद्धितेष्वचामादिवृद्धावन्त्योपधालक्षणप्रतिषेधः * । तद्धितेष्वचामादिवृद्धौ अन्त्योपधालक्षणाया वृद्धेः प्रतिषेधो वक्तव्यः । क्रौष्टः । जागत इति । नचाचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते । कथमन्यस्योच्यमानाऽन्यस्य बाधिका स्यात् । असति खल्वपि संभवे बाधनं भवति

---

णेनादेर्विशेषयितुमशक्यत्वादिक्परिभाषोपस्थानादिक एवाचो वृद्धिप्रसङ्गः । अथाक्रियमाण इति । निर्धारणं तुल्यजातीयस्य भवति यथा कृष्णा गवां संपन्नक्षीरतमेत्युक्ते गौरेव प्रतीयते तथा चाचामादिरजेव प्रत्येष्यत इति भावः । इग्विशेषणमिति । तुल्यजातीयनिर्द्धारणेऽपि इक इत्यस्योपस्थानं न निवार्यते । अज्ग्रहणे तु क्रियमाणे निर्दिष्टस्थानिकत्वादिक्परिभाषानुपस्थानं यथाऽचोञ्णितीत्यत्र । अन्मात्रस्येति । तन्वद्ग्रहणसामर्थ्यादज्मात्रस्य न भविष्यति । तत्सामर्थ्यात्तर्हि निवृत्तिरेवाज्ग्रहणस्य स्यान्नियमार्थं वाऽद्ग्रहणं स्यात् । अकारस्यैव ह्रस्वस्य नान्यस्येति दीर्घस्य त्वोहक इत्यादावुपधायाः स्यादेव । अकारेणेति । विशेषणस्यान्तरनिवृत्तिः प्रयोजनम् । अथ वैकयोग इति । एको भवतिरध्याक्रियते तेन तुल्यकालत्वाद्विधानस्य स्वकार्ये व्यापारादन्यत्रोपस्थानाभावः । क्रौष्ट इति । क्रोष्टृशब्दात्तृजन्तात्तस्येदमित्यण् । जागत इति । जगच्छब्दादण् । ननु चाचामादिवृद्धिरिति । अङ्गं कार्यि मन्यते तत्र तक्रकौण्डिन्यन्यायावतारः । इतरस्तु स्थानिभेदं मत्वाह । कथमन्यस्येति । आमलकीत्यादावन्यस्याऽपि स्वरो विधीयमानोऽन्यस्वरं बाधत एवेत्याशङ्क्याह । असति खल्वपी-

अस्ति च संभवो यदुभयं स्यात् । लोकविज्ञानात्सिद्धम् । सत्यपि संभवे बाधनं भवति । तद्यथा दधिब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति एवमिहापि सत्यपि संभवे ऽचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते । विषम उपन्यासः । नाप्राप्ते दधिदाने तक्रदानमारभ्यते तत्प्राप्ते आरभ्यमाणं बाधकं भविष्यति । इह पुनरप्राप्तायामन्त्योपधालक्षणायां वृद्धौ अचामादिवृद्धिरारभ्यते । सुश्रुतसौश्रुत इति । पुष्करसद्ग्रहणाद्वा । अथ वा यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति तज्ज्ञापयत्याचार्योऽचामादिवृद्धावन्त्योपधालक्षणा वृद्धिर्न भवतीति । इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

पादश्च समाप्तः ॥

---

ति । लोकविज्ञानादिति । अङ्गं कार्यि तदेवावयवद्वारेण संस्क्रियते । ततश्चैकस्य कार्यद्वयं न प्रवर्तते । कौण्डिन्य इव दधि तक्रं च । नाप्राप्त इति । सामान्यविशेषभावो बाधहेतुः स चेह नास्ति । पुष्करसद्ग्रहणाद्वेति । वाशब्दस्तद्ध्यर्थे । पूर्वस्य हेतोरनवस्थितत्वात् । ननु च ठगर्थः पुष्करसदः पाठः स्यात् । पुष्करसदाचरति पौष्करसादिक इति । ञ्णित्यत उपधाया इति वृद्धेर्विधानाट्ठक्यप्रसङ्गात् । एवं तर्हि ठगतोनभिधानान्न भवति । यद्वा प्रतिपदविहित इत्येव पुष्करसद उभयपदवृद्धिर्नान्यत्र । केचिदाहुः । लोकविज्ञानात्सिद्धमिति वार्तिककारस्य विप्रतिषेधो विवक्षितो यथा झलचोर्नुम्विधावुगित्प्रतिषेधेविप्रतिषेधात् सिद्धमिति।अन्त्योपधालक्षणाया वृद्धेरवकाशः गौः पाचकइति। अस्यावकाशः सौश्रुत इति।क्रौष्टो जागत इत्यत्रोभयप्रसङ्गे परत्वादादिवृद्धिर्भवति सकृद्गतपरिभाषाश्रीयते न तु पुनः प्रसङ्गविज्ञानम् । एवं च पुष्करसद्ग्रहणाद्वेति विकल्पार्थ एव वाशब्दो बाधकत्वसामान्याभिप्रायेण च शास्त्रविज्ञानमेव लोकविज्ञानमुक्तम् । अथ यत्रादिवृद्धिः प्रतिषिध्यते तत्रान्त्योपधालक्षणा कस्मान्न भवति । व्यसोर्भावो वैयसवमिति इगन्ताच्चे त्यण् । व्यापदि भवं वैयापदमिति । अत्राप्यैचो परत्वाद्बाधकाविति सर्वेष्टसिद्धिः ॥

इत्युपाध्यायजैय्यटपुत्त्रकैय्यटकृते महाभाष्यप्रदीपे सप्तमाध्यायस्य द्वितीयेपादे द्वितीयमाह्निकम् । पादश्च द्वितीयः समाप्तः ॥

देविका शिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥१॥ देविकादिषु तदादिग्रहणम् * । देविकादिषु तदादिग्रहणं कर्तव्यम् । इहापि यथा स्यात् । दाविकाकूलाः शालयः । शांशपास्थला देवाः । किं पुनः कारणं न सिध्यति । अन्यत्र हि तद्ग्रहणात्तदन्तग्रहणाद्वा । अन्यत्र हि तस्य वा ग्रहणं भवति तदन्तस्य वा । न चेदं तद् नापि तदन्तम् । आद्यज्विशेषणत्वात्सिद्धम् * । आद्यज्विशेषणं देविकादयः । नैवं विज्ञायते देविकादीनामङ्गानामचामादेराकारो भवतीति । कथं तर्हि ञ्णित्यङ्गस्याचामादेरच आकारो भवति स चेद्देविकादीनामाद्यज्भवतीति । अन्तरतमनिवर्तकत्वाद्वा * । अथ वा नानेनान्तरतमा वृद्धिर्निवर्त्यते किं तर्ह्यन्तरतमानेन निवर्त्यते तोसिद्धाच्च वृद्धिस्तद्धितेष्वचामादेरित्येव । तत्रानेनान्तरतमा वृद्धिर्निवर्त्यते । परिहारान्तरमेवेदं मत्वा पठितम् । कथं चेदं परिहारान्तरं स्याद् यदि ना-

---

देविकाशिंशपादित्यवाट्दीर्घसत्रश्रेयसामात् । देविकादिष्विति । विशेषणविशेष्यभावे कामचाराद्यदाङ्गेन देविकादीनि विशेष्यन्ते तदा तेषामङ्गमन्ते न संभवतीति तदन्तविध्यभावादङ्गानि देविकादीन्याश्रीयन्ते । यदा तु देविकादिभिरङ्गं विशेष्यते । तदा तदन्तविधिना देविकाद्यन्तमङ्गं गृह्यते । न तु कथं चित्तदादिविधिसंभव इति तदादिग्रहणं कर्तव्यम् । तत्र केवलानां देविकादीनां तदादीनां चाकारोभवतीति वक्तव्यम् । अन्यथा केवलानां न स्यात् । दाविकमुदकं शांशपश्चमस इति । न च व्यपदेशिवद्भावोऽस्ति । अप्रातिपदिकेनेति प्रतिषेधात् । यदि तु प्रत्ययविधिविषय एवायं निषेधस्तदा केवलानां व्यपदेशिवद्भावात् सिध्यति । आद्यज्विशेषणमिति । अङ्गस्य देविकादिभिः संबन्धाभावः । अन्तरतमनिवर्तकत्वाद्वेति । ञ्णितीति कितीति वर्तते । तत्र स्थानेऽन्तरतम इति वचनादैकारो वृद्धिसंज्ञः प्राप्त आदितिवचनेन निवर्त्यते । न त्वपूर्व आकारो विधीयते अनेन हि स्थाने ऽन्तरतम इति नियमं बाधित्वा नियमान्तरं क्रियते देविकादीनामाकारो वृद्धिर्नान्या । परिहारान्तरमिति । परिभाषेयम् । देविकादीनां वृद्धिर्विधीयमानाकार एव भवतीति केवलानां तदादीनां च वृद्धिर्देविकादीनां भवतीति तत्रैव परिभाषा प्रवृत्तिः । सुदेविकायां तु या वृद्धिर्न सा देविकादिशब्दस्य किं तु तदन्तस्येति परिभाषानुपस्थानादैकार एव भवति । यथोद्देशं परिभाषाश्रीयते न कार्यकाला अन्यथा ऽङ्गप्रकरणे देविकादीनामादित्यस्योपस्थानादव्याप्त्यतिव्याप्ती: पूर्ववदन्यतरप्रसङ्गः स्यात् । इह तु प्रदेशे सूत्रे क्रियमाणे विधिरेवाकारस्य भवति । अर्थात्त्वैकार-

दाज्विशिष्टं देविकादयः । अवश्यं चैतदेवं विज्ञेयमाद्यज्विशेषणं देविकादयइति । यदि ना दाज्विशेषणं देविकादयःस्युरिहापि प्राप्नोतिसुदेविकायां भवः सौदेविक इति । अथाचाप्याद्यज्विशेषणत्वादित्येवंसिद्धं, परिहारान्तरं न भवति । न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति किं तर्हि यत्र क्रियमाणे न दोषस्तत्र कर्तव्यम् । क्व च क्रियमाणे न दोषः । संज्ञाविधौ वृद्धिरादैज्देविकादीनामाकार इति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं देविकादिषु तदादिग्रहणमन्यत्र तद्ग्रहणाद् तदन्तग्रहणाद्धेति । परिहृतमेतत् । आद्यज्विशेषणत्वात्सिद्धम् । न्यग्रोधे च केवलग्रहणात्* । न्यग्रोधे च केवलग्रहणान्मन्यामहे आद्यज्विशेषणं देविकादयइति । तस्य केवलग्रहणस्यैतत् प्रयोजनम् । इह मा भूत् । न्याग्रोधमूलाः शालय इति । यदि चाद्यज्विशेषणं देविकादयः ततः केवलग्रहणमर्थवद्भवति । तदेतत्कथं कृत्वा ज्ञापकं यदि न्यग्रोधशब्दोऽव्युत्पन्नं प्रातिपदिकं भवति । अथ हि न्यग्रोहतीति न्यग्रोधः । ततो नियमार्थं पदान्त इति कृत्वा न ज्ञापकं भवति । वहीनरस्येद्वचनम् * । वहीनरस्यैत्वं वक्तव्यम् । व-

---

स्य निवृत्तिरिति नायं परिहार उपपद्यते अन्तरनमनिवर्तकत्वाद्धेति । सूत्रं तर्हीति । अष्टाध्यायीलक्षणं सूत्रं संनिवेशान्तराश्रयणे भिद्यते । अथ वास्यैव सूत्रस्य स्थानभेदाद्भेदो भवति । आद्यज्विशेषणत्वादिति । द्वितीयः परिहारो दूषितः । पूर्वस्तु स्थित एव । अत्रैवार्थे लिङ्गदर्शनम् । न्यग्रोधे चेति । केवलग्रहणमिह प्रकरणे गृह्यमाणमाद्यज्विशेषणमिति ज्ञापयति । अन्यथा तदनर्थकं स्यात् । न च तदन्तविधिनिरासार्थमङ्गेन न्यग्रोधस्य विशेषणात्तदन्तविधेरप्रसङ्गात् । तदेतदिति । अव्युत्पत्तिपक्षे न्यग्रोधस्य च केवलस्येति वृद्धिनिषेधस्यैचश्च विधायकमिति केवलग्रहणं ज्ञापकार्थं भवति । व्युत्पत्तिपक्षे तु न य्वाभ्यामिति सिद्धे केवलस्यैव न्यग्रोधशब्दस्य यथा स्यात् । न्याग्रोधमूलाः शालय इत्यादौ मा भूदिति नियमार्थं केवलग्रहणं न ज्ञापकं भवति । न हि न्यग्रोधस्येत्येतावता ऽभिमतनियमसिद्धिः । नन्वङ्गस्यैव न्यग्रोधस्य नाङ्गादेरित्येवमिष्टो नियमः सिध्यत्येव । नतदस्ति । अनिष्टोऽपि नियमः स्यात् । न्यग्रोधस्यैव निशब्दात्परस्य वृद्धिप्रतिषेध इति । तथा च नैयायिको नैयासिक इत्यादौ न स्यात्तस्मात् केवलग्रहणमभिमतनियमसाधनाय । श्वादेरित्ययं तु निषेध उक्तार्थे ज्ञापको भवति । वहीनरस्येति । वहोऽस्यास्तीति वहो स चासौ नरश्चेति कर्मधारयसमासः । ऽन्येषामपि दृश्यत इति दीर्घः । तस्या-

हीनरस्यापत्यं वैहीनरिः। कुशारवाडवस्त्वाह नैषव्रहीनरः कस्तर्हि विहीनर एषः। विहीनो नरः कामभोगाभ्यां विहीनरः। विहीनरस्यापत्यं वैहीनरिः॥

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्या मैच्॥ ३॥ य्वाभ्यां परस्यावृद्धित्वम्। य्वाभ्यां परस्यावृद्धित्वं सिद्धम्। कुतः। अपवादौ वृद्धिर्हि तौ। अपवादौ वृद्धेस्तावैचावुच्येते। नित्यावैचौ तयोर्वृद्धिः। अथवा नित्यावैचौ कृतायामपि वृद्धौ प्राप्नुतः अकृतायामपि। नित्यत्वादैचोः कृतयोर्यद्यपि वृद्धिस्तयोरेव। किमर्थं नेति शिष्यते। अथ किमर्थं प्रतिषेध उच्यते। ऐचोर्विषयार्थं प्रतिषेधसन्नियुक्तं वचनम्। ऐचोर्विषयार्थं प्रतिषेधसन्नियोगेनैवैचावुच्येते। यत्र य्वाभ्यां परावृद्धिस्तत्राध्यश्वेर्यथा न तौ। यत्र य्वाभ्यां परस्यावृद्धित्वमुच्यते तत्रैचौ यथा स्यातामिह मा भूतामाध्यश्विः दाध्यश्विः माध्वश्विरिति। नैतदस्ति प्रयोजनम्। अचामादेर्य्वाभ्यां हि तौ। अचामादिनाच य्वौ विशेष-

---

प्रत्ययत इञ् तत्रादिवृद्धेरपवाद इकारो विधीयते। इकारस्य वृद्धिर्भवत्येव। न च तस्यां प्राप्तायामित्वं विधीयते। यतः सापि वाध्येत विहीनो नर इति। पृषोदरादित्वान्नलोपः।

न य्वाभ्याम्। य्वाभ्यां पदान्ताभ्यां पूर्वावैजित्येवसूत्रंकार्यं नार्थोवृद्धिनिषेधेन। अपवादाविति। एकस्मिन्नङ्गविशेषे विधीयमानावैचौ सामान्यविहिताया वृद्धेर्बाधकौ। सत्यपि संभवे सामान्यविशेषविषयत्वेन बाध्यबाधकभावदर्शनात्। इदानीं विषयभेदादसत्यप्येजवृद्ध्योर्बाध्यबाधकत्वे प्रतिविधातुमाह। यद्यपीति। अभ्युपगमवादेनोच्यते न हि वृद्धौ सत्यां सर्वेष्टसिद्धिः। वैयाकरणभार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधप्रसङ्गात्। तस्माच्छब्दान्तरप्राप्तां वृद्धिमनित्यां बाधित्वानित्यावैचौ भविष्यतः। बाधितत्वाच्च पुनर्वृद्धिर्न भविष्यतीत्यभ्युपेयम्। ऐचोर्विषयार्थमिति। याभ्यां य्वाभ्यां परस्य वृद्धिः प्राप्ता निषिध्यते ताभ्यां पूर्वावैचौ यथा स्यातामन्याभ्यां मा भूतामित्येवमर्थं प्रतिषेधविधानम्। आध्यश्वेर्यथानताविति। स्यातामिति वाक्यशेषः। अध्यारूढोऽश्वमिति प्रादिसमासः। अत इञ्। असत्यपि निषेधविधाने दोषं परिहर्तुमाह। अचामादेरिति। अचामादेरचः स्थाने यौ य्वौ ताभ्यां पूर्वौ भवत इत्याश्रीयमाणे आध्यश्विरित्यादावैचोरप्रसङ्गः। द्व्याशीतिक इति। द्वे अशीतीभूत इति तद्धितार्थे समासः ततष्ठञ्। अध्यर्धपूर्वद्विगोरित्यत्राऽर्हादित्यधिकाराल्लुग् न भवति। अत्राचामादेरचो यकारस्य विधानात्तत: पूर्व ऐकारः प्राप्नोति। ताविति। द्विवचनं द्व्याशीतिकस्योपलक्षणत्वादुपात्तम्

यिष्यामः अचामादेर्यौ य्वाविति । कथं द्व्याशीतिकेन तौ । द्व्याशीतिक इत्यत्र कस्मान्न तौ भवतः । यत्र वृद्धिरचामादेस्तत्रैचावत्र य्वोर्हि सा । यत्राचामादेरित्येवं वृद्धिस्तत्रैचावुच्येते । अत्र य्वोरित्येवं वृद्धिः । किमिदं य्वोरिति । उत्तरपदस्येति । उत्तरपदाधिकारे ऽप्यवश्यमैजागमोऽनुवर्त्यः । पूर्वत्रालिन्दे भवः पूर्वत्रैयलिन्द इत्येवमर्थम् । नैष दोषः । उत्तरपदेनात्राचामादिं विशेषयिष्यामः । अचामादिना य्वौ उत्तरपदस्याचामादेर्यौ य्वाविति । अथ कस्मात्पदान्ताभ्याम् । अथ किमर्थं पदान्ताभ्यामित्युच्यते । यथैणो न भवेद्यणः । इणो यणादेशे माभूत् । यतश्छात्रा याता इति । इह वैयाकरणः सौवश्व इति शाकलं प्राप्नोति । य्वोश्च स्थानिवद्भावादायावौ प्राप्नुतः । शाकलायावादेशेषु चोक्तम् । किमुक्तम् । शाकले तावदुक्तम् । सिन्नित्यसमासयोः शाकलप्रतिषेध इति । आयावोः किमुक्तम् । अचः पूर्वविप्रतिषेधादैचोः सिद्धमिति । य्वाभ्यां परस्याद्वृद्धित्वमपवादौ वृद्धेर्हि तौ । नित्यावैचौ तयोर्वृद्धिः किमर्थं नेति शिष्यते ॥ १ ॥ यत्र य्वाभ्यां परा वृद्धिस्तत्राध्यश्वेर्यथा न तौ । अचामादेर्य्वाभ्यां हि तौ कथं द्व्याशीतिकेन तौ ॥ २ ॥ यत्र वृद्धिरचामादेस्तत्रैचावत्र य्वोर्हि सा । अथ कस्मात् पदान्ताभ्यां यथैणो न भवेद् यणः ॥ ३ ॥

---

यद्यपि य्वोरचामादिना विशेषणाभावेऽप्यत्र दोषस्तथापि विशेषणे सर्वं न सिध्यतीति प्रतिपादनायेदमुच्यते । एतत्परिहरति । यत्रेति । अचामादेरिति या वृद्धिः प्राप्नोति तदपवादावैचौ विधीयेते । अत्र तु संख्यायाः संवत्सरसंख्यस्येति वृद्धिर्विधीयते । अचामादेरिति वर्तते । तन्त्रेण च ते द्वे अचामादेरित्येतदाश्रीयते । तत्रैकं स्वरूपपरम् । तेनाचामादेरित्येवं या वृद्धिस्तस्यां प्राप्तायां तदपवादावचामादेरचः स्थाने य्वाभ्यां पूर्वावैचौ भवत इत्यर्थः संपद्यते । उत्तरपदाधिकारेऽपीति । तथा च द्व्याशीतिके दोषः । पूर्वत्रैयलिन्द इति । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः प्राप्ता निषिध्यते । नैष दोष इति । द्व्याशीतिक इत्यत्र । तदेवं नेति प्रत्याख्यातम् । याता इति । अचामादेरचः स्थाने भवत्ययं यकार इति ऐच् प्राप्नोति । ननु चान्तरङ्गत्वात् पूर्वमेव यणाभाव्यम् । इहापि व्याकरणं स्वश्व इति पूर्वमेव यण् भवति । ततो यथा भूतपूर्वगत्याचाचामादेर्यणौ भवतस्तथा यणादेशो भवतीत्यदोषः । अचः पूर्वविप्रतिषेधादिति । योऽनादिष्टादचः पूर्वस्तस्य विधौ स्थानिवद्भाव इत्यर्थः ।

द्वारादीनांच ॥ ४ ॥ अथ परस्यात्वृद्धिरित्यनुवर्तते उताहो न। किं चातः। यद्यनुवर्तते शौवं मांसं टिलोपे कृते ऐजागमो न प्राप्नोति। अथ निवृत्तं स्वाध्यायशब्दो द्वारादिषु पठ्यते तत्र यावन्तो यणः सर्वेभ्यः पूर्वं ऐजागमः प्राप्नोति। यथेच्छसि तथास्तु। अस्तु तावदनुवर्तते। कथं शौवं मांसम्। आनुपूर्व्यात्सिद्धमेतत्। नाचाकृते ऐजागमे टिलोपः प्राप्नोति। किं कारणम्। प्रकृत्यैकाजिति प्रकृतिभावेन भवितव्यम्। तदेतदानुपूर्व्यात्सिद्धम्। अथ वा पुनरस्तु निवृत्तम्। ननु चोक्तं स्वाध्यायशब्दो द्वारादिषु पठ्यते। तत्र यावन्तो यणः सर्वेभ्यः पूर्वं ऐजागमः प्राप्नोतीति। कः पुनरर्हति स्वाध्यायशब्दं द्वारादिषुपठितुम्। एवं किल पठ्येत स्वमध्ययनं स्वाध्याय इति। तच्च न। सुष्ठु वा अध्ययनं स्वाध्यायः। शोभनं वा अध्ययनं स्वाध्यायः। अथापि स्वमध्ययनं स्वाध्यायः। एवमपि न दोषः। अचामादेरिति वर्तते ॥

---

द्वारा। पूर्वसूत्रे वृद्धिनिषेधः प्रतिपत्तिलाघवाय कृतो नह्येकेनाचामादेरित्यनेनोभयं विशेषयितुं शक्यम्। नाप्यप्रतिषिध्यमाना वृद्धिरचामादेरित्यनेन शक्याविशेषयितुमिति यथान्यासं प्रतिषेधमाश्रित्य विचार्यते। परस्येति। यदीति। यत्रैव वृद्धिप्रतिषेधस्तत्रैवैज्भ्यां भाव्यं नान्यत्र। शौवमिति। शुनो विकार इति प्राणिरजतादिभ्योऽञित्यञ्। श्वन्शब्दस्य तु पाठस्तदाद्यर्थः स्याच्छौवहानमिति। यावन्तो यण इति। अपदान्तार्थत्वादस्य सर्वेभ्यो यण्भ्यः पूर्वावैचौ प्राप्नुतः प्रतिषेधे तु विधीयमाने याभ्यां य्वाभ्यां परस्य वृद्धिप्रतिषेधस्ताभ्यां पूर्वावैचाविति नास्ति सर्वप्रसङ्गः। प्रकृत्यैकाजिति। इष्टेमेयःसु प्रकृतिभावः। तथा च श्वो देवतास्य श्व इत्यत्र न भवति। इह त्वविशेषेण प्रकृतिभावमाश्रित्यैतदुक्तम्। परिहारदिक्प्रदर्शनार्थम्। अत्र हि परत्वाट्टिलोपं बाधित्वा वृद्धिः प्राप्ता प्रतिषिध्यत इति भवत्यैजागम इत्ययमत्र परिहारः। सुष्ठु वा अध्ययनमिति। अन्येषामपि दृश्यत इति दीर्घः। आङ् वा मध्ये प्रश्लेषव्यः। अचामादेरिति वर्तत इति। तत्रैवं संबन्धोऽचामादेरनन्तरौ यौ य्वौ ताभ्यां पूर्वावैचौ भवत इति तेन स्वाध्यायशब्देवकारात्पूर्वमैज् भवति न तु यकाराभ्यामित्यर्थः। यद्यपि स्वोऽध्यायः स्वाध्याय इत्यस्यामपि व्युत्पत्तौ स्वाध्यायशब्दो न पठितव्यः स्वशब्दस्येह पाठात्तदादिविधेरिष्टत्वात्तथाऽपि पाठेऽपि दोषो नास्तीति प्रदर्शनाय भाष्यकारेण ।।८८।। २२ ।। परिहारो ।।१२।।

श्वादेरिञि ॥ ८ ॥ श्वन्शब्दो द्वारादिषु पठ्यते। तत्र कः प्रसङ्गो यत्तदादेः स्यात्। नैव प्राप्नोति नार्थः प्रतिषेधेन। तदादिविधिना प्राप्नोति। न वै तदादिविधिरस्ति। अत उत्तरं पठति प्रतिषेधे श्वादिग्रहणं ज्ञापकमन्यत्र श्वन्ग्रहणे तदादिग्रहणस्य शौवहानाद्यर्थम् *। प्रतिषेधे श्वादिग्रहणं क्रियते ज्ञापकार्थम्। किं ज्ञाप्यम्। एतज्ज्ञापयत्याचार्यः अन्यत्र श्वन्ग्रहणे तदादिविधिर्भवतीति। किमेतस्य ज्ञापने प्रयोजनम् शौवहानाद्यर्थम्। शौवहानं नामनगरं शौवादंष्ट्रो मणिरिति। इकारादिग्रहणं च श्वागणिकाद्यर्थम् *। इकारादिग्रहणं च कर्तव्यम्। किं प्रयोजनम्। श्वागणिकाद्यर्थम्। श्वगणेन चरति श्वागणिकः। तदन्तस्य चान्यत्र प्रतिषेधो वक्तव्यः श्वाभस्त्रेः स्वं श्वाभस्त्रम् ॥

उत्तरपदस्य ॥ १० ॥ किमर्थमिदमुच्यते। अवयवादृतोरिति वक्ष्यति तदुत्तरपदस्य यथा स्यात्। अचामादेर्मा भूत्। नैतदस्ति प्रयोजनम्। अवयवादिति पञ्चमी तत्रान्तरेणाप्युत्तरपदग्रहणमुत्तरपदस्यैव भविष्यति। उत्तरार्थं तर्हि सुसर्वार्द्धाज्जनपदस्येति। सुसर्वा-

---

श्वादेः। तदादिविधिनेति। आद्यज्विशेषणत्वाद्द्वारादीनां तदादिविधिरस्ति। इतरस्त्वगृहीताभिप्राय आह। नैव तदादिविधिरस्तीति। श्वन्ग्रहणादिति। श्वन्ग्रहणस्योपलक्षणार्थत्वादेतत्प्रकरणनिर्दिष्टैर्देविकादिभिर्द्वारादिभिश्वादेरचो विशेषणात्तदादिविधिर्भवतीति ज्ञाप्यते। शौवहानमिति। जिहते ऽस्मिन्निति ल्युट् शुनां हानमिति षष्ठीसमासः श्वहानमस्मिन्नस्तीतितदस्मिन्नस्तीति देशे तन्नाम्नीत्यण् वृद्धिनिषेधः ऐजागमश्च द्वारादित्वात्। शौवादंष्ट्र इति। शुनो दंष्ट्रा श्वादंष्ट्रा। शुनोदन्तदंष्ट्रेति दीर्घः। तत्रभव इत्यण्। संज्ञापूर्वको विधिरनित्य इति वृद्धाच्छो न भवति। इकारादिग्रहणमिति। श्वादेरितोति सूत्रं कर्तव्यम्। तत्र यस्मिन्विधिस्तदादावल्ग्रहण इति तदादिविधिर्भवति। श्वागणिक इति। श्वगणाठ्ठञ्चेति ठञ्। तदन्तस्येति। इञन्तस्य। श्वाभस्त्रमिति। इञश्चेत्यण् बाह्यतद्धितनिमित्तो वृद्धिप्रतिषेध ऐजागमश्च बहिरङ्गत्वादशक्य इञाश्रयेण निषेधेन निवारयितुमिति वचनारम्भः ॥

उत्तरपदस्य। किमर्थमिति। तस्मादित्युत्तरस्येति वचनादुत्तरपदस्यैव वृद्धिर्भविष्यतीति प्रश्नः। आचार्यस्तु शिष्यबुद्धिपरीक्षार्थमाह। अवयवादृतोरिति। जे प्रोष्ठपदानामि-

र्धादिति पञ्चमी । दिशोमद्राणां दिश इति पञ्चमी । प्राचां ग्रामनगराणाम् । दिश इत्येव । संख्यायाः संवत्सरसंख्यस्य च । संख्याया इति पञ्चमी वर्षस्याभविष्यति । संख्याया इत्येव । परिमाणान्तस्यासंज्ञाशाणयोरिति । सख्याया इत्येव । इदं तर्हि प्रयोजनम् । जे प्रोष्ठपदानामुत्तरपदस्य यथा स्यात्पूर्वपदस्य मा भूत् । प्रोष्ठपदासु जातः प्रोष्ठपादो ब्राह्मणः । तद्धितेष्वचामादिवृद्धेरुत्तरपदवृद्धिर्विप्रतिषेधेन द्व्याशीतिकाद्यर्थम् * । तद्धितेष्वचामादेरुत्तरपदवृद्धिर्भवति विप्रतिषेधेन । किं प्रयोजनम् द्व्याशीतिकाद्यर्थम् । अचामादिवृद्धेरवकाशः ऐतिकायनः औपगवः । उत्तरपदवृद्धेरवकाशः द्विषाष्टिकम् । त्रिषाष्टिकम् । इहोभयंप्राप्नोति । द्व्याशीतिकः त्र्याशीतिकः। उत्तरपदवृद्धिर्भवति विप्रतिषेधेन । कः पुनरर्थविशेषोऽचामादिवृद्धौसत्यां उत्तरपदवृद्धौ वा । अयमस्ति विशेषः । यद्यचामादिवृद्धिः स्यादैजागमः प्रसज्येत ॥

प्राचां ग्रामनगराणाम् ॥ १४ ॥ नगरग्रहणं किमर्थम् । न प्राचां ग्रामाणामित्येव सिद्धम् । न सिध्यति। अन्यो हि ग्रामः अन्यन्नगरम् । कथं ज्ञायते।एवं हि कश्चित्कंचित्पृच्छति कुतो भवानागच्छति ग्रामात् । स आह न ग्रामान्नगरादिति । ननु च भोः य ए-

---

ति। पञ्चमीनिर्देशाभावादुत्तरपदस्य न स्यात् । वचनं त्वनाद्यजर्थं विज्ञायमानं पूर्वपदस्यापि वृद्धिं विदध्यात् । नियमार्थं वा स्यात् । जातार्थं एव प्रोष्ठपदानां वृद्धिः प्रोष्ठपदानामेव वा जातार्थं इति । प्रोष्ठपाद इति । प्रोष्ठपदाभियुक्तः काल इत्यणो लुबविशेष इति लुपि कृते संधिवेलादिसूत्रेण जातार्थे ऽण् अचाङ्गस्याचामादेर्वृद्धिर्मा भूदित्येवमर्थ मुत्तरपदाधिकारः । उत्तरपदवृद्धौ सर्वं चेत्यत्रोत्तरपदाधिकारविहितवृद्धिपरिग्रहार्थं च । द्विषाष्टिकमिति । नन्वत्राप्यचामादेर्वृद्धिः प्राप्नोति कथमयमवकाशः । अथात्र येननाप्राप्तिन्यायेनादिवृद्धिर्बाध्यते । तदा द्व्याशीतिके विप्रतिषेधानुपपत्तिः उत्सर्गापवादयोरतुल्यबलत्वादिति वार्तिककारस्य विप्रतिषेधोपन्यासो न युक्त इति चिन्त्यमेतत् । यद्यचति । सा च प्रतिषिध्येत ततस्तत्प्रतिषेधसंनियुक्त ऐजागमः स्यादित्यर्थः । उत्तरपदवृद्धेस्तु यथात्र प्रतिषेधो न भवति तथा नय्वाभ्यामित्यत्र प्रतिपादितम् ॥

प्राचां ग्रामनगराणाम् । नगरग्रहणमिति । यद्यपि समुदायवचनोपि ग्रामशब्दोस्ति भूतग्राम इन्द्रियग्राम इति तथापि जननिकायनिवासार्थस्तेनातिप्रसिद्धः अभधो ना-

व ग्रामः तन्नगरं कथं ज्ञायते, ये हि ग्रामे विधयो नेष्यन्ते । साधीयस्ते नगरे न क्रियन्ते। तद्यथा । अभक्ष्यो ग्राम्यकुक्कुटः । अभक्ष्यो ग्राम्यसूकर इति उक्ते सुतरां नागरोऽपि न भक्ष्यते। तथा ग्रामे नाध्येयमिति साधीयो नगरेऽपि नाधीयते । तस्माद्य एव ग्रामस्तन्नगरम् । कथं यदुक्तं एवं हि कश्चित्कं चित्पृच्छति कुतो भवानागच्छति ग्रामात् । स आह न ग्रामान्नगरादिति ॥ संस्त्यायविशेषमसावाचष्टे । संस्त्यायविशेषाश्चैते ग्रामो घोषो नगरं संवाह इति । एवं तर्हि सिद्धे सति यद्ग्रामग्रहणं नगरग्रहणं करोति तज्ज्ञापयत्याचार्योऽन्यत्र ग्रामग्रहणे नगरग्रहणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । विशिष्टलिङ्गो नदीदेशोऽग्रामा इत्यत्र नगरप्रतिषेधश्चोदितः स न वक्तव्यो भवति। यदेतज्ज्ञाप्यते उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादित्यत्र नगरग्रहणं कर्तव्यम् । वाहीकग्रामेभ्यश्च । नगरग्रहणं कर्तव्यम् । दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु नगरग्रहणं कर्तव्यम् । इदं चतुर्थं ज्ञापकार्थम्। तत्रातिनिर्बन्धो न लाभः । तस्माद्यस्मिन्नेव ग्रामग्रहणे नगरग्रहणं नेष्यते तस्य प्रतिषेधो वक्तव्यः ॥

संख्यायाः संवत्सरसंख्यस्य च ॥ १५ ॥ संवत्सरग्रहणमनर्थकं

---

म्यकुक्कुटः ग्रामे नाध्येयमिति तदर्थस्यैव ग्रहणमिति मत्वा प्रश्नः । अन्यो हि ग्राम इति । विशेषेण विशेषान्तरस्याग्रहणान्नगरग्रहणम् । साधीयस्त इति । नगरस्याशुचितरत्वाद् । संस्त्यायविशेषमिति । सामान्यशब्दस्यापि प्रकरणवशाद्विशेषावस्थानं दृश्यते संस्त्यायाच्चागमनेनिर्ज्ञाते विशेषपरिज्ञानाय कुत आगच्छतीति प्रष्टव्ये ग्रामशब्दोच्चारणाद्विशेषवाची ग्रामशब्दोऽनेन प्रयुक्त इति प्रतीयते। संस्त्यायो निवासः ब्राह्मणकर्षकपुरुषप्रधानो देशो ग्रामः । गोमहिष्यादियुक्तो घोषः प्राकारपरिखान्वितं श्रेणीधर्मयुक्तसंस्थानं नगरं प्राकारपरिखायुक्तश्रेणिधर्मान्वितो देशः संवाहः । न च नगरशब्दसन्निधाने गोबलीवर्दन्यायेन विशिष्टग्रामग्रहणाय संवाहादिनिवृत्तये नगरग्रहणं संवाहादिनिवृत्तेरनिष्टत्वात् । उदीच्यग्रामाच्चेति । मानगरमित्यादावजर्थम् । वाहीकग्रामेभ्यश्चेति । शाकलिक इत्याद्यर्थम् । दिक्शब्दा इति । पाटलिपुत्त्रमित्यादौ पूर्वपदान्तोदात्तार्थम् । अतिनिर्बन्ध इति । अतिगौरवम् । न लाभ इति । लाघवम् ॥

संख्यायाः । संवत्सरग्रहणमिति । कालः क्रियापरिच्छेदहेतुत्वात्परिमाणं तद्विशेष-

परिमाणान्तस्येति कृतत्वात् *। संवत्सरग्रहणमनर्थकम् ।° किं कारणम् । परिमाणान्तस्येति कृतत्वात् । परिमाणान्तस्यासंज्ञाशाणयोरित्येव सिद्धम् । ज्ञापकं तु कालपरिमाणानां वृद्धिप्रतिषेधस्य । एवं तर्हि ज्ञापयत्याचार्यः कालपरिमाणानां वृद्धिर्न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । द्वैरात्रिकः त्रैरात्रिकः । अत्र वृद्धिर्न भवति । नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषः । सत्यां वोत्तरपदवृद्धावसत्यां वा । इदं तर्हि द्वैसमिकः त्रैसमिकः । इदं चापि प्रयोजनम् । द्वैरात्रिकः त्रैरात्रिकः । ननु चोक्तं नास्त्यत्र विशेषःसत्यां वोत्तरपदवृद्धावसत्यां वेति । अयमस्ति विशेषः । यद्योत्तरपदवृद्धिः स्यात् । अचामादेर्वृद्धिर्न स्यात् । अपर आह । ज्ञापकं तु कालपरिमाणानां परिमाणग्रहणस्य । एवं तर्हि ज्ञापयत्याचार्यः कालपरिमाणानां परिमाणग्रहणेन ग्रहणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि । द्विवर्षा त्रिवर्षा । परिमाणपर्युदासेन पर्युदासो न भवति ॥

प्रवाहणस्य ढे ॥ २८ ॥ परस्य वृद्धिर्नेत्यनुवर्तते उताहो न । किं चातः । यद्यनुवर्तते प्रवाहणेयी भार्यास्येति प्रवाहणेयीभार्यः । वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो न प्राप्नोति । अथ निवृत्तं, न दोषो भवति । यथा न दोषस्तथास्तु । अथ वा पुनरस्त्वनुवर्तते । ननु चोक्तं प्रवाहणेयी भार्यास्य प्रवाहणेयीभार्यः वृद्धिनिमित्तस्येति पुंव-

---

वाची संवत्सरशब्द इति भावः । द्वैरात्रिक इति । द्वे रात्री अधीष्ट इति तद्धितार्थे समासे रात्राह्नः संवत्सराच्चेति वा खविधानात्पक्षे ठञ् द्वैसमिक इति । अधीष्टादिषु समायाः खः द्विगोर्वेति पक्षे ठञ् । अचामादेर्वृद्धिर्न स्यादिति । सत्यपि संभवे बाधनं भवतीति न्यायात् । अपर आहेति । पूर्वं विशेषविषयं ज्ञापनमाश्रितम् । इदानीं तु सामान्यविषयमिति भेदः । द्विवर्षेति । द्वेवर्षे भूता तमधीष्ट इति ठञ् तस्य वर्षाल्लुक्चेति पक्षे लुक् द्विगोरिति ङीप्प्राप्तोऽपरिमाणेति प्रतिषिद्धः ।

प्रवा । पूर्वस्य तु वेति वर्तते तत्र यदा पूर्वपदस्य वृद्धिर्नास्ति तदोत्तरपदस्य वृद्धिभावाभावयोः श्रुतौ विशेषाभावाद्विशेषान्तरजिज्ञासया प्रश्नः । परस्येति । प्रवाहणेयोति । शुभ्रादिभ्यश्चेति ढक् । ननु वृद्धेर्निमित्तं यस्मिन् णकारादिः स वृद्धिनिमित्त इत्याश्रित-

ज्ञावनिषेधो न प्राप्नोतीति । नैष दोषः । मा भूदेवं जातेरित्येवं भविष्यति ॥

यथातथयथापुरयोः पर्यायेण ॥३१॥ अयं योगः शक्योऽवक्तुम् । कथमयाथातथ्यमायथातथ्यम् । अयाथापुर्यमायथापुर्यम् । यथा तावत्पूर्वपदस्य वृद्धिः तदैवं विग्रहः करिष्यते । न यथातथा अयथा-तथा । अयथा तथाभावः आयथातथ्यम् । यदोत्तरपदस्य वृद्धिस्तदैवं विग्रहः करिष्यते । यथातथाभावः ! याथातथ्यम् । न याथातथ्यम् । अयाथातथ्यम् ॥

हनस्तोऽचिण्णलोः ॥ ३२ ॥ हन्तेस्तकारे तद्धिते प्रतिषेधः * । हन्तेस्तकारे तद्धिते प्रतिषेधो वक्तव्यः । वार्त्रघ्नं भौणघ्नम् । उक्तं वा* । किमुक्तम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धमिति॥

आतो युक् चिण्कृतोः ॥ ३३ ॥ कृद्ग्रहणं किमर्थम् । इह मा भूत् । ददौ दधौ । नैतदस्ति प्रयोजनम् । अचिण्णलोरिति वर्तते । यद्यचिण्णलोरिति वर्तते अदायि अधायि इत्यत्र न प्राप्नोति । वच-नाच्चिणि भविष्यति । अचिण्णलोरिति वर्तते । एवमपि चौडिबा-लाकिरित्यत्र प्राप्नोति । लोपोऽत्र बाधको भविष्यति । इदमिह सं-प्रधार्यं लोपः क्रियतां युगिति । किमत्र कर्तव्यं परत्वाद्युक् । एवं

---

म् । ततोऽसत्यामपि वृद्धौ वृद्धिनिमित्तव्यपदेशसद्भावात् पुंवद्भावप्रतिषेधो भविष्यति । नैतदस्ति । ञ्णकानां वृद्धिमुत्पादयतामेव वृद्धिं प्रति निमित्तत्वं नान्यदा । यथा सुक्र-मोरनात्मनेपदनिमित्तप्रत्यत्र सत्येवात्मनेपदे सुक्रमोरनात्मनेपदनिमित्तत्वादिड भावो नासति । जातेरिति । गोत्रं च चरणैः सहेति जातिवाचित्वात् । अनुवृत्तेरेवं प्रयोजनाभावः ।

यथा । न यथातथेति । यथातथेत्ययं निपातो विपरीतार्थवृत्तिरिति केचिदाहुः । अन्ये तु यथातथाशब्दयोः सुप्सुपेति समास एतदर्थं इत्याहुस्ततो नञिति समासे क्ङ्-ते ब्राह्मणादिषु दर्शनात् ष्यञ् । स्वरेऽपि नास्ति विशेषः । आयथातथ्यमित्यस्य ञित्त्वा-दाद्युदात्तत्वादयाथातथ्यमित्यस्याव्ययपूर्वपदप्रकृतिस्वरत्वात् । प्रत्ययान्तरार्थत्वे तन्न भवति अनभिधानादेताभ्यां प्रत्ययान्तराभावात् ।

आतो । ददाविति । उत्तमस्य णलो णित्त्वाभावपक्षेसावकाशमौत्वं णित्त्वे परत्वाद्यु-क् बाधेत । अदायीति । सूत्रे चिणो निमित्तत्वेनोपादानादचिण्णलोरित्यनुवर्तनाच्च वि-धिनिषेधयोः पर्यायःस्यात् । वचनादिति । आतो युक् चिणि चेति चिणः साक्षादुपा-

तर्ह्यचामादेरिति वर्तते। यश्चाचामादिराकारस्तत्र युगिति। एवमपि द्वा देवताऽस्य स्थालीपाकस्य द्वः स्थालीपाकः अत्र प्राप्नोति। तस्मात्कृद्ग्रहणं कर्तव्यम्॥

नोदात्तोपदेशस्य मान्तस्यानाचमेः॥ ३४॥ अत्यल्पमिदमुच्यते अनाचमेरिति। अनाचमिकमिवमीनामिति वक्तव्यम्*। आचामः कामः वामः॥

शाच्छासाह्वाव्यावेपां युक्॥ ३७॥ णिप्रकरणेधूञ्प्रीञोर्नुग्वचनम् *। णिप्रकरणे धूञ्प्रीञोर्नुग्वक्तव्यः। धूनयति प्रीणयति। पातेर्लुग्वचनम् *। पालयति॥

प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः॥ ४४॥स्थग्रहणं किमर्थम्। इदं विचारयिष्यते इत्वे कग्रहणं संघातग्रहणं वा स्यात् वर्णग्रहणं वेति। तद्यदा संघातग्रहणं तदास्थग्रहणं कर्तव्यम्। इहापि यथा स्यात् कारिका हारिका। यदा हि वर्णग्रहणं तदा केवलः ककारः प्रत्ययो नास्तीति कृत्वा वचनाद्भविष्यति। अथासुप इति कथमिदं विज्ञायते असुब्वतोऽङ्गस्येति। आहो स्विन्न चेत्सुपः पर आ-

---

दानान्निषेधो न भविष्यति चिणिविधिः प्रत्ययलक्षणत्वादसंदिग्धः निषेधस्तु णलर्थ एवानुवर्तते। अथ चिणर्थोपीति संदिग्ध इत्यसंदिग्धो विधिरेव प्रवर्तते। अचामादेरिति वर्तत इति। नन्वेवं दरिद्रायके युङ्ग प्राप्नोति। एवं तर्हि दोषान्तरोपन्यासादयं दोषो नोक्तस्तदाह। एवमपीति। आदिवद्भावादत्र प्रसङ्गो यथादाय इत्यादौ॥

नोदा। काम इति। आयादय आर्धधातुके वेति यदा णिङ् नास्ति तदा वृञि वृद्धिनिषेधस्य पर्युदासः। विश्राममब्दस्त्वसाधुरेवोद्यमोपरमौ संज्ञापूर्वकोविधिरनित्य इति वृद्ध्यभावात्॥

शाच्छा। पातेर्लुगिति। यद्यपि पाल रक्षण इत्यस्य पालयतीति सिध्यति तथापि पातेर्युङ्निवृत्तये लुगागमविधानम्। लुग्विकरणत्वात्तस्य युको प्रसङ्गः॥

प्रत्ययस्था। स्थग्रहणमिति। कादिति वर्णग्रहणं न च वर्णमात्रं ककारः प्रत्ययोऽस्तीति सामर्थ्यात् प्रत्ययावयवे प्रत्ययशब्दो वर्तिष्यत इति प्रश्नः। इतरः पक्षान्तरे प्रयोजनमाख्यातुमाह। इदमिति। वक्ष्यमाणस्य बुद्ध्याप्रत्यक्षीकृत्यपरामर्शः। इहापीति। अन्यथा दत्तिकेत्यादावेव स्यादज्ञाताद्यर्थविवक्षायामत्र प्रत्ययः। स्थग्रहणे तु क्रियमाणे सर्वत्र भवति प्रत्ययस्यापि व्यपदेशिवद्भावेन प्रत्ययस्थत्वात्। असुब्वत इति। न सुब्वदस-

बिति । किं चातः । यदि विज्ञायते असुब्वतोऽङ्गस्येति बहुचर्मिका अत्र न प्राप्नोति । अथ विज्ञायते न चेत्सुपः पर आबिति न दोषो भवति । यथा न दोषस्तथास्तु । इदं विचार्यते । इत्वे कग्रहणं संघातग्रहणं वा स्याद्वर्णग्रहणं वेति । कश्चात्र विशेषः । इत्वे कग्रहणं संघातग्रहणं चेदेतिकाद्यप्राप्तिः* । इत्वे कग्रहणं संघातग्रहणं चेदेतिकाद्यप्राप्तिः । एतिकाश्चरन्ति । वचनाद्भविष्यति । अस्ति ह्यन्यद्वचनेप्रयोजनम् । किम् । कारिका हारिकेति । अस्तु तर्हि वर्णग्रहणम् । वर्णग्रहणं चेद्व्यवहितत्वादप्रसिद्धिः* । वर्णग्रहणं चेद्व्यवहितत्वा-

---

बुदिति नञ्समासो ऽसुप इत्यस्य बहुव्रीहित्वप्रदर्शनाय भाष्यकारेण लाघवं नाश्रितं तदाश्रयणे बहुव्रीहिरेव न्याय्यो न तु मतुबन्तः समासः । तत्रायं प्रश्नः । किमसुप इति बहुव्रीहिराश्रीयते न विद्यते सुप् यस्मिंस्तदसुबिति । अथ तत्पुरुषः प्रसज्यप्रतिषेधश्च । न चेत् सुपः पर आबिति । प्रत्ययग्रहणेन तदन्तविधेः सुबन्तादिति बोद्धव्यम् । बहुचर्मिकेति । बहूनि चर्माण्यस्यामिति बहुव्रीहिः प्रत्ययलक्षणेन सुबन्तदङ्गमिति इत्वं न प्राप्नोति । न लुमताङ्गस्येति निषेधोऽत्र नास्ति लुमतालुप्ते यदङ्गं तस्य कार्ये स प्रतिषेधः । इदं तु टाप्यङ्गम् । न दोषो भवतीति । चर्मशब्दः सुबन्तो न च तस्मात्पर आप् व्यवधानात् । बह्वः परिव्राजका अस्यां सा बहुपरिव्राजका इत्यत्र तु प्रत्ययलक्षणेन सुबन्तात्परिव्राजकशब्दात्पर आबिति प्रतिषेधः प्रवर्तते । पर्युदासाश्रयणे समासादसुबन्तात्पर आबिति स्यादेवाचेलम् । तथासुप इत्यनर्थकं स्यादिति प्रसज्यप्रतिषेध आश्रीयते । इत्व इति । यद्यकारान्तस्य शब्दस्य कादिति निर्देशः ततः संघातग्रहणम् । अथागन्तुकाकारेण उच्चारणार्थेन निर्देशः ततो वर्णग्रहणम् । ननु वर्णग्रहणे स्वग्रहणात्संघातग्रहणे न भाव्यम् । नैतदस्ति । कोऽत्र निर्दोषः पक्ष इति विचार्यते । यदि च संघातग्रहणपक्षो दोषवान् । तन्मा कारिस्थग्रहणसुपचयो भविष्यति । एतिका इति । एतदो ऽकचि नसि त्यदाद्यत्वेटापोत्वे च रूपम् । अकचोकार उच्चारणार्थो न श्रवणार्थः । तेन धकिद्धिरकुदित्यादि सिध्यति । वचनादिति । यथैव कारिकेत्यादावेकादेशे कृते ऽनचूके ककारे संपन्ने भूतपूर्वगत्या भवत्येवमकज्विधिसूत्रे कशब्दः संघात उच्चारित इति तदाश्रया इत्वप्रवृत्तिः । अस्तीति । एकादेशस्य पूर्वविधौ स्थानिवद्भावात् । अथ वावचनादित्यस्यायमर्थः । न यासयोरिति ज्ञापकात् वचनाद्भविष्यति । इतरस्त्वगृहीताभिप्राय आह । अस्तीति । ततश्चाभिप्रायमप्रकाश्य पक्षान्तरमाश्रयति । अस्तु तर्हीति । व्यवहितत्वादिति । ननु चापीत्यनेन ककारो न विशेष्यते किं तर्ह्यकारः । अपि च परतो ऽकारस्य कात्पूर्वस्येति व्यवहितस्यापि पूर्वत्वादित्वं प्रवर्तिष्यते । नैतदस्ति । रथकठ्यादावप्येवं

न्न प्राप्नोति। कारिका हारिका। अकारेण व्यवहितत्वान्न प्राप्नोति। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव। एवं तर्ह्याहायं प्रत्ययस्थात्कात्पूर्वस्येति न च क्व चिद् व्यवधानं तत्र वचनाद्भविष्यति। वचनप्रामाण्यादिति चेत् रथकट्यादिष्वतिप्रसङ्गः*। वचनप्रामाण्यादिति चेद्रथकट्यादिषु दोषो भवति। रथकट्या गर्गकाम्या। नैष दोषः। येन नाव्यवधानं तेन व्यवहिते ऽपि वचनप्रामाण्यात्। केन नाव्यवधानम्। वर्णेनैकेन। संघातेन पुनर्व्यवधानं भवति च न भवति च। अथ वा पुनरस्तु संघातग्रहणम्। ननु चोक्तमित्वे कग्रहणं संघातग्रहणं चेदेतिकारस्याप्राप्तिरिति। परिहृतमेतत्। वचनाद्भविष्यतीति। ननु चोक्तमस्ति वचने प्रयोजनम्। किम्। कारिकाहारिकेति। अचाप्येकादेशे कृते व्यपवर्गाभावान्न प्राप्नोति। अन्तादिवद्भावेन व्यपवर्गः। उभयत आश्रये नान्तादिवत्। एवं तर्हि एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यपवर्गः। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानामपीत्वमिति। यदयं न यासयोरिति प्रतिषेधं शास्ति। मामकनरकयोरुपसंख्यानं कर्तव्यम् *। मामिका नरिका। किं पुनः

---

प्रसङ्गात्। किं च कात्पूर्वस्येति पूर्वग्रहणं कृतं न त्वापि पूर्वस्येति। ततश्च निर्दिष्टपरिभाषोपस्थानात् व्यवधाने न प्राप्नोति। तत्र वचनादिति। आनन्तर्यमसंभवान्नाश्रीयते। रथकट्येति। रथानां समूह इति इनित्रकट्यचश्चेति कट्यच्। गर्गकाम्येति। गर्गमिच्छत्यात्मन इति काम्यच्प्रत्ययान्तादप्रत्ययादित्यकारप्रत्ययः। येननाव्यवधानमिति। नानन्तर्यंपरित्यज्यतेकिन्तुयावत्संभवति तावदाश्रीयते।यद्येवमतिकाइत्यत्र द्वाभ्यामकाराभ्यां व्यवधानादित्वं न प्राप्नोति। एकस्तसंबन्ध्यकारो द्वितीयस्त्यदादीनाम इत्यकारः। नैष दोषः। द्वयोरकारयोरेकादेशे कृते टापा सहैकादेशस्य स्थानिवद्भावादेके नैवाकारेण व्यवधानं न पुनः स्थानिवत्त्वप्रतिपत्तिर्यतो द्वावकारौ व्यवधायकौ स्याताम्। सकृद्गतिन्यायेन लक्षणस्य चरितार्थत्वात्। व्यपवर्गाभावादिति।वार्णादाङ्गं बलीयइत्येतदनाश्रित्योक्तम्। उभयत इति। आपि यः कशब्द इत्येवमुभयमाश्रीयते। अथ त्वापि परतोकारस्य कात्पूर्वस्येत्याश्रयिष्यते तथाप्युभयमेवाश्रितंतुल्यकालंभवति। एवंजातीयकानामिति। प्रकारवचने जातीयर् प्रत्ययः। अकच्कतामित्यर्थः। मामिकेति। ममेयं, युष्मदस्मदोरित्यन्यतरस्यांग्रहणादाग्दीव्यतो ऽणित्यण्। तवकममकावेकवचन इति ममका-

कारणं न सिध्यति । अप्रत्ययस्थत्वात् । त्यक्त्यपोश्च प्रतिषिद्धत्वात् * । त्यक्त्यपोश्चोपसंख्यानं कर्तव्यम् । दाक्षिणात्यिका । किं पुनः कारणं न सिध्यति । प्रतिषिद्धत्वात् । उदीचामातः स्थाने यकपूर्वाया इति प्रतिषिद्धत्वात् ।

न यासयोः ॥ ४५ ॥ न यत्तदोरिति वक्तव्यम् * । इहापि यथा स्यात् यकामधीते । तकां पचामह इति । प्रतिषेधे त्यकन उपसंख्यानं कर्तव्यम् * । उपत्यका अधित्यका । तत्तर्हि कर्तव्यम् । न कर्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामित्वं भवतीति । यदयं सृदस्तिकन्निर्तीत्वभूतं निर्देशं करोति । पावकादीनां छन्दस्युपसंख्यानं कर्तव्यम् * । हिरण्यवर्णाः शुचयः पावकाः । ॰ऋचकाः अलोमकाः । छन्दसीति किमर्थम् * । पाविका अलोमिका । आशिषि चोपसंख्यानं कर्तव्यम् * । जीवतात् जीवका नन्दतान्नन्दका भवताद्भवका । उत्तरपदलोपे चोपसंख्यानं कर्तव्यम् * । देव-

---

देशः । केवलमामकेत्यनेन संज्ञाछन्दसोर्ङीपो नियमादन्यत्र टाप् । नरं कायतीति नरिका । दक्षिणात्यिकेति । दक्षिणस्मिन्देशे दक्षिणा दक्षिणादाच् । तत्र भवा दक्षिणापश्चात्पुरसस्त्यगिति त्यक् । अज्ञाताद्यर्थविवक्षायां कः । इह भवेहत्यिका । अव्ययात्त्यप् । पूर्ववत्कः । उदीचामात इति पाक्षिकप्रतिषेधप्रसङ्गे वचनम् ॥

नया । या सेति प्रथमैकवचनान्तयोरुपादानाद्विभक्त्यन्तरे प्रतिषेधाप्रसङ्गादाह । न यत्तदोरिति । उपत्यकेति । उपाधिभ्यां त्यकन्नासन्नारूढयोरिति त्यकन् । नैवं जातीयकानामिति । येऽनेकाचो व्यञ्जनादयः प्रत्ययाः संज्ञाविषयास्तेषामित्यर्थः यदयमिति । ननु च तद्धितलुगर्थमिकारोच्चारणं स्यात् अन्यथा पञ्चभिर्मृत्तिकाभिः क्रीत इत्यार्हादिति ठकोऽध्यर्धपूर्वेति लुकि कृते लुक् तद्धितलुकीति टापो लुकि निमित्ताभावादित्वं न स्यात् । पञ्चमृत्तिक इति । अन्तरङ्गांश्च विधीन्बहिरङ्गो लुक् बाधते न सुब्लुगिव तथा च सनीस्रंस इत्यादौ नलोपो न भवति पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादौ टापा सहैकादेशो न भवति । अन्यथैकादेशस्यादिवद्भावादाब्ग्रहणेन ग्रहणाल्लुकि कृतेऽकारस्य श्रवणं न स्यात् । तदेवं सति प्रयोजने न ज्ञापकमिकारोच्चारणमिति चिन्त्यमेतत् । त्यकन्निति प्रक्रियालाघवाय स्त्रीविषयत्वाद्वक्तव्ये त्यकनित्यकारोच्चारणमित्वाभावस्य न ज्ञापकम् । पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक इत्यादौ तद्धितलुकि अकारश्रवणार्थत्वात्तस्य । पावका इति । पुनन्ति पावयन्तीति वा पावकाः । जीवकेति ।

दत्तिका देवका यज्ञदत्तिका यज्ञका । क्षिपकादीनां चोपसंख्यानं कर्तव्यम् * । क्षिपका ध्रुवका धुवका । चटका । तारका ज्योतिष्युपसंसंख्यानं कर्तव्यम् * । तारका । ज्योतिषीति किमर्थम् । तारयतीति तारिका दासी । वर्णका तान्तवे उपसंख्यानं कर्तव्यम्* । वर्णका । तान्तव इति किमर्थम् । वर्णिका भागुरी लोकायतस्य । वर्तका शकुनौ प्राचामुपसंख्यानं कर्तव्यम् । * । वर्त्तका शकुनिः । शकुनाविति किर्थम् । वर्तिका भागुरी लोकायतस्य । प्राचामिति किमर्थम् । वर्त्तिका ।अष्टका पितृदेवत्यउपसंख्यानम्*। अष्टकापितृदेवत्ये उपसंख्यानं कर्त्तव्यम्। अष्टकापितृदेवत्य इति किमर्थम् । अष्टिका खारी ।वा सूतकापुत्रिकावृन्दारकाणामुपसंख्यानं कर्तव्यम् *। सूतका सूतिका । पुत्त्रका पुत्त्रिका । वृन्दारका । वृन्दारिका ॥

उदीचामातः स्थाने यकपूर्वायाः ॥ ४६ ॥ किमर्थं स्त्रीलिङ्गनिर्देशः क्रियते । न यकपूर्वस्येत्येवोच्येत । स्त्रीविषयो य आकारस्तस्य स्थाने यो कारस्तस्य प्रतिषेधो यथा स्यादिह मा भूत् । शुभं याति शुभंयाः । शुभंयिका । भद्रंयाः भद्रंयिका । यकपूर्वे धात्वन्तप्रतिषेधो

---

आशिषि चेति वुन् । देवकेति । अनजादौ च विभाषालोपो वक्तव्य इति दत्तशब्दस्य लोपः । क्षिपकेति । क्षिपेरिगुपधात्वात् के कृते अज्ञातादिषु कः । अथ वा क्रुञ्छिल्पिसंज्ञयोरिति क्वुन् । ध्रुवकेति । ध्रु व गतिस्थैर्ययोः । धुवकेति । धू विधूनने । वर्णकेति । वर्णयति महत्त्वादिकं गुणमिति वर्णका प्रावरणविशेषः तन्तूनां विकारस्तान्तवम् । ओरजित्यञ् । वर्णिकेति । व्याख्यात्रीत्यर्थः । भागुरी टीकाविशेषः । अष्टकेति । इषशिभ्यां तकन्निति तकन् पितरश्च देवताः पितृदेवताः तदर्थं कर्म पितृदेवत्यम् । देवतान्तात्तादर्थ्ये यदिति यत् । अष्टिकेति । अष्टौ परिमाणमस्याः संख्याया अतिशदन्तायाः कन्निति कन् । सूतकेति । न सामिवचन इति प्रतिषेधाज्ज्ञापकात् स्वार्थे कन् । पुत्त्रिकेति । पुत्त्रशब्दाच्छार्ङ्गरवादित्वात् ङीन्प्रत्ययस्ततः स्वार्थे कन् । केण इति ह्रस्वः तस्य वचने अकारो विधीयते । वृन्दारिकेति । वृन्दमस्यास्तीति शृङ्गवृन्दाभ्यामारकन्प्रत्ययो वक्तव्य इत्यारकन् ॥

उदीचाम् । स्त्रीविषय इति । अर्थगतं स्त्रीत्वं शब्दे समारोप्य निर्देशः कृतः । शुभंयिकेति । शुभं याति भद्रं यातीति क्विप् । शुभंभद्रंशब्दौ निपातौ । अज्ञाताद्यर्थविवक्षायां कः के ऽण इति ह्रस्वः । यकपूर्व इति । धात्वन्ताभ्यां यकारककाराभ्यां परस्यातः स्थाने ऽकारस्येत्वप्रतिषेधस्य प्रतिषेधस्तेनेत्वं भवत्येव । शोभनो नयोस्याः सुनया । ना-

वक्तव्यः * । किं प्रयोजनम् । सुनयिका सुशयिका । अशोकिका अपाकिका ॥

भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ॥ ४७ ॥ एषाद्वे नञ्पूर्वे अनुदाहरणे असुप इति प्रतिषेधात् । अथ भस्त्राग्रहणं किमर्थम् । न अभाषितपुंस्कादित्येव सिद्धम् । भस्त्राग्रहणमुपसर्जनार्थम् । उपसर्जनार्थोयमारम्भः । अभस्त्रका अभस्त्रिका नञ्पूर्वग्रहणानर्थक्यं चोत्तरपदमात्रस्येद्वचनात् * । नञ्सूर्वग्रहणं चानर्थकम् । किं कारणम् । उत्तरपदमात्रस्येत्ववचनात् । उत्तरपदमात्रस्येत्वं वक्तव्यम् । निर्भस्त्रका निर्भस्त्रिका बहुभस्त्रका बहुभस्त्रिका । इति श्रीमहाभाष्ये सप्तमाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

---

ठस्येकः ॥ ५० ॥ किमिदं ठादेशे वर्णग्रहणमाहो स्वित्संघातग्रहणम् । कश्चात्र विशेषः । ठादेशे वर्णग्रहणं चेद्वात्वन्तस्यप्रतिषेधः * । ठादेशे वर्णग्रहणं चेद्वात्वन्तस्य प्रतिषेधो वक्तव्यः * । पठति । पठितुम् । अस्तु तर्हि संघातग्रहणम् । संघातग्रहणं चेद्

---

स्ति शोको ऽस्या अशोका पूर्ववत्कः ॥

भस्त्रै । पाक्षिकप्रतिषेधार्थ आरम्भः । एषाद्वे इति । न एषका न द्वके इति विग्रहान्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इत्युक्तत्वेषु त्यदाद्यत्वादिषु समासे कृते सुब्लुकि च समासाद्या विभक्तिस्तस्य त्यदाद्यत्वं ततष्टाप् स च प्रत्ययलक्षणेन सुबन्ताभ्यां पर इत्यसुप इतीत्वप्रतिषेधस्य व्यापारादनेषका इत्येव भवति । तस्मादनञ्पूर्वयोरेवैतयोः पाक्षिप्रतिषेधः । एषका एषिका । द्वके द्विके इति । एषेति प्रथमैकवचननिर्देशादन्यत्र नित्यमित्वमेतिकास्मरन्तीति । अभस्त्रिकेति । नास्ति भस्त्रा अस्या इति बहुव्रीहावुपसर्जनह्रस्वत्वे कृते यष्टाबुत्पद्यते स भाषितपुंस्कादभस्त्रशब्दात्पर इत्युत्तरसूत्रेण पाक्षिकप्रतिषेधाप्रसङ्गाद्भस्त्राग्रहणम् । नञ्पूर्वग्रहणानर्थक्यमिति । अपिग्रहणेन केवलानां समुच्चयादन्यपूर्वाणामप्रसङ्गान्न कर्तव्यं नञ्पूर्वग्रहणम् । तत्र यदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ग्रहणात्सर्वेष्टसिद्धिः ॥

इत्युपाध्यायजैय्यटपुत्त्रकैय्यटकृते महाभाष्यप्रदीपे सप्तमाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

---

ठस्येकः । किमिदमिति । किं व्यञ्जनमात्रं प्रतिपिपादयिषितमागन्तुनातूच्चारण-

उगादिसमाथितिकादीनां प्रतिषेधः *। संघातग्रहणं चेदुगादिमाथितिकादीनां प्रतिषेधो वक्तव्यः। उगादीना तावत्। कण्ठः शण्ठ पण्ठः। इह च मथितं पण्यमस्य माथितिक इति अकारलोपे कृते तान्तादिति कादेशः प्राप्नोति। वर्णग्रहणेपुनः सत्यल्विधिरयं भवति। तस्माद्विशिष्टग्रहणम् *। तस्माद्विशिष्टस्य ठकारस्य ग्रहणं कर्तव्यम्। न कर्तव्यम्। अस्तुतावद्वर्णग्रहणम्। ननु चोक्तं ठादेशे वर्णग्रहणं चेद् धात्वन्तप्रतिषेध इति। नैष दोषः। अङ्गादिति वर्तते। न वै अङ्गादिति पञ्चम्यस्ति। एवं तर्हि प्रत्ययस्थस्येति वर्तते। क्व प्रकृतम्। प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप इति। तद्वै पञ्चमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। अर्थाद्विभक्तिविपरिणामो भविष्यति। तद्यथा। उच्चानि देवदत्तस्य गृहाण्यामन्त्रयस्वैनं देवद-

---

र्थेन अकारेण निर्देशो ऽथ संघात एव स्थानी निर्दिष्ट इति प्रश्नः। धात्वन्तप्रतिषेध इति। संघातग्रहणे त्वेष न दोषः। पठतीत्यत्रापि ठस्यानर्थकत्वादर्थवद्ग्रहणपरिभाषयार्थवत्संघातग्रहणादप्रसङ्गः। वर्णग्रहणे त्वर्थवद्ग्रहणपरिभाषाया अव्यापारः वर्णग्रहणपक्षे च ठगादिष्वकार उच्चारणार्थो वर्णमात्रं प्रत्ययः। कण्ठ इति। कणेष्ठः। शण्ठ इति। शमेर्जं निदाघुस्विति ठः। पण्ठ इति। पणाऽन्येभ्योऽपि दृश्यत इति ठः। वर्णपक्षे ऽप्युणादीनां प्रसङ्गः सत्यपि संघातस्य प्रत्ययत्वे। इह च संघातग्रहणे ठगादयः संघाता एव प्रत्ययाः प्रतिज्ञायन्ते। माथितिक इति। सन्निपातलक्षणपरिभाषामनाश्रित्य चोद्यते। अन्यथाजादिसन्निपातेन तान्तता उपजाता कथमजादिविघातनिमित्तं स्याद् वर्णग्रहणे त्वनल्विधाविति स्थानिवत्त्वनिषेधादिकस्य कादेशप्रसङ्गः। ननु तान्तादङ्गात्परस्य ठस्य कादेशो विधीयते। चैतत्तकारान्तमङ्गं कारान्ता प्रत्ययस्याविधानात्। नैतदस्ति। एकदेशविकृतस्यानन्यत्वादङ्गं भवति तकारान्तं चेति कादेशः प्राप्नोति। तस्माद्विशिष्टग्रहणमिति। तद्धितस्य ठादेरिक इति कर्तव्यम्। एवं च माथितिक इत्यत्र ठादेरिति वचनादल्विधित्वात्स्थानिवद्भावाभावात्कादेशस्याप्रसङ्गः। अङ्गादिति वर्तत इति। अर्थवशाद्विभक्तिविपरिणाम इति भावः। एवं तर्हीति। सामर्थ्यात्षष्ठ्यन्तमश्यते। इतरोन क्व चित्षष्ठ्यन्तं प्रकृतमिति मत्वाह। क्व प्रकृतमिति। अर्थादिति। ठस्येति षष्ठ्यन्तेन संबन्धात् षष्ठ्यन्तत्वेन विपरिणामः कर्मणि घटते कर्मणि घटोऽठजित्यठच्। अस्येति। संबन्धषष्ठीत्वे नोपादानाद्विशिष्टो निमित्तनिमित्तिभावलक्षणः संबन्धो विवक्षितः। तेनाङ्गावयवस्याप्रसङ्गः। अङ्गव्यपदेशनिमित्तप्रत्ययग्रहणात्कमठ इति प्रत्ययावयवस्य न भवति। ननु समुदायस्य निमित्तत्वेनावयवस्यापि निमित्तत्वमाश्रीयते। तथा च-

त्तमिति गम्यते । देवदत्तस्य गोवोऽश्वा हिरण्यमाढ्यो वैधवेयः । दे-वदत्त इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वि-तीयानिर्दिष्टं च भवति । एवमिहापि पुरस्तात्पञ्चमीनिर्दिष्टं सद-र्थात्षष्ठीनिर्दिष्टं भविष्यति । एवमप्युणादीनां प्रतिषेधो वक्तव्यः । न वक्तव्यः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि । एवमपि कर्मठ इत्यत्र प्राप्नोति । एवं तर्ह्यङ्गस्येति संबन्धषष्ठी विज्ञास्यते । अङ्गस्य यष्ठकारः । कस्याङ्गस्य ठकारः । निमित्तम् । यस्मिन्नङ्गमित्येतद्भवति । कस्मिंश्चैतद्भवति । प्रत्यये । अथ वा पुनरस्तु संघातग्रहणम् । ननु चोक्तं संघातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेध इति । उ-णादीनां तावत्प्रतिषेधो न वक्तव्यः । परिहृतमेतत् । उणादयोऽव्यु-त्पन्नानि प्रातिपदिकानीति । यदप्युच्यते इह च मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशः प्राप्नोतीति । नैष दोषः । अकारलोपस्य स्थानिवद्भावान्न भविष्यति । न सिध्य-ति । पूर्वविधौ स्थानिवद्भावः । न चायं पूर्वविधिः । अयमपि पूर्व-विधिः । पूर्वस्मादपि विधिः पूर्वविधिरिति । अथाप्युणादयो व्युत्पा-द्यन्ते । एवमपि न दोषः । क्रियते न्यास एव विशिष्टग्रहणं ठस्येति ॥

इसुसुक्तान्तात्कः ॥ ५१ ॥ इह कस्मान्न भवति । आशिषा तर-ति आशिषिकः । उषा तरति औषिकः । लक्षणप्रतिपदोक्तयोः प्र-

---

क्रतुश्चक्रुरित्यत्र द्विर्वचननिमित्ते ऽच्यजादेशः स्थानिवद्भवति । एवं तर्हि साक्षान्निमित्त-मिह गृह्यते स्थानिवत्त्वेतु लक्ष्यवशाद्यथाकथं चिन्निमित्तमाश्रीयते । पूर्वस्मादपि विधि-रिति । सम्बन्धसामान्यवचनषष्ठ्यन्तस्य पूर्वशब्दस्य विधिशब्देन समास आश्रीयते । अ-थ वा वर्णग्रहणात्तदन्तत्वे लब्धे तान्तादित्यन्तग्रहणं प्रत्ययोपदेशकाले तान्तग्रहणा-र्थमिति माथितके कादेशाप्रसङ्गः । अथापीति । सर्पिषा यजुषेत्यादौ षत्वाद्यर्थं व्युत्प-त्तिपक्षो ऽप्यङ्गीक्रियते । क्रियते न्यास एवेति । येषां ठशब्दानामिक इष्यते तेष्वकारः स्वरित उच्चारितस्तदनुकरणं स्वरितमेव ठस्येति न चोणादिठस्याकारः स्वरित इत्यादे-शाप्रसङ्गः ॥

इसु । आशिषेति । आङः शासु इच्छायामित्यस्मादाशासनमाशीरिति संपदादि-त्वाद्भावे क्विप् । आशासः क्वावुपसंख्यानमितीत्वम् । उषेति । वसेः क्विप् । वचिस्वपीति संप्रसारणम् । षत्वस्यासिद्धत्वादिसुसौ भवत इति कादेशप्रसङ्गः । लक्षणेति । लाक्षणि-

तिपदोक्तस्यैवेति । अथेह कथं भवितव्यं दोर्भ्यां तरति । दौष्क इति भवितव्यम् । कथम् । यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ॥

हो हन्तेर्ञ्णिन्नेषु ॥ ५४ ॥ किमिदं ञ्णिन्नकारग्रहणं हन्तिविशेषणम् । ञ्णिन्नकारपरस्य हन्तेर्यो हकार इति । आहो स्विद्धकारविशेषणम् । ञ्णिन्नकारपरस्य हकारस्य स चेद्धन्तेरिति । कश्चात्र विशेषः । हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः * । हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः * । घ्नन्ति घ्नन्तु अघ्नन् । अस्तु तर्हि हकारविशेषणम् । हकारस्येति चेद्ञ्णित्यप्राप्तिः * । हकारस्येति चेद्ञ्णित्यप्राप्तिः * । घातयति घातकः । किं कारणम् । व्यवहितत्वान्न प्राप्नोति । वचनाद्भविष्यति । इहापि वचनात्प्राप्नोति । हननमिच्छति हननीयति हननीयतेर्ण्वुल् हननीयक इति । स्थानिवद्भावाच्चाचो नकारे प्रसिद्धिः * । स्थानिवद्भावाच्चाचो नकारे प्रसिद्धिः । घ्नन्ति घ्नन्तु वचनाद्भविष्यति । वचनप्रामाण्यादिति चेद् अलोपे प्र-

---

कमनुमेयरूपम् । प्रतिपदोक्तं तु प्रत्यक्षरूपम् । अथेति । दौष्क इति इष्यते न च प्राप्नोतीति प्रश्नः । दौष्क इति । तरतीति ठक् । उपसंख्येयोऽत्र कादेश इति भावः । क्वचित्तु कथं यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पाठः । तत्र यदीति निपातो न संदेहार्थ उपात्तः । किं तर्हि यदेत्यस्यार्थे वर्तते । ओकारे य उकारः स उकारग्रहणेन गृह्यते । यत्र च समुदायाश्रयं कार्यं नास्ति तत्रावयवाः स्वकार्यस्य प्रयोजका एव । तथा च नुड्विधिलादेशविनामा ऋकारावयवाश्रयाः प्रवर्तन्ते । अग्रहण पक्षे तु यथा नुड्विधिलादेशविनामेषु प्रतिविधीयते तथा दोष उपसंख्यानं कर्तव्यमिति संदेहार्थोऽपि यदिशब्दो व्याख्येयः ।

हो हन्ते । किमिदमिति । हन्तिरपीहोपात्तो हकारोऽपि तत्र किं हकारस्य प्राधान्याद्विशेषणसंबन्धोऽथ प्रधानोपकाराय गुणस्यापि हन्तेः पक्षद्वयेऽपि दोषदर्शनाप्रश्नः । द्वन्द्वनिर्दिष्टास्तु ञ्णिन्ना एकयोगक्षेमा न्याय्या इति भिन्नेन संबन्धिना सम्बन्धं प्रतिपत्तुमनर्हा ञ्णितीति हन्तेर्मकारे हकारस्येति । हन्तेरिति । स्वावयवेन पौर्वापर्यायोगात् । ञ्णित्यप्राप्तिरिति । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्धकारस्य च ञ्णितानन्तर्यासंभवात् । वचनादिति । निर्दिष्टपरिभाषोपस्थानाद्येन नाव्यवधानमिति शब्दान्तरव्यवायो निवर्त्यते । इतरस्तु व्यवधानसंभवान्निर्दिष्टाङ्गविकलपरिभाषोपस्थानं मत्वाह । इहापीति । स्थानिवद्भावाच्चेति । अचो य

तिषेधः ॥ वचनप्रामाण्यादिति चेदल्लोपे प्रतिषेधो वक्तव्यः। हन्ता-
हन्तुम्। नकारग्रहणसामर्थ्यादल्लोपे न। नकारग्रहणसामर्थ्याद-
ल्लोपे न भविष्यति। अस्त्यन्यन्नकारवचनस्य प्रयोजनम्। किम्। श्रू-
यमाणविशेषणम्। यत्र नकारः श्रूयते तत्र यथा स्यात्। इह माभू-
त्। हतो हथ इति। सिद्धं तूपधालोप इति वचनात् ॥ सिद्ध-
मेतत्। कथम्। उपधालोपे चेति वक्तव्यम्। सिध्यति। सूत्रं तर्हि
भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं हन्तेस्तत्परस्येति चेद् न-
कारेप्रसिद्धिरिति। वचनाद्भविष्यति। अथ वा पुनरस्तु हकारविशे-
षणम्। ननु चोक्तं हकारस्येति चेद् ञ्णित्यप्राप्तिरिति। वचनाद्भ-
विष्यति। ननु चोक्तमिहापि वचनात्प्राप्नोति हननीयक इति नैष
दोषः। येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यात्। क्वचि-
द्धात्ववयवेन नाव्यवधानं एतेन पुनः संघातेन व्यवधानं भवति च
न च भवति। यदप्युच्यते स्थानिवद्भावान्नकारे प्रसिद्धिरिति वचनाद्भ-
विष्यति। ननु चोक्तं वचनप्रामाण्यादिति चेदल्लोपे प्रतिषेध इति।
नैष दोषः। आनन्तर्यमिहाश्रीयते। हकारस्य नकार इति। क्व चि-
त्संनिपातकृतमानन्तर्यं न शास्त्रकृतमानन्तर्यं क्व चिच्च न सन्निपा-
तकृतं नापि शास्त्रकृतम्। लोपे सन्निपातकृतमानन्तर्यं न शास्त्र-
कृतमानन्तर्यम्। अलोपेनैव सन्निपातकृतं नापि शास्त्रकृतम्। यत्र

---

आदेशो लोपस्तस्येत्यर्थः। नकारग्रहणेति। सर्वत्र व्यवहितो नकारो हकारात्पर
इति नकारग्रहणसामर्थ्याद् ञ्णिद्ग्रहणसामर्थ्याच्च श्रुतिकृतमानन्तर्यमाश्रयिष्यते।
सिद्धं त्विति। नकारग्रहणमपनीय उपधालोपग्रहणं कर्तव्यम्। वचनाद्भविष्यती-
ति। एकग्रहणकवाक्यनिबन्धनानि बहूनि वाक्यानि लक्ष्यस्य संस्कारकाण्युपप्लव-
न्ते। घ्नो हन्तेर्ञ्णितीति घ्नो हन्तेर्णितीति घ्नो हन्तेर्न इति। सहविवक्षायां द्वन्द्वेऽपि
यथासंभवं विशेषणविशेष्यभाव इति ञिता णिता च हन्तिर्विशेष्यते नकारेण हकारः।
येन नाव्यवधानमिति। तस्मिन्निति निर्दिष्ट इति परिभाषोपस्थानेन धात्ववयवेन नि-
त्यव्यवायाच्छब्दान्तरेण व्यवधानं निवार्यते। वचनादिति। सत्यपि स्थानिवद्भावकृते
व्यवधाने श्रुतिकृतानन्तर्याश्रयणात्। नापि शास्त्रकृतमिति। यथामन्वितं पूर्वमविद्य-
मानवदित्युक्तं तथाकारस्य शास्त्रेणाव्यवधायकत्वं न क्व चित्प्रतिपादितमित्यर्थः।

कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः ॥

अभ्यासाच्च ॥ ५५ ॥ अभ्यासात्कुत्वमसुपः * । अभ्यासात्कुत्वमसुप इति वक्तव्यम् । इह मा भूत् । हननमिच्छति हननीयति हननीयतेः सन् जिहननीयिषतीति । तर्हि वक्तव्यम् । न वक्तव्यम् । हन्तेरभ्यासादित्युच्यते न चैष हन्तेरभ्यासः । हन्तेरेवाभ्यासः । कथम् । एकाचो द्वे प्रथमस्येति । एवं तर्हि हन्तेरङ्गस्य योऽभ्यासस्तस्मादित्युच्यते । न चैष हन्तेरङ्गस्याभ्यासः । हन्तेरङ्गस्यैषोऽभ्यासः । कथम् । एकाचो द्वे प्रथमस्येति । एवं तर्हि यस्मिन् हन्तिरङ्गं तस्मिन् योऽभ्यासः तस्मादित्युच्यते यस्मिंश्चाच हन्तिरङ्गं तस्मिन्नाभ्यासः यस्मिन्नभ्यासो न तस्मिन्हन्तिरङ्गं भवति ॥

हेरचङि ॥ अचङीति किमर्थम् । प्राजीहयद्दूतम् । हेरचङि प्रतिषेधानर्थक्यमङ्गान्यत्वात् * । हेरचङि प्रतिषेधोऽनर्थकः । किं कारणम् । अङ्गान्यत्वात् । ण्यन्तमेतत् अङ्गमन्यद्भवति । लोपे कृते नाङ्गान्यत्वम् । स्थानिवद्भावादङ्गान्यत्वम् । ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वविज्ञानात् । एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र ण्यधिकस्य कुत्वं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । प्रजिघाययिषतीत्यत्र कुत्वं सिद्धं भवति ॥

---

कुतश्चिदिति । निर्दिष्टपरिभाषोपस्थानात् ॥

अभ्यासा । असुप इति । असुबन्तावयवस्य हन्तेरभ्यासात्परस्य कुत्वं न तु सुबन्तावयवस्येत्यर्थः । हन्तेरभ्यासादिति । अङ्गाधिकारेण चाभ्यासेन च प्रत्ययस्याक्षेपादभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मात्कुत्वमिति भावः । इतरस्त्वगृहीताभिप्राय आह । हन्तेरिति । पूर्वोक्ताभिप्रायेणाह । हन्तेरङ्गस्येति । तथा चोक्तम् । सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावादिति । न चैष हन्तेरङ्गस्येति । अभ्यासनिमित्ते प्रत्यये हन्तिरच नाङ्गमित्यर्थः । इतरोऽङ्गमात्रमाश्रित्याह । हन्तेरिति । आचार्यः स्वाभिप्रायं प्रकाशयति । एवं तर्हीति । यथा जघनिथेति थलि हन्तिरङ्गं तस्मिन्नेव चाभ्यासः ।

हेर । अचङीति किमर्थमिति । यस्मिन् हिनोतिरङ्गं तस्मिन्नभ्यासे विद्यमाने णौ हिनोतिरङ्गं चङ्यभ्यास इति कुत्वं न भविष्यतीति मत्वा प्रश्नः । अन्यत्रेति । सकाशादित्यर्थः ।

सन्लिटोर्जेः ॥ ५७ ॥ जिग्रहणे ज्यः प्रतिषेधः* । जिग्रहणे ज्यः प्रतिषेधो वक्तव्यः । जिज्यतुः जिज्युरिति । न वक्तव्यः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति एवमेतस्य न भविष्यति । सा तर्ह्येषा परिभाषा कर्तव्या । अवश्यं कर्तव्या ॥ अध्याप्यगत इत्येवमर्थम् ॥

न क्वादेः ॥ ५९ ॥ क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात् * । क्वाद्यजिव्रजियाजिरुचीनामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । कुत्वं कस्मान्न भवति । निष्ठायामनिटः कुत्ववचनात् । निष्ठायामनिटः कुत्वं वक्ष्यामि सेटश्चैते निष्ठायाम् । यदि निष्ठायामनिटः कुत्वमुच्यते कथं शोकः समुद्ग इति । शुच्युब्ज्योर्घञि कुत्वं वक्तव्यम् * । कथमर्घः । अर्चेः कविधानात्सिद्धम् । नैतद् घञन्तम् । औणादिक एष कशब्दः । तस्मिन्नाष्ठमिकं कुत्वम् ।

---

सन्लिटोः । जिज्यतुरिति । ज्या वयोहानौ लिटस्तुसि ग्रहिज्यादिसूत्रेण संप्रसारणे कृते पूर्वे कादेशे च यद्यपि हल इति दीर्घत्वं क्रियते तथाप्येकदेशविकृतस्यानन्यत्वाद्यथा जयतेर्जिगीषतीत्यत्र कुत्वं भवत्येवं जिनातेः प्राप्नोति । अध्याप्येति । विभाषाप इत्यादेशः । इङादेशात्पुगन्तात् परस्य येन भवति ।

न क्वादेः । क्वाद्यजीति । चजोः कुघिण्यतोर्निष्ठायामनिट इति वक्तव्यं तेनैव क्वाद्यजादीनां कुत्वनिवृत्तेः सिद्धत्वान्नार्थः प्रतिषेधेनेत्यर्थः । ननु ग्लुचुग्लुञ्चुकुजुखुजूनां निष्ठायामनिट्त्वात् घिण्यतोः कुत्वं वार्तिककारमतेन प्राप्नोति सूत्रकारमतेन तु न क्वादेरिति प्रतिषेधप्रसङ्गः । तथार्जिसर्जितर्जीनां निष्ठायां सेट्त्वात् कुत्वाप्रसङ्गः । उच्यते । वार्तिककारस्य सूत्रकारात् प्रमाणतरत्वात् । तन्मतेन तु कुत्वस्य भावाभावावगन्तव्यौ । नन्वसत्यजेः प्रतिषेध वीत इति निष्ठायामनिट्त्वात् समाज इति कुत्वं प्राप्नोति । नैतदस्ति । व्यादेशो निष्ठायामनिण्वजिः । न च स्थानिवद्भावाद् निष्ठायामनिडिति लौकिके व्यपदेशेऽस्ति । शास्त्रीयेष्वेव कार्येषु स्थानिवत्त्वात् । वलादावार्धधातुके विकल्प इष्यत इति वोभावाभावपक्षे अजित इति निष्ठायामजिः सेडेव । कथमिति । शुचुब्जो निष्ठायां सेटौ । ईशुचिर्पूतिभाव इति यद्यपि निष्ठायामनिट् तथाप्यर्थभेदाश्रयः प्रश्नः । शुच् वुब्जोर्घञीति । यथान्यासेऽपि घञेव यथा स्यात् खति मा भूदिति नियमार्थं वाच्यं तदेव न्यासभेदे विध्यर्थमिति भावः । यद्यपि गमेर्डुरुपसर्गाद् डप्रत्यये सति समुद्ग इति सिध्यति तथाप्युब्जेर्घञि जकारनिवृत्तये कुत्वमभ्युपेयम् । औणादिक इति । कदाधाराचिकलिभ्यः कः घिण्यतोश्चर्चोऽर्च्यमिति भवति ॥

भुजन्युब्जौ पाण्युपतापयोः ॥ ६१ ॥ भुजः पाणौ *।भुजः पाणाविति वक्तव्यम्। कथं न्युब्ज, उपताप इति। न्युब्जेः कर्तृत्वाद्प्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः। कुत्वं कस्मान्न भवति। कर्तृत्वात्। नैतद्घञन्तम्। कर्तृप्रत्यय एषः। न्युब्जतीति न्युब्जः। अधिकरणसाधनो वै लक्ष्यते। न्युब्जिताः शेरते ऽस्मिन् न्युब्ज उपताप इति। एषोपि हि कर्तृसाधन एव। कथं न्युब्जयतीति न्युब्जः॥

यजयाचरुचप्रवचर्चश्च ॥ प्रवचिग्रहणमनर्थकं वचोशब्दसंज्ञाभावात् *। प्रवचिग्रहणमनर्थकम्। किं कारणम्। वचोशब्दसंज्ञाभावात् वचोशब्दसंज्ञायां प्रतिषेध उच्यते। प्रपूर्वश्च वचिरशब्दसंज्ञायां वर्तते। उपसर्गनियमार्थं तर्हीदं वक्तव्यम्। प्रपूर्वस्यैव वचेरशब्दसंज्ञायां प्रतिषेधो यथा स्यात्। इह मा भूत्। अविवाक्यमहरिति। उपसर्गनियमार्थमिति चेदविवाक्यस्य विशेषवचनात्सिद्धम्। विशेषत एव तद्वक्तव्यमविवाक्यमहरिति। क्व मा भूत्। अविवाच्यमवान्यदिति। ण्यप्रतिषेधे त्यजेरुपसंख्यानं कर्तव्यम्। त्याज्यम्। भोज्यम्। भोज्यमभ्यवहार्यं इति वक्तव्यम् *। इहापि यथा स्यात्। भोज्यः सूपः। भोज्यायवागूरिति। किं पुनःकारणं न सिध्यति। भक्षिरयं खरविशदे वर्तते तेन द्रवे न

---

भुज। भुजेस्तौदादिकस्य रौधादिकस्य वा घञि गुणकुत्वनिषेधौ निपात्येते। भुज पाणाविति। न्युब्जोपतापग्रहणं न कर्तव्यमित्यर्थः। लोके बाहौ भुजशब्दो भुजावयवत्वात्प्रयुज्यते। कर्तृप्रत्यय इति। पचाद्यच्। न्युब्जतीति। न्युब्जन्त्यस्मिन्नित्यधिकरणं प्रदर्शनीयम्। भाष्ये तु वस्तुमात्रं कथितम्। एषोऽपीति। यस्मिन् व्याधौ न्युब्जिताश्चेष्टारहिताः शेरते स व्याधिस्तान् न्युब्जयतीत्यच्। न चात्र घञचोः स्वरे विशेषः। थाथादिसूत्रेणान्तोदात्तत्वविधानात्। भुजशब्दस्तु घञाद्युदात्तो भवत्यचि त्वन्तोदात्तः स्यात्॥

यज। अविवाक्यस्येति। यद्ययं नियमः क्रियते तदाऽविवाक्यमित्येव स्यान्नत्वविवाच्यमिति। इयमपि चेत्तद्विषयविभागेनेष्यत इति यत्नान्तरं कार्यं न त्वयं नियमः। अन्योपसर्गपूर्वस्य च प्रतिषेध इष्यत एव। दशरात्रस्य यज्ञविशेषस्य दशममहरविवाक्यमुच्यते। यस्मिन् याज्ञिका न विब्रुवते न नानावाक्यान्युच्चारयन्तीत्यर्थः। तत्र पृषोदरादित्वात्कुत्वमन्यत्र प्रतिषेध इति प्रवचिग्रहणं प्रत्याख्यातम्। त्यजेरिति। पूज्यमिति

प्राप्नोति। नावश्यं भक्षिः खरविशदे वर्तते किं तर्ह्यन्यत्रापि वर्तते। तद्यथा। अब्भक्षो वायुभक्ष इति॥

घोर्लोपो लेटि वा॥ ७०॥ वेति शक्यमवक्तुम्। कस्मान्न भवति तदग्निरग्नये ददात्। अस्त्वत्र लोपः। आटः श्रवणं भविष्यति। तेनोभयं भविष्यति इभद्रत्नानि दाशुषे दधात्।

ओतः श्यनि॥ ७१॥ ओतः शितीति वक्तव्यम् *। किं प्रयोजनम्। उत्तरत्र शिद्ग्रहणाभावाय। तत्रायमप्यर्थः ष्ठिवुक्लमुचमां शितीति शिद्ग्रहणं न कर्तव्यं भवति। ननु च भोः श्यन्ग्रहणमपि तर्ह्युत्तरार्थं वक्तव्यम्। शमामष्टानां दीर्घः श्यनीति श्यन्ग्रहणं न कर्तव्यंभवति। अत्राप्यस्तु शितीत्येव। यदा शितीत्युच्यते। अनुत्वेन्द्रो भ्रमतु मदतु अत्रापि प्राप्नोति। शमादिभिरत्र शितं विशेषयिष्यामः। शमादीनां यः शिदिति। कश्च शमादीनां शित्। शमादिभ्यो यो विहितः। एवमपि तस्यति यस्यति। अत्र प्राप्नोति। अष्टानामिति वचनान्न भविष्यति॥

ष्ठिवुक्लमुचमां शिति॥ ७५॥ ष्ठत्वमाङि चम इति वक्तव्यम्।

---

तु खल्वस्य पूजेरूपम्। भोज्यम्। नावश्यमिति। भाष्यकारः सूत्रन्यासं समर्थयते। अब्भक्ष इति। न च शब्दान्तरसन्निधिगम्यं सामान्यवाचित्वमिति शक्यं वक्तुम्। न हि शब्दस्यानभिधेयं शब्दान्तरसन्निधानेनाभिधीयते नित्यत्वाच्छब्दार्थसंबन्धस्य। भोज्यं भक्ष्यं लेह्यं पेयमित्यत्र गोबलीवर्दन्यायेन विशेषविषयत्वं भुजिभक्ष्योर्ज्ञेयम्॥

घोर्लो। भाष्यकारेण वेति प्रत्याख्यातम्। के चित्त्वनित्यमागमशासनमित्यस्य ज्ञापकं वाग्रहणं वर्णयन्ति। अनित्यत्वात्तस्य घसति ददादिति न स्यादिति तन्निवृत्तये वाग्रहणं क्रियमाणमेनां परिभाषां ज्ञापयति॥

ओतः। ओत इति। न हि श्यनोऽन्य ओतः शिदस्ति। तत्रायमप्यर्थ इति। न केवलं मात्रालाघवं यावदयमप्यर्थ इत्यर्थः। भ्रमत्विति। वा भ्राशेतिवचनात्पक्षे शप्। मदत्विति। व्यत्ययेन शप्। शमादिभ्यो यो विहित इति। श्यन्नेव सर्वेभ्यः शमादिभ्यो विहित इति स एव गृह्यते। एवमपीति। शिद्विशेषणे शमादीनामुपयोगात्कार्यिनिर्देशाभावात्। अष्टानामिति। अष्टानामित्यनेन संख्यया कार्यिणो निर्दिश्यन्ते ते च सन्निधानाच्छमादय एव विज्ञायन्ते॥

ष्ठिवु। ष्ठिवुक्लमुचमां शितीति सूत्रपाठादाह। दीर्घत्वमाङि चमेरिति। अथ क

आचामति । इह मा भूत् । उच्चमति विचमतीति ॥

इषुगमियमां छः ॥ ७७ ॥ इषेश्छत्वमहलि * । इषेश्छत्वमहलीति वक्तव्यम् । इह मा भूत् । इष्णाति । इष्यति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अचीति वर्तते । एवमपीषाणेत्यत्र प्राप्नोति । अथाहलीत्युच्यमाने कस्मादेवात्र न भवति । नैवं विज्ञायते न हल् अहल् अहलीति । कथं तर्हि अविद्यमानो हलस्मिन् सोयमहल् अहलीति । यद्येवमचीत्यपि वर्तमाने न दोषः । न ह्यचा शिद्विशेष्यते शिति भवति कतरस्मिन्नचीति । कथं तर्हि शितान्विशेष्यते अचि भवति कतरस्मिन् शितीति ॥

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७८ ॥ पिबेर्गुणप्रतिषेधः * । पिबेर्गुणप्रतिषेधो वक्तव्यः । पिबति । लघूपधगुणः प्राप्नोति । स तर्हि प्रतिषेधो वक्तव्यो न वक्तव्यः । पिबतिरदन्तः । अदन्त इति चेदुक्तम् । किमुक्तम् । धातोरन्त इति चेदनुदात्ते च बहुवचनसिति । अथ वाङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येत्येवं न भविष्यति ॥

ज्ञाजनोर्जा ॥ ७९ ॥ दीर्घोच्चारणं किमर्थम् । न ज्ञाजनोर्ज इत्येवोच्येत । का रूपसिद्धिः । जानाति जायते ऽतो दीर्घो यञीति दी-

---

सूत्रे तन्त्रमाङ् न तु यथोपेयिवानित्यत्रोपशब्दो ऽतन्त्रमिति प्रदर्शनाय वार्तिकारम्भः ॥

इष । इषुगमि इति पाठोऽनार्ष इत्याह । इषेश्छत्वमहलीति । इषाणेति । इष आभीक्ष्ण्ये इत्यस्माद्धलः श्न शानज्झाविति शानच् । स चाजादिरिति छत्वप्रसङ्गः । अथेति । अहलीति तत्पुरुषे शानजजादिरिति भावः । न ह्यचेति । विशेषणविशेष्यभावे कामचारात्तदादिविधिस्तदन्तविधिवद्विशेषणेन भवति न विशेष्येण ॥

पाघ्रा । धातोरन्त इति चेदिति । धातोरित्यत्र द्वौ पक्षावुक्तौ अन्त इति वर्तते न वा । यद्यनुवर्तते तदा अनुदात्ते चेति सूत्रं कर्तव्यं ददातीत्याद्युदात्तार्थं तथा पिबन्तीत्यादावाद्युदात्तत्वं मध्योदात्तनिवृत्त्यर्थं बान्तस्य धातोर्वक्तव्यमन्तग्रहणनिवृत्तौ तु क्रमप्राप्तत्वादादेरेवोदात्तत्वं सिध्यति । तत्रायं निर्णयः । अन्त इति वर्तते जर्णोत्याद्यर्थम् । अनुदात्ते चेति कृतमेव । पिबतेश्चाद्युदात्तनिपातनमिह कार्यम् । अथवेति । सत्यपि हलन्तत्वे गुणाभावः । पिबादेशेनैवाङ्गस्य प्रयोगार्हत्वात् ॥

ज्ञाज । अतो दीर्घो यञीत्यत्र सार्वधातुकग्रहणं तुकस्तु सूत्रादनुवर्तते न तु तिङी-

र्घत्वं भविष्यति । एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं करोति तत्तज्ज्ञापयत्याचार्यो भवति एषा परिभाषाऽङ्गवृत्ते पुनर्वृत्तावविधिरिति । किमेतस्य ज्ञापने प्रयोजनम् । पिबतेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति ॥

जुसि च॥८३॥जुसि गुणे यासुट्प्रतिषेधः॥*। जुसि गुणे यासुडादौ प्रतिषेधो वक्तव्यः । चिनुयुः सुनुयुरिति । न वक्तव्यः । नैवं विज्ञायते मिदेर्गुणः जुसि चेति। कथं तर्हि मिदेर्गुणो ऽजुसि चेति । किमिदं अजुसीति । अजादावुसि अजुसीति । इहापि तर्हि प्राप्नोति चक्रुर्जह्रुरिति । एवं तर्हि श्नितीति वर्तते । एवमप्यजुहवुरबिभयुरित्यत्र न प्राप्नोति । भूतपूर्वगत्या भविष्यति । न सिध्यति । न हि उस् शित् भूतपूर्वः । उस् शिद्भूतपूर्वो नास्तीति कृत्वा उसि यश्शिद् भूतपूर्वस्तस्मिन् भविष्यति । अथ वा क्रियते न्यास एव । अविभक्तिको निर्देशः । नैवं विज्ञायते मिदेर्गुणो जुसि च ति । कथं तर्हि मिदेर्गुण उजुसिचेति । किमिदमुजुसीति । उकारादौजुसि उजुसीति । अथ वा अचीति वर्तते तेनजुसं विशेषयिष्यामः अजादौ जुसीति ॥

जाग्रोविचिण्णल्ङित्सु ॥ ८५ ॥ इह जागरयति जागरक इति गुणे कृते रपरत्वे चात उपधाया इति वृद्धिः प्राप्नोति तस्याः प्रति-

---

ति । अत एवानेसुक् पूर्वान्तः कृतो न परादिः दीर्घप्रसङ्गात् । अङ्गवृत्त इति । ज्यादादीयस इत्याकारविधानस्य ज्ञापकत्वेंजा इति दीर्घोच्चारणं दीर्घश्रवणार्थमेतद्दीर्घोच्चारणे तु ज्ञापके तदाकारविधानमाकारश्रवणार्थम् ॥

जुसि.च । चिनुयुरिति । तङ्गक्तस्तद्ग्रहणेन गृह्यतइति गुणप्रसङ्गः । श्नितीति वर्तत इति । छिवुक्लमुचमां श्नितीत्यतः । न च लिटि श्निदस्ति । एवमपोति । उसिश्नितीति सामानाधिकरण्येन संबन्धं मन्यते । इतरस्तूसि यः श्नित् तस्मिन्निति संबन्धं मत्वाह । भूतपूर्वगत्येति । प्रत्ययलक्षणं तु नास्ति न लुमताङ्गस्येति निषेधात् । उकारादाविति । यासुडादेरनुकारादित्वाद् ग्रहणाभावः । अनुबन्धनिर्देशाच्च लिङादेशस्योसो ग्रहणाभावः । अचीति वर्ततइति । क्सस्याचीत्यतः ॥

जाग्रोवि । इहेति । अङ्गवृत्त इत्यनाश्रित्योच्यते । गुणस्यावकाशः । जागरित इति । अचोऽञ्णितीति वृद्धेरवकाशः कारक इति । जागरयतीत्यादौ उभयप्रसङ्गे परत्वाद्गु-

षेधो वक्तव्यः। चिण्णलोः प्रतिषेधसामर्थ्यादत्र गुणभूतस्य वृद्धिप्रतिषेधः। यदयमचिण्णलोरिति प्रतिषेधं शास्ति। तज्ज्ञापयत्याचार्यो न गुणाभिनिर्वृत्तस्य वृद्धिर्भवतीति। किं पुनरयं पर्युदासः यदन्यद्विचिण्णल्ङिद्भ्य इति। आहोस्वित्प्रसज्यायं प्रतिषेधः विचिण्णल्ङित्सु नेति। कश्चात्र विशेषः। प्रसज्यप्रतिषेधे जुसिगुणप्रतिषेधप्रसङ्ग उत्तमे च णलि *। प्रसज्यप्रतिषेधे जुसि गुणप्रतिषेधः प्राप्नोति। अजागरुः। उत्तमे च णलि प्रतिषेधः प्राप्नोति। अहं जजागर। न वानन्तरस्य प्रतिषेधात् *। न वा एष दोषः। किं कारणमनन्तरस्य प्रतिषेधात्। अनन्तरं यद् गुणविधानं तस्य प्रतिषेधः। कुत एतत्। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति। जुसि पूर्वेण विधानम्। जुसि पूर्वेण गुणो विधीयते। जुसि चेति। णलि च। किम्। न वानन्तरप्रतिषेधादित्येव। णलि च पूर्वेण गुणो विधीयते सार्वधातुकार्द्धधातुकयोरिति। अथ वा पुनरस्तु पर्युदासः। अतोन्यत्र विधाने वावगुणत्वम् *। अतोन्यत्र विधाने वा अगुणत्वं वक्तव्यम्। जागर्विः। न वा पर्युदाससामर्थ्यात् *। न वा वक्तव्यम्। किं का-

---

णे कृते ऽत उपधाया इति वृद्धिः प्राप्नोति। गुणभूतस्येति। गुणशब्दः स्वरूपपदार्थको- गुणशब्देन भूतो निष्पन्नो गुणभूत एवं गुणशब्देनाभिनिर्वृत्तो गुणाभिनिर्वृत्तः। यद्यनेन गुणे कृते ऽत उपधाया इति वृद्धिः स्याच्चिण्णलोर्गुणप्रतिषेधोऽनर्थकः स्यात् कृते वृद्ध्या रूपस्य सिद्धत्वात्तस्माच्चिण्णलोः प्रतिषेध उपधावृद्ध्यभावस्य ज्ञापको वृद्धिमात्राभावस्य तु नज्ञापकः। तथा च ह्म्यन्तक्षणेत्यत्र जागृग्रहणमजागरीदित्यत्र वृद्धिनिषेधार्थं कृतम्। अन्यथा गुणे कृते अतो ल्रान्तस्येति अनेन वृद्धिर्न भविष्यतीति किंजागृग्रहणेन। अजागरुरिति। लङ् सिजभ्यस्तविदिभ्यश्चेति जुसादेशः तस्य ङित्वाज्जुसि चेत्यनेनापि प्राप्तस्य निषेधः प्राप्नोति। तथा जजागरेत्यत्र णित्त्वाभावपक्षे सार्वधातुकार्द्धधातुकयोरित्यनेनापि प्राप्तस्य गुणस्य निषेधप्रसङ्गः। पर्युदासपक्षे तु न दोषः। तत्र विचिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते न च तेषु निषिध्यतइति लक्षणान्तरेण गुणः प्रवर्तत एव। जागर्विरिति। हृदृजागृभ्यो विन्निति सूत्रपाठाश्रयेण चोद्यते। यदा तु जॄशॄस्तॄजागृभ्यः क्विन्निति पाठस्तदा क्वित्वादेवार्द्धधातुकलक्षणगुणाप्रसङ्गः। यद्यपि प्रसज्यप्रतिषेधे ऽप्ययं दोषो ऽनन्तरस्य निषेधात्तथापि पर्युदासो दोषवानिति प्रतिपादनायेदमुच्यते। न वेति। यदि जागर्विरित्यत्र लक्षणान्तरेण गुणः स्यादेः पर्युदासोऽनर्थकः स्यात्।

रणम्। पर्युदाससामर्थ्याच्च गुणो न भविष्यति। अस्त्यन्यत्पर्युदासे प्रयोजनम्। किम्। क्विबर्थं पर्युदासः स्यात्। शुद्धपरस्य विशब्दस्य प्रतिषेधग्रहणम्। अनुनासिकपरश्च क्वौ विशब्दः। क्वस्वर्थस्तर्हि पर्युदासः स्यात्। जागृवांसो अनुग्मन्। कथं पुनर्वेः पर्युदास उच्यमानो क्वस्वर्थः शक्यो विज्ञातुम्। सामर्थ्याद्, क्वस्वर्थमिति चेन्न सार्वधातुकत्वात्सिद्धम् *। क्वस्वर्थमिति चेत्तन्न। किं कारणम्। सार्वधातुकत्वात्सिद्धम्। कथं सार्वधातुकसंज्ञा छान्दसः क्वसुः लिट् च छन्दसि सार्वधातुकमपि भवति। तत्र सार्वधातुकमपिदिति ङित्त्वात्पर्युदासो भविष्यति। अथ वा वकारस्यैवेदमशक्तिजेनेकारेण ग्रहणम्॥

पुगन्तलघूपधस्य च ॥ ८६॥ संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति॥ संयोगे गुरुसंज्ञायां भेत्ता भेत्तुमिति गुणो न प्राप्नोति। वि-

---

क्विबर्थमिति। नहि लक्षणान्तरेण गुणप्रसङ्गः। न चात्र तदनुबन्धकपरिभाषोपतिष्ठते। अनुबन्धस्यानिर्देशादिति विग्रहेण न क्विबपि गृह्यत इति भावः। शुद्धपरस्येति। विशब्दे इकारो निरनुनासिकः उच्चारित इति क्विपो ग्रहणं नास्ति। तस्य हीकारो ऽनुनासिकः। क्वस्वर्थ इति। विशब्दः सप्तम्यन्तो निर्दिश्यते निपातनाच्च सप्तम्या अलुक् यथा वरे थलोपेति। अथ वा इकार उच्चारणार्थ इति, तत्र तदादिविधानात् क्वसोर्ग्रहणं भवतीति भावः। इतरस्तु यथोक्तमप्रतिपद्य वि इति समुदायो निर्दिष्ट इति मत्वाह। कथं पुनरिति। इतरः पूर्वोक्तेनाभिप्रायेणाह। सामर्थ्यादिति। औणादिको न पर्युदस्यते लक्षणान्तरेण प्रसङ्गादिति सामर्थ्यादिकारादेः क्वसोर्ग्रहणमित्यर्थः। छान्दस इति। भाषायां सदवसश्रुभ्य एव क्वसुर्नान्येभ्य इति भावः। केचित्तु भाषायामपि क्वसुमिच्छन्ति तएवं परिहरन्ति। असंयोगाल्लिट्किदिति सिद्धे कित्त्वे क्वसोः कित्त्वं प्रतिषेधविषयस्यापि गुणस्य प्रतिषेधार्थमिति क्वसौ गुणाभावः। अथ वेति। अनच् कस्य हल उच्चारयितुमशक्यत्वाद् इकार उच्चारणार्थो निर्दिष्ट इति वकारादेर्ग्रहणं क्वसौ च प्रतिविहितमिति औणादिक एव पर्युदस्यते तत्सामर्थ्याल्लक्षणान्तरेणापि गुणो न भवति किन्तु लोपाद्वर्णाश्रये प्रत्ययलक्षणनिषेधाच्च पर्युदासं नेच्छन्ति। अन्ये तु यथा ऽव्यणेङिति प्रत्ययलक्षणेन इमागमो भवति वर्णस्य प्रत्ययविशेषणत्वादेवं क्विपो ऽपि पर्युदास इत्याहुः॥

पुगन्त। संयोग इति। धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये संयोगे गुर्विति गुरुसंज्ञाया लघुसंज्ञाया बाधनाल्लघ्वित्ति गुणो न भवति। अजादौ च भेदनमित्यादौ सावकाशोगु-

ध्यपेक्षं लघोश्चासौ ॥ विध्यपेक्षं लघुग्रहणं कृतम् । लघोश्चासौ विहितः । कथं कुण्डिर्न दुष्यति ॥ कुण्डिता हुण्डिता । अत्र कस्मान्न भवति । धातोर्नुमः । धातोर्नुम्विधावुक्तं तत्र धातुग्रहणस्य प्रयोजनम् । । धातूपदेशावस्थायामेव नुम्भवतीति । कथं रञ्जे, रूपधालक्षणा वृद्धिः आश्चर्यो रागः विचित्रो रागः । स्यन्दिश्रन्थ्योर्निपातनात् ॥ यदयं स्यन्दिश्रन्थ्योरवृद्ध्यर्थं निपातनं करोति तज्ज्ञापयत्याचार्यो भवत्येवंजातीयकानां वृद्धिरिति । अनल्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥ अनल्लोपः । दध्ना सक्थ्ना । शिदीर्घत्वं कुण्डानि वनानि । एवं तर्हि । अभ्यस्तस्य यदाहाचि ॥ यदयं नाभ्यस्तस्याचि पिति सार्वधातुक इत्यज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येवंजातीयकानां गुण इति । लङर्थं तत्कृतं भवेत् ॥ लङर्थमेतत्स्यात् । अनेनेक् । क्रुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्यान्नघोर्गुणे ॥ यदयं रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । इको झल् हलन्ताच्चेति क्त्वासनौ कितौ करोति तज्ज्ञापयत्याचार्यो भवत्येवं जातीयकानां गुण इति । संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति । विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्नदुष्यति ॥ १ ॥ धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्नि-

---

णः । विध्यपेक्षमिति । गुणविधानमिति शेषः । लघूपधाद्ये विहिते सार्वधातुकार्धधातुके तयोरङ्गस्य गुण इत्यर्थः । ननु पञ्चम्यभावात्कथं विधानं भविष्यति । उच्यते । षष्ठीपक्षेऽपि लघूपधस्य ये सार्वधातुकार्धधातुके के च तस्य ये तस्माद्विधीयेते इत्युपपद्यते विधानविशेषणम् । ननु सांप्रतिकलघूपधसंभवे कथं विधानं विशेष्यते व्याप्तिन्यायाश्रयादेवं हि हलादावजादौ च गुणः सिध्यति । कथं कुण्डिरिति । अङ्गाधिकारे नुमो विधानादशत एव नुमि प्रत्ययो लघूपधाद्विधीयते तस्मिन् परतो नुमि गुणः प्राप्नोति । उक्तं तत्रेति । तेनकुण्डेति गुरोश्च हल इत्यकारः सिध्यति अन्यथा क्तिन् स्यात् । कथं रञ्जेरिति । यदि षष्ठीनिर्देशेऽपि विधानं विशेष्यते तदान्यत्रापि प्रसङ्गः । ततश्चाकारोपधाद्विहिते प्रत्यये वृद्धि विधीयमाना रञ्जेः प्रत्ययोत्पत्तेः पुरस्तान्नकारोपधत्वाद्वृद्धिर्न प्राप्नोति । राग इति । रञ्जेश्च घञि च भावकरणयोरिति नलोपः । ननु चोपधाया अकारस्य वृद्धिरुच्यते न च ततः प्रत्ययविधिसंभव इति विध्यपेक्षत्वं नाश्रयिष्यते एवं मन्यते । आकारोपधाद्यो विधीयते सोऽवयवादनुमानाद्विहितो भवति । स्यन्दिश्रन्थ्योरिति । नलोपार्थं वृद्ध्यभावार्थं निपातनम् यदि वृद्धिविधौ विधानं विशेष्यते ततो वृद्धिप्रसङ्गा-

पातनात्। अनङ्लोपश्चिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥ २॥ अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत्। क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥ ३ ॥

नाभ्यस्तस्याचिपिति सार्वधातुके ॥ ८७ ॥ अभ्यस्तानामुपधाह्रस्वत्वमचि पस्पशाते चाकशीमि वावशतीरितिदर्शनात् *। अभ्यस्तानामुपधाया ह्रस्वत्वमचि वक्तव्यम्। किं प्रयोजनम्। पस्पशाते चाकशीमि वावशतीरिति दर्शनात्। पस्पशाते चाकशीति वशतीरिति प्रयोगो दृश्यते। कपोतः शरदं पस्पशाते। अहं भुवनं चाकशीमि वावशतीरुदाजदिति। बहुलं छन्दसि आनुषक्जुजोषदिति दर्शनात्*। बहुलं छन्दसीति वक्तव्यमुपधाह्रस्वत्वम्। किं प्रयोजनम्। आनुषक्जुजोषदिति दर्शनात्। यस्त आतिथ्यमानुषक् जुजोषत्।

---

भावात्तदभावार्थं निपातनं न क्रियेत नलोपसिद्धये विधिरेवाश्रीयेत अनेकप्रयोजनसिद्धये निपातनाश्रयणम्। अनङ्लोपेति। अल्लोपोन इत्यत्र षष्ठीनिर्देशे ऽन्नन्तादिहिते प्रत्यये लोपो विधीयमानो राज्ञ इत्यादावेव स्यान्नाश्ना दध्ने त्यादौ दीर्घत्वं च सामानीत्यादावेव स्यान्न तु कुण्डानीत्यादौ तस्मात् षष्ठीनिर्देशे विधानविशेषणे दोषप्रसङ्गाद् गुणो भेत्तुर्न सिध्यति। अभ्यस्तस्येति। अज्ग्रहणस्य प्रयोजनं नेनेक्तीत्यादौ गुणप्रतिषेधो मा भूत्। यदि च हलादावलघूपधत्वाद् गुणो न स्यात्तदा गुणस्य प्राप्तिरेव नास्तीति किं तन्निषेधनिवारणार्थं नाज्ग्रहणेन। लङर्थमिति। लुप्ते प्रत्यये गुणप्रतिषेधनिवारणायाज्ग्रहणं न ज्ञापकम्। अनेनेगिति। णिजर्शौचपोषणयोरित्यस्माल्लङितिप्शप्श्लुः द्विर्वचनं निजां त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः हल्ङ्याब्भ्य इति तिलोपः प्रत्ययलक्षणेन लघूपधागुणः। क्नुसनोरिति। ननु सनः कित्त्वममभावार्थं स्यात् सिसृक्षति दिदृक्षत इति कथं ज्ञापकम्। उच्यते। यद्येतावत्प्रयोजनं स्यात् सृजिदृशोर्झल्यमकित्सनोरित्येव ब्रूयात् तस्माद्गुणप्रतिषेधार्थमपि कित्त्वं ज्ञापकमेव किन्तु धिप्सति धीप्सतीत्यत्र नलोपार्थं सनः कित्त्वं स्यादिति क्नोरेव कित्त्वं ज्ञापकम्॥

नाभ्य। अभ्यस्तानामिति। गुणप्रतिषेधमविधाय ह्रस्वत्वमेव विधेयं सर्वेष्टसिद्धय इति भावः। किं प्रयोजनमिति। गुणनिषेधे ह्रस्वे चाविशेषं मत्वा प्रश्नः। पस्पशात इति। स्पशिर्वार्तिककारवचनादपठितोऽपि धातुस्तस्माल्लटो व्यत्ययेनात्मनेपदं टेरेत्वं लेटोऽडाटावित्याट् शपो बहुलं छन्दसीति श्लुः द्विर्वचनम्। चाकशीमीति। काशृदीप्तौ यङ्लुग् लट् मिप् शब्लुक्। यङो वेतीडागमः। वावशतीरिति। वाशृशब्दे यङ् लुक् लट् शपृङीप्। जुजोषदिति। जुषी प्रीतिसेवनयोः। लेट् व्यत्ययेन परस्मैपदं तिप् इ-

अद्युपधाङ्ह्रस्वत्वमुच्यते। प्रियां मयूरः प्रति नर्नृतीति। यद्वत्त्वं नरवर नर्नृतीषि हृष्टः। अत्र गुणः प्राप्नोति तस्मान्नार्थ उपधाङ्ह्रस्वत्वेन। कस्मान्न भवति पस्पशाते चाकशीति वावशतीरिति। स्पशिकशिवशयः प्रकृत्यन्तराणीति॥

भूसुवोस्तिङि॥८८॥ भूसुवोः प्रतिषेधे एकाज्ग्रहणं बोभवतीत्यर्थम्*। भूसुवोः प्रतिषेधे एकाज्ग्रहणं कर्तव्यम्। किं प्रयोजनम्। बोभवतीत्यर्थम्। इह माभूद् बोभवतीति। यद्येकाज्ग्रहणं क्रियते अभूत् अत्र न प्राप्नोति। क्व तर्हि स्यात्। मा भूत्। तस्मान्नार्थ एकाज्ग्रहणेन। कस्मान्न भवति बोभवतीति। बोभूत्वित्येतन्नियमार्थं भविष्यति। अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रेति। क्व मा भूद् बोभवतीति॥

ऊर्णोतेर्विभाषा ... ॥ ९२॥ किमर्थं ऊर्हिरागतश्नम् को गृह्यते। न ऊर्हेरिम् भवतीत्येवोच्येत। ऊर्णोहि ग्रहणं श्नमिमोर्व्यवस्थार्थम्*। ऊ-

---

तस लोपः परस्मैपदेष्विति इकारलोपे लेटोडाटावित्यट् व्यत्ययेन शपः श्लुः द्विर्वचनं गुणे कृते ह्रस्वाभावः। यदि तर्हीति। यदि गुणनिषेधं प्रत्याख्यायोपधाह्रस्वो विधीयते तदा नर्नर्तीति गुणरपरत्वयोः कृतयोर्ह्रस्वभाविन्युपधा नास्तीति रूपं न सिध्यतीति गुणनिषेध एव न्यायान्। ननु परत्वाद् गुणं बाधित्वा ह्रस्वो भविष्यति सकृद्गतौ विप्रतिषेध इति पुनर्गुणो न भविष्यति। एवं तर्हि पुनः प्रसङ्गविज्ञानाद् गुणः स्यात्। स्पशिकशिवशय इति। स्पशबाधनस्पर्शनयोः कशगतिशासनयोरिति केचित् पठन्ति। अन्ये तु कसगतिशासनयोरिति तन्मतेन कशिः सौत्रो धातुः कशेर्मुट् प्रतिष्कशश्च कशेरिति पाठात्, वशकान्तौ॥

भू। एकाज्ग्रहणमिति। द्विर्वचने कृते ऽनेकाच्त्वे गुणनिषेधनिवृत्त्यर्थम्। बोभवतीति। यङ्लुगन्ताल्लेट् तिब् लेटोडाटावित्यट्। मा भूदिति। न माङ्योग इत्यट्प्रतिषेधादेकाच्त्वम्। अत्रैवेति। सिद्धे गुणनिषेधे निपातनं नियमार्थम्। यद्येवं सोषवीतीति गुणनिषेधः प्राप्नोति। उच्यते। भाष्यं यथा तथा भवत्येव योगापेक्षं ज्ञापकमितिवक्तव्ये नियमार्थमिति वचनादथ वा नियमार्थेन निपातनेन द्वयोरपि भूसुवोर्यङ्लुकि गुणनिषेधो निवार्यते। यद्वा छान्दसी यङ्लुक्। न च सुवो यङ्लुगन्तस्य छन्दसि प्रयोगः। भाषायां तु क्व चिद्यङ्लुग् भवति न सर्वत्र।

ऊर्णोह। किमर्थमिति। ऊर्हु इत्यस्य निवृत्त्यर्थो विकरणनिर्देशो भवति, ततः परस्य

णहि ग्रहणं अमि कृते इम् यथा स्यात्। तृहिग्रहणे हीम्विषये अम-भावोनवकाशत्वात् *। तृहिग्रहणे हि सति इम्विषये अमोभावः स्यात्। किं कारणम्। अनवकाशत्वात्। अनवकाश इम् अमं बाधेत। इदमयुक्तं वर्तते। किमत्रायुक्तम्। तृणहिग्रहणं अमिमोर्व्य-वस्थार्थमित्युक्त्वा तत उच्यते। तृहिग्रहणे हीम्विषये अमाभावोन-वकाशत्वादिति। तत्र वक्तव्यं तृणहिग्रहणं अमिमोर्भावाय तृहिग्र-हणे हीम्विषये अमभावोनवकाशत्वादिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। व्यवस्थार्थमित्येव सिद्धम्। न ह्यसतो व्यवस्थेति॥

तुरुस्तुशम्यमः सार्वधातुके॥ ९५॥ सार्वधातुक इति वर्तमाने पुनः सार्वधातुकग्रहणं किमर्थम्। पुनः सार्वधातुकगहणं अपिदर्थ-म्। अपिदर्थोयमारम्भः। अभिगो शमीध्वं सुशमिशमीध्वं शमीध्व-मध्रिगो॥

बहुवचने झल्येत्॥ १०३॥ अतो दीर्घाद्बहुवचन एत्वं विप्र-तिषेधेन *। अतो दीर्घाद्बहुवचन एत्वं भवति विप्रतिषेधेन। अतो दीर्घो यञि सुपि चेत्यस्यावकाशः वृक्षाभ्यां प्लक्षाभ्याम्। बहु-वचने झल्येदित्यस्यावकाशो वृक्षेषु प्लक्षेषु। वृक्षेभ्यः प्लक्षेभ्यः इहोभयं प्राप्नोति। एत्वं भवति विप्रतिषेधेन॥

अम्बार्थनद्योर्ह्रस्वः॥ १०७॥ डलकवतीनां प्रतिषेधो वक्तव्यः। अम्बाडे अम्बाले अम्बिके। तल् ह्रस्वत्वं वा ङिसंबुद्ध्योः। तलो ह्र-

---

हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानादिति प्रश्नः। नह्यसत इति। व्यवस्था-र्थमित्येवं ब्रुवता पूर्वं अमोभावः पश्चादिम् इत्युक्तं भवति। अमोभावायेति तूच्यमाने क्रमो न प्रदर्शितः स्यात्॥

तुरु। अपिदर्थमिति। नाभ्यस्तस्याचिपिति सार्वधातुकइति सार्वधातुकग्रहणं पि-द्विशेषणसंबद्धमिति तदनुवृत्तौ पितो ऽप्यनुवृत्तिः स्यादिति तन्निवृत्त्यर्थमन्यत्सार्वधातु-कग्रहणमित्यपितो ऽपि ईड् भवति। हल्ग्रहणमनुवर्तते न हि तत्सार्वधातुकग्रहणेन सहनिर्दिष्टं यतस्तन्निवृत्तौ हलो निवृत्तिः स्यात्। शमीध्वमिति। शमिरन्तर्भावितण्य-र्थात् प्रैषे लोट् व्यत्ययेनात्मनेपदं शप् तस्य बहुलं छन्दसीति लुक्॥

अम्ब। डलकवतीनामिति। अर्थगतेन स्त्रीत्वेनाम्बार्थाः शब्दा निर्दिष्टाः। तुल्य-

ह्रस्वत्वं वा ङिसंबुद्ध्योरिति वक्तव्यम्। देवत। देवते। देवतायां देवते। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। स कथं न वक्तव्यो भवति। अम्बार्थं द्व्यचरं यदि॥ यद्यम्बार्थं द्व्यचरं गृह्यते। तत्तर्हि ह्रस्वत्वं वक्तव्यम्। न वक्तव्यम्। अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम्। उपगायन्तु मां पतयो गर्भिणयो युवतय इत्येवमर्थम्। मातॄणां मातच् पुत्रार्थमर्हते *। मातॄणां मातजादेशो वक्तव्यः। पुत्रार्थमर्हते। गार्गीमात वात्सीमात॥

ह्रस्वस्य गुणः॥ १०८ इह कस्मान्न भवति नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु। ह्रस्ववचनसामर्थ्यात्। अस्त्यन्यद्ध्रस्ववचने प्रयोजनम्। पृथग्विभक्तिं मोच्चीचरमिति। शक्यं पृथग्विभक्तिमनुच्चारयितुम्। कथ,मेवमयं ब्रूयात्। अम्बार्थानां ह्रस्वः नदीह्रस्वयोर्गुण इति। यद्येवमुच्यते जसि चेत्यत्र नद्या अपि गुणः प्राप्नोति। एवं तर्हि योगविभागः करिष्यते। अम्बार्थनद्योर्ह्रस्वः ततो ह्रस्वस्य। ह्रस्वस्य च ह्रस्वो भवति। किमर्थमिदं गुणं वक्ष्यति तद्बाधनार्थम्। ततो गुणः गुणश्च भवति ह्रस्वस्येति। अथ वा ह्रस्वस्य गुण इत्यचा-

---

पेक्षया वा स्त्रीत्वेन निर्देशः। असंयुक्तानांच डलकानां ग्रहणादक्कालेति ह्रस्वो भवत्येव। देवतइति। ङौ ह्रस्वे कृते ङ्याब्ग्रहणे ऽदीर्घइति स्थानिवत्त्वनिषेधादाम्याडागमौ न भवतः। अम्बार्थमिति। द्व्यच एवाम्बार्थस्य ग्रहणाड् डलकवतामर्थात् प्रतिषेधः कृतो भवति। अवश्यमिति। व्यत्ययोबहुलमिति दीर्घस्य ह्रस्वः। मातॄणामिति। पूर्वपदे बहवो मातृशब्दा इति बहुवचनं मातृशब्दस्य मातजादेशो वक्तव्यो यो मातृशब्दः पुत्रार्थं पुत्रमभिधासुपादीयते बहुव्रीहौ च वर्तिपदैरन्यपदार्थो ऽभिधीयते इति तत्रैवायं संबुद्धौ मातजादेशः। गार्गीमातेति। गार्गीमातास्येति बहुव्रीहौ नद्यृतश्चेति कप् येननाप्राप्त इति मातजा बाध्यते यः पुत्रः श्लाघ्यगुणत्वात्कुलसंभूतया मात्रा व्यपदेशमर्हति तत्र मातजादेशो नान्यत्र। गर्गवत्साभ्यां गर्गादियञ् यञश्चेति ङीप्।

ह्रस्व। इह कस्मादिति। ह्रस्वविधानं नद्या गुणविध्यर्थमेवस्यात्। पृथगिति। यद्यम्बार्थानां ह्रस्व इत्युक्त्वा नद्या गुणो ह्रस्वस्य चेत्युच्यते तदापृथगुच्चारयितव्या भवति। एवमयं ब्रूयादिति। ह्रस्वं विधाय गुणे विधीयमाने प्रक्रियागौरवं भवतीति लाघवार्थं साक्षादेव गुणं विदध्यात्। नद्या अपीति। एकसमासनिर्देशाद् द्वयोरपि नदीह्रस्वयोरनुवृत्तिप्रसङ्गात्। ह्रस्वस्य चेति। ह्रस्वस्येत्यत्राम्बार्थनद्योरिति वर्तते तेन नद्या ह्रस्वे कृते तस्य गुणबाधनाय ह्रस्व एव क्रियते। अथ वेति। सिद्धे ह्रस्वे पुनरनुवृत्त्या

स्वार्थं नद्यर्थे र्ह्रस्व इत्येतदनुवर्तिष्यते ॥

जसि च ॥ १०९ ॥ जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः *। जसादिषु छन्दसि वेति वक्तव्यम् । किमविशेषेण । नेत्याह । प्राङ् णौ चङ्युपधायाः । किं प्रयोजनम् । अम्बे दर्वि शतक्रत्वः पश्वे किकिदीव्या । अम्बे अम्ब । दर्वे दर्वि । शतक्रत्वः शतक्रतवः । पश्वे पशवे किकिदीव्या किकिदीविना ॥

घेर्ङिति ॥ १११ ॥ घेर्ङितिगुणविधाने ङीसार्वधातुके प्रतिषेधः *। घेर्ङितिगुणविधाने ङीसार्वधातुके प्रतिषेधो वक्तव्यः । पट्वी । मृद्वी। कुरुत इति । सुबधिकारात्सिद्धम् *। सुबिति वर्तते । क्व प्रकृतम् । सुपि च बहुवचने झल्येदिति ॥

याडापः ॥ ११३ ॥ इहातिखट्वायातिमालायैति ह्रस्वत्वे कृते स्थानिवद्भावाद्याट् प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । न वक्तव्यः । याड्विधानेतिखट्वायैत्यप्रतिषेधो ह्रस्वादेशत्वात् * । याड्विधानेऽतिखट्वायातिमालायैत्यप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । याट् कस्मान्न भवति । ह्रस्वादेशत्वात् । ह्रस्वादेशोयम् । उक्तं चैतत् । ङ्याब्ग्रहणे ऽदीर्घ इति । अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते आबसौ भूतपूर्व इति कृत्वा याट् कस्मान्न भवति । लक्षणप्रतिपदोक्तयोः

---

तद्विधानं गुणबाधनार्थम् ॥

जसि च । जसादिष्विति । आदिशब्दः प्रकारवाची प्रकरणेऽस्मिन् येषु कार्यं विधीयते ते जसादय इति पूर्वयोगनिर्दिष्टानामपि ग्रहणम् । दर्वीति । कृदिकारादक्तिन इति पक्षे ङीष्विधानात्सिध्यति रूपद्वयम् । ङीष्विकल्पं त्वनपेक्ष्यैतदुक्तम् । शतक्रत्व इति जसि चेति गुणाभावपक्षे प्रथमयोरिति पूर्वसवर्णदीर्घो ऽपि वा छन्दसीति वचनान्न भवतीति यणादेशः प्रवर्तते । किकीदिविशब्दः कृविघृष्वित्युणादिषु निपातितः ॥

घेः । कुरुत इति । शेषो घ्यसखेति । यस्य नदीसंज्ञा नास्ति स घिसंज्ञ इति कुरुशब्दो घिः ॥

याडा । अतिखट्वायैति । खट्वामतिक्रान्त इति प्रादिसमासे ह्रस्वे च कृते चतुर्थ्येकवचनस्य ङेर्यं इति प्राप्नोति याडाप इति च तत्र परत्वाद्याट् प्राप्नोति तत्र कृते दीर्घत्वे चातिखट्वायै देवदत्तायेतिप्रसङ्गः । ह्रस्वादेशत्वादिति । यतो ह्रस्वादेशः कृतस्ततो रूपभेदादाप्ग्रहणेन तस्य ग्रहणाभावात् । स्थानिवत्त्वं च नास्तीत्याह । उक्तं चैतदिति । लक्षणेति । अकारस्य दीर्घे सत्या इति लाक्षणिकं रूपमिति न तस्य ग्रहणम् ।

प्रतिपदोक्तस्यैवेति। ननु चेदानीं सत्यस्यापि ग्निवद्भावे तया परिभाषया शक्यमुपस्थातुम्। नेत्याह। नहीदानीं क्वचिदपि ग्निवद्भावः स्यात्।

ङेराम्नद्याम्नीभ्यः॥ ११६॥ इदुद्भ्यामाम्विधानमौत्वस्य परत्वात्*। इदुद्भ्यामाम्विधेयः। शकट्यां पद्धत्यां धेन्वामिति। किं पुनः कारणं न सिध्यति। औत्वस्य परत्वात्। परत्वादौत्वं प्राप्नोति। योगविभागात्सिद्धम् *। योगविभागः करिष्यते। ङेराम्नद्याम्नीभ्यः। तत इदुद्भ्याम्। इदुद्भ्यामुत्तरस्य ङेराम् भवतीति। शकट्यां पद्धत्यां धेन्वामिति। तत औदच्च घेः। औत्वे योगविभागः कर्तव्यः।

औत् ॥११८॥ औद्भवतीदुद्भ्याम्। ततः अच्च घेरिति। अकारश्च भवति घेरिति। किमर्थो योगविभागः। सखिपतिभ्यामौत्वार्थः। सखिपतिभ्यामौत्वं यथा स्यात्। सख्यौ पत्यौ। एकयोगे ह्यप्राप्तिरत्वसन्नियोगात् *। एकयोगे हि सत्यौत्वस्याप्राप्तिः। किंकारणम्। अत्वसंनियोगात्। अत्वसन्नियोगेनौत्वमुच्यते। तेनयत्रैवात्वं तत्रैवौत्वं स्यात्। नवाकारस्यान्वाचयवचनाद्यथा क्वचि सलोपः *।

---

ननु चेति। ङ्याब्ग्रहणेदीर्घ इति न वक्तव्यमिति चोद्यते। नेत्याहेति। परिहारः॥

ङेः। शकट्यामिति। शकटिशब्दस्य ङिति ह्रस्वश्चेति वा नदीसंज्ञाविधानात्तदभावपक्षे घिसंज्ञायां शकटाविति भवति। नदीसंज्ञापक्षे तु परत्वादौत्वं प्राप्नोति। आमोवकाशः कुमार्यामिति। औत्वस्यावकाशः सख्यौ पत्याविति। अत आह। इदुद्भ्यामिति। पूर्वविप्रतिषेध आश्रयणीय इत्यर्थः। ननु कृते औत्वे पुनः प्रसङ्गविज्ञानादाम् भविष्यति पुनरौत्वं न भविष्यति। चक्रकेऽविष्टतो व्यवस्थापनात्। नैतदस्ति। द्रव्यपदार्थपक्षे सकृद्गतिपरिभाषयान्न स्यात्। योगविभाग इति। इदुद्भ्यामित्यत्र योगे नदीग्रहणानुवृत्त्या सख्यौ पत्यावित्यत्रामोप्रसङ्गः॥

औत्। औत्व इति। एकयोगे त्वत्वौत्वयोः सन्नियोगशिष्टत्वाद्यत्रात्वं तत्रौत्वं स्यात्। सख्यौ पत्याविति। असखीतिप्रतिषेधात् पतिः समास एवेतिनियमाच्चानयोर्नास्ति घिसंज्ञाशेस्त्राख्यत्वाच्चनास्तिनदीसंज्ञा यदा सखिशब्दः स्त्रियां वर्तते तदासख्यशिश्वीतिभाषायामिति ङीषा भाव्यं पतिशब्दस्य तु स्त्रीवृत्तेर्यज्ञसंयोगादन्यत्र ङिति ह्रस्वश्चेति पक्षे नदीसंज्ञेति पत्यामिति भवति। न वेति। अन्वाचये चशब्दः। इदद्भ्यां परस्य ङेरौद्भवति यत्र तु घिसंज्ञास्ति तत्र तस्यात्वमिति अत्वानपेक्षमौत्वं प्रधानशिष्टम्।

न वार्थ औत्वे योगविभागेन। किं कारणम् । अकारस्यान्वाचयवचनात्।प्रधानशिष्टमौत्वमन्वाचयशिष्टमत्वम् । यथा क्वचित् सलोपः । तद्यथा । प्रधानशिष्टः क्वङ् प्रातिपदिकमात्राद्भवति। यत्र च सकारस्तत्र लोपः । अत्वे टाप्प्रतिषेधः*। अत्वे टापः प्रतिषेधो वक्तव्यः । शकटी । पद्धती । धेनौ। अत्वे कृते ऽत इति टाप् प्राप्नोति । न वासन्निपातलक्षणस्यानिमित्तत्वात् * । वा वक्तव्यः । किं कारणम् । सन्निपातलक्षणस्यानिमित्तत्वात् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । एवं न भविष्यति । ङित्करणाद्वा* । अथ वा ङिदौकारः करिष्यते औङिच्चघेः ॥

आङोनाऽस्त्रियाम् ॥ १२० ॥ किमर्थमस्त्रियामित्युच्यते । नाङो ना पुंसीत्येवोच्येत । का रूपसिद्धिः । त्रपुणा । जतुना । नुमा सिद्धम् । नैवं शक्यम् । इह ह्यमुना ब्राह्मणकुलेनेतिमुभावस्यासिद्धत्वात् नुम् न स्यात् ।अस्त्रियामिति पुनरुच्यमाने नदोषो भवति। वक्ष्यत्येतन्नमुटादेश इति ॥

---

अत्वइति । टापि सत्यौङ आप इतिशीभावःप्राप्नोति ।यदातत्रसामान्यग्रहणार्थौ ङकारो वर्णनिर्देशो वा। यदा तु पूर्वाचार्यनिर्देशस्तदा प्रथमाद्वितीयाद्विवचनयोरेव शीविधानादस्याप्रसङ्गः । अन्ये टापि याट्प्रसङ्गमाहुः । न वेति । यासेत्यादौ टाब् भवति । त्यदाद्यकारष्टाब्विधेरिति दोषेषु परिगणनात् । ङित्करणाद्वेति । अन्तोदात्तेषु स्वरभेदोऽपि नास्ति । ङित्त्वउदात्तनिवृत्तिस्वरेण भाव्यम्। अङित्त्वे त्वेकादेश उदात्तेनोदात्त इति । ननु ङित्त्वे सख्यौ पत्याविति टिलोपप्रसङ्गः । नैतदस्ति । औत् ङिच्चघेरिति न्यासः क्रियते। पत्यावैश्वर्यं इति निपातनाद्वा घेष्टिलोपाभावः । विंशताविव्यत्र तिविंशतेर्डितीति तिलोपो न भवति। नस्तद्धित इति योगविभागात्तद्धित इत्यत्र तिविंशतेर्डितीति न इति चानुवर्तते। टेरित्येतत्तु नानुवर्तते । अतद्धितानां ङित्करणसामर्थ्यात् । अथ वा टेरित्यनुवर्तताम् । तथाप्यतद्धितानां ङित्करणसामर्थ्याद् यथैव भस्य लोपो भवति एवमतद्धितेष्वपि ॥

आङो । किमर्थमिति । आङो ना पुंसीत्युच्यमाने मात्रालाघवं भवतीष्टं च सिध्यतीति प्रश्नः । नुमेति । इकोऽचि विभक्तावित्यनेन । अमुनेति । पुंसीत्युच्यमाने नपुंसके नाभावो न स्यात् । नुमपीग्लक्षणो मुत्वस्यासिद्धत्वान्नास्ति । नमुटादेश इति । टाया आदेशष्टायामादेश इत्यनेकविभक्त्यन्तसमासाश्रयेण नाभावे कर्तव्ये ने च परतो दीर्घे मुत्वस्य सिद्धत्वाद् घिलक्षणो नाभावो भवत्यतो दीर्घो यञि सुपि चेति दीर्घत्वं न भवतीति । सर्वेष्टसिद्धिः ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते सप्तमस्याध्यायस्य तृतीयेपादे द्वितीयमाह्निकम् ॥ पादः समाप्तः ॥

णौ चङ्युपधाया ह्रस्वः ॥ १ ॥ अथ णिग्रहणं किमर्थम्। न चङ्युपधायाः ह्रस्व इत्येवोच्येत । चङ्युपधाया ह्रस्व इतीयत्युच्यमाने अलीलवत् अपीपवत् । उकारस्यैव ह्रस्वत्वं प्रसज्येत । नैतदस्ति प्रयोजनम् । वृद्धिरत्र बाधिका भविष्यति । वृद्धौ तर्हि कृतायामौकारस्यैव ह्रस्वत्वं प्रसज्येत । नैतदस्ति अन्तरङ्गत्वादत्रावादेशो भविष्यति । न हीदानीं ह्रस्वभाविन्युपधा भवति । तस्माण्णिग्रहणं कर्तव्य-

---

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे सप्तमस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च तृतीयः समाप्तः ॥

णौ च ङ्युपधाया ह्रस्वः । अथ णिग्रहणमिति । ह्रस्वग्रहणादुपधाग्रहणाच्चं चङ्णिशब्दाचिन्ह्यो नह्यण्यन्तानां चङि ह्रस्वभागुपधास्ति । ह्रस्वश्रुत्या ह्यच्परिभाषोपस्थानादच उपधाया ह्रस्वेन भाव्यम् । न श्रिद्रुस्रुधेट्श्वोनामजुपधा । कमिगुप्योस्तु ह्रस्व एवोपधा तत्र णावन्तरङ्गत्वाद् वृद्ध्यावादिषुकृतेषुचङ्युपधाह्रस्वभावात् नास्तीति सामर्थ्याच्चङि यः प्रत्ययस्तस्मिन्नुपधाया ह्रस्वो विज्ञास्यतइति प्रश्नः । इतरो यथाश्रुतसंभवाच्चङि यः प्रत्यय इत्यध्याहारो न युक्त इति वचनादन्तरङ्गमपि वृद्ध्यादि ह्रस्वो बाधेतेति मत्वाह । चङ्युपधाया इति । इतरस्तु चङि यः प्रत्ययस्तस्मिन्नुपधाया ह्रस्व इत्यध्याहारेण सूत्रार्थसंभवादयुक्तान्तरङ्गबाधेति मत्वाह । वृद्धिरत्रेति । इतरो ह्रस्वस्यानवकाशतां मत्वाह । औकारस्येति । नन्वेवं वृद्धिरनर्थिका स्यात् । एतदेव तर्ह्युच्यते वृद्ध्यात्र न भाव्यमभ्युपगम्य तु वृद्धिरुच्यते । वृद्धौ तर्हि कृतायामिति । अपवादत्वाद्धि ह्रस्वो वृद्धेर्बाधक आवादेशस्य चेति भावः । इतरो वाक्याध्याहारेण ह्रस्वस्य सावकाशतां मत्वाह । नैतदस्तीति । इतरो यथाश्रुतसंबन्धसंभवादनवकाशतामेव मत्वाह । न हीदानीमिति । ननु वृद्धिं बाधित्वा भवतूकारस्य ह्रस्वस्तस्मिंस्तु कृते बाधितत्वान्माभूद् वृद्धिः गुणस्तु केन वार्यते । ततो गुणेवादेशे च सिद्धमलोलवदिति । नैतदस्ति । गुणस्य वृद्ध्या बाधितत्वाद् वृद्धेश्च ह्रस्वेन भ्रष्टावसरस्य गुणस्य कुतः पुनः प्रवृत्तिरिति उवङ् प्रसज्येत । अदीदपदित्यत्र च ह्रस्वेन पुग् बाध्येत । अपोपवदित्यादौ च नैव ह्रस्वः स्यादिति णिग्रहणं क्रियते । यदा चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्तदा वृद्ध्यावादेशयोः कृतयोः पुकि च णिलोपस्य स्थानिवत्त्वाभावाच्चङि उपधा ह्रस्वभाविनी संभवतीति णिग्रहणं न कर्तव्यम् । सत्रकारेण

म् । अथ चङ्ग्रहणं किमर्थम् । न णावुपधाया ह्रस्व इत्येव सिद्धम् । णावुपधाया ह्रस्व इतीयत्युच्यमाने कारयति हारयतीत्यत्रापि प्रसज्येत ॥ नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति । न णावेव ह्रस्वत्वं भवतीति । यदयं मितां ह्रस्वं शास्ति । इहापि तर्हि न प्राप्नोति ॥ अचोकरत् अजीहरत् । वचनाद्भविष्यति । इहापि तर्हि वचनात्प्राप्नोति । कारयति हारयति । तस्माच्चङ्ग्रहणं कर्तव्यम् । अथोपधाग्रहणं किमर्थम् । णौ चङ्युपधाग्रहणमन्त्यप्रतिषेधार्थम्* । णौ चङ्युपधाग्रहणं क्रियते । अन्त्यस्य ह्रस्वत्वं मा भूत् । णौ चङि ह्रस्व इतीयत्युच्यमाने अलोलवत् अपीपवत् । अन्त्यस्यैव ह्रस्वत्वं प्रसज्येत । नैतदस्ति प्रयोजनम् । अन्तरङ्गत्वादचावादेशो भविष्यति । न तर्हीदानीं ह्रस्वभाव्यन्त्योऽस्ति अन्त्यो ह्रस्वभावी नास्तीति कृत्वा वचनादनन्त्यस्य भविष्यति । इहापि वचनात्प्राप्नोति । अचकाङ्क्षत् अववाङ्क्षत् । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । के-

---

चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो न कृत इति णिग्रहणं कृतम् । अथेति । मितां ह्रस्वविधानादनेन सर्वत्र णौ ह्रस्वो भविष्यति । प्रयोगदर्शनाच्चेष्टाव्यवस्थाश्रयितव्येति मत्वा प्रश्नः । इतरो वचनमन्तरेणेष्टानिष्टविभागो दुर्ज्ञान इति मत्वाह । णावुपधाया इति । अथोपधाग्रहणमिति । न्याय्यान्नाग्लोपिशास्वृदितामिति निषेधाच्च लिङ्गादुपधाया एव ह्रस्वो भविष्यतीति प्रश्नः । चङ्युपधाग्रहणमिति । असत्युपधाग्रहणेऽच्परिभाषोपस्थानादचाङ्गस्य विशेषणादजन्तस्याङ्गस्य ह्रस्वो विधीयमानोऽलोऽन्त्यस्येत्यन्त्यस्य स्यात् । लु इ अत् इति स्थिते उकारस्य ह्रस्वत्वप्रसङ्गः । वृद्धिरत्र बाधिका भविष्यतीति पूर्वत्सर्वत्रानुषञ्जनीयं न्यायव्युत्पत्तये त्वन्यदभिधातुमाह । नैतदस्तीति । इतरो ह्रस्वं निरवकाशत्वादन्तरङ्गाणां बाधकं मत्वाह । न तर्हीदानीमिति । इतरो विशेषणविशेष्यभावे कामचारादङ्गेनाज्विशेष्यते अङ्गस्य यत्र तत्र स्थितस्याचो ह्रस्वो भवतीत्येवं विध्यन्तराण्यपि न बाधितानि भवन्ति । ह्रस्वस्य सावकाशो भवतीति मत्वाह । अन्त्यो ह्रस्वभावीति । अङ्गस्येति चावयवषष्ठीविज्ञानादलोऽन्त्यस्येत्यस्योपस्थानाभावः । येन नाव्यवधानमिति । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्येन शब्देन अवश्यं व्यवधानं तेन व्यवहितेऽपि कार्यं विज्ञायमानमन्यव्यवधाने न प्रवर्तते । अङ्गाभ्यां ह्याज्विशेष्यते णौ परतो ऽङ्गस्य गोऽजिति सामर्थ्यादेकवर्णव्यवधानमवश्यंभावित्वादाश्रीयते । एकस्मिंस्तु विषये ऽन्त्यसदेशानन्त्यसदेशयोर्ह्रस्वभाविनोरसंभवादनन्त्यविकारे ऽन्त्यसदेश-

न च नाव्यवधानम्। वर्णेनैकेन। एतेन पुनः सङ्घातेन व्यवधानं भवति च न भवति च। उत्तरार्थं तर्ह्युपधाग्रहणं कर्तव्यम्। लोपः पिबतेरीच्चाभ्यासस्य उपधाया यथा स्यात्। अपीप्यत् अपीप्यताम् अपीप्यन्। अथेह कथं भवितव्यम्। मा भवानाटिटदिति आहो स्वि-न्माभवानटीटदिति। मा भवानाटिटिदित्येवं भवितव्यम्। ह्रस्व-त्वं कस्मान्न भवति। द्विर्वचने कृते परेण रूपेण व्यवहितमिति कृ-त्वा। इहमिह संप्रधार्यं द्विर्वचनं क्रियतां ह्रस्वत्वमिति। किमत्र क-र्तव्यम्। परत्वाद्ध्रस्वत्वम्। नित्यत्वाद्द्विर्वचनम्। कृतेऽपि ह्रस्वत्वे प्रा-प्नोत्यकृते ऽपि। एव तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति। द्विर्वचनाद्ध्रस्वत्वं ब-लीय इति। यदयमोणेरृदितं करोति। कथं कृत्वा ज्ञापकम्। ऋ-दित्करणे एतत्प्रयोजनमृदितां नेति प्रतिषेधो यथा स्यात्। यदि चा-त्र पूर्वं द्विर्वचनं स्याद् ऋदित्करणमनर्थकं स्यात्। द्विर्वचने कृते प-रेण व्यवहितत्वाद्ध्रस्वत्वं न भविष्यति। पश्यति त्वाचार्यो द्विर्वच-नाद्ध्रस्वत्वं बलीय इति तत ओणेरृदितं करोति तस्मान्मा भवान-टिटदिति भवितव्यम्। उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम्*। उपधा-ह्रस्वत्वे णेर्णिच्युपसंख्यानं कर्तव्यम्। वादितवन्तं प्रयोजितवान्। अ-वीवदद्वीणां परिवादकेन। किं पुनः कारणं न सिध्यति णिचा व्य-वहितत्वात्। णिलोपे कृते नास्ति व्यवधानम्। स्थानिवद्भावाद्व्यव-

---

स्यैव ग्रहणमिति परिहारो नोक्तः। अपीप्यदिति। अलोन्त्यस्येति युक्तो लोपप्रसङ्गादु-त्तरार्थमुपधाग्रहणम्। ननु ह्रस्वापवादो लोपो विज्ञायमान उत्सर्गदेशत्वादपवादा-नामुपधाया एव भविष्यति। नैतदस्ति। ह्रस्वश्रुत्याच परिभाषोपस्थानादङ्गेन चाचो विशेषणाद्युक्तं यदुपधाह्रस्वः स्यात्। लोपविधौ तु पिबतेरिति स्थानषष्ठ्या अन्त्ये ऽप्यु-पसंहारात्। अन्त्यस्यैव लोपः स्यात् भिन्नदेशावप्युत्सर्गापवादौ दृश्येते यथा अप्नमौ आकचौ सत्यपि संभवे बाधनं भवतीति न्यायाद्भिन्नदेशोऽप्यपवाद उत्सर्गं बाधते। यदि तर्ह्युत्तरार्थमुपधाग्रहणं तत्रैव वक्तव्यमाल्लोपः पिबतेरीच्चाभ्यासस्येति। नैतदस्ति। अन्त-रङ्गमपि युकमनवकाशत्वादाल्लोपो बाधेत उपधाग्रहणे त्वन्तरङ्गत्वाद्युकि कृते आकार-स्योपधाया लोप इति न कश्चिद्दोषः। अथेहेति। न्यायप्रयोगविरोधात्प्रश्नः। स एव प्रष्टा न्यायाश्रयेणाह। मा भवानाटिटदित्येवमिति। इतरो वक्ष्यमाणलिङ्गावष्टंभेन पृच्छ-ति। ह्रस्वत्वं कस्मान्न भवतीति। एवं तर्हीति। ज्ञापकात् पूर्वं ह्रस्वः पश्चाद् द्विर्वचन-

ध्यानमेव । प्रतिषिध्यते स्थानिवद्भावः । चङ्परनिर्ह्रासे न स्थानिवदिति । एवमप्यग्लोपिनां नेति प्रतिषेधः प्राप्नोति । वृद्धौ कृतायां लोपः । तन्नाग्लोप्यङ्गं भवति । इदमिह संप्रधार्यं वृद्धिः क्रियतां लोप इति । किमत्र कर्तव्यम् । परत्वाद्वृद्धिः । नित्यो लोपः कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि । अनित्यो लोपोऽन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याकृतायां शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति उभयोरनित्ययोः परत्वाद्वृद्धिः । वृद्धौ कृतायां लोपः । तन्नाग्लोप्यङ्गं भवति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति वृद्धेर्लोपो बलीयानिति । यदयमग्लोपिनां नेति निषेधं शास्ति । नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् । यत्र वृद्धावपि कृतायामगेव लुप्यते । अत्यरराजत् । यत्तर्हि प्रत्याहारग्रहणं करोति इतरथा ह्यग्लोपिनां नेति ब्रूयात् । एवं तर्हि वृद्धेर्लोपो बलीयानिति । अथ वा आरभ्यते पूर्वविप्रतिषेधः । णग्लोपावियङ्युवगुणवृद्धिदीर्घेभ्यः पूर्वं विप्रतिषिद्धमिति । तस्मादुपसंख्यानं कर्तव्यमिति ॥

---

मिति क्रमः । कृतायामपीति । स्थानिवद्भावात् । एवं तर्हीति । सर्वथाको वृद्धौ कृतायामैकारौकारयोर्लोपो न त्वकः । अत्यरराजदिति । राजानमतिक्रान्तवानिति प्रातिपदिकाद्धात्वर्थ इति णिचि कृतेऽत उपधाया इति वृद्धौ कृतायामगेव लुप्यते । यत्तर्हीति । प्रत्याहारग्रहणाल्लिङ्गात् पूर्वविप्रतिषेधेन लोपो भवति । ननु प्रत्याहारग्रहणं स्वामिनमाख्यदसस्वामत् गोमिनमाख्यदजुगोमदित्यादौ वृद्धिप्रसङ्गाभावाल्लोपे कृत्वनिषेधार्थं स्यादिति कथं ज्ञापकमिति चिन्त्यमेतत् । अत्राहुः । अनभिधानान्निजत्र नास्ति इति भाष्यकारस्याभिप्रायः । एवं तु ज्ञापके नलोपस्य बलीयस्त्वे यदुक्तं इलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति तद्विरुध्यते असत्यपि अत्वनिपातने वृद्धिं बाधित्वेकारस्य लोपे सति सन्वद्भावस्याप्रसङ्गादनाश्रित्य ज्ञापकत्वनिपातनमुक्तम् । ज्ञापकाश्रयणं तु न्यायः । पटुमाख्यदपपटदित्यादावकृतायां वृद्धौ लोपे सति सन्वद्भावस्य प्रसङ्गाभावार्थम् । अथ वेति । इलिकल्योरत्वनिपातनमेव ज्ञापकं लोपात् पूर्वं वृद्धिर्भवतीति । णिलोपस्तु वाचनिकेन पूर्वविप्रतिषेधेन वृद्धेः पूर्वं भवति । एवं पटुमाख्यदपीपटदिति सन्वद्भावप्रसङ्गात् प्रत्याहारग्रहणमेव ज्ञापकमाश्रयणीयं तेन वृद्धेः प्राग्लोपो विधेयः ।

नाग्लोपिशास्वृदिताम् ॥ २ ॥ अग्लोपिप्रतिषेधानर्थक्यं च स्थानिवद्भावात् ॥ अग्लोपिप्रतिषेधोनर्थकः। किं कारणम्। स्थानिवद्भावात्। स्थानिवद्भावाद्ध्रस्वत्वं न भविष्यति। यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः क्व च स्थानिवद्भावो नास्तियो हलचोरादेशः। अचकथत्। किं पुनः कारणम्। हलचोरादेशो न स्थानिवदित्युच्यते। अचादेशः स्थानिवदित्युच्यते। न चायमच एवादेशः किं तर्ह्यचश्चान्यस्य च। अग्लोपिनां नेत्यपि तर्हि प्रतिषेधो नप्राप्नोति। किं कारणम्। अग्लोपिनां नेत्युच्यते। न चाच्चैव लुप्यते किं तर्ह्यच्चान्यश्च। योचाग्लुप्यते तदाश्रयः प्रतिषेधो भविष्यति। यथैव तर्हि योचाग्लुप्यते तदाश्रयः प्रतिषेधो भवति। एवं योचाग्लुप्यते तदाश्रयः स्थानिवद्भावो भविष्यति। एवं तर्हि सिद्धे सति यदग्लोपिनां नेति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः इत उत्तरं स्थानिवद्भावो न भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। पूर्वत्रासिद्धे न स्थानिवदित्युक्तम्। तन्न वक्तव्यं भवति। यद्येतज्ज्ञाप्यते।

---

नागो। अग्लोपीति। मालामाख्यदममालदित्यादौ टिलोपस्य स्थानिवत्त्वादनुपधात्वात् प्राप्तिरेव ह्रस्वस्य नास्तीति प्रतिषेधोऽनर्थकः। ननु प्रतिषिध्यते तत्र स्थानिवत्त्वं क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति। नैतदस्ति। यदर्थः स प्रतिषेधः। तस्य णेर्णिच्युपसंख्यानमित्यनेन साधितत्वान्न वक्तव्यः। हलचोरादेश इति। यथा सुधातुरकङ्चेत्यादेशे समुदाये अवयवस्थानादेशत्वादणोरपरत्वं न भवति सौधातकिरिति। तथा समुदाये स्थानिन्यवयवस्यास्थानित्वादजादेशत्वाभावान्नास्ति स्थानिवद्भावः। किं पुनरिति। अवयवात्मकत्वात् समुदायस्य तस्मिन् स्थानिन्यवयवानामपि स्थानित्वादजादेशत्वाद् न्याय्य एव स्थानिवद्भावः। तथा च खट्वर्श्य इति ऋस्थानिकत्वाश्रयमणोरपरत्वं भवतीति भावः। इतरः पूर्वोक्तेनैवाभिप्रायेणाह। अजादेश इति। इतरस्त्वनुमीयमानोऽवश्याश्रयितव्यः स्थान्यादेशभाव इति मत्वाह। अग्लोपिनामिति। इत उत्तरमिति। पञ्चपाद्यामित्यर्थः। पूर्वत्रासिद्ध इति। तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति वक्तव्यमेव। यद्वा ज्ञापकज्ञापिता विधयोऽनित्या इति संयोगादिलोपलत्वणत्वेषु स्थानिवद्भावो भवत्येव। अचः परस्मिन्नित्यत्र विचारितं हलचोरादेशः स्थानिवदिति चेद्धिं यतेस्तिलोप इकादेश इत्यादि तत्र निर्णीतं हलचोरादेशो न स्थानिवदिति। इह तु प्रतिषेधवचनमर्थान्तरज्ञापनायोक्तमिति ग्रन्थविरोधस्तस्माद् न्यायाश्रयेण हलचोरादेशो न स्था-

आदीधयतेः आदीधकः । आवेवयतेः आवेवकः । यीवर्णयोर्दीधीवेव्योरिति लोपो न प्राप्नोति । इह च यत्प्रलुनीह्यत्र । लिङि चोदात्तवतीत्येष स्वरो न प्राप्नोति । नैष दोषः । यत्तावदुच्यते । आदीधयतेः आदीधकः । आवेवयतेः आवेवकः । यीवर्णयोरिति लोपो न प्राप्नोतीति । यीवर्णयोरित्यत्र वर्णग्रहणसामर्थ्याद्भविष्यति । यदप्युच्यते यत्प्रलुनीह्यत्र तिङि चोदात्तवतीत्येष स्वरो न प्राप्नोतीति । बहिरङ्गो यणादेशः अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ३ ॥ काण्यादीनां वेति वक्तव्यम् *। पुनः काण्यादयः । काणिराणिश्राणिभाणिहेठिलोपयः । अचकाणत् । अचीकणत् । अरराणत् । अरीरणत् । अशश्राणत् । अशिश्रणत् । अबभाणत् । अबीभणत् । अजीहिठत् । अजिहेठत् । अलुलोपत् । अलूलुपत् ॥

---

निवद्वदित्ययं पक्षो ग्राह्यः । इह त्वभ्युपेत्य स्थानिवत्त्वं ज्ञापकत्वमाश्रितम् । शिष्यबुद्धिव्युत्पादनायाऽस्थितो ऽपि पक्षः क्वचिदुपन्यस्यतइत्येवं विरोधः परिहार्यः । अग्लोपिग्रहणसामर्थ्याच्च समुदायलोपे ऽप्यग्लोप आश्रीयते केवलाग्लोपे प्रतिषेधस्यानर्थक्याद् खट्वर्श्यं इत्यत्र त्वेकः पूर्वपरयोरित्यवयवावेवशब्देन चोदिताविति रपरत्वं प्रवर्तते । तदुक्तम् । यो ह्युभयोः षष्ठीनिर्दिष्टयोः स्थानी भवति लभते ऽसावन्यतरतोव्यपदेशमिति । आदीधक इति । दीधी णिच् दीधीवेवीटामिति गुणवृद्धिप्रतिषेधस्ततो ण्वुलि लोपे कृते तस्य स्थानिवद्भावाभावाद् यीवर्णयोरिति लोपो न प्राप्नोति । यद्यप्यन्तरङ्गत्वाल्लोपः सिध्यति तथापि वर्णग्रहणस्यानन्यार्थस्य प्रयोजनाख्यानायोपक्षेपः । यत्प्रलुनीह्यत्रेति । तिङ्ङतिङ इति निघातो निपातैर्यद्यदीति निषिद्धः । हेरपित्त्वादाद्युदात्तत्वान्न विकरणस्वरो लसार्वधातुकस्वरं बाधतइति श्नास्वराभावस्तत्र यणादेशे कृते उदात्तत्वाभावात्स्थानिवत्त्वाभावाच्च निघातो न प्राप्नोति । वर्णग्रहणसामर्थ्यादिति । वर्णग्रहणाद् भूतपूर्वगतिराश्रीयते । अन्तरङ्गत्वात्तु लोपे सिद्धे वर्णग्रहणं शक्यमकर्तुम् । तत्तु केचिद् ज्ञापकं वर्णयन्ति उत्तरत्र स्थानिवत्त्वाभावस्य अग्लोपिग्रहणं तु सति प्रयोजनेनज्ञापकमस्यार्थस्य । अन्तरङ्गस्वर इति । यद्यप्युभयं पदद्वयाश्रयं तथापि पूर्वमुपसर्गेण सम्बन्धः पश्चादधिकरणवाचिनात्र शब्देनेति यणादेशो बहिरङ्गः ॥

भ्राज । काण्यादीनां वेति । आदिः शब्दः प्रकारे येषां ह्रस्वविकल्पो दृश्यते ते काण्यादयः । काणिश्राणिराणिभाणिहेठिलोपिप्रभृतयः ॥

दयतेर्दिगिलिटि॥ ९॥ इहावदिग्येऽवदिग्याते अवदिग्यिरे। दिग्यादेशे कृते द्विर्वचनं प्राप्नोति। तत्र साभ्यासस्येति वक्तव्यम्। ननु च द्विर्वचने कृते साभ्यासस्य दिग्यादेशो भविष्यति। न सिध्यति। किं कारणम्। द्विग्यादेशस्य परत्वात्साभ्यासस्यादेशवचनम्*। दिग्यादेशः क्रियतां द्विर्वचनमिति। परत्वाद्दिग्यादेशेन भवितव्यम्। तत्र साभ्यासस्येति वक्तव्यम्। एवं तर्हि दिग्यादेशो द्विर्वचनं बाधिष्यते। पुनः प्रसङ्गविज्ञानाद्द्विर्वचनं प्राप्नोति। पुनः प्रसङ्गविज्ञानादिति चेदमादिभिस्तुल्यम्*। पुनः प्रसङ्गविज्ञानादिति चेदमादिभिस्तुल्यमेतद्भवति। तद्यथा। अमादिषु कृतेषु पुनः प्रसङ्गाच्छिशीलुङ्नुमो न भवन्ति। एवं दिग्यादेशे कृते पुनः प्रसङ्गाद् द्विर्वचनं न भविष्यति। अथ वा विप्रतिषेधे पुनः प्रसङ्ग इत्युच्यते। विप्रतिषेध-

---

दय। दिग्यादेशे कृत इति। यद्यपि प्राप्ते द्विर्वचने दिग्यादेश आरभ्यते तथापि बाध्यबाधकभावे द्वैतं लक्षणं वा लक्षणेन बाध्यते लक्ष्यं वा। तत्र यदा द्विर्वचनशास्त्रं दिग्यादेशशास्त्रेण बाध्यते तदा दिग्यादेशे कृते नास्ति द्विर्वचनप्रसङ्गः। यदा तु लक्ष्यं बाध्यते तदा तस्य द्विर्वचनं दिगिना बाध्यते दिगिस्तु तत्प्राप्नोति शास्त्रस्याबाधितत्वात्। तत्र यथा चख्यावित्यादौ ख्याञादेशे कृते द्विर्वचनं भवति। एवं दिग्यादेशे कृते प्राप्नोति। साभ्यासस्येति। तेन कृते द्विर्वचने दिग्यादेशे न पुनर्द्विर्वचनं भवति सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्साभ्यासग्रहणसामर्थ्याच्च। ननु चेति। पूर्वविप्रतिषेधाल्लक्ष्यसिद्धये दृष्टक्रमाश्रयणाद्वेति भावः। न सिध्यतीति। विप्रतिषेधे परं कार्यमित्यस्मिन् व्यवस्थाहेतौ सत्येव क्रमो दुर्लभः। तत्र द्विर्वचनस्यावकाशः पपाचेति। कृते द्विर्वचने दयतिसङ्गावाद्दिग्यादेशस्य। अकृते तु द्विर्वचने तूभयप्रसङ्गे परत्वाद्दिग्यादेशः। एवं तर्हीति। नाप्राप्ते द्विर्वचने दिग्यादेशस्यारम्भात्। इतरस्तद्बुद्धिपरीक्षार्थं विप्रतिषेधाश्रयेण सकृद्गताविव्येवं दिग्यादेशो द्विर्वचनस्य त्वया बाधक उक्त इत्यारोप्य कथयति। पुनः प्रसङ्गविज्ञानादिति। इतरोप्यभ्युपगम्य तावद्विप्रतिषेधं सकृद्गतावित्याश्रित्याह। पुनः प्रसङ्गादिति चेदिति। यथा यूयं ब्राह्मणकुलानि युवां त्वमित्यमादेशे कृते शिशीलुको न भवन्ति एवं दिग्यादेशे कृते द्विर्वचनाभावः। इदानीं न्याय्यं परिहारमाह। अथ वेति। क चित्पाठोनैष युक्तः परिहारो विप्रतिषेधे पुनः प्रसङ्ग इति। योयं मदुक्तार्थस्य दिग्यादेशो द्विर्वचनं बाधिष्यत इत्यस्य त्वया परिहारोऽभिहितः पुनः प्रसङ्गविज्ञानाद्द्विर्वचनं प्राप्नोतीति स न युक्त इत्यर्थः। अनवकाशो दिग्यादेश इति। पूर्वं सामान्यविशेषभावमनाश्रित्योभयोः सावकाशत्वमुक्तम्। इदानीं तु सामान्यविशेषाश्रयेण नाप्राप्ते द्विर्वच-

श्च द्वयोः सावकाशयोः। इह पुनरनवकाशो दिग्यादेशो द्विर्वचनं बाधिष्यते । यदि तर्ह्यनवकाशा विधयो बाधका भवन्ति। बभूव । भूभावो द्विर्वचनं बाधेत । सावकाशो भूरादेशः । कोऽवकाशः । भविता । भवितुम् । इह तर्हि चञ्चिङः ख्याञ् वा लिटीति ख्याञ् द्विर्वचनं बाधेत । इह चापि बभूवेति । यदि तावत्स्थाने द्विर्वचनम् । भूभावः सर्वादेशः प्राप्नोति । अथ द्विःप्रयोगो द्विर्वचनम् । परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति । नैष दोषः। आर्द्धधातुकीयाः सामान्येन भवन्ति । अनवस्थितेषु प्रत्ययेषु। तत्रार्द्धधातुकसामान्ये भूभावेकृते यो यतः प्राप्नोति स ततो भविष्यति ॥

ऋतश्च संयोगादेर्गुणः ॥ १० ॥ संयोगादेर्गुणविधाने संयोगोप-

---

ने आरभ्यमाणस्य दिग्यादेशस्यापवादत्वमुच्यते। यदि तर्हीति । नन्ववश्यमनवकाशेन बाधकेन भाव्यम् । अन्यथा न कश्चिद् बाधकः स्यात् । एवं तर्ह्यनवकाशाभिमता अनवकाशा इत्यर्थो विवक्षितो नैवायमनवकाशः कृते ऽपि द्विर्वचने प्रवृत्त्यविघातात् । अथ पुनरेवमप्यनवकाशत्वं मन्यसे तदा लक्ष्यदोषप्रसङ्गः । बभूवेति । अस्तेर्भूरिति भूभावः । सावकाश इति। यत्र द्विर्वचनाभावः । इह तर्हीति । आचख्यावित्यत्र कृते ऽपि द्विर्वचने ख्याञः प्रवर्तनादनवकाशत्वाभावो यदा तु येन नाप्राप्तिन्यायेनानवकाशत्वमभ्युपगम्यते तदा ख्याञि कृते द्विर्वचनाप्रसङ्गः । सर्वादेश इति। स्थानिवद्भावादस्तिग्रहणेन ग्रहणात्कार्यकृतत्वाच्च पुनर्द्विर्वचनाभावादिष्टरूपासिद्धिः । पूर्वस्य श्रवणमिति। अयं दोषो नोत्सर्गापवादपक्षे उपात्तो भूभावस्यावकाशदर्शनेनोत्सर्गापवादभावनिराकरणात् । द्वयोस्तु सावकाशयोः परत्वाद्द्विर्वचने कृते बभूवेति न सिध्यतीति प्रतिपाद्यते। तत्रार्द्धधातुकसामान्य इति। द्विर्वचननिमित्तस्य लिटोऽनुपजातत्वादसति विप्रतिषेधे पूर्वं भूभावः पश्चाल्लिटि परतो द्विर्वचनमित्यदोषः । यो यतः प्राप्नोतीति। विषयसप्तमीफलं ज्ञापितं ख्याञ्विधावपि विषयसप्तम्याश्रीयते इति येन नाप्राप्त इत्यस्य न्यायस्यानवतारात् कृते ख्याञि द्विर्वचनं भवत्येव दिग्यादेशे तु लिटीति परसप्तम्याश्रयणान्नाप्राप्ते द्विर्वचने दिगिरारभ्यमाणस्तद् बाधते ।

ऋतश्च। संयोगादेरिति। इहाङ्गाधिकारादङ्गं संयोगाद्याश्रीयते न च स्कृइत्येतदङ्गं संयोगादि भवतीति भावः। उपधाग्रहणं संयोगस्यादेशविशेषोपलक्षणमस्मात्रस्योपधासंज्ञाविधानाद् संयोगस्योपधात्वासंभवात् । अथ वा संयोगावयवे संयोगशब्दो वर्तते तस्योपधात्वमस्त्येव वहिरङ्गः सुडिति। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण।सा-

धग्रहणं कृञर्थम् * । संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यम् । किमर्थम् । कृञर्थम् । इहापि यथा स्यात् । संचस्करतुः संचस्करुः । यदि संयोगोपधग्रहणं क्रियते नार्थः संयोगादिग्रहणेन । इहापि सस्वरतुः सस्वरुः । संयोगोपधस्येत्येव सिद्धम् । भवेत्सिद्धं सस्वरतुः सस्वरुरिति । इदं तु न सिध्यति संचस्करतुः संचस्करुरिति । किं कारणम् । सुटो बहिरङ्गलक्षणत्वात् । बहिरङ्गः सुडन्तरङ्गो गुणः । असिद्धं बहिरङ्गमन्तरङ्गे । संयोगादिग्रहणे संयोगोपधग्रहणमनन्यार्थं विज्ञायते । ऋतो लिटि गुणाद् ञ्णिद्वृद्धिर्विप्रतिषेधेन* । ऋतो लिटि गुणाद् ञ्णितीति वृद्धिर्भवति पूर्वविप्रतिषेधेन। ऋतो लिटि गुणस्यावकाशः सस्वरतुः सस्वरुः । ञ्णिति वृद्धेरवकाशः स्वारकः ध्वारकः इहोभयं प्राप्नोति सस्वार दध्वार । ञ्णितीति वृद्धिर्भवति पूर्वविप्रतिषेधेन । पुनः प्रसङ्गविज्ञानाद्वा सिद्धम् *। अथ वा पुनः प्रसङ्गाद् गुणे कृते रपरत्वे चात उपधाया इति वृद्धिर्भविष्यति । नैष युक्तः परिहारः । पुनः प्रसङ्गो नाम स भवति यत्र तेनैव कृते प्राप्नोति तेनैव चाकृते । अत्र खलु गुणे कृते रपरत्वे चात उपधाया इति वृद्धिः प्राप्नोति। अकृते चाचो ञ्णितीति तस्मात्सुष्ठूच्यते ऋतो लिटि गुणाद् ञ्णिद्वृद्धिः पूर्वविप्रतिषेधेनेति ॥

---

धनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि न चासिद्धस्य विशेषेण सम्बन्धो भवति सुट् कात्पूर्वं इत्यत्र तूक्तं पूर्वं धातुरुपसर्गेण युज्यते इत्येवं च सुटोऽन्तरङ्गत्वात्सिद्धो गुण इति नार्थ उपसंख्यानेन संस्कृषीष्ट संस्क्रियत इत्यत्र त्विड्गुणयोः प्रतिविधेयम् । अनन्यार्थमिति । कृञर्थमेवेत्यर्थः । तत्र वचनादसिद्धत्वं बाध्यते । यथान्यत्रोक्तमाश्रयात्सिद्धत्वं यथारोरुत्व इति । पुनः प्रसङ्गविज्ञानाद्वेति । अस्तु परविप्रतिषेधेन गुणस्तस्मिन् कृते वृद्धिर्भविष्यति । अनाश्रित्य लक्षणभेदं च वृद्धिमात्रमेकत्वेनाश्रित्यैतदुक्तम् । पुनः प्रसङ्गो नामेति । वाचोयुक्तिरेवेयं न संगच्छते लक्षणद्वयस्य परस्परप्रतिषेधादप्रवृत्तौ प्राप्तायां विप्रतिषेधे परं कार्यमित्यनेन परस्मिन् कार्ये विहिते निमित्तसंभवात् पूर्वस्य लक्षणस्य पुनः प्राप्तिः पुनः प्रसङ्ग उच्यते न त्वपूर्वलक्षणप्राप्तिः पुनः प्रसङ्गः । तस्मादिति -। ननु यदि नाम पुनः प्रसङ्गवाचोयुक्तिर्न घटते किमेतावता गुणरपरत्वयोः कृतयोरुपधावृद्धिर्न हि न प्राप्नोति सत्यां च प्राप्तौ किं पूर्वविप्रतिषेधाश्रयेणेत्यत्र चिन्त्यमेतत् ॥

मृदृशां ह्रस्वो वा ॥१२॥ किमर्थं ह्रस्वो वेत्युच्यते । न गुणो वेत्युच्येत । तत्रायमप्यर्थः । गुणग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते । क्व प्रकृतम् । ऋतश्च संयोगादेर्गुण इति । ऋतो ह्रस्वत्वमित्वप्रतिषेधार्थम् * । ऋतोह्रस्वत्वमुच्यते । इत्वप्रतिषेधार्थं, मित्वं मा भूदिति । गुणोवेतीयत्युच्यमाने गुणेन मुक्ते इत्वं प्रसज्येत । ह्रस्वो वेति पुनरुच्यमाने ह्रस्वत्वेन मुक्ते यथाप्राप्तो गुणो भविष्यति ॥

के ऽणः ॥ १३ ॥ के ऽणो ह्रस्वत्वे तद्धितग्रहणं कन्निवृत्त्यर्थम् * । केऽणो ह्रस्वत्वे तद्धितग्रहणं कर्तव्यम् । किं प्रयोजनम् । कन्निवृत्त्यर्थम् । कृति माभूद् राका धाका इति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि ॥

उपसर्गाद्ध्रस्वऊहतेः ॥२३॥ इह कस्मान्न भवति प्रोह्यते उपोह्यते एकादेशे कृते व्यपवर्गाभावात् । एवमपि आऊह्यते ओह्यते इत्यत्र प्रा-

---

मृदृ । न गुणो वेत्युच्येतेति । गुण एव पूर्वसूत्रेण नित्यं प्राप्तो विकल्पनीयस्तत्र गुणपक्षे विशरतुरित्यादि भविष्यति । तदभावपक्षे तु यणादेशेन विशश्रतुरित्यादीति भावः । तत्रायमपीति । न केवलं गुणविधानप्रकरणमनुसृतं भवति । यावल्लाघवमपीत्यर्थः । इत्वं प्रसज्येतेति । वार्णादाङ्गं बलीय इति वर्णाश्रयमन्तरङ्गमपि यणं बाधित्वेत्वं स्याद्ध्रस्वविधाने तु यणादेशः सिध्यति । विशश्रिवान् विदद्रवान् विपप्रवानिति क्वसौ च सिध्यति गुणविकल्पे त्वेतद्रूपासिद्धिः । क्वसोः कित्त्वेन प्रतिषेधविषयस्यापि गुणस्य प्रतिषेधः प्रदेशान्तरे भाष्यकृताप्रदर्शितः ।उत्तरार्थं च ह्रस्वग्रहणं कर्तव्यमिति लाघवमपि नास्ति ह्रस्वविधावप्युत्तरत्रह्रस्वविधानादेकप्रकरणता भवतीतिनास्तिपूर्वोक्तोविशेषः

उपसर्गा । प्रोह्यत इति । अकृते एकादेशे ह्रस्वभावाभावयोर्विशेषाभावादन्तरङ्गत्वाच्च प्रागेकादेशेन भाव्यम् । वार्णादाङ्गमित्येतत्तु समानाश्रयाङ्गवार्णविषयं तस्मादेकादेशे कृते ऽन्तादिवद्भावेन ह्रस्वप्रसङ्गश्चोद्यते । एकादेशे कृत इति । उपसर्गात्परस्योहते र्ह्रस्वो विधीयमान एकादेशे कृते भेदाभावाद्भेदनिबन्धनपौर्वापर्यानुपपत्त्योभयत आश्रये अन्तादिवद्भावाभावाच्च ह्रस्वत्वाभावः । आ ऊह्यत इति । धातूपसर्गयोरसंहिता नास्ति । तदुक्तम् । संहितैकपदे नित्या नित्याधातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते इति ।। एवं च लौकिके प्रयोगे विग्रहाभावान्नित्यैनैकादेशेन भाव्यम् । एवं च आ उह्यत इति ये ह्रस्वं पठन्ति ते न सम्यग्न्यायविदः लौकिकप्रयोगसंपादनाय हि ह्रस्वो विधीयते । तस्मादलौकिकेन प्रक्रियावाक्येनात्र ह्रस्वेनाऽत्र प्रश्लेषप्रदर्शनमात्रं क्रियते । अथ त्वलौकिके प्रक्रियावा-

प्नोति। अण इति वर्तते॥

एतेर्लिङि॥ २४॥ एतेर्लिङ्युपसर्गात् *। एतेर्लिङ्युपसर्गादिति वक्तव्यम्। इह मा भूत्। ईयात्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। उपसर्गादिति वर्तते। एवं तर्ह्याचार्यैर्न्वाचष्टे। उपसर्गादित्यनुवर्तत इति। नैतदन्वाख्येयमधिकारा अनुवर्तत इति। नैतदन्वाख्येयमधिकारा अनुवर्तन्त इति। एष एव न्यायो यदुताधिकारा अनुवर्तेरन्॥

रीङृतः॥ २७॥ दीर्घोच्चारणं किमर्थम्। न रिङृत इत्येवोच्येत। का रूपसिद्धिः। मात्रीयति पित्रीयति। अकृत्सार्वधातुकयोरिति दीर्घत्वं भविष्यति। एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाऽङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति। किमेतस्य ज्ञापने प्रयोजनम्। पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति॥

यङि च॥ ३०॥ यङ्प्रकरणे हन्तेर्हिंसायामीट् *। यङ्प्रकरणे हन्तेर्हिंसायामीड्वक्तव्यः। जेघ्नीयते। यदीट् अभ्यासरूपं न सि-

---

क्ये ह्रस्वत्वप्रतिपत्तिरुच्यते। तथापि न काचित् क्षतिस्तत्रैकादेशस्यादिवद्भावादूहिग्रहणेन ग्रहणात्सम: परस्य ह्रस्वत्वप्रसङ्गः। अण इति वर्तत इति। एवं च] रूपाश्रयोयं विधिरिति ताद्रूप्यानतिदेशादणत्वाभावाद्ध्रस्वाभावः॥

एतेः। ईयादिति। आशिषि लिङ्। अकृत्सार्वधातुकयोर्दीर्घः। नैतदन्वाख्येयमिति वार्तिककारेणैतदन्वाख्येयं सर्वाधिकाराणामन्वाख्यानप्रसङ्गाद्वृत्तिकारास्त्वधिकाराणां प्रवृत्तिनिवृत्ती व्याचक्षते॥

रीङृतः। दीर्घत्वं भविष्यतीति। ननु नाप्राप्ते दीर्घे रीङारभ्यमाणस्तस्य बाधकः स्यात्। नैतदस्ति। ऋवर्णस्य बाध्यतां रीङस्तु कथं बाध्यते न हि तस्य दीर्घे प्राप्ते स आरभ्यते ततश्च द्रव्ये पदार्थे रिङि कृते दी[illegible] प्रवर्तत एव॥

यङि च। यङ्प्रकरण इति। हिंसायास्त्वन्यत्र जङ्घन्यत इत्येव भवति। अभ्यासरूपं न सिध्यतीति। उपधालोपस्य स्थानिवत्त्वाद्घ्ननिति द्विर्वचनं प्राप्नोति। एवं तर्हीति। [illegible]काधातुभक्तत्वाद् द्विर्वचननिमित्तत्वाभावात् स्थानिवत्त्वाभावात्। एवमपीति। अज[illegible]दौ प्रत्यये विधानात्। एवं तर्हीति। प्रक्रियालाघवाय घकाराद्यादेशविधानाद् घ्नीभाव[illegible]विधावभ्यासश्चेति कुत्वे गौरवप्रसङ्गात्। व्यक्तिपदार्थाश्रयणे च घ्नीभावे कृते द्विर्वचनं प्र-

ध्यति । एवं तर्हि यङ्प्रकरणे हन्तेर्हिंसायामीक् । एवमप्युपधालोपो न प्राप्नोति ॥ एवं तर्हि यङ्प्रकरणे हन्ते हिंसायां घ्नी ॥

नच्छन्दस्यपुत्रस्य ॥३५॥ अत्यल्पमिदमुच्यते अपुत्रस्येति। अपुत्रादीनामिति वक्तव्यम् । इहापि यथा स्यात् । जनीयन्तोन्वग्रवः । पुत्रीयन्तः सुदानवः । छन्दसि प्रतिषेधे दीर्घत्वस्य प्रतिषेधो वक्तव्यः*। संस्वेदयुः मित्रयुः । न वाघ्नाघस्याद्वचनमवधारणार्थम्* । न वा वक्तव्यम् । किं कारणम् । अघ्नाघस्याद्वचनमवधारणार्थं भविष्यति । अघ्नाघयोरेवच्छन्दसि दीर्घो भवति नान्यस्येति ॥

शाच्छोरन्यतरस्याम् ॥ ४१ ॥ श्यतेरित्वं व्रतेनित्यम्* । श्यतेरित्वं व्रतेनित्यमिति वक्तव्यम् । संशितव्रतः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मियस्ते न वि-

---

वर्तते आकृतिपच्चे । तु दिग्यादेशेने ग्नीभावेन द्विर्वचनबाधप्रसङ्गात् ।

न च्छन्द । जनीयन्त इति । जनमिच्छन्तीति क्यच् लटः शत्रादेशः जस् उगिदचामिति नुम् । छन्दसीति । आनन्तर्यादीत्वस्यैवप्रतिषेधः प्राप्नोतिततस्तापवादेऽपनीते उत्सर्गोदीर्घः प्राप्नोतीति तस्यापि प्रतिषेधोविधेयः । संस्वेदयुरिति । क्याच्छन्दसीत्युप्रत्ययः। न वेति । अघ्नाघयोरनेनेत्वे प्रतिषिद्धे ऽकृत्सार्वधातुकयोरित्याकारसिद्धेपुनराद्वचनं नियमार्थमित्यन्येषामाकारो न भवति ।

शाच्छो । श्यतेरिति । व्रतइति विषयोनिर्दिश्यते न तूत्तरपदं तेन संशितोब्राह्मणइत्यत्रापि नित्यमित्वं भवति यद्येमित्वे न व्रतस्य द्योतितत्वात्संशितव्रतइति व्रतशब्दस्य प्रयोगो न प्राप्नोति । नैष दोषः । अन्यत्रापीत्वविधानात्संशितशब्दः सामान्यशब्दः इति विशेषप्रतिपादनायाविरुद्धो व्रतशब्दप्रयोगः । व्रते तु नित्यमित्वं विधीयते । न वक्तव्यमिति । साधारणेन न्यायेन सिद्धत्वादत एव तु नित्यधर्मणः शब्दानुपन्यस्यति। देवत्रातइति । तुदविदोन्दत्रेति नत्वं संज्ञायां न भवति । देवग्रहणं संज्ञाविषयोपलक्षणार्थं तेन भवत्रात इत्यादावपि संज्ञात्वान्नत्वाभावः । यदा तु क्रियाशब्दस्तदा त्रातइति तदा नत्वविकल्पः । गलइति । अचिविभाषेति लत्वं प्राण्यङ्गेरनित्यं भवति विषे तु गवइति लत्वाभावः । क्रियाशब्दे तूभयं भवति गरोगलइति । ग्राहइति । विभाषा ग्रहइति णप्रत्ययोजलचरे नित्यं भवति ज्योतिषि पचाद्यच् ग्रहइति । इति योगइति । लक्षणहेत्वोः क्रियायाइति शत्रशानज्विधिर्हन्तीति पलायते वर्धतीति धावतीत्यादावितिः प्रयोगो न भवति ।मियइति । एकस्मिन् विषये न विकल्पस्ते किं तु विषयभेदेन । एतच्चाकृतिपक्षे

भाष्यन्ते गवाक्षः संशितव्रतः॥

दो दद् घोः ॥४६॥ अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥ किं पुनरयं तकारान्त आहोस्विद्दकारान्त उत धकारान्तः। अथ वा थकारान्तः। कश्चात्र विशेषः। तान्ते दोषो दीर्घत्वं स्यात्॥ यदि तान्तः। दत्तीति दीर्घत्वं प्राप्नोति। दान्ते दोषो निष्ठानत्वम्। अथ दकारान्तः। रदाभ्यां निष्ठातो न इति नत्वं प्राप्नोति। धान्ते दोषो धत्वप्राप्तिः। अथ धान्तः। झषस्तथोर्धोऽध इति धत्वं प्राप्नोति। थान्तेऽदोषस्तस्मात्थान्तः। अथ थकारान्तो न दोषो भवति॥

अच उपसर्गात्तः॥ ४७॥ अच उपसर्गात्तत्वे आकारग्रहणम् *। अचउपसर्गात् तत्वेआकारग्रहणं कर्तव्यम्। न कर्तव्यम्। अलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति। न सिध्यति। किं कारणम्। आदेर्हि परस्य। अत्र हि तस्मादित्युत्तरस्यादेः परस्येति दकारस्य प्राप्नोति। नैष दोषः। अवर्णप्रकरणात्सिद्धम्। अस्येति वर्तते। क्व प्रकृतम्। अस्य च्वाविति। यद्यवर्णग्रहणमनुवर्तते दन्नावे दोषो भवति। एवं तर्ह्येवं वक्ष्यामि दोदद्घोरिति। दोर्य आकारस्तस्याद्भवति ततः, अच उपस-

---

उपपद्यते। तत्र हि सर्वं लक्ष्यमेकविध्यमापाद्य उभयमुपदिश्यते ततश्चोभयं भवतीत्येतावतैव लक्षणस्य व्यापारः। असंकीर्णत्वं तु प्रयोगवशात् प्रतीयते। गवाक्षइति। वातायने अवङ्स्फोटायनस्येति नित्यमवङ् भवति प्राण्यङ्गे तु गोरक्षिगोक्षीति भवत्यन्यत्र तु विकल्पेन। एतच्चोदाहरणं न व्यवस्थितविभाषायां परिगणनमन्यासामपि संभवात्॥

दोदद्घोः। अवदत्तमिति। आदिकर्मग्रहणं प्रदत्तशब्दस्यैव संभवाद्विशेषणमवदत्तादिसिद्ध्यर्थं त्वाद्वचनस्यावदत्तादयोपि भवन्ति तथा चाच उपसर्गादित्यस्यावकाशः प्रत्तमवत्तामति वक्ष्यते। तस्मान्निदत्तमिति चेष्यतइति चशब्देनावत्तादयोपीष्यन्ते इति सूच्यते। किं पुनरिति। यद्यपि दकारः श्रूयते तथापि संहितायां तकारादीनामप्येतस्य रूपस्य संभवात्प्रश्नः। तान्ते दोष इति। यदादइत्येतस्य यस्तकारान्त आदेशस्तत्र दीर्घ इति सूत्रार्थस्तदायं दोषः। यदा तु तकारादौ दादेशे दीर्घस्तदा न दोषः। तस्मात् थान्त इति। संनिपातपरिभाषाश्रये तु दान्तधान्तयोर्न दोषः॥

अचउ। यदीति। दाशब्दाकारस्य दन्नावे दत्तमिति संयोगादिश्रूयेत ॥

र्गात्तः । अस्येत्येव । एवमपि सूत्रभेदः कृतो भवति । नासौ सूत्रभेदः ॥
सूत्रभेदं तमुपाचरन्ति यत्र तदेवान्यत् सूत्रं क्रियते भूयो वा । यदि तदे-
वोपसंहृत्य क्रियते नासौ सूत्रभेदः । अथ वा द्वितकारको निर्देशः क्रियते
सोनेकाल् शित्सर्वस्येति, सर्वस्य भविष्यति । इहापि तर्हि प्राप्नोति
अद्भिरद्भ्य इति । अच इति वर्तते । तच्चावश्यमज्ग्रहणमनुवर्त्यं ल-
वाभ्यामित्येवमर्थम् । अथ वा त्रितकारको निर्देशः करिष्यते इहा-
र्थौ द्वौ उत्तरार्थश्चैकः । द्यतेरित्वादचस्तः * । द्यतेरित्वादचस्त इत्ये-
तद्भवति विप्रतिषेधेन । द्यतेरित्वस्यावकाशः । निर्दितं निर्दितवान् ॥
अचस्तइत्यस्यावकाशः । प्रत्तमवत्तम् । इहोभयं प्राप्नोति । नीत्तम् ॥
वीत्तम् । अचस्त इत्येतद्भवति विप्रतिषेधेन ॥

अपोभि ॥ ४८ ॥ अपोभि मासश्छन्दसि * । अपोभीत्यत्र मा
सश्छन्दस्युपसंख्यानं कर्तव्यम् । माद्भिरिष्ट्वा इन्द्रो वृत्रहा । अत्यल्प-
मिदमुच्यते । स्ववस्स्वतवसोर्मासउषसश्च त इष्यते । स्ववद्भिः स्व-
तवद्भिः समुषद्भिरजायथाः । माद्भिरिष्टा इन्द्रो वृत्रहा ॥

---

नासौ सूत्रभेद इति । दोषायेतिशेषः । तदेवसूत्रं लघुक्रियमाणंप्रत्युत गुणं संपादयति ॥
अथवेति । लघुकरणेपि यदिन्यासान्तरत्वात् स्पष्ट एव सूत्रभेद इति मतं तदैवसुत्तरम् ।
अलोन्त्यस्येद्वावपवादौ आदेःपरस्यानेकाल्शित्सर्वस्येति तयोर्विप्रतिषेधे परं प्रवर्तते । अच
इति वर्ततइति । तेनाप्शब्दस्य योऽच् तस्मात्परस्य पकारस्य द्वितकारआदेशस्त चान्यस्य
झलां जशोन्तइति जश्त्वं पूर्वस्य झलां जश् झशीति । लवाभ्यामिति । लूञ्ऋदोरबित्यप्
अस्यापि भकारादौ तः प्राप्नोति अज्ग्रहणानुवृत्तौत्वप्शब्दस्ययोच् तस्मात्परोभकारादौ
न कश्चिदस्तीति तत्वाभावः । अथ वेति । तत्रतकारद्वयात्मकआदेशः पृथग्विभक्तिकद्व-
यार्थोयस्तु साच्कस्तकारः तस्याचः स्वरितत्वप्रतिज्ञानादुत्तरत्रानुवृत्तिः । लवाभ्यामि
त्यादौ तु तत्वं न भवति पकारलोपादप्शब्दाभावात् । न च भूतपूर्वगत्याश्रयोन्याय्यः ॥
अद्भिरित्यादौ सांप्रतिकाप्शब्दसंभवे गौणस्याग्रहणादत एव समकक्षत्वाभावात्प्रत्ययाप्र-
त्यययोः प्रत्यये संप्रत्यय इति नावतिष्ठते । अद्भिः संस्कृतमिति लिङ्गाद्वा । नहि प्रत्ययस्यैव
ग्रहणे ऽद्भिरिति निर्देशोपपत्तिः । द्यतेरित्वादिति । पुरस्तादपवादा इति न्यायाद् इत्व
दद्भावस्यैव बाधकं न तत्वस्य ततश्चेत्वतत्वयोर्दद्भावापवादयोर्विप्रतिषेधे परंतत्वं प्रवर्तते ॥

अपो । माद्भिरिति । पद्दन्नो मासिति मासशब्दस्य मासादेशस्य छान्दस्यैव विधा-
नान्मासश्छन्दसीति छन्दोग्रहणं न कर्तव्यं तत्क्रियमाणं भाषायामपि क्व चित्पदादयः
प्रयुज्यन्तइति ज्ञापनायेत्याहुः ॥

सनिमीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥ इस्त्वं सनि राधो हिंसायाम *। इस्त्वंसनिराधोहिंसायामिति वक्तव्यम्। प्रतिरित्सति। हिंसायामिति किमर्थम्। आरिरात्सति ॥

आप्ज्ञप्यृधामीत् ॥ ५५ ॥ ज्ञपेरीत्वमनन्त्यस्य*। ज्ञपेरीत्वमनन्त्यस्येति वक्तव्यम्। ज्ञीप्सति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। लोपो ऽनन्त्यस्य बाधको भविष्यति। अनवकाशा हि विधयो बाधका भवन्ति सावकाशश्च णिलोपः। कोवकाशः। कारणा हारणा। एवमपीत्वमनन्त्यस्य लोपस्य बाधकं स्यात्। अनकाशा हि विधयो बाधका भवन्ति। ईत्वमपि सावकाशम्। कोवकाशः। अनन्त्यः। कथं पुनः सत्यनन्त्ये ऽनन्त्यस्येत्वं स्यात्। भवेद्यो ऽचाङ्गं विशेषयेत्तस्यानन्त्यस्य न स्याद् वयं तु खल्वङ्गेनाचं विशेषयिष्यामः। अङ्गस्याचो यत्र तत्र स्थस्येति। एवमप्युभयोः सावकाशयोः परत्वादीत्वं प्राप्नोति। तस्मादनन्त्यस्येति वक्तव्यम् ॥

अत्रलोपोभ्यासस्य ॥ ५८ ॥ अभ्यासस्यानचि *। अभ्यासस्येति यदुच्यते तदनचि द्रष्टव्यम्। पतापतः चराचरः। चलाचलः वदावदः ॥

हलादिः शेषः ॥ ६० ॥ किमयं षष्ठीसमासः। हलामादिर्हला-

---

आप्ज्ञ। ज्ञपेरिति। इहाज्ग्रहणमनुवर्तते तेन ज्ञपौ विशेष्यमाणे ऽजन्तस्य ज्ञपेरित्व विधीयमानमलोन्त्यस्येत्यन्त्यस्य प्राप्नोतीति भावः। लोपोन्त्यस्येति। ज्ञपिनाज्विशेष्यते यथाप्त्रधिभ्यामेवं चैकप्रस्थानोर्विशेषणविशेष्यभावो भवति तत्रानन्त्यस्याचः सावकाशमीत्वं पूर्वविप्रतिषेधेन णिलोपो बाधते। इतरस्त्वगृहीताभिप्राय आह। अनवकाशा इति। ईत्वमेव त्वनवकाशत्वाद् बाधकं प्राप्नोति। एवमपीति। नन्वस्तु परत्वादीत्वं तस्य स्थानिवद्भावाण्णिलोपो भविष्यति ईत्ववचनं त्वनन्त्यस्य श्रवणार्थं स्यात्। नैतदस्ति। सकृद्गतौ विप्रतिषेधे यद्बाधितमिति लोपाप्रसङ्गात् ॥

अत्र लोपो। चराचर इति। चरिचलिपतिवदीनामच्याक् चाभ्यासस्येति द्विर्वचनमगागमश्चेति हलादिशेषो ऽत्र न भवति। नन्वागागमविधानसामर्थ्याद्धलादिः शेषोन भविष्यति। नहि हलादिशेषे आगमस्यादेशस्यवा विशेषो ऽस्तीत्यादेश एव आकारो विधेयः स्यात्। नैतदस्ति। सत्यपि हलादिः शेषे विगृहीतश्रवणार्थमाग्विधानं स्यादित्यनचीत्युच्यते।

हलादिःशेषः। हलामादिरिति। विग्रहप्रदर्शनं विस्पष्टप्रतिपत्त्यर्थम्। अजादिष्विः

दिः हलादिः शिष्यतइति । आहोस्वित्कर्मधारयः हल् आदिर्हलादिः हलादिःशिष्यत इति । कश्चात्र विशेषः । हलादिःशेषे षष्ठीसमास इति चेदजादिषु शेषप्रसङ्गः॥*। हलादिःशेषे षष्ठीसमास इति चेदजादिषु शेषः प्राप्नोति । आनच आनचतुरानचुः । अस्तु तर्हि कर्मधारयः । कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे लोपवचनम्* । कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे आद्यस्य हलो भावे लोपो वक्तव्यः । आटतुःआटुः । तस्मादनादिलोपः । तस्मादनादिर्हल् लुप्यतइति वक्तव्यम् । उक्तं वा * । किमुक्तम् । प्रतिविधास्यते हलादिशेष इति । अयमिदानीं स प्रतिविधानकालः । इदं प्रतिविधीयते । इदं प्रकृतम् । अत्र लोपोभ्यासस्येति । ततो वक्ष्यामि । ह्रस्वः । ह्रस्वो भवत्यादेशः । अभ्यासस्य लोप इत्यनुवर्तते । तत्र ह्रस्वभाविनां ह्रस्वः । लोपभाविनां लोपो भविष्यति । ततो हलादिशेषस्येति । अथ वैवं वक्ष्यामि ह्रस्वोऽहल् । ह्रस्वो भवत्यभ्यासस्येति । ततोऽहल् अहल् च भवत्यभ्यासः । तत आदिशेषः । आदिशेषश्च

---

ति । अजादिष्वभ्यासेषु हलन्तरापेक्षयादित्वे हलआश्रीयमाणेदोषः । प्राप्नोति । आनचेति । अक्षूव्याप्तौ संघाते चेत्यस्माल्लिट् अत्रककारस्य शेषः प्राप्नोति । कर्मधारयेत्वभ्यासापेक्षमादित्वं हलोविज्ञायत इति शेषो न भवति । आदिशेषनिमित्तत्वादिति । शेषशब्दो ऽन्यनिवृत्तियुक्तमवस्थानमाहेति यत्रैवाभ्यासे पपाचेत्यादावादेर्हलोवस्थानं तत्रैवान्यस्य निवृत्तिः स्यान्नान्यत्र । अवस्थानं हि शब्दार्थत्वात्प्रधानम् । न च प्रधानाभावे आनुषङ्गिककार्यप्रवृत्तिरानचेत्यत्रापि ककारषकारयोरस्यामवस्थायां निवृत्त्यप्रसङ्गः । षष्ठीसमासे ऽप्याटतुः आटुरित्यत्रटकारस्यादित्वाभावे शेषप्रसङ्गः स च प्रागुक्त एव । तत्र यदाकृतिपक्ष आश्रीयते तदाभ्यासाकृतौ वर्तमानो हलादिः सर्वस्यामभ्यासव्यक्तावनादेर्निवृत्तिं करोतीति दोषाभावो व्यक्तिपक्षे तु यस्यामेवाभ्यासव्यक्तौ हलआदेरवस्थानं तत्रैवानादेर्निवृत्तिर्नान्यत्रेति दोषप्रसङ्गः । ह्रस्वभाविनामिति । ह्रस्वश्रुत्या च परिभाषोपस्थानादजन्तस्याभ्यासस्य ह्रस्वोविधीयमानो ऽलोऽन्त्यस्येति वचनादच एव दीर्घस्य ह्रस्वस्य च लोपबाधनार्थं विज्ञायते इति हल्विषय एवादिशेषनिरपेक्षो लोपोवतिष्ठते। ततआदेरपि हलो लोपे प्राप्ते तद्बाधनार्थं हलादिः शेषइति सूत्रम् । एतदेवज्ञापकं लोपविधावलोन्त्यपरिभाषा नोपतिष्ठत इत्यानचेत्यादावनन्त्यस्यापि हलोलोपो भवतीति न कश्चिद्दोषः । अहल् चेति । अविद्यमानहल्को ऽभ्यासो भवतीत्यर्थः ।

भवत्यभ्यासस्येति। अथ वा योगविभागः करिष्यते। ऋरादेशो भवत्यभ्यासस्य। ततः हल्। हल् च लुप्यतेऽभ्यासस्य। तत आदिशेषः। आदिशेषश्च भवत्यभ्यासस्य॥

शर्पूर्वाः खयः॥६१॥ शर्पूर्वशेषे खर्पूर्वग्रहणम् *। शर्पूर्वशेषे खर्पूर्वग्रहणं कर्तव्यम्। खर्पूर्वाः खयः शिष्यन्ते। खरो लुप्यन्तइति वक्तव्यम्। किं प्रयोजनम्। उचिच्छिषति। तुकः श्रवणं मा भूदिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। चर्त्वे कृते तुग्न भविष्यति। असिद्धं चर्त्वं तस्यासिद्धत्वात्तुक् प्राप्नोति। सिद्धकाण्डे पठितमभ्यासजश्त्वचर्त्वमेत्वतुकोरिति। एवमप्यन्तरङ्गत्वात्प्राप्नोति तस्मात्खर्पूर्वग्रहणं कर्तव्यम्। न कर्तव्यम्। एत्वतुग्ग्रहणं न करिष्यते। अभ्यासजश्त्वचर्त्वं सिद्धमित्येव। आदिशेषप्रसङ्गस्तु *। आदिशेषस्तु प्राप्नोति। तिष्ठासति। ननु चानादिशेष आदिशेषं बाधिष्यते। कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्। असति खल्वपि संभवे बाधनं भवतीति। अस्ति च संभवो यदुभयं स्यादिति। यद्यादिशेषोपि भवति शर्पूर्ववचनमिदानीं किमर्थं स्यात्। शर्पूर्ववचनं किमर्थमिति चेत्ख-

---

शर्पू।उचिच्छिषतीति। उच्छी विवासे छेचेत्यन्तरङ्गत्वात्तुक् सन् इट् पूर्वत्रासिद्धमिति चुत्वस्यासिद्धत्वात् छिशब्दो द्विरुच्यते तकारस्य शेषे प्राप्ते छशेषार्थं वार्तिकम्। ननु च पूर्वत्रासिद्धीयमद्विर्वचने इति चुत्वे कृते छिशब्दस्य द्विर्वचनेचकारशेषेणैव रूपं सिध्यति। न चेदमस्ति निमित्ताभावे नैमित्तिकस्याप्यभाव इति येन चुत्वं निवर्तते। एवं तर्हिपूर्वत्रासिद्धीयमद्विर्वचन इत्येतदनित्यमुभौ साभ्यासस्येति वचनात्। अन्यथाकृतणत्वस्य द्विर्वचने प्राणिणदित्यादि सिध्यतीति किं सूत्रेण तथा चीजढदित्यसिद्धत्वस्योदाहरणं प्रदर्शयिष्यते। इतरो व्यवस्थितस्य समुदायस्य प्रविभज्यान्वाख्याने ऽन्तरङ्गत्वं तुकोनपेक्ष्याकृत एव तुकि द्विर्वचनं मत्वाह। चर्त्वेकृत इति। अभ्यासे चर्चेति चर्त्वे कृस्य कृते तुगभावाद्रूपं सिध्यति। असिद्धमिति। तुकि कर्तव्ये। एवमप्यन्तरङ्गत्वादिति। शब्दनित्यत्वे ऽप्युपायानामवश्याश्रयणीयो ऽन्तरङ्गबहिरङ्गभावः। एत्वतुग्ग्रहणमिति। तदकरणे हलादिशेषे ऽपि कर्तव्ये चुत्वलक्षणस्य चर्त्वस्यासिद्धत्वाभावात्तकारस्य चकारे कृते हलादिशेषेण निवर्तिते छकारे रूपं सिध्यति। आदिशेषप्रसङ्गस्त्विति। विषयभेदाद्विरोधाभावाच्च बाध्यबाधकभावायोगः। पर्पूर्ववचनमिति। अपवादा वाक्यार्थद्वयं साधयन्त्यपवादं च विदधत्युत्सर्गंच निवर्तयन्ति। नचोत्सर्गाभ्युपगम एकार्थवत् द्वितीयार्थस्य

यां लोपप्रतिषेधार्थम् * । शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपो मा भूदिति । व्यपकर्षविज्ञानात्सिद्धम् * । व्यपकर्षविज्ञानात्सिद्धमेतत् । किमिदं व्यपकर्षविज्ञानादिति । अपवादविज्ञानात् । अपवादत्वादनादिशेष आदिशेषं बाधिष्यते । ननु चोक्तं कथमन्यस्योच्यमानमन्यस्य बाधकं स्यादिति । इदं तावदयं प्रष्टव्यः । यदि तन्नोच्येत किमिह स्यात् । हलादिशेषः । हलादिशेषश्चेन्नाप्राप्ते हलादिशेषे इदमुच्यते तद्बाधकं भविष्यति । यदप्युच्यते असति खल्वपि संभवे बाधनं भवति । अस्ति च संभवो यदुभयं स्यादिति । सत्यपि संभवे बाधनं भवति । तद्यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं बाधकं भवति । एवमिहापि सत्यपि संभवे अनादिशेष आदिशेषं बाधिष्यते ॥

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६५ ॥ दाधर्तीति किन्निपात्यते । धारयतेः श्लौ अभ्यासस्य दीर्घत्वं णिलुक् च । अनिपात्यम् । तूतुजानवदभ्यासदीर्घत्वं पर्णशुषिवण्णिलुक् च भविष्यति । धृङो वा श्लौ अभ्यासस्य दीर्घत्वं परस्मैपदं च । अनिपात्यम् । तूतुजानवदभ्यासदीर्घत्वं युध्यतिवत्परस्मैपदं च भविष्यति । दर्धर्तीति किं निपात्यते । धारयतेः श्लौ अभ्यासस्य च रुक् परस्मैपदं च । अनिपात्यम् । देवा

---

त्यागादानर्थक्यप्रसङ्ग एवेत्यर्थः । हलादिः शेष इत्यनेन खयां निवृत्तौ प्राप्तायामवस्थानविधानादानर्थक्यं नास्ति । व्यपकर्षविज्ञानादिति । व्यपकर्षणमुत्सर्गस्यनिवर्तनं तस्य विज्ञानं तस्मादपवादविधानादित्यर्थः । एकाभ्यासविषयत्वादविरोधे ऽप्युत्सर्गापवादभावः ॥

दाधर्ति । श्लाविति बहुलं छन्दसीति शपः श्लुः । पूतुजानवदिति । तुजादीनां दीर्घोऽभ्यासस्येति । दीर्घत्वमित्यर्थः । पर्णशुषिवदिति । यथा पर्णानिशोषयन्ति पर्णशुषो वाता इत्यादौ क्विपि बहुलमन्यत्रापि संज्ञाछन्दसोरिति णिलुक् भवत्येवं दाधर्तीत्यादौ भविष्यतीत्यर्थः । धृङ इति । धृङवस्थान इत्यस्य शे प्राप्ते व्यत्ययेन शप् ।

अदुङ्क्ष्वदुट् युध्यतिवत् परस्मैपदं च भविष्यति। दर्धर्षीति किं निपात्यते । धारयतेः श्लौ अभ्यासस्य रुक् णिलुक् च। अनिपात्यम् । दैवा अदुङ्क्ष्वदुट् पर्याशुषिवण्णिलुक् च भविष्यति । धृङो वा अभ्यासरुक् परस्मैपदं च । अनिपात्यम् । दैवा अदुङ्क्ष्वदुट् युध्यतिवत्परस्मैपदं च भविष्यति । बोभूत्विति किं निपात्यते । भवतेर्यङ्लुगन्तस्यागुणत्वं निपात्यते । नैतदस्ति प्रयोजनम् । सिद्धमत्रागुणत्वं भूसुवोस्तिङीति । एवं तर्हि नियमार्थं भविष्यति। अत्रैवयङ्लुगन्तस्य गुणो न भवति नान्यत्र । क्व मा भूत् बोभवतीति । तेतिक्ते इति किं निपात्यते । तिजे र्यङ्लुगन्तस्यात्मनेपदं निपात्यते । नैतदस्ति प्रयोजनम् । सिद्धमत्रात्मनेपदमनुदात्तङित आत्मनेपदमिति । नियमार्थं भविष्यति । अत्रैव यङ्लुगन्तस्यात्मनेपदं भवति नान्यत्रेति। क्व मा भूत् बेभिदीति चेच्छिदीति ॥

द्युतिस्वाप्योः संप्रसारणम्॥६७॥ किमर्थं स्वपेरभ्यासस्य संप्रसारणमुच्यते। यदासर्वेष्वभ्यासस्थानेषु स्वपेः संप्रसारणमुक्तम् । स्वापिग्रहणं व्यवेतार्थम्*। स्वापिग्रहणं क्रियते व्यवेतार्थम्। व्यवेतार्थीयमारम्भः।सुष्वापयिषतीति। अस्ति प्रयोजनमेतत्। किं तर्हीति। तत्र क्व-

---

युध्यतिवदिति ।व्यत्ययो बहुलमित्यनेनेत्यर्थः। रुडिति। धीङो रुट्। बहुलं छन्दसीत्यनेन। बो भवीतीति। लिङर्थे लेट् लेटोडाटावित्यट्। सिद्धमत्रेति। प्रत्ययलक्षणेन यद्यप्यनुदात्तङित इति ङित्त्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तं तथापि लोलूयत इत्यादौ यद्यङन्तादात्मनेपदं तत्प्रत्ययस्य ङित्त्वात्प्रत्ययलक्षणं भवत्येव। एतन्नियमार्थमिति। एवं चादादिषु चर्करीतं परस्मैपदमिति लिङ्गसिद्धानुवादः परस्मैपदग्रहणं कर्तव्यं चेदमात्मनेपदं नियम्यत इति भावकर्मणोर्यङ्लुगन्तादात्मनेपदं भवत्येव।

द्युति।किमर्थमिति। स्वपिरेव सौत्रत्वान्निर्देशस्य दीर्घं कृत्वा निर्दिष्ट इति पूर्वः पक्षः। तत्र चलिटि किति वचिस्वपीति संप्रसारणविधानात् कृतसंप्रसारणस्य द्विर्वचने सत्यभ्यासस्यसंप्रसारणं श्रूयते अकितिलिट्यभ्यासस्येति संप्रसारणं सनो रुदविदेति कित्त्वविधानाद्वचिस्वपीति संप्रसारणं स्वपिस्यमिव्येञां यङीति यङि चङि स्वापेश्चङीति। व्यवेतार्थमिति। स्वपेः सनादिषु परतो विहितं संप्रसारणं णिचा व्यवधाने न प्राप्नोतीति स्वापेर्यस्तस्याभ्यासस्य संप्रसारणं विधीयते। सुष्वापयिषतीति। स्वापयितुमिच्छतीति सन्। इट्, गुणायादेशाः। णौ कृतस्य स्थानिवत्त्वात् स्वापेर्द्विर्वचनमभ्याससंप्रसारणं स्तौतिण्यो

न्ददते ऽतिप्रसङ्गः। तत्र ल्लदन्ते अतिप्रसङ्गो भवति। इहापि प्राप्नोति स्वापकमिच्छति स्वापकीयति। स्वाकीयतेः सन् सिष्वापकीयिषतीति॥

सिद्धं तु णिग्रहणात् *। सिद्धमेतत्। कथम्। णिग्रहणं कर्तव्यम्। न कर्तव्यम्। निर्देशादेव हि व्यक्तं ण्यन्तस्य ग्रहणमिति। नात्र निर्देशः प्रमाणं शक्यं कर्तुम्। यथा हि निर्देशस्तथेहापि प्रसज्येत। स्वापं करोति स्वापयति। स्वापयतेः सन्। सिष्वापयिषतीति। तस्माण्णिग्रहणं कर्तव्यम्॥

निजां त्रयाणां गुणः श्लौ॥ ७५॥ त्रिग्रहणानर्थक्यं गणान्तत्वात् *। त्रिग्रहणमनर्थकम्। किं कारणम् गणान्तत्वात्। त्रय एव निजादयः। उत्तरार्थं तु *। उत्तरार्थं तर्हि त्रिग्रहणं कर्तव्यम्। भृञामित्। इह मा भूत् जहाति॥

अर्तिपिपर्त्योश्च॥ ७७॥ अर्तिग्रहणं किमर्थम्। न बहुलं छन्दसीत्येव सिद्धम्। नह्यन्तरेण छन्दोऽर्तेः श्लुर्लभ्यः। एवं तर्हि सिद्धे सति यदर्तिग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामर्तेः श्लुर्भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। इयर्तीत्येतत् सिद्धं भवति॥

---

रिति षत्वम्। इतरस्तु ण्यन्तस्य ग्रहणमबुद्ध्वा येन केन चित्प्रत्ययेन व्यवहितस्य स्वपेरभ्याससंप्रसारणमनेनोक्तमिति मत्वाह। अस्ति प्रयोजनमिति। स्वपितीति। स्वापकस्तमिच्छतीति क्यच्। निर्देशादेवेति। ण्यन्त एव स्वपिः सूत्रे निर्दिष्ट इत्यर्थः। स्वापं करोतीति। स्वपेर्घञन्तात्तत्करोतीति णिच्। तस्माण्णिग्रहणमिति। स्वपेर्णेरिति वक्तव्यम्। तेन स्वपेर्यो णिर्विधीयते तदन्तस्य ग्रहणात् घञन्तात्स्य ग्रहणाभावः।

निजाम्। त्रिग्रहणमिति। इत्करणपरिच्छिन्नास्त्रय एव निजादय इत्यर्थः। एकारे विधातव्ये गुणग्रहणमिक्परिभाषोपस्थानार्थं तेन हलादिशेषे कृते गुणो भवत्यन्यथा तदपवादो हलः स्थान एकारः स्यात्। अथाभ्यासविकारे ऽपवादा नोत्सर्गान् बाधन्त इत्याश्रीयते तदा विस्पष्टार्थं गुणग्रहणम्॥

अर्ति। अर्तिग्रहणमिति। ऋ सृ गताविति जुहोत्यादौ पठ्यते गा स्तुतौ च छन्दसीति छन्दोग्रहणं पूर्वेषामपि घृप्रभृतीनां शेष इति छान्दस एवार्तेः श्लुविषयः। इयर्तीति। तिप् शप् शपः श्लुः द्विर्वचनमुरदित्युत्वमित्वमभ्यासस्यासवर्णे इति इयङ् गुणपरत्वे।

गुणो यङ्लुकोः ॥ ८२ ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वम्। ऐचोर्यङि दीर्घत्वं प्राप्नोति। डोढौक्यते तोत्रौक्यत इति। ननु च ह्रस्वत्वे कृते गुणो भविष्यति। दीर्घत्वं न भविष्यति। न सिध्यति। किं कारणम्। ह्रस्वाद्धि परं दीर्घत्वम्। ह्रस्वत्वं क्रियतां दीर्घत्वमिति। परत्वाद्दीर्घत्वेन भवितव्यम्। न वाभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात् *। न वा एष दोषः। किं कारणम्। अभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात्। अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इत्येषा परिभाषा कर्तव्या। कान्येतस्याः परिभाषायाः प्रयोजनानि। प्रयोजनं सन्वद्भावस्य दीर्घत्वम्। अचीकरत् अजीहरत् सन्वद्भावमपवादत्वाद्दीर्घत्वं न बाधते। मान्प्रभृतीनामित्वस्य। मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्वन्न बाधते। गणेरीत्वं हलादिशेषस्य। गणेरीत्वमपवादत्वाद्धलादिशेषं न बाधते। इदमयुक्तं वर्तते। किमत्रायुक्तम्। ऐचोर्यङि दीर्घत्वप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वमित्युक्त्वा तत उच्यते न वाभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वादिति। तस्याश्च परिभाषायाः प्रयोजनानि नामोच्यन्ते। प्रयोजनं सन्वद्भावस्य दीर्घत्व मान्प्रभृतीनामित्वस्य गणेरीत्वं हलादिशेषस्येति। न च सन्वद्भावमपवादत्वाद्दीर्घत्वं बाधते किं तर्हि परत्वात्। न खल्वपि मान्प्रभृतीनां दीर्घत्वमपवा-

---

गुणो। ऐचोरिति। ह्रस्वस्यावकाशः ययावित्यादि। दीर्घोऽकित इत्यस्यावकाशः कृते ऽकृते वा ह्रस्वत्वे पापच्यत इति। डोढौक्यत इत्यादौ तु परत्वादौकारस्य दीर्घ औकार एव प्राप्नोति। ऐकारस्योदाहरणं पेपेख्यते इति ह्रस्वत्वे कृत इति वक्ष्यमाणोऽभिप्रायः। गुणश्च दीर्घस्यापवाद इति दीर्घाभावः। इदमयुक्तमिति। परत्वाद्दीर्घप्रसङ्गमुक्त्वोत्सर्गापवादयोर्बाध्यबाधकत्वाभावः प्रतिपाद्यत इत्ययुक्तं प्रयोजनमपि किंचिन्न वचनात्तुरूपमिति पौर्वापर्यविरोधादयुक्तम् ॥ न च सन्वद्भावस्यावकाशो ऽचिचणदिति। दीर्घस्यावकाशो ऽदीदपदिति। इहोभयं प्राप्नोति अचीकरदिति तत्र परत्वाद्दीर्घः प्राप्नोति। न खल्वपीति। सन् प्रत्ययो ऽभ्यासदीर्घत्वं च संनियोगेन विधीयत इत्यन्तरङ्गं दीर्घत्वमित्वं तु बहिरङ्गं सनि परतो ऽङ्गाधिकारेऽभ्यासस्याकारान्तस्य विधानात्। न खल्वपीति। आदेः शेषो विधीयतेऽन्त्यस्य त्वीत्वमिति नास्त्युत्सर्गापवादभावो हलादिशेषे अभ्यास-

इत्वादित्वं बाधते किं तर्ह्यन्तरङ्गत्वात् । न खल्वपि गणेरीत्वमपवाद-त्वाद्धलादिशेषं बाधते । किं तर्ह्यनवकाशत्वात् । एवं तर्हीयं परिभाषा कर्तव्या अभ्यासविकारेषु बाधका न बाधन्त इति । सा तर्ह्येषा परिभाषा कर्तव्या । न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति । यदयमकित इति प्रतिषेधं शास्ति ॥

दीर्घोऽकितः ॥ ८३ ॥ अकित इति किमर्थम् । यंयम्यते रंरम्यते । अकित इति शक्यमकर्तुम् । कस्मान्न भवति यंयम्यते रंरम्यत इति । नुकि कृते ऽनजन्तत्वात् । अत उत्तरं पठति । अकिद्वचनमन्यत्र किदन्तस्यालोऽन्त्यनिवृत्त्यर्थम् * । अकिद्वचनं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् । एतज् ज्ञापयत्याचार्योऽन्यत्र किदन्तस्याभ्यासस्यालोऽन्त्य-विधिर्न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । प्रयोजनं ह्रस्व-त्वात्वेत्वगुणेषु । ह्रस्वत्वम् । अवचच्छतुः अवचच्छुः । आत्वं चच्छृद-तुःचच्छृदुः । इत्वं चिच्छादयिषति । गुणः । चेच्छिद्यते चोच्छुप्यते । तुकि कृते अनन्त्यत्वादेते विधयो न प्राप्नुवन्ति । विप्रतिषेधात्सि-द्धम् । नैतानि सन्ति प्रयोजनानि । विप्रतिषेधेनाप्येतानि सिद्धानि । तुक् क्रियतामेते विधय इति । किमत्र कर्तव्यम् । परत्वादेते विधय-

---

स्येत्यवयवषष्ठी । ई च गण इत्यत्राभ्यासस्येति स्थानषष्ठीति भिन्नविषयावीत्व-हलादिशेषावनवकाशत्वात्तु बाधकमीत्वं हलादिशेषस्य निरवकाशा हि विधयः सावकाशान्विधीन् बाधन्त इति न्यायाद्यदा तु येन नाप्राप्त इति न्यायः तदास्त्येवोत्सर्गापवादभावः । अभ्यासविकारेषु बाधका इति । बाधकत्वमनपेक्षितनिमित्तविशेषमाश्रयणीयमित्यर्थः । यदयमिति । यथाचाकित इति ज्ञापकं तथोत्तरत्र वक्ष्यते ॥

दीर्घो । नुकि कृत इति । दीर्घश्रुत्य.च्परिभाषोपस्थानादचाभ्यासस्य विशेषणाद-जन्तस्याभ्यासस्य दीर्घो विधीयते । स चालोऽन्त्यस्येति वचनादन्त्यस्याचो भवति । अकिद्वचनमिति । यद्यचाभ्यासो विशेष्यते अकित इति प्रतिषेधोऽनर्थकः स्यात्तस्माद-भ्यासेनाज्विशेष्यते ततोऽभ्यासस्येनि विशेषणषष्ठीत्यलोऽन्त्यस्येति नोपतिष्ठत इत्येत-ज्ज्ञाप्यत इत्यर्थः । अवचच्छतुरिति । छो छेदने आत्वं लिट् छाशब्दस्य द्विर्वचनम-न्तरङ्गत्वात्तुकि कृते ऽनन्त्यस्याप्यचो ह्रस्वत्वम् । अच्छृदतुरिति । उच्छृदिर् दीप्तिदेवनयोः । छृदो द्विर्वचनं छे चेति तुकि कृते उरदित्यत्वमभ्यासेन ऋवर्णस्य विशेषणात् । चिच्छादयिषतीति । छद संवरणे । परत्वादेते विधय इति । नह्येतेषूदाहरणेषु तुगन्तर-

इति। तदन्ताग्रहणाद्वा। अथ वा नैवं विज्ञायते ऽभ्यासस्या-न्तस्य ऋकारान्तस्याकारान्तस्येगन्तस्येति। कथं तर्हि अभ्यासे यो ऽच् अभ्यास य ऋकारः अभ्यासे यो ऽकारः अभ्यासे य इगिति। एवं च कृत्वा दीर्घत्वं प्राप्नोति। एवं तर्हीदमिह व्यपदेश्यं सद् आचार्यो न व्यपदिशति। किम्। अपवादो नुक् दीर्घत्वस्येति। एवं तर्हि सिद्धे सति यदकित इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा ऽभ्यासविकारेषु बाधका न बाधन्त इति। किमेतस्य ज्ञापने प्रयोजनम्। ऐचोर्यङि दीर्घप्रसङ्गे ह्रस्वाद्धि परं दीर्घत्वमित्युक्तं स न दोषो भवति॥

नुगतोनुनासिकान्तस्य॥ ८५॥ नुकि यंयम्यते रंरम्यत इति रूपासिद्धिः *। नुकि सति यंयम्यते रंरम्यत इति रूपं न सिध्यति। अनुस्वारागमवचनात्तु सिद्धम्। अनुस्वारागमो वक्तव्यः। एवमपीदमेव रूपं स्याद् यंयम्यते। ययँयम्यत इदं न स्यात्। पदान्तवच्चेति वक्तव्यम्। वापदान्तस्येति॥

रीगृदुपधस्य च॥ ९०॥ रीगृत्वत: संयोगार्थम्*। रीगृत्वत इति वक्तव्यम्। किं प्रयोजनम्। संयोगार्थम्। संयोगान्ताः प्रयोजयन्ति। वरीवृश्च्यते परीपृच्छ्यते वरीभृज्ज्यते॥

रुग्रिकौ च लुकि॥ ९१॥ मर्मृज्यते मर्मृज्यमानास इति चोपसंख्यानम् *। मर्मृज्यते मर्मृज्यमानास इति चोपसंख्यानं कर्तव्यम्। मर्मृज्यते मर्मृज्यमानासः॥

---

ङः। प्रत्ययविशेषनिमित्तत्वादभ्यासस्याभ्यासाश्रयत्वात्तुक् ह्रस्वादीनाम्। तदन्ताग्रहणाद्वेति। ज्ञापकमन्तरेणापि विशेषणविशेष्यभावे कामचारात्कृते ऽपि तुक्येते विषयः सिध्यन्ति। एवं च कृत्वेति। ततश्चाकित इति वचनं दीर्घनिषेधाय न तु ज्ञापनाय। अपवादो नुगिति। नाप्राप्ते दीर्घे नुक आरम्भात्। एवं तर्हीति। ओहाक् त्यागइत्यस्य तु निषेधायाकित इति न भवति। धातुर्ह्ययं किद्॥न त्वभ्यासः। ककारो हि हस्व श्रीहिकालयोरित्यत्र हाङ् हाकोः सामान्यग्रहणार्थः॥

नुग। तपरकरणं भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थं तेन बाभाम्यतइति नुक् न भवति। नुकि यंयम्यतइति। अज्झल्परत्वादनुस्वारो न प्राप्नोति। एवमपीति। नित्यं परसवर्णः प्राप्नोति विकल्पो न चेष्यते। पदान्तवच्चेति। तेन वापदान्तस्येति परसवर्णविकल्पः॥

रुग्रिकौ। मर्मृज्यतइति। रुग्रिकौ च लुकीति रुग्विधीयमानो न प्राप्नोतीति वचनम्॥

ऋतश्च ॥ ९२ ॥ किमिदमृकारग्रहणमङ्गविशेषणमृकारान्तस्याङ्गस्येति । आहो स्विदभ्यासविशेषणमृकारान्तस्याभ्यासस्येति । अङ्गविशेषणमित्याह । कथं ज्ञायते । यदयं तपरकरणं करोति । कथं कृत्वा ज्ञापकम् । नहि कश्चिदभ्यासे दीर्घोऽस्ति यदर्थं तपरकरणं क्रियते । अथाङ्गविशेषणे ऋकारग्रहणे सति तपरकरणे किं प्रयोजनम् । इह मा भूत् चाकर्ति चाकीर्तः चाकिरति । किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत् । प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः ॥१॥

सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ९३ ॥ इह कस्मान्न भवति । अजजागरत् । लघुनि चङ्पर इत्युच्यते व्यवहितं चात्र लघु चङ्परम् । इहापि तर्हि न प्राप्नोति । अचीकरत् अजीहरत् । वचनाद्भविष्यति । इहापि वचनात्प्राप्नोति अजजागरत् । येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यात् । केन च नाव्यवधानम् । वर्णेनैकेन । एतेन पुनः संघातेन व्यवधानं भवति न भवति च । एवमप्यचिचदत् अत्र न प्राप्नोति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानामित्वमिति । यदयमत्स्मृदृत्वरप्रथम्रदस्तॄस्पशामितीत्वबाधनार्थमत्वं शास्ति । सन्वद्भावदीर्घत्वे णेर्णिच्युपसंख्यानम् * । सन्वद्भावदीर्घत्वे णेर्णिच्युपसंख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान् । अवी-

---

ऋतश्च । अङ्गविशेषणमिति । यद्यप्यभ्यासविशेषणे भूतपूर्वदीर्घनिवृत्त्यर्थं तपरकरणं तथापि मुख्यकल्पनासंभवे गौणी कल्पना किमित्याश्रीयतइति मत्वा भाष्यकारेणाङ्गविशेषणमृत इत्याश्रितम् । पचतीति । लट उपलक्षणं तेन लटि चाकर्तीत्यादि रूपाणि किरतिं यो नयेदित्यर्थः । प्राप्तिज्ञमिति । तपरकरणादङ्गविशेषणमृत इतितेन रगादीनां विषयविभागेन या प्राप्तिस्तां जानातीत्यर्थः । प्रारब्ध इति । संग्रहणं संग्रहः साधुशब्दराशिः स तेन प्रारब्ध इति योग्यतातिशयोद्भावनेन स्तूयते ॥

सन्वत् । चङ्पर इति बहुव्रीहिणान्यपदार्थो णिराश्रीयते तेनाचकमतेति केवले चङि सन्वद्भावो न भवति । नहि णिच् व्यतिरेकेणान्यस्माङ् परः संभवति तेन चङ्परे णौ यल्लघु तस्मिन् परतोऽभ्यासस्य सन्वत्कार्यं भवति । इह कस्मादिति । न क्वचिदभ्यासो लघोरनन्तरः संभवतीति सत्सप्तमीविज्ञानादत्रापि प्रसङ्ग इति भावः । इतरः परसप्तम्याश्रये येननाव्यवधानमित्याश्रीयते इत्याह । लघुनीति । एवंजातीयकानामिति । स-

वद्दीर्घः परिवादके न। किं पुनः कारणं न सिध्यति। णिचा व्यवहितत्वात्। लोपे कृते नास्ति व्यवधानम्। स्थानिवद्भावाद्व्यवधानमेव। प्रतिषिध्यतेऽत्र स्थानिवद्भावः दीर्घविधिं प्रति न स्थानिवदिति। एवमप्यनग्लोपइति प्रतिषेधः प्राप्नोति। वृद्धौ कृतायां लोपः। तन्नाग्लोप्यङ्गं भवति। एवं तर्हीदमिह संप्रधार्यं वृद्धिः क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वाद् वृद्धिः। नित्यो लोपः कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि। लोपोप्यनित्यः। अन्यस्य कृतायां वृद्धौ प्राप्नोत्यकृतायामन्यस्य शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। उभयोरनित्ययोः परत्वाद्वृद्धिः वृद्धौ कृतायां लोपः तन्नाग्लोप्यङ्गं भवति। मीमादीनां तु लोपप्रसङ्गः *। मीमादीनां तु लोपः प्राप्नोति। अमीमपत्। सिद्धं तु रूपातिदेशात् *। सिद्धमेतत्। कथम्। रूपातिदेशोयं सनि यादृशमभ्यासरूपं तत्सन्वद्भावेनातिदिश्यते न च मीमादीनां सन्यभ्यासरूपमस्ति। अङ्गान्यत्वाद्वा सिद्धम् *। अथ वा ण्यन्तमेतदङ्गमन्यत्। लोपे कृते नाङ्गान्यत्वम्। स्थानिवद्भावादङ्गमन्यत्। कथमजिघ्रपत्। अत्र सन्यपि ण्यन्तस्यैवोपादानमाप्ज्ञप्यृधा-

---

योगव्यवहितानामित्यर्थः। णिचा व्यवहितत्वादिति। चङ्परे णौ यल्लघु तस्मिन् परतो ऽभ्यासस्य सन्वद्भावः। यस्मिंश्चात्र णौ लघुर्नासौ चङ्परः यस्तु चङ्परः न तस्मिन्परतो लघु। दीर्घविधिं प्रतीति। ननु दीर्घे कर्तव्ये भवति स्थानिवत्त्वनिषेधः। सन्वद्भावे तु प्राप्नोति स्थानिवद्भावः। एवं तर्हि दीर्घभावित्वादिकारो ऽप्युपचाराद्दीर्घशब्देनोच्यत इति भाष्यकारस्याभिप्रायः। किन्तु मुख्ये दीर्घे संभवतीति गौणग्रहणमयुक्तमिति चिन्त्यमेतत्। वृद्धौ कृतायां लोप इति। एतच्चौ चङीति सूत्रभाष्येण विरुध्यते तत्र ह्यगिति प्रत्याहारग्रहणसामर्थ्यात् कृतार्थां वृद्धौ लोप इति प्रतिपादितम्। मीमादीनां त्विति। सनि यद्दृष्टमभ्यासकार्यं तदतिदिश्यते मीमादीनां च सन्यभ्यासस्य लोपो दृष्ट इति सन्वद्भावात्प्राप्नोति। सिद्धं त्विति। नेह कार्यमतिदिश्यते अपि तु रूपं लोपश्चाभावः रूपं लोपो न भवतीति नातिदिश्यते। किं चात्र लोपोभ्यासस्येति। अत्रग्रहणं विषयावधारणार्थं तेनेसाद्विविषय एवाभ्यासस्य लोपो भवतीति तदभावे तु सन्वद्भावान्न भवति। अङ्गान्यत्वादिति। मीमादीनामङ्गानामभ्यासलोपो विहितः। अयं त्वभ्यासो ण्यन्तानामिति न लुप्यते। अन्ये तु व्याचक्षते चङ्परे णौ यदङ्गं तदभ्यासस्य सन्वद्भावो विधीयते णौ मीमादीन्येवाङ्गानि युक्तस्तदन्तत्वात् तद्ग्रहणेन ग्रहणात्तस्मादङ्गान्य-

मीदिति । तत्राङ्गान्यत्वाभावादभ्यासलोपः स्यात् । तस्मात्पूर्व एव परिहारः । सिद्धं तु रूपातिदेशादिति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

इति चतुर्थः पादः ॥ सप्तमाध्यायः समाप्तः ॥

---

त्वादित्यस्यायमर्थः । येषामङ्गानामच इत्यादिर्विधीयते तदभ्यासस्यात्र ग्रहणाद्विषयावधारणाल्लोपो नान्येषामिति इसादिरहितानाममीमयदित्यादौ च धातोः सन्वद्भावाभावादिसाद्यभावादभ्यासलोपाभावः । अथ वा सकारादौ सन्यभ्यासलोपो विहितो न सन्मात्रे सामान्यातिदेशे विशेषानतिदेशाल्लोपाभावः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे सप्तमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादश्चतुर्थोऽध्यायश्च सप्तमः समाप्तः ॥

अष्टमोऽध्यायः

# महाभाष्यम्

## महर्षिपतञ्जलिप्रणीतम्

कैय्यटकृतव्याख्यासहितम् ।

पण्डितकृपारामशर्म्मणा स्वकीयतिमिरनाशकयन्त्रालये

काशिकराजकीयप्रधानपाठशालायां
व्याकरणशास्त्रे लब्धप्रतिष्ठेन
त्रिपाठिपं० भगवत्प्रसादशर्म्मणा
संशोधयित्वा
प्रकाशितम् ।

काश्याम्

सम्वत् १९४६

यह पुस्तक पण्डित कृपाराम शर्मा की दूकान पर मिलेगी ।

प्रथम वार १०००

ॐ परब्रह्मणे नमः ॥ सर्वस्य द्वे ॥१॥ सर्ववचनं किमर्थम्। सर्ववचनमलोऽन्त्यनिवृत्त्यर्थम् *। सर्वग्रहणं क्रियते अलोऽन्त्यनिवृत्त्यर्थम्। अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य द्विर्वचनं मा भूदिति। क्व पुनरलोऽन्त्यनिवृत्त्यर्थेनार्थः सर्वग्रहणेन। नित्यवीप्सयोरिति। नित्यवीप्सयोरित्युच्यते न चान्त्यद्विर्वचने नित्यता वीप्सा वा गम्यते। इह तर्हि परेर्वर्जनइति। अत्र अन्त्यस्यापि द्विर्वचने वर्ज्यमानता गम्येत षष्ठीनिर्देशार्थं च सर्वग्रहणं कर्तव्यं षष्ठीनिर्देशो यथा प्रकल्पेत। अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः*। अक्रियमाणे हि सर्वग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात्। कस्य। स्थानेयोगत्वस्य। क्व पुनरिह षष्ठी-

---

ॐ नमः परमात्मने ॥ सर्वस्य द्वे। सर्वशब्दो द्रव्यप्रकारावयवकार्त्स्न्ये वृत्तिः द्रव्यकार्त्स्न्ये यथा सर्वस्वं ददातीति।प्रकारकार्त्स्न्ये यथा सर्वान्नं भक्षयतीति सर्वप्रकारमन्नं भुङ्क्ते इति गम्यते।अवयवकार्त्स्न्ये यथा।सर्वः पटो दग्ध इति। इह तु पर्यादीनां विशिष्टार्थानां कार्यित्वेनोपादानाद्द्रव्यप्रकारकार्त्स्न्यासंभवादवयवकार्त्स्न्ये वृत्तिः सर्वशब्दः तस्योपादानमलोऽन्त्यनिवृत्त्यर्थं वा स्याद् द्विप्रयोगनिवृत्तये स्थानषष्ठ्यर्थं वा। तत्र वक्ष्यमाणैर्लिङ्गसामर्थ्यादिभिरलो ऽन्त्यनिवृत्तिं षष्ठ्यर्थप्रक्लृप्तिं च सिद्धां मत्वा स्थाने द्विर्वचनस्य द्विष्प्रयोगद्विर्वचनस्य च फलभेदमपश्यन् पृच्छति। सर्ववचनमिति। अलोन्त्यनिवृत्त्यर्थमिति। ननु सर्वस्येत्यस्मिन्नसति स्थानषष्ठ्यभावादनुसंहाराभावः। स्थाने विज्ञातस्यानुसंहार इत्युक्तत्वात्। कथं चान्त्यस्य द्विर्वचनं प्राप्नोति। यावता अनेकाल्त्वात्सर्वादेशेन भाव्यम्। उच्यते। परेर्वर्जन इत्यादौ तावत् षष्ठी विद्यत एव। नित्यवीप्सयोरित्यत्रापि सामर्थ्याल्लभ्या षष्ठी। यच्चोक्तमनेकाल्त्वात्सर्वादेशो भविष्यतीति। हलन्तेष्वेतत् स्यात्। अजन्तेषु तु पर्यादिष्विकारादेरन्त्यस्य प्राप्नोति। ननु द्वाविकारौ सर्वस्य स्यातां यथा डा आ डा इति प्रश्लेषनिर्देशात्सर्वादेशो डा भवति। उच्यते। द्वाविकारौ कृतैकादेशावादेशत्वं प्रतिपद्येते इत्येकाल्त्वादादेशो ऽलोन्त्यस्य प्राप्नोति। डास्तु प्रश्लेषनिर्देशसामर्थ्याद्विश्लिष्टगृहीतरूपः सर्वादेशत्वं प्रतिपद्य सवर्णदीर्घत्वं प्रतिपद्यते। क्व पुनरिति। नित्यादिरर्थो ऽन्त्यद्विर्वचनेन न द्योतयितुं शक्यत इति भावः। अन्त्यस्यापीति। यथान्तरेण द्विर्वचनं परिवर्जनार्थः प्रयुज्यते परित्रिगर्तेभ्य इति। अत एवोच्यते परेर्वर्जने वावचनमिति। एवमन्त्यस्यापि द्विर्वचने परेर्वर्जनं प्रतीयेत। षष्ठीनिर्देशार्थं चेति। इष्टस्य षष्ठ्यर्थस्य प्रक्लृप्त्यर्थमित्यर्थः। कस्येति। नित्यवीप्सयोर्यः शब्दस्तस्य द्वे इति सामर्थ्यात् षष्ठ्यर्थो लभ्यतइति भावः। इतरः शब्दमन्तरेणानन्तर्यादिरपि संबन्धः सामर्थ्याद्विज्ञायेतेति मत्वाह। स्थानेयोगत्वस्येति। क्व पुनरिति। षष्ठी सर्वत्र विद्यतइति भावः।

निर्देशार्थो नार्थः सर्वग्रहणेन । यावता सर्वं चैव षष्ठ्युच्चार्यते । परेर्वर्जने । प्रसमुपोदः पादपूरणे । उपर्यध्यधसः सामीप्ये । वाक्यादेराम्रेडितस्येति । इह न का चित् षष्ठी नित्यवीप्सयोरिति । ननु चैषैव षष्ठी । नैषा षष्ठी । किं तर्हि । अर्थनिर्देश एषः । नित्ये चार्थे वीप्सायां चेति । अलोऽन्त्यनिवृत्त्यर्थेन तावन्नार्थः सर्वग्रहणेन । इदं तावदयं प्रष्टव्यः । नित्यवीप्सयोर्द्वे भवत इत्युच्यते द्विशब्द आदेशः कस्मान्न भवति आचार्यप्रवृत्तिर्ज्ञापयति न द्विशब्द आदेशो भवतीति । यदयं तस्य परमाम्रेडितमनुदात्तं चेत्याह । कथं कृत्वा ज्ञापकम् । द्विशब्दोऽयमेकाच् तस्य एकत्वात्तस्य परमाम्रेडितमनुदात्तं चेत्येतन्नास्ति । पश्यति त्वाचार्यो न द्विशब्द आदेशो भवतीति ततस्तस्य परमाम्रेडितमनुदात्तं चेत्याह । यदि तर्हि न द्विशब्द आदेशो भवति के तर्हीदानीं द्वे भवतः । द्विशब्देन यदुच्यते । किं पुनस्तत् । द्विशब्दोऽयं संख्यापदम् । संख्यायाश्च संख्येयमर्थः । संख्येये द्वे भविष्यतः । के पुनस्ते । पदे । वाक्ये । मात्रे वा । तद्यदा तावत्पदे वाक्ये वा तदा

---

ननु चैषैवेति । नित्यार्थवचनः शब्दो नित्यो वीप्सार्थवचनश्च वीप्सेत्याश्रीयत इति भावः । अर्थनिर्देश इति । प्रयोक्तृधर्मो वीप्सा यथा आबाधो नत्वभिधेयधर्मः यद्वक्ष्यते वीप्सायां कर्त्ता भवतीति । वीप्सायास्त्वार्थत्वे नित्यशब्दोऽप्यर्थवृत्तिरेव, शाब्दो द्वन्द्वनिर्देशाद्भिन्नविभक्तिकत्वायोगात् । अलोऽन्त्यनिवृत्त्यर्थेनेति । ननु च नित्यवीप्सयोरित्यर्थाश्रयणेन पूर्वमेवालोऽन्त्यविधिर्निवारितः । तत्किमर्थं नित्यवीप्सयोरित्युपादीयते । परेर्वर्जनइत्यादि ह्युपादेयं प्रकरणोपलक्षणार्थं त्वासर्वेषु वा सूत्रेषु परिहारस्य तुल्यत्वाददोषः कथं पुनर्द्विशब्द आदेशः संभाव्यते यावता ग्रामो ग्राम इत्यस्मिन्नर्थे प्रतिपाद्ये द्विशब्दो न प्रवर्त्तते । पराभिप्रायेणैतदुच्यते । यथा भवान् सामर्थ्यादिन्यायत्यागेन शास्त्रसद्भावमात्रेणालोऽन्त्यविधिं मन्यते तथा स्वं रूपं शब्दस्येति शास्त्रप्रामाण्याद् द्विशब्दः प्राप्नोति न्यायाश्रये तु स्वरूपविधिवदलोऽन्त्यविधिर्न भविष्यति । आचार्यप्रवृत्तिरिति । न्यायसिद्धेऽर्थे लिङ्गदर्शनम् । नहि द्विशब्द आदेशो ग्रामादिशब्दस्यार्थं वक्तुं समर्थ इति न प्रवर्त्तते नाम्रेडितस्यान्त्यस्य तु वा नित्यमाम्रेडिते डाचीत्ये तदपि लिङ्गं द्रष्टव्यम् । यदि तर्हीतिप्रष्टे द्विशब्देन यदुच्यत इत्युत्तरे उक्ते ऽपि सामान्याभिधानाद्विशेषो दुर्ज्ञान इति पृच्छति । किं पुनस्तदिति । संख्येयमर्थ इति । अभिधेयमित्यर्थः । यदुच्यते । पादग्रभः संख्याः संख्येयेवर्त्तन्ते ऽत उत्तरं संख्याने संख्येये चेति । पदे इति ।

नेकाल्त्वात्सर्वस्यादेशः सिद्धः । यदा तावद् मात्रे अपि तदाऽ नेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति । यदा तर्ह्यर्धमात्रे तदा सर्वादेशो न सिध्यति । नैष दोषः । तदापि सिद्धः । न चार्द्धमात्रे द्विरुच्येते । किं कारणम् । इह व्याकरणे यः सर्वोल्पीयान् स्वरव्यवहारः स मात्रया भवति । नार्धमात्रया व्यवहारोस्ति । ते नार्द्ध मात्रे न भविष्यतः । एवमपि कुत एतत् पदे द्वे भविष्यत इति । न पुनर्वाक्ये स्याताम् । मात्रे वा । नित्यवीप्सयोर्द्वे भवत इत्युच्यते । न च वाक्यद्विर्वचने मात्राद्विर्वचने वा नित्यता वीप्सा वा गम्यते । षष्ठीनिर्देशार्थमेव तर्हि सर्वग्रहणं कर्त्तव्यम् । न वा पदाधिकारात् * न वा वक्तव्यम् । किं कारणम् । पदाधिकारात् । पदस्येति प्रकृत्य द्विर्वचनं वक्ष्यामि । तच्चावश्यं पदग्रहणं कर्त्तव्यं समासतद्धितवाक्यनिवृत्त्यर्थम् । समासनिवृत्त्यर्थं तावत् । सप्तपर्णो ऽष्टापदम् । तद्धितनिवृत्त्यर्थम् । द्विपदिका । त्रिपदिका । माषशः । कार्षापणशः ॥ वाक्यनिवृत्त्यर्थम् । ग्रामे ग्रामे पानीयम् । माषं माषं देहि इति । अथ क्रियमाणे ऽपि

---

शब्दानुशासनप्रस्तावाच्छब्द प्रकारोपन्यासः । यदा तावन्मात्रे इति । यदुक्तम् । ह्यविकारी कृते कादेशावेकालादेशो ऽन्त्यस्य प्राप्नोतीति । तदयुक्तम् । नह्यप्रवृत्तयोरेकादेशशास्त्रप्रवृत्तिरस्ति प्रवृत्तिकाले चानेकल्त्वात्सर्वादेशत्वमिति नास्त्यलोऽन्त्यविधिः । यदा तर्हीति । परिशब्देकारस्य द्वे अर्धमात्रे । अल्ग्रहणेनार्द्धमात्राया अग्रहणादनेकाल्त्वाभावातप्राप्नुतः । इहेति । विशिष्टमर्द्धमात्राद्वयमुच्चारणायोगाद् अशक्य आदेशः कर्त्तुम । तस्मादित उदात्तमर्द्धह्रस्वमित्यनेन तु ह्रस्वादिवर्णस्याया अर्धमात्राया गुणाख्यानं क्रियते । न च वाक्यद्विर्वचनइति । नित्यत्वाद्यर्थप्रतिपादनाय तत्प्रतिपादनसमर्थः शब्दः प्रयुज्यते स्थाने ऽन्तरतम इत्युपस्थानाच्च शब्दतोर्थतश्चान्तरतमे एव द्वे पदे आदेशौ भवतः । परेवंजंन इत्यादौ तु पर्यादिशब्दसन्निधानाद् द्विशब्दःपर्यादीनेव संख्येयानाचष्ट इति वाक्ये मात्रे पदेऽपि ये के चिन्न प्रवर्त्तेत। नवेतिशब्दान्तरं षष्ठ्यन्तमुपादेयम्।कः विशेष इति चेदाह तच्चेति।सप्तपर्ण इति। सप्त संख्यानि पर्णानि वीप्सायन्ते न तु तद्वान् वृक्ष इति वीप्सायामेकत्वस्यानन्तर्भावात्प्रागेव विभक्तेर्द्विवचनं प्राप्नोति । सप्तपर्णइति । पदाधिकारात्तु न भवति । द्विपदिकेति । द्वित्वसंख्यायुक्ताः पदार्थी वीप्स्यते इति वीप्सायां स्वत्वैकत्वलक्षणयोर्लिङ्गसंख्ययोरनन्तर्भावात् प्राक् तद्धितोत्पत्तेः समासे कृते पदत्वाभावाद् द्विर्वचनाभावः । ग्रामे ग्रामे पानीयमिति । वाक्यस्यापदत्वा-

वै पदग्रहणे समासनिवृत्त्यर्थमिति कथमिदं विज्ञायते। समासस्य निवृत्त्यर्थं समासनिवृत्त्यर्थमाहो स्वित् समासे निवृत्त्यर्थं समासनिवृत्त्यर्थमिति । किं चातः । यदि विज्ञायते समासस्य निवृत्त्यर्थं समासनिवृत्त्यर्थमिति । सिद्धं सप्तपर्णः सप्तपर्णौ सप्तपर्णा इति । सप्तपर्णाभ्यां सप्तपर्णेभ्य इत्यत्र प्राप्नोति । अथ विज्ञायते समासे निवृत्त्यर्थं समासनिवृत्त्यर्थमिति । सप्तपर्णः सप्तपर्णौ सप्तपर्णा इत्यत्रापि प्राप्नोति । तथा तद्धितनिवृत्त्यर्थमिति कथमिदं विज्ञायते तद्धितस्य निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति । आहो स्वित्तद्धिते निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति। किंचातः। यदिविज्ञायते तद्धितस्य निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति । सिद्धंद्विपदिकाइति । द्विपदिकाभ्यां त्रिपदिकाभ्याम् । माषशः । कार्षापणश इत्यत्र प्राप्नोति । अथ विज्ञायते तद्धिते निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति । द्विपदिकाः त्रिपदिकाः इत्यत्रापि प्राप्नोति । तथा वाक्यनिवृत्त्यर्थमिति कथमिदं विज्ञायते वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति । आहो स्विद्वाक्ये निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति । किं चातः । यदि वि-

---

द् द्विर्वचनाभावः । अथेति । सप्तपर्ण इत्यत्र संख्यया: वीप्सा, अथ पर्णानाम्, अथ संख्याविशिष्टानां पर्णानाम् । तत्र यदि समुदायो वीप्स्यते तदा समुदायस्य प्राप्तं द्विर्वचनं पदाधिकारेण निवर्त्यते । अथ त्ववयवार्थवीप्सा तदावयवस्य प्राप्तं द्विर्वचनमिति समासे विद्यमानस्य निवृत्त्यर्थमित्यर्थः संपद्यते । एवं वाक्यतद्धितयोर्योज्यम् । यदि विज्ञायते इति॥ यदि समुदायो वीप्सायुक्त इति पक्षः । सिद्धं सप्तपर्ण इति । विभक्तौ परतः समासस्यापदत्वात् । सप्तपर्णाभ्यामिति । स्वादिषु पूर्वस्य पदत्वाद् द्विर्वचनप्रसङ्गः। अथेति।यदावयवार्थवीप्सा तदा समासे प्रत्ययलक्षणेनावयवस्य पदत्वाद् द्विर्वचनप्रसङ्गः। उत्तरपदस्तूत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात् पदत्वाभावः। सिद्धं द्विपदिका इति । हल्ङ्याब्भ्यो लोपे तद्धितान्तस्य पदत्वाद् द्विपदिका इति बहुवचनान्तं पठितव्यम् । द्विपदिकाभ्यामिति । एकादेशस्यान्तवद्भावात्तद्धितान्तं स्वादिष्वितिपदं च । माषश इति । प्रत्ययलक्षणेन सुबन्तं तद्धितान्तं च वाक्यं वीप्सायुक्तमिति । वाक्यार्थस्य वीप्सायोगाभावाद् वीप्साग्रहणं द्विर्वचननिमित्तोपलक्षणं तेन प्रपचतिप्रपचतीति नित्यतायां वाक्यस्य द्विर्वचनं भवत्येव । अथेति । यदा ग्रामार्थस्य वीप्सा तदा ग्रामे ग्रामे पानीयमिति भवति । यदा पानीयस्य तदा ग्रामे पानीयं पानीयं स्यादिति भवति ।

ज्ञायते वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति। यदि वाक्यं वीप्सायुक्तं, भवितव्यमेव द्विर्वचनेन। अथाप्यवयवः भवत्येव। तदेतत्क्रियमाणेऽपि पदग्रहणे आलूनविशीर्णं भवति। किं चित्संगृहीतं किं चिदसंगृहीतं च। सगतिग्रहणं च कर्त्तव्यम्। प्रपचतिप्रपचति प्रकरोतिप्रकरोतीति। किं पुनः कारणं न सिध्यति। न हि सगतिकं पदं भवति। समासनिवृत्त्यर्थेन तावन्नार्थः पदग्रहणेन। समासेनोक्तत्वाद्वीप्सायाः द्विर्वचनं न भविष्यति। किं च भोः समासो वीप्सायामित्युच्यते। न खलुवीप्सायामित्युच्यते। गम्यते तु सोर्थः। ततः किम्। उक्तः समासेनेति कृत्वा द्विर्वचनं न भविष्यति। यत्र च समासेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्। तद्यथैकैकविचिताः अन्योन्यसहाया इति। अथ वा यदत्र वीप्सायुक्तं नादः प्रयुज्यते। किं पुनस्तत्। पर्वणिपर्वणिसप्तपर्णान्यस्य। पङ्क्तौपङ्क्तौ अष्टपदान्यस्येति। तद्धितनिवृत्त्यर्थेन चापि नार्थः पदग्रहणेन। तद्धितेनोक्तत्वाद् वीप्साया द्विर्वचनं न भविष्यति। तद्धितः खल्वपि वीप्सायामित्युच्यते। यत्र तद्धितेनानुक्ता वीप्साभवति तत्र द्विर्वचनम्। तद्यथा

---

तदेतदिति। अतिव्याप्तिर्न कथं चित्परिहर्तुं शक्यते। सगतिग्रहणं चेति। पदाधिकारे क्रियमाणे सगतिग्रहणमधिकं कर्तव्यम्। भाष्यकारः पदाधिकारेण विनापि समासादिनिवृत्तिप्रतिपादनायाह। समासेनेति। सप्तपर्ण इति रूढिशब्दः परिगृहीतावयवार्थविशेषो वृक्षविशेषे वर्तत इत्यर्थः। किं च भो इति। ननु न वचनादर्थं शब्दः प्रत्याययति किन्तर्हि स्वसामर्थ्यात्। एवं मन्यते वाक्ये द्विर्वचनेन वीप्सा व्यज्यते सप्तसप्तपर्णान्यस्येति। एवं समासेपि वीप्साप्रतिपादनाय द्विर्वचनस्य प्रसङ्गात् प्रतिषेधो विधेयो नित्यवीप्सयोरसमास इति। यथा वक्ष्यते परेरसमास इति। न खल्विति। रूढिशब्दत्वादस्याश्चित्रवोऽर्भोऽवयवार्थो यथा चिदशा इत्यादावाश्रितसुजर्थोन्ये हि वाक्यधर्मा अन्ये वृत्तिधर्मास्ततः समासेनोक्तत्वादित्यस्यायमर्थः समासेनाभिव्यक्तत्वादिति। यत्र चेति। यो न रूढिशब्दः। एकैकविचिता इति। एकैकेन विचिताः। अन्योन्यसहाया इति। अन्योन्यस्य सहाया इत्यर्थः। अत्र कर्मव्यतिहारो द्विर्वचनद्योत्यः। अथ वेति। न चाप्रयुज्यमानस्य द्विर्वचनसंभवः। गतार्थत्वाच्च पर्वादिशब्दस्याप्रयोगो रूढिशब्दत्वाच्च गतार्थत्वम्। तद्धितेनेति। तद्धितस्य स्वार्थिकत्वाद् अभिव्यक्तिरेवोक्तिरवसेया।

एकैकशो ददातीति । वाक्यनिवृत्त्यर्थं न चापि नार्थः पदग्रहणेन । पदद्विर्वचनेनोक्तत्वाद् वीप्साया वाक्यद्विर्वचनं न भविष्यति । यत्र च पदद्विर्वचनेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम् । तद्यथा । प्रपचति प्रपचति प्रकरोति प्रकरोतीति । उत्तरार्थं तर्हि पदग्रहणं कर्त्तव्यम् । तस्य परमाम्रेडितं अनुदात्तं चेति वक्ष्यते । तत्पदद्विर्वचने यथा स्यात् वाक्यद्विर्वचने मा भूत् । मह्यं ग्रहीष्यति मह्यं ग्रहीष्यति मामभिव्याहरिष्यति मामभिव्याहरिष्यतीति । कथं चात्र द्विर्वचनम् । छान्दसत्वात् । स्वरोपि तर्हि च्छान्दसत्वादेव न भविष्यति । उत्तरार्थमेव तर्हि पदग्रहणं कर्त्तव्यम् । पदस्य पदादिति वक्ष्यति तत्पदग्रहणं न कर्त्तव्यं भवति । सर्वग्रहणमपि तर्ह्युत्तरार्थमनुदात्तं सर्वमपादादाविति वक्ष्यति तत्सर्वग्रहणं न कर्तव्यं भवति । उभयं क्रियते तत्रैव । इष्टार्थमेव तर्हि षष्ठीनिर्देशार्थमन्यतरत्कर्त्तव्यम् । षष्ठीनिर्दिष्टस्य स्थाने द्विर्वचनं यथा स्यात् । द्विः प्रयोगो मा भूदि-

---

एकैकश इति । केचिदाहुरल्पार्थोप्येकशब्दोस्ति तस्य वीप्सां द्विर्वचने बह्वल्पार्थादिति शस्प्रत्ययोऽन्ये त्वाहुरेकैकमेकैकस्मै ददातिकर्मसंप्रदानवीप्साद्वयप्रतिपादनाय शस्द्विर्वचने भवत इति । तदयुक्तम् । एकेनपदेनयुगपत्कारकद्वयस्याभिधानाऽसंभवात् । पदद्विर्वचनेनोक्तत्वादिति । आधारवीप्सयाऽऽधेयवीप्साया आक्षेपादाधेयवाचिपदद्विर्वचनाभाव । यत्र चेति । अडादिव्यवस्थार्थं धातूपसर्गयोः पृथक्कल्पनेपि परमार्थतः समुदायस्य क्रियाविशेषवाचित्वान्नित्यताप्रतिपादनाय पदसमुदायस्य द्विर्वचनमित्यर्थः वीप्सयात्र नित्यत्वं लक्ष्यते । मह्यमिति । आबाधे चेति द्विर्वचनमित्याहुः । कथमिति । आबाधस्यासंप्रत्ययादर्थान्तरस्य च द्विर्वचननिमित्तस्याभावाद् द्विर्वचनाप्रसङ्गः । स्वरोपीति । अनुदात्तत्वाभावे प्रकृतिस्वरो भवति । उत्तरार्थमिति । सर्वस्येत्यपनीय पदस्येति क्रियमाणे मण्डूकप्लुतिन्यायेन द्विर्वचनप्रकरणमुल्लङ्घ्योत्तरत्रोपतिष्ठते । इष्टार्थमेवेति । ननु सामीप्यादिसंबन्धप्रतीतिवारणमप्यन्यतरोपादानस्य प्रयोजनं कस्मान्न भवति । उच्यते । नित्यवीप्सयोरित्यर्थनिर्देशेन शब्दस्याक्षेपान्नित्यवीप्सयोर्यो वर्तते शब्दस्तस्य द्वे भवत इति प्रक्रियावाक्यस्योपप्लवनाद्विशिष्टषष्ठ्यर्थावगमात्सामीप्यादिसंबन्धप्रतीत्यभावः सिद्धः । पक्षद्वयसंभवे तु षष्ठीनिर्देशेन षष्ठीस्थाने योगेति परिभाषोपस्थानाद् द्विप्रयोगा निवर्तते । द्वे इत्येतावत्युच्यमाने संख्येयमुच्चारणं यद्यपेक्षते शब्दस्य द्वे उच्चारणे भवत इति । तदा शब्दस्य क्रियायाश्च स्थान्यादेशभावायोगाद् द्विःप्रयोगो द्विर्वचनमिति पक्षः । यदा तु श-

ति। किं च स्यात्। आम् पचसि पचसि देवदत्ता३ आम एकान्तरमामन्त्रितमनन्तिक इत्येकान्तरता न स्यात्। इह च पौनःपुन्यं पौनःपुनिक इति अप्रातिपदिकत्वात्तद्धितोत्पत्तिर्न स्यात्। यदि तर्हि स्थाने द्विर्वचनम्। राजाराजा। वाक्वाक्। पदस्येति नलोपादी-

---

ब्दरूपं संख्येयं यदा द्वे शब्दरूपे एकस्यं प्रसङ्गे भवत इति स्थाने द्विर्वचनं विज्ञायेत। अथ काचो द्वे प्रथमस्येत्यत्र षष्ठीनिर्देशात् स्थाने द्विर्वचनं कस्मान्न भवति। अभ्यासाच्चेत्यनेनाभ्यासादुत्तरस्य हन्तिहकारस्य कुत्वविधानाल्लिङ्गात्। न हि स्थानेद्विर्वचनेऽभ्यासादुत्तरो हन्तिःसंभवति। शब्दान्तरत्वादादेशस्य स्थानिवद्भावादपि समुदायो हन्तिग्रहणेन गृह्यते न तु तदवयवः। एकान्तरतेति। आवृत्तिभेदनिबन्धनया द्वित्वसंख्यया स्वाश्रयस्यैकत्वस्य निवर्तनात्। तथा चोक्तम्। एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानादिति। ऋषिसहस्रमेकां कपिलां दत्वा सर्वे ते सहस्रदक्षिणाः संपन्नास्तत एकदक्षिणा आनीयन्तामित्युक्ते सहस्रदक्षिणात्वान्न तआनीयन्ते। तत्र आम्शब्दो निपातत्वादाद्युदात्तः एकस्य पचसिशब्दस्य तिङ्ङतिङ इति निघातो द्वितीयस्यानुदात्तं चेति आमन्त्रितस्य पदात्परस्य निघाते प्राप्ते प्रतिषिद्धे आमन्त्रितस्य चेत्याद्युदात्तत्वम्। प्लुतस्याप्युदात्तत्वम्। अथ स्थाने द्विर्वचने कथमेकान्तरता यावतैकस्य स्थाने द्वौ शब्दावादेशौ विधीयेते। उच्यते। एकपदादेशत्वात् स्थानिवद्भावादेकपदत्वम्। पौनःपुन्यमिति। पुनःपुनर्भवितरि वर्तमानात् पुनःपुनःशब्दाद्भावे प्रत्ययो यथा नानात्वमिति नानाभूतवृत्तेर्नानाशब्दात्। पौनःपुनिक इति। पुनःपुनर्भव इति कालाट्ठञ्। तत्र द्विष्प्रयोगे पदस्य विज्ञायमाने वीप्स्यमानार्थवाचित्वादर्थवत्त्वेऽप्यर्थवतः समुदायस्य समासग्रहणान्नियमार्थाद्प्रातिपदिकत्वम्। स्यादेतदनुत्पन्न एव सुपि पुनःशब्दस्य नित्यता युक्तक्रियाप्रधानस्याव्ययस्य द्विष्प्रयोगो विधास्यते ततो सुबन्तसमुदायत्वादव्यावृत्तं प्रातिपदिकत्वं यथैकशेषे सरूपप्रातिपदिकसमुदायस्य। तच्च न। द्विर्वचनस्य नित्यत्वाद्यर्थापेक्षत्वाद्बहिरङ्गत्वात्सुबुत्पत्तेरव्ययार्थमात्रापेक्षया अन्तरङ्गत्वात्स्थाने द्विर्वचने तु स्थानिवद्भावात् प्रातिपदिकत्वम्। ननु स्थान्येव सुबन्तत्वाद्‌ न प्रातिपदिकम्। नैतदस्ति। सुब्लुकि सत्यप्रत्ययान्तत्वात्। न च प्रत्ययलक्षणेनाप्रत्यय इति प्रातिपदिकसंज्ञानिषेधो न ङिसंबुद्ध्योरिति नलोपनिषेधाल्लिङ्गादन्यथा प्रातिपदिकत्वाभावान्नलोपस्य प्राप्त्यभावान्निषेधो न कर्त्तव्यः स्यात्। राजाराजेति। पदस्य स्थाने समुदाय आदेशत्वात्पदं न तदवयव इति पूर्वस्य नलोपाद्यसिद्धिः। अन्तरङ्गबहिरङ्गानपेक्षे च चोद्यसमाधाने। नलोपादीनि हि पदत्वमात्रनिबन्धनत्वादन्तरङ्गाणि द्विर्वचनं तु वीप्साद्यपेक्षत्वाद्‌ बहिरङ्गमेवं विभाषि-

नि न सिध्यन्ति। इदमिह संप्रधार्यं द्विर्वचनं क्रियतां नलोपादीनी-ति। किमत्र कर्त्तव्यम्। परत्वान्नलोपादीनि। पूर्वत्रासिद्धे नलोपा-दीनि। सिद्धासिद्धयोश्च नास्ति संप्रधारणा। एवं तर्हि पूर्वत्रासिद्धी-यमद्विर्वचन इति वक्ष्यामि तच्चावश्यं वक्तव्यम्। किं प्रयोजनम्। विभाषिताः प्रयोजयन्ति। द्रोग्धाद्रोग्धा। द्रोढाद्रोढेति। इह तर्हि। बिसबिसम्। मुसलमुसलम्। आदेशप्रत्यययोरिति षत्वं प्राप्नोति। आदेशो यः सकारः प्रत्ययो यः सकार इत्येवमेतद्विज्ञायते। इह तर्हि नृभिर्नृभिः। रषाभ्यां नोणः समानपद इति णत्वं प्राप्नोति। समान-पद इत्युच्यते। समानमेव यन्नित्यम्। न चैतन्नित्यं समानमेव। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। समानग्रहणसामा-र्थ्यात्। यदि हि यत्समानं चासमानं च तत्र स्यात्समानग्रहणमन-र्थकं स्यात्। अथ वा पुवरस्तु द्विः प्रयोगो द्विर्वचनम्। ननु चोक्तमा-मूपचसि पचसि देवदत्ता३ आम एकान्तरमामन्त्रितमनन्तिक इत्ये-कान्तरता न प्राप्नोतीति। नैष दोषः। सुप्तिङ्भ्यां पदं विशेषयि-ष्यामः। सुप्तिङन्तं पदं यस्मात्सुप्तिङ्विधिस्तदादि सुप्तिङन्तं च

---

ता अपि विधयोऽन्तरङ्गाः। विभाषिता इति। ननु न लोकस्या आकृतेश्चरितःप्रयोगो द्विती-यस्यास्तृतीयस्या इति न्यायाद्यदा पूर्वस्य षत्वादि तदा परस्यापि लाघवाद्भविष्यति। एवं मन्यते धात्वाकृतिः प्रत्ययाकृतिश्चैकैव प्रक्रान्तार्थभेदाग्रहणापि नास्ति। यथा गवां स्वाम्य-श्च पुत्रेति। नित्यत्वविरोधिनी च विभाषा शक्याचाप्ययुगपदेकत्र प्रयोगे सा विधातुमिति तस्याःप्रसङ्गः एतन्न्यायामपेक्षया चैतदुच्यते। आदेश इति। सकारस्यादेशस्य षत्वं न त्वा-देशावयवस्य। प्रत्ययो यःसकार इति। आदेशानुरोधेनैतदुक्तं प्रत्ययावयवस्य तु सकारस्य षत्वं व्यवस्थापयिष्यते। नृभिर्नृभिरिति। स्थानिवत्त्वात्समुदायस्यैकपदत्वाण्णत्वप्रसङ्गः। समानमेवेति। यत्र निमित्तनिमित्तिनोरवियोगस्तत्र णत्वमिह तु वीप्साभावे द्विर्वच-नाभावान्नृभिरिति रेफं पूर्वमन्तरेणापि नकारस्य प्रयोगात्सर्वदा समानपदस्थत्वाभावः। अथ वा स्थानिवद्भावादेकपदत्वं तत्त्वतस्तु पदद्वयात्मक आदेशः। समानग्रहणमिति। र-षाभ्यां नोणः पद इत्येव वक्तव्यं तत्रापदस्थयोर्निमित्तनिमित्तिनोरसंभवाद् गुणे संख्याया विवक्षितत्वाच्चैकपदस्थत्वे सिद्धे समानग्रहणं नियमार्थमाश्रीयत इत्यत्र णत्वं न भवति। यस्मात्सुप्तिङ्विधिरिति। अर्थरूपसामान्याश्च एव पचशब्दः स एव च तिङिति यः

पदम्। ननु चैवैकस्मादेवात्र सुप्तिङ्विधिः। समुदाये या वाक्यपरिसमाप्तिस्तया पदसंज्ञा। कुत एतत्। शास्त्राहानेः। एवं हि शास्त्रमहीनं भवति। यदप्युच्यते इह पौनःपुन्यं पौनःपुनिक इति चप्रातिपदिकत्वात्तद्धितोत्पत्तिर्न प्राप्नोति। माभूदेवं समर्थादित्येवं भविष्यति। अथ वाचार्यप्रवृत्तिर्ज्ञापयति। भवत्येवंजातीयकेभ्यस्तद्धितोत्पत्तिरिति। यदयं कस्कादिषु कौतस्कुतशब्दं पठति॥

नित्यवीप्सयोः॥ २॥ इह कस्मान्न भवति। हिमवान्। वाडवः। पारिपात्रः। समुद्र इति। नित्ये इभवत इति प्राप्नोति। नैष दोषः। अयं नित्यशब्दोऽस्त्येव कूटस्थेष्वविचालिषु वर्त्तते

---

पूर्वस्मात्तिङ् विहितः स परस्मादपि यः परस्मात्स पूर्वस्मादपि तदादिग्रहणं चानुवर्त्तते- तेन पचसिपचसीति समुदायः पच्छब्दादिः पदसंज्ञ इति सिद्धमेकान्तरत्वम्। ननु चेति। ततो नैकं पदम्। समुदाय इति। यथा समुदायस्यावयवानां चैकाच्त्वे तुल्ये समुदायस्यैव द्विर्वचनं भवति नावयवानां पपाचेति तथेहापि पदसंज्ञा। एवं हि शास्त्रमिति। प्रत्यवयवं तु पदसंज्ञायां पदसमुदायस्य त्यागात्तद्विषयं शास्त्रं हीनं स्यात्। तदादिग्रहणानुवृत्तिश्चानर्थिका स्यात्। मा भूदेवं समर्थादिति। तद्धितोत्पत्तौ हैतं विभक्त्यन्ताद्धोत्पत्तिः तदवयवात्प्रातिपदिकाद्धेति तत्र विभक्त्यन्तादुत्पत्तिरिति पक्ष आश्रीयते समुदायस्य पूर्वोक्तेन न्यायेन विभक्त्यन्त इति ततस्तद्धितोत्पत्तिरविरुद्धा। अथ वेति। यद्यपि प्रातिपदिकात्तद्धितोत्पत्तिस्तथाप्यप्रातिपदिकादपि द्विरुक्ताज् ज्ञापकात् तद्धितोत्पत्तिः। कुतः कुत आगत इति कस्कादिषु पाठान्निपातनादव्ययलक्षणत्यबभावेऽण्प्रत्ययः॥

नित्यवीप्स। इहेति। यदा नाश्रितप्रवृत्तिनिमित्तविशेषो नित्यशब्दः परिगृह्यते ऽङ्गीकृतसामान्यप्रवृत्तिनिमित्तो वा तदात्रापि प्राप्नोति। निमित्तविशेषाङ्गीकरणे ऽप्याभीक्ष्ण्यमङ्गीकृतं न तु कूटस्थत्वमिति विशेषे प्रमाणाभाव इति मत्वा प्रश्नः। अथ वा नित्यशब्दस्य कूटस्थत्वलक्षणोमुख्योर्थः शब्दान्तरसनिध्यनपेक्षणादाभीक्ष्ण्यं तु क्रियापदप्रयोगसमधिगम्यं गौणोर्थोऽविच्छेदोपलब्धिसामान्यमाश्रित्य तत्र प्रयोगात्। ततश्च गौणमुख्ययोर्मुख्ये संप्रत्यय इति कूटस्थवाचिनामेव द्विर्वचनेन भाव्यम्। येषां च प्रयोक्तृभिरुत्पादविनाशौ नोपलभ्येते ते नित्यास्तत्र नित्यशब्दस्य तत्पर्यायाणां च नित्यं कौटिल्ये गतौ ध्रुवमपाय इत्यादिनिपातनाच्छक्तो द्विर्वचनाभावः प्रतिपत्तुमिति विशेषानुपपत्त्यस्तति। हिमवानिति। कूटस्थेष्वविचालिष्विति। उभयोपादानं नित्यार्थाभिव्यक्त्यर्थं कूटस्थेष्वित्येतावत्युच्यमाने राशेरपि नित्यत्वं प्रतीयेत यस्माद्द्वयो न क्रियते। तथा चोच्यते। कूटस्थं राशिं कुरु नास्माद्द्वयः कर्तव्य इति। एवमविचालिष्वित्युते।

तद्यथा। नित्या पृथिवी। नित्यमाकाशमिति। अस्त्याभीक्ष्ण्ये वर्त्तते। तद्यथा। नित्यप्रहसितो नित्यप्रजल्पित इति। तद्य आभीक्ष्ण्ये वर्त्तते तस्येदं ग्रहणम्। अथ किमिदं वीप्सेति। आप्नोतेरयं विपूर्वात् इच्छायामर्थे सन् विधीयते। यद्येवं चिकीर्षति जि-

---

घृक्षमाणे यदा क्रियारहितं द्रव्यं भवति तदा तस्य नित्यत्वप्रसङ्गः। उभयोपादाने तु येषां उत्पादविनाशरहितास्ते नित्या इत्युक्तं भवति। नित्या पृथिवीति। अवयवानां विचालित्वेऽप्यवयविस्वभावा पृथिवी स्वरूपान्न चलतीति नित्योच्यते। तदिति। आभीक्ष्ण्यवचन एवात्र नित्यशब्दो गृह्यते न कूटस्थवचनः कूटस्थग्रहणे हि तद्वाचिनां सुबन्तानां स्वार्थ एव द्विर्वचनं स्यात् न चैवं लोके प्रयोगोऽस्ति प्रयुक्तानां चेदमन्वाख्यानं हिमवान् हिमवानित्युक्ते वीप्सा प्रतीयते न तु स्वार्थः सुबन्तानामेव च नित्यवीप्सालक्षणद्विर्वचनविधानेन तिङन्तानि नानुगृहीतानि स्युराभीक्ष्ण्यलक्षणे तु नित्यत्वे गृह्यमाणे तल्लक्षणं द्विर्वचनं तिङन्तानां वीप्सालक्षणं तु सुबन्तानामित्युभयानुग्रहः इतो भवति गौणोऽपि चार्थो लक्ष्यदर्शनवशादिहाश्रीयते यथा शीतोष्णाभ्यां कारिणि पार्श्वेनान्विच्छतीत्यादौ। यद्याभीक्ष्ण्ये द्विर्वचनं विधीयते किमर्थं वार्तिककारः क्रियासमभिहारे द्वे भवत इति वक्तव्यमाभीक्ष्ण्ये द्वे भवत इति वक्तव्यमिति वक्ष्यति। क्रियासमभिहारे द्विर्वचनं विधीयमानं यथा लोडन्तस्य भवति लुनीहिलुनीहीत्येवायं लुनातीति। तथापापच्यत इत्यादौ यङन्तस्य कस्मान्न भवति। उच्यते। णमुलावाभीक्ष्ण्ये विषये विहिताविति ताभ्यामेव तस्य द्योतितत्वादप्राप्तं द्विवचनं मत्वा तद्विधानम्। प्रत्ययद्विर्वचनाभ्यां सहिताभ्यामाभीक्ष्ण्यं द्योत्यत इति वार्तिककारः प्रदर्शयति। क्रियासमभिहारस्य विविधो भृशार्थः पौनःपुन्यं च। तत्र भृशार्थे द्विर्वचनस्याप्रसङ्ग एवाभीक्ष्ण्यमपि लोटाभिव्यक्तमिति तत्रापि तन्न प्राप्नोतीति विधीयते। तत्र यङः क्रियासमभिहाराव्यभिचाराभावाद्यङैव स्वार्थिकेन क्रियासमभिहारद्योतनाद्यङन्तस्य न भवति। यदा तु भृशार्थे यङ् तदा पौनःपुन्यप्रतिपिपादयिषायां द्विर्वचनं भवत्येव। पापच्यते पापच्यते इति। लोडपि भवति पापच्यस्व पापच्यस्वेति। लोट् तु विषयान्तरेऽपि विधानाद् व्यभिचरति क्रियासमभिहारमिति। द्विर्वचनसहित एव तं द्योतयतीति तदन्तस्यैव क्रियासमभिहारलक्षणद्विर्वचनप्रवृत्तिः। अथ नित्यतायां द्विर्वचनं विधीयमानं धातुमात्रस्य कस्मान्न भवति धातुर्हि क्रियावाची क्रियाधर्मश्चाभीक्ष्ण्यम्। नैतदस्ति। गृहीतसाधना क्रियाव्यवहारोपयोगिनो तिङन्तस्यैव भवति। न च धातुमात्रद्विवचनेन नित्यत्वं द्योत्यते इति धातुमात्रस्य द्विर्वचनाभावः। आप्नोतेरिति। व्युत्पत्तिप्रदर्शनेन क्रियाविशेषे योगरूढिर्वीप्साशब्द इति दर्शयति। इतरो रूढत्वमबुद्ध्वाह। यद्येवमिति। क रो-

षीर्षति इत्यत्रापि प्राप्नोति। नैष दोषः। नैवं विज्ञायते वीप्सायामभिधेयायामिति। कथं तर्हि कर्तृविशेषणमेतत्। वीप्सतीति वीप्सः वीप्सश्चेत्कर्त्ता भवतीति। कः पुनर्वीप्सार्थः। अनवयवाभिधानं वीप्सार्थः। अनवयवेन द्रव्याणामभिधानमेव वीप्सार्थः। अनवयवाभिधानं वीप्सार्थ इति चेज्जात्याख्यायां द्विर्वचनप्रसङ्गः *। अनवयवाभिधानं वीप्सार्थ इति चेज्जात्याख्यायां द्विर्वचनं प्राप्नोति। व्रीहिर्यव इति न वैकार्थत्वाज्जातेः। न वा एष दोषः। किं कारणम्। एकार्थत्वाज्जातेः। एकार्था जातिः। एकमर्थं प्रत्याययिष्यामीति जातिशब्दः प्रयुज्यते। अनेकार्थाश्रयत्वाच्च वीप्सायाः। अने-

---

त्यादिक्रियाभिः कटादीनां या व्याप्तुमिच्छा तद्वाचित्वाच्चिकीर्षतीत्यादेर्द्विर्वचनप्रसङ्गः। रूढत्वाश्रयेणाह। नैष दोष इति। चिकीर्षति चिकीर्षतीति द्विर्वचने आभीक्ष्ण्यमेव प्रतीयते न तु स्वार्थमात्रम्। नाभिधेया वीप्सा गृह्यते वीप्सावाचिनो द्वे भवत इति। किं तर्हि प्रयोक्तृधर्मो यथा आबाधो गतगत इति च्युते प्रियस्य चिरगमनेन पीडितो वाक्यं प्रयुङ्क्ते इति प्रतिपत्तिः। वीप्सश्चेत्कर्तेति। अत्र प्रयोक्ता कर्ता विवक्षितः। यदा पृथक् संख्ययायुक्ताननिरन्तरयोगमप्राप्तान सर्वानर्थान् क्रियया गुणेन वा युगपद्व्याप्तुम् वाक्यं वक्ति तदा वक्तृरिच्छाविशेषो द्विर्वचनेन द्योत्यते। कः पुनर्वीप्सार्थ इति। अर्थः प्रयोजनमेवं भूताया वीप्साया उपादाने किं प्रयोजनमिति प्रश्नः। अनवयवाभिधानमिति। साकल्येन द्रव्याणां क्रियागुणसंबन्धप्रतिपादनं वीप्साफलमित्यर्थः। जात्याख्यायामिति। जातौ पदार्थे साकल्येन द्रव्याणां प्रतिपत्तिर्भवति। यथा ब्राह्मणो न हन्तव्य इति सर्वब्राह्मणहननप्रतिषेधः प्रतीयते। न वैकार्थत्वादिति। यदि व्यक्तिव्यतिरिक्ता जातिरथ व्यक्तभेदहेतवो व्यक्तय एव जातिरुभयथाभेदाभावाज्जातिलक्षण एकोर्थः तत्र यथाग्न्यानयने चोदितेऽचोदितमपि पात्रं नान्तरीयकत्वादग्न्यानयनस्योपादीयते तथा जातौ चोदितायां द्रव्यं क्रियाङ्गभावेन प्रतीयते ततोनवयवाभिधानस्य भेदविषयत्वाज्जात्यभिधाने तदभावाद्द्विर्वचनाभावः। एकशेषेऽप्यस्मिन् वने शोभना वृक्षा इति कतिपयानामपि वृक्षाणां शोभनत्वेन प्रयोगदर्शनाद् अनवयवाभिधानाभावात् द्विर्वचनाभावः। ग्रामोग्रामो रमणीय इति तूक्ते निःशेषग्रामगतरमणीयत्वप्रतीतिः। तथास्मिन् वने वृक्षोवृक्षः शोभन इत्युक्ते सर्वेषामेव वृक्षाणां प्रत्येकं संनिवेशनिरपेक्षदर्शनीयत्वयोगप्रतीतिः। सर्वे वृक्षाःशोभनाः इत्यत्र तु सर्वनाम्ना वीप्सायाद्योतनाद्द्विर्वचनाभावः इह तु सर्वे माषा ब्राह्मणेभ्यो दत्ता इति यद्यपि कस्मै चित्त्रयो दत्ताः कस्मै चित् पञ्च तथापि प्रयोगाद्वीप्साभावो यदा त्वेकैकोदत्तस्तदा

कार्थाश्रया च पुनर्वीप्सा । अनेकार्थं संप्रत्याययिष्यामीति वीप्सा प्रयुज्यते । एकार्थत्वाज्जातेरनेकार्थाश्रयत्वाच्च वीप्सायाः जात्याख्यायां द्विर्वचनं न भविष्यति। निवर्त्तकत्वाद्वा * । अथ वा नानेन द्विर्वचनं निर्वर्त्यते किं तर्हि अद्विर्वचनमनेन निवर्त्यते । यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति । तत्रानेन निवृत्तिः क्रियते । नित्यवीप्सयोरर्थयोर्द्वे एव शब्दरूपे प्रयोक्तव्ये नाति बहुप्रयोक्तव्यमिति सर्वपदगतिग्रहणानर्थक्यं चार्थाभिधाने द्विर्वचनविधानात् * । सर्वग्रहणं चानर्थकम् । किं कारणम् । सर्वस्यैव हि द्विर्वचनेनार्थोऽवगम्यते नावयवस्य । पदग्रहणं चानर्थकम् । पदस्यैव हि द्विर्वचनेनार्थोऽवगम्यते नापदस्य । सगतिग्रहणं चानर्थकम् । सगतिकस्यैव हि द्विर्वचनेनार्थोऽवगम्यते नागतिकस्य । किं पुनरिदं वीप्सायां सर्वमभिधीयते । आहो स्विदेकम् । कश्चात्र विशेषः । वीप्साया सर्वाभि-

---

वीप्सासंभवान्माषोमाषो दत्त इति द्विर्वचनं भवति । वृत्तिकारैरप्युक्तम् । नाना वाचिनामधिकरणानां क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सेति। नानाभूतमर्थं द्रव्यलक्षणं येशब्दा ब्रुवन्ति तेषां यान्यधिकरणान्यभिधेयानि तेषां सद्भावविवक्षितानां पृथक् संख्यायुक्तानांप्रत्येकं क्रियागुणयुक्तानांप्रयोक्तुःक्रियया गुणेनवायुगपदेककाला व्याप्तुमिच्छा सा वीप्सा । तत्र नानावाचिशब्देन जातिशब्दनिरासः।युगपद्ग्रहणेन क्रमविवक्षायांद्विर्वचननिरासो यथास्मिन् वनेऽयं वृक्षःशोभनोऽयं वृक्षःशोभनइतिक्रमेणशोभनत्वप्रतिपादने बहूनपि शब्दान् प्रयुङ्क्ते। वीप्सा प्रयुज्यत इति । वीप्साविषयत्वाद्द्विर्वचनं वीप्साशब्देनोच्यते। निवर्तकत्वाद्वेति। नेदं द्विर्वचनस्य विधायकमिति जातिशब्दानां द्विर्वचनाभावः। द्रव्यशब्दानां तु यावदर्थं प्रयोगे प्राप्ते द्वयोरेव प्रयोग इति नियमः क्रियते । नातिबह्विति । बहुशब्दस्य वैपुल्यार्थत्वाद्बहुवचनाभावः । सर्वपदेति । यदा निवर्तकमिदं तदा सर्वादिग्रहणं न कर्तव्यमित्यर्थः। येषां हि बहूनां प्रयोगः प्राप्तः तेषां द्विर्वचनेनासौ निवर्त्तते न चावयवस्यापदस्य गतिसन्निधावगतेर्वा आवृत्तिप्रसङ्गः । अथ परेर्वर्जन इत्यादिषु विधायकेषु कथमवयवाद्विर्वचनाभावः। उच्यते। परेर्द्वे भवत इत्युक्ते समुदायसन्निधौ द्विशब्दः श्रुतः प्रत्यासत्त्या समुदायमेव संख्येयं प्रतिपादयतीति सर्वादेशः सिद्ध इति नार्थः सर्वग्रहणेन । किं पुनरिति । अनवयवाभिधानं वीप्सार्थ इति यदुक्तं तन्नोपपद्यत इति मत्वा प्रश्नः । ग्रामोग्राम इत्येकवचनं श्रूयते अर्थास्तु बहवस्तत्र किं श्रुतिप्रामाण्यादेकत्वावसायोऽथार्थवशाद्वीप्साविषयस्य शब्दस्य बह्वर्थत्वं यथैकशेषशब्दस्य द्व्यर्थत्वं बह्वर्थत्वं वा। कश्चात्र विशेष इति। परिगृहीतैकत्वानां बहूनाम-

धाने वचनाप्रसिद्धिः। वीप्सायां सर्वाभिधाने वचनं न सिध्यति। ग्रामोग्रमः। जनपदोजनपद इति। बहुवस्त्वर्थास्तत्र बहुषु बहुवचनमिति बहुवचनं प्राप्नोति। अस्तु तर्ह्येकम्। एकाभिधाने ऽसर्वद्रव्यगतिः। एकाभिधानेसर्वद्रव्यगतिर्न सिध्यति। अस्तु तर्हि सर्वाभिधानम्। ननु चोक्तं वीप्सायांसर्वाभिधाने वचनाप्रसिद्धिरिति। न वा पदार्थत्वात्*। न वा एष दोषः। किं कारणम्। पदार्थत्वात् पदस्यार्थो वीप्सा सुबन्तं च पदं ङ्याप्प्रातिपदिकाच्चैकत्वादिष्वर्थेषु स्वादयो विधीयन्ते न चैतत्प्रातिपदिकम्। यत्तर्हि प्रातिपदिकम्। इषदिषत्समित्समिदिति। एतदपि प्रत्ययलक्षणेन सुबन्तम्। न च प्रातिपदिकम्। अपर आह। न वा पदार्थत्वात्। न वा एष दोषः। किं कारणम्। पदार्थत्वात् पदस्यार्थो वीप्सा। सुबन्तं च पदम्। ङ्याप्प्रातिपदिकाच्चैकत्वादिष्वर्थेषु स्वादयो विधीयन्ते। न चैतत्प्रातिपदिकम् यत्तर्हि प्रातिपदिकम्। इषदिषत् समित्समिदिति। एतदपि प्रत्य

---

र्थानां वीप्सायामभिधानात्सर्वाभिधान एकाभिधाने वा नास्ति विशेष इति भावः। वीप्सायामिति। एवं चेत् ग्रामशब्देनोच्यन्ते तदैकत्वविरोधिबहुत्वसंख्योपजननादेकवचनमिष्टं न सिध्यति। एकाभिधाने ऽसर्वद्रव्यगतिरिति। यद्येकाभिधानमभ्युपगम्यते तदा सर्वद्रव्यगतिर्न प्राप्नोति। अस्तु तर्हीति। परिगृहीतैकत्वस्य सर्वस्याभिधानमित्यर्थः। पदस्यार्थ इति। निर्ज्ञातसंख्यस्यार्थस्य वीप्सायोग इत्यर्थः। उत्तरकालं तु सत्यपि बहुत्वे प्रादिपदिकत्वाभावाद्बहुवचनाभावो यथा पश्य धावतीति दर्शनक्रियापेक्षे सत्यपि कर्मत्वे द्वितीयाभावः। न चैतदिति। सुबन्तत्वादप्रत्यय इति प्रतिषेधात्। एतदपीति। न ङिसंबुद्ध्योरिति तु नलोपविषयमेव ज्ञापकं मन्यते। अपर आहेति। पूर्वमप्रातिपदिकत्वाद्बहुवचनाभाव उक्त इदानीमन्यथोच्यते संख्यान्तरेणानाविष्टस्य यत् बहुत्वं तस्य वाचकं द्योतकं वा बहुवचनमुत्पद्यते वीप्सायां तु परिगृहीतैकत्वानामर्थानां बहुत्वोपजननादन्तरङ्गत्वादेकवचनमुत्पन्नमिति स्वादिशास्त्रस्य कृतार्थत्वात्पुनरप्रवृत्तिः। ततो न चैतत्प्रातिपदिकमित्यस्यायमर्थः। संख्यान्तरानाविष्टं प्रातिपदिकमत्र नास्तीति। यत्तर्हीति। अर्थाभावात्स्वभावतो विवृत्तस्य प्रत्ययस्य लोपविधानद्वारेणानुत्पत्तिरेव प्रत्ययलक्षणायान्वाख्यायत इत्येकत्वानाविष्टमेतत्प्रातिपदिकमिति भावः। एतदपीति। प्रत्ययो लक्षणं यस्य तत्प्रत्ययलक्षणमेकत्वं तेन सुबन्तमेतदेकत्वाविष्टमर्थं प्रतिपादयति निवृत्ते हि प्रत्यये प्रकृतिरेवैकत्वयुक्तमर्थं प्रतिपादयति। यथा राजा तक्षेति नास्त्येक-

यल्लक्षणेन सुबन्तं न प्रातिपदिकम् । अथेह कथं भवितव्यम् । पचतिपचतितरां तिष्ठति । आहो स्वित् पचतितरां पचतितरां तिष्ठतीति । पचतिपचतितरां तिष्ठतीति भवितव्यम् । कथम् । द्विर्वचनं क्रियतामातिशायिक इति । द्विर्वचनं भविष्यति विप्रतिषेधेन । इहापि तर्ह्यातिशायिकाद्द्विर्वचनं स्यात् । आढ्यतरमाढ्यतरमानयेति। अस्त्यत्र विशेषः । अन्तरङ्ग आतिशायिकः । कान्तरङ्गता । ङ्याप्प्रातिपतिकादातिशायिकः । पदस्य द्विर्वचनम् । आतिशायिकोपि नान्तरङ्गः । कथम् । समर्थात्तद्धितोऽसावुत्पद्यते सामर्थ्यं च सुबन्तेन । अथ वा स्पर्द्धायामातिशायिको विधीयते । न चान्तरेण प्रतियोगिनं स्पर्धा गम्यते । एवं तर्हीह द्वावर्थौ वक्तव्यौ नित्यवीप्से चातिशयश्च । नचैकस्यप्रयोक्तुरनेकमर्थं युगपद्वक्तुं संभवोस्ति । तदेतत्प्रयोक्त्रर्यधीनं भवति एतस्मिंश्चापि प्रयोक्त्रर्यधीने क चित् काचित्प्रसृततरागतिर्भवति इह तावत् पचतिपचतितरां तिष्ठतीत्येषाप्रसृततरागतिर्यन्नित्यमुक्त्वातिशय उच्यते । इहेदानीमाढ्यतरमाढ्यतरमानये-

---

त्वस्याप्रतीतिः । एकैकमित्यत्र सत्यपि बहुव्रीहिवद्भावात्प्रातिपदिकत्वे परिगृहीतैकत्वस्यार्थस्य वीप्सायोगादन्तरङ्गत्वादेकवचनं भवति बहुत्वप्रतीतेस्तु बहिरङ्गत्वाद्बहुवचनाभावः । एतस्यैवार्थस्यैकैकस्य प्राचामिति निर्देशो लिङ्गम् । अथेहेति । विनापि च शब्देन पाकस्थानयोरत्र समुच्चय इति के चिदाहुः । अन्ये तु तिष्ठतीति शत्रन्तमाहुः । तिष्ठति देवदत्ते यज्ञदत्तः पक्त्रन्तरापेक्षया पचतिपचतितरामित्यर्थः । नित्यवीप्से चातिशयश्चेति । यद्यप्येते त्रयो ऽर्थाः तथापि प्रयोगभेदाश्रयेणैतदुक्तम् । तिङन्तेषु नित्यत्वातिशयौ द्वावर्थौ सुबन्तेषु वीप्सातिशयौ । न चैकस्येति । यद्यपि वृक्षा इत्यादौ युगपदनेकार्थाभिधानमस्ति तथापि प्रकृतार्थापेक्षयैतदुच्यते । नित्यतातिशययोर्वीप्सातिशययोश्च निमित्तभेदाद्युगपदभिधानासंभवः । प्रयोक्त्रर्यधीनमिति । नन्वध्युत्तरपदात् खविधानात्कथं केवलस्याधीनशब्दस्य प्रयोगः । अवृत्तिजाः वृत्तिजसदृशा अधीनादय इत्यदोषः । इनशब्देन वाधिशब्दस्याव्ययीभावः परायत्ततापतिपादनपरः । क चित्काचिदिति । क्रियाप्रकर्षः प्रतियोग्यपेक्षो बहिरङ्ग इति अन्तरङ्गं पौनः पुन्यं पूर्वं विवक्ष्यते । इह त्वाढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्ता एवाढ्या आनयनक्रियायामुपयुज्यन्त इति लब्धप्रकर्षा एव वीप्स्यन्ते । किं च । कृतद्विर्वचनात् तरपि सत्याढ्याढ्यतरमानयेति भाव्यम् । ततश्च प्रकारोर्थो गम्यते । न तु वीप्सा । तस्मात् प्राक् प्रकर्षो विवक्ष्यते ततो

त्वेषा प्रसृततरा गतिः यदतिशयमुक्त्वा वीप्साद्विर्वचनमुच्यते ।

परेर्वर्जने ॥ ५ ॥ परेरसमासे *। परेरसमासे इति वक्तव्यम् । इह मा भूत् । परित्रिगर्तं वृष्टो देवः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । परेर्वर्जन इत्येव सिद्धम् । परेर्वर्जन इत्युच्यते । न चात्र परिवर्जने वर्तते । कस्तर्हि । समासः । परेर्वर्जने वावचनम् *। परेर्वर्जने वेति वक्तव्यम् । परित्रिगर्तेभ्यो वृष्टो देवः परिपरित्रिगर्तेभ्यो वृष्टो देवः ॥

वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ॥ ८ ॥ असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्पृथङ्निर्देशानर्थक्यम् *। असूयाकुत्सनमित्येकोर्थः । कोपो भर्त्सनमित्येकोर्थः । असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्पृथङ्निर्देशोऽनर्थकः । न ह्यनसूयन् कुत्सयति न चाप्यकुपितो भर्त्सयते । ननु च भोः । अकुपिता अपि दृश्यन्ते दारकान् भर्त्संयमानाः । अन्ततस्ते तां शरीराकृतिं

---

वीप्सेति यथेष्टसिद्धिः ॥

परेर्वर्जने । परित्रिगर्तमिति । त्रिगर्तान्वर्जयित्वा वृष्टो देव इति वर्जनक्रियाकृतोपर्षत्रिगर्तानां संबन्ध इति परेः सन्निधाने वाक्यवत्समासे ऽपि प्रतीयत इति द्विर्वचनप्रसङ्गः । कस्तर्हि समास इति । जहत्स्वार्था वृत्तिरिति समास एव वर्ज्यमानोपसर्जने वर्तते । अवयवी त्वनर्थकी । यदाप्यजहत्स्वार्था वृत्तिरिति पक्षस्तदा वाक्ये केवले वर्जने परिर्वर्तते इति तत्रैव द्विर्वचनं समासे तु वर्ज्यमानार्थास्कन्दाद् द्व्यर्थः परिः केवले वर्जने न वर्तत इति सिद्धो द्विर्वचनाभावः । अत्र पक्षे न चात्र परिर्वर्जनेन वर्तत इत्यस्यायमर्थः । शुद्धवर्जने न वर्तते अन्य एव द्व्यर्थः परिः समासे । अन्यो वाक्ये शुद्धवर्जनविषयः । कस्तर्हि समास इति । समासविषयत्वात्परिरेव समासः । अन्य एव परिर्द्व्यर्थ इत्यर्थः । वाक्ये नित्यत्वाद् द्विर्वचनप्रसङ्गाद्वाह । परेरिति ॥

वाक्य । असूयाकुत्सनयोरिति । यद्यप्यसूयादयः परस्परस्माद् भिन्नास्तथापि कार्यकारणभावेनैकद्विषयत्वमेकार्थत्वं ज्ञेयं, तमेव कार्यकारणभावं दर्शयति । न ह्यनसूयन्निति । तत्र कुत्सनभर्त्सनाभावे ऽप्यसूया कोपश्च भवतो न तु कोपासूयाभावे भर्त्सनकुत्सने इति कोपासूययोर्द्विर्वचनं विधीयमानं भर्त्सनकुत्सनयोरपि तत्सद्भावात्सिध्यतीति कुत्सनभर्त्सनग्रहणमनर्थकं भवतीत्यर्थः । ननु चेति । कोपमन्तरेणापि भर्त्सनसद्भावात् पृथग्विधेयं द्विर्वचनमित्यर्थः । अत्राप्यस्ति कोप इति दर्शयति । अन्तत इति ॥ यद्यकुपिता भर्त्सयेरन् गुरवो नैव दारकास्तेभ्यो बिभियुरिति कोपं प्रदर्शयन्तो भर्त्स-

कुर्वन्ति या कुपितस्य भवति । एवं तर्ह्याह । साम्नैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः । लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥ १ ॥

एकं बहुव्रीहिवत् ॥ ९ ॥ इह कस्माद्बहुव्रीहिवद्भावो न भवति । एक इति । एकस्य द्विर्वचनसंबन्धेन बहुव्रीहिवद्भाव उच्यते । न चात्र द्विर्वचनं पश्यामः । एकस्य द्विर्वचनसंबन्धेनेति चेदर्थनिर्देशः *। एकस्य द्विर्वचनसंबन्धेनेति चेत् । अर्थनिर्देशः कर्तव्यः । द्विर्वचनमपि ह्यत्र कस्मान्न भवति । तस्माद्वाच्यमस्मिन्नर्थे द्वे भवतो बहुव्रीहिवत् चेति । न वा वीप्साधिकारात् *। न वा वक्तव्यम् । किं कारणम् । वीप्साधिकारात् नित्यवीप्सयोरिति वर्तते । अथ बहुव्रीहिवत्त्वे किं प्रयोजनम् । बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ । सुब्लोपः । एकैकम् । पुंवद्भावः । गतगता । यद्येवम् । सर्वनामस्वरस-

---

यन्ते ततः सर्वत्र भर्त्सने कोपसद्भावात् पृथग् भर्त्सनग्रहणं न कर्तव्यम् । कुत्सनभर्त्सनग्रहणसमर्थनायाह । साम्नैरिति । गुरवो हि हितैषित्वादकुप्यन्तोऽपि भर्त्सनं कुर्वते भर्त्स्यमानास्तु कुपितान् प्रतियन्ति तान् । विनाप्यसूयया कुत्सां कुर्वन्तीति पृथक् तयोः । निर्देशः सूत्रकारेणविहितः सूक्ष्मबुद्धिना ।

एकम् । इह कस्मादिति । केवलो बहुव्रीहिवद्भावोऽनेन विधीयते अनिर्दिष्टविषय इति मत्वा प्रश्नः । किं पुनरत्रानिष्टं यावता कृतेऽपि सुब्लुकि बहुव्रीहिवद्भावादपरः सुब् भविष्यति समासग्रहणं च नियमार्थं न तु विध्यर्थमिति प्रत्ययान्तत्वादेकइत्यस्याप्रातिपदिकत्वान्नैव वा सुब्लुक् प्राप्नोति एवं तर्ह्युदाहरणादिकं प्रदर्शिता इदं तूदाहरणमेकेति, अत्र हि पुंवद्भावः प्राप्नोति । एकस्येति । द्वे इत्यधिकारात् द्विर्वचनसन्नियोगेन विधीयमानो बहुव्रीहिवद्भावस्तदभावे न भवति । द्विर्वचनमप्यनेन विधीयमानमत्र प्राप्नोति मत्वाह । एकस्येति । नवेति । वीप्साशब्दः स्वरितत्वप्रतिज्ञानात् परेवर्जन इत्यादावर्थान्तरनिर्देशादाकाङ्क्षाया अभावात्तत् संबन्धमननुभूयेहैवोपतिष्ठते सत्यपि संभवे बाधकं भवतीति न्यायाद्वीप्सायां विधीयमानेन बहुव्रीहिवद्भावे न द्विर्वचनस्य बाधाप्रसङ्गादनेनैवोभयं विधीयते । अथेति । किं बहुव्रीहौ दृष्टं सर्वं कार्यमतिदिश्यते अथ किञ्चिदेवेति प्रश्नः । एकैकमिति । सुबन्तसमुदायस्य बहुव्रीहिवद्भावात् सुब्लुकि कृते पुनर्बहुव्रीहिवद्भावादेव सुबुत्पत्तिः । गतगतेति । उत्तरसूत्रेण द्विर्वचनबहुव्रीहिवद्भावौ । एकैकेत्यत्र तु पुंवद्भावे विशेषाभावः । अवग्रहेऽत्वत्रापि विशेषोऽस्ति । नात्र नित्या संहिता । एकैकयेत्यैक इत्येक इत्यवग्रहकरणात् अग्रेऽग्रे सूक्ष्मा इत्युदा-

समासान्तेषु दोषः * । सर्वनामस्वरसमासान्तेषु दोषो भवति । सर्वनामविधौ दोषो भवति । एकैकस्मै । न बहुव्रीहाविति प्रतिषेधः प्राप्नोति । सर्वनाम । स्वरः । नन सुसु । न ञ्सुभ्यामित्येष स्वरः प्राप्नोति । स्वर । समासान्तः । ऋक्‌ऋक् । पूःपूः । ऋक्पूरब्धूःपथामानक्ष इति समासान्तः प्राप्नोति । सर्वाममविधौ तावन्नदोषः । उक्तं तत्र बहुव्रीहिग्रहणस्य प्रयोजनम् । बहुव्रीहिरेव यो बहुव्रीहिस्तत्र प्रतिषेधो यथा स्याद् बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र माभूदिति । स्वरसमासान्तयोरपि प्रकृतं समासग्रहणमनुवर्तते तेन बहुव्रीहिं विशेषयिष्यामः । समासो यो बहुव्रीहिरिति ॥

---

ह्वरणाच्च । ननसुसुइति । आबाधे चेति द्विर्वचनम् । ननकरोति सुसुजागर्तीत्येवमादिवाक्यैकदेश उदाहृतः । अथ नञ्सुभ्यामित्यन्तोदात्तत्वेप्राप्ते सति केन स्वरेण भाव्यम् । अत्र हि चत्वारः स्वराः प्राप्नुवन्ति । समासान्तोदात्तत्वं पूर्वपदप्रकृतिस्वरो नञ्सुभ्यामित्यन्तोदात्तत्वमाम्रेडितानुदात्तत्वं च । तत्र कार्यातिदेश इदमेव कार्याणां विधायकमिति परत्वादाम्रेड़ितानुदात्तत्वमनेन बाध्यते । शास्त्रातिदेशे विरुद्धस्य स्वाश्रयस्यातिदेशेन निवर्तनान्न भाव्यमाम्रेडितानुदात्तत्वेन । यथा च नञ्सुभ्यामित्यस्य समासग्रहणानुवृत्त्यानतिदेशादप्रवृत्तिरेवं पूर्वपदप्रकृतिस्वरस्यापीति समासान्तोदात्तत्वप्रसङ्गः । उच्यते । नञ्सुभ्यामित्यत्रैव वनं समास इत्यतः सिंहावलोकितन्यायेन समासग्रहणमनुवर्तते न तु बहुव्रीहौप्रकृत्येत्यत्र तेन पूर्वपदप्रकृतिस्वरो ऽतिदेशेन भवन् समासान्तोदात्तत्वं बाधते । ऋक् ऋगिति । समाससमात्राद्विधीयमानो बहुव्रीहेरपि दर्शनादकारो बहुव्रीहिवद्भावात् प्राप्नोति । उक्तं तत्रेति । विभाषादिक्समास इत्यतो न बहुव्रीहावित्यत्रबहुव्रीहिग्रहणानुवर्तनाद् बहुव्रीहिरेव यो बहुव्रीहिर्मुख्यस्तस्य सर्वनामसंज्ञानिषेध इत्यतिदेशान्न प्रवर्तते । स्वरसमासान्तयोरिति । स्वरे व्याख्यातम् । समासान्ते व्याख्यायते समासान्ता इत्यत्र समासाच्च तद्विषयादित्यतः समासग्रहणमनुवर्तते तेन मुख्यसमासपरिग्रहादतिदेशात् समासान्ताप्रसङ्गः । समाससमात्रस्य समासग्रहणेन विशेषणादर्थाद्बहुव्रीहेरपि विशेषणात्तेन बहुव्रीहिं विशेषयिष्याम इत्येतद्भाष्यमुपपद्यते । अन्येत्वाहुः बहुव्रीहौ संख्येये डजबहुगणादित्यतः ऋक्पूरब्धूरित्यत्र बहुव्रीहिग्रहणं समासाच्च तद्विषयादित्यतः समासग्रहणं च संबन्धानुवृत्त्यानन्तरैर्योगैः संबन्धमगच्छदनुवर्तते तदुभयं वाक्यभेदेन संबध्यते तेन ऋगाद्यन्तात् समासादकारप्रत्ययो भवति बहुव्रीहेस्तु समासदेव न त्वतिदेशादित्यर्थः संपद्यते । अथ ननेत्यत्र बहुव्रीहिवद्भावान्नलोपः कस्मान्न भवति । वनं समास इत्यतः समासग्रहणसंबन्धानुवृत्त्या पुंवद्भावमविशेषयन्न लोपे ऽनुवर्तते इत्यदोषः ॥

कर्मधारयवदुत्तरेषु ॥११॥ कर्मधारयवत्त्वे कानि प्रयोजनानि । कर्मधारयवत्त्वेप्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि । सुब्लोपः । पटुपटुः । पुंवद्भावः । पटुपट्वी । अन्तोदात्तत्वम् । पटुपटुः ॥

प्रकारे गुणवचनस्य ॥ १२ ॥ गुणवचनस्येति किमर्थम् । अग्निर्माणवको गौर्वाहीकः । प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः * । प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः । सर्वे हि शब्दाः प्रकारे वर्तमानाः गुणवचनाः संपद्यन्ते । तेनेहापि प्राप्नोति । अग्निर्माणवकः । गौर्वाहीक इति । सिद्धं तु प्रकृत्यर्थविशेषणत्वात् * । सिद्धमेतत् । कथम् । प्रकृत्यर्थविशेषणत्वात् । प्रकृत्यर्थो विशिष्यते । नैवं विज्ञायते प्रकारे वर्तमानस्य गुणवचनस्येति । कथं तर्हि गुणवचनस्य शब्दस्य द्वे भवतः प्रकारे वर्तमानस्येति । अथ वा प्रकारे गुणवचनस्येत्युच्यते सर्वस्य शब्दः प्रकारे वर्तमानो गुणवचनः संपद्यते । तत्र प्रकर्षगतिर्विज्ञास्यते । साधीयो यो गुणवचन इति । कश्च साधीयः । प्रकारे च प्राक् च प्रकारात् । अथ वा प्रकारे गुणवचनस्येत्युच्यते । सर्वस्य शब्दः प्रकारेवर्त्तमानो गुणवचनः संपद्यते त एवं विज्ञास्या-

---

कर्म । कालककालिकेत्यादौ न कोपधाया इति प्रतिषेधात् पुंवद्भावो बहुव्रीहिवद्भावेन न सिध्यति पूर्वपदप्रकृतिस्वरश्च प्राप्नोतीति कर्मधारयवद्भावाधिकारः ॥

प्रकारे । गुणवचनस्येति । किमर्थमिति । क्रियमाणेऽपि गुणवचनग्रहणेऽनिष्टप्रसङ्ग इति प्रश्नः । अग्निर्माणवक इति । अग्निशब्दो वह्नौ वृत्तः सोयमिति सादृश्यनिमित्तादभेदोपचारान्माणवके वर्तत इति द्रव्ये पूर्वं संवृत्तः संप्रत्यपि द्रव्यवचन इति गुणवाचित्वाभावान्न द्विरुच्यते एवं गौर्वाहीक इति गोशब्दः सास्नादिमति वर्तित्वा पूर्ववद्वाहीके वर्तते । प्रकारे सर्वेषामिति । अग्निशब्दोग्निगतं तैक्ष्ण्यं माणवके प्रतिपादयितुं प्रयुज्यत इति गुणशब्दः । एवं गोशब्दः सास्नादिमद्गतजाड्यप्रतिपादनाय वाहीके प्रयुज्यते गुणगुणिनोश्चात्र विषये नित्यमभेदोपचाराद्भेदनिबन्धनषष्ठ्यभावः । सिद्धं त्विति । द्विर्वचनस्य प्रकृतिः स्थानी इति तदर्थो विशिष्यते न तु प्रकारः तत्र सर्वस्य गुणवचनत्वाद्व्यभिचाराभावात्तद्ग्रहणाद्गुणवचनो यः शब्दो निर्ज्ञातस्तस्य सादृश्ये द्योत्ये द्वे भवत इति सूत्रार्थः । ननु वक्ष्यत्येतत् त एवं विज्ञास्यामः प्राक् प्रकाराद्यो गुणवचन इति तत्को ऽनयोरर्थयोर्भेदः । उच्यते । इह प्रतिज्ञामात्रं कृतं सिद्धं त्विति तत्र तूपपत्तिर्वक्ष्यते । तत्र प्रकर्षगतिरिति । सामर्थ्याद गुणवचनत्वे लब्धे पुनर्गुणवचनग्रहणं प्रकर्षप्रतिप-

मः। प्राक्प्रकाराद्यो गुणवचन इति। आनुपूर्व्ये द्वे भवत इति वक्तव्यम्*। मूलेमूलेस्थूलाः। अग्रेअग्रे सूक्ष्माः। स्वार्थे ऽवधार्यमाणेनेकस्मिन् द्वे भवत इति वक्तव्यम्*। अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि। अवधार्यमाण इति किमर्थम्। अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि द्वौ देहि त्रीन् देहि। अनेकस्मिन्निति किमर्थम्। अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि। माषमेव देहि। किं पुनः कारणं न सिध्यति। अनवयवाभिधानं वीप्सार्थं इत्युच्यते। अवयवाभिधानं चात्र गम्यते। अतस्त्वावयवाभिधानम्। यो ह्युच्यते ऽस्मात्कार्षापणादिह भवद्भ्यां माषंमाषं देहीति। माषंमाषमसौ दत्वा पुनः शेषं पृच्छति किमनेन क्रि-

---

त्यर्थं सुपात्तमित्यर्थः। प्राक् प्रकारादिति। गुणवचनग्रहणसामर्थ्यादवस्थाविशेषः परिगृह्यते। इह च सादृश्यं प्रकार आश्रीयते न तु भेदः पटुपटुरिति ह्युक्ते पटुसदृशः प्रतीयते प्रकारवचने जातीयरित्यत्र सादृश्यं प्रकारः केषांचिन्मतेन गृह्यते ऽन्येषां तु भेदः प्रकारः। अत्र केचिदाहुः। गुणोपसर्जनद्रव्यवाचिनोपि द्विर्वचनं भवति शुक्लशुक्लः पट इति। गुणमात्रवाचिनोपि शुक्लशुक्लं रूपमिति। अन्ये तु गुणविशिष्टद्रव्यवाचिन एव द्विर्वचनं मन्यते मूलेमूल इति। अग्रमध्यमूलानि त्रयो भागाः तत्रैकमेव सूक्ष्ममग्रं मूलं च अन्येषां तु भागानामपेक्षातो ऽग्रमूलव्यपदेशो ऽधः संनिवेशापेक्षोग्रव्यपदेशः। उपरि संनिवेशमपेक्ष्य मूलव्यपदेशः। नचैकरूपं भागानां स्थौल्यं सौक्ष्म्यं वा किं तर्हि यथामूलमुपचीयते स्थौल्यं यथाग्रं च सौक्ष्म्योपचय इति वीप्साया अभावः। स्वार्थ इति। स्वार्थग्रहणमर्थान्तराभावप्रदर्शनार्थम्। अस्मात्कार्षापणादिति। अनेकमाषसमुदायः कार्षापणः। तत्र सर्वमाषा दानक्रियया न व्याप्यन्ते किं तर्हि द्वावेवेति वीप्साभावः। भिन्नार्थत्वाच्चानेन द्विर्वचनेनैकशेषो न बाध्यते। इह भवद्भ्यां माषो देहीति एकैकं देहीत्यर्थो न गम्यते। माषं माषं देहीति तूक्ते एकैकदा न प्रतीतिः। द्वौ देहीति। माषं माषौ माषान् देहीत्यस्यार्थस्य प्रदर्शनपरमेतत्। माषशब्दस्य हि द्विर्वचनाभावः। प्रदर्शयितव्यः तत्र यथेच्छं देहीत्यस्यार्थस्य प्रदर्शनादवधारणस्याभावः। माषमेव देहीति। अवधारणमत्रास्तीति प्रतिपादयति। किं पुनरिति। यथा द्वावेव माषौ निर्ज्ञातौ यदा दानक्रियया व्याप्येते तदा माषं माषं देहीति वीप्सायां द्विर्वचनं भवति एवमनेकमाषसमुदायादपि कार्षापणात् द्वयोरस्ति दानक्रियया व्याप्तिरिति सिद्धं द्विर्वचनमिति भावः। इतर आह। अनवयवाभिधानमिति। एवं मन्यते वीप्सायां संनिहि-

यतामिति। यः पुनरुच्यते इमं कार्षापणमिह भवद्भ्यो माषं माषं देही- ति माषंमाषमसौ दत्त्वा तूष्णीमास्ते। चापले द्वे भवत इति वक्तव्य- म् *। अहिरहिर्बुध्यस्वबुध्यस्व। न चावश्यं द्वे एव यावद्भिः शब्दैः सोर्थो गम्यते तावन्तः प्रयोक्तव्याः। अहिरहिर्बुध्यस्वबुध्यस्वबुध्यस्वेति॥ क्रिया- समभिहारे *। क्रियासमभिहारे द्वे भवत इति वक्तव्यम्। स भवा- न्लुनीहिलुनीहीत्येवायं लुनाति। पुनीहिपुनीहीत्येवायं पुनाति। । आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम्*। भुक्त्वाभुक्त्वा व्रजति। भोजंभोजं- व्रजति। डाचि च द्वे भवत इति वक्तव्यम् *। पटपटायति। घट-

---

तस्यार्थस्य न कस्य चिद्वर्जनमस्ति इह तु वर्जनमस्तीति वीप्साया अभावः। इमं का- र्षापणमिति। अत्र वीप्सायां द्विर्वचनमिति निःशेषमाषदानावगमः। चापल इति। आशुप्रतिपादनं चापलम्। अहिरहिरिति। यद्यहमेनं बोधयामि तदा हन्यतएवायम- हिनेति ज्ञात्वाशु प्रतिपादनाय वाक्यप्रयोगः। न चावश्यमिति। एवं च ब्रुवतानेन नेदं शास्त्रीयं द्विर्वचनं किं तर्हि परप्रत्यायनायानेकस्तत्स्वपदप्रयोग इत्युक्तं भवति। एवं चाहिरहिरित्याम्रेडितानुदात्तत्वाभावाद्यथाप्राप्तः स्वरो भवतीत्याहुः। क्रियासमभिहार इति। लोडन्तस्यैवेदं द्विर्वचनं न यङन्तस्य लोटः समुच्चये ऽपि विधानात्क्रियासमभि- हाराभिव्यक्तौ केवलस्य सामर्थ्याभावाद्यङ् तु क्रियासमभिहारविषय एवेति तद्द्योतने स्वयं सामर्थ्यान्नापेक्षते द्विर्वचनम्। आभिक्ष्ण्य इति। ननु चाभीक्ष्ण्यं नित्यतेति नि- त्यवीप्सयोरिति सिद्धं द्विर्वचनम्। नैतदस्ति। पुनः पुनः क्रियाया उत्पत्तिराभीक्ष्ण्य- म्। तथा हि। भुक्त्वाभुक्त्वा व्रजतीत्युक्ते सत्यपि क्रियाविच्छेदे पुनर्भुङ्क्ते पुनर्व्रजतीति क्रियावृत्तिः प्रतीयते। नित्यता क्रियाया अविच्छेदो यथा जीवतिजीवतीत्युक्ते जीवत्ये- वायमिति प्रतीयते न त्वावृत्तिः न ह्यसौ जीवित्वा म्रियते मृत्वा वा जीवति जीवनमेव दीर्घमविच्छिन्नं प्रतीयते। यत्तूक्तं भाष्ये तद्य आभीक्ष्ण्येवर्तत इति। नित्यशब्दस्य वि- षयोपलक्षणार्थमाभीक्ष्ण्यविषयो यो नित्यशब्दः तस्य ग्रहणमित्यर्थः। तथा च वृत्ति- कारा आहुः। यां क्रियां कर्ता प्राधान्येनानुपरमन् करोति तन्नित्यम्। अन्ये त्वाहुः भु- क्त्वाभुक्त्वा व्रजतीत्यादौ क्त्वाणमुलन्तस्य द्विर्वचनं प्राप्नोति तिङन्तस्य च। तत्राभीक्ष्ण्य- संशब्दनेन यो विहितस्तदन्तस्य यथा स्यात्तिङन्तस्य मा भूदिति नियमार्थमिदम्। अ- न्ये तु प्रत्ययेनाभीक्ष्ण्यस्य द्योतनादप्राप्तं द्विर्वचनं विधीयत इत्याहुः। अथ क्रियासम- भिहारे द्वे भवत इति सिद्धे आभीक्ष्ण्ये द्वे भवत इति किमर्थं सूच्यते। क्रियासमभि- हारसंशब्दनेन यो विधीयते तदन्तस्यैव द्विर्वचनमिति कश्चिद्विपर्यस्येदिति वाक्यद्वयो- पन्यासः। डाचीति। विषयसप्तमीयम्। तेनानुत्पन्न एव डाच्यकृतटिलोपस्य पटदित्या-

घटायति शरशरायति। पूर्वप्रथमयोरर्थातिशयविवक्षायाम्*। पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम्। पूर्वंपूर्वं पुष्यन्ति। प्रथमंप्रथमं पच्यन्ते। डतरडतमयोः समसंप्रधारणायां स्त्रीनिगदभावे*। डतरडतमयोः समसंप्रधारणायां स्त्रीनिगदभावे द्वे भवत इति वक्तव्यम्। उभाविमावाढ्यौ। कतरा कतरानयोराढ्यता। सर्व इमे आढ्याः। कतमा कतमा एषामाढ्यतेति। कर्मव्यतिहारे सर्वनाम्नः समासवच्च बहुलं यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य*। कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम्। समासवच्च बहुलम्। यदा न समासवत्प्रथमैकवचनं भवति तदा पूर्वप-

---

द्विर्वचनं ततोऽव्यक्तानुकरणादिति डाच्। ततष्टिलोपः। ततो नित्यमाम्रेडिते डाचीति पररूपविधानमच्छब्दस्य डाचीति परसप्तम्यामपि टिलोपात्प्राक् द्विर्वचनमित्यस्यार्थस्य ज्ञापकमाहुः। तदयुक्तम्। पतदित्यादेः कृतटिलोपस्याप्यच्छब्दस्य संभवा त्तस्माद् डाचीति विषयसप्तम्येवाश्रयणीया। प्रयोगदर्शनवशाच्चाव्यक्तानुकरणाद् डाचीदं द्विर्वचनं न तु सूत्रान्तरविहितं इति द्वितीया करोतीत्यादौ। द्विर्वचनाभावः। केचित्तु नित्यमाम्रेडिते डाचीति पररूपविधानमेव व्यक्तानुकरणाद् डाचि द्विर्वचनमनुमापयतीत्याहुः। यदा तु पररूपमकारान्तानुकरणादितीतिप्रत्याख्यायते तदा द्विर्वचनं वक्तव्यमेव। बहुलग्रहणमचान्यैराश्रीयते तेन द्वितीया करोतीत्यादौ द्विर्वचनाभावो डाचीति परसप्तम्यामपि नित्यादपि टिलोपात्पूर्वं द्विर्वचनं च सिध्यति। पूर्वप्रथमयोरिति। केचिदाद्यादिविवक्षायामिति पठन्ति। अन्ये त्वर्थातिशयविवक्षायामिति। तत्र भिन्नार्थत्वाद् द्विर्वचनेनातिशायिको न बाध्यत इत्याहुः। तथा हि पूर्वतरं भुङ्क्त इत्युक्ते किमात्मसाध्यक्रियान्तरापेक्षं भोजनस्य पूर्वत्वमथभोक्त्रन्तरसाध्यभोजनापेक्षमिति संदेहः। एवं पूर्वतरं वपुष्यतीत्ययमप्यर्थो गम्यते न तावदयं किसलयितो यावदपुष्यतीति। पूर्वं पूर्वं पुष्यतीत्यस्मात्तु पुष्पितेभ्योऽन्येभ्य पूर्वं पुष्यतीति अर्थः प्रतीयते। अत एवाद्यादिविवक्षायामित्युच्यते। आदेरादिविवक्षायामादेर्वातिशयविवक्षायां द्विर्वचनमित्यर्थः। डतरडतमयोरिति। डतरडतमान्तस्य द्वे भवतः। आढ्यत्वादिना समेन तुल्येन गुणेन संप्रधारणायांनिरूपणायां विषये। तथाहि। उभाविमावाढ्यावित्युक्ते ऽनेकप्रकाराढ्यत्वसंभवात् प्रतिपत्ता किंकृतमनयोराढ्यत्वमिति संदिहानः पृच्छति कतराकतरानयोराढ्यतेति। स्वार्थे चैतद् द्विर्वचनम्। स्त्रीनिगदो भावः। स्त्रीलिङ्गशब्दाभिधेयो भूतिः ऋद्धिः संपद् आढ्यतेति। निगद्यत इति निगदः। नौ गदेत्यप्। स्त्रिया निगदः स्त्रीनिगदः। कर्मव्यतिहार इति। क्रियाव्यतिहार इत्यर्थः। तत्र द्विर्वचनं नित्यं भवति।

दस्य । अन्योन्यमिमे ब्राह्मणा भोजयन्ति । अन्योन्यस्य भोजयन्ति । इतरेतरं भोजयन्ति । इतरेतरस्य भोजयन्ति । स्त्रीनपुंसकयोरुत्तरपदस्य वाम्भावः * । स्त्रीनपुंसकयोरुत्तरपदस्य वाम्भावो वक्तव्यः । अन्योन्यमिमे ब्राह्मण्यौ भोजयतः । अन्योन्यां भोजयतः । इतरेतरमिमे ब्राह्मण्यौ भोजयतः । इतरेतरां भोजयतः । अन्योन्यमिमे ब्राह्मणकुले भोजयतः । इतरेतरां भोजयतः इतरेतरमिमे ब्राह्मणकुले भोजयतः । इतरेतरां भोजयतः ॥

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ १५ ॥ अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसंख्यानम् * । अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसंख्यानं कर्तव्यम् । द्वन्द्वम् स्कन्दविशाखौ । द्वन्द्वं नारदपर्वतौ । अत्यन्तसहचरित इति किमर्थम् । द्वौ युधिष्ठिरार्जुनौ । लोकविज्ञात इति किमर्थम् । द्वौ देवदत्तयज्ञदत्तौ । अथ द्वन्द्वमिति किं निपात्यते । द्वन्द्वमिति पूर्वपदस्य चाम्भावो निपात्यते । उत्तरपदस्य चात्वम् । नपुंसकत्वं च वक्तव्यम् । उक्तं वा * । किमुक्तम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति तच्च नपुंसकत्वमनिपात्यम् ॥

पदस्य ॥ १६ ॥ पदात् ॥ १७ ॥ आकुतः पदाधिकारः । प्रागप-

---

समासवद्भावस्तु बहुलम् । तत्रबहुलग्रहणादन्योन्यशब्दे समासवद्भावाभावात्सुब्लुक् न भवति नापि समासान्तोदात्तत्वमित्याम्रेडितानुदात्तत्वं भवति । इतरेतरशब्दे तु नित्यः समासवद्भाव इति सुब्लुक् समासस्वरो भवतः । स्त्रीनपुंसकयोरिति । उत्तरपदस्य वा विभक्तिस्तस्या आम्भावो ऽन्यथानेकाल्त्वात् सर्वस्योत्तरपदस्यामभावः स्यात् । तत्र सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति स्त्रीनपुंसकयोः पुंवद्भावे कृते पक्षे आम्विधिः । वार्त्तिकेषु कर्मधारयवदिति न संबध्यत इति सुब्लोपादि न भवति ॥

द्वन्द्वम् । अत्यन्तसहचरित इति । अभिव्यक्तिग्रहणादतिप्रसङ्ग इति वचनम् । द्वौयुधिष्ठिरार्जुनाविति । लोकविज्ञानादभिव्यक्तावेतौ न त्वत्यन्तसहचरितौ । पूर्वपदस्येति । द्विश्री द्विश्री इति स्थिते कर्मधारयवद्भावात् सुब्लुकि कृते पूर्वपदावयवस्यैकारस्याम्भावः उत्तरपदावयवस्यात्वं समासान्तोदात्तत्वं च भवति ।

पदस्य । अथ किमर्थं पदस्येति अधिक्रियते यावता वक्ष्यमाणानि कार्याणि पदविष-

दान्ताधिकारात् *। अपदान्तस्य मूर्द्धन्य इति वक्ष्यत्यतः प्राक्पदाधिकारः। अथ पदादित्यधिकारः आकुतः,पदादिति प्राक् सुपि कुत्सनात्। पदादित्यधिकारः प्राक्सुपि कुत्सनात्। कुत्सने च सुप्यगोत्रादाविति वक्ष्यति प्रागेतस्मात्। यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात् *। यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात्कर्तव्यः। इह वचने ह्यपदान्तस्याप्राप्तिः *। इह क्रियमाणे अपदान्तस्याप्राप्तिः स्यात्। उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येति इहैव स्यात् कुमार्यौ किशोर्यौ। इह न स्यात् कुमार्यः किशोर्यः। एकादेश उदात्तेनोदात्तः। इहैव स्यात्। वृक्षौ प्लक्षौ। इह न स्यात् वृक्षाः प्लक्षाः। न वा पदाधिकारस्य विशेषणत्वात् *। न वा ऊर्ध्वं पदाधिकारात् कर्तव्यौ

---

यास्येवार्थे प्रयुक्तस्यैवेदमन्वाख्यानं पदं चार्थे प्रयुज्यते। न च समर्थपरिभाषोपस्थानार्थः पदाधिकार उपयुज्यते यस्मात्पदद्वयनिबन्धनेषु कार्येषु समानवाक्ये निघातयुष्मदस्मदादेशा इति वक्ष्यते।कुत्वादीनित्वेकपदनिबन्धनान्येव।।न च भसंज्ञकस्य व्यावृत्त्यर्थः पदाधिकारो,ऽवयवस्य भत्वेपि समुदायपदावयवत्वाश्रयकुत्वादिप्रवृत्त्यभ्युपगमाद्दकारि दोक्ष्यतीति। उच्यते। न लोपाद्यर्थं पदाधिकारः।असति हि तस्मिन् यथा राजभ्यामित्यादौ प्रातिपदिकान्तस्य नकारस्य लोपो भवत्येवं राजानावित्यादावपि स्यात्। पदाधिकारे तु प्रातिपदिकस्य पदस्य योऽन्तो नकारस्तस्य लोपः।तथासंयोगान्तस्यपदस्यलोपोभवति गोमानित्यादौ न तु गोमन्तावित्यादौ मो नो धातोरिति नकारः प्रशानित्यादौभवतिनतु प्रशामावित्यादौ आकुतइति। कस्यचित्कार्यस्यासिद्धिंमत्वापृच्छति। प्रागिति। अपदान्तस्येति विरोध्युपादानात्प्रागतःपदाधिकारः। प्राक्सुपिकुत्सनादिति। यदित्वत्र पदादित्यनुवर्तेत देवदत्तोयत्पचतिपूतीत्यत्रैव तिङन्तस्यनिघातःस्यान्नतुपचति पूतीत्यत्र यणेकादेशस्वर इति। उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येति यणाश्रयः स्वरएकादेश उदात्तेनोदात्त इत्येकादेशस्वरश्चेडायावेत्यस्मात्परौ कर्तव्यौ। इहवचनेहीति। पदस्येति स्थानषष्ठीत्युदात्तस्वरितयोर्यो यण् ततः परो योऽनुदात्तस्तदन्तस्य पदस्य स्वरितत्वमलोऽन्त्यस्य भवतीति वाक्यार्थः। एवमुदात्तयोर्य एकादेशस्तदन्तस्य पदस्यालोऽन्त्यस्योदात्त आदेश इति स्यात्। कुमार्य इति। हलः स्वरप्राप्तिरत्र नास्तीति व्यञ्जनस्याविद्यमानत्वाभावः। न वेति। इह पदस्येति संबन्धसामान्ये षष्ठी सातूत्तरेषु वाक्येषु यथायोगं संबन्धविशेषे वतिष्ठते। क्वचित्स्थानेषष्ठी क्वचिदवयवषष्ठी तत्रयणेकादेशस्वरयोःपदस्येत्यनुवृत्तं कार्यिविशेषणार्थं न तु कार्यिप्रतिपत्त्यर्थं तेन पदावयवयोरनुदात्ते का-

यथैकादेशस्वरः । किं कारणम् । पदाधिकारस्य विशेषणत्वात् । पदस्येति नैषा स्थानषष्ठी । का तर्हि । विशेषणषष्ठी । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । प्रत्याख्यायते स्थानषष्ठी । अन्तग्रहणाद्वा नलोपे *। अथ वा यदयं नलोपः प्रातिपदिकान्तस्येत्यन्तग्रहणं करोति तज् ज्ञापयत्याचार्यः विशेषणषष्ठ्येषा न स्थानषष्ठीति ॥

अनुदात्तं सर्वमपदादौ ॥ १८ ॥ सर्ववचनं किमर्थम् । सर्ववचनमनादेरनुदात्तार्थम् * । सर्ववचनं क्रियते अनादेरप्यनुदात्तत्वं यथा स्यादिति । तिङ्ङतिङ इति इहैव स्यात् । देवदत्तः पचतीति । इह न स्यात् देवदत्तः करोतीति । सर्ववचनमनादेरनुदात्तार्थमिति चेल्लुटि प्रतिषेधात्सिद्धम् * । सर्ववचमनादेरनुदात्तार्थमिति चेत्तन्न । किं कारणम् । लुटि प्रतिषेधात्सिद्धम् । यदयं लुटि प्रतिषेधं शास्ति तज् ज्ञापयत्याचार्यः अनादेरप्यनुदात्तत्वं भवतीति । कथं कृत्वा ज्ञा-

---

देशयोः स्वरविधानादनन्त्ययोरपि भवति । किं वक्तव्यमिति । षष्ठीस्थाने योगेति नियमादलभ्या विशेषणषष्ठीति प्रश्नः । प्रत्याख्यायत इति । योगे प्रत्याख्याते यत्रान्यः संबन्धोऽस्ति यथोदुपधाया गोह इति । तत्र विशेषणविशेष्यभाव आश्रीयते गोहोऽङ्गस्य योपधा तस्याऊद्भवतीति । यत्र तु विशिष्टः संबन्धो न प्रतीयते तत्र स्थानसंबन्ध एवाश्रीयते यथास्तेर्भूरिति । तदुक्तं भाष्ये शब्दस्य तु शब्देन कोऽन्यः संबन्धोऽस्त्यन्यदतः स्थानादिति । एवं यथैकादेशस्वरयोः स्थान्यन्तरोपादानात् पदस्येत्यवयवषष्ठी । मो नो धातोरित्यादौ स्थानषष्ठी । प्रयोगमूलत्वाद्व्याकरणस्मृतेर्यथाप्रयोगं लक्षणव्यवस्थापनात् । अन्तग्रहणाद्वेति । पठ्यमाने योगे विशेषणषष्ठी न लभ्यत इति लिङ्गेनासौ प्रतिपाद्यते यदि पदस्येति स्थानषष्ठ्येव स्यात्तु अलोऽन्त्यस्येत्यन्त्यस्य लोपस्य सिद्धत्वादन्तग्रहणमनर्थकं स्यात्तस्मादन्तग्रहणात् क्वचिद्विशेषणषष्ठ्यपि विज्ञायते प्रातिपदिकान्तस्य चेत्यसमासनिर्देशः तेन प्रातिपदिकस्य पदस्य योऽन्तो नकारस्तस्य लोप इति सूत्रार्थः ।

अनुदात्तम् । सर्ववचनमिति । वक्ष्यमाणोऽभिप्रायः । सर्ववचनमनादेरिति । असति सर्वग्रहणे पदादित्यधिकारादादेः परस्येत्यनेन पदस्येति स्थानषष्ठ्या आदावल्यस्य संहारादादेरेवोदात्तस्यानुदात्तत्वं स्यात् न त्वनादेः सर्वग्रहणे तु पदस्येति विशेषणषष्ठीविज्ञानात् पदस्य सर्वोऽवयवोऽनुदात्तो भवतीत्यर्थः संपद्यते । पचतीति । धातुस्वरेणाद्युदात्तं पदं शप्तिपोः पित्वादनुदात्तत्वात् । करोतीति । प्रत्ययस्वरेण मध्योदात्तत्वम् ।

पकम् । न हि लुडन्तमाद्युदात्तमस्ति । अलोन्त्यप्रसङ्गस्तु * । अलोन्त्यविधिश्च प्राप्नोति । यत्रह्यादिविधिर्न भवति अलोन्त्यस्य विधिना तत्र भवितव्यम् । तत्र को दोषः । तिङ्ङतिङ इति इहैव स्याद्देवदत्तयज्ञदत्तौ कुरुतः । इह न स्याद् देवदत्तः करोति । लृटि प्रतिषेधात्सिद्धम् * । यदयं न लृडिति प्रतिषेधं शास्ति तज् ज्ञापयत्याचार्योऽनन्त्यस्याप्यनुदात्तत्वं भवतीति । कथं कृत्वा ज्ञापकम् । न हि लृडन्तमन्तोदात्तमस्ति । ननु चेदमस्ति भोक्ष्यइति । उक्तं वा * । किमुक्तम् । न वा पदाधिकारस्य विशेषणत्वादिति । इदं तर्हि प्रयोजनम् । युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावाविति वक्ष्यति । ते वांनावादयः सविभक्तिकस्य यथा स्युरिति । एतदपि नास्ति प्रयोजनम् । पदस्येति हि वर्तते । विभक्त्यन्तं च पदं तत्रान्तरेण सर्वग्रहणं सविभक्तिकस्यैव भविष्यति । भवेत्सिद्धं यत्र विभ-

---

नहि लुडन्तमिति। लुङन्तः कश्चिदन्तोदात्तः कश्चिन्मध्योदात्त इति प्रश्नः। कर्त्तव्यादौ निघाताप्रसङ्गात् किं न लुडिति निषेधेन निषेधात्तु लिङ्गात्पदस्येति विशेषणषष्ठी विज्ञायते न ततः स्थानषष्ठीति स्थानषष्ठीशेषस्यादेः परस्येत्यस्योपस्थानाभावात् अनादेरप्यनुदात्तत्वं भविष्यति । अलोन्त्यप्रसङ्गस्त्विति । अलो ऽन्त्यस्येत्यस्यापवाद आदेः परस्येति तत्र लिङ्गादपवादेपनीते उत्सर्गेण प्रवर्त्यमिति भावः । कुरुत इति। लसार्वधातुकस्य प्रत्ययस्वरेणान्तोदात्तत्वं विकरणस्य तु शेषनिघातः । न विकरणस्वरो लसार्वधातुकस्वरं बाधते। तासिर्लसार्वधातुकानुदात्तत्वविधानेन ज्ञापनात् । अत्रापि लिङ्गमुच्यते लृटीति। गत्यर्थलोटेत्यनेन लृडन्तस्य निघातः प्रतिषिध्यते सर्वं च लृडन्तं लसार्वधातुकानुदात्तत्वेन मध्योदात्तमिति निघातस्य प्रसङ्गाभावात्तार्थो निषेधेन तदेतस्माल्लिङ्गादलोन्त्यविध्यभावः। भोक्ष्य इति । एकादेश उदात्तेनोदात्त इत्यन्तोदात्तमेतत् । ततश्चात्र निघाताभावार्थत्वादलिङ्गं लृटि निषेध इत्यलोन्त्यनिवृत्त्यर्थं सर्वग्रहणं कर्तव्यम् । उक्तं वेति । असत्यपि सर्वग्रहणे भूयो लक्ष्यसिद्धये अनुदात्तविधौ विशेषणषष्ठ्याश्रयिष्यते न तु स्थानषष्ठीत्यर्थः। सविभक्तिकस्येति । अन्यथा केवलयोर्युष्मदस्मदोरादेशाः स्युः तत्र षष्ठ्येकवचने ङसिङसोर्वेति पक्षे पूर्वैकादेशे दोषाभावे ऽपि वचनान्तरेषु दोषप्रसङ्गः सर्वग्रहणे तु सति युष्मदस्मद्भ्यां तदवयवः समुदायो लक्ष्यत इति युष्मदस्मदवयवस्य सर्वस्य पदस्य वान्नावादय आदेशा भवन्ति । पदस्येति हि वर्तत इति । तेन युष्मदस्मद्वतः पदस्यादेशा भवन्ति इत्यर्थः । भवेत्सिद्धमिति । यत्र केवले युष्मदस्मदी पदे तत्र तद्वतः प्रतिपत्तेरयोगादिति

क्त्यन्तं पदम्। यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति। ग्रामो वां दीयते। ग्रामो नौ दीयते। जनपदो वां दीयते। जनपदो नौ दीयते। ननु च स्थग्रहणं क्रियते तेन सविभक्तिकस्यैव भविष्यति। अस्त्यन्यत् स्थग्रहणस्य प्रयोजनम्। किम्। श्रूयमाणविभक्तिविशेषणं यथा विज्ञायेत। यत्र विभक्तिः श्रूयते तत्र यथा स्युरिह मा भूवन्। इति युष्मत्पुत्रो ददाति इत्यस्मत्पुत्रो ददातीति। समानवाक्ये निघातयुष्मदस्मदादेशाः *। समानवाक्य इति प्रकृत्य निघातयुष्मदस्मदादेशा वक्तव्याः। किं प्रयोजनम्। नानावाक्ये मा भूवन्निति। अयं दण्डो हरानेन। ओदनं पच तव भविष्यति। मम भविष्यति। पश्यार्थैश्च प्रतिषेधः समानवाक्य इति प्रकृत्य वक्तव्यः। इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं तत्र प्रतिषेधः स्यात्। ग्रामस्त्वां संप्रेक्ष्य संदृश्य समीक्ष्य गतः। इह न स्यात्। ग्रामस्तव स्वं संप्रेक्ष्य गतः॥

---

भावः। स्थग्रहणमिति। षष्ठ्यादिष्वादेशविधानाद्युष्मदस्मदोस्तत्स्थत्वे लब्धे स्थग्रहणं निमित्तसहितयुष्मदस्मत्प्रतिपत्त्यर्थं विज्ञायत इति सविभक्तिकयोरादेशसिद्धिः। यथाश्वस्थमानीयतामित्युक्ते सहैवाश्वेनानीयते। श्रूयमाणविभक्तिविशेषणमिति। यत्र श्रूयते विभक्तिः तत्र तत्स्थत्वं युष्मदस्मदोर्न तु तस्यां लुप्तायाम्। प्रत्ययलक्षणेन च कार्यं शास्त्रं वातिदिश्यते न तु तात्स्थ्यं तस्यापौरुषेयत्वात् तदेवमन्यार्थत्वात् स्थग्रहणस्य सर्वग्रहणं सविभक्तिकादेशार्थं कर्तव्यम्। इति युष्मत्पुत्र इति। इति शब्दात्पदात्परयोः षष्ठ्यन्तयोर्युष्मदस्मदोर्वान्नसौ न भवतः। समानवाक्य इति। अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति लौकिकं वाक्यलक्षणम्। इह तु वाक्यं परिभाषितम्। आख्यातं साव्ययकारकविशेषणं वाक्यमिति। आख्यातमित्येकत्वं विवक्ष्यते। अयं दण्डो हरानेनेति वाक्यद्वयमेतत् अयं दण्डोस्ति हरानेनेति तिङन्तद्वययोगात् तत्रानेनेति सर्वनाम्ना दण्डस्य परामर्शात् करणत्वादस्ति सामर्थ्यमिति निघातप्रसङ्गः। ओदनं पचेति। त्वत्कर्तृकेण पाकेन त्वत्स्वामिकोमत्कर्तृकेणपाकेनमत्स्वामिकश्चौदनो भविष्यति इत्येवंरूपपाकस्य युष्मदस्मदर्थस्य च व्यपेक्षास्तीत्यादेशप्रसङ्गः। पश्यार्थैश्चेति। विधौ समानवाक्यग्रहणं कृतं प्रतिषेधस्यायमिति वाक्यान्तरारम्भः। तेन समानवाक्ये पश्यार्थैर्युक्ते युक्तायुक्ते च युष्मदस्मदर्थे आदेशप्रतिषेधः। संप्रेक्ष्य संदृश्यसमीक्ष्येति। पर्यायत्वाद्विकल्पेनैषां प्रयोगः। भाष्ये तु पश्यार्थैरित्यर्थग्रहणप्रयोजनकथनायैषामुपादानम्।

सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥ युष्मदस्मदोरन्यतरस्यामनन्वादेशे *। युष्मदोरन्यतरस्यामनन्वादेश इति वक्तव्यम्। ग्रामे कम्बलस्तव स्वम्। ग्रामे कम्बलस्ते स्वम्। ग्रामे कम्बलो मम स्वम्। ग्रामे कम्बलो मे स्वम्। अनन्वादेशइति किमर्थम्। अथो ग्रामे कम्बलस्ते स्वम्। अथो ग्रामे कम्बलो मे स्वम्। अपर आह। सर्व एव वान्नावादयो ऽनन्वादेशे विभाषा वक्तव्याः। कम्बलस्ते स्वम्। कम्बलस्तव स्वम्। कम्बलो मे स्वम्। कम्बलो मम स्वम्। अनन्वादेशइति किमर्थम्। अथो कम्बलस्ते स्वम्। अथो कम्बलो मे स्वम्। न तर्हीदानीमिदं वक्तव्यं सपूर्वाया विभाषेति वक्तव्यम्। किं प्रयोजनम्। अन्वादेशार्थम्। अन्वादेशे विभाषा यथा स्यात्। अथो ग्रामे कम्बलस्ते स्वम्। अथो ग्रामे कम्बलस्तव स्वम्। अथो ग्रामे कम्बलो मे स्वम्। अथो ग्रामे कम्बलो मम स्वम् ॥

तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७॥ किमिदं तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम्। कुत्सनाभीक्ष्ण्ययोरर्थयोर्गोत्रादीनि भवन्ति तिङः पराण्यनुदात्तानि भवन्ति। आहो स्विदनुदात्तविशेषणम्। तिङः पराणि गोत्रादीनि कुत्सनाभीक्ष्ण्ययोरर्थयोरनुदात्तानि भवन्तीति। तिङो गोत्रादिषुकुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम्। तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं क्रियतेपाठविशेषणम्। पाठो विशेष्यते। अनुदात्तविशेषणे ह्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणम् *। अनुदात्तविशेषणे हि सत्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणं कर्तव्यं स्यात्। चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरिति कुत्सनाभीक्ष्ण्ययोरिति वक्तव्यं स्यात्। अनुदात्तग्रहणं वा *। अथ वा यान्यनुदात्तानीति वक्त-

---

सपू। युष्मदस्मदोरिति॥ सपूर्वाया प्रथमायाविभाषेति यो विकल्पः सो ऽनन्वादेशे भवति अन्वादेशे तु नित्य आदेशविधिरित्यर्थः। व्यवस्थितविभाषेयमित्युक्तं भवति। अन्वादेशार्थमिति। विरोधात्पूर्ववाक्यं युष्मदस्मदोरन्यतरस्यामनन्वादेश इति बाध्यते तेनान्वादेशानन्वादेशयोः सपूर्वायाः प्रथमाया विभाषा भवति॥

तिङो। पाठविशेषणमिति। पठ्यत इति पाठः संनिवेशविशेषो ग्रन्थसंदर्भ उच्यते

व्यं स्यात् । तस्मात् सुष्ठूच्यते । तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम् * । अनुदात्तविशेषणे हि सत्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणम् अनुदात्तग्रहणं वेति ॥

तिङ्ङतिङः॥२८॥ अतिङ इति किमर्थम्। पचतिकरोति। अतिङ्ग्रहणमनर्थकं समानवाक्याधिकारात् * । अतिङ्ग्रहणमनर्थकम्। किं कारणम् । समानवाक्य इति वर्त्तते। न च समानवाक्ये द्वे तिङन्ते स्तः ॥

निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्॥ ३० ॥ निपातैरिति किमर्थम् । यत्कूजति शकटम् । यतौ कूजति शकटी॥ यन् रथः कूजति । निपातैरिति शक्यमवक्तुम्। कस्मान्न भवति यत्कूजति शकटम् । यतौ कूजती शकटी । यन् कूजति रथ इति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । नैषा परिभाषेह शक्या विज्ञातुम् । इह हि दोषः स्यात्। यावद्यथाभ्याम् । इह न स्यात् । यावदस्य वै-

---

एतयोरेवार्थ योगेर्गोत्रादिव्यपदेशं प्रतिपद्यन्ते नान्यत्रेत्यर्थः । अयं चार्थो योगविभागेन लभ्यते । तिङोगोत्रादीनीत्येको योगोऽनुदात्तविध्यर्थः । कुत्सनाभीक्ष्ण्ययोरिति द्वितीयो गोत्रादीनीत्यस्यानुवृत्त्यापरिभाषार्थः । इह शास्त्रे गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येवग्राह्याणीति ॥

तिङ् ङतिङः । पचतिकरोतीति विनापि चशब्देन समुच्चयावगमात् संबन्धसद्भावः॥ न चेति । आख्यातं साव्ययकारकविशेषणं वाक्यमिति निघातादिव्यवस्थायै वाक्यस्य परिभाषणादाख्यातमित्येकत्वस्य विवक्षितत्वादेकैकस्याख्यातस्य वाक्यत्वाद्द्वयोराख्यातयोरेकवाक्यताभावः । आख्यातमित्येकत्वस्याविवक्षाशङ्का स्यादिति द्वितीयं वाक्यलक्षणं वाक्यकारेण पठितमेकतिङ् वाक्यमिति । अनेकशब्देन यत्नेन संख्या प्रतिपाद्यते ।

निपातैः । यत्कूजतीति । इणः शतरि इणो यणिति यणि रूपम् । यतीति । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति प्राप्तिः । यन्निति । संयोगान्तलोपस्यासिद्धत्वात्तन्मध्यपतितस्य नुमस्तद्ग्रहणेन ग्रहणात्प्राप्तिः । लक्षणप्रतिपदोक्तयोरिति । लाक्षणिकस्यानुमानेन रूपावधारणं प्रतिपदोक्तस्य तु प्रत्यक्षेण । प्रत्यक्षानुमानयोश्चविलम्बितप्रतीतिरूपत्वात्प्रत्यक्षं बलीयः । यावदिति । यत्परिमाणमस्येति वतुबन्तस्य यावच्छब्दस्य लाक्षणिकत्वात् क्षणवदित्यस्य लेडन्तस्य निघातप्रतिषेधो न स्यात् निपातस्यैव तु ग्रहणं स्यात् तत्र यदा प्रायोगिकं रूपमाश्रीयते तदा शास्त्रानपेक्षणाल्लक्षणप्रतिपदोक्तयोरिति परिभाषा नोपतिष्ठते । शास्त्रापेक्षायां वा प्रत्यक्षानुमानयोः समकक्ष-

थः सर्वेजनेभ्यः कृणवत्। चण् णिद्विशिष्टश्चेदर्थे द्रष्टव्यः। अयं च वै मरिष्यति। अयं चेन्मरिष्यति। न च पितृभ्यः पूर्वेभ्यो दास्यति। अप्रायश्चित्तिकृतौ च स्याताम्॥

छन्दस्यनेकमपि साकाङ्क्षम्॥ ३५॥ किमुदाहरणम्। यदाहि असौ मत्तो भवति। अथ यत्तपति। नैतदस्ति। एवमत्र हियुक्तमपरं यद्युक्तम् ततउभयोरप्यनिघातः। इदं तर्हि अनृतं हि मत्तो वदति पाप्मा एनं पुनाति। एकं खल्वपि। अग्निर्हि पूर्वमुदजयत्तमिन्द्रोनुदजयदिति॥

तुपश्यपश्यताहैः पूजायाम्॥३९॥ पूजायामिति वर्त्तमाने पुनः पूजाग्रहणं किमर्थम्। अनिघातप्रतिषेधाभिसंबद्धं तदभूत्। यदि तदनुवर्त्तते। इहाप्यनिघातप्रतिषेधः प्रसज्येत। इष्यते चात्र निघातप्रतिषेधः। यथा पुनस्तत्र यावद्यथा इत्येताभ्यामनिघाते प्राप्ते अनिघातप्रतिषेधउच्यते इहेदानीं केनानिघाते प्राप्तेऽनिघातप्रतिषेध उच्यते। इहापि यद्वृत्तान्नित्यमित्येवमादिभिः॥

एहिमन्ये प्रहासे लृट्॥ ४६॥ किमर्थमिदमुच्यते। न गत्यर्थ-

---

त्वाश्रयणे। तत्र निपातग्रहणमिह प्रकरणे एतत्परिभाषानाश्रयणस्य लिङ्गम्। चेदर्थ इति। आशङ्कावधारणादिकश्चेदर्थः। अयं च वै मरिष्यतीत्याशङ्का गम्यते। अप्यर्थो वा अपि मरिष्यत्ययं न च दास्यतीति॥

छन्द। हेतुमभङ्गावस्य द्योतको हिरित्यनेकमपि तिङन्तं हियुक्तं भवति। उभयोरप्यनिघात इति। लक्षणान्तरेण हि चेति निपातैर्यद्यदीति च। दर्यापि हे हियुक्ते तथापि द्वितीयस्यानिघातकारणान्तरसद्भावादेकं हियुक्तमित्युक्तम्। इदं तर्हीति। अनिघातकारणान्तराभावात्। पाप्मा एन उच्यते। यस्मान्मत्तोऽनृतं वदति तस्मादनृतवदनदोषेण न युज्यत इत्यर्थः। उदजयदिति। एकमजयदितिपदमट्स्वरेणाद्युदात्तमपरमनुदात्तं तत्र पूर्वेणानेकस्य निघातनिषेधे प्राप्ते क्व चिदनेकस्य क्व चिदेकस्य यथा स्यादिति वचनम्। तत्र छन्दसिदृष्टानुविधानाद्यथाप्रयोगं व्यवस्था।

तुपश्य। अनिघातेति। यावद्यथाभ्यामित्यनेनानिघातः प्राप्तः पूजायां नानन्तरमिति प्रतिषिद्धः। इह त्वनिघात इष्यत इति पुनः पूजाग्रहणम्।

एहि। आङ्पूर्वादिणो लोट् सिप् हिरादेशः। एहि मन्य इति। अप्रहासेपि वैयधि

लोटा लृडित्येव सिद्धम्। नियमार्थोऽयमारम्भः। एहि मन्ये प्रहास एव। क्व मा भूत्। एहि मन्ये रथेन यास्यसीति॥

जात्वपूर्वम्॥ ४७॥ किमिदमपूर्वग्रहणं जातुविशेषणम्। जातुशब्दादपूर्वात्तिङन्तमिति। आहो स्वित्तिङन्तविशेषणम्। जातुशब्दात्तिङन्तमपूर्वमिति। जातुविशेषणमित्याह। कथं ज्ञायते। यदयं किंवृत्तं च चिदुत्तरमित्याह। कथं कृत्वा ज्ञापकम्। अत्राप्यपूर्वमित्येतदनुवर्तते। न चास्ति संभवो यत्किंवृत्तं च चिदुत्तरं स्यात्तिङन्तं चापूर्वम्। अत्रापि तिङन्तविशेषणमेव स्यात्। कथम्। किंवृत्ताच्चिदुत्तरात्तिङन्तमपूर्वमिति। यत्तर्ह्याहो उताहो चानन्तरमित्यनन्तरग्रहणं करोति। एतस्याप्यस्ति वचने प्रयोजनम्। किम्। शेषप्रक्लृप्त्यर्थमेतत्स्यात्। शेषे विभाषा। कश्च शेषः। सान्तरं शेष इति। अन्तरेणाप्यनन्तरग्रहणं प्रक्लृप्तः शेषः। कथम्। अपूर्वं इति वर्तते॥

शेषे विभाषा॥ ५०॥ कश्च शेषःसपूर्वः शेष इति॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
अष्टमाध्यायस्य प्रथमे पादे प्रथममाह्निकम्॥

---

करणाद् उत्तमप्रयोगः। हि त्वा रथेनयास्यसीत्येवमहं मन्य इत्यर्थः। यास्यसीत्यस्य निघातो भवत्येव। उत्तमस्यातन्त्रत्वादेहि मन्यसे रथेन यास्यामीति अत्रापि नियमादनिघाताभाव इति केचिदाहुः॥

जात्व। किमिदमिति। निमित्तनिमित्तिसन्निधौ सति संदेहात्प्रश्नः। कथं ज्ञायत इति। निमित्तस्याप्राधान्यात्सति प्रधाने विशेषणसंबन्धयोग्येन युक्तो विशेषणसंबन्ध इति प्रश्नः। तिङन्तं चापूर्वमिति। चिदुत्तरात्किंवृत्तात्परस्य तिङन्तस्य विद्यमानपूर्वत्वात्। अत्रापीति। कश्चिद्भुङ्क्ते इत्यादावेवानिघातो यथा स्यात् कश्चित्पुरुषो भुङ्क्ते इत्यादौ व्यवधाने माभूदित्येवमर्थं तिङन्तविशेषणमपूर्वग्रहणं स्यात्। यत्तर्हीति। तिङन्तविशेषणे ह्यपूर्वग्रहणेनान्तरमेवापूर्वं भवतीत्याहो देवदत्तः पचतीति सपूर्वत्वादेवानिघातो न भविष्यतीति किमनन्तरग्रहणेन तस्मान्निमित्तविशेषणमपूर्वग्रहणमित्यनुमीयते तथा चाहो देवदत्तः पचतीति निमित्तस्यापूर्वत्वादनिघातः स्यादिति कर्तव्यमनन्तरग्रहणम्।

इति महाभाष्यप्रदीपे अष्टमाध्यायस्य प्रथमे पादे प्रथममाह्निकम्॥

गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ॥ ५१ ॥ लृटः प्रकृतिभावे कर्त्रन्यत्व उपसंख्यानं कारकान्यत्वात् * । लृटः प्रकृतिभावे कर्तुर्यदन्यत् कारकं तस्यान्यत्व उपसंख्यानं कर्त्तव्यम् । आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे । किं पुनः कारणं न सिध्यति । कारकान्यत्वात् । न चेत्कारकं सर्वान्यदित्युच्यते । सर्वान्यच्चात्र कारकम् । किं पुनः कारणं सर्वान्यतप्रतिषेधेनाश्रीयते न पुनरसर्वान्यद्विधानेनाश्रीयते कर्त्ता चात्रासर्वान्यत्कारकम् । तत्र कर्तृसामान्यात्सिद्धम् । कर्तृसामान्यात्सिद्धमिति चेत् तद्भेदेऽप्यन्यसामान्ये प्रकृतिभावप्रसङ्गः * । कर्तृसामान्यात्सिद्धमिति चेत्तद्भेदे कर्तृभेदे अन्यस्मिन्कारके समाने प्रकृतिभावः प्राप्नोति । आहर देवदत्त शालीन् यज्ञदत्त एतान् भोक्ष्यते । एवं तर्हि व्यक्तमेव पठितव्यम् । न चेत्कर्त्ता सर्वान्यो भवतीति । चेत्कर्ता सर्वान्य इति चेदन्याभिधाने प्रतिषेधमेके * । न चेत्कर्त्ता सर्वान्य इति चेद् अन्याभिधाने प्रतिषेधमेके इच्छन्ति । उह्यन्तां देवदत्तेन शालयः यज्ञदत्तेन भोक्ष्यन्ते । भोक्ष्यन्त इति प्राप्नोति । भोक्ष्यन्तइति चेष्यते । सिद्धं तु तिङोरेकद्रव्याभिधानात् * । सिद्धमेतत् । कथम् । तिङोरेकद्रव्याभिधानात् । यत्र तिङ्भ्यामेकं द्रव्यमभिधीयते तत्रेतिवक्तव्यम् ॥

---

गत्यर्थ । लृट इति । निघातप्रतिषेध एव प्रकृतिभावः । कर्तुरिति पञ्चमी कर्तुरन्यत्कारकं यदि तस्यान्यत्व इत्यर्थः । आगच्छेति । भोजनगमनयोरेको देवदत्तः कर्ता कर्म तु ग्रामो गमनस्यौदनो भोजनस्येति कर्मभेदादनिघातप्रसङ्गः । कारकशब्देन सूत्रे कारकव्यक्तिराश्रीयते तेन कर्मत्वाभेदेऽपि ग्रामौदनव्यक्तिभेदात् कारकभेदः । किं पुनरिति । कारकमत्र न सर्वमन्यत्कर्मभेदेऽपि कर्तुरेकत्वादित्यनिघातो भविष्यतीत्यर्थः । आहरेति । अत्रापि न सर्वान्यत्कारकं शालिलक्षणकर्मैकत्वात् । अन्याभिधान इति । यदैकमेव कर्म लकारद्वयवाच्यं कर्तृभेदश्च तदाप्यनिघात इष्यते । कर्तृशब्दोपादाने तु न सिध्यति । एकग्रहणं न विकल्पार्थमपि त्वागमपारंपर्यप्रतिपादनार्थम् । सिद्धं त्विति । एकद्रव्यं कारकशक्त्याविशिष्टं कर्म कर्तृ वा यदा लोट्लृड्भ्यामुच्यते तदाऽनिघातः । न चेदमपूर्वं कर्तव्यम् । सूत्रेणैवास्यार्थस्य संग्रहात् । तथा हि लोट्लृटोः संनिधानात्तद्वाच्यमेवात्र कारकमाश्रीयते लोडन्तलृडन्तयोश्चार्थलक्षणो निमित्तनिमित्तिभावः ।

आमएकान्तरमामन्त्रितमनन्तिके ॥ ५५ ॥ कस्यायं प्रतिषेधः । आम एकान्तर ऐकश्रुत्यप्रतिषेधः* । आम एकान्तर ऐकश्रुत्यस्यायं प्रतिषेधः । कथं पुनरप्रकृतस्यासंशब्दितस्य ऐकश्रुत्यस्य प्रतिषेधः शक्यो विज्ञातुम् । अनन्तिक इत्युच्यते । अनन्तिकं च किम् । दूरम् । दूरात्संबुद्धौ चैकश्रुतिरुच्यते । अस्तिप्रयोजनमेतत् । किं तर्हीति । निघातप्रसङ्गस्तु *। निघातस्तु प्राप्नोति । आम् भो देवदत्ता ३ आमन्त्रितपदानुदात्तत्वं प्राप्नोति । सिद्धं तु प्रतिषेधाधिकारे प्रतिषेध-

---

आमए । कस्यायमिति । आम् भो देवदत्तेत्युदाहरणम् । आमिति निपातत्वादाद्युदात्तं भो इति भवच्छब्दस्य विभाषा भवद्भगवदघवतामोच्चावस्येति रुत्वे लोपे च रूपं तस्य पदात्परस्यामन्त्रितस्य चेति निघातः देवदत्तेत्यस्य निघातः प्राप्तोऽनेन प्रतिषिध्यते भोः शब्दस्य नामन्त्रित इत्यनेनाविद्यमानवत्त्वनिषेधादेकान्तरत्वं निघाते च निषिद्धे एकश्रुतिदूरात्संबुद्धावित्येकश्रुतिः प्राप्नोति दूराद्धूते चेति प्लुतोदात्तत्वं च । तत्र स्वरितस्यार्द्धह्रस्वोदात्तादौदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात्कार्यं स्वरितादिति सिध्यर्थमिति वचनात् प्लुतोदात्ते कर्त्तव्ये पूर्वत्रासिद्धमित्येकश्रुतेरसिद्धत्वात् प्लुतोदात्तत्वमेव भवति नैकश्रुतिः तत्रानेकप्रतिषेधसंभवात्प्रश्नः । यदि प्रकरणमपेक्ष्यते तदा निघातस्यैव निषेधेन भाव्यं नैकश्रुतेः । अथ सामर्थ्यात्प्राप्तस्य निषेधः । तदैकश्रुतेरेव निषेधो न निघातस्य । ऐकश्रुत्यस्येति । एका श्रुतिर्यस्य तदेकश्रुतिः तस्य भाव ऐकश्रुत्यम् । कथं पुनरिति । प्रकृतस्यवा प्रतिषेधो भवति यथा नाज्झलाविति सवर्णसंज्ञायाः संशब्दितस्य वा यथा न संप्रसारणे संप्रसारणमिति । इतरः सामर्थ्यमाश्रित्याह । अनन्तिक इत्युचत इति । ततश्चार्थादेकश्रुतिः संनिहिता । कथं पुनरनन्तिकं दूरम् । उच्यते । कश्चिन्नञ्समासोर्थान्तरस्य वाचक. । यथानादर इति परिभवः अवज्ञानं वोच्यते न त्वादराभावः एवमनृतामित्राधर्मादयोऽर्थान्तराभिधायिनः । तथानन्तिकशब्दो ऽपि दूरार्थाभिधायी। तत्रा नुदात्तत्वं पचसि देवदत्तेत्यादौ सावकाशं बाधित्वा एकश्रुतिः प्राप्तानेन प्रतिषिध्यते । निघातस्त्विति । अपवादे प्रतिषिद्धे उत्सर्गस्य न्यायप्राप्तत्वात् । सिद्धं त्विति । निघातप्रतिषेधाधिकारे वचनान्निघातो ऽपि प्रतिषिध्यते अन्यथैकश्रुतिदूरात् संबुद्धावित्युक्ता नाम एकान्तर इत्युच्येत एवं ह्यामन्त्रितमनन्तिक इति न वक्तव्यं भवति । केवलस्य च निघातस्यैकश्रुत्या बाधितत्वात्प्रतिषेधोऽनर्थक इति सामर्थ्याद् उभयप्रतिषेधः । ननु चैकश्रुतिर्देवदत्ता ३ आगच्छेत्यादौ सावकाशा कथमाम् भो देवदत्ता३ इत्यादौ निघातस्य बाधिका प्रत्युत परत्वादेकश्रुतेर्निघात एव बाधक इति तस्यैवात्र प्रसङ्ग इति प्रतिषेधो ऽपि तस्यैव न्याय्यस्तस्य च

वचनात् * । सिद्धमेतत् । कथम् । प्रतिषेधाधिकारेप्रतिषेधवचन-सामर्थ्यान्निघातो न भविष्यति । नैव वा पुनरत्र ऐकश्रुत्यं प्राप्नोति । किं कारणम् । अनन्तिक इत्युच्यते । अन्यच्च दूरमन्यदनन्तिकम् । यद्येवं प्लुतोपि तर्हि न प्राप्नोति । प्लुतोऽपि हि दूरादित्युच्यते । इष्ट-मेवैतत्संगृहीतमाम् भो देवदत्त इत्येव भवितव्यम् ॥

यद्धितुपरं छन्दसि ॥ ५६ ॥ किमर्थमिदमुच्यते । यदाद्यैः सर्वैरे-तै निघातकारणैर्योगे ऽनिघात उच्यते । यथैव पूर्वैर्योगे एवं परै र-पि । अत उत्तरं पठति । यद्धितुपरस्य छन्दस्यनिघातोन्यपरप्रति-षेधार्थः । * । यद्धितुपरस्य छन्दसि अनिघात उच्यते अन्यपरस्य प्रतिषेधार्थः । अन्यपरस्य प्रतिषेधो मा भूदिति । जाये स्वो रोहावे-हि । अथेदानीं रोहावेत्यनेन युक्ते एहीत्यस्य कस्मान्न भवति । लो-

---

प्रतिषेधे एकश्रुतिः स्यादेव । नैष दोषः । पदद्वयनिबन्धननिघातापेक्षयाधिकनिमित्तं दूरात् संबोधनमपेक्षमाणा एकश्रुतिः सतिशिष्टस्वरो भवतीति तयैव भाव्यम् । अन्यच्चे-ति । अन्तिकसदृशं यन्न दूरं न चान्तिकं तदनन्तिके गृह्यते । अन्यथादूरग्रहणमेव कु-र्यात् । अथ वा दूरमध्ययोः सामान्यशब्दो ऽपि दूरे निघातस्याप्राप्त्या तत्प्रतिषेधसाम-र्थ्याभिधाय्यनन्तिकशब्दः । स्वरव्यञ्जनचाम् भो देवदत्तेत्यादौ अन्तिकानन्तिकत्वम् । अन्तिके निघातस्य विधानात् । अनन्तिके निषेधात् ॥

यद्धि । यदाद्यैरिति । निपातैर्यद्यदीति हिचेति तुपश्येति सूत्रैः । जाये स्वो रोहावे-हीति । आङ्पूर्वादिणो लोटः सिपो हिः गत्यर्थलोटा युक्तस्य रोहावेत्यस्य लोट् चेत्य-निघातः प्राप्तोऽनेन नियमेन निवर्त्यत इति स्वः शब्दाश्रयो निघातो भवति । ननु पर-मपि छन्दसीति वचनात् स्वः शब्दस्य पूर्वाङ्गवद्भावाज्जाये स्वरित्यस्यामन्त्रितं पूर्वमविद्य-मानवदित्यविद्यमानवत्त्वान्निघातो नैव प्राप्नोति । नैष दोषः । अव्ययानांप्रतिषेध इति वचनात् परस्य पूर्वाङ्गवत्त्वाभावादव्ययस्य । यद्वा । षष्ठ्यामन्त्रितकारकवचनं तन्निमित्त-वचनं वा अङ्गवद्भावे आश्रितमिति नास्ति पूर्वाङ्गवद्भावो नहि स्वः शब्दः षष्ठ्यन्तो नाप्या-मन्त्रितकारकं नापि तन्निमित्तम् । स्वरे वा पूर्वाङ्गवत्त्वविधिर्नाविद्यमानवत्त्वे । अथेदानी-मिति । आङः परस्य हीत्यस्य निघात इष्यते न च प्राप्नोति लोट् चेति निषेधात् केवलो-ऽपि रुहिश्छन्दसि गत्यर्थो दृश्यत इत्याङ इणा योगो न रुहिणा । छन्दसि परे ऽपीतिव-चनात् यदि रुहिणाङो योगः स्यात्तदा नानावाक्यत्वादाङो निघातो न स्यात् । ननु नित्यत्वादेकादेशे कृते व्यपवर्गाभावादुभयत आश्रयेऽन्तादिवद्भावनिषेधाच्च निघातो न

टृ च गत्यर्थलोटा युक्ता इति प्राप्नोति। न हि रुहिर्गत्यर्थः। कथं ज्ञायते। यदयं गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चेति पृथग्ग्रहणं करोति। यदि न गत्यर्थः आरोहन्ति हस्तिनं मनुष्याः। आरोहयति हस्ती स्थलं मनुष्यान्। गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्तासणाविति कर्मसंज्ञा न प्राप्नोति। तस्मान्नैतच्छक्यं वक्तुं न रुहिर्गत्यर्थ इति। कस्मात्तर्हि रोहावेत्यनेन युक्ते एहीत्येतस्य न भवति। छान्दसत्वात् ॥

चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥ ५७ ॥ आम्रेडितेष्वगतेःसगतिरपि तिङ् इत्यत्र गतिग्रहणे उपसर्गग्रहणं कर्तव्यम्। इह मा भूत्। शुक्लीकरोति चन। कृष्णीकरोति चन। यत्काष्ठं शुक्लीकरोति। अपरआह सर्वत्रैवावष्टमिके गतिग्रहणे उपसर्गग्रहणं द्रष्टव्यं गतिर्गतौ तिङि चोदात्तवतिवर्जमिति ॥

यद्वृत्तान्नित्यम् ॥ ६६ ॥ यद्वृत्तादित्युच्यते तत्रेदं न सिध्यति।

---

प्राप्नोति। एवं तर्ह्यस्मादेव भाष्यकारविचारादनुमीयते प्राङ् निघातस्तत एकादेश इति। न हि रुहिरिति। येषामुपसर्गयोगाद्विना गतिप्रतीतिस्तेतुत्वं तेगत्यर्था रुहिस्तूपसर्गयोगे गतिवाची। यद्वावष्टम्भवाचो रुहिः गतिस्तु तदवयवक्रियेति भावः। यदयमिति। अनुपसर्गस्य रुहेरकर्मकत्वात्कर्तरि क्तः सिद्धः सोपसर्गस्य तु गत्यर्थत्वादिति किं रुहिग्रहणेन ततृक्रियमाणमुपसर्गयोगेन विना ये गत्यर्थास्ते गत्यर्थग्रहणेन गृह्यन्ते। अथ वा रुहिरवष्टम्भवाची तदवयवस्तु गतिः सत्यपि वा गत्यर्थत्वे गत्यर्थग्रहणेन रुहिर्न गृह्यते इति ज्ञापयति। यदीति। उपसर्गयोगेऽपि ये यदर्थास्ते तदर्थग्रहणेन गृह्यन्ते यथा हरतिरभ्यवपूर्वः प्रत्यवसानार्थ इति तद्ग्रहणेन गृह्यते तथा च हृक्रोरन्यतरस्यामित्युभयत्र विभाषा प्रतिपादिता तस्माद्रुहेर्गत्यर्थग्रहणेनावश्याभ्युपेयं ग्रहणं केवलोपि रुहिश्छन्दसि गतौ प्रयुज्यत इति प्रागेवोक्तं गतिरेव रुहेरर्थो ऽवष्टम्भस्तुतत्फलमित्यभ्युपेयं गत्यर्थाकर्मकेत्यत्र तु रुहिग्रहणं प्रपञ्चार्थम् ॥

चन। शुक्ली करोति च नेति। अगतेरिति प्रतिषेधाभावादत्रानिघातो भवत्येव। यत्काष्ठमिति। शुक्लीशब्दस्य तु निघातो न भवति। सर्वत्रेति। चादिषु च चवायोगे प्रथमेत्येतयोरगतिग्रहणमनुवर्तत इति तत्राप्युपसर्ग एव गतिः ॥

यद्वृत्त। यद्वृत्तादित्युच्यते इति। वृत्तमुच्चारणमुच्यते। यथात्यदादिवृत्तमिति। त-

यः पचति। यं पचति। येन पचतीति। वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्। कथं यतरः पचति यतमः पचतीति। डतरडतमौ च प्रतीयात्। कथं यदाददातीति। एषोपि विभक्तिसंज्ञः। कथं यावदस्य उषःसरोजनेभ्यः क्वणवत्। यावद्यथाभ्यामित्येवं भविष्यति। कथं यद्वाङ्वायुः पवते यत्कामास्तेजुहुमः। एवं तर्हि यदस्मिन् वर्तते यद्वृत्तंयद्वृत्तादित्येवं भविष्यति। वा याथाकाम्ये*। वा याथाकाम्य इति वक्तव्यम्। यत्र क्व चन यजते तद्देवयजन एव यजते॥

पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः॥ ६७॥ पूजितस्यानुदात्तत्वे काष्ठादिग्रहणम् *। पूजितस्यानुदात्तत्वे काष्ठादिग्रहणं कर्तव्यम्। काष्ठादिभ्यः पूजनादिति वक्तव्यम्। इह मा भूत्। शोभनोऽध्यापकः। मलोपवचनं च *। मलोपश्च वक्तव्यः। दारुणाध्यापकः। दारुणाभिरूपकः॥

सगतिरपि तिङ्॥ ६८॥ सगतिग्रहणं किमर्थम्। सगतिग्रह-

---

तस्ये ह्येव स्याद्यत्पचतीति। वृत्तग्रहणेनेति। वृत्तशब्दोऽधिकरणसाधनो वर्ततेऽस्मिन्निति वृत्तं यदो वृत्तं यद्वृत्तमधिकरणवाचिना चेति प्रतिषेधे प्राप्तेऽत एव निपातनात्समासः। यदाददातीति। स्वादय एव विभक्तित्वेन प्रसिद्धा एति प्रश्नः। एषो पीति। प्राग्दिशो विभक्तिरिति विभक्तिसंज्ञाविधानात्। यावद्यथाभ्यामिति। निपातैर्यद्यदीति निपातग्रहणाल्लिङ्गाल्लक्षणप्रतिपदोक्तयोरिति परिभाषा नाश्रीयत इत्युक्तम्। यद्वाङ्ङिति। यदञ्चतीति क्विन्। विष्वग्देवयोश्चेति टेरद्र्यादेशः। यदस्मिन्निति। सर्वं पदं यच्छब्दवद् वृत्तग्रहणेन गृह्यत इत्यर्थः। पञ्चमीनिर्देशे ऽप्यत्र व्यवहितस्य कार्यं भवतीति पूजनात् पूजितमित्यत्र पूजनग्रहणस्य संबन्धिशब्दत्वात्पूजितग्रहणे सिद्धे पुनः पूजितग्रहणेन ज्ञाप्यते। वा याथाकाम्य इति। याथाकाम्यं यथेच्छं प्रवृत्तिः। देशकालावनपेक्ष्य। तत्र गम्यमाने वा निघातप्रतिषेधः॥

पूजनात्। काष्ठादिग्रहणमिति। काष्ठादिभ्य इति सूत्रे वार्तिकदर्शनात्कैश्चित्प्रक्षिप्तम्। दारुणाध्यापक इति। क्रियाविशेषणं दारुणशब्दो द्वितीयान्तो यथा ग्रामं गत इत्यादौ गुणभूताया अपि क्रियायाः साधनेन योगः तथा विशेषणेनापि। तत्र वैयधिकरण्यात्समासाभावाद् मलोपो विधीयते। दारुणाभिरूपक इति। आभिरूप्यं दारुणशब्देन विशेष्यत इति दारुणस्य नपुंसकत्वं पूर्ववत्समासाभावः॥

सगतिः। सहशब्दोऽत्र तुल्ययोगे तेन गतिरपि निहन्यते। अपदत्वादिति। नन्वति-

णमपदत्वात्। सगतिग्रहणं क्रियते। अपदत्वात्। पदस्येति वर्तते। न च सगतिकं पदं भवति। उत्तरार्थं च *। उत्तरार्थं चापि सगतिग्रहणं क्रियते। कुत्सने च सुप्यगोत्रादौ। पचति पूति। प्रपचति पूति। अथापिग्रहणं किमर्थम्। अगतिकस्यापि यथा स्यात्। यत्काष्ठा पचतीति। नैतदस्ति प्रयोजनम्। सिद्धं पूर्वेणागतिकस्य। न सिध्यति। मलोपाभिसंबद्धं तत्। यदि तदनुवर्तते इहापि मलोपः प्रसज्येत। दारुणं पचतीति। उत्तरार्थं चापि ग्रहणं क्रियते। कुत्सने च सुप्यगोत्रादौ। अगतिरपीति पचति पूतीति। तिङ्निघातात्पूजनात्पूजितमनुदात्तं विप्रतिषेधेन *। तिङ्निघातात्पूजनात्पूजितमित्येतद्भवति विप्रतिषेधेन। तिङ्निघातस्यावकाशः। देवदत्तः पचति। पूजनात्पूजितमित्यस्यावकाशः। काष्ठाध्यापकः। काष्ठाभिरूपकः। इहोभयं प्राप्नोति। काष्ठा पचति पूजनात्पूजितमित्येतद्भवति विप्रतिषेधेन। कः पुनरत्र विशेषः। तेन वा सत्यनेन वा। सापवादकः स विधिः। अयं पुनर्निरपवादकः। यदि हि तेन स्यात्। इह न स्यात्। यत्काष्ठापचति॥

---

न्तत्वादिति वक्तव्यं नहि सगतिस्तिङन्तो भवति। उच्यते। अतिङन्तत्वादित्युच्यमाने मा भूदनेन सगतेर्निघातः पूर्वेण तु कस्मान्न भवतीति स्यादेव चोद्यं तत्रेदमेवाभिधानीयं स्याद् अपदत्वादिति। तस्मात्पूर्वोत्तरयोरपि योगयोर्यस्साधारणमुत्तरं तदेवोक्तमपदत्वादिति। तिङ्निघातादिति। पूजनात्पूजितमितीहानुवर्तत इत्यनेन सह विप्रतिषेधोपन्यासो न तु पूर्वेण सह तस्य सुबन्तविषयत्वात् तत्रैवमलोपस्येष्टत्वात्। काष्ठाध्यापक इति। पूर्वोत्तरयोः सूत्रयोरेकवाक्यत्वात् पूजनात् पूजितमित्येतदभिसंबन्धाभावेदमाश्रित्यावकाशः प्रदर्शितः। यत्काष्ठापचतीति। निपातैर्यद्यदीति तिङ्निघाते प्रतिषिद्धे अनेन निघातः प्रवतते। ननु च तिङ्ङतिङ इति निघातस्य प्रतिषेधोपवादस्तस्यापि सगतिरपि तिङित्यपवादः। तत्रापवादापवादत्वाद्विप्रतिषेधानुपपत्तिः। नैतदस्ति। गतेरप्राप्त एवानेन निघातो विधीयत इति नास्त्यपवादापवादत्वम्। अपिग्रहणं तूत्तरार्थमपि स्यादित्यपिग्रहणादपिना स्यापवादापवादत्वम्। यद्वा। पूर्वोत्तरयोर्योगयोरेककार्यत्वादभेदं विवक्षित्वा विप्रतिषेधोपन्यासः। तत्र येन नाप्राप्त इति वा मध्येऽपवादा इति वा तिङ्ङतिङ इत्यस्यैव न लुडित्यादिः प्रतिषेधोऽपवादः नत्वस्येति सापवादकः सविधिरित्युक्तम्।

कुत्सने च सुप्यगोत्रादौ ॥ ६९ ॥ सुपि कुत्सने क्रियायाः । क्रियायाः कुत्सन इति वक्तव्यम् । कर्तुः कुत्सने मा भूत् । पचति पूतिर्गंरति पूतिः । पूतिश्च चानुबन्धः । पूतिश्च चानुबन्धो द्रष्टव्यः । पचति पूति । विभाषितं चापि बह्वर्थम् । विभाषितं चापि बह्वर्थं द्रष्टव्यम् । पचन्ति पूति । सुपि कुत्सने क्रियायामकारलोपोऽतिङीति चोक्तार्थम् । पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम् ॥ १ ॥

गतिर्गतौ ॥ ७० ॥ गताविति किमर्थम् । प्रपचति । प्रकरोति ।

---

कुत्सने । पचति पूतिरिति । पूतिः कर्तुर्विशेषणं न क्रियाया इति क्रियाकुत्सनाभावः । ननु क्रियाप्रधानत्वादाख्यातस्य विशेषणेन योगः साधनस्य नोपपद्यते । नैतदस्ति । यदुपसर्जनं जहत्स्वार्थमुपसर्जनीभूतस्वार्थं वार्थान्तरे वर्तते तस्य न भवति विशेषणेन योगो यथा राजपुरुष इति राजशब्दस्य वृत्तिविषयस्य । वाक्यविषयस्य त्वर्थान्तरानुपादानात् भवति विशेषणयोगो यथा मद्राणां राज्ञः पुरुषः ऋद्धस्य राज्ञः पुरुष इति । एवं साधनं क्रियां प्रति अङ्गभावं गच्छदपि एकार्थीभावाभावाद् विशेषणेन युज्यते। तथा कृदन्ते क्रिया उपलक्षणभावेनोपात्ता तथैव विशेषणैर्युज्यते शोभनमध्यापक इति । यथा तर्हि साधनस्य विशेषणेन योगः एवं क्रियान्तरेणापि प्राप्नोति तत्र यदुक्तं न हि भवति पचति पठतीति तद्विरुध्यते ।अथ मतं क्रियावशीकृतं क्रियारूपतामापन्नं आख्यातवाच्यं साधनं क्रियान्तरेण न संबध्यते इति विशेषणेनाप्येवं न संबध्येत । संबध्यमानं वा क्रियारूपतामापन्नं नपुंसकेन विशेषणेन संबध्येत । नैष दोषः । यथा भार्या पत्युर्वनितान्तरसंबन्धं न सहते स्नानादिसंस्कारं तु स्वार्थमनुमन्यते । तथा क्रियाविशिष्टं साधनमात्मन्यङ्गत्वं गमयितुं तस्य विशेषणेन संबन्धं न प्रतिबध्नाति । क्रियान्तराङ्गत्वापत्तिस्तु स्वार्थविरोधिनीति तां नानुजानाति । पूतिश्चेति । पूतिरयमिति सामानाधिकरण्यदर्शनात् पूतिशब्दो न क्तिन्नन्तो नापि क्तिजन्तोऽसंज्ञात्वात् तस्मादव्युत्पन्नं प्रातिपदिकम्। तत्र प्रातिपदिकस्वरेणान्तोदात्तत्वे सिद्धे निघातनिमित्तस्य तस्यान्तोदात्तत्वं यथा स्यादन्यत्र त्वाद्युदात्तत्वमिति वचनमित्याहुः । नन्वाद्युदात्तत्वं लक्षणाभावात्कथं स्यात् । एवं तर्हि वसेस्तिबिति तिबन्ते बाहुलकाद्गुत्याद्यः । विभाषितमिति । बह्वर्थं तिङन्तं विभाषा निहन्यते यदा च तस्य निघातस्तदा पूतिरन्तोदात्तः । अतिङीति । तिङन्ते मलोपो न भवतिदारुणंपचतीति।उक्तार्थमिति। आचार्यपरंपराकथितप्रयोजनमेतदित्यर्थः।

गतिः । गतेः शुद्धे वा तिङन्ते प्रयोगे गतियुक्ते वा एवं कृदन्ते । रूढिशब्देषु तु गवाक्षादिषु क्रियाया अभावान्नास्ति गतेः प्रयोगः । तत्र कृदन्ते सगतावगतौ च कृत्स्वरथाथादिस्वरेषु कृतेषु शेषनिघातेन गतेर्निघातस्य भावात्तिङ्ङ्घोदात्तवतीति नियमाद-

गतेरनुदात्तत्वे गतिग्रहणानर्थक्यं तिङ्व्यवधारणात् *। गतेरनुदात्तत्वे गतिग्रहणमनर्थकम् । किं कारणम् । तिङ्व्यवधारणात् । तिङि चोदात्तवतीत्येतन्नियमार्थं भविष्यति । तिङ्युदात्तवत्येव गतिरनुदात्तो भवतीति । छन्दोर्थं तर्हि गतिग्रहणं कर्तव्यम् । छन्दसि गतौ परतोऽनुदात्तत्वं यथा स्यात् । मन्द्रशब्दे मा भूत् । आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः । छन्दोर्थमिति चेन्नागतित्वात् *। छन्दोर्थमिति चेत् । तन्न । किं कारणम् । अगतित्वात् । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः । न चाचाङो मन्द्रशब्दं प्रति क्रियायोगः । किं तर्हि, याहिशब्दं प्रति । इहापि तर्हि न प्राप्नोति । अभ्युद्धरति । समुदानयति उपसमादधातीति । अत्रापि न अभेरुदं प्रति क्रियायोगः । किं तर्हि हरतिं प्रति क्रियायोगः । नैष दोषः । उदं प्रत्यत्र क्रियायोगः । कथम् । उद्धरति क्रियां विशिन-

---

नुदात्ते तिङन्ते तदप्रसङ्गात्पारिशेष्याद्गतावेव भविष्यतीति मत्वाह । गतावितिकिमर्थमिति । तिङ्युदात्तवत्येवेति । विपरीतनियमस्तु न भवति । तिङ्येवोदात्तवति नान्यत्र प्रकारक इत्यादावितीष्टसिद्धयेशास्त्रारम्भादनन्तरस्य वा नियमाच्छेषनिघाताव्याघातात् । आमन्द्रैरिति । ते प्राग्धातोरित्यत्र द्वौपक्षौ प्रयोगनियमः संज्ञानियमो वा तत्र यदा प्रयोगनियमः धातोः प्रागेव गत्युपसर्गाः प्रयोक्तव्या इति तदा छन्दसि परेपि व्यवहिताश्चेत्यारब्धव्यम् । तत्रैव चेदसुक्तं प्राग्वचनं प्रयोगनियमार्थं चेदनुकरणस्येतिकरणपरप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः । छन्दसि परव्यवहितवचनं चेति । अस्मिन्पक्षे याहीत्येतदपेक्षया आङो गतित्वान्निघातप्रसङ्गः । यदा तु संज्ञानियमो धातोः प्राक् प्रयुज्यमाना गत्युपसर्गसंज्ञा भवन्ति न तु परे नापि व्यवहिता इति तदात्राङो गतित्वाभावान्निघातप्रसङ्गः । न चात्राङ इति । मन्द्रशब्दस्य रूढिशब्दत्वात् क्रियावाचित्वाभावात् । ननु परनिमित्तानुपादाने यत्क्रिया युक्तास्तं प्रतीति कथं लभ्यते । उच्यते । पदस्येति अधिकारात् पदविधित्वात्समर्थं परिभाषोपस्थानादेतद्विशेषलाभः । नाभेरुदं प्रतीति । उच्छब्दस्य क्रियावाचित्वाभावात् । उदमिति । उपसर्गः क्रियायाः समानाधिकरणो विशेषकः तत्रान्वयव्यतिरेकाभ्यां धातुः क्रियावचनः उपसर्गास्तु विशेषस्य वाचका इति धातूपसर्ग समुदायं क्रियाविशेषवचनं प्रत्यभेर्गतित्वादवयवव्यतिरेकेण समुदायाभावादवयवमुदं प्रति गतित्वमित्यर्थः । इहापीति । मन्द्रादिकरणमिन्द्रवाहं यानमाङा विशेष्यत इति समुदायं क्रियाविशेषवाचिनं प्रत्याङो गति-

ष्टि । उद्दा विशिष्टां अभिर्विशिनष्टि । तत्र यत्क्रियायुक्ता इति भवत्येव संघातंप्रति क्रियायोगः। इहापि तर्हि मन्द्रसाधना क्रिया चाङाभिव्यज्यते । आयाहि मन्द्रैरिति । ननु च पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति । नैतत्सारम् । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण । किं कारणम् । साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि । अभिनिर्वृत्तस्य चोपसर्गेण विशेषः शक्यो वक्तुम्। सत्यमेवमेतत् । यस्त्वसौ धातूपसर्गयोरभिसंबन्धः तमभ्यन्तरीकृत्य धातुः साधनेन युज्यते । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति आस्यते गुरुणेत्यकर्मकः उपास्यते गुरुरिति केन सकर्मकः स्यात्। गतिना तु विशिष्टस्य गतिरेव विशेषकः । साधने केन तेन स्याद् बाह्यमाभ्यन्तरो हि सः ॥ १ ॥

---

त्वमिति गताविति वक्तव्यम् । पूर्वं धातुरिति । यानक्रिया आङा विशिष्टा मन्द्रादिभिः साधनैः संबध्यते इति न समुदायं प्रत्याङो गतित्वमपि तु याहीत्येतत्पदं प्रतीत्यर्थः । अभिनिर्वृत्तस्येति । सतो ह्यर्थस्य विशेषणेन संबन्धो दृश्यते । साधनायत्तं च क्रियायाः सत्त्वमिति तस्याः प्राक्साधनेन योगः पश्चादुपसर्गेण। कथमसती साधनेनाभिसंबध्यतइति चेत् । साधनेन तस्या उत्पाद एव संबन्धः । ततश्च साधनादवाप्तजन्माक्रियोपसर्गेण विसर्गेण विशेष्यत इत्युक्तं भवति । यस्त्वसाविति । नहि साधनादुत्पन्ना क्रिया ऽन्यतो विशेषं लभते अपि तु विशिष्टैव क्रिया साधनेनोत्पाद्यते ततश्च प्रयोक्ता विशिष्टायाः क्रियायाः साधनेन संबन्धं प्रतिपादयितुं धातूपसर्गसमुदायं प्रयुङ्क्ते यथैव यानस्येदं साधनं पाकादेरिति प्रतिपादनाय यातेः प्रयोग एवमागमनस्येदं साधनं न गमनस्येति प्रतिपादयितुं सोपसर्गस्य प्रयोगः ततश्च परमार्थतो धातूपसर्गसंघात एव क्रियावाची पृथगुपदेशस्तु धातूपसर्गयोरडादिव्यवस्थार्थः ततश्चान्तरङ्ग उपसर्गयोगः बहिरङ्गः साधनयोगः आस्यत इति । केवल आसिरकर्मक इति तस्मात्कर्तृभावयोर्लकार उत्पद्यतेउपसर्गयोगे तु अर्थान्तरवृत्तित्वात्सकर्मकत्वात् कर्मणि लकारोत्पत्तिः । यदि तु प्राक् साधनेन संबन्धः स्यात् ततोऽकर्मकत्वात् कर्मणि लकारो नोपपद्यते । तस्मात् क्रियाविशेषप्रतिपादनाय पूर्वं धातुरुपसर्गेण युज्यत इत्याङो मन्द्रं प्रत्यगतित्वाद् गताविति न कर्त्तव्यम् । गतिनेति । ऊर्ध्वताविशिष्टा हरतिक्रिया गतिना विशेष्यते अभ्युद्धरतीत्यत्रेत्यर्थः । साधन इति । गताविल्यस्मिन्नसत्यामन्द्रैरित्यत्र मन्द्रशब्दे साधनाभिधायिनि परतो निघातः कथं न स्यादिति चोद्यम् । उत्तरमाह । बाह्यमिति । साधन बाह्यं तत्संबन्धस्य बहिरङ्गत्वात् । धातूपसर्गयोस्त्वन्तरङ्ग इति मन्द्रं प्रत्यगतित्वाद्विघाताभावः॥

तिङि चोदात्तवति ॥ ७१ ॥ तिङ्ग्रहणं किमर्थम् । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम्* । तिङ्युदात्तवति यथा स्यात् । मन्द्रशब्दे मा भूत् । आमन्द्रैरिन्द्र हरिभिर्याहि । यद्योगाद्गतिः । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः न चाङः मन्द्रशब्दं प्रति क्रिया योगः । किं तर्हि । याहिशब्दं प्रति । यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वे अप्रसिद्धिः* । यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वे अप्रसिद्धिः स्यात् । यत्प्रकरोति । तस्मात्तिङ्ग्रहणं कर्तव्यम् । यदि तिङ्ग्रहणं क्रियते आमन्ते न प्राप्नोति प्रपचतितरां प्रजल्पतितराम् ॥ असति पुनस्तिङ्ग्रहणे क्रियाप्रधानमाख्यातं तस्मादतिशये तर उत्पद्यते तरबन्तात्स्वार्थे आम् तत्र यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवति इति भवत्येव संघातं प्रति क्रियायोगः । तस्मान्नार्थस्तिङ्ग्रहणेन।कस्मान्न भवति।आमन्द्रै रिन्द्रहरिभिर्याहि मयूररोमभिः । यद्योगाद्गतिरिति यद्योगाद्गतिस्तं प्रति गत्युपसर्गसंज्ञे भवतः न चाङो मन्द्रशब्दं प्रति क्रियायोग । ननु चोक्तं यद्योगाद्गतिरिति चे-

---

तिङि चोदा । तिङ्ग्रहणमिति । याक्रिया यत्क्रिया यत्क्रियया युक्ता यत्क्रियायुक्ता इत्याश्रयणादव्याप्तिर्न भविष्यति क्रियमाणे च तिङ्ग्रहणे ऽव्याप्तिः प्रपचतितरामित्यामन्तेनिघाताप्रसङ्गादिति प्रश्नः । परिमाणार्थमिति । असति तिङ्ग्रहणे सर्वस्मिन्नुदात्तवति निघातः स्यादिति तत्परिच्छेदाय तिङ्ग्रहणमित्यर्थः । आमन्द्रैरिति। मन्द्रशब्दो रक्प्रत्ययान्तोन्तोदात्तः । यद्योगादिति । गतिशब्दः पित्रादिशब्दवत्संबन्धिशब्दत्वात्संबन्धिनमाक्षिपतीति क्रियावाचिन एवोदात्तवतो ग्रहणं नान्यस्येत्यर्थः । प्रत्ययोदात्तत्व इति । धातुरेव क्रियावाचित्वाद्गतिसंज्ञानिमित्तमिति धातावेवोदात्तवति गतेर्निघातः स्यान्न तु प्रत्यये तिङ्ग्रहणात्तु परिमाणार्थात् प्रत्ययोदात्ते नाप्युदात्तवति तिङन्तगतेर्निघातो भवति । प्रपचतितरामिति । यदा गतिकारकोपपदानां कृद्भिरेव समासो नान्येन स च प्राक् सुबुत्पत्तेरिति दर्शनं तदाम: स्वरेणोदात्तवत्यामन्ते गतेर्निघात इष्यमाणस्तिङ्ग्रहणे सति न प्राप्नोत्यतिङन्तत्वादामन्तस्य। यदात्वविशेषेण गतीनां समासः प्राक् सुबुत्पत्तेरिति पक्षः तदामन्तेन प्रशब्दस्य समासे ऽव्ययपूर्वपदप्रकृतिस्वरेण प्रशब्दस्य शेषनिघातस्तदा तिङ्ग्रहणस्याव्याप्तिदोषो न चोदनीयः । कस्मादिति । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति,दर्शने संघातं प्रति भावस्य गतित्वाश्राप्नोति । यद्योगादिति । पूर्वमुपसर्गेण धातोर्योगः पश्चात्साधनेनेति प्रतिपा-

त् प्रत्ययोदात्तत्वे अप्रसिद्धिरिति। नैष दोषः। यत्क्रियायुक्ता इति नैवं विज्ञायते यस्य क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति। कथं तर्हि या क्रियाय त्क्रिया यत्क्रियायुक्तास्तं प्रतिगत्युपसर्गसंज्ञे भवत इति॥

आमन्त्रितं पूर्वमविद्यमानवत्॥ ७२॥ वत्करणं किमर्थम्। स्वाश्रयमपि यथा स्यात्। आम् भो देवदत्त। आम एकान्तरमामन्त्रितमनन्तिक इत्येकान्तरता यथा स्यात्। पूर्वं प्रति विद्यमानत्वादुत्तरचानन्तर्याप्रसिद्धिः*। तूर्वं प्रति विद्यमानत्वादुत्तरचानन्तर्यस्याप्रसिद्धिःस्यात्। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि। गङ्गाशब्दोयं यमुनाशब्दं प्रति अविद्यमानवद्भवति। तत्रामन्त्रितस्य पदात्परस्येति अनुदात्तत्वं न स्यात्। सिद्धं तु पदपूर्वस्येति वचनात्। सिद्धमेतत्। कथम्। पदपूर्वस्येतिवचनात्। पदपूर्वस्य च आमन्त्रितस्याविद्यमानवद्भावो भवतीति वक्तव्यम्। कानि पुनरस्य यो गस्य प्रयोजनानि। अविद्य-

---

दनात्। यस्य क्रियेति। अन्वयव्यतिरेकाभ्यां यस्य क्रिया धातोरेवासौ क्रिया वाच्येति तमेव प्रतिगतित्वं स्यात्। यदा तु या क्रिया यत्क्रियेति क्रियालक्षणोर्थ आश्रीयते तदार्थं प्रति गतित्वं नशब्दं प्रति तत्रार्थे कार्यासंभवात्तद्वाचिनि शब्दे परतः कार्यं विज्ञायमानं क्रियाप्रधाने सर्वस्मिन् प्रत्ययोदात्तत्वेन धात्तूदात्तत्वेन चोदात्तवति सिध्यति॥

आमन्त्रि। वत्करणमिति। वतिमन्तरेणाप्यतिदेशो दृश्यते यथा गोतो णिदिति प्रश्नः। नन्वसति वत्करेण पूर्वमामन्त्रितमविद्यमानमित्युच्यमाने पूर्वस्यामन्त्रितस्य निवृत्तिः स्यात्। नैष दोषः। अर्थ प्रत्यायनाय शब्दप्रयोगादनिवृत्ते ऽर्थे शब्दनिवृत्त्यभावात्। अथापि परप्रयोगो भवतु पूर्वप्रयोगो मा भूदित्यर्थः कल्प्येत तथापि राजदन्तादिषु परमामन्त्रितं चेति वक्तव्यं स्यात्। स्वाश्रयमपीति। यत् स्वाश्रयं कार्यमातिदेशिकेन विरुध्यते तद्बाध्यते यथा चण्डालवदस्मिन् ब्राह्मणे वर्तितव्यमित्यतिदेशे कृते ब्राह्मणा भोज्यन्तामित्युक्ते नासौ भोज्यते। तथा च पूर्वविधिग्रहणस्य नैधेय इति प्रत्युदाहरणमुक्तं सति स्थानिवत्त्वे त्राज् व्यपदेशेन हाज्व्यपदेशस्य बाधनात् ढकोप्रसङ्गात्। एव मिहाप्येकान्तरताविद्यमानवत्त्वेन विरोधान्निवर्तेत वत्करणात्तु यत्नान्न निवर्तते। आम् भो देवदत्तेति। नामन्त्रित इति निषेधादेकान्तरता सिद्धेति चिन्त्यमेतत्। पूर्वंप्रतीति। पूर्वशब्दस्य संबन्धिशब्दत्वात्परं प्रत्यामन्त्रितस्याविद्यमानवत्त्वं पूर्वं तु प्रतिविद्यमानत्वमेवेति तेन व्यवधानात् पूर्वाश्रयकार्याप्रसङ्गः। सिद्धं त्विति। पूर्वंयत्पदं तदपेक्षयापि पूर्वं

मानवत्त्वे प्रयोजनमामन्त्रितयुष्मदस्मत्तिङ्निघाताः । आमन्त्रितस्य पदात्परस्यानुदात्तो भवतीतीहैव भवति पचसि देवदत्त देवदत्त यज्ञदत्तेत्यत्र न भवति । अविद्यमानवत्त्वादामन्त्रितस्य । युष्मदस्मदोः षष्ठीचतुर्थी द्वितीयास्थयोर्वांनावौ इतीहैव भवति । ग्रामो वां स्वम् । जनपदो नौ स्वम् । देवदत्तयज्ञदत्तौ युवयोः स्वमित्यत्र न भवत्यविद्यमानवत्त्वाद् । मन्त्रितस्य । तिङ्ङतिङ इतीहैव भवति देवदत्तः पचतीति । देवदत्तपचसीत्यत्र न भवति । अविद्यमानवत्त्वादामन्त्रितस्य । पूजायामनन्तरप्रतिषेधः प्रयोजनम् । यावत्पचति शोभनम् । यावद्देवदत्त पचसीत्यत्रापि सिद्धं भवति । जात्वपूर्वं प्रयोजनम् । जातु पचति । देवदत्त जातु पचसीत्यत्रापि सिद्धं भवति । आहो उताहो चानन्तरविधौ प्रयोजनम् । आहो पचति । उताहो पचति । आहो देवदत्त पचसि उताहो देवदत्त पचसीत्यत्रापि सिद्धं भवति । आम एकान्तरविधौ प्रयोजनम् । आम् पचसि देवदत्त । आम् भोः पचसि देवदत्तइत्यत्रापि सि द्धं भवति । अविद्यमानवत्त्वादामन्त्रितस्य ॥

नामन्त्रिते समानाधिकरणे सामान्यवचनम् ॥७९॥ इहकस्मान्न भवति अग्ने देवि सरस्वति इड काव्ये विहव्ये एतानि ते अघ्न्ये नामानि । योगविभागः करिष्यते । नामन्त्रिते सामानाधिकरणेसमान्यवचनम् । ततो विभाषितं विशेषवचन इति ।

सामान्यवचनं विभाषितं विशेषवचने ॥ ८० ॥ इह कस्मान्न भ-

---

स्यामन्त्रितस्याविद्यमानत्वाद्व्यवधायकत्वाभावः । अन्ये तु न्यायसिद्ध एवायमर्थ इत्याहुः । पूर्वत्वस्य परापेक्षत्वात् परस्य कार्ये स्वनिमित्ते ऽन्यनिमित्ते वा कर्तव्ये आमन्त्रितस्याविद्यमानवत्त्वात् मेशब्दात्परो ऽनन्तरो भवति यसनेशब्द इति निघातसिद्धिः ॥

नामन्त्रिते । इहेति । नामन्त्रिते समानाधिकरणे इति सूत्रं पठितं ततः सामान्यवचनं विभाषितं विशेषवचन इति द्वितीयं ततश्च पर्यायशब्दानामपि सामानाधिकरण्यादविद्यमानवत्त्वनिषेधान्निघातप्रसङ्गः । योगविभाग इति । पर्यायत्वाच्च सामान्यवचनत्वाभावः । सामान्यस्य विशेषापेक्षत्वात् । एव चामन्त्रिताद्युदात्तत्वं सर्वेषामेतेषां भवति ।

सामान्यवचनं विभाषितम् । इहेति । बहुवचनग्रहणसपाणिनीयमिति प्रश्नः । बहु-

वति । ब्राह्मण वैयाकरण । बहुवचनमिति वक्ष्यामि । सामान्यवचनमिति शक्यमवक्तुम् । कथम् । विभाषितं विशेषवचन इत्युच्यते । तेन यत्प्रति विशेषवचनमित्येतद्भवति तस्य भविष्यति । किं च प्रत्येतद्भवति सामान्यवचनम् । अपर आह । विशेषवचन इति शक्यमवक्तुम् । कथम् । सामान्यवचनं विभाषितमित्युच्यते। तेन यत्प्रति सामान्यवचनमित्येतद्भवति तस्य भविष्यति । किं च प्रत्येतद्भवति विशेषवचनम् । विभाषितं विशेषवचन इति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये अष्टमस्याध्यायस्य प्रथमेपादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

पूर्वत्रासिद्धम् ॥ १ ॥ येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोध्यायोऽसिद्धोवेदितव्यः । यदि सपादायां सप्ताध्याय्यामयं पा-

---

षचनमिति । तेन ब्राह्मणा वैयाकरणा इति वा निघातः । ब्राह्मणवैयाकरणेत्यत्र नित्यः॥ सामान्यवचनमिति विशेषवचन इत्यस्य पूर्वेण संबन्धात् पर्यायस्य विशेषवाचित्वाभावात् पूर्वसूत्रार्थमपि सामान्यवचनग्रहणं न कर्तव्यम् अध्ने देवीत्यादौ सर्वेषामामन्त्रिताद्युदात्तत्वसिद्धये ॥

इत्युपाध्यायजैयटपुत्रकैय्यटकृते महाभाष्यप्रदीपे अष्टमस्याध्यायस्य प्रथमे पदे द्वितीयमाह्निकम् ॥ पादश्च प्रथमः समाप्तः ॥

पूर्वत्रासिद्धम् । येयमिति । वृत्तिग्रन्थोपक्षेपेण शास्त्रासिद्धत्वमाश्रीयते न कार्यासिद्धत्वं शास्त्रस्य संनिवेशात्पौर्वापर्यसंभवात् कार्याणां तु प्रयोगसमवायात् पौर्वापर्यायोगाच्छास्त्रद्वारेण वा कार्याणां पौर्वापर्ये शास्त्रस्य मुख्यं पौर्वापर्यमिति तस्यैव ग्रहणं न्याय्यमित्युत्सर्गलक्षणकार्यसिद्धिरपि भवतीति दर्शयति । एतच्च सूत्रमात्मानं हित्वा सूत्रान्तराणामसिद्धत्वं प्रतिपादयति न त्वात्मनो बोधकस्य बोध्यत्वाभावादेतस्य चासिद्धत्वे सर्वेषां सिद्धत्वात्सूत्रारम्भएवानर्थकः स्यात् । यथा सर्वंमिथ्या ब्रवीमीति वक्तृवाक्यान्तराणामेव मिथ्यात्वं प्रतिपादयति एतस्यापि मिथ्यात्वे वाक्यान्तराणां मिथ्यात्वं न स्यादित्यनर्थकमेवैतद्वाक्यं स्यात् । यदीति । यथोद्देशं संज्ञापरिभाषमाश्रित्य नोद्यते । यदा प्रतिपत्ता यथाश्रुतग्राही तस्मिन्निति निर्दिष्टे पूर्वस्येत्यस्य सूत्रस्य यत्र सप्तमीनिर्दिष्टः शब्दः तत्र पूर्वस्य कार्यं भवतीत्येतमर्थं प्रतिपद्यते स तु सप्तमीनिर्देशः क्वास्यादिति विशेषं न पर्यालोचयति तदेको यणचीत्येवमादौ प्रदेशवाक्ये सप्तमीश्रवणे पूर्वस्य का-

दौ नोध्यायः असिद्ध इत्युच्यते य इह सप्तमीनिर्देशाः पञ्चमीनिर्देशाः षष्ठीनिर्देशाश्चोच्यन्ते तेप्यसिद्धाः स्युः । तत्र को दोषः । झलो झलि ह्रस्वादङ्गात् संयोगान्तस्य लोप इत्येतेषां निर्देशानामसिद्धत्वात् तस्मिन्निति निर्दिष्टे पूर्वस्य तस्मादित्युत्तरस्य षष्ठी स्थानेयोगा इत्युक्ताः परिभाषाः न प्रकल्पेरन् । नैष दोषः । यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धम् । कथम् । कार्यकालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । झलोझलि ह्रस्वादङ्गात् संयोगान्तस्य लोपः उपस्थितमिदं भवति । तस्मिन्निति निर्दिष्टे पूर्वस्य तस्मादित्युत्तरस्य । षष्ठीस्थाने योगेति । यदि कार्यकालं संज्ञापरिभाषमित्युच्यते । इयमपि परिभाषा अस्ति । विप्रतिषेधे परमिति । सापीहोपतिष्ठेत । तत्र को दोषः । विस्फोर्यमवगोर्यमिति गुणाद्दीर्घत्वं स्याद्विप्रतिषेधेन । अत उत्तरं पठति । पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य * । पूर्वत्रासिद्धे नास्ति विप्रतिषेधः । किं कारणम् । अभावादुत्तरस्य । द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति न च पूर्वत्रासिद्धे परं पूर्वं प्रति भवति । यद्येवं दोग्धादोग्धुं घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोति । काष्ठतट् । संयोगादिलोपस्यासिद्धत्वात् संयोगान्तलोपः प्राप्नोति । अपवादो वचनप्रामाण्यात् * । अनवकाशावेतौ विधी तौ वचनप्रामाण्याद्भवि-

---

र्यं प्रतिपद्यते अस्मिन् पक्षे झलो झलीत्येवमादौ सप्तम्या निर्देशस्यासिद्धत्वात् परिभाषाफलाभावप्रसङ्गः । तथा संयोगान्तस्य लोप इत्यत्र षष्ठी स्थानेयोगेति एतत्फलाभावात् तच्छेषग्यालोन्त्यस्येत्यस्यापि फलाप्रवृत्त्यान्तरङ्गत्वात् स्थानसंबन्धविज्ञानेऽपि सर्वस्य पदस्य लोपप्रसङ्गः । यद्यपीदमिति । यथोद्देशपक्षे । तत्त्विह सिद्धमिति । कार्यकालं संज्ञापरिभाषमित्यस्मिन् दर्शने संज्ञापरिभाषाणां ह्यत्यन्तपारार्थ्यान्न स्वातन्त्र्येण कार्यावगमहेतुत्वम् । केवलमाचार्येण लाघवायानेकप्रधानाङ्गभावप्रतिपत्तये पृथगुपदेशः कृतः । ततश्च तस्मिन्निति निर्दिष्टे पूर्वस्येत्यनेन केवलेन न किं चित्क्रियते नापि झलो झलीत्यनेन, किं तर्हि संहत्य कार्यं क्रियते ततोझत्यनन्तरे पूर्वस्य सकारस्य झलः परस्य लोप इति वाक्यार्थ इत्येकवाक्यतया पौर्वापर्याभावादसिद्धत्वाभावः । पूर्वत्रासिद्ध इति । गुणे दीर्घस्यासिद्धत्वाद् युगपत्प्रसङ्गाभावाद विप्रतिषेधस्य निमित्ताभावात् परिभाषानुपस्थानाद् गुण एव प्रवर्तते । यद्येवमिति । अभावादुत्तरस्येति न्यायाद् ढत्वे घत्वस्यासिद्धत्वात् ढत्वप्रसङ्गः । अपवाद इति । योऽपवादः स एव भवति वचनसामर्थ्यात् प्रकरणस्य श्रुत्या बाधनात् ।

ष्यतः। तस्मात्कार्यकालं संज्ञापरिभाषमिति न दोषः। पूर्वत्रासिद्ध-मधिकारः *। पूर्वत्रासिद्धमित्यधिकारोऽयं द्रष्टव्यः। किं प्रयोजन-म्। परस्य परस्य पूर्वत्र पूर्वत्रासिद्धत्वज्ञापनार्थं, परः परो योगः पूर्वं-पूर्वं योगं प्रति असिद्धोयथा स्यात्। अनधिकारे हि समुदायस्य समु-दाये ऽसिद्धत्वविज्ञानम् *। अनधिकारे हि सति समुदायस्य समु-दाये असिद्धत्वं विज्ञायेत। तत्र को दोषः। तत्रायथेष्टप्रसङ्गः। तत्रा-यथेष्टं प्रसज्येत। गोधुङ्मान् गुडलिण्मानिति। घत्वढत्वयोः कृतयोः झय इति वत्वं प्रसज्येत। तस्मादधिकारः। तस्मादधिकारोयं द्रष्ट-व्यः। अथासिद्धवचनं किमर्थम्। असिद्धवचन उक्तम् *। तत्र ता-वदुक्तम्। षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षण-भावार्थं चेति। एवमिहापि आदेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षण-भावार्थं च। आदेशलक्षणप्रतिषेधार्थं तावत्। राजभिः। तक्षभिः। राजभ्याम्। तक्षभ्याम्। राजसु। तक्षसु। नलोपे कृते अत इत्यैस्-

---

पूर्वत्रासिद्धमधिकार इति। न तु विधिः। तथा हि। वक्ष्यमाणत्रिपादीलक्षणात्समुदाया-दत्पूर्वं तत्र स एव समुदायः सपादसप्ताध्याय्यपेक्षालब्धपरव्यपदेशो ऽनपेक्षितान्तर्गता-वयवपौर्वापर्यो ऽसिद्धो भवतीत्येतावानस्य विधिवाक्यस्यार्थो विज्ञायेत अधिकारे तु पर-स्य परस्य पूर्वत्रपूर्वत्रासिद्धत्वं संपद्यते। सकलशास्त्रव्यापित्वनिरासार्थं तु परिभाषात्वं नाश्रितं तेन तैस्तस्येत्यादावविनादिषु कर्तव्येष्वत्वस्यासिद्धत्वादकारान्तनिमित्ता इनादयो नस्युः। अनधिकारे हीति। यदि स्वतन्त्रो विधिरयं स्यादित्यर्थः। यद्यप्यवयवा एव का-र्येषु व्याप्रियन्ते न समुदायः। तथाप्यवयवद्वारकस्तस्यापि व्यापारोस्तीति वक्ष्यमाणस्य समुदायस्यातिक्रान्ते समुदाये ऽसिद्धत्वं स्यात्। अधिकारे तु सर्वेष्टसंग्रहः। अयथेष्टमि-ति। अयथेष्टमपि प्राप्नोति न तु यथेष्टमेवेत्यर्थः। गधुङ्मानिति। गोदुहोस्य सन्ती-ति मतुप् दादेर्धातोर्घ इति घत्वं जश्त्वस्यासिद्धत्वादेकाचो बश इति भष्भावः ततो ज-श्त्वं गकारः यरोनुनासिकत्वे प्रत्यये भाषायां नित्यवचनमिति ङकारः। असिद्धवचन-मिति। किं शास्त्रस्यासिद्धत्वमथकार्यस्येति प्रश्नः। अथवा यच्छास्त्रमुच्चारितं तस्यासिद्ध-त्वमशक्यं कर्तुमिति प्रश्नः। असिद्धवचन उक्तमिति। सिद्धस्यासिद्धवचनादतिदेश आश्री-यते शास्त्रस्य चासिद्धवद्भाव आश्रीयते न तु कार्यस्य। अन्यथोत्सर्गलक्षणकार्यं न सिध्येत्। षत्वतुकोरिति। कोस्येत्यादौ षत्वं न भवति। अधीत्येत्यादौ पूर्वं तुग् भवति पश्चादे-कादेशः। राजभिरिति। नलोपशास्त्रमैसादिषु कर्त्तव्येष्वसिद्धत्वात् स्वकार्यं न प्रदर्शयति

भावादयः प्राप्नुवन्ति । असिद्धत्वान्न भवन्ति । उत्सर्गलक्षणभावार्थं च अमुष्मै । अमुष्मात् । अमुष्य । अमुष्मिन्निति । अत्र मुभावे कृते ऽत इति स्मायादयो न प्राप्नुवन्ति असिद्धत्वाद्भवन्ति । सुपर्वाणौ । सुपर्वाणः । णत्वे कृते नोपधाया इति दीर्घत्वं न प्राप्नोति । असिद्धत्वाद्भवति ॥

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥ २ ॥ सुब्विधिं प्रति नलोपः असिद्धो भवतीत्युच्यते भवेदिह राजभिरिति नलोपे कृते ऽत इत्यैस्भावो न स्यात् । इह तु खलु राजभ्यां तक्षभ्यां राजसु तक्षस्विति नलोपे कृते दीर्घत्वैत्वे प्राप्नुतः । नैष दोषः । सुब्विधिरिति सर्वविभक्त्यन्तः समासः । सुपो विधिः सुब्विधिः सुपि विधिः सुब्विधिरिति । अथ संज्ञाविधौ किमुदाहरणम् । पञ्च सप्त । पञ्च सप्तेत्यत्र नलोपे कृते ष्णान्ता षडिति षट्संज्ञा न प्राप्नोति । असिद्धत्वाद्भवति ।

संज्ञाग्रहणानर्थक्यं च तन्निमित्तत्वान्नलोपस्य *। संज्ञाग्रहणं चानर्थकम् । किं कारणम् । तन्निमित्तत्वान्नलोपस्य । नाकृतायां षट्संज्ञायां

---

इत्यैसाद्यभावः । अमुष्मा इति । अदसो विभक्तौ त्यदाद्यत्वे कृते परत्वान्नित्यत्वाच्चोत्वप्रसङ्गादकारान्तत्वनिबन्धनस्मायाद्यप्रसङ्गः । उत्वशास्त्रस्यासिद्धत्वाद् अप्रवर्तनात् पूर्वं स्मायादयः पश्चादुत्वम् ।

नलो । सर्वविभक्त्यन्त इति । सर्वविभक्त्यन्तावयवत्वात्सर्वविभक्त्यन्तः । अथ वा अर्श आदित्वादच् प्रत्ययः सर्वविभक्त्यन्तोवयवोस्यास्तीति । सर्वग्रहणंचानेकोपलक्षणं द्वितीयाद्यसंभवात् । ननु चैकार्थेन शब्देन भाव्यमिति कथं सर्वविभक्त्यन्तत्वमाश्रीयते । उच्यते । प्रवृत्तिनिमित्तविशेषानपेक्षया सुब्विधिशब्दवाच्योर्थः सुब्विधिरित्याश्रीयते । अथ वा संबन्धसामान्ये षष्ठीं विधाय षष्ठीसमासः क्रियते । न तु स्थान्यादेशसंबन्ध एवाश्रीयते तेन सुपि यो विधिः स सुपः संबन्धी भवति इति तत्राप्यसिद्धत्वं भवति । सर्वविभक्त्यर्थान्तर्भावाच्च सर्वविभक्त्यन्त उच्यते । न च त्र सुपः कार्यं विधीयते । तेन षष्ठी स्थानेयोगेत्यस्योपस्थानाभावः । उदीचामातः स्थान इति स्थानग्रहणाल्लिङ्गाद् आनुवादेऽस्याः परिभाषाया अप्रवृत्तिः । यदा त्वेषा परिभाषा प्रत्याख्याता तदापि संबन्धसामान्यस्योपादनात्तस्य चैकत्वादयं संबन्धः संनिकृष्टोयं विप्रकृष्ट इति भेदनिबन्धनो व्यवहारो नास्ति । पञ्चेति । लौकिकात् प्रयोगाद् नकारासंभवं शास्त्राच्च विभक्त्यभावं मन्यते । तन्निमित्तत्वादिति । यथा विभक्तिलोपः शास्त्राधीनः एवं न-

जस्शसोर्लुक् । न चाकृते लुकि पदसंज्ञा न चाकृतायां पदसंज्ञायां नलोपः प्राप्नोति । तदेतदानुपूर्व्या सिद्धं भवति । इदं तर्हि प्रयोजनम् । पञ्चभिः । सप्तभिरिति । षट्त्रिचतुर्भ्यो हलादिः झल्युपोत्तममित्येष स्वरो यथा स्यात् । स्वरे ऽवधारणाच्च संज्ञाग्रहणमनर्थकम् । स्वरे ऽवधारणं क्रियते स्वरविधिं प्रतीति । इदं तर्हि दण्डिदत्तौ दत्तदण्डिनौ । तुग्विधौ किमुदाहरणम् । वृत्रहभ्याम् । वृत्रहभिः । नलोपे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति । असिद्धत्वान्न भवति । तुग्विधौ चोक्तम् । किमुक्तम् । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य । इदं तर्हि प्रयोजनम् । कृतीति वक्ष्यामि । इह मा भूत् । ब्रह्महच्छत्रम् । भ्रूणहच्छाया । न ह्येष संनिपातलक्षणो नलोपः ॥

---

लोपः । ततश्चानुपूर्व्या सिद्धमेतदित्यर्थः । षट्त्रीति । अन्यथा नलोपे कृते नान्तत्वाभावाद् असत्यां षट्संज्ञायां झल्युपोत्तममिति स्वरो न स्यात् । ततश्च न्रः संख्याया इत्याद्युदात्तं पदं श्रूयते । न चात्र भूतपूर्वगतिराश्रयितुं शक्यते । षट्त्रीत्यस्य षड्भिरित्यादौ सावकाशत्वाद् झल्युपोत्तममित्यस्यापि तिसृभिश्चतुर्भिरित्यादौ समुदाये ह्यनुवर्त्तमाने केषु चिदवयवेषूक्तार्थं शास्त्रं तद्द्वारेण समुदाये प्रवृत्तमेव भवति । तथा च वान्यस्य संयोगादेरित्यत्र घादिनिवृत्त्यर्थमन्यग्रहणं कृतम् । अत एव वार्तिककारः परिहारान्तरमाह । स्वरे ऽवधारणाच्चेति । स्वरेऽसिद्धत्वमुक्तमेवेति स्वरार्थायां षट्संज्ञायामसिद्धत्वं न वक्तव्यम् । किं चित्तु पञ्च ब्राह्मण्य इत्यादौ न षट्स्वस्रादिभ्य इति टाप्प्रतिषेधाय षट्संज्ञायां नलोपस्यासिद्धत्वसुचने इत्याहुः । तत्र नान्तत्वात् पूर्वं ङीप्प्राप्तो निषिध्यते ततो जसो लुकि नलोपे चाकारान्तत्वाट्टाप् प्राप्तः सोपि निषिध्यते । स्त्रियां यदुक्तं तत् षट्स्वस्रादिभ्यो न भवतीति सामान्येन निषेधविधानात् । अत्रान्ये आहुः । स्त्रीसमानाधिकरणपक्षः स्त्रीसूत्रे नाश्रितः । अपि तु प्रकृत्यर्थविशेषणपक्षः प्रत्ययार्थविशेषणपक्षो वेति पञ्चादीनामलिङ्गत्वात् स्त्रीप्रत्ययस्य प्राप्तिर्नास्तीति नार्थस्तन्निषेधेन । अथापि तत्प्राप्तिः स्यात्तथापि नलोपस्य बहिरङ्गत्वादन्तरङ्गे टाप्यसिद्धत्वान्नास्ति टाप्प्राप्तिः । सत्यामपि टाप्प्राप्तावन्तरङ्गायां षट्संज्ञायां नलोपस्यासिद्धत्वात् सिद्ध एव तत्प्रतिषेधः । तुग्विधौ चोक्तमिति । इयमत्रास्ति संनिपातलक्षणत्वं बहिरङ्गलक्षणत्वं च । विभक्तिनिमित्तो हि नलोपः किन्निमित्तस्तुक् संनिपातपरिभाषायास्तुगभावः प्रयोजनत्वेनोक्त इति भाष्यकारस्तथैव व्याचष्टे । सन्निपातेति । इदं तर्हीति । नियमार्थमिदं कृल्लक्षण एव तुग्मा भूत् छलक्षणस्तु यथा स्यादित्यर्थः । इह मा भूदिति । तुगभावे । नह्येष इति । पदत्वमात्रनिबन्धनत्वान्नात्र बहिरङ्गो नलोपः ॥

न मुने ॥३॥ इह ने यत्कार्यं प्राप्नोति तत्प्रति सुभावो नासिद्ध इत्युच्यते । नभावश्चैव तावन्न प्राप्नोति । एवं तर्हि नमुटादेशे * । न मुटादेश इति वक्तव्यम् किमिदं टादेश इति । टाया आदेशः टादेशः । यदि तर्हि टाया आदेश इत्युच्यते टायामादेशे अप्रतिषिद्धं भवति । तत्र को दोषः । अमुनेत्यत्रमुभावस्यासिद्धत्वात् अतो दीर्घो यञि सुपि चेति दीर्घत्वं प्रसज्येत । नैष दोषः टादेश इति सर्वविभक्त्यन्तोयं समासः । टाया आदेशः टादेशः । टायामादेशः टादेश इति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं ने यत्कार्यं प्राप्नोति तस्मिन् मुभावो नासिद्ध इत्युच्यते । नाभावश्चैव तावन्न प्राप्नोतीति । नैष दोषः । इहेङ्गितेन चेष्टितेन निमिषितेन महता च सूत्रनिबन्धेनाचार्याणामभिप्रायो लक्ष्यते तदेतदेव ज्ञापयत्याचार्यो भवत्यत्र नाभावइति । यदयं ने परतः असिद्धत्वप्रतिषेधं शास्ति । अथ वा द्विगता अपि हेतवो भवन्ति । तद्यथा । आम्राश्च सिक्ताः पितरश्च प्रीणिता भवन्ति। तथा वाक्यान्यपि द्विगतानि दृश्यन्ते । श्वेतो धावति । चलंबुसाना यातेति । अथ वा वृद्धकुमारीवाक्यवदिदं द्रष्टव्यम् । तद्यथा। वृद्धकुमारी इन्द्रेणोक्ता वरं वृणीष्वेति सा वरमवृणीत पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्निति । न च तावदस्याः पतिर्भवति कुतः पुत्राः कुतो वा गा-

---

नमुने । ने यत्कार्यमिति । भूतस्य सप्तमीनिर्देशो युज्यते परसप्तमी च शास्त्रे प्रसिद्धेति निष्पन्ने नाशब्दे परतो यत्कार्यं प्राप्नोति तत्र सुभावस्य सिद्धत्वं न्याय्यमिति भावः। नाभावश्चैवेति । नाभावे कर्तव्ये मुभावस्यासिद्धत्वाद्विलक्षणो नाभावो न प्राप्नोति ततश्च सूत्रमेवैतदसंबद्धं नाभावस्यैवाभावात् तत् कुतस्तस्मिन् परतः कार्यं प्राप्नोति यत्र मुभावस्य सिद्धत्वमुच्येत । इहङ्गितेनेति । न निर्देशादेवार्थप्रतिपत्तिः किं तर्हि आचार्य एवं स्मरतीत्येतात्सूत्रनिर्देशादवसीयते । ततश्च यदाचार्यो ने यत्प्राप्नोति तत्र मुभावस्य सिद्धत्वं शास्ति तस्मान्नाभावे अपि मुभावस्य सिद्धत्वं स्मरतीति प्रतीयते । अथ वेति । तन्त्रेण योगद्वयमुच्चारितम् । अथ वा एकस्याप्यनेकशक्तिसंभवादनेकार्थप्रत्यायनमविरुद्धमित्यर्थः । वाक्यान्यपीति । न केवलमर्थस्यानेकप्रयोजनत्वमपि तु शब्दस्यापीत्यर्थः। श्वेतो धावतीति । किं जातीयो धावति किंवर्णो धावतीत्येवमेकेनानेकेन वा पृष्ट।कौशलःदेवं कश्चिदर्थद्वयं प्रतिपादयति। अथ वेति अशब्दार्थस्यापि दान्तरीयकत्वादुपादानं

वः कुतो धान्यम् । तत्रानया एकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं संगृहीतं भवति । एवमिहापि ने असिद्धत्वप्रतिषेधं ब्रुवता नाभावोपि संगृहीतो भवति ।

उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य ॥ ४ ॥ यण्स्वरोयणादेशे स्वरितयणःस्वरितार्थम् *।यण्स्वरो यणादेशे सिद्धो वक्तव्यः।किं प्रयोजनम्।स्वरितयणः स्वरितार्थंस्वरितयणः स्वरितत्वं यथा स्यात् खलप्व्यटति खलप्व्यश्नाति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। आहायं स्वरितयण इति । न ह्यास्ति स्वरितः सिद्धस्तत्राश्रयात्सिद्धत्वं भविष्यति । आश्रयात्सिद्धत्वमिति चेदुदात्तात्स्वरिते दोषः *। आश्रयात् सिद्धत्वमिति चेत् उदात्तात्स्वरिते दोषो भवति। दध्याशा मध्वाशा। एवं तर्हि योगविभागः करिष्यते । उदात्तयणः परस्य अनुदात्तस्य स्वरितो भवति । ततः स्वरितयणः । स्वरितयणश्च परस्यानुदात्तस्य स्वरितो भवति उदात्तयण इत्येव । अथ वा स्वरितग्रहणं न करिष्यते । कि-

---

इष्यते । यथाग्निरानीयतामित्युक्ते अचोदितमपि पात्रानयनमग्न्यानयने ऽन्तर्भवति । एवमिहापि ने परतः प्राप्तं कार्यं प्रति सुभावस्य सिद्धत्वं ब्रुवतार्थान्ने ऽपि कर्तव्ये सिद्धत्वमाश्रितम् ॥

उदात्त । यण्स्वर इति । यण्निमित्तत्वाद्यणः संबन्धी स्वरो यण्स्वरः। खलप्व्यटतीति । खलं पुनातीति क्विप् । उपपदसमासः कृत्स्वरेणान्तोदात्तत्वम् । ङौ परत ओः सुपीति यणादेशः । तस्मात्परस्य ङेः सुप्त्वादनुदात्तस्योदात्तयणो हल्पूर्वादित्युदात्तत्वे प्राप्ते नोङ्धात्वोरिति निषिद्धे ऽनेन स्वरितत्वं तस्य यणादेशे कर्त्तव्ये ऽसिद्धत्वात् स्वरितयणः परोऽटतिशब्दस्य तिङ्ङतिङ इति निघातस्याकारो न भवतीति तस्य स्वरितत्वं न प्राप्नोतीति यण्स्वरस्य सिद्धत्वमुच्यते। केचिदाहुः। एकपदाश्रयत्वादन्तरङ्गं स्वरितत्वं पदद्वयाश्रितस्तु यण् बहिरङ्गः ततोऽसिद्धं बहिरङ्गमन्तरङ्ग इति यणोऽसिद्धत्वात् पूर्वत्रेति निर्दिष्टविषयाभावाद् यणसिद्धत्वप्रसङ्गः स्वरितस्य नास्तीति। तदयुक्तम् । नाजानन्तर्ये बहिष्ट्वप्रकॢप्तिरिति बहिरङ्गपरिभाषाया: निषेधादिको यणचीति द्वयोरचोरानन्तर्याश्रयेण यण्विधानात् दध्याशेति।दधिशब्दोनब्विषयस्यानिसन्तस्येत्याद्युदात्तः उदात्तादनुदात्तस्य स्वरित इति इकारः स्वरितः अपग्राशब्द आशाया अदिगाख्या चेदित्यन्तोदात्तत्वादनुदात्तादिस्तत आकारस्य स्वरितत्वप्रसङ्गः।उदात्तयण इत्येवेति । तेनोदात्तयण इत्येवं यो निर्वृत्तः स्वरितः तस्य यणः परस्यानुदात्तस्य स्वरितो भवतीत्यर्थः त-

नेदानीं स्वरितयणः परस्य अनुदात्तस्य स्वरितो भवति। उदात्तयण इत्येव। ननु च स्वरितयणा व्यवहितत्वाद् न प्राप्नोति। स्वरविधौ व्यञ्जनमविद्यमानवदिति नास्ति व्यवधानम्। अथ वा नैवं विज्ञायते स्वरितस्य यणः स्वरितयण इति। कथं तर्हि, स्वरिते यण् स्वरितयण् स्वरितयण इति॥

स्वरितो वानुदात्ते पदादौ॥ ६॥ स्वरितग्रहणं शक्यमकर्त्तुम्। कथम्। अनुदात्ते परत उदात्त इत्येव सिद्धम्। केनेदानीं स्वरितो भविष्यति। गाङ्गे ऽनूपे इति। आन्तर्यत उदात्तानुदात्तयोरेकादेश स्वरितो भविष्यति। इदं तर्हि प्रयोजनम्। तेन वर्ज्यमानता मा भूदिति। अथ क्रियमाणे ऽपि स्वरितग्रहणे यः सिद्धः स्वरितस्तेन वर्ज्यमानता कस्मान्न भवति कन्यानूप इति। बहिरङ्गलक्षणत्वात्। असिद्धंबहिरङ्गमन्तरङ्गइत्येवं न भविष्यति। यथैव तर्हि क्रियमाणे यः सिद्धः स्वरितस्तेन वर्ज्यमानता न भवति एवमक्रियमाणे ऽपि न भविष्यति। तस्मान्नार्थः स्वरितग्रहणेन। असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इत्येव सिद्धम्। एकादेशस्वरोन्तरङ्गः *। एकादेशस्वरो-

---

तस्यास्यैव स्वरितस्याश्रयात्सिद्धत्वं भवति। स्वरिते यणीति। उदात्तस्वरितयोरिति सप्तमी उदात्तस्वयो यण् स उदात्ते ऽपि भवति तद्विषयत्वात्। स्वरिते यणित्येषा तु परसप्तमी तेन लौकिके प्रयोगे यः स्वरितस्तस्मिन् परतो यो यण् ततः परस्य लक्षणवशादनुदात्तस्य स्वरितः सान्नभवतीत्ययमर्थः; न च दध्याशामित्याकारो लौकिके स्वरित इति न कश्चिद्दोषः। लौकिकस्य स्वरितस्याश्रयणे यणि कर्त्तव्ये तस्यासिद्धत्वाभावः॥

स्वरितः। गाङ्गेनूप इति। गङ्गाया इदमिति तस्येदमित्यण् प्रत्ययस्वरेणान्तोदात्तः। ततो ङिः सुप्त्वादनुदात्तः तयोरेकादेशउदात्तः। अपोनुगतमनूपमिति प्रादिसमासः तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरे प्राप्ते अनोरप्रधानकनीयसी इत्युत्तरपदमन्तोदात्तं शेषनिघातः एङः पदान्तादतीत्युदात्तानुदात्तयोरेकादेशः पक्षे स्वरितःपक्षे उदात्तः। तेन वर्ज्यमानतेति। आन्तरतम्याद्यत् स्वरितत्वंतत्सिद्धमितिशेषनिघातेन पेशब्दोनुदात्तः प्राप्नोत्युदात्तस्त्वेष्यते। अस्य तु स्वरितस्यासिद्धत्वाद्यथोक्तदोषाभावः। कन्यानूप इति कन्याशब्दः कन्याराजन्यमनुष्याणामन्त इत्यन्तस्वरितः ततः स्वरितानुदात्तयोरेकादेशः आन्तर्यतः स्वरितः तस्य सिद्धत्वात् वर्ज्यमानस्वरे सत्युदात्तस्वरितयोर्यौगपद्यं न प्राप्नोति। ततश्चात्र यः परिहारः स एव गाङ्गे ऽनूप इत्यत्र भविष्यतीति भावः। असिद्ध-

ऽन्तरङ्गः सिद्धो वक्तव्यः। किं प्रयोजनम्। अयवायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् *। अय्। वृच इदम्। प्लच इदम्। उदात्तानुदात्तयोरेकादेशस्तस्यैकादेश उदात्तेनोदात्त इत्येतद्भवति। तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यत उदात्तस्य उदात्तः अयादेशो यथा स्यात्। अवादेशो नास्ति। आय्। कुमार्या इदम्। किशोर्या इदम्। उदात्तानुदात्तयोरेकादेशस्तस्यैकादेश उदात्ते नोदात इत्येतद्भवति तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यतः उदातस्य उदात आयादेशो यथा स्यात्। नैतदस्ति प्रयोजनम्। एकादेशे कृते उदातयणो हल्पूर्वादित्युदात्तो भविष्यति। इदमिह संप्रधार्यम्। उदात्तत्वं क्रियतामेकादेश इति। किमत्र कर्तव्यम्। परत्वादुदात्तत्वम्। नित्य एकादेशः। कृते उदात्तत्वे प्राप्नोत्यकृतेपि प्राप्नोति। अनित्य एकादेशः। अन्यथा स्वरस्य कृते उदात्तत्वे प्राप्नोत्यन्यथा स्वरस्याकृते, स्वरभिन्नस्य च प्राप्नुवन् विधिरनित्यो भवति। अन्तरङ्गस्तर्ह्येकादेशः। काऽन्तरङ्गता। वर्णावाश्रित्य एकादेशः। पदस्य उदात्तत्वम्। एवं तर्हि इदमिह संप्रधार्यमाट् क्रियतामुदात्तत्वमिति। किमत्र क-

---

मिति। पदद्वयाश्रयत्वादेकादेशस्य बहिरङ्गत्वात् स्वरोऽपि तदीयो बहिरङ्गः। एकादेशस्वर इति। एकादेशस्वरे चत्वारि दर्शनानि। उदात्तानुदात्तयोरेकादेश आन्तर्यात्स्वरितोभिनिर्वृत्तः। तस्य स्थान एकादेश उदात्तेनोदात्त इत्युदात्तगुण आदेशः क्रियते इत्येकं दर्शनम्। स्वरितगुणस्योदात्तगुणमात्रं क्रियत इति द्वितीयम्। एकादेश उदात्तेनोदात्त इति परिभाषा यत्रैकादेशो विधीयते तत्रोपतिष्ठते। तत्रायमर्थो भवत्यादगुणो भवत्युदात्तानुदात्तयोस्त्वादगुण उदात्त इत्येकादेशो विधीयमान एवोदात्तो भवतीति तृतीयम्। चतुर्थं दर्शनं तूदात्तानुदात्तयोरेकादेश उदात्तो भवति स्वरितगुणः प्राप्तः तत्र येन नाप्राप्त इति स्वरितत्वापवाद उदात्तविधिः संपद्यते। तत्र परिभाषापक्षे सिद्धमुदात्तत्वमयादिषु। इतरेषु पक्षेष्वसिद्धत्वे प्राप्ते सिद्धत्वमुच्यते। उदात्तोऽयादेश इति। अन्यथा स्वरितः स्यात्। कुमार्या इदमिति। कुमारीशब्द उदात्तनिवृत्तिस्वरेणान्तोदात्तः। कुमारी ए इति स्थिते आडागमे कृते यणादेशे चोदात्तयणो हल्पूर्वादित्याट उदात्तत्वे आडकारयोरुदात्तयोर्वृद्धिरेकादेश उदात्तस्तस्यायादेशः। एकादेश इति। आडेकारयोरनुदात्तयोः प्रागेकादेशः। पश्चाद्विभक्त्युदात्तत्वमित्यर्थः। पदस्योदात्तत्वमिति। विभक्तेरुदात्तत्वविधानात्। आट् क्रियतामिति। एकादेशस्थानिना सह विभक्त्युदात्तस्य

त्यम्। परत्वादाडागमः। नित्यमुदात्तत्वम्। कृते ऽप्याटि प्राप्नोत्यकृते पि प्राप्नोति। आडपि नित्यः। कृते प्युदात्तत्वे प्राप्नोत्यकृते ऽपि प्राप्नोति। अनित्य आट्। अन्यथा स्वरस्य कृते उदात्तत्वे प्राप्नोत्यन्यथास्वरस्याकृते। स्वरभिन्नस्य च प्राप्नुवन् विधिरनित्यो भवति। उदात्तत्वमप्यनित्यम्। अन्यस्य कृते आटि प्राप्नोत्यन्यस्याकृते प्राप्नोति। शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति। उभयोरनित्ययोः परत्वादाडागमः। आटि कृते अन्तरङ्ग एकादेशः। आव्। वृच्चाविदम्। उदात्तानुदात्तयोरेकादेशः तस्य एकादेश उदात्तेनोदात्त इत्येतद्भवति तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यत उदात्त आवादेशो यथा स्यात्। एकादेशस्वरः। गाङ्गे ऽनूप इति उदात्तानुदात्तयोरेकादेशः तस्यैकादेश उदात्तेनोदात्त इत्येतद्भवति तस्य सिद्धत्वं वक्तव्यम्। स्वरितो वा नुदात्ते पदादाविल्येष स्वरो यथा स्यात्। शतृस्वरः। तुदती। उदात्तानुदात्तयोरेकादेशः। तस्यैकादेश उदात्ते नोदात्त इत्येतद् भवति। तस्य सिद्धत्वं वक्तव्यम्। शतुरनुमोनद्यजादीत्यन्तोदात्तादित्येष स्वरो यथा स्यात्। नैतदस्ति प्रयोजनम् आचार्यप्रवृत्तिर्ज्ञापयति सिद्ध एकादेशस्वरः शतृस्वरे इति। यदयमनुम इति प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्। नह्यन्तरेणोदात्तानुदात्तयोरेकादेशं शत्रन्तं सनुम्कमन्तोदात्तमस्ति। ननु चेदमस्ति यान्ती वान्तीति एतदपि निघाते कृते नान्तरेण उदात्तानुदात्तयो-

---

विचार्यते। ननु च यणादेशे कृते विभक्तिस्वरेण भाव्यं ततश्च नदीसंज्ञाया अभावाद् आण् न प्राप्नोति। विहितविशेषणं नदीग्रहणं नद्या यो विहितो ङित्तस्याङित्यदोषः। अन्तरङ्ग एकादेश इति। वर्णाश्रित्यैकादेशः पदस्योदात्तत्वमिति प्रतिपादनेन। तस्मान्नार्थः सिद्धत्ववचनेन। गाङ्गे ऽनूप इति। एकारोदात्तत्वस्यासिद्धत्वात् स्वरितानुदात्तयोरेकादेश आन्तर्यात् स्वरित एव स्यान्न तु कदा चिदुदात्तः। तुदतीति। तास्यनुदात्तेत् इति शतानुदात्तः। शप्रत्यय उदात्तः। शतुरनुम इत्यत्रान्तोदात्तादिति वर्त्तते। न ह्यन्तरेणेति। असिद्धत्वे चान्तोदात्तत्वाभावादेव तुदन्तीत्यादा उदात्तत्वं न भविष्यतीति किमनुम इति प्रतिषेधेन। प्रतिषेधात्तु नुमि सिद्धत्वमनुमीयते। ननु चेति। अत्र लसार्वधातुकानुदात्तत्वस्य निमित्ताभावाद्द्वयोरुदात्तयोरेकादेश उदात्त इति भावः शेषनिघातः पदस्येति मन्यते। एतदपीति। प्रत्ययस्वरे सति निघाते धातोरनुदात्तत्वा-

रेकादेशं अत्र न्तं सनुमकमन्तोदात्तं भवति । इदमिह संप्रधार्यं-निघातः क्रियतामेकादेश इति । किमत्र कर्त्तव्यम्।परत्वान्निघातः। नित्य एकादेशः । कृते ऽपि निघाते प्राप्नोत्यकृते ऽपि प्राप्नोति। एकादेशोपि अनित्यः । अन्यथा स्वरस्य कृतेनिघाते प्राप्नोत्यन्यथा स्वरस्याकृते निघाते। स्वरभिन्नस्य च प्राप्नुवन् विधिरनित्यो भवति। अन्तरङ्गस्तर्ह्येकादेशः । कान्तरङ्गता । वर्णावाश्रित्य एकादेशः ।पदस्य निघातः । निघातोऽप्यन्तरङ्गः । कथम् । उक्तमेतत्पदग्रहणं परिमाणार्थमिति । उभयोरन्तङ्गयोः परत्वान्निघाते एतदपि नान्तरेण उदात्तानुदात्तयोरेकादेशमन्तोदात्तं भवति । शतस्वर । एकाननुदात्त । तुदन्ति । लिखन्ति । उदात्तानुदात्तयोरेकादेशः । तस्य एकादेश उदात्तेनोदात्त इत्येतद्भवति तस्य सिद्धत्वं वक्तव्यम् । तेन वर्ज्यमानता यथा स्यात् । सर्वानुदात्त । ब्राह्मणास्तुदन्ति । ब्राह्मणा लिखन्ति । उदात्तानुदात्तयोरेकादेशः । तस्य एकादेश उदात्तेनोदात्त इत्येतद्भवति तस्य सिद्धत्वं वक्तव्यम् । किं प्रयोजनम् । तिङ्ङतिङ इति निघातो यथा स्यात् । किमुच्यते अन्तरङ्ग इति । योहि बहिरङ्गः असिद्ध एवासौ भवति । प्रपचतीति । सोमसुत्पचतीति । तत्तर्हि वक्तव्यम्। न वक्तव्यम्। सर्वचैवानुम् प्रतिषेधो ज्ञापकः सिद्धमादे-

---

त् । एवमनुम इति ज्ञापकं स्थितमेव । एकाननुदात्तेति । एकाननुदात्तग्रहणेनानुदात्तं पदमेकवर्जमित्येव स्वरोभिधीयते । तत्र ह्युक्तं सिद्धं त्वेकाननुदात्तत्वादिति । तुदन्तीति । विकरण उदात्तो लसार्वधातुकमनुदात्तं तत्रोदात्तानुदात्तयोरेकादेशस्वरस्य धातुस्वरे ऽसिद्धत्वाच्छेषनिघाताप्रसङ्गाद्धातोरप्यन्तोदात्तत्वं स्यात् । ननु चोदात्तत्वासिद्धत्वे ऽपि स्वरितेन वर्ज्यमानस्वरो भविष्यति । सत्यं, सिध्यति । यदा स्वरितस्योदात्तता भवतीति पक्षः । यदा तु स्वरितापवाद उदात्त इति पक्षः तदेकादेशस्योदात्तत्वं विधीयते तस्य चासिद्धत्वे स्वरान्तराभावाद्वर्ज्यमानस्वरो न स्यादिति सिद्धत्वमुच्यते।ब्राह्मणास्तुदन्तीति । अत्रापि स्वरितस्थाने उदात्तः क्रियत इति दर्शने उदात्तस्यासिद्धत्वे ऽपिस्वरितस्य निघातविधानाद् उदात्तस्याप्रयोगः सिद्ध एवेति स्वरितापवाद उदात्तत्वमिति दर्शनाश्रयेण सिद्धत्वमुच्यते । अन्यथोदात्तस्यानुदात्ताभावादुदात्तः प्रयोगे श्रूयेत । प्रपचतीति । बाह्यपदापेक्षत्वादेकादेशस्य बहिरङ्गत्वात्तत्स्वरो बहिरङ्गः तस्यासिद्धत्वात्तिङि चोदात्तवतीति गतेर्निघातो न भवति । सोमसुत् पचतीति । तिङ्ङतिङ इति निघातः ईकारस्य न भवति । सर्वचैवेति । लक्ष्यापेक्षया सामान्यविषयम-

श्चस्वरोऽन्तरङ्ग इति। संयोगान्तलोपो रोरुत्वे* । संयोगान्तलोपोरोरुत्वे सिद्धोवक्तव्यः। किं प्रयोजनम्। हरिवो मेदिनं त्वा। संयोगान्तलोपस्यासिद्धत्वात् हशीत्युत्वं न प्राप्नोति। प्लुतिश्च*। प्लुतिश्च उत्वे सिद्धा वक्तव्या। सुस्रोता३ अत्र त्वमसीत्यत्र प्लुतेरसिद्धत्वादप्लुतादप्लुत इत्येतन्न वक्तव्यं भवति। नैतदस्ति प्रयोजनम्। क्रियते न्यास एव। सिज्लोप एकादेशे सिद्धो वक्तव्यः *। अलावीत्। अयावीत्। सिज्लोपस्यासिद्धत्वात्सवर्णदीर्घत्व न प्राप्नोति। यदि पुनरिडादेः सिज्लोप उच्येत। नैवं शक्यमिह हि माहिलावीत् माहियावीत्। यद्यत्र इण् न स्यात् अनुदात्तस्य ईटः श्रवणं प्रसज्येत। इटि पुनः सत्युक्तमेतत्। अर्थवत्तु चित्करणसामर्थ्याद्धीट उदात्तत्वमिति। तत्रैकादेश उदात्तेनोदात्त इत्युदात्तत्वं सिद्धं भवति। संयोगादिलोपः संयोगान्तलोपे*। संयोगादिलोपः संयोगान्तस्य लोपे सिद्धो वक्तव्यः। काष्ठतट्। संयोगादिलोपस्यासिद्धत्वात्संयोगान्तलोपः प्राप्नोति। नैष दोषः। उक्तमेतत्। अपवादो वचनप्रामाण्यादिति। निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः। वृक्णः। वृक्णवान्। निष्ठादेशस्यासिद्धत्वाद् झलीति षत्वं प्राप्नोति। स्वर। क्षीवः। निष्ठादेशस्यासिद्धत्वात् इट्सहितस्य निष्ठातस्यनिपातनलोपरूपत्वाद् निष्ठा च द्व्यजनादित्येष स्वरो न प्राप्नोति। प्रत्ययः। क्षीवेन तरति क्षीविकः। नि-

---

नुमानमाश्रीयते अनुमानत्वाज् ज्ञापकस्य। तत्रैकपदाश्रयैकादेशस्वरः सिद्ध इत्यनुम इति प्रतिषेधेन ज्ञाप्यते। अथ वा एकादेश उदात्तेनोदात्त इति परिभाषाश्रयितव्येति ज्ञाप्यते। यस्तु बहिरङ्ग एकादेशस्वरः तस्या सिद्धं बहिरङ्गमन्तरङ्गे इत्यसिद्धत्वं भवत्येव। हरिव इति। हरयोस्य सन्तीति मतुप् छन्दसीर इति वत्वंस्तु नुम्संयोगान्तलोपरुत्वानि। यदा तु छन्दसीवनिपाविति वनिप्प्रत्ययः क्रियते वन उपसंख्यानमिति तस्य च रुत्वं तदा नार्थः सिद्धत्ववचनेन। यदि पुनरिति। इट ईटीत्यत्र राजस्येत्यतः सस्येति वर्तते इट इति षष्ठी न तु पञ्चमी। तेनेडादेः सस्य लोपो विधीयमान इटो भवति। यद्यत्रेति। यदि लोपेननिवर्त्तेतेत्यर्थः। ननु च उदात्तनिवृत्तिस्वरेणोदात्तत्वमीटो भविष्यति। नैतदस्ति। उदात्तनिवृत्तिस्वरे कर्त्तव्ये लोपस्यासिद्धत्वात्। संयोगादिलोप इति। ननु चोक्तमवादा वचनप्रामाण्यादिति। एवं मन्यते प्रवर्ततां संयोगादिलोपः। तस्मिंस्तु कृते तस्यासिद्धत्वात् संयोगान्तलोपः प्राप्नोति। उक्तमेतदिति। असिद्धे-

ष्ठादेशस्यासिद्धत्वाद्यचष्ठञ्जिति ठञ्न प्राप्नोति। इड्विधिः। क्षीबः। निष्ठादेशस्यासिद्धत्वाद्वलादिलक्षण इट् प्राप्नोति। ननु च यः प्रत्ययविधौ सिद्धः सिद्धोसाविड्विधौ। इदं तर्हि प्रयोजनम्। ओलस्जी। लग्नः। निष्ठादेशः सिद्धो वक्तव्यः। निष्ठादेशस्य सिद्धत्वाद् नेड् वशि कृतीति इट्प्रतिषेधो यथा स्यात्। ईदित्करणं न वक्तव्यं भवति। एतदपि नास्ति प्रयोजनम्। क्रियते न्यास एव। वस्वादिषु दत्वं सौ दीर्घत्वे। वस्वादिषु दत्वं सौ दीर्घत्वे *। सिद्धं वक्तव्यम्। उखास्रत्। पर्णध्वत्। दत्वस्यासिद्धत्वाद् अत्वसन्तस्येति दीर्घत्वं प्राप्नोति। अधातोरिति न वक्तव्यं भवति। नैतदस्ति प्रयोजनम्। क्रियते न्यास एव। अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे *। अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये। अमी आसते। अमी अत्र। अमू आसाते अमू अत्र। ईत्वोत्वयोरसिद्धत्वाद् एच इति अयावेकादेशाः प्राप्नुवन्ति। किमुच्यते बहिष्पदलक्षण इति। यो ह्यन्यः सोऽसिद्ध एवासौ भवति। अमुया अमुयोरिति। प्रगृह्यसंज्ञायां च सिद्धे वक्तव्ये। अमी अत्र। अमू आसाते। ईत्वोत्वयोरसिद्धत्वाददसोमादिति प्रगृह्यसंज्ञा न प्राप्नोति। किमर्थमिदमुभयमुच्यते। न प्रगृह्यसंज्ञायामित्येव स्वरेपि बहिष्पदलक्षणं चोदितं स्यात्। पुरस्तादिदमाचार्येण दृष्टं स्वरे बहिष्पदलक्षण इति तत्पठितम्। तत उत्तरकालमिदं दृष्टं प्रगृह्यसंज्ञायां चेति तदपि पठि-

---

षापवादः संयोगादिलोपः। इट्प्राप्नोतीति। यदा तकारमात्रस्य लोपो निपात्यत इति पक्षः तदेट् प्राप्नोति। ननु चेति। इडभावाश्रयत्वात् प्रत्ययविधेः प्रत्ययविधौ सिद्धत्वेनेडभाव आश्रित एवेति पृथगिड्ग्रहणं न कर्त्तव्यम्। सिद्ध इति। सुतरां सिद्ध इत्यर्थः। अथवानासिद्धो वचनेनसिद्धः किं तर्हि अन्तरेण वचनं सिद्ध इत्यर्थः। क्रियते न्यास एवेति। येषां दत्वं नास्ति तदर्थं चर्म वस्ते चर्मवः पिण्डं ग्रसते पिण्डग्र इति। अदस इति। स्वरोच् तद्विशेषणं बहिष्पदलक्षणइति। बाह्यपदावयव इत्यर्थः। अथ वा बहिष्पदलक्षणे कार्ये कर्त्तव्ये स्वरे परत इत्यर्थः। यो ह्यन्य इति। बाह्यपदावयवो न भवतीत्यर्थः। असिद्ध एवासौ भवतीति। असौ स्वरोसिद्धत्वविषये भवतीत्यर्थः। अमुयेति। अदम् आङ् इति स्थितेत्यदाद्यत्वं टाप् एकादेशः उत्वस्यासिद्धत्वादाङि चाप इत्येत्वमयादेशः ततो सु-

तम्। न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति। प्लुतिस्तुग्विधौ छे च*। प्लुतिस्तुग्विधौ छे च सिद्धा वक्तव्या। अग्ना३इच्छत्रम्। पटा३उच्छत्रम्। प्लुतेरसिद्धत्वाच्छे चेति तुग् न प्राप्नोति। किमुच्यते छे चेति। यो ह्यन्योऽसिद्ध एवासौ भवति। अग्निची३त्। सोमसू३त्। श्चुत्वं धुड्विधौ*। श्चुत्वं धुड्विधौ सिद्धं वक्तव्यम्। अट् श्च्योतति। पट् श्च्योतति। श्चुत्वस्यासिद्धत्वाद् डः सि धुडिति धुट् प्रसज्येत। अभ्यासजश्त्वचर्त्वमेत्वतुकोः*। अभ्यासजश्त्वचर्त्वमेत्वतुकोः सिद्धं वक्तव्यम्। बभणतुः बभणुः। अभ्यासादेशस्यासिद्धत्वादेत्वं प्राप्नोति। उचिच्छिषति। अभ्यासादेशस्यासिद्धत्वाच्छे चेति तुक् प्राप्नोति। द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्*। सय्यन्ता। सव्वत्सरः। यल्लोकमिति परसवर्णस्यासिद्धत्वाद् यर इति द्विर्वचनं न प्राप्नोति। पदाधिकारस्य लत्वघत्वढत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि*। पदाधिकारस्य लत्वघत्वढत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि। लत्व। गलो गलः। गरो गरः। लत्व। घत्व। द्रोग्धाद्रोग्धा। घत्व। ढत्व। द्रोढाद्रोढा। ढत्व। नत्व। नुन्नो नुन्नः।

---

त्वम्। न चेति। व्याख्यानसूत्रेषु लाघवानादरात्। अग्ना३इच्छत्रमिति। एचोप्रगृह्यस्येत्याकारः प्लुतः इदुतौ तु मात्रिकौ तत्र इदुतोरसिद्धत्वादेकाराश्रयो विकल्पेन तुक् प्राप्नोति। प्लुतस्याश्रयस्तु नित्य इष्यते। प्लुतिशब्देन तत्सहचरिताविदुतौ लक्ष्येते। अग्निची३ दिति। प्लुतस्यासिद्धत्वाद् ह्रस्वस्येति तुग् भवति द्विविधं चात्रासिद्धत्वं बहिरङ्गत्वात् पूर्वत्रासिद्धमिति च। अट् श्च्योततीति। श्च्युतिर् क्षरणे इति धातुः सकारादिः प्रतिज्ञायते मधुश्च्युतमाचष्टे इति णिचि टिलोपे क्विपि मधुगिति रूपं यथा स्यात्। शकारादौ मधुडिति स्यात्। उचिच्छिषतीति। उच्छीविवासे तुक् सन् इट् अजादेर्द्वितीयस्येति च्छिशब्दस्य द्विर्वचनं शर्पूर्वाः खय इति शेषः छस्य अभ्यासे चर्चेति चकारस्तस्यासिद्धत्वाच्छे चेति पूर्वस्य तुक् प्राप्नोति। सय्यन्तेति। अनुस्वारस्यायोगवाहानामविशेषेण प्रत्याहार उपदेशकरणचोदनासामर्थ्याद् द्विर्वचने च सिध्यति रूपमेतदनपेक्ष्य सिद्धत्ववचनम्। पदाधिकारस्येति। यदि लत्वादिषु पदस्येत्यपेक्ष्यते तदा लत्वादीनां द्विर्वचनस्य च समकत्वाद् द्विर्वचने कर्त्तव्ये तेषामसिद्धत्वात् पूर्वं द्विर्वचने सत्यनिष्टोपि प्रयोगः स्यात्। यदा तु लत्वादिषु पदस्येति नापेक्ष्यते तदा द्विर्वचनस्य बहिरङ्गत्वादन्तरङ्गेषु लत्वादिषु कृतेषु द्विर्वचने सतीष्टं सिध्यतीति नार्थः सिद्धवचनेन। गल इति। अचि विभाषेति लत्वम्। द्रोग्धेति। वा द्रुहमुहेति वा घत्वं पक्षे हो ढ इति ढत्वम्। नुन्न इति।

नुत्तो नुत्तः। नत्व। रुत्व। अभिनो ऽभिनः। अभिनद्, अभिनत्। रुत्व। षत्व। मातुः ष्वसा मातुःष्वसा। मातुः स्वसा मातुः स्वसा। पितुः ष्वसा पितुः ष्वसा। पितुः स्वसा पितुः स्वसा। षत्व। णत्व। माषवापाणि माषवापाणि। माषवापानि माषवापानि। णत्व। अनुनासिक। वाङ्नयनं वाङ्नयनम्। वाग्नयनं वाग्नयनम्। अनुनासिक। छत्व। वाक्श्चयनं वाक्श्चयनम्। वाक्च्छयनं वाक्च्छयनम्। उभयथा चायं दोषः। यद्यपि स्थाने द्विर्वचनम्। अथापि द्विः प्रयोगः। कथम्। यदि तावत्स्थाने द्विर्वचनं संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य लत्वाद्यभावः। तत्रैष दोषः सिद्धः। अथ द्विः प्रयोगो द्विर्वचनमसिद्धत्वाल्लत्वादीनि निवर्त्तेरन्॥

नलोपः प्रातिपदिकान्तस्य॥७॥ नलोपे अन्तग्रहणं किमर्थम्। नलोपे अन्तग्रहणं पदाधिकारस्य विशेषणत्वात्*। नलोपे अन्तग्रहणं क्रियते। किं कारणम्। पदाधिकारस्य विशेषणत्वात्। पदाधिकरो विशेषणम्। कथम्। पदस्येति नैषा स्थानषष्ठी। का तर्हि विशेषणषष्ठी। अह्नो नलोपप्रतिषेधः*। अह्नो नलोपस्य प्रतिषेधो वक्तव्यः। अहोभ्याम् अहोभिरिति। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। रुरत्र बाधको भविष्यति। असिद्धो रुः तस्यासिद्धत्वान्नलोपः प्राप्नोति। अनवकाशो रुर्नलोपं बाधिष्यते। सावकाशो रुः। कोवकाशः। अनन्त्यः अकारः।

---

नुदविदेति वा निष्ठानत्वम्। अभिन इति। भिदेर्लङि सिपि श्नमि अटि हल्ङ्यादिलोपेसिपि धातोरुर्वा दश्चेति वा रुत्वम्। मातुः ष्वसेति। मातुः पितुर्भ्यामन्यतरस्यामिति वा षत्वम्। माषवापाणीति। प्रातिपदिकान्तेति वा णत्वम्। वाङ्नयनमिति। यरोनुनासिक इति वा गकारस्य ङकारः। वाक्छ्यनमिति। शश्छोटीति शकारस्य वाच्छत्वम्। लत्वादीनि निवर्तेरन्निति। द्विर्वचनात् प्राङ् न प्रवर्तेरन्। कृते तु द्विर्वचने ऽनिष्टापि तद्विकल्पः स्यात्। ततश्च गलोगरोगरोगल इत्याद्यपि प्रसज्येत॥

न लोपः प्राति। अन्तग्रहणमिति। नलोपः प्रातिपदिकस्येत्येवास्तु पदस्येति वर्तते तत्र नकारेण पदे विशेष्यमाणे तदन्तविधिना नकारान्तस्य पदस्य प्रातिपदिकस्य लोपो विधीयमानो ऽलोऽन्त्यस्येत्यन्त्यस्य भविष्यतीति प्रश्नः। नलोप इति। असत्यन्तग्रहणे प्रातिपदिकस्य पदस्य योऽवयवो नकारस्तस्य यत्र तत्र स्थितस्य लोपः स्यात्। ततश्च नग्राभ्यामित्यत्र स्यात्। अह्न इति। अहन् रोऽसुपीति रुत्वरत्वयोः संबुद्धौ सावकाशत्वात् पूर्वत्रासिद्धमित्यसिद्धत्वान्नलोपः प्राप्तो निषिध्यते। अनन्त्य इति। अकृतनलोपापेक्षयाऽ

आचार्यप्रवृत्तिर्ज्ञापयति नानन्त्यस्य रुर्भवतीति। यदयमहन्ग्रहणं करोति। अहन्ग्रहणादिति चेत्संबुद्ध्यर्थं वचनम्*। अहन्ग्रहणादिति चेत्संबुद्ध्यर्थमेतत्। हे अहरिति। यत्तर्हि रुत्वं शास्ति। एतदपि संबुद्ध्यर्थमेव स्यात्। हे दीर्घाहोऽत्र। यत्तर्हि रूपरात्रिरथन्तरेषूपसंख्यानं करोति। तज्ज्ञापयत्याचार्यः नानन्त्यस्य रुर्भवतीति। कथं कृत्वा ज्ञापकम्। न ह्यस्ति विशेषो रूपरात्रिरथन्तरेषु अनन्त्यस्य री वा रे वा॥

नङिसंबुद्ध्योः ८।न ङिसंबुद्ध्योरनुत्तरपदे*।न ङिसंबुद्ध्योरनुत्तरपद इति वक्तव्यम्। इह मा भूत्। चर्मणि तिला अस्य चर्मतिल इति। राजन् वृन्दारक राजवृन्दारकेति। वा नपुंसकानामिति वक्तव्यम्*। हे चर्मन् हेचर्म तत्तर्हि अनुत्तरपद इति वक्तव्यम्। न वक्तव्यम्। ङिसंबुद्ध्योरित्युच्यते न चात्र ङिसंबुद्धी पश्यामः। प्रत्ययलक्षणेन। न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः। न क्व चिद् ङिर्लोपेन लुप्यते। सर्वत्र लुमतैव। स यथैवेह भवति। आर्द्रेचर्मन् लोहितेचन्निति। एवमिहापि स्यात्। चर्मणि तिला अस्य चर्मतिल इति।

---

नन्त्यः। कृते तु नलोपे एकदेशविकृतस्यानन्यत्वात् स एव अहःशब्द इति प्रत्यभिज्ञानादलोन्त्यस्येति वचनादकारस्य रुत्वप्रसङ्गः। यमयमहन्ग्रहणमिति। नकारापरित्यागेन निर्देशस्यैतत्प्रयोजनं नकारान्तस्य स्थानित्वं यथा स्यात्। अन्यथाह इति ब्रूयात्। संबुद्ध्यर्थमिति। संबुद्धौ नलोपस्य प्रतिषेधात्तदन्तानुकरणनिर्देशः स्यादिति नलोपाभावो न ज्ञाप्येत। यत्तर्हि रुत्वमिति। हे अहरिति अत्र रो ऽसुपीति रादेशः क्रियते। अहन्नित्यनेन तु रुत्वं विधीयते। तत्राकृतनलोपनिर्देशो नलोपाभावस्य ज्ञापक एवेति भावः। हे दीर्घाहोऽत्र ऽति। दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः। हल्ङ्यादिलोपः। प्रत्ययलक्षणेन सुप्परत्वादुत्वम्। यत्तर्हीति। वार्तिककारवचनं ज्ञापकत्वेनोपन्यस्यति। न ह्यस्तीति। अतः परस्य रोरुत्वमुच्यते अकारस्य तु रौ रेफे वा विशेषाभावाद्रादेशमेव विदध्यादिति रुत्वविधानान्नलोपाभावो ऽनुमीयत इति नकारस्यैव रुत्वरत्वाभ्यां तत्र भाष्यरिति सिद्धमिष्टम्॥

नङि। चर्मतिल इति। नलुमता तस्मिन्निति प्रत्ययलक्षणनिषेधाद् भसंज्ञाया अभावात् सुबन्तत्वात्पदत्वान्नलोपः। राजन्वृन्दारकेति। अवयवार्थसंबोधनेन समुदायार्थसंबोधनं प्रतीयत इति संबुद्ध्यन्तयोरेव समासः। यथैवेहेति। वचनसामर्थ्यात्प्रत्ययलक्ष-

तस्मादुपसंख्यानं कर्त्तव्यम्। एवं तर्हि ङ्यर्थेन तावन्नार्थः। भत्वात्तु ङौ प्रतिषेधानर्थक्यम् *। ङौ प्रतिषेधोऽनर्थकः। किं कारणम्। भत्वात्। भसंज्ञात्र भवति। यदि तर्हि भसंज्ञात्र भवति रथन्तरसामन्नित्यत्र अल्लोपोऽन इत्यल्लोपः प्राप्नोति। नैष दोषः। उक्तमुभयसंज्ञान्यपि च्छन्दांसि दृश्यन्ते। तद्यथा। सस्रुष्टुभा स ऋक्वता गणेन। पदत्वात्कुत्वं भत्वाज्जश्त्वं न भवति। एवमिहापि पदत्वादल्लोपोऽन इति लोपो न भत्वान्नलोपो न भविष्यति। तस्मान्नार्थो ङिग्रहणेन। संबुद्ध्यर्थेनापि नार्थः। कथम्। संबुद्ध्यन्तानां न समासः राजन्वृन्दारकेति। किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। इह तावत्समानार्थेन वाक्येन भवितव्यं समासेन च। यश्चेहार्थो वाक्येन गम्यते नासौ जातु चित् समासेन गम्यते। अवयवसंबोधनं वाक्येन गम्यते समुदायसंबोधनं समासेन। वा नपुंसकानामित्येतद्वक्तव्यमेव॥

मादुपधायाश्च मतोर्वोऽयवादिभ्यः॥ ९॥ रदाभ्यां निष्ठातो नः पूर्वस्य च दः। अनन्त्ययोरपि निष्ठामतुपोरादेशः *। निष्ठामतुपोरादेशस्तु अनन्त्ययोरपीति वक्तव्यम्। भिन्नवन्तः। वृक्णवन्तः। न वा वक्तव्यम्। वचनाद्भविष्यति। अस्ति वचने प्रयोजनम्। किम्। भिन्नवान्। वृक्णवान्। नार्मते प्रतिषेधः *। नार्मते प्रतिषेधो वक्तव्यः। नृमतोपत्यं नार्मत इति। उक्तं वा *। किमुक्तम्। निष्ठामतुपोस्तावदुक्तम्। न वा पदाधिकारस्य विशेषणत्वाद् इति। नार्मते ऽप्युक्तम्। न वा बहिरङ्गलक्षणत्वादिति॥

---

णाश्रयत्वात्। भत्वादिति। अयस्मयादित्वात्। संबुद्ध्यन्तानामिति। पृथगनवयवार्थयोरभिमुखीकरणे परस्परस्यैकार्थीभावलक्षणसामर्थ्यायोगात्। यद्यपि हेराजन्नित्यादौ लोपशब्देन संबुद्धेर्लोपात् प्रत्ययलक्षणेन संबुद्धिपरत्वाद् नलोपनिषेधः प्रवर्त्तते समासे तु लुमता लोपान्नलुमता तस्मिन्निति संबुद्धिपरत्वं नास्तीति परिहारोऽस्ति तथापि व्युत्पादनाय परिहारान्तरं भाष्यकारेणाभिहितम्। वा नपुंसकानामिति। प्रत्ययलक्षणे सति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं प्रत्ययलक्षणप्रतिषेधेऽप्राप्ते प्रतिषेधे वचनम्॥

मादु। अनन्त्ययोरपीति। मतुन्निष्ठाभ्यां पदस्य विशेषणात्तदन्तस्यैव पदस्य संप्रत्ययः स्यादिति वचनम्। नवेति। पदेन मतुन्निष्ठे विशेष्येते नतु ताभ्यां पदमिति तदन्तविध्यभावः॥

संज्ञायामासंदीवदष्ठीवत्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती॥ ११॥ १२॥ किमयमेको योगः । आहो स्विन्नाना योगौ । किं चातः । यद्येको योगः । अष्ठीवती कपीवती । अत्र न प्राप्नोति । अथ नाना योगौ । इक्षुमती । द्रुमती । अत्रापि प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावदेकोयोगः । कथमष्ठीवती कपीवती । आचार्यप्रवृत्तिर्ज्ञापयति । भवत्येवंजातीयकानां वत्वमिति । यदयमन्तोवत्या इवत्या इत्याह । अथ वा पुनरस्तु नाना योगौ । ननु चोक्तमिक्षुमती द्रुमती अत्रापि प्राप्नोति । यवादिषु पाठः करिष्यते ॥

छन्दसीरः ॥ १५ ॥ छन्दसि इर इत्युच्यते तत्रेदं न सिध्यति । तत्र ते विश्वकर्मणास्ते सप्तर्षिमन्त इत्यत्रापि प्राप्नोति । नैष दोषः । नैवं विज्ञायते छन्दसि इर इति । कथं तर्हि छन्दसि ईर इति । एवमपि त्विषीमान् यतीमानित्यत्रापि प्राप्नोति । नैष दोषः विहितविशेषणमीकारग्रहणम् । ईकारान्ताद्यो विहित इति । एवमपि सूर्यं ते देवा पृथिवीमन्तमित्यत्रापिप्राप्नोति । इह च न स्यात् । चिवतीर्याज्यानुवाक्या भवन्तीति । एवं तर्हि परिगणनं कर्त्तव्यम् । चिहर्यधिपत्यग्निरेभ्यः । चि । चिवतीर्याज्यानुवाक्या भवन्ति । चि । हरि । हरिवो मेदिनं त्वा । हरि । अधिपति । अधिपतिवतीर्जुहोति । अधिपति । अग्नि । चतुरग्निवानिव । अग्नि । रे । आरेवानेतु नो विश इति । यदि तर्हि परिगणनं क्रियते । सरस्वतीवान् । अपूपवान् । दधिवान् चरुरित्यत्र न प्रप्नोति । एवं तर्हि छन्दसीरो बहुलमिति वक्तव्यम् ॥

---

संज्ञायाम् । आसन्दी । किमयमिति । तत्रैकयोगे निपातनादेव संज्ञालाभात्संज्ञाग्रहणं विस्पष्टार्थं नानायोगत्वे संज्ञायामिति वत्वे सिद्धे कार्यान्तरविधानार्थमासन्दीवदादीनां निपातनम् । यदयमिति । ननु त्वासन्दीवदाद्यर्थमीवत्या इति स्यादिति कथं ज्ञापकम् नैतदस्ति । स्त्रियामेषां प्रयोगाभावादीवतोशब्दान्तत्वाभावात् । यवादिष्विति । आदिशब्दः प्रकारार्थः तत्राश्रीयत इत्यर्थः ।

छन्दसीरः । त्विषीमानिति । अन्येषामपि दृश्यत इति दीर्घः। विहितविशेषणमिति लक्ष्यदर्शनवशेन वाक्यशेषकल्पनात् । एवं तर्हीति । बहुलग्रहणाद्रेशब्दादपि विजन्तादत्वं भवति । अथ वा रयिशब्दस्य रयेर्मतौ बहुलमिति कृतसंप्रसारणस्य रूपमारेवानिति।

अनो नुट् ॥ १६ ॥ यदि पुनरयं नुट् पूर्वान्तः क्रियेत अनो नुगिति। अनो नुकि विनामरुविधिप्रतिषेधः*। अनो नुकि सति विनामो विधेयः। अक्षण्वान्। पदान्तस्येति निषेधः प्राप्नोति। रुश्च प्रतिषेध्यः। सुपथिन्तरः। नश्छव्यप्रशानिति रुः प्राप्नोति। अस्तु तर्हि परादिः। परादौ वत्वप्रतिषेधोऽवग्रहश्च ॥ यदि परादिर्वत्वस्य प्रतिषेधो वक्तव्यः। अक्षण्वानिति। मादुपधायाश्च मतोर्वोऽयवादिभ्य इति वत्वं प्राप्नोति। अवग्रहश्च अनिष्टे देशे प्राप्नोति। अक्षण्वानिति। अस्तु तर्हि पूर्वान्तः। ननु चोक्तम् अनो नुकि विनामरुविधिप्रतिषेध इति। भत्वात् सिद्धम्। भसंज्ञा वक्तव्या। यदि तर्हि भसंज्ञा अल्लोपोन इत्यल्लोपः प्राप्नोति। अनस्तु प्रकृतिभावे मतुप्ग्रहणं छन्दसि*। अनस्तु प्रकृतिभावे मतुप्ग्रहणं छन्दसि वक्तव्यम्। इह तर्हि सुपथिन्तरः। नान्तस्य टिस्तद्धिते लुप्यत इति लोपः प्राप्नोति। घग्रहणं च*। घग्रहणं च कर्तव्यम्। तत्तर्हीदं बहु वक्तव्यम्। नुग्वक्तव्यः। भसंज्ञा च वक्तव्या। अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि कर्तव्यम्। घग्रहणं च कर्तव्यमिति। न कर्तव्यम्। यत्तावदुच्यते नुग्वक्तव्य इति। नुक एष परिहारः। भत्वात्सिद्धमिति। यदप्युच्यते भसंज्ञा वक्तव्येति। क्रियते न्यास एव। अयस्मयादीनि च्छन्दसीति। यदप्युच्यते। अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि घग्रहणं च कर्तव्यमिति। न कर्तव्यम्। उभयसंज्ञान्यपि हि छन्दांसि दृश्यन्ते। तद्यथा। सस्टुष्भा सऋक्वता गणेन। पदत्वात्कुत्वम्। भत्वाज्जश्त्वं न

---

अनो नुट्। यदीति। यदि पूर्वान्तलिङ्गः पठ्यतेत्यर्थः। अक्षण्वानिति। अक्षिशब्दस्य मतुपि छन्दस्यपि दृश्यत इत्यनङादेशः। नुकोऽसिद्धत्वात् पूर्वं नलोपो भूतपूर्वगत्या नुक्। सुपथितर इति। नाद्घस्येति नुकि सति पदान्तत्वान्नकारस्य रुत्वप्रसङ्गः परादाविति। नुटो मतुब्भक्तत्वात्तद्ग्रहणेन ग्रहणाद्वत्वप्रसङ्गः। भत्वादिति। अयस्मयादित्वात्। अल्लोप इति। एतच्चाल्लोपे नुकोऽसिद्धत्वमनाश्रित्योच्यते। नुकोऽसिद्धत्वादुपधत्वाभावो न लोपस्त्वल्लोपे सिद्धो नलोपः सुप्स्वरेति नियमात्। नापि नलोपापवादत्वान्नुको नाऽन्तत्वमिति शक्यते वक्तुम। अक्षण्वानिति पूर्वस्य। नकारस्यापदान्तत्वाण्णत्वे कृते परस्यष्टुत्वेन सिद्धत्वाद्विनामविधानस्यायुक्तत्वप्रसङ्गात्। घग्रहणं चेति। येनान्तस्य टिलोपप्रसङ्गे प्रकृतिभावो विधेयः। नुक एष इति। आश्रित्य नुकं भत्वात् सिद्धमिति

भवति । एवमिहापि पदत्वादल्लोपटिलोपौ न । भत्वाद्विनामरुवि-
धिप्रतिषेधौ भविष्यतः । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यास-
मेवास्तु । ननु चोक्तं परादौ वत्वप्रतिषेधोऽवग्रहश्चेति । यत्तावदुच्य-
ते वत्वप्रतिषेध इति । निर्दिश्यमानस्यादेशाभवन्तीत्येवं न भविष्य-
ति । यत्तर्हि निर्दिश्यते तस्य न प्राप्नोति । किं कारणम् । नुटा व्य-
वहितत्वात् । असिद्धो नुट् तस्यासिद्धत्वाद्भविष्यति । अवग्रहेऽपि न ल-
क्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम् । यथाल-
क्षणं पदं कर्तव्यम् ॥

नाद्घस्य ॥ १७ ॥ ईद्रथिनः* । रथिन ईद्वक्तव्यः । रथीतरः । भू-
रिदाव्नस्तुट् * । भूरीदाव्नस्तुड् वक्तव्यः । भूरिदावत्तरो जनः ॥

कृपोरोलः ॥ १८ ॥ कृपणादीनां प्रतिषेधः * । कृपणादीनां प्र-
तिषेधो वक्तव्यः । कृपणः । कृपाणः । कृपा । कृपीटम् । वालमूल-
लघ्वलमङ्गुलीनां वा लो रमापद्यते* । बालमूललघ्वलमङ्गुलीनां
वा लो रमापद्यत इति वक्तव्यम् । वाल । अश्ववालः । अश्ववारः ।
वाल । मूरदेव । मूलदेव । मूल । लघु । वरुणस्य लघुस्पदः । वरुण-
स्य रघुस्पदः । लघु । अलम् । अलं भक्ताय । अरं भक्ताया अलम् ।
अङ्गुलि । सुबाहुःस्वङ्गुलिः । सुबाहुः स्वङ्गुरिः । संज्ञाच्छन्दसोर्वा

---

परिहाराभिधानान् नुडवक्तव्य इति चोदनमयुक्तमित्यर्थः । असिद्धोनुडिति । अतो ऽपि नुटोवत्वाभावः।नलक्षणेनेति।पौरुषेयत्वादवग्रहकरणस्ययथालक्षणंपदानिकर्तव्यानीत्यर्थः ॥

नाद्घस्य । ईद्रथिन इति । नुडपवाद इकारो विधीयते स च नलोपे कृते इकारस्य विधेयः । यदि तु नलोपापवादो नकारस्य स्थाने विधीयेत तस्यासिद्धत्वादेकादेशाभा-वाद्रूपं न सिध्येत् । भूरिदावत्तर इति । भूरि ददातीति वनिप् ॥

कृपो । कृपण इति । रच्छेः क्युन्निति बाहुलकात् क्युन् । कृपाण इति । युधिबुधिदृ-शिः किच्चेति बाहुलकादानच् । कृपीटमिति । कृकृपिभ्यां कीटन्निति कीटन् । कृपेत्येत-त्तु कृपेः संप्रसारणं चेति भिदादिषु पाठाद्भवति । ततो लाक्षणिकत्वाल्लत्वाभावः । अथ क्लृपूसामर्थ्ये इत्येव कस्मान्न पठ्यते लत्वं हि न विधेयं भवति । नैतदस्ति । अचीक्लृपदि-ति हि न सिध्येत् । ऋकारल्कारयोः सवर्णविधिरिति ल्कारस्य ऋकारे कृतेऽचीकृप-दिति स्यात् । यदा तु लत्वं क्रियते तदा पूर्वत्रासिद्धमिति लत्वस्यासिद्धत्वात् पूर्वमृका-रस्ततो लत्वमिति दोषाभावः । तथा चलीक्लृप्यत इति रीकोपिलत्वसिद्धिः । वालेति ।

कपिलकादीनाम् *। संज्ञाच्छन्दसोर्वा कपिलकादीनामिति वक्तव्यम्। कपिलकाः। कपिरकाः। तिल्पिलिकम्। तिर्पिरिकम्। कल्मषम्। कर्मषम्। लोमानि। रोमाणि। पुंसुलम्। पांसुरम्। कल्म। कर्म। शुक्लः। शुक्रः॥

उपसर्गस्यायतौ॥ १९॥ किमिदमयतिग्रहणं रेफविशेषणम्। अयतिपरस्य रेफस्य लो भवति स चेदुपसर्गस्य भवतीति। आहोस्विदुपसर्गविशेषणम्। अयतिपरस्योपसर्गस्य यो रेफस्तस्य लो भवतीति। कश्चात्र विशेषः। रेफस्यायताविति चेत्परेरुपसंख्यानम्*। रेफस्यायताविति चेत्परेरुपसंख्यानं कर्तव्यम्। पल्ययते। वचनाद्भविष्यति। अस्ति वचने प्रयोजनम्। प्लायते। पलायते। अस्तु तर्हि उपसर्गविशेषणम्। उपसर्गस्येति चेदेकादेशेऽप्रसिद्धिः *। उपसर्गस्येति चेदेकादेशे अप्रसिद्धिर्भवति। प्लायते। पलायते। एकादेशे कृते व्यपवर्गाभावादयताविति लत्वं न प्राप्नोति। अन्तादिवद्भावेन व्यपवर्गः। उभयत आश्रये नान्तादिवत्। एवं तर्ह्येकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यपवर्गः। प्रतिषिध्यतेऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति। दोषा एवैते तस्याः परिभाषा-

---

वलसंवरणे वल्यत इति वालः। मूलप्रतिष्ठायामित्यस्मादिगुपधलक्षणः कः। लङ्घिबह्योर्नलोपश्चेति कुप्रत्यये लघुशब्दः। अङ्गेर्ऋत्तन्यच्चीत्युलिप्रत्ययेऽङ्गुलिशब्दः अमेर्गरिश्चलोवेति नापेक्षितम्। कपिलकादिषु वा रस्य लः। रोमाणीति। रुशब्द इत्यस्मान्मनिनि रोमन्। नामन्निति निपातनमनाश्रित्योदाहरणोपन्यासः पांसुरस्मिन्नस्ति नगपांसु पाण्डुभ्यश्चेति रः। कर्मेति। कृञोमनिन्। शुक्लः शुक्र इति। ऋज्रेन्द्राग्रेति निपातनादयुक्तः पाठः॥

उपसर्ग। किमिदमिति। र इति वर्तते। तत्र किं प्राधान्याद्रेफस्यायतिर्विशेषणमुत श्रुतस्योपसर्गस्येति प्रश्नः। पल्यय इति। यकारेण व्यवधानाल्लत्वाप्राप्तिः। वचनादिति। सर्वत्र व्यवधानसद्भावाद्येन नाव्यवधानमिति न्यायात्। न च निर्दुरावनवकाश इति वक्तुं शक्यमेवं हि निर्दुरोरयताविति वक्तव्यं स्यात्। प्लायत इति। एकादेशस्य परं प्रत्यादिवत्वादयतिग्रहणेन ग्रहणाद्व्यवधानाभावं मन्यते। अस्त्विति। प्रतेरयतिपरस्य प्रयोगो नास्ति इण एव तेन योग इत्याहुः। दोषा इति। ततोऽस्ति स्थानिवद्भाव इत्युभयथाप्ययंदोषः।

याः तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति । अथवा पुनरस्तु रेफविशेषणम् । ननु चोक्तं रेफस्यायताविति चेत्परेरुपसंख्यानमिति । वचनाद्भविष्यति । ननु चोक्तमस्ति वचने प्रयोजनं प्लायते पलायत इति । अत्राप्यकारेण व्यवहितत्वान्न प्राप्नोति । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव । प्रतिषिध्यतेऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति । दोषा एवैते तस्याः परिभाषायाः । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति ॥

अचि विभाषा ॥ २१ ॥ णावुपसंख्यानं कर्तव्यम् *। इहापि यथा स्यान्निगार्यते निगाल्यते । किंपुनः कारणं न सिध्यति । अचीत्युच्यते न चात्राजादिं पश्यामः । प्रत्ययलक्षणेन । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । एवं तर्हि स्थानिवद्भावाद् भविष्यति । प्रतिषिध्यते ऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति । अत उत्तरं पठति । गिरतेर्लत्वे णावुक्तम्* । किमुक्तम् । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति ॥

परेश्च घाङ्कयोः ॥ २२ ॥ योगे च * । योगे चेति वक्तव्यम् । इहापि यथा स्यात् । परियोगः पलियोगः । सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि * । सङीति प्रकृत्य लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि वक्तव्यानि । किं प्रयोजनम् । प्रयोजनं गिरौ गिरः पयो धावति दिष्टरां दृषत्स्थानं काष्ठाशक् स्थाता कुञ्चा धुर्य इति । गिरौ गिर इत्यत्र अचि विभाषेति लत्वं प्राप्नोति । सङीति वचनान्न भवति । नैतदस्ति प्रयोजनम् । उक्तमेतत् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धमिति । पयो धावति इत्यत्र धि चेति सलोपः प्राप्नोति । सङीति वचनान्न भवति । एतदपि ना-

---

अचि । णाविति । पदस्य लत्वविधानाल्लत्वस्यान्तरङ्गत्वाभावात्पूर्वत्रासिद्धमित्यसिद्धत्वाण्णिलोपे कृते लत्वाप्रसङ्गः । वर्णाश्रय इति । विशेष्यस्य प्रत्ययस्यासंनिधानाद्वर्णाश्रयं लत्वं न तु प्रत्ययाश्रयमिति भावः ॥

परेश्च । सङीति । षनः सकारादारभ्य आमन्त्रिडो ङकारेण प्रत्याहारः । गिरा-

स्ति प्रयोजनम्। वक्ष्यत्येतत्। धिसकारे सिचो लोप इति। द्विष्टरामित्यत्र ऋखादङ्गादिति सुचो लोपः प्राप्नोति। सङीति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। अत्रापि सिच इत्येतदनुवर्तिष्यते। हषत्स्थानमित्यत्र झलो झलीति सलोपः प्राप्नोति। सङीति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। अत्रापि सिच इत्येवानुवर्तिष्यते। काष्ठशक् स्थाता इत्यत्र स्कोः संयोगाद्योरन्ते चेति ककारलोपः प्राप्नोति। सङीति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। काष्ठशगेव नास्ति कुतो यः काष्ठशकि तिष्ठत। क्रुञ्चेत्यत्र चोः कुः झलीति कुत्वं प्राप्नोति। सङीति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। निपातनादेतत्सिद्धम्। किं निपातनम्। ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चामिति। धुर्य इत्यत्र हलि चेति दीर्घत्वं प्राप्नोति। सङीति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। नभकुर्छुरामिति प्रतिषेधो भविष्यति॥

संयोगान्तस्य लोपः॥ २३॥ संयोगान्तलोपे यणः प्रतिषेधः *। संयोगान्तस्य लोपे यणः प्रतिषेधो वक्तव्यः। दध्यत्र मध्वत्रेति। संयोगादिलोपे च यणः प्रतिषेधो वक्तव्यः *। किमर्थम्। वाक्यर्थम्।

---

विति। गिरतेः क्विबन्तादौजसी। वक्ष्यत्येतदिति। इदं वक्ष्यतेवक्ष्यत्येतच्चकाधीत्येवभवितव्यमि। तस्मादिदं वक्तव्यमेकपदाश्रयत्वादन्तरङ्गे रुत्वेकर्तव्येपदद्वयनिबन्धनत्वाद्बहिरङ्गस्य सलोपस्यासिद्धत्वात्पूर्वत्रेतिनिर्दिष्टविषयाभावाद्रुत्वमेवासिद्धत्वाभावात्प्रवर्तते। अल्विधित्वाच्च स्थानिवत्त्वाभावाद्रोर्लोपाभावः। द्विष्टरामिति। द्वौ वारौ द्विः सुच्प्रत्ययः। परिपूर्णत्वाद्वारद्वयस्य प्रकर्षप्रत्ययः। तदन्तात्किमेत्तिङव्ययेत्याम् प्रत्ययः। दृषत्स्थानमिति। उदः स्थास्तम्भोः पूर्वस्येति पूर्वसवर्णविधानात्सिचोन्यस्य सकारस्य झलो झलीति लोपो न भवतीतिज्ञापकमाहुः। अन्यथा सलोपेनैवोत्थानमित्यादेः सिद्धत्वात्पूर्वसवर्णविधानमनर्थकं स्यात्। काष्ठशगेवेति। इग्निग्रहणात्प्रयोगानुसरणात्ककारान्तेभ्योधातुभ्यः क्विबभावात् पक्स्थातेत्यत्र तु पचेः कुत्वस्यासिद्धत्वाल्लोपाप्रसङ्गः कुतो यः काष्ठशकीत्यनेन सति समासे निमित्तनिमित्तिनोः समानपदस्थत्वे लोपप्रसङ्गो न तु वाक्य इति दर्शयति। पदस्येत्यधिकारात्प्रत्यासत्तिन्यायाश्रयाच्चैकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणम्। एवञ्च पयो धावतीत्यत्र सलोपाभावः॥

संयोगान्तस्य लोपः। वाक्यर्थमिति। तस्य दोषः संयोगादिलोपलत्वेष्विति वचनात्

वार्थम् । न वा झलो लोपात् * । न वा वक्तव्यम् । किं कारणम् । झलो लोपः संयोगान्तलोपो वक्तव्यः । बहिरङ्गलक्षणत्वाद्वा*। अथ वा बहिरङ्गो यणादेशः । अन्तरङ्गो लोपः । असिद्धं बहिरङ्गमन्तरङ्गे। संयोगान्तलोपे सग्रहणम् *। संयोगान्तलोपे सग्रहणं कर्तव्यम् । संयोगान्तलोपः सस्य चेति वक्तव्यम् । इहापि यथा स्यात् । श्रेयान् । भूयान् । ज्यायान् । किं पुनः कारणं न सिध्यति । परत्वाद्रुः प्राप्नोति । असिद्धो रुस्तस्यासिद्धत्वाल्लोपो भविष्यति । न सिध्यति । किं कारणम् । रुविधानस्यानवकाशत्वात् । अनवकाशोयं रुर्लोपं बाधेत । सावकाशो रुः । कोऽवकाशः । पयः शिरः । ननु चात्रापि जश्त्वं प्राप्नोति । स यथैव रुर्जश्त्वं बाधते एवं लोपमपि बाधेत । न बाधते । किं कारणम् । येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते जश्त्व रुरारभ्यते । लोपे पुनः प्राप्ते चाप्राप्ते च । अथ वा योगविभागात्सिद्धम्* । अथ वा योगविभागः करिष्यते । एवं वक्ष्यामि संयोगान्तस्य लोपोऽरात् । संयोगान्तस्य लोपो भवत्यरात् । ततः सस्य । सस्य च लोपो भवति संयोगान्तस्य । किमर्थमिदम् । प्रतिषिद्धार्थं रुबाधनार्थं च । अथ वा यदेतद्रात्सस्येति सग्रहणं तत्पुरस्तादपकृष्यते । संयोगान्तस्य लोपः सस्य,सस्य च संयोगान्तस्य लोपो भवति । ततः।रात्।रात्सस्यैव संयोगान्तस्य लोपो भवतीति।अथ वा रात्सस्येत्यत्र

---

स्थानिवद्भावादपि लोपः परिहर्त्तुं शक्यः । न वेति । झलो झलीत्यतः सिंहावलोकितन्यायेन झल्ग्रहणमिहानुवर्तते । तत् षष्ठ्या विपरिणस्यत इति यणो लोपाभावः । स्कोः संयोगाद्योरित्यत्र तु पञ्चम्यन्तमेव संबध्यते तेन झलः पूर्वयोः स्कोर्लोपविधानाद् यणः पूर्वयोर्लोपाभावः । अन्तरङ्ग इति । एकपदाश्रयत्वात् । स यथैवेति । यदा लक्षणनिरपेक्षं कार्याणां बाधकत्वमिति दर्शनं तदा विध्यन्तरैरनाक्रान्तो विषयो नास्तीत्यविशेषात् सर्वं कार्यं बाध्यमिति भावः । येन नाप्राप्त इति । यदा लक्षणं बाध्यत इति दर्शनं तदा येन सर्वो विषय आक्रान्तः तदेव बाध्यते न हि तदबाधित्वा रुर्विषयं लभते । यस्य तु क्वचित् प्राप्तिस्तदबाधेनापि विषयलाभान्न तद्बाध्यते । अरादिति । रात्परस्य संयोगान्तस्य लोपो न भवति । ऊर्क् । अमार्ट् । प्रतिषिद्धार्थं चेति । अरादिति प्रतिषेधस्यबाधनार्थम् । यथा मातुः पितुरिति । श्रेयानित्यादौ रुत्वबाधनार्थम् । नत्वानन्तर्यात्प्रतिषेधस्यैव बाधनार्थं सस्येत्येतत् स्यात् न तु रुत्वस्येत्याशङ्कयाह । अथवा रात्सस्येत्यत्रेति। वाक्य

संयोगान्तस्य लोप इत्येतदनुवर्त्तिष्यते ॥

धि च ॥ २५ ॥ धिसकारे सिचो लोपः ॥ धिसकारे सिचो लोपो वक्तव्यः। किं प्रयोजनम्। चकाद्धीति प्रयोजनम् ॥ इह मा भूत् सलोपः। चकाद्धि पलितं शिर इति। आशाध्वं तु कथन्ते स्यात् ॥ यदि तर्हि सिचो लोप इत्युच्यते आशाध्वं तु कथम्। आशाध्वमित्यत्र लोपो न प्राप्नोति। जश्त्वं सस्य भविष्यति ॥ जश्त्वमत्र सकारस्य भविष्यति। सर्वञ्चैवं प्रसिद्धं स्यात्॥ सर्वञ्चैव जश्त्वेन सिद्धं स्यात्। इहापि आयन्ध्वमारन्ध्वमिति जश्त्वेनैव सिद्धम्। श्रुतिश्चापि न भिद्यते ॥ श्रुतिकृतश्चापि न कश्चिद्भेदो भवति। लुङश्चापि न मूर्द्धन्य ग्रहणम् ॥ तत्रायमप्यर्थः। इणः षीध्वंलुङ्लिटां धोऽङ्गादित्यत्र लुङ्ग्रहणं न कर्तव्यं भवति। इहापि अच्योड्ढ्वमप्लोड्ढ्वमिति षत्वे सिचो धस्य ष्टुत्वे च कृते जश्त्वेन सिद्धम्। सेटि दुष्यति ॥ सेटि दोषो भवति। इदमेव रूपं स्याद् अलविड्ढ्वम्। इदं न स्यात्। अलविध्वमिति। तस्मात्सिचो ग्रहणं कर्तव्यम्। यदि तर्हि सिचो ग्रहणं क्रियते। घसिभस्यो र्न सिध्यतु ॥ घसिभस्योर्न सिध्यति। सग्धिश्च मे सपीतिश्च मे बब्धां ते हरीधाना इत्यत्र न प्राप्नोति। तस्मात्सिज्ग्रहणं न तत् ॥ तस्माद्धि चेत्यत्र सिचो ग्रहणं न कर्तव्यम्। कथं चकाद्धि पलितं शिर इति। एवं तर्हि सिज्ग्रहणं कर्तव्यम्। कथं सग्धिश्च मे सपीतिश्च मे बब्धां ते हरीधाना इति। नैव दोषः। इह तावत् सग्धिरिति नैतद् घसेरूपं किं तर्हि सघेरेतद्रूपम्। बब्धां ते हरीधाना इति। नैतद्भसेरूपं किं तर्हि

---

भेदेन संबन्धः। न र.तस्यैव लोपो भवतीत्येकं वाक्यम्। संयोगान्तस्य लोप इति द्वितीयम् ॥

धि च। धिसकार इति। स्थानिनो लोपं प्रति विषयत्वविवक्षया सकार इति सप्तमीनिर्देशः। चकाद्धीति। हे शिरः पलितं सच्चकाद्धि शोभस्वेत्यर्थः। जश्त्वमिति। झलां जश् झशीत्यनेन। श्रुतिश्चापीति। एकस्यानेकस्य वा व्यञ्जनपरस्य श्रुतौ विशेषो नावधार्यते लुङश्चापीति। श्लोकवार्तिककारस्यायुक्तमिदं वचनम्। अक्षड्ढ्वमचड्ढ्वमित्यादौ क्रत्वादङ्गादिति सिज्लोपे सति मूर्द्धन्यस्याविधाने रूपं न सिध्येत्। सग्धिरिति। अदेः क्तिनि बहुलं छन्दसीति घस्लादेशः घसिभसोर्हलि चेत्युपधालोपः तत्र झलो झलीति सलोपो न प्राप्नोति इष्यते च। बब्धामिति। भसेर्लोटि तामिश्लौ द्विर्वचनेऽपूर्ववदुपधालोपः। सघेरिति।

बन्धेरेतद्रूपम् । छान्दसोवर्णलोपोवा यथेष्कर्त्तारमध्वरे॥ अथ वा छान्दसो वर्णलोपो भविष्यति । यथेष्कर्त्तारमध्वरे। निष्कर्तारमध्वरस्येति प्राप्ते । यथा तुभ्येदमग्ने ॥ तुभ्यमिदमग्ने इति प्राप्ते । आम्बानां चरुः । नाम्बानां चरुरिति प्राप्ते ।आव्याधिनी रुगणः । आव्याधिनीः सुगणा इति प्राप्ते । शिवा रुद्रस्य भेषजीः । शिवारुद्रस्य भेषजीरिति प्राप्ते । तस्मात्सिज्ग्रहणं कर्तव्यम् । न कर्तव्यम् । यदेतद्रात्सस्येति सकारग्रहणं तत्सिचो ग्रहणं विज्ञास्यते । कथम् । रात्सस्येत्युच्यते न चान्यो रेफात्परः सकारोऽस्ति अन्यदतः सिचः । ननु चायमस्ति मातुः पितुरिति । तस्मात्सिचो ग्रहणं कर्तव्यम् । न कर्तव्यम् । कस्मान्न भवति चकाद्धि पलितं शिर इति । इष्टमेवैतत्संगृहीतं चकाधीत्येव भवितव्यम् । धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ॥ आशाध्वं तु कथं ते स्याद् जश्त्वं सस्य भविष्यति ॥ १॥ सर्वत्रै वं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते॥ लुङ्श्चापि न मूर्द्धन्ये ग्रहणं सेटि दुष्यति ॥ २ ॥ घसिभस्योर्न सिध्येत्तु तस्मात्सिज्ग्रहणं न तत् ॥ छान्दसो वर्णलोपो वा यथेष्कर्त्तारमध्वरे ॥ ३ ॥

दादेर्धातोर्घः ॥३२॥ इह दोग्धा दोग्धुमिति घत्वस्यासिद्धत्वाद् ढत्वं प्राप्नोति । नैषदोषः । उक्तमेतत् । अपवादो वचनप्रामाण्यादिति । अथ वा एवं वक्ष्यामि होढोऽदादेः । हः ढो भवति अदादेः।

---

सघहिंसायामित्यस्य । स्वरभेदोपि नास्ति क्नित्याद्युदात्तत्वात्तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरविधानाच्च अनेकार्थत्वाच्च धातूनांसमानादनेसघिर्वर्ततइत्यर्थभेदोपि नास्ति। बन्धेरिति । बन्धबन्धन इत्यस्य भसेरर्थे वर्तमानस्य लोटि तामि व्यत्ययेन शपो लुकि नलापे वर्णव्यत्ययेन धकारस्य भकारे बबृधामिति भवति । क्व चिद्बधेरिति पाठः । सत्वयुक्तः बधेः सन्विषयत्वादित्याहुः । छान्दस इति । घसि भस्योः सकारस्य लोपे वा रूपसिद्धिरित्यर्थः । इष्कर्तारमध्वरस्येत्येकदेशानुकरणादिष्कर्तारमध्वरशब्दात्सप्तमी । यदेतदिति । तदेव चोत्तरत्रानुवर्तत इति भावः । मातुरिति । उभयोः स्थाने भवत एकादेशस्यान्यतरतो व्यपदेशाद्उः स्थानिवत्त्वाद्रपरत्वे सति सकारस्य लोपः ।

दादेः । घत्वस्यासिद्धत्वादिति । पूर्वत्रासिद्धमित्यस्य प्रतियोगमुपस्थानादेतत्सूत्रारम्भाच्च ढत्वघत्वयोर्विकल्पप्रसङ्गः । उक्तमिति । न ह्युत्सर्गापवादयोर्विकल्पो युक्तः द्रुहिश्च विकल्पविधिरनर्थकः स्यात् । अदादेरिति । असमर्थसमासो दादेर्न भवतीति धातोर्घं

ततो धातोर्घः । दादेरिति वर्तते नेति निवृत्तम् । एवमपि घो दादेरित्युच्यते तत्रेदं न सिध्यति । अधोक् । क्व तर्हि स्यात् माम्रधोक् । नैष दोषः । धातोरिति नैषा दादिसमानाधिकरणा षष्ठी दादेर्धातोरिति । का तर्हि । अवयवयोगैषा षष्ठी धातोर्यो दादिरवयव इति । सा चावश्यमवयवयोगा षष्ठी विज्ञेया । उत्तरार्था । किं प्रयोजनम् । एकाचो बशो भष् झषन्तस्य स्ध्वोरिति इहापि यथा स्यात् । गर्दभयतेरप्रत्ययः । गर्धबिति । यद्यवयवयोगा षष्ठी दोग्धा दोग्धुमित्यत्र न प्राप्नोति । एषोऽपि व्यपदेशिवद्भावेन धातोरवयवो भवति । हृग्रहोर्भश्छन्दसि हस्य* । हृग्रहोश्छन्दसि हस्य भत्वं वक्तव्यम् । गर्दभेन संभरति मरुदस्य गृभ्णाति । सामिधेन्यो जभ्रिरे । उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन् ॥

दधस्तथोश्च ॥ ३८ ॥ किमर्थश्चकारः । स्ध्वोरित्येतदनुकृष्यते । नैतदस्ति प्रयोजनम् । सिद्धं स्ध्वोः पूर्वेणैव । न सिध्यति । किं कारणम् । अबशादित्वात् । ननु च जश्त्वे कृते बशादिः । असिद्धं जश्त्वं तस्यासिद्धत्वान्न बशादिः । एवं तर्हि सिद्धकाण्डे पठितमभ्यासजश्त्वचर्त्वमेत्वतुकोरिति । एत्वतुकोर्ग्रहणं न करिष्यते । अभ्यासजश्त्वचर्त्वं सिद्धमित्येव । एवमप्यझषन्तत्वान्न प्राप्नोति । लोपे कृते झषन्तः । स्थानिवद्भावान्न झषन्तः । अत उत्तरं पठति । दधस्तथोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात् * । दधस्तथोरनुकर्षणमनर्थकम् । किं कारणम् । स्थानिवत्प्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे नस्थानिवदिति । सचावश्यंप्रतिषेध आश्रयितव्यः । इतरथा ह्यल्लोपे प्रतिषेधः । यो हि मन्यते अनुकर्षणसामर्थ्याद्वाच भवति । अल्लोपे तेन प्रतिषेधो वक्तव्यः स्यात् । दसाति दसाति । तथोश्चापि ग्रहणं शक्यमकर्तुम् । कथम् । झलि झषन्तस्येत्युच्यते । तथोश्चायं झलि झषन्तो भवति नान्यत्र । यथाप्येतन्नास्ति पूर्वत्रासिद्धे न स्थानिवदिति । एवमपि नार्थोऽनुकर्षणार्थेन चकारेण नापि त-

---

इत्यत्र दादिग्रहणमनुवर्तते न तु नञ् । एषोपोति । प्रयोगभेदाद्भिन्नस्य धातोरयमवयवं इति बुद्ध्या परिकल्पनात् ।

दधस्त । एत्वतुकोर्ग्रहणमिति । फणिभजिग्रहणं सामान्येन सिद्धत्वस्य ज्ञापकमिति

योर्ग्रहणेन । आनन्तर्यमिहाश्रीयते झलि झषन्तस्येति । क्वचिच्च सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं क्व चिन्नैव सन्निपातकृतं नापि शास्त्रकृतम् । लोपे सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यम् । अलोपे नैव सन्निपातकृतं नापि शास्त्रकृतम् । यत्र कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः ॥

झषस्तथोर्धोऽधः ॥ ४० ॥ अध इति किमर्थम् । धत्तः । धत्थ । अध इति शक्यमवक्तुम् । कस्मान्न भवति धत्तः धत्थ इति । जश्त्वे योगविभागः करिष्यते । इदमस्ति दधस्तथोश्चेति । ततो वक्ष्यामि झलां जशः । झलां जशो भवन्ति दधस्तथोः । ततः अन्ते । अन्ते च झलां जशो भवन्तीति । तत्र जश्त्वे कृते अझषन्तत्वान्न भविष्यति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
अष्टमस्याध्यायस्य द्वितीयपादे प्रथममाह्निकम् ॥

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥४२॥ रदाभ्यामिति किमर्थम् । चरितं मुदितम् । ननु च रदाभ्यामित्युच्यमानेऽप्यत्र प्राप्नोति । अत्रापि हि रेफदकाराभ्यां परा निष्ठा । न रेफदकाराभ्यां निष्ठा विशेष्यते । किं तर्हि तकारः । रेफदकाराभ्यामुत्तरस्य तकारस्य नो भवति स चेन्निष्ठाया इति । अथ पूर्वग्रहणं किमर्थम् । निष्ठादेश-

---

भावः । झलिझषन्तस्येति । झषन्तग्रहणानुवृत्तौ सत्यां झषन्तत्वान्यथानुपपत्त्या श्रुतिकृतमानन्तर्यमाश्रीयते स्थानिवत्त्वकृतन्तु व्यवधानं वचनादप्रतिबन्धकमित्यर्थः ।

झष । तत्र जश्त्व इति । पूर्वत्रासिद्धमिति भष्भावे जश्त्वस्यासिद्धत्वाद् झषन्तत्वं धत्वे तु परस्मिन् सिद्धं जश्त्वमिति धत्वा भावः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे अष्टमाध्यायस्य
द्वितीयपादे प्रथममाह्निकम् ॥

रदा । विचारसद्भावादत्र प्रत्युदाहरणोपन्यासः । अत्र प्राप्नोतीति । निष्ठेत्यसमस्तलुप्तषष्ठीकं पदं तेन रदाभ्यां परा या निष्ठा तस्यास्तकारस्य नत्वमिति सूत्रार्थाश्रयणात् । न रेफेति । निष्ठात इति समासनिर्देशः । तत्र निष्ठाया उपसर्जनत्वाद्विशेषणेनासंबन्धः । प्रधानस्य तु तकारस्य संबन्धः । अथेति । भिन्नवद्भ्यामित्यादौ निष्ठादकारस्य बहिरङ्गत्वाच्चापिकत्वाच्च नत्वाभावात्पूर्वस्यैव भविष्यतीति प्रश्नः । निष्ठादेश इति । असति प्र-

पूर्वग्रहणं परस्यादेशप्रतिषेधार्थम् *। निष्ठादेशे पूर्वग्रहणं क्रियते परस्यादेशो मा भूदिति। भिन्नवद्भ्याम्। भिन्नवद्भिः। छिन्नवद्भ्याम्। छिन्नवद्भिः। पञ्चमीनिर्दिष्टाद्धि परस्य *। पञ्चमीनिर्दिष्टाद्धि परस्येति परस्य प्राप्नोति। वृद्धिनिमित्तात्प्रतिषेधः *। वृद्धिनिमित्तात्प्रतिषेधो वक्तव्यः। किं प्रयोजनम्। प्रयोजनं कार्तिचैतिफौल्लयः। कार्तिरिति वृद्धौ कृतायां रदाभ्यामिति नत्वं प्राप्नोति। चैतिरिति वृद्धौ कृतायां चियो दीर्घादिति नत्वं प्राप्नोति। फौल्लिरिति वृद्धौ कृतायामुदुपधत्वसन्नियोगेन लत्वमुच्यमानं न प्राप्नोति। अथोच्यमानेऽपि प्रतिषेधे वृद्धिनिमित्तादिति कथमिदं विज्ञायते वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति। आहो स्विद् वृद्धिर्निमित्तमस्य सोयं वृद्धिनिमित्तः वृद्धिनिमित्तादिति। किं चातः। यदि विज्ञायते वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति। चैतिः संगृहीतः। कार्त्तिरसंगृहीतः। अथ विज्ञायते वृद्धिर्निमित्तमस्य सोयं वृद्धिनिमित्तः वृद्धिनिमित्तादिति। कार्तिः संगृहीतः। चैतिरसंगृहीतः। उभयथा च फौल्लिरसंगृहीतः। यथेच्छसि तथास्तु। अस्तु तावद् वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति। ननु चोक्तं चैतिः संगृहीतः कार्तिरसंगृहीत इति। कार्तिश्च संगृहीतः। कथम्। वृद्धिर्भवति गुणो भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्यते। अथ वा पुनरस्तु वृद्धिर्निमित्तमस्य सोयं

---

र्वग्रहणे पाठक्रमे निष्ठा प्रत्यासन्नेति तद्दकारस्यैव नत्वेन भाव्यं नान्यस्येति बहिरङ्गला-क्षणिकत्वयोरहेतुत्वम्। किञ्च। पदस्येत्यधिकारात्पदावयवस्य दस्य नत्वविधानाद् बहि-रङ्गत्वं नास्ति केवलस्य च वर्णस्यानुपदेशाद् वर्णग्रहणेषु लक्षणप्रतिपदोक्तपरिभाषाया अव्यापारः। पञ्चमीनिर्दिष्टादिति। यद्यपि प्रत्यासत्तिर्नापेक्ष्यते तथापि रदाभ्यां परस्य दस्य नत्वेन भाव्यमिति सामर्थ्यान्निष्ठादकारस्यैव नत्वप्रसङ्गः। चैतिरिति। वृद्धिरेवात्र-नत्वस्य निमित्तं चियो दीर्घादिति वचनात्। कार्तिरिति। नत्वस्याकारो न निमित्तं किं तु रेफ इति प्रतिषेधो न प्राप्नोति। उभयथेति। न हि वृद्धिर्लत्वस्य निमित्तं नापि वृद्धिहेतुकात्परो निष्ठातकारः। न चात्र लत्वनिषेध इष्यते। रेफशिरा इति। ननु चोक्तरूपस्यात्तपरिमाणस्य च वृद्धिसंज्ञाविधानात्कथमारित्यस्य वृद्धिसंज्ञा। अथ पूर्वान्तत्व। द्रेफस्य वृद्धिग्रहणेन ग्रहणमित्युच्यते तदा किमनेनोक्तेन रेफशिरा गुणवृद्धिसंज्ञक इति।

वृद्धिनिमित्तः वृद्धिनिमित्तादिति। ननु चोक्तं कार्तिः संगृहीतः चैतिरसंगृहीत इति। चैतिश्च संगृहीतः। कथम्। यत्तद् वृद्धिशास्त्रं तस्मिन् वृद्धिशब्दो वर्तते। स तर्हि प्रतिषेधो वक्तव्यः। न वा बहिरङ्गलक्षणत्वात् *। न वा वक्तव्यः। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गा वृद्धिः अन्तरङ्गं णत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे। एवं च कृत्वा णत्वमपि सिद्धं भवति फौङ्क्षिरिति॥

ल्वादिभ्यः॥ ऋकारल्वादिभ्यः क्तिन्निष्ठावत् *। ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्। कीर्णिः। गीर्णिः। लूनिः। पूनिः। दुग्वोर्दीर्घश्च *। दुग्वोर्दीर्घश्चेति वक्तव्यम्। आदूनः। विगूनः। पूञो विनाशे *। पूञो विनाश इति वक्तव्यम्। पूना यवाः। विनाश इति किमर्थम्। पूतं धान्यम्। सिनोतेर्ग्रासकर्मकर्तृकस्य *। सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम्। सिनो ग्रासः स्वयमेव। ग्रासकर्मकर्तृकस्येति किमर्थम्। सिता पाशेन सूकरी॥

क्षियो दीर्घात्॥ ४६॥ दीर्घादिति किमर्थम्। अक्षितमसि मा मे क्षेष्ठाः। दीर्घादिति शक्यमवक्तुम्। कस्मान्न भवति। अक्षितमसि मा मे क्षेष्ठा इति। निर्देशादेवेदमभिव्यक्तं दीर्घस्य ग्रहणमिति। यदि ह्रस्वस्य ग्रहणं स्यात् क्षेरित्येव ब्रूयात्। नाच निर्देशः

---

यद्यपि प्रसज्यमानोण् रपरो न भवेदपितूत्तरकालं रपरत्वं विधीयते तथापि तद्भक्तत्वात्कार्तिः संगृहीत एव। एवं तर्हि स्थितपक्षप्रदर्शनात्पूर्वोक्तदोषाभावः। यत्तदिति। एवं प्रतिषेधस्य व्यापकत्वाश्रयणादनुग्रहो भवतीति गौणः शब्दार्थ आश्रीयते। फौङ्क्षिसाधारणं परिहारं ब्रवीति। न वेति॥

ल्वादिभ्यः। कीर्णिरिति। कॄगॄलूपूञां रूपाणि। दुग्वोरिति। दुगतावित्यस्य दीर्घग्रहणं न तु टुदुउपतापे इत्यस्य। सानुबन्धकत्वात्। पूना इति। अनेकार्थत्वाद्धातूनां पूञ्विनाशार्थः। सिनो ग्रास इति। बन्धनक्रियायामानुकूल्यात्तत्कर्मापि ग्रासः कर्तृत्वेन विवक्ष्यते।

क्षियो। अक्षितमिति। क्षयः क्षितमिति भावे क्तः भावस्य ण्यदर्थ इति दीर्घाभावान्नत्वाभावः। क्षेरिति। इयङादेशात्परत्वाद् घेर्ङितीति गुणस्य न्याय्यत्वात्। नाच निर्देश इति। न हीयङादेशाद्दीर्घस्य ग्रहणं प्रत्येतुं शक्यते इयङ्निमित्तस्य विभक्ते

प्रमाणं शक्यं कर्तुम्। यथैव ह्यत्राप्राप्ता विभक्तिः। एवमियङादेशोऽपि। नात्राप्राप्ता विभक्तिः। सिद्धात्र विभक्तिः प्रातिपदिकादिति। कथं प्रातिपदिकसंज्ञा। अर्थवत्प्रातिपदिकमिति। ननु चाधातुरिति प्रतिषेधः प्राप्नोति। नैष धातुः। धातोरेषोऽनुकरणम्। यद्यनुकरणमियङादेशो न प्राप्नोति। प्रकृतिवदनुकरणं भवतीति इयङादेशो भविष्यति। यदि प्रकृतिवदनुकरणं भवतीत्युच्यते। स्वाद्युत्पत्तिर्न प्राप्नोति। एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते। अथाप्येतन्नातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते इति। एवमपि न दोषः। अवश्यमत्र सर्वतो नैर्देशिकी विभक्तिर्वक्तव्या। तद्यथा। नेर्विशःपरिव्यवेभ्यः क्रियः विपराभ्यां जेरित्येवमर्थम्। अथाप्येतन्नास्ति प्रकृतिवदनुकरणं भवतीति। एवमपि न दोषः। धातोरजादौ यद्रूपं तदनुक्रियते॥

---

दुर्लभत्वात्ततोऽप्राप्ता यथा विभक्तिः सौत्रत्वान्निर्देशस्य भवत्येवं इयङस्यापीयङादेशः स्यादिति दीर्घग्रहणमनर्थकम्। नैष धातुरिति। क्रियावाचिनो धातुसंज्ञाविधानाद् निर्देशे चाक्रियावाचित्वात्। प्रकृतिवदिति। अर्थभेदादनुकार्यानुकरणयोर्भेदाद्वाचनिकः कार्यातिदेशः। स्वाद्युत्पत्तिर्नेति। अधातुरिति प्रकृतेः प्रातिपदिकसंज्ञानिषेधादनुकरणस्यापि तत्प्रसङ्गात्। आतिदेशिकानामिति। अतिदेशः प्रयोजनं येषां तान्यातिदेशिकान्यतिदेशभाञ्युच्यन्ते। ननु यदतिदेशकार्येणाविरुद्धं स्वाश्रयं कार्यं तन्मा निवर्तित्। यत्तु विरुद्धं तत्कथं न निवर्तेत। एवं तर्ह्यधातुरिति पर्युदासो न प्रसज्यप्रतिषेध इत्यातिदेशिकस्य कार्यस्याभावाद्धातोरन्यत्वात् स्वाश्रया प्रातिपदिकसंज्ञा प्रवर्तते प्रसज्यप्रतिषेधे तु निषेध एवातिदेशिकः स्यात्। इयङादेशस्त्वातिदेशिको धातोर्विधीयमानत्वाद् भवति स च दीर्घस्यैवेति दीर्घग्रहणमनर्थकम्। अथापीति। यद्यप्यधातुरिति प्रसज्यप्रतिषेध इत्यर्थः। अवश्यमिति। यस्मात्प्रातिपदिकसंज्ञानिषेधादप्राप्ता यस्माच्चोत्पन्ना लुप्ता अस्मात्सर्वस्मादित्यर्थः। नेर्विश इति। नेरिति लुप्तविभक्तिकाव्ययानुकरणनिर्देशार्था विभक्तिर्विश इति निर्देशादेवाप्राप्ता विभक्तिरियङ् तु दीर्घानुकरणस्यैवेति दीर्घग्रहणमनर्थकम्। अथापीति। इहानुकर्ता कदाचित्सामान्यमनुकरोति कदाचिद्विशेषम्। तत्र यदा सामान्यमनुक्रियते तदा विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात् प्रकृतावदृष्टत्वादनुकरणेऽप्यभावः। यदा तु विशेषोऽनुक्रियते तदा तन्निबन्धनं कार्यमनुकरणे प्रवर्तते। तत्र यदा धात्वधातुसामान्यं चिमात्रमनुक्रियते तदेयङोऽप्राप्तिरिति चिचियतुरित्यादौ कृतेयङादेशस्येदमनुकरणमिति दीर्घादिति कर्तव्यम्॥

अञ्चोऽनपादाने ॥ ४८ ॥ अञ्चेर्नत्वे व्यक्तप्रतिषेधः * । अञ्चेर्नत्वे व्यक्तस्य प्रतिषेधो वक्तव्यः । व्यक्तमनृतं कथयतीति । अञ्जिविज्ञानात्सिद्धम् । नैतदञ्चे रूपम् । अञ्जेरेतद्रूपम् । अञ्चत्यर्थो वै गम्यते । कः पुनरञ्चत्यर्थः । अञ्चतिः प्रकाशने वर्तते । अक्तं गच्छति । प्रकाशयत्यात्मानमिति गम्यते । न वै लोके अञ्चितं गच्छतीति प्रकाशनं गम्यते किं तर्हि । समाधानं गम्यते । समाहितो भूत्वा गच्छतीति । एवं तर्ह्यञ्चेः अङ्कः । अङ्कस्य प्रकाशनम् । अङ्किता गाव इत्युच्यते अन्याभ्यो गोभ्यः प्रकाशन्ते । अञ्चत्यर्थ इति चेदञ्जेस्तदर्थत्वात्सिद्धम् * । अञ्चत्यर्थ इति चेद् अञ्जिरपि अञ्चत्यर्थे वर्तते । कथं पुनरन्यो नामान्यस्यार्थे वर्तते कथमञ्जिरञ्चेरर्थे वर्तते । अनेकार्था अपि धातवो भवन्तीति । अस्ति पुनः क्व चिदन्यत्रापि अञ्जिरञ्चत्यर्थे वर्तते । अस्तीत्याह । अञ्जेरञ्जनमञ्जनं च प्रकाशनम् । अङ्क्ते अक्षिणी इ-

---

अञ्चो । अञ्चेरिति । प्रकाशनार्थे व्यक्तशब्दे नत्वं प्राप्नोति न चेष्यते इति वचनम् । अञ्चितं गच्छतीति । गमनक्रियाविशेषणमेतत् । प्रकाशत्वेन च गमनं पूज्यत इति पूजानिबन्धनो नलोपप्रतिषेधः । न वै लोक इति । सर्वस्य गन्तुस्तत्समये तथा च गमनस्य प्रकाशत्वादिति भावः । समाधानमिति । गमनस्याव्याकुलत्वमित्यर्थः । तथा च नागाश्चाञ्चितगामिन इति प्रयोगो दृश्यते । गमनस्य च समाधानमेव पूजा । अङ्कस्येति । प्रकाश्यते ऽनेनेति ल्युट् । अङ्क इत्यत्र तु हलश्चेति करणे घञ् । अङ्कपदलक्षणयोरित्यस्याप्येतद्रूपं भवति । अञ्जेस्त्वङ्ग इति न सिध्यति । अङ्किता इति । अङ्कयुक्ताः कृता इत्यर्थः । मत्वन्तादङ्कशब्दात्तत्करोतीति णिचि क्त इष्ठवद्भावान्मतुब्लुकि टिलोपे च रूपम् । अञ्जेरिति । ननु यद्यप्यञ्जिस्तदर्थस्तथाप्यञ्चतेः सोऽर्थो भवतीति तस्य व्यक्तमिति न सिध्यति व्यक्तमिति प्राप्नोति । एवं तर्हि व्यक्तमित्युक्ते प्रकाशनं न गम्यत इति व्यक्तशब्दप्रकृतिरञ्जिरेव प्रकाशने वर्तते न त्वञ्चिरित्यदोषः । कथं पुनरिति । अर्थान्तरे रूढोऽन्योन्यस्यार्थान्तरवाचिनोऽर्थे कथं प्रवर्तत इत्यर्थः । अनेकार्था इति । धातुपाठे तु क्रियावाचित्वप्रदर्शनपरोऽर्थनिर्देशो न तु नियमार्थः । तथा च कुर्दखुर्दगुर्दगुदक्रीडायामेवेत्येवकारः पठितः । अस्ति पुनरिति । अन्यत्र दर्शने व्यक्तशब्दे ऽपि तदर्थत्वमञ्जेः शक्यते साधयितुं नान्यथेति प्रश्नः । अञ्जनमिति । अज्यते येनाक्षिणी तदञ्जनम् । तच्चैतत्स्याद् रूढिशब्दोऽयम् । रूढिषु च व्युत्पत्तिनिमित्तमेव क्रिया न तु शब्दप्रवृत्तिनिमित्तमित्याशङ्क्य रूढिशब्दमुदाहरति । अङ्क्ते इति । व्यत्ययेन छन्दस्यात्मनेपदम् । यस्

ष्युच्यते यत्तत्सितं चासितं चैतत्प्रकाशयति । तथाञ्जेर्व्यञ्जनं व्यञ्जनं च प्रकाशनम् । यत्तत्स्नेहेन मधुरेण च जडीकृतानामिन्द्रियाणां स्वस्मिन्नात्मनि व्यवस्थापनं स रागः । तद्व्यञ्जनम् । अन्वर्थं खल्वपि निर्वचनं व्यज्यते ऽनेनेति व्यञ्जनमिति ।

निर्वाणो ऽवाते ॥५०॥ अवाताभिधाने * । अवाताभिधानइति वक्तव्यम् । इहापि यथा स्यात् । निर्वाणोग्निर्वातेन । निर्वाणः प्रदीपो वातेन ॥

अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ॥ ५५ ॥ अनुपसर्गादित्युच्यते । तत्रेदं न सिध्यति । परिकृशमिति । कृशः क एष विहित इगुपधात् । नैतन्निष्ठान्तम् । किं तर्हि कृश एष इगुपधात्को विहितः । नैवं शक्यम् । स्वरो हि दोषो भवति परिकृशे । नैवं शक्यम् । इह हि परिकृश इति स्वरे दोषः स्यात् । अन्तःथाथघञ्क्ताजबित्रकाणामित्येष स्वरः प्रसज्येत । पदस्य लोपो विहित इति मतम् । एवं तर्हि पदस्य लोपोऽत्र द्रष्टव्यः । पर्यागतः कार्श्येन परिकृशः । जगत्यनूना भवति हि रुचिरा । फलेर्लत्वे उत्पूर्वस्योपसंख्यानम् * । फलेर्लत्वे उत्पूर्वस्योपसंख्यानं कर्तव्यम् । उत्फुल्लोऽन्तं कथयति अत्यल्पमिदमुच्यते उत्पूर्वादिति । उत्फुल्लसंफुल्लयोरिति वक्तव्यम् । उत्फुल्लः । संफुल्लः । कृशः क एष हि विहित इगुपधात् स्वरे हि दोषो भवति परिकृशे । पदस्य लोपो विहित

---

सितं चेति । सितासिते सुतरां विभागेन प्रकाशयतीत्यर्थः । तथेति । व्यज्यते ऽनेन रस इति व्यञ्जनम् । राग इति । रज्यते नेनेति रागो व्यञ्जनमेव । अन्वर्थमिति । यौगिको व्यञ्जनशब्द इत्यर्थः ॥

निर्वाणोऽवाते । अवाताभिधान इति । तेन निर्वातो वात इत्यत्रैव । नत्वनिषेधो न तु भावे निष्ठायामिति निर्वाणं वातेनेति भाष्यमिति वार्तिककारस्य दर्शनम् । अन्ये तु वातकर्तृके धात्वर्थे सर्वत्र निषेधमिच्छन्ति । निर्वातो वातो निर्वातं वातेनेति । निर्वाणः प्रदीपो वातेनेत्यत्र तु वातः करणमिति प्रतिषेधाभावः ॥

अनुपस । यद्यपि फुल्लादयः पचाद्यचीगुपधलक्षणे के च सिध्यन्ति तथापि निष्ठाय इडजनादित्यादिकार्यसिद्धये फुल्लितादिनिष्टशब्दनिवृत्तये च निपातनम् । स्वर इति तनुकरणवृत्तेः कर्मणि क्ते गतिरनन्तर इत्याद्युदात्तं पदं भवति । तनूभवनवृत्तेस्तु कर्तरि क्ते ऽन्तोदात्तं पदं स्यात् । पदस्येति । गम्यमानार्थत्वादप्रयोग एव लोपस्तत्र मतिः प्र-

इति मतं जगत्यनूना भवति हि रुचिरा ॥ १ ॥

नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ॥ ५६ ॥ किमयं विधिराहो स्वित्प्रतिषेधः । किं चातः । यदि तावद् विधिः नकारग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । रदाभ्यां निष्ठातो नः पूर्वस्य च द इति । तद्वै अनेकेन निपातेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् । अथ प्रतिषेधः ह्रीग्रहणमनर्थकं भवति न ह्येतस्माद्विधिरस्तीति । यथेच्छसि तथास्तु । अस्तु तावद्विधिः । ननु चोक्तं नकारग्रहणं कर्तव्यं न कर्तव्यं प्रकृतमनुवर्तते क्व प्रकृतं रदाभ्यां निष्ठातो नः पूर्वस्य च द इति तद्वै अनेकेन व्यवच्छिन्नं न शक्यमनुवर्तयितुमिति । संबन्धमनुवर्तिष्यते । अथ वा क्रियते न्यास एव द्विनकारको निर्देशः । नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्यान्न व्याख्यापूसूच्छिंमदामिति । अथ वा पुनरस्तु प्रतिषेधः । ननु चोक्तं ह्रीग्रहणमनर्थकं नह्यस्माद्विधिरस्तीति । नानर्थकम् । एतदेव ज्ञापयत्याचार्यो भवत्येतस्माद्विधिरिति । यदयं ह्रीग्रहणं करोति ॥

वित्तो भोगप्रत्यययोः ॥ ५७ ॥ बह्व इमे विदयः पठ्यन्ते तत्र न ज्ञायते कस्य नित्यं नत्वं कस्य विभाषा कस्य प्रतिषेधः कस्य इडिति । अत उत्तरं पठति । यस्य विदेः श्नशकौ तपरत्वे तनवचने त-

---

ति परिरुपसर्गो न तु कृशिमित्यनुपसर्गत्वात्परेर्निष्ठान्त एव कृशशब्दः । अव्ययस्वरेणाद्युदात्तः परिकृशशब्दः परेर्गतित्वाभावात् । जगतीति । येयं परिकृशशब्दस्य व्युत्पत्तिः प्रदर्शिता सा रुचिरा अनूना परिपूर्णा रूपे स्वरे च दोषाभावात् ॥

नुदविद । किमयमिति । कश्चिद्विधिनार्थी कश्चिन्निषेधेन ततो वक्ष्यमाणो ऽभिप्रायः । नकारग्रहणमिति । प्रतिषेधे तु नुदादिभ्यो यत्प्राप्नोति तन्न भवतीत्यन्तरेणापि नकारग्रहणं सिध्यति । प्राकरणिकस्य प्रतिषेधविज्ञानादतिप्रसङ्गाभावः । द्विनकारक इति । वा पदान्तस्येति परसवर्णाभावपक्षे एकः नकार आदेशो द्वितीयो नञः संबन्धी परसवर्णपक्षे तु हलो यमां यमि लोप इति मध्यमनकारलोपः । एतदेवेति । नह्यप्रसक्तस्य प्रतिषेधः संभवति ॥

वित्तो भोगप्रत्यययोः । यस्य विदेरिति । नुदविदेत्यत्रोन्दिना रौधादिकेन साहचर्याद्विदविचारण इत्यस्मान्नत्वविकल्पः । यद्यपि नुदिना तौदादिकेन साहचर्यं तथापि शब्दपरविप्रतिषेधादुन्दिरत्र व्यवस्थाहेतुर्न तु नुदिः । विद्लृ लाभ इत्यस्मात्तु भोगप्रत्यययो-

द्धत्वा प्रतिषेधौ ॥ अविकरणस्य विभाषा शविकरणस्य प्रतिषेधः । श्यन्विकरणान्नविधिः छिदितुल्यः ॥ श्यन्विकरणाद्विदेर्नविधिः छिदिना तुल्यः । लुग्विकरणोवलिपर्यवपन्नः ॥ लुग्विकरणो विदिर्वलादौ पर्यपवन्नः । एष एवार्थः ॥ ययोर्विदोः अशावुक्तौ तयोर्नत्वस्य वा नञौ ॥ ययोस्तु श्यन्लुकौ ताभ्यां छिदिवच्चेड्दिष्यते ॥१॥ अपर आह। वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥२॥

भित्तं शकलम् ॥ ५९ ॥ भित्तं शकलमित्युच्यते तत्रेदं न सिध्यति भित्तं भिन्नमिति । नैष दोषः । सर्वत्रैवात्र भिदिर्विदारणसामान्ये वर्तते तत्रावश्यं विशेषार्थिना विशेषोनुप्रयोक्तव्यः भिन्नं किं भित्तमिति । तत्त्वमभिधायकं चेत् शकलस्यानर्थकः प्रयोगः स्यात् ॥ शकलेन चाप्यभिहिते न भवति तत्त्वं निगमयामः ॥१॥

क्किन् प्रत्ययस्य कुः ॥ ६२ प्रत्ययग्रहणं किमर्थम् । न क्किनः कु-

---

र्नत्वनिषेधो ऽन्यत्र नत्वम् । विदसत्तायामित्यस्मात्तु नत्वम् । विदज्ञान इत्यस्मात्त्विटा व्यवधानान्नत्वाभावः । तौदादिकात्तु विभाषागमहनेति क्वसौ विकल्पविधानाद् यस्य विभाषेति निष्ठायामिट्प्रतिषेधः । तनवचन इति । तस्य नस्तनस्तस्य वचनमिति समासः । तदु इति । तदिति लुप्तषष्ठीकस्तु इत्यनर्थको निपातः पादपूरणार्थः । विन्तेरिति । विन्त इति तिङन्तानुकरणात्षष्ठी ।

भित्तम् । भिन्नमिति । शकलवाचिनाभित्तशब्देन सामानाधिकरण्याद्भिन्नशब्दस्यापि शकलार्थवृत्तित्वान्नत्वाप्रसङ्गः । ततश्च भित्तं भित्तमित्येव स्याद् न तु भित्तं भिन्नमिति चाद्यम् । सर्वत्रेति । शकले घटादौ च । विदारणसामान्य इति । ततश्च सामान्यार्थे पदे संश्रियमाण शब्दान्तरप्रयोगसमधिगम्यः शकलार्थो बहिरङ्गत्वान्नत्वाभावस्यानिमित्तम् । तत्रावश्यमिति । सामान्योपक्रमे विशेषाभिधानमिति भावः । विशेषोपक्रमे ऽप्यभिधाने भित्तशब्दः शकले रूढ इति भिदिक्रिया केवलं व्युत्पत्तिनिमित्तं न तु प्रवृत्तिनिमित्तम् । अथ वा यथा विदारणक्रिययैव शकलं निर्वर्तते तामेव भित्तशब्दोन्तर्भावयति या तु निष्पन्नस्य शकलस्यान्या विदारणक्रिया तत्प्रतिपादनायानेकक्रियासंबन्धसम्भवे क्रियान्तरव्यवच्छेदाय भिन्नशब्दस्याप्यविरुद्धप्रयोगः । तत्त्वमिति । भित्तशब्दशकलशब्दयोः पर्यायत्वाद्युगपदप्रयोग इत्यर्थः ॥

क्किन् । प्रत्ययग्रहणमिति । क्किनः प्रत्ययत्वाव्यभिचारात्प्रश्नः । वकारस्यैवेति । प्रत्य-

रित्येवोच्येत। क्विनः कुरितीयत्युच्यमाने वकारस्यैव कुत्वं प्रसज्येत। ननु च लोपे कृते न भविष्यति। अनवकाशं कुत्वं लोपं बाधेत। सावकाशं कुत्वम्। कोऽवकाशः। अनन्त्यः। कथं पुनः सत्यन्तेऽनन्त्यस्य कुत्वं स्यात्। आचार्यप्रवृत्तिर्ज्ञापयति नान्त्यस्य कुत्वं भवतीति। यदयं क्विनः कुरिति कवर्गनिर्देशं करोति इतरथा हि तद्गुणमेवायं निर्दिशेत्। इदं तर्हि प्रयोजनं येभ्यः क्विन् प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यात्। मानो अस्राक्। मानो अद्राक्। क्विनः कुरिति सिद्धे यत्प्रत्ययग्रहणं कृतम्। क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते॥१॥

अहन्॥ ६८॥ रुत्वविधावह्नोरूपरात्रिरथन्तरेषूपसंख्यानम् *। रुत्वविधौ अह्नः रूपरात्रिरथन्तरेषु उपसंख्यानं कर्तव्यम्। अहोरूपम्। अहोरात्रः। अहोरथन्तरं साम॥

---

यग्रहणे यस्मात्सतदादेस्तदन्तस्येति वचनाल्लोपापवादो वकारस्यैव कुत्वं स्यात्। लोपेकृत इति। अन्तरङ्गो लोपः कुत्वं तु बहिरङ्गं पदस्येति विधानात्। अनवकाशमिति। क्विबादिषु सावकाशं लोपं विशेषविहितं कुत्वं बाधेतेति भावः। अनन्त्य इति। क्विन्प्रत्ययापेक्षयानन्त्यः पदस्य त्वन्त्य इति ज्ञेयम्। पदस्येति स्थानषष्ठ्या अन्त्येत्युपसंहारादन्त्यस्यैव कुत्वेन भाव्यं यदि तु पदस्येत्यवयवषष्ठी स्यात् तदा घृतस्पृशेत्यादावपि कुत्वं स्यात्। कथं पुनरिति। सत्यपि संभवे बाधनं भवतीति लोपं बाधित्वा कुत्वेन भाव्यमिति भावः। यदयमिति। अनेकस्य स्थानिनोऽनेकादेशप्रतिपत्तये वर्गग्रहणं वकारस्यैव तु स्थानित्वे घकार एव निर्दिश्येत। वर्गाणां तृतीयचतुर्था इति शिक्षायां वकारघकारयोर्गुणसाम्यप्रतिपादनात्। इदं तर्हीति। क्विन्प्रत्ययस्तत्प्रकृतिधातुपलक्षणमिति तस्मिन्सत्यसति तत्प्रकृतेर्धातोः पदस्य कुत्वं भवति। अस्राागिति। सृजिदृशिभ्यां माङि लुङ्। तिप्। सिच्। बहुलं छन्दसीति विधानादीण् न भवति। हल्ङ्यादिलोपः सृजिदृशोर्झल्यमकितीत्यमागमः। वदव्रजेति वृद्धिः। बहुलं छन्दस्यमाङ्योगे पीत्यडागमः। संयोगान्तस्य लोपः व्रश्चभ्रस्जेति षत्वे प्राप्ते कुत्वं जश्त्वग:श्च ख:। वावसान इति चर्त्वं ककारः। पूर्वत्रासिद्धमित्यसिद्धत्वं षत्वे कुत्वस्य नास्ति प्रत्ययग्रहणसामर्थ्यात् षत्वाद्यपवादत्वात् कुत्वस्य॥

अहन्। रुत्वविधाविति। समासासमासयोर्लुमता लोपाद्वादेशे प्राप्ते रुत्वमुक्तार्थमुच्यते। अह्नो रूपमिति। षष्ठीसमासः। गतमहो रूपं पश्येति असमासः। अहोरात्र इति। इकारलोपे कृते ह्येकदेशविकृतस्यानन्यत्वाद्रुत्वम्। रात्रग्रहणं तु न कृतं गतमहो रात्रिरागता इत्यत्रापि रुत्वार्थम्॥

रोऽसुपि ॥६९॥ असुपि रादेशे उपसर्जनसमासे प्रतिषेधोलुकि* असुपिरादेश उपसर्जनसमासे अलुकि प्रतिषेधो वक्तव्यः। दीर्घाहा-निदाघ इति। सिद्धं तु सुपिप्रतिषेधात् *। सिद्धमेतत्। कथम्। सुपि प्रतिषेधात्। प्रसज्यायं प्रतिषेधः सुपि नेति। इहापि तर्हि न प्राप्नोति। अहर्ददाति। अहर्भुङ्क्त इति। लुकि चोक्तम् *। किमु-क्तम्। अङ्गोरविधौ लुमतालुप्ते प्रत्ययलक्षणं न भवतीति॥

अम्नरूधरवरित्युभयथाछन्दसि ॥७०॥ छन्दसि भाषायां च प्रचे-तसोराजन्युपसंख्यानम् *। छन्दसि भाषायां च प्रचेतसः राजन्युप-संख्यानं कर्तव्यम्। प्रचेतोराजन्। प्रचेताराजन्। अहरादीनां प-त्यादिषु *। अहरादीनां पत्यादिषूपसंख्यानं कर्तव्यम्। अहर्पतिः। अह≍पतिः। अहः पतिः। अहर्पुत्त्रः। अह≍पुत्त्रः। अहःपुत्त्रः। गीर्पतिः। गी≍पतिः। गीःपतिः। धूर्पतिः। धू≍पतिः। धूःपतिः॥

वसुस्रंसुध्वंस्वनडुहां दः ॥ ७२ ॥ इह कस्मान्न भवति वपिवान् तस्थिवानिति। सस्येति वर्तते। एवमप्यत्र प्राप्नोति। लोपे कृते न भविष्यति। अनवकाशं दत्वं लोपं बाधेत। सावकाशं दत्वम्। कोवकाशः। पपिवद्भ्यां पपिवद्भिरिति। नैषोस्यावकाशः। अत्रापि रुः प्राप्नोति। तद्यथैव रुं बाधते एवं लोपमपि न बाधते। बाधते किं का-रणम्। येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते रौ दत्वमारभ्यते

---

रोऽसुपि। असुपि रादेश इति पर्युदासं मत्वेदमुच्यते। दीर्घाहा निदाघ इति। अत्र च सुप्सद्भावो हल्परोस्तीति रादेशप्रसङ्गो दत्वं चात्र यत्वार्थमिष्यते पर्युदासे चाहरित्यत्र रुत्वमेव भवति न तु रः। सिद्धं त्विति। प्रत्ययलक्षणेन दीर्घाहा निदाघ इत्यत्र सुप्पर-त्वाद्रत्वाभावः पूर्वत्रासिद्धमिति रुत्वस्यासिद्धत्वात्पूर्वं नोपधालक्षणो दीर्घः पश्चाद्रुत्वम-हरित्यत्र तु र एव भवति। इहापीति। प्रत्ययलक्षणेन रप्रतिषेधप्रसङ्गः॥

अम्न। प्रचेता राजन्निति। सकारस्य रेफः तस्य रो रीति लोपे ढ्रलोप इति दीर्घः। अहर्पतिरिति। रेफस्य रेफो विसर्जनीयबाधनाय पक्षे छन्दोभाषयोर्विधीयते।

वसुस्रंसुध्वंस्वनडुहां दः। पपिवानिति। सस्येत्यस्यानुवृत्तौ नकारस्य दत्वं प्रा-प्नोति तदनुवृत्तौ तु लोपं बाधित्वा सकारस्य दत्वं प्राप्नोति। लोपे कृत इति। पूर्वत्रा-सिद्धमिति दत्वस्यासिद्धत्वाल्लोपः। अनवकाशमिति। कार्यान्तरेण सर्वस्य विषयस्याक्रा-न्तत्वात्। येन नाप्राप्त इति। सर्वविषयव्यापिलक्षणं दत्वेन बाध्यते न तु सर्वं कार्यं सर्वं

लोपे पुनः प्राप्ते चाप्राप्ते च। यदि तर्हि सस्येति वर्तते अनडुह्ग्रामनडुह्भिरित्यत्र न प्राप्नोति। वचनादनडुहि भविष्यति। यद्येवं,अनडुहो दत्वे नकारप्रतिषेधः *। अनडुहो दत्वे नकारस्य प्रतिषेधो वक्तव्यः। अनड्वान्। सिद्धं प्रतिपदविधानान्नुमः। सिद्धमेतत्। कथम्। नुमः प्रतिपदविधानात्। नुमः प्रतिपदविधानसामर्थ्याद्दत्वं न भविष्यति। यदि तर्हि यद्यदनडुहः प्राप्नोति तत्तन्नुमः प्रतिपदविधानसामर्थ्याद्बाध्यते रुरपि न प्राप्नोति। अनड्वांस्तरंति। नैष दोषः। यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। दत्वं च प्रति नुमः प्रतिपदविधिरनर्थकः रोः पुनर्निमित्तमेव॥

उपधायां च॥७८॥ किमर्थमिदमुच्यते। न हलीत्येव सिद्धम्। न सिध्यति। धातोरिति वर्तते तत्र रेफवकाराभ्यां धातुर्विशेष्यते रेफवकारान्तस्य धातोरिति। किं पुनः कारणं पूर्वस्मिन् योगे रेफवकाराभ्यां धातुर्विशेष्यते न पुनः पदं विशेष्यते। इह मा भूत्। अग्निर्वायुरिति। एवं तर्हि पूर्वस्मिन्योगे यद्धातुग्रहणं तदुत्तरत्र निवृत्तम्। एवमपि कुर्कुरः मुर्मुर इत्यत्रापि प्राप्नोति। एवं तर्ह्यनुवर्तते तत्र धातुग्रहणं न तु रेफवकाराभ्यां धातुर्विशेष्यते। किं तर्हि इग् विशेष्यते रेफवकारान्तस्य इकः धातोरिति। एवमपि कुर्कुरी-

---

वा लक्षणम्। यदि तर्हीति। एकसमासनिर्दिष्टानां सर्वेषां वस्वादीनां विशेषणसंबन्धस्य न्याय्यत्वात्। वचनादिति। एकस्माद् ग्रहणकवाक्यादनेकस्य प्रक्रियावाक्यस्योपप्लवात्संभवव्यभिचाराभ्यां च विशेषणसंबन्धादनडुहोऽसंभवात् सस्येति विशेषणेनायोगः। सिद्धं त्विति। यदि नकारस्य दत्वं स्यात् नुमोऽनर्थकः स्यादिदिधिरिति हकारस्यैव दत्वं विधीयते। यदि तर्हीति। विधानसामर्थ्यात्सर्वत्राविकृते न नुमा भवितव्यमिति भावः।

उपधायां च। पूर्वस्मिन्निति। र्वोरुपधाया इत्यत्रेत्यर्थः। उत्तरत्रेति। हलि चेत्यत्र। कुर्कुर इति। पदावयवस्य रेफस्य उपधाया इको दीर्घो विधीयमानोऽत्रापि प्राप्नोति। धात्वधिकारे तु रेफवकारान्तस्याधातुत्वान्न भवति। रेफवकारान्तस्येक इति। अन्तशब्दः समीपवाची रेफवकारयोर्हल्परयोर्यउपधे कृतस्य धात्ववयवस्य दीर्घो विधीयमानो मूर्च्छितेत्यादौ भविष्यति न तु कुर्कुर इत्यादावित्यर्थः। कुर्कुरीयतीति। क्यजन्तस्य धा-

यति सुमुर्रीयतीत्यत्रापि प्राप्नोति । तस्माद्धातुरेव विशेष्यः । धातौ च विशेष्यमाणे उपधायां चेति वक्तव्यम् । उपधादीर्घत्व ऽभ्यासजिव्रिचतुर्णां प्रतिषेधः * । उपधादीर्घत्वे ऽभ्यासजिव्रिचतुर्णां प्रतिषेधो वक्तव्यः । अभ्यास । रियतुः । रियुः । संविव्यतुः । संविव्युः । अभ्यास । जिव्रिः । चतुर्यिता । चतुर्यितुम् । उणादीनां प्रतिषेधश्च * । उणादीनां च प्रतिषेधो वक्तव्यः । किर्योः । गिर्योरिति । अभ्यासप्रतिषेधस्तावन्न वक्तव्यः । हलीत्युच्यते न चात्र हलादिं पश्यामः । यणादेशे कृते प्राप्नोति । स्थानिवद्भावान्न भवति । प्रतिषिध्यते अत्र स्थानिवद्भावः । दीर्घविधिं प्रति न स्थानिवदिति । नैषोस्ति प्रतिषेधः । उक्तमेतत् प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेश इति । जिव्रिप्रतिषेधश्च न वक्तव्यः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि । चतुर्यिता चतुर्यितुमिति । सुपि नेति वर्तते । यद्येवं गीर्भ्यां गीर्भिरित्यप्रसिद्धिः । न सुपो विभक्तिविपरिणामाद् गीर्भ्यां गीर्भिरित्यदोषः । उणादिप्रतिषेधो वक्तव्य इति । परिहृतमेतत् । उणादयोऽव्युत्पन्नेनि प्रातिपदिकानीति ॥

अदसोसेर्दादुदोमः ॥ ८० ॥ अदसोनोस्रेः * । अदसः अनोस्रेरिति वक्तव्यम् । किमिदमनोस्रेरिति । अनोनकारस्य असकारस्य अरेफस्येति । अनोनकारस्य । अदोऽत्र । असकारस्य । अदस्यति । अरेफस्य । अदः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । क्रियते न्यास एव । अविभक्तिको निर्देशः अदस् ओ असेरिति । ओका-

---

तोरवयव इगिति दीर्घप्रसङ्गः । तस्मादिति । रेफवकारान्तस्य धातोर्हल्परस्योपधाया इको दीर्घो विधीयमानो मूर्च्छितेत्यादौ न प्राप्नोतीति वचनम् । तेन धातोरुपधे यौ रेफवकारौ तयोरुपधाया इको दीर्घः उपधादीर्घं तु इति । जिव्रिशब्दो जीर्यते । क्रिन् रश्च व इति व्युत्पन्नः तत्रोणादिप्रतिषेधश्चेति क्लिष्टप्रपञ्चार्थः पाठः । चतुर्यितेति । चतुर इच्छतीति क्यच् । तृच् । इट् । अतो लोपे कृते धातोरुपधारेफ इति दीर्घत्वप्रसङ्गः स्वरेति । पूर्वत्रासिद्धे न स्थानिवदितिस्थानिवत्त्वनिषेधाद्दीर्घः प्राप्नोति तस्मादभ्यासप्रतिषेधो वक्तव्य एवेत्याहुः । न सुप इति । सुपः परो यो हल् तत्परयोर्वो दीर्घो न भवतीत्यर्थः ।

अदसोसे । ओकारात्पर इति । सूत्रे तावत्पदानि निर्दिष्टान्युत्तरकालं तु यथेष्टमभि-

रात्परः प्रतिषेधः पूर्वभूतः । ततः सकारः । ततो रेफ इति । अथ वा नैवं विज्ञायते अदसः असकारस्येति । कथं तर्हि । अः अस्य सकारस्य सोयमसिः असेरिति । यद्येवममुमुयङ्ङिति न सिध्यति । अदद्र्यङ्ङिति प्राप्नोति । अदमुयङ्ङिति भवितव्यम् । अनन्त्यविकारेन्त्यसदेशस्य कार्यं भवतीति । अदसोद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् । केचिदन्त्यसदेशस्य नेत्येके सेर्हि दृश्यते ॥ १ ॥ तत्र पदाधिकारादपदान्तस्याप्राप्तिः । तत्र पदाधिकारादपदान्तस्य न प्राप्नोति । अमुया अमुयोरिति । सिद्धं तु सकारप्रतिषेधात् * । सिद्धमेतत् । कथम् । सकारप्रतिषेधात् । यदयमसेरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः अपदान्तस्यापि भवतीति । अथ दाद्ग्रहणं किमर्थम् । दाद्ग्रहणमन्त्यप्रतिषेधार्थम् । दाद्ग्रहणं क्रियते । अन्त्यस्य मा भूत् । अमुया अमुयोरिति ॥

एतदे॑द् बहुवचने ॥ ८१ ॥ ईत्वं बहुवचनान्तस्य* । ईत्वं बहुवचनान्तस्येति वक्तव्यम् । बहुवचन इतीयत्युच्यमाने इहैव स्यात् । अमीभिः । अमीषु । इह न स्यात् । अमी अत्र । अमी आसते इति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । नेदं पारिभाषिकस्य बहुवचनस्य

---

संबन्धे लक्ष्यसंस्कारकवाक्यमुपप्लवमानमभिमतमर्थं संपादयति । अइति । यत्र सकारस्य त्यदाद्यत्वं क्रियते । तत्र मुत्वं नान्यत्रेत्यर्थः यद्येवमिति । त्यदाद्यत्वाभावान्मुत्वप्रसङ्गः । अदमुयङ्ङिति । अः सेर्यस्येत्येवमनाश्रयणे ऽपि नैवामुमुयङ्ङिति भाव्यमित्यर्थः अदसोऽद्रेरिति । येन सिः असिरिति सकारान्तप्रतिषेधमाश्रयन्ति नान्त्यसदेशपरिभाषां तेऽमुमुयङ्ङितीच्छन्ति । यथा चलीक्लृप्यत इति रेफद्वयस्य लत्वम् । अन्त्यसदेशपरिभाषाश्रयेत्वदमुयङ्ङिति । ये तु त्यदाद्यत्वविषय एवमुत्वमिच्छन्ति ते अदद्र्यङ्ङिति मन्यन्ते । असेर्हो ति । अः सेर्यस्य सो ऽसिस्तस्येत्यर्थः । यदयमिति । अदस्यतीत्यत्र नः क्ये इति नियमाददसोऽपदत्वान्मुत्वं न भविष्यतीति किं निषेधेन निषेधात्तु अपदस्याप्यदसो मुत्वं भवत्यमुयेति पदस्याप्यमुष्यामूभ्यामिति । अन्त्यस्येति । अलोन्त्यस्येति वचनादमुयेत्यत्र यकारस्योत्वं स्यात् ॥

एतदेद्बहुवचने । ईत्वमिति । कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्यय इति वचनाश्रयस्य बहुवचनस्य ग्रहणेन भाव्यं ततश्च तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद् बहुवचने परत एकारस्येत्वेन भाव्यममोभिरित्यादौ नत्वमीइत्यत्रेतिभावः । नेदमिति ।

ग्रहणम्। किं तर्ह्यन्वर्थग्रहणमेतत्। बहूनामर्थानां वचनं बहुवचनं बहुवचन इति॥

वाक्यस्य टेः प्लुत उदात्तः॥ ८२॥ वाक्याधिकारः किमर्थः। वाक्याधिकारः पदनिवृत्त्यर्थः। वाक्याधिकारः क्रियते पदनिवृत्त्यर्थः। पदाधिकारो निवर्त्यते। न हि काको वाश्यत इत्यधिकारा निवर्त्यन्ते। दोषः खल्वपि स्यात्। यदि वाक्याधिकारः पदाधिकारं निवर्तयेत् इष्यन्त एवोत्तरत्र पदकार्याणि तानि न सिध्यन्ति नश्छव्यप्रशान् इति। पदनिवृत्त्यर्थमिति नैवं विज्ञायते। पदस्य निवृत्त्यर्थं पदनिवृत्त्यर्थमिति। किं तर्हि पदे निवृत्त्यर्थं पदनिवृत्त्यर्थमिति। वाक्ये यावन्ति पदानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति इष्यते च वाक्यपदयोरन्त्यस्य स्यादिति तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थो वाक्याधिकारः। अथ टिग्रहणं किमर्थम्। टिग्रहणमलोन्त्यनियमे व्यञ्जनान्तार्थम् *। टिग्रहणं क्रियते अलोन्त्यनियमेव्यञ्जनान्तस्यापि यथा स्यात्। अग्निची ३ त् सोमसू ३ त्। अस्ति प्रयोजनमेतत्। किं तर्हीति। सर्वादेशप्रसङ्गस्तु *। सर्वादेशस्तु टेः प्लुतः प्राप्नोति। किं कारणम्। अच इति वचनादन्त्यस्य न। अन्त्यस्येति वचनादचो

---

उभयगतिरिहशास्त्रे भवतीति प्रतिपादितं तत्र व्याप्तिन्यायाश्रयादिहार्थग्रहणम्॥

वाक्यस्य टेः। वाक्यस्थस्यैव पदस्य प्रयोगो न केवलस्येति मत्वाह। वाक्याधिकार इति। पदनिवृत्त्यर्थ इति। पदस्येति यत्प्रस्तुतं तन्निवृत्त्यर्थ इत्यर्थः। नहि काक इति। नहि वाक्यग्रहणस्य पदाधिकारनिवृत्तिर्वाच्या यथा काकवाशितस्येत्यर्थः। विरोधाभावाच्चाशक्यः पदाधिकारो निवर्तयितुं वाक्यस्थपदस्यैव कार्याभ्युपगमादित्याह। दोष इति। नश्छवीति। हन्तीत्यादावपदान्तस्य रुत्वं भवति। नैवमिति। पदस्येत्यनुवर्तत एव पदस्य टेः प्लुतो मा भूत् पदवाक्ययोर्व्यक्तिस्तस्य व यथा स्यादित्येवमर्थं तु वाक्यग्रहणमित्यर्थः। टिग्रहणमिति। असति टिग्रहणे प्लुतश्रुत्याच्परिभाषोपस्थानादचातदन्तविधौ सत्यजन्तस्यैव वाक्यस्यालोऽन्त्यस्येति वचनादन्त्यस्याचो नपुंसकह्रस्व इव प्लुतः स्याट्टिग्रहणे तु तदुपादानसामर्थ्याट्टिनाज् विशिष्यते नत्वचा टिरिति हलन्तस्यापि प्लुतः सिध्यति। सर्वादेशप्रसङ्गस्त्विति। अचस्येत्ययमलोन्त्यशेष इति भावः। अच इति वचनादिति। इह तस्यानुपस्थानादिति भावः। सर्वादेश इति। हलन्तस्य टेः सर्वस्थाने इत्य-

न । उच्यते प्लुतः स सर्वादेशः प्राप्नोति । उक्तं वा* । किमुक्तम् । ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयादच इत्येतत्तत्रोपस्थितं द्रष्टव्यमिति ॥

प्रत्यभिवादेऽशूद्रे ॥ ८३ ॥ अशूद्र इति किमर्थम् । कुशल्यसि तुषजक । अत्यल्पमिदमुच्यते अशूद्र इति । अशूद्रस्त्र्यसूयकेष्विति वाच्यम् । तत्र शूद्र उदाहृतम् । स्त्रियां गार्गी अहं भोः । आयुष्मती भव गार्गी । असूयके । स्थाली अहं भोः । आयुष्मानेधिस्थालि ३ न् । नैषा मम संज्ञास्थालीति । किं तर्हि दाण्डिन्यायो मम विवक्षितः । स वक्तव्यः । स्थाली अहं भोः । आयुष्मानेधि स्थालिन् । न मम दाण्डिन्यायो विवक्षितः । किं तर्हि संज्ञा ममैषा । असूयकस्त्वमसि जाल्म । न त्वं प्रत्यभिवादनमर्हसि । भिद्यस्व वृषल स्थालिन् । भो राजन्यविशां वा * । भो राजन्यविशां वेति वक्तव्यम् । देवदत्तोहं भोः । आयुष्मानेधि देवदत्त भोः ३ । आयुष्मानेधि देवदत्त भोः । राजन्य । इन्द्रवर्माहं भोः । आयुष्मानेधीन्द्रवर्मा ३ न् आयुष्मानेधीन्द्रवर्मन् । राजन्य । विट् । इन्द्रपालितोहं भोः । आयुष्मानेधीन्द्रपालिता ३ । आयुष्मानेधीन्द्रपालित । अपर आह सर्वस्यैव नाम्नः प्रत्यभिवादने भोः शब्द आदेशो वा वक्तव्यः । देवदत्तो-

र्थः । उक्तं वेति । द्वितीया षष्ठ्यश्च इति प्रादुर्भाव्यते तत्र टिनाचो विशेषणादच एव स्थाने प्लुतो भवति ॥

प्रत्यभिवादे । गार्ग्यहं भो इति । केचिदाहुः । न स्त्र्यभिवादयते पादोपसंग्रहणान्येव तु करोति । अन्ये त्वाहुः । अभिवादयते न तु स्वनामगृह्णाति अभिवादप्रत्यभिवादौ च नामगोत्राभ्यामिति स्त्रीप्रतिषेधो न विधेयः । ये तु स्त्रिया नाम्नाभिवादप्रत्यभिवादाविच्छन्ति तन्मतेनायं प्रतिषेधः । नैषा ममेति । असूयकः प्रत्याचष्टे प्रत्यभिवादवाक्यान्तस्थस्य नाम्नो गोत्रस्य च प्लुत इष्यते नान्यस्येति यौगिकस्य प्लुतो न विधेयः । तत्र प्रत्यभिवादयित्रा स्थालीशब्दं संज्ञां, मत्वा प्लुतो विहितः । यदा तूपहासार्थमसूयकस्त्यभिवादयित्रा... माक्षिपति तदासौ प्रत्यभिवादं नार्हत्याशीर्वचनं हि प्रत्यभिवादो गृह्यते प्रतिसम्भाषणमात्रन्तु प्रत्यभिवादं मत्वा वार्तिककृता असूयके प्रतिषेध उक्तः । शूद्रे ऽप्याशीर्वचनरूपप्रत्यभिवादाभावात् प्रतिषेधो न विधेय इति केचिदाहुः । स वक्तव्य इति । अभिवादयिता प्रत्यभिवादयित्रैवं वक्तव्य इत्यर्थः । भिद्यस्वेति । कर्मकर्तर्यात्मनेपदम् । भो राजन्यविशांवेति । भोः शब्दो भवच्छब्दः संबुद्ध्यन्तो निपातो वा । सर्वेति । नामगोत्रशब्द-

हं भोः। आयुष्मानेधि भोः ३। आयुष्मानेधि देवदत्ता ३ इति वा। इह कस्मान्न भवति देवदत्त कुशल्यसीति। इह किं चिदुच्यते किं चित्प्रत्युच्यते। प्रधानमुच्यते अप्रधानं प्रत्युच्यते। तत्र प्रधानस्थस्य च टिसंज्ञस्य प्लुत्या भवितव्यम्। न चात्र प्रधानस्थं टिसंज्ञम्। इहापि तर्हि न प्राप्नोति आधेयोग्नि ३ र्नाधेय ३ इति। नैतद्विचार्यते आधेयो ऽनाधेयः अग्निश्च ह्नवतीति। किं तर्हि। अग्निसाधना क्रिया। विचार्यते आधेयोग्नि ३ र्नाधेय ३ इति। यद्येवं द्वितीयो ह्यग्निशब्दस्य प्रयोगः प्राप्नोति। उक्तार्थानामप्रयोग इति न भविष्यति। आधेयशब्दस्यापि तर्हि द्वितीयस्य प्रयोगो न प्राप्नोति उक्तार्थानामप्रयोगो भवतीति। नैष दोषः। उक्तार्थानामपि प्रयोगो दृश्यते। तद्यथा। अपूपौ द्वावानय ब्राह्मणौ द्वावानयेति॥

दूराद्धूते च॥ ८४॥ दूराद्धूत इत्युच्यते दूरशब्दश्चायमनवस्थितपदार्थकः। तदेव हि किंचित् प्रतिदूरं किं चित् प्रत्यन्तिकं भवति। एवं हि कश्चित् कंचिदाह एष पार्श्वतः करकस्तमानयेति। स आह उत्थायगृहाण दूरं न शक्ष्यामीति। अपर आह दूरं मथुरा-

---

मन्तरेण प्रत्यभिवादो नास्तीति समाचारे भोः शब्दस्यासाधुत्वे प्राप्ते वचनम्। इह किंचिदिति। पदस्येति वर्तते तद्विशेषणं प्रत्यभिवाद इति तेन प्रत्यभ्युद्यमानार्थवाचिनः पदस्य वाक्यान्तस्य टेः प्लुत्या भाव्यं नान्यस्येत्यर्थः। प्रधानस्थस्येति। संस्क्रियमाणस्य प्राधान्यं कुशल्यसीति साध्याया अपि क्रियायाः संस्कारिकात्वेन विवक्षितत्वादप्राधान्यम्। क्वचित् पाठः अप्रधानमुच्यते प्रधानंप्रत्युच्यत इति। तस्यार्थोऽभिवादवाक्ये श्रुतोदेवदत्तादिरेव प्रत्युच्यते कुशल्यसीत्येतत्तु पूर्वमश्रुतत्वात् न प्रत्युच्यते किं त्वपूर्वमेवैतदुच्यते। इहापीति। द्रव्यस्य विचार्यमाणत्वात्प्राधान्यं मन्यते। नैतदिति। न ह्याधानानाधानकर्मविशेषविषयो विचारो नाप्यग्निविशेषविषयः किमाहवनीयोथदक्षिणाग्निरिति। किं तर्ह्याधानं कर्तव्यं न कर्तव्यमिति तत्साधनक्रियाविचारः। यद्येवमिति। नाधेयोग्निरित्येऽप्यग्निशब्दो निर्देश्यः। उक्तार्थानामिति। अग्निरेव प्रकृतत्वादपेक्ष्यत इत्यर्थः। उक्तार्थानामपीति। उक्तार्थाभिमताः उक्तार्थाः सादृश्यादुच्यन्ते तत्त्वतस्तु यथा वृषदृषभशब्दौ भिन्नौ तथापूपावानय अपूपौ द्वावानयेत्येतौ समुदायावेवार्थवन्तौ लोके प्रयुज्येते प्रयोगानुसारेण लक्षणव्यवस्थाश्रीयते तेनोक्तार्थानां प्रयोगे ऽव्यवस्था नोद्भावनीया॥

दूराद्धूते च। तदेवेति। दूरस्यानवस्थितत्वात् प्लुतस्य विषयविभागो न व्यवतिष्ठ-

याः पाटलिपुत्रमिति । स आह न दूरमन्तिकमिति । एवमेष दूरशब्दोऽनवस्थितपदार्थकः तस्यानवस्थितपदार्थकत्वान्न ज्ञायते कस्यामवस्थायां प्लुत्या भवितव्यमिति । एवं तर्हि ह्वयतिनायं निर्देशः क्रियते ह्वयतिप्रसङ्गे यद्दूरम् । किं पुनस्तत् । यत्र प्राकृतात्प्रयत्नाद्विशेषेनुपादीयमाने संदेहो भवति श्रोष्यति न श्रोष्यतीति तद्दूरमिहावगम्यते ॥

हैहेप्रयोगे हैहयोः ॥८५ हैहेग्रहणं किमर्थम् । हैहेप्रयोगे हैहेग्रहणं हैहयोः प्लुत्यर्थम् * । हैहेप्रयोगे हैहेग्रहणं क्रियते ॥ हैहयोः प्लुतिर्यथा स्यात् । देवदत्तहै ३ देवदत्तहे ३ । अक्रियमाणे तयोः प्रयोगेन्यस्य स्यात् । अथ प्रयोगग्रहणं किमर्थम् । प्रयोगग्रहणमर्थवद्ग्रहणेनर्थकार्थम् * । प्रयोगग्रहणं क्रियते । अर्थवद्ग्रहणे अनर्थकयोरपि यथा स्यात् । देवदत्त है ३ । देवदत्त हे ३ । पुनर्हैहेग्रहणं किमर्थम् । अनन्त्ययोरपि यथा स्यात् । है ३ देवदत्त हे ३ देवदत्त इति ॥

गुरोरनृतोऽनन्त्यस्याप्येकैकस्यप्राचाम् ॥ ८६ ॥ गुरोः प्लुतविधाने लघोरन्त्यस्यप्लुतप्रसङ्गोऽन्येन विहितत्वात् * । गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतः प्राप्नोति । दे ३ वदत्त । किं कारणम् । अन्येन विहितत्वात् । अन्येन हि लक्षणेन लघोरन्त्यस्य प्लुतो विधीयते दूराद्धूते चेति । न वानन्तरस्यापीति वचनमुभयनिर्देशार्थम् * ।

---

तदित्यर्थः । ह्वयतीति । ह्वानक्रियापेक्षं दूरत्वमाश्रीयते न तु श्रोत्रादि पुरुषापेक्षमित्यर्थः ॥

हैहे प्रयोगे हैहयोः । पूर्वेण हूयमानार्थस्य पदस्य वाक्यान्तस्य टेः प्लुतविधानाद्धैहयोर्न प्राप्नोति वचनम् । हैहयोः प्लुत्यर्थमिति । अन्यथारम्भसामर्थ्यादनन्त्यस्यापि हूयमानवाचिन एव प्लुतः स्याद् देवदत्त है ३ इत्यादौ । अनर्थकयोरपीति । यदा तु प्राक् संबोधनपदं प्रयुज्यते तदा हैहयोर्द्योत्यार्थाभावादानर्थक्यं यदा तु तयोः प्राक् प्रयोगः तदामन्त्रणाभिव्यक्त्यर्थत्वादर्थवत्त्वम् । अनन्त्ययोरपीति । अन्यथावाक्यस्य टेरित्यधिकारादनन्त्ययोर्न स्यात् ।

गुरो । गुरोः प्लुतविधान इति । अनन्त्यस्यापीत्यपिशब्देन गुरोः सन्निधानाद्गुरुरेवान्त्यः समुच्चीयते तेन यत्र गुरुरन्त्यस्तत्रैव पर्यायः स्याल्लघौ त्वन्त्ये पूर्वेण तस्य स्यादनेन चानन्त्यस्य गुरोरित्यर्थः । न वेति । अपिशब्देन प्रकृतष्टिः समुच्चीयते न तु गुरुरेवान्त्य

न वा एष दोषः । किं कारणम् । अनन्त्यस्यापीति वचनमुभयनिर्देशार्थं भविष्यति । अनन्त्यस्यापि गुरोः अन्त्यस्यापि टेरिति । अथ प्राग्वचनं किमर्थम् । प्राग्वचनं विभाषार्थम् । प्राग्वचनं क्रियते । विभाषा यथा स्यात् । प्राग्वचनानर्थक्यं चैकैकस्येति वचनात् । प्राग्वचनमनर्थकम् । किं कारणम् । एकैकस्येति वचनात् * । एकैकग्रहणं क्रियते तद्विभाषार्थं भविष्यति । अस्त्यन्यदेकैकग्रहणस्य प्रयोजनम् । किम् । युगपत् प्लुतो मा भूदिति । अनुदात्तं पदमेकवर्जमिति वचनान्नास्ति यौगपद्येन संभवः । असिद्धः प्लुतः तस्यासिद्धत्वान्नियमो न प्राप्नोति । नैष दोषः । यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धम् । कथम् । कार्यकालं संज्ञापरिभाषमिति यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । गुरोरनृतोनन्त्यस्याप्येकैकस्यप्राचाम् । उपस्थितमिदं भवति अनुदात्तं पदमेकवर्जमिति । इहापि तर्हि प्राप्नोति देवदत्ता३ । सिद्धासिद्धावेतौ यौ हि सिद्धावेव असिद्धावेव वा तयोर्नियमः । यस्तर्हि स्वरितः प्लुतस्तेन समावेशः प्राप्नोति । स्वरितमाम्रेडिते सूयासंमतिकोपकुत्सनेष्विति । स्वरिते प्युदात्तोस्ति । यस्तर्ह्यनुदात्तः प्लुतस्तेन समावेशः प्राप्नोति । अनुदात्तं प्रश्नान्ताभिपूजितयोरिति । तस्मात्प्राग्वचनं कर्तव्यम् ॥

यें यज्ञकर्मणि ॥८८॥ ये यज्ञकर्मणीत्यतिप्रसङ्गः । ये यज्ञकर्म-

---

इत्यर्थः । विभाषार्थमिति । तेन पक्षे न कस्यचित्प्लुतो भवति । इतरस्तु पक्षे ऽनन्त्यस्य प्लुतः पक्षे त्वन्त्यस्य टेरित्येवमर्थं प्राग् ग्रहणमनेनोक्तमिति मन्त्राह । प्रागिति । यद्यपोदमिति । यथोद्देशपक्षे । इहापीति । आमन्त्रितस्यादिरुदात्त इत्युदात्तः प्लुतोदात्तत्वेन न समाविशेद् वर्ज्यमानस्वरप्रसङ्गात् । यदा चाम एकान्तरमित्यनेन निघातैकश्रुतिनिषेधस्तदेदमुदाहरणम् । सिद्धासिद्धाविति । आमन्त्रितस्यादिरुदात्तः सिद्धः तस्मिंस्त्वपेक्षिते प्लुतोदात्तो ऽसिद्ध इति तदाश्रयो निघातो न भवति । स्वरिते ऽपीति । अनुदात्तं पदमेकवर्जमित्यत्राविद्यमानोदात्तमनुदात्तमाश्रीयते न च पारिभाषिक उदात्तो गृह्यते किंतर्ह्युभयगतिरिह शास्त्रइति धर्मो गृह्यते स च स्वरितेस्तीत्युदात्तस्वरितयो र्यौगपद्याभावः । यस्तर्हीति । उदात्तानुदात्तप्लुतयोः समावेशनिवृत्त्यर्थमेकैकग्रहणं प्राग्ग्रहणं तु पक्षे सर्वेषां प्लुताभावार्थम् ॥

षीत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति । ये देवासो दिव्ये ऽकाद-शस्थ इति । सिद्धं तु ये यजामह इति ब्रूह्यादिषूपसंख्यानात् * । सिद्धमेतत् । कथम् । ये यजामहेशब्दो ब्रूह्यादिषूपसंख्येयः ॥

प्रणवष्टेः ॥८९॥ प्रणव इत्युच्यते कः प्रणवो नाम । पादस्य वा अर्द्धर्चस्य वा अन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्र-मोकारमोंकारं वा विदधति तं प्रणवमित्याचक्षते । अथ टिग्रहणं किमर्थम् । टिग्रहणं सर्वादेशार्थं, यदा ओकारस्तदा सर्वादेशो यथा स्यात्।यदाहिओँकारस्तदानेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति॥

याज्यान्तः ॥९०॥ अन्तग्रहणं किमर्थम् । याज्या नाम ऋचः वा-क्यसमुदायस्तत्र यावन्ति वाक्यानि सर्वेषां टेः प्लुतः प्राप्नोति । इष्यते चान्त्यस्य स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमन्तग्रहणम्॥

अग्नीत्प्रेषणेपरस्य च ॥९२॥ अग्नीत्प्रेषण इत्यतिप्रसङ्गो भवति इहापि प्राप्नोति । अग्नीदग्नीन्विहर । सिद्धं त्वोश्रावये परस्येति व-चनात् *। सिद्धमेतत् । कथम् । ओश्रावये परस्येति वक्तव्यम् । ओ३ श्रा३ वय । अपर आह। ओश्रावयाश्रावयेति वक्तव्यम् ।ओ३ श्रा३वय।

---

प्रणवष्टेः । कः प्रणव इति । शास्त्रे ऽस्मिन्नपरिभाषितत्वात्प्रश्नः । पादस्येति । शास्त्रा-न्तरे प्रसिद्ध आश्रीयते देवतावत् अक्षरमच्अन्त्यमचं गृहीत्वेत्यर्थः । तदाद्यक्षरशेषस्ये-ति । अक्षरं च शेषश्च हल् अक्षरशेषं तदन्त्यमक्षरमादिर्यस्य तत्तदादि तदादि च तदक्ष-रशेषं च तदाद्यक्षरशेषं टिसंज्ञकमित्यर्थः । अथेति । टिस्थानिकयोरेवौकारौकारयोः शा-स्त्रान्तरे प्रणवसंज्ञाविधानात्प्रश्नः । ओकार इति । असति टिग्रहणे ऽलोन्त्यस्येति वच-नाट्टेर्योन्त्यो हल् तस्यौकारः स्यात् । प्लुतत्वेन प्रणवस्य व्यभिचाराभावाद् अविशेषणा-त्संज्ञया च विधानेऽपरिभाषोपस्थानात् । अथाप्यच् परिभाषोपस्थाना ट्टेनाज्विशेष्यते तथापि टेर्योऽच् तस्य स्यान्न तु सर्वस्य टेः । ओंकारस्त्वज् झल् समुदायत्वात् प्लुतो न भवतीति सर्वस्य टेर्वाक्यस्य टेरित्यधिकारा त्तत्सिध्यति।के चित्तु टिस्थानिकस्यैवौकारस्य प्रणवसंज्ञाविधानाट्टिग्रहणमनर्थकमिति प्रतिपन्नाः ॥

याज्यान्तः । अन्तग्रहणमिति । वाक्यस्य टेरित्यधिकारादन्त्यस्यैव भविष्यतीति प्र-श्नः । याज्या नामेति । ऋक्समुदायो याज्यास्तत्र प्रत्यृचं प्लुतः प्राप्नोति ऋक्समुदाय-स्य प्लुतार्थमन्तग्रहणं तेनायमर्थो याज्यानामन्तो यष्टिस्तस्य योऽच् तस्य प्लुतः ॥

अग्नी । बहुलमिति । तेनौश्रावयाश्रावयाभ्यामन्यत्राग्नीत्प्रेषणे बहुलं प्लुतो भवति

आ३श्रा३वय। बहुलमन्यत्रापीति वक्तव्यम्। उद्गर३ उद्गर। आहर३ आहर। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। योगविभागः करिष्यते। अग्नीत्प्रेषणे परस्य च विभाषा। ततः पृष्टप्रतिवचने हेः। विभाषेत्येव। अपर आह सर्व एव प्लुतः साहसमनिच्छताविभाषा वक्तव्यः॥

आम्रेडितं भर्त्सने ॥ ९५ ॥ भर्त्सनेपर्यायेण *। भर्त्सने पर्यायेणेति वक्तम्। चौर ३ चौर। चौरचौर ३ । कुशील ३ कुशील। कुशीलकुशील ३ ॥

स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ १०३ ॥ असूयादिषु वावचनम् *। असूयादिषु वेति वक्तव्यम्। कन्ये ३ कन्ये। शक्तिके ३ शक्तिके। कन्येकन्ये ३। शक्तिकेशक्तिके ३ ॥

प्लुतावैच इदुतौ ॥ १०६ ॥ किमर्थमिदमुच्यते। ऐचोरुभयविवृद्धिप्रसङ्गादिदुतोः प्लुतवचनम्। ऐचोः उभयविवृद्धिप्रसङ्गाद् इदुतोः प्लुतउच्यते। किमुच्यते उभयविवृद्धिप्रसङ्गादिति। यदानित्याः शब्दाः नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपज-

---

बहुलवचनाच्च नादेर्न परस्य अपि त्वन्त्यस्यैव प्लुतः। उद्गर ३ उद्गरेति। चापले द्विर्वचनम्। योगविभाग इति। व्यवस्थितविभाषा चाश्रीयते इति भावः। एवम् उद्गरउद्गरेत्यन्त्यस्यप्लुतो न लभ्यत इति केचिदाहुः। व्यवहितेऽपि परशब्दो वर्तत इति भाष्यकाराभिप्रायमन्य आहुः। साहसमिति। शास्त्रत्यागः साहसं तेनशास्त्रमत्यजताभियुक्तस्मरणात्सर्वः प्लुतो विभाषा विधेय इत्यर्थः। एतच्च प्राग्ग्रहणस्य सर्वत्र संबन्धात्सिध्यतीति मन्यन्ते॥

स्वरित। असूयादिष्विति। सर्व एव प्लुत इति वचनमन्यदीयमिति वचनम्।

प्लुतावैच। लक्षणान्तरेणैचःप्लुतप्रसङ्गे तदवयवयोरिदुतोःप्लुतार्थं वचनम्।ऐचोरिति। समाहारवर्णत्वादवर्णस्येदुतोश्च विवृद्धिः प्राप्नोतीतिवचनं तत्र वचनसामर्थ्यादेर्णैकदेशयोरपीदुद्ग्रहणेन ग्रहणम्। किमुच्यत इति। उभयविवृद्धिशब्दं तत्पुरुषं मत्वा सिद्धान्तविरोधमुद्भावयति विवृद्धिनित्यता च विरुध्यते तादवस्थ्यं हि नित्यता। यद्यप्यनित्येष्वपि वर्णेषु उच्चरितप्रध्वंसित्वाद्विवृद्धिर्नोपपद्यते नापि रूपान्तरप्राप्तिस्तथापि स एवेमामवस्थां प्राप्त इति युज्यते वक्तुं तथा च दीर्घीभूत इति च्विना निर्देशः क्रियते नित्यत्वे तद्विरुध्यते। कूटस्थैरिति। कूटस्थादयः शब्दाः पृथगपि प्रयुज्यमाना नित्यतामाचक्षते युगपत्तु प्रयोगे केन चिच्छब्देन कश्चिन्नित्यताविशेष उच्यते। तत्र कूटस्थशब्देन स्व-

नविकारिभिः । नैष दोषः । उभयविवृद्धिप्रसङ्गादिति नैवं विज्ञायते उभयोर्विवृद्धिः उभयविवृद्धिः उभयविवृद्धिप्रसङ्गादिति । कथं तर्हि । उभयोर्विवृद्धिरस्मिन् सोऽयमुभयविवृद्धिः उभयविवृद्धिप्रसङ्गादिति । इमावैचौ समाहारवर्णौ मात्रा अवर्णस्य मात्रा इवर्णोवर्णयोरिति तयोः प्लुत उच्यमान उभयविवृद्धिः प्राप्नोति । तद्यथा गर्भो वर्धमानः सर्वाङ्गपरिपूर्णो वर्द्धते । अस्ति प्रयोजनमेतत् । किं तर्हीति । तत्रायथेष्टप्रसङ्गः । तत्रायथेष्टं प्रसज्येत । चतुर्मात्रः प्लुतः प्राप्नोति । सिद्धं त्विदुतोर्दीर्घवचनात् * । सिद्धमेतत् । कथम् । इदुतद्दीर्घौ भवतीति वक्तव्यम् । तदेतत्कथं कृत्वा सिद्धं भवति । यदि समः प्रविभागः मात्रा अवर्णस्य मात्रा इवर्णोवर्णयोः । अथ हि अर्द्धमात्रा अवर्णस्य अध्यर्द्धमात्रा इवर्णोवर्णयोः अर्द्धतृतीयमात्रः प्राप्नोति । अथ हि अध्यर्द्धमात्रा अवर्णस्य अर्द्धमात्रा इवर्णोवर्णयोः अर्द्धचतुर्थमात्रः प्राप्नोति । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं तत्रायथेष्टप्रसङ्ग इति । तत्र सौर्यभगवतोक्तमनिष्टिज्ञो वाडवः पठति । इष्यत एव चतुर्मात्रः प्लुतः ॥

एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ ॥ १०७ ॥

एचः प्लुतविकारे पदान्तग्रहणम् * । एचः प्लुतविकारे पदान्तग्रहणं कर्तव्यम् । इह मा भूत् । भद्रं करोषि गौ३रिति । विषयपरिगणनं

---

भावापरित्याग उक्तः स चावयवविचालेऽप्यस्ति नित्या पृथिवीत्यविचालिग्रहणेनावयवाविचालः प्रतिपाद्यते । अविचालित्वस्य हेतुकथनमनपायेति । इतरः शब्दान्तरमेव प्राप्नोति यस्मिन् विवृद्धिरिवोभयोर्लक्ष्यत इत्याह । नैवमिति। तद्यथेति । यथा गर्भेनावस्थिता एवावयवा विवर्द्धन्ते किं तर्हि पूर्वमूर्तिविनाशे मूर्त्यन्तरोत्पत्तिरेवं शब्दान्तरमेवोभयविवृद्धिः प्राप्नोतीत्युच्यते । चतुर्मात्रइति । प्लुतावयवत्वात् प्लुत उच्यते नहि चतुर्मात्रस्य प्लुतसंज्ञास्ति ऊकालोजिति वचनात्। तदेतदिति। भाष्यकारो वार्तिककारं पर्यनुयुङ्क्ते। ऐचोश्चोत्तरभूयस्त्वादिति वदता वार्तिककारेण समप्रविभागित्वं नेष्टमिति भावः । इष्यतएवेति । ऊकाल एवाजिति नियमो नाश्रीयते तेन. चतुर्मात्रस्याप्यच् कार्यं भवति प्रत्यङ्ङे ४ ति कायनेति ङमोह्रस्वादिति ङमुट् भवति ग्लौ ४ चातित्यत्रानचि चेति, तकारस्य द्विर्वचनं भवति । सौर्यभगवतेति । सौर्यं नामनगरं तत्रत्येनाचार्येणेदमुक्तम् ॥

ऐचो । गौ ३ रिति । अथ यदा सावपि पदं भवति तदा कस्मान्न भवति । उक्तमेत-

च *। विषयपरिगणनं च कर्तव्यम्। प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम्। प्रश्नान्त। अगम.३ पूर्वा३ न् ग्रामा३न् अग्निभूता३ इ पटा३उ। प्रश्नान्त। अभिपूजित। सिद्धोसि माणवक अग्निभूता३इ पटा३उ। अभिपूजित। विचार्यमाण। होतव्यं दीक्षितस्य गृहा३इ। विचार्यमाण। प्रत्यभिवाद। आयुष्मानेधि अग्निभूता३इ। प्रत्यभिवाद। याज्यान्त। उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे स्तोमैर्विधेमाग्नया३इ। आमन्त्रिते छन्दस्युपसंख्यानम् *। आमन्त्रिते छन्दस्युपसंख्यानं कर्तव्यम्। अग्ना३इ पत्नीवा:३ सजूर्देवेन त्वष्ट्रासोमं पिब॥

तयोर्य्वावचि संहितायाम्॥ १०८॥ अथ कयोरिमौ य्वावुच्येते। इदुतोरित्याह। तदिदुतोर्ग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। पूर्वस्यार्धस्यादुत्तरस्येदुताविति। तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। अचीत्येषा सप्तमी इदुताविति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टेपूर्वस्येति। किमर्थमिदमुच्यते। न इको यणचीत्येव सिद्धम्। न सिध्यति। असिद्धः प्लुतः प्लुतविकारौ चेमौ। सिद्धः प्लुतः स्वरसंधिषु। कथं ज्ञायते। यदयं प्लुतप्रगृह्या अचीति प्लुतस्य प्रकृतिभावं शास्ति। कथं कृत्वा ज्ञापकम्। सतो हि कार्यिणः कार्येण भवितव्यम्। इदं तर्हि प्रयोजनं दीर्घशाकलप्रतिषेधार्थम्। दीर्घं च शाकलं माभूत्। अग्ना३यिन्द्रम्। पटा३वुदकम्। एतदपि नास्ति प्रयोजनम्। आरभ्यतेऽत्र प्लुतपूर्वस्य

---

ह्वाक्यपदयोरन्त्यस्येति। विसर्जनीयस्यात्र वाक्यस्यान्तो नत्वेच पदान्तग्रहणमित्यत्र पदशब्देन वाक्यमुच्यते पद्यते प्रतीयतेऽनेनार्थ इति पदमित्यन्वर्थग्रहणात्। एतच्च याज्यान्त इत्यतोऽन्तग्रहणानुवृत्त्या लभ्यते। अग्निभूता ३ यिति। अग्निभूतिशब्दस्य संबुद्धौ रूपम्। आमन्त्रित इति। अप्राप्त एव प्लुते वचनम्॥

तयोः। कयोरिति। प्रश्नद्वारेण तयोरिति प्रत्याख्यायते तदन्तरेणाप्यधिकारात् स्वामिलाभात्। प्लुतविकाराविति। प्लुतविषयत्वात् प्लुतविकारावुच्येते तौ चासिद्धकाण्डे पाठायणादेशे कर्तव्येऽसिद्धौ। सिद्धः प्लुत इति। ननु प्लुतस्य सिद्धत्वे कथमिदुतोः सिद्धत्वम्। उच्यते। प्लुतप्रकरणे यत्कार्यं तत्स्वरसंधिषु सिद्धमिति सामान्यविषयानुमानाश्रयणा-

यणादेश: प्लुतपूर्वस्य दीर्घशाकलप्रतिषेधार्थमिति। तन्न वक्तव्यं भवति। अवश्यं तद्वक्तव्यम्। यौ प्लुतपूर्वाविदुतौ अप्लुतविकारौ तदर्थम्। भो३इ इन्द्र भो३यिन्द्रेति। यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यम्। इदं न वक्तव्यम्। इदमवश्यं वक्तव्यम्। स्वरार्थम्। तेन हि सति उदात्तस्वरितयोर्यण: स्वरितोनुदात्तस्येति एष स्वर: प्रसज्यत। अनेन पुन: सति असिद्धत्वान्न भविष्यति। यदि तर्ह्यस्य निबन्धनमस्ति इदमेव वक्तव्यम्। तन्न वक्तव्यम्। ननु चोक्तं तदप्यवश्यं वक्तव्यम्। यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थम्। हो३ इ इन्द्र। हो३यिन्द्र। छान्दसमेतद्, दृष्टानुविधि: छन्दसि भवति। यत्तर्हि न छान्दसम्। भो३इन्द्रं साम गायति। एषोपि छन्दसि दृष्टस्यानुप्रयोग इति। किं तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति। तौ च मम स्वरसंधिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ॥१॥ इक् तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्। तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतु:॥ २॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये

---

त्। भो३यिन्द्रेति। इशब्दस्तु निपातत्वात् प्रगृह्यत्वात् प्रकृतिभावप्रसङ्गे तद्बाधनार्थोपि यण्विधि: वर्णव्यत्ययेनात्र छान्दस: प्लुत:। स्वरार्थमिति। अकारो यथाविषयमुदात्तादियुक्त: प्लुत: इदुतौ तु सर्वत्रोदात्तौ तत्रानयोर्यूदात्तस्वरितयोरिति स्वरिते कर्तव्येऽसिद्धत्वात् स्वरितो न भवति। प्लुतप्रकरणे विहितं च कार्यं स्वरसंधिषु सिद्धमिति ज्ञापितं स्वरस्तु स्वरसंधिर्न भवतीति तत्रासिद्धत्वं य्वोर्भवत्येव। छान्दसमेतदिति। तत्रस्यापसंख्यानमन्तरेण वर्णव्यत्ययेन यण् सिद्ध:। यत्तर्हीति। अप्रतिपन्नविकारस्यानुकरणत्वाद् अच्छान्दसत्वाद्यण् न प्राप्नोति। एषोपीति। कृतयणादेशस्यैवेदमनुकरणमित्यर्थ:। पूर्वोक्तार्थसंग्रहश्लोकद्वयम्। किं तु यणेति। इको यणचीति यणादेशेन किं न सिद्धं रूपं यत इदुतोर्य्वौ विदधात्याचार्यस्तौ चेदुतौ स्वरसंधिषु सिद्धौ प्लुतप्रगृह्या अचीति ज्ञापकात्। एवं तर्हि इकोसवर्ण इति शाकलप्रकृतिभाव: प्राप्नोति सवर्णदीर्घश्च तन्निवृत्तये य्वौ विधीयेते। एतदपि न प्रयोजनमिक: प्लुतपूर्वस्य वार्तिककारेण शाकलदीर्घस्यापवादस्य यणो विधानात्। एवं तर्ह्युदात्तस्वरितयोरिति यणाश्रयस्वरितप्रसङ्गनिवृत्तये य्वौ विधीयेते॥

अष्टमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥
पादस्य द्वितीयः समाप्तः ॥

मतुवसोरुसंबुद्धौ छन्दसि ॥ १ ॥ मतुवसोरादेशे वन उपसंख्यानम् * । मतुवसोरादेशे वन उपसंख्यानं कर्तव्यम् । यस्त्वायन्तं वसुना प्रातरित्वः । विभाषा भवद्भगवदघवतामोच्चावस्य * । भवत् भगवत् अघवत् इत्येतेषां विभाषा रुर्वक्तव्यः ओच्चावस्य वक्तव्यः । भोः । भवन् । भगोः । भगवन् । अघोः । अघवन् इति । संबुद्धावित्युच्यते तत्रेदं न सिध्यति । भो ब्राह्मणा इति । तथा विभक्तौ लिङ्गविशिष्टग्रहणं नेति इह न प्राप्नोति भो ब्राह्मणि । नैष दोषः । अव्ययमेष भोः शब्दः नैषा भवतः प्रकृतिः । कथमव्ययत्वम् । विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा । निपातोऽव्ययमित्यव्ययसंज्ञा समः सुटि ॥५॥ पुमः खय्यम्परे ॥ ६ ॥ कानाम्रेडिते ॥१२॥ संपुंकानां सत्वम् * । संपुंकानां सत्वं वक्तव्यम् । संस्कर्ता । पुंस्कामा ।

---

इत्युपाध्यायजैय्यटपुत्त्रकैय्यटकृते भाष्यप्रदीपे अष्टमस्याध्यायस्य द्वितीयपादे द्वितीयमाह्निकम् । पादश्च समाप्तः ॥

मतुवसो । वन इति । क्वनिब्वनिपोः सामान्यग्रहणमनुबन्धस्यानिर्देशात्तदनुबन्धकपरिभाषानुपस्थानात् क्वनिपोऽपि ग्रहणम् । प्रातरित्व इति । प्रातरेतीत्यन्येभ्योऽपि दृश्यन्त इति क्वनिप् । भो ब्राह्मणा इति । जसि रुत्वौत्वे न प्राप्नुतो नापि रुत्वौत्वयोर्भो इति रूपं सिध्यति । यथा भो ब्राह्मणेत्यत्रापि भवतीशब्दे कारस्य रुत्वे अवस्य चौत्वे कृते संयोगान्तलोपे कर्तव्ये रुत्वस्यासिद्धत्वाद् रूपासिद्धिः । विभक्तिस्वरेति । केचिदाहुः । भूशब्दस्य विजन्तस्य सौ यद्रूपं रेफान्तं तत्प्रतिरूपको निपातः तत्र रेफस्य यत्वे लोपे च भो ब्राह्मणा इत्यादि सिध्यति । भवच्छब्दस्यापि भोः शब्दसिद्धये वार्तिकारम्भः । तेनेतराभ्योऽपि दृश्यन्त इति भवदादियोगे विधीयमानाः तसिलादयस्ततो भोस्तत्रभो इत्यादावपि भवन्ति । एवं च भवच्छब्दप्रकृतिकभोः शब्दप्रतिरूपकत्वमेव निपातत्वमाश्रयणीयं भवतेर्विजदर्शनादित्याहुः ।

समः सुटि । तुल्यविचारत्वात् भाष्ये त्रिसूत्रीं पठित्वा वाक्यं पठितम् । संपुंकानामिति । संस्कर्त्तेति । मकारस्य सत्वे कृते यदा पूर्वस्यानुनासिकः तदा सत्वस्यासिद्धत्वाद्‌ झलाभावादनचिचेति सकारस्य द्विर्वचने झरो झरि सवर्ण इति पाक्षिके लोपे द्वि-

कांस्कानिति। रुविधौ ह्यनिष्टप्रसङ्गः*। रुविधौ हि सत्यनिष्टं प्रसज्येत। इह तावत् संस्कर्ता वाशरीति प्रसज्येत। पुंस्कामेति इदुदुपधस्येति षत्वं प्रसज्येत। कांस्कानिति कुप्वोः≍क≍पाविति≍कः प्रसज्येत। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। क्रियते न्यास एव। समः स्सुटीति द्विसकारको निर्देशः। समः सुटि सकारो भवति। तत्प्रकृतमुत्तरत्रानुवर्तिष्यते। यदि तदनुवर्तते नश्छव्यप्रशानित्यत्रापि प्राप्नोति भवांस्तनोति। संबन्धमनुवर्तिष्यते। समः सुटि। पुमः खय्यम्परे। सो भवति। नश्छव्यप्रशान्। रुर्भवति। पुमः खय्यम्परे सकारः उभयथर्क्षु दीर्घादटि समानपादे नॄन्पे स्वतवान् पायौ। रुर्भवति। पुमः खय्यम्परे सकारः। कानाम्रेडिते सकारः। पुमः खय्यम्पर इति निवृत्तम्। समो वा लोपमेक इच्छन्ति॥ संस्कर्ता। सँस्कर्ता॥

ढो ढेलोपः॥ १३॥ ढलोपे अपदान्तग्रहणम् *। ढलोपे अपदान्तग्रहणं कर्तव्यम्। इह मा भूत् श्वलिड्ढौकते गुडलिड्ढौकते।

---

सकारकः त्रिसकारको वा प्रयोगो यदा त्वनुस्वारस्तदायोगवाहनां च प्रत्याहारेषु विशेषेणोपदेशस्तस्मिन् पक्षे एकसकारकोयदा त्वनुस्वारस्य हल्त्वमदच्त्वमपीष्यते तदा ततः परस्य सकारस्य द्विर्वचने सकारत्रयमपि भवति। यदा त्वे कीयमतेर कारलोपस्तदानुस्वारानुनासिकौ के चिन्नेच्छन्ति। तत्त्वयुक्तं मन्यन्ते। रुत्वप्रकरणे विधीयमानसन्नियोगेन तयोर्विधानात् मकारलोपेऽपि स इव ताभ्यांभाव्यमेवं च षट् रूपाणि भवन्ति। अनुनासिकपक्षे त्रयः सकारा वा एकोवा। एवमनुस्वारपक्षे ऽपि। षट् रूपाणि भवन्ति। अनुनासिकवक्षे त्रयः सकारा द्वौ वा एको वा एवमनुस्वारपक्षेऽपि षट्स्वपि रूपेषु शरः खयः इति वा द्विर्वचने ककारस्य कृते द्वादशरूपाणि भवन्ति। तत्प्रकृतमिति। ननु चानच्कस्य सकारस्य निदेशात् तत्र स्वरितत्वं प्रतिज्ञातुमशक्यम्। उच्यते। अचां स्वरितत्वं प्रतिज्ञायते तत्र समुदायानुवृत्तिः सकारस्यानुवृत्त्यर्थैव भविष्यति। यदीति। भवांस्तरतीत्यादौ सत्वे रुत्वे च विशेषो नास्ति दीर्घादटीत्यत्र तु विशेषो महां इन्द्र इत्यत्र तु सत्वे सति तस्यासिद्धत्वाद्रुत्वाभावाद्रूपं न सिध्येत्। संबन्धमिति। संबन्धं न हास्यतीत्यर्थः। अनुपूर्वस्य वृत्तेः सकर्मत्वात्संबन्धमिति द्वितीया। कर्मणि वाघञ् स च नपुंसकेऽपि बाधकाभावाद् भवति स्त्रियां तु क्तिन्नादिभिर्बाध्यमानत्वान्नभवति॥

ढो ढे। ढलोप इति। क्व चित् स्थानी नास्ति क्व चिन्निमित्तं नास्तीति वचनसा-

तत्तर्हि वक्तव्यम्। न वक्तव्यम्। जश्त्वमत्र बाधकं भविष्यति। जश्भावादिति चेदुत्तरत्र ढस्याभावादपवादप्रसङ्गः *। जश्भावादिति चेद् उत्तरत्र ढकारस्याभावादपवादोयं विज्ञायेत। कस्य। जश्त्वस्य। तस्मात् सिद्धवचनम् *। तस्मात् सिद्धत्वं वक्तव्यम्। कस्य। ष्टुत्वस्य। सङ् ग्रहणं वा *। सङ्ग्रहणं वा कर्तव्यम्। सङि ढ इति वक्तव्यम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। आनन्तर्यमिहाश्रीयते ढकारस्य ढकार इति। क्व चिच्च सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यम्। क्व चिच्च नैव सन्निपातकृतं नापि शास्त्रकृतम्। ष्टुत्वे संनिपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यम्। जश्त्वेनैव संनिपातकृतं नापि शास्त्रकृतम्। यत्तु कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः॥

खरवसानयोर्विसर्जनीयः॥१५॥ विसर्जनीयोऽनुत्तरपदे *। विसर्जनीयः अनुत्तरपद इति वक्तव्यम्। इह मा भूत्। नार्कुटो नार्पत्य इति। तत्तर्हि वक्तव्यं विसर्जनीयोनुत्तरपद इति। न वा ब-

---

मर्थ्याद्वचनान्तरबाधनादुभयत्र लोपप्रसङ्गः। जश्त्वमत्रेति। एकपदाश्रयत्वादन्तरङ्गत्वाद् पूर्वत्रासिद्धमिति वा लोपस्यासिद्धत्वात् पूर्वं जश्त्वे प्रवृत्ते लोपस्याप्राप्तिरेव बाधः। जश्भावादिति चेदिति। उत्तरत्र ढे यो लोप इष्यते स न प्राप्नोति लोपे कर्तव्ये ष्टुत्वस्यासिद्धत्वात् परस्य ढत्वा भावादित्यर्थः। जश्त्व इति। लोपेन तावदसिद्धत्वमवश्यं बाध्यं तत्र लीढमित्यादावेकमेव पूर्वत्रासिद्धत्वमतस्तदेव बाध्यते श्वलिड्ढौकत इत्यत्र तु ढलोपस्य जश्त्वापेक्षया बहिरङ्गत्वात्परत्वाच्च द्विविधमसिद्धत्वमिति न तद्बाध्यते ततो जश्त्वे कृते न श्रुतिकृतमानन्तर्यं नापि शास्त्रकृतं जश्त्वस्यासिद्धत्वाभावादिति लोपस्यायमविषयः॥

खरव। विसर्जनीय इति। उत्तरपदे सति यो रेफो निष्पन्नस्तन्निमित्तकस्तस्य विसर्जनीयो न भवतीति वाक्यार्थः संपद्यते। तेन दास्याः पुत्रादौ भवत्येव। न ह्यत्र सकारस्य रेफ उत्तरपदनिमित्तकः किं तर्हि पदत्वनिमित्तकः। नार्कुट इत्यादौ तु तद्धितनिमित्तत्वे रेफस्योत्तरपदं निमित्तं तदपेक्षत्वादृकारस्यादित्वस्य। नार्कुट इति। नृकुट्यां भव इत्यण्। नार्पत्य इति। नृपतेरपत्यमिति दित्यदित्येति ण्यस्तत्र वृद्धौ कृतायां रपरत्वे च पूर्वभक्तत्वाद्रेफस्य पदान्तत्वाद्विसर्जनीयः प्राप्तः प्रतिषिध्यते। न वेति। बहिरङ्गं लक्षणं निमित्तं स्वभावो वा यस्य रेफस्य स तथोक्तः। अपत्यार्थविहिततद्धितापेक्षवृद्धिनिमित्तत्वाद्रेफो बहिरङ्गस्तस्यासिद्धत्वात् स्थान्यभावाद्विसर्जनीयाभावः। अन्तः अङ्गं

हिरङ्गलक्षणत्वात् *। न वा वक्तव्यम् । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गो रेफः । अन्तरङ्गो विसर्जनीयः । असिद्धं बहिरङ्गमन्तरङ्गे । नैष युक्तः परिहारः । अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्वभाविनावेतौ पक्षौ सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गे अन्तरङ्गं भवति । न चात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवधानमस्ति । किं कारणम् । असिद्धत्वात् । कथमसिद्धत्वम् । पूर्वत्रासिद्धमिति । नानभिनिर्वृत्ते बहिरङ्गे अन्तरङ्गं प्राप्नोति तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य भवति । अनिमित्तं बहिरङ्गमन्तरङ्गस्य । किं कारणम् । असिद्धत्वात् । कथमसिद्धत्वं यावतापूर्वत्रासिद्धमित्यसिद्धा परिभाषा असिद्धं बहिरङ्गमन्तरङ्गे । कथम् । कार्यकालं संज्ञापरिभाषमिति खरवसानयोर्विसर्जनीयः उपस्थितमिदं भवति असिद्धं बहिरङ्गमन्तरङ्ग इति ।

---

यस्य बहिः अङ्गं यस्येति बहुव्रीहिस्ततः सर्वलिङ्गावन्तरङ्गबहिरङ्गशब्दावुपपन्नौ अङ्गशब्दश्चात्रोपकारकवाची । प्रतिद्वन्द्वभाविनाविति । द्वन्द्वं युग्ममुच्यते । प्रतिकूलं परस्परविरुद्धं द्वन्द्वं प्रतिद्वन्द्वं तत्र भवतोवश्यमित्यावश्यके णिनिः । सत्यन्तरङ्ग इति । अन्तरङ्गे बुद्ध्यापेक्षिते तदपेक्षया बहिरङ्गं भवति बहिरङ्गे चापेक्षिते तदपेक्षयान्तरङ्गं भवत्यन्तरङ्गव्यपदेशं लभत इत्यर्थः । न चात्रेति । अत्र विषये ऽन्तरङ्गबहिरङ्गयोर्युगपदेकस्यां बुद्धावपेक्षितपरस्परमवस्थानं नास्ति पूर्वस्यां परिभाषायां परस्य विसर्जनीयस्यासिद्धत्वादन्तरङ्गाभावाद्रेफस्य तदपेक्षबहिरङ्गत्वाभावाद् बहिरङ्गपरिभाषानुपस्थानात्प्राप्नोत्येव विसर्जनीयः । नानभिनिर्वृत्त इति । वस्तुतत्त्वकथनम् । तत्र निमित्तमेवेति । पराभ्युपगमेनान्तरङ्गबहिरङ्गव्यपदेशः बहिरङ्गाभिमतं बहिरङ्गमन्तरङ्गाभिमतस्यान्तरङ्गस्येति भावः । असिद्धत्वादिति । बहिरङ्गस्य रेफस्यान्तरङ्गे विसर्जनीये ऽसिद्धत्वाद्विसर्जनीयाभावः । कथमसिद्धत्वं, यावता पूर्वत्रासिद्धमित्यसिद्धा परिभाषेति । पूर्वत्रासिद्धमिति वचनेन विसर्जनीयस्यपूर्वस्यां परिभाषायामसिद्धत्वात्तदनुपस्थानात् कथं रेफस्यासिद्धत्वमित्यर्थः । अप्रवृत्तिरेवपरिभाषाया असिद्धिः । बहिरङ्गपरिभाषा हि विप्रतिषेधे परं कार्यमित्यत्रोपसंख्यानात्तद्देश्या वाह ऊडित्यत्र ज्ञापितत्वादेतद्देश्यावेति पूर्वा । इतरः कार्यकालत्वमाश्रित्याह । असिद्धमिति । यथोद्देशत्वमाश्रित्य चोदयति । कथमिति । इतर आह । कार्यकालमिति । तत्र काचित्परिभाषा विधिवाक्येनैकवाक्यत्वं गत्वा स्वकार्यं निष्पादयति यथेक्परिभाषामिदेरिको गुणं व्यवस्थापयति । काचित्तु विषये निमित्तापेक्षावाक्यभेदेन प्रधानकार्यं व्याप्रियते यथा विप्रतिषेधे परं का-

एवमेषा परिभाषा सिद्धा भवति। कुतो नु खल्वेतद् द्वयो: परिभाषयो: सावकाशयो: समवस्थितयो: पूर्वत्रासिद्धमिति असिद्धं बहिरङ्गमन्तरङ्ग इति च पूर्वत्रासिद्धमित्येतामुपमृद्य असिद्धं बहिरङ्गमन्तरङ्ग इत्येतया व्यवस्था भविष्यति न पुनरसिद्धं बहिरङ्गमन्तरङ्ग इत्येतामुपमृद्य पूर्वत्रासिद्धमित्येतया व्यवस्था स्यात्। अत: किम्। अतो ऽयुक्त: परिहार: न वा बहिरङ्गलक्षणत्वादिति॥

रो: सुपि॥ १६॥ किमर्थमिदमुच्यते न खरवसानयोर्विसर्जनीय

---

कार्यमिति। एषाहि वृक्षेष्वित्यादौ बहुवचने झल्येदित्यस्मिन् प्रवृत्ते वृक्षेभ्य इत्यादावेत्वदीर्घत्वयोर्विप्रतिषेधे परमेत्वं प्रवर्तयति। तद्वदसिद्धपरिभाषा हि वृक्षस्तिष्ठतीत्यादौ विसर्जनीयशास्त्रे प्रवृत्तेनार्कुटादौ रेफस्यासिद्धत्वं विदधती प्रधानं विसर्जनीयं विषयविशेषे व्यवस्थापयन्ती विषयं संस्कुरुते। न च पूर्वत्रासिद्धमित्यनेन योगेन बहिरङ्गपरिभाषा रेफे पूर्वस्मिन् सिद्धा क्रियते। प्रधानसन्निधौ गुणानां परस्परेणासंबन्धात्। तदुक्तम्। गुणानां च परार्थत्वादसंबन्ध: समत्वात् स्यादिति। विध्यन्तरशेषभावाच्च वाक्यभेदेनाप्युपतिष्ठमाना वाक्यान्तरे विसर्जनीयेनैकवाक्यभावात् पौर्वापर्याभावात् पूर्वत्रासिद्धमित्यनेन विसर्जनीये कर्तव्ये नासिद्धा क्रियते पूर्वोक्तादगुणत्वाद्वा। कुतो न खल्विति।असाआदित्यइत्यादि पूर्वत्रासिद्धमित्यस्यावकाश:।पचावेदमित्यादिबहिरङ्गपरिभाषाया:। नार्कुट इत्यादौ तु द्वयो: सन्निपात:। यद्यपि पूर्वत्रासिद्धमित्यधिकार: तथापि सपादसप्ताध्यायीं प्रति पादत्रयपठितस्य सर्वस्यासिद्धत्वप्रतिपादनात् परिभाषासाधर्म्यात् परिभाषाव्यवहार:।तत्रैतयो: परिभाषयो: सावकाशत्वात्तुल्यबलयोरप्रतिपत्तावाश्रीयमाणायां नार्कुटादौ विसर्जनीयप्रसङ्ग:। पर्याये त्वाश्रीयमाणे पक्षेऽनिष्टविसर्जनीयप्राप्ति:। अनयोश्च परस्परनिमित्तव्याघातात् परस्परस्योपमर्दकत्वम्। तथा हि। बहिरङ्गपरिभाषा रेफस्यासिद्धत्वं कुर्वतीति पूर्वलक्षणविषयाभावात् पूर्वत्रासिद्धमित्यस्या अप्रवृत्तिं साधयति। पूर्वत्रासिद्धमित्येषाऽपि विसर्जनीयासिद्धिविधानेनान्तरङ्गाभावाद्रेफस्यापि तदपेक्षबहिरङ्गत्वाभावाद् बहिरङ्गपरिभाषाया: प्रवृत्तिं विहन्ति। ततश्चायुक्तोयं परिहारो न वा बहिरङ्गलक्षणत्वादिति चोद्यान्तमेवेदं भाष्यम्। ततश्च विसर्जनीयोनुत्तरपद इति वक्तव्यमेव। यदा तु लक्ष्यदर्शनवशाद् बहिरङ्गपरिभाषाश्रीयते यथा चक्रकंक्ष्विष्टतौ व्यवस्था तदा युक्त एव परिहारो न वा बहिरङ्गलक्षणत्वादिति।

रो: सुपि। नियमार्थं इति। अथ सुपीति प्रत्याहाराश्रयणात् पयोभ्यामित्यादौ दिव्यर्थ: कस्मादारम्भो न भवति। खरीत्यनुवृत्त्या खरादेस्त्य: सुपो ग्रहणात्। न च सप्तमीबहुवचनादन्य: खरादि: सुबस्तीति तस्यैव ग्रहणाद्विध्यर्थानुपपत्त्या नियमार्थ आरम्भ:।

इत्येव सिद्धम् । नियमार्थोऽयमारम्भः । रोरेव सुपि नान्यस्य सुपि । क्व माभूत् । गीर्षु । धूर्षु ॥

भोभगोअघोअपूर्वस्य योऽशि ॥ १७ ॥ अश्ग्रहणमनर्थकमन्यत्राभावात् * । अश्ग्रहणमनर्थकम् । किं कारणम् । अन्यत्राभावात् । न ह्यन्यत्र रुरस्ति अन्यदतः अशः । ननु चायमस्ति । छन्दःसु । पयःस्विति । किं पुनः कारणं सुकारपर एवोदाह्रियते न पुनरयं वृक्षस्तत्र प्लक्षस्तत्रेति । अस्त्यत्र विशेषः । विसर्जनीये कृते न भविष्यति । इहापि तर्हि विसर्जनीये कृते न भविष्यति । छन्दःसु पयःस्विति । स्थानिवद्भावात्प्राप्नोति । ननु चेहापि स्थानिवद्भावात् प्राप्नोति वृक्षस्तत्रप्लक्षस्तत्रेति । अनल्विधौ स्थानिवद्भावः । अथायमल्विधिः स्यात् शक्यमश्ग्रहणमवक्तुम् । बाढं शक्यम् । अल्विधिस्तर्हि भविष्यति । कथम् । इदमस्ति रोरीति । ततो वक्ष्यापि खरवसानयोर्विसर्जनीयः रः । ततो रोःसुपि, विसर्जनीयः, रः इत्येव । उत्तरार्थं तर्हि अश्ग्रहणं कर्तव्यं हलि सर्वेषां हलि अशि इति यथा स्यात् । इह मा भूत् वृक्षवयतेरप्रत्ययः वृक्षव् करोति ॥

---

रोरेवेति । रोःसुप्येवेति तु नियमो न भवति हलोनन्तराः संयोग इत्यादिनिर्देशात् ॥

भोभगो । अन्यत्राभावादिति । यत्राशोऽन्यः खर् भवति तत्र पूर्वत्रासिद्धमिति यत्वस्यासिद्धत्वाद्विसर्जनीयेन भाव्यमित्यश्येव रुरस्तीत्यर्थः । स्थानिवद्भावादिति । ननु चरोरुकारस्यानुबन्धत्वाद्रेफः स्थानीत्यल्विधित्वात् स्थानिवद्भावेन न भाव्यम् । उच्चारणकाले यः श्रुतः स स्थानित्वेनाश्रीयते न तु प्रतिपत्तिकाले इति मन्यते । अल्विधिस्तर्हीति । रुर्नैव स्थानी किं तु तद्विशेषणं रोर्यो रेफस्तस्य विसर्जनीय इत्यर्थः । ततो वक्ष्यामीति । व्यख्यास्यामीत्यर्थः । वृक्षवयतेरिति । केचिद्वृक्षवन्तमाचष्ट इति णिचि टिलोपे च रूपमित्याहुः । तदयुक्तम् । इष्ठवद्भावान् मतुपो लुका भाव्यं न टिलोपेन । तस्माद् वृश्चतेर्वृक्षं वृश्चतीति क्विप् संप्रसारणे कृते वृक्षवृश्चमाचष्ट इति णिचि टिलोपे च विच् प्रत्ययः क्रियते । क्विपि तु सत्येकदेशविकृतस्यानन्यत्वाद्वृश्चतिग्रहणेन ग्रहणाद्वकारस्य संप्रसारणं स्यात् । लोपो व्योर्वलीति लोपो वा । न च णिलोपस्य स्थानिवद्भावः । क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानमिति प्रतिषेधात् । विचि तु णिलोपस्य स्थानिवत्वाद्वलोपो नास्ति हलि सर्वेषामित्यनेन तु वलोपे कर्तव्ये पूर्वत्रासिद्धेन स्थानिवदिति स्थानिवत्त्वनिषेधाद्वलोपः स्यादिति हल्विशेषणार्थमश्ग्रहणं क्रियते । वेतेर्वा वृक्षं वेति

ओतो गार्ग्यस्य ॥ २० ॥ किमर्थमिदमुच्यते । न लोपः शाकल्यस्येत्येव सिद्धम् । ओकाराल्लोपवचनं नित्यार्थम् * । ओकाराल्लोपवचनं क्रियते । किमर्थम् । नित्यार्थम् । नित्यार्थोऽयमारम्भः ॥

उञि च पदे ॥ २१ ॥ पद इति किमर्थम् । तन्त्रे उतं तन्त्रयुतं तन्त्र उतम् । पद इति शक्यमवक्तुम् । कस्मान्न भवति तन्त्रे उतं तन्त्रयुतं तन्त्र उतमिति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । उत्तरार्थं तर्हि पदग्रहणं कर्तव्यं ङमो ह्रस्वादचि ङमुण्नित्यमिति अपदे मा भूत् । दण्डिना । शकटिना ॥

हे मपरे वा ॥ २६ ॥ यवलपरे यवला वा * । यवलपरे हकारे यवला वेति वक्तव्यम् । किं ह्यः कियँह्यः । किं ह्वलयति । किवँ ह्वलयति । किं ह्लादयति । किलँह्लादयति ॥

डः सि धुट् ॥ २९ ॥ न स्व । शितुक् । ङ्णोः कुक्टुक् शरि । ङमो ह्रस्वादचि ङमुट् । इह धुडादिषु के चित् पूर्वान्ताः क्रियन्ते के चिरादयः । यदि पुनः सर्व एव पूर्वान्ताः स्युः । सर्व एव वा परादयः । कश्चात्र विशेषः । धुडादिषु ष्टुत्वणत्वप्रतिषेधः * । धुडादिषु सत्सु ष्टुत्वणत्वयोः प्रतिषेधो वक्तव्यः । ष्टुत्वस्य तावत् । श्वलिट्त्साये मधु-

---

वृश्चवोः वृश्चय्यमाचष्ट इति पूर्ववण्णिजादिः । अथ ककारे परतो लोपो व्योर्वलीति लोपः कस्मान्न भवति । न च णिलोपस्य स्थानिवद्भावोस्ति पदान्तविधौ तन्निषेधात् । नैष दोषः । पदान्ते विधीयमाने स्थानिवत्त्वनिषेधो न च लोपः पदान्तस्तस्याभावरूपत्वात् । अग्रग्रहणानुरोधेन चैतद् भाष्यकारेणोदाहृतम् । तथा हि । लणित्यत्रोक्तं न घदान्ता हलोपः सन्तीति ।

ओतो । किमर्थमिति । लोपः शाकल्यस्येत्यनेन पाक्षिकः सिद्ध एव लोपोनेनापि गार्ग्यस्य मतेन लोपो नान्येषामिति विकल्पो नैव विधेय इति प्रश्नः । ओकारादिति । गार्ग्यः स्वस्यां स्मृतावोतो नित्यमेव लोपं स्मरतीति पाणिनिरपितथैवेच्छति एवं च भो अत्रेति नित्यं भवति न तु भो यत्रेति ।

उञि च पदे । अयमपि नित्यार्थो योगः ।

ङः सि धुट् । योयमिह पूर्वान्तपरादिविचारः स स्थितलक्षणस्यार्थस्य लौकिकस्य विरोधाभावात् कृतः । ततो यदेके चोदयन्ति पूर्वान्तपक्षे हितत्सहितेन पूर्वेणार्थः प्रत्याख्यः परादिपक्षे हि तत्सहितेन परेण पदेनेत्ययुक्तो विचार इति । तदसंबद्धम् । सत्यप्यस्मिन् भेदे

लिट्त्सायै। ष्टुना ष्टुरिति ष्टुत्वं प्राप्नोति। परादौ पुनः सति न पदान्ताट्टोरनामिति प्रतिषेधः सिद्धो भवति। णत्वस्य। कुर्वन्नास्ते। कृषन्नास्ते। रषाभ्यांनोणः समानपद इति णत्वं प्राप्नोति। परादौ पुनः सति पदान्तस्य नेति प्रतिषेधः सिद्धो भवति। सन्तु तर्हि परादयः। परादौ छत्वषत्वविधिप्रतिषेधः *। यदि परादयः छत्वं विधेयम्। षत्वं च प्रतिषेध्यम्। कुर्वञ्छेते कृषञ्छेते। यद्धि तत् शश्छोटीति झयः पदान्तादित्येवं तत्। किं पुनः कारणं झयः पदान्तादित्येवं तत्। इह मा भूत्। पुरा क्रूरस्य विसृपो विरप्शिन्निति। षत्वं च प्रतिषेध्यम्। प्रत्यङ्क् सिञ्च। उदङ्क् सिञ्च।आदेशप्रत्यययोरिति षत्वं प्राप्नोति। पूर्वान्ते सति सात्पदाद्योरिति प्रतिषेधः सिद्धो भवति। तस्मात्सन्तु यथान्यासमेव केचित्पूर्वान्ताः केचित्परादयः। अयं तु खलु शितुक् छत्वार्थं नियोगतः पूर्वान्तः कर्तव्यः। तत्र कुर्वञ्छेते कृषञ्छेत इति रषाभ्यां नो णः समानपद इति णत्वं प्राप्नोति। नैष दोषः। स्तुत्वे योगविभागः करिष्यते। इदमस्ति। क्षुभ्नादिषु च। न णकारो भवति। ततः। स्तोः श्चुना, स्तोः श्चुना संनिपाते न णकारो भवति। ततः श्चुः। श्चुश्च भवति स्तोः श्चुना सन्निपाते॥

ङमो ह्रस्वादचि ङमुण्नित्यम्॥ ३२॥ ङमुटि पदादिग्रहणम् *। ङमुटि पदादिग्रहणं कर्त्तव्यम्। इह मा भूत्। दण्डिना शकटिनेति। तर्त्तर्हि वक्तव्यम्। न वक्तव्यम्। पदादिति वर्तते। एवमपि परमदण्डिना परमच्छत्रिणेत्यत्र प्राप्नोति। नैष दोषः।उक्तमेतत्। उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति।एव

---

संहितायां वाक्यार्थभेदात्। नियोगत इति। परादौ छत्वं न सिध्यतीति वचनादवश्यं पूर्वान्तः कर्तव्य इत्यर्थः। तत्र नकारस्यापदान्तत्वात् णत्वप्रसङ्गो न च नस्यापदान्तस्य झलीति नकारस्यानुस्वारे परसवर्णे च रूपं सिध्यति। अनुस्वारे कर्तव्ये तु तुकोऽसिद्धत्वात्। स्तुत्व इति। णत्वप्रतिषेधे च स्तुत्वमाश्रयात् सिद्धम्।

ङमो ह्रस्वादचि ङमुण्नित्यम्। एवं तर्हीति। ङमा पदस्य विशेषणात्तदन्तविधिना ङमन्तस्य पदस्यागमो विधीयमानो दण्डिनेत्यादौ ङमन्तस्यापदत्वान्न भवति। यद्येवं पदस्यादिर्ङमुट् प्राप्नोति। नैष दोषः। ह्रस्वादित्यनेन ङमाक्षिप्यते ङमन्तस्य पदस्य ह्र-

मपि पदादिति वक्तव्यम् । यदि तत्प्रकृतं प्राक् सुपि कुत्सनादित्येवं तत् । एवं तर्हि ङम एवायं ङमुट् क्रियते । कथम् । पदस्येति वर्तते । ङम इति च नैषा पञ्चमी । का तर्हि । संबन्धषष्ठी । पदान्तस्य ङमो ङमुट् भवतीति ह्रस्वादुत्तरस्याचीति । यदि ङम एव ङमुट् क्रियते कुर्वन्नास्ते कृषन्नास्ते रषाभ्यां नोणः समानपदे इति णत्वं प्राप्नोति । पदान्तस्येति प्रतिषेधो भविष्यति । पदान्तस्येत्युच्यते नैष पदान्तः । पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते । एवमपि न सिध्यति । किं कारणम् । उक्तमेतत् न वा पदाधिकारस्य विशेषणत्वादिति । तेन दण्डिना शकटिनेति अत्र प्राप्नोति । एवं तर्हि पद इति वर्तते । क्व प्रकृतम् । उञि च पदे इति ॥

मय उञो वो वा ॥३३॥ किमर्थं मय उत्तरस्य उञः वो वेत्युच्यते । न इको यणचीत्येव सिद्धम् । न सिध्यति । प्रगृह्यः प्रकृत्येति प्रकृतिभावः प्राप्नोति । यदि पुनस्तत्रैवोच्येत इको यणचि मय उञो वेति । नैवं शक्यम् । इह हि दोषः स्यात् किन्वावपनं महत् । मोनुस्वारः हलीति अनुस्वारः प्रसज्येत । वत्वे पुनः सति असिद्धत्वान्न भविष्यति ॥

---

स्वात्परो यो ङम् तस्य ङमुट् भवति । न वेति । न हि पदस्येत्येतद्विशेष्यं किं तर्हि विशेषणमिति तदन्तविध्यभावाद्दण्डिनेत्यादौ ङमुट्प्रसङ्गः । एवं तर्हीति । संबन्धानुवृत्त्या च पूर्वयोगेष्वसंबन्धाद् गुडलिट् त्विसत्यादौ धुडादयोपदे ऽपि भवन्ति ॥

मय उञो वो वा । किमर्थमिति । उञ इति योगविभागेन शाकल्यस्य मतेन प्रगृह्यसंज्ञाविधानात्पक्षे यणादेशः सिद्ध इति प्रश्नः । प्रगृह्य इति । उञ इत्यत्रैतावित्यनुवर्तमादनितिपरस्योञो निपात एकाजनाङिति नित्यं प्रगृह्यसंज्ञा । यदि पुनरिति । यणग्रहणानुवर्तनाद्ग्रहणं न कर्तव्यं भवतीति भावः । वत्व इति । अनुस्वारे कर्तव्ये वत्वस्यासिद्धत्वादनुस्वाराभावो हल्परत्वाभावात् । यदा त्वितिपर उञ् भवति तदा किंविति । किम्विति । किमु इति । किमू इति । इति रूपचतुष्टयं भवति । प्रगृह्यसंज्ञाभावपक्षे वत्वस्यासिद्धत्वाद्यणादेशे सत्यनुस्वारो भवति प्रगृह्यसंज्ञापक्षे त्वनेन वा वत्वम् । ऊं आदेशस्यापि स्यानिवद्भावादान्तरतम्याद्दनुनासिके पक्षे ववारे इति रूपपञ्चतयेन भाव्यमित्याहुः ॥

विसर्जनीयस्य सः ॥ ३४ ॥ इह कस्मान्न भवति । वृक्षः । प्लक्ष इति । संहितायामिति वर्तते एवमप्यत्र प्राप्नोति । किं कारणम् । परः संनिकर्षः संहितेत्युच्यते स यथैव परेण परः सन्निकर्ष एवं पूर्वेणापि । एवं तर्हि अनवकाशा अवसानसंज्ञा संहितासंज्ञां बाधिष्यते । अथवा संहितासंज्ञायां प्रकर्षगतिर्विज्ञास्यते साधीयो यः परः सन्निकर्ष इति । कश्च साधीयः । यः पूर्वपरयोः । यद्येवानवकाशा अवसानसंज्ञा संहितासंज्ञां बाधते । अथापि संहितासंज्ञायां प्रकर्षगतिर्विज्ञायते उभयथा दोषो भवति इष्यन्ते इत उत्तरमवसाने संहिताकार्याणि तानि न सिध्यन्ति । अणोप्रगृह्यस्यानुनासिक इति एवं तर्हि आचार्य प्रवृत्तिर्ज्ञापयति न सर्वस्य विसर्जनीयस्य सत्वं भवतीति । यदयं खरवसानयोर्विसर्जनीय इत्याह । इतरथा खरवसानयोः सो भवतीत्येव ब्रूयात् । तच्च लघु भवति । विसर्जनीयस्य स इत्येतच्च न वक्तव्यं भवति । अवश्यं शर्परे विसर्जनीय इत्यत्र

---

विसर्जनीयस्यसः । इहेति । स्थानिमात्रं निर्दिष्टं न तु निमित्तविशेष इति प्रश्नः।सं- हितायामिति । पौर्वापर्यमकालव्यवेतं संहिता न चात्र परमस्तीति संहिताया अभावो- न्यथा दधि अत्रेतीगचोरसंहितायामपि इकः पूर्वेणाचः परेण च संहितास्तीति यण् प्र- सज्येत.। एवमप्यत्रेति । विशेषानुपादानादिति भाव. । इको यणचीत्यत्र तु स्थानिनि- मित्तयोरुपादानात्तयोरेव संहिता गृह्यते । एवं तर्हीति । एकसंज्ञाधिकारात् सामान्य- विहिता संहिता संज्ञा विशेषविहितयावसानसंज्ञया बाध्यते । ननु संज्ञिभेदाद्बाधानुप- पत्तिः । परस्य सन्निकर्षस्य संहिता संज्ञा,अवसानसंज्ञा तु विरामस्य वर्णस्य विरतेर्वा। उच्यते संहितावसानकार्ययोरेकवर्णविषयत्वात् कार्यार्थत्वाच्च संज्ञानां संज्ञयोरप्येकविषयत्वा- द् बाध्यबाधकभावं मन्यते । अथ वेति । सन्निकर्षः संहितेतीयतासिद्धे परशब्दः प्रक- र्षगत्यर्थ उपादीयते तेन पूर्वपरविषयः सन्निकर्षः संहितासंज्ञो भवति । यद्येवेति । सं- ज्ञिभेदात्संज्ञयोर्बाध्यबाधकभावोनुपपन्न इति भावः । अणोप्रगृह्यस्येति.। वावसान इति तत्रानुवर्तते संहिताधिकारश्चोत्तरार्थोविशानुवर्तिस्तोलोति परसवर्णो ऽसंहितायां मा भू- दग्निचित् लुनातीति ततश्च संहितावसानाश्रयोनुनासिको दधि मधु इत्यत्र सिद्धो भ- वति । यदि तु सत्यपि बाध्यबाधकभावे यत्रैवावसानाश्रयं कार्यं तत्रैव संहिताग्रहणेना- संबन्धः उत्तरत्र त्वनुवृत्तेरेव तदा न कश्चिद्दोषः किं तु प्रतियोगिना विच्छिन्नस्य संहि- ताग्रहणस्योत्तरत्रोपस्थाने संदिह्येतेति भिन्नविषयत्वात् समावेश एवानयोः संज्ञयोरिह-

प्रकृतिनिर्देशार्थं विसर्जनीयग्रहणं कर्तव्यम्। अथेदानीमेतदपि रसान्निध्यार्थं पुरस्तादपकृष्यते खरवसानयोः स इत्यत्रैव। एवमपि कुप्वोः≍क≍पौ चेत्येवमादिनानुक्रमणेन व्यवच्छिन्नं भोभगोअघोअपूर्वस्य योऽशीत्यत्र रुग्रहणं कर्तव्यं स्यात्। एवमप्येकं विसर्जनीयग्रहणं व्याजो भवति सोऽयमेवं लघीयसा न्यासेन सिद्धे यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः न सर्वस्य विसर्जनीयस्य सत्वं भवतीति। एवमप्यनैकान्तिकं ज्ञापकमेतावज्ज्ञाप्यते न सर्वस्य विसर्जनीयस्य सत्वं भवतीति। तत्र कुत एतदिह भविष्यति वृक्षस्तत्र प्लक्षस्तत्रेति। इह न भविष्यति वृक्षः प्लक्ष इति। एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति नास्य विसर्जनीयस्य सत्वं भवतीति। यदयं शर्परे विसर्जनीय इत्याह। अथवा हलीति वर्तते। क्व प्रकृतम्। हलि सर्वेषामिति। यदि तदनुवर्तते। मय उञो वो वा हलि चेति हल्यपि वत्वं प्राप्नोति। शमुनः शमुयोस्तु। एवं तर्हि विसर्जनीयस्य स

---

त्व इति भाष्यकाराभिप्रायः। प्रकृतिनिर्देशार्थमिति। स्थाननिर्देशार्थमित्यर्थः। अन्यथा कस्य शर्परे विसर्जनीयः स्यात्। अथेदानीमिति। एवं सूत्रसन्निवेशः क्रियते रोरि खरवसानयोः सः रोः सुपि शर्परे विसर्जनीय इति। तत्र शर्पर इत्यत्र र इति वर्तते न तु रो रिति। एवमपीति। यदि रोः सुपीत्यस्यानन्तरं शर्परे विसर्जनीयः वा शरि कुप्वोः≍क≍पौ चेत्यादिरस्थानिकादेशविधानार्थं पठित्वा भोभगो इति यत्वं रस्य स्थाने विधीयते तदा खरचेत्यादावपि प्राप्नोति रुग्रहणस्य विच्छिन्नत्वात् पुनरुपादानं कर्तव्यं भवतीत्यर्थः। एवमपीति। यथान्यासे त्रीणि ग्रहणानि भवन्ति द्वे विसर्जनीयग्रहणे तृतीयं सग्रहणमन्यथान्यासे तु द्वे ग्रहणे सग्रहणे रुग्रहणं च तत्र खरवसानयोः स इति सग्रहणं खरवसानयोर्विसर्जनीय इति विसर्जनीयग्रहणेन निमीयते रुग्रहणं विसर्जनीयस्य स इति सग्रहणेन। तत्र विसर्जनीयस्येति विसर्जनीयग्रहणमधिकत्वाद्व्याजो भवति। अजेः क्षेपणार्थस्य घञिरूपं विच्छिप्यते तेन न पठितव्यं भवतीत्यर्थः। अथ वा व्याजोकृतमुच्यते। आनर्थक्यादन्वृतं भवति न कर्तव्यं भवतीत्यर्थः। तस्मात् सर्वस्य विसर्जनीयस्य सकारो न भवति। यदयमिति। विपर्यये हि विज्ञायमाने पुरुषः त्सरुक इत्यादौ सत्वाभावाद्विसर्जनीयोऽस्त्येवेति किं तद्विधानेन। ननु ≍क≍पनिवृत्त्यर्थं विसर्जनीयविधानं स्याद् वासः क्षौममद्भिः क्षालितमिति। नैतदस्ति। यद्येतावत्प्रयोजनं स्यात् कुप्वो ≍क≍पौ चाशरीति ब्रूयात्। अथवेति। लोपसंबद्धं हल्ग्रहणमनुवर्तत इति पूर्व-

इत्यत्र खरीत्यनुवर्तिष्यते । अथवा संबन्धमनुवर्तिष्यते ॥

वा शरि ॥३६॥ वा शर्प्रकरणे खर्परेलोपः * वा शर्प्रकरणे खर्परे लोपो वक्तव्यः । वृक्षा स्थातारः । वृक्षाः स्थातारः ॥

कुप्वो≍क≍पौ च ॥७२॥ सस्य कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीया वक्तव्याः । विसर्जनीयादेशे हि शर्परयोरेवादेशप्रसङ्गः । विसर्जनीयादेशे हि शर्परयोरेव कुप्वो≍क≍पौ स्याताम् । अद्भिः प्सातम् । वासः क्षौमम् । वचनाद्भ भविष्यतः । अस्ति वचने प्रयोजनम् । किम् । पुरुषः त्सरुकः । तर्हि वक्तव्यम् । न वक्तव्यम् । यदेतद्विसर्जनीयस्य स इत्यत्र विसर्जनीयग्रहणमेतदुत्तरत्रानुवर्तिष्यते तस्मिंश्च शर्परे विसर्जनीयोऽसिद्धः । नासिद्धः । कथम् । अ-

---

योगेषु कार्यान्तरेण न संबध्यते इह तु हलीति वर्तते लोप इति निवृत्तमित्यर्थः ॥

कुप्वो ≍क≍पौ च । सस्येति । ब्राह्मणः पचति ब्राह्मणः करोतीत्यादावुपध्मानीयजिह्वामूलीयविसर्जनीया इष्यन्ते । वासः क्षौममद्भिः प्सातमित्यादौ तु शर्परयोः कुप्वोर्विसर्जनीय एवेष्यते । एतच्च सस्येति स्थानिनिर्देशे सिध्यति । यो विसर्जनीयस्य सस्तस्य स्थाने कुप्वोरादेशत्रयविधानाच्छर्परयोः कुप्वोः सकारापवादविसर्जनीयविधानात्सकाराभावादादेशाप्रसङ्गः । यदा तु विसर्जनीयस्थाने अनेन आदेशत्रयं विधीयते तदा शर्परयोरेव कुप्वोः प्राप्नोत्यशर्परयोस्तु कुप्वोः पूर्वत्रासिद्धमिति ≍क≍पयोरसिद्धत्वात्सकार एव प्राप्नोति । न च सकारस्य स्थानिवद्भावोऽस्त्ययोगवाहानामविशेषेण प्रत्याहार उपदेशचोदनादल्विधित्वात् । वचनादिति । यदि शर्परे विसर्जनीय इत्यस्य विसर्जनीयस्य ≍क≍पौ स्यातां तदेतद्विसर्जनीयविधानमनर्थकं स्यात् । अस्तीति । यत्र कुप्भ्यामन्यः शर्परः खरस्ति तत्र सकारापवादविसर्जनीयविधानमर्थवत् । कुप्वोस्तु शर्परयोर्विसर्जनीयस्य ≍क≍ पप्रसङ्गः । यदेतदिति । विसर्जनीयस्य स इत्यत्र सकारस्य स्थानी यो विसर्जनीय उपात्तः स द्विविधः संभवति खरवसानलक्षणः शर्परलक्षणश्च तत्र पूर्वत्रासिद्धमिति सत्वे शर्परलक्षणस्यासिद्धत्वादितरः सस्य स्थानी विज्ञायते स एव चेहानुवर्तते तदर्थो वाशब्द इति स एवेह स्थानी गृह्यते तत्र वचनप्रामाण्यादुत्सर्गे सत्वे कर्तव्ये ऽपवादयोः ≍क≍पयोरसिद्धत्वाभावात् प्रवृत्तौ सत्यां यथेष्टं सिध्यतीत्यर्थः । शर्परलक्षणश्च विसर्जनीय आदेशोऽपूर्वोविसर्जनीयस्थे विधीयते न तु तस्यैव सत्वबाधनार्था प्रत्यापत्तिरिति दर्शनम् । अतएतदुच्यते प्रत्यापत्तौ हि विसर्जनीयस्य भेदाभावाद् अयुक्तोनन्तरः ऽ । ः स्यात् । ननु च वक्ष्यत्येतन् न योगे योगोऽसिद्धः किन्तु प्रक-

धिकारो नाम त्रिप्रकारः। कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति। अपरो यथा रज्ज्वा अयसा वा बद्धं काष्ठमनुकृष्यते तद्वत्। अपरोऽधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठते। यद्यप्येष पक्षः प्रतियोगं तस्यानिर्देशार्थ इति तदा हि यदेतद्विसर्जनीयस्य स इति विसर्जनीयग्रहणमेतदुत्तरत्रानुवृत्तं सदन्यत्संपद्यते। तस्मिंश्च शर्परे विसर्जनीयः सिद्धः। एवं च कृत्वा शर्परयोरेव कुप्वोः≍क≍पौ स्याताम्। वासः क्षौममद्भिः प्सातमिति। एवं तर्हि योगविभागः करिष्यते। शर्परेविसर्जनीयः। वाशरि। ततः। कुप्वोः। कुप्वोश्च शर्परयोर्विसर्जनीयस्य विसर्जनीयो भवतीति। किमर्थमिदम्। कुप्वोः≍क≍पौ वक्ष्यति तद्बाधनार्थं ततः≍क≍पौ ≍क≍पौ च भवतः। कुप्वोरित्येव शर्परयोरिति निवृत्तम्। अथवा शर्परे विसर्जनीय इत्येतत्कुप्वोः≍क≍पौ चेत्यत्रानुवर्तिष्यते॥

सोपदादौ॥४८॥ सोपदादावनव्ययस्य *। सोपदादौ अनव्ययस्येति वक्तव्यम्। इह मा भूत्। प्रातः कल्पम्। पुनः कल्पम्। रोः काम्ये नियमार्थम् *। रोः काम्य इति वक्तव्यम्। किं प्रयोजनम्। नियमार्थम्। रोरेव काम्ये नान्यस्य। पयस्काम्यति। यशस्काम्यति क्व मा भूत्।

---

रणे प्रकरणमसिद्धमिति तत्रैकप्रकरणत्वात् सत्वे शर्परे विसर्जनीय इत्यस्यासिद्धत्वं नास्ति। नैष दोषः। कार्यभेदात्प्रकरणभेदाद् एकत्र हि सकारो विधीयते अन्यत्र विसर्जनीयः। कश्चिदिति। यद्यपि सर्वशास्त्रावज्वलनं परिभाषाधर्मस्तथापि परार्थत्वसामान्याद् भेदापरामर्शेनैतदुक्तम्। तद्वदिति। चकारेणेति भावः। प्रतियोगमिति। यस्य स्वरितत्वं नासज्यते तत्सदृशानि शब्दान्तराणि योगान्तरेऽनुमीयन्ते सादृश्यात्तु तत्त्वाध्यवसायः योगान्तरोपयोग्यर्थस्य वा तस्यैवानुमानमर्थभेदात्त्वभिन्नस्यापि भेदावसायस्तत्र विसर्जनीयस्य स इति लिङ्गाभावान्न परिभाषा नापि चकारेणोत्तरत्र स्थानिनोऽनुकर्षः स्वरितत्वात्त्विह संबध्यमानोऽपि विसर्जनीयशब्दः सिद्धं विसर्जनीयं स्थानित्वेन प्रतिपादयतीति शर्परे विसर्जनीय इत्यस्यैव ≍क≍पप्रसङ्गः। स हि ≍क≍पयोः कर्तव्ययोः सिद्धः। अथ वेति। योगविभागे प्रसक्तयोः ≍क≍ पयोर्निवृत्तिनुवृत्तौ तु प्रसङ्ग एव नास्तीति विशेषः॥

सोपदादौ। प्रातःकल्पमिति। यद्यपि प्रातःशब्दोऽधिकरणवाची तथापि वृत्तिविषयेऽशक्ति-

गीःकाम्यति । पूःकाम्यति । उपध्मानीयस्य च * । सत्वं वक्तव्यम् । किं प्रयोजनम् । अयमुब्जिरुपध्मानीयोपधः पठ्यते तस्य सत्वे कृते जश्भावे च अभ्युद्गः समुद्ग इत्येतद्रूपं यथा स्यात् । यद्युपध्मानीयोपधः पठ्यते उब्जिजिषतीति उपध्मानीयस्य द्विर्वचनं प्राप्नोति । दकारोपधे पुनः सति नन्द्राः संयोगादय इति प्रतिषेधः सिद्धो भवति । यदि दकारोपधः पठ्यते का रूपसिद्धिः । उब्जिता उब्जितुमिति । असिद्धे भ उब्जेः । इदमस्ति । स्तोश्चुनाश्चुः । ततो वक्ष्यामि । भ उब्जेः । उब्जेश्च श्चुना संनिपाते भो भवतीति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । निपातनादेतत्सिद्धम् । किं निपातनम् । भुजन्युब्जौ पाण्युपतापयोरिति । इहापि प्राप्नोति । अभ्युद्गः । समुद्गः । अकुत्वविषये निपातनम् । अथवा नैतदुब्जेरूपम् । किं तर्हि । गमेः ह्युपसर्गात् डो विधीयते । अभ्युद्गः । समुद्गः ॥

इणः षः ॥३९॥ किमविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते । आहो स्विदिण उत्तरस्य विसर्जनीयस्यैव षत्वं विधीयते । किञ्चातः । यद्यविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते निष्कृतं निष्पीतमित्यत्र सत्वस्यासिद्धत्वात् षत्वं न प्राप्नोति ।

---

मद्दाचोति ईषदसमाप्तया योग उपपद्यते । यथा दोषाभूतमहर्दिवाभूता रात्रिरित्यादावभूततद्भावः । उपध्मानीयोपध इति । उपध्मानीयस्य पकारमन्तरेणोकारयितुमशक्यत्वात् उब्ज आर्जवे इत्येतदुच्चारणार्थः पकारः पठ्यते न तु श्रवणार्थ इत्युपधात्वमुपध्मानीयस्य । कुप्वोः प्रकरणाद्यत्र जकारस्य कुत्वं तत्रैवोपध्मानीयस्य सकारोन्यत्र प्रत्याहार उपदेशचोदनात् झलां जश् झशीति जश्त्वं बकारः । निपातनादिति । यत्र जकारः श्रूयते तत्र दकारस्य स्तोश्चुना श्चुरिति चुत्वे प्राप्ते झलां जश् झशीत्यनेनानन्तरतमोपि बकारो भवतीति निपातनेन कुत्वनिषेधार्थेनाप्यनुमीयत इति भावः । तेन पूर्वत्रासिद्धमिति नन्द्राः संयोगादय इति द्विर्वचननिषेधे वत्वस्यासिद्धत्वाद्दकारस्य द्विर्वचननिषेधः । गमेरिति । एवं च दकारोपदेशे द्विर्वचननिषेधार्थ एवेति द्विर्वचने कृते बत्वमिति रूपप्रक्रियया आनुपूर्व्याश्रीयते । अनभिधानाच्च घञभावादुब्ग इति न भवति । न चाभ्युद्ग इत्यत्र गमेर्डे घञि चोभे: स्वरे विशेषः । डे कृत्स्वरेणान्तोदात्तत्वात् घञ्यपि थाथादिस्वरेण ॥

इणः षः । सत्वस्यासिद्धत्वादिति । इणः ष इत्यनेन यदा सस्य षत्वं विधीयते तदा सोपदादावित्यस्यैव सस्य सर्पिष्कादौ षत्वं स्यात् । वक्ष्यमाणयोगेन विधीयमानस्य तु स-

अथ इण उत्तरस्य विसर्जनीयस्यैव षत्वमुच्यते। सत्वमप्यनुवर्तते उताहो न। किं चातः। यद्यनुवर्तते सत्वमपि प्राप्नोति। अथ निवृत्तं नमस्पुरसोर्गत्योरित्यत्र सकारस्य ग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्तते उताहो न। किं चातः। यद्यनुवर्तते षत्वमपि प्राप्नोति। अथ निवृत्तम्। इदुदुपधस्य चाप्रत्ययस्येत्यत्र षकारग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्तते उताहो न किञ्चातः। यद्यनुवर्तते सत्वमपि प्राप्नोति। अथ निवृत्तं तिरसोऽन्यतरस्यामित्यत्र सकारग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्तते। उताहो न। किञ्चातः। यद्यनुवर्तते षत्वमपि प्राप्नोति। अथ निवृत्तम्। द्विस्त्रिश्चतुरिति कृत्वोर्थे इसुसोः सामर्थ्ये नित्यं समासेऽनुत्तरपदस्थस्येति षकारग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्तते उताहो न। किं चातः। यद्यनुवर्तते सत्वमपि प्राप्नोति। अथ निवृत्तम्। अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्येति सकारग्रहणं कर्तव्यम्। यथेच्छसि तथास्तु। अस्तु तावदविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते। ननु चोक्तं निष्कृतं निष्पीतमित्यत्र सत्वस्यासिद्धत्वात् षत्वं न प्राप्नोतीति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न योगे योगोऽसिद्धः किं तर्हि प्रकरणे प्रकरणमसिद्धमिति। यदयमुपसर्गादसमासेऽपि णोपदेशस्येत्यसमासेऽपि ग्रहणं करोति। अथवा पुनरस्तु इण उत्तरस्य विसर्जनीयस्य षत्वं वीधीयते। ननु चोक्तं सत्वमप्यनुवर्तते उताहो न यद्यनुवर्तते सत्वमपि प्राप्नोतीति। नैष दोषः। संबन्धमनुवर्तिष्यते। सोपदादौ इणः षः नमस्पुरसोर्गत्योः सकारः इण उत्तरस्य षकारः। इदुदुपधस्य चाप्रत्ययस्य षकारः।

---

स्य षत्वेऽसिद्धत्वात् षत्वं न प्राप्नोतीत्यर्थः। असमासेऽपिग्रहणमिति। अन्तरेणाप्यसमासेऽपिग्रहणं विशेषानुपादानात् समासासमासयोर्णत्वं सिध्यति। न च समासे पूर्वपदात् संज्ञायामगः इति नियमेन णत्वस्याप्राप्तिः। नियमे कर्तव्ये उपसर्गादित्यस्य णत्वस्यासिद्धत्वान्नियमाभावात्तदेतदसमासेऽपिग्रहणं यथोक्तमर्थं ज्ञापयति। यद्यपि स्थानिभेद आदेशभेदश्च सस्य विसर्जनीयस्थानित्वात् षस्य सकारस्थानित्वात्तथापि कुप्वोरधिकारादेकनिमित्तत्वादेकप्रकरणत्वावसायः। संबन्धमिति। नचैणः परस्य सकारः प्राप्नोति ष-

नमस्पुरसोर्गत्योः सकारः । तिरसोऽन्यतरस्यां सकारः इदुदुपधस्य चाप्रत्ययस्य षकारः । द्विस्त्रिश्चतुरिति कृत्वोर्थे इसुसोः सामर्थ्ये नित्यं समासेऽनुत्तरपदस्थस्येति षकारः तिरसोऽन्यतरस्यां सकारः । अतःकृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य सकारोऽनुवर्तते षकारग्रहणं निवृत्तम् ॥

इदुदुपधस्य चाप्रत्ययस्य ॥४१॥ इदुदुपधस्य चाप्रत्ययस्येति चेत् पुंमुहुसोः प्रतिषेधः *। इदुदुपधस्य चाप्रत्ययस्येति चेत् पुंमुहुसोः प्रतिषेधो वक्तव्यः । पुंस्कामः । मुहुः काम इति । वृद्धिभूतानां षत्वं वक्तव्यम् । दौष्कुल्यम् । नैष्पुरुष्यम् । प्लुतानां तादौ च *। प्लुतानां तादौ कुप्वोश्चेति वक्तव्यम् । सर्पी३ष्टर । वही३ष्टर नी३ष्कुल । दू३ष्पुरुष । न वा बहिरङ्गलक्षणत्वात् *। न वा वक्तव्यम् । किं कारणम् । बहिरङ्गलक्षणत्वाद् वृद्धेः । बहिरङ्गलक्षणा वृद्धिः इह कस्मान्न भवति । पितुःकरोति मातुःकरोति । अप्रत्ययविसर्जनीयस्येति षत्वं प्रसज्येत । अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चायम् । लुप्यतेऽत्र प्रत्ययविसर्जनीयः रात्सस्येति । एवं तर्हि भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति तज्ज्ञापयत्याचार्यः नैकादेशनिमित्तात् षत्वं भवतीति ॥

---

कारेण तस्य बाधनाच्चकाराकरणाच्च । तत्र स इति ष इति च स्वरितत्वादुत्तरत्रानुवर्त्तते । उत्तरेऽपि योगाः स्वरितत्वप्रतिज्ञानाद्योगान्तरेषु के चित् षकारसंबद्धाः । के चित्सकारसंबद्धाः अनुवर्त्तन्ते इति यथेष्टं सकारषकारादेशप्रवृत्तिः ॥

इदुदुपधस्यचाप्रत्ययस्य । पुंमुहुसोरिति । अव्युत्पन्नावेताविति प्रतिषेधश्चोद्यते । संपुंकानां सो वक्तव्य इति वचनात् षत्वं न भविष्यतीति नार्थः पुंसः प्रतिषेधेन । सकारस्यावश्यं वक्तव्यः । रुत्वे हि क्रियमाणे विसर्जनीयस्य प्रतिषिद्धेऽपि षत्वे ≍क≍ पविसर्जनीयश्रवणप्रसङ्गः । ननु सकारस्यापि षत्वं प्राप्नोति सकारस्य षत्वमित्येषोऽपि स्थितः पक्षः । नैतदस्ति । सकारविधानसामर्थ्यात् षत्वं न भविष्यति । षत्वे हि सति रोः सस्य च विशेषाभावात् किं सत्वविधानेन । मातुरिति । उभयादेशस्यान्यतरतो व्यपदेशाद्रपरत्वे सत्यप्रत्ययविसर्जनीयत्वात् षत्वप्रसङ्गः । प्रत्ययविसर्जनीयश्चायमिति । उभयादेशत्वाभावायमुः स्थान इति रपरत्वाभावात् सकारस्यैव रुत्वविसर्जनीयौ मन्यते । लुप्यत इति । पूर्वोक्तेन न्यायेन रपरत्वं भवत्येव । कस्कादिष्विति । एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्य विसर्जनीयस्य षत्वं न भवतीति ज्ञाप्यते ।

द्विस्त्रिश्चतुरिति कृत्वोर्थे ॥४३॥ द्विस्त्रिश्चतुर्ग्रहणं किमर्थम् । इह मा भूत्। पञ्चकृत्वः करोति । अथ कृत्वोर्थग्रहणं किमर्थम् । इह मा भूत् चतुष्कपालश्चतुष्कण्टक इति । नैतदस्ति । अस्त्वनेन विभाषा पूर्वेण नित्यो विधिर्भविष्यति । नाप्राप्ते पूर्वेण इयं विभाषा आरभ्यते सा यथैव इह बाधिका भवति चतुष्करोति चतुःकरोतीति।एवं चतुष्कपाले ऽपि बाधिका स्यात्। नात्र पूर्वेण षत्वं प्राप्नोति। किं कारणम् । अप्रत्ययविसर्जनीयस्येत्युच्यते। प्रत्ययविसर्जनीयश्चायम्। लुप्यते ऽत्र प्रत्ययविसर्जनीयो रात्सस्येति। तस्मात्कृत्वोर्थग्रहणं कर्त्तव्यम् । द्विस्त्रिश्चतुर्ग्रहणं शक्यमवक्तुम् । कस्मान्न भवति पञ्चकृत्वः करोतीति । इदुदुपधस्येति वर्त्तते । नैवं शक्यम्। अक्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे कृत्वोर्थग्रहणेन विसर्जनीयो विशेष्येत । तत्र कोदोषः । इहैव स्यात् द्विष्करोति द्विःकरोति त्रिष्करोति त्रिः करोति । इह न स्याच्चतुः करोति चतुष्करोतीति। द्विस्त्रिश्चतुर्ग्रहणे पुनः क्रियमाणे कृत्वोर्थग्रहणेन द्विस्त्रिश्चतुरो विशेष्यन्ते । द्वित्रिचतुर्णां कृत्वोर्थे वर्त्तमानानां यो विसर्जनीय इति । एतदपि नास्ति प्रयोजनम् । पदस्येति वर्तते । तत्कृत्वोर्थग्रहणेन विशेषयिष्यामः । पदस्य कृत्वोर्थेवर्तमानस्य यो विसर्जनीय इति । कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा । षत्वं विभाषया भून्न नु सिद्धं तत्र पूर्वेण ॥ १ ॥ सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोर्थे। लुप्ते कृत्वो-

---

द्विस्त्रिश्चतुरितिकृत्वोर्थे । द्विस्त्रिश्चतुर्ग्रहणमिति । वक्ष्यमाणेनाभिप्रायेण दूषणार्थः प्रश्नः । इतरस्त्वगृहीताभिप्रायः प्रत्युदाहरति । पञ्च कृत्व इति । अत्र सकारः प्रसज्येत। अथेति । द्विस्त्रिःशब्दौ कृत्वोर्थावेवेति प्रश्नः । इतरश्चतुः शब्दार्थमेतद्विशेषणमित्याह। चतुष्कपाल इति। इदुदुपधस्येति नित्यं षत्वं भवत्यव्युत्पन्नत्वादुणादीनामप्रत्ययविसर्जनीयत्वाद्यदा तु साहचर्यं व्यवस्थाहेतुत्वेनाश्रीयते तदा चतुः शब्दार्थमपि कृत्वोर्थग्रहणं न कीर्तव्यम् । प्रत्ययविसर्जनीय इति। सकारस्य रुत्वे पूर्वस्य रोरि इति लोपः क्रियत इति भावः । लुप्यत इति। रात्सस्येति लोपे कर्तव्ये रुत्वस्यासिद्धत्वाद्रोरीति लोपे च ढ्लोपे इति दीर्घप्रसङ्गः । द्विस्त्रिश्चतुर इति । चतुः शब्दः सुजन्तस्यानुकरणमिति प्रकृतावेवादृष्टत्वादाम् न कृतः द्विस्त्रिश्चतुर्णामित्यत्र त्वसुजन्तस्यानुकरणत्वात् नुट् कृतः । पदस्य कृत्वोर्थ इति। ननु पूर्वत्रासिद्धमिति विकल्पस्यासिद्धत्वाच्चतुष्करोतीति नित्यं

र्थीये रेफस्य विसर्जनीयो हि ॥ २ ॥ एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम् । अन्यो हि नेदुदुपधः कृत्वोर्थे कश्चिदप्यस्ति ॥ ३ ॥ अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत । चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि ॥ ४ ॥ तस्मिंस्तु गृह्यमाणे युक्तं चतुरो विशेषणं भवति । प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम् ॥ ५ ॥

नित्यं समासेऽनुत्तरपदस्थस्य ॥ ४५ ॥ अनुत्तरपदस्थस्येति किमर्थम् । परमसर्पिः कुण्डिका । अथेदानीमनेन मुक्ते पूर्वेण षत्वं विभाषा कस्मान्न भवति इसुसोः सामर्थ्ये इति । नाना पदार्थयोर्वर्तमानयोः ख्यायते यदा योगः । तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह ॥ व्यपेक्षासामर्थ्ये पूर्वयोगः । न चात्र व्यपेक्षासामर्थ्यम् । किं पुनः कारणं पूर्वस्मिन् योगे व्यपेक्षासामर्थ्यमाश्रीयते न पुनरेकार्थीभावो यथान्यत्र । ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत ॥ ऐकार्थ्ये सामर्थ्ये सति वाक्ये षत्वं न स्यात् सर्पिष्करोति । सर्पिः क-

---

षत्वप्रसङ्गः । नैष दोषः । प्रकरणे प्रकरणमसिद्धं न तु योगे योग इत्युक्तत्वात् । अथ वा इदुदुपधस्य कृत्वोर्थवृत्तेर्नाप्राप्ते नित्ये षत्वे ऽस्यारम्भादस्यापवादत्वमिति अपवादोवचनप्रामाण्यान्नासिद्धो भवति ।

नित्यं समासे । अथेदानीमिति । इह समासग्रहणादेकार्थीभाव एव सामर्थ्यं गृह्यते पूर्वसूत्रे तु विशेषाश्रयणे-प्रमाणाभावाद्द्विविधसामर्थ्यग्रहणस्य न्याय्यत्वादेतद्विधीयमाननित्यषत्वाभावे पूर्वेण विकल्पः प्राप्नोत्येव । नानापदार्थयोरिति । नानाभूतयोः पदार्थयोर्यौ शब्दौ वर्त्तेते तयोर्यो योगो व्यपेक्षालक्षणः संख्यायते ज्ञायते न त्वेकार्थीभावो गृह्यते । तस्मिन्निति । व्यपेक्षालक्षणे संबन्ध इत्यर्थः । तद्युक्तमिति । व्यपेक्षालक्षणं सामर्थ्यमाश्रयितुं युक्तं लक्ष्यानुरोधात् । अथ वा पदविधित्वात्समर्थपरिभाषोपस्थानात्सामर्थ्ये लब्धे पुनः सामर्थ्यग्रहणाद्विशिष्टसामर्थ्यपरिग्रहः । तच्चेति । व्यपेक्षालक्षणं सामर्थ्यमिह परमसर्पिः कुण्डिकेत्यादौ नास्तीति षत्वाभावः । यथान्यत्रेति । समासतद्धितसुब्धातुषु यथैकार्थीभाव आश्रीयते तथेह कस्मान्नास्माश्रीयत इत्यर्थः । ऐकार्थ्य इति । यद्येकार्थीभावलक्षणं सामर्थ्यं पूर्वत्राश्रीयेत तदा वाक्ये षत्वविकल्पो न स्यात् । ननु केवलमैकार्थ्यं पूर्वत्र मा ग्राहि द्विविधस्य सामर्थ्यस्य ग्रहणं कस्मान्न भवति । उक्तमत्रोत्तरम् । अथ वेह समासग्रहणाद् गोबलीवर्दन्यायात् पूर्वत्रापेक्षितप्रवृत्तिनिमित्तवि-

रोतीति। तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते॥ अथ चेत्कृदन्तमेतत् ततोधिकेनैव मे भवेत्प्राप्तिः॥ १॥ यदि कृदन्तमेतत् ततोधिकस्य षत्वं न प्राप्नोति। किं कारणम्। प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। वाक्ये पि तर्हि न प्राप्नोति परमसर्पिष्करोतीति। वाक्ये च मे विभाषाप्रतिषेधो न प्रकल्पेत॥ यदयमनुत्तरपदस्थस्येति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः भवति वाक्ये विभाषेति। अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम्॥ अथाव्युत्पन्नं प्रातिपदिकं ततो नित्ये षत्वे प्राप्ते विभाषा आरभ्यते। सिद्धं च मे समासे। किमर्थं तर्हीदमुच्यते। प्रतिषेधार्थस्तु यत्नोयम्॥ अनुत्तरपदस्थस्येति प्रतिषेधं वक्ष्यामीति। नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः। तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह॥ २॥ ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत। तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते॥ ३॥ अथ चेत्कृदन्तमेतत् ततोधिकेनैव मे भवेत् प्राप्तिः। वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत॥ ४ अथ चेत्संविज्ञानं नित्येषत्वेततोविभाषेयम्। सिद्धंचमेसमासे प्रतिषेधा

---

शेषसमर्थशब्द आश्रीयते संप्रेक्षितार्थं समर्थमिति। अथ चेदिति। स्यादेतत्। द्विविधस्यापि सामर्थ्यस्य पूर्वत्र ग्रहणे कृत्प्रत्यययोरिसुसोर्ग्रहणात्प्रत्ययग्रहणपरिभाषया परमसर्पिः कुण्डिकेत्यादौ पाक्षिकं षत्वं न भविष्यतीति। तदयुक्तम्। परमसर्पिष्करोतीत्यादावपि षत्वाप्रसङ्गात्। वाक्ये चेति। अनुत्तरपदस्थस्येति प्रतिषेधात् ज्ञापकाद्वाक्ये परमसर्पिष्करोतीत्यादौ षत्वं भविष्यति इत्यर्थः। यदि हि षत्वे प्रत्ययग्रहणपरिभाषोपास्थास्यतानुत्तरपदस्थस्येति प्रतिषेधो न व्यधास्यत। केचित्तु नित्यं समास इत्येको योगः। अनुत्तरपदस्थस्येति द्वितीय इति योगविभागेन समासे सर्वा षत्वप्राप्तिरुत्तरपदस्थस्य प्रतिषिध्यत इति वर्णयन्तो द्विविधसामर्थ्याश्रये ऽपि न दोष इत्याहुः। अथ चेदिति। यद्यव्युत्पन्नं सर्पिरादिकं शब्दरूपं संविज्ञानं तदाऽप्रत्ययविसर्जनीयत्वादिदुदुपधस्येति नित्ये षत्वे प्राप्ते इसुसोः सामर्थ्ये इत्यनेन विकल्पः क्रियते तत्र प्रत्ययग्रहणाभावात् प्रत्ययग्रहणपरिभाषानुपस्थानात्परमसर्पिष्करोतीत्यादावपि षत्वविकल्पः सिध्यति। किमर्थमिति। इसुसोः सामर्थ्ये इत्यत्र व्यपेक्षालक्षणसामर्थ्यग्रहणात् समासे इदुदुपधस्येति नित्यं षत्वं सिद्धं तत्किमर्थं नित्यं समास इति सूत्रमिति प्रश्नः। प्रतिषेधार्थं इति। उत्तरपदस्थस्य समासे षत्वनिवृत्त्यर्थं सूत्रमित्यर्थः। नित्यग्रहणं तु न कर्त-

र्थस्तु यत्नोयम् ॥ ४ ॥

अपदान्तस्य मूर्द्धन्यः ॥ ५५ ॥ अथ मूर्द्धन्यग्रहणं किमर्थम् । ना पदान्तस्य षो भवतीत्येवोच्येत । तत्रायमप्यर्थः । षकारग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते । क्व प्रकृतम् । इणः ष इति । नैवं शक्यम् । अवश्यं मूर्द्धन्यग्रहणं कर्तव्यम् । इहार्थमुत्तरार्थं च । इहार्थं तावत् । इणः षीध्वं लुङ्लिटांधोङ्गादिति । अत्र मूर्द्धन्यग्रहणं न कर्तव्यं भवति । उत्तरार्थम् । रषाभ्यां नोणः समानपद इति । अत्र णकारग्रहणं न कर्तव्यं भवति । तत्रायमप्यर्थः । पदान्तस्य नेति प्रतिषेधो न वक्तव्यो भवति। अपदान्ताभिसंबद्धं मूर्धन्यग्रहणमनुवर्ततेइति॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
ऽष्टमस्याध्यायस्य तृतीयपादे प्रथममाह्निकम् ॥

सहेः साडः सः ॥ ५६ ॥ सग्रहणं किमर्थम् । न सहेस्साडो मूर्द्धन्यो भवतीत्येवोच्येत । सहेस्साडो मूर्द्धन्यो भवतीत्युच्यमाने अन्त्यस्य प्रसज्येत । ननु च अन्त्यस्य मूर्द्धन्यवचने प्रयोजनं नास्तीति कृत्वा सकारस्य भविष्यति । कुतो नु खल्वेतत् । अनन्त्यार्थे आरम्भे सकारस्य भविष्यति न पुनराकारस्य स्यात्। स्थानेन्तरतमो भवती-

---

व्यम् । समासेनुत्तरपदस्थस्येति प्रतिषेधार्थं सूत्रं पठितव्यम् । अव्युत्पत्तिपक्षे त्वाश्रीयमाणे सर्पिषा यजुषेत्यादि न सिध्यतीति षत्वाय व्युत्पत्तिपक्ष एवेसुसन्तस्याश्रयणीयः ॥

अपदान्तस्य मूर्द्धन्यः । अर्थेति । मूर्द्धन्यग्रहणं गुर्विति प्रश्नः । इणः षीध्वमिति । इहाक्रियमाणे मूर्द्धन्यग्रहणे इणः षीध्वमित्यत्र ढग्रहणं कर्तव्यं ततः समासेङ्गुलेरित्यत्र षग्रहणं कर्तव्यम् । अपदान्ताभिसंबद्धमिति । रषाभ्यामित्यत्रापदान्तग्रहणानुवर्तनाद् अपदान्तस्येति सूत्रं न कर्तव्यं भवतीति लाघवं संपद्यते ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे अष्टमस्याध्यायस्य
तृतीये पादे प्रथममाह्निकम् ॥

सहेः साडः सः । प्रयोजनं नास्तीति । ननु भिन्नरूपमूर्द्धन्यार्थं वचनं स्यात् । नैतदस्ति । स्थाने ऽन्तरतम इत्यस्य बाधप्रसङ्गात् अपदान्तस्येत्यधिकारादन्त्यस्य न भविष्यतीत्ययमप्यत्र परिहारोस्ति । कुतो नु खल्वेतदिति । ननु वचनसामर्थ्यादनुसंहारे बाधिते सर्वादेशो मूर्द्धन्यः प्राप्नोति । अयमपरोस्य दोषोस्तु । स्थानेन्तरतम इति । षष्ठ

ति सकारस्य भविष्यति। भवेत्प्रकृतितोऽन्तरतमनिर्वृत्तौ सत्यां सिद्धं स्यात्। आदेशतस्तु अन्तरतमनिर्वृत्तौ सत्यामाकारस्य प्रसज्येत। तस्मात्। सकारग्रहणं कर्तव्यम्। उत्तरार्थं च सकारग्रहणं क्रियते। आदेशप्रत्यययोस्सकारस्य यथा स्यात्। इह माभूत्। चिंतम्। स्तुतम्। अथ सहिग्रहणं किमर्थम्। न साडः सो भवतीत्येवोच्येत सहेरेव साड्रूपं भवति नान्यस्य। यद्येवं, साडः षत्वे समानशब्दप्रतिषेधः*। साडः षत्वे समानशब्दानां प्रतिषेधो वक्तव्यः। साडो दण्डः साडो वृश्चिक इति। अर्थवत् ग्रहणात् सिद्धम्*। अर्थवतः साड्रूपशब्दस्य ग्रहणं न चैषोऽर्थवान्। अर्थवद्ग्रहणात् सिद्धमिति चेत् तद्धितलोपे ऽर्थवत्त्वात् प्रतिषेधः*। अर्थवद्ग्रहणात् सिद्धमिति चेत्तद्धितलोपे ऽर्थवत्त्वात्प्रतिषेधोवक्तव्यः। सह अडेन साडः साडस्यापत्यं साडिः। अत्र प्राप्नोति सतर्हि वक्तव्यः। न वक्तव्यः। षत्वतुकोरेकादेशस्यासिद्धत्वात् नैष साड्शब्दः। एवमपि सह डेन सडः सडस्यापत्यं साडिः। अत्र प्राप्नोति। तस्मात्सहिग्रहणं कर्तव्यम्॥

इणकोः॥५७॥ नुम्विसर्जनीयशर्व्यवायेऽपि॥५८॥ नुम्विसर्जनीयशर्व्यवाये निसेः प्रतिषेधः*। नुम्विसर्जनीयशर्व्यवाये निसेः प्रतिषेधो वक्तव्यः। निंस्से निंस्स्वेति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। नुमैव व्यवाये विसर्जनीयेनैव व्यवाये शरैव व्यवाये इति। किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति। तद्यथा गुणवृद्धिसंज्ञे प्रत्येकं भवतः। ननु चायमप्य-

---

णमिहानुवर्तत इति भावः। मूर्धन्यग्रहणानुवृत्तौ तु ऋकार आकारस्य प्राप्नोति। भवेदिति। यद्यन्तरतम इति सप्तम्याश्रीयेत तदायं परिहारः षग्रहणानुवृत्तौ स्यात्सप्तमोपक्षे तु दोषदर्शनात्यक्तः सप्तम्यां ह्रीको यणयीति यणोऽर्धमात्राकालस्य मात्रिक एवान्तरतमः स्थानी स्यान्न द्विमात्रः। चितमिति। मूर्धन्यानुवृत्तौ तकारस्य टः प्रसज्येत। षकारानुवृत्तौ तु षः। साड इति। दण्डस्य वृश्चिकस्य वा अडोवयवविशेषः॥

नुम्विसर्जनीयशर्व्यवायेपि। निंसेरिति। यथावृषलैर्न प्रवेष्टव्यमिति वृषलप्रवेशनिषेधपरत्वाद्वाक्यस्य प्रत्येकं संहितानां च प्रवेशाभाव एवं नुमादीनां षत्वाप्रतिबन्धहेतुत्वप्रतिपादनायोपादानात् प्रत्येकं समुदायेन च व्यवाये षत्वप्रसङ्गः। नुमैवेति। एकस्मिन्नुच्यमानेऽनेकव्यवाये षत्वाप्रसङ्गः। ननुचायमिति। सर्वेषां व्यवायासंभवाद्यथासंभवं

त्ति दृष्टान्तः । समुदाये वाक्यपरिसमाप्तिः । तद्यथा । गर्गाः शतं द-ण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति । एवं तर्हि योगविभागात् सिद्धम् । योगविभागः करिष्यते । नुम्व्य-वाये । ततो, विसर्जनीयव्यवाये ततः शर्व्यवाये । स तर्हि योगवि-भागः कर्तव्य : । न कर्तव्यः । प्रत्येकं व्यवायशब्दः परिसमाप्यते ।

आदेशप्रत्यययोः ॥ ५९ ॥ आदेशप्रत्यययोः षत्वे सरकः प्रतिषेधः॥*।
आदेशप्रत्यययोः षत्वे सरकः प्रतिषेधो वक्तव्यः । कुसरः । धूसरः । अल्पमिदमुच्यते सरक इति । सरकादीनामिति वक्तव्यम् । इहा-पि यथा स्यात् । वसं तर्समिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि । न वै एतत्षत्वे शक्यं विज्ञा-तुमुणादयो ऽव्युत्पन्नानि प्रातिपदिकानीति । इह न स्यात् । सर्पि-षो यजुष इति । एवं तर्हि बहुलवचनात्सिद्धम् । बहुलं प्रत्ययसंज्ञा भवति । अथ किं पुनरियमवयवषष्ठी आदेशस्य यः सकारः प्रत्ययस्य यः सकार इति । आहो स्वित् समानाधिकरणा आदेशो यः सका-रः प्रत्ययो यः सकार इति । कश्चात्र विशेषः । आदेशप्रत्यययोरित्य-वयवषष्ठी चेद्द्विर्वचने प्रतिषेधः * । आदेशप्रत्यययोरित्यवय-

---

क चित्प्रत्येकं क्वचिद्द्वाभ्यां व्यवाये षत्वप्रसङ्गः । एवं तर्हीति । योगविभागे सति द्वाभ्यां व्यवाये षत्वाभावः । इण्कोरिति पञ्चमीनिर्देशादानन्तर्ये षत्वप्रतिपादनाद्योगत्रयेण चैकैकव्यवाये षत्वाभ्यनुज्ञानात् । प्रत्येकमिति । लक्ष्यदर्शनवशाल्लक्षणव्यवस्था ततश्च-तद्वाक्योपायानिप्रक्रियावाक्यानि चौल्लुपक्षवन्त इति योगविभागसाध्यफलसिद्धिः ॥

आदेशप्रत्यय । कुसरइति । असेःसरन्नित्यतः सरन्प्रत्ययो कधूमादिभ्यः किदित्यचा-नुवर्तते किस्वातिदेशाच्च कित्कार्यलाभाद्भाष्यवार्तिकयोः सरक् पठितः । वर्समिति । वृतृवदि इति स प्रत्ययः । उणादय इति । अबुधबोधनाय व्युत्पाद्यमाना अप्युणादयो व्युत्पत्तिनिमित्तं कार्यं न लभन्ते अतः ककमिकंसेत्यत्र पृथक्कं सग्रहणात् । नवै एतदिति । षत्वं व्युत्पत्तिहेतुकमुणादीनामवश्याभ्युपेयं सर्पिषा इत्यादिसिद्धयर्थमित्यर्थः । एवं तर्हीति । कुसरादिषु षत्वे कर्तव्ये प्रत्ययसंज्ञा न भवति । अथेति । अवयवषष्ठ्यामस्यां स इत्यस्यानुवृत्तस्य वचनविपरिणामो न कर्तव्यो भवति कार्येण त्वादेशप्रत्यययोरसंबन्धः सकारविशेषणत्वात् । सामानाधिकरण्ये त्वादेशप्रत्यययोः सकारयोरिति द्विवचनं वि-परिणम्यं कार्येण त्वादेशप्रत्यययोश्चोदनाया अनुग्रह इति साम्यात् पक्षद्वयसंभावना ।

वषष्ठी चेद्द्विर्वचने प्रतिषेधो वक्तव्यः । बिसंबिसम् । मुसलंमुसलम् । समानाधिकरणानां चाप्राप्तिः * । समानाधिकरणानां षत्वस्य चा-प्राप्तिः । एषोकार्षीत् । अस्तु समानाधिकरणा । यदि समानाधिकरणा सिषेच सुष्वाप अत्र न प्राप्नोति । न धातुद्विर्वचने स्थानेद्विर्वचनं शक्यमास्थातुम् । इहापि तर्हि प्रसज्येत सरीसृप्यत इति । तस्मात्तत्र द्विष्प्रयोगो द्विर्वचनम् । इह तर्हि करिष्यति हरिष्यति प्रत्ययो यः सकार इति षत्वं न प्राप्नोति । अस्तु तर्ह्यादेशो यः सकारः प्रत्ययस्य यः सकार इति । इह तर्हि अकार्षीत् प्रत्ययस्य यः सकार इति षत्वं न प्राप्नोति । मा भूदेवं आदेशो यः सकार इत्येवं भविष्यति । इह तर्हि जोषिषत् मन्दिषदिति प्रत्ययस्य यः सकारइति षत्वं न प्राप्नोति । एषोऽपीटि कृते प्रत्ययस्य सकारः । इह तर्हि इन्द्रो मा वक्षत् स देवान् यक्षत् । नानाविभक्तीनां च समासानुपपत्तिः * । नानाविभक्तीनां च समासो नोपपद्यते । आदेशप्रत्यययोरिति । योगविभागात् सिद्धम् * । योगविभागः करिष्यते । आदेशस्य षो भवतीति । ततः प्रत्ययस्य । सकारस्य षो भवतीति । स तर्हि योगविभागः । कर्तव्यः न कर्तव्यः । कथम् । अस्तु तावदवयवषष्ठी । ननु चोक्तमादेशप्रत्यययोरित्यवयवषष्ठी चेद् द्विर्वचने प्रतिषेध इति । नैष दोषः । द्विष्प्रयोगो द्विर्वचनम् । यदप्युच्यते समाना-

---

बिसंबिसमिति । स्थाने द्विर्वचनमिति मत्वा दोषोपन्यासः । एष इति । एतदस्तकारस्य तदोःसः सावनन्त्ययोरिति सकार आदेशोनादेशावयव इति षत्वं न प्राप्नोति । एवमकार्षीदित्यत्रादेशः प्रत्ययो वा सकारो न तु तदवयवः । सिषेचेति । स्थानेद्विर्वचन आदेशावयवः सकारो न त्वादेश इति षत्वाप्रसङ्गो यथा बिसमित्यादौ । सरीसृप्यत इति । ननु समानाधिकरणपक्षे षत्वस्यात्राप्रसङ्गः । उच्यते । सिषेचादिसिद्धये यदि व्यधिकरणपक्ष आश्रीयते तदा स्थाने द्विर्वचने सरीसृप्यत इत्यत्रापि प्राप्नोति । द्विःप्रयोगित्वत्र न दोषः । सिषेचेत्यादौ तु धात्वादेः षः स इति य आदेशस्तस्य सामानाधिकरण्याश्रयेण षत्वं सिध्यति । जोषिषदिति । लेट् व्यत्ययेन परस्मैपदं तिप् इतश्च लोप इत्यादिनेकारलोपः लेटोऽडाटावित्यट् सिप् बहुलं लेटीति सिप् । [illegible] । [illegible] प्रत्ययत्वात्तदवयवः सकारः । वक्षद्यक्षदिति । वहियजिभ्यां लेट् । नानाविभक्तीनामिति । आदेशस्येति षत्वापेक्षया स्थानषष्ठी प्रत्ययस्येति सकारापेक्षयावयवषष्ठीति समासो न [illegible]

धिकरणानां चाप्राप्तिरिति । व्यपदेशिवद्भावेन भविष्यति ॥ अथ वा पुनरस्तु समानाधिकरणा । कथं करिष्यति हरिष्यति । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानां षत्वमिति । यदयं सात्पदाद्योरिति सात्प्रतिषेधं शास्ति । अथ वा पुनरस्त्वादेशो यः सकार इति ॥ कथमिन्द्रो मा वक्षत् स देवान् यक्षत् ॥ व्यपदेशिवद्भावेन भविष्यति। स तर्हि व्यपदेशिवद्भावो वक्तव्यः।न वक्तव्यः। उक्तं वा *। किमुक्तम्॥ तत्र व्यपदेशिवद्वचनमेकाचो द्वे प्रथमार्थं षत्वे चादेशसंप्रत्ययार्थम्॥ अवचनाल्लोकविज्ञानात् सिद्धमिति । यदपि नानाविभक्तीनां च समासानुपपत्तिरिति । आचार्यप्रवृत्तिर्ज्ञापयति नानाविभक्त्योरेष समास इति यदयं शासिवसिघसीनां चेति घसिग्रहणं करोति । कथं कृत्वा ज्ञापकम्। यदि हि आदेशस्य यः सकार इत्येवं स्याद् घसिग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्य आदेशो यः सकारस्तस्य षत्वमिति । ततो घसिग्रहणं करोति ॥

स्तौतिण्योरेव षण्यभ्यासात् ॥ ६१ ॥ स्तौतिणिग्रहणं किमर्थम् ॥ असौतिण्यन्तानां मा भूत् । सिसिक्षति । अथ एवकारः किमर्थः ॥ नियमार्थः । स्तौतिण्यन्तानामेव नान्येषामिति । नैतदस्ति प्रयोजनम् । सिद्धे विधि रारभ्यमाणो ज्ञापकार्थो भवति ... नियमार्थो भविष्यति। इष्टतोवधारणार्थस्तर्हि । यथैवं विज्ञायेतस्तौतिण्योरेव षणीति । मैवं

---

भावात् द्वन्द्वानुपपत्तिः। व्यपदेशिवद्भावेनेति। ननु सिप्सिचोरर्थवत्त्वादर्थस्य त्यागोपादानाभ्यां युक्तो व्यपदेशिवद्भावः इडागमभावाभावाभ्यामनेकरूपत्वाद्वा । एष इत्यत्र तु सकारस्यानर्थक्यादयुक्तः । तथा चोक्तमर्थवता व्यपदेशिवद्भाव इति । एवं तर्ह्यवयवसमुदायापेक्षो व्यपदेशिवद्भावः स्यः सः एषोसाविति सकारसमुदायस्यादेशस्यैव इत्यत्र सकारोवयवो भवतीति षत्वं प्रवर्तते । यदयमिति । प्रत्ययावयवस्यापि सकारस्य षत्वं भवति न केवलं प्रत्ययस्य सकारस्येति प्रतिषेधेन ज्ञाप्यते । नानाविभक्त्योरिति । नन्वाचार्यस्यार्थस्वभावाद् कथं भिन्नप्रस्थानयोर्द्वन्द्वः । उच्यते । एकविभक्त्योरयं द्वन्द्वो नानाविभक्तितुल्यफलत्वान्नानाविभक्तिरुक्तः सादग्रहणाद्घसिग्रहणाच्च नोभयत्र समानाधिकरण्यं वैयधिकरण्यं वा । तत्र प्रत्ययावयववृत्तित्वात् प्रत्ययशब्दस्य सामानाधिकरण्येपि वैयधिकरण्यफललाभः ।

स्तौति । नियमार्थ इति । विशिष्टेष्टनियमार्थ इत्यर्थः । सुषुपिष इष्टमिति । सपि-

विज्ञायि। स्तौतिण्यन्तयोः षण्येवेति। इह न स्यात्। तुष्टाव। षणीति किमर्थम्। सिषिच्यते कोऽविनते ऽनुरोधः। अविनते नियमो मा भूत्। सुषुप्सतीति। कः सानुबन्धे ऽनुरोधः। षशब्दमात्रे नियमो मा भूत् सुषुपिष इन्द्रम्। सुषुपिष इत्येति। अभ्यासादिति किमर्थम्। अभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्यात्। उपसर्गाद्या प्राप्तिस्तस्या नियमो मा भूत्। अभिषिषिक्षति। नैतदस्ति। असिद्धमुपसर्गात् षत्वम्। तस्यासिद्धत्वान्नियमो न भविष्यति। इदं तर्हि प्रयोजनम्। सनि योऽभ्यासस्तस्माद्या प्राप्तिस्तस्या नियमो यथा स्यात्। यङि योऽभ्यासस्तस्माद्या प्राप्तिस्तत्र नियमो मा भूत्। सोषुप्यतेः सन्। सोषुपिषते। अथ वा अभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्याद् धातोर्या प्राप्तिस्तस्या नियमो मा भूत्। अधीषिषति। ननु च षणीत्युच्यते। षणीति नैषा परसप्तमी शक्या विज्ञातुम्। सन्यङन्तं हि द्विरुच्यते तस्मादेषा सत्सप्तमी षणि सतीति सत्सप्तमी चेदप्राप्नोति॥

---

लिट्। छान्दसत्वाद्व्यत्ययेन थास्। थासः से तस्य षत्वे अयादेशे यलोपे च नियमाभावादभ्यासात्परस्य धातुसकारस्य षत्वं भवत्येव। अभिषिषिक्षतीति। स्थादिष्वभ्यासेनेति वर्तमान उपसर्गात् सुनोतीति षत्वम्। असिद्धमिति। प्रकरणे प्रकरणमसिद्धं न तु योगे योग इत्येतन्नाश्रितम्। सनि योऽभ्यास इति। यथात एकहल्मध्य इत्यत्र लिटा आदेशो विशेष्यते तथेह सनाभ्यासः सनि यो ऽभ्यासस्तस्मात् स्तौतिण्योरेवेति। तेन यङि योऽभ्यासस्तस्माद्धात्वन्तरस्यापि षणि षत्वं भवति। सोषुपिषत इति। अत्र तु यक्तं वस्तुमन्तरङ्गं षत्वं बहिरङ्गो नियमस्ततोऽसिद्धं बहिरङ्गमन्तरङ्ग इति सिद्धं षत्वम्। अथ वा सनः षत्वं बहिरङ्गत्वादसिद्धम्। यङ्निमित्तादभ्यासाद्धातुसकारस्य षत्वे कर्तव्ये ऽविनते च नियमाभावो यथा सुषुप्सतीति। अधी षिषतीति। इणो बोधनार्थत्वाद् गम्यादेशाभावः। अजादेर्द्वितीयस्येति सशब्दस्य द्विर्वचनम्। सन्यत इतीत्वम्। धात्वाश्रयमभ्यासस्य षत्वमभ्यासाश्रये प्रत्ययस्य षत्वे तत्र नियमाभावात्प्रवर्तते। ननु च षणि इति। षणीति परसप्तमी ततश्च षण्परतः स्तौतिण्योरेव षत्वमिति नियमः क्रियमाणः तुल्यजातीयस्य षण् परस्य सिसिक्षतीत्यादौ षत्वं व्यावर्तयत्यधीषिषतीत्यादौ तु सन एव द्विर्वचनविधानात् षण् परत्वाभावात् तस्य नियमो न प्रवर्तिष्यत इति नार्थो ऽभ्यासग्रहणेनेत्यर्थः। सन्यङन्तमिति। समुदाय एव सन्यङन्तोवयवद्वारेण द्विर्वचनभागित्यर्थः। ते ... सत्सप्तमीति। तुल्यजातीयस्यापि नियमेन निवृत्तिः क्रियमाणा सन्नन्तसमुदायावयवत्वे-

स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ६४ ॥ किमर्थमिदमुच्यते स्थादिष्वभ्यासवचनं नियमार्थम् । नियमार्थोऽयमारम्भः । स्थादिष्वेवाभ्यासस्य यथा स्यात्। इह मा भूत्। अभिसुसूषति। अथ किमर्थमभ्यासेन चेत्युच्यते । तद्व्यवाये चाषोपदेशार्थम्। तद्व्यवाये अभ्यासव्यवाये चाषोपदेशस्यापि यथा स्यात्। अभिषिषेणयिषति। अवर्णान्ताभ्यासार्थं षणिप्रतिषेधार्थं च। अवर्णान्ताभ्यासार्थं तावत्। अभितष्ठौ। षणि प्रतिषेधार्थम्। अभिषिषिक्षति ॥

उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ॥ ६५ ॥ उपसर्गात् षत्वे निस उपसंख्यानमनिणन्तत्वात् *। उपसर्गात् षत्वे निस उपसंख्यानं कर्तव्यम्। निष्षुणोति। निष्षिञ्चति। किं पुनः कारणं न सिध्यति। अनिणन्तत्वात्। इणन्तादुपसर्गात् षत्वमुच्यते न च निसिणन्तः। न वा वर्णाश्रयत्वात् षत्वस्य तद्विशेषक उपसर्गो धातुश्च *। न वा वक्तव्यम्। किं कारणम्। वर्णाश्रयत्वात् षत्वस्य। वर्णाश्रयं षत्वम्। तद्विशेषक उपसर्गो धातुश्च। नैवं विज्ञायते इणन्तादुपसर्गादिति। कथं तर्हि। इण उत्तरस्य सकारस्य स चेदिणुपसर्गस्य। स चेत्सकारः सुनोत्यादीनामिति। तत्र शर्व्यवाये इत्यत्र सिद्धम्। यद्येवं धातूपसर्गयोरभिसं-

---

न धर्मेण तुल्यजातीयस्याधीषिषतीत्यादावपि स्यादित्यभ्यासग्रहणम्। यदि च सन् प्रदेशेषु परसप्तमी स्यात्तदा सन्यत इतोत्वमधीषिषतीत्यत्र न स्यात्समुदायस्य सन्रूपत्वात् पौर्वापर्याभावात् ॥

स्थादिष्वभ्यासेन चाभ्यासस्य। अभिसुसूषतीति। षू प्रेरणे सन् सनिग्रहगुहोश्चेतीट्प्रतिषेधः। अत्र धातुसकारस्य स्तौतिण्योरिति नियमात् षत्वाभावः अभ्याससकारस्य त्वस्मान्नियमात् । अभिषिषेणयिषतीति। अव्युत्पन्नः सेनाशब्दः। अथ वा सहेनेन सेना सहस्य सः संज्ञायामिति सादेशः। यदा तु कृवृजॄषीति सिनोतेर्नप्रत्ययेन सेनाशब्दो व्युत्पाद्यते तदाऽस्त्येव षोपदेशत्वम् ॥

उपसर्गात्। अनिणन्तत्वादिति। इण्ग्रहणेन प्रकृतेनोपसर्गो विशेष्यत इति तदन्तविधिनेणन्तादुपसर्गात् षत्वेन भाव्यम्। न वेति। उपसर्गेण इण् विशेष्यत इति तदन्तविध्यभावः। शर्व्यवायश्चाश्रित इति सिद्धं षत्वम्। वर्णाश्रयत्वादिति। वर्णो इवर्णसकारावाश्रयौ यस्य तद्वर्णाश्रयम्। यद्येवमिति। यद्युपसर्गेणेण् विशेष्यते न तु सुनोत्यादयः

सम्बन्धोऽकृतो भवति । तत्र को दोषः । इहापि प्राप्नोति विगताः सेचकाः अस्मात् ग्रामात् विसेचको ग्रामः । धातूपसर्गयोश्चाभिसंबन्धः कृतः । कथम् । सुनोत्यादिभिरत्र उपसर्गं विशेषयिष्यामः । सुनोत्यादीनां य उपसर्गस्तस्य उपसर्गस्य य इणिति । सुनोत्यादीनां षत्वे ण्यन्तस्योपसंख्यानमधिकत्वात् * । सुनोत्यादीनां षत्वे ण्यन्तस्योपसंख्यानं कर्तव्यम् । अभिषावयति । किं पुनः कारणं न सिध्यति । अधिकत्वात् । व्यतिरिक्तः सुनोत्यादिरिति कृत्वा उपसर्गात्सुनोत्यादीनामिति षत्वं न प्राप्नोति । न वावयवस्यानन्यत्वात् * । न वा वक्तव्यम् । किं कारणम् । अवयवस्यानन्यत्वात् । अवयवोऽत्र अनन्यः । नामधातोस्तु प्रतिषेधः * । नामधातोस्तु प्रतिषेधो वक्तव्यः । अभिसावकमिच्छति अभिसावकीयति । परिसावकमिच्छति परिसावकीयति । न वानुपसर्गत्वात् * । नवा वक्तव्यम् । किं कारणम् । अनुपसर्गत्वात् । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः । न चात्र सुनोतिं प्रतिक्रियायोगः । किं तर्हि । सावकीयतिं प्रति । इहापि तर्हि न प्राप्नोति । अभिषावयति । अत्रापि न सुनोतिं प्रति क्रियायोगः किं तर्हि सावयतिं प्रति । सुनोतिं प्रत्यत्र क्रियायोगः कथम् । नासावेवं

---

स्तदातिप्रसङ्गः । सुनोत्यादिभिरिति । सुनोत्यादिभिः सकारो न विशेष्यते । अपि तूपसर्गः । सुनोत्याद्युपसर्गस्थाच्चेणः परः सकारः सामर्थ्यात् सुनोत्याद्यवयव एव भवति । उपसर्गस्थस्य तु सकारस्यापदान्तस्येत्यधिकारात् षत्वस्याप्रवर्तनम् । ननु चोपसर्गादिति पञ्चमीनिर्देशात् कथमिण् विशेष्यते । तात्स्थ्यात्ताच्छब्द्यं भविष्यतीत्यदोषः ॥ सुनोत्यादीनां च उपसर्गस्तत्स्थादिणः परस्य सकारस्य षत्वे विज्ञायमाने न कश्चिद्दोषः । सुनोत्यादीनां षत्व इति । यथा विसेचक इत्यत्र गमेरुपसर्गो विशब्दो न सिचेरिति षत्वं न भवत्येवं ण्यन्तस्याभिषावयतीत्यादावभ्यादिरुपसर्ग इति षत्वाप्रसङ्गः हेतुमिति चेत्यत्र प्रत्ययार्थविशेषणपक्षेऽर्थाधिक्यादधिकत्वमुच्यते । न वेति । ण्यन्तस्य योऽवयवो णिच् प्रकृतिस्तस्यानन्यत्वात्तदपेक्षत्वादुपसर्गत्वस्य सिद्धं षत्वम् । नामधातोरिति । तत्रापि स एव सुनोत्यादिरिति षत्वप्रसङ्गः । न वेति । अभिः क्यजर्थस्येच्छाया विशेषणत्वात्तदुपसर्गो न सुनोतेः सुनोत्युपसर्गत्वेऽत्वभिषावकमिच्छति अभिषावकीयतीति भवत्येव षत्वम् । नासावेवमिति । यदा ण्यर्थस्याभिर्विशेषणत्वात्तदुपसर्गस्तदा नास्ति षत्वं यदा तूपसर्गविशिष्टायां क्रियायां प्रयोज्यो नियुज्यते तदा प्रतिबन्धकाभावात् षत्वं

प्रेष्यते । सुनु अभीति । किंतर्हि । उपसर्गविशिष्टामसौ क्रियां प्रेष्यति अभिषुणिवति ॥

स्तम्भेः ॥ ६७ ॥ अप्रतेरिति वर्तते उताहो निवृत्तम् । निवृत्तमित्याह । कथं ज्ञायते । योगविभागकरणसामर्थ्यात् । इतरथा हि सदिस्तन्भ्योरप्रतेरित्येव ब्रूयात् । अस्त्यन्यद्योगविभागकरणे प्रयोजनम् । किम् । अवाच्चालम्बनाविदूर्ययोरिति वक्ष्यति तत्स्तन्भेरेव यथा स्यात्सदेर्मा भूत् । नैतदस्ति प्रयोजनम् । एकयोगेऽपि सति यस्यालम्बनाविदूर्ये स्तःतस्य भविष्यतिकस्य । चालम्बनाविदूर्ये । स्तन्भेरेव ॥

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ७२ ॥ अथ यः प्राणी अप्राणी च कथं तत्र भवितव्यमनुष्यन्देते मत्स्योदके इति आहो स्विदनुस्यन्देते मत्स्योदके इति । यदि तावदप्राणी विधिनाश्रीयते । अस्त्यत्राप्राणीति कृत्वा भवितव्यं षत्वेन । अथ प्राणिप्रतिषेधेनाश्रीयते । अस्त्यत्र प्राणीति कृत्वा भवितव्यं प्रतिषेधेन । किं पुनरत्रार्थ सतत्त्व देवा एतज् ज्ञातुमर्हन्ति ॥

परेश्च ॥ ७४ ॥ अथानिष्ठायामिति वर्तते । उताहो निवृत्तम् । निवृत्तमित्याह । कथं ज्ञायते । योगविभागकरणसामर्थ्यात् । इतरथा हि विपरिभ्यां च स्कन्देरनिष्ठायामित्येव ब्रूयात् ॥

इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ ७८ ॥ विभाषेटः ॥ ७९ ॥ इण्ग्रहणं किमर्थम् । इण्ग्रहणं ढत्वे कवर्गनिवृत्त्यर्थम् । इण्ग्रहणं क्रियते कवर्गात् ढत्वं मा भूदिति । यक्षीध्वम् । पक्षीध्वम् । किं पुनरिदमिण्ग्रहणं प्रत्ययविशेषणम् । इणउत्तरेषां षीध्वंलुङ्लिटां यो धकार इति । आहो स्विद्धकारविशेषणम् । इण उत्तरस्य धकारस्य

---

प्रवर्तत एवेत्यर्थः । सुनु अभीति । नायं लौकिकप्रयोगः केवलस्योपसर्गस्यप्रयोगाभावात् किन्तर्हि सुनोतिसंबन्धाभावप्रदर्शनायकल्पितः प्रयोजकव्यापारेणाभेः स बन्धो न सुनोतिनेति अनेन प्रतिपाद्यते ॥

अनुवि । देवा इति । पण्डिताः पर्युदासं मन्यन्ते संभवत्येकवाक्यत्वे वाक्यभेदाश्रयणस्यायुक्तत्वात्प्रसज्यप्रतिषेधे हि वाक्यभेदोऽवश्यं भावी ॥

इणः षी । इण्ग्रहणमिति । इण्कोरित्यत इण्ग्रहणमनुवर्तत एवेति प्रश्नः । कवर्गनिवृत्त्यर्थमिति । पूर्वयोगेषु द्वयोरनुवर्तनात् केवलस्येण इहानुवृत्तिर्दुर्लभा । किं पुनरि-

स चेत् षीध्वंलुङ्लिटांधकार इति । कश्चात्र विशेषः । तत्र प्रत्यय-परत्वे इटो लिटि ढत्वं परादित्वात् *। तत्र प्रत्ययपरत्व इटो लिटि ढत्वं न प्राप्नोति । लुलुविढ्वे । लुलुविध्वे इति । किं कारणम् । परादित्वात् । इट् परादिः । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् । अलविढ्वम् । अलविध्वम् । अस्तु तर्हि धकारविशेषणम् । धकारपरत्वे षीध्वम्यनन्तरत्वादिटो विभाषाभावः *। धकारपरत्वे षीध्वमि अनन्तरत्वादिटो विभाषा न प्राप्नोति । लविषीध्वम् । लविषीढ्वम् । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् । लुलुविध्वे लुलुविढ्वे इति । इण्ग्रहणस्य चाविशेषणत्वात् ष्यादिमात्रे ढत्वप्रसङ्गः * । इण्ग्रहणस्य चाविशेषणत्वात् ष्यादिमात्रे ढत्वं प्राप्नोति । पचीध्वमिति । नैष दोषः । अङ्गादिति वक्ष्यामि । अङ्गग्रहणाच्च दोषः । इह न प्राप्नोति । उपदिदीयिध्वेउपदिदीयिढ्वे इति । यो ह्यत्र अङ्गान्त्य इण् न तस्मादुत्तर इट् । यस्माच्चोत्तर इट् नासावङ्गान्त्य इणिति । यथेच्छसि तथास्तु । अस्तु तावत्प्रत्यय-

---

ति । वार्तिकानुसारेणेड्ग्रहणमिति पाठो युक्तः । इण्ग्रहणमिति तु भाष्ये प्रायेण पाठः। किं षीध्वमादयो विशेषणेन प्राक् संबध्यन्ते पश्चात्प्रधानेन धकारेणाथधकार एव विशेषणद्वयेन संबध्यतइति प्रश्नः । प्रत्ययपरत्वे इति । इटः परेषां षीध्वंलुङ्लिटां धकारस्येति विज्ञायमान इटो लिड्भक्तत्वात्पौर्वापर्यायोगाद्विकल्पाप्रसिद्धिः लिड्ग्रहणं चोपलक्षणं षीध्वमोऽपि इटा पौर्वापर्यायोगात् । वचनादिति । लिड्ग्रहणानुवृत्तिसामर्थ्यादित्यर्थः । अस्तिवचन इति । समुदायानुवृत्तौ क्वचिदेकदेशे प्रवृत्तं कार्यं समुदाये प्रवृत्तं भवतीत्यर्थः । धकारपरत्वे इति । इटः परस्य धकारस्येति व्याख्याने षीशब्देन व्यवधानात्पाक्षिकढत्वाप्रसङ्गः । वचनादिति । षीध्वमोऽनुवृत्तौ येन नाव्यवधानमाश्रीयतइत्यर्थः । अस्ति वचने प्रयोजनं किं लुलुविढ्वे लुलुविध्वे इत्यस्यानन्तरमिण्ग्रहणस्येति युक्तः पाठः । क्वचित्तु नैष दोषः इण उत्तरस्येत्यादिपठ्यते तदयुक्तम् । ग्रन्थसंगत्यभावात् ? इण्ग्रहणेन यदा धकारो विशेष्यते न तु प्रत्ययस्तदाषीध्वमो धकार इणः परो न भवति षीशब्देन व्यवधानादीकारेण षीशब्दावयवेन व्यभिचाराभावाद् धकारस्य विशेषणयोगः । अङ्गादिति वक्ष्यामीति। इणन्तादङ्गादुत्तरस्य धकारस्य षीध्वमोऽवयवस्य ढत्वं भवतीत्यर्थः । तत्र येन नाव्यवधानमिति च्योषीढ्वमित्यादौ ढत्वं भवति पचीध्वमित्यादौत्वङ्गस्यानिणन्तत्वाद्ढत्वाभावः । उपदिदीयिढ्व इति । इटः परादित्वादिण-

विशेषणम् । ननु चोक्तं तत्प्रत्ययपरत्वे इटो लिटि ढत्वं परादित्वात् । लुलुविध्वे । लुलुविढ्वे इति । वचनाद्भविष्यति । ननु चोक्तमस्ति वचने प्रयोजनं किमलविढ्वम् । अलविध्वमिति । यदेतस्मिन् योगे लिङ्ग्रहणं यदनवकाशं तस्यानवकाशत्वाद्वचनाद्भविष्यति । अथ वा पुनरस्तु धकारविशेषणमिति । ननु चोक्तं धकारविशेषणत्वे षीध्व-म्यनन्तरत्वादिटो विभाषाभावः लविषीध्वं लविषीढ्वमिति । वचनाद्भविष्यति । ननु चोक्तमस्ति वचने प्रयोजनं किं लुलुविध्वे लुलुविढ्वे इति । यदेतस्मिन् योगे षीध्वंग्रहणं तदनवकाशं तस्यानवकाशत्वाद्वचनाद्भविष्यति । यदप्युच्यते इण्ग्रहणस्य चाविशेषणत्वात् ष्यादिमात्रे ढत्वप्रसङ्ग इति । अङ्गादिति वक्ष्यामि । ननु चोक्तमङ्गग्रहणाच्च दोष इति । पूर्वस्मिन् योगे यदङ्गग्रहणं तदुत्तरत्र निवृत्तम् । अथ वा पूर्वस्मिन् योगे इण्ग्रहणं प्रत्ययविशेषणमुत्तरत्र धकारविशेषणम् ।

अग्नेः स्तुत्स्तोमसोमाः ॥ ८२ ॥ अग्नेर्दीर्घात्सोमस्य * । अग्नेर्दीर्घात्सोमस्येति वक्तव्यम् । अग्नीषोमौ इतरथा ह्यनिष्टप्रसङ्गः * ॥ इतरथा ह्यनिष्टं प्रसज्येत । अग्निसोमौ माणवकाविति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । गौणमुख्ययोर्मुख्ये संप्रतिपत्तिः । तद्यथा गौरनुबन्ध्योऽजोऽग्नीषोमीय इति न वाहीकोऽनुबध्यते । कथं तर्हि वाहीके वृद्धात्वे भवतः । गौस्तिष्ठति गामानयेति । अर्थाश्रय एतदेवं भवति ।

---

मादङ्गात्परं इण् न भवति युटा व्यवधानात् । यदेतस्मिन्निति । सर्वेषामवयवानामनुवर्तनसामर्थ्यात्कार्ययोग इति भावः । पूर्वस्मिन्निति । अङ्गग्रहणाननुवृत्तौ युट एवेण उत्तर इडिति ढत्वविकल्पः सिध्यति । अथ वेति । इणः परो यो धकार इटश्च तस्य षीध्वंलुङ्लिटां संबन्धिनो विभाषा मूर्धन्य इत्यर्थः । तत्र येन नाव्यवधानमिति षीध्वमि षीशब्देन व्यवधानमाश्रीयते उपदिदीयिढ्व इत्यत्र यकारादेवेणः परो धकार इति सिद्धो ढत्वविकल्पः ॥

अग्नेः स्तुत्स्तोमसोमाः । अग्नेर्दीर्घादिति । देवताद्वन्द्वे षत्वं भवतीत्यर्थः । गौणमुख्ययोरिति । लौकिक एवायं न्यायः शास्त्रे आश्रीयते स्वं रूपं शब्दस्येति रूपग्रहणाद्वद्रूपमाश्रीयते सचार्थो मुख्य एव गृह्यते न तु गौणः तत्र प्रसिद्धाप्रसिद्धिभ्या मुख्यगौणव्यवस्थेति माणवके संज्ञात्वेन विनियुक्तावग्निसोमशब्दौ गौणार्थाविति षत्वाभा-

यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति। शब्दाश्रये च वृद्धात्वे॥

मातुः पितुर्भ्यामन्यतरस्याम्॥ ८५॥ सान्ताभ्यां चेति वक्तव्यम् *। इहापि यथा स्यात्। मातुःष्वसा। मातुस्स्वसा। पितुःष्वसा। पितुस्स्वसा। मातुः पितुरिति सान्तग्रहणानर्थक्यमेकदेशविकृतस्यानन्यत्वात्। मातुःपितुरिति सान्तग्रहणमनर्थकम्। किं कारणम्। एकदेशविकृतस्यानन्यत्वात्। एकदेशविकृतमनन्यवद्भवतीति सान्तस्यापि भविष्यति।

उपसर्गप्रादुर्भ्यामस्तिर्यच्परः॥ ८७॥ अस्तिग्रहणं किमर्थम्। इह मा भूत्। अनुसृतमिति। विसृतमिति। नैतदस्ति प्रयोजनम्। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः। न चैतं सकारं प्रति क्रियायोगः। इहापि तर्हि न प्राप्नोति अभिषन्ति। विषन्तीति। न ह्यस्तिः क्रियावचनः। कः पुनराह नास्तिः क्रियावचन इति। क्रियावचनोऽस्तिः। अतश्च क्रियावचनः। व्यत्यनुषते। कर्तरि कर्मव्यतिहार इत्यनेनात्मनेपदं भवति। कर्मव्यतिहारश्च कः। क्रियाव्यतिहारः। प्रादुःशब्दात्तर्हि मा भूत् प्रादुःशब्दस्य नियतविषयः कृभ्वस्तियोग एव वर्तते। उपसर्गात्तर्हि स्यतेर्मा भूदिति। इष्यते

---

णः। शब्दाश्रये चेति। प्रातिपदिकस्य वृद्धात्वे प्रातिपदिकन्तु न लौकिकेनार्थेनार्थवत्किं त्वन्वयव्यतिरेकाभ्यां कल्पिताभ्यां कल्पितेन तस्यां चावस्थायां लौकिकार्थत्वाभावादु गौणमुख्याभावाद्रूपमात्राश्रयं कार्यं प्रवर्तते तस्मिन् प्रवृत्ते मुख्येऽर्थे गौणे वार्थे प्रयोगः। अथ वा शब्दो न कदाचित् स्वार्थपरित्यागेनार्थान्तरे प्रवर्ततेऽर्थ स्वर्थान्तरे समारोपितो यदा शब्दप्रवृत्तिनिमित्तं भवति तदा गौणव्यवहारस्तत्र प्रातिपदिकं स्वार्थे एव वर्तमानं वृद्धात्वे प्रतिपद्यते पश्चात्तु पदार्थान्तरारोपितस्वार्थस्य गौणत्वमिति पदाश्रयेष्वेव कार्येषु गौणमुख्यव्यवस्थाश्रयणम्॥

मातुः। सान्ताभ्यामिति। रेफान्तयोर्निर्देशान्न प्राप्नोति। एकदेशविकृतस्येति। स्वसृशब्दे परतो नास्ति रेफस्य श्रवणं वा शरीति पक्षे विसर्जनीयस्य विसर्जनीयविधानात् पक्षे विसर्जनीयस्य स इति सकारविधानात्तस्माद्रेफनिर्देशस्तद्विकारप्रतिपत्त्यर्थः॥

उपस। अस्तिग्रहणमिति। अस्तिसकार एवाकारे लुप्ते क्रियावाचित्वादुपसर्गप्रादुर्भ्यां परः संभवति नान्य इति प्रश्नः। नह्यस्तिरिति। परिस्पन्दनरूपस्यैवार्थस्य क्रियात्वादिति भावः। क्रियावचन इति। न परिस्पन्द एवैकः क्रियेति भावः। कोऽर्थस्यभाव-

उपसर्गात्स्वतः षत्वम् । आतश्चेष्यते । एवं ह्याह । उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जामिति । प्रादुःशब्दात्तर्हि मा भूत् । प्रादुः शब्दस्य नियतविषयः कृभ्वस्तियोग एव वर्तते । इदं तर्हि प्रयोजनमिह मा भूत्।अनुसूतेरप्रत्ययः । अनुसूः । अनुस्वः अपत्यमानुसेयः ॥

सुविनिर्दुर्भ्यः सुपिसूतिसमाः॥८८॥ किमर्थं स्वपेः सूपिभूतस्य ग्रहणं क्रियते । सुपेः षत्वं स्वपेर्मा भूत् ॥ सुपेः षत्वमुच्यते स्वपेर्मा भूदिति । विस्वप्नो विस्वप्नगिति । विसुष्वापेति केन न ॥ विसुष्वापेत्यत्र कस्मान्न भवति । हलादिशेषान्न सुपिः॥ हलादिशेषे कृते नैष सुपिर्भवति । इदमिह संप्रधार्यं हलादिशेषः क्रियतां संप्रसारणमिति। किमत्र कर्तव्यम् । परत्वाद्धलादिः शेषः । इष्टं पूर्वं प्रसारणम् ॥ इष्यते हलादिः शेषात्पूर्वं संप्रसारणम् । आतश्चेष्यते। एवं ह्याह । अभ्याससंप्रसारणं हलादिः शेषाद्विप्रतिषेधेनेति । एवं तर्हि स्थादिष्वभ्यासेन चाभ्यासस्येत्येतस्मान्नियमान्न भविष्यति। स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः ॥ प्राक्सितसंशब्दनात्स नियमः ।

---

कानां कर्मस्थक्रियाणामित्यत्र तु भावक्रिययोर्भेदेनोपादानात्परिस्पन्दलक्षणविशिष्टक्रियावृत्तिः क्रियाशब्दो यत्क्रियायुक्ता इत्यादौ तु क्रियामात्रवृत्तिरित्यविरोधः । व्यत्यनुषत इति । व्यत्यनुभवन्त इत्यर्थः । प्रादुःशब्दस्येति । केषां चिच्छब्दानां नियतविषयत्वदर्शनात् । अनुसूतेरिति । अनुसूत इत्यनुसूः । सत्सूद्विषेति क्विप् । चतुष्पाद्भ्यो ढञिति ढञ् ढे लोपोऽकद्र्वा इत्युकारलोपे कृते सकारमात्रं क्रियावाचीति सत्वप्रसङ्गः ॥

सुवि । विस्वप्नगिति । स्वपितृषोर्नजिङिति नजिङ् प्रत्ययः । ताच्छीलिकेष्वपि क्वचिदस्ति क्रियाणामुपसर्गयोगः आगामुकमित्यादौ । साधुकारिणि वा प्रत्ययविधानात् विसुष्वापेति । लिट्यभ्यासस्योभयेषामिति संप्रसारणे कृते अकृत एव हलादिशेषे धातूपसर्गाश्रयस्य कार्यस्यान्तरङ्गत्वात् षत्वप्रसङ्गः कृते वा हलादिः शेषे एकदेशविकृतस्यानन्यत्वात् हलादिशेषादिति ।संप्रसारणात् प्रागेव परत्वाद्धलादिशेषः।इष्टं पूर्वमिति। विव्याधेत्यादिसिद्धये। स्थादिष्वेति ।स्थादीनामिवाभ्याससकारस्य षत्वं न धात्वन्तरस्येति नियमादत्र षत्वाभावः । स्थादीनामिति । स्थादीनां संबन्धी नियमो नात्र प्रवर्तते । यस्मात्स्थादिसूत्रे प्राक्सितादिति वर्तते तेन प्राक्सिताद्ये धातवः तेषां स्थादिष्वेवाभ्यासस्य षत्वमित्येवं नियमेन सुनोतिसुवतिस्यतय एव निवर्त्यन्ते सुपिस्तु सितादुत्तर इति न निवर्त्य.

उत्तरस्य सुपिः पठ्यते । एवं तर्ह्यर्थवद्ग्रहणेनानर्थकस्येत्येवमेतस्य न भविष्यति । अनर्थके विषुषुपुः ॥ यद्यर्थवतो ग्रहणं विषुषुपुरिति न सिध्यति । नैष दोषः । कथम् । सुपिभूतो द्विरुच्यते ॥ सुपिभूतस्य द्विर्वचनम् । सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न॥ हलादिःशेषान्न सुपिरिष्टं पूर्वं प्रसारणम् ॥ १ ॥ स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः ॥ अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते ॥ २॥

कपिष्ठलो गोत्रे ॥ ९१ ॥ कपिष्ठलो गोत्रप्रकृतौ * । कपिष्ठलो गोत्रप्रकृताविति वक्तव्यम् । गोत्र इत्युच्यमाने इहैव स्यात् । कापिष्ठलिः । इह न स्यात् । कपिष्ठलः । कापिष्ठलायनः । तत्तर्हि वक्तव्यम् । नवक्तव्यम् । नैवं विज्ञायते कपिष्ठल इति गोत्रे निपात्यत इति। कथं तर्हि गोत्रे यः कपिष्ठलशब्दस्तस्य षत्वं निपात्यते यत्र वा तत्र वेति ॥

अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यःस्थः ॥ ९७ ॥ स्थ इति किमिदं धातुग्रहणम् । आहो स्विद्रूपग्रहणम् । किं चातः । यदि धातुग्रहणम् । गोस्थानमित्यत्र प्राप्नोति । अथ रूपग्रहणम् । सव्येष्ठाः । परमेष्ठी । सव्येष्ठा सारथिरि-

---

ते । अर्थवद्ग्रहण इति । स्थाने द्विर्वचने समुदाय एवार्थवानवयवयोस्त्वानर्थक्यं द्विःप्रयोगे ऽप्यर्थस्यानावर्त्तनाद् द्वाभ्यामर्थः प्रत्याय्यत इत्येकस्यानर्थक्यम् । सुपिभूत इति। परत्वात्संप्रसारणे कृते सुपेर्द्विर्वचनम् । तत्र स्थानिवत्त्वात्सुपग्रहणे न समुदायस्य ग्रहणात्सिद्धं षत्वम् । द्विष्प्रयोगे ऽपि स एव सुपिर्द्विरुक्त इति समुदायाश्रयमेव षत्वम् । विसुष्वापेत्यत्र तु स्वपेर्द्विर्वचनं तत्रस्थानिवत्वात् सुपेरिति षत्वाभावः । केचित्तु सुपिभूतो द्विरुच्यत इति पठन्ति।पूर्वत्रासिद्धीयमद्विर्वचन इति कृतषत्वस्य द्विर्वचनमिति तेषां भावः ॥

कपिष्ठलो । कपिष्ठल इति । गोत्रमिह पारिभाषिकं पौत्रप्रभृति गृह्यते तेन यत्र गोत्राभिधानं तत्र कपेः परस्य स्थलसकारस्य षत्वेन भाव्यं न तु परमप्रकृतौ नापि यूनीति वार्त्तिकारम्भः । यस्माद् गोत्रं प्रक्रियते प्रवर्तते गोत्रस्य वा या प्रकृतिः कारणं तदभिधाने षत्वं तेन सर्वमिष्टं सिध्यति । नैवं विज्ञायत इति । न गोत्रं षत्वस्य विषयत्वेन निर्दिष्टं किं तर्हि दर्शनस्य गोत्रे यो दृष्टः कपिष्ठलशब्दः स साधुर्भवतीति । तेन कपिस्थानवाचिनः षत्वं न भवतीत्युक्तं भवति । अथ वा प्रवराध्यायपठितं गोत्रं गृह्यत इति षत्वविषयत्वेनापि गोत्रस्याश्रयणेन दोषः ।

अम्बा । किमिदमिति । यदि स्थशब्दः प्रथमया निर्दिश्यते स्थशब्दः सकारस्य मूर्ध-

त्यच्च न प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावद्धातुग्रहणम् । कथं गोस्थानमिति । सवनादिषु पाठः करिष्यते । अथ वा पुनरस्तु रूपग्रहणम् । कथं सव्येष्ठाः परमेष्ठी सव्येष्ठा सारथिरिति । स्थः स्थास्थिन् स्थॄणामिति वक्तव्यम् * ॥

सुषामादिषु च ॥ ९८ ॥ अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः ॥

ह्रस्वात्तादौ तद्धिते ॥ १०१ ॥ ह्रस्वात्तादौ तिङ्प्रतिषेधः * । ह्रस्वात्तादौ तिङः प्रतिषेधो वक्तव्यः। भिन्द्युस्तराम्। छिन्द्युस्तरामिति॥

स्तुतस्तोमयोश्छन्दसि ॥ १०५ ॥ स्तुतस्तोमयोः छन्दस्यनर्थकं वचनं पूर्वपदादिति सिद्धत्वात् * । स्तुतस्तोमयोः छन्दसि वचनमनर्थकम् । किं कारणम् । पूर्वपदादिति सिद्धत्वात्। पूर्वपदादित्येव सिद्धम् ॥

सनोतेरनः ॥ १०८ ॥ सनोतेरन इति च । किम् । वचनमनर्थकमित्येव । किं कारणम् । पूर्वपदादित्येव सिद्धत्वात् । नियमार्थं तर्हीदं वक्तव्यम् । सनोतेरनकारस्यैव यथा स्यात् । इह मा भूत् । गोसनिमिति । सनोतेरन इति नियमार्थमिति चेत्सवनादिकृतत्वात्सिद्धम् * । सनोतेरन इति नियमार्थमिति चेत्सवनादिकृतत्वात्सिद्धम् । सवनादिषु पाठः करिष्यते । सन्नर्थं तु * । सन्नर्थं त्विदं

---

न्यं प्रतिपद्यत इति तदा रूपग्रहणम् । अथ स्थशब्दः षष्ठ्या निर्दिश्यते ततो धातुग्रहणमिति भावः । सवनादिष्विति । आदिशब्दस्य प्रकारार्थत्वाद् गोस्थान भूमिस्थानादयोऽनिष्यमाणषत्वाः सर्वे सवनादयः । स्थः स्थास्थिन्स्थॄणामिति । स्थाशब्दः क्विबन्तः इत्वे चकारप्रतिषेध इति वचनात् प्रत्ययलक्षणेनेत्वं न भवति । स्थिन्निति इन् प्रत्ययान्तः । स्थॄशब्दः ऋप्रत्ययान्तः ।

स्तुतस्तो । पूर्वपदादिति सिद्धत्वादिति । पूर्वं पदं पूर्वपदमिति सामान्येन व्याख्यायते न तु समासावयव एवेति वाक्येऽपि षत्वं प्रवर्तते । तदत्र स्तुतस्तोमग्रहणं प्रत्याख्यायते छन्दोग्रहणं तूत्तरार्थं वक्तव्यमेव ॥

सनोतेरनः । सिसनोरिति । एतस्मिंश्च प्रयोजने सति सामर्थ्याभावात् षस्तस्य नियमाभावात् सिषाणयिषतीति षत्वं न भाव्यमित्याहुः ॥

वक्तव्यम्। सिसनिषतीति। एतदपि नास्ति प्रयोजनम्। स्तौतिण्योरेव षण्यभ्यासादिति एतस्मान्नियमान्न भविष्यति। इदं तर्ह्यप्रयोजनं वक्तव्यम्। सिसानयिषतीति। कथं पुनरण्यन्तस्य प्रतिषेधे ण्यन्तः शक्यो विज्ञातुम्। सामर्थ्यादण्यन्तस्य प्रतिषेधवचने प्रयोजनं नास्तीति कृत्वा ण्यन्तो विज्ञास्यते। अथ वा अयमस्ति अण्यन्तः सिसनिषतेरप्रत्ययः सिसनीः॥

नरपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्॥ ११०॥ किमर्थं सवनादिषु अश्वसनिशब्दः पठ्यते। पूर्वपदादितिषत्वं प्राप्नोति तद्बाधनार्थम्। नैतदस्ति प्रयोजनम्। इणन्तादिति तत्रानुवर्तते। अनिणन्तस्यायं नैव प्राप्नोति नार्थः प्रतिषेधेन। एवं तर्हि सिद्धे सति यत्सवनादिषु अश्वसनिशब्दं पठति तज् ज्ञापयत्याचार्यः अनिणन्तादपि षत्वं भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। जलाषाहं माष इत्येव सिद्धं भवति। अथ वा एकदेशविकृतार्थोऽयमारम्भः अश्वषा इति॥

सिचो यङि॥ ११२॥ अथ उपसर्गादिति या प्राप्तिः भवितव्यं तस्याः प्रतिषेधेन। उताहो न। न भवितव्यम्। किं कारणम्। उपसर्गात् षत्वं प्रतिषेधविषये आरभ्यते तद्यथैव पदादिलक्षणं प्रतिषेधं बाधते एवं सिचो यङीत्येतमपि बाधेत। न बाधेत। किं कारणम्। येन नाप्राप्तिं तस्य बाधनं भवति। न चाप्राप्ते सात्पदादिलक्षणे प्रतिषेधे उपसर्गात् षत्वमारभ्यते। सिचो यङीत्येतस्मिन्पुनः प्राप्ते चाप्राप्ते च। अथ वा पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इत्येवमुपसर्गात् षत्वं पदादिलक्षणं प्रतिषेधं बाधिष्यते। सिचो यङी-

---

नरपर। माष इति। मानं मा मां सनोतीति जनसनेति विट् विड्वनोरित्यात्वम्। विभक्तौ ङसि परत आतोधातोरित्यालोपः। एकदेशविकृतार्थ इति। अश्वशब्दविषयमेव ज्ञापकमनिणन्तादप्यश्वशब्दात् षत्वं भवतीति माषोजलाषाहमित्यत्र तु सुषामादित्वात् षत्वसिद्धिः॥

सिचोयङि। तस्मादभिसेसिच्यत इति। ननु पूर्वत्रासिद्धमिति प्रतिषेधस्यासिद्धत्वादुपसर्गादिति षत्वं प्राप्नोति। उच्यते। प्रकरणे प्रकरणमसिद्धं न तु योगे योगो विधि-

त्येतन्न बाधिष्यते। तस्मादभिसेसिच्यत इति भवितव्यम्॥

सोढः॥११५॥ किमर्थं सहिः सोढभूतो गृह्यते। यत्रास्यैतद्रूपं तत्र यथा स्यात्। इह मा भूत्। परिषहत इति॥

स्तम्भुसिवुसहां चङि॥११६॥ स्तम्भुसिवुसहां चङ्युपसर्गात् *। स्तम्भुसिवुसहां चङ्युपसर्गादिति वक्तव्यम्। किं प्रयोजनम्। उपसर्गाद्या प्राप्तिस्तस्याः प्रतिषेधो यथा स्यादभ्यासाद्या प्राप्तिस्तस्याः प्रतिषेधो मा भूदिति। पर्यसीषहत्॥

सुनोतेः स्यसनोः॥११७॥ सनि किमुदाहरणम्। सुसूषति। नैतदस्ति प्रयोजनम् स्तौतिण्योरेव षण्यभ्यासादित्येतस्मान्नियमान्न भविष्यति। इदं तर्हि। अभिसुसूषते। एतदपि नास्ति प्रयोजनम्। स्थादिष्वभ्यासेन चेत्येतस्मान्नियमान्न भविष्यति। इदं तर्हि प्रयोजनम्। अभिसुसूषते रप्रत्ययः। अभिसुसूः। निसुसूः॥

सदेः परस्य लिटि॥११८॥ सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानम् *। सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानं कर्तव्यम्। परिषस्वजे॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये अष्टमाध्यायस्य तृतीयपादे द्वितीयमाह्निकम्॥

पादश्च समाप्तः॥

रषाभ्यां नो णः समानपदे॥१॥ रषाभ्यां णत्वे ऋकारग्रहणम् *। रषाभ्यां णत्वे ऋकारग्रहणं कर्तव्यम्। रषाभ्यां नो णः समानपदे ऋकाराच्चेति वक्तव्यम्। इहापि यथा स्यात्। मातॄणाम्। पितॄणामिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। योसावृकारे रेफस्तदा-

---

प्रतिषेधयोरेकं प्रकरणमिति सिद्धमिष्टम्। इत्युपाध्यायजैय्यटपुत्त्रकैय्यटकृते भाष्यप्रदीपे अष्टमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्॥

पादश्च तृतीयः समाप्तः॥

रषाभ्यां नो णः समानपदे। रषाभ्यामुच्यमानं णत्वं वर्णान्तरान्न प्राप्नोतीति मत्वाह ऋवर्णाभ्यामिति। योऽसावृकार इति। येषां दर्शनमर्द्धमात्राकालो रेफऋकारेऽस्तीति तन्मतेन केवलस्याप्रयोगादास्तीर्णादिषु वर्णान्तरोपाश्रयाद्रेफाण्णत्वं भवत्येवं मातॄणामि-

अयं णत्वं भविष्यति । न सिध्यति । किं कारणम् । न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते । एकादेशे नुडादिषु चोक्तम् *। किमुक्तम् । अग्रहणं चेन्नुड्विधिलादेशविनामेष्वृकारग्रहणमिति।तस्माद् गृह्यन्ते । एवमपि न सिध्यति । किं कारणम् । अनन्तरत्वात् । यत्तद्रेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति । अड्व्यवाये इत्येवं भविष्यति । न सिध्यति । किं कारणम् । वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते ये व्यपवृक्ता अपि वर्णा भवन्ति । यच्चात्र रेफात्परं भक्तेर्नतत्क्वचिदपि व्यपवृक्तं दृश्यते । एवं तर्हि योगविभागः करिष्यते । रषाभ्यां नोणः समानपदे । ततो व्यवाये । व्यवाये च रषाभ्यां नो णो भवतीति । तत अट्कुप्वाङ् नुम्भिरिति । इदमिदानीं किमर्थम् ।

---

त्यादावपि भविष्यति । येषामपि दर्शनं मात्राचतुर्भागोरेफ ऋकार इति तन्मतेऽपि रषाभ्यामिति रेफो गृह्यमाणो ऽण्त्वाद्भिन्नकालस्यापि ऋकारस्यस्य ग्राहक इति णत्वं सिध्यति। यत्तूच्यते रेफोष्मणां सवर्णा न सन्तीति तद्भिन्नास्यप्रयत्नवर्णान्तरापेक्षया। अथ वा रषाभ्यामिति रेफाकृतिः निर्दिश्यत इति ऋकारस्थादपि रेफाच्चत्वं सिध्यतीति भावः। नहि वर्णैकदेशा इति। नाव्यपवृक्तस्यावयवतद्विधिर्यथा द्रव्येष्वित्युक्तं संध्यक्षरवार्तिके तथा च मांसं न विक्रेतव्यमिति सत्यपि निषेधे गावो विक्रीयन्ते तत्र मांसबुद्धेरभावात्। यदप्युक्तम्। अण्त्वाद्रेफऋकारस्थं रेफं सावर्ण्याद् गृह्णातीति। तदयुक्तम्। नहि ऋकारस्थरेफस्य स्थानप्रयत्नवत्त्वं तस्मादसति सावर्ण्ये कुतो ग्राह्यत्वम्। यथा च नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात् पुरुषमृगराजाभ्यामेकाकृतियोगाभावः । एवं वर्णग्रहणे वर्णैकदेशयोरपीति भावः। नुडादिषु चोक्तमिति। अग्रहणपक्षे नुडादिषु ऋकारग्रहणं कर्तव्यं भवेदिति ग्रहणपक्ष आश्रीयते। इह समुदायस्य कार्येषु व्यापारे अवयवस्य स्वनिमित्ते कार्ये माभूद्व्यापारः यथा अत्र इन्द्र इत्यादावेकारोऽयादेशं प्रतिपद्यते न तु तदवयव इकारः सवर्णदीर्घत्वमिह तु मातॄणामिति समुदायस्य न क्व चिद्विधौ निषेधे वा व्यापार इत्यवयवः स्वाश्रयकार्यं प्रति कस्मान्निमित्तत्वं न प्रतिपद्यते भेदेन चोपलभ्यावाव्यपवृक्तस्येति न्यायो नास्ति । यत्तद्रेफादिति । रेफ एव भक्तिस्तस्या यत्परमित्यर्थः। ऋकारभागं च व्यवधायकमिच्छन्ति। नतत् क्वचिदिति। मात्राचतुर्थस्य पृथगभावात्। एतेरे वेति। येऽक्षरसमाम्नाये पठ्यन्ते ऽकारादयः ये च तैर्गृह्यन्ते आकारादयः सर्वे ते अक्षरसमाम्नायिकाः। अत्र च बह्वचोऽन्तोदात्ताट्ठञिति भवार्थे ठञ् प्रयोजनमित्यनेन वा। यदयमिति। इदं ज्ञा-

नियमार्थम् । एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैरिति । अथ वा आचार्यप्रवृत्तिर्ज्ञापयति भवति ऋकाराण्णत्वमिति । यदयं क्षुभ्नादिषु नृनमनशब्दं पठति । नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात् नार्नमनिरिति । यत्तर्हि तत्रैव तृप्नोतिशब्दं पठति । यच्चापि नृनमनशब्दं पठति । ननु चोक्तं वृद्ध्यर्थमेतत्स्यादिति । बहिरङ्गा वृद्धिः अन्तरङ्गं णत्वमसिद्धं बहिरङ्गमन्तरङ्गे । अथ वा उपरिष्टाद्योगविभागः करिष्यते । इदमस्ति छन्दस्यृदवग्रहादिति । ऋतः । ऋतउत्तरस्य नो णो भवति । ततः छन्दस्यवग्रहात् । ऋत इत्येव ॥

अट्कुप्वाङ्नुम्व्यवायेऽपि॥२॥अड्व्यवाये णत्वे ऽन्यव्यवाये प्रतिषेधः * । अड्व्यवाये णत्वे ऽन्यव्यवाये प्रतिषेधो वक्तव्यः । आदर्शेन । अक्षदर्शनेन । न वान्येन व्यवेतत्वात् * । न वा वक्तव्यम् । किं कारणम् । अन्येन व्यवेतत्वात् । अन्येनात्र व्यवायः । यद्यप्यन्येनात्र व्यवायः । अटापि तु अस्ति व्यवायः । तत्र अड्व्यवाय इति प्राप्नोति । अटैव व्यवाये भवति । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । अड्ग्रहणसामर्थ्यात् । यदि हि अटा चान्येन च व्यवाये स्यादड्ग्रहणमनर्थकं स्यात् । व्यवाये नो णो भवतीत्येव ब्रूयात् । अस्त्यन्यदड्ग्रहणस्य प्रयोजनम् । किम् । यो अनिर्दिष्टैरेव व्यवायः तत्र माभूत् । कृत्स्नं मृत्स्नेति । यद्येतावत्प्रयोजनं स्यात्तुशर्व्यवाये नेत्येव ब्रूयात् । तत्समुदाये णत्वाप्रसिद्धिर्यथान्यात्र * । त-

पकसृकारादपि नोणो भवतीत्यनुमापयति । अथ वा वर्णैकदेशोपीह रेफो गृह्यते । रेफाकृतिर्वा निर्दिश्यते भक्तिव्यवधानेपि वा णत्वं भवतीत्यनुमीयते ॥

अट्कुप्वा । अड्व्यवाये इति । एतत्सूत्रारम्भाद्रषाभ्यामित्यत्राडादिव्यवायविषये तस्मादित्युत्तरस्येति परिभाषानिर्दिष्टाङ्गविकलोपतिष्ठत इति यत्राडादिव्यवायोन्यव्यवायश्च तत्र णत्वप्रसङ्गः । न वेति । रषाभ्यामित्यत्र तस्मादिति परिभाषोपस्थानाद्व्यवाये णत्वप्रसङ्गादेतत्सूत्रमारभ्यमाणमडादिव्यवाये णत्वमनुजानाति नान्यव्यवाये तस्य निर्दिष्टग्रहणेन निवर्तितत्वादितिभावः । अड्ग्रहणसामर्थ्यादिति । सामर्थ्येनाप्यनन्तरोक्तमर्थं प्रतिपादयति । अड्व्यवायमन्तरेणान्येन केवलेन व्यवायासंभवाद् व्यवाये इत्येवाड्व्यवायस्याक्षिप्तत्वादड्ग्रहणमटैवव्यवाय इत्यवधारणार्थं विज्ञायत इत्यर्थः । अनिर्दिष्टैरिति । अडादिभ्यतिरिक्तैः । शर्व्यवायेनेति । अस्मादेव च निषेधादन्यव्यवाये

ट्समुदाये व्यवायसमुदाये णत्वस्याप्रसिद्धिः। अर्केण। अर्घेण। यथान्यत्रापि व्यवायसमुदाये कार्यं न भवति। क्वान्यत्र। नुम्विसर्जनीयशर्व्यवायेऽपि। निंस्व। निंस्स्वेति। किं पुनः कारणमन्यत्रापि व्यवायसमुदाये कार्यं न भवति। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति। तद्यथा। वृद्धिगुणसंज्ञे प्रत्येकं भवतः। ननु चायमप्यस्ति दृष्टान्तः समुदाये वाक्यपरिसमाप्तिरिति। तद्यथा गर्गाः शतं दण्ड्यन्तामिति अर्थिनश्च राजानो हिरण्येन भवन्ति। न च प्रत्येकं दण्डयन्ति। यद्येवमेकेन व्यवाये न प्राप्नोति। किरिणा। गिरिणेति। उभयथापि वाक्यपरिसमाप्तिर्दृश्यते। तद्यथा। गर्गैः सह न भोक्तव्यमिति, प्रत्येकं च न भुज्यते समुदितैश्च। कुव्यवाये हादेशेषु प्रतिषेधः *। कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः। किं प्रयोजनम्। प्रयोजनं वृत्रघ्नः सुघ्नः प्राघानीति। हन्तेरत्पूर्वस्येति अत्पूर्वग्रहणं न कर्तव्यं भवति। नुम्व्यवाये णत्वे ऽनुस्वाराभावे प्रतिषेधः। नुम्व्यवाये णत्वे ऽनुस्वाराभावे प्रतिषेधो वक्तव्यः। प्रेन्वनम्। प्रेन्वनीयम्। अनागमे च णत्वम् *। अनागमे च णत्वं वक्तव्यम्। तृम्फणम् तृम्फणीयम्। अनुस्वारव्यवाये वचनात्सिद्धम्*। अनुस्वारव्यवाये नो णो भवतीति वक्तव्यम्। तदनुस्वारग्रहणं कर्तव्यम्। न कर्तव्यम्। क्रियते न्यास एवानकारे ऽनुस्वारः परसवर्णीभूतो निर्दिश्यते। इहापि तर्हि प्राप्नोति। प्रेन्वनं प्रेन्वनीयम् अनुस्वारविशेषणं नुम्ग्रहणम्। नुमो योऽनुस्वार इति। इहापि तर्हि न प्राप्नोति। तृम्फणं तृम्फणीयम्। एवं तर्हि अयोगवाहानामविशेषेणोपदेशश्चोदितः तत्रानुस्वारे कृते अड्व्यवाये इत्येव सिद्धम्। यद्येवं नार्थो नुम्ग्रहणेन। अनुस्वारे कृते ऽड्व्यवाय इत्येव सिद्धम् *॥

---

णत्वमुपाश्यते। यद्येवमेकेनेति। द्वाभ्यामपि व्यवाये न प्राप्नोत्यर्केणेति। उभयथेति। व्यवायेऽस्वाद्यायाडादीनामुपादानादेकेन द्वाभ्यां बहुभिश्च यथासंभवं व्यवाये णत्वं भवति। वृत्रघ्न इति। प्रातिपदिकान्तेति णत्वप्रसङ्गः। सुघ्न इति। सुघोऽन्यत्रेऽपि चिति घञर्थे कविधानमिति कः। प्रेन्वनमिति। इजादेः सनुम इति णत्वप्रसङ्गः। नकारेऽनुस्वार इति। द्विनकारको निर्देश इति भावः। नुमो योऽनुस्वार इति। सौत्रत्वान्निर्देशस्य षष्ठ्यन्तस्य परनिपातः॥

पूर्वपदात्संज्ञायामगः॥ ३ ॥ पूर्वपदात्संज्ञायामुत्तरपदग्रहणम्*। पूर्वपदात्संज्ञायामुत्तरपदग्रहणं कर्तव्यम् । किं प्रयोजनम् । तद्धितपूर्वपदस्थाप्रतिषेधार्थम् । तद्धितस्थस्य पूर्वपदस्थस्य च प्रतिषेधो मा भूत् । खारपायणः । करणप्रियः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । पूर्वपदमुत्तरपदमिति संबन्धिशब्दावेतौ । सति पूर्वपदे उत्तरपदं भवति । सति चोत्तरपदे पूर्वपदं भवति । तत्र संबन्धादेतदवगन्तव्यम्। यत्प्रति पूर्वपदमित्येतद् भवति तत्स्थस्य नियम इति । किं च प्रत्येतद् भवति । उत्तरपदं प्रति । संज्ञायां नियमवचने ऽगप्रतिषेधान्नियमप्रतिषेधः * । संज्ञायां नियमवचने ऽगप्रतिषेधान्नियमस्यायं प्रतिषेधो विज्ञायते । अग इति । तत्र को दोषः । तत्र नित्यं णत्वप्रसङ्गः । तत्र पूर्वेण संज्ञायां चासंज्ञायां च नित्यं णत्वं प्राप्नोति । योगविभागात्सिद्धम् । योगविभागः करिष्यते । पूर्वपदात्संज्ञायाम् । ततः अगः । गान्तात्पूर्वपदाद्या च यावती च णत्वप्राप्तिः तस्याः सर्वस्याः प्रतिषेधः । अप्रतिषेधो वा यथा सर्वनामसंज्ञायाम् * । नार्थः प्रतिषेधेन । णत्वं कस्मान्न भवति । यथा सर्वनामसंज्ञायाम् । उक्तं च सर्वनामसंज्ञायां निपातनाण्णत्वाभावः। यथापुनस्तत्र निपातनं क्रियते सर्वादीनि सर्वनामानीति । इहेदानीं किं निपातनम्। इहापि निपातनमस्ति । किम् । अणृगयनादिभ्य इति । नैव वा पुनरत्र णत्वं प्राप्नोति । किं कारणम् । समानपद इत्युच्यते । न चैतत्समानपदम् । समासे कृते समानपदम् । समानपदमेव यन्नित्यं न चैतन्नित्यं समानपदमेव । किं वक्तव्यमेतत् । नहि । कथमनुच्य-

---

पूर्व । तद्धितेति । पूर्वपदे यौ रषौ ताभ्यां परस्य नकारस्य संज्ञायामेव णत्वमिति नियमादसंज्ञायां तद्धितपूर्वपदस्थस्यापि णत्वं न प्राप्नोतीत्युत्तरपदग्रहणं कर्तव्यम् । खारपायण इति । खरपस्यापत्यं गोत्रं नडादित्वात् फक् । संबन्धिशब्दाविति । पूर्वपदावयवो रेफः षकारश्च पूर्वपदशब्देनोच्यते समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते। पूर्वपदत्वं चोत्तरपदापेक्षमिति तद्धितपूर्वपदस्थस्य णत्वं भवत्येव । समानपदमेवेति । समासे च पूर्वपदोत्तरपदविभागापेक्षया भिन्नपदत्वमप्यस्तीति णत्वाप्रसङ्गः । एवं च विध्यर्थमेतत् सूत्रं न नियमार्थम् । अथ खारपायण इत्यत्र कथं णत्वं यावता खरशब्दस्य

मानं गंस्यते । समानग्रहणसामर्थ्यात् । यदि हि यत्समानं चास: मानं च तत्र स्यात् समानग्रहणमनर्थकं स्यात् ॥

विभाषौषधिवनस्पतिभ्य: ॥६॥ द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम्*। इह मा भूत् । देवदारुवनम् । इरिकादिभ्य: प्रतिषेधो वक्तव्य:* । इरिकावनम् । तिमिरवनम् ॥

अह्नोऽदन्तात् ॥ ७ ॥ अदन्तादह्नस्येति वक्तव्यम् * इह मा भूत् । दीर्घाह्नीशरदिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अहन्शब्दात् षष्ठी । का तर्हि । अह्नशब्दात्प्रथमा । पूर्वसूत्रनिर्देश: स्व । अथ वा युवादिषु पाठ: करिष्यते ॥



वाहनमाहितात् ॥ ८ ॥ आहितोपस्थितयोरिति वक्तव्यम् * । इहापि यथा स्यात् । इक्षुवाहम् । शरवाहम् । अपर आह । वाहनं वाह्यादिति वक्तव्यम् । यदा हि गर्गाणां वाहनसंप्रविद्धं तिष्ठति तदा मा भूदिति गर्गवाहनमिति ॥

वा भावकरणयो:॥१०॥वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम् *। वाप्रकरणे गिरिनद्यादीनामुपसंख्यानं कर्तव्यम् । गिरिणदी । गिरिनदी । चक्रणितम्बा । चक्रनितम्बा ॥

---

पि पदत्वमस्तीति तत्स्थत्वाद्रेफस्य समानपदत्वमेव नास्ति । अत्राहु: । यत्र द्वावपि निमित्तनिमित्तिनौ समानपदस्थत्वं व्यभिचरतस्तत्र णत्वाभाव: । इह तु रेफस्य व्यभिचारेऽपि नकारस्य समानपदस्थत्वाव्यभिचाराण्णत्वं प्रवर्तं । समानग्रहणमिति । पद इत्येवापदस्थयोर्निमित्तनिमित्तिनोरसंभवात् सामर्थ्यादेकत्वसङ्ख्याया विवक्षया समानत्वे लब्धे समानश्रुतिरङ्गीकृतावधारणा विज्ञायत इत्यर्थ: ॥

अह्नोदन्तात् । पूर्वसूत्रनिर्देशश्चेति । पूर्वाचार्या: कार्यभाज: षष्ठ्या न निरदिक्षन्नित्यर्थ: । अथवेति । अवश्यकर्तव्यस्य युवादिषु पाठ: प्रातिपदिकान्तेति विकल्पेन णत्वं मा भूत् ॥

०वीक्ष । आहितोपस्थितयोरिति । आहितशब्देन भूतकालक्रियानिर्देशाद्यदा वाह्यं नारोपितं केवलं सन्निहितं तदा न प्राप्नोतीति वचनम् । स्वस्वामिभावनिवृत्तिपरत्वाद् भूतकालस्येहाविवक्षेत्यन्ये आहु: । वाहनं वाह्यादिति । वहनीयवाचिन इत्यर्थ: । अप विद्धमिति । वहनशक्तिविकलं प्रनष्टमित्यर्थ: । यदा गर्गा वाह्यत्वेन विवक्ष्यन्ते न तु स्वामित्वेन तदा णत्वं भवत्येव ॥

प्रातिपदिकान्तनुम्विभक्तिषु च ॥ १ ॥ प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थम् *। प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणं कर्तव्यम् । किं प्रयोजनम् । असमासान्तप्रतिषेधार्थम् । असमासान्तस्य मा भूत् । गर्गभगिनी । दत्तभगिनीति । न वा भवति । गर्गभगिणीति । भवति । यदा एतद्वाक्यं गर्गाणां भगो गर्गभगः गर्गभगोऽस्या अस्तीति । यदा त्वेतद्वाक्यं भवति । गर्गाणां भगिनी गर्गभगिनीति । तदा न भवितव्यम् । तदा मा भूत् । यदि समासान्तग्रहणं क्रियते । माषवापिणीति । अत्र न प्राप्नोति । लिङ्गविशिष्टग्रहणे चोक्तम् । किमुक्तम् । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति । तत्र युवादीनां प्रतिषेधो वक्तव्यः* । आर्ययूना। क्षत्रिययूना। प्रपक्वानि । परिपक्वानि । दीर्घाह्नी शरदिति ।

कुमति च ॥ १३ ॥ अथेह कथं भवितव्यं माषकुम्भवापेण । व्रीहिकुम्भवापेण । किं नित्यं भवितव्यम् । आहोस्विद्विभाषया । यदा तावदेतद्वाक्यं भवति कुम्भस्य वापः कुम्भवापः माषाणां कुम्भवापः माषकुम्भवाप इति तदा नित्यं णत्वेन भवितव्यम् । यदा त्वेतद्वाक्यं भवति माषाणां कुम्भः माषकुम्भः माषकुम्भस्य वापः माषकुम्भवाप इति तदा विभाषया भवितव्यम् ॥

---

प्रातिप। समासान्तग्रहणमिति । समासस्य प्रातिपदिकस्य योऽन्त्यो नकारस्तस्य णत्वमित्यर्थः । गर्गभगिनीति । भगिनित्येतस्य प्रातिपदिकस्यान्त्यो नकार इति णत्वप्रसङ्गः । अन्तशब्दस्यावसानवत्यैकदेशवाचो। यथा वस्त्रान्त इति । गर्गभगोस्या अस्तीति। स्वारपायणवत्समानपदस्थत्वाद्रेफनकारयोः पूर्भेणैवात्र णत्वं नत्वनेन । माषवापिणीति। ईकारान्तेन समास इति पूर्वपक्षः । नकारान्तेन समासः पश्चादीकार इति सिद्धान्तः । प्रपक्वानीति । अत्र कुमतिचेति नित्यं णत्वं प्राप्नोति ।।

कुमति च । अथेति । विचारो निष्प्रयोजन इत्याहुः । विग्रहद्वयेप्यर्थाभेदाद्रूपद्वयसिद्धौ च तिकश्यश्वत्र समर्थ नान्नित्यणत्वोपन्यासस्याजागलस्तनतुल्यत्वात् । नचात्र णत्वेन भाव्यम् । पदव्यवाय इति प्रतिषेधात् । केचिदाहुः । यदा माषाणां कुम्भो माषकुम्भस्तस्य वाप प्रक्रिया तदोत्तरपदत्वे चापदादिविधावीति प्रत्ययलक्षणनिषेधात् , पदत्वाभावान्निषेधाप्रवृत्तिः । कुम्भस्य वापः कुम्भवापो माषाणं कुम्भवापो माषकुम्भवाप इत्यस्यां तु प्रक्रियायां णत्वप्रतिषेध इति ॥

उपसर्गादसमासेऽपि णोपदेशस्य ॥ १४ असमासग्रहणं किमर्थम्। समास इति वर्तते। असमासेऽपि यथा स्यात्। प्रणमति। परिणमति। क्व पुनः समासग्रहणं प्रकृतम्। पूर्वपदात्संज्ञायामग इति। कथं पुनस्तेन समासग्रहणं शक्यं विज्ञातुम्। पूर्वपदग्रहणसामर्थ्यात्। समास एतद्भवति पूर्वपदमुत्तरपदमिति। अथापिग्रहणं किमर्थम्। समासेऽपि यथा स्यात्। प्रणामकः। परिणामकः। यदि तर्हि समासे चासमासे चेष्यतेनार्थोऽसमासेऽपिग्रहणेन। निवृत्तं पूर्वपदादिति। अविशेषेणोपसर्गाण्णत्वं वक्ष्यामि समासे नियमान्न प्राप्नोति। असिद्धमुपसर्गाण्णत्वं तस्यासिद्धत्वान्नियमो न भविष्यति। एवं तर्हि सिद्धे सति यदसमासेपिग्रहणं करोति तज् ज्ञापयत्याचार्यः न योगो योगे ऽसिद्धः। किं तर्हि प्रकरणे प्रकरणमसिद्धमिति। किमेतस्य ज्ञापने प्रयोजनम्। यदुक्तं निष्कृतं निष्पीतमित्यत्र त्वस्यासिद्धत्वात् षत्वं न प्राप्नोतीति स न दोषो भवति। णोपदेशं प्रति उपसर्गा भावादनिर्देशः *। अगमको निर्देशः। अनिर्देशः। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः। न च णोपदेशं प्रति क्रियायोगः। एवं तर्हि आहायमुपसर्गादसमासेऽपि णोपदेशस्य न च णोपदेशं प्रति उपसर्गोऽस्ति। तत्र वचनाद्भविष्यति। वचनप्रामाण्यादिति चेत्पदलोपे प्रतिषेधो वक्तव्यः*। प्रगता नायका अस्माद् ग्रामात् प्रनायको ग्राम इति। सिद्धं तु यं प्र-

---

उपसर्गा। समास एतद्भवतीति। ननु सुबामन्त्रित इत्यत्रोक्तम्। अविशेषेणैतद्भवति पूर्वपदमुत्तरपदमिति तेन चर्मनर्मन्नित्यत्र णत्वं न भविष्यति। उच्यते। स्वरग्रहणप्रत्याख्यानाय तदुक्तं न त्वेष पक्षः स्थितः। समासे नियमादिति। यदा पूर्वपदात् संज्ञायामग इति सूत्रं नियमार्थमिति पक्षः तदैतदुच्यते। समासपदे हि समाने निमित्तनिमित्तिनोरभावात्सिद्धं णत्वं नियम्यते। यदा तु समानग्रहणात् समानमेव यन्नित्यं पदं तदाश्रीयते तदा पूर्वपदादित्यस्य विध्यर्थत्वादसमासेपिग्रहणस्य ज्ञापकत्वानुपपत्तिः। न्याय्यात्तु प्रकरणे प्रकरणस्यासिद्धत्वं व्यवस्थाप्यते प्रकरणस्यार्थवद्वाक्यत्वात्तदन्तर्गतानां योगानामानर्थक्याद्योगे योगस्यासिद्धत्वायोगात्। असिद्धत्वेन कार्यासंपादनादनर्थकत्वमितिभावः। प्रकरणासिद्धत्वेपि तस्यार्थवद्वाक्यत्वाद्बहूनामानर्थक्यम्। अथवा निष्कृ-

लउपसर्गस्तत्स्थस्येति वचनात्* । सिद्धमेतत् । कथम् । यं प्रत्युपसर्गः तत्स्थस्य नो णो भवतीति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं णोपदेशं प्रत्युपसर्गाभावादनिर्देश इति । नैष दोषः । नैवं विज्ञायते णः उपदेशः णोपदेशः णोपदेशस्येति किं तर्हि ण उपदेशोऽस्यासोऽयं णोपदेशः णोपदेशस्येति ॥

हिनुमीना ॥ १५ ॥ हिनुमीनाग्रहणे विकृतस्योपसंख्यानम् * । हिनुमीनाग्रहणे विकृतस्योपसंख्यानं कर्तव्यम् । प्रहिणोति । प्रमीणीते । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् । प्रहिणुतः । प्रमीणाति । सिद्धमचः स्थानिवत्त्वात्* । सिद्धमेतत् । कथम् । अचः स्थानिवत्त्वात् । स्थानिवद्भावादत्र णत्वं भविष्यति । प्रतिषिध्यतेऽत्र स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति । दोषा एवैतस्याः परिभाषायाः । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति ॥

आनि लोट् ॥ १६ ॥ लोडिति किमर्थम् । प्रहिमानि कुलानि । प्रवपानि मांसानि । आनिलोड्ग्रहणानर्थक्यमर्थवद्ग्रहणात् * । आनिलोड्ग्रहणमनर्थकम् । किं कारणम् । अर्थवद्ग्रहणात् । अर्थवत आनिशब्दस्य ग्रहणम् । नैषोऽर्थवान् । अनुपसर्गाद्वा *। अथ वा यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः । न चैतमानिशब्दं प्रति क्रियायोगः । इहापि तर्हि न प्राप्नोति । प्रयाणि । परियाणीति । अत्रापि न आनिशब्दं प्रति क्रियायोगः । आनिशब्दं प्रत्यत्र क्रियायोगः । कथम् । नैवं विज्ञायते यस्य क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति । कथं तर्हि या क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति ॥

---

तमित्यादौ विसर्जनीयस्यैव षत्वं विधेयं न तु सकारस्य । णोपदेशं प्रतीति । उपदिश्यत इत्युपदेशो यश्चासा उपदेशो णोपदेश इति कर्मधारयं मत्वा चोद्यते । नैवं विज्ञायत इति । उपसर्गग्रहणस्य मा भूद् गौणार्थत्वमिति मुख्यार्थग्रहणाय बहुव्रीहिराश्रीयते ॥

आनिलोट् । आनिशब्दमिति । क्रियायोगग्रहणस्यैव यत्क्रियायुक्तास्तं प्रतीति व्याख्यानम् । योगश्चार्थलक्षणः तत्र प्रयोगविषया क्रियाश्रीयते सा च न क्वचिदसंसृष्टानि समुदायस्था आश्रीयत इति आनिशब्दान्तसमुदायं प्रति क्रियायोगः । तत्रायं सूत्रार्थः । उपसर्गात्परस्य समुदायस्य य आनिशब्दस्तन्नकारस्य णत्वमिति । तदेवं प्रत्याख्यातं लोट्ग्रहणम् ॥

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥१७॥ नेर्गदादिषु अड्व्यवाय उपसंख्यानम्* । नेर्गदादिषु अड्व्यवाय उपसंख्यानं कर्त्तव्यम् । प्रण्यगदत् । आङा चेति वक्तव्यम् । प्रण्यागदत् । ननु चायमड् गदादिभक्तः गदादिग्रहणेन ग्रहिष्यते । न सिध्यति । अङ्गस्य अडुच्यते । विकरणान्तं चाङ्गम् । सोसौ सङ्घातभक्तः अशक्यो गदादिग्रहणेन ग्रहीतुम् । एवं तर्हि अड्व्यवाय इति वर्तते । क्व प्रकृतम् । अट्कुप्वाङ्नुम्व्यवायेऽपीति । तद्वै कार्यिविशेषणं निमित्तविशेषणेन चेहार्थः । तत्रापि निमित्तविशेषणमेव ॥

अनितेः ॥ १९ ॥ अन्तः ॥ २० ॥ अन्तग्रहणं किमर्थम् । अनितेरन्तग्रहणं संबुद्ध्यर्थम् * । अनितेरन्तग्रहणं क्रियते । संबुद्ध्यर्थम् । हे-प्राण् । अपर आह । अनितेरन्तः पदान्तस्य । अनितेरन्तग्रहणं क्रियते पदान्तस्य नेति प्रतिषेधः प्राप्तस्तद्बाधनार्थम् । योवा तस्मादनन्तरः । अथ वा अयमन्तशब्दोस्त्येवावयववाची । तद्यथा । वस्त्रान्तो वसनान्त इति । अस्ति सामीप्ये वर्त्तते । तद्यथा । उदकान्तं गतः । उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्त्तते तस्य ग्रहणं विज्ञास्यते । अनितेः समीपे यो रेफस्तस्मान्नस्य यथा स्यात् । प्राणितीति । इह मा भूत् । पर्यनितीति ॥

उभौ साभ्यासस्य ॥ २१ ॥ साभ्यासस्य द्वयोरिष्टम् । साभ्यास-

---

नेर्गद । तदिति । तत्र हि निमित्तयोरेफषकारयोर्निमित्तिनश्च नकारस्याटा व्यवाय आश्रितः । इह तु नेः परे गदादयो व्यवहिता इति णत्वाप्रसङ्गः । तत्रापीति । यत्र यन्निमित्तं तत्रास्याडादिभिर्व्यवाये णत्वमिति गदादीनामपि निमित्तत्वसद्भावादड्व्यवाये णत्वं सिध्यतीत्यर्थः ।

अनितेः । संबुद्ध्यर्थमिति । अनितेर्नकारोऽन्तएवे ऽत्यन्तग्रहणसामर्थ्यात् पदस्यान्तो विज्ञायत इति पदान्तस्येति प्रतिषेधो योगविभागेन बाध्यते । अपर आहेति । पाठभेदं दर्शयति । वस्तुतस्तु नास्तिभेदः । योवातस्मादिति । अस्मिन् पक्षे प्राणिति संबुद्ध्यर्थमावर्त्तनीयमन्तग्रहणम् । तद्यः सामीप्य इति । एकवर्णव्यवधानं च सामर्थ्यादाश्रीयते । पर्य्यनितीत्यत्र तु वर्णद्वयव्यवधानाण्णत्वाभावः ॥

उभौ साभ्यासस्य द्वयोरिति । उभौग्रहणस्य प्रयोजनं दर्शयति । उभावित्यधिक-

स्य द्वयोर्णत्वमिष्यते । प्राणिणिषति ॥

हन्तेरत्पूर्वस्य ॥ २२ ॥ हन्तेरत्पूर्वस्येति किमर्थम् । प्रघ्नन्ति । हन्तेरत्पूर्वस्य वचने उक्तम् * । किमुक्तम् । कुव्यवाये हादेशेषु प्रतिषेध इति ॥

उपसर्गादनोत्परः ॥२८॥ कथमिदं विज्ञायते ओकारात्परः ओत्परः । न ओत्परः अनोत्पर इति । आहो स्विदोकारः परोऽस्मात्सोऽयमोत्परः न ओत्परः अनोत्पर इति । किं चातः । यदि विज्ञायते ओकारात्परः ओत्परः न ओत्परः अनोत्पर इति । प्रनोमुग्नतम् । अत्रापि प्राप्नोति । अथ विज्ञायते ओकारः परो ऽस्मात्सो ऽयमोत्परः न ओत्परः अनोत्पर इति । प्रणावनिर्देवता अत्रापि निषेधः प्राप्नोति । उभयथा च प्रक्रमे दोषो भवति । प्रनः सुग्नतम् । प्रनोमुग्नतम् । प्र उनः प्रोनः । भाविन्यप्योति णत्वं नेष्यते । भाविन्यप्योकारे णत्वं नेष्यते । एवं तर्ह्युपसर्गाद्बहुलमिति वक्तव्यम् ॥

कृत्यचः ॥२९ ॥ कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानम् * कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानं कर्त्तव्यम् । निर्विण्णोऽहमनेन वासेन ॥

णेर्विभाषा ॥३०॥ णेर्विभाषासाधनव्यवाये उपसंख्यानम् * । णेर्विभाषायां साधनव्यवाये उपसंख्यानं कर्त्तव्यम् । प्राप्यमाणम् । प्राप्यमानम् ।

---

सति साभ्यासानितेर्णो भवतीत्युच्यमाने वचनसामर्थ्याच्च पूर्वत्रासिद्धीयमद्विर्वचन इत्यनाश्रीयमाणे ऽकृतणत्वस्य द्विर्वचने कृते ऽनन्तरस्य पूर्वेण णत्वस्य सिद्धत्वाद्व्यवहितार्थमिदं णत्वं स्यादनन्तरस्य तु तक्रकौण्डिन्यन्यायेन न स्यादित्युभावित्युच्यते ॥

उपसर्गादनोत्परः । उभयथा च प्रक्रम इति । प्रक्रमो ग्रन्थपरिचयार्थः क्रमपाठः । भाविन्यपीति । यद्यपि क्रमपाठे आकारो नास्ति संहितापाठे तु भावीति णत्वं न प्रवर्त्तते। सांप्रतिकसद्भावे तु भाविगतिर्दुर्लभेति पाठान्तरमाश्रितम् । अथवोभयथा च प्रक्रमे इत्यस्यायमर्थः । उभयथाचाश्रीयमाणे इह दोष इति । भाविनीति । ओकारार्थ उकार ओशब्देनोच्यत इत्यर्थः । मुख्यार्थसंभवे गौणार्थग्रहणमयुक्तमिति । पाठान्तरसमाश्रयः॥

कृत्यचः । निर्विण्णस्येति । अचः परः कृत्स्थो नकारो न भवतीति वचनम् । तत्र परस्य णत्वं पूर्वस्य ष्टुत्वम् ।

णेर्वि । णेरिति पञ्चमीनिर्देशादनन्तरएव कृति णत्वं स्यादिति णेरिति वार्त्तिकाभ्यां साधनव्यवाय इति । साधनाभिधायिनि सार्वधातुकेविधानाद्विकरणः शप्शब्दे

तद्विधानात्सिद्धम् * । विहितविशेषणं णिग्रहणं ण्यन्ताद्यो विहित इति । अडधिकाराद्वा* । अथ वाऽड्व्यवाय इति वर्तते ॥

इजादेः सनुमः ॥३२॥ किमर्थमिदमुच्यते न कृत्यच इत्येव सिद्धम् । नियमार्थोऽयमारम्भः । इजादेरेव सनुम्कादिति । क्व मा भूत् । प्रमङ्गनम् । परिमङ्गनम् । सनुमो णत्वेऽवधारणाप्रसिद्धिर्विधेयभावात् * । सनुमो णत्वेऽवधारणस्याप्राप्तिः । किं कारणम् । विधेयभावात् । कैमर्थक्यान्नियमो भवति विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् । ण्यन्ताद्विभाषा प्राप्ता । तत्र नित्यं णत्वं विधेयम् । तत्रापूर्वो विधिरस्तु नियमोऽस्त्विति । अपूर्वो विधिर्भविष्यति न नियमः । सिद्धं तु प्रतिषेधाधिकारे सनुम्ग्रहणात् * । सिद्धमेतत् । कथम् । प्रतिषेधाधिकारे सनुम्ग्रहणात् । प्रतिषेधाधिकारे सनुम्ग्रहणं कर्त्तव्यम् । न भाभूपूकमिगमिप्यायीवेपि सनुमामिति । इहापि तर्हि न प्राप्नोति । प्रेङ्खणीयम् । प्रेङ्खणम् । कृत्स्थस्य च णत्वे इजादेः सनुमो ग्रहणं कर्त्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं सनुमो णत्वेऽवधारणाप्रसिद्धिर्विधेयभावादिति । नैष दोषः । हल इति वर्त्तते । क्व प्रकृतम् । हलश्चेजुपधादिति । तद्वै तत्रादिविशेषणमन्तविशेषणेन चेहार्थः । कथं पुनर्ज्ञायते तत्रादिविशेषणमिति । इजुपधादित्युच्यते । तत्र नार्थोऽन्तविशेषणेन । तत्र आदिविशेषणं सदिहान्तविशेषणं भविष्यति । कथम् । इजादेरित्युच्यते । तत्र नार्थ आदिविशेषणेन । अथ वा इ-

---

नोच्यते । विकरण :साधनाभिधायीति केषां चिन्मतेनवा॥ तद्विधानादिति । सूत्रेषु यथेष्टं वाक्यशेषाध्याहाराद् णयन्ताद्यो विहित:कृदित्याश्रीयतेऽडधिकाराद्वेति । णयन्तात्परोयः कृदित्येवमाश्रीयमाणे न दोषो ण्यन्तस्य कृतां चाड्व्यवायेऽपि णत्वाभ्यनुज्ञानात् ।

इजादेः । सनुमोणत्वइति । नियमे प्राप्तबाधः सिद्धस्य पुनरुपादानादनुवाद दोषश्च विधौ तु न प्राप्तबाधो नाप्यनुवाददोष इति विधिनियमसंभवे विधिरेव न्यायानिति भाष्ये सिद्धं त्विति । तेन प्रमङ्गनमित्यादौ णत्वं न भवति । तत इजादेः सनुम इति योगो विध्यर्थः संपद्यते । तत्र नार्थोऽन्तविशेषणेनेति । इजुपधस्य हलन्तत्वाव्यभिचारासामर्थ्यात्तत्रादिविशेषणं हल्ग्रहणम् । तत्र नार्थ इति । इजादेर्हलादित्वासंभवाद-

जादेः सनुम इत्यत्र णेर्विभाषेत्येतदनुवर्त्तिष्यते ॥

न भाभूपूकमिगमिप्यायीवेपाम् ॥ ३५ ॥ भादिषु पूञ्ग्रहणम् * । भादिषु पूञ्ग्रहणं कर्त्तव्यम् । इह माभूत् । प्रवपणं सोमस्येति । ण्यन्तस्य चोपसंख्यानं कर्त्तव्यम् । किं पूञ एव । नेत्याह । अविशेषेण । प्रभापनं परिभापनम् * ॥

षात् पदान्तात् ॥ ३४ ॥ षात्पदादिपरवचनम् * । षात्पदादिपरग्रहणं कर्त्तव्यम् । इहैव यथा स्यात् । निष्पानं दुष्पानम् । इह मा भूत् । सुसर्पिष्केण अयजुष्केण । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । नैवं विज्ञायते पदस्यान्तः पदान्तः । पदान्तादिति । कथं तर्हि पदे अन्तः पदान्तः पदान्तादिति ॥

नशेः षान्तस्य ॥ ३६ ॥ नशेरशः * । नशेरश इति वक्तव्यम् । इहापि यथा स्यात् । प्रनङ्क्ष्यति । परिनङ्क्ष्यति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । इह पुनः नशेः ष इतीयता सिद्धम् । सोयमेवं सिद्धे सति यदन्तग्रहणं करोति तस्यैतत्प्रयोजनं षान्तभूतपूर्वस्यापि यथा स्यात् ॥

पदव्यवायेऽपि ॥ ३८ ॥ पदव्यवायेतद्धिते * । पदव्यवाये अतद्धित इति वक्तव्यम् । इह मा भूत् । आर्द्रगोमयेण । शुष्कगोमयेण ।

---

न्तविशेषणं हल्ग्रहणं संपद्यत इति हलन्तादिजादेः सनुमो यो विहितः कृत् तस्थस्येत्येवं विज्ञायमानेऽजन्ताद्विध्यर्थोऽयं योगो न भवतीति नियमाय सं पद्यते ।

न भाभूपूकमिगमि । ण्यन्तस्य चेति । ण्यन्तस्य धात्वन्तरत्वान्निषेधो नप्राप्नोतीति वचनम् ।

षात् । षात्पदादीति । पदादौ परतो यः षकारस्तस्मात्परस्य पदस्य यो नकारस्तस्य णत्वं न भवतीत्यर्थः । पदे अन्त इति । षात्पदादित्येव षकारेण पदस्य विशेषणात् षान्तात्पदादिति लब्धेर्थेऽन्तग्रहणात्सप्तमीसमासश्चाश्रीयते ।

नशेः । प्रनङ्क्ष्यतीति । नशेः षत्वे षढोकः सीति कत्वे कृते रूपं मस्जिनशोर्झलीति नुमागमः स च षत्वात्पूर्वमेव प्रवर्त्तते पूर्वत्रासिद्धवचनात् । षान्तेति । अन्तग्रहणसामर्थ्याद् यस्य संप्रति षान्तो यस्य भूतपूर्वस्तस्य सर्वस्य णत्वनिषेधः ।

तत्तर्हि वक्तव्यम् ॥ न वक्तव्यम्। नैवं विज्ञायते पदेन व्यवायः पदव्यवाय इति। कथं तर्हि पदे व्यवायः पदव्यवायः पदव्यवायइति॥

क्षुम्नादिषु च ॥३९॥ अविहितलक्षणो णत्वप्रतिषेधः क्षुम्नादिषु द्रष्टव्यः ॥

स्तोश्चुना श्चुः ॥ ४० ॥ किमर्थं तृतीयानिर्देशः क्रियते। नश्चाविव्येवोच्येत। आनन्तर्यमात्रे श्चुत्वं यथा स्यात् यज्ञः याच्ञा। अथ संख्यातानुदेशः कस्मान्न भवति। आचार्यप्रवृत्तिर्ज्ञापयति संख्यातानुदेशो नेति। यदयं शात्प्रतिषेधं शास्ति ॥

ष्टुनाष्टुः ॥ ४१ ॥ किमर्थं तृतीयानिर्देशः क्रियते। न ष्टावित्येवोच्येत। आनन्तर्यमात्रे ष्टुत्वं यथास्यात्। पेष्टा लेष्टा। अथ संख्यातानुदेशः कस्मान्न भवति। आचार्यप्रवृत्तिर्ज्ञापयति नेह संख्यातानुदेशोभवतीति। यदयंतोः षीतिप्रतिषेधंशास्ति ॥

न पदान्ताट्टोरनाम् ॥ ४२ ॥ अनामिति किम्। षण्णां भवति काश्यपः। अत्यल्पमिदमुच्यते अनामिति। अनाम्नवतिनगरीणां चेति वक्तव्यम्। षण्णवतिः। षण्णगर्यः ॥

यरोनुनासिकेनुनासिको वा ॥ ४५ ॥ यरोऽनुनासिके प्रत्ययेभाषायां नित्यवचनम् *। यरोऽनुनासिके प्रत्यये भाषायां नित्यमिति वक्तव्यम्। वाङ्मयम्। त्वङ्मयम्॥

अनचिच ॥ ४७ ॥ द्विर्वचने यणोमयः *। द्विर्वचने यणोमय इति वक्तव्यम्। किमुदाहरणम्। यदि यण इति पञ्चमी मय इति षष्ठी। उल्कावल्मीकमित्युदाहरणम्। अथ मय इति सप्तमी यण इति षष्ठी। दध्यत्रमध्वत्रेति उदाहरणम्। शरः खयः*। शरः खय इति वक्तव्यम्। किमुदाहरणम्। यदि शर इति पञ्चमी खय इति

---

क्षुम्नादिषु च। अविहितेति। न भाभूपूकमिगमीत्यादयस्तु योगा अस्यैव प्रपञ्चार्थाः।

अनचिच। नायं प्रसज्यप्रतिषेध इति पाठोयं लेखकप्रमादाद्भ्रष्टः। पर्युदासे ह्यच्सदृशस्य वर्णान्तरस्य निमित्तत्वेनोपादानादवसाने द्विर्वचनस्याप्रसङ्गात्। तस्मादयं पर्युदासो यदन्यदच इति। किं तर्हि प्रसज्यप्रतिषेधो ऽचि नेति। अयं पाठस्तत्र प्रसज्यप्रतिषेधे विधिरनुमीयते अच उत्तरस्य यरो नूनं द्विर्वचनं सर्वत्रास्ति यतः प्रतिषिध्यते। एवं चानैमित्तिकं द्विर्वचनमवसानेपि भवति। वेत्यधिकाराच्च वा भवति।

षष्ठी । स्थाली स्थातेत्युदाहरणम् । अथ खय इति पञ्चमी शर इति षष्ठी । वत्सरः क्षीरम् । अप्सराः इत्युदाहरणम् । अवसाने च * । अवसाने चर्त्वं भवत इति वक्तव्यम् । वाक् । वाक् त्वक् । त्वक् । स्रुक् । स्रुक् । तर्त्तार्हि वक्तव्यम् । न वक्तव्यम् । नायं प्रसज्यप्रतिषेधः अचि नेति । किं तर्हि । पर्युदासोयं यदन्यदच इति ॥

नादिन्याक्रोशे पुत्रस्य ॥ ४८ ॥ नादिन्याक्रोशे पुत्रस्येति तत्परे च * । नादिन्याक्रोशे पुत्रस्येत्यत्र तत्परे । चेति वक्तव्यम् । पुत्रपुत्रादिनी । वाहतजग्धपरे च * । वा हतजग्धपरे इति वक्तव्यम् । पुत्रहती । पुत्त्रहती । पुत्रजग्धी । पुत्त्रजग्धी । चयो द्वितीयाः शरिपौष्करसादेः * चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन । वथ्सरः । अफ्सराः ॥

उदःस्थाः स्तम्भोः पूर्वस्य ॥ ६१ ॥ उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानम् * । उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानं कर्त्तव्यम् । अग्नेः दूरमुत्कन्दः । रोगे चेति वक्तव्यम् * । उत्कन्दको रोगः ॥

शश्छोटि ॥ ६३ ॥ छत्वममि * । छत्वममीति वक्तव्यम् । किं प्रयोजनम् । तच्छ्लोकेन । तच्छ्मश्रुणेति ॥

अभ्यासे चर्च ॥ ६४ ॥ प्रकृतिचरां प्रकृतिचरो भवन्ति । चिखीषति । प्रकृतिजशां प्रकृतिजशश्च भवन्ति । जिजनिषति बुबुधे । ददौ ॥

झरो झरि सवर्णे ॥ ६५ ॥ सवर्णग्रहणं किमर्थम् * । झरो झरि सवर्णग्रहणं समसंख्यप्रतिषेधार्थम् * । झरोझरिसवर्णग्रहणंक्रियते । संख्यातानुदेशो मा भूदिति । किं च स्यात् । इह न स्यात् । शिण्ढि पिण्ढि ॥

---

नादि । वा हतजग्धपर इति । हतजग्धं च तत्परं चेति विशेषणसमासो राजदन्तादित्वाच्च वरशब्दस्य परनिपातः । पुत्रहतीति । बहुव्रीहिः । अस्वाङ्गपूर्वपदाद्वेति ङीष् ।

झरो झरि सवर्णे । शिण्ढीति । ढकारस्य ढकारे परतो लोपः यथासंख्याश्रयणे तु न स्यात्सवर्णग्रहणात्तु यथासंख्याभावो नहि यथासंख्ये सत्यसवर्णौ झरन्ति यद्यर्थं सवर्णग्रहणं स्यात् ।

अअ ॥ ६८ ॥ इति। किमर्थमिदमुच्यते। अकारोयमक्षरसमाम्नाये विवृत उपदिष्टस्तस्य संवृतताप्रत्यापत्तिः क्रियते। किं पुनः कारणं विवृत उपदिश्यते। आदेशार्थं सवर्णार्थमकारो विवृतः स्मृतः। आकारस्य तथाह्रस्वस्तदर्थं पाणिनेरअ ॥ १ ॥ आदेशार्थं तावत्। वृक्षाभ्याम्। देवदत्ता३। आन्तर्यतो विवृतस्य विवृतौ दीर्घप्लुतौ यथा स्याताम्। सवर्णार्थं च आकारःसवर्णग्रहणेन आकारमपि यथा गृह्णीयात्। आकारस्य तथा ह्रस्वः। तथा अतिखट्वः अतिमाल इत्यत्र आकारस्य ह्रस्व उच्यमानो विवृतः प्राप्नोति संवृतः स्यादित्येवमर्था प्रत्यापत्तिः। अस्ति प्रयोजनमेतत्। किं तर्हीति। अकारस्य प्रत्यापत्तौ दीर्घप्रतिषेधः *। अकारस्य प्रत्यापत्तौ दीर्घस्य प्रतिषेधो वक्तव्यः ॥ खट्वा। माला। नैष दोषः। यथैव प्रकृतितः सवर्णग्रहणमेवमादेशतोपि भवितव्यम्। तत्रान्तर्यतो ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घो भविष्यति। आदेशस्य चानण्त्वान्न सवर्णग्रहणम् *। आदेशस्य चानण्त्वात्सवर्णानां ग्रहणं न प्राप्नोति। केषाम्। उदात्तानुदात्तस्व-

---

अअ। किमर्थमिति। अकारस्याकारवचने प्रयोजनाभावात्प्रश्नः। अकारोयमिति। सवर्णार्थमिह शास्त्रे विवृतदोषयुक्तोऽकार उपदिष्टः तस्य प्रयोगे संवृतस्यैवोच्चारणार्थमिदं प्रत्यापत्तिवचनम्। अक्षरसमाम्नायग्रहणं सकलशास्त्रोपलक्षणम्। किं पुनरिति। अस्मात् पुनः कारणादित्यर्थः। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति प्रथमा। श्लोकोपन्यासाय प्रश्नः। प्रयोजनं त्वकारस्य विवृतोपदेशआकारग्रहणार्थः तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थं इति वार्तिककृता पूर्वमेव प्रतिपादितम्। आदेशार्थमिति। अत्रापि प्रयोजनं विवृतोपदेशस्योक्तम्। वृक्षाभ्यामिति। यद्यपीदं प्रयोजनमकारवार्तिके भाष्यकृता प्रत्याख्यातं नैव लोके न च वेदे दीर्घप्लुतो संवृतौ स्तः किं तर्हि विवृतौ यौ स्तस्तौ भविष्यत इति। तथापि प्रयोजनान्तरसद्भावादिह प्रत्याख्यानादरो न कृतः पूर्वमेव वा प्रत्याख्यानात्। आकारस्येति। इदमपि प्रत्याख्यातं प्रयोजनम्। नैव लोके न च वेदे अकारोस्ति विवृत इति। दीर्घप्रतिषेध इति। दीर्घस्योपलक्षणार्थत्वात् प्लुतस्यापि प्रतिषेधो वक्तव्यः। क्वचित्तु दीर्घप्लुतप्रतिषेध इति पाठः। इह स्थान्यकारो विवृतोऽण्त्वात्सवर्णानां ग्राहक इति दीर्घप्लुतयोरपि स्थाने संवृतोऽकारः प्राप्नोतीति प्रतिषेध उच्यते। आदेशस्येति। संवृताकारो न भवतीति सवर्णानां ग्रहणं न प्राप्नोति। भाष्यमानत्वाच्च। उदात्तेति।

रितानुनासिकानाम् । सिद्धं तु तपरनिर्देशात् * । सिद्धमेतत् । कथम् । तपरनिर्देशात् । तपरनिर्देशः कर्तव्यः । अद इति । अपर आह । अकारस्य प्रत्यापत्तौ दीर्घप्रतिषेधः । अकारस्य प्रत्यापत्तौ दीर्घस्य प्रतिषेधो वक्तव्यः । खट्वा माला । नैष दोषः । दीर्घोच्चारणसामर्थ्यान्न भविष्यति । इदं तर्हि वृक्षाभ्याम् । प्लक्षाभ्याम् । अत्रापि दीर्घवचनसामर्थ्यान्न भविष्यति । इदं तर्हि अपि काकः श्येनायते । ननु चात्रापि दीर्घवचनसामर्थ्यादेव न भविष्यति अस्त्यन्यद्दीर्घवचने प्रयोजनम् । किम् । दधीयति । मधूयति । आदेशस्य चानण्त्वात्सवर्णाग्रहणम् । आदेशस्य चानण्त्वात्सवर्णानां ग्रहणं न प्राप्नोति । केषाम् । उदात्तानुदात्तस्वरितानुनासिकानाम् । सिद्धं तु तपरनिर्देशात् * । सिद्धमेतत् । कथम् । तपरनिर्देशात् । तपरनिर्देशः कर्तव्यः । अददिति । एकशेषनिर्देशाद्वा स्वरानुनासिकभिन्नानां भगवतः पाणिनेः सिद्धम् * । एकशेषनिर्देशाद्वा भगवतः पाणिनेराचार्यस्य सिद्धम् । एकशेषनिर्देशोऽयम् । अ अ इति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये अष्टमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादश्च चतुर्थोऽध्यायश्चाष्टमः समाप्तः ॥

---

ततश्च यद्गुणयुक्तः संवृत उच्चारितः तद्गुण एव चयाणामपि ह्रस्वदीर्घप्लुतानां प्राप्नोतीत्यनिष्टप्रसङ्गः इष्टं च न सिध्यतीति सर्वगुणस्यमाचिकस्य प्रत्यापत्तेरिष्टत्वात् । सिद्धं त्विति । अद इति सूत्रं कर्तव्यम् । तत्र तः परो यस्मादिति पूर्वोकारस्तपरः तस्मात्परस्तपर इति एवं द्वितीयस्तपरः ततः स्वान्यकारो भिन्नकालौ दीर्घप्लुतौ न ग्रहीष्यति । आदेशस्तु वस्तुतान् गुणान्तरयुक्तान् ग्रहीष्यति । केचिद् अददिति द्वावपि तपरौ पठितव्यावित्याहुः । एकशेषनिर्देशाद्वेति । षण्मात्रिका अकाराः स्थानिनो निर्दिश्यन्ते । एवमादेशा अपि षडेव । ततश्च कशेषस्तत्र षण्णां स्थानिनां निर्देशसामर्थ्याद्भिन्नकालौ दीर्घप्लुतौ स्थानिभिर्नगृह्येते । तत्र यथासंख्यं षण्णां विवृतानां स्थाने षडादेशाः संवृता भवन्तीति सिद्धमिष्टम् ॥ इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे अष्टमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादश्च चतुर्थः ॥ अध्यायश्चाष्टमः समाप्तः ॥

श्रीपतञ्जलये नमः ॥

याथातथ्यानवच्छित्त्या भाष्यानधिगमागमा यथाबुद्धिकृता शुद्धिःप्रीयतां परमेश्वरः ॥१॥

---

